शांशविभागिनः । अश्मानः क्षत्रिया ज्ञेयाः कर्कशाङ्गास्तथैव च (शङ्खाः) YuktiKa. 139. 7.

**अंशांशहवन** ( aṁśāṁśa–havana ) *n.* offerings of very small portions तृप्तिं पूर्णप्रदानैस्तु अंशांशहवनैः क्रतैः PauṣkS. 31. 142.

**अंशांशांश** ( aṁśāṁśāṁśa ) *m.* a part of a part of a part ( केशवः ) शंभोः कार्ये कृतमना अंशांशांशेन निर्गतः SkandP. iv. 58. 66 (comm. अंशः अन्तर्यामी, तस्यांशः पुरुषः तस्यांशश्चतुर्भुजः )

**अंशांशिकप्रसङ्ग** ( aṁśāṁśika–prasaṅga ) *m.* the occasion of mentioning the part and whole Loc. 158. 25 ( *on* 3. 16 )

**अंशांशिकल्पना** ( aṁśāṁśi–kalpanā ) *f.* the notion of part and whole एको यवांशो निमानमस्योदश्वित इति न भवति, एकस्यांशांशिकल्पनाभावात् । समता तु तदावगम्यते CāndraVṛ. *on* iv. 2. 49.

**अंशांशिका** ( aṁśāṁś–ikā ) *f.* a small fraction, a very small part, very little न ह्यंशांशिकया चोदकः प्रवर्तते NyāyMañ. i. 45. 9; मितदृष्टयस्तु अंशांशिकासु तदिच्छयैव अभिमानं ग्राहिताः PratyabhiHṛ. 19. 2 ( *on* 8 ); ततः परं नास्त्येव तस्य सर्वपर्यन्तफलत्वादंशांशिकयापि PratyabhiVi. i. 42. 1 ( *on* i. 1. 1 )

**अंशांशित्व** ( aṁśāṁśi–tva ) *n.* the relation of part and whole तथापि शास्त्रात्त्वत्रांशांशित्वमीशित्रीशितव्यभावश्च निश्चीयते BrahmSūBh. (S'aṅ.) ii. 480. 14 ( *on* ii. 3. 45 ); लोकप्रसिद्धन्यायार्थैरंशांशित्वादिकल्पना । परमात्मनः…न…युक्ता BṛĀraUBhVā. ii. 1. 499; ii. 1. 524; ii. 1. 526; iv. 3. 661; तयोरेकान्ततो भेदेऽभेदे चांशांशित्वहानात् IṣṭaSi. 242. 8; ननु…तयोरेकद्रव्यत्वाभावेन नांशांशित्वमुपपन्नम् NītiMā. 51. 17; भिन्नयोर्नांशांशित्वमश्वमहिषवत् VedāntKa. 223. 26 (on i. 4. 22); किमचिद्वस्तुनो ब्रह्मस्वरूपत्वं…विशेषणविशेष्यभावरूपेणांशांशित्वेनेति S'rutaPra. ii. 443. 21 ( *on* iii. 2. 26 ); अंशांशित्वाद्यभावेन पूर्ववन्नात्र संस्तुतिः NyāyaMāVi. 54. 16 ( *on* i. 4. 13 ); TattvPrakā. 23A. 11 ( *on* iii. 2. 34 ); VedāntTaSā. 60. 3.

**अंशांशिन्** ( aṁśāṁśin ) *adj.* part and whole न…ब्रह्मस्वरूपप्रतिपत्तिविषये ब्रह्मणः…अंशांश्येकदेशैकदेशिविकारविकारित्वकल्पना कार्या BṛĀraUBh. 261. 16 ( *on* ii. 1. 20 ); यद्यंशांशिनोर्विकारविकारिणोर्वा अत्यन्तभेदः स्यात् TattvSaṁkhyā. 50. 2; अंशांशिनोरभेदेनैवांशसंयोग एव NyāySu.(Ja.) 365B. 2 ( *on* ii. 2. 6 ); 510A. 3 ( *on* iii. 2. 10 ); तुशब्दोंऽशांशिधर्मसाङ्कर्याभावसूचकः VedāntKau. 237. 14 ( *on* ii. 3. 45 )

**अंशांशिभाव** ( aṁśāṁśi–bhāva ) *m.* the relation or status of being a part and whole अंशांशिभावस्याविद्यमानत्वात् TātpaṬ.(U.) 154. 17 ( *on* 4. 135 ); सत्यपि जीवेश्वरयोरंशांशिभावे प्रत्यक्षमेव जीवस्येश्वरविपरीतधर्मत्वम् BrahmSūBh. (S'aṅ.) 568. 2 ( *on* iii. 2. 5 ); नानात्वे सत्येव अभेदो नामान्वयः अंशांशिभावलक्षणः ĀtmaSi. 4. 24; काल्पनिकस्यांशांशिभावस्यात एव मूल एव निहितः कुठारः ĀtmaTaVi. 299. 12; अंशांशिभावाद् भूतानां संख्यैषामतिरिच्यते SamarāSū. 31. 16; विशेषणविशेष्यभावेनैवांशांशिभावः VedāntDī. 162. 8 ( *on* iii. 2. 29 ); अतस्तस्मिन्नपि पक्षे जीवपरमात्मनोरंशांशिभावो नोपपद्यते NītiMā. 52. 6; भेदोऽप्यंशांशिभावादिकृतो निरस्तो भवति PrakaVi. 256. 20; 655. 22; S'rutaPra. ii. 386. 24 ( *on* ii. 3. 52 ); पितापुत्रयोरंशांशिभावो नैकदेशतादिरूपः NyāySu.(Ja.) 510A. 5 ( *on* iii. 2. 10 ); शुद्धत्वं हि भेदस्यांशांशिभावासहचरितत्वम् SiddhāLeSaṁ. 337. 8; 340. 9; 459. 8; उक्तश्रुतिः…अविभागमात्रेणांशांशिभावं बोधयति SāṁkhyaPraBh. 133. 24 ( *on* 5. 73 ); कलयांशेन अंशांशिभावघटकभेदभानेन SetuBa. 205. 12; VedāntPāSau. 235. 13 ( *on* ii. 3. 42 ); S'aṅkaVi.(Ā) 50. 2; 113. 7.

**अंशांशीभाव** ( aṁśāṁśī–bhāva ) *m.* ( = aṁśāṁśi–bhāva ) नांशांशीभावश्चैकस्मिन्नीश्वरे PārāSū. 27. 18; अंशांशीभावः पृथ्वीनीरतेजोवायुषु दिव्येषु च PārāSū. 27. 25.

**अंशागृहीति** ( aṁśāgṛhīti ) *f.* non–apprehension of a part or portion अंशागृहीतेर्भ्रान्तिश्चेद्घटज्ञानं भ्रमो भवेत् PañcDa. 7. 55.

**अंशाग्रह** ( aṁśāgraha ) *m.* non–cognition of a part or portion दोषादंशाग्रहे चेत्ते नाग्रहोऽतोऽपि तु भ्रमः IṣṭaSi. 261. 10; भिन्नाभिन्ने मृषाभेदधीश्चेदंशाग्रहो भ्रमः IṣṭaSi. 318. 1.

**अंशाग्रहण** ( aṁśāgrahaṇa ) *n.* non–cognition of a part किमिदानीमंशाग्रहणं भ्रान्तिः PramāMā. 10. 14.

**अंशात्मक** ( aṁśātmaka ) *adj.* consisting of parts or degrees अंशात्मकस्य मे ब्रह्मन् मलिनांशे तु वै पुनः । मालिन्यं जायते BṛBrahmS. ii. 2. 33; चापमंशात्मकमस्ति सिद्धम् SiddhāTaVi. 106. 6; 163. 1.

**अंशाधिकरण** ( aṁśādhikaraṇa ) *n.* the section of the Brahmasūtras (ii. 3. 43–53) discussing the view that the individual soul is an *aṁśa* of the supreme soul; VedāntSā.(Rā.) 216. 7 ( *on* ii. 3. 42 ); S'atDū, 243. 24; NyāySu.(Ja.) 510A. 6 ( *on* iii. 2. 10 ); GoviBh. 62. 4 ( *on* i. 3. 43 ).

**अंशाधिकारिन्** ( aṁśādhikārin ) *adj.* entitled to a portion or share. यशसि वयमयं वा सुग्रीवो वा न केचिदंशाधिकारिणः AnargharaRā, 5. 51.

**अंशाधिप** ( aṁśādhipa ) *m.* the lord of the *navāṁśa* अंशाधिपजन्मपती …अस्तमुपागता यस्य । जन्मावसरे मरणं तस्य भवेत् HorāSā. 5. 35; Sārā. 10. 17.

**अंशानन्त्यसाम्य** ( aṁśānantya–sāmya ) *n.* similarity due to possessing infinite parts अंशानन्त्यसाम्येन मेरुसर्षपयोस्तौल्यप्रसङ्गश्च GoviBh. 121. 4 ( *on* ii. 2. 11 )

**अंशानपेक्ष** ( aṁśānapekṣa ) *adj.* without the need of the parts, independent of the parts बुद्धेस्त्वंशानपेक्षा स्फुरति विषयिता TattvMu. 1. 18.

**अंशानर्हत्व** ( aṁśānarha–tva ) *n.* unworthiness to receive a share in the property एतेषां च वाचनिकमंशानर्हत्वं न पुनर्धर्मानधिकारित्वहेतुकम् Aparā. 750. 7. ( *on* 2. 140 )

**अंशानुपपत्ति** ( aṁśānupapatti ) *f.* the impossibility of having parts आत्मन्यंशानुपपत्तेः BṛĀraUBh. 101. 4. ( *on* 4. 7 ).

**अंशानुबन्ध** ( aṁśānubandha ) *m.* ( = bhāgānubandha ) a whole number increased by a fraction or a fraction increased by a fraction of itself साङ्घ्रिद्वयं त्रयं व्यङ्घ्रि कीदृग् ब्रूहि सवर्णितम् । जानास्यंशानुबन्धं चेत् Līlā. 34; वेत्सि त्वमिह यदि सखेंऽशानुबन्धापवाहौ Līlā. 35.

**अंशानुवृत्ति** ( aṁśānuvṛtti ) *f.* continuity of the part अंशानुवृत्त्या वा वस्त्वनुगमेऽद्वैतवादः BrahmSi. 67. 8.

**अंशान्त** ( aṁśānta ) *adj.* ending with the key–note of a *rāga* असावंशादिरंशान्तपदावृत्तियुतो मतः SaṁgīRa. iii. 5. 85; न्यासान्तमथवांशान्तं विदार्यैकैकके मतम् SaṁgīRa iii. 5. 77.

**अंशान्तर** ( aṁśāntara ) *n.* **A** another part, protion, aspect, or feature यद्यप्येवंजातीयकोंऽशः समानत्वान्न विसंवादगोचरो भवत्यस्ति त्वंशान्तरं विसंवादस्थानम् BrahmSūBh.(S'aṅ.) 415. 3 ( *on* ii. 2. 42 ); किं…तस्यैव यागस्यांशान्तरविवृद्ध्या रूपान्तरं जातम् TantrVā. 1027. 9 ( *on* iii. 4. 47 ); 353. 10. ( *on* ii. 1. 1 ); अहमिति निरंशं चैतन्यमात्रं प्रतिभासते नांशान्तरम् PañcPā. 5. 13; द्वादशभिरपि लक्षणैर्धर्म एको जिज्ञास्यः प्रतिलक्षणमंशान्तरपरिशोधनया PañcPā. 61. 20; 14. 8; न…परिपूर्णा कर्तव्यता भवति यावदंशान्तराणि…नावगतानि ManuBh. i. 6. 5 ( *on* 1. 3 ); नांशिनोऽप्येकस्य भानाभाने, उक्तदोषप्राप्तेः । अंशान्तराभ्यां चेत्, अनवस्था IṣṭaSi. 13. 15; 115. 7; 268. 13; अंशस्याप्यंशान्तरसंभवे परमाणुमात्रे संयोगस्थितौ तस्याप्रत्यक्षत्वप्रसङ्गात् NyāyKa. 43. 23; एकस्यैवैकेनांशेन नित्यदुःखित्वादंशान्तरेण सुखित्वमपि नेश्वरत्वाय कल्पते VedāSaṁ. 106. 3; फलं तु प्रागेवांशान्तरसंबन्धादवगन्तुं शक्यते NyāyRaMā. 166. 9; वेद्यांश एव संस्कारजनितत्वेन स्मृतित्वं न त्वंशान्तरयोः TārkiRa. 21. 6; इदमंशस्य तु सत्यत्वमदोषजत्वम्, तस्यापि तथात्वेंऽशान्तरस्यैव बाधप्रसङ्गात् TantrRaha. 8. 14; न हि प्रामाण्यांशं तथात्वमपहायांशान्तरयोः प्रकाशापूर्वत्वयोः संशय इति युक्तम् NyāyKu. 20. 12; आकाशाद्यनवस्थापन्नेन तदवस्थानापन्नेनांशान्तरेण च सन्मात्रं वाय्वाद्युपादानमिति चेन्न S'rutaPra. ii. 354. 25 ( *on* ii. 3. 17 ); अंशोक्तावंशान्तरस्य वा निषेधः PratāYaBhū. 440. 8; एकदेशे तथाभूतवादित्वेऽप्यंशान्तरेऽतथाभूतवादित्वेऽपि प्रसङ्गात् NyāySu.(Ja.) 6A. 8 ( *on* i. 1. 1 ) क्वचिदंशोक्तावंशान्तरे निषेधः SāhiDa. 587. 4; अंशान्तरस्य व्यङ्ग्यत्वेऽप्येकांशमादाय समासोक्त्यादीनामपि वाच्यालंकारव्यपदेशः RasGaṅ. 162. 5; **B** another form or partial incarnation अंशान्तरेण भूम्यां त्वं तत्र तिष्ठ सुनिर्वृतः KūrmaP. 7. 13 (1. 1); **C** deduction from the numerator, difference between the numerators संकलितेंऽशा योज्या व्यवकलितेंऽशान्तरं कार्यम् BrāhmSphuSi 12. 2; आयव्यययोः सदृशैश्छेदैरंशान्तरं कुर्यात् ĀryaSi. 15. 14 (147); तुल्यछेदायव्ययराश्योरंशान्तरं कुर्यात् Pāṭīgaṇita 32; **D** difference of degrees इष्टोनस्थितिगुणितं गत्योरंशान्तरं भुजो भवति ĀryaSi. 5. 14 (90); **E** another part of the melody अंशेंऽशान्तरसंचारादंशांश इति कीर्तितः SaṁgīRa. ii- 3. 140.

[ **अंशापवाह** ( aṁśāpavāha ) *m.* a whole number diminished by a fraction or a fraction diminished by a fraction of itself वेत्सि त्वमिह यदि सखेंऽशानुबन्धापवाहौ Līlā. 35.]

**अंशाप्त** ( aṁśāpta ) *adj.* divided by the numerator अंशाप्तैक्यं व्यस्तं क्षिप्तेष्टघ्नं भवेत् सुवर्णमयी ( सा गुलिका ) GaṇiSāSaṁ. 5. 209; अंशाप्तं क्येक्यं फलम् GaṇiSāSaṁ. 5. 311.

**अंशाभाव** ( aṁśābhāva ) *m.* absence of parts or share किं जीवः सर्वकार्येषु सर्वसामर्थ्येन प्रवर्ततेंऽशेन वा ।…न द्वितीयः । अंशाभावात् TattvPrakā 90A. 5 ( *on* ii. 1. 27 ); अनंशतः अंशाभावादित्यर्थः SmṛtiCan. i. 171. 3 = VīraMi. (Saṁskāra.) 551. 14.

**अंशाभास** ( aṁśābhāsa ) *m.* appearance of parts, apparent parts अंशाभासाश्च सर्वेऽपि परस्यांशा न मुख्यतः AnuVyā. 37A. 10 ( *on* 2. 3 ); जीवानामंशाभासत्वं श्रुत्यन्तरेण दृढयति NyāySu.(Ja.) 454A. 9. ( *on* ii. 3. 18 )

**अंशाभिप्राय** ( aṁśābhiprāya ) *m.* reference to a part एकस्यापि प्रकारस्य नानाविधविशेषणयुक्तत्वाद् अंशाभिप्रायं बहुवचनम् TantrRa. 286. 3.

**अंशाभिव्यक्तिता** ( aṁśābhivyakti–tā ) *f.* manifestation of a part अंशाभिव्यक्तितता नाशो विनाशः सर्वलोपिता SivDr. 4. 57.

**अंशाभ्यस्त** ( aṁśābhyasta ) *adj.* multiplied by a fraction सपदं दलितं वर्गितमंशाभ्यस्तं भवेत् सारम् GaṇiSāSaṁ. 3. 52.

**अंशाभ्युपगम** ( aṁśābhyupagama ) *m.* acceptance of a part only इत्याद्यभिहितम् तदंशाभ्युपगम एव NyāyMa. 101. 2; इति जैमिनीयसिद्धान्तसकलक्रियार्थविध्येकवाक्यत्वभङ्गेनांशाभ्युपगममात्रम् SiddhāSi. i. 42. 23.

**अंशायत** ( aṁśāyata ) *adj.* one measure long अंशायतानि परिकल्प्य षडश्रकाणि TantrSa. 2. 69 ( comm. एकैकांशदीर्घाणि )

**अंशारब्ध** ( aṁśārabdha ) *adj.* produced by the parts न चांशारब्धोंऽशी स्वीकर्तुं शक्यते TattvPrakā. 116A. 4. (*on* ii. 3. 20)

**अंशारिष्ट** ( aṁśāriṣṭa ) *n.* danger due to *aṁśa* अंशारिष्टं विजानीयाद्रोगमेवात्र निर्दिशेत् HorāSā. 30. 2.

**अंशार्थिन्** ( aṁśārthin ) *adj.* desirous of the (divine) part, wishing to become a part of the godhead अंशार्थिनोर्धिया विष्णोश्चिरमक्रूरकंसयोः । योगः कृतोऽयं तेनैव सममेव प्रसेदुषा HariC. 134.

**अंशार्पक** ( aṁśārpaka ) *adj.* supplying a part (of the injunction) कथं भावयेदित्यंशार्पकाः प्रयाजादिविधयः SarvaMaSaṁ. 36. 9.

**अंशावतर** ( aṁśāvatara ) *m.* partial incarnation रामादयोंऽशावतरा हरेश्चेद्भवन्ति सर्वेऽपि भवन्तु नाम Vidvanmo. 8. 25.

**अंशावतरण** ( aṁśāvataraṇa ) *n.* **A** descent (on the earth) of a part (of the deity), partial incarnation अंशावतरणं चात्र देवानां परिकीर्तितम् MahāBhā. i. 2. 76; i. 61. 99; i. 109. 3; अंशावतरणं सर्वे सुराः कुरुत मा चिरम् HariVaṁ. 43. 62; 43. 9; अंशावतरणाद्विष्णोः सूतो भूत्वा महामतिः SkandP. v (3). 36. 12; मयेदं चिन्तितं पूर्वमंशावतरणं सुराः DevīBhāP. iv. 19. 29; iv. 22. 49; अंशावतरणे नायकानां रामादीनां···मानुष्योचितमेव चरितम् AbhinBhā. ii. 204. 13 (*on* 13. 34); यूयमंशावतरणं कुले कुरुत भारते DaśāvC. 8. 16; अंशावतरणे पुष्टिमार्गत्वान्न तत्र दोषः AṇuBh. 178. 21 (*on* iii. 1. 18); **B** (hence) the name of an *anuparvan* of MahāBhā. i. इदमंशावतरणं श्रोतव्यमनसूयता MahāBhā. i. 61. 101; i. 62. 1.

**अंशावतार** ( aṁśāvatāra ) *m.* partial incarnation, the incarnation of only a part of the deity, contrasted with *pūrṇāvatāra*, the full or complete incarnation पाहि विश्वमंशावतारकरणैर्न ममासि पुत्रः ViṣṇuP. v. 20. 103; व्रजामि सर्वेश्वरमीश्वराणाम् । अंशावतारं पुरुषोत्तमस्य ViṣṇuP. v. 17. 33; कलेरिवांशावतारः ···किरातपतिः AvantiKa. 166. 16; तस्मिन् भोजवंशभूषणमंशावतार इव धर्मस्यातिसत्त्वः···पुण्यवर्मा नामासीत् DaśKuC. 129. 11; अंशावतारमिव कृतान्तस्य सहोदरमिव पापस्य···शबरसेनापतिमपश्यम् Kād. 31. 21; 79. 19; अंशावतारा इव कृष्णार्धरात्रीणां···पुरस्ताद्दर्शनपथमवतेरुस्तरवः HarṣaC. 315. 12; 290. 17; मत्स्यः कूर्मो वराहः···विष्णोरंशावतारा भुवनहितकराः···पायासुर्माम् ViṣṇuPādāSt. 49; एतद्··· अंशावतार इव क्षीरजलधेः···देवेन खानितं सरः TilaMañ. 181. 21; तयोरंशावतारौ हि जिष्णुकृष्णौ महाबलौ DevīBhāP. iv. 1. 15; पश्चादंशावताराञ्च (? श्च) जातास्तेषां महात्मनाम् BhaviP. 476B. 32 (iii (3). 10. 48); एषामंशावतारान्मे निबोध SātvT. 1. 43; श्रीमद्दाशरथाः स्वयं मुररिपोरंशावतारा अमी MahāN. 1. 16; एवं मुख्यगौणपूर्णांशावेशाद्यवतारा बहुप्रकाराः YatīndraDī. 87. 1; अंशावतारानीशस्य योगाचार्यानुपास्महे S'ivārkaMaDī. i. 1. 7. (*on* i. 1. 0)

**अंशावतारक** ( aṁśāvatāraka ) *m.* partial incarnation यस्यैते भीमकर्माणो रुद्रा अंशावतारकाः BṛDharmaP. i. 35. 28.

**अंशावतीर्ण** ( aṁśāvatīrṇa ) *adj.* who has come down (to earth) as a part (of the deity) as a partial incarnation चिन्तयामास चाक्रूरो नास्ति धन्यतरो मया । योऽहमंशावतीर्णस्य मुखं द्रक्ष्यामि चक्रिणः ViṣṇuP. v. 17. 2 = BrahmP. 191. 2; अंशावतीर्णेन च येन गर्भे हृतानि तेजांसि महासुराणाम् MatsyaP. 245. 28 = VāmaP. 29. 26.

**अंशावह** ( aṁśāvaha ) *m.* name of a Vṛṣṇi अंशावहश्च [ v. l. आशावहश्च ] साम्बश्च वृष्णिवीराः प्रहारिणः MahāBhā. vii (App.) 3. 6.

**अंशाविवादिन्** ( aṁśāvivādin ) *adj.* not dissonant with the prominent note or key-note अंशाविवादी गीतस्याद्यविदारीसमाप्तिकृत् । संन्यासोंऽशाविवाद्येव विन्यासः स तु कथ्यते । यो विदारीभागरूपपदप्रान्तेऽवतिष्ठते SaṁgīRa. i. 189. 1 (1. 7) ( comm. यस्मिन् प्रयोगे योंऽशस्तस्याविरोधी संवादीत्यर्थः )

**अंशावृत्तित्व** ( aṁśāvṛtti–tva ) *n.* the fact of not being found in a part, partial lack of concomittance अंशावृत्तित्वे सति घटवृत्तित्वसाधने दृष्टान्तः साध्यविकलः स्यात् NyāySu.(Ja.) 365B. 9. (*on* ii 2. 6)

**अंशावेश** ( aṁśāveśa ) *m.* possession of a portion, being endowed with a part अद्य प्रभृति लोकेऽस्मिन्नंशावेशेन मे भवान् चरिष्यति यथाकालम् BrahmāṇḍP. ii. 37. 29.

**अंशाशीति** ( aṁśāśīti ) *f.* eighty degrees अंशाशीत्या हीनोऽर्कः केन्द्रं स्वोच्चवर्जितश्चन्द्रः PañcSi. 9. 7.

S. D. 3

**अंशाहति** ( aṁśāhati ) *f.* production of the numerators अंशाहतिश्छेदवधेन भक्ता लब्धं विभिन्ने गुणने फलं स्यात् Līlā. 38.

**अंशिक** ( aṁś–ika ) *adj.* belonging to the part of, pertaining to [DBHS.]

**अंशिकर्मन्** ( aṁśi–karman ) *n.* the activity of the whole or the possessor of the parts अंशांशिनोरेकत्वमेव । अंशिकर्मविनिर्मिते शरीर एवांशस्य भावात् BrahmSūBh.(Ma.) 58B. 1 (*on* iii. 3. 55)

**अंशिगत** ( aṁśi–gata ) *adj.* found in the whole (the bearer of the parts, the soul) अंशिगतस्य चांशेन सर्वस्याननुसंधानमीश्वराचिन्त्यशक्त्यायत्तमिति भावः TattvPrakā. 182A. 8 (*on* iii. 3. 56) भुवि जातेनांशेन चांशिगतं सुखदुःखाद्येवानुभूयते NyāySu.(Ja.) 510A. 11 (*on* iii. 2. 10)

**अंशित** ( aṁś–ita ) *adj.* divided into parts स्तम्भे प्राथमिकेऽनलादिशिवनिष्ठैरंशितैंऽशैः क्रमात् TantrSa. 2. 57; अथ सप्तांशिते तस्मिन् पीठमंशेन पङ्कजम् S'ilpaRa. i. 17. 34; i. 37. 102.

**अंशिता** ( aṁśi–tā ) *f.* **A** the status of a whole, completeness, entirety अंशिता यदि पदार्थलक्ष्ययोर्गृह्यते ननु पुनर्विरोधिता SaṁkṣeS'ā. 1. 207 ( comm. पदवाच्याभ्यां लक्ष्ययोरंशिता मुख्यार्थसंबन्धविशिष्टता ); तदा हि सर्वत्र कृत्स्नयत्नोंऽशितापि वा AnuVyā. 21A. 2 (*on* 2. 1) ( Jaya. सर्वत्र तृणादानादावपि कृत्स्नयत्नोंऽशिता वा प्रसज्येत ); **B** co-parcenership, co-heirship, status of a sharer पुत्राणां नांशिता···प्रपौत्राणामंशिता quoted in S'abdaKaDru.

**अंशित्व** ( aṁśi–tva ) *n.* **A** claim on a share of the property, co-parcenership, partnership द्रव्ये पितामहोपात्ते···सममंशित्वमाख्यातं पितुः पुत्रस्य चैव हि BṛhaspaSm. 197. 14; राजधने दीनानाथादिसकलप्राणिनामंशित्वम् NītiRa. 72. 4; **B** the right of dividing the property अंशित्वमंशकर्तृत्वं समं न तु स्वेच्छया स्वार्जितवन्न्यूनाधिकांशकर्तृत्वम् VīraMi. (Vyavahāra.) 447. 12; **C** possessing parts, the whole, the supreme soul whose parts are considered as the individual souls, the cosmic being सर्वेषामेव चांशानामंशित्वेन परा गतिः BṛBrahmaS. iii. 9. 73; ईश्वरस्य तदंशविशेषत्वात्तस्य सर्वात्मकत्वांशित्वोपदेशा व्याहन्येरन् S'rīBh. 448. 6 (*on* ii. 1. 15); विवर्तपक्षेऽपि जीवस्यापारमार्थिकत्वादेवांशत्वं ब्रह्मणोंऽशित्वं च नोपपद्यते NītiMā. 51. 23; नन्वीश्वरांशस्य बृहत्त्वादंशित्वव्यवहारोपपत्तिः S'rutaPra. ii. 386. 30 (*on* ii. 3. 52); ii. 386. 29 (*on* ii. 3. 52); स्थाणावध्यस्तं पुरुषं प्रति स्थाणोरंशित्वप्रसिद्ध्यभावात् S'rutaPra. ii. 385. 18 (*on* ii. 3. 52); किं च ब्रह्मणो निरवयवत्वेनैकस्यांशित्वमन्येषां तदंशत्वमित्यपि वक्तुमशक्यम् AṇuBh. 212. 20 (*on* iii. 3. 3); अंशित्वादिहेतुष्वपि मतद्वयेऽपि कार्यस्य कारणाभेदेन तदनाश्रितत्वात् सिद्धसाधनम् Nyāyāmṛ. 83A. 7; अन्यासमवेतस्यांशित्वमेतत्तन्तुसमवेतत्वं विना न युक्तम् Nyāyāmṛ. 86A. 6; चित्सुखाचार्यैस्तु अयं पटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी अंशित्वात् इतरांशिवत् इत्युक्तम् AdvaiSi. 322. 1 (comm. अंशित्वात् कार्यत्वात्); पूर्वोक्तलक्षणो ब्रह्मांशो जीवपदार्थस्तत्रांशित्वेन ब्रह्मापि वर्तते VedāntKau. 282. 1 (*on* iii. 2. 14); 386. 20 (*on* iv. 1. 3).

**अंशिन्** ( aṁś–in ) *adj.* [mostly *m* as a noun] **A** co-parcener, co-heir धनानामविभक्तानामंशिनां संमतिं विना ।···असिद्धौ न्यासविक्रयौ MahNirvāT. 12. 118; अंशिनः प्राप्तुमर्हन्ति स्वं स्वमंशं विभागतः MahNirvāT. 12. 14; **B** the whole as against the parts, the possessor of parts (applicable to all kinds of objects) नांशेष्वंशी न तेऽत्रान्ये वीक्ष्या न परमाणवः NyāyVi. 2. 110; पूर्वापराधरोत्तरमंशिनाभिन्नेन S'ākaṭāVyā. ii. 1. 25 (comm. पूर्वादि(?दी)न्यंशवाचि(?ची)नि सुबन्तानि अंशिवाचिना सुपा समस्यन्ते···न चेत् सोंऽशी भिन्नः); यथा किलांशिनः पादपस्य बीजाङ्कुरपादपत्वलक्षणास्त्रयोंऽशाः TattvPradī. (A.) 139. 8; पूर्वापराधरोत्तरमभिन्नेनांशिना SiddhaHe. iii. 1. 52; यथा पुष्पाद्गन्धः पृथग्गच्छति एवमंशिनो जीवादंशाः पृथग्गच्छन्ति BrahmSūBh.(Ma.) 35B. 10 (*on* ii. 3. 27) ( comm. पूर्वादयोंऽशार्था अंशवद्वाचिना समासस्तत्पुरुषः स्यात् ); नन्वंशविधानस्यांशिना विनानुपपत्तेः CaturCin. iii (2).346. 3; तस्मादंशैरष्टाकपालादिभिरंशी द्वादशकपालः स्तूयते NyāyMāVi. 54. 2 (*on* i. 4. 12); पटाद्या अंशिनः प्रसिद्धाः NyāySu.(Ja.) 304B. 4 (*on* ii. 1. 7); **C** the supreme soul whose part or portion is regarded as the individual soul (mostly in Vedānta philosophy) अंशिन ईश्वरस्यापि दुःखित्वं स्यात् BrahmSūBh. (S'aṅ.) 480. 18 (*on* ii. 3. 45); ननु नांशः अंशिनोऽर्थान्तरम् । नापि स एव BrahmSi. 66. 22; तिष्ठन्नांशी त्यजेदंशं न विनांशं स तिष्ठति । नष्टो नांशी त्यजेदंशम् IṣṭaSi. 223. 2; 109. 15; यत्स्वभावोंऽशभूतो जीवः नैवमंशी परमात्मा VedāntSā. (Rā.) 18. 1 (*on* i. 1. 2) अंशिनः स्वांशगात्यन्ताभावस्य प्रतियोगिनः । अंशित्वादितरांशीव TattvPradī.(Ci.) 40. 10; तिस्रो मूर्तयोंऽशा ब्रह्मांशीति यादवप्रकाशपक्षः S'rutaPra. i. 104. 17 (*on* i. 1. 2); ii. 176. 2 (*on* i. 4. 28); उत एकत्वमंशिनि अंशेषु चानेकत्वमिति NyāySiA. 190. 18; तत्र किमंशानामन्योन्यानुसंधानमापाद्यते, उतांशिनः Vādā. 151. 1; स्मरन्ति च सर्वेऽप्यृषयोंऽशिनो दुःखासंबन्धम् AṇuBh. 156. 2 (*on* ii. 3. 47); अंशोंऽशीति विभागकल्पनाप्येकान्ताभिदया विरुध्यते NayaMañ. II. iii. 17. 33; अंशी सुखदुःखं नानुभवति VedāntPāSau.

237. 6 (*on* ii. 3. 45); तथा प्रभास्थानीयतदंशाज्जीवादंशी परोऽप्यर्थान्तरभूत इत्यर्थः VedāntTaSā. 60. 8.

**अंशिभाव** ( aṁśi–bhāva ) *m.* the nature of being the whole अंशिभावेऽप्यत्यन्ताभेदो नास्तीति चेत्, कोऽयं विशेषः IṣṭaSi. 268. 16.

**अंशिभूत** ( aṁśi–bhūta ) *adj.* [*f.* –*ā*] being the whole or entire thing यथा वृक्षत्वं स्कन्धप्रकाण्डशाखाद्यनेकांशानामंशिभूतैकद्रव्यवृत्ति S'rutaPra. ii. 176. 6 (*on* i. 4. 28); पृथिव्याः पञ्चाशत्कोटिविस्तीर्णाया अभिमानिन्यंशिभूता धरादेवी NyāySu.(Ja.) 453B. 7 (*on* ii. 3. 18)

**अंशिरूप** ( aṁśi–rūpa ) *n.* the form or status of the whole अत्रांशिरूपेणैकोऽशकलारूपेण तु बहुत्वेत्यर्थः प्रतीयते GoviBh. 166. 7 (*on* ii. 3. 44)

**अंशिविशेष** ( aṁśi–viśeṣa ) *m.* a particular whole, a given complete entity न ह्यनेनांशिविशेषेण विनांशविशेषैरनुपपत्तिः CaturCin. iii (2). 346. 7.

**अंशिसंयोग** ( aṁśi–saṁyoga ) *m.* conjunction with the whole entity सर्वेऽप्यंशिसंयोगास्तत्तदंशवृत्तयः NyāySu.(Ja.) 365B. 11 (*on* ii. 2. 6); 367A. 6 (*on* ii. 2. 6)

**अंशिसंस्तुति** ( aṁśi–saṁstuti ) *f.* praise of the whole entity नानागुणविधौ तस्मादंशद्वारांशिसंस्तुतिः NyāyMāVi. 53. 15 (*on* i. 4. 12)

**अंशिसाधर्म्य** ( aṁśi–sādharmya ) *n.* similarity with the whole entity अंशेष्वंशिसाधर्म्यस्याव्यभिचारात् NyāySu.(Ja.) 504A. 5 (*on* iii. 2. 9)

**अंशीकृ** ( aṁśī–kr̥– ) viii. u. **A** to divide, to share अंशीकृत्य स एव संयुगशतैः राज्ञां गणैर्भुज्यते S'atTrayī. 2. 304; **B** to treat as a numerator of a fraction अंशीकृत्य च्छेदं प्रमाणराशेः GaṇiSāSaṁ. 2. 8.

**अंशीभूत** ( aṁśī–bhūta ) *adj.* which has become a part नाप्यंशीभूतसोमयागविकृतित्वमंशांशिनोरभेदेन प्रकृतिविकारभावासंभवादित्यर्थः MayūMāli. 224. 35 (*on* iii. 2. 27)

**अंशु** ( aṁśú ) *m* [occasionally *f.* according to Vaija. 291. 25 and according to 'some' when it means *dyuti* or *raśmi*, NānārthāSaṁ. i. 48. 58; Debr. p. 474 'cannot be traced to a root' / from *aś–* and *śam* or *an–* and *śam* शमष्टमात्रो भवति, अननाय शं भवतीति वा Nir. 2. 5; from *aś–* Uṇā. (He.) 719; oxyt. अंशुशब्दः प्रातिपदिकस्वरेणान्तोदात्तः PadMañ. *on* KāśiVr̥ *on* P. iv. 3. 166 or अंशुशब्दः 'कुश्र' इति वर्तमाने 'मृगय्वादयश्च' इति निपातितः PadMañ. *on* KāśiVr̥. *on* P. vi. 2. 193] **1 A** a Soma stalk (or juice extracted from it) **B** a filament or part of the Soma stalk **C** name of a cup in which Soma is poured **D** a shoot or sprout–like decoration **E** any exudation or a Yāga **2** a ray **A** of the sun **B** of the moon **C** a ray in general **3** the sun **4** the moon **5 A** cobweb **B** a fibre of a thread **C** fibre of a bark **6** Proper name **A** of a r̥ṣi **B** of a Vedic teacher **C** of S'iva **D** of one of the twelve Ādityas **E** one of the deities called Harita **F** a companion of Kr̥ṣṇa **G** a door–keeper of Kr̥ṣṇa **H** a prince (i) son of Purumitra (ii) son of Priyagotra (iii) son of Purutvat **7** rein **8** a small portion **9** bristle **10** Kośas *add* light, serpent, dress, straight, fire, foot, point, weapon, white, etc. [DBHS cloth, garment] **1 A** a Soma stalk (or juice extracted from it) आ प्यायस्व मदिन्तम सोम विश्वेभिरंशुभिः R̥V. i. 91. 17 = VājaS. 12. 114; R̥V. ix. 67. 28; अध्वर्यवोऽरुणं दुग्धमंशुं जुहोतन वृषभाय क्षितीनाम् R̥V. vii. 98. 1; iii. 36. 6; v. 36. 1; तां वां धेनुं न वासरीमंशुं दुहन्त्यद्रिभिः सोमं दुहन्त्यद्रिभिः R̥V. i. 137. 3; ix. 72. 6; अंशोः पीयूषं R̥V. ii. 13. 1; iii. 48. 2; x. 94. 8; vi. 17. 11; vi. 20. 6; i. 125. 3; viii. 72. 2; अंशुर्यवेन पिपिशे R̥V. ix. 68. 4; अंशोः पयसा R̥V. ix. 107. 12; समुद्रादूर्मिमुदियर्ति वेनो नभोजाः पृष्ठं हर्यतस्य दर्शि ऋतस्य सानावधि विष्टपि भ्राट्... समुद्रादूर्मिर्मधुमाँ उदारदुपांशुना सममृतत्वमानट् R̥V. iv. 58. 1; VājaS. 17. 89; यं देवा अंशुमाप्याययन्ति यमक्षितमक्षिता भक्षयन्ति AV. vii. 81. 6; v. 29. 12 v. 29. 13; ब्रह्मणा शुद्धा उत पूता घृतेन सोमस्यांशवस्तण्डुला यज्ञिया इमे AV. xi. 1. 18; ये व्रीहयो यवा निरुप्यन्तेंऽशव एव ते AV. ix. 6. 14; अस्मांकमंशुं मघवन्पुरुस्पृहं वसव्ये अधि बर्हय SV. I. iv. (i). 1. 6; I. iv (i). 2. 3; अंशुरंशुस्ते देव सोमाप्यायताम् TaiS. I. ii. 11. 1; VājaS. 5. 7; अंशुना ते अंशुः पृच्यतां परुषा परुः…TaiS. I. ii. 6. 1 (Sāy. अंशुः सूक्ष्मोऽवयवः) VājaS. 20. 27 (Mahī. अंशुः भागः); घ्नन्ति वा एतत्सोमं यदभिषुण्वन्त्यंशून् TaiS. VI. iv. 4. 4; वाचस्पतये पवस्व वाजिन् वृषा वृष्णो अंशुभ्यां गभस्तिपूतः TaiS. I. iv. 2. 1; VājaS. 7. 1; गायत्री यं सोममाहरत् । तस्य योऽंशुः परापतत् TaiBr. I. iv. 7. 5; स देवानंशूनकरोत् TaiBr. I. iv. 1. 1; प्रत्नोंऽशुर्यमेतमभिषुण्वन्ति KauṣīBr. 13. 4; तस्मादाहुस्सोमस्यैवांशुराप्यायस्वेति JaimiBr. 1. 224; 1. 114; मर्कटोंऽशूनादाय वृक्षमापुप्लुवे ṢaḍviBr. i. 6. 9; संतृप्तस्य राज्ञः प्रतिप्रस्थाता सव्ये पाणौ षडंशून् सचते BaudhS'S. i. 206. 9; होतृचमसीयानंशूनुत्तमे पर्यायेऽभिषुणोति ĀpaS'S. xii. 10. 11; अङ्गुष्ठेन कनिष्ठिकया चाङ्गुल्यांशून् संगृह्य ĀpaS'S. x. 24. 8; x. 24. 14; xii. 8. 4; etc. एकैकेन पर्यायेण द्वौद्वावंशू प्रवृहति MānS'S. VII. i. 1. 21; अंशून् बभस्ति KāśiVr̥. *on* P. vi. 4. 100; अपि च तृतीये सवनेंऽशुरेकोऽभिषूयते S'ābaBh. 875. 2 (*on* iii. 3. 31); अवशिष्टानामप्यंशूनामुपसमूहनवचनात् S'āstrDī. 255. 7 (*on* iii 3. 11); **1 B** a filament or a part of the Soma stalk (usually occurs with *skand–*) यस्ते द्रप्सः स्कन्दति यस्ते अंशुर्ग्रावच्युतो धिषणाया उपस्थात् R̥V. x. 17. 12; यस्ते द्रप्सः स्कन्नो यस्ते अंशुरवश्च यः परः स्रुचा R̥V. x. 17. 13; यो वै सोमस्याभिषूयमाणस्य प्रथमोंऽशुः स्कन्दति TaiS. III. i. 8. 3 यो द्रप्सो अंशुः पतितः पृथिव्याम्…TaiS. III. i. 10. 1; VājaS. 7. 26; या एवास्याभिषूयमाणस्य विप्रुषः स्कन्दन्त्यंशुर्वा GopBr. ii. 2. 12; अथोपसृष्टं राजानमष्टौ कृत्वोऽग्रे अभिषुणोति सोंऽशौ स्कन्ने वाचयति BaudhS'S. i. 206. 11; ii. 173. 7 आ मा स्कानिति प्रथमप्लुतमंशुमभिमन्त्रयते ĀpaS'S. xii. 7. 11 MānS'S. II. iii. 4. 10; II. iv. 3. 29; **1 C** name of a cup (*graha*) having four corners in which Soma is poured for offering or the Soma offering contained in this cup परा वा एतस्यायुः प्राण एति योंऽशुं गृह्णाति TaiS. III. iii. 4. 3 (Sāy. यो यजमानोंऽशुनामकं सोमरसं पात्रे गृह्णाति); स एतं प्रजापतिरंशुमपश्यत् तमगृह्णीत तेन वै स आर्ध्नोत् TaiS. VI. vi. 10. 1; VājaS. 18. 19; अंशुर्वै नाम ग्रहः S'atBr. IV. i. 1. 2 (Sāy. गृह्यतेऽनेनेति करणव्युत्पत्त्या 'ग्रहः' दारुमयं पात्रमंशुनामकम्); प्रजापतिर्वा एष यदंशुः ।…तस्माद्वा अंशुं गृह्णाति S'atBr. IV. vi. 1. 1–2; I. v. 9. 1; V. i. 2. 1; अथ मनो ह वा अंशुः । वागदाभ्यः S'atBr. XI. v. 9. 2; अथातोंऽश्वदाभ्ययोरेव ग्रहणमंश्वदाभ्यौ ग्रहीष्यन्नुपकल्पयते द्वे औदुम्बरे नवे पात्रे तयोश्चतुःस्रक्त्यंशुपात्रं भवति श्लक्ष्णमदाभ्यपात्रम् BaudhS'S. ii. 173. 4; भ्रातृव्यवतादाभ्यो ग्रहीतव्यः बुभूषतांशुः ĀpaS'S. xii. 8. 12; xii. 7. 17; MānS'S. IX. iii. 1. 6; अंशुरिति मुक्तसंशयमेव ग्रहनामधेयम् S'ābaBh. 609. 10 (*on* ii. 3. 20); 1055. 5 (*on* iii. 6. 32); तृतीयसवनेंऽशुरेको गृह्यते TantrVā. 895. 18 (*on* iii. 3. 29); 1104. 10 (*on* iii. 6. 33); NyāyMāVi. 186. 20 (*on* iii. 6. 12); MīmāKau. ii. 60. 20 (*on* ii. 3. 20); BhāṭṭDī. ii. 194. 12 (*on* v. 3. 6); **1 D** a shoot or sprout–like decoration (of a horse) एष रुक्मिभिरीयते वाजी शुभ्रेभिरंशुभिः R̥V. ix. 15. 5 रोहिच्छ्यावा सुमदंशुः R̥V. i. 100. 16. (Sāy. सुमदंशुः स्वतः प्रांशुः । उक्तं च यास्केन सुमत् स्वयमित्यर्थः (Nir. 6. 22)); **1 E** any exudation or juice (not necessarily of Soma plant) or a name of a sacrifice (two possible meanings considered in the Mīmāṁsā literature) अंशुसंज्ञकं यागं करोतीत्येवं प्राप्तम् S'ābaBh. 609. 6 (*on* ii. 3. 20); अदाभ्यशब्देनावयवव्युत्पत्त्या हिंसाख्यदम्भानर्हद्रव्यस्य, अंशुशब्देन च निर्यासस्योपादानोपपत्तेः NyāySu.(So.) 943. 29 (*on* ii. 3. 20); अंश्वदाभ्यनामको वा (यागः) MīmāKau. ii. 61. 10 (*on* ii. 3. 20); **2 A** a ray of the sun तेषामादत्त तेजांसि जलं सूर्य इवांशुभिः MahāBhā. vi. 105. 31; (जवान) शरजालैरविच्छिन्नैस्तमः सूर्य इवांशुभिः MahāBhā. vii. 17. 24; viii. 64. 6; गुणैर्विरुरुचे रामो दीप्तः सूर्य इवांशुभिः Rāmā. ii. 1. 27; ii. 39. 8; ii. 57. 11; आयूंषि क्षपयन्त्याशु ग्रीष्मे जलमिवांशवः Rāmā. ii. 98. 19; दिवा सूर्यांशुसंतप्तम् CaraS. i. 6. 45; (1922 Ed.); पन्थानश्च विशुध्यन्ति सोमसूर्यांशुमारुतैः YājñaSm. 1. 194; ViṣṇuP. ii. 9. 9; मण्डलादंशुमिवांशुभर्तुः Kirātā. 15. 49; अंशुभिः प्रतप्तमभ्यर्णतया विवस्वतः S'iśuVa. 12. 66; सविता संहरत्यंशून् कषायानिव संयतः PadmP. (Ra) 73. 125; RāmC. 4. 66; 14. 61; Kapphiṇā. 11. 11; Br̥ParāSm. 2. 79; (रविः) कुर्वन् ककुभि ककुभि बन्धूकमयीमिव सृष्टिमंशुभिः YaśasCam. i. 364. 4; VāmaP. 15. 47; VarāP. 125. 43; PadmP. iv. 13. 26; BhaviP. III. iv. 3. 8 (544B. 27); हीरकस्य सूर्यांशुस्पर्शमात्रेण वमतो दीप्तिमच्छिशाः(? खाः) YuktiKa. 43. 11; RāmāMañ. 268. 11; अंशुभिः खरतरैरदशीयत्तापमप्यधिकमुष्णदीधितिः VikraDeC. 14. 28; महदर्णो वेगात्स्पृष्टं वांशुभिरंशोरिह शुद्धयेत् ĪśānS'iPa. i. 7. 35; ii. 9. 27; चन्द्रं मर्मरयन्ति पर्पटमिव क्रूरा रवेरंशवः SubhāRaK. 9. 24; Vāgbhaṭā. 2. 14; यस्यांशवः सकलकैरवबैरकाराः S'rīKaC. 5. 43; TriṣaS'aPuC. i. 5. 560; RāghPāṇ.(Ka.) 4. 26; 12. 39; PrthvīVi. 2. 1; KāvyKaVr̥. 4. 12 (1. 1); HaṁsSaṁ. 48; चरमभूमिधराग्रिमचूलिकामहिमरश्मिरभूषयदंशुभिः HammīMaKā. 7. 1; RasGaṅ 170. 7; PadyaVe. 358; GoviBh. 164. 3 (*on* ii. 3. 41); विश्राणा वामनत्वं प्रथममथ तथैवांशवः प्रांशवो वः…कृच्छ्राणि…हारिद्श्वा हरन्तु SūryS'. 7; **2 B** of the moon भयातु तावेव रथौ समाश्रयंस्तमोनुदौ खे प्रसृता इवांशवः MahāBhā. viii. 64. 6; चन्द्रसूर्यांशुरहितं खं बभूवातिनिष्प्रभम् HariVaṁ. 61. 16; शारदस्याभिरामस्य चन्द्रस्येव नभोंऽशुभिः Rāmā. i. 15. 23; CaraS. i. 6. 29; i. 6. 45 (1922 Ed.); YājñaSm. 1. 194; नोच्छ्वसिति तपनकिरणैश्चन्द्रस्येवांशुभिः कुमुदम् Vikramo. 3. 16; चलत्पलाशान्तरगोचरास्तरोस्तुषारमूर्तेरिव नक्तमंशवः S'iśuVa. 1. 21; (शशभृतः) मधुपायिनामदलयन् दलयन्त्रणमंशवः HarVi. 3. 67; RāmC. 2. 79; VarāP. 11. 55; इन्दोः कुमुद्वतीं चक्रुः प्रेमदूता इवांशवः RāmāMañ. 235. 26; 311. 7; BrKathāS'loSaṁ. 27. 27; VyaktiVi. 70. 11; S'rīKaC. 11. 57; शीतद्युतेरंशवः । प्राप्ताः संप्रति पश्चिमस्य जलधेस्तीरं PrasaRā. 7. 81; SaduktiKa. 10. 9; NemiDū. 73; प्रतिदिशममृतांशोरंशवः संचरन्ति SāhiDa. 561. 5; Subhāṣi. 1123; 2194; पूर्णोऽपि रजनीनाथो रिक्त एवांशुभिर्विना CaitaCa. 199. 2(8); RasGaṅ 409. 10; BhāmiVi. (App. 11. 21); कोऽयं संप्रति य(? या)मुनीयसलिलं संकाशयत्यंशुभिः GopāKeCan. 122. 19; गुणैराप्यायते सोमश्चांशुभिः पूरयञ्जगत् Hastyāyur.

iv. 15. 7 (643. 9); AnekāTi. 4. 27; **2 C** a ray in general, of any shining object (like a precious stone, gold, fire, sword) or of parts of body (like the eye, teeth, feet, nail) or of virtue, fame; lustre, brightness परराष्ट्रेषु विख्याता नयबुद्धिगुणांशुभिः Rāmā. i. *267; निस्त्रिंशांशुप्रतानप्रदलितनिखिलारातिघोरान्धकारः EI. xx. 43. 2; यशोंऽशुशुक्लीकृतसप्तविष्टपात् Kād. 4. 19; HammīMaKā. 3. 77; चञ्चलानां चक्षुषामंशुभिः कृष्णसारमया इवासन्वासराः HarsaC. 190. 12; चरणतलगतैरंशुभिः शोणशोभः CaṇḍiS. 96; वापीष्वन्तर्लीनमहानीलदलासु। शस्त्रीश्यामैरंशुभिः ··· अम्भश्छायामच्छामृच्छति नीलीसलिलस्य SiśuVa. 4. 44 (comm. शस्त्रीवच्छ्यामैरंशुभिरन्तर्गतेन्द्रनीलमरीचिभिः); परिवीतमंशुभिः Kirātā. 12. 18 (comm. अंशुभिस्तेजोभिः); अपाङ्गभागपातिन्या दृष्टेरंशुभिरुत्पलम् स्पृश्यते वा न वा···Kāvyāda. 2. 225; ···नखांशुजटिलं पदं विष्णोः EI. iii. 51. 1; आयुरैश्वर्यादीनां विलसितमचिरांशु[चं]चलमवगच्छद्भिः ···परिपालनीयम् EI. xxv. 291. 29; x. 104. 31; etc.; अप्सूर्ध्वदर्शिनां नित्यं द्वेधा चक्षुः प्रवर्तते। एकमूर्ध्वमधस्ताच्च तत्रोर्ध्वांशुप्रकाशितम् TattvSaṁ. 2221; रत्नांशुवलयेन···हस्तेन YaśasCam. ii. 27. 6; अनवरतयक्षविक्षिप्यमाणोभयपक्षचामरपरम्परांशुजालधवलित: YaśasCam. ii. 381. 24; नम्रामरकिरीटांशुपरिवेषनभस्तले YaśasCam. ii. 396. 9; तं (तरुं) मूलतः पल्लवितमिव कुर्वाणमंशुभिः TriṣaSaPuC. i. 6. 125; इन्दीवरश्रीनयनांशुवन्दी Yātrā-Pra. 1. 13; वत्रंशे बिसकान्तिभिर्विजगले डिण्डीरखण्डांशुभिः YātrāPra. 2. 93; मल्लदेवयशसा गलहस्तो हस्तिमल्लदशनांशुषु दत्तः EI. viii. 209. 7; मणयः प्रचिक्षिपुः··· कटाक्षानिव दीर्घारुणानंशून् TilaMañ. 92. 3; तरलतरलैरंशुभिर्विस्फुरन्तः···कटाक्षक्षुरप्राः SubhāRaK. 23. 45; इन्द्रायुधांशुविसृतिविच्छुरितान्तरीक्षम् YuktiKa 98. 7; धत्तेंऽशुभिः समालब्धां भर्गनेत्रहविर्भुजः SrīKaC. 4. 11; सौवर्णे पुरमभ्युपैति निकटं यस्योत्कटैरंशुभिः TripuDi. 4. 11; अंशुभिः···अन्धकारं हरतु हरशरोद्गारजन्मानलो वः SaduktiKa. 14. 1; श्रीसनातनसुमणिरत्नमंशुभिरपि चण्डम् StavMā. 284. 23; पाण्डरैरंशुभिर्जगच्छादकत्वात् पाण्डरवासस्त्वम् SrutaPra. ii. 139. 21 (*on* i. 4. 18); **3** the sun वरुणः सागरोंऽशुश्च (listed among the 108 names of the sun) MahāBhā. iii. 3. 21; अंशुर्विवस्वांस्त्वष्टा च सविता विष्णुरेव च (listed among the 12 suns) BrahmāṇḍP. i. 24. 34; चैत्रे मासि तु देवोंऽशुः BrahmāṇḍP. i. 24. 35; अंशुस्त्वमंशुधारित्वात् ViṣṇuDhaP. i. 30. 18; पूष्णे भगाय मित्राय पर्जन्यायांशवे नमः (names of अर्क) BhaviP. i. 71. 5 (124A. 13); महदर्णो वेगात्स्पृष्टं वांशुभिरंशोर्हि शुध्येत् IśānSiPa. i. 7. 35; ii. 9. 27; पूर्वाचले धातुवपूंषि वप्राण्यर्वाण उद्यान्त्यघलून्त्युरंशोः DvyāśraKā. 2. 38; 18. 2; चन्द्रांशवः सहस्राणि षोडश TriṣaSaPuC. ii. 3. 546; **4** the moon तं पूर्वपक्ष आप्याययन्ति। तथापि निगमो भवति। यथा देवा अंशुमाप्यायन्तीति Nir. 5. 11; (Durga यथा येन प्रकारेण देवाः सूर्यस्य रश्मयः अंशुं सोममाप्याययन्ति पूर्वपक्षे। Skanda–Mahe. तथा देवास्ता एव रश्मयोंऽशुं चन्द्रमसं पूर्वपक्षे आप्याययन्ति। cf. यथादित्या अंशुमाप्याययन्ति MaiS. iv. 9. 27; यं देवा अंशुमाप्याययन्ति···AV. vii. 81. 6; यमादित्या अंशुमाप्याययन्तीति TaiS. II. iii. 5. 3; iv. 14. 1; TaiBr. III. i. 3. 1); Vaija. 19. 26; NānārthāSaṁ i. 47. 57; **5 A** strand of a cob-web कोषकारो यथा ह्यंशूनुपादत्ते वधप्रदान् CaraS. iv. 1. 96 (1941 Ed.); ऊर्णनाभ इवांशूनां स हेतुः किल जन्मिनाम् TattvSaṁ. 154; **5 B** a very thin fibre forming the constituent (*avayava*) of a thread यदा तन्त्वोः संयोगे सत्यन्यतरतन्त्वारम्भके अंशौ कर्मोत्पद्यते तेन कर्मणा अंश्वन्तराद्विभागः क्रियते PadārthaSaṁ. 141. 10; तन्तवः स्वावयवेषु अंशुषु पटः तन्तुषु NyāyVār. 49. 5 (*on* i. 1. 5); तथा तन्तुष्वंशवोंऽशुषु तदवयवाः (प्रत्यक्षमुपलभ्यन्ते) BrahmSūBh.(Śaṅ.) 317. 19 (*on* ii. 1. 15); तन्तवश्च अंशूनपेक्ष्य स्थूला अनित्याश्च भवन्ति BrahmSūBh.(Śaṅ.) 373. 7 (*on* ii. 2. 15); तन्तुभिः पटः क्रियते न तन्त्ववयवैरंशुभिः NyāyMañ. ii. 73. 30; NyāyKa. 150. 24; NyāyKuA. ii. 96. 8; सूक्ष्मात्खलु स्थूलस्योत्पत्तिर्दृश्यते यथा तन्तुभिः पटस्यैवमंशुभ्यस्तन्तूनाम् Bhām. 394. 4 (*on* ii. 2. 10); Kiraṇā. 66. 3 (BSS.); 230. 14 (BSS.); पटादप्यान्तरस्तन्तुस्तन्तोरप्यंशुरान्तरः PañcDa. 6. 166; Upask. 326. 11 (*on* vii. 2. 9); 332. 2 (*on* vii. 2. 10); Nyāyāmṛ. 2. 8; AdvaiSi. 757. 10; SivārkaMaDī ii. 24. 22 (*on* ii 1. 16); ii. 74. 10 (*on* ii. 2. 12); SiddhāLeSaṁ. 425. 2; GuruCan. i. 93. 21; Vaija. 214. 6; AnekāSaṁ 2. 530; NānārthāSaṁ. i. 47. 57 etc. etc.; **5 C** fibre of a bark अंशूनां नाडीवादिवल्कलजातीनां सूत्राणाम् ManvaVi. 669. 2 (*on* 5. 120); अंशुपट्टो वल्कलविशेषः Nandana. 669. 10; **6 A** Proper name of a *ṛṣi*, protégé of Aśvinā यथोत कृत्व्ये धनेंऽशुं गोष्वगस्त्यम् ṚV. viii. 5. 26; **6 B** of a Vedic teacher belonging to Sāmaveda, son of Dhanaṁjaya सुतेमनाः शाण्डिल्यायनोंऽशोर्धानंजय्यात् VaṁśBr. 1. 27; **6 C** of Siva (अष्टोत्तरसहस्रं तु नाम्नां शर्वस्य मे शृणु) रौद्ररूपोंऽशुरादित्यो MahāBhā. xiii. 17. 65; **6 D** of one of the twelve Ādityas often enumerated in the Purāṇas अंशुर्भगश्चातितेजा आदित्या द्वादश स्मृताः ViṣṇuP. i. 15. 131; (one of the Divākaras = Ādityas) KūrmaP. 42. 2 (1. 4); LiṅgaP. i. 55. 25; (as Bhānus) PāñcaRā.-(Nā.) iii. 4. 12; BṛBrahmS. iii. 10. 22; (born of Aditi and Kaśyapa) आदित्यां कश्यपात्पुनः।···मित्रोऽथ वरुणो भगः। अंशुश्च द्वादशादित्या आसन् वैवस्वतेऽन्तरे AgniP. 19. 3; (included in the different names of *ravi*) SkandP. I. ii. 51. 66; SkandP. I. ii. 5. 77; NaraP. 5. 51; (the Ādityas, and some others, constitute the Sauragaṇa for the month of Mārgaśīrṣa) अथांशुः कश्यपस्तार्क्ष्य ऋतसेनस्तथोर्वशी। विद्युच्छत्रुर्महाशङ्खः सहोमासं नयन्त्यमी BhāgP. xii. 11. 41; BṛPārāSm. 2. 191; (for month of Caitra) चैत्रे मासि भवेदंशुः LiṅgaP. i. 59. 32; SaurP. 28. 14; अंशुना विष्णुमंसस्थं ···विन्यसेत् SāraTi. 15. 14 (comm. द्वादशादित्यसहिताः केशवाद्याः द्वादशमूर्तीः देहे वक्ष्यमाणविधानतः क्रमाद् विन्यसेदिति संबन्धः); **6 E** of one of the deities forming the *devagaṇa* called Harita पर्वतानुचरश्चैव अपोंऽशुश्च मनोजवः।···दर्शते हरिताः स्मृताः VāyuP. ii. 38. 89; **6 F** of one of the companions of Kṛṣṇa in Vraja हे स्तोकृकृष्ण हे अंशो श्रीदामन् BhāgP. x. 22. 31; **6 G** of the doorkeeper of Kṛṣṇa (द्वारपालान् ददर्श) अंशुं बलं च सुबलम् SkandP. II. ix. 16. 52; **6 H i** of a prince, son of Purumitra पुरुमित्रः···ततश्चांशुः ViṣṇuP. iv. 12. 43; **6 H ii** sharer of the property of Priyagotra अनोरतु प्रियगोत्रोऽभूदंशुस्तस्य च रिक्थभाक् KūrmaP. 256. 17 (1. 24); **6 H iii** son of Purutvat and Bhadravatī अंशुर्जज्ञे च वैदर्भ्यां भद्रवत्यां पुरुत्वतः LiṅgaP. i. 68. 48; **7** rein, in the word प्रत्यंशु explained as प्रतिगता अंशवोऽस्य प्रत्यंशुरयमुष्ट्रः KāśiVṛ. *on* P. vi 2. 193; Prasā. ii. 784. 15; **8** a small portion cf. **अंशुपात**; **9** bristle cf. **अंशुमत्**; **10** the Lexicons mostly give the meanings i) a thin constituent of a thread etc. (सूत्रादिसूक्ष्मांश or तन्त्वादि–), ii) ray (किरण, रश्मि, घृणि), iii) sun (रवि, दिवाकर, चण्डदीधिति), to which some add iv) light, lustre (द्युति, प्रभा, त्विष्, प्रकाश) AmaK. 210; Vaija. 214. 6; 18. 15; ViśvaPra. 112. 26; 168. 12; AnekāSaṁ. 2. 530; 2. 542; AbhidhāCi. 95; 99; Liṅgānu.(He.) 10. 1; NānārthāSaṁ. i. 47. 57; NāmMā. 45; AgniP. 359. 32; NānārthRaMā. 1085; NānārthMa. 355; SabdaRaSaK. 325. 1; SabdaRa.(Bā.) 3833, 3976, 4015, 4061; KośaKaTa. 1. 649, 1. 683; AnekāSa. 550; ParaNā 277; NānārthSaṁ. 25. 22; 46. 22; 83. 56; ViśvaLok. 245. 26; 371. 3; KāryKaVṛ. 87. 26 (3. 5); KalpaK. 437. 16; 473. 113. MediK. 176. 2; Viśva (in SabdaKaDru.); AnekāTi. 2. 5; 2. 210; BhaviP. i. 78. 18 (131B. 10); ViśvaPra. 168. 12; v) ray of the sun AbhidhāCi. 99; NānārthaMa. 665; ParaNā. 2597; MediK. 176. 2; AnekāTi. 2. 5; SabdaRa. (Su.) 2. 6; vi) a portion of creepers etc. लतादिनः [? *n.*] एकदेशे NānārthāSaṁ. i. 47. 57; vii) a small portion लेशे (=अंश ?) DharK. 2579; ViśvaPra. 168. 12; Viśva in SabdaKaDru.; comm. by ज्ञानविमलगणि on SabdaBhePra.(Ma.) 3. 17; viii) serpent (?) (भुजग) SabdaRa-(Su.) 2. 6; ix) dress, attire (वेश) Dharaṇī in SabdaKaDru. (= अंशुक ?); x) straight (ऋजु) according to Vararuci as stated in NānārthāSaṁ. i. 53. 121; xi) bird SabdaRa. (Bā) 1573; in the Kośas अंशु is listed among the meanings of i) वसु Vaija. 236. 78; AnekāK. 918; SiddhāKau. on Uṇā. 1. 10; ii) शिखी Vaija. 218. 60; NānārthāSaṁ. i. 159. 1371; iii) पद Vaija. 225. 18; NānārthāSaṁ. i. 36. 37; iv) अग्र Vaija. 270. 60; v) हेति Vaija. 223. 46; vi) शुक्र NānārthāSaṁ. i. 160. 1381; vii) पाद NānārthaMa. 843; viii) मा AnekāSaṁ. 1. 9. ix) वीर्य NānārthaSaṁ. 83. 56.

**अंशुक** (aṁśu-ka) *n.* rarely *m.* in the sense of cloth cf. RājTa.(Srī.) 1. (7) 85 [from *aṁśu* which is included in the *ṛśyādigaṇa* on P. iv. 2. 80 after KāśiVṛ. and accented on the last syllable, which does not agree with the *cāturarthika* meaning of the suffix; cf. Liṅgānu.(Va) 54; SabdaBhePra. (Ma.) 3. 12; Liṅgānu. (Śā.) 118. 13; Liṅgānu. (He.) 64. 1; Liṅgānu. (Pā.) 105. 13; Liṅgānu.(Vā.) 5. 23; GaṇRa. 4. 280 (*m.*), 4. 293; SiddhāKau. 248A. 7; the distinction between a piece of cloth and a garment and between fine and rough cannot always be decided. PW and APTE give the meaning 'leaf' based on the passages कल्पलतांशुकेषु Sāk. 7. 5 and कल्पवृक्षांशुकानि MeghDū. 62; MW 'tie (for binding a churning stick)' is not traceable.] **1 A** fine cloth or garment **B** a silken garment **C** a piece of cloth, a garment **D** a piece of cloth attached to a staff, a flag **E** a lower garment, an inner garment **F** an upper garment **G** a piece of cloth to cover the face, a veil **H** a piece of white cloth **2A** the leaf of Tamāla **B** the plant Granthiparṇa **3** a ray, beam **4** a moulding of the pedestal **5** a thread, streak. **1A** fine cloth or garment दुकूलांशुकं काञ्चनहंसचिह्नं वन्यं स धीरोऽभिचकाङ्क्ष वासः BuddhaC. 6. 59; चीराण्यपास्य दधिरे पुनरंशुकानि Saund. 7. 51; संयोगश्लेष्माभिः स्त्रीभिः शीतोपहितांशुकस्रग्धारिणीभिः CaraS. iii. 6. 17 (1922 Ed.); धुन्वन्कल्पद्रुमकिसलयान्यंशुकानीव वातैः MeghDū. 62; यस्मिन्महीं शासति···वातोऽपि नास्रंसयदंशुकानि RaghuVa. 6. 75; PadyaVe. 109; अंशुकस्य निशि रक्षणाकुला JānaHa. 8. 12; 8. 26; तस्य हि गच्छतो यदृच्छया कथमप्यंशुकमिव मार्गलतासु मानसमसासु

मुहूर्तमासक्तमासीत् HarṣaC. 49. 4; पयोधरतटोत्सङ्गलग्नसंध्यातपांशुका । कस्य कामातुरं चेतो वारुणी न करिष्यति Kāvyāda. 1. 84; शरच्छशांककिरणनिर्मलयशोंऽशुकावगुण्ठितमेदिनीयुवतीभोक्ता EI. iii. 54. 4; आर्येणांशुकमुज्झता धृतमभूदापाटलं वल्कलम् ĀścaCū. 1. 13; चन्द्रातपेनेव सुधासमुद्रं संवीतमर्चिःशुचिनांशुकेन…ददर्श रामः …( अण्डजेशम् ) RāmC. 32. 4; रामो गृहीत्वा तच्चीरमंशुके पर्यवेष्टयत् AdhyāRā. ii. 5. 37; मनःशिलालिखितैकहंसमिथुनं तवांशुकम् NavaSāC. 10. 58; नन्दनशाखिनां पुनः प्रवालादिस्थानेष्वंशुकहारमधुमन्दिराणि SaraKaṇṭhā. 596. 20; रूपेण कान्तिः क्षणिकैव येषां हारिद्ररागेण यथांशुकानाम् DarpDa. 4. 1; नृपादेशेन सदशान्यंशुकानि स पर्यधात् TriṣaS'aPuC. ii. 1. 202; यस्मिन्नुद्रहति क्रमेण विगलत्पाथोधिनीलांशुका रागादार्द्रतनूरिव क्षणमभूदामोदिनी मेदिनी EI. viii. 13. 2; याचन्तीनामनुनयपदैर्वञ्चितान्यंशुकानि…गोपस्त्रीणां नयनकुसुमैरर्चितः केशवः KṛṣṇaKa. 2. 3; अत्यच्छं सितमंशुकं शुचि मधु S'ārṅgaPa. 3833; ग्राहयित्वांशुकं…मल्लिको राज्ञो व्यधाद् दुःखनिवारणम् RājTa.(S'rī.) 3. 220; निःश्वासहार्याण्यपि नांशुकानि AlaṅkāS'e. 13. 0 (84); काषायमंशुकमिव प्रकटं दधानः MūkaPañ. 1. 51; = श्लक्ष्णवस्त्र MediK. 4. 42; ViśvaPra. 12. 123; AnekāSaṁ. 3. 3; Vaija. 250. 1; ViśvaLoK. 9. 43; DharK. 126; NānārthāSaṁ. ii. 33. 3; NānārthaMa. 180; KośaKaTa. 2. 3616; S'abdaRaSaK. 7. 12; **1 B** a silken garment (most probably standing for *cīnāṁśuka* s. v.) लालातन्तुजैश्चांशुकैश्च नेत्रैश्च … वासोभिः सर्वतः … संछादितम् HarṣaC. 202. 16; पातयित्वांशुकं भूमौ कौशेयं कमलापतेः PadmP. iii. 2. 17; अंशुकं श्लक्ष्णपट्टः SthānṬ. 338B. 10; **1 C** a piece of cloth, a garment नभोंऽशुकमिवाभाति प्रेक्षणीयं समन्ततः MahāBhā. x. 1. 25; शयनोचितमाल्यानि…अंशुकानि च ( दद्यात् ) AhirbuS. 28. 75; ( द्विजाः ) ददुः … अंशुकानि YogVā. v. 2. 4; यत्नेन वचनं ग्राह्यमंशुकेनेव कुङ्कुमम् YogVā. ii. 11. 44; कोले घृतघटो देय उष्ट्रे गुञ्जा हयेंऽशुकम् YājñaSm. 3. 273; (comm. वाजिनि विनिपातितेंऽशुकं वस्त्रं दद्यात् ); हृते चैवांशुके शुकः ( जायते ) MārkP. 15. 28; तालभूर्जपटदर्शनेंऽशुकं चिन्तयेत् BṛSaṁ. 51. 14; बद्धव्यो वायुरंशुके PadmP. (Ra.) 14. 363; ( पर्वतः )…श्वपचसशानांशुकपिहितमेहनः…कालासुरेण दृष्टः YaśasCam. ii. 356. 23; अंशुकैः…भगवतो रत्नाकरस्य पूजां प्रातिष्ठिपम् TilaMañ. 123. 18; नीलीराग इवांशुके TriṣaS'aPuC. iii. 1. 14; यत् परिध्यर्धविष्कम्भं वृत्तं कृत्तं किलांशुकम् । तेनार्धश्छाद्यते गोलः Golā. 187. 15 (21. 54); न जलार्द्रमंशुकम् । त्वदृते तदङ्गपरितापशान्तये NemiNir. 9. 49; अंशुकेनावेष्ट्य गाढमापीड्य DīpKa. 66. 8; (*on* 2. 217); अंशुकैः शकटीर्भूत्वा Dhūrtā. 368; अंशुके भूर्जपत्रके । निधाय क्वापि पूजां वा कुर्याद् यन्त्राण्यशेषतः TantrRā. 8. 31; दधि…अंशुकेन चालयेत् BhojanKu. 123. 8; = वस्त्रमात्र AneKāSa. 466; AneKāK. 51; NānārthāSaṁ. ii. 33. 3; NānārthSaṁ. 5. 44; MediK. 4. 42; ViśvaLoK. 9. 43; AnekāSaṁ. 3. 3; DharK. 126; S'abdaRaSaK. 7. 12; **1 D** the piece of cloth attached to a staff, a flag सोंऽशुकं भ्रामयामास सर्वदिङ्मण्डले सितम् YogVā. iii. 38. 11; दधति ध्वजांशुकपटाञ्चलेष्विमाः क्षणकुङ्कुमच्छुरणविभ्रमं शिखाः UttaRāC. vi. 4; उरुवंशप्रान्तसंसक्तशुक्लांशुकघटित[श]रीरेणोच्छ्रितेन ध्वजे[न] EI. ii. 177. 19; अकृत स नवमंशुकं ध्वजाग्रे Rāgh. 14. 57; **1E** the lower garment, garment covering the lower part of the body, the inner garment, च्युतमंशुकं सरशनम् PādaTā. 14. 20; रहसि गलितं तन्व्या प्राप्तुं न पारितमंशुकम् AmaS'. 154; रतान्ते तल्पस्थान् ( शशिनः करान् ) हरति वनिताप्यंशुकमिति KāvyaPra. 734. 5 = SaduktiKa. 54. 30; AlaṅkāSa. 89. 10; नितम्बफलकाद् विस्रंसितेऽप्यंशुके SubhāRaK. 19. 1; अस्याः स्रंसिनि लोलरत्नरशनालग्ने शनैरंशुके Mukundā. 49; = अन्तरीय NānārthSaṁ. 5. 44; अर्धोरुकं चलनकं स्याच्चण्डातकमंशुकम् KalpaK. 52. 291; (not reaching upto the knee); **1 F** an upper garment, covering the upper part of the body, outer garment देवी … बिसतन्तुमयेनांशुकेनोन्नतस्तनमध्यबद्धगात्रिकाग्रन्थिः ( सावित्री समुत्तस्थौ ) HarṣaC. 16. 4; हहा धिगिदमंशुकं ज्वलति ते स्तनात्प्रच्युतम् Ratnā. 4. 17; बाहोः …मूलमन्या…तिरोदधेंऽशुकेन S'iśuVa. 7. 32 (comm. उत्तरीयेण ); अंशुकं हृतवता तनुबाहुस्वस्तिकापिहितमुग्धकुचाग्रा…परिणेत्रा ( पर्यरम्भि ) S'iśuVa. 10. 43; अस्याः सखे क्षणमदृश्यत रोमराजी स्रस्तेंऽशुके स्तनभरात् KaumuMa. 1. 28; काचिदंसात्पतद्दादरिद्यमाणोदरांशुकम् । नावाव्यत DvyāśraKā. 7. 84; आच्छाद्य स्तनमण्डलीमभिनवज्योत्स्नानिभैरंशुकैः VasaTi. 36. 2; अग्निकापि हि तन्नेत्रमार्जनेन स्वमंशुकम् । क्लेदयन्ती जगाद PariPar. 6. 68; पिदधुर्वक्त्रं ह्रिया भीष्मादयोंऽशुकैः PāṇḍaC. 6. 973; = उत्तरीय AnekāSa. 466; ViśvaPra. 12. 123; MediK. 4. 42; Vaija. 250. 1; AnekāSaṁ. 3. 3; AnekāK. 51; ViśvaLoK. 9. 43; DharK. 126; NānārthaMa. 180; KośaKaTa. 2. 3616; S'abdaRaSaK. 7. 12; **1 G** a piece of cloth to cover the face or used as a veil समुत्सार्यांशुकं मुखात् । उन्मील्य नयने विष्णुर्जहास RāmāMañ. 461. 18; ददर्शांशुकमुद्घाट्य तां विनिद्रो नृपात्मजः BṛKathāMañ. xiii. 33; पूर्वमंशुकमुद्घाट्य ददर्शैकां सुमध्यमाम् BṛKathāMañ. v. 1. 194; तिमिरं वांशुकं नीलजालिका Kāvyānu.(He.) 329. 7; मुखवस्त्रे तदिष्यते NānārthaMa. 180; **1H** a piece of white cloth [L] स्यादंशुकं शुक्लवस्त्रे AnekāSa. 466; AnekāK. 51; **2A** *m. n.* the leaf of Tamāla [L] वस्त्रे तमालपत्रे च अंशुकः समुदाहृतः RājNi. 458. 22; 106. 21; अंशुकं तमाले ApūNā. 11; KalpaK. 177. 402; **2B** the plant *granthiparṇa* ग्रन्थिपर्णेंऽशुकं मतम् S'abdaRa.(Su.) 4. 227; **3** *m.* ray, beam [in *śliṣṭa* context] तिमिरं चांशुकं सूक्ष्मा अंशवस्तिमिरांशुकं रश्मिशबलीकृतं तमःपटलम् Loc. 35. 21 (*on* 1. 13); तिमिरं चांशुकाश्च सूक्ष्मा अंशवस्तिमिरांशुकं रश्मिशबलीकृतं तमःपटलम् Kāvyānu.(He.) 329. 6; नीलांशुकश्रीः नीलानामंशुकानां किरणानां श्रीः KāvyKaVṛ. 68; 27 (3. 3); 69. 23 (3. 3); वासुदेवांशुकः । वासुदेवस्यांशुकाः किरणाः KāvyKaVṛ. 73. 4 (3. 3); NānārthaMa. 180; KośaKaTa. 2. 3616; **4** *m. n.* a moulding of the pedestal अर्धेन पद्मं सार्धद्वयमंशुकम् MānaSā. 13. 60; अंशुकाश्चोर्ध्ववंशाश्च तुम्बिकाः सेन्द्रकीलकाः । पुरप्रासादगेहानां वेधेऽप्येते न दोषदाः SamarāSū 13. 23; **5** a thread, streak हे देवि परिधेहीदं कनकांशुकमंशुकम् ĀnandaVṛndāvanaCampū. 427. 12.

**अंशुककर्षण** ( aṁśuka-karṣaṇa ) *n.* the act of dragging the garment संगमादौ वरस्त्रीणां प्रियेणांशुककर्षणे Nṛtyā. 79.

**अंशुकचय** ( aṁśuka-caya ) *m.* a pile of garments अस्माकं हरिरपहरत्नंशुकचयम् HaṁsDū.(Rū.) 16.

**अंशुकण** ( aṁśu-kaṇa ) *m.* part of the rays (of the sun) माययांशुकणाङ्के खे यथा कचति काञ्चनम् । तथा जगदिदं भाति चिच्चेत्यकलने कुतः YogVā. iii. 80. 54.

**अंशुकदशा** ( aṁśuka-daśā ) *f.* the tassel(s) of the garment निवसितरक्तांशुकदशाशिखाभिरिवावलम्बिताभिः … अङ्गुलीभिरुपेताभ्यां विद्रुमरसनदीमिव चरणाभ्यां प्रावर्तयन्तीं…कादम्बरीं ददर्श । Kād. 186. 21; पल्लवलग्नांशुकदशाप्रतिहतगमनायाः…परिष्वङ्गमाचरति Kād. 234. 18.

**अंशुकध्वज** ( aṁśuka-dhvaja ) *m.* a silken flag or banner अंशुकध्वजभूषितां…आरुह्य शिबिकाम् PadmP.(Ra.) 3. 276.

**अंशुकनिवेश** ( aṁśuka-niveśa ) *m.* placing of the upper garment यद्यप्यंशुकनिवेशोऽनुभावत्वयोग्यस्तथापि तस्य स्तनव्यक्तिप्रयोजकत्वेनोपादानात्तस्य तदनुभावकत्वपर्यवसानम् AlaṅkāS'e. 21. 2(35)

**अंशुकपटान्त** ( aṁśukapaṭānta ) *m.* end of the upper garment ( संछाद्य ) अंशुकपटान्तेन…वदनेन्दुं…प्राकृतप्रमदेव प्रारोदीत् HarṣaC. 230. 5.

**अंशुकपट्ट** ( aṁśuka-paṭṭa ) *m.* a strip made of (a long piece of) cloth उल्लम्ब्यांशुकपट्टेन मरिष्यामि न संशयः PadmP.(Ra.) 19. 75.

**अंशुकपर्यन्त** ( aṁśuka-paryanta ) *m.* the end of the upper garment अंशुकपर्यन्तबद्धं सा समदर्शयत् । रागाङ्गुलीयकशतं BṛKathāMañ. xvi. 1. 606.

**अंशुकपल्लव** ( aṁśuka-pallava ) *m. n.* hem, border or fringe of the upper garment अंशुकपल्लवताडितनिःश्वासामोदलुब्धमधुकरमुखरतया Kād. 204. 22; परिहासेन गृहीता यद्यंशुकपल्लवे त्वया रामा KuṭṭaMa. 524; AmaS'. 62 = SaduktiKa. 127. 24 = SūktiMu. 37. 5 = S'ārṅgaPa. 3388 = Subhāṣi. 1057; AmaS'. 85 = SaduktiKa. 102. 25 = S'ārṅgaPa. 3386; देवो ममार्ज मुखमंशुकपल्लवेन NavaSāC. 17. 73; BṛKathāMañ. ix. 1. 319; DarpDa. 3. 88; DaśāvaC. 8. 76; SubhāRaK. 34. 9; RājTa.(Ka.) 3. 522; 4. 577; SaduktiKa. 62. 1; YātrāPra. 3. 142; Jīvān. 135. 4.

**अंशुकपाश** ( aṁśuka-pāśa ) *m.* a noose made of the upper garment कस्मादंशुकपाशोऽयं त्वया सुमुखि सज्ज्यते PadmP. (Ra.) 36. 42.

**अंशुकबन्धन** ( aṁśuka-bandhana ) *n.* tying (someone) with a piece of cloth यत्नैकेन नरेन्द्रोऽयमानीतोंऽशुकबन्धनम् PadmP.(Ra.) 33. 266.

**अंशुकभर** ( aṁśuka-bhara ) *m.* bulk of garments महोऽरुणमहर्पतेर्निजचरुस्थमासेवते । कुसुम्भजलशङ्कयांशुकभरेण कौसुम्भिकी VasaViKā. 9. 48.

**अंशुकभृत्** ( aṁśuka-bhṛt ) *adj.* wearing a silken garment मालिनीरंशुकभृतः स्त्रियोऽलंकुरुते मधुः Kāvyālaṅ.(Bh.) 2. 28.

**अंशुकयुग** ( aṁśuka-yuga ) *n.* a pair of fine clothes आलिखितरथाङ्गमा( ? वा ) कमिथुनमंशुकयुगम् AvantiKa. 202. 6.

**अंशुकयुगल** ( aṁśuka-yugala ) *n.* a pair of fine garments नेत्रनिवेशाभिरामधवलमंशुकयुगलमुद्वहन् AvantiKa. 63. 8; 132. 13.

**अंशुकर्मन्** ( aṁśu-karman ) *n.* action (produced) in the fibre (constituting the thread) तथा ह्यंशुकर्मणा अंश्वन्तराद्विभागः Kiraṇā, 244. 7; TarkSaṁ.(Ā.) 75. 16; Upask. 333. 6 (*on* vii. 2. 10)

**अंशुकलाप** ( aṁśu-kalāpa ) *m.* a cluster of rays अंशुकलापैरुपेतेन…कर्णयुगलेन विराजमानं …इन्द्रायुधमद्राक्षीत् Kād. 79. 5; संपूर्णचन्द्रांशुकलापकान्तेर्मणिप्रवेकस्य महागुणस्य YuktiKa. 111. 13.

**अंशुकवात** ( aṁśuka-vāta ) *m.* wind produced by (the movement of) the garments यासामंशुकवातेन दीपो निर्वाणतां गतः । तासामालिङ्गने पुंसां नरके पतनं कुतः S'atTrayī. 687.

**अंशुकविलास** ( aṁśuka-vilāsa ) *m.* the role of the lower garment तरलोर्मिलङ्घितनितम्बफलकलुलिताच्छवाससः । फेनपटलमसिताब्जदृशः क्षणमेकमंशुक-

x. 69. 6; **1 B** back of the shoulder ज्योतिर्ज्वालाप्रचयजटिलः संनिधत्ते कुठारस्तूणीरोंऽसे MahāviC. 2. 26; इतश्च…उभयांसोत्तम्भितभूरिभस्त्रतया त्रिशिरोनिशाचरानीकमिव … इदं गौर्जरं बलम् YaśasCam. i. 467. 6; अथांसयोः समासज्य नतयोरसिचर्मणी BṛKathāS'loSaṁ. 15. 87; पाणौ कार्मुकमालिखेयमिषुधी पाश्चात्ययोरंसयोः JānaPa. 2. 15; 3. 51; **1 C** side of the shoulder यदयं रथसंक्षोभादंसेनांसो रथोपमश्रोण्याः । स्पृष्टः Vikramo. 1. 11; अंसेनांसमभिघ्नतां विवदतां तत्तच्च संकीणतां (नृणाम्) PādaTā. 10. 21; जघानांसेन सा नरम् BṛKathāMañ. ix. 2. 1020; यदयं रथसंक्षोभादंसेनांसो निपीडितः Kuval. 135(10); **1 D** front part of the shoulder (used for striking with the palm as a challenge) कश्चिदास्फालयद्रामममंसं दक्षिणपाणिना PadmP. (Ra.) 6. 436; निजमंसमरातिवन्निजघ्ने Yādavā. 15. 106 **1 E** *aṁsa* is used to refer to various specific parts of the shoulder and distinguished from others (कुमारस्य) अंसावभिमृशति ĀśvaGS. i. 15. 3 (comm. स्तनबाह्वोर्मध्यप्रदेशोंऽसः); द्वे द्वे जानुकपोलोरुफलकांससमुद्भवे YājñaSm. 3. 87(Mitā. भुजशिरः, Aparā., VīraMi. अंसौ बाहुमूले); अंसेन बिभ्रत्करवीरमालां स्कन्धेन शूलं हृदयेन शोकम् Mṛcch. 10. 21; जत्रुस्कन्धांसकक्षादोर्मणिबन्धकरद्वयम् SkandP. iv. 37. 6 (comm. स्कन्धश्च भुजशिरः … अंसश्च तस्यैवोपरिभागः); ग्रीवामूलादधः स्कन्धः स्कन्धस्यान्ते तथाक्षकम् । तस्याधः कोटरे कक्षः स्यादंसो बाहुमूलतः ParyāRaMā. 922; **1 F** (in Astro.) it constitutes, along with the shoulder-joint the seventh region of the body to forecast good and bad results in various periods of life अथ सप्तममंसजत्रुणी कथयन्त्यष्टममोष्ठकन्धरे BṛSaṁ. 70. 25 = BhaviP. 23B. 14 (i. 5. 106); **1 G** (in Anat.) *aṁsa* refers to various parts and elements in the shoulder-region पृष्ठमर्माणि तु कटीकतरुणकुकुन्दरनितम्बपार्श्वसन्धिबृहत्यंसफलकान्यंसौ चेति SuśruS. iii. 6. 6; अंसांसफलकापाङ्गा नीले मन्ये फणौ तथा । वैकल्यकरणान्याहुः (मांसमर्माणि) SuśruS. iii. 6. 13 = BhāvPra.(Bhā.) 3. 233; स्वभावगता अपि त्रयः सङ्गा भवन्ति शिरसो वैगुण्याद् अंसयोर्जघनस्य वा SuśruS. iv. 15. 4 (comm. अंसो बाहुशिरः); चत्वारि क्षिप्राणि द्वावंसौ द्वे विधुरे…एवं सप्तविंशतिः स्नायुमर्माणि comm. *on* SuśruS. iii. 6. 4; अष्टाङ्गुलौ स्कन्धौ, षडङ्गुलावंसौ CaraS. iii. 8. 117 (1941 Ed.); द्वावंसावंसफलकावपि द्वावेव चाक्षकौ KāśyaS.. 75A. 12; तद्वदक्षकांसांसफलकेषु AṣṭāSaṁ. i. 224. 10 (2. 5); ग्रीवाबाहुशिरोमध्येंऽसपीठस्कन्धबन्धनावंसौ AṣṭāSaṁ. i. 234. 10 (2. 7); स्कन्धयोर्मथनं बाह्वोर्भेदः पीडनमंसयोः AṣṭāSaṁ. i. 261. 18 (3. 2); **2 i** shoulder of an animal कश्यपेवांसा AitBr. 6. 6(165); अथ यत्र शीर्ष्णोऽवद्यति नांसयोर्नाणूकस्य नापरसक्थ्योः ĀpaS'S. vii. 25. 6; तस्य विभागं वक्ष्यामः ।…दक्षिणं पार्श्वं सांसमध्वर्योः ।…सव्योंऽसः प्रतिप्रस्थातुः ĀśvaS'S. II. iv. 9. 6; कश्यपाकृती अंसौ S'ābaBh. 1780. 8 (*on* ix. 4. 25); स्रुवाज्येन ललाटे अंसयोः श्रोण्योश्च पशुं समनक्ति VīraMi. (Saṁskāra.) 993. 13; 1006. 11; **2 ii** (of a bull) मित्रश्च वरुणश्चांसौ… AV. ix. 7. 7; **2 iii** (of a cow) यावंसौ या च ते ककुत् । आमिक्षां दुहतां दात्रे AV. x. 9. 19; **2 iv** (of a horse) अश्विनावंसाभ्याम् VājaS. 25. 3; स्याताम् अंसादधो बाहू AśvaVai. 2. 20; वाजिनां…यै-(द्वारै-)र्याति कुत्सितं रक्तं…लोचनयोरंसयोश्च मुखे तथा YuktiKa. 192. 6; आरोहिणोंऽसेष्वथ केशपङ्क्त्या ग्राहं भटा अत्वरयंस्तथाश्वान् DvyāśraKā. 14. 22; (अश्वस्य) वक्षो वृत्तं विशालं च स्थूलावंसौ सुविस्तृतौ Mānaso. iv. 4. 719; **2 v** (of an elephant) (द्विरदेन्द्रः) अंस इव प्रतापेऽप्युपचितस्कन्ध इव स्थिरतरे यशस्यपि प्रथीयान् AvantiKa. 79. 8; शुद्धशोफो ग्रीवायामंसयोर्वंशे च सर्वकाये वा भवति Hastyāyur. 120. 6 (1. 17); 460. 9(3. 11); गात्रयोरासनपार्श्वयोः प्रतीकासौ । प्रतीकासयोरधस्तादंसौ Hastyāyur. 527. 29 (3. 29); आस्येषु जिह्वा हृदयेषु हस्तानंसेषु शूराः श्रवणान् पृषत्कैः । समस्तभन् पुष्करिणाम् RāghPāṇ.(Dha.) 16. 26; दीर्घावंसौ च मांसलौ ।…यस्य नागस्य स त्रिष्णवंशसमुद्भवः Mānaso. ii. 3. 258; स्यात् प्रोहाख्योऽन्तरमंसयोः MātaLī. 6. 10; **2 vi** (of a man-lion) तस्यांसयोर्नृसिंहस्य हारकान्तिसटाभरः । उवाह कण्ठलग्नश्रीविलासहसितश्रियम् NavaSāC. 2. 8; **3 A** two upper or front corners of the sacrificial altar, one to the right and the other to the left (on the analogy of human shoulders) बस्तो वय इति दक्षिणेऽंस उप दधाति वृष्णिर्वय इत्युत्तरेऽंसावेव प्रति दधाति TaiS. V. iii. 1. 5; अभितोऽग्निमंसाऽउन्नयति S'atBr. I. ii. 5. 15; जुह्वां पञ्चगृहीतं गृहीत्वा…व्याघारयति । दक्षिणमंसमुत्तरां श्रोणिं दक्षिणामुत्तरमंसं मध्यमिति ĀpaS'S. vii. 5. 5; viii. 5. 20; xi. 4. 13; xii. 1. 7; xii. 2. 1; xvi. 19. 7; अग्निमभितोंऽसौ KātyS'S. ii. 6. 8 (comm. अंसौ आग्नेयैशानकोणौ आहवनीयमुभयतो भवतः । अंसयोर्मध्ये आहवनीयो भवतीत्यर्थः । अतोंऽसावपि वेदेरेवावयवौ श्रोणिवत्) v. 4. 14; **3 B** the square marked to locate the *aṁsa* of the Vedi तस्मिन् पाशं प्रतिमुच्य पूर्वस्मिन्नितरं मध्यमेन लक्षणेन दक्षिणमंसमायच्छेत् ĀpaS'uS. i. 1. 19; **3 C** the point fixed to delimit the *aṁsa* of the Vedi दक्षिणा द्वादश विक्रमान् प्रक्रामति तच्छङ्कुं निहन्ति स दक्षिणोंऽसः S'atBr. III. v. 1. 5; यूपावटीयाच्छङ्कोर्द्वादश दक्षिणा प्रक्रमान् प्रकामति द्वादशोदीचस्तच्छङ्कू निहन्ति तावंसौ BaudhS'S.. i. 182. 1; **3 D** marks on the cord corresponding to the various parts of the Vedi श्रोण्यंसनिरञ्छनसंख्यासमासभङ्गेषु लक्षणानि KātyS'uS. 1. 5; **4** shoulder-like protuberances in front of the bowl of a ladle (आज्यकोश-) अग्रभागस्य मुने पार्श्वयोरुभयोरपि । एकैकमङ्गुलं शोध्यं स विभाज्यस्त्रिधा ततः । कर्णमेकेन भागेन मध्ये त्वस्यौ (? त्वंसौ) द्वयेन तु । विच्छिन्नं वक्त्रमंसाभ्यां मध्यमेकाङ्गुलेन तु ।…स्याद्वाराहाननं यथा JayāS. 15. 97; **5** the root of the wing of a bird प्रकटीभवति च…रोहिणीपतेः…हंसांसविलग्नशैवलविलासिनि…लाञ्छने YaśasCam. ii. 16. 8; अंसौ पृष्ठमुरः…गाढं स्पृशन्तो…नवजले निर्वान्ति घर्माहताः…पत्रिणः SubhāRaK. 10. 24; पक्षी चेत् पुरुषो लघुः स्फिजशिरःस्कन्धांसपृष्ठे … मांसम् BhojanKu. 176. 5; **6** the flanks of a building (due to the personification of the *vāstuśarīra*) तथांसयोर्विनिहिते स्यातां जयन्तादिती VāstuVi. 4. 49; वेदिबन्धः सपादांशौ जङ्घांसौ पादसंयुतौ SamarāSū. ii. 78. 20 [2nd Ed. p. 293]; भागं सपादं कुर्वीत ग्रीवांसकलशाण्डकम् SamarāSū. ii. 97. 11; [2nd Ed. reads ग्रीवां सकलशाण्डकम् ]; **7 i** name of a Gandharva अंसो ज्येष्ठस्त्वरिष्टायाः MahāBhā. i. 59. 49; [ v. l. for सुप्रिया चातिबाहुश्च ]; **7 ii** name of a king अंसो दिष्टश्च वेनश्च MahāBhā. ii. 8. 14 [v. l. for अङ्गोऽरिष्टश्च ]

²**अंस** (aṁsa) *m.* [ = aṁśa, in some Kośas and for alliteration] अंसः स्कन्धे विभागे च ViśvaPra. 174. 9; स्यादंसः स्कन्धविभागयोः DharK. 2675; भागके अंसस्तालव्यदन्त्यान्तः S'abdaRa.(Su). 6. 37; used for the sake of *yamaka* सस्नेहरिरंसेन ध्रियमाणभुजोऽर्जुनेन हरिरंसेन । अगमच्च क्रीडायै यमुनां प्रति YudhiVi. 2. 40 (अंसेन = अंशेन Arjuna as his partial form)

**अंसक** (aṁsa-ka) *m. n.* shoulder अद्भिः समुपस्पृशेत्…नाभिवक्षा( ? क्ष ): शिरोंऽसकान् GobhiSm. 1. 5; LaghvāśvaSm. 1. 78; स्पृशति यदि कराग्रैर्गण्डकाद्यंसकं वा VasiS. 37. 8; ते कण्ठांसकबाहुपार्श्वहृदयक्रोडानि नाभिस्ततः…उदितैर्द्रेक्काणभागैस्त्रिधा Bṛhajjā. 5. 24; नासो(? सौ)ष्ठकपोलहनुश्रवणग्रीवांसकेषु पञ्चाद्याः BṛSaṁ. 50. 12; YogYā. 12. 12; अंसकपादेषु मिथुनमीनौ स्तः Sārā. 53. 7; जठरे हृदयेंऽसके…न्यस्येन्मातृकावर्णान् S'āraTi. 6. 6; 5. 30; अंसके स्कन्धनामा च व्ययाः पञ्च प्रकीर्तिताः S'ārṅgaPa. 1805; VīraMi.(Āhnika.) 86. 12; (of a horse) चतुर्थं विहितं क्षेत्रं पञ्चमं चांसकं भवेत् AśvaVai. 5. 6; 2. 19.

**अंसकद्वय** (aṁsaka-dvaya) *n.* two shoulders स्पृशेत वै शिरस्तद्वदङ्गुष्ठेनांसकद्वयम् PadmP. i. 52. 23.

**अंसकर्ण** (aṁsa-karṇa) *n.* both the shoulder and the ear वामहस्तमुष्टिं बद्ध्वा सरलया तर्जन्या अंसकर्णमभितो भ्रामणे सौभाग्यदण्डिनी NityoNi. 72. 27.

**अंसकस्तूरिका** (aṁsa-kastūrikā) *f.* musk put on the shoulder (i. e. of very little weight), light, easily carried object, अंसकस्तूरिका भूमिर्भवतां बाहुशालिनाम् । अजुगुप्सापदं न स्यादसद्वृत्तिमलीमसा Yādavā. 22. 7.

**अंसकुट्टन** (aṁsa-kuṭṭana) *n.* striking on the shoulders दोर्दण्डे शतधनुरंसकुट्टनोत्थैः संघट्टैर्विघटितहाटकाङ्गदोऽपि Kapphiṇā. 3. 27.

**अंसकुब्ज** (aṁsa-kubja) *adj.* with drooping shoulders, with bent shoulders सर्वो हि लाटः… पादापातैरंसकुब्जः प्रयाति PādaTā. 21. 2.

**अंसकूट** (aṁsa-kūṭa) *m.* (*n*) **1** the prominent part of the shoulder, the top of the shoulder, strong peak–like shoulder पताकाञ्जलिवक्षःस्थं प्रसारितशिरोधरम् । निहञ्चितांसकूटं च तल्लीनं करणं स्मृतम् NāṭyaS'ā. 4. 66 (comm. निकुञ्चितं शिरः । तद्योगादंसकूटयोर्निहञ्चितत्वम्); अंसकूटयोरधस्तात्पार्श्वोपरिभागयोरपलापौ नाम SuśruS. iii. 6. 25; करसंपुटमृदितया मृदा दिङ्नागकुम्भाभावंसकूटौ पुनः पुनः परिपङ्कयन् (पुरुष उज्जगाम) HarṣaC. 165. 12; (दानवाः)उच्चैस्तरां जहसुराहसतांसकूटान् HarVi. 34. 57; 11. 5; 34. 6; 7. 42; 10. 4; अथांसकूटादुपरि…कपाकलाख्ये भवतस्तु मर्मणी KalyāKā. 20. 59; नायकोऽप्यपविध्यमानस्तां…स्वेनांसकूटेनापविध्येदिति JayaMa. 98. 8 (*on* 2. 2); जयश्रियः काञ्चनविष्टराभं समुद्रहन्नुन्नतमंसकूटम् VikraDeC. 1. 51; आजघ्निरे करतलैर्घनमंसकूटम् S'rīKaC. 18. 2; तस्मिन् भरं जनकदोरवतीर्णमुर्व्या बिभ्रत्यदभ्रबलविभ्रमदंसकूटे EI. xix. 159. 27; अतिचित्रममित्रपार्थिवानामवरूढाजनि सेयमंसकूटात् (ज्या) Acyutarā. 2. 48; Raghunā. 7. 19; राजन्योच्चांसकूटक्रथनपटुरटद्घोरधारः कुठारः PraboCan. 1. 7 (5. 10); **2** the shoulder of an animal **i** (horse) अथवाप्यंसकूटेन द्वाभ्यामेकेन वा पुनः (अश्वं न गृह्णीयात्) AśvaVai. 32. 26; **ii** the hump of a bull (L.) अंसकूटस्तु ककुदम् AbhidhāRaMā. 2. 111; अंसकूटं तु ककुदम् AbhidhāCin. 1264; स्त्रियां ककुत्त्वंसकूटं ककुदं पुनरस्त्रियाम् KalpaK. 182. 445.

**अंसकूटद्वय** (aṁsakūṭa-dvaya) *n.* both the tall shoulders पृथुलमतेरंसकूटद्वयमपि पृथुलमभूत् NalaCam. 4. 14 (8)

**अंसग** (aṁsa-ga) *adj.* situated on the shoulder, found on the shoulder (of a Vāstupuruṣa) पर्जन्याद्या बाह्या दृक्श्रवणोरःस्थलांसगा देवाः BṛSaṁ. 53. 52.

**अंसगत** (aṁsa-gata) *adj.* placed on the shoulder, found on the shoulder चरणे…अंसगते त्वेकस्मिन् सारितमिदमेव निर्दिष्टम् KandaCū ii. 6. 19.

**अंसग्रह** (aṁsa-graha) *m.* seizure by the shoulder अंसग्रहे च सिंहाद्यैरथातिविरलाङ्गुलिः Nṛtyā. 201.

**अंसघात** (aṁsa-ghāta) *m.* striking with the shoulder राक्षसौ…शीर्ष-

घातांसघातैश्च परस्परमथाहतौ।…व्यायुध्येते मुहुर्मुहुः MahāBhā. vii. App. 10. 45; पादेनाचूर्णयत्कांश्चिदंसघातैरपान(? त)यत् PadmP.(Ra.) 33. 235.

**अंसचुम्बिन्** (aṁsa–cumbin) *adj.* touching the shoulder प्रोत्तुङ्गस्तनमंसचुम्बिचिबुकं कृत्वा तया मां प्रति।…सासूयं प्रहिताः स्मरज्वरमुचो द्विताः कटाक्षच्छटाः VakroJī. 43. 21; अंसचुम्बिनि…एतया सलीलमस्तः कबरीभरे करः NavaSāC. 7. 12.

**अंसज** (aṁsa–ja) *adj.* produced on the shoulder, belonging to the shoulder मन्याबाह्वंसजे गदे…युज्यते बृंहणं नस्यम् S'ārṅgaS. iii. 8. 30.

**अंसज्वलन** (aṁsa–jvalana) *n.* inflammation of the shoulders (हयानाम्) स्कन्धासनांसज्वलनं जयाय बन्धाय पादज्वलनं प्रदिष्टम् BṛSaṁ. 93. 3.

**अंसतट** (aṁsa–taṭa) *m. n.* the surface of the shoulder, broad shoulder त्रिपुरहरवृषभककुदाकारोन्नतविकटांसतटनिकटदोधूयमानचारुचामरच्छायः EI. iv. 342. 47; आयोज्य मालामृतुभिः प्रयत्नसंपादितामंसतटेऽस्य VakroJī. 113. 20; हेलोदस्तमहीधरस्य तनुतामालोक्य दोष्णो हरेर्हस्तेनांसतटेऽवलम्ब्य चरणावारोप्य तत्पादयोः Sarakaṇṭhā. 728. 3; SaduktiKa. 44. 18; SūktiMu. 1. 43; एषोऽपि…अंसतटं विधूय तन्मांसगृध्नुः…नखान् नियुङ्क्ते SaduktiKa. 251. 16; यस्यांमसतटावघट्टितजलं वल्गन्त्यमी मद्गवः Subhāṣi. 714; दृढादरामंसतटाधिरोहणे। ग्रहीतुमस्य प्रसृताविव क्षमां…भुजौ Acyutarā. 3. 6.

**अंसतटी** (aṁsa–taṭī) *f.* the region of the shoulder आदिप्रभोरनिशमंसतटीनिषण्णकेशच्छलेन…वदनारविन्दे।…सद्गन्धलुब्धमधुपावलिराविभाति PārśvC. 7. 360.

**अंसतल** (aṁsa–tala) *m. n.* the surface of the shoulder न्यस्तमंसतलात्पान्थैः संध्यानमपि वर्त्मसु। सातङ्कमाददे भूयस्तरङ्गिस्तस्य शासनम् Gaṅgāva. 1. 75.

**अंसतस्** (aṁsa–tas) *adv.* from the shoulder तस्य नृपस्य…वेतालवरोंऽसतः…निजमेव पदं ययौ KathāSaSāg. xii. 25. 87.

**अंसताडन** (aṁsa–tāḍana) *n.* the act of striking the shoulders (न) आस्फोटयेदंसताडनेन शब्दं (न) कुर्यात् ManvaVi. 487. 9 (*on* 4. 64)

**अंसतापनुद्** (aṁsatāpa–nud) *adj.* healing (lit. removing) the inflammation in the shoulders तत् सिद्धं सर्पिर्ज्वरहरं परम्। क्षयकासशिरःशूलपार्श्वशूलांसतापनुत् CaraS. vi. 3. 226. (1941 Ed.)

**अंसत्र** (áṁsa–tra) *n.* **1** armour (to protect the shoulders)…ऋभवो ये…अंसत्रा य ऋधग् रोदसी ये विभ्वो नरः स्वपत्यानि चक्रुः ṚV. iv. 34. 9; वास्तोष्पते ध्रुवा स्थूणांसत्रं सोम्यानाम्। द्रप्सो…ṚV. viii. 17. 14; Nir. 5. 25; **2** a bow अंसत्रमंहसस्त्राणं धनुर्वा कवचं वा Nir. 5. 25.

**अंसत्रकोश** (áṁsatra–kośa) *adj.* having an armour for a bucket द्रोणाहावमवतमश्मचक्रमंसत्रकोशं सिञ्चता नृपाणम् ṚV. x. 101. 7.

**अंसदघ्न** (aṁsa–daghná) *adj.* [*f.* –*ā*, –*ī*] **i** shoulder–deep (e. g. a pit or hole) इदमहं तान् वलगानुद्वपामि यान् मे भ्रातृव्यो यानभ्रातृव्यो निचखान येऽअंसदघ्ने MaiS. i. 2. 10; **ii** shoulder–high (above the ground) सम्राडासन्दीं पर्याहृत्य…आसादयति…अंसदघ्ना भवति S'atBr. XIV. i. 3. 10; अंसदघ्नीँश्वतसः (? अंसदघ्नीश्वतसः) स्थूणा निहत्य MānS'S. II. ii. 2. 28; –दघ्ने *adv.* up to the shoulder–level, shoulder–high (अग्निं) गुल्फदघ्ने हरति…अंसदघ्ने कर्णदघ्ने VārāS'S. I. iv. 3. 13.

**अंसदघ्नम्** (aṁsa–daghnám) *adv.* upto the shoulder–level, shoulder–high तमग्निं…अंसदघ्नं…उदगृह्णात् MaiS. i. 6. 6; अग्निप्रणयनानि…उद्धृत्योद्यान्तभिदघ्नमंसघ्नम् MānS'S. 32. 11.

**अंसदाह** (aṁsa–dāha) *m.* inflammation of the shoulders पित्तविकाराः पुनः…त्वग्दाहोंऽसदाहो धूमकोऽम्लकः AṣṭāSaṁ. i. 107. 19 (1. 20); चूर्णितं (तुगाक्षीरीप्रभृति) प्राशयेत्…हस्तपादांसदाहेषु SiddhYo. 10. 13.

**अंसदुःख** (aṁsa–duḥkha) *n.* pain in the shoulders लालाटिकः स्यात् प्रभुभावदर्शिन्याक्षेपभेदेऽप्यलसेऽसदुःखे KośaKaTa. 2. 3848.

**अंसदेश** (aṁsa–deśa) *m.* **A** the shoulder, shoulder–region (of human beings) स (नाराचः) ब्राह्मणस्यांसदेशे निपपात MahāBhā. viii. 42. 50; x. 8. 111; राघवौ। अच्छिन्दतां…बाहू तस्यांसदेशयोः Rāmā. iii. 66. 5; अंसदेशे बाहू छित्त्वा SuśruS. iv. 15. 12; अंसदेशस्थितो वायुः शोषयित्वांसबन्धनम्। सिराश्चाकुञ्च्य तत्रस्थो जनयत्यवबाहुकम् SuśruS. ii. 1. 82; RugVi. 22. 64; KalyāKā. 8. 17; अंसदेशावसक्तपाणिः…अपृच्छम् Kād. 154. 19; अवलम्ब्य द्राक् सखीमंसदेशे…भूषामण्टपाय प्रयाहि TripuMāPūSt. 38; अपश्यं…गलितमुत्तरीयवल्कलप्रान्तमंसदेशे निवेशयन्तीम्…तरङ्गलेखाम् TilaMañ. 334. 6; ViṣṇuDhaP. iii. 26. 81; अंसदेशसंक्रान्तस्य शशिविशदकपोलयुगलस्य UdaySuKa. 67. 3; 43. 21; मणिकुण्डलं परस्याः श्रवणपरिच्युतमंसदेशमेत्य VikraDeC. 6. 17; अंसदेशमिलितश्रोत्रावतंसं…। विष्णोर्मुखं पातु वः SaduktiKa. 42. 15; हस्ते वंशीमुद्वहन्नंसदेशे वेत्रं कृष्णः कुञ्जतो निर्जगाम GopāKeCan. 76. 34; कर्पूरतुरिष्ठा नाम…कुण्डलं…अंसदेशे शशिनमिवोद्वहन्ती PādaTā. 40. 3; 11. 21; दयितस्य भामिनी। अंसदेशवलयीकृतां क्षणादाचकर्ष निजबाहुवल्लरीम् RasGaṅ. 125. 3; **B** (of an animal) प्रत्यङ्गानामंसदेशानामुद्धरणं गमनप्रवेशनं च स्यादित्युरःसङ्गलक्षणम् Hastyāyur. 336. 8 (2. 71); स्कन्धे वक्षसि बाह्वोश्च अंसदेशे तथैव च। अन्यवर्णो भवेद्वाजी कञ्चुकी स प्रकीर्तितः AśvaVai. 3. 147; **C** root of the wing of a bird स तं (=विष्णुं)…विन्यस्तचरणाम्भोजमंसदेशे गरुत्मतः…दृष्ट्वा…अपतन्मूर्ध्ना BhāgP. iii. 21. 11; ग्रीष्मे…लोलजिह्वाः सर्पसारङ्गवर्गा मूलस्यस्तैः पत्रिणश्चांसदेशैः KāvyMī. 108. 10; **D** the region of the upper corner of a sacrificial altar (प्राशित्रम्) निदधाति वांसदेशे KātyS'S. ii. 2. 19.

**अंसदेशाहति** (aṁsadeśāhati) *f.* the act of striking or beating on the shoulder न भ्रूविभङ्गरचना वदने न चांसदेशाहतिः…क्षयेऽग्निर्भस्मीकरोति भुवनानि च दुःसहार्चिः HarVi. 11. 73.

**अंसद्वन्द्व** (aṁsa–dvandva) *n.* both the shoulders रामभद्रम्। अंसद्वन्द्वे बिभ्रद्…अध्यारूढन्माल्यवन्तं हनूमान् Rāgh. 10. 60.

**अंसद्वय** (aṁsa–dvaya) *n.* the two shoulders यमंसद्वयसंसक्तचन्द्रादित्याङ्गदश्रियम्। नेमुस्त्रिविक्रमे देवाः JānaHa. 2. 12; भारवहनेन चांसद्वयमिन्द्रियमुच्यते न कथम् NyāyMañ. ii. 54. 20; अंसद्वयेन श्रियमाससाद स चन्दनस्थासकसुन्दरेण VikraDeC. 12. 43; ĪśānS'iPa. i. 21. 19; NityāṢoḍa. 8. 88; अंसद्वयलग्नाग्रस्वस्तिकीकृतभुजलतायुगलेन RasGaṅ. 19. 11.

**अंसद्वयस** (aṁsa–dvayasa) *adj.* shoulder–deep तत्पूर्वमंसद्वयसं द्विपाधिपाः…जगाहिरे…पयः S'iśuVa. 12. 72.

**अंसद्वयान्तर** (aṁsadvayāntara) *n.* the region between the two shoulders स्पृक्कायां स्यात् पिशीलं तु क्लीबमंसद्वयान्तरे NānārthāSaṁ. ii. 149. 1171.

**अंसधात्री** (aṁsa–dhātrī) *f.* 'shoulder–nurse', one who carries a baby [DBHS]

**अंसध्री** (aṁsa–dhrī́) *f.* a cooking vessel with handles on both sides अंसध्रीं [v. l. अंसद्रीं] शुद्धामुप धेहि नारि तत्रौदनं सादय दैवानाम् AV. xi. 1. 23 (comm. has अंशध्रीम्)

**अंसना** (aṁs–anā) *f.* a particular posture of the shoulders (by touching the cheeks and slightly contracting the eyes and eye–brows, as in the case of an owl) किंचिदाकुञ्चिते नेत्रे कृत्वा भ्रूक्षेपमेव च। तथांसगण्डयोः स्पर्शाद् इति उलूकवदंसना यस्योर्ध्वे विधूननम् AbhinBhā. iii. 266. 12 (*on* 25. 7)

**अंसनिवेश** (aṁsa–niveśa) *m.* rolling or placement (of the hair) on the shoulders तस्य ध्रुवं तदियमंसनिवेशकेशच्छायाच्छलादपतदङ्ककलङ्कलेखा PārśvC. 7. 365.

**अंसनिषण्ण** (aṁsa–niṣaṇṇa) *adj.* placed or borne on the shoulders कदा…अंसनिषण्णमुखी सा स्नपयति बाष्पेण मम पृष्ठम् ĀryāSaS'a. 394; इत्याख्याय कथाद्भुतमंसनिषण्णः पुनः स वेतालः। पप्रच्छ तं…प्रश्नम् KathāSaSāg. xii. 15. 48.

**अंसनिहित** (aṁsa–nihita) *adj.* [*f.* –ā] placed on the shoulder कर्करीम्…अंसनिहितां भ्रामयन्प्रदक्षिणम् ĪśanS'iPa. ii. 62. 37.

**अंसन्यस्त** (aṁsa–nyasta) *adj.* placed on the shoulder उत्पश्यामि त्वयि तटगते…लीलामद्रेः…अंसन्यस्ते सति हलभृतो मेचके वाससीव MeghDū. 59; NemiDū. 63; तं वीक्ष्य…अंसन्यस्तमहागदं…निलिल्यिरे देवाः BhāgP. iii. 17. 21.

**अंसपट्ट** (aṁsa–paṭṭa) *m.* the (broad) surface of the shoulder तेऽपि लाञ्छनवृन्दं तु धारयन्ति…ला(?ल)लाटे चांसपट्टे तु पृष्ठे पाणितलद्वये PāraS. 10. 94.

**अंसपट्टक** (aṁsapaṭṭa–ka) *m.* the (broad) surface of the shoulder तान्यपि (बिम्बानि) स्वानि चिह्नानि ललाटे वांसपट्टके…मूर्ध्नि वा दधते PāraS. 15. 959.

**अंसपथ** (aṁsa–patha) *m.* a land–route, overland–route, a route traversed by yoked bulls आभ्याम् (=खरोष्ट्रपथाभ्याम्) अंसपथो व्याख्यातः ArthS'ā. ii. 318. 3 (7. 12); (cf. दुर्गं…निवेशयेत्…पण्यपुटभेदनमंसवारिपथाभ्यामुपेतम् ArthS'ā. i. 120. 1 (2. 3))

**अंसपर्यायनिर्गत** (aṁsaparyāya–nirgata) *n.* (in dance) rhythmic movement of the hands to and fro from the shoulders to the waist बद्ध्वा तु स्वस्तिकं पूर्वं कलाससमये यदा। निर्गतावंसदेशाच्च पर्यायात् कटिदेशगौ। करौ यत्र तदोक्तं तदंसपर्यायनिर्गतम् Nṛtyā. 851–52; (cf. संप्राप्तौ स्वस्तिकत्वं प्राक् करावंसविनिःसृतौ। कटीपर्यन्तमासाद्य भूयोऽपि स्वस्तिकीकृतौ। यत्र तं चालनं प्राहुरंसपर्यायनिर्गतम् Bharatakośa 3A. 37)

**अंसपार्श्व** (aṁsa–pārśva) *n.* the side or flank of the shoulder राजयक्ष्मणि। स्वरभेदोऽनिलाच्छूलं संलोच(v. l. संकोच)श्चांसपार्श्वयोः SuśruS. vi. 41. 12. (comm. अंसपार्श्वयोः अंसयोः पार्श्वयोः।…स्वरभेदादिलिङ्गत्रयं राजयक्ष्मणि वातेन) = RugVi. 10. 6

**अंसपार्श्वाभिताप** (aṁsapārśvābhitāpa) *m.* burning pain at the two sides or flanks of the shoulders अंसपार्श्वाभितापश्च संतापः करपादयोः…लक्षणं राजयक्ष्मणः CaraS. (ed. 1941) vi. 8. 52 = RugVi. 10. 5.



**अंसपीठ** ( aṁsa–pīṭha ) *n.* the broad shoulder-region (including the shoulder blade and the front part of the shoulder) अंसपीठगुद्भगनितम्बेषु समुद्गाः (संधयः) SuśruS. iii. 5. 27; इन्द्रवस्तिपरिणाहांसपीठकूर्परान्तरायामः षोडशाङ्गुलः SuśruS. i. 35. 12; समरशतविजयशोभासनाथमण्डलाग्रद्युतिभासुरतरस्कंपिठो( ? तरांसपीठो° )दूढगुरुमनो[र]थमहाभारः···श्रीशिलादित्यः El.xi. 179. 14 = xxi. 118. 14 = viii. 191. 14 = i. 86. 11 = xxii. 116. 10; अचलशिखाकूटविकटमांसलांसपीठाः···धरणिभुजः AvantiKa. 48. 3; प्रभिन्नकरटच्युतदानदन्तिदन्तप्रहाररुचिरोल्लिखितांसपीठः···इन्द्रराजः El. xiii. 279. 5; = xiv. 124. 14 = viii. 185. 11 = xxii. 72. 6 = (द्विभिन्न°) xxii. 105. 8 etc.; करेण ··· आस्फालयन्( ? °त्) स ( = शिवः ) परुषध्वनिमंसपीठम् HarVi. 13. 2; अंसपीठलुठितासितिकुन्तलाली PārśvC. 7. 359; स्कन्धसंघेरंसपीठं सार्धवाणांशकैर्भवेत् ĪśānŚiPa. ii. 41. 115; (रामः) आरूढस्तदनु हनूमतोंऽसपीठम् Ragh. 18. 35.

**अंसपीठक** ( aṁsa–pīṭhaka ) *n.* the (broad) region of the shoulder, the surface of the shoulder स नर्मसचिवं कंचित् समालम्ब्यांसपीठके···रेजे सुरकुमारवत् MahāP. 41. 134.

**अंसपूर्वांश** ( aṁsa–pūrvāṁśa ) *m.* the front part of the shoulder आस्य( ? अंस )पूर्वांशसंभूतं मुकुलं हृदयोद्भवम्···श्रेष्ठमेतत् परं मतम् Mānaso. iii. 13. 1424.

**अंसपृष्ठ** ( aṁsa–pṛṣṭha ) *n.* the top or surface or back of the shoulder एतत् स वेतालपतिर्निशम्य मामभ्यधात् तर्हि ममांसपृष्ठम् । आरोह KathāSaSāg. xii. 32. 53; अथांसपृष्ठसंलग्नमाजिनं कृतवान् विभुः PadmP. iv. 110. 259; सा ददर्श सविस्मया अंसपृष्ठे···धावन्तं करं तस्य RājTa.(Ka.) 4. 425.

**अंसपृष्ठक** ( aṁsa–pṛṣṭhaka ) *n.* the top or the back of the shoulder वामाङ्घ्र्यङ्गुलिषु स्फिक्के पाण्यग्रे चांसपृष्ठके (त्रैलोक्यमोहनचक्रन्यासः कर्तव्यः) NityāṢoḍa 8. 49.

**अंसपृष्ठग** ( aṁsapṛṣṭha–ga ) *adj.* being or seated on the top of the shoulder प्रयान्तं च तमाह स वेतालः सोंऽसपृष्ठगः KathāSaSāg. xii. 17. 2; तस्यांसपृष्ठगात् । निर्गत्य स ययौ तस्माद्वेतालः प्रेतकायतः KathāSaSāg. xii. 31. 74.

**अंसपृष्ठतस्** ( aṁsapṛṣṭha–tas ) *adv.* from the top of the shoulder ततो भूयस्तमाह स वेतालः सोंऽसपृष्ठतः KathāSaSāg. xii. 19. 2.

**अंसप्रदेश** ( aṁsa–pradeśa ) *m.* the shoulder-region अङ्गुल्यग्रेण । बाहुस्पर्शश्च अंसप्रदेशे VīraMi.(Āhnika) 86. 12.

**अंसप्रलम्ब** ( aṁsa–pralamba ) *adj.* hanging or reaching upto the shoulders कर्णावंसप्रलम्बौ चिबुकमपि नतं···त्वं···सुवदना NāṭyaŚā. 15. 12.

**अंसप्रान्त** ( aṁsa–prānta ) *m. n.* the shoulder-tip, the side of the shoulder अथ बन्धे कृते पश्चादंसप्रान्तप्रमार्जनम् PadmP. iv. 110. 252.

**अंसफलक** ( aṁsa–phalaká ) (*m.*) *n.* the shoulder-blade, scapula पञ्चैमाश्चतुर्विधा अङ्गुलयो द्वे कल्कुषी दोरंसफलकं चाक्षश्च तत् पञ्चविंशतिः ŚatBr. X. ii. 6. 14; पञ्चाङ्गुलयश्चतुष्पर्वा द्वे कक्षसी दोश्चाक्षश्चांसफलकं च सा पञ्चविंशतिः AitĀ. I. ii. 2. 29; द्वे अंसफलके SuśruS. iii. 5. 19; 6. 6; CaraS. iv. 7. 6; (अस्थिसंख्या ।) तद्यथा द्वात्रिंशद्दन्ताः···(द्वे) अन्न( ? अंस )फलके BhelaS. 92. 11 (4. 7); द्वावंसावंसफलकावपि द्वावेव चाक्षकौ ।···इति अस्थिसंख्या KāśyaS. 75A. 12; शोथः स्यात्···अंसफलके RugVi. 54. 31; बाह्वोरथांसफलके पाश्चाभागे··· भागेष्वेतेषु दन्तिनः । समुद्गसंधिः Hastyāyur. 448. 24 (3. 9); 395. 18 (3. 6); अंसफलकाधस्ताद् गात्रसंधयः Hastyāyur 527. 30 (3. 29); अंसांसफलकापाङ्गा नीले मन्ये फणे तथा । वैकल्यकरणान्याहुः BhāvPra. (Bhā.) 3. 233; (प्रतिमायाः) कक्षाधस्त्रांसफलकतुङ्गं सप्ताङ्गुलं भवेत् ŚilpaRa. ii. 5. 92; स्कन्धाभ्यां निर्गतावंसौ फलकौ ( ? अंसफलकौ ) षट्षडङ्गुलौ ŚilpaRa. ii. 8. 124.

**अंसफलका** ( aṁsa–phalakā ) *f.* shoulder-blade, scapula ककुदोऽर्धोंऽसफलकामध्यव्यासो दशाङ्गुलः ĪśanŚiPa ii. 41. 116.

**अंसबन्ध** ( aṁsa–bandha ) *m.* the joints of parts or a posture in coitus उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं बतेन्दुवदनातनौ KāvyaPra. 56. 4 = ŚārṅgaPa. 3277; AlaṅkāŚe. 3. 1(8)

**अंसबन्धन** ( aṁsa–bandhana ) *n.* the ligament of the shoulders अंसदेशस्थितो वायुः शोषयित्वांसबन्धनम् । ··· जनयत्यवबाहुकम् SuśruS. ii. 1. 82; RugVi. 22. 64.

**अंसभङ्ग** ( aṁsa–bhaṅga ) *m.* fracture of the shoulder-bone नेत्रकन्धराबाहुसक्थ्यंसभङ्गे चोत्तमम् (दण्डं कुर्यात्) ViṣṇuSm. 5. 70.

**अंसभाग** ( aṁsa–bhāga ) *m.* the region of the shoulder, the shoulder नितरां नतिमद्भिरंसभागैः ।···(अतमि तदा नितरां नितम्बिनीभिः) ŚiśuVa. 7. 62.

**अंसभार** ( aṁsa–bhāra ) *m.* [included in भस्त्रादिगण P. iv. 4. 16; JaineVyā. 212. 26 (*on* iii. 3. 139); KāśiVṛ. *on* P. v. 4. 16; GaṇRa. 6. 379 (406); Prasā.i. 825. 3; GaṇPā. 169. 6] a load carried on the shoulders अन्तपालः··· वर्तनीं गृह्णीयात्···अंसभारस्य माषिकाम् ArthŚā. i. 274. 2(2. 21); अंसभारसंनिवेशितशिवलिङ्गोद्वहनशिवसुपरितुष्टसमुत्पादितराजवंशानाम् El. iii. 260. 3 = xxii. 171. 3 = xxiii. 85. 5 etc.

**अंसभार** ( aṁsa–bhāra ) *adj.* carrying a load on the shoulders गोपः ···अंसभारो [v. l. असंभारो] व्रजमव्रजत् BṛKathāŚloSaṁ. 20. 253.

**अंसभारिक** ( aṁsabhār–ika ) *adj.* [*f.* –ī] [included in भस्त्रादिगण P. iv. 4. 16; KāśiVṛ. *on* iv. 4. 16; GaṇRa. 6. 379 (406); GaṇPā. 169. 6] carrying a load on the shoulders.

**अंसभित्ति** ( aṁsa–bhitti ) *f.* [in the मतल्लिकादिगण GaṇRa. 2. 113 (155)] the wall-like ( = broad or massive) shoulder वः···न···क्षमाः परान् मार्ष्टुमिहांसभित्तयः HarVi. 12. 53; जयति च गिरिजाकपोलबिम्बादधिगतपत्रविचित्रितांसभित्तिः । त्रिपुरविजयिनः El. v. 192. 3 = iv. 281. 2 (f. n. 6); आबद्धकृत्रिमसटाजटिलांसभित्तिरारोपितो मृगपतेः पदवीं यदि श्वा ।···नादं करिष्यति कथं हरिणाधिपस्य SūktiRa. 169. 1.

**अंसभू** ( aṁsa–bhū ) *f.* the shoulder-region सा···अर्जुनमेत्य···अंसभुवि··· मालामस्त्रावसज्य···तस्थौ YudhiVi. 1. 88; कुरवो भूमौ लीनां विदधुस्ते विततिमंसभूमौलीनाम् YudhiVi. 4. 7.

**अंसमण्डल** ( aṁsa–maṇḍala ) *n.* the circular region of the shoulder कोऽपि कोपतरलाग्रपाणिना घट्टयन्नसकृदंसमण्डलम् । गन्तुमन्तकपुरं पुरः स्वयं निर्ममे पटहताडनामिव ŚrīKaC. 22. 9.

**अंसमांस** ( aṁsa–māṁsa ) *n.* the fleshy part of the shoulders वंशपक्षांसमांसेषु तथैवोत्कृष्टयोरपि । वंशावभागमास( ? श्रि )त्य पर्शुकासंधिसंश्रिताः । शिरास्त्राणि विज्ञेया दोषनिर्हरणे नृप Hastyāyur. 490. 5 (3. 16)

**अंसमात्र** ( aṁsa–mātra ) *adj.* shoulder-deep तिष्ठन्तं पयसि पुमांसमंसमात्रे ···इयेष मौग्ध्यात् ŚiśuVa. 8. 21.

**अंसमूल** ( aṁsa–mūla ) *n.* acromion [PW]

**अंसयुग** ( aṁsa–yuga ) *n.* pair of shoulders स्तनौ गलमथांसयुगम्···निदधातु ĪśānŚiPa. i. 25. 5; केशपाशभारादिवांसयुगमानतमुद्वहन्ती Surath. 7. 59.

**अंसयुग्म** ( aṁsa–yugma ) *n.* pair of shoulders (साधकः) मूर्तिमन्त्रेण वै कुर्यान्न्यासं सर्वाङ्गकं ततः । मूर्ध्नि वक्त्रेंऽसयुग्मे च JayāS. 11. 24; कुक्षिपृष्ठांसयुग्मोरुजानुपादयुगेषु च । शार्ङ्गार्णं···विन्यसेत्···मन्त्री AhirbuS. 19. 35; मूर्ध्नि वक्त्रेंऽसयुग्मे च···प्रणवाद्यं···विन्यसेत् PāraS. 4. 27; कक्षांसमध्यमपि मांसलमंसयुग्मम् TantraSa. 2. 95 = ŚilpaRa. ii. 9. 8.

**अंसरुज्** ( aṁsa–ruj ) *f.* pain in the shoulders शतपुष्पां नतं कुष्ठं मधुकं देवदारु च । पिष्ट्वा लेपः ससर्पिष्कः पृष्ठपार्श्वांसरुक्षु च SiddhYo. 10. 16.

**अंसल** ( aṁsa–lá ) *adj.* [P. v. 2. 98; CāndraVyā. iv. 2. 101; KāśiVṛ. *on* v. 2. 98; SiddhāKau. 304B. 14; Prasā. i. 889. 11] **A** fleshy, muscular, having strong shoulders, strong आलभते । अग्नयेऽंसलम् TaiBr. III. iv. 17. 1; अथैतानरूपेभ्य आलभते ।···अतिकृशमत्यंसलम् TaiBr. III. iv. 19. 1; द्वितीयं ह जुहवांचकार···गन्धर्वमुग्रं बलिनमश्वघातिनमंसलम्···विश्वज्योतिषमा वह JaimiBr. 2. 270; भुजेन···उपैतु योगं पुनरंसलेन RaghuVa. 16. 84; 3. 34; = AlaṅkāŚe. 14. 1(2); अंसलेनोरसा हसन्तमिव तटशिलाप्रथिमानं···शबरयुवानमादायाजगाम HarṣaC. 310. 3; तेन नादेनाहं दत्तसंज्ञः शिरसैवोत्क्षिप्य सप्रतिमं लोहपादपीठमंसलपुरुषप्रयत्नदुश्चलम् DaśKuC. 143. 11; अंसल इति चोपचितांसो बलवानुच्यते KāśiVṛ. *on* v. 2. 98; HarVi. 43. 19; जयश्रियं दक्षिणमंसमंसलौ···नृपती भयं रिपुं समं समारोपयतः स संयति RāghPāṇ.(Dha.) 6. 3; AbhidhāRaMā. 2. 226; अंसलं ···नाविकयुवानमद्राक्षम् । TilaMañ. 125. 16; वपुर्विपुलमंसलम् PāṇḍaC. 3. 187; 10. 44; उपतस्थे खगेश्वरः । अहीन्द्रदामभिर्भीमैरंसलम्बिभिरंसलः Yādavā. 16. 51; Acyutarā. 11. 17; दृढां शिरोधिं दधदंसलोऽसौ VīraBhā. 1. 81; बलवान् मांसलोंऽसलः AmaK. 1161; Vaija. 201. 6; AbhidhāCin. 448; ŚabdaRa. (Su.) 3. 73; KośaKaTa. 1. 5023; KalpaK. 32. 108; ParaNā. 1861; **B** tender (said of flesh, meat) तदु होवाच याज्ञवल्क्योऽश्नाम्येवाहमंसलं चेद् भवतीति ŚatBr. III. i. 2. 21; मेदो वै मेधस्तदेनं मेधमुपनयति यद्यु अंसलो भवति स्वयमुपेत एव तर्हि मेधं भवति ŚatBr. III. viii. 4. 6; अंसलभोजनं वा KātyŚS. vii. 2. 25.

**अंसलता** ( aṁsala–tā ) *f.* heftiness, sturdiness साहसोदधिविलोडने स्वयं योंऽसमंसलतयार्पयिष्यति । श्रीरिवोरसि मुरद्विषः पदं तस्य निश्चितमियं विधास्यति NavaSāC. 8. 9.

**अंसलभोजन** ( aṁsala–bhojana ) *n.* meal consisting of soft meat अंसलभोजनं वा KātyāŚS. vii. 2. 25.

**अंसलम्बिन्** ( aṁsa–lambin ) *adj.* [*f.* –ī] **A** hanging down from the shoulder अंसलम्बिकुटजार्जुनस्रजस्तस्य···अभूत्···विहारविभ्रमः RaghuVa. 19. 37; उपतस्थे खगेश्वरः । अहीन्द्रदामभिर्भीमैरंसलम्बिभिरंसलः Yādavā. 16. 51; **B** leaning on the shoulders प्रियो न यां निर्भरमंसलम्बिनीममोदयत् केलिदलानिलोर्मिभिः VasaViKā. 7. 46.

**अंसवत्** ( aṁsa–va(n)t ) *adj.* [*f.* –ī] having shoulders ( = weak ?)

स्नेहबलिनोरिति किम् ?…अंसवान् दुर्बल: CāndraVṛ. *on* iv. 2. 101; अन्यत्र अंसवती गौ: । अंसवान् दुर्बल: KāśiVṛ. *on* P. v. 2. 98.

**अंसवर्तनिक** ( aṁsa–vartanika ) *n.* a gesture in dance मणिबन्धप्रकोष्ठांसवर्तनाच्चलितोद्धृतै: । किंचित्साचिनतं शीर्षं विधायोपरिलोडनै: ॥ परागधोमुखत्वेन लुठितैरुरस: पुर: । ततश्चेच्चलितै: पाण्यो: कुटिलै: पार्श्वयोर्द्वयो: ॥ युगपत् क्रमतो यद्वा भूयते यत्र तत् तदा । अंसवर्तनिकं प्रोक्तं तल्लक्षणविशारदै: Nṛtyā. 795.

**अंसवर्तिन्** ( aṁsa–vartin ) *adj.* situated on the shoulder एतन्निशम्य वचनं वेतालस्यांसवर्तिनस्तस्य । स जगाद KathāSaSāg. xii. 10. 93.

**अंसवर्त्मन्** ( aṁsa–vartman ) *n.* shoulder-line पश्यतां स्मयरसेन दोर्युगं बिम्बिता भ्रुकुटयोंऽसवर्त्मनि । स्वर्द्रुहां हठगलग्रहोच्छ्वसत्कालपाशकरणिं प्रपेदिरे S'rīKaC. 22. 3.

**अंसवस्त्र** ( aṁsa–vastra ) *n.* an upper garment अंसवस्त्रोत्तरीयके PañcTaPra. 109.

**अंसविवर्तित** ( aṁsa–vivartita ) *n.* a gesture in dance विलसत्कूर्परस्तब्धमणिबन्धप्रकोष्ठकौ । हस्तौ पूर्वं समुद्यम्य नर्तनक्रिययान्वितम् । ततस्तौ मस्तकादूर्ध्वं किंचित्साचीविलोलितौ । परागधोमुखीकृत्य चालयित्वा तत: परम् ॥ लुठितौ चेत् पुरो भूमौ तत् स्यादंसविवर्तितम् ( वेम: ) Bharatakośa 3B. 5.

**अंसविवर्तित** ( aṁsa–vivartita ) *adj.* turned towards the shoulder स्रस्तं चांसविवर्तितेन चिबुकेनालम्ब्य चेलाञ्चलम् ।…तरुणी स्वैरं परिक्रीडते S'ṛṅgāTi.( Rā. ) 93.

**अंसविवर्तिन्** ( aṁsa–vivartin ) *adj.* turning towards the shoulder मुखमंसविवर्ति पक्ष्मलाक्ष्या: कथमप्युन्नमितं न चुम्बितं तत् S'āk. 3. 38 = VakroJi. 131. 3; SāhiDa. 231. 10; Subhāṣi. 1273.

**अंसविशङ्कट** ( aṁsa–viśaṅkaṭa ) *adj.* one who has broad shoulders जय…अंसविशङ्कट…वीर StavMā. 163. 9.

**अंसविस्रंसमान** ( aṁsa–visraṁsamāna ) *adj.* slipping from the shoulder अंसविस्रंसमानवसन:…व्यंसासुर: HarVi. 34. 41.

**अंसव्यापिन्** ( aṁsa–vyāpin ) *adj.* covering the shoulders, reaching upto the shoulders अंसव्यापि शकुन्तनीडनिचितं बिभ्रज्जटामण्डलम्…मुनिरसौ…स्थित: S'āk. 7. 11 = SaduktiKa. 322. 6; SūktiMu. 109. 33.

**अंसशिखर** ( aṁsa–śikhara ) *m. n.* the top of the shoulder अंसशिखरे क्षिप्त्वोत्तरीयं तत: JānaHa. 2. 79; आस्फालयांसशिखरं शिखरानुकारि HarVi. 11. 72; एकदा च स:…अचल इव मैनाकनामा निर्झरैर्घैरंसशिखरावलम्बिभिर्धूलीकदम्बप्रालम्बैरभिनवैरुद्भासमान:…बाह्योद्यानमगच्छत् TilaMañ. 105. 4; आलोक्य…अमुष्य काचित् कङ्कालमंसशिखरे शितशूलबद्धम् BhikṣāKā. 6. 11.

**अंसशूल** ( aṁsa–śūla ) *m. n.* pain in the shoulders ( पिबेच्चूर्णम् ) पार्श्वहृत्कटिपृष्ठांसशूले SiddhYo. 26. 49.

**अंसशूलघ्न** ( aṁsaśūla–ghna ) *adj.* [ *f.* –ī ] curing the acute pain in the shoulders शिर:पार्श्वांसशूलघ्नं…घृतम् AṣṭāSaṁ. ii. 38. 1(4. 7)

**अंसषण्ड** ( aṁsa–ṣaṇḍa ) *m.* name of a country अंसषण्डो जनपद: JaineVyā. 203. 21 (*on* iii. 3. 75)

**अंससंसक्त** ( aṁsa–saṁsakta ) *adj.* **A** stuck at the shoulders अंससंसक्तस्यांसदेशे बाहू छित्त्वा…आहरेत् SuśruS. iv. 15. 12; AṣṭāSaṁ. i. 218. 8 (2. 4); **B** clinging to the shoulders उषसि वदनबिम्बैरंससंसक्तकेशै: श्रिय इव गृहमध्ये संस्थिता योषितोऽद्य ṚtuSaṁ. 5. 13.

**अंससंस्थ** ( aṁsa–saṁstha ) *adj.* situated in the shoulder-region ( सर्वत्र वास्तुनिर्दिष्ट: )…सर्पेन्द्रावंससंस्थौ तु पूजनीयौ प्रयत्नत: MatsyaP. 253. 41.

**अंससक्त** ( aṁsa–sakta ) *adj.* stuck at the shoulders ( दृढं कर्षेत् )…बाहुं छित्त्वांऽससक्तस्य AṣṭāHṛ. ii. 2. 33.

**अंससंकोचन** ( aṁsa–saṅkocana ) *n.* contraction of the shoulders (a disease) अंससङ्कोचनं च ।…पित्तोद्भवानि KalyāKā. 18. 10.

**अंससङ्ग** ( aṁsa–saṅga ) *m.* a kind of disease of shoulders (of the elephants) प्रत्यङ्गसांकर्यमुखशिर:शिरोधराणां कृच्छ्रादुद्वहनमित्यंससङ्ग: Hastyāyur. 336. 9 (2. 71)

**अंससङ्गिन्** ( aṁsa–saṅgin ) *adj.* resting on the shoulder ज्वलज्ज्वलनतुल्येन कुठारेणांससङ्गिना RāmāMañ. 48. 5.

**अंससंताप** ( aṁsa–santāpa ) *m.* inflammation of the shoulders वायु:…करोति चांससंतापम् CaraS. vi. 8. 26 (1941 Ed.)

**अंससंधि** ( aṁsa–sandhi ) *m.* the joint of the shoulder मुसलेनोत्क्षिपेत् कक्षामंससन्धौ विसंहते SuśruS. iv. 3. 31; पश्चिमाङ्गं तनो: पृष्ठमंससन्धी तु जत्रुणी Vaija. 178. 69; NānārthāSaṁ. i. 82. 467.

**अंससमकृति** ( aṁsasama–kṛti ) *adj.* raised to the shoulder-level, levelled to the shoulder सूचीकृते दक्षिणे च वामे चांससमकृतौ । कपित्थकेऽपि भारत्या: कर: स्यादिति संमत: AbhinDa. 206.

**अंसस्थ** ( aṁsa–stha ) *adj.* sitting on the shoulder रक्षस: । अंसस्थतद्वधूचक्रकान्तिप्रकटितात्मन: KathāSaSāg. iii. 4. 394; अंसस्थो वेताल: KathāSaSāg. xii. 11. 3; xii. 18. 2; xviii. 5. 8.

**अंसस्थल** ( aṁsa–sthala ) *n.* the shoulder-region अंसस्थलै: केचिदभिन्नधैर्या: स्कन्धेषु संश्लेषवतां तरूणाम् । मदेन मीलन्नयना: सलीलं नागा इव स्रस्तकरा निषेदु: Kirātā. 16. 30; अंसस्थलोल्लसितकुङ्कुमपटवासधूलिपिञ्जरितदिशाम्…महीपतीनाम् Kād. 13. 21; 36. 16; अंसस्थलाभिहतितारवा भटानाम् HarVi. 7. 6; 36. 2; एतत्तस्य वचो निशम्य नृपतेरंसस्थलात् पूर्ववद् वेताल: स जगाम KathāSaSāg. xii. 16. 39; xii. 24. 61; VikraDeC. 9. 58; NaiṣC. 11. 81; काश्चित्…मांसलेंऽसस्थले…लिलिखु: पत्रवल्लरी: PāṇḍaC. 2. 228; Subhāṣi. 1585; S'ṛṅgāSar. 130.

**अंसस्थलाग्र** ( aṁsasthalāgra ) *n.* the top of the shoulder-region अनधिगतनृपाज्ञाविघ्नितेच्छेषु दु:स्थस्थितिषु परिमृशत्सु स्थूलमंसस्थलाग्रम् Kapphiṇā. 4. 2.

**अंसस्थली** ( aṁsa–sthalī ) *f.* the (broad) shoulder-region अंसस्थली…युगादिदेवस्य…मरकतोपलबद्धभूमिशोभां दधाति PārśvC. 7. 366.

**अंसस्रंसिन्** ( aṁsa–sraṁsin ) *adj.* slipping down from the shoulder स मुनि:…अंसस्रंसिन: शापशासनपट्टस्येव ग्रथ्नन् ग्रन्थिम्…कृष्णाजिनस्य HarṣaC. 15. 6; अंसस्रंसिजलार्द्रजर्जरजटाजूटैर्मनाङ्मन्थरा:…जरत्तापसा: NalaCa. 5. 37.

**अंसहार** ( aṁsa–hāra ) *m.* [included in *bhastrādigaṇa*] burden on the shoulder भस्त्रादिभ्य: ष्ठन् P. iv. 4. 16; भस्त्रेन(? ण) हरतीति भस्त्रिक: । भस्त्रिकी ।…अंसभार । अंसेभार । अंसहार Prasā. i. 825. 3; भस्त्रादिभ्यस्तेन हरतीत्येतस्मिन्नर्थे ष्ठन् भवति ।…अंसहार CāndraVṛ. *on* iii. 4. 15.

**अंसाग्र** ( aṁsāgra ) *n.* the top of the shoulder अंसाग्रादवतारितम् । नत्वा निश्चयदत्तम् KathāSaSāg. vii. 3. 183.

**अंसाधिरोह** ( aṁsādhiroha ) *m.* the act of mounting on the shoulders अधैर्यभाजामवनीपतीनामंसाधिरोहादपि माननीय: । पादाश्रयोऽस्य Raghunā. 7. 26.

**अंसान्त** ( aṁsānta ) *m.* the shoulder-end अंसान्तविश्रान्तकुचान्तचक्रमाश्लिष्य कान्तेन तमर्पितम् । बिम्बौष्ठमाक्षिप्य…कुलटाप्यधावत् RāghPāṇ.(Dha.) 8. 42; अंसान्तौ पीठबन्धनौ Vaija. 178. 70.

**अंसाभरणता** ( aṁsābharaṇa–tā ) *f.* the state of being an ornament of the shoulder हरिं शूलप्रोतं यदगमयदंसाभरणतां…गिरिश: DevīPañ. 5. 22.

**अंसाभिताप** ( aṁsābhitāpa ) *m.* burning sensation in the shoulders घृतम्…अंसाभितापमग्निं च विषमं संनियच्छति CaraS. vi. 3. 221 (1941 Ed.); vi. 8. 30 (1941 Ed.) = SiddhYo. 1. 251; घृतं…क्षयकासशिर:पार्श्वहृच्छूलांसाभितापनुत् AṣṭāSaṁ. ii. 7. 21 (4. 2)

**अंसाभिमर्शन** ( aṁsābhimarśana ) *n.* touching the shoulders कुमारस्यांसाभिमर्शनपूर्वकसमीपानयनविधायकहिरण्यकेशिसूत्रे BālamBha. i. 56. 25 (*on* 1. 14)

**अंसार्ध** ( aṁsārdha ) *m. n.* half the portion or any part of the shoulder वहन्तमंसार्धविलम्बिनीर्जटा: ।…विशांपतिर्वङ्कमहर्षिमैक्षत NavaSāC. 13. 10.

**अंसावतंस** ( aṁsāvataṁsa ) *m. n.* ornament of the shoulder ते निन्यिरे नृपतिमन्यमिमाममुष्मादंसावतंसशिबिकांशभृत: पुमांस: NaiṣC. 11. 56.

**अंसावधि** ( aṁsāvadhi ) *adj.* that which has the shoulders as the limit षट्त्रिंशदङ्गुलं मानं पृष्ठमंसावधि स्मृतम् JayāS. 20. 45.

**अंसावमर्द** ( aṁsāvamarda ) *m.* rubbing or friction of the shoulders केयूरचक्रनिकरैस्त्रिदशाधिपानामंसावमर्दपतितैर्मणिकुट्टिमोर्वी । रेजे HarVi. 7. 52.

**अंसावमर्दन** ( aṁsāvamardana ) *n.* severe pain in the shoulders वेगप्रतीघातात्…कुर्यात्…अनिल: । प्रतिश्यायं च कासं च…ज्वरमंसावमर्दनम् CaraS. vi. 8. 20 (1922 Ed.) *also* अंसावमर्द.

**अंसावलम्बिन्** ( aṁsāvalambin ) *adj.* [ *f.* –ī ] **A** hanging down from the shoulder अंसावलम्बिधवलयज्ञोपवीतम्…अङ्गमुद्वहन्तं… जाबालिमपश्यम् Kād. 42. 13; अंसावलम्बिना ब्रह्मसूत्रेण पवित्रीकृतकाया ।…देवी सरस्वती HarṣaC. 13. 6; 153. 4; 164. 15; अंसावलम्बिशबलं मृगचर्म बिभ्रत् HarVi. 39. 7; अंसावलम्बिनी…रत्नमाला Yādavā. 12. 75; **B** resting and hanging down on the shoulder(s) अंसावलम्बिमणिकर्णिककर्णपाशम् SubhaDha. 1. 2 = Tapatīsaṁvaraṇa 1. 2; अंसावलम्बिधवलचामरसुरेन्द्रसेवितसव्यापसव्यपार्श्वां…प्रतिमामपश्यत् TilaMañ. 217. 5; अंसावलम्बिनीर्बिभ्रत् संध्याभ्रकपिशा जटा: NavaSāC. 11. 32; अंसावलम्बिकरधृतकचं…वपुरस्त्रमनङ्गस्य तव ĀryāSaS'a. 55.

**अंसास्फोट** ( aṁsāsphoṭa ) *m.* striking the shoulders (as a challenge) अंसास्फोटपटुर्युधिष्ठिरमसौ हन्तुं प्रविष्टोऽर्जुन: SāhiDa. 202. 5.

**अंसिका** ( aṁs–ikā ) *f.* [probably for *āsikā*] sitting arrangement o ra chamber for gambling अंसिकास्तासु चैकैकमक्षद्यूतं प्रवर्तते BṛKathāK. 36. 4.

**अंसीय** ( aṁs–īya ) *adj.* relating to the upper corner महावेद्या उत्तरादंसीयाच्छङ्कोर्वैद्यन्तेन द्वादश प्रतीच: प्रक्रमान् प्रक्रामति BaudhS'S. i. 182. 11 = ii. 21. 11.

**अंसेपाद्** ( áṁse–pād ) *adj.* (an animal) possessed of a foot on its shoulder अंऽसेपाच्छुण्ठोऽविरूढाकर्णो वा दक्षिणा MaiS. ii. 6. 13; त्वाष्ट्रमंसेपाद-मालभेत…मिथुनो वा एष यो॑ऽसेपात्त्वष्टा मिथुनस्य प्रजनयिता KaṭhS. 13. 6.

**अंसेभार** ( aṁse–bhāra ) *m.* burden on the shoulder भस्त्रा…अंसभार अंसेभार…GaṇPā. 169. 7 (P. iv. 4. 16); ठञ् भस्त्रादेः।…भस्त्रया हरति भस्त्रिकः।… अंसेभार। JaineVyā. 212. 26 (*on* iii. 3. 139); KāśiVṛ. (*on* P. iv. 4. 16); भस्त्रा… अंसभार अंसेभार इति भस्त्रादिः S'akaṭāVyā. iii. 2. 15; प्रोक्ता भस्त्रा…अंसेभारः GaṇRa. 6. 379 (406); Prasā. i. 825. 3.

[ **अंसेभारिक** ( aṁse–bhārika ) *m.* [ *f.* –ī ] a person bearing a burden on the shoulder भस्त्रा…अंसभार अंसेभार GaṇPā. 169. 7; GaṇRa. 6. 379(406) ]

**अंसेसुनाभायुध** ( aṁse–sunābhāyudha ) *adj.* one who has on his shoulder the discus–weaponed (Viṣṇu) ये संयुगेऽचक्षत ताक्ष्यंपुत्रमंसेसुनाभायु-धमापतन्तम् BhāgP. iii. 2. 24.

**अंसोच्चल** ( aṁsoccala ) *m.* shoulder–blade, top of the shoulder ( पशुं समनक्ति ) सं ते प्राणो वायुना गच्छतामिति शिरसि। सं यजत्रैरङ्गानीत्यंसोच्चलयोः ĀpaS'S. viii. 14. 2. ( comm. अंसकोटयोः )

**अंसोच्चार** ( aṁsoccāra ) *m.* shoulder–blade, top of the shoulder ( पशुं समनक्ति ) सं ते प्राण इति दक्षिणेऽर्धशिरसि सं यजत्रैरङ्गानीत्यंसोच्चारे HirS'S. iv. 3. 10.

**अंसोत्सेध** ( aṁsotsedha ) *m.* protuberance or elevation of shoulders अंसोत्सेधेन सोत्सेकस्त्रिमूर्धं इव केशवः RāghPāṇ.(Dha.) 18. 25.

**अंसोपकण्ठ** ( aṁsopakaṇṭha ) *n.* proximity of the shoulder अंसोपकण्ठे हस्ताभ्यां कपित्थस्तु श्रियः करः AbhinDa. 208; अंसोपकण्ठे हस्ताभ्यामलपद्मकपि-त्थकः। धृतो यदि करो ह्येष दिवाकरकरः स्मृतः AbhinDa. 250.

**अंसोपान्त** ( aṁsopānta ) *n.* the edge or vicinity of the shoulder तव …अंसोपान्तविलम्बिनः…मूर्धजाः MattaVi. 6.

**अंस्य** ( áṁs–ya ) *adj.* found on the shoulder, sticking to the shoulder(?) ये अंस्या ये अङ्गयाः सूचीका ये…सर्वे साकं नि जस्यत ṚV. i. 191. 7.

[1]**अंह्** ( aṁh– ) [ of IE origin from which are derived *aṁhas* 'oppression, anxiety, trouble', *aṁhu* 'narrow', '*aṁhati* 'trouble'. cf. MAYR. POK. p. 42. s. v. *angh*–]

[2]**अंह्** ( aṁh– ) I. A. [ अहि गतौ DhātūPā. 1. 666; अंहि SaraKaṇṭhā(Gr.) ii. 1. 157; अहिङ् गते KaviKaDru. 344; DhātuVṛ. records the forms अंहते, आनंहे, अंहिता, अञ्हिषिते, अंहयति, आञ्हिहत् and the noun अंहस्; used mostly in Dhātukāvyas ] to go, to procede आनंहिरेऽद्रिं प्रति चित्रकूटम् Bhaṭṭi. 3. 46; 3. 25; 4. 4; 14. 51; 22. 17; नभोविहरणीं लब्ध्वा प्राप्य तौ सुतपो-धनौ। आ(?आं)हिषातां जगन्मान्यां जिनतीर्थाभिपूजिताम् PadmP. (Ra.) 39. 175; (causal) तमाञ्जिहन्मैथिलयज्ञभूमिम् Bhaṭṭi. 2. 40; युद्धोन्मत्तं च मत्तं च राजा रक्षार्थमाञ्जिहत् Bhaṭṭi. 15. 75.

[3]**अंह्** ( aṁh– ) X. U. [ चुरादौ भाषार्थः ( v. l. भासार्थः ) DhātuPā. x 212–242 (as v. l.) अहिकृ भासे KaviKaDru. 344 ] to speak or to shine [L] अहि…महि इत्येते पञ्चदश स्वामिकाश्यपानुसारेण लिख्यन्ते DhātuVṛ. x. 196.

**अंहःखनक** ( aṁhaḥ–khanaka ) *adj.* [ *f.* –ī ] the destroyer of sins अंहःखनक्याः श्रीदेव्याः DvyāśraKā. 11. 37.

**अंहःपरिमृज्** ( aṁhaḥ–parimṛj ) *adj.* wiping away the sins समस्या वा साम्नां बहिरबहिरंहःपरिमृजामृचां वा संवादः…त्वदाशीर्वादोऽयम् AnargharRā. 3. 18.

**अंहःप्रचार** ( aṁhaḥ–pracāra ) *m.* prevalence or occurrence of sin एतेन…घानितांहःप्रचारः DvyāśraKā. 8. 6.

**अंहःप्रवपण** ( aṁhaḥ–pravapaṇa ) *adj.* the sower of sins परिकोपणम-प्रकोपनोऽथांहःप्रवपणदुष्प्रेहणं सहे चेत्। अवनिरवश्यं प्रगोपणीया कथमिव तर्हि मया प्रगोपनीया DvyāśraKā. 4. 26.

[1]**अंहति** ( aṁh–atí ) *f.* [ DEBR. IE word from a root *aṁh*– not traceable in IA; MAYR. from **aṁháḥ*, the *a* remains unexplained / अंहतिश्चांहश्चांहुश्च हन्तेः। निरूढोपधात्। विपरीतात् Nir. 4. 25. later grammarians take up this derivation for 2 aṁhati 'gift'] distress, misery, danger, trouble (mostly physical in nature) नैनमंहो नात्यंहतिः ṚV. i. 94. 2; यूयमस्मान्नयत वस्यो अच्छा निरंहतिभ्यो मरुतो गृणानाः ṚV. v. 55. 10; मित्रो नो अत्यंहतिं वरुणः पर्षदर्यमा ṚV. viii. 67. 2; viii. 67. 21; मा नः समस्य दूढ्यः परिद्वेषसो अंहतिः। ऊर्मिर्न नावमा वधीत् ṚV. viii. 75. 9 = MaiS. iv. 11. 6; TaiS. II. vi. 11. 2; Nir. 5. 23; later Kośas give the meaning रोग, व्याधि or उपद्रव 'disease, trouble' AnekāSaṁ. 3. 233; MediK.6 3. 86; NānārthāSaṁ. ii. 59. 143; KośKaTa. 2. 5553; S'abdaRaSaK. 137. 7; LaS'abdeS'e. ii. 174. 7.

[2]**अंहति** ( aṁh–ati ) *f.* [mostly known to L. हन्तेरंह च Uṇā. 4. 62; included in the *bahvādigaṇa on* P. iv. 1. 45 ( which optionally enjoins ङीष् ); JaineVyā. iii. 1. 31; हन्ति दुरितमनया अंहतिर्दानम् SiddhāKau. 551A. 12] gift तन्यात् सिद्धेश्च प्रियङ्कुरुचिरंहतिम् Caturviṁśatikā of Bappabhaṭṭi 73; राजाधिराजबिरुदो राजराजसमांहतिः EI. xiv. 344. 74; iv. 15. 104; xii. 175. 94; flesh, evil omen AmaK. 1412; AbhidhāRaMā. 2. 264; NāmaMāli. 385; Vaija. 92. 119; AbhidhāCi. 387; KalpaK. 79. 100; ParyāS'aRa. 2. 226; AnekāSaṁ. 3. 233; NānārthāSaṁ. ii. 59. 143; MediK. 63. 86; NānārthSaṁ. 48. 16; way, time, chariot हन्ति हन्यते वा अंहतिः। पन्थाः कालो रथश्च Prasā. ii. 605. 21; *m.* snake–killer ( अहिघातुक ) NānārthāSaṁ. ii. 59. 143.

**अंहतिवैभव** ( aṁhati–vaibhava ) *n.* glory of liberality अपत्रपामंहति-वैभवेन सुरद्रुमाणामपि सूचयन्तः Acyutarā. 1. 22.

**अंहतिशौण्ड** ( aṁhati–śauṇḍa ) *adj.* gallant in liberality भीपणवैरि-विखण्डनचण्डः शेषमहाभरहृद्भुजदण्डः पूषजदर्पहृदंहतिशौण्डः EI. iii. 154. 81.

[ **अंहती** ( aṁh–atī ) *f.* = [2]**अंहति** KāśiVṛ. *on* P. iv. 1. 45.]

**अंहन** ( aṁh–ana ) *n.* [L] the act of crawling, gliding on the ribs निर्याणं स्यान्निर्गमनमंहनं वक्षसा गतिः Vaija. 193. 13.

**अंहश्छिदुर** ( aṁhaś–chidura ) *adj.* [ *f.* –ā ] destroyer of sins, remover of sins त्वन्नन्दनस्यास्य पुरारि मातर्न न्यूनमंहश्छिदुरेऽस्ति किंचित् DvyāśraKā. 10. 85.

**अंहश्छेद** ( aṁhaś–cheda ) *m.* destruction or removal of sins रजोऽप्यस्य गिरेः पुंसामंहश्छेदाय जायते DvyāśraKā. 15. 64.

**अंहस्** ( áṁh–as ) *n.* [from IE root *angh*–POK. / from *han*–, Nir. 4. 25; from *am*– Uṇā. 4. 212 (TattvBo. अमन्ति गच्छन्त्यनेनाधस्तादित्यंहो दुरितम्); from *am*– Uṇā. (He.) 962, and from *aṁh*– 952 comm. *on* S'abdaBhePra. (Ma.) 1. 120; स्यान्मध्योष्मचतुर्थत्वमंहसो रंहसस्तथा S'abdaBhePra. (Ma.) 1. 120; TaiPrāti. 8. 23 points out that the *visarga* of *aṁhasaḥ* changes to *s* before *k*, *kh* and *p* (in the Tai. school), and 11. 4 notes the absence of the loss of the initial *a* (of *aṁhasaḥ*) after *e* and *o*; Loc. pl. *áṁhasu* AV. vi. 35. 2; *áṁhaḥ* (ṚV. vi. 3. 1) is regarded as Acc. sg. with Abl. force (RENOU), Abl. sg. of *áṁh* (GRASS) (against accent), or Abl. sg. without case ending, (BERG., OLD.); or for *áṁhasā* (AUFR.) ] **1 A** narrowness, oppression, distress, calamity (caused by various agencies, earthly and heavenly) पृथिवी नः पार्थिवात्पात्वंहसोऽन्तरिक्षं दिव्यात्पात्वस्मान् ṚV. vii. 104. 23 = AV. viii. 4. 23; (caused by gods or by mortals) न तमंहो देवकृतं कुतश्चन न मर्त्यकृतं नशत् ṚV. viii. 19. 6; यो नो…मर्तो वधाय दाशति। तस्मान्नः पाह्यंहसः ṚV. vi. 16. 31; (caused by friends, by strangers, or haters and enemies) पात्पतिर्जन्यादंहसो नो मित्रो मित्रियादुत न उरुष्येत् ṚV. iv. 55. 5; AV. ii. 28. 1; द्विषो नः पाह्यंहसो विवक्षसे ṚV. x. 24. 3; vi. 2. 11; x. 25. 8;… आङ्गिरसो द्विषतां पात्वंहसः ṚV. x. 164. 4; AV. vi. 45. 3; नैनमंहः परि वरदघायोः ṚV. iv. 2. 9; त्वं नः पाह्यंहसो दोषावस्तरघायुतः ṚV. vii. 15. 15; (caused by agencies indicated in general terms) न तमंहो न दुरितं कुतश्चन नारातय-स्तितिरुर्न द्वयाविनः ṚV. ii. 23. 5; vii. 82. 7; x. 39. 11; न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात् ṚV. iii. 59. 2 = TaiS. III. iv. 11. 5; दामेव वत्साद्वि मुमुग्ध्यंहः ṚV. ii. 28. 6; iv. 12. 6 = x. 126. 8; अति स्रसेम वृजनं नांहः ṚV. vi. 11. 6; य ऋक्षादंहसो मुचद्यो वार्यात् सप्त सिन्धुषु ṚV. viii. 24. 27 ऋषिं नरावंहसः पाञ्चजन्यमृबीसादत्रिं मुञ्चथो गणेन ṚV. i. 117. 3; निरंहसस्तमसः स्पर्तमत्रिम् ṚV. vii. 71. 5; आरे अस्मदमतिमारे अंह आरे विश्वां दुर्मतिं यन्निपासि ṚV. iv. 11. 6; नांहो मर्तं नशते न प्रदृप्तिः ṚV. vi. 3. 2; एतौ यक्ष्मं वि बाधेते एतौ मुञ्चतो अंहसः AV. viii. 2. 18; यद्…अनृतं किं चोदिम। आपो मा तस्मात्सर्वस्माद्दुरितात्पान्त्वंहसः AV. x. 5. 22; इदं यत्कृष्णः शकुनिरभिनिष्पतन्न पीपतत्। आपो मा तस्मात्सर्वस्माद्दुरितात्पान्त्वंहसः AV. vii. 64. 1; वातं प्राणं मनसान्वारभामहे। प्रजापतिं यो भुवनस्य गोपाः। स नो मृत्योस्त्रायतां पात्वंहसः TaiBr. III. vii. 7. 2 = ĀpaS'S. x. 8. 9; स एतदप एव मुञ्चति न प्रजामंहोमुचः स्वाहाकृता इत्यंहस इव ह्येता मुञ्चन्ति यदुदरे गृष्टितं भवति तस्मादाहांहोमुच इति S'atBr. III. ii. 2. 20; protection or release from *aṁhas* is sought from various deities, deified objects, animals and birds : Pṛthivī and Antarikṣa (ṚV. vii. 104. 23); Agni (ṚV. vii. 15. 15); Āpaḥ देवीस्ता (i. e. आपः) नो मुञ्चन्त्वंहसः AV. xiv. 2. 45; (AV. vii. 64. 1; x. 5. 22); Indra (ṚV. x. 24. 3); Jātavedas ṚV. vi. 16. 31; Mitra (AV. ii. 28. 1); Soma नॄन्स्तोतॄन् पाह्यंहसः ṚV. ix. 56. 4; पातु ग्रावा पातु सोमो नो अंहसः AV. vi. 3. 2; Pūṣan सं पूषन्नध्वनस्तिर व्यंहो विमुचो नपात् ṚV. i. 42. 1; Maruts यया रध्रं पारयथात्यंहो…। अर्वाची सा मरुतो या व ऊतिः…जिगातु ṚV. ii. 34. 15; Oṣadhis या ओषधयः…ता नो मुञ्चन्त्वंहसः AV. vi. 96. 1; viii. 7. 13; rice and barley एतौ (i. e. व्रीहियवौ) मुञ्चतो अंहसः AV. viii. 2. 18; amulets (*maṇi*) अयं नो विश्वभेषजो जङ्गिडः पात्वंहसः AV. ii. 4. 3; स नो हिरण्यजाः

( sc. वैरं ) यथा…मार्जारमूषकाणाम् अहिनकुलानाम्। किं…मूषको मार्जारस्यापकरोति PañcT. 2.15 (199.5); **3** unexpectedly अकस्मादागतं भूतमकस्मादेव गच्छति BaudhPiMe. iii. 1.3; अकस्माद्वगद्विम्बं धत्ते वै म्लानतां यदि।…महद्भयं सराष्ट्रस्य पूजकस्य PauṣkS. 37.27; MahāBhā. iii. 33.14; iii. 153.11; iii. App. 25.26; BṛKathāS'loSaṁ. 18.689; किमर्थमार्यो मामकस्मादेवामन्त्र्य…अधोमुखः संवृत्तः KundaMā. 3.11 (44); संस्पर्शः पुनरपि जीवयन्नकस्मादानन्दादपरविधं तनोति मोहम् UttaRāC. 3.40; RāmC. 17.65; 18.27; DevīBhāP. vii. 10.48; UdaySuKa. 81.8; मातर्म्लानमुखः कस्मादकस्मादापदां पदम्। उग्रशोकग्रहग्रस्त इवायं लक्ष्यते जनः RāmāMañ. 81.21; GītāBh.(Rā.) 52.3 (*on* 2.10); अकस्मादुपनतविपञ्चीस्वर-श्रवणादौ…आनन्दसंवेदनात् PramāMā. 1.9; KathāSaSāg. v. 3.247; आस्यं ते सरसीरुहेण रचितं नीलोत्पलाभ्यां दृशौ।…क्रूरं मानसमश्मना पुनरिदं कस्मादकस्मात् कृतम् PārijāHa. 25; VairāS'. (Pa.) 34; TriṣaS'aPuC. i. 5.530; iv. 1.287; अकस्मादन्यदा द्वाराद्देशमन्यागान्महेश्वरः PariPar. 2.324; 12.355; असूच्यत धौतजल-दैरकस्मात् PṛthvīVi. 6.102; अथान्येद्युरकस्मात्त्रिभिरं प्रादुर्बभूव भैरवः सन्नाहभेरीरवः MohaRāPa. 1.23 (8); कालदण्ड इवाकस्मात् क्रोऽयमित्याकुलं जनैः PārśvC. 2.918; अग्रदीपः प्रकाशश्च ममाकस्माद्विजृम्भते S'āliC. 1.89; 4.168; 5.110; लाभो निध्यादे-रकस्माल्लाभः ManvaVi. 1334.23 (*on* 10.115); धूर्त त्वमेवं विजितोऽस्यकस्मात् युद्धे मया पञ्चशरस्य PañcSā. 5.124; दैवयोगादुपात्ता हि प्रज्ञाहीनस्य संपदः। अकस्मादेव नश्यन्ति खलानामिव संगतम् SūktiRa. 163.25; KumāCaSaṁ. 41.21; 43.31; MayūSaṁ. 1.10; EI. ii. 417.34; अज्ञानामतितानवं कुत इदं कस्मादक-स्मादये Subhāṣi. 1584; अकस्मादस्माकं हरिरपहरन्नंशुकचयम् HaṁsDū. (Rū.) 16; वज्रपात इवाकस्माद् दुःखितश्चिन्तयन्नदः। अपराधं विना तातो रुष्टः किमु ममोपरि CitraPaC. 25; धत्तेऽकस्माद्विवस्वान् मलिनकिरणताम् MahāN. 3.1; क्रौञ्चपक्षिणाक-स्मादागत्य…भ्रान्त्या सर्वेऽपि सुवर्णयवा भक्षिताः KathāK. 89.19; **4** accidentally, not intentionally अकस्माच्चैव ते कृष्ण ख्यातं लोके महद्यशः MahāBhā. V. App. 9.105; HarṣaC. 321.5; सा सिद्धिलाभशोभिनी किं विलासात् किमभिलाषात् किमकस्मादेव वा न जानेऽसक्रन्मां…अभिवीक्ष्य DaśKuC. 53.5; 135.4; कृतवित-तिरकस्मात् प्राकृतैरुत्तमानां विरमति न कथंचित् कश्मला किंवदन्ती MahāVīC. 3.4 (67.10); बालोऽपि यत्किंचिदकस्मात् सुभाषितं माङ्गलिकं प्रस्थानादौ वक्ति तद्ग्राह्यम् ManuBh. i. 195.7 (*on* 2.239); NyāyMañ. i. 91.23; अकस्मान्निधिला-भश्च विद्युत्पातश्च कस्यचित् NyāyMañ. ii. 43.4; अकस्माद् वीक्षते हि सा स्वोदरस्थं समुत्पन्नं गर्भं गुरुभरालसा SkandP. vii(1). 32.11; UdaySuKa. 131.12; कलुषं च तवाहितेष्वकस्मात् सितपङ्केरुहसोदरश्रि चक्षुः KāvyPra. 961.1; न ह्युन्मत्तः कश्चित्…साधर्म्यमनुपश्यन्नेवाकस्मात् तत्त्वमारोपयति VyaktiVi. 24.1; चालुक्यैर्विग्रहो नः किमकस्मादेष ऐषमः DvyāśraKā. 19.7; कस्मादस्मानकस्मात् स्मरणपथमिहानीतवानद्य देवः MohaRāPa. 5.57; अविज्ञातगोत्रनामा ग्रामान्तरतोऽकस्मात्…समागतो ब्राह्मणो-ऽतिथिः CaturCin. iii(1). 430.14; कस्मिन् कुले तवोत्पत्तिः कुत्र शास्त्रे परिश्रमः। कस्मादकस्मात् प्राप्तोऽत्र सर्वमेतत् प्रकाश्यताम् KāvyKaVṛ. 23.34 (1.11); S'aṅka-DigVi. (Mā.) 2.75; अकस्माच्छ्रुतात् पुत्रमरणादिवाक्यात् तदर्थप्रत्ययदर्शनात् SarvaDaKau. 66.15; Upask. 48.1 (*on* i. 2.1); RasGaṅ. 139.10; तत्समयेऽक-स्मान्माधवानलो राजद्वारं संप्राप्तः MādhavāĀ. 34; ममापुत्रस्य…को भावी भोक्ताक-स्माद्धनस्य रे CampaS'reKa. 19; अकस्मादागन्तुना सह विश्वासो न युक्तः Hitopa. 1.41 (14); इति प्रत्याशस्य प्रबलदुरितानीतविधुरं शिरस्यस्याकस्मात् पतति निधनं येन भवति VijñāS'. 11; **5** immediately, just अकस्मान्नागरः सर्वो जनो दैन्य-मुपागमत् Rāmā. ii. 36.12; BṛKathāS'loSaṁ. 12.9; नोऽकस्मादार्द्रमेधः स्पृशति च दहनः SatS'lo. 40; सर्वशास्त्रार्थवेत्तृत्वमकस्माच्चास्य जायते MāliniT. 2.16; स विक्रमा-दित्य इति प्रसिद्धः। यस्मादकस्मादपयानमिच्छन्नकुन्तलः कुन्तलतां व[ब]भार EI. ii. 211.10; EI. ii. 3.9; PṛthvīVi. 7.51; किमकल्याणमिदमकस्मादारभ्यते। प्रतिपालय कतिचिन्मुहूर्तान् SamudraMa. 2.114 (6); प्रियोपगमने…अकस्मात् क्रोधस्मितचमत्कृतयो मुखस्य विकूणनं स विलासः NāṭaLaRaK. 2619; मामनालोक्य साकस्मान्मूर्च्छिता न्यपतद् भुवि SamarāSaṁ. 5.259; अकस्माद् ब्रह्मसाक्षात्कारो भवेद् ध्रुवम् MahNirvāT. 3.118; यदकस्मान्मुषलस्योर्ध्वगमनं भवति Upask. 25.8 (*on* i. 1.7); 221.10 (*on* v. 1.3); तस्मादकस्मान्निरियाय धन्या पुण्येति देवीद्वयमग्निकुण्डात् Rāṣṭrau. 3.5; CitraPaC. 228; आश्रमाणां…संदर्शनादकस्माच्च पुंसां…नास्तिकत्वं लयं व्रजेत् PauṣkS. 1.31; **6** without a motive or purpose, casually पति-व्रतानां नाकस्मात् पतन्त्यश्रूणि भूतले Rāmā. vi. 111.67; नाकस्माच्छाण्डिलीमाता विक्रीणाति तिलैस्तिलान् PañcT. 2.27 (217.1); तन्नाकस्मादेकपद एव दुर्गप-रित्यागः कार्यः PañcT. 3.1 (276.2); नाकस्माद्युवती वृद्धं केशेष्वाकृष्य चुम्बति Hitopa. 1.80; **7** without intention, spontaneously श्रुत्वा तु याच्यमानां तां क्रुद्धां सूक्ष्मां पिपीलिकाम्। ब्रह्मदत्तो महाहासमकस्मादेव चाहसत् HariVaṁ. 19.4; त्वयि मे हृदयमकस्मादन्तः सक्तम् SamaMā. 8.91; अकस्मात् तस्मिन्ननुष्टुभां श्लोक-माश्रिता सरस्वती समुत्तस्थौ UdaySuKa. 28.24; अकस्मादस्माकं यदि न कुरुते स्नेहम् PraboSu. 245; चेतः…असास्वकस्मादिदं सक्तम् NīlaVi. 35.3 (2); **8** suddenly संपूज्य लोकं प्रजहात्यकस्मात् कुब्जोऽयमुक्तः BṛSaṁ. 69.36; नान्तक इवाकस्माद-पहृतजीवनः VāsaDa. 29.1; दुष्टमर्कटीयं तमकस्मात् क्षोभयित्वा विच्युतफलमुध्दूत-पत्रमुत्सृज्य विटपमण्डपं संक्रामति AvantiKa. 44.18; तत् किमकस्मादस्मत्सैन्यघोषः प्रशाम्यति UttaRāC. 5.12 (3); सेवागतासु निजकामवतीष्वकस्माद् दाक्षिण्यमात्रमपि रक्षितुमक्षमोऽभूत् RāmC. 19.63; चक्रे कृती सुमनसां मनसामकस्मादस्मादकालकलि-कालविरामशङ्काम् EI. i. 129.27; कथमकस्मात् कूष्माण्डपात्र(त)वत् प्रधानं प्रतीयते BrahmSūBh.(Bhā.) 46.15 (*on* i. 2.21); जिह्वायां जायते बिन्दुरकस्माद्यदि वाजिनः। मासैकं जीवितं तत्र YuktiKa. 188.20; वेषः प्रोषितयोषितां समुचितः कस्मादकस्मात् तव SamaMā. 1.13; किं चाद्य मां किमसि संस्मृतवानकस्मात् KaumuMi. 3.20; कस्त्वं द्वारि दिगंव[ब]रः क्षपणकः कस्मादकस्माद्दहो EI. i. 140.3; आयात्येतन्नु तव कथंकारमस्मिन्नकस्मात् बिम्बं तुम्बीफललघु सखे मज्जनस्यातिथित्वम् S'rīKaC. 14.60; अपश्यन्निर्जलात् स्थानादकस्मादुत्थितं पयः RājTa. (Ka.) 1.126; असावक-स्मादस्माकं कुलक्षय उपस्थितः PariPar. 8.56; तं चाभ्येत्य करी कश्चिदकस्मादुद-मूलयत् PāṇḍaC. 6.512; अकस्मात् प्रथमे मासे गर्भे भवति वेदना RasRaSa. 22.74; घटयसि धनकालं देव कस्मादकस्मात्। भ्रुकुटिकथितकोपोऽप्यभ्यमित्रं यियासुः Subhāṣi. 2503; प्रासं मृत्योरकस्मादिव वदनबिलं विश्वमासीत् तदानीम् NīlaVi. 89.15.

**अकस्मात्क्रिया** ( akasmāt-kriyā ) *f.* an accidental act or action, an unintentional action अन्यस्मै निसृष्टे शरादावन्यघातोऽकस्मात्क्रिया Dharmasaṁgraha SvoṬ. 3.27 (p. 82)

**अकस्माच्छोचन** ( akasmāc-chocana ) *adj.* [ *f.* -ā ] who mourns without any cause या स्त्री…अकस्माच्छोचना…तस्याः…जातहारिणी ( रेवती ) सज्जते KāśyaS. 189B. 16 (8.6)

**अकस्मात्प्ररोदन** ( akasmāt-prarodana ) *adj.* [ *f.* -ā ] weeping without any cause या स्त्री…अकस्मात्प्ररोदना…तस्याः…जातहरिणी ( रेवती ) सज्जते KāśyaS. 189B. 16 (8.6)

**अकस्माद्ग्राहिन्** ( akasmād-grāhin ) *adj.* grasping or apprehending without cause अकस्माद्ग्राही चायं किं पुनः क्वचित् साधनमपेक्षते PramāVāSvop-Vṛ. 80.22.

**अकस्माद्दण्ड** ( akasmād-daṇḍa ) *m.* accidental punishment अन्यवधार्थं प्रहारे मुक्तेऽन्यस्य वधोऽकस्माद्दण्ड इति SthānṬ. 316B. 5.

**अकस्माद्भय** ( akasmād-bhaya ) *n.* fear without any cause अकस्मादेव बाह्यनिमित्तानपेक्षं गृहादिष्वेव स्थितस्य रात्र्यादौ भयमकस्माद्भयम् SthānṬ. 389B. 7.

**अकस्यविद्** ( a-kasyavid ) *adj.* not knowing or observing, not paying attention यज्ञो यज्ञो वै सं॑मृच्छते॒ऽथाकस्य॒विदो॑ मन्यन्ते॒ सो॑म॒ एव॒ सं॑मृच्छता॒ इ॑ति MaiS. i. 5.12.

**अका** ( a-kā ) *f.* a case other than the ablative नातोऽम् त्वकायाः Jaine-Vyā. i. 4.152 (86.37) (comm. ह्रादकारान्तात् परस्य सुप उम्न भवति। अमादेशस्तु भवति सुपः कां विभक्तीं वर्जयित्वा। उपकुम्भं तिष्ठति); cf. P. ii. 4.83.

**अकांस्य** ( a-kāṁsya ) *adj.* not made of bell-metal or brass, other than bell-metal or brass अकांस्यादीनां मणीनामपि वेधव्यतिरिक्तभेदेन गुरुद्रव्येष्विदं द्रष्टव्यम् VyavaNi. 511.6.

**अकांस्यकवच** ( a-kāṁsyakavaca ) *adj.* not having an armour of bell-metal अनभिहितो रथोऽकांस्यकवचः BaudhS'S. ii. 87.6.

**अकाक** ( a-kāka ) *adj.* **A** noble, not blameworthy देवाकानिनि कावादे वाहिकास्वस्वकाहि वा। काकारेभभरेऽकाका निस्वभव्यव्यभस्वनि (Kirātā. 15.25) SaraKanṭhā. 280.10 (comm. अकाकाः सात्त्विकाः काकाः संग्रामलोलुभा वा) **B** without a crow अकाके काकवदितिवाक्यवदप्रामाण्यापाताच्च Nyāyāmṛ. 370A. 5 (1.55)

**अकाक** ( a-kāka ) *m.* any animal other than crow जहदजहल्लक्षणोदाहरणं तु काकेभ्यो दधि रक्ष्यतामित्यत्रैव, तत्र शक्यकाकत्वपरित्यागेन अशक्यदध्युपघातकत्व-पुरस्कारेण काकेऽकाकेऽपि काकशब्दस्य प्रवृत्तेः VedāntPari. 207.11.

**अकाकपृष्ठ** ( a-kākapṛṣṭha ) *adj.* not having the back of the colour of a crow अकाकपृष्ठं ( v. l. अकालपृष्ठं ) सलक्षणं वैष्णवं दण्डम् NāraPaU. 4.38.

**अकाकु** ( a-kāku ) *adj.* unmodulated or uninflected (voice) प्रणिजगदुर-काकुश्रावकस्निग्धकण्ठाः परिणतिमिति रात्रेर्मागधा माधवाय S'iśuVa. 11.1.

**अकाकोलीन** ( a-kākolīna ) *adj.* free from (the plant) *Kākolī* (?) [DBHS]

**अकाक्ष** ( a-kākṣa ) *adj.* without a bad eye दर्पोल्लसद्विक्रममाणवाह्यं स्वप-स्कराकाक्षसुरथ्यरथ्याम्।…एत्य पुरीमत्रोचच्चौरिं ( गर्गः ) VāsuVi. 2.8 (comm. स्वपस्करा शोभमानरथाङ्गयुक्ता अकाक्षा कुत्सिताक्षरहिता सुरथ्या शोभनैः रथ्यैः रथं वहद्भिरश्वैर्युक्ता रथ्या रथसमूहो यस्याम्)

**अकाक्षु** ( akākṣu ) *m.* name of a person हिरण्यनाभः कौशिल्योऽकाक्षुः कुथुमिधस्तथा। शिष्या एते महात्मानः सर्वावर्तेषु योगिनाम् KūrmaP. 443.2 (1.53)

**अकाङ्क्षण** ( a-kāṅkṣaṇa ) *n.* absence of doubt पराधारं च दानादि

गम्भीरेऽर्थेऽप्यकाङ्क्षणम् ।…चर्या बुद्धानुमोदिता AbhisaAlaṅ. 4. 41.

**अकाङ्क्षत्** ( a-kāṅkṣat ) *adj.* not desiring, reluctant पुमान् यत्कुरुते पापं स हि केन नियुज्यते । अकाङ्क्षन्नपि हेरम्ब प्रेरितः प्रबलादिव GaṇeP ii. 139. 36.

**अकाङ्क्षा** ( a-kāṅkṣā ) *f.* absence of expectation or desire सिद्धीनामणिमादीनां…अकाङ्क्षया ।…भवन्ति तादृशा नूनं पुरुषा: SkandP. ii (9). 4. 27.

**अकाङ्क्षित** ( a-kāṅkṣita ) *adj.* not expected, not desired योऽसौ कर्णेन वीरेण वार्ष्णेयस्य समागमः । अकाङ्क्षितश्च कर्णेन स भवत्वतितेजसः MahāBhā. 7. 1043*.

**अकाङ्क्षिन्** ( a-kāṅkṣin ) *adj.* [ *f.* -ṇī ] not expecting, not desiring आश्विकौर्णिकखारीकपञ्चकानामकाङ्क्षिणीम् ।…ददृशुर्दिव्यरुन्धतीम् DvyāśraKā. 17. 91; सद्दर्शनमकाङ्क्षिणाम् । न सिध्यति रस: Rasā. 1. 25.

**अकाच** ( a-kāca ) *adj.* free from blemish or impurity [DBHS]

**अकाञ्चन** ( a-kāñcana ) *adj.* [ *f.* -ī ] **i** not made of gold किं चित्रं यदि सत्त्वाद्या( ? ढ्या ) भार्या तस्य कुलोचिता । न हि श्रिता कल्पतरुं वल्ली काचिदकाञ्चनी BṛKathāMañ. ix(2). 336; **ii.** not possessing golden ornaments अकाञ्चनेऽकिञ्चननायिकाङ्कके किमारकूटाभरणेन न श्रिय: NaiṣC. 9. 28.

**अकाञ्ची** (akāñcī) *f.* (?) कक्षोऽस्त्राहिणिकाऽकाञ्चीप्रकोष्टगजरज्जुषु S'abdaRaSaK. 345. 8.

**अकाठिन्य** ( a-kāṭhinya ) *n.* absence of harshness, softness, tenderness मार्दवमकाठिन्यम् । साधुजनसंश्लेषार्हतेत्यर्थ: GītāBh. (Rā.) 608. 5 (*on* 16. 2); क्षमायां यदकाठिन्यम् PṛthvīVi. 5. 132; आभिरूप्यमकाठिन्यमङ्गानामतिमार्दवम् । एवमादिगुणावस्था प्रथमे यौवने भवेत् BhāvPra. (S'ā.) v. 103. 16.

**अकाडिल** ( a-kāḍila ) *adj.* [ optionally अकाडाल ] without foot-disease ऊचेऽथ जाङ्गलनृप:…अकालालोकालिलं तमिति संप्रहरस्व दोष्मन् ।…अघाटालाकाडिलै: ।…हतै: किमेभि: DvyāśraKā. 18. 78. (comm. काडा पादस्रसामेदो…सन्त्येषां ते; SiddhaHe. vii. 2. 23)

**अकाण** ( á-kāṇa ) *adj.* not one-eyed, not a squint अकूटयाऽकर्णयाऽकाणया… क्रीणाति (सोमम्) TaiS. VI. i. 6. 7; सा स्यादवण्डाकूटाकाणाकर्णालक्षितासप्तशफा S'atBr. III. iii. 1. 16; तथ्येन अ( ? )सत्येन । अपिशब्दाद्वितथेन अकाणं काण इत्युक्ते कार्षापणावरोदण्ड: ManuBh. ii. 192. 23 (*on* 8. 274); असत्येनापि हे काण इत्यकाणमेवाधिक्षिपेत् BālaKrī. i. 274. 1 (*on* 2. 208)

**अकाणक्रीत** ( akāṇa-krīta ) *adj.* purchased not blindly (i. e. in just ways) भूपति: प्राह तान् भद्रा यूयं कौतस्कुता इह । अनायत्ता: समायाताकाणक्रीतक्रयाणका: S'āliC. 4. 7 (comm. दानचौर्यरहितपण्या: )

**¹अकाण्ड** ( a-kāṇḍa ) *adj.* without water, waterless (place) अकाण्डे कुण्डिका काण्डनिर्घिर्निधिरपामिव । अका[ रि ] माध[ वे ]नेयं प्रपाते पातकद्रुहि EI. iv. 312. 4.

**²अकाण्ड** ( a-kāṇḍa ) *m. n.* which is not a stem, other than a stem अबीजादेव जायन्तेऽकाण्डादेव प्ररोहन्ति खलव्यसनाङ्कुरा दुरुच्छेदा भवन्ति VāsaDa. 78. 1.

**³अकाण्ड** ( a-kāṇḍa ) *adj.* [ *f.* -ā ] **i** having no joints, without joints अकाण्डमेवात्मभुवार्जितस्य भूत्वापि मूलं मयि वीरणस्य NaiṣC. 3. 90; अकाण्डा दोर्वल्ली SaduktiKa. 69. 19; वृक्षस्ती( ? स्त )द्वदकाण्डोऽपि विषवस्तुरपादिक: AṣṭāNi. 21. 19; **ii** out of joints, improper त्वयारब्धं जन्म क्षपयितुमकाण्डेन विधिना न नो गोत्रे पुत्रि क्वचिदपि सतीलाञ्छनमभूत् SaraKaṇṭhā. 387. 17.

**⁴अकाण्ड** ( a-kāṇḍa ) *adv.* [mostly in compounds] **A** suddenly, all of a sudden अकाण्डक्षुभितं चासीद्रथस्थं शक्तिमण्डलम् BrahmāṇḍP. iii. 25. 62; (अवनिप: ) अकाण्डवलनभङ्गुरितरतिलयं…चोरिकासुरतरसतृप्तिमन्वगच्छत् AvantiKa. 36. 16; कोपोष्णश्वसितक्लिष्टकण्ठमाल्यं रुरोरुर: । अकाण्डामोददारिद्र्यं द्विरेफाणां द्रुतं ददौ Kapphiṇā. 16. 107; 14. 56; ताम्…अकाण्डकुण्ठितधैर्यासिधारां…दमयन्तीमवलोक्य NalaCam. 5. 0 (12); अकाण्डप्रचण्डबलादनिलात् परिवर्तितपोत्रस्य Yaśas-Cam. ii. 345. 25; आविर्भूताभिलाषानुभावयोरकाण्डसंभोगभङ्गो नर्मस्फोट: SaraKaṇṭhā. 740. 20; अकाण्डखण्डितोच्चण्डरणदर्पज्वरभरो नृप: । कृपण: प्राणरक्षार्थे तमेव शरणं ययौ DarpaDa. 5. 41; तत्र ददर्श तम् । दृशोरकाण्डपीयूषवर्षं सा राजकन्यका KathāSaSāg. xviii. 3. 99; विद्युत्पुञ्जमिवाकाण्डसिताभ्रपरिवेष्टितम् KathāSaSāg. i. 3. 28; निपपात शरोऽकाण्डमुद्गराघातसंनिभ: TriṣaS'aPuC. ii. 4. 97; ii. 6. 43; i. 5. 601; दाशरथे कथमकाण्डप्रचण्डकोदण्डखण्डनदोर्दण्डचण्डिमाडम्बरेणापूरितं जगत्त्रयम् MahāN. 2. 8 (3); **B** out of time, untimely अकाण्डप्रयाणसंज्ञाशङ्खक्षुभितं तु संभ्रमात् सज्जीभूतं…अश्वीयमढौकत HarṣaC. 213. 1; 109. 2; तच्चण्डांशोरकाण्डत्रिभुवनदहनाशङ्कया धाम कृच्छात् । संहृत्यालोकमात्रं प्रलघु विदधत:…मण्डलम् SūryS'. 78; अकाण्डशस्त्रघाताद्यै: प्रत्यक्षो मृत्यु: AṣṭāSaṁ. i. 62. 17; तत्कङ्कालमकाण्डपाण्डुरघनप्रस्पर्धि MahāViC. 5. 39; 5. 2; 5. 57; छायामयीं विदधतो भुवनेष्वकाण्डकल्पावसानरजनीमिव तस्य संख्ये HarVi. 50. 32; उदञ्चय मुखं भवत्वयमकाण्डचन्द्रोदय: BālBhā. 1. 31; प्रपञ्चयितुमिव ताडनक्रममकाण्डदर्शिताश्लीलचेष्टां समासन्नसंवाहिकां सहास: करतलाग्रेण स्कन्धदेशे पुन:पुनरवधीत् TilaMañ. 278. 16; तद्दृष्ट्वाकाण्डकल्पान्तशङ्कया तत्रसु: सुरा: PadmP. vi. 19. 91; कन्यां जातामलक्षत । दिवाप्यकाण्डप्रतिपच्चन्द्रलेखामिवोदिताम् KathāSaSāg. vi. 8. 47; क्षीरोदधि: क्षोभवान् भेजे भीतिमकाण्डदण्डमथनक्षोभाभिशङ्की पुन: DaśāvaC. 8. 64; वियोगिभि: अकाण्डवैतण्डिककोकिलानि कैरप्यसह्यन्त न काननानि S'rīKaC. 6. 12; 18. 30; 21. 31; 21. 41; अवेक्षसे नैव जगत्त्रयीजुषामकाण्डसंवर्तविधानपातकम् Gaṅgāva. 3. 4; **C** unexpectedly, against one's expectation तत्कालं निबिडमकाण्डभङ्गभीताश्चक्रन्दु: प्रतिनिनदच्छलेन काष्ठा: Kapphiṇā. 3. 35; इत्यकाण्डसुधासारसदृशेनास्य पक्षिण: । वचसा शान्ततापः सन् KathāSaSāg. v. 3. 32; xii. 7. 319; xiv. 3. 43; S'rīKaC. 18. 50; **D** without cause or reason, accidentally यस्य चाकाण्डदर्शितसकलदिग्दाहो…निर्ददाह महीभृत्कुलानि…प्रज्वलत्प्रताप: TilaMañ. 14. 13; अकाण्डजगदुपद्रवदानवेषु मानवेषु दण्डपारुष्ये बाढं मनोमनीषितानि YaśasCam. ii. 243. 1; अकाण्डकाण्डपातेन तेन मागधतीर्थराट् । उच्चैश्चुकोप TriṣaS'aPuC. i. 4. 111; श्रीनायक: सायकतामकाण्डचण्डक्रुध: खण्डशशाङ्कमौले: ।…आललम्बे S'rīKaC. 20. 42; तप:स्वाध्याययज्ञानामकाण्डद्विष्टतापस: । स्वविद्विषां श्रियं तस्मिन् पश्यन्नुपततताप स: (कलि: ) NaiṣC. 17. 193; अत्र (= जडतायां )…अकाण्डहुङ्कृति: स्तम्भो नि:श्वासकृशतादय: RasāSu. 180. 14 (2. 199); हाहेति भाषणाकाण्डहुङ्कार:…एते जाड्यभवा भावा: BhāvPra. (S'ā.). 91. 4 (4); कथं चाकाण्डसंघटितपान्थप्रवर्तितौषधद्रवोपलेपेन तदात्व एव व्रणश्रेणीसंरोहणम् KaumuMi. 6. 1(3); मूर्धा शश्वदकाण्डशुष्कहसितैर्यच्चाग्रत: कम्पते AdbhuDa. 1. 11; अकाण्डपतितैर्वृक्षैरुच्चचटचटायितम् । रामो दण्डकं वनमाविशत् Rāgh. 7. 25; **अकाण्डे** ( akāṇḍe ) *adv.* **A** not at the proper juncture or occasion, at an improper time मिथु चेति विचक्षते अकाण्ड इव ĀrṣeU. 8. 2; अकाण्डे दत्तहुङ्कारा तथा प्रशिथि लाङ्गका । श्वासग्रस्तानना चैव जडताभिनये भवेत् NāṭyaS'ā. 22. 190; अकाण्डे किं महाराज्ञ्या प्रेषितासि रणं प्रति BrahmāṇḍP. iii. 26. 91; अकाण्डे खल्वयं समुपस्थितो महाप्रलय: HarṣaC. 221. 4; किमभ्युदयाम( ? यमा )गमत् समयमेनमकाण्ड एव दुर्दिनम् AvantiKa. 206. 10 यत्र दीर्घायुषां नृणां नाकाण्डे मृत्युसंभव: MahāP. 9. 79; अकाण्डे यत्र हुंकारो दृष्टि: स्तब्धा गता स्मृति: ।…जडतेयं स्मृता यथा S'ṛṅgāTi. (Ru.) 2. 25; अकाण्ड एव विच्छित्तिरकाण्डे च प्रकाशनम्… रसस्य स्याद्विरोधाय Dhvanyā. 3. 19; कृतेन प्रध्वस्तं कलियुगमकाण्डे बलवता कुलेन्दौ पालानामवति युवराजे वसुमतीम् RāmC. 24. 146; तारतम्यम् इति तु प्रयोग:…रूढ:, न तु तार्थं ताम्यम् इत्यादि…तदलमकाण्डे श्रुतलवकौशलप्रथनेन ParāTri. 30. 10; अथ समन्वयलक्षणे केयमकाण्डे विरोधाविरोधचिन्ता Bhām. 300. 9 (*on* i. 4. 14); 627. 4 (*on* iii. 3. 26); S'ivaP. ii(3). 15. 32 (139B. 5); अकाण्डे प्रथनच्छेदौ…रसे दोषा: KāvyPra. 434. 2; अकाण्डे प्रथनं यथा वेणीसंहारे…अनेकवीरक्षये प्रवृत्ते भानुमत्या सह दुर्योधनस्य शृङ्गारवर्णनम् KāvyPra. 440. 2; अकाण्डे प्रणयं तेषां विलोक्य त्र्यम्बकप्रिया ।…बभार भृकुटीं सखे BṛKathāMañ. 12. 10; मृत्योर्लिपिकर: पत्रं तस्याकाण्डेऽप्युदक्षिपत् (comm. असमयेऽपि स मृत इत्यर्थ: ) DvyāśraKā. 11. 63; नृत्यन्त्युदीरितघनस्तनितामकाडे नेदीयसीं तव निशम्य विभातनान्दीम् ।… मयूरा: Yādavā. 19. 10; नर्मस्फोट:…अन्यस्त्वकाण्डे संभोगच्छेद इति गीयते RasāSu. 81. 14 (1. 278); यस्य सेनातुरङ्गाणां खुरैरुत्थापितं रज: । अकाण्डे राहुसन्देहं मार्तण्डस्योदपादयत् MadhuVi. 1. 41; प्रमदाजनानामभ्रंलिह: शोणमणीमयूख: । संध्याभ्रमं प्राप्नुवतामकाण्डेऽप्यनङ्गनेपथ्यविधिं विधत्ते SāhiDa. 247. 3; इह कुमति:… वराक: प्रलपति यदकाण्डे खण्डनाभासमुच्चै: AdvaiSi. 709. 4 = 900. 10; Nārāy. iii. 15. 7; YātrāPra. 4. 107; अत्राकाण्डेऽपि हुंकारस्तम्भश्वासभ्रमादय: UjjvaNīMa. 516. 9; अकाण्डे शोकदायित्वाभावरूपमपारुष्यं सुकुमारता RasGaṅ. 75. 11; अपक्रमाच्च द्युमणेरकाण्डे । आसीत्तमिस्रा जयदा रिपूणाम् NīlaVi. 20. 16; **B** unexpectedly, out of place दर्भाङ्कुरेण चरण: क्षत इत्यकाण्डे तन्वी स्थिता S'āk. 2. 13 = SaraKaṇṭhā 80. 14; SubhāRaK. 17. 49; RasiJī. 903; तातस्तु तं …अकाण्ड एव प्राणहरमप्रतीकारमुपप्लवं…आलोक्य Kād. 33. 17; महाभाग्यतयाकाण्ड एवास्य पादमूलं गतवानस्मि DaśKuC. 15. 17; VāsaDa. 202. 1; अहं त्वकाण्ड एव खण्डितगमनरभसेन तस्यानेन वचसानवसानेन पथापि जनितव्यथ: TilaMañ. 148. 16; 216. 12; YaśasCam. ii. 84. 13; अकाण्डे किं निमित्तेन संकटं समुपस्थितम् DevīBhāP. vii. 29. 35; आयु:…उन्मत्तमिव संत्यज्य यात्यकाण्डे शरीरकम् YogVā. i. 14. 1; न यो वाच: पात्रं भवति न दृशो नापि मनसस्तमप्यर्थं क्रुद्धो हतविधिरकाण्डे घटयति KaumuMi. 3. 2; किंतु दैवादकाण्डेऽपि कृत्यं तदुपतिष्ठते TriṣaS'aPuC. i. 2. 47; ii. 1. 181; ii. 4. 69; पूर्वपक्षिणा वेदान्तानामप्रामाण्यसिद्धये महता प्रयासेन यद्विधिपरत्वकल्पनं तदकाण्डे ताण्डवितम् VivaPraSaṁ. 298. 12; संरूढं कमपि निपातयत्यकाण्डे…विधाता RājTa. (S'rī.) 4. 500; **C** suddenly विदारितेषु रक्ष:सु रामस्य शरै:…अकाण्ड एवाद्भुतमेतदुच्चैर्वल्लीद्रुमा: पल्लविता बभूवु: BhāvS'. 72; मोहात् समाक्षिपति जीवनमप्यकाण्डे HarṣaC. 87. 7 = AlaṅkāSa. 96. 12 = SūktiRa. 40. 38; स्थितिरियं जगतो यदङ्गसङ्गभूतान्यङ्कलालितान्यपरित्याज्यान्यपत्यकान्यकाण्ड एवागत्यासंस्तुतैर्नीयन्ते HarṣaC. 199. 17; 258. 8; DaśKuC. 28. 21; तां…विभाव्य चेत: कथं कथमपि व्यपवर्तते मे ।…उन्मथ्य मन्थरविवेकमकाण्ड एव MālaMā. 1. 170; 9. 128; गन्धर्वराज यदिदमधित्यकात: सुवेलाद्रेरकाण्ड एव…

वलीमुखचक्रमक्रममेवोच्चलितम् MahāViC. vi. 29. 1 (173. 8); vii. 29. 2 (205. 14); त्वयाकाण्डे मान: किमिति सरले संप्रति कृत: AmaS'. 80 = SubhāRaK. 372; तावदयमकाण्ड एव क्षुभितेन बिभ्रतातिभीषणं रूपं···मीनध्वजेन···कृत: पर्याकुल: TilaMañ. 283. 20; 185. 7; तत्रैकं वराहं घोरमैक्षत । नैशं तम इवाकाण्डे दिवा पिण्डत्वमागतम् KathāSaSāg. ii. 3. 44; S'rīKaC. 3. 16; RājTa. (Ka.) 2. 501; 8. 638; कोऽयमकाण्डे दारुण: संरम्भ: RukmiHa 1. 22 (4); MalliC. 8. 460; नृपोऽथ चलित: स्तोकं भूमिभागं समागत: । यावत्तावदकाण्डेऽप्यपतत् काञ्चनपादप: SamarāSaṁ. 8. 370; भ्रात: पान्थ···समुत्सृज्य बालामकाण्डे गन्तुं···ते न युक्तम् S'ārṅgaPa. 3894; **D** without any reason, in vain क सत्त्वमसद्ग्राहूनां क्वेयं दुर्ललिता वधू: । अकाण्ड एव विधिना कृतोऽयं निष्ठुरो विधि: BrahmāṇḍP. iii. 25. 8; अकाण्ड एव नश्यन्ति वाजिवारणमन्त्रिण: AhirbuS. 42. 16; इत्यकाण्डे कृतान्तं गर्हमाणा मुक्तकण्ठमतिचिरं प्राकृतप्रमदेव प्रारोदीत् HarṣaC. 230. 12; तव तन्वङ्गि मिथ्यैव रूढमङ्गेषु मार्दवम् । यदि सत्यं मृदून्येव किमकाण्डे रुजन्ति माम् Kāvyāda. 2. 127; (वानरवारसुन्दरी) किलिकिञ्चितकेलिपण्डिता किमकाण्डे न चकार तं प्रति RāmC. 12. 61; राजन् किमकाण्डे मन्युमलिनमाननम् YaśasCam. ii. 261. 2; संरम्भ: किमकाण्ड एव भवता सद्वर्त्मं यत्त्यज्यते BālBhā. 2. 43; विषभक्षणमनुमनुते न हि कश्चिदकाण्ड एव सुहृदि सुधी: VyaktiVi. 27. 13; परलोको हि धर्मस्य फलं संदिग्धमेव तत् । तदैहिकसुखास्वादमकाण्डे किं निषेधसि TriṣaS'aPuC. i. 1. 399; बिभेति रुष्टासि किलेत्यकस्मात् स त्वां किलापेति हसत्यकाण्डे NaiṣC. 3. 112; PāṇḍC. 5. 270; यदि वयमपराधिनस्तदानीम्···अयि किमियमकाण्ड एव नीता सशशशशाङ्कदशां कपोलपाली Subhāṣi. 1599; 2571; अथवा किमर्थमकाण्डे मया विधिरुपालभ्यते SṛṅgāTi. (Rā.) 14 (1); **E** without a purpose प्रमेयज्ञेयशब्दादौ कस्यापोह्यं न विद्यते । न ह्यसौ केवलोऽकाण्डे प्रेक्षावद्भि: प्रयुज्यते TattvSaṁ. 1166; पाण्डय:···। काण्डै: पाण्डुयश: शौण्डो द्यामकाण्डेऽप्यखण्डयत् Kapphiṇā. 18. 27; **F** immediately यस्य । महाहवे नाम निशम्य सद्यस्त्रयं [रि]पूणां विगलत्यकाण्डे EI. x. 85. 6 = viii. 185. 6 = xxii. 105. 6 = xxii. 182. 5 = iii. 106. 6 = xxi. 140. 6 xxii. 81. 5; सुतभाण्डस्य वधश्रवादकाण्डे ।···क्षितिपं शशाप सोऽन्ध: RāmC. 8. 59; पलायकत्वं जगृहुर्विहाय परस्त्रिय: पाचकतामकाण्डे DvyāśraKā. 6. 47; वितेने मण्डप: कैश्चिदकाण्डे काण्डमण्डलै: PāṇḍC. 13. 481. **अकाण्डेन** (akāṇḍena) *adv.* **A** unintentionally, spontaneously मनसश्चलनं कम्पोऽकाण्डेनाकामतो भवेत् BhāvPra. (S'ā.) 279. 7 (9); **B** unexpectedly नश्वरेण शरीरेण पुण्यराशिश्चिरस्थिर: । कस्ते साधुरकाण्डेन लप्स्यमानमुपेक्षते PuruṣPa. 163. 15.

**अकाण्डकण्डूल** (akāṇḍa-kaṇḍūla) *adj.* having an itching sensation all of a sudden पक्वकपिच्छूगुच्छाछोटनचापलैरकाण्डकण्डूला इव कर्षन्त: शर्करिला: कर्करस्थली:···प्रावर्तन्तोन्मत्ता मातरिश्वान: HarṣaC. 77. 1.

**अकाण्डकण्डूलता** (akāṇḍakaṇḍūla-tā) *f.* a sudden itch, eagerness (to strike) चिरादसमपत्रिणो भुजमकाण्डकण्डूलतां नयम्···दक्षिणसमीरणो···ववौ S'rīKaC. 6. 67 (comm. अकाण्डे सदृशभटलाभाभावे कण्डूलतां प्रहर्तुमभिलाषवत्त्वम्)

**अकाण्डकम्** (akāṇḍakam) *adv.* suddenly, all at once ग्रन्थानां फणिति:··· अन्धीभवच्चक्षुषां पन्थानं स्फुटयन्त्यकाण्डकमभात् तर्कार्कविद्योतितै: S'aṅkaDigVi. (Mā.) 6. 106 (comm. अकुत्सितं यथास्यात्···प्रकटं यथा स्यात्)

**अकाण्डकम्प** (akāṇḍa-kampa) *m.* sudden tremor वैदेहीरमणस्य···प्रत्यावृत्तिरकाण्डकम्पतरलैराशङ्कि लङ्काचरै: VikraDeC. 3. 77.

**अकाण्डकलह** (akāṇḍa-kalaha) *m.* sudden combat अहो नु खल्वनयोर्विकर्तनकुलकुमारयोरकाण्डकलहप्रचण्डयो:···विक्रान्तचरितानि UttaRāC. vi. 0. 2.

**अकाण्डकूष्माण्डपतनन्याय** (akāṇḍakūṣmāṇḍapatana-nyāya) *m.* the maxim of the sudden or unexpected fall of a pumpkin (used with reference to the occurrence of something unexpected) ननु वार्तिकतात्पर्यव्याख्यामुपक्रम्य भाष्यव्याख्याकाण्डकूष्माण्डपतनन्यायमनुहरति NyāyVārPari. 556. 4.

**अकाण्डक्रोध** (akāṇḍa-krodha) *m.* a sudden or inopportune anger अकाण्डक्रोधसंरुद्धचेतसा वेधसा कन्यारत्नमिदमुपदर्श्य त्वरिततरं तिरोधाय सत्यमस्माकं यानपात्रभङ्ग: कृत: KaumuMi. 1. 13 (6); अकाण्डक्रोधसंवेगनृत्यद्भ्रूवल्लिरीक्षते··· अङ्गना NāṭaLaRaK. 2351.

**अकाण्डक्षय** (akāṇḍa-kṣaya) *m.* untimely destruction ततोऽभवन्महायुद्धं···ह्यकाण्डक्षयकारणम् SkandP. vii (1). 119. 37.

**अकाण्डखण्डन** (akāṇḍa-khaṇḍana) *n.* sudden cut अकाण्डखण्डनगलद्रक्तौघं···कृत्तं···पतति···कौम्भकर्णं शिर: MahāN. 9. 44.

**अकाण्डघनाघन** (akāṇḍa-ghanāghana) *m.* unexpected rainy cloud अयमिह परं दु:खज्वालाकलापमखण्डयत् कनकपयसां धारादण्डैरकाण्डघनाघन: SaduktiKa. 197. 23.

**अकाण्डचण्ड** (akāṇḍa-caṇḍa) *adj.* [*f.* –ā, –ī] furious or formidable unexpectedly or untimely or unreasonably क्रोधोल्कै: सदसि···अस्य दृष्टिपातैर्माभूद् भू: प्रसभमकाण्डचण्डदाहा Kapphiṇā. 3. 36; क्रुद्धो राम: शितकाण्डमण्डलीभिरकाण्डचण्डाभि:···अभिवर्षितुं प्रवृत्त: BālRā. 9. 40(5); पुनरकाण्डचण्डतडिद्दण्डसंघट्टभयप्रभावादपरिपूर्णविषय एव प्रसवसमये लब्धात्मलाभमात्र: YaśasCam. ii. 203. 1; कमण्डलुं कश्चिदकाण्डचण्डसंरम्भपिण्डीकृतकोपतुल्यम् । आदाय DarpDa. 7. 57; दिक्षु प्रेङ्खाभियोगप्रवलितवलनाविभ्रमाकाण्डचण्डै:···अनिलै: EI. i. 254. 2; निर्वारिताखण्डलोद्योजिताकाण्डचण्डाम्बुवाहातिवर्षत्रसद्गोकुलत्राणविस्मापिताशेषविश्व···देव तुभ्यं नम: PraboCan. 4. 30 (81. 8); S'rīKaC. 20. 42; क्षुत्क्षामाकाण्डचण्डी चिरमवतुतरां भैरवी कालरात्रि: SaduktiKa. 20. 30.

**अकाण्डचण्डिमन्** (akāṇḍa-caṇḍiman) *m.* sudden ferocity or violence, unexpected fury अयमकाण्डचण्डिमपटु: [v. l. अयमकाण्डचण्डिमकटु:]···चीत्कुर्वद्गिरिकुञ्जकुञ्जरशिर:कुम्भस्थलस्थो हरि: VāsaDa. 103. 6; जानीम: किमकाण्डचण्डिमगुणान् दैवस्य SaduktiKa. 255. 9; जनजातमकाण्डचण्डिमापन्नशुष्मोष्मणा कृच्छ्रं प्राणिति AmṛUda. 2. 20(7)

**अकाण्डचलित** (akāṇḍa-calita) *adj.* moving suddenly दोर्दण्डभ्रमणादकाण्डचलितब्रह्माण्डखण्डं मुदे भूयाद्व:···चण्डीपतेस्ताण्डवम् EI. xxi. 149. 4.

**अकाण्डच्छेद** (akāṇḍa-ccheda) *m.* sudden or untimely break or interruption अकाण्डच्छेदो यथा वत्सराजस्य रत्नावल्यां चतुर्थेऽङ्के । रत्नावलीनामधेयमप्यगृह्णतो विजयवर्मवृत्तान्ताकर्णने Kāvyānu.(He.) 144. 7; असमयत्यागोऽकाण्डच्छेद: Kāvyānu.(Vā.) 67. 31.

**अकाण्डजन्मन्** (akāṇḍa-janman) *adj.* suddenly rising अकाण्डजन्मन: ···उत्पातरविमण्डलात् चन्द्रात्···कष्टतरमवस्थान्तरमुपगतवति विरहिणीजने किं पञ्चभिरपि बाणैर्भवत: प्रहर्तुं युक्तम् YaśasCam. ii. 19. 7.

**अकाण्डजलद** (akāṇḍa-jalada) *m.* untimely or unseasonal cloud भास्वन्तोऽमी···व्यञ्जन्तु प्रलयं द्विषाम् । रुद्धाङ्गालोहसंनाहैरकाण्डजलदैरिव SrīKaC. 19. 21.

**अकाण्डतमस्विनी** (akāṇḍa-tamasvinī) *f.* sudden or untimely night विदधत: कायाभोगैरकाण्डतमस्विनीम् दधति···हरिहुतभुजां धूमच्छायाममी रजनीचरा: AnargharRā. 6. 35.

**अकाण्डतस्** (akāṇḍa-tas) *adv.* all of a sudden, unexpectedly रथाश्वकेशावलिकर्णचामरं ददाह बाणासनबाणबाणधीन् । अकाण्डतश्चण्डतरो हुताशन: KumāSam. 15. 31.

**अकाण्डताण्डव** (akāṇḍa-tāṇḍava) *n.* **A** unexpected frantic dance भज्यमानस्य धनुषो ध्वनिराचार्यतां ददौ(? दधौ) । अकाण्डताण्डवारम्भे स्वर्गोद्यानशिखण्डिनाम् RāmāMañ. 42. 2; तदलमकाण्डताण्डवकल्पेन मन्त्रशास्त्ररहस्योद्घोषणेन SarvaDaSaṁ. 15. 401. **B i** sudden or untimely flaring up सावेगं कथमपि तस्य नोपशल्ये किंकर्यो विदुधुवुरग्रचामराणि । चूडेन्दुग्लपनकृतो विशङ्क्य पात्रं लालाटज्वलनमकाण्डताण्डवस्य S'rīKaC. 17. 12; **B ii** much ado about nothing, unnecessary pomp or display अवगतिसाधनत्वेनापूर्वविधिरिति शङ्कानिराकरणार्थमनुमानेन प्राप्तिप्रदर्शनमिदमकाण्डताण्डवम् S'ivārkaMaDī. i. 54. 30 (*on* i. 1. 1)

**अकाण्डताण्डवित** (akāṇḍa-tāṇḍavita) *adj.* caused to dance untimely, caused to move suddenly (यत्र) षिङ्गपरिषद्भिश्चण्डतरमुड्डमरितडिण्डिमारवाकाण्डताण्डवितशिखण्डिमण्डले···रमन्ते कामिन: YaśasCam. i. 103. 3; धत्ते कान्तिमकाण्डताण्डवितयोर्भङ्गेन वक्त्रं भ्रुवोश्चन्द्रस्योत्कटलाञ्छनस्य UttaRāC. 5. 36; कीकसावसानविश्रान्तनखमुखमार्गोद्गलद्रुधिरधाराकाण्डताण्डवितसंध्यारागसंततिभि: YaśasCam. ii. 189. 8.

**अकाण्डताण्डवित** (akāṇḍa-tāṇḍavita) *n.* untimely display (of argument) एवं च सति निरुक्तिविरह: किं वा निरुक्तिनिमित्तस्य च विरह इत्यादिविकल्पोऽकाण्डताण्डवितम् TattvPradī.(Ci.) 79. 7.

**अकाण्डतिक्त** (akāṇḍa-tikta) *m.* a kind of plant (= भूनिम्ब, Gentiana chirata) अकाण्डतिक्तो हैम: स्यात् KalpaK. 266. 158-

**अकाण्डतुहिनापात** (akāṇḍa-tuhināpāta) *m.* untimely snow-fall अकाण्डतुहिनापातोदीपाद्यैरप्युपद्रवै: । नष्टेषु शालिष्व(? षु) क्षीणं सुभिक्षं तत्र न क्षणे RajTa.(Ka.) 8. 2449.

**अकाण्डत्रास** (akāṇḍa-trāsa) *m.* sudden fear तेनातीव कठोरेण सिंहनादेन भूयसा ।···शक्तीनां कटकं चासीदकाण्डत्रासविह्वलम् BrahmāṇḍP. iii. 29. 30.

**अकाण्डदण्ड** (akāṇḍa-daṇḍa) *m.* sudden punishment दण्डधराधिप: । अकाण्डदण्डसत्रष्टाथ ययौ दण्डधरान्तिकम् RājTa.(Ka.) 4. 656.

**अकाण्डदर्शन** (akāṇḍa-darśana) *n.* unexpected appearance तेनाप्यालिङ्गितोऽकाण्डदर्शनोत्फुल्लचक्षुषा KathāSaSāg. xii. 6. 9.

**अकाण्डदहन** (akāṇḍa-dahana) *m.* a sudden fire °करिण:···उदभूदकाण्डदहनज्वालाजालाकुलो देह: RasGaṅ. 600. 20.

**अकाण्डधाराधर** (akāṇḍa-dhārādhara) *m.* an untimely cloud तस्यास्तावद् भव यदुपतेऽकाण्डधाराधरस्त्वम् PadyaVe. 396.

**अकाण्डनिपातिन्** (akāṇḍa-nipātin) *adj.* falling suddenly तुषारवर्षैर्बहलैस्तमकाण्डनिपातिभि: । आर्याणकाभिधे देशे विपन्नं केचिदूचिरे RājTa.(Ka.) 4. 367.

**अकाण्डपटुताण्डव** (akāṇḍa-paṭutāṇḍava) *adj.* dancing vigorously

all of a sudden अकाण्डपटुताण्डवैः···शिखण्डिनां मण्डलैः । दिशः समवलोकिताः BhojPra. 60. 9 = Subhāṣi. 2504.

**अकाण्डपरित्याग** ( akāṇḍa–parityāga ) *m.* abandoning without reason नायमकाण्डपरित्यागनिष्ठुरहृदयः Kād. 242. 13.

**अकाण्डपरिपाण्डु** ( akāṇḍa–paripāṇḍu ) *adj.* unexpectedly pale वदनैः सूच्यमानानामकाण्डपरिपाण्डुभिः । शुचां मनःसु वः कोऽयं नवः प्रावेशिको विधिः S'rīKaC. 19. 13.

**अकाण्डपात** ( akāṇḍa–pāta ) *m.* a sudden occurrence, a sudden fall, a sudden attack, a windfall त्रिविष्टपम् । अकाण्डपातसंकष्टं निनिन्दुस्त्रिदशा बहु SkandP. iv. 3. 74; अकाण्डपातोपनता कं न लक्ष्मीर्विमोहयेत् KathāSaSāg. i. 5. 2; अकाण्डपातजातानामार्द्राणां मर्मभेदिनाम् । गाढशोकप्रहाराणामचिन्तैव महौषधम् Hitopa. 4. 86 = PraboCan. 5. 25; [ MW; Apte ?]

**अकाण्डपातिन्** ( akāṇḍa–pātin ) *adj.* suddenly appearing संपूर्णोऽमृतदीधितिः । जातश्चान्तरितश्चैत्य मेघेनाकाण्डपातिना KathāSaSāg. xii. 5. 176.

**अकाण्डप्रकम्प** ( akāṇḍa–prakampa ) *m.* a sudden thrill येनाकाण्डप्रकम्पाकुलिततनुलताः पौरपारिप्लवाक्ष्यस्त्रासेनेवोपमुक्ता दधुरधिकतरस्वेदरोमाञ्चचर्चाम् S'rīKaC. 21. 53.

**अकाण्डप्रथन** ( akāṇḍa–prathana ) *n.* untimely elaboration ( a kind of *rasadoṣa* ) अकाण्डे विस्तरोऽकाण्डप्रथनम् । यथा कर्पूरमञ्जर्यां द्रुमदोहददानादिव्यावर्णनम् । Kāvyānu.( Vā. ) 67. 29.

**अकाण्डप्रथा** ( akāṇḍa–prathā ) *f.* untimely elaboration ( a kind of *rasadoṣa* ) अकाण्डप्रथा°···एते चाष्टौ रसस्य दोषाः Kāvyānu.( He. ) 142. 1.

**अकाण्डप्रलय** ( akāṇḍa–pralaya ) *m.* untimely destruction अकाण्डप्रलयोऽस्माकमागतोऽद्य S'ivaP. ii (2). 35. 44 (112B. 4); जनमण्डले । अकाण्डप्रलयभ्रान्तिभीमः [ v. l. अकालप्रलय° ] कोलाहलोऽभवत् BṛKathāMañ. xviii. 113.

**अकाण्डभङ्ग** ( akāṇḍa–bhaṅga ) *m.* sudden loss, untimely destruction लक्ष्म्या तावदकाण्डभङ्गजभयं त्यक्तं परापाश्रयम् । यावन्नाविरकारि यस्य जनताकान्तं वपुर्वेधसा EI. xiv. 118. 18; महाभटानामकाण्डभङ्गेन विघूर्णमानम् । अवोधयत्पङ्क्तिमुखं हनूमान् RāmC. 22. 1; तत्कालं निबिडमकाण्डभङ्गभीताश्चक्रन्दुः प्रतिनिनदच्छलेन काष्ठाः Kapphiṇā. 3. 35; अकाण्डभङ्गक्रुन्मृत्युः SamarāSaṁ. 7. 490.

**अकाण्डभङ्गुर** ( akāṇḍa–bhaṅgura ) *adj.* of unexpectedly or suddenly perishable nature, subject to sudden destruction स खल्वहम्···अकाण्डभङ्गुरं शरीरमाहवशिरसि क्षत्रकुलोचितेन वर्त्मना व्ययीकृत ( ? त्य )···य( शः )शरीरम्··· आसादयितुमिच्छामि AvantiKa. 43. 9; मा स्मैतत्सुरसुरवैरिणां विरोधे त्रैलोक्यं सकलमकाण्डभङ्गुरं भूत् HarVi. 14. 57; किमकाण्डभङ्गुरसुखैः KaviKaṇṭhā. iv. 1. 13.

**अकाण्डभङ्गुरता** ( akāṇḍabhaṅgura–tā ) *f.* sudden destruction, unexpectedly perishable nature अवधार्य चाकाण्डभङ्गुरतां सर्वसुखानां···शरणार्थिनी स्थाणुमाश्रिता Kād. 172. 5.

**अकाण्डभय** ( akāṇḍa–bhaya ) *n.* unexpected or sudden fear नीलकण्ठनिवहस्य निषिद्धं तेन ताण्डवमकाण्डभयेन RāmC. 16. 15; उत्प्लुत्य धावनमकाण्डभयापसर्पः···इत्यादि शिक्षितमभूत् AdbhuDa. 1. 22.

**अकाण्डम्** ( akāṇḍam ) *adv.* **A** out of time, untimely पवनः प्रचण्डो वाकाण्डमेव ब्रह्माण्डं विघटयेत् Bhām. 569. 21 (*on* iii. 2. 32); अकाण्डमेवात्मसुवार्जितस्य भूत्वापि मूलं मयि वीरणस्य NaiṣC. 3. 90; वैरिक्षोणिपतिप्रियाः··· दृष्ट्वाकाण्डमचिन्तितोदयरविं यस्य प्रतापं पुरः प्रातःकालधिया ह्रिया तु कथितास्त्रस्ता निशीथे बभुः PadyaVe. 71; **B** suddenly, immediately त्वत्पश्चशाखानुगता सकम्पा स्तनोपपीडं गुरुसंनिधौ च । भ्रान्त्वापतद् भूमितले ह्यकाण्डं भूतभ्रमं भावयती( ? )गृहेषु PadyaVe. 338; **C** without reason, aimlessly अयि कुरङ्गि, किमकाण्डमितस्ततो हिण्डसे YaśasCam. i. 350. 4.

**अकाण्डमरण** ( akāṇḍa–maraṇa ) *n.* untimely ( i. e. sudden or premature ) death तस्या अकाण्डमरणे सञ्जाते सति···तदुदरविदारणपूर्वमपत्यमुद्धृतम् PrabaCin. 15. 32; तस्या अकाण्डमरणे सचिवैरुदरं विदार्य कर्षितमपत्यम् KumāCaSaṁ 37. 7.

**अकाण्डमानग्रह** ( akāṇḍa–mānagraha ) *m.* getting angry for no reason न यत्र वायुः सहते नतभ्रुवामकाण्डमानग्रहकीर्तिडिण्डिमम् S'rīKaC. 3. 26.

**अकाण्डमृति** ( akāṇḍa–mṛti ) *f.* untimely death तद्राष्ट्रे···कश्चिदकाण्डमृतिभाक् च न SkandP. iv. 43. 52.

**अकाण्डमृत्यु** ( akāṇḍa–mṛtyu ) *m.* name of the chief keeper of hounds of king Yaśodhara राजा···श्वानं···वान्तादगणिमुख्यायाकाण्डमृत्यवे समर्पयामास YaśasCam. ii. 188. 4.

**अकाण्डयमदण्ड** ( akāṇḍa–yamadaṇḍa ) *m.* a sudden or unexpected ( fall of ) the rod of Yama ( God of Death ) तव···पततु शिरस्यकाण्डयमदण्ड इवैष भुजः MālaMā. 5. 208 = SaraKaṇṭhā. 590. 16 = KāvyPra. 679. 5 = SāhiDa. 150. 9.

**अकाण्डयमुनाप्रणय** ( akāṇḍa–yamunāpraṇaya ) *adj.* [ *f.* –ā ] combined with Yamunā unexpectedly or out of place गिरिसुता···पुष्णात्यकाण्डयमुनाप्रणयां च गङ्गाम् S'rīKaC. 5. 39.

**अकाण्डयुगक्षय** ( akāṇḍa–yugakṣaya ) *m.* untimely end of the age or of the world किमागात् परचक्रं भोः किं वाकाण्डयुगक्षयः MalliC. 2. 282.

**अकाण्डलुण्टाक** ( akāṇḍa–luṇṭāka ) *m.* sudden plunderer, robber or thief making a sudden attack °अकाण्डलुण्टाकडामरीकदमनदीक्षितः···व्यजृम्भत स्वभावशीतलो हेमन्तसमयः AvantiKa. 34. 8.

**अकाण्डलोल** ( akāṇḍa–lola ) *adj.* suddenly agitated किमकाण्डलोलः संवर्तवायोः परिणाममेदः RāmC. 39. 58.

**अकाण्डविकल्पन** ( akāṇḍa–vikalpana ) *n.* sudden doubt, unusual thought or idea कथमिह ग्रामीणानामकाण्डविकल्पनैः शशधरमणे यास्यन्त्येते विडम्बनवासराः SaduktiKa. 238. 21.

**अकाण्डविद्युदुन्मेष** ( akāṇḍa–vidyudunmeṣa ) *m.* sudden flash of lightning स गन्धर्वः कुर्वन्नङ्गमरीचिभिः । अकाण्डविद्युदुन्मेषमभ्रमार्गे तिरोऽभवत् Rāgh. 7. 56.

**अकाण्डविप्लव** ( akāṇḍa–viplava ) *m.* sudden destruction अकाण्डविप्लवं जगतामवेक्षितुमक्षमेण···महेश्वरेण दृशोर्निमीलनात् NīlaVi. 89. 8.

**अकाण्डविवर्तन** ( akāṇḍa–vivartana ) *n.* a sudden change, capricious turn अकाण्डविवर्तनदारुणः प्रविशिनष्टि विधिर्मनसो रुजम् MālaMā. 4. 120 = UttaRāC. 4. 15 = SaraKaṇṭhā. 642. 16.

**अकाण्डविसंवादिन्** ( akāṇḍa–visaṁvādin ) *adj.* [ *f.* –ī ] suddenly discordant येषां अकाण्डविसंवादिन्यः प्रीतयो न गणयन्ति निष्कारणवत्सलताम् Kād. 222. 9.

**अकाण्डवैरिन्** ( akāṇḍa–vairin ) *adj.* wantonly inimical or hostile हन्यते सा वरारोहा स्मरेणाकाण्डवैरिणा Kāvyāda. 3. 138 = SṛṅgāPra. 449. 3; दृष्ट्वा च तमकाण्डवैरिणा मन्मथेन···उपतप्यमानम् TilaMañ. 179. 12; अयमप्यकाण्डवैरी मर्माणि प्रहरति मार्गणैरनङ्गः SṛṅgāTi.( Rā. ) 19.

**अकाण्डव्याध** ( akāṇḍa–vyādha ) *m.* a wanton hunter, a motiveless hunter अकाण्डव्याधेन···कामेन···देवीशरीरमुपेक्षितम् Kād. 258. 6.

**अकाण्डशर्वरी** ( akāṇḍa–śarvarī ) *f.* untimely night चर्मफलकैरकाण्डशर्वरीमपरां घटयन्तः HarṣaC. 163. 11.

**अकाण्डशीत** ( akāṇḍa–śīta ) *adj.* naturally cold, cold without reason कदलिकाण्डमकाण्डशीतम् ViddhaS'ā. 2. 4; SubhāRaK. 16. 65.

**अकाण्डशूल** ( akāṇḍa–śūla ) *m. n.* sudden colic or acute pain अकाण्डशूलजनितां पार्थिवः कथयन् व्यथां···निर्ययौ RājTa.( Ka. ) 5. 53.

**अकाण्डसंहार** ( akāṇḍa–saṁhāra ) *m.* untimely or sudden destruction ये वेगाकृष्टविश्वाचलवलयमहागह्वरोद्यन्निनादव्याभीताशेषदेवासुरपरिकलिताकाण्डसंहार( शं )काः ( बाहवः ) EI. xv. 59. 10.

**अकाण्डसंध्या** ( akāṇḍa–sandhyā ) *f.* untimely or unexpected twilight जय देवि···अकाण्डसंध्यासंमत्तभूतवेतालमालिके BṛKathāMañ. ix. 2. 317; कान्तिस्तेषां च तत्काले···द्विषोः ( ? दृशोः ) । अभूदकाण्डसंध्येव S'rīKaC. 19. 6.

**अकाण्डसंपात** ( akāṇḍa–sampāta ) *m.* sudden loosening, sudden slipping down व्रजाङ्गनानां स्मरजातकम्पादकाण्डसम्पातमियाय नीवी BhāmiVi. 2. 97 = RasGaṅ. 683. 4.

**अकाण्डस्मित** ( akāṇḍa–smita ) *n.* unexpected smile वेतालो भूपालं··· पप्रच्छ ब्राह्मणशिशोरकाण्डस्मितकारणम् BṛKathāMañ. ix. 2. 1104.

**अकाण्डहत** ( akāṇḍa–hata ) *adj.* unexpectedly slain मदनसुन्दरी··· शोचन्ती तावकाण्डहतावुभौ KathāSaSāg. xii. 13. 36.

**अकाण्डहुंकार** ( akāṇḍa–huṅkāra ) *m.* an untimely exclamation हा हेति भाषणाकाण्डहुंकारः BhāvPra.( S'ā. ) 91. 4. (4)

**अकाण्डहुंकृति** ( akāṇḍa–huṅkṛti ) *f.* untimely utterance of the sound ' hum ' अकाण्डहुंकृतिः···निःश्वासक्रुशतादयः ( विकाराः ) RasāSu. 2. 199.

**अकाण्डा** ( ākāṇḍā ) *f.* name of a plant, Flacourtia Cataphracta *or* Phyllanthus Niruri बहुपत्री दृढाध्यण्डा [ v. l. अकाण्डा ] ParyāMu. 13. 13.

**अकाण्डाकुलता** ( akāṇḍākulatā ) *f.* state of sudden flurry or agitation ब्रह्माण्डमकाण्डाकुलतां ययौ SaurP. 49. 114.

**अकाण्डागमन** ( akāṇḍāgamana ) *n.* untimely or unexpected arrival तस्मात् कुष्ठी भव क्षिप्रमकाण्डागमनेन च SkandP. iv. 48. 37.

**अकाण्डाडम्बरित** ( akāṇḍāḍambarita ) *adj.* suddenly appearing, emerging or sounding अकाण्डाडम्बरितबाष्पप्लवप्लवमानमिव वहन्ती चक्षुः NalaCam. 2. 17 (13); अकाण्डाडम्बरितमेघमण्डलैरिव···अदृश्यत भीमभूमिपालः NalaCam. 7. 0. (19); अकाण्डाडम्बरितवसन्तविकासोत्सव इवाभवत् सरित्संगमोपकण्ठवनविभागः NalaCam. 7. 22(4)

**अकाण्डाम्बुद** ( akāṇḍāmbuda ) *m.* untimely cloud अकाण्डाम्बुदजाड्येन पीडिताङ्ग इवाभजत्···लोकः शिथिलशक्तिताम् RājTa.(Ka.) 8. 2262.

**अकाण्डोच्चण्ड** ( akāṇḍoccaṇḍa ) *adj.* suddenly violent ( सुन्दरसेनः ) ततः···अकाण्डोच्चण्डमारुतैः···महाम्भोधावभ( ? म )ज्ज्यत सचेटकः BṛKathāMañ. x. 2. 1341.

**अकाण्डोड्डामर** ( akāṇḍoḍḍāmara ) *adj.* suddenly vehement किं स्युरुत्कलिका मद्वत् तस्याः···अकाण्डोड्डामरानङ्गहतकेन समर्पिताः KāvyālaṅSāSaṁ. 1. *23.

**अकाण्डोड्डीन** ( akāṇḍoḍḍīna ) *adj.* suddenly flying up राजा···अकाण्डोड्डीनप्राणैरिव वनप्राणिभिराकर्ण्यमानहर्षितहयहेषारवः···तद्वनमाससाद NalaCam. 1. 47(4)

**अकाण्डोत्थ** ( akāṇḍottha ) *adj.* [ *f.* –ā ] arising suddenly ( नित्याः )··· महाराज्ञीम्···ऊचुर्वाचमकाण्डोत्थाम् BrahmāṇḍP. iii. 25. 77.

**अकाण्डोत्पात** ( akāṇḍotpāta ) *m.* sudden portent पातालमभूत् । अकाण्डोत्पातविवशं ध्वस्ताशासुखमण्डलम् YogVā. v. 37. 16.

**अकाण्डोद्धति** ( akāṇḍoddhati ) *adj.* unnecessarily proud यत्सहासं यदकाण्डोद्धति···।···तदुदैत् क्षीवधियां वचः कथासु Kapphiṇā. 13. 17.

**अकाण्डोपस्थित** ( akāṇḍopasthita ) *adj.* which has taken place or befallen suddenly अयमकाण्डोपस्थितः प्रचेतःप्रभवः प्रतिभयाडम्बरः KaumuMi. 2. 7(3); पवित्राणि पितृमित्राणि···अकाण्डोपस्थिते मरणविड्वरे समुद्घोषणीयानि KaumuMi. 6. 17(21)

**अकातर** ( a–kātara ) *adj.* **A** not cowardly, brave, courageous नराधिपात्मजौ···समरेष्वकातरौ ।···प्रजग्मतुः पञ्चवटीम् Rāmā. iii. 12. 25; किं च यज्जीयते जातु कातरैरप्यकातरः । तद्दैववैभवं किंचिन्न नाम भटिमव्ययः PāṇḍaC. 11. 219; प्रविशन् युद्धे धीराश्वस्थोऽप्यकातरः । हबीबमीरः शस्त्रेण स श्लाघ्यमरणोऽभवत् RājTa.(S'rī.) 4. 295; शूरोऽकातरः VīraMi. 351. 5 ( *on* 1. 309–311); **B** daring, fearless, bold रोमाञ्चिता यच्छ्रवणात् कातरा अप्यकातराः । ततो देवा भयत्रस्ताः SkandP. iv. 71. 96; यस्तु केदारमुद्दिश्य गेहादर्धपथेऽप्यहो । अकातरस्त्यजेत् प्राणान् कैलासे स चिरं वसेत् SkandP. iv. 77. 23;श्रमः सिद्धयवसानोऽयं तद्यतध्वमकातराः RāmC. 10. 25; ( योगी ) रौद्रं भावं समाश्रित्य यदि योगं समभ्यसेत् । ···भवेत्···सर्वदृष्टिरकातरः MālinīT. 18. 15; कार्येष्वकातरा ये च ते धीराः KathāSaSāg. ix. 2. 289; **C** not perturbed कातराः परदुःखेषु निजदुःखेष्वकातराः । अर्थेष्वलोभा यशसि सलोभाः सन्ति साधवः RasGaṅ. 362. 10; **D** characterized by a fearless behaviour बाहुयुद्धमिदं रङ्गे सप्राश्निकमकातरम्।··· निर्मितं पुरा HariVaṁ. 75. 10.

**अकातरत्व** ( akātara–tva ) *n.* fearlessness, courage, bravery, pluck प्रवर्धते···अकातरत्वं शस्त्रास्त्रशीघ्रपातनकारिता । मृगयायां गुणा एते S'ukrNī. 1. 334.

**अकातरत्वपुरुषार्थ** ( akātaratva–puruṣārtha ) *adj.* the goal of which is bravery अथ पिङ्गलकः···अकातरत्वपुरुषार्थम्···राजत्वमनुबभूव Pañcā. 4. 28.

**अकादाचित्क** ( a–kādācitka ) *adj.* not occasional, permanent प्रतियोग्यनिष्ठत्वे सत्यकादाचित्कोऽभावोऽन्योन्याभावः TattvPradī.(Ci.) 173. 5.

**अकादाचित्ककारण** ( akādācitka–kāraṇa ) *n.* the non-occasional cause कादाचित्कज्ञानस्य चाकादाचित्ककारणादुत्पत्तौ कादाचित्ककारणादनुत्पत्तिप्रसङ्गः TarkBhā.(Mo.) 35. 20.

**अकादाचित्कत्व** ( akādācitka–tva ) *n.* **1.** the state of being not occasional, perpetuity अथापि पाचकत्वमिति सामान्यमेव किंचिद्भवेत् । सत्यर्थे तत्समवायस्याकादाचित्कत्वात् । सत्त्वादिवत् प्रागेव व्यक्तं स्यात् PramāVāSvopVṛ. 53. 9; अदृष्टस्याकादाचित्कत्वेन सर्वदोत्पादकत्वप्रसङ्गात् कादाचित्कं कर्म न संभवति VedāntDī. 102. 15 ( *on* ii. 2. 11); अदृष्टम्···कर्मद्वारेण संयोगहेतुर्न भवति । तस्याकादाचित्कत्वेन संयोगस्याप्यकादाचित्कत्वप्रसङ्गात् NītiMā. 43. 23; न च नित्य एव हेतुः, अकादाचित्कत्वप्रसङ्गात् NyāyKuA. i. 125. 1; BālamBha. i. 230. 27 ( *on* 1. 83); **2** the state of being non-existent निरुपाख्यविवक्षायां च तस्याः ( निवृत्तेः ) शशशृङ्गादिवदकादाचित्कत्वप्रसङ्गः S'atDū. 184. 3.

**अकान्त** ( a–kānta ) *adj.* **1 A** not possessing the highest degree of merits (such as knowledge, power etc.) अकान्ताश्चेतनाः सर्वे कान्तः स पुरुषः परः AhirbuS. 52. 41; **1 B** ugly जनयन्ति भाग्यसंस्था गुरुसौम्यविवर्जिता ग्रहाः पुरुषम् । व्याधिप्रायमकान्तम् Sārā. 32. 111; JātaPā. 14. 88; **2** devoid of a lover धिक् तारुण्यमकान्तम् KuṭṭaMa. 678.

**अकान्तरक** ( akāntara–ka ) *adj.* [ = अकान्ततरक ] not handsome, not lovable अभिलाषस्याविषय एव अकान्तरकः अकमनीयतरस्वरूपः अप्रियतरः JñātāDhaṬī. 130A. 9.

**अकान्तरूपत्व** ( akāntarūpa–tva ) *n.* the state of having an unpleasant or ugly form आत्मभावशोभायामन्धबधिरयोरकान्तरूपत्वात् AbhidhKoBh. 38. 6 ( *on* 2. 1); अघ्राणादीनां सत्त्वानामकान्तरूपत्वादकान्तात्मभावत्वादित्यर्थः Sphutā. ii. 2. 1 ( *on* 2. 1)

**अकान्ता** ( akāntā ) *f.* one of the names of the goddess Lalitā अकान्ता कान्तार्धविग्रहा LalitāSa. 211; अकान्तेति त्र्यक्षरं नाम LalitāSaBh. 174. 13 ( *on* 211)

**अकान्तात्मभाव** ( akāntātmabhāva ) *m.* the state of not possessing a beautiful form अघ्राणादीनां सत्त्वानामकान्तरूपत्वादकान्तात्मभावत्वादित्यर्थः Sphuṭā. ii. 2. 1 ( *on* 2. 1)

**अकान्ति** ( a–kānti ) *adj.* not bright, not rejoicing, depressed चुलुक्यः ···अकान्तिं धाराम्···आश्वासयच्च DvyāśraKā. 14. 73.

**अकान्ति** ( a–kānti ) *f.* **A** clumsiness (of writing), one of the five faults of writing ( cf. लेखदोष ) तत्र कालपत्रकमचारुविषमविरागाक्षरत्वमकान्तिः ArthS'ā. i. 177. 4 (2. 10); स्थानभ्रष्टास्त्वकान्तिस्थाः संदिग्धाः लक्षणच्युताः । यत्रैवं स्युः स्थिता वर्णाः लेख्यं दुष्टम् BṛhaspaSm. 66. 38; **B** lack of charm in poetry due to violation of a convention लोकसीमानतिक्रमः ( ? °अतिक्रमः ) पुनरकान्तिः Kāvyānu.(He.) 239. 20.

**अकापति** ( a–kāpati ) *m.* not a worthless master, a powerful master किंत्रिद्विषामप्सरसां ततोऽभूदकापतिः कापुरुषेतरोऽसौ DvyāśraKā. 6. 95.

**अकापथ** ( a–kāpatha ) *adj.* not following a wrong path, well-behaved अभवंस्तेऽप्यकापथाः कापुरुषास्तदानीम् VāsuVi. 3. 16.

**अकापुरुष** ( a–kāpuruṣa ) *m.* not a mean person, a noble man अपनीतं सुनीतेन योऽर्थं प्रत्यानिनीषते । ···तदकापुरुषव्रतम् MahāBhā. v. 39. 40; तदुद्यतगदाप्रासमकापुरुषसेवितम् । प्रावर्तत महद्युद्धम् MahāBhā. ix. 22. 41; भृगोराश्रममण्डलम् । तपस्विजनभूयिष्ठमकापुरुषसेवितम् BrahmāṇḍP. ii. 21. 48; पिङ्गलकः··· अकापुरुषगम्यम्···राजत्वमनुभवन्नास्ते TantrāKhyā. 4. 19.

**अकापुरुषानुरूप** ( akāpuruṣānurūpa ) *adj.* [ *f.* –ā ] worthy of a noble man उद्यच्छता धुरमकापुरुषानुरूपाम्···नेयो मया रिपुवधूनयनानि बाष्पः MudrāRā. 4. 6.

**अकाम** ( a–kāmá ) *adj.* [ *f.* –ā ] **A** not having a specific desire **B** not intended for satisfying a specific desire **C** having no desire at all **D** having no passion **E** unwilling, reluctant **F** not having an intention **G** not having one's desire fulfilled **H** similar to a desire. **A** not having a specific desire नमः पितृभ्यः···अकामा वो दक्षिणां न नीनिम TaiS. III. ii. 8. 3; स एषोऽकामः सर्वकामः S'atBr. X. v. 4. 15; (ákāma) न त्वकाम ह्नन्ति । य एवं वेद TaiĀ. i. 9. 2; नाकामः कामयत्यर्थं नाकामो धर्ममिच्छति । नाकामः कामयानोऽस्ति तस्मात् कामो विशिष्यते MahāBhā. xii. 161. 28; xiii. 118. 1; अकामस्य क्रिया काचिद् दृश्यते नेह कर्हिचित् ManuSm. 2. 4; अकामो वा सकामो वा दद्यात् पूर्णाहुतिम् PauṣkS. 41. 165; तावद्देदोदितं कर्म ह्यकामस्त्वं समाचर BṛBrahmaS. i. 1. 41; उपायः···शिष्टैर्निषेव्यते···अकामैश्च सकामैश्च LakṣmīT. 17. 106; बालेयम्···नेतुं वाञ्छत्यकामान् स्वसदनमधुना क्रीडितुं दत्तचित्तान् । मुरजिति VijñāS'. 57; अकामस्य हि क्रियानुपपत्तेः BṛĀraUBh. 617. 4 ( *on* iv. 4. 6); आराधयन्त्यत्र भवन्तमीशं महामखैः पञ्चभिरप्यकामाः BrahmP. 122. 75; अकामो वा सकामो वा नर्मदायाः शुभे जले । स्नात्वा मुच्येत पापेभ्यः PadmP. i. 15. 81; अकामो वा सकामो वा प्रविश्य स्थाणुमन्दिरम् VāmaP. 46. 55; ये त्वकामा नराः सम्यक् तत्कुर्वन्ति च शोभने BhaviP. 166B. 7 (i. 115. 17); अकामः पौरुषं सूक्तं जप्त्वा···विष्णोः परं पदं ( याति ) ViṣṇuDhaP. ii. 129. 14; पुष्यस्नानादिकं स्नानम्···काम्यं समुद्दिष्टं नाकामस्तत् प्रयोजयेत् S'aṅkhaSm. 8. 4; अकामस्यापि दीक्षा मे जन्ये पुण्यप्रसाधिका MalliC. 8. 343; अविरुद्धकामित्वेनाप्यकामो भण्यते TattvPrakā. 195A. 8 ( *on* iii. 4. 43); यः पुमान् कर्मकृत्तावकामः AnuBh. 286. 17 ( *on* iii. 4. 25); तस्मिन् किमस्तीति धरामरेन्द्रा यस्यामकामाः सततं यजन्ते Raghunā. 1. 40; **B** not intended for satisfying a specific desire मयि निहितमकामं कर्म तूदक्पथार्थं कपिलतनुरिति त्वं देवहूत्यै न्यगादीः Nāray. iii. 15. 8; **C** having no desire at all अकामः···तमेव विद्वान्न बिभाय मृत्योरात्मानम् AV. x. 8. 44; तद्वा अस्यैतत् । आत्मकाममाप्तकाममकामं रूपम् S'atBr. XIV. vii. 1. 21; उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः MuṇḍU. iii. 2. 1; MuṇḍUBh. 353. 9 ( *on* iii. 2. 1); अथाकामयमानो योऽकामो निष्काम आत्मकामः Bṛh.ĀrU. iv. 4. 6; अकामाः( °मां ? ) कामरूपेण धूर्ता नरकरूपिणः। न पुनर्वञ्चयिष्यन्ति MahāBhā. xii. 168. 50; त्रातोऽस्मि संसारभयादकामः Saund. 18. 40; कालक्रमादकामानां सर्वाः परफलप्रदाः PāraS. 15. 13; परधर्माय सज्जितः। ···अकाम एव च ।···विमुक्तः स्यात् पातकैः BṛBrahmaS. i. 5. 8; अकामस्य विषयविशेषोपभोगे न सुखिता स्यात् BrahmSi. 2. 9; अक्रतुः अकामः दृष्टादृष्टबाह्यविषयेभ्य उपरतबुद्धिरित्यर्थः KāṭhUBh. 134. 6 ( *on* 2. 20); आत्मानमेव लोकमिच्छतोऽकामस्य विहितम् GītāBh.(S'aṅ.) 20. 7 ( *on* 2. 10); अतोऽकामो विमुच्यते BṛĀraUBhVā. iv. 4. 256; कामकामो यजेत् सोममकामः पुरुषं परम् BhāgP. ii. 3. 9; अनाकुलमनसामकामानामेव···नैव तदुद्देशेन प्रवृत्तिः Bhām. 373. 1 ( *on* ii. 1. 33); अनीहमकाममवाममनाधि । जिनेन्द्र मनो मम वाञ्छति नाम ChandaśCū.

वाचकः । अकारो दातृवचनस्तेन कृष्ण इति स्मृतः BrahmVaiP. iv 13. 60; **20** the seed of the universe मकाराख्यो विभुर्बीजी ह्यकारो बीजमुच्यते LiṅgP. i 17. 63; **21** a possible reference to *the shape* of the letter ( तस्य रथस्य ) अकारश्च महच्छत्रं मन्दरः पार्श्वदण्डभाक् S'ivaP. ii. (5). 8. 25 (230A. 1)

**अकारक** ( a-kāraka ) *n.* **1** which is not a case-relation, other than case-relation ( आख्यातानुपयोगे कारकमिति चेदकथितत्वात् कर्मसंज्ञाप्रसङ्गः ) अकारकमिति चेदुपयोगवचनानर्थक्यम् Vār. 2 on P. i. 4. 29; अवकाशोऽकारकमिति चेन्नास्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति Vār.11 *on* P. ii. 3. 1; सुप्सु पुनः प्रातिपदिकार्थनामेकत्वादीनां चाकारकेषु कारकान्तरेषु व्यभिचारात् TantrVā. 960. 11 (iii. 4. 13); न चाकारकस्य सतः आख्यातेन संबन्धोऽवकल्पते TantrVā. 970. 19 (*on* iii. 4. 13); न चोपाध्यायस्य कंचिदभिप्रेयमाणस्य व्यापारमुत्पश्याम इत्यसावकारकमेव तत्र स्यात् NyāyMañ. i. 383. 7; अकारकादपि दत्तश्रुतयोरन्त उदात्तो भवति । संश्रुतः । विश्रुतः KāśiVr. on vi. 2. 148; SiddhāKau. 651A. 1; **2** which is not a cause, other than the cause त्रयमेतदकारकम् AgniP. 376. 12; अकारकक्रियाकार्थं रूपं प्राक् प्रतिबोधतः । बुबोधयिषितं भोक्तुः BrĀraUBhVā ii. 1. 207; एवं सति कर्तृव्यावृत्तेस्तदुपहितसीमसमस्तकारकव्यावृत्तावकारककार्योत्पत्तिप्रसङ्गः ĀtmaTaVi. 854. 15.

**अकारक** ( a-kāraka ) *adj.* **1** who is not active or engaged in activity नामादिभ्यः परो भूमा निष्कलोऽकारकोऽक्रियः । स एवात्मवतामात्मा स्वतःसिद्धः स एव नः NaiṣkaSi. 79. 4; 93. 4; 102. 1; 149. 4; तथा ह्यकारकः कामी स्वर्गकामपदार्पितः । नियोगात् कर्मसंबन्धे पश्चाद्यातीह कर्तृताम् BrĀraUBhVā. (Sambandha.) 523; अकारकस्यापि व्यापारशून्यस्यापादानसंज्ञा प्राप्नोति PadMañ. *on* i. 4. 23; अस्मदादिज्ञानस्याप्यतीतानागतैरसत्त्वादकारकैरसंबन्धप्रसङ्गात् S'atDū. 101. 19; धनाय गच्छति स्वर्गाय यतत इत्यादावकारकयोर्धनस्वर्गयोरतिव्याप्तिः BhāṭṭCin. i. 95. 29 (*on* i. 1. 4); **2** not doing any action, not producing anything, not an agent आत्मा ह्यात्मानमैकात्म्यादात्मना वेत्त्यकारकः BrĀraUBhVā. i. 4. 297; i. 4. 1309; i. 4. 1403; iv. 3. 304; iv. 3. 312;कारकोऽन्यः, अकारकस्तदन्यः, तयोर्यः स्वभावः स भिन्नोऽपि भेदाविवक्षयैकत्वेनोक्तः HetuBiṬ. 125. 8; न हि स्वरूपेणाकारकः कारको नाम BodhiCaPañ. 261. 1;अथासिद्धं कथं प्रमाणम् । न ह्यसिद्धं कारकं नाम । नाप्यकारकं करणं नाम । नाप्यकरणं प्रमाणम् NyāyVārPari. 181. 3; तथा सति दृश्यं रूपमकारकमदृश्यं किंचित् कारकत्वनिर्वाहकं रूपमिति स्यात् NyāyKu. 27. 11; अवस्तुग्राही च व्यावृत्तिवादिनां शाब्दः प्रत्ययः स विभ्रमवशादकारकेऽपि कारकाध्यवसायी प्रवर्तयति PramāVāSvopVr. 32. 5; उपदेशः शब्द इत्युच्यमाने पर्यायमात्रोच्चारणादकारके शब्दमात्रे प्रसक्तिः NyāyMañ. i. 137. 4.

**अकारकता** ( akāraka-tā ) *f.* the nature of not being a case-relation लावकः पाचको वेति कारकस्य सतो यतः । संभेदोऽयं क्रियाभिः स्यान्नातोऽकारकतान्वितः BrĀraUBhVā. iv. 3. 1772; नापि कारकतया क्रियान्वयनियमेऽप्यकारकतया यागे तस्यान्वयः । भेदान्वयस्य बाधितत्वात् GuruCandr. i. 315. 4.

**अकारकत्व** ( akāraka-tva ) *n.* **A** the nature of not being a case-relation or not being syntactically connected with the main verb अकारकार्हाणां चाकारकत्वे Vār. 4 *on* P. ii. 3. 36; आचार्यस्य शिष्यं धर्मं पृच्छति । आचार्यस्य शिष्यविशेषणत्वादकारकत्वम् JaineVyā. 37. 14 (*on* i. 2. 109); रात्रावश्नाति पूर्वस्यां दिशि विहरतीति कालादीनामव्यापारत्वादकारकत्वमेव भवेत् NyāyMañ. i. 383. 26; लौकिकं हि क्रियाकारकलक्षणसंबन्धमाश्रित्य द्रव्याणां क्रियापत्तिः न पुनस्तादर्थ्यं, कर्मणोऽकारकत्वप्रसङ्गात् S'āstrDī. 151. 2 (*on* ii. 2. 11); न च धात्वर्थेन क्रियया संगतिः, अकारकत्वात् NyāyRa. 871. 11 (*on* 23. 89); न हि कारकान्तरे सत्यपि स्वात्मापि कारकं भवति । तथा च सति कारकाणां व्यभिचारादकारकत्वप्रसङ्गः NyāyKu. 72. 6; तत्रापि नटादिनिमित्तं गाथादेः श्रवणं करोतीत्यर्थः न तु गाथादिविशेषणं नटादिः, अकारकत्वप्रसङ्गात् PadMañ. *on* KāśiVr. *on* P. i. 4. 29; संबन्धसामान्येन धात्वर्थसंबन्ध उच्यते ततः अकारकत्वेन भावनासंबन्धाभावेन अविवक्षापत्तिः MīmāKau. i. 154. 20 (*on* i. 4. 1); न च निर्वापक्रियैवाग्नेरन्वयोऽस्त्विति वाच्यम् । अकारकत्वात् Mayū-Māli. 593. 15 (*on* ix. 1. 12); **B** the state of being not productive, state of being inactive तेषामपि पररूपेण कर्तृत्वे स्वयमकारकत्वात् । ततः सर्वेषामेवं स्वयमकारकत्वे पररूपेणाप्यकारकत्वात्, सर्वथा कारकोच्छेद एवेति न किंचित् कुतश्चिज्जायेत HetuBiṬ. 124. 2; वचनस्याकारकत्वात् न हि वचनं वस्तुनोऽन्यथाकरणे व्याप्रियते PraśnaUBh. 295. 16 (*on* 6. 2); BrĀraUBh. 127. 8 (*on* i. 4. 10); न तावत्तज्ज्ञानं रूप्यमभावीकरोति, अकारकत्वाज्ज्ञानस्य IṣṭaSi. 117. 15; तमोध्वंसातिरेकेण सम्यग्ज्ञानस्य नापरम् । फलमण्वपि संभाव्यं ज्ञानस्याकारकत्वतः BrĀraUBhVā. i. 4. 1261; i. 2. 116; iii. 8. 175; अकारकत्वे हि यवबीजस्य क्षित्युदकसंनिधौ शालिबीजाद्यङ्कुरोऽपि स्यात् NyāyKa. 77. 1; शशविषाणस्याकारकत्वम् ĀtmaTaVi. 552. 8; ननु नेश्वरज्ञानं प्रमा, नित्यत्वेनाफलत्वात् । नापि प्रमाणम्, अकारकत्वात् NyāyKuA. ii. 28. 1; अभावस्य सर्वत्राप्यकारकत्वात् MānaMe. 260. 5; किमिदमपूर्वम्···न च दध्यादिद्रव्यवत् । अकारकत्वात् । अकारकत्वं चामूर्तत्वात् Kāśi. i. 169. 6 (*on* 2. 906); किमिदमपूर्वं नाम । यदि तावत् कर्मशक्तिः फलशक्तिर्वा, नासौ साधनं साध्यं वा । शक्तेरकारकत्वात् Kāśi. i. 162. 10 (*on* 2. 197)

**अकारकधी** ( akāraka-dhī ) knowledge of not being a case-relation कारकाकारकधियोर्नैकदैकत्र वस्तुनि । विरोधात्संभवोऽस्तीह प्रकाशतमसोरिव BrĀra-UBhVā. (Sambandha.) 167.

**अकारकवस्तु** ( akāraka-vastu ) *n.* a non-cause, an object which does not produce anything परिलोपो हि कार्याणां लोके सिद्धः स्वकारणे । नातः कारणरूपस्य नाप्यकारकवस्तुनः BrĀraUBhVā. iv. 3. 1436.

**अकारकस्वभाव** ( akāraka-svabhāva ) *adj.* having the nature of inactivity, of the nature of not doing anything अकारकस्वभावस्य परमार्थात्मवस्तुनः । अविद्याकल्पितैव स्यात्संगतिः खेऽसितादिवत् BrĀraUBhVā. iv. 3. 391.

**अकारकस्वभावत्व** ( akārakasvabhāva-tva ) *n.* the nature of being non-productive, the inactive nature अकारकस्वभावत्वादद्रष्टृत्वमिधीयते BrĀra-UBhVā. iv. 3. 1804; iv. 3. 1476.

**अकारकात्मन्** ( akārakātman ) *adj.* of the nature of a non-factor in an activity, which is not a factor of activity or action वाक्यार्थोऽसत्त्वभूतत्वादेतैर्न च विशिष्यते । क्रियाद्वाराथ कल्प्येत सापि नाकारकात्मनः S'lokaVār. 7. 89 (871. 1); घटकुम्भकारवदकारकात्मनस्तव कारणत्वमनुमीयते बुधैः HarVi. 6. 73; अकारकात्मना तस्थौ प्रत्यग्दृष्टिरसंगतः BrĀraUBhVā. iii. 4. 83.

**अकारकाधार** ( a-kārakādhāra ) *adj.* not abiding in the locus of the activity; ( akārakādhāra ) situated in something other than the factors of activity द्विविधं हि क्रियाणां प्रयोजनं कारकाधारमकारकाधारं च ।···अकारकाधारं पुनर्विपर्यतामप्रतिपद्यैव प्रयोजनीभवति । यथा स्वर्गो यागस्य यथा च वेतनलाभादयः पच्यादीनाम् BālaKrī. i. 3. 4 (*on* 1. 1-4)

**अकारकाधार** ( akārakādhāra ) *m.* the locus or substratum which is not a *kāraka* वीणायां शब्दः कर्णे शब्दः···एषु कारकतानिर्वाहाय भवतीत्यध्याहारः । अथवा सप्तम्यधिकरणे चेति चकारेणाकारकाधारवाचिनोऽपि सप्तमी VyutpaVā. 188. 7.

**अकारकार्ह** ( a-kārakārha ) *adj.* not fit to be a factor of production, not worthy of being an active factor, not deserving a case-relationship (with the main verb) अकारकार्हाणां चाकारकत्वे Vār. 4 *on* P. ii. 3. 36; तद्विपर्यासे चेति । कारकार्हाणामकारकत्वेऽकारकार्हाणां च कारकत्व इत्यर्थः PadMañ. *on* KāśiVr. *on* P. ii. 3. 36.

**अकारचैतन्य** ( akāra-caitanya ) *n.* the psychic force of *akāra* (i. e. the sound or letter *a*) मिश्ररस्तु तत्समष्टिः कामाख्यो रविरकारचैतन्यम् Variva-Raha. 71.

**अकारज** ( akāra-ja ) *adj.* [ *f.* -ā ] born of the sound or letter *a*, produced from *a* सृष्टिर्ऋद्धिः स्मृतिर्मेधा कान्तिर्लक्ष्मीर्द्युतिः स्थिरा । स्थितिः सिद्धिरिति प्रोक्ता यथाक्रममकारजाः TantrSa. 8. 39.

**अकारण** ( a-kāraṇa ) *adj.* [ *f.* -ā ] **1 A** which has no cause (producing it) (said with reference to some ultimate principle such as Ātman, Avyakta, Ādideva, Viṣṇu etc.) सर्वभूतानां कारणमकारणम्···जगतः संभवहेतुरव्यक्तं नाम SuśruS. iii. 103 = BhāvPra.(Bhā.) 2. 4; यद् विभु सर्वगतं नित्यं भूतयोनिरकारणम् ViṣṇuP. vi. 5. 67; संपत्तिकारणमकारणमादिदेवम्···नृसिंहम्··· प्रणमामि DaśKuC. 147. 2; अकारणस्य नित्यं सत्त्वमसत्त्वं वा स्यात् PrakaPañ. 200. 6; सदकारणं च यत् तदविनाशि गगनवत् PrakaPañ. 343. 5; संयुक्तं राममन्त्रेण पुरुषान्तमकारणम् ।···वह्निभूतं विशोधयेत् AgniP. 74. 21; अहंधिया चात्मा स्वरूपत्वेन भातः सन्नकारणश्च कारणकल्पने मानाभावात् NayaVi. 220. 6 (*on* i. 1. 5); ईश्वरमभयमुदारं पूर्णमकारणमपह्नुतात्मानम् । सहसाभिज्ञाय कदा स्वामिजनं लज्जयिष्यामि Stotrā. 9. 6; कारणपुरुषमकारणम्···विष्णुं ध्यायन्न सीदति ĀtmaBoU. 1; ( इदं पदं ) अनामयम्···अकारणम् MahāU. 5. 45; **1 B i** which has no cause (producing it or bringing it about) (said of other things in general) इदं ततमनेकात्म मायामयमकारणम् । विश्वम् YogVā. iii. 96. 9; जगत्त्वम्···। अनामयमनाभासमनामकमकारणम् YogVā. iii. 119. 22; सर्वे भावाः स्वकारणसत्तासंबन्धाभिव्यक्तितद्विरोध्याश्रयविनाशानुविधानेन विनश्यन्ति । अकारणस्य विनाशानभ्युपगमात् NyāyVā. 416. 5 ( *on* iii. 2. 14); अकारणोत्पत्तिर्भविष्यतीति न युक्तमदृष्टत्वादिति NyāyVā. 464. 10 ( *on* iv. 1. 21 ); न चाकारणेन कार्येण भवितव्यम् BrahmSūBh. (S'aṅ). 368. 7 (*on* ii. 2. 12); जगदजमकारणं च भवेत् ब्रह्मवत् IṣṭaSi. 152. 6; अकारणं सत् कार्यं चेड्डिम्भकैरपि हस्यते BrĀraUBhVā. i. 4. 427; ननु चाकारणस्य मिथ्याप्रत्ययस्याप्युत्पादो न घटते Bṛha. 70. 5 (*on* i. 1. 1); अकारणस्य कादाचित्कत्वस्य परमार्थवस्तुत्वाभावात् PañcPā. 73. 6 (*on* i. 1. 1); न त्वकारणं कार्यं जायते TātpaṬ. (Vā.) 8. 18 (*on* i. 1. 1); अकारणस्य हि कार्यस्य नित्यं सत्त्वमसत्त्वं वा स्यादनपेक्षत्वान्न कादाचित्कत्वम् TātpaṬ (Vā.) 160. 13 (*on* i. 1. 5); सर्गः महदादिभूम्यन्तः प्रकृत्यैव कृतो नेश्वरेण न ब्रह्मोपादानो नाप्यकारणः SāṃkhyaTaKau. 460. 5 (*on* 56); यद्येवमकारणं तर्हि स्वतःसिद्धत्वं प्रागभावाद्यसिद्धेः ĀtmaSi,

22. 24; कारणं हि योनिशब्दार्थः तदभावे कथं कार्यं, अकारणस्य तस्य अनुपपत्तेः TarkaSaṁ.(Ā.) 33. 17; अकारणं यथा ज्ञानं प्रमात्वमधिगच्छति । अकारणं तथा वाक्यं स्वतः प्रमितिकारणम् NyāyPari. 381. 4; शुक्तिकाया रजताकारपरिणामः किं सकारण उताकारण: NyāySu.(Ja.)41B. 5 (*on* i. 1. 1); यदकारणं तन्नित्यम् MānaMe. 89. 7; तार्किकैर्यन्नित्यमकारणमभ्युपगतं पारिमाण्डल्यादि S'ivārkaMaDī. i. 149. 30 (*on* i. 1. 3); **1 B ii** taking place without effort त्वग्लोमनखकेशेषु दन्तोष्ठनयनेषु च । स्नेहो येषां तु दृश्येत तेषामर्थमकारणम् । अकारणम् अयत्नसिद्धं कार्यं भवतीत्याशयः VīraMi.(Lakṣaṇa.) 30. 13; **2** which has no ground or reason, groundless तस्मात् स्यात् कलहो यत्र गृहे नित्यमकारणः । तद्गृहम्…परिवर्जयेत् Pañcā. 278. 3; चिरस्य खलु काकुत्स्थ पश्यामि त्वामिहागतम् । श्रुतं तव मया चेदं विवासनमकारणम् Rāmā. ii. 48. 19; भाव्यं हि कारणेनात्र न ते हास्यमकारणम् MahāBhā. xiii. 10. 46; तव हि… अकारणानि हसितानि MaitaVi. 6; इति निश्चित्य सोऽभ्येत्य राज्ञः कोपमकारणम् । वधान्तं कथयित्वा मे शकटालोऽब्रवीत् ततः KathāSaSāg. i. 5. 41; (भाषादोषास्त्वकारणाः) ये पुनरागमादयः अकारणाः विना निवेशकारणं भाषायां निविष्टास्ते भाषादोषा इति प्राहुरित्यर्थः SmṛtiCan. iii. 90. 1; युद्धमेतदकारणम् BallāC. 18. 2; **3** which has no justification, unjustified, baseless, false अग्निहोत्रमधीतं वा दानाद्याश्चाखिलाः क्रियाः । भजन्ते तस्य वैफल्यं यस्य वाक्यमकारणम् MārkP. 8. 19; तदा भेदकल्पनमकारणम् BrahmSi. 55. 1; BhāgP. i. 5. 12; यच्चोक्तं प्रियसंयोगा न नित्यास्तदकारणम् SamarāSaṁ. 3. 204; **4** not actuated by any motive, spontaneous, disinterested चेत्त्वं बन्धुरकारणोऽसि…देव मम तद्देयाः पुनर्दर्शनम् VasaViKā. 10. 89; अहो अस्य वत्सलत्वमकारणम् SamarāSaṁ. 9. 704; **5** useless, serving no purpose अकारणं व्याकरणं शास्त्राणि विविधान्यपि । इति मत्वा नु सुधियः परलोकपरायणाः ParamāKā. 24. 26; महाराज हरिश्चन्द्र कथमहमकारणो नाम CaṇḍaKau. 5. 20 (8)

**अकारण** (a-kāraṇa) *n.* **1** not a cause (in a general sense) अकारणं तु सम्पद् बहवो ह्यविराट्संपन्नाः (यज्ञाः) कारणं चापूर्वस्य विधेर्न विद्यते LāṭyāS'S. x. 3. 9; द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम् VaiśeSū. i. 1. 16; अभिघातजे मुष(स)लादौ कर्मणि व्यतिरेकादकारणं हस्तसंयोगः VaiśeSū. v. 1. 3; i. 1. 31; MīmāSū. i. 4. 22; तस्मादकारणं ब्रह्मवर्चसत्वादयोऽष्टत्वादीनाम् S'ābaBh. 353. 15 (*on* i. 4. 22); राहुरकारणमस्मिन्नित्युक्तः शास्त्रसद्भावः BṛSaṁ. 5. 13; दृष्टं तथैव रूपेण तत् प्रवृत्तेरकारणम् VibhraVi. 63; अथ तदभावः कारणं, तत् अकारणं स्यात् IṣṭaSi. 49. 13; NyāyKuA. i. 77. 5; i. 104. 6; i. 170. 2; परत्वापरत्वद्वित्वपृथक्त्वादीनि अकारणानि TārkiRa. 154. 6; नियतपूर्वभावि चाकारणं चेत्यनुपपन्नम् NyāySu.(Ja.) 51B. 1 (*on* i. 1. 1); न हि विनापि कारीर्यां वृष्टिर्दृष्टेति तदनुष्ठानं वृष्ट्यावकारणं भवति TattvPrakā. 149A. 7 (*on* iii. 2. 1); न तु सर्वथाप्यकारणमेव कर्म Upask. 46. 5 (*on* i. 1. 31); MīmāKau. i. 267. 22 (*on* i. 4. 22); अकारणमपि द्वारं कार्येऽनुगच्छति SiddhāLeSaṁ. 64. 2; **2** not an important or effective cause इष्टापूर्तफलं न स्यान्न शिष्यो न गुरुर्भवेत् । पुरुषः कर्मसाध्येषु स्याच्चेदयमकारणम् MahāBhā. iii. 33. 28; अंशावतरणं विष्णो यदिदं त्रिदशैः कृतम् । क्षयाय पृथिवीन्द्राणां सर्वमेतदकारणम् HariVaṁ. 44. 13; न हि भेषजसाध्यानां व्याधीनां भेषजमकारणं भवति CaraS. i. 10. 5; अकारणं रूपमकारणं कुलं महत्सु नीचेषु च कर्म शोभते PañcRa. 2. 33; Pañcā. 131. 12; 176. 19; 268. 19; वहन्ति शिबिकामन्ये सन्त्यन्ये शिबिकां गताः । अकारणं हि वक्तृत्वं व्युत्थानं केवलं जरा Tantrākhyā. 78. 6; असत्यां ह्याकाङ्क्षायां संनिधानमकारणं भवति S'ābaBh. 1443. 3 (*on* vi. 4. 23); नन्वसति न्याये लिङ्गमकारणम् S'ābaBh. 1574. 11 (*on* vii. 4. 7); अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् NyāyBh. 66. 4 (*on* i. 2. 9); निर्देशे लिङ्गसंख्यानां संनिधानमकारणम् VākyaP. 2. 308; 2. 306; BṛĀraUBh. 172. 10 (*on* i. 5. 2); अन्यस्मिन्नपि दृष्टश्च तस्माद्देशोऽप्यकारणम् TantrVār. 190. 4 (*on* i. 3. 17); अकारणं सत्यमकारणं तपः… । पुराणमेकं नृषु कर्म कारणम् RāmC. 4. 65; NyāyMañ. i. 19. 21; BṛĀraUBhVā. i. 5. 47; BhāgP. viii. 11. 36; KathāSaSāg. iii. 4. 64; अतस्तत्र योग्यत्वमकारणम् NyāyRaMā. 118. 18; तस्माज्जातिरकारणम् KumāCaSaṁ. 60. 24; तस्मादकारणमर्थापत्तिः सामान्यसिद्धावित्यर्थः YuktiSneha. 37. 35 (*on* i. 1. 4); **3** not the (*material*) cause तस्यां च निवृत्तायां मोक्षं गच्छति । एवमीश्वरादीनि अकारणानि MāṭhVṛ. 76. 12 (*on* 61); नाकारणमधिष्ठाता नित्यं वा कारणं कथम् PramāVār. 2. 177; S'vetāUBh. 63. 7 (*on* 1. 3); अकारणं सदज्ञानात् कारणत्वं यथैत्यजम् BṛĀraUBhVā. i. 2. 128; सदप्यात्मादिकं सर्वं दर्शनादावकारणम् BṛĀraUBhVā. i. 5. 107; इह कारणमेव कथमकारणं भवति Bhāsk. ii. 37. 5 (*on* ii. 2. 2); बीजधरणीधामसलिलानीत्यकारणान्येवाङ्कुरोत्पत्तौ TattvPradī. (Ci.) 322. 6; VedāntKa. 96. 24 (*on* i. 1. 4); न हि प्रतिबद्धं कार्यमजनयत् कारणमकारणं भवति NyāySu.(Ja.) 9A. 3 (*on* i. 1. 1); विसदृशमेतदकारणम् NyāySu.(Ja.) 340B. 2 (*on* ii. 2. 6); स्वभावशब्दात्…तत्संबन्धिवस्त्वन्तरग्रहणेऽकारणात् कार्योत्पत्तिकथा-(त्वा ?)पत्तेः SarvaMaSaṁ. 24. 21; **4** not the cause, something different from (or similar to) the cause कारणसंयोगिभिरकारणैः कारणाकारणसंयोगपूर्वकः कार्याकार्यगतः संयोगः PadārthSaṁ. 140. 1; नाकारणात् कारणाद्वा कारणाकारणाच्च च । शरीरग्रहणं वापि धर्मत्राणाय केवलम् ViṣṇuP. v. 1. 51; यथा तत् कारणं वस्तु तथैव तदकारणम् PramāVār. 2. 21; न ह्यकारणे कार्यस्य संप्रतिष्ठानमुपपद्यते PraśnaUBh. 290. 1 (*on* 6. 1); अथाकारणेनैव प्राग्गुत्पत्तेः संबन्धः सोऽन्यदापि समस्ति IṣṭaSi. 53. 7; अन्यस्यान्येन सहाकारणेन चेत् स्वाभाविकः संबन्धो भवेत् TātpaṬ. (Vā.) 166. 1 (*on* i. 1. 5); अकारणात् कार्यस्य सकृदप्युत्पादायोगात् TarkBhā.(Mo.) 22. 13; SarvaDaKau. 26. 20; अकारणात् कार्यजन्म चतुर्थी स्याद्विभावना Kuval. 80; RasGaṅ. 581. 14; अकारणाद्विरुद्धाद्वा कार्योत्पत्तिर्निबध्यते । विभावनाद्वयं तत्र ज्ञेयमन्यद्विचक्षणैः AlaṅkāMaṅ. 127. 2; न चाकारणे प्रधाने जीवस्य लयो न संभवतीति वाच्यम् S'ivārkaMaDī. i. 200. 23 (*on* i. 1. 10); **अकारणात्** (a-kāraṇāt) *adv.* for no reason, without any cause अवेक्षमाणः को धर्मं त्यजेत् पुत्रमकारणात् Rāmā. ii. 18. 6; मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात्…स्वयंदत्तस्तु स स्मृतः ManuSm. 9. 177; जीवद्विभागे पिता…। न चैकमकारणान्निर्विभजेत ArthS'ā. ii. 33. 3 (3. 5); नाकारणात् सङ्गमियाज्ज्यायसा वेतरेण वा NītiSā. 11. 33; अकारणात् परित्यक्तः…इति मैत्र्याः समाख्याताः NītiSā. 18. 37; नाकारणात् कारणाद्वा कारणाकारणाच्च च । शरीरग्रहणं वापि धर्मत्राणाय केवलम् ViṣṇuP. v. 1. 51; अन्येषाञ्चाल्पकायानामहर्निशमकारणात् ।…तथा करोति विज्ञानि MārkP. 20. 44; अकारणादेव चाजायत गरीयसी दुःखासिका HarṣaC. 211. 10; प्रत्यक्षश्रुतिविध्यन्तविहितानामकारणात् । त्यागोऽतिसाहसं मन्ये ननु यागादिकर्मणाम् BṛĀraUBhVā. (Sambandha.) 309; ManvaMu. 407. 20 (*on* 1. 233); अकारणात् स्थूलतरो नरोऽचिरादकारणादेव कृशः स्वयं भवेत् KalyāKā. 26. 13; यदि होमार्थमानीतो नश्येद्बहिरकारणात् ParaS. 9. 36; द्विविधमौत्सुक्यं भवति–कारणादकारणाच्च DhūrtaViSaṁ. 2. 19. अकारणाद् द्वयोरेव कारणाभासतस्तथा । प्रोषन् प्रणय एवायं व्रजेन्निर्हेतुमानताम् UjjvaNīMa. 534. 7; BālaKrī. i. 146. 10 (*on* i. 221); अकारणात् व्याध्यादिव्यतिरेकेण तत्प्रामिर्नाचामेदित्यर्थः VīraMi. (Āhnika.) 66. 20; अकारणात् पातित्यादिकारणमन्तरेणैव VīraMi. (Vyavahāra.) 479. 11; **अकारणे** (a-kāraṇe) *adv.* for no reason, without any cause न खल्वकारणे कोपमाहरेन्नरसत्तमः Rāmā. iv. App. i. 17. 18; दण्डेन च प्रजा रक्ष मा च दण्डमकारणे Rāmā. vii. 79. 8; अकारणे च विक्रोष्टा YājñaSm. 2. 234; प्रियसुहृदमकारणे गृहीतं रिपुभिः…।…मोचयामि Mṛcch. 4. 27; (गौः)…अकारणे क्रोशति चेदनर्थः BṛSaṁ. 92. 2; MatsyaP. 4. 13; अकारणे त्वया देवी न व्यथयितव्या Ratnā. ii. 14. (27); iii. 18. (2); संकेते च व्यपेक्षायां नित्यसामर्थ्यलक्षणः । किमकारण एवायं संबन्धः परिपोष्यते TattvSaṁ. 2661; एवं गुणवतः पुत्रस्याकारणेऽन्यकरणम् ManuBh. ii. 193. 11; (*on* 8. 275); कुप्यत्यकारणे कोपं न नियच्छति याचिता BhāvPra.(S'ā.) 102. 10(4); अकारणे पातित्यादिकारणाभावे Subodhi. 60. 14 (*on* 2. 132); **अकारणेन** (a-kāraṇena) *adv.* without cause or reason अनिर्देश्ये प्रवृत्तिर्वै स्वामिकाकारणेन तु BrahmāṇḍP. iii. 2. 292; तस्मिंश्चासति कथमकारणेन कार्यकारणसंबन्धो जन्यते HetuBiṬ. 48. 13; अकारणेन लौकिकेष्वर्थेषु वाक्कलहः ManuBh. i. 169. 29 (*on* 2. 179); शीतोष्णेच्छुरकारणेन बहुभुक् स्निग्धप्रसन्नाननः RasRaSa. 13. 20; किम्…दग्धमकरोः…सहकारमकारणेन AnyoMuLa. 32; वसन्तस्वभावः…मे…अकारणेनौत्सुक्यमुत्पादयति PadmPrā. 25. 14.

**अकारणक** (akāraṇa-ka) *adj.* **1** causeless, not having any cause (producing it) न ह्यकारणकं जायते IṣṭaSi. 70. 13; अकारणका हि नित्याः NyāyKuA. i. 111. 2; अकारणकमेवातो ब्रह्म सिद्धमिदं स्थितम् YogVā. ii. 19. 33; अतस्तस्मिन्नकारणके साध्यमाने सिद्धसाध्यतैव Kāśi. i. 92. 17 (*on* 2. 55); ज्ञानं हि कार्यं न तावदकारणकं निष्पद्यते Kāśi. ii. 174..14 (*on* 5. 206); अनुच्चरितशब्दज्ञानमपि सर्वज्ञज्ञानवद्धर्मधर्मिज्ञानवच्चाकारणकमेवेति NyāyRa. 88. 17 (*on* 2. 143); कथमकारणकस्य विनाशस्य सिद्धिः NyāyRa. 736. 11 (*on* 22. 24); संयोगविभागावकारणकावेव स्याताम् NyāySu. (Ja.) 163A. 4 (*on* i. 2. 2); **2** baseless, unfounded व्यवधानकल्पनमकारणकम् SaṁkṣeS'ā. i. 374; सोऽयमेषामकारणकस्त्रासः S'āstrDī. 61. 13 (*on* i. 1. 5); प्रद्वेषो नाकारणकः AdvaiSi. 790. 14; **3** not caused or actuated by any motive, spontaneous स्नेहोऽकारणकः सीते वर्धमानो मम त्वयि PadmP. iv. 66. 88.

**अकारणककार्य** (akāraṇaka-kārya) *n.* effect (produced) without a cause अकारणककार्यप्रसङ्गः NyāKuA. ii(1). 238. 9.

**अकारणककार्यत्व** (akāraṇakakārya-tva) *n.* the state of an effect without a cause अन्यथाकारणककार्यत्वं तस्य च नित्यत्वमलौकिकत्वं ततश्च पश्यत्यचक्षुरिति विरोधः AṇuBh. 192. 11 (*on* iii. 2. 16)

**अकारणककार्योत्पत्ति** (akāraṇaka-kāryotpatti) *f.* production or origination of an effect without a cause अनग्निरपि धूमवान् भवेदित्याशङ्कायामकारणककार्योत्पत्तिप्रसङ्गेऽभिहिते TārkiRa. 197. 5; नियतप्रतिग्रहादिहेतूनां च क्रत्वर्थत्वेनान्यार्थत्वादकारणककार्योत्पत्त्यभावाच्च स्वत्वमेव नोत्पद्यते Subodhi. 44. 30 (*on* 2. 100)

**अकारणककार्योत्पाद** (akāraṇaka-kāryotpāda) *m.* production or ori-

gination of an effect without a cause एवं च कर्तृव्यावृत्तेस्तदुपहितसमस्तकारकव्यावृत्तावकारणककार्योत्पादप्रसङ्ग इति स्थूलः प्रमादः SarvaDaSaṁ. 11. 184.

**अकारणकत्व** ( akāraṇaka–tva ) *n.* the characteristic of being causeless अकारणकत्वादवस्तुनः Kāśi. i. 86. 4 (*on* 2. 39); व्यक्तेरकारणकत्वानुपपत्तेः KhaṇḍanKhā. 524. 12; स चायं (समवायः) नित्यः अकारणकत्वात् Upask. 350. 5 (*on* vii. 2. 26)

**अकारणकत्वप्रसङ्ग** ( akāraṇakatva–prasaṅga ) *m.* the possibility or contingency of not having a cause, the result of becoming causeless घटाङ्कुरादेः कथं योगीच्छामात्रेण जन्म स्यात् अकारणकत्वप्रसङ्गात् तेषां वा अकारणत्वप्रसङ्गात् PratyabhiVi. ii. 171. 3 (ii. 4. 10) ( Bhāsk. घटाङ्कुरादेः कारणरहितत्वप्रसङ्गात् )

**अकारणकारुणिक** ( akāraṇa–kāruṇika ) *adj.* compassionate without any specific reason, naturally compassionate, sympathetic without any consideration किसलयानि कुतः कुसुमानि वा क च फलानि तथा वनवीरुधाम् । अयमकारणकारुणिको यदा न तरतीह पयांसि पयोधरः BhojPra. 45. 20.

**अकारणकार्य** ( a–kāraṇakārya ) *adj.* which is neither a cause nor an effect अस्थूलाशद्बनेतीति सर्वमात्रादिनिह्नुतेः । कुतोऽकारणकार्येऽस्मिञ्शुक्लादेः संभवः परे BṛĀraUBhVā. iv. 4. 567.

**अकारणकार्योत्पत्ति** ( akāraṇa–kāryotpatti ) *f.* production or emergence of a result without a cause अकारणकार्योत्पत्तिप्रसङ्ग इति चेन्न NyāPari. 383. 15; S'atDū. 83. 13; अत्र···अकारणकार्योत्पत्त्यादिप्रसङ्गो विपक्षे बाधकः तर्क उन्नेयः NyāySu. (Ja.) 5A. 10 (*on* i. 1. 1); 464B. 3 (*on* iii. 2. 1)

**अकारणकुपित** ( akāraṇa–kupita ) *adj.* [ *f.* -ā ] angry without cause or reason शल्यं सोढुं शक्येत···धीरैर्न पुनरकारणकुपितखलालीकदुर्वचनम् Kāvyālaṅ. (Ru.) 2. 17; अद्य खल्वकारणकुपितापि देवी प्रसादनीया EI. viii. 115. 73.

**अकारणकृत** ( akāraṇa–kṛta ) *adj.* done without reason or cause, wantonly committed युष्माभिस्तानि चीर्णानि यान्यसाधूनि साधुषु । अकारणकृतान्येव तेषां वः फलमागतम् MahāBhā. ix. 3. 39.

**अकारणकोत्पत्ति** ( akāraṇakotpatti ) *f.* origination or production without a cause अकारणकोत्पत्तेर्व्याहतत्वेन नित्यत्वापत्त्या तन्निरासकमोक्षोपायाननुसरणापत्तेः AdvaiSi. 787. 9.

**अकारणकोप** (akāraṇa–kopa ) *m.* anger or wrath without reason विद्याधरोऽहम्···दुर्वाससाकारणकोपमूर्तिना शप्तः AdhyāRā. iii. 1. 38.

**अकारणकोपन** ( akāraṇa–kopana ) *adj.* angry without cause or reason, naturally irascible अकारणकोपनाः कोङ्कणाः KathāK. 144. 5.

**अकारणक्रुद्ध** (akāraṇa–kruddha ) *adj.* angry without reason ये च कारणादभिक्रुद्धास्तानर्थमानाभ्यां शमयेत् अकारणक्रुद्धान् तूष्णींदण्डेन ArthS'ā. i. 55. 4 (1. 11); NītiSā. 13. 40.

**अकारणक्रोध** ( akāraṇa–krodha ) *m.* anger without reason or cause अकारणक्रोधकषायिताक्षाः···अन्योन्यमर्मस्वभिताडयन्ति VarāṅgaC. 6. 27.

**अकारणखलता** ( akāraṇakhala–tā ) *f.* wickedness without any reason or cause, wanton wickedness विष्णुमुनिः···व्यन्तरानिमिषैरकारणखलतास्थलिं बलिं सबान्धवमबन्धयत् YaśasCam. ii. 321. 21.

**अकारणगुणपूर्वक** ( a–kāraṇaguṇapūrvaka ) *adj.* not preceded by the qualities of the cause or causes, not produced by the qualities of the cause (i. e. material or intimate cause) बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दा अकारणगुणपूर्वकाः PadārthaSaṁ. 98. 21; 58. 8; अकार्यभूतेषु पार्थिवपरमाणुष्वकारणगुणपूर्वकः···गुणो नानुपपन्नः PrakaPañ. 326. 13; अकारणगुणपूर्वकस्य कार्यद्रव्यवर्तिनो विशेषगुणस्यासंभवान्न शरीरविशेषगुणश्चैतन्यम् ĀtmaSi. 7. 6; 8. 1; 11. 19; पार्थिवपरमाणुरूपादयः स्पर्शवद्विशेषगुणाः, अथ चाकारणगुणपूर्वकाः NyāyKa. 59. 22.

**अकारणगुणपूर्वकता** ( akāraṇaguṇapūrvaka–tā ) *f.* the state of what is not caused by the qualities of the cause ननु शरीरकारणेषु सूक्ष्ममात्रया ज्ञानमस्ति शरीरे तु स्फुटमतो नाकारणगुणपूर्वकता न चैकमत्यानुपपत्तिः Upask. 142. 11 (*on* iii. 1. 5)

**अकारणगुणपूर्वकत्व** ( akāraṇaguṇapūrvaka–tva ) *n.* the state of what is not caused by the qualities of the cause अत्र हेतुरकारणगुणपूर्वकत्वादिति । स्पर्शवतां शङ्खादीनां यानि समवायिकारणानि तेषां ये गुणाः तदनपेक्षत्वात् Kiraṇā. 106. 18; 165. 15; सुखमानन्दः । नासौ शरीरगुणः । वैशेषिकगुणत्वे सत्यकारणगुणपूर्वकत्वात् Aparā. 1013. 25 (*on* 3. 174)

**अकारणगुणोत्पन्न** ( a–kāraṇaguṇotpanna ) *adj.* not produced by the qualities of the causes, not arising out of the qualities of the causes अकारणगुणोत्पन्ना एते तु परिकीर्तिताः BhāṣāPa. 94.

**अकारणजगत्सृष्टि** ( akāraṇa–jagatsṛṣṭi ) *f.* creation of the world without any reason or purpose अकारणजगत्सृष्टिस्तथानुग्रह एव च ।···ब्राह्ममेतदनुत्तमम् LiṅgaP. i. 9. 48.

**अकारणजगद्वैरिन्** ( akāraṇa–jagadvairin ) *adj.* inimical to the world without reason विषाग्निसर्पशस्त्रेभ्यो न तथा जायते भयम् । अकारणजगद्वैरिखलेभ्यो जायते यथा MatsyaP. 211. 3; = ViṣṇuDhaP. ii. 38. 3.

**अकारणजन्यता** ( akāraṇajanya–tā ) *f.* production without a cause तत्किमजन्यतया स्यात् अकारणजन्यतया अतत्कारणजन्यतया वा Vādā. 107. 2.

**अकारणजन्यत्व** ( akāraṇajanya–tva ) *n.* production or origination without a cause कारणाजन्यत्वमजन्यत्वेन वा स्यात् अकारणजन्यत्वेन वा स्यात् Nyāyāmṛ. 542A. 4.

**अकारणज्ञ** ( a–kāraṇajña ) *adj.* ignorant of the cause, not knowing the cause or reason तमहं श्लक्ष्णया वाचा महार्णवमथाब्रुवम् । अकारणज्ञं देवानां त्रस्तं शापानिलेरितम् HariVaṁ. 43. 36.

**अकारणतस्** ( akāraṇa–tas ) *adv.* without cause or reason, causelessly, unreasonably गन्तुमुत्थितमकारणतः स द्योतयन्ति मदविभ्रममासाम् S'iśuVa. 10. 16 = SaraKaṇṭhā. 489. 10; वस्त्राभरणमाल्यानामकारणतः खण्डनं मलनं विभ्रमः NāṭaLaRaK. 2639–40; आस्तिकान् सततं निन्दन्नकारणत एव च ।···अचिराज्जायते मृतिः TantrRā. 27. 96.

**अकारणता** ( akāraṇa–tā ) *f.* **1** the state of not being a cause, a non–cause तथा हि कार्यं कस्यचित् सद्भावेऽप्यनवाप्तसत्ताकं पुनराप्तवत्सत्ताकं तस्य भाव एव परिगृहीतातिशयान्तरस्य कारणतां सूचयति न त्वकारणतामेव SphoṭSi. 29. 2; तस्यापि न कारणत्वमित्याचार्याणामाशय इत्यन्ये । तन्न । ज्ञानातिरिक्तं प्रत्येवाकारणताया आचार्यैरुक्तत्वात् SiddhāMu. 8. 20 (*on* 15); **2** the state of having no cause, being causeless काकानामभिषेकेऽकारणतां वृष्टिरनुभवति ĀryāSaS'a. 307.

**अकारणत्व** ( akāraṇa–tva ) *n.* **1** the state or condition of not being a cause, the nature of not (functioning as) a cause आत्मान्तरगुणानामात्मान्तरेऽकारणत्वात् VaiśeSū. vi. 1. 5; धर्माधर्मावात्मान्तरगुणानामकारणत्ववचनात् PadārthaSaṁ. 70. 13; 102. 12; अनुमानोपमानार्थापत्तीनामप्यकारणत्वमिति S'ābaBh. 22. 6 (*on* i. 1. 4); अथाकारणत्वप्रतिपादकं न प्रमाणमस्ति को ह्यस्य वाक्यस्यार्थः स्पर्शवदेतत् स्यादिति NyāyVār. 233. 8 (*on* ii. i. 31); कालादीनामकारणत्वं दर्शयति संयोग एषामित्यादिना S'vetāUBh. 60. 9 (*on* 1. 2); तथा देवतायाः सत्यप्यैश्वर्ययोगे न द्युमूर्धत्वादिकल्पना संभवति अकारणत्वात्परमेश्वराधीनैश्वर्यत्वाच्च BrahmSūBh.(S'aṅ.) 136. 16 (*on* i. 2. 27); ब्रह्मणोऽकारणत्वाच्च सृष्टौ हेतोरसंभवः TaiUBhVā. 71. 2(2); अकारणत्वं समवाय्यसमवायिकारणत्वाभावः न तु निमित्तकारणत्वप्रतिषेधो बुद्धिनिमित्तत्वाभ्युपगमात् NyāyKa. 20. 3; अतीतानागतविषयत्वं च विज्ञानस्य न स्याद् अतीतानागतयोरसत्त्वेनाकारणत्वात् TātpaṬ. (Vā.) 87. 25 (*on* i. 1. 1); 40. 25 (*on* i. 1. 1); 162. 20 (*on* i. 1. 5); S'arka. 18. 12; Kāśi. iii. 186. 15 (*on* 5. 80); SāṁkhyaTaKau. 493. 6 (*on* 67); NyāyRa. 892. 15 (*on* 7. 165); सत्स्वपि बीजेषु मूषिकाघ्रातेष्वङ्कुरानुत्पत्तेरकारणत्वं प्रतिभासते S'āstrDī. 80. 5 (*on* i. 1. 5); विशेषगुणविरहिणस्तस्याकारणत्वेऽप्राप्तेरन्यस्य कारणस्याभावात् Kiraṇā. 114. 17; 238. 14; चेतनांशं प्रति प्रधानस्याकारणत्वात् तज्ज्ञानेन चेतनांशो न ज्ञायते VedāntDī. 16. 14 (*on* i. 1. 9); संभरणस्य पुष्पाणां च मण्डनमस्त्रं प्रत्यकारणत्वाद्भ्रान्त( ? वार्त्त )मेतत् AlaṅkāSa. 126. 5; KhaṇḍanKhā. 1204. 24; धमार्थनिर्मितकूपादौ च प्रमादपातिब्राह्मणमृत्युहेतुता कूपकर्तुरापद्येत । न चैवमस्ति कारणकारणत्वेनाकारणत्वात् Aparā. 1042. 10 (*on* 3. 227); TattvPradī. (Ci.) 28. 5; NyāyKu. 78. 1; 161. 10; SyādvāMañ. 16 (124); VedāntPāSau. 193. 11 (*on* ii. 2. 19); हस्तसीकराणां मौक्तिकोत्पत्तिं प्रत्यकारणत्वात् Ekāva. 8. 36(32) (284. 3); S'atDū. 133. 28; अन्वयव्यतिरेकवतामपि सहकारिणामकारणत्वे दुर्निर्वहमुपादानस्यापि कारणत्वम् NyāySiA. 188. 22; TattvPrakā. 10A. 8 (*on* i. 1. 3); 152A. 2 (*on* iii. 2. 8); न हि शिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकस्यापाततः फलादर्शनमात्रेणाकारणत्वशङ्कापि Upask. 4. 4 (*on* i. 1. 1); 46. 4 (*on* i. 1. 31); 213. 4 (*on* iv. 2. 5); SarvaDaKau. 10. 2; 58. 16; YuktiSneha. 70. 26 (*on* i. 1. 5); 80. 30 (*on* i. 1. 5); SiddhāMu. 26. 24 (*on* 49); तात्पर्यनिश्चयस्याकारणत्वनिश्चयाद् बाधितविषयमनुमानम् S'ivārkaMaDī. i. 57. 5 (*on* i. 1. 1); i. 54. 3 (*on* i. 1. 1); i. 178. 24 (*on* i. 1. 4); PūrvottaVāNaMā. 76. 8; SiddhāLeSaṁ. 192. 2; GuruCandr. i. 414. 19; LaCandr. 270. 8; 731. 33; MīmāKau. i. 196. 13 (*on* i. 4. 4); VaiyāBhū. 119. 26 (*on* 25); BhāṭṭCin. i. 129. 1 (*on* i. 1. 5); तत्राकारणत्वाद्यारोपपूर्वककारणत्वादिबुद्ध्या च्विरिति तु न युक्तम् LaS'abdeS'e. ii. 401. 5; **2** the state or condition of not having a cause संबन्ध्यनित्यत्वेऽपि न संयोगवदनित्यत्वं भाववदकारणत्वात् PadārthaSaṁ. 328. 20; एवमकारणत्वश्रुतिरात्मनोऽग्निविस्फुलिङ्गदृष्टान्तश्रुतिविरोधात् प्रमाणान्तरविरोधाच्चापेक्षिकत्वेन व्याख्यातव्या Bhām. 476. 18 (*on* ii. 3. 9); सर्गः···न ब्रह्मोपादानो नाप्यकारणः । अकारणत्वे ह्यत्यन्ताभावोऽत्यन्तभावो वा स्यात् SāṁkhyaTaKau. 460. 5 (*on* 56); न च कर्तव्यस्वरूपसाधनत्वे क्रियामात्रात्तत्त्वविरहादकारणत्वप्रसक्तिः Kiraṇā. 340. 4; प्रधानस्य तु

न क्वचित् प्रवेशोऽकारणत्वादपि तु तत्सर्वकार्याणामव्यक्तं कारणम् एवमविभागः SāṁkhyaTaPra. 169. 3; NyāyKu. 100. 16; NyāyPari. 383. 16; शब्दो नित्यो गुणत्वे सत्यकारणत्वात् TarkBhā.(Ke.) 87. 12; नित्यो ध्वनिः अकारणत्वात् । यदकारणं तन्नित्यम् MānaMe. 89. 6.

**अकारणत्वतस्** ( akāraṇatva-tas ) *adv.* due to not being a cause, because of being a non-cause तदकर्तृत्वतो ब्रह्म विरजोऽकारणत्वतः BṛĀraUBhVā. iv. 4. 699; उरगादेः स्वजीवास्य ब्रह्मणोऽकारणत्वतः BṛĀraUBhVā. iv. 4. 923.

**अकारणत्वप्रसङ्ग** ( akāraṇatva-prasaṅga ) *m.* **1** the contingency of not being a cause इदानीं कारणाभिमतानामकारणत्वप्रसङ्गापादनं कुर्वन्नाह Tattv-SaṁPañ. 25. 20 (*on* 18); तन्त्वादीनामपि पटादीन् प्रत्यकारणत्वप्रसङ्गः TātpaṬ. (Vā.) 124. 20 (*on* i. 1. 4); 160. 15 (*on* i. 1. 5); तयोरकारणत्वप्रसङ्गात् NyāyKuA. i. 16. 2; उपाधित्वे वा सर्वेषामकारणत्वप्रसङ्गात् NyāyKuA. ii(b). 55. 7; स्थैर्यभाजो जगत एवाकारणत्वप्रसङ्गात् NyāyKuA. ii(b). 50. 3; नित्यविभूनां व्योमादीनां कालतो देशतश्च व्यतिरेकासंभवेनाकारणत्वप्रसङ्गात् TarkBhā.(Ke.) 28. 15; कारणाधिष्ठानौपयिकस्यास्य चाकारणत्वे प्रथमस्यापि कारणस्याकारणत्वप्रसङ्गात् NyāySiA. 231. 29; वह्नेरपि स्फोटं प्रत्यकारणत्वप्रसङ्गात् NyāySu.(Ja.) 9A. 4 (*on* i. 1. 1); तथाप्युत्पत्तौ च घटादौ रासभवद् व्यभिचारादग्निहोत्रादेरकारणत्वप्रसङ्ग इति चेदत्रोच्यते Vaiyā-Bhū. 86. 14 (*on* 22); **2** the possibility of not having any cause, being causeless कार्यस्याप्यनाश्रितत्वे समवायिकारणव्यावृत्तावितरयोरपि व्यावृत्तेरकारणत्वप्रसङ्गः Kiraṇā. 128. 18.

**अकारणत्वापत्ति** ( akāraṇatvāpatti ) *f.* the contingency of not having a cause, being causeless कारणान्तरजन्मनो हि कार्यस्य द्वयमपि कारणं न स्यात् । एकत्र भवतोऽन्यत्राभावेऽपि भावात् ततश्चाकारणत्वापत्तेः PrakaPañ. 200. 13= तन्निवृत्तेरप्यकारणत्वापत्त्या प्रयत्नायोगाच्च Vādā. 107. 5 ( Rāghavendra अकारणत्वापत्त्याकारणकत्वापत्त्या इत्यर्थः )

**अकारणदारुण** ( akāraṇa-dāruṇa ) *adj.* terrible without reason or cause आतङ्ककारणमकारणदारुणानां वक्त्रेण गालिगरलं निरगालि येषाम् PrabaCin. 92. 8= PurāPraSaṁ. 125. 24; KumāCaSaṁ. 23. 1; 97. 8.

**अकारणदूषण** ( akāraṇa-dūṣaṇa ) *n.* blame or censure without cause or reason घोणोन्नतं मुखमपाङ्गविशालनेत्रं नैतद्धि भाजनमकारणदूषणानाम् Mṛcch. 9. 16.

**अकारणद्विष्ट** ( akarāṇa-dviṣṭa ) *adj.* hostile without reason or cause अकारणद्विष्टैर्मदीयगुरुभिः सामप्रयोगोपक्रमेण कथंचिदपि न प्रतिपादितामपमानासहिष्णुतया प्रसिद्धमपहाय क्रममपहारादिना प्रकारेण मामुद्वोढुमिच्छन्नानुचितकारी त्वम् TilaMañ. 110. 4.

**अकारणद्वेष** ( akāraṇa-dveṣa ) *m.* hatred without cause or reason अकारणद्वेषपरो हि यो भवेत् PañcT. (Textus Simplicior) 1. 93 (103. 4); अकारणद्वेषहासक्लेशक्रोधादिकारिणम् ( गुरुः शिष्यं विवर्जयेत् ) KulārT. 13. 16.

**अकारणद्वेषिन्** ( akāraṇa-dveṣin ) *adj.* hating without cause or reason अकारणद्वेषि मनो हि यस्य वै कथं परस्तं परितोषयिष्यति PañcT. 1. 93 (103. 4) =Tantrākhyā. 29. 1; Pañcā. 71. 13; Hitopa. 2. 146; S'ārṅgaPa. 360; Subhāṣi. 430.

**अकारणनाश** ( akāraṇa-nāśa ) *m.* destruction of what is not a cause अकारणनाशेनाकार्यनाशासंभवात् S'ivārkaMaDī. ii. 75. 24 (*on* ii. 2. 13)

**अकारणनिरुद्ध** ( akāraṇa-niruddha ) *adj.* imprisoned or detained without cause or reason अकारणनिरुद्धश्च कारणाच्च विशेषतः ।…इति मेधाः समाख्याताः NītiSā. 18. 37.

**अकारणपरित्यक्तृ** ( akāraṇa-parityaktṛ ) *adj.* one who abandons (a person) without cause or reason अकारणपरित्यक्ता मातापित्रोर्गुरोस्तथा ManuSm. 3. 157; SmṛtiCan. v. 182. 4.

**अकारणपरित्याग** ( akāraṇa-parityāga ) *m.* abandonment without cause or reason प्रिये, अकारणपरित्यागानुशयदग्धहृदयस्तावदनुकम्प्यतामयं जनः पुनर्दर्शनेन S'āk. 6. 14 (3)

**अकारणपरित्रस्त** ( akāraṇa-paritrasta ) *adj.* troubled or anxious or frightened without cause or reason अकारणपरित्रस्तं हृदयं व्यथते मम Mṛcch. 7. 9

**अकारणपाटल** ( akāraṇa-pāṭala ) *adj.* reddish without cause, naturally reddish विश्लेषदुर्बलमकारणपाटलेन संसृज्यमानमपि गण्डतलं करेण । आपाण्डुरच्छविबभूव BhikṣāKā. 24. 6.

**अकारणपूर्वक** ( akāraṇapūrva-ka ) *adj.* not already found in the cause [pw.]

**अकारणप्रगुण** ( akāraṇa-praguṇa ) *adj.* abundant without cause or reason भद्र…अकारणप्रगुणं वात्सल्यम्, अनिमित्तसुन्दरो मैत्रीभावः सतां लक्षणम् NalaCam. 2. 24 (6)

**अकारणप्रतिपक्ष** ( akāraṇa-pratipakṣa ) *m.* enemy or rival without reason or cause समाहूताः सेवका निजवेश्मनि । अकारणप्रतिपक्षः कथयामास तानिति CampaS'reKa. 297.

**अकारणप्रसाद** ( akāraṇa-prasāda ) *m.* favour without reason or cause अकारणप्रसादोऽपि प्रस्तावं न विना शुभः PārśvC. 1. 354.

**अकारणप्राप्ति** ( akāraṇa-prāpti ) *f.* to attain (the nature of) a non-cause, to become not productive धर्मादीनामकारणप्राप्तौ SāṁkhyaKā. 67; धर्मो येषाम् आदिस्तानि धर्मादीनि, तेषां अकारणानां प्राप्तिरकारणप्राप्तिः । तथा सत्यां पुनर्जन्म न भवति MāṭhVṛ. 80. 20 (*on* 67); एवमेतानि धर्मादीनि…न समर्थानि । धर्मादीनामकारणप्राप्तौ संस्कारवशाद्धृतशरीरस्तिष्ठति SāṁkhyaKāBh. 34. 15 (*on* 67)

**अकारणबन्धु** ( akāraṇa-bandhu ) *m.* a relative or kinsman without reason, a natural friend कस्त्वमकारणबन्धुः Mṛcch. 10. 45 (453); त्वमकारणबन्धुर्नस्त्वमकारणवत्सलः MahāP. 2. 4; सम्पूर्णाय दृढाशानां नमोऽकारणबन्धवे NyāyMañ. i. 271. 3; कः पुनरयमकारणबन्धुः श्रवणामृतवर्षिणा वचनेनास्मानाश्वासयति BālRā. 9. 53 (1); रुदितं चौरेण दुःखतस्तेन । नास्यानृण्यमकारणबन्धोर्यातोऽस्मि वणिज इति KathāSaSāg. xii. 21. 59.

**अकारणबाधितृ** ( akāraṇa-bādhitṛ ) *adj.* oppressor without reason तं पापकारिणमकारणबाधितारम्…। क्रोधम्…कात्यायनीव महिषं विनिपातयामि Prabo-Can. 4. 17 (75. 4)

**अकारणबान्धव** ( akāraṇa-bāndhava ) *m.* a relative or friend without cause or reason, a natural friend or relative श्रुत्वा वणिजमुद्यतम् । प्रत्याख्यातुं विधिवशाद्राज्ञोऽकारणबान्धवम् BṛKathāMañ. ix. 2. 714; मिलिता यूयमस्माकमिहाकारणबान्धवाः KathāSaSāg. xii. 6. 228; xii. 34. 20; xii. 34. 194; श्लोकैः कवीनामिदं तेनाकारणबान्धवेन विदधे श्रीसूक्तिकर्णामृतम् SaduktiKa. 1. 19.

**अकारणभू** ( akāraṇa-bhū ) *adj.* born or formed without reason व्याघ्रकेतुः…अन्धकारिणीमकारणभुवा भ्रुकुटिभङ्गेन…साहससहचारिणीं ललाटस्थलीं सदा समुद्वहन्तम्…शबरयुवानमाद्रायाजगाम HarṣC. 309. 8.

**अकारणभूत** ( akāraṇa-bhūta ) *adj.* which is not a cause, which does not constitute a cause तथाभूतात् धूमाभासात् कथमकारणभूतो वह्न्याभासोऽनुमीयताम् PratyabiVi. ii. 187. 1 (*on* ii. 4. 13); i. 51. 1 (*on* i. 1. 1); न चाकारणभूतस्य ग्राह्यता संभवति Kāśi. ii. 158. 6 (5. 158)

**अकारणभृत** ( akāraṇa-bhṛta ) *adj.* maintained or employed without reason अकारणभृतस्तात मम सैन्ये न विद्यते । कर्मणा ह्यनुरूपेण लभ्यते भक्तवेतनम् MahāBhā. vii. 89. 22.

**अकारणम्** ( a-kāraṇam ) *adv.* **A** without any reason or cause स्वभावतः प्रवृत्तोऽन्यः प्राप्नोत्यर्थानकारणम् । तत्स्वभावात्मकं विद्धि फलं पुरुषसत्तम Mahā-Bhā. iii. 33. 17 [ v. l. अकारणात् ]; स कथं रामयुत्सृज्य…भरतम्…मे पुत्रमभिषिञ्चेदकारणम् Rāmā. ii. 154. *(7); किमकारणमेव दर्शनं विलपन्त्यै रतये न दीयते KumāSam. 4. 7 = VyaktiVi. 62. 14; अकारणं किं क्षयकृज्जनानां सोम त्वयाऽपीत्थमकारि कार्यम् MatsyaP. 23. 45; केन बन्धेन बद्धोऽहं कारणं किमकारणम् ViṣṇuP. vi. 5. 22 = BrahmP. 233. 22; नाकारणं विवृणुयान्न विघट्टयेच्च…असियष्टिम् YogYā. 12. 6; BṛSaṁ. 50. 6; भिषङ्ममास्तीति विचिन्त्य भक्षयेदकारणं को हि विचक्षणो विषम् PañcT. 3. 55 (311. 10) = Tantrākhyā. 103. 21 [ को नु विषं विचक्षणः ] = SūktiRa. 156. 94; आर्ये नागानन्दे नाटयितव्ये किमिदमकारणमेव रुद्यते Nāgā. 1. 3(9); HarṣaC. 272. 6; DaśkuC. 27. 25; तस्यैव तावन्महात्मनो निष्करुणत्वमकारणमेव दारुणसर्गकारिणः NyāyMañ. i. 177. 25; एवं मया भणितम्…किं मामुद्विग्नयाकारणमात्मानमायासयसि TāpaVa. 4. 9(24); तरुणि…त्वदीयं मे । परिसरणम्…रणरणकमकारणं कुरुते Kāvyālaṅ.(Ru.) 2. 23; VakroJī. 7. 19; KāvyaPra. 771. 2; SāhiDa. 428. 9; नयसि दूरमरेः किमकारणं निधनमित्यवदद्भरतानुजः RāmC. 7. 73; 33. 24; क्षिपसि कालमकारणमेव किम् RāmC. 37. 34 (App. 1); अकारणमकाले किं ग्रन्थिं वादयसीति तम् ।…पप्रच्छुरथ भिक्षवः KathāSaSāg. x. 9. 136; अकारणं निर्यातो निष्कृतिरित्युच्यते ManuBh. ii. 382. 24 (*on* 11. 45); अकारणं तु यः कश्चिद्द्विजः प्राणान् परित्यजेत् SkandP. vii (1). 202. 48; हर्षामर्षाभ्यामकारणं तृणाङ्कुरमपि नोपहन्यात् किं पुनर्मनुष्यम् NītiVā. 16. 20; YaśasCam. i. 424. 10; ii. 352. 23; TilaMañ. 143. 14; PadmP. vi. 164. 54; दृक्संविभागमप्येता नैव कुर्वन्त्यकारणम् BṛKathāMañ. xvi. 92; KalāVi. 3. 17; प्रारब्धो मधुपैरकारणमहो झंकारकोलाहलः SaduktiKa. 253. 1 = SūktiMu. 23. 10 = Padyā-Ta. 254 = PadyVe. 702; अकारणं निजां पूर्वां विमुच्य प्रकृतिं नरः । समाश्रयेत्ततस्त्वब्दान् मृतिस्तस्य सुनिश्चितम् TantrRā. 27. 85; **B** in vain अनेन कल्याणि मृणालकोमलं व्रतेन गात्रं ग्लपयस्यकारणम् Vikramo. 3. 13; हा तमादिपुरुषं जननादिक्लेशखेदितमकारणमेव RāmC. 16. 102; बहुश्रमः परजयः किमकारणमादृतः । स चिन्त्यतामात्मजयो येन भूयो न खिद्यसे RāmC. 28. 33; 36. 70; **C** without self-interest अनेन कूर्माकृतिना बिभ्रतोर्वीमकारणम् । जगत्यनर्धतां नीतः प्रपन्नोद्वहनश्रमः RāmC. 9. 38; यथा मणिर्ददात्यात्मच्छायाः स्वयमकारणम् । तेजो-

मयीस्तथैवायमात्मा सृष्टी: प्रयच्छति YogVā. v. 5. 37.

**अकारणमय** ( akāraṇa-maya ) *adj.* having no cause, without any cause प्रारब्धो मधुपैरकारणमयो ( ? v. l. अहो ) झंकारकोलाहल: S'ārṅgPa. 923.

**अकारणमित्र** ( akāraṇa-mitra ) *n.* a friend without cause or reason, natural friend प्रायेणाकारणमित्राण्यतिकरुणार्द्राणि च सदा खलु भवन्ति सतां चेतांसि Kād. 37. 20.

**अकारणरण** ( akāraṇa-raṇa ) *m.* a fight or battle without a cause or motive, a wanton fight पुरुषास्तर्जयन्त्यस्मान् अकारणरणोद्धुरा: MahāP. 10. 73.

**अकारणरिपु** ( akāraṇa-ripu ) *m.* an enemy without cause or reason, natural enemy अकारणरिपुश्चन्द्रो निर्निमित्तसुहृत् स्मर: Kāvyāda. 2. 203 = SaraKaṇṭhā. 320. 6; तत्किं रोदिति मुह्यति श्वसिति किं स्मेरं च धत्ते मुखं, दृष्ट: किं कथयाम्यकारणरिपु: श्रीभोज्यदेवोऽनया SubhāRaK. 22. 50; SaduktiKa. 190. 32; 108. 18; क्रुद्धो दध्यावरे सोऽयमकारणरिपुर्मम PārśvC. 8. 270; अकारणरिपोरस्य न मुखं वीक्षितुं क्षम: SamarāSaṁ. 1. 212.

**अकारणरुष्** ( akāraṇa-ruṣ ) *f.* anger without cause or reason अद्य स्वां जननीमकारणरुषा प्रात: सुदूरं गतां प्रत्यानेतुमितो गतो गृहपति: SubhāRaK. 24. 22; *adj.* angry without cause or reason ह्यकारणरुषां संख्या संख्याता: कारणक्रुध: SubhāRak. 37. 24; KumāCaSaṁ. 51. 11.

**अकारणरोष** ( akāraṇa-roṣa ) *m.* anger without cause or reason अकारणरोषप्रमत्तोऽपि नि:शेषशिष्टाचारप्रवृत्त: सुदत्तो नाम राजा YaśasCam. ii. 236. 2.

**अकारणरोषण** ( akāraṇa-roṣaṇa ) *adj.* [*f.* -ā] angry without cause or reason त्यज त्यजाकारणरोषणे रुषम् NaiṣC. 9. 107.

**अकारणलक्षणत्व** ( akāraṇalakṣaṇa-tva ) *n.* the nature of not having the characteristic of a cause तत्रासद्भावपक्षस्त्वकारणलक्षणत्वादवधूयते S'atDū. 135. 2.

**अकारणवत्** ( a-kāraṇava(n)t ) *adj.* which has no cause, having no cause सदकारणवन्नित्यं दृष्टं हेतुजमन्यथा CaraS. iv. 1. 59 (1941 Ed.); सदकारणवन्नित्यम् VaiśeSū. iv. 1. 1; (Upask. न कारणवत् अकारणवत् 193. 6); अकारणवत् नित्यमिति नित्यस्य लक्षणम् MāṭhVṛ. 18. 18 (*on* 10)

**अकारणवत्त्व** ( akāraṇavat-tva ) *n.* the nature of being without a cause, uncaused ( अव्यक्तम् ) नित्यम् अकारणवत्त्वात् MāṭhVṛ. 19. 13 (*on* 10)

**अकारणवत्सल** ( akāraṇa-vatsala ) *adj.* [*f.* -ā] affectionate without cause or reason, naturally affectionate वामदेव, नूनमिदानीमस्मानिव भगवन्तमपि कौशिकमकारणवत्सलं वत्सो मे रामभद्र:···सुखयिष्यति AnarghaRā. 1. 56(11); MahāP. 2. 4; जिनवरततिर्जीवालीनामकारणवत्सला CaturJiStu. 42; अनाहूतसहायस्त्वं त्वमकारणवत्सल: TriṣaS'aPuC. iii. 1. 342; Vitarā. 13. 1; उज्जीवितोऽस्म्यकारणवत्सलया ननु भवत्या JānaPa. 2. 23(5)

**अकारणविग्रह** ( akāraṇa-vigraha ) *m.* a quarrel or fight without cause or reason अकरुणत्वमकारणविग्रह: परधनापहृति: परयोषित: । ··· प्रकृतिसिद्धमिदं हि दुरात्मनाम् S'atTrayī. 61.

**अकारणविरक्त** ( akāraṇa-virakta ) *adj.* dissatisfied without cause or reason तत: प्रविश्य नगरं संनिप( ? पा )त्याखिलं जनम् । अकारणविरक्तानां पौराणां प्रददौ सभाम् RājTa.(Ka.) 8. 912.

**अकारणविरोध** ( akāraṇa-virodha ) *m.* hostility without cause or reason अकारणविरोधं च वयं तावन्न कुर्महे KathāSaSāg. viii. 2. 166.

**अकारणवैद्य** ( akāraṇa-vaidya ) *m.* a selfless physician, a physician (who does not expect a reward as) a reason (for his work) त्वमकारणवैद्योऽसि दु:खातङ्कार्तितात्मनाम् MahāP. 2. 4.

**अकारणवैर** ( akāraṇa-vaira ) *n.* enmity without cause or reason अहो, अकारणवैरमासादितम्···मया Pañcā. 193. 2; रटति कटुकाटोपं कोपादकारणवैरवान् DarpDa. 1. 57.

**अकारणवैरिता** ( akāraṇavairi-tā ) *f.* enmity without cause or reason देवै: सह न ते कार्या तदकारणवैरिता KathāSaSāg. viii. 2. 146.

**अकारणवैरिन्** ( akāraṇa-vairin ) *m.* an enemy without cause or motive कोऽप्यकारणवैरी मे किमथोपनयेत् सुतम् PadmP.(Re.) 17. 322; अन्यत् ( कुलं ) पुनस्तमस:, यत: समभून्नभसि कुम्भिनां केसरीवाकारणवैरी ग्रहाणां राहु: YaśasCam. i. 442. 5; भविनां भावयन् दु:खं स्वकर्मजमपीश्वर: । स्यादकारणवैरी न: कारणादपरे परे NaiṣC. 17. 78; *adj.* [*f.* -ṇī] inimical or hostile without cause or reason तच्छ्रुत्वा विषसादाथ कुब्जाकारणवैरिणी AdhyāRā. ii. 2. 57; अकारणवैरिणा दैवेन दारुणमासु त्रिष्वपि प्रदर्शितम् Mukundā. 207(5)

**अकारणव्यवधान** ( akāraṇa-vyavadhāna ) *n.* intervention by something which is not a cause संयोगजनककर्मणोऽकारणत्वेऽपि सन्निकर्षद्वारा चक्षुष: कारणत्वदर्शनेनाकारणव्यवधानस्य तद्बाधकत्वाभावात् S'ivārkaMaDī. i. 54. 3 (*on* i. 1. 1)

**अकारणसखि** ( akāraṇa-sakhi ) *m.* a friend without cause, a spontaneous friend अकारणसखा कोऽसौ प्रान्तरे समुपस्थित: SkandP. iv. 67. 140.

**अकारणसंतप्त** ( akāraṇa-santapta ) *adj.* aggrieved without reason त्वय्यकारणसंतप्ते संतप्तहृदया वयम् Rāmā. vi. 72. 7.

**अकारणसुहृत्तम** ( akāraṇasuhṛt-tama ) *m.* best friend without cause or reason तन्मार्गं दर्शयास्माकमकारणसुहृत्तम: MalliC. 2. 233.

**अकारणस्नेह** ( akāraṇa-sneha ) *m.* affection without cause or reason, natural affection ईदृशो मां प्रत्यमीषामकारणस्नेह: UttaRāC. 6. 13(1)

**अकारणस्मित** ( akāraṇa-smita ) *n.* smile without any cause, spontaneous smile अत्र नयनघूर्णनाकारणस्मितादय: SaraKaṇṭhā. 587. 15 [ the text KumāSam. 8. 80 reads स्वेदबिन्दु मदकारणस्मितम् ( Malli. मदरूपिणा कारणेन स्मितं मन्दहासश्च यत्र ) ]; ह्य: पश्यद्भिरकारणस्मितसितं पाथोजकोशाकृति···वक्त्रं न: RājTa.(Ka.) 4. 386.

**अकारणस्मेर** ( akāraṇa-smera ) *adj.* smiling without cause or reason अकारणस्मेरमनोहरानन:···मया न दृष्टस्तनय: स्तनंधय: MālaMā. x. 37.

**अकारणहास्य** ( akāraṇa-hāsya ) *n.* laughter without cause or reason बालसखित्वमकारणहास्यं स्त्रीषु विवादमसज्जनसेवा । गर्दभयानमसंस्कृतवाणी षट्सु नरो लघुतामुपयाति VetāPañ.(S'i.) 25. 44.

**अकारणात्मक** ( akāraṇātma-ka ) *adj.* of causeless nature, having no cause जगदेककारणमकारणात्मकं विभुम्··· । कथयन्ति···पुरुषं सधर्मतां गतमीश्वरस्य HarVi. 6. 89.

**अकारणात्मन्** ( akāraṇātman ) *adj.* of a causeless nature एतस्मिन्नक्षरे···। ओत: प्रोतश्च नि:शेष आकाशोऽकारणात्मनि BṛĀraUBhVā. iii 8. 177.

**अकारणाधीन** ( a-kāraṇādhīna ) *adj.* not dependent upon (any) cause अकारणाधीनस्य···विषयविषयिभावस्य सर्वगोचरत्वात् NyāyKu. 91. 14.

**अकारणाभिमत** ( akāraṇābhimata ) *adj.* which is deemed as a non-cause अकारणाभिमतश्च पदार्थश्चैतन्यम् TattvSaṁPañ. 25. 26 (*on* 18)

**अकारणीकृत्य** ( a-kāraṇīkṛtya ) *ind.* not considering as a cause तस्मात् सन्निधानमकारणीकृत्य धर्मवत्त्वेनामावास्यस्यैवमिति निर्देश: ManuBh. i. 313. 14 (*on* 3. 238)

**अकारणोत्कर्ष** ( akāraṇotkarṣa ) *m.* excellence of a thing which is other than a cause न ह्यकारणोत्कर्ष: कार्यमनुविधत्ते AdvaiSi. 445. 19.

**अकारणोत्पन्न** ( akāraṇotpanna ) *adj.* originating without (any) cause, spontaneous रागस्य···अकारणोत्पन्नस्याकारणादेव ( विरागो भवति ) DhūrtaViSaṁ. 18. 19.

**अकारणोपकर्तृ** ( akāraṇopakartṛ ) *adj.* obliging without any motive अकारणोपकर्तार: सन्ता( ? न्तो ) यदि तदापि हि । उपकारं करिष्यामि तुभ्यमभ्यधिकं नृप MalliC. 6. 417.

**अकारतस्** ( akāra-tas ) *ind.* from the vowel *a* शादयस्तथा स्थानप्रयत्नभेदेन जायन्ते खल्वकारत: ĪśānS'iPa. i. 1. 52.

**अकारता** ( akāra-tā ) *f.* the state of the sound *a* तेषु ( तकारादिषु ) त्वेतदकारताम् ( प्राप्नोति ) Kātan. ii. 6. 27; हकारो व्यक्तिमापन्नो हार्दघोषविवक्षित: । अकारतां गतस्तस्य भेदो ह्यक्षरसङ्गति: ĪśānS'iPa. i. 1. 43.

**अकारत्रय** ( akāra-traya ) *n.* triad of *a* letters वपु: शरीरं मन:···एवाकारत्रयवाच्या: SetuBa. 255. 16.

**अकारद्वय** ( akāra-dvaya ) *n.* two *a* vowels अत इत्यत्राकारद्वयप्रश्लेष: कृत: Nyās. i. 133. 26 (*on* P. i. 1. 70); ततश्चाकारद्वयलक्षण: समुदाय: Pradī. vi. 31 (*on* vii. 1. 27); अकारद्वयसमुदायस्य आदेशत्वम् Pradī. iii.. 282A (*on* iii. 4. 82); न च वर्णग्रहणपक्षे एतिका इत्यादावकारद्वयव्यवधानादित्वाप्राप्ति: LaS'abde-S'e. i. 375. 8.

**अकारधर्म** ( akāra-dharma ) *m.* an improper act, evil thing ( विप्रा: ) अकारधर्मनिरता: कूटयुक्तिविशारदा: Svayambhūpurāṇa 412. 19.

**अकारनिर्देश** ( akāra-nirdeśa ) *m.* indication of the letter *a* कोशे बिन्दुपदेनाकारनिर्देशोऽकारान्तरव्यावर्तनाय SetuBa. 247. 25.

**अकारनिवृत्ति** ( akāra-nivṛtti ) *f.* elimination of the vowel *a* एच इग्भवतीत्युच्यते सवर्णनिवृत्त्यर्थमकारनिवृत्त्यर्थं च MahāBh. i. 117. 6 (*on* i. 1. 48)

**अकारपङ्क्ति** ( akāra-paṅkti ) *f.* series of the letters beginning with the letter *a* अकारपङ्क्तौ ये वर्णा अधोऽध: संव्यवस्थिता: Mānaso. ii. 20. 1089.

**अकारपर** ( akāra-para ) *adj.* followed by the vowel *a* ओकाराम: सर्वोऽकारपर: TaiPrāti. 9. 7 (comm. *adds* आपद्यते ); राये स इन्द्र पूर्वश्चाकारपरे TaiPrāti. 11. 9 (comm. राये, स:, इन्द्र:, इत्येवंपूर्व: अस्मानित्येतस्मिन् ग्रहणे अकारप( ? रे ) अकारो न लोपमापद्यते )

**अकारपरसंहित** ( akārapara-saṁhita ) *adj.* joined with the following

**अकार्ष्ण्य** ( a–kārṣṇya ) *n.* absence of blackness उत्तरपदवृद्ध्यर्थम् । अशौक्ल्यम् अकार्ष्ण्यम् MahāBh. ii. 369. 2 (*on* v. 1. 119)

**[1]अकाल** ( a–kāla ) *m.* [ included in *digādigaṇa*, GaṇRa. 5. 340 ] **1 A** absence of Time, no Time **B** (*n.*) absence of time-sense, inopportunity **2 A** premature time **B** improper time **C** other than the prescribed time **D** indifferent time, bad time **E** prohibited time **3** one beyond Time **4** a word not denoting time **1 A** absence of Time, no Time नैव कुत्रचित् । अकाले जननं किंचित् S'ivDṛ. 4. 16; अवतीर्णश्च तस्मिन्···कालमकालं···अमंस्त TilaMañ. 212. 16; **1 B** (*n.*) absence of time-sense, inopportunity कथादोषः संक्षेपेण नवविधः···अकालम् AbhidhSa. 105. 18; **2 A** premature time तस्याभ्यग्निरैतशायन एत्याकालेऽभिहाय मुखमप्यगृह्णात् AitBr. 30. 7 (786); अकाले बोधितः क्षिप्रं नश्यत्येव न संशयः Rāmā. 6. 1092*; यदहं पुत्रमेकं तु पश्यामि निधनं गतम् ।···अकाले कालमापन्नं मम दुःखाय पुत्रक Rāmā. vii. 73. 5; काले निमीयते सोमो न चाकाले प्रमीयते Saund. 1. 15; योगोऽप्यकाले ह्यनुपायतश्च भवत्यनर्थाय न तद्गुणाय Saund. 16. 49; 16. 66; अहं त्वकाले वनसंश्रयात्ते शोकाग्निना···दह्ये BuddhaC. 9. 14; वलयश्चाकाले भवन्ति CaraS. iii. 1. 21 (1922 Ed.); अकालस्तावदिदानीं द्वितीयस्य प्रतिकर्मण इति PratiYau. 2. 13 (22); अकाले बोधितो भ्रात्रा···दीर्घनिद्रां प्रवेशितः RaghuVa. 12. 81; अकाले ह्यभिप्रवृत्तस्य शक्यते देवताविधानम् S'ābaBh. 1461. 14 (*on* vi. 5. 8); अपराधश्चाकाले तन्त्रप्रवृत्तिः S'ābaBh. 1462. 11 (*on* vi. 5. 11); अकाले चार्तवोत्पत्त्या गर्भोत्पत्तिस्तदाभवत् BrahmāṇḍP. i. 7. 80; अकालेऽपि···शरदारम्भं भीमेन मुखेन···विज्ञापितवान् HarṣaC. 257. 15; नाकाले म्रियते कश्चिद्वज्रेणापि समाहतः PadmP. (Ra.) 46. 35; अकालः खलु स्वबलप्रधानविरोधस्य VeṇīSaṁ. 3. 460; अकाले तन्त्रप्रवृत्तौ नैमित्तिकं विधीयते ṬupṬ. 140. 9 (*on* vi. 5. 11); घृततिलाद्यौषधीप्रयोगेण रतिवशेन चाकालेऽपि संवर्तते ManuBh. i. 231. 2 (*on* 3. 46); अतिभारो महान् मार्गश्च पशु( ?शू )-नामकाले मरणकारणम् NītiVā. 8. 10; अकाल एव मत्पुत्रो नीतः किम् YogVā. iv. 10. 16; अकाले च प्रसूता स्त्री स्नेहपानं विवर्जयेत् SiddhYo. 71. 18; अकाले सृष्टिहरणे तत्पुत्रमरणे पुरा । कोपयुक्तस्य वायोश्च दर्पभङ्गं चकार सः BrahmVaiP. iv. 56. 62; अकाले तत्र मरणमकाले गृहिणीमृतिः । सौराद्भुतं विजानीयात् BhaviP. 411B. 24 [ ii(3). 20. 149 ]; अकाले प्रलये प्राप्ते काशीराजो विनायकम् ।···स्कन्धे गृहीत्वा भ्रमते नानास्थाने GaṇeP. ii. 15. 26; अकाले प्रक्रान्ते दर्शे प्रायश्चित्तमाम्नातम् S'āstrDī. 492. 10 (*on* vi. 5. 1); तस्य विप्रचरणप्रणामजं शैशवे शिरसिजश्रितं रजः । अप्यकालपलिताकृतिं दधत्संदधावधिककामनीयकम् EI. i. 143. 17; अधमेन हि युद्धेन युवयोः···भूयिष्ठलोकप्रलयादकाले प्रलयो भवेत् TriṣaS'aPuC. i. 5. 516; i. 5. 709; एवमकाले देहारम्भककर्मफलोपभोगासमाप्तावपि तत्परिपन्थिकर्मणा प्रतिबन्धे प्राणसंक्षयोऽपि संभवतीति Aparā. 1009. 21 (*on* 3. 165); मृत्युर्विंशति नाकाले···प्रजाः PṛthvīVi. 8. 96; अकाले अनागते काले कृते पुनः काले कर्तव्यम् SmṛtiCan. ii. 427. 4; उवाच ब्रह्मदत्तोऽथ सुतस्नेहेन गद्गदम् । अकालो यतिधर्मस्य शिख्याह न मृतेरिव SamarāSaṁ 3. 198; दुर्विनीते तु नृपतावकाले म्रियते जनः SūktiRa. 40. 19; जयत्यकालेऽपि सृजन् संध्यामिव गजाननः S'ārṅgaPa. 57; मुग्धामजातरजसं कलिकामकाले व्यर्थं कदर्थयसि किं नवमालिकायाः S'ārṅgaPa. 823 = SāhiDa. 162. 5; cf. Kuval. 67(19); अकाले न बाला म्रियन्ते ManvaMu. 410. 3 (*on* 9. 247); अकाले मन्त्रप्रयोगाप्रसक्तेः MayūMāli. 639. 19 (*on* ix. 4. 9); **2 B** improper time अथ यदास्य पृथिवी···अकाले च पुष्पफलमभिनिवर्तेति Ṣaḍvi Br. v(vi). 7. 2; नाकाले स्नायात् MānS'S. 182. 6; काले प्राप्ते अकाले वा नास्यानश्नन् गृहे वसेत् VasiDS. 8. 8; अकाले चापि मुख्यानि पुष्पाणि च फलानि च । दर्शयिष्यन्त्यनुक्रोशाद्गिरयो राममागतम् Rāmā. ii. 42. 11; न चास्थाने न चाकाले करानेभ्योऽनुपातयेत् MahāBhā. xii. 89. 11; नाकाले प्रणयेदर्थान्नाप्रिये जातु संचरेत् MahāBhā. xii. 94. 34; xii. 136. 89; कौतूहलेनैव च पादपेभ्यः पुष्पाण्यकालेऽपि BuddhaC. 1. 24; स्वयंकृतश्च कार्यार्थमकाले काल एव वा । मित्रस्य चैवापकृते द्विविधो विग्रहः स्मृतः ManuSm. 7. 164; शुल्कस्थानं परिहरन्नकाले क्रयविक्रयी ।···दाप्योऽष्टगुणमत्ययम् ManuSm. 8. 400; अकाले वा रात्रौ शुल्काध्यक्षेषु गतेषु ManuBh. ii. 233. 25 (*on* 8. 400); ii. 234. 1 (*on* 8. 400); ManvaMu. 360. 14 (*on* 8. 400); ManvaVi. 1106. 6 (*on* 8. 400); DaṇḍaVi. 93. 11; नादेशे नाकाले···न कुत्सितं न प्रतिकूलोपहितमन्नमाददीत CaraS. i. 8. 20 (1941 Ed.); अकाले चाहितश्चैव मात्रया न च योजितः । स्नेहो मिथ्योपचाराच्च व्यापद्येतातिसेवितः CaraS. i. 13. 79 (1941 Ed.); यद्यकाले नवस्नेहो मद्यमांसप्रकल्पितः···न निरूहति BhelaS. 257. 22 (8. 6); तेषां हरणोपायाश्चत्वारिंशत्···काले न दत्तमकाले दत्तम् ArthS'ā. i. 155. 1 (2. 8); अकालेऽतीर्थे च तरतः पूर्वः साहसदण्डः ArthS'ā. i. 309. 1 (2. 28); i. 336. 2 (2. 32); नादेशे नाकाले···कथयति कथां हि सुकथः PañcT. 1. 25 (24. 11); अकाले स्वस्थवाक्यं मन्युमुत्पादयति PañcRā. 2. 20 (1); अकाले वा गच्छति गर्भिणीम्···पाययन्तीं वा AbhidhKoBh. 244. 15 (*on* 4. 74); स···महार्णवम् । चकारोद्वृत्तवेलं तमकाले मारुतोद्धतम् BrahmāṇḍP. ii. 69. 29; भुञ्जीत···द्विजः । ···नाकाले नातिसंकीर्णे ViṣṇuP. iii. 11. 83; धीरं गर्जन्ति लङ्कायामकाले वारिदा अपि JānaHa. 2. 66; देवो हर्षः महाजनेन मौलेनाकाले आत्मानं वेष्टयमानमद्राक्षीत् HarṣaC. 242. 2; अकाले दुर्दिने गर्जे···शास्त्रपाठस्तथा वर्ज्यः HārīS. i. 1. 32; अकालोऽयं समुदाचारस्य VeṇīSaṁ. 6. 210; अस्यामवस्थायामस्यौषधस्य कालोऽकालो वा AṣṭāSaṁ. i. 122. 13 (1. 23); अकाले बहु चाल्पं वा भुक्तं तु विषमाशनम् AṣṭāHṛ. i. 8. 34; स्वकाले [ v. l. अकाले ] चाथ संवित्तेर्न स्याच्छक्त्यर्पणं ततः S'lokaVār. 5(3). 165 (313. 7); नाकाले नानवसरे या नुन्ना दूतपूर्वकम् । वेश्यावेश्मनि कर्तव्यं नान्यत् कामुकसंनिधौ ViṭaVṛ. 22; एतन्मनसि ( ? एतं मनसि ) कृत्वार्थमकालेऽप्यहमागता BṛKathāS'loSaṁ. 18. 651; वृष्टिर्भवत्यकालेऽपि महती PāñcaRā.(Nā.) iii. 14. 47; अकाले संभवन्त्येते विद्युन्नीहारवृष्टयः NāraS. 29. 73; तव···अङ्गलक्ष्मी···अकालेऽप्यनुसंधत्ते सान्द्रबालातपश्रियम् MahāP. 2. 6; अकाले न पुष्य( ? ष्प्य )न्ति न प्रसुवते ManuBh. ii. 5. 17 (*on* 7. 15); अकाले विज्ञप्तमूषरे कृष्टमिव NītiVā. 11. 46; अकाले च ज्वरी नाद्यात् SiddhYo. 1. 58; गर्हितमस्मद्विधानामकाले परकलत्रदर्शनम् TilaMañ. 274. 2. अकाले तु शिवे बोधस्तव देव्या कृतो मया BṛDharmaP. i. 22. 14; अकाले पुष्पिता वृक्षाः BhaviP. 410B. 8 [ii(3). 20. 107]; ViṣṇuDhaP. i. 37. 11; अकालकर्मकरणं पुत्रीगमनमेव च ।···गुरुतल्पसमं स्मृतम् BṛNāraP. 14. 48; अकाले पुष्पफलिनः···त्यजेत् ( द्रुमान् ) SamarāSū. 16. 15; नक्षत्राणामकाले सरणिमरुणयन्···हनूमान्···दशमुखनगरीचत्वरे तत्वरेऽसौ RāmāCam. 5. 38; अस्थान इत्यकाले शोकाद्यवसरे AbhinBhā. i. 316. 14 (*on* 6. 58); तं···वक्तुं स्वकार्यं तात्पर्यादकाले कथमुत्सहे RāmāMañ. 190. 4; चयकोपशमा( ? न् ) दोषा विहाराहारसेवनैः । समानैर्यान्त्यकालेऽपि विपरीतैर्विपर्ययम् S'ārṅgaS. i. 2. 31; स्रावयेदपि पयोदमकाले Rāvaṇā 2. 64; अकाले वृष्टिदर्शने···न गन्तव्यम् Mānaso. ii. 13. 811; अकाल इव कालाग्निरुद्भ्रान्तो दीप्तिदारुणः TriṣaS'aPuC. ii. 5. 174; प्रचण्डपुत्रभाण्डानामकाले कलहः किमु PāṇḍaC. 3. 487; एवमकालेऽपि रजोदर्शने द्रष्टव्यम् SmṛtiCan. ii. 309. 14; अकालेऽपि तदा प्राणान् पर्यत्या( ? त्य )क्ष्यमहं ध्रुवम् PrabhāC. 15. 11; अकाले गर्जिते देवे दुर्दिनं वाथवा भवेत् S'ārṅgaPa. 1825; नासकृत्ताडयेदश्वमकाले च विदेशके S'ukrNī. iv (7). 128; क्षुत्सम्भवति···काले वा यदि वाकाले सोऽन्नकाल उदाहृतः BhāvPra. (Bhā.) 5. 118; एवं च गर्जाद्यनध्यायेषु उपनीतस्याकाले कृतमकृतमेव BālamBha. i. 51. 12 (*on* 1. 14); i. 360. 22 (*on* 1. 112) **2 C** other than the prescribed time अकाले दारानुपेत्य···कयानाया द्वितीयमावर्तयेत् SāmaViBr. i. 6. 7; अकाले वाचं विसृज्य···वाचं यच्छति MānaS'S. 60. 20; 95. 8; 140. 5; नै( वा )काले···त्वयास्य प्रहर्तव्यम् PañcT. 1. 86(28) (96. 11); cf. Tantrākhyā. 26. 4; उक्तं कर्म यथाकाले यदि कर्तुं न शक्यते । अकाले वापि तत्कुर्यात् LaghvāśvaSm. 1. 138; 12. 3; विग्रहः स्वकार्यार्थं मार्गशीर्षादिकालेऽकाले वा कृतः स्वयंकृतः VīraMi. (Rājanīti.) 325. 18; अकालेऽधीयते च ये ।···ते श्रुत्यावृत्तिबन्धकाः VarāṅgaC. 4. 45; कथं वा शारदी पूजा अकाले युज्यते गुरो BṛDharmaP. i. 17. 15; इतरथा शूद्रादिकृतमपि साधयेत् अकाले च NyāyRaMā. 115. 17; अकाले वा यष्टुं···असंमन्यमानेषु शास्त्रैकशरणेषु तापसेषु NīlaVi. 32. 7; **2 D** indifferent time, bad time अतिस्नेहोऽप्यकालेऽस्मिन्मरणायोपपद्यते Rāmā. vi. 36. 31; मन्त्रं मद्भक्तैः···सन्ध्याकालेष्वकालेषु जप्तव्यम् VṛGautaSm. 512. 11(3); अदेशस्थो बहुरिपुर्युक्तोऽकालेन सञ्चयः ।···एतैः संधिं न कुर्वीत SūktiRa. 134. 4; **2 E** prohibited time तयोरकालो रात्रिः ( आश्चोतनाञ्जनयोः ) AṣṭāSaṁ. i. 163. 6(1. 32); अकाले संगृहीतो हि विकारान् कुरुते बहून् SiddhYo. 3. 16; **3** one beyond Time कालस्त्वमसि लोकानामकालः परिगीयसे SaurP. 61. 39; विज्ञेयस्तु महेश्वरः···ह्यकालः कालचोदकः S'ivaP. vii(i). 3. 17 (504A. 8); **4** a word not denoting time सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात् P. vi. 2. 32; शयवासवासिष्वकालात् P. vi. 3. 18; S'ākaṭāVyā. ii. 2. 18; SiddhaHe. iii. 2. 25; अव्ययीभावे चाकाले P. vi. 3. 81; CāndraVyā. v. 2. 100; JaineVyā. iv. 3. 189 (311. 32); S'ākaṭāVyā. ii. 2. 111; SiddhaHe. iii. 2. 146; MugdhaBo. 6. 61 (61. 12); [night DBHS]; **अकाले** ( a–kāle ) *adv.* [Loc.] **i** prematurely, before time **ii** at an odd time **iii** at an inopportune time, inopportunely **iv** at an improper time **v** out of season, before season, unseasonably **vi** suddenly **i** prematurely, before time प्रमीयते चास्य प्रजा ह्यकाले···( यः ) भीतं प्रपन्नं प्रददाति शत्रवे MahāBhā. v. 12. 21; अकार्यकरणाद्भीतः कार्याणां च विवर्जनात् । अकाले मन्त्रभेदाच्च येन माद्येन्न तत्पिबेत् MahāBhā. v. 34. 41; अहो ह्यकाले प्रस्थानं कृतवानसि पुत्रक MahāBhā. vii. 55. 18; अकाले बोधितो भ्रात्रा प्रियस्वप्नो वृथा भवान् । रामेषुभिरितीवासौ दीर्घनिद्रां प्रवेशितः RaghuVa. 12. 81; अकाले च जरां पित्रोः कुपुत्रः कुरुते ध्रुवम् MārkP. 75. 12; त्रातुमर्हसि···त्वं लोकानस्मांश्च···न चेदकाले भगवन्विनंक्ष्यत्यखिलं जगत् BrahmāṇḍP. ii. 52. 28; iv. 21. 6; सायंचरचक्रवर्तिना तैस्तैरसुकुमारैरुपक्रमैरकाल एव त्याजितो निद्रां महानिद्रायै सहोदरः TilaMañ. 136. 2; NīlaP. 872; तत्राकाले शक्तिरूपा भव त्वं त्वां नत्वाहं बोधये तत् प्रसीद BṛDharmaP. i. 22. 10; पठ्यमानमिदं पुण्यं यमुद्दिश्य तु पठ्यते ।···नाकाले मरणं तस्य LiṅgaP. i. 82. 116; योगी···नाकाले मृत्युमाप्नुयात् MālinīT. 18. 55; अकाले कालरूपोऽथ मेघकालः समापतत् SamarāSaṁ. 5. 154; ( नारी ) सूते स्रस्ततनुं बालमकाले तु प्रवाहणात् BhāvPra.(Bhā.) 3. 350; **ii** at an odd

hour (beside the mealtime, after the meals are over) जीर्णः शिशुवदादत्तेऽकालेऽन्नम् MahāBhā. i. 79. 21; अप्रणोद्योऽतिथिः सायं सूर्योढो गृहमेधिना । काले प्राप्तस्त्वकाले वा नास्यानश्नन्गृहे वसेत् ManuSm. 3. 105; ( ManuBh. 'अकाले' वा सायंभोजने निवृत्तेऽपि ); **iii** at an inopportune time, inopportunely न बुद्धिशास्त्राध्ययनेन शक्यं प्राप्तुं विशेषैर्मनुजैरकाले MahāBhā. xii. 26. 6; अहो व्रणे वराकोऽयमकाले तृषितः फणी । प्रसारितमुखोऽप्यास्ते शोणितं पातुमागतः NyāyMañ. ii. 86. 29; न त्वकाले व्रतखण्डनम् KāmSū. 205. 6 (3. 2); कुलवधूर्यदि तावत् प्रियं वदति अकाले वा वदति अतीव प्रियमिति वा विप्रियं वदति DhūrtaViSaṁ. 26. 6; LiṅgaP. i. 96. 12; अकारणमकाले किं ग्रन्थिं वादयसीति तम् । श्रुत्वाश्चर्येण मिलिताः पप्रच्छुरथ भिक्षवः KathāSaSāg. x. 9. 136; **iv** at an improper (i. e. other than the prescribed) time वयं च शक्तिसंपन्ना अकाले त्वामधृष्णुमः । अशक्ता हि क्षणे क्रूरे युष्मानर्चन्ति मानवाः MahāBhā. i. 158. 16; न चास्थाने न चाकाले करानेभ्योऽनुपातयेत् MahāBhā. xii. 89. 11; स्वयंकृतश्च कार्यार्थमकाले काल एव वा । मित्रस्य चैवापकृते द्विविधो विग्रहः स्मृतः ManuSm. 7. 164; अकाले तन्त्रप्रवृत्तिर्देवतापनयस्य कारणम् S'ābaBh. 1462. 7 (*on* vi. 5. 11); मुनिवृषभाणामनुग्रहाल्लब्धं कवचमकालेऽपि धारयामि ĀścaCū. 3. 7 (7); कस्मिन्नपि पुरे साधुर्वीरभद्रोऽभवदृजुः । अटवीं प्राप्य सोऽकाले श्रुतं पठति संततम् BṛKathāK. 17. 1; नाकालेऽहं व्रती कुर्यामतो दारपरिग्रहम् PadmP. i. 22. 95; अकालेऽपि रवेर्वारे निम्बपुष्पोद्गमैरयं प्रत्ययं पूरयन् भानुन्नि( ? र्नि ) रत्ययमुपास्यताम् EI. xxii. 5. 91; अकालेऽपि न मृत्युः सत्यशालिनाम् S'āliC. 2. 19; अकाले दर्शनं विष्णोर्हन्ति पुण्यं पुराकृतम् TantrSā. 83. 8; असम्यक्त्वं तु मन्त्राणाम्…। सद्यःप्रयोगाद्भजनादकाले संशयाद्भवेत् TantrRā. 35. 10; तदात्वायति संयुक्तः संधिर्ज्ञेयो द्विलक्षणः । राज्ञा कृतश्च कार्यार्थमकाले काल एव वा NītiPra. 8. 80; **v** out of season, before season, unseasonably आमोदं मदजलसेकजं दधानः । एतस्मिन्मदयति कोकिलानकाले Kirātā. 5. 26; अकाले किमशोकस्य कुसुमानीति चिन्तयन् BṛKathāS'loSaṁ. 12. 70; लब्धश्चिरस्येति तनोतु तिर्यग्ज्योत्स्नामकालेऽपि यमाट्टहासः RāghPāṇ.(Dha.) 13. 35; क्षेत्रस्वामिनः स्वक्षेत्रेऽत्ययोऽतिक्रमोऽपराधो यदि भवेत्स्वकृते( ? तो )ऽकाले वापनं निदानमयोग्यबीजवापः … तदा … दशगुणं दण्डनीयः ManuBh. ii. 184. 22 (*on* 8. 243); किरत्यकालेऽपि बलाहकः कणान् RāmC. 5. 35; जयत्यकालेऽपि सृजन् सन्ध्यामिव गजाननः KathāSaSāg. viii. 1. 1; नभस्यकाले समघटि सन्तमसं घनोदयेन VasaViKā. 6. 67; सिक्तस्येक्षुरसेन… तरोरकाले भवेत्कुसुमम् S'ārṅgaPa. 2281; मुग्धाननामरजसं कलिकामकाले बालां कदर्थयसि किं नवमालिकायाः Subhāṣi. 735; येनाकालेऽपि बालारुणकरनिकरोजा- ( ? ज्जा )गरोज्जृम्भमाणज्योत्स्नाजालैर्जटालं स्फुटमजनि हरिच्चक्रवालान्तरालम् KaṁVa. 1. 11; **vi** suddenly भुजगः पादतलाहतोऽप्यकाले । न करोत्यगुणम् PañcT. 1. 32 (28. 10); वर्णयन्ती । अकालकान्तारविशीर्णबन्धुदुःखान्यसंख्यानि YogVā. iii. 120. 12; अकाल एव प्रकटितोत्सवैः पौरलोकैः…°प्रभाविस्तारितापूर्वसंध्यामयोध्यां पुरीं पश्यतः…प्रत्याससाद मध्याह्नसमयः TilaMañ. 66. 8; नोचेदेतदकाल एव भविता संग्रामसीमाङ्गणं प्रत्यग्रैः प्रतिपक्षपक्ष्मलदृशां नेत्राम्बुभिः पङ्किलम् MohaRāPa. 5. 69; **अकालेन** (a-kālena) *adv.* [Inst.] prematurely रामकालमकालेन न कालयितुमर्हसि Rāmā. iii. 681*. 6; काव्यशापाच्चाकालेनैव ययातिर्जरामवाप ViṣṇuP. iv. 10. 7.

**¹अकाल** (a-kāla) *adj.* **A** untimely, before time, unseasonal सूचकानृताकालकलह°…°वचनादिर्वाङ्मिथ्यायोगः CaraS. i. 11. 39 (1941); शमनमकालवलीपलित°…°रक्तपित्तादिषु…अणुतैलेन AṣṭāSaṁ. i. 154. 2 (1. 29); अकालकुसुमप्रसवा इव मनोहराकृतयोऽपि लोकविनाशहेतवः Kād. 107. 14; लोकपालैरिव कालायसकवाटपुटैरकालकालमेघपटलैररुध्यन्त दिग्द्वाराणि HarṣaC. 225. 12; अकालकल्पाभ्ररवं हासं संयम्य साब्रवीत् YogVā. iii. 78. 34; गृहोद्यानवीरुधामकालकुसुमोद्गतिकारिणस्तांस्तान्दोहदयोगानदात् TilaMañ. 17. 23; चक्रे कृती सुमनसां मनसामकस्मादस्मादकालकलिकालविरामशङ्काम् EI. i. 129. 27; स्निग्धधूमप्रव( ब )न्धप्रारब्धा- ( ब्धा )कालमेघोदयमदमुदितोन्नादिनृत्यन्मयूरा । अस्ति…जगति मधुमती धाम सैद्धान्तिकानाम् EI. xxii. 130. 5; अकालकालायसचूर्णोपहारैरिव क्षितेः घनाघनैरावृतं गगनम् YaśasCam. ii. 232. 4; अकालः प्रलयः किं नु प्रारब्धः GaṇeP. ii. 11. 11; अकालकालकलनं मम राज्ये न कुत्रचित् SkandP. iv. 58. 151; रवः प्रसर्पत्युत भैरवोऽयं अकालकल्पान्तपयोधराणाम् NavaSāC. 14. 9; जलबिन्दुसंदोहैरकालकरकोपलासारदुरितमिव सैरभेषु सूचयन्तीम् ( मृगयाटवीम् ) UdayaSuK. 43. 5; गृहीता तेन सा तन्वी बभौ तालवनत्विषा । अकालकालमेघेन प्राचीव शशिनः कला RāmāMañ. 147. 12; अकालकालमेघाभो गर्जन्नागान्महागजः KathāSaSāg. xii. 22. 42; तपसा कृशः । कृमिकुष्ठाभिभूतश्च सोऽकालापथ्यभोजनात् TriṣaS'aPuC. i. 1. 734; आर्यपुत्रम्…। अकालकालपाशाभैर्नागपाशैर्बबन्ध सः TriṣaS'aPuC. iv. 7. 203; माघे मास्यकालकरकावृष्टिसमाहतः…कश्चिद्वानरस्तदेव वृक्षमूलमुपागतः Pañcā. 251. 17; जातास्तुल्यमकालबालतपनाताम्राश्चतस्रो दिशः PrasaRā. 7. 76; प्रोलराजः । कनदुरुकरवालाकालकालाम्बुवाहाभ्युदयहृदयशल्यप्रद्रवद्राजहंसः EI. xii. 193. 76; यवनकुलाकालकालरात्रिरूपेण … श्रीकुम्भकर्णेन विरचिते संगीतराजे NṛtyaK. i. 4. 43 (3); भवद्दर्शनेनाकालकालबलाहकविलोकनेन चातकस्येव चेतसो ममाभिनवो विकासः RasSa. 145 (18); **B** stale, kept overnight अप्रमितमसुखम्…अतीतरसमकालं चान्नं नानुभवेत् NītiVā. 25. 39.

**²अकाल** (a-kāla) *adj.* a vowel taking as much time as for uttering *a* अकालो ह्रस्वः ṚTPrāti. 40; अकालः–दधि । मधु JaineVyā. 5. 3 (*on* i. 1. 11)

**³अकाल** (a-kāla) *adj.* not black अकालमूलौ द्वौ कुम्भौ ViṣṇuDhaP. ii. 47. 35.

**⁴अकाल** (akāla) *m.* one of the names of S'iva अकालश्च विकालश्च VāmaP. 47. 125.

**अकालक** (akāla-ka) *adj.* **1** not characterised by any technical terms expressive of tenses (as were current earlier), not limited by (definite) time (for its study) पाणिनोपज्ञमकालकं व्याकरणम् CāndrVṛ. *on* ii. 2. 68; पाणिन्युपज्ञमकालकं व्याकरणम् । पाणिनेरुपज्ञानेन प्रथमतः प्रणीतमकालकं व्याकरणम् KāśiVṛ. *on* P. ii. 4. 21; पाणिनिनोपज्ञातं पाणिनीयमकालकं व्याकरणम् KāśiVṛ. *on* P. iv. 3. 115; पाणिनोपज्ञमकालकं व्याकरणम् KāśiVṛ. *on* vi. 2. 14; cf. **आकालकम्**; **2** (of monk's robes) provided at extra-ordinary times [DBHS.]; *n.* food (delicacies) suitable for eating at other than meal times [DBHS.]

**अकालकलन** (a-kālakalana) *adj.* [*f.* –ā] beyond the calculation of time, not grasped in terms of time, not subject to time element अकालकलना सेयं सूक्ष्मा तु परमेश्वरी । व्यापिनं परमात्मानं श्रयन्ती वर्तते ध्रुवा LakṣmīT. 32. 13.

**अकालकलित** (a-kālakalita) *adj.* not grasped by time, not influenced or affected by time शरीराद्वयो हि झगिति…अकालकलितेन प्राणादिमध्यसोपानारोहेणैव भावानां तथात्वनिश्चयरूपां सिद्धिं विदधते ParāTri. 36. 5; अकालकलिते संविदात्मनि सततविश्वशक्त्यवियुक्ते…परमेश्वरे…सर्वमस्ति इत्यस्माभिरुपन्यस्यमानमेव मुक्तमन्दाक्षं कथं नाद्रियते ParāTri. 142. 11; PratyabhiVi. i. 150. 3 (*on* i. 4. 1); i. 151. 7 (*on* i. 4. 1); अकालकलितं कालास्पृष्टं यत्स्वरूपं चिन्मात्राख्यं निजं स्वरूपं तत्रानुप्रवेशेन स्वभावबलसिद्धेनावेशेन Bhāsk. i. 46. 9 (*on* i. 1. 1); प्रकृते लिटा कथितं भूतत्वं तु वक्तव्यस्य सदातनत्वात् । अनद्यतनत्वं तु अकालकलितत्वात् । SetuBa. 21. 26.

**अकालकल्पान्त** (akāla-kalpānta) *m.* untimely end of the world, premature universal destruction ब्रह्माण्डम्…अकालकल्पान्तकरालमासीत् YogVā. iv. 28. 25; अकालकल्पान्तविधौ हत्वा दैत्यं शनैर्विभौ । क्वापि याते YogVā. v. 30. 24; v. 46. 42; तस्योरुवेगसंघट्टस्फूर्जद्घनघनारवैः । चुक्रोशाकालकल्पान्तसंत्रस्तेव जगत्त्रयी BṛKathāMañ. 9(2). 901; तन्वन्नकालकल्पान्तभ्रान्तिं त्रिजगदङ्गिनाम् । सङ्गरोऽभून्महाघोरः सैन्ययोरुभयोस्ततः PāṇḍaC. 13. 858.

**अकालकाल्य** (a-kālakālya) *adj.* not being subject to time अकालकाल्येन परेण पुंसा साम्यं गतानामिव बल्लवीनाम् । सुखाय सर्वे समया बभूवुः Yādavā. 5. 9; अनेकरूपैः स्वयमेकरूपः कालात्मकं रूपमकालकाल्यः । ऋतुप्रभेदैरनुभूय रेमे रामासखो राममनुप्रयातः Yādavā. 8. 2.

**अकालकाल्यत्व** (akālakālya-tva) *n.* the state of not being subject to or affected by time 'न कालस्तत्र वै प्रभुः' इत्यत्राकालकाल्यत्वप्रतिपादनात् S'rutaPra. ii. 623. 17 (*on* iv. 3. 15); न चांशभेदेन कालभेदेन वा विषयव्यवस्था, निरवयवत्वाकालकाल्यत्वादिस्वभावविरोधप्रसङ्गात् S'atDū. 202. 11; ततः परम् (i. e. after attaining Mokṣa) कदाचिदपि न संसारात्मिका पुनरावृत्तिः । प्रथमं तावदकालकाल्यत्वाजरत्वाक्षरत्वादिवचनेन देशलयाभावात् NyāySiA. 220. 26.

**अकालकुपित** (akāla-kupita) *adj.* [*f.* –ā] inopportunely angry अकालकुपितापि पादपतिते मयि न प्रसीदसि Loc. 214. 25 (*on* 3. 41)

**अकालकुसुम** (akāla-kusuma) *n.* untimely blossom or flower अकालकुसुमान्याशु तत्राकाशात् पतन्ति च । पूजां ( स्रजं ) कृत्वा तु तैः पुष्पैस्तान्येव यदि धारयेत् JayāS. 30. 23; आमन्त्रयमाणा इव दधुरकालकुसुमानि सममुपवनतरवः HarṣaC. 271. 18; दुर्जनैरुच्यमानानि सस्मितानि प्रियाण्यपि । अकालकुसुमानीव भयं संजनयन्ति मे Hitopa. 3. 23=SūktiRa. 32. 16; Subhāṣi. 358; BṛĀraUBhVā. i. 4. 99; भूभुजोऽभ्यस्तलोभस्य श्रीः कैश्चिन्नाभिनन्द्यते । अकालकुसुमस्येव फलसंभावनोज्झिता RājTa. (Ka.) 5. 188; कोपस्मितं नरपतेरकालकुसुमं तरोः । वेतालस्याट्टहसितं नैवमेव प्रशाम्यति RājTa.(Ka.) 7. 1209; अकालकुसुमादीनि द्विजो जग्ध्वैन्दवं चरेत् VedavyāSm. 3. 65.

**अकालकूटद्वितीय** (akālakūṭa-dvitīya) *adj.* [*f.* –ā] who is accompanied by untimely (sudden or unexpected) deception याकालकूटद्वितीया नीरोषितापि नार्द्रहृदया भवति NalaCam. 4. 16 (57) (comm. या स्त्री अकालेऽकस्माद्यत् कूटं कपटं द्वितीयं यस्याः । तथा नीरोष्यते स्मेति नीरोषिता प्रसादिताप्यार्द्रहृदया स्निग्धहृदया न भवति )

**अकालकूष्माण्ड** (akāla-kūṣmāṇḍa) *m.* a pumpkin produced out of season, (fig.) a useless birth [APTE; कुष्माण्ड MW] cf. अकाण्डकूष्माण्ड-

पतनन्याय.

**अकालकृत** ( akāla-kṛta ) *adj.* effected or performed at a wrong (i. e. not prescribed) time, untimely क्वचिदकालकृतैःषसविभ्रवैः परिगतोऽरुणरत्नशिलातटैः MahāP. 19. 99; अकालकृतमकृतमिति प्रसिद्धेरत्राप्यकालोपक्रान्तकर्माभावेन प्रत्यभिज्ञानाभावस्य वक्तुं शक्यत्वात् VidhiRa. 41 (207. 2); सायं दोहेनाकालकृतेनापि प्रायश्चित्तनिहृतकालापराधदोषेण मुख्यकाले दर्शः कर्तव्यो न दध्यन्तरमुत्पादनीयम् VidhiRa. 41 (208. 10); 41 (208. 24); अन्यथाकृतानि अकालकृतानि भयङ्कराणीत्यर्थः VīraMi. (Rājanīti.) 484. 25; पूर्वकृतप्रयाजादीनामकालकृतत्वेनोपकारकत्वानुपपत्तेः BhāṭṭDī. iv. 217. 20 (*on* x. 1. 1); न चाकालकृतत्वात्तद्धि न प्रतिपदि दर्शयोग्यम् MayūMāli. 493. 26 (*on* vi. 5. 1); न च प्रायश्चित्तेनाकालकृतप्रणयनदेवतापरिग्रहाद्युपचार एव निर्ह्रियते MayūMāli. 493. 27 (*on* vi. 5. 1); BālamBha. ii. 99. 12 (*on* 2. 89); किमयं निद्रायते।…सर्वथाप्येनमुद्बोधयामि। न ह्यकालकृतनिद्राभङ्गे प्रत्यवायः RasSa. 153. (2); आकालिकं क्षणध्वंसन्य( ? ध्वंसिन्य )कालकृतसंभवे ViśvaLoK. 31. 178.

**अकालकृष्ट** ( akāla-kṛṣṭa ) *adj.* [ *f.* -ā ] prematurely ploughed ओषध्यश्च रजोदोषात् स्त्रीणां रागादिभिर्नृणाम्। अकालकृष्टा विध्वस्ताः पुनरुत्पादितास्तथा। तस्मात् सर्वप्रयत्नेन न संभाष्या रजस्वला LiṅgaP. i. 89. 99.

**अकालकौमुदी** ( akāla-kaumudī ) *f.* **1** a moon-light festival with no fixed time for its celebration ( सुन्दोपसुन्दौ ) अकालकौमुदीं चैव चक्रतुः सार्वकामिकीम् MahāBhā. i. 201. 29; अकालकौमुदीं चेमां पश्यामि प्रतिबोधितः BṛKathāS'loSaṁ. 5. 59; आर्यज्येष्ठो भवानेव यदि तल्लघु कथ्यताम्। अकालकौमुदी ग्रामे सहसा जृम्भतामिति BṛKathāS'loSaṁ. 20. 283; पुण्यानि क्रियतां अकालकौमुदी च क्रियताम् (DBHS); **2** untimely moon-light अकालकौमुदीसहस्राणीव सृजद्भिः…आतपत्रखण्डैः श्वेतद्वीपायमानं…राजद्वारमगात् HarṣaC. 95. 4; महामहोत्सवे तस्मिन् बभूवाकालकौमुदी S'ivaP. iii. 14. 23 (312B. 8) = SkandP. iv. 11. 26 (comm. अकालेऽसमये चन्द्ररहितेऽपि राज्यादौ कौमुदी ज्योत्स्ना तस्मिन्महोत्सवेऽभूदित्यर्थः ); **3** the Dīpālikā festival, festival of lamps or lights अकाले कौमुदीं कुर्यात् कृष्णपक्षे च यः सदा। मासि चाश्वयुजेऽष्टम्यामारभेत् पर्वणा चरेत्। अकालकौमुदीं दीपालिकोत्सवम् CaturCin. ii(2). 331. 9.

**अकालक्रयविक्रय** ( akāla-krayavikraya ) *m.* untimely purchase and sale अकालक्रयविक्रे( ? क्र )यकर्तृणां स्वार्थकामिनाम् ( व्यतिक्रमं शिक्षयेत् ) NītiPra. 8. 31.

**अकालक्षेप** ( a-kālakṣepa ) *m.* absence of delay, immediacy यावद् देवाय त्वमनुष्ठेयमकालक्षेपार्हं निवेदयामि S'āk. 5. 1 (1)

**अकालक्षेपतस्** ( akālakṣepa-tas ) *adv.* without loss of time, without delay, quickly, immediately पुष्पचङ्गेरिकाश्चापि प्रत्येकं तैर्विचक्रिरे। अकालक्षेपतः कोशागारादिव समाहृताः TriṣaS'aPuC. ii. 2. 423.

**अकालक्षेपम्** ( a-kālakṣepam ) *adv.* without delay, quickly, immediately अकालक्षेपं दक्षस्य रङ्गवल्लीप्रदानेषु YaśasCam. i. 350. 2; अहं पुनस्तद्विवाहोत्सवानन्तरमकालक्षेपमागमिष्यामि YaśasCam ii. 286. 15; अकालक्षेपमेणाक्षि स्रजा क्रीणीहि मामिति PāṇḍaC. 2. 133; कथमकालक्षेपमेव संप्राप्ताः प्रत्यर्थिस्कन्धावारम् MohaRāPa. 5. 39 (31)

**अकालखाद्यक** ( akāla-khādyaka ) *n.* food suitable for eating at other than meal times ततो मेण्ढकेन गृहपतिना शिल्पिन आहूयोक्ताः। भगवन्तोऽकालखाद्यकानि शीघ्रं सज्जीकुरुत GiMs. iii(1). 248. 2.

**अकालगर्जा** ( akāla-garjā ) *f.* untimely rumbling (of the clouds) दिक्षु प्रतिध्वानमिषादभूवन्नकालगर्जाडमराद्भुतानि UdaySuKa. 44. 22.

**अकालगर्जित** ( akāla-garjita ) *n.* untimely thundering (of clouds), thundering in other than the rainy season अकालगर्जितादौ च पर्वस्वाशौचकादिषु।…अनध्यायं बुधः कुर्यात् ViṣṇuP. iii. 12. 36; तज्ज्ञा ब्रूयुरनध्यायान्… अकालवर्जिते वृष्टावग्निदाहे च BṛParāSm. 6. 360; अकालगर्जितं दोषं केन्द्रगः शुभखेचरः। हन्ति VasiS 43. 162.

**अकालग्रहमोक्षण** ( akāla-grahamokṣaṇa ) *n.* untimely drawing in and loosening (of the reins) अकालदण्डपाताच्च त्वकालग्रहमोक्षणात्। अकालहिंसाघाताच्च तेन वाजी न धावति AśvaCi. 8. 17.

**अकालघटित** ( akāla-ghaṭita ) *adj.* [ *f.* -ā ] untimely set, produced at an unusual hour लोहितरुचो…अम्बुवाहाः। सन्ध्यामकालघटितां गगने वितेनुः JānaHa. 5. 58.

**अकालचक्र** ( akāla-cakra ) *n.* **1** untimely or premature death कस्याप्यकालचक्रेण पतितव्यं विरोधिनः। क्रूरेणेव ग्रहेणाद्य यतश्चक्रेण वक्रितम् MahāP. 34. 11; (Tippaṇī अकालचक्रेण = अपमृत्युना ); इति चक्रस्य तत्कालमध्यगादमियोगतः। अकालचक्रं लोकोऽयमध्यगादमियोगतः RāghPāṇ. (Dh.) 18. 65 (comm. अमियोऽभयाद् गतो निर्यातोऽयं लोकोऽकालचक्रम् अध्यगात् ज्ञातवान् ); **2** the dissolution of the world अथ संयुगं। कालमिव समधिरुह्य रथं तमकालचक्रगतिचक्रमाविशत् RāghPāṇ. (Dh.) 17. 1; (comm. अकालचक्रस्य प्रलयकालस्येव गतिः प्रवृत्तिर्ययोस्ते चक्रे यस्य तं रथम् ); **3** the discus of the god of death दुर्गं मार्गय याहि वा जलनिधेरुत्तीर्य पारं परं नो चेत्…। मुक्तं चक्रमकालचक्रमिव ते मूर्ध्नि प्रपाति ध्रुवम् YaśasCam. i. 558. 11; पपात। तत्संगमान्मम चोपरि भ्रमदकालचक्रकरालं जालं YaśasCam. ii. 218. 1. (comm. भ्रमत् भ्रमणं कुर्वत् यत् अकालचक्रं अप्रस्तावे यमचक्रं तद्वत् करालं रौद्रम् )

**अकालचर्या** ( akāla-caryā ) *f.* wandering or moving out at an improper time, untimely wandering अकालचर्यां विषमैस्तु गोष्ठीम्…न कदापि कुर्यात् BṛKathāK. 32. 28; अकालचर्या सर्वेषां शङ्कामुत्पादयेद् ध्रुवम् PadmP. iv. 102. 9; अकालचर्या विषमा च गोष्ठी…न कदापि कार्या Pañcā. 72. 2; MahāVyu. 261. 84.

**अकालचलित** ( akāla-calita ) *adj.* departing prematurely प्रतिक्षणं पाशवलयेनाकालचलितं जीवितमिव निरोद्धुम्…आपीडितशिरोधरा ( अहम् ) TilaMañ. 307. 2.

**अकालचीवर** ( akāla-cīvara ) *n.* (monk's) robe provided at extraordinary times लभ्यं भदन्त अकालचीवरेण पौद्गलिकया संघाट्या…कठिनमास्तर्तुम् GilMs. iii(2). 160. 9.

**अकालज** ( akāla-ja ) *adj.* appearing or blossoming out of season, premature व्याधितं कृमिजुष्टं च पाकातीतमकालजम्। वर्जनीयं फलं सर्वमपर्यागतमेव च SuśruS. i. 46. 210; अदेशाकालजं क्लिन्नं यत् स्यात् फलमसाधु तत् CaraS. i. 27. 314 (1922 Ed.) पालित्ये वाप्यकालजे ( नस्यकर्म प्रशस्यते ) BhelaS. 246. 3 (8. 2); शीतोष्णविपर्यासः फलपुष्पमकालजं दिशां दाहः BṛSaṁ. 97. 4; अकालजं मदं घोरं चतुष्पान्मृगपक्षिणाम् ViṣṇuDhaP. ii. 141. 4; ततः प्रभृति तत्तीर्थम्…। अकालजजरादीनां स्मरणादपि नाशनम् BrahmP. 146. 42; अकालजं कुभूमीजं न भक्षयेत् BhāvPra.(Bhā.) 6(7). 153; BhojanKu. 106. 3; अकालजा भवन्त्येते सदा भङ्करा मृशम् ( ? भृशम् ) VasiS. 37. 40; NāraS. 33. 79; SiddhYo. 61. 217.

**अकालजरा** ( akāla-jarā ) *f.* premature old age रिपुपरिभवं शोकं भर्तुः समं मनसा वहन् कथमिदमिति ध्यानावेगादकालजरां गतः TāpaVa. 3. 5; दुष्पुत्रतां च धिगकालजरां पितॄणाम् Rāvaṇā. 22. 1.

**अकालजल** ( akāla-jala ) *adj.* [ *f.* -ā ] (used as noun) (a river) having untimely floods, flooding out of season बलमारोग्यमायुश्च वपुस्तेजश्च देहिनाम्। हीयते हीदृशीं ( स्त्रियं ) गत्वा प्राप्याकालजलामिव BhelaSa. 1. 7. (10. 22)

**अकालजलद** ( akāla-jalada ) *m.* **1 A** untimely cloud, an out-of-the-season cloud नृपः…सतां दैन्योत्तापप्रशमनफलाकालजलदः EI. xiv. 160. 28; इत्यकालजलदबन्दिविनोद्यमानमनाः…वर्षर्तुश्रियं यावदहमनुभवन् सप्रमोदमासांचक्रे YaśasCam, i. 548. 8; तस्मिन्नेव सरस्यकालजलदेनागत्य तच्चेष्टितं येनाकुम्भनिमग्नवन्यकरिणां यूथैः पयः पीयते SubhāRaK. 33. 41 = SaduktiKa. 242. 10; PrabaCin. 30. 18; S'ārṅgaPa. 777; BhojaPra. 44. 12; Subhāṣi. 843; PadyaVe. 727; धारासारैः क्षणे तस्मिन्नकालजलदोज्झितैः। विपर्यस्तेव पृथिवी सर्वतः समलक्ष्यत RājTa. (Ka.) 7. 906; अकालजलदावलीगलितरक्तधाराहता… रजोजवनिका शनैरपससार सेनामुखात् RāghPāṇ. (Ka.) 8. 8; एतस्यां मरुसीम्नि जाङ्गलतटीनिष्ठ्यूतदावानलक्लाम्यत्पान्थकुलान्यकालजलद त्वं त्रातुमेकः क्षमः SaduktiKa. 269. 14; आड्यानैर्गलितं दलैर्व( ? र्वै )त कथाशेषाः प्रसून्श्रियः…तूष्णीमस्ति तथाप्यकालजलदं ध्यायन् मरुक्ष्मारुहः SaduktiKa. 266. 21; अकालजलदच्छन्नमालोक्य रविमण्डलम्। चक्रवाकयुगं रौति रजनीभयशङ्कया Subhāṣi. 1723; **1B** untimely cloud as an evil portent इत्यकालजलदादिवैकृते…गते शमम् NavaSāC. 8. 16; **2** Name of a poet अकालजलदेन्दोः सा हृद्या वदनचन्द्रिका। नित्यं कविचकोरैर्या पीयते न च हीयते SūktiMu. 4. 83; अकालजलदश्लोकैश्चित्रमात्मकृतैरिव। जातः कादम्बरीरामो नाटके प्रवरः कविः SūktiMu. 4. 84; तस्मिन्नेव सरस्यकालजलदेनोत्रम्य तच्चेष्टितम्…इत्यकालजलदराजशेखरोक्तिः PrabaCin. 30. 19; PadyaVe. 727; (identified as the great grand-father of Rājaśekhara) तदकालजलदस्य प्रणप्तुस्तस्य ( i. e. राजशेखरस्य ) गुणगणाः किमिति न वर्ण्यन्ते ViddhaS'ā. 1. 5 (7); तदामुष्यायणस्य महाराष्ट्रचूडामणेरकालजलदस्य चतुर्थो दौर्दुकिः शीलवतीसूनुरुपाध्यायश्रीराजशेखर इति पर्याप्तं बहुमानेन BālRā. 1. 13 (1); स मूर्तो यत्रासीद्गुणगण इवाकालजलदः। महाभागस्तस्मिन्नयमजनि यायावरकुले BālRā. 1. 13.

**अकालजलधर** ( akāla-jaladhara ) *m.* unseasonal cloud अकालजलधरध्वनिक्षुभितराजहंसीकुलकोलाहलध्वनिकलम्…अमरसुन्दरीजनस्य हाहारवमश्रृणोत् ( नृपतिः ) TilaMañ. 53. 23; आहोस्विदकालजलधरः कश्चिदुन्नम्य समागतः स्यात् UdaySuKa. 75. 11.

**अकालजलवाह** ( akāla-jalavāha ) *m.* unseasonal cloud तस्यैकधन्विनो भूपाः शरैर्विव्यधिरेऽधिकम्। अकालजलवाहस्य सलिलैरिव शालयः PāṇḍaC. 13. 361.

**अकालजात** ( akāla-jāta ) *adj.* **A** prematurely born स भगवता वासुदेवेन …अकालजातोऽस्त्राग्निना दग्धस्तेजसा स्वेन संजीवितः MahāBhā. i. 90. 906*;

**B** born at a wrong time or season अकालजाता ये सर्पा निर्विषास्ते प्रकीर्तिताः BhaviP. 70A. 21. (i. 33. 22); **C** rising untimely कृष्णप्रियाः···अकालजातप्रतिमेन्दुजालान्···तरङ्गान् । वक्त्राक्षिवक्षोरुहबिम्बयोगादकल्पयन् Yādavā. 8. 99.

**अकालज्ञ** ( a-kālajña ) *adj.* [ *f.* -ā ] not knowing or not having consideration for proper time, imprudent अकालज्ञः सुदुर्मेधाः···प्रेत्य चेह च नश्यति MahāBhā. iii. 159. 7; अकालज्ञासि सैरन्ध्रि MahāBhā. iv. 15. 34; अत्यारूढो हि नारीणामकालज्ञो मनोभवः RaghuVa. 12. 33; Kuval. 118(9); एवमवस्थापिते प्रथमप्रदोष एवाकालज्ञेन दृष्टः Tantrākhyā. 26. 9; अहो तु ( ? नु ) खल्वकालज्ञा षट्पदिका, यदिमां मनोभवातङ्ककातरामीदृशे कर्मणि नियुङ्क्ते SubhaDha. 2.13(38); कथं कामोऽपि मन्दात्मा···विकृतान् बाणैः कृतवानकालज्ञः S'ivaP. ii (2). 3. 44 (70A. 9); तुरंगयोग्योपस्कारस्नानाहारादि राजवत् । अकालज्ञावकुरुतां राजधान्यन्तरेव तौ RājTa(Ka.) 8. 1573; अनर्थ एव मूर्तोऽयमकालज्ञः समीहिते SamarāSam. 2. 447; सिद्धसेनेनोक्तम् - अहमकालज्ञः PrabaK. 16. 17.

**अकालतडित्** ( akāla-taḍit ) *f.* untimely lightning तैरश्चोऽपि पुंयोगः स्त्रियो दूषयति किं पुनर्न मानुषः । न चैतासामकालता( ? त )डितामिव प्रवृत्तावपेक्षास्ति YaśasCam. ii. 55. 9.

**अकालतन्त्रत्व** ( akālatantra-tva ) *n.* non-dependence on time, the state of not being bound by time न तावत् कर्माणि हेतुः अकर्मवश्यत्वात् । नापि कालः अकालतन्त्रत्वादीश्वरस्य NītiMā. 36. 10.

**अकालतपस्** ( akāla-tapas ) *n.* untimely penance दिव्यकन्यां विलोक्य सः । पप्रच्छाकालतपसः कारणं यौवनावनीम् BṛKathāMañ. xvi. 1. 203.

**अकालतरलता** ( akālatarala-tā ) *f.* sudden or untimely unsteadiness एवमेतदाकर्ण्य राजा···पृष्टकुशलमकालतरलतया···चेतः स्वं स्वयमेव स्वस्थीकृत्य वितार्कितवान् NalaCa. 4. 0(3)

**अकालतस्** ( akāla-tas ) *adv.* unseasonably, untimely, prematurely नाकालतः पुष्पफलं नगानाम् MahāBhā. xii. 26. 9; नाकालतो म्रियते जायते वा MahāBhā. xii. 26. 11; नाकालतोऽयं म्रियते जायते वा S'ivaP. vii (1). 7. 22 (510B. 1); मनुजास्तु प्रसवन्त्यकालतश्च VarāṅgaC. 24. 29; किं करिष्यति सा देवी संहारं वाप्यकालतः S'ivaP. ii (4). 17. 18 (213B. 2); ब्राह्मणस्य सुतं दृष्ट्वा बालं मृतमकालतः···रामः···जीवयामास AdhyāRā. vii. 4. 24.

**अकालत्व** ( a-kālatva ) *n.* **i** absence or negation of the nature of time पृष्टे कालश्च वक्तव्यो नाकालत्वं ततो भवेत् AnuVyā. 69B. 3; ( Jaya. कालस्य सर्वथा अपरिहार्यत्वादकालत्वं कालाभावो न भवेत् ); **ii** (akāla-tva) the state of being other than time अकालत्वे सत्यविशेषगुणा महती दिक् SarvaDaSam. 10. 63. ( comm. कालभिन्ना विशेषगुणरहिता महती च या सैव दिगित्यर्थः )

**अकालदण्डपात** ( akāla-daṇḍapāta ) *m.* beating with a stick or whipping at an improper time अकालदण्डपाताच्च त्वकालग्रहमोक्षणात् । अकालहिंसाघाताच्च तेन वाजी न धावति AśvaCi. 8. 17.

**अकालदन्त** ( akāla-danta ) *m.* untimely teething (one of the 22 diseases of children) द्वाविंशतिर्बालरोगाः···दन्तघातो दन्तशब्दोऽकालदन्तोऽहिपूतनम् S'ārṅgaS. i. 7. 186.

**अकालदर्शन** ( akāla-darśana ) *n.* name of a mountain [ DBHS ].

**अकालदस्युनिर्माथ** ( akāla-dasyunirmātha ) *m.* untimely eradication of the robbers (the rebellious Ḍāmaras) अकालदस्युनिर्माथं जानते( ? तो)ऽभ्यर्थनां न ते । राज्ञोऽगृह्णन् RājTa.(Ka.) 8. 2734.

**अकालदिग्भुवन** ( a-kāladigbhuvana ) *adj.* without time, space and worlds अकालदिग्भुवनं···तमोमयं पयसि ममज्ज तज्जगत् S'ivLī. 19. 64.

**अकालदुग्ध** ( akāla-dugdha ) *adj.* [ *f.* -ā ] milked out of time or every second day संधिनी तु गौः । वृषाक्रान्ताकालदुग्धा AnekāSaṁ. 3. 425; संधिन्यकालदुग्धा गौः AnekāK. 489; AnekāSa. 528. DharK 1396; संधिन्यकालदुग्धायां वृषाक्रान्तावपातयोः NānārthSaṁ 94. 45.

**अकालदुग्धगो** ( akāladugdha-go ) *f.* a cow milked out of time or every second day संधिनी तु वृषाक्रान्ताकालदुग्धगवोः स्मृता ViśvaPra. 95. 131; ViśvaLoK. 208. 142.

**अकालदुग्धोस्रा** ( akāladugdhosrā ) *f.* a cow milked out of time or every second day संधिनी वृषभाक्रान्ताकालदुग्धोस्रयोः स्त्रियाम् MediK 99. 13; संधिनी वृषभाक्रान्ताकालदुग्धोस्रयोरपि S'abdaRaSaK. 201. 7.

**अकालदुर्दिन** ( akāla-durdina ) *n.* an untimely cloudy day उन्नमत्यकालदुर्दिनम् Mṛcch. 5. 0(2); उपमेघपथेनासौ ( सेना ) गच्छन्ती रुद्धभास्करा । अकालदुर्दिनाटोपमुपलोके समादधे Rāvaṇā. 7. 30; अकालदुर्दिनप्रायं बभौ तन्मिलितं बलम् SamarāSaṁ. 1. 155.

**अकालदेशतस्** ( akāladeśa-tas ) *adv.* at an improper time and place अकालदेशतोऽपात्रेऽवज्ञया दीयते तु यत् । असत्काराच्च यद्दत्तं तद्दानं तामसं स्मृतम् GaṇeP. ii. 148. 9.

S. D. 12

**अकालदैव** ( akāla-daiva ) *n.* unexpected or sudden good luck अकालदैवयुक्तेन बलोद्वृत्तसखेन च । ··· न कुर्यादेव विग्रहम् NītiSā. 10. 22 = AgniP. 239. 22.

**अकालदोहिन्** ( akāla-dohin ) *adj.* one who milks at an improper time नैवाप्नुयात् क्षीरमकालदोही Saund. 16. 50.

**अकालधर्मन्** ( akāla-dharman ) *n.* untimely or premature nature सत्ये धर्मे च निरता मानवा विगतज्वराः । नाकालधर्मणा मृत्युः शक्नोति प्रसमीक्षितुम् HariVaṁ. 41. 4.

**अकालनय** ( akāla-naya ) *m.* (Jain.) ( cf. **कालनय** ) the view point of not accepting time as a cause or factor अकालनयेन कृत्रिमोष्मपाच्यमानसहकारफलवत् समयानायत्तसिद्धिः TattvPradī(A.) 371. 2 ( *on* iii. 75. 31 )

**अकालनिधन** ( akāla-nidhana ) *n.* untimely or premature death अकालनिधनाक्रान्ता हा प्रजे क्व गमिष्यसि RāmāMañ. 486. 22.

**अकालनियत** ( a-kālaniyata ) *adj.* not regulated by time, constantly uniform अकालनियतोच्छ्रायम्··· । क्षात्रं···वः क्षमं तेजस्समेधितुम् Yādavā. 22. 41.

**अकालनियम** ( a-kālaniyama ) *m.* absence of restriction regarding time द्रव्यदेशब्राह्मणसंनिधाने वा काल( ? अकाल )नियमः GautDS. ii. 6. 5; सर्वातिथ्यन्तु यः कुर्यात्··· । अकालनियमेनापि सत्यवादी जितेन्द्रियः । पुरंदरपुरं याति VṛGautaSm. 537. 13.

**अकालनिर्मित** ( akāla-nirmita ) *adj.* produced at an unexpected time, revealed unexpectedly स्वप्रभावं··· । अकालनिर्मितं तात मयोर्वीक्ष्य हरस्तदा । आश्चर्यं परमं मेने S'ivaP. ii (3). 18. 13. (142B. 8)

**अकालनिर्हार** ( akāla-nirhāra ) *m.* untimely or irregular evacuation of excrement अकालनिर्हारविहारसेविनो भवन्ति येऽन्येऽपि सदातुराश्च ते CaraS. viii. 11. 30. (1941 Ed.) अन्यानपि चाकालनिर्हारविहाराहारान् ( शोधयेत् ) AṣṭāSaṁ. i. 142. 15 (1.27)

**अकालनिवेदन** ( akāla-nivedana ) *n.* the act of reporting at an inappropriate moment जन्मनक्षत्रक्रियाव्यापृतस्य महाराजस्य तावदकालनिवेदनं मन्युमुत्पादयति PañcRā. 2. 2(1)

**अकालनीहारवृष्टि** ( akāla-nīhāravṛṣṭi ) *f.* fall of unseasonable mist or fog अनिलोद्धतैः···अकालनीहारवृष्टिमिव दर्शयद्भिः कुसुमधूलिपटलैर्धवलीकृतविग्रहो वसन्त इव विग्रहवान् ( समरकेतुः ) TilaMañ. 213. 13.

**अकालपरिपूजन** ( akāla-paripūjana ) *n.* worship at a wrong time व्यत्ययात् तत्क्रियालोपादकालपरिपूजनात् । महद्भयं सराष्ट्रस्य पूजकस्य जनस्य च PauṣkS. 37. 37.

**अकालपर्जन्य** ( akāla-parjanya ) *m.* unseasonable rain (cloud) तत् कावकालपर्जन्यभीमौ वृन्देन धावतः MahāvīC. 1. 60.

**अकालपर्ययापेक्ष** ( a-kālaparyayāpekṣa ) *adj.* not dependent on the passing of a certain age or time अकालपर्ययापेक्षं वैराग्यं वा महात्मनाम् RājTa. (Ka.) 8. 3078.

**अकालपलित** ( akāla-palita ) *adj.* one having grey hair prematurely अकालपलितेषु वातादीनपेक्ष्य स्नेहस्वेदसंशोधनास्रविस्रावणानि कुर्यात् AṣṭāSaṁ. ii. 285. 3 (6. 28); पित्तप्रकृतिर्धीमान् मेधावी क्रोधनोऽल्पकामश्च । प्रस्वेदकालपलितो भवति नरो नात्र संदेहः YaśasCam. ii. 258. 1; अकालपलितः क्रोधी प्रस्वेदी मधुरप्रियः । ···पित्तप्रकृतिरुच्यते AgniP. 279. 37 = ViṣṇuDhaP. ii. 56. 118; AgniP. 368. 38 = ViṣṇuDhaP. ii. 115. 20; अकालपलितो गौरः प्रस्वेदी कोपनो बुधः । पित्तप्रकृतिको नरः SiddhYo. 81. 63; BhāvPra.(Bh.) 4. 56; *n.* premature grey hair अकालपलितैर्व्याप्तो धीमान् स्वेदी च रोषणः ।··· पित्तप्रकृतिको नरः S'ārṅgaS. i. 6. 22; ii. 9. 155; ( नीलिकाद्यं तैलं ) अकालपलितं हन्ति S'ārṅgaS. ii. 9. 161; iii. 11. 30; °अकालपलितखालित्यानिलात्मकार्ताश्च नस्ततः ( ? नस्यतः or नस्तः ) उपस्नेह्याः KāśyaS. 167A. 11 (7. 7)

**अकालपातिन्** ( akāla-pātin ) *adj.* appearing or approaching at an improper time छायाग्रहो मूर्त इवानुयायी स्थितश्चिरं वृश्चिकनिश्चलश्च । ··· अकालपाती···सेवकदुर्विदग्धः SevyaSev. 44; वञ्चना क्रियतां तूर्णं कालस्याकालपातिनः RāmāMañ. 313. 4.

**अकालपानक** ( akāla-pānaka ) *m.* unseasonable drink, beverage given outside the meal-time गृहपतिना बुद्धप्रमुखो भिक्षुसंघः अकालखाद्यकैरकालपानकैश्च संतर्पितः GiMs. iii (1). 248. 4; स तेन प्रतिशामितः । अकालपानको दत्तः GiMs. iii (2). 99. 15.

**अकालपुष्ट** ( akāla-puṣṭa ) *adj.* prematurely developed, precocious शृणु मातः शिशुवयसस्तस्य स्फुटतामकालपुष्टस्य SamaMā. 8. 3.

**अकालपुष्प** ( akāla-puṣpa ) *n.* a flower blooming out of season, unseasonable flower सा ( = डाकिनी ) ···। सर्वाण्यकालपुष्पाणि···। प्रकटीकुरुते JayāS. 28. 139; प्रसूतिवैकृत्यमकालपुष्पाणि YogYā. 3. 9; अकालपुष्पैरजनि न दैत्यपरिग्रहस्य

कम्पः S'riKaC. 19. 61; यथा ह्यकालपुष्पादि दर्शितं कौतुकावहम् । तथैतदपि विज्ञानम् PariPar. 12. 78.

**अकालपुष्पप्रसव** ( akāla-puṣpaprasava ) *m.* untimely blossoming, flowering at an unusual time अकालपुष्पप्रसवः सस्याः पञ्चचतुर्गुणाः AVPari. lxiv. 3. 6.

**अकालपुष्पमाला** ( akālapuṣpa-mālā ) *f.* a wreath of unseasonable flowers अकालपुष्पमाला हि शोभनापि न शोभते YogVā. iii. 67. 60; ( संसारारम्भचक्रिका ) अकालपुष्पमालेव श्रयसे नाभिनन्दिता YogVā. iii. 113. 25; एषा भगवन् कथा । अकालपुष्पमालेव सुखायोद्वेजनाय च YogVā. v. 32. 27.

**अकालपुष्पित** ( akāla-puṣpita ) *adj.* ( a tree ) having untimely blossoms, blossoming out of season उद्यानपादपान् । अकालपुष्पितानीक्षांबभूव वनपालकः SamarāSaṁ. 7. 149.

**अकालपुष्पोपदर्शन** ( akālapuṣpopadarśana ) *n.* an act of exhibiting unseasonable flowers मार्यर्थे प्रष्टव्यो मान्त्रिकोत्तमः । आयातः स स्वयं पुर्या उज्जयिन्या निशम्यते । अतीतानागतज्ञानाकालपुष्पोपदर्शनैः ।…मन्त्रादाकृष्टदेवेशः MalliC. 1. 430.

**अकालपूजा** ( akāla-pūjā ) *f.* untimely worship अकालपूजया कस्मादहं ( = चण्डिका ) त्वां खलु बोधिता BṛDharmaP. i. 20. 46.

**अकालपृष्ट** ( akāla-pṛṣṭa ) *n.* untimely question, enquiry at an improper time नायमाक्षेपस्य कालः ( v. l. किमनेनाकालपृष्टेन ) PañcT. 2. 77 (44). [253. 5]

**अकालपृष्ठ** ( a-kālapṛṣṭha ) *adj.* not having a black surface पादादिमस्तकप्रमाणमव्रणं समं सौम्यमकालपृष्ठं सलक्षणं वैणवं दण्डम् NāraPaU. 4. 38.

**अकालप्रतिकाङ्क्षणता** ( ākālapratikāṅkṣaṇa-tā ) *f.* the state of having untimely desire अकालप्रतिकाङ्क्षणता मारकर्मेति S'ikṣāSa. 51. 14.

**अकालप्रत्याख्यायिन्** ( akāla-pratyākhyāyin ) *adj.* [ *f.* -ī ] renouncing or avoiding improper time या ( = राजधानी ) … अकालप्रत्याख्यायिनीभिः वेशविलासिनीभिर्विलासदेवताभिरिव सञ्चरन्तीभिः…अमरभवनभित्तिचित्रेष्वादर्शयति दिव्यसीमन्तिनीजनम् AvantiKa. 7. 4.

**अकालप्रलय** ( akāla-pralaya ) *m.* untimely dissolution of the world, sudden world-destruction अकालप्रलयो देव भविष्यति न संशयः SkandP. v(2). 36. 10; अकालप्रलयं मत्वा चुक्रुशुः…जनाः BṛNāraP. 8. 114; 10. 17; अकालप्रलयाद् देव वीतिहोत्राज्जगत्पते । … रक्षिता लीलया त्वया GaṇeP. ii. 15. 47; ईशोऽपि तं निरीक्ष्याथ ह्यकालप्रलयं भृशम् । महानलस्तम्भविभीषणाकृतिर्बभूव S'ivaP. i. 7. 10 (6A. 7); संघर्षेणास्त्रयोस्तयोः । अकालप्रलयारम्भसंरम्भोऽभूद् दिवौकसाम् DaśāvaC. 8. 796.

**अकालप्रलयघन** ( akālapralaya-ghana ) *m.* cloud at an untimely dissolution of the world or deluge तेन च…अकालप्रलयघनगर्जितमिव संजीवकस्य नर्दितं दूरादेवाश्रावि PañcT. 1. 5 (13. 6)

**अकालप्रलयभ्रम** ( akālapralaya-bhrama ) *m.* delusion of an untimely world-destruction तस्य कक्षोरुपवनोद्भूतैर्वनघनारवैः । बभूव सर्वभूतानामकालप्रलयभ्रमः RāmāMañ. 229. 26.

**अकालप्रलयभ्रान्ति** ( akālapralaya-bhrānti ) *f.* confusion of an untimely world-dissolution जनमण्डले । अकालप्रलयभ्रान्तिभीमः कोलाहलोऽभवत् BṛKathāMañ. 18. 113.

**अकालप्रवाहण** ( akāla-pravāhaṇa ) *n.* untimely evacuation or discharge ( of the fluid ) अकालप्रवाहणं हि विण्मूत्रादिवेगानामिवोदीरणमनर्थकरमहितं च गर्भस्य AṣṭāSaṁ. i. 210. 15 (2. 3)

**अकालप्रवृत्ति** ( akāla-pravṛtti ) *f.* untimely commencement ( of a sacrifice ), commencement at the wrong time तस्मादकालप्रवृत्तिमात्रं निमित्तमिति प्रागपि निर्वापादभ्युदये ज्ञाते कर्तव्यमेव नैमित्तिकम् S'āstrDī. 495. 22 (*on* vi. 5. 3)

**अकालप्रसव** ( akāla-prasava ) *adj.* [ *f.* -ā ] delivering before time or prematurely अकालप्रसवा नार्यः कालातीतप्रजास्तथा । …विनाशं तस्य देशस्य कुलस्य च विनिर्दिशेत् MānS'S. 237. 4; MatsyaP. 235. 1; AgniP. 262. 22.

**अकालप्रसू** ( akāla-prasū ) *adj.* giving birth at an unusual time अकालप्रसुवो नार्यः कालातीताः प्रजास्तथा AVPari. lxxb. 10. 2.

**अकालप्रस्रव** ( akāla-prasrava ) *adj.* [ *f.* -ā ] ( a woman ) who has had a miscarriage or has untimely discharge स्नेहम् …। अकालप्रस्रवा नारी दुर्दिने च विवर्जयेत् S'ārṅgaS. iii. 1. 27.

**अकालप्रालेयपात** ( akāla-prāleyapāta ) *m.* unseasonable fall of snow मार्गेष्वकालप्रालेयपातरुद्धेषु वाजिनाम् । गन्तुं तस्योद्यमं जह्रुः पृष्ठलग्ना विरोधिनः RājTa.( Ka. ) 8. 2213.

**अकालप्रेषण** ( akāla-preṣaṇa ) *n.* untimely dispatch, sending away at an unusual time सा तु तेनाकालप्रेषणेनात्मनो मम च तेन प्रकृतिविपर्यासदर्शनेन जातशङ्का…मत्समीपादुदचलत् । TilaMañ. 302. 11.

**अकालफल** ( akāla-phala ) *n.* unseasonable fruit, fruit grown out of season अकालशाल्यस्सर्वे तथाकालफलानि च ।…सर्वाणि तानि विप्रेन्द्र प्रकटीकुरुते तथा । JayāS. 28. 139; कानिचिदकालफलानि गृहीत्वा स वनपालकः…भणति स SamyaKau. 2. 10.

**अकालफलपाकिन्** ( akāla-phalapākin ) *adj.* that which bears or ripens fruit before time आतपासहनः पाण्डुः शाखाहीनो मुहुर्यदि । अकालफलपाकी स्याच्छाखी पित्तात्मकः कृशः । S'ārṅgaPa. 2259.

**अकालफलिन्** ( akāla-phalin ) *adj.* bearing fruit out of season नाकालफलिनो ग्राह्या न श्मशानसमीपगाः ( भूरुहाः ) MayaMa. 15. 75.

**अकालबोध** ( akāla-bodha ) *m.* untimely understanding or awakening भीतास्मि किमिदं वत्स हासो यद्वदने तव । अकालबोधः संजातः कच्चित् पश्यसि शोभनम् । MārkP. 76. 5; SkandP. v (2). 33. 8.

**अकालभव** ( akāla-bhava ) *adj.* **A** occurring prematurely or before time न ह्यकालभवो मृत्युरिक्ष्वाकुपदमस्पृशत् RaghuVa. 15. 44; एवैव महती लज्जा सदाचारस्य भूपतेः । यदकालभवो मृत्युस्तस्य संस्पृशति प्रजाः RājTa.( Ka. ) 4. 84; **B** growing out of season तरोः । फलकुसुममकालभवं मनोहरं फलति लोकस्य S'ārṅgaPa. 2282; **C** occurring at an improper time नान्दीश्राद्धे कृते यच्चकालभवोऽनध्यायः स्यात्तदोपनयनं कार्यं वेदारम्भस्तु वर्ज्य इति बहवः प्रामाणिकाः BālamBha. i. 53. 4 (*on* 1. 14)

**अकालभुक्ति** ( akāla-bhukti ) *f.* untimely meals जह्याद्दिवा च निद्रामहितं चाकालभुक्तिं च RaseCin. 8. 40 (96. 7)

**अकालभृत** ( akāla-bhṛta ) *adj.* maintained during difficult times भक्तदासो दुर्भिक्षे च भक्तदानात् अकालभृतस्तं निष्क्रयं गोयुग्मं वा ददाति । DīpKa. 62. 29 (*on* 2. 182)

**अकालभोजन** ( akāla-bhojana ) *n.* taking meals at an improper time यदपि न प्रकृत्या दौःशील्यं भगवता च बुद्धेन प्रतिक्षिप्तमकालभोजनादिकं तस्मादपि द्विधा विरतिः शीलम् AbhidhKoBh. 273. 10 (*on* 4. 122); किं ब्रवीषि गच्छाम्यहमकालभोजनमपि परिहार्यम् इति PadmPrā. 15. 21; MahāVyu. 261. 41.

**अकालम्** ( akālam ) *adv.* **1** prematurely, suddenly अकालं चागमेऽधीती किमपस्मारवानथ TrisaS'aPuC. ii. 6. 292; अकाण्ड( v. l. अकाल )मेवात्मभुवार्जितस्य भूत्वापि मूलं मयि वीरणस्य । भवान्न मे किं नलदत्वमेत्य कर्ता हृदश्चन्दनलेपकृत्यम् NaiṣaC. 3. 90. **2** not for the full period तस्यास्तु खलु योनि[ ? र ]-जातसारे( ? रा ) पुष्पमाश्रयति तस्याः पतति वापीत्यकालं वावतिष्ठते गर्भः परिशुष्कमात्र इति BhelaS. 95. 18 (4. 8)

**अकालमत्त** ( akāla-matta ) *adj.* unseasonably excited नाकालमत्ताः खगपन्नगाश्च मृगद्विपाः शैलमहाग्रहाश्च । नाकालतः स्त्रीषु भवन्ति गर्भा नायान्त्यकाले शिशिरोष्णवर्षाः । MahāBhā. xii. 26. 10.

**अकालमधुमण्डित** ( akālamadhu-maṇḍita ) *adj.* adorned with untimely spring-season स गत्वा शंकरमनःक्षोभायाक्षयसायकः । चक्रे तपोवनं शंभोरकालमधुमण्डितम् BṛKathāMañ. iii. 1. 344.

**अकालमरण** ( akāla-maraṇa ) *n.* untimely or premature death अकालमरणाम्बुचोरभयम् । ( मृतसंजीवनो हन्यात् ) CaraS. vi. 23. 59 (1941 Ed.); अकालमरणं किंचित्तद्देशे न भविष्यति AhirbuS. 29. 29; नाकालमरणं नृणाम् । …तस्मिन् शासति पार्थिवे MārkP. 7. 2; दृष्टेऽप्यकालमरणे विचिकित्सेत्कथं बुधः AṣṭāSaṁ i. 63. 8 (1. 9); i. 63. 5 (1. 9); अकालमरणेनापरिसमाप्तफलस्य त्यक्तस्य जन्मान्त-( ? -तर )कर्मणो भावनाबलेन विपाकोच्छेषमाकृष्य प्रतिसंवेदयते Sphuṭā. 14. 19. (*on* 2. 10); सदागमप्रमाणानामकालमरणं कुतः RāmC. 31. 166; BṛKathāK. 73. 164; नाकालमरणं चासीद्रामे राज्यं प्रशासति AgniP. 10. 34; NaraP. 47. 145; ViṣṇuDhaP. i. 12. 9; SkandP. i (1). 15. 20; iv. 11. 158; iv. 29. 176; iv. 58. 228; v (2). 12. 28; vi. 48. 4; न दुर्भिक्षं न च व्याधिर्नाकालमरणं नृणाम् PadmP. ii. 27. 64; ii. 74. 17; iii. 17. 4; iv. 56. 13; iv. 105. 14; BhaviP. 798A. 16 (iv. 132. 6); BrahmP. 47. 96; ये पापलुब्धाश्चौरा ये देवब्राह्मणनिन्दकाः । बह्वाशिनश्च ये तेषामकालमरणं नृणाम् । JātaPā. 5. 36.

**अकालमह** ( akāla-maha ) *m.* festival celebrated during unusual time सकले च तत्र गृहमागते हरौ नगरेऽप्यकालमहमादिदेश सः S'iśuVa. 13. 67.

**अकालमारी** ( akāla-mārī ) *f.* pestilence causing untimely death अकालमारीर( ? स )हितोऽपमृत्युर्मृत्युं समीयाय परं सरोग( : ) VīraBhā. 9. 25.

**अकालमुक्त** ( akāla-mukta ) *adj.* **A** given up suddenly ( राजा ) आहूय रहस्यकालमुक्तसमरसंभारोद्भूयमानामितवितर्कं भ्रातरमुवाच UdaySuKa. 5. 10; **B** untimely discharged अकालमुक्तं ब्रह्मास्त्रमन्यमुक्तास्त्रमन्थरम् । अन्याखासहनैशानमहास्त्रव्याहतं हि तत् KathāSaSāg. xvii. 2. 39.

**अकालमूल** ( a-kālamūla ) *adj.* not blackened at the bottom अकालमूलं कलशं पञ्चपल्लवसंयुतम् ( कुर्यात् ) S'ātāSm. 6. 22; अकालमूलैः कलशैरलंकृतं कुशा-

स्तृतं स्थण्डिलमावसेद् द्विजः BṛSaṁ. 24. 7; ( कुम्भद्वयं ) अकालमूलं संस्थाप्य कर्ता तेन तदा भवेत् । स्नात्वा गोवालचीराणि परिधाय समाहितः VisṇuDhaP. iii. 44. 39; ii. 83. 4; ii. 96. 3; ii. 98. 3; BhaviP. 790B. 26 (iv. 127. 41); 857A. 20 (iv. 172.6); ( नन्दां शिलां ) अकालमूलैः…कुम्भैः…मन्त्रैस्तामभिषेचयेत् Samarā-Sū. i. 35.14; i. 37. 21; अकालमूलैः, नवैः ( कलशैः ) CaturCin. ii (3). 648.18.

**अकालामृतवर्षौघ** ( akālāmṛtavarṣaugha ) *m.* untimely or unexpected shower of nectar इति श्रुत्वा वचस्तस्य…द्विजदम्पती । अकाल( ? ला )मृतवर्षौघैर्गत-तापौ तदोचतुः । S'ivaP. iii. 15. 10 (313B. 2)

**अकालमृत्यु** ( akāla-mṛtyu ) *m.* **1** untimely or premature death अकाल-मृत्युर्विश्वासो विश्वसन्हि विपद्यते MahāBhā. xii. 81. 11; सत्यं बतेदं प्रवदन्ति लोके नाकालमृत्युर्भवतीति सन्तः Rāmā. v. 26 .3; कथं कालमृत्युरकालमृत्युर्वा भवतीति Cara-S. iii. 3. 37 (1941 Ed.); iii. 8. 43 (1941 Ed.); तस्मादस्त्यकालमृत्युः AbhidhKoBh. 74 .20 (*on* 2. 45); कालात्माकालमृत्यूनां विजयेऽथ यजेत् सदा । PauṣkS. 31. 284; अथ जीवगणेष्वकालमृत्युः फलपुष्पाणि वनस्पतिष्वकाले । VarāṅgaC. 24. 29; ततो न राजापचारमन्तरेण प्रजायामकालमृत्युश्चरतीति UttaRāC. 2. 7(7); DvādaLiSt. 3; BṛKathāS'loSaṁ. 28. 108; PāraS. 13. 171; अकालमृत्युयुक्तानां पुनर्जीवनमस्ति च PadmP. iv. 108. 67; अकालमृत्युर्लोकस्य विचरेद् वसुधातले SamarāSū. i. 44. 8; RāmāMañ. 487. 15; 487. 17; DaśāvaC. 7. 279; VikraDeC. 17. 4; इह कचति पलाशः…विरहिमृगदृशामकालमृत्युः S'rīKaC. 7. 20; RājTa.(Ka.) 7. 43; क्रूरग्रहदशान्तर्दशादिमरणमकालमृत्युः AdbhuSāg. 516. 18; PārśvC. 3 .838; अकालमृत्युग्रहपाप्मनोऽपि विषाशिनो नास्ति भयं नरस्य RasRaSa. 29. 156; अपमृत्य्वकालमृत्युहरप्रवृत्तिभिर्योगविशेषैः…एतदाद्यनेकविशेषैर्वयं सर्वज्ञा एवाध्यास्महे S'aṅkaVi.(Ā.) 224 .11; SūktiRa. 108 .8; नाकालमृत्युस्तत्रासीत् न दुर्भिक्षं न वा रुजः MahNirvāT. 1. 28; अकालमृत्युमाप्नोति रवेरन्तर्गते ध्वजे JātaPā. 18 .69; MadaKeC. 69; अहं चेत्तर्हि भाषिष्यामि…सर्वाकालमृत्युप्रतिनिवारणाय अप्रसादानां प्रसादनाय GiMs. i. 35. 16. **2** name of a dog-keeper मुख्याय श्वानपोषिषु । अकालमृत्युनाम्ने श्वाहं पुनः पक्षिपोषिणे । नीलकण्ठाभिधानायार्पितः SamarāSaṁ. 4. 351. *adj.* dying untimely or prematurely भवन्ति राज्ञि दुर्वृत्ते, जनाश्चाकाल-मृत्यवः । RāmāMañ. 487. 20.

**अकालमृत्युनाश** ( akālamṛtyu-nāśa) *m.* removing or averting untimely death राजासौ…चचार सुमहत्तपः । अकालमृत्युनाशाय स्वराज्ये मृतमुक्तये SkandP. ii (2). 37. 43; अकालमृत्युनाशाय तथा दुःस्वप्नदर्शने । …स्मर्तव्यं च सदा नरैः ( विष्णोः सहस्रनाम ) SkandP. v (1). 63. 227.

**अकालमृत्युनिवारण** ( akālamṛtyu-nivāraṇa ) *n.* averting or removal of untimely death यदि कर्मभिर्देहिनः फलोपभोगाय देह आरभ्यते तर्हि तत्फलोप-भोगसमाप्तेः प्राङ् न देहेन देहिनो वियोगः संभवतीत्यकालमृत्युनिवारणाय कर्मविद्या-( ? ध्या )नर्थक्यम् Aparā. 1009. 15 (*on* 3. 165)

**अकालमृत्युप्रतिषेधन** ( akālamṛtyu-pratiṣedhana ) *n.* averting or warding off of untimely death अन्यानि च यथेप्सितानि कर्माणि करिष्यामि अकालमृत्युप्रतिषेधनं सर्वरोगप्रशमनं…प्रीतिं सर्वसत्त्वेषु GiMs. i. 77. 9.

**अकालमृत्युभयद** ( akālamṛtyubhaya-da ) *adj.* giving rise to the danger of untimely death उदक्पूर्वे तु शाले द्वे दण्डाख्ये यत्र तद् भवेत् । अकालमृत्युभयदम् MatsyaP. 254 .11.

**अकालमृत्युभीति** ( akālamṛtyu-bhīti ) *f.* the fear of premature death संहरेदकालमृत्युभीतिं या मयूरसारिणी जनानाम् ĪśānS'iPa. i. 21. 112.

**अकालमृत्युशमन** ( akālamṛtyu-śamana ) *adj.* averting untimely death अकालमृत्युशमनं सर्वव्याधिविनाशनम् ।…हरिपादोदकं शुभम् BṛNāraP. 35. 16; SkandP. iii (1). 31. 108.

**अकालमृत्युशान्ति** ( akālamṛtyu-śānti ) *f.* pacification or averting of untimely death ततश्च परिपन्थिकर्मनिवारणार्थमकालमृत्युशान्तिफलाः कर्मविधय उपपन्नाः Aparā. 1009. 22 (*on* 3. 165)

**अकालमृत्युसंपातिन्** ( akālamṛtyu-sampātin ) *adj.* causing premature death अकालमृत्युसंपातिरोगैर्लोक उपद्रुतः । PrabhāC. 118. 30.

**अकालमृत्युहरण** ( akālamṛtyu-haraṇa ) *adj.* removing untimely death ( स्तोत्रमेतत् ) अकालमृत्युहरणं सर्वापद्विनिवारणम् MahNirvāT. 7. 9; PañcaRā. (Nā.) iv. 11. 20.

**अकालमेघ** ( akāla-megha ) *m.* unseasonable cloud समन्ततः…शिखर-भुजैः परिष्वजमाना इव चान्योन्यमकालमेघाः कालमेघाः प्रादुरभवन् JātaMā. 96. 21; अकालमेघा इव तत्र नायकाः समन्ततः संनिहिता धनुर्भृताम् RāghPāṇ. (Dha) 6. 15; अकालमेघवद् वित्तमकस्मादेति याति च KathāSaSāg. vi. 7. 141.

**अकालमेघकाल** ( akāla-meghakāla ) *m.* untimely rainy season काय-वन्तमिव कालमेघकालं ( v. l. अकालमेघकालं )…दर्पशातमपश्यत् HarṣaC. 103. 2.

**अकालमेघवितति** ( akālamegha-vitati ) *f.* row or stretch of untimely clouds कुमुदाकरेण शरदिन्दुचन्द्रिका यदि रामणीयकगुणाय संगता । सुकृतं तदस्तु कतमस्त्वयं विधिर्यदकालमेघविततिर्व्ययूयुजत् MālaMā. 9. 341.

**अकालमेघस्तनित** ( akāla-meghastanita ) *n.* untimely thunder of clouds अकालमेघस्तनिते वर्षतौ पांसुवर्षणे । …अनध्यायाः प्रकीर्तिताः SkandP. iii. (2). 6. 81.

**अकालमेघोदय** ( akāla-meghodaya ) *m.* unseasonable rise of clouds, mist अकाले यः मेघानाम् उदयः । कुज्झटी इति शब्दमाला S'abdaKaDru. [PW]

**अकालयुक्त** ( akāla-yukta ) *adj.* **A** used or deployed at an improper time वाक्यस्याकालयुक्तस्य धारयेद् वेगमुत्तमम् CaraS. i. 7. 28 (1941 Ed.); अकालयुक्तसैन्यस्तु हन्यते कालयोधिना NītiSā. 9. 41; **B** ( a-kālayukta ) not connected with any specific time ‘ऐन्द्रं पयोऽमावास्यायाम्’ इति पौर्ण-मास्यमावास्याकालयुक्तविधिविहितानामाग्नेयादीनां षण्णां यागानाम् ‘समिधो यजति’ ‘तनूनपातं यजति’ इति अकालयुक्तविधिविहितानां प्रयाजादियागानां च Pūrvotta-VāNaMā. 11. 5; MayūMāli. 128. 14 (*on* ii. 2. 3)

**अकालयोग** ( akāla-yoga ) *m.* sexual union at an improper time अकाल-योगात्…गर्भं चिराद् विन्दति सप्रजापि ॥ CaraS. iv. 2. 7 (1941 Ed.)

**अकालयोगिन्** ( a-kālayogin ) *adj.* not related to time अकालयोगिनि तु कार्ये अस्य चोद्यस्यैवानुत्पत्तेः IṣṭaSi. 56. 1.

**अकालरोषिन्** ( akāla-roṣin ) *adj.* untimely angry कस्याद्य पत्रमुत्क्षिप्तं कालेनाकालरोषिणा PārśvC. 2. 576.

**अकाललब्धविभव** ( akālalabdha-vibhava ) *adj.* one who has unexpectedly obtained prosperity or wealth अभवन्मन्मात्रशेषं कुलम् । रे काल त्वमकाललब्धविभवः स्वैरं सकामो भव MahāN. 9. 59.

**अकालवर्ष** ( akāla-varṣa ) **A** *m. n.* untimely or unseasonable rain इत्येवं षड्विधं कालमनवेक्ष्य भिषग्जितम् । प्रयुक्तमहिताय स्यात् सस्यस्याकालवर्षवत् CaraS. vi. 30. 307 (1941 Ed.); नाकालवर्षविद्युत्स्तनितेषु ( अधीयीत ) Viṣṇu-Sm. 30. 8; प्रतिमर्शस्तु…अकालवर्षदुर्दिनेष्वपि च योज्यः AṣṭāSaṁ. i. 157. 13 (1 .29); अकालवर्षनीरौघघातविह्वलमानसा । ज्येष्ठार्थिका गुहामध्यं विवेश जलपाततः BṛKathāK. 97. 54; YuktiKa. 177. 19; अकालवर्षाद् भिषजां प्रमोदः SūktiMu. 89. 21 = SūktiRa. 110. 11; S'aṅkaVi(Ā) 224. 12; **B** *m.* name of a king, of a prince, title of a king अकालवर्षो वरिषति ( ? वर्षति ) [ सर्वा ]र्तिनि[ र्मथने ] EI. xiii. 280. 16; श्रीमदकालवर्षदेवः सर्वानेव…समाज्ञापयति EI xiii. 280. 23; योऽसावकालवर्षापरनामा…गीयते लोके EI. i. 54. 16; i. 55. 31; iii. 106. 20; iii. 298. 9; पृथ्वीवल्लभेऽकालवर्षदेवे…सुखं वसति EI iv. 60. 10; iv. 285. 55; देव-कुलमासीत् कण्णेश्वरन्नाम स्वनामधेयाङ्कित[म् ] असावकालवर्ष इति विख्यातः EI. iv. 342. 35; v. 195. 45; अकालवर्षोर्जितभूपनामको बभूव राजर्षिः EI. vi. 29. 6; vi. 210. 19; vi. 210. 20 (fn. 19); श्रीमानकालवर्षस्तन[य]स्समभूत् कुलालंबः EI. vi. 291. 41; vi. 294. 81; vii. 38. 16; viii. 186. 21; ix. 32. 44; ix. 36. 44; x. 86. 18; यः सन्ततमभिवर्षन्नकालवर्षो भुवि ख्यातः EI. xiv. 125. 37; xiv. 126. 41; xiv. 126. 56; xviii. 244. 8; xix. 241. 4; °परमेश्वरश्रीमदकाल[व]र्ष[देव]प-( पा )दानुध्यात° … °श्रीध्रुवराजदेवस्य EI xxii. 107. 36; xxii. 74. 31; xxii. 184. 36.

**अकालवर्षम्** ( akāla-varṣam ) *adv.* like an untimely or unseasonable shower कृष्णस्येवाकृष्णं चरितं श्रृ( ? श्री )कृष्णराजस्य । … समीहितमजस्रम् । तत्क्षणमकालवर्ष( र्षं ) वर्षति सर्वार्तिनिर्वपणम् EI. xxii. 183. 18; xxii. 106. 18; xxii. 82. 17; xxi. 141. 16.

**अकालवर्षिन्** ( akāla-varṣin ) *adj.* raining out of season अकालवर्षी पर्जन्यो भविष्यति गते युगे MahāBhā. iii. 188. 69.

**अकालवलीपलित** ( akāla-valīpalita ) *n.* untimely wrinkles and grey hair ( नस्यं ) शमनमकालवलीपलितखलतिदारुणकरक्तराजीव्यङ्गनीलिकारक्तपित्तादिषु यथास्वमुपदिष्टैः स्नेहैः ( योज्यम् ) AṣṭāSaṁ. i. 154. 2 (1. 29) ( गण्डूषः ) सम्यक्प्र-युक्तश्चाकालवलीपलिततिमिरव्यङ्गतिलकादीन् प्रशमयति AṣṭāSaṁ. i. 161. 24 (1. 31); ii. 60. 9 (4. 10); ( नस्यम् ) देयम्…अवबाहुकाकालवलीपलितप्रादुर्भावदारुणप्रबोधेषु SiddhYo. 78. 4.

**अकालवाचित्व** ( a-kālavācitva ) *n.* absence of the characteristic of being expressive of time ‘कालाट्ठञ्’ इत्यस्याप्राप्तिः समुदायस्याकालवाचित्वात् तदन्तविध्यभावाच्च Pradī. iv. 282A. (*on* P. v. 1. 94 Vār. 5)

**अकालवाचिन्** ( a-kālavācin ) *adj.* (a word) not denoting time एषु परेष्वकालवाचिनः सप्तम्या अलुग्वा PrakriKau. i. 690. 7; अकालवाचि सप्तम्यन्तं प्रकृत्या सिद्धादिषु SiddhāKau. 636B. 11.

**अकालवाहन** ( akāla-vāhana ) *n.* untimely discharge or flow अकाल-वाहनाद्वायुः श्लेष्मरक्तविमूर्च्छितः । कर्णिकां जनयेद्योनौ AṣṭāSaṁ ii. 322. 13 (6. 38)

**अकालविजिगीषु** ( akāla-vijigīṣu ) *adj.* desirous of victory or conquest at an improper time or season एकदा च राजा…अकालविजिगीषुनृपतिसैन्यमिव

यथासंख्यं तपोदयक्षपितानेकपापकलिम्…विद्याधरमुनिमपश्यत् TilaMañ. 24. 20.

**अकालविद्** ( a-kālavid ) *adj.* one who does not know the proper time ( नृपः ) सेवेत प्रणयं हित्वा दक्षः स्यान्न त्वकालवित् । MahāBhā. xii. 71. 10.

**अकालविद्युत्** ( akāla-vidyut ) *f.* untimely lightning अकालविद्युत्स्तनयित्नुघोषे…नाध्येयम् SuśruS. i. 2. 9 ( comm. विद्युद्ग्रहणमुपलक्षणं, तेनाकालिकी वृष्टिर्गृह्यते, अकालवृष्टिः अनृतुवृष्टिः सा तु हेमन्तशिशिरयोः ); नाकालविद्युत्स्तनिते भूकम्पे…पठेत् । AṣṭāSaṁ. i. 5. 5 (1. 2); अकालविद्युत्स्तनिते वर्षतौ पांसुवर्षणे ।… अनध्यायाः SkandP. iv. 38. 75; YuktiKa. 177. 19.

**अकालविनियोग** ( akāla-viniyoga ) *m.* use (of the *mantras*) at an improper time अकालविनियोगेन प्रबोधः ( ? ध ) स्वापगा जपात् TantrRā. 1. 77 ( comm. अजपात् अत्र सन्धिर्दिव्यत्वादचिन्त्यः )

**अकालविपन्न** ( akāla-vipanna ) *adj.* prematurely dead हा कुमारकमकालविपन्नम् RāmC. 16. 102.

**अकालविप्रमुक्त** ( akāla-vipramukta ) *adj.* released at a wrong time अकालविप्रमुक्तान्मे त्वत्त एव भयं भवेत् MahāBhā. xii. 136. 9.

**अकालविरोहिन्** ( akāla-virohin ) *adj.* growing out of season वर्जयेत् पत्रशाकं तद्वदकालविरोहि च SuśruS. i. 46. 297.

**अकालविषय** ( akāla-viṣaya ) *adj.* referring to improper time इदमकालविषयम् BālamBha. i. 51. 26 (*on* 1. 14)

**अकालवृष्टि** ( akāla-vṛṣṭi ) *f.* untimely shower or rain यथा ह्यकालवृष्टया च भूमौ बीजं विपद्यते BhelaS. 4. 26(1. 5); मधुरखा परभृतिका भ्रमरी च…कोटरमकालवृष्ट्या…गमिते Mālavikā 4. 2; अकालवृष्टिविवशं लहरे व्यद्रवद्बलम् RājTa. (Ka.) 7. 1373; अकालवृष्टिस्वरूपमाह लल्लः NirṇaSi. 223. 10; आर्द्रादिज्येष्ठान्तादन्यत्राकालवृष्टिः BālamBha. i. 411. 16 (*on* i. 151); (*akālavṛṣṭi* as an ill omen) दिने प्रवर्धन्तेऽकालवृष्ट्यादिभिः सह महोत्पाताः S'āraTi. 21. 140; अकालवृष्टिस्त्वथ भूमिकम्पः…इत्याद्यनिष्टानि ततो बभूवुः SiṁhāDvā. 34. 1; अकालवृष्टिः कुमुहूर्तदोषः …सर्वेषु देशेषु सदा विवर्ज्याः VasiS. 32. 23; 32. 89; 42. 99; 42. 107; 43. 163.

**अकालवेग** ( akāla-vega ) *adj.* [*f.* -ā] having unseasonable speed or current नाकालतः पुष्पफलं नगानां नाकालवेगाः सरितो वहन्ति MahāBhā. xii. 26. 9.

**अकालवेला** ( akāla-velā ) *f.* wrong or unseasonable time यद्यपि चातकपक्षी क्षपयति जलधरमकालवेलायाम् Cātakāṣṭaka (Kāvyasaṁgraha Ed. Jīvā.) 2. 8.

**अकालव्यपेत** ( a-kālavyapeta ) *adj.* without a gap of time पौर्वापर्यमकालव्यपेतं संहिता Vār. 9 (*on* P. i. 4. 109); MahāBh. i. 355. 23 (*on* P. i. 4. 109); i. 356. 2 (*on* P. i. 4. 109); Pradī. vii. 169 (*on* P. viii. 3. 34)

**अकालशब्द** ( a-kālaśabda ) *m.* absence of a word expressive of time चोदना वाकालशब्दात् KātyāS'S. xxv. 1. 2 ( comm. न ह्यत्र कालप्रतिपादकः शब्दोऽस्ति )

**अकालशयन** ( akāla-śayana ) *n.* sleeping at a wrong time ( समानः ) करोत्यकालशयनजागराद्यैश्च दूषितः । शूलगुल्मग्रहण्यादीन् AṣṭāSaṁ. i. 304. 9 (3. 16); अकालशयनान्मोहज्वरस्तैमित्यपीनसाः AṣṭāHr. i. 7. 60; अकालशयनाच्छ्लेष्मा HāriS. i. 23. 51; किं करोमि जगन्मूर्त्तौ न्यस्तभारोऽस्म्यहं त्वयि । न दोषमीहसे नूनमकालशयनेन माम् SkandP. i(3). 6. 19.

**अकालशालि** ( akāla-śāli ) *m.* the paddy-crop growing out of season सा…अकालशालयः सर्वे तथाकालफलानि च…सर्वाणि तानि…प्रकटीकुरुते JayāS. 28. 139.

**अकालश्वास** ( akāla-śvāsa ) *m.* irregular breathing अकालश्वाससंयुक्ता बद्धभ्रष्टभगान्विता…मूढगर्भा न जीवति RasRaSa. 22. 104.

**अकालसंयमम्** ( a-kālasaṁyamam ) *adv.* without any restriction of time यद् यदाप्नोति सुबहु तदत्तेऽकालसंयमम् ViṣṇuP. ii. 13. 45 [WILSON]

**अकालसंयुक्त** ( a-kālasaṁyukta ) *adj.* not connected with (words expressing) time वचनानि श्रूयन्ते ।…आज्यभागौ यजतीत्यकालसंयुक्तानि S'āstrDī. 125. 3 (*on* ii. 2. 3); अकालसंयुक्तानां च सर्वेषां प्राधान्यम् MayūMāli. 125. 10. (*on* ii. 2. 3)

**अकालसदृश** ( a-kālasadṛśa ) *adj.* not befitting the age स्वर्गमेष गतः शूरः…अबालसदृशं ( v. l. अकालसदृशं ) कर्म कृत्वा वै पुरुषोत्तमः MahāBhā. vii. App. I. 8. 20.

**अकालसंध्या** ( akāla-sandhyā ) *f.* untimely twilight, evening or dusk before its due time यः…बिभर्ति । बलाहकच्छेदविभक्तरागामकालसंध्यामिव धातुमत्ताम् KumāSaṃ. 1. 4 = KāvyPra. 320. 3; अकालसंध्याघनरागपिङ्गलं घनं घनानामिव वृन्दमुद्यतम् KumāSaṁ. 14. 22; °किसलयसहस्रदर्शिताकालसंध्याविभ्रमैः …उपवनपादपैः VāsaDa. 120. 3; सः…अकालसंध्यामिव पिङ्गलोचनः प्रभां बभार क्षयलक्षणां द्विषाम् DaśāvaC. 3.23; 4.82.

**अकालसमुद्यम** ( akāla-samudyama ) *m.* untimely effort or undertaking वस्तुष्वशक्येषु समुद्यमश्च शक्येषु चाकालसमुद्यमश्च । शक्येषु मोहादसमुद्यमश्च त्रिधैव कार्यव्यसनं वदन्ति NītiSā. 16. 25.

**अकालसंप्राप्त** ( akāla-samprāpta ) *adj.* arriving untimely, arising unseasonably व्योम धूमेन घनमुचता । अभूदकालसंप्राप्तप्रावृड्मेघैरिवावृतम् PadmP. (Ra.) 105. 14.

**अकालसंभव** ( akāla-sambhava ) *adj.* [*f.* -ā] rising at an unusual time, happening at the improper time, untimely, unseasonal अन्यं स्वामिनमिच्छन्ति नद्यश्चाकालसंभवाः AVPari. Lxxb. 23. 4; प्रलयोऽकालसंभवः SkandP. vii(3). 39. 22; अकाले पुष्पिता वृक्षाः फलं चाकालसंभवम् BhaviP. 410B.8 (ii (3). 20. 107)

**अकालसंभव** ( akāla-sambhava ) *m.* untimely origin or production or occurrence आकालिकं क्षणध्वंसि यस्य चाकालसंभवः DharK. 181.

**अकालसह** ( a-kālasaha ) *adj.* **A** brooking no delay अकालसहं कार्यमद्यश्वीनं( ? °श्वीनं ) न कुर्यात् NītiVā. 10. 63; **B** unable to hold out for long (said of a fort) अकालसहमत्यल्पं…मीरुयोधं च दुर्गव्यसनमुच्यते Hitopa. 3. 134; **C** impatient [APTE; MW.; PW.]

**अकालसुलभ** ( akāla-sulabha ) [*f.* -ā] frequently appearing at improper or odd times अस्थानोपनतामकालसुलभां तृष्णां प्रति क्रुध्य भोः Loc. 36. 22 (*on* 1. 13) = SūktiMu. 35. 6 = S'ārṅgaPa. 1152.

**अकालस्तनित** ( akāla-stanita ) *n.* unseasonal thunder अनध्यायान्वर्जनीयान्विवर्जयेत् । …अकालस्तनितं चैव निर्ज्योतिषमथाम्बरम् ViṣṇuDhaP. ii. 52. 135.

**अकालसैन्ययुक्त** ( akāla-sainyayukta ) *adj.* mustering an army at an improper time or season अकालसैन्ययुक्तस्तु हन्यते कालयोधिना Hitopa. 4. 50.

**अकालस्वाध्याय** ( akāla-svādhyāya ) *m.* study of Vedic texts during the forbidden periods अकालस्वाध्याये चामी दोषाः SthānṬ. 214A. 4.

**अकालस्वाप** ( akāla-svāpa ) *m.* untimely sleep, sleep at an improper time (i. e. during day-time) मद्यपानं…अकालस्वापः परगृहवासः इत्येतानि षट् स्त्रिया व्यभिचाराख्यदोषजनकानि ManvaMu. 366. 10 (*on* 9. 13)

**अकालहरण** ( a-kālaharaṇa ) *n.* without loss or waste of time, without delay अकालहरणादेव… । नन्वानीतः प्रसह्य त्वं कृतान्तेनास्मदन्तिकम् RāmC. 28. 94.

**अकालहरणम्** ( a-kālaharaṇaṁ ) *adv.* without any loss of time, without delay, अकालहरणं तस्मादागन्तव्यं महाधिया MahāP. 8. 98.

**अकालहापन** ( a-kālahāpana ) *n.* [*Abl.* as *adv.*] without waste of time, without delay, promptly प्रयतध्वमकालहापनात् कपयः संज्ञपनाय रक्षसः RāmC. 13. 69.

**अकालहिंसाघात** ( akāla-hiṁsāghāta ) *m.* untimely whipping, injurious stroke at an improper time अकालदण्डपाताच्च त्वकालग्रहमोक्षणात् । अकालहिंसाघाताच्च तेन वाजी न धावति AśvaCi. 8. 17.

**अकालहीनम्** ( a-kālahīnam ) *adv.* without losing time, immediately तदिदानीं कालहीनं ( v. l. अकालहीनम् )…भवता…यज्ञसंदर्शनाय आगन्तव्यम् Mālavikā. 5. 15(3); यदत्र युक्तं तत् संविधत्स्व त्वमकालहीनम् VarāṅgaC. 16. 106; त्वयाकालहीनमिदमवश्यमावेदनीयम् VeṇīSaṁ. 6. 416; व्यसनस्य कुर्यादकालहीनं व्यवरोपणं सः NītiSā. 14. 94; फलाय कर्मोद्यमं…अकालहीनं नयवित् समाचरेत् NītiSā. 16. 58; आदौ पश्यति बुद्धिर्व्यवसायोऽकालहीनमारभते Kāvyālaṅ.(Ru.) 7. 99; अकालहीनं तु चिन्तयस्व…उपायं मखविध्वंसे VāmaP. 78. 49.

**अकालहोलोत्सव** ( akāla-holotsava ) *m.* untimely festival of Hol. (*hence*) incendiarism यो यावने लोहपुरे समन्तादकालहोलोत्सवमाततान Rāṣṭraui 3. 42.

**अकालागत** ( akālāgata ) *adj.* [*f.* -ā] **A** who has come or appeared untimely or unexpectedly अकालागतां दृष्ट्वा मातरम् SkandP. vi. 51. 4; **B** gathered untimely or unseasonably म्लेच्छराजा तत्सत्त्वादकालागतजलदपटलसाहाय्येन विजिग्ये PrabaCin. 97. 20.

**अकालागमन** ( akālāgamana ) *n.* **A** untimely return premature arrival अकालगमनं तस्या रौद्रं भम्भारवं तथा । दृष्ट्वा श्रुत्वा च वत्सोऽसौ शङ्कितः SkandP. vii (3). 22. 55; **B** an act of coming or approaching at the wrong time, coming late अकालागमनक्रोधविधुरेश्वरचक्षुषा । क्षिप्रं स्मर इवायाति सेवको दग्धभूतिताम् SevyaSev. 13.

**अकालादेशसंचार** ( akālādeśa-sañcāra ) *m.* wandering at an improper time and place अकालादेशसंचारी…प्रज्ञापराधं तं शिष्टा ब्रुवते व्याधिकारिणम् CaraS. iv. 1. 104 (1922 Ed.)

**अकालाधिक्य** ( a-kālādhikya ) *n.* absence of an intercalated time-period अपरः संक्रान्तिरहितोऽपि न मलमासः, अकालाधिक्यात् CaturCin. iii (2). 28. 13.

**अकालाध्ययन** ( akālādhyayana ) *n.* study at an improper time अपि च, आचार्योपाध्यायप्रत्यनीकत्व-अकालाध्ययन-श्रद्धाभाव°…ज्ञानावरणस्यास्रवाः Tattvā-RāVār. vi. 10. 20.

**अकालानयन** ( akālānayana ) *n.* the act of bringing at an odd time अकालानयनाज्जातशङ्केनानिच्छतापि हि । मया…तद्द्रव्यं गोपितं गृहे SamarāSaṁ. 2. 193.

**अकालान्तरित** ( a-kālāntarita ) *adj.* [ *f.* -ā ] not delayed ( *lit.* not intervened by time-lag ) अकालान्तरिता पूजा नाशयत्येव वेदनाम् PañcRā. 2. 28.

**अकालान्नभृत** ( akālānnabhṛta ) *adj.* one of the 15 kinds of servants ' supported or nourished with food during famine or bad times ' दासाश्च गृहजातक्रीतलब्धदायोपागताकालान्नभृतस्वाम्याहितमहाऋणमोक्षितयुद्धप्राप्तपणजितत-वाहमित्युपगतदास्युद्वाहेनप्राप्तदासत्वकं( ? क )भक्तदासात्मविक्रयिप्रव्रज्यावसिता इति पञ्चदश BālamBha. iii. 72. 14 ( *on* 3. 22 )

**अकालामृतवर्ष** ( akālāmṛtavarṣa ) *m. n.* a sudden or unexpected shower of nectar जरितौ द्विजदम्पती । अकालामृतवर्षौघशान्ततापौ तदोचतुः SkandP. iv. 11. 100.

**अकालाम्बु** ( akālāmbu ) *n.* untimely watering यथा बीजमकालाम्बुकृमि-कीटाग्निदूषितम् CaraS. vi. 30. 134 (1941 Ed.)

**अकालाल** ( a-kālāla ) *adj.* having non-defective or steady feet (?) ऊचेऽथ जाङ्गलनृपोऽमिसरन्नकालालोऽकालिलं तम् ( चौलुक्यम् ) DvyāśraKā. 18. 78. ( author's own comm. काला पादस्तसाविशेषो यस्य स, तथा, नाकालालः )

**अकालावेदन** ( akālāvedana ) *n.* untimely announcement भोक्तुकामं … भूपतिम् । अकालावेदनाद्भिभ्यत्क्षत्ता जातु व्यजिज्ञपत् RājTa.(Ka.) 6. 42.

**अकालाशनि** ( akālāśani ) *m. f.* untimely thunder अकालाशनिसंकाशं तच्छ्रुत्वा दुःखिता वयम् BṛKathāMañ. i (2). 115; उर्वश्यै पुरूरवाः । अकालाश-निपातोग्रं स्ववृत्तान्तं न्यवेदयत् KathāSaSāg. iii. 3. 24; अकालवर्षाकालाशनिपात-वृश्चिकवर्ष…प्रभृतिभिः क्रियाविशेषैः S'aṅkaVi.(Ā.) 224. 12.

**अकालास्तमय** ( akālāstamaya ) *m.* untimely setting ( i. e. of the sun ) स एष कैलास उपान्तसर्पिणः करोत्यकालास्तमयं विवस्वतः Kirātā. 5. 35.

**अकालिक** ( a-kālika ) *adj.* [ *f.* -ī ] **A** not belonging to the proper time or season हेमन्तादिषु कुर्वीत स्वं स्वं ( विधिं ) चाकालिकेष्वपि AṣṭāSaṁ. i. 61. 24 (1. 9); **B** not delayed, immediate अकालिकमिति वा पाठः काल इति लोके विप्रकर्ष उच्यते । तत्र भवं…कालिकं न कालिकमकालिकम् TantrVā. 31. 18 ( *on* i. 2. 14 ); न कालिकमकालिकम् MīmāKau. iii. 36. 9 ( *on* i. 2. 14 ); **C** not relating to or connected with or depending on time नाकालिकं वस्तु समस्ति किंचित् S'ivaP. vii (1). 7. 22 (510B. 2); **D** unexpected, sudden क्षमा युधि न कार्या वै…अकालिके त्वधर्मे च अनर्थे वारिसूदन LiṅgaP. i. 98. 176; **E** untimely त्रिपुरस्येह वधश्चैव विधीयताम् । नो चेदकालिकी देवसंह( ? ह )तिः क्रियतां ध्रुवम् S'ivaP. ii (5). 3. 17 ( *on* 222B. 10 ); तावद् वात्योदभूच्चण्डा…।अकालिकी कालरात्रि-रिवान्धंकरणी दृशाम् TriṣaS'aPuC. iv. 7. 98; **F** unseasonal, grown out of proper season अकालिकैरदेशजैर्व्यञ्जनैः फलादिभिश्चित्रीयमाणमानसः PrabaCin. 34. 23; **G** caused by an unexpected or sudden event or incident ( नान्दीश्राद्धे कृते पश्चादनध्यायस्त्वकालिकः ) अकालिकः गर्जनिर्घातादिनिमित्तकः BālaṁBha. i. 48. 5 ( *on* 1. 14 )

**अकालिकगर्ज** ( akālika-garja ) *m.* untimely or unseasonal rumbling of clouds यत्तु लल्लेन वसिष्ठनाम्नोदाहृतं वचनम्…तदपि समूलत्वेऽकालिकगर्जविषयम् BālaṁBha. i. 52. 15 ( *on* 1. 14 )

**अकालिकम्** ( akālikam ) *adv.* without any delay, immediately, all of a sudden पुत्रः प्रदातव्यो मया क्षिप्रमकालिकम् MahāBhā. i. 99. 42; सांप्रतं चैव यत्कार्यं तच्च क्षिप्रमकालिकम् । क्रियताम् MahāBhā. iv. 26. 7; अकालिकं कुरवो नाभविष्यन् MahāBhā. v. 32. 21; यत्ते कार्यं सपुत्रस्य क्रियतां तदकालिकम् Mahā-Bhā. v. 56. 25; दद्यामहं…शकटं…गोभिर्युक्तमकालिकम् MahāBhā. viii. 303*(2); यदत्रानन्तरं कृत्यं क्रियतां तदकालिकम् MārkP. 22. 21.

**अकालिकमनोहर** ( akālika-manohara ) *adj.* charming though un-timely, charming even in the wrong season or time ततो वसन्तः…वलं सम-करोत्तदा ।…अकालिकमनोहरम् BrahmP. 178. 51.

**अकालिकमृत्यु** ( akālika-mṛtyu ) *m.* untimely or premature death हन्त्यकालिकमृत्युं तदमृतम् BrahmVaiP. iv. 37. 26.

**अकालिकी** ( akālikī ) *f.* lightning, flash of lightning किलाकाले नोपापा-पोऽपि नापपुः RāghPāṇ.(Dha.) 18. 43; ( comm. का अकालिकी विद्युत् प्रकरणात् न उपाप । अपि तु व्यापैव । आपः जलानि अपि न आपपुः )

**अकालियविमर्दन** ( a-kāliyavimardana ) *adj.* other than one who has tamed or subjugated the serpent Kāliya अकालियविमर्दनान्…अलमुपास्य वृन्दारकान् YātrāPra. 7. 116.

**अकालीन** ( a-kālīna ) *adj.* untimely, out of season यत्र वृक्षा अकालीनं दर्शनं फलपुष्पयोः AVPari. LXXB. 7. 23.

**अकालुष्य** ( a-kāluṣya ) *n.* **1** perspicuity, clearness, purity ( of lite-rary style ) तदकालुष्यं प्रसन्नत्वं नाम सर्वरसानां गुणः Loc. 82. 13 ( *on* 2. 11 ); **2** purity ( of the mind or soul ) तेषामेव ( क्रोधमानमायालोभानामेव ) मन्दोदये तस्य ( चित्तस्य ) प्रसादोऽकालुष्यम् Amṛtacandra *on* Pañcāstikāya 138.

**अकालोचित** ( a-kālocita ) *adj.* inopportune, not fit for the time or age देव्या देवस्य पश्चावस्था अकालोचितो विवाहकाल आर्याया हस्ते वर्तते TāpaVa. 4. 4(12); तदकालोचितः पुत्र मुच्यतामेष दुर्ग्रहः KathāSaSāg. xvii. 5. 122; किमेव-मकालोचितमाचरसि RasSa. 145. 12.

**अकालोत्थ** ( akālottha ) *adj.* born or appearing out of season, un-seasonal पादस्पृष्टमकालोत्थं…परीक्ष्य…वर्जयेत् पाककर्मणि PāraS. 18. 217.

**अकालोत्पन्न** ( akālotpanna ) *adj.* occurring prematurely or at a wrong time ततो बहलधूलीभिरन्धकारमयं जगत् । अकालोत्पन्नकल्पान्तमिव यक्षश्च-कार सः TriṣaS'aPuC. iv. 7. 197.

**अकालोपक्रम** ( akālopakrama ) *m.* commencement at a wrong ( i. e. other than the prescribed ) time तस्मात्कर्मान्तरमेवाकालोपक्रमप्रायश्चित्तत्वेन विधीयते S'āstrDī. 492. 16 ( *on* vi. 5. 1 ); ( प्रयोगत्रयं ) न वा सिद्धान्ताभिमतमेक-स्मिन्नेव प्रक्रान्ते दर्शप्रयोगे अकालोपक्रमनिमित्तदेवताविकारमात्राभ्युपगमात् Vidhi-Ra. 40 (205. 20); नैमित्तिकानां कर्मणां स्वकाले क्रियमाणदर्शाङ्गत्वं प्रकरणात् तच्चा-कालोपक्रमनिमित्तदोषनिर्घातार्थत्वाच्च…विकल्प्येत BhāṭṭDī. ii. 284. 22 ( *on* vi. 5. 1 ); अन्यथा विकृतिप्रकृत्योरकालोपक्रमपर्वाविच्छिन्नजीवननिमित्तयोर्विहितत्वेन निमित्तानन्तर-मेव कर्तव्यताया ज्ञातत्वेन सम्प्रति कतरत्कर्तव्यमित्यार्थवादिकसंशयोपन्यासो न समञ्जसः स्यात् BhāṭṭCan. 13. 2 ( *on* xiii. 2. 9 ); चतुर्दश्याममावास्याभ्रमाद्दर्शोप-क्रमे कृते तदनन्तरं रात्रौ चन्द्रोदये सति अकालोपक्रमदोषनिर्हरणार्थं यस्य हविर्निरुप्त-मित्यादिना विहितेष्टिरभ्युदयेष्टिः MayūMāli. 130. 25 ( *on* ii. 2. 3 )

**अकालोपक्रान्त** ( akālopakrānta ) *adj.* commenced at a wrong ( i. e. other than the prescribed ) time ननु तर्हि गुणविधिरेवास्तु ' यस्य हविर्निरुप्तम् '-इत्याद्यधिकारिविशेषणादकालोपक्रान्तप्रकृतकर्मप्रत्यभिज्ञाने जाग्रति तत्र गुणमात्रविधा-नमतिलङ्घ्य गुणविशिष्टकर्मान्तरविधिकल्पनायोगात् VidhiRa. 40 (206. 14); अत्राप्य-कालोपक्रान्तकर्माभावेन प्रत्यभिज्ञानाभावस्य वक्तुं शक्यत्वात् VidhiRa. 40 (207. 3); कृतेयमिष्टि ( i. e. अभ्युदयेष्टि ) र्यदि पूर्वा दर्शेष्टिरेव तदास्या अकालोपक्रान्तत्वात्प्राय-श्चित्तेष्टिलोपः BhāṭṭCan. 13. 12 ( *on* xiii. 2. 9 ); प्रयोजनं पूर्वपक्षेऽकालोपक्रान्तदर्श-प्रयोगं त्यक्त्वा संकल्पप्रभृति कर्मान्तरं कर्तव्यम् MayūMāli. 494. 32 ( *on* vi. 5. 1 )

**अकालोपनीत** ( akālopanīta ) *adj.* initiated with the sacred thread at an improper time पुनःसंस्कारे पुनर्वसुनियमः । अस्ति च तत्प्राप्तिरकालोपनीतस्य ' विनर्तुना वसन्तेन ' इत्यादिशास्त्रात् BālamBha. i. 71. 17 ( *on* 1. 14 )

**अकालोपयुक्त** ( akālopayukta ) *adj.* used or utilised at an improper time य एव हि केचित्पानभोजनशीतोष्णादय इष्यन्ते सुखहेतवस्त एवात्युपयुक्ता अकालोपयुक्ताश्च पुनर्दुःखहेतवः संपद्यन्ते AbhidhKoBh. 330. 13 ( *on* vi. 3 )

**अकालोपसर्पणा** ( akālopasarpaṇā ) *f.* approaching at an improper time, untimely approach पुरुषस्य…अमकरकेतोरप्यकालोपसर्पणाप्रकुपितेश्वरदृष्टि-दग्धस्य…किं प्रायश्चित्तम् HarṣaC. 297. 18 ( v. l. अकालोपसर्पण )

**अकाल्पनिक** ( a-kālpanika ) *adj.* not imaginary ( i. e. true or real ) काल्पनिकं च अयतनत्वम् अकाल्पनिके संविद्वपुषि कथम् ParāTri. 9. 7.

**अकाल्य** ( a-kālya ) *adj.* **1** not approachable न चाहमेतस्य भवाम्य-काल्यः स मे कस्माद्द्वारि तिष्ठेत क्षत्तः MahāBhā. v. 32. 5; अहं हि विदुरस्यास्य नाकाल्यो जातु दर्शने MahāBhā. v. 33. 5; ( MahāBhāDī. अकाल्यः अनवसरः; Lakṣābha. अकाल्यः कालायोग्यः ); **2** not appearing at the proper time, occurring at a wrong time दिगादिदेहांशाच्च इत्यनेन तत्र भव इत्यर्थे दिगादेर्यत्प्रत्ययो भवति । दिशि भवं दिश्यम्…अकाल्यः GaṇRa. 5. 340 (378)

**अकाल्यम्** ( a-kālyam ) *adv.* at a wrong time अकाल्यं वर्तते लोभः BhagAjju. 47. 1.

**अकावङ्क** ( akāvaṅká ) *n.* water ( = aṅkāṅká ) [nt. MW.]

**अकाव्य** ( a-kāvya ) *n.* non-poetry इदं काव्यमकाव्यं वा किमपि न स्यात् SāhiDa. 9. 1; न चेदमकाव्यमिति शक्यं वदितुम् RasGaṅ. 7. 10.

**अकाव्यकृतघात** (akāvyakṛta-ghāta) *m.* harm caused by (the defects in singing) the poem एवं पुष्करगतं कर्तृनियोज्यं( ? ज्यं ) विधिप्रयोगं हन्तीत्यकाव्य-कृतघातस्य स्थानानि निमित्तानीत्यर्थः AbhinBhā. iii. 315. 20 ( *on* 27. 31 )

**अकाव्यत्व** ( akāvya-tva ) *n.* the state of not being poetry विरोधगर्भ-स्यैव वाक्यस्य काव्यत्वात् । अन्यस्याभावादकाव्यत्वाच्च कुत्राप्यादिपरित्यागः Alaṅkā-Ra. 52. 50; द्वितीये त्वकाव्यत्वम् SāhiDa. 248. 4.

**अकाव्यत्वप्रयोजक** ( akāvyatva-prayojaka ) *adj.* (the factor) causing the state of non-poetry यत्रांशे दोषः सोऽकाव्यत्वप्रयोजकः SāhiDa. 8. 3.

**अकाव्यत्वापत्ति** ( akāvyatvāpatti ) *f.* contingency of being reduced to the state of non-poetry वस्त्वलंकारप्रधानानां काव्यानामकाव्यत्वापत्तेः RasGaṅ. 9. 1.

**अकाव्यरूप** ( a–kāvyarūpa ) *adj.* not of the nature of poetry अकाव्यरूपं तदिति कथितम् Loc. 221. 24 (*on* 3. 43)

**अकाशिसंदर्शन** ( a–kāśisandarśana ) *n.* not seeing or visiting Kāśi वरं हि तिर्यक्त्वमबुद्धिवैभवं न मानवत्वं बहुबुद्धिभाजनम् । अकाशिसंदर्शननिष्फलोदयम् SkandP. iv. 44. 41.

**अकाश्मरी** ( a–kāśmarī ) *adj.* other than Kāśmarī, the plant Gomelina arborea पञ्चमूल्यावकाश्मर्यौ SiddhYo. 20. 28.

**अकाष** ( a–kāṣa ) *m.* non-erasure, non-destruction समूलकाषमविद्याया अकाषात् जाग्रत्स्वप्नलक्षणं जीवस्य व्युत्थानं भवति Bhām. 548. 21 (*on* iii. 2. 7)

**अकाषाय** ( a–kāṣāya ) *adj.* not red, not having the ochre colour वस्त्रं चाप्यकाषायं सर्वेषां ब्रह्मचारिणाम् KauśiSū. 57. 15.

**अकाषायिन्** ( a–kāṣāyin ) *adj.* not wearing the yellowish red garment (i. e. not a *sannyāsin*) नामुण्डो नाप्यकाषायी नाप्यसंवत्सरोषितः MahāBhā. xiii. App. I. 15. 3893.

**अकाष्ठ** ( a–kāṣṭha ) *adj.* [*f.* –ā] not having wood or fuel अकाष्ठमग्निं सा दृष्ट्वा स्वशरीरमथादहत् MahāBhā. ix. 47. 21; अकाष्ठा निस्तृणा भूमिर्दृश्यते कूर्मपृष्ठवत् MahāBhā. xii. 225. 2.

**अकाष्ठकरणक** ( a–kāṣṭhakaraṇaka ) *adj.* without a stick as an instrument इदं तु दन्तधावनानन्तरमकाष्ठकरणकं मङ्गल्यम् VīraMi. 180. 27 (*on* 1. 98)

**अकासार** ( akāsāra ) *m.* name of a teacher, BhāgP. xii. 6. 59. [PW.; MW. ?]

**अकाहल** ( a–kāhala ) *adj.* without noise, silent अकाहलमस्याश्चुम्बनम् KāmSū. 201. 7 (3. 2) ( comm. अकाहलमशब्दम् )

**¹अकि** ( áki ) (Gr.) the technical form in which the root *aṅk*– is given in DhātuPā. 1. 87; DhātuVṛ. 1. 88; KṣīraTa. 1. 87; Nyās. 3. 978 (*on* viii. 2. 22); SaraKaṇṭhā.(Gr.) ii. 3. 51; PadMañ. *on* KāśiVṛ. *on* P. viii. 2. 22.

**²अकि** ( a–ki ) (Gr.) a suffix which is other than a vocative suffix न खं मृदन्तस्याकौ JaineVyā. v. 3. 30.

**³अकि** ( aki ) (Gr.) a secondary suffix used with the verbal root *vṛdh*– to form the noun *vardhaki* 'carpenter' वर्धेरकिः SaraKaṇṭhā.(Gr.) ii. 1. 174 (Nārāyaṇa वर्धयतेरकिः प्रत्ययो भवति । वर्धयतीति वर्धकिस्तक्षा )

**आकिंवृत्त** ( a–kiṁvṛtta ) *adj.* (Gr.) (an *upapada*) which does not contain an interrogative pronoun or its derivative अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि P. iii. 3. 145; किंवृत्तस्यानधिकारादुत्तरत्राकिंवृत्तग्रहणानर्थक्यम् Vār. 1 *on* P. iii. 3. 145; किंवृत्तस्यानधिकारादुत्तरत्राकिंवृत्तग्रहणमनर्थकम् । निवृत्तं किंवृत्त इति तस्मिन्निवृत्तेऽविशेषेण किंवृत्ते चाकिंवृत्ते च भविष्यति MahāBh. ii. 164. 3 (*on* iii. 3. 145); अकिंवृत्तशब्देन किंवृत्तादन्यत्पदं पर्युदासाश्रयेण गृह्यते Pradī. iii. 246B (*on* P. iii. 3. 145); अकिंवृत्तग्रहणं किंवृत्ताधिकारनिवृत्त्यर्थम् PadMañ. *on* KāśiVṛ. *on* P. iii. 3. 145; किंवृत्तेऽकिंवृत्तेऽपि लिङ्लृटौ स्तः PrakriKau. ii. 455. 2; LaŚabdeŚe. ii. 66. 11.

**अकिंवृत्तार्थ** ( akiṁvṛttārtha ) *adj.* intended for the sake of cases where the words derived from the pronominal base *kim* are not found ( किंवृत्ते लिप्सायाम् । लिप्स्यमानसिद्धौ च P. iii. 3. 6–7 ) किमर्थमिदमुच्यते न लिप्स्यमानसिद्धिरपि लिप्सैव तत्र किंवृत्ते लिप्सायाम् इत्येव सिद्धम् । अकिंवृत्तार्थोऽयमारम्भः MahāBh. ii. 140. 7 (*on* iii. 3. 7); KāśiVṛ. *on* iii. 3. 7; Prasā. ii. 449. 10.

**आकिंचन** ( a–kiñcana ) *adj.* [*f.* –ā] [listed in GaṇPā. 147. 16; 178. 44; JaineVyā. i. 3. 66 (58. 12); iii. 4. 112 (234. 26); CāndraVṛ. *on* iv. 1. 139; KāśiVṛ. *on* P. ii. 1. 72; *on* P. v. 1. 122; SaraKaṇṭhā.(Gr.) iii. 2. 118; GaṇRa. 2. 117 (158. 10); 7. 392 (416. 16); PadMañ. *on* KāśiVṛ. *on* P. ii. 1. 72; SiddhāKau. 179B. 6] **A** who possesses nothing, penniless, poor, destitute ब्राह्मणं स्वयमाहूय याचमानमकिंचनम् । पश्चान्नास्तीति यो ब्रूयात् सोऽक्षयं नरकं व्रजेत् MahāBhā. iii. App. I. 32. 35; xii. 28. 28; xiv. 93. 72; दरिद्रः को भवत्वाढ्यो द्रव्यवान् वाप्यकिंचनः Rāmā. ii. 10. 10; श्रोत्रियम् … बालवृद्धावकिंचनम् … राजा संपूजयेत्सदा ManuSm. 8. 395; अकिंचनः सन् प्रभवः स संपदाम् KumāSaṁ. 5. 77; कन्यां समुद्वहेदेषां सोपवासामकिंचनाम् YājñaSm. 3. 261; ViṣṇuP. iii. 11. 62; MārkP. 8. 14; 14. 69; 29. 27; 29. 38; अहमस्म्यपराधानामालयोऽकिंचनोऽगतिः AhirbuS. 37. 30; समवक्षसोऽर्थवन्तः पीनैः शूरास्त्वकिंचनास्तनुभिः BṛSaṁ. 68. 29; सर्वर्तुनिर्वृतिकरे निवसन्नुपैति न द्वन्द्वदुःखमिह किंचिदकिंचनोऽपि ŚiśuVa. 4. 64; Bhaṭṭi. 5. 91; KanaDhāSt. 8; 17; अकिंचनो दुर्गतः ManuBh. ii. 232. 8 (*on* 8. 395); ii. 145. 5 (*on* 8. 152); स किं पुरुषो योऽकिंचनः सन् करोति विषयाभिलाषम् NītiVā. 26. 29; YaśasCam. i. 53. 2; धर्मोऽकिंचनविद्वद्ब्राह्मणाभिगमनात् JayaMa. 311. 23 (*on* 6. 1); LakṣmīT. 50. 217; धर्मगुप्ताह्वयः कश्चिद्राजपुत्रोऽस्ति भूतले । अकिंचनो भ्रष्टराज्यः SkandP. iii (3). 7. 138; v (3). 96. 6; BhāgP. iv. 31. 21; vi. 7. 36; BṛNāraP. 11. 140; 13. 48; 14. 78; VāmaP. 12. 26; अकिंचनोऽपि…लभते… लक्ष्मीम् GaṇeP. i. 46. 212; ii. 48. 31; ii. 54. 4; ii. 55. 5; अकिंचनेभ्यः साधुभ्यो दद्याद् वस्त्राणि कम्बलान् BrahmP. 76. 22; 107. 36; BhaviP. 57B. 3 (i. 2. 16); 454A. 20 (iii (2). 27. 4); PadmP. ii. 67. 47; iv. 82. 17; v. 17. 157; अकिञ्चनोऽभिषिक्तश्च महदैश्वर्यमाप्नुयात् KulārT. 16. 90; UdaySuKa. 157. 14; कालक्रमाच्च तेषां ते मातुलानामकिंचनाः । अवज्ञापात्रतां जग्मुः KathāSaSāg. xii. 29. 11; Viṣāpahā. 19; अकाञ्चनेऽकिंचननायिकाङ्गके किमारकूटाभरणेन न श्रियः NaiṣC. 9. 28; अकिंचनं दरिद्रम् ManvaVi. 1103. 13 (*on* 8. 395); Yādavā. 7. 93; अकिंचनं धिग्दण्डयेत् इत्युक्तम् Subodhi. 17. 1 (*on* 2. 26); DīpKa. 100. 4 (*on* 3. 261); KumāCaSaṁ. 60. 12; RājTa.(Śrī.) 4. 518; राजन् एवमकिंचनस्य ते शरीरभरणमपि दुर्घटम् BhartṛNi. 5. 25(1); Subhāṣi. 838; RasiRañ. 117; BhaktiRaSi. ii. 1. 100; धन्योऽहं देवदेवेश दत्तं मे गौरवं महत् । त्वया त्रिलोकगुरुणा यत्स्मृतोऽहमकिंचनः BṛBrahmaS. iii. 9. 66; YātrāPra. 2. 9; मित्रत्वं च वहन्नकिंचनजने देव त्वमेको भुवि RasGaṅ. 327. 6; SabhāŚ. 79; अकिंचनौ मुनिजनवृत्तिमास्थितावमू किमु प्रतिवितरिष्यतस्तव Rāgh. 16. 12; AmṛUda. 4. 10(1); 4. 68(2); जलमुचः । क्षणं गोपायन्ति क्षणरुचिमिषेण क्षणमहो विवृण्वन्ति स्वर्णं करगतमिवाकिंचनजनाः Mukundā. 85; अश्रीरकिंचनः BālamBha. i. 539. 21 (*on* 1. 249); VedavyāSm. 3. 41; दरिद्रे स्यादकिंचनः Vaija. 205. 59; AbhidhāCin. 358; KośaKaTa. 2. 56; KalpaK. 224. 90; AbhidhāRaMā. 2. 193; ParaNā. 1686; **B** who is without possessions, who has renounced every thing, one who has nothing जनको मौण्ड्यमास्थितः । तं ददर्श प्रिया भार्या भैक्ष्यवृत्तिमकिंचनम् MahāBhā. xii. 18. 5; xii. 18. 22; अकिंचनः परिपतन् सुखमास्वादयिष्यसि । अकिंचनः सुखं शेते समुत्तिष्ठति चैव हि MahāBhā. xii. 170. 7; अकिंचनस्य दान्तस्य शान्तस्य समचेतसः ।…सर्वाः सुखमया दिशः ŚataTrayī. 353; YaśasCam. i. 53. 2; LakṣmīT. 28. 13; अकिंचनमनःशून्यं स्त्रीचित्तमिव निर्भरम् ।…संप्राप्तोऽहमपर्यन्तमरण्यं श्रान्तवाहनः YogVā. iii. 106. 9; एते ह्यकिंचना मेऽस्तु स्वर्णमुद्रादि किंचन TriṣaŚaPuC. i. 6. 18; iii. 3. 100; 'अकिंचन'त्ति निर्द्रव्याः AupaSūṬ. 66. 3; लक्षणवचनेनैव अकिंचनोऽगतिरत्राधिक्रियते इत्युक्तम् । … तत्राकिंचनत्वं नाम सर्वसाधनानुष्ठानसामर्थ्यादिविषयककर्तृत्वादिरूपाभिमानादिसर्वस्वशून्यत्वम् VedāntRaMa. 102. 5 (3. 8); RasiRañ. 117; AmṛUda. 3. 21; (as a noun) freedom from all possessions, renunciation प्रतिपन्नो जिनो देवो मोक्षमार्गोऽप्याकिंचनः । अहिंसालक्षणो धर्मस्तपोऽपीन्द्रियनिग्रहम् BṛKathāK. 7. 28; **C** wretched, pitiable याहं त्वया विहीनाद्य पत्या पुत्रेण चैव ह । मर्तव्ये सति जीवामि हतस्वस्तिरकिंचना MahāBhā. xiv. 68. 8; बहिर्भ्रमन् क्षुदुपशमाय सर्वदा बलीयसा करटकुलेन ताडितः । अचञ्चलं चरणयुगं शिवस्य कोऽप्यकिंचनः शरणयति स्म खञ्जनः ŚivLī. 19. 23; **D** useless, worth nothing पश्चात्पादं खुराग्रेण भूमौ भ्रश्य तु गच्छति । तदाकिंचनवाहो वा न योज्यो वाजिकर्मणि । प्रध्यायमानो यः पश्चाद्रज्जुमाकृष्य सर्वदा । वातमुग्नकटिर्वाजी स विज्ञेयो ह्यकिंचनः AśvaVai. 32. 30–31; कर्णौ स्तब्धौ तथा पुच्छं स्तब्धं गात्रमकिंचन( ? नम् ) । वातात्मकेन वाहस्य भवेदुत्कर्णकेन हि AśvaVai. 54. 1; **E** disinterested यस्यास्ति भक्तिर्भगवत्याकिंचना सर्वैर्गुणैस्तत्र समासते सुराः DevīBhāP. viii. 9. 6.

**अकिंचन** ( a–kiñcana ) *n.* absence of everything, nothing, poverty अकिंचनमहारोगग्रस्तानां को विमोचकः BrNāraP. 11. 152; न किंचन ( v. l. किंचनम् ) अकिंचनम् KātanVṛ. 101. 10 (*on* ii. 5. 5); न किंचनं नास्य वा किंचनमस्तीति विग्रहेऽकिंचनशब्दोऽनव्ययोऽप्यस्तीति चन्द्रदुर्गाभिप्रायो लक्ष्यते GaṇRa. 2. 117 (159. 1); cf. **अकिंचनसंज्ञा.**

**अकिंचनकर** ( a–kiñcanakara ) *adj.* not doing anything अकिंचनकरोऽपि स्यान्नाकुलीनः कुलोद्भवः PārśvC. 3. 437; अकिंचनकरं तीर्थमपि लोके विधीयते PārśvC. 7. 769.

**आकिंचनग** ( akiñcana–ga ) *adj.* accessible to those who possess nothing दर्शितस्तमसः पारो यत्राकिंचनगो हरिः BhāgP. iv. 31. 29.

**आकिंचनगोचर** ( akiñcana–gocara ) *adj.* attainable by or accessible to those who possess nothing जन्मैश्वर्यश्रुतिश्रीभिरेधमानमदः पुमान् । नैवार्हत्यभिधातुं वै त्वामकिंचनगोचरम् BhāgP. i. 8. 26; ततोऽनुमेयो भगवत्प्रसादो यो दुर्लभोऽकिंचनगोचरोऽन्यैः BhāgP. vi. 11. 23.

**आकिंचनता** ( akiñcana–tā ) *f.* **A** poverty, pennilessness आकिंचनतया कञ्चिद् द्यूतकारैरापणचतुष्पथेषु विधृतमात्मनो धनेन जनन्या मोच्यमानम्…आत्मानमवधार्य चिन्तितवानस्मि UdaySuKa. 56. 9; प्रतिभगिनि चतुर्थेऽशे दीयमाने भ्रातुरकिंचनता स्यात् Subodhi. 54. 19 (*on* 2. 124); BālamBha. ii. 157. 13 (*on* 2. 124); किं च महदनादरबीजमिदं यदकिंचनता नाम AmṛUda. 3. 2(1);

**B** voluntary poverty, the state of being free from possessions (as a duty of a Jaina ascetic) अहिंसा सूनृतास्तेयब्रह्माकिंचनता यमाः AbhidhāCin. 81; संयमः सूनृतं शौचं ब्रह्माकिंचनता तपः । क्षान्तिर्मार्दवमृजुता मुक्तिश्च दशधा स तु (धर्मः) YogŚā. 4. 93; TriṣaŚaPuC. iii. 3. 82; iii. 3. 85; iv. 2. 310; SthānṬ. 234B. 2; PārśvC. 6. 675; ṢaḍdarSa.(Rā.) 151; KalpaK. 87. 169.

**अकिंचनताविलास** (akiñcanatā-vilāsa) *m.* the display of poverty सखिद्विषदुदासीनेषु समवृत्तेस्तवायमकिंचनताविलासः AmṛUda. 4. 9(3)

**अकिंचनतासंतोष** (akiñcanatā-santoṣa) *m.* contentment in not possessing anything पञ्चमं धर्मलक्षणमकिंचनतासंतोषरूपम् KumāCaSaṁ. 68. 10.

**अकिंचनत्व** (akiñcana-tva) *n.* **A** voluntary poverty, the state of being free from all possessions अकिंचनत्वं संतोषः (v. l. आकिंचन्यं सुसन्तोषः) MahāBhā. iii. 203. 46; अकिंचनत्वं राज्यं च तुलया समतोलयम् । अकिंचनत्वमधिकं राज्यादपि न संशयः SkandP. vii(1). 255. 24; PadmP. v. 19. 249; अकिंचनत्वं नाम सर्वसाधनानुष्ठानसामर्थ्यादिविषयककर्तृत्वादिरूपाभिमानादिसर्वस्वशून्यत्वम् VedāntRaMañ. 102. 9. (3. 8); **B** poverty स्थाने भवानेकनराधिपः सन्नकिंचनत्वं मखजं व्यनक्ति RaghuVa. 5. 16; कुलटा भिक्षुकीति । अकिंचनत्वात् भिक्षार्थं कुलान्यटन्ति इत्येवंविधाः कुलटा अत्राभिप्रेता इत्यर्थः Prasā. l. 717. 16; अकिंचनत्वं च पुष्पमालामात्रमपि तदीयं न ग्राह्यमित्यभिप्रायम् BālaKrī. ii. 135. 1 (*on* 3. 275[263]); **C** wretchedness, dejection 'अस्तम्' अकिंचनत्वम् (न एति) VīraMi. (Rājanīti.) 475. 12.

**अकिंचनत्वतस्** (akiñcanatva-tas) *adv.* because of poverty विधिना खलु वञ्चिता वयं वितरीतुं बटवे न शक्नुमः । अपि भैक्ष्यमकिंचनत्वतो धिगिदं जन्म निरर्थकं गतम् ŚaṅkaDigVi.(Mā.) 4. 23.

**अकिंचनत्वशेष** (akiñcanatva-śeṣa) *m.* that in which only poverty (or renunciation) remains यन्त्रणापञ्जरं यावद् भग्नं लज्जादिनाखिलम् । अकिंचनत्वशेषेण स्फुटा तावदहंकृतिः YogVā. vi(1). 74. 34.

**अकिंचनधन** (akiñcana-dhana) *m.* name of Viṣṇu (he who is the wealth of those who have renounced everything) अकिंचनधनः श्रीमानमेयात्मा महाद्रिधृक् । ...इति...कथितम्...नाम...विष्णोर्बालकत्वमुपेयुषः PāñcaRā.(Nā.) iv. 8. 154.

**अकिंचनप्रार्थ्य** (akiñcana-prārthya) *adj.* fit to be supplicated by those who have nothing इतः सराम्यच्युतमेव सादरम्...अकिंचनप्रार्थ्यममन्दभाग्यदम् SkandP. ii(7). 16. 21.

**अकिंचनम्** (a-kiñcanam) *adv.* without purpose or utility, uselessly न किंचन अकिंचनम् KātanVṛ. 101. 10 (*on* ii. 5. 5); CāndraVṛ. *on* ii. 2. 18; Nyās. i. 376. 7 (*on* ii. 1. 72); न भवति किंचन क्वचित् किंचिदुपयुज्यत इत्यकिंचनं निष्प्रयोजनम् । निपातनान्मुमागमः GaṇRa. 2. 117 (158. 14); Prasā. i. 535. 26.

**अकिंचनवित्त** (akiñcana-vitta) *n.* wealth of the destitute नमोऽकिंचनवित्ताय निवृत्तगुणवृत्तये BhāgP. i. 8. 27; नमोऽकिंचनवित्ताय ऋषिऋषभाय नरनारायणाय BhāgP. v. 19. 11; DevīBhāP. viii. 11. 2.

**अकिंचनसङ्ग** (akiñcana-saṅga) *m.* association with one who has renounced everything (प्रह्लादः) स उत्तमश्लोकपदारविन्दयोर्निषेवयाकिंचनसङ्गलब्धया । तन्वन् परां निर्वृतिमात्मनो मुहुर्दुःसङ्गदीनान्यमनः शमं व्यधात् BhāgP. vii. 4. 42.

**अकिंचनसंज्ञा** (akiñcana-saṁjñā) *f.* consciousness or perception that nothing exists आकिंचनसंज्ञा कतमा यया आकिंचन्यायतनं संजानाति AbhidhSa. 5. 13.

**अकिंचनाग्रेसर** (akiñcanāgresara) *adj.* foremost among those who possess nothing, poorest त्वाम्...अकिंचनाग्रेसरमध्यगेयां वयम्...कथं विश्वसिमोऽन्नदात्रीम् YātrāPra. 9. 71.

**अकिंचनार्ति** (akiñcanārti) *f.* distress of the poor (i. e. of those who possess nothing) गुर्वीमकिंचनार्तिं खर्वीकुरुषे त्वमेव कामाक्षि MūkaPañ. 4. 89; आकिंचनार्तिमार्जनम्...भजे पुराणवारणम् GaṇePañ. 4.

**अकिंचनासत्तिजुष्** (akiñcanāsatti-juṣ) *adj.* **1** devoted to the association of those who possess nothing (i. e. have abandoned everything) यदस्ति मे किंचन तत्समस्तं दास्यामिहास्यामितरेयमेवम् । अकिंचनासत्तिजुषो न लज्जा भवेद्धनं तत्र समर्पितं चेत् RasiRañ. 117; **2** (akiñcanā + āsatti-juṣ) enjoying the company of one who is bereft of all wealth, RasiRañ. 117.

**अकिंचनिमन्** (akiñcan-iman) *m.* [P. v. 1. 122; CāndraVyā. iv. 1. 139; JaineVyā. iii. 4. 122; GaṇPā. 147. 16; CāndraVṛ. *on* iv. 1. 139; KāśiVṛ. *on* P. v. 1. 122; JaineVyā. 234. 26 (*on* iii. 4. 112); GaṇRa. 7. 392 (416); SaraKaṇṭhā. (Gr.) v. 1. 135] poverty, destitution (अकिंचनस्य भावः) अकिंचनिमा । आकिंचन्यमिति ब्राह्मणादित्वात् GaṇRa 7. 392 (418)

**अकिंचनीकृत** (akiñcanī-kṛta) *adj.* [ppp. from *akiñcanikṛ-*] made destitute योऽसौ मन्मथमदः कन्दर्प(दर्प)स्तेन दरिद्रितोऽकिंचनीकृतस्तिरस्कृतो रुद्रस्य श्रीमहादेवस्य स्मरविजयः कन्दर्पनिर्जयो येन सः Candrikā *on* YaśasCam. i. 53. 7; तलपीठसंचिताचरमचामीकरशिलाभिरकिंचनीकृतकनकाचलं...महिष्ठमायतनम् (प्राविशम्) UdaySuKa. 65. 17.

**अकिंचिच्चिन्तक** (akiñcic-cintaka) *adj.* thinking of nothing अकिंचिच्चिन्तकस्यास्य रूपमुन्मीलति स्वकम् MṛgendraT. iii. 1. 62; अकिंचिच्चिन्तकस्यैव गुरुणा प्रतिबोधतः । जायते यः समावेशः शाम्भवोऽसावुदाहृतः MālinīT. 2. 23.

**अकिंचिच्चिन्तकत्व** (akiñciccintaka-tva) *n.* the state of not thinking of anything whatsoever उक्तयुक्त्या स्वस्थितिप्रतिबन्धकं विकल्पमकिंचिच्चिन्तकत्वेन प्रशमयन् PratyabhiHṛ. 40. 3 (18)

**अकिंचिज्ज्ञ** (akiñcij-jña) *adj.* **i** knowing not (even) a little, knowing nothing अतिशयेन शिल्पकृतामकिंचिज्ज्ञ इव विश्वकर्मा AvantiKa. 7. 11; अकिंचिज्ज्ञस्तदा बालो मांसपेशीसमः स्थितः TaiUBhāVā. 83. 1(2); तदेकांशस्य बोद्धृत्वात् सर्वज्ञं ब्रह्म चेन्मतम् । तदेकांशस्य मूढत्वादकिंचिज्ज्ञं न किं मतम् IṣṭaSi. 246. 23; मित्रामित्रेऽखिलेऽभीष्टे ज्ञाताज्ञातं सदाखिलम् । सर्वज्ञस्सर्व एव स्यादकिंचिज्ज्ञोऽथवा जनः IṣṭaSi. 318. 10; मायां चापि गृहाणेमाम्... । यया संमोहितं विश्वमकिंचिज्ज्ञं भविष्यति SkandP. iv. 23. 63; सर्वेषां विदुषां श्रेष्ठो ह्यकिंचिज्ज्ञोऽपि भक्तिमान् GaṇeP. ii. 146. 7; अयं व्याधः ... हीनजातिरकिंचिज्ज्ञः BrahmP. 169. 28; न ह्यकिंचिज्ज्ञस्य तदानीमेव सर्वज्ञेन सता स्वेन परिष्वङ्गः संभवति VedāntTaSā. 62. 1; VedāntSā.(Rā.) 409. 4 (*on* iv. 4. 16); अकिंचिज्ज्ञो जरत्वेन नावगच्छामि ते वचः PrabhāC. 26. 21; **ii** (as a noun) an ignorant person अकिंचिज्ज्ञैः पृष्टम्, तन्मध्ये एकोऽपि संदेहो न ज्ञातो न च भग्नः । ततः पश्चात् गत्वा पुनरध्येमि Bharaṭ. 19B. 2.

**अकिंचित्क** (akiñcit-ka) *adj.* possessing nothing, not possessing anything यो यतो लिप्सते नासावकिंचित्को ह्यनर्थिने । भिक्षां दातुमलं तद्वज्ज्ञेयं स्वार्थेपरार्थयोः BṛĀraUBhāVā. i. 4. 578.

**अकिंचित्कर** (akiñcit-kara) *adj.* [*f.* -ī] **A** inoperative, serving no purpose, futile, redundant **B** not producing any effect, ineffective **C** doing nothing, incapable of doing anything **D** passive, who does nothing **E** not able to offer resistence, unable to make a counter attack, unable to answer or proceed **F i** useless, insignificant **ii** of no importance, not lucky, indifferent **A** inoperative, serving no purpose, futile, redundant यतस्तु खलु यावदज्ग्रहणं तावद्धस्वग्रहणमतोऽकिंचित्कराणि ह्रस्वशासनानि MahāBh. i. 204.16 (*on* i. 2. 27); व्रतं चोपेतमनुत्सृष्टं पुनरुपेतुमशक्यम् । उपेयमानं च पिष्टपेषणवदकिंचित्करं स्यात् ŚābaBh. 2244. 10 (*on* xii. 2. 16); अर्थविरोधाश्रयणाद्रेत्यनुवर्तमानमप्यकिंचित्करम् CāndraVyā. iv. 2. 101; किं मयैतदवस्थेनाकिंचित्करेण संगृहीतेन PañcT. 3. 71(3) (338. 3) = Tantrākhyā. 111. 13; अनपत्रपः कुलपुत्रोऽनुपकर्तृ मित्रमविक्रान्तश्च पार्थिव इत्यकिंचित्करो वर्गः AvantiKa. 73. 14; मातुल परतन्त्रमिदमकिंचित्करं च VeṇīSaṁ. 3. 284; अनुवादे तु संप्रसारणस्येत्यादौ [P. vi. 3. 139] विहितत्वाद्विधेयस्य प्रथमोऽकिंचित्कर इति Nyās. i. 89. 5 (*on* i. 1. 45); ननु (संख्या) संवत्सरविशेषणार्था । तथा सति पञ्चशब्दोऽकिंचित्करो भवति ṬupṬ. 224. 12 (*on* ix. 4. 1); प्रतिपाद्यत्वेन हि विषयता । प्रतिपन्ने च तस्मिन् अकिंचित्करं शास्त्रम् PañcPā. 67.9 (*on* i. 1. 1); तेन प्रतीतिसिद्धत्वाद् भेदस्य [= आत्मनानात्वस्य] अलं भेदाभ्युपगमेनेति वचनमकिंचित्करम् PrakaPañ. 345. 5; 23. 14; न तु विशेषे सति सामान्यमकिंचित्करम् NyāyKuA. ii(b). 37. 7; Loc. 68. 13 (*on* 2. 4); ननु विरोधस्तर्हि सर्वत्राकिंचित्करः स्यादित्याशङ्क्याह Loc. 168. 9 (*on* 3. 20); 172. 25 (*on* 3. 24); किमिदानीं मुद्गरप्रहारादिरकिंचित्करः । नेत्याह NyāyRa. 736. 15 (*on* 6. 25); ननु विषमानोऽप्यानन्दोऽननुभूयमानोऽकिंचित्कर एव ŚāstrDī. 126. 10 (*on* i. 1. 5); सहकारिणो ह्यकिंचित्करा अनपेक्ष्याः ŚāstrDī. 143. 19 (*on* i. 1. 6); दोषमूलत्वे ज्ञाते सति परत्वमकिंचित्करम् BrahmSūBh.(Rā.) 54. 18 (*on* i. 1. 1); GītāBh.(Rā.) 399. 3 (*on* 7. 24); NyāyMa. 28. 1; अनुवर्तमानमपि (द्विचन्द्रज्ञानं) प्रबलप्रमाणबाधितत्वेनाकिंचित्करम् GītāBh.(Rā.) 67. 2 (*on* 2. 12); यौगपद्यमकिंचित्करमित्युपदिशति TātpaVṛ. 331. 9 (*on* 3. 39); गणपाठस्तु सत्रप्यसंगृहीतत्वादकिंचित्करः स्यादिति भावः Pradī. ii. 382 (*on* ii. 1. 39); उपक्रमोऽकिंचित्करः, उपसंहारवाक्ये अन्यथैवार्थो गृह्यताम् PrakaVi. 817. 16; ज्ञानरूपप्रमाणं हि न स्यादिन्द्रियगोचरः । नास्तिपक्षे तु तदकिंचित्करं शशशृङ्गवत् PārśvC. 3. 68; विशयानुदये प्रायपाठोऽकिंचित्करः VedāntKa. 110. 9 (*on* i. 1. 12); प्राधान्यं तूपक्रमविरोधे सत्यकिंचित्करमित्युक्तम् VedāntKa. 117. 17 (*on* i. 1. 22); NyāyKu. 70. 14; केवलचित्तवृत्तिनिरोधमात्रः...जगत्तरणेऽकिंचित्कर एव VedāntKau. 151. 19 (*on* ii. 1. 3); अर्थभेदोऽप्यकिंचित्करः PadMañ. *on* KāśiVṛ. *on* P. iii. 3. 72; भ्रमत्वेन ज्ञातमभेदज्ञानमकिंचित्करम् TattvCin. i. 455. 1; क्षणभङ्गतदभावादिकं तु वाक्यार्थयाथार्थ्ये प्रत्यकिंचित्करमेव ŚatDū. 94. 8; विवक्षितस्यार्थस्याचार्यस्य कर्तृरूपादानेन विनापि सुप्रतिपादत्वादाचार्योपादानमकिंचित्करम् SarvaDaSaṁ. 13. 24; ज्ञानादज्ञाननिवृत्तेरन्यत्रादर्शनमकिंचित्करम् SiddhāBi. 63. 1; ŚivārkaMaDī. i.

**अकृतधर्म** ( akṛta-dharma ) *adj.* who has not done any pious or meritorious act अकृतधर्माणां दुःखसंप्राप्तिमुदीर्य TilaMañ. 412. 1; आगादकृतधर्माणामस्माकमतिसङ्कटम् PārśvC. 2. 163.

**अकृतधर्मत्व** ( akṛtadharma-tva ) *n.* the state of not possessing a suitable nature एकस्मिन्नेव पुरुषे सा सा बुद्धिस्तदा तदा । भवत्यकृतप्रज्ञत्वात् ( v. l. अकृतधर्मत्वात् ) सा तस्यैव न रोचते MahāBhā. x. 3. 13 ( comm. अकृतधर्मत्वात् अवसरानुरोधात् )

**अकृतधर्मभङ्ग** ( akṛta-dharmabhaṅga ) *adj.* who has not transgressed or violated law or religious duty सीतामशीतांशुकुलप्रवीर इवैष नान्योऽकृतधर्मभङ्गः ।…पर्यणैषीत् VasaViKā. 3. 57.

**अकृतधी** ( akṛta-dhī ) *adj.* of undisciplined mind or intellect, ignorant पठन्ति कृतबुद्धयोऽकृतधियोऽनिशं शेरते SubhāRaSaṁ. 265; कोऽप्यकृतधीनैवास्य वेत्त्यन्तरम् BhallaS. 55 = Subhāṣi. 907.

**अकृतनति** ( akṛta-nati ) *adj.* who has not made obeisance ( राजा ) अकृतनतिरेवोत्थायाशु गोपगिरिमागात् PrabaK. 37. 21.

**अकृतनदीयज्ञ** ( akṛta-nadīyajña ) *adj.* where offerings to rivers have not been made यदा नगनदीनदसरस्तडागपल्वलादीनां तीर्थेषु…हस्तिनं वरुणानुचरसेवितेष्वकृतनदीयज्ञेषु नागवन्धनेषु पाययन्त्यवगाहयन्ति वा हस्तिजीविनः…तदा वरुणस्तेनाभिभूयते Hastyāyur. 66. 8 (1. 9)

**अकृतनन्दगोपालक** ( a-kṛtanandagopālaka ) *adj.* other than one who had pleased the cowherds ( i. e. other than Kṛṣṇa) अकृतनन्दगोपालकान्… अलमुपास्य वृन्दारकान् YātrāPra. 7. 116.

**अकृतनमस्कार** ( akṛta-namaskāra ) *adj.* who has not bowed down तद्वृत्तान्तपरीक्षणेऽकृतनमस्कारो विलक्षस्थितः Kuval. 171.142.

**अकृतनलोप** ( akṛta-nalopa ) *adj.* (a word) in which the elision of *n* has not been made न तु कृतनलोपोऽकारान्तः ( वृषशब्दः ) अन्यथासंदेहायाकृतनलोपो निर्दिश्येत Pradī. iv. 246A (*on* P. v. 1. 7); vii. 97 (*on* P. viii. 2. 7)

**अकृतनवयज्ञ** ( akṛta-navayajña ) *adj.* who has not performed the *navayajña* (i. e. offering of oblations of the first fruits of harvest to gods, also called *āgrayaṇeṣṭi* ) मनुरप्यकृतनवयज्ञस्य नवाशननिषेधमाह SmṛtiCan. ii. 416. 13.

**अकृतनामधेय** ( akṛta-nāmadheya ) *adj.* whose naming ceremony has not been performed बालानामकृतनामधेयानां न किञ्चित्कर्तव्यमित्याह मनुः SmṛtiCan. vi. 101. 9.

**अकृतनामन्** ( akṛta-nāman ) *adj.* **A** unnamed, to which no name is given जगत्यादीनां कृतनामाकृतनामविसदृशप्रस्ताररूपस्वस्वपादानां स्वल्पभेदानां संकरः उपजातिः ChandaśCū. ii. 157. (2); **B** whose naming ceremony has not been performed बालोऽत्राकृतनामा Aparā. 909. 23 (*on* 3. 23); अत्र चाजातदन्तशब्दोऽकृतनामविषयः Aparā. 910. 22 (*on* 3. 23)

**अकृतनियम** ( akṛta-niyama ) *adj.* who has not laid down any rule or convention अकृतनियमस्य तु नातीव महानयमपराधः NyāyMañ. ii. 201. 23.

**अकृतनिरिक्तखादन** ( akṛta-niriktakhādana ) *n.* not eating the leavings of the food, MahāVyu. 261. 38.

**अकृतनिर्वाहत्व** ( akṛtanirvāha-tva ) *n.* the state of not being justified 'प्राणा वाव ऋषयः' इति श्रुतेरकृतनिर्वाहत्वात् ŚrutaPra. ii. 388. 21 (*on* ii. 4. 1)

**अकृतनिर्वेदम्** ( akṛta-nirvedam ) *adv.* without causing despondency प्रयान्तं च तम्…तत्रत्यराजलोकस्तत्कालोचितैरालापैरकृतनिर्वेदा( ? दो, दं ) विनोदयामास TilaMañ. 181. 16.

**अकृतनिर्वेश** ( akṛta-nirveśa ) *adj.* who has not done expiation (for sins) एनं दण्डपाणेः सकाशम्…नेष्यामोऽकृतनिर्वेशम् BhāgP. vi. 1. 68.

**अकृतनिश्चय** ( akṛta-niścaya ) *adj.* who has not taken or arrived at any decision मूढः…कृत्येषु सर्वेष्वकृतनिश्चयः MahāBhā. 5. 414*1; अकृतप्रत्ययादिति अकृतनिश्चयात्लोकात् JayaMa. 358. 5 (*on* 6. 6); विशेषेणाकृतनिश्चयाः (इति अकृतव्यूहाः ) पाणिनीयाः PariVṛ. (Sī.) 97. 5.

**अकृतनिश्रम** ( akṛta-niśrama ) *adj.* who has taken no pains, inefficient आत्मानमेव गर्हेयं यदहम्…युष्मानाज्ञाय निर्यातो भीरूनकृतनिश्रमान् MahāBhā. vii. 50. 77.

**अकृतनिष्कृति** ( akṛta-niṣkṛti ) *adj.* **1** who has not performed atonement (for sins) बीजं न शुध्यते वोढुरस्य चाकृतनिष्कृतेः MahāBhā. 13. 194*2; **2** who has not done requital, who has not avenged (a wrong) तातास्ब कंसादुरुशंकितानां प्रसीदतं नोऽकृतनिष्कृतीनाम् BhāgP. iii. 2. 17.

**अकृतनीशार** ( akṛta-nīśāra ) *adj.* who has not put on warm cover or upper garment गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः MahāBh. ii. 147. 23 (*on* P. iii. 3. 21); अकृतनीशार इति । अकृतशीतनिवारण इत्यर्थः Nyās i. 960. 20 (*on* P. iii. 3. 21); अकृतनीशार इति । अकृतप्रावरण इत्यर्थः PadMañ. *on* KāśiVṛ. *on* P. iii. 3. 21.

**अकृतपच्छौच** (akṛta-pacchauca ) *adj.* who has not washed (his) feet आचान्ता अपि इमे चत्वारः अशुचयः, अकृतपच्छौचः तिष्ठन् मुक्तशिखः यज्ञोपवीतहीनश्चेति BālaṁBha. i. 78. 15 (*on* 1. 22)

**अकृतपदविक्षेपम्** ( akṛta-padavikṣepam ) *adv.* without taking any foot-steps विद्यानुभावसिद्धत्वाद्गतेरकृतपदविक्षेपमग्रतः प्रसर्पता समपादस्थितेन पदातिसंदोहेन कृतकलकलम्…खेचरनरेन्द्रवृन्दमद्राक्षम् TilaMañ. 153. 10.

**अकृतपदशब्दम्** ( akṛta-padaśabdam ) *adv.* without producing the sound of foot-steps घनवृक्षोदरसुप्तं समुपेत्य स्वैरमकृतपदशब्दम् । व्याधवर एव कुरुते निर्जीवं हेलया शशकम् KuṭṭaMa. 957.

**अकृतपरसेव** ( akṛta-paraseva ) *adj.* who has not served others अथवा जन्मनः प्रभृत्यकृतपरसेवानामत्र लवमात्रोऽपि नास्माकं दोषः TilaMañ. 50. 11.

**अकृतपरस्परपरिग्रह** ( akṛta-parasparaparigraha ) *adj.* who have not accepted each other इयमेवाकृतपरस्परपरिग्रहौ…यथा तावनुरज्येते…तत्त्रिविधं कार्यं संपादयति JayaMa. 283. 1 ( *on* 5. 4)

**अकृतपरिग्रह** ( akṛta-parigraha ) *adj.* who has not taken a wife, who is not married स ( श्रीदर्शनः )…अकृतपरिग्रहः ।…दैवात्प्राज्ञोऽप्यबान्धवः KathāSaSāg. xii. 6. 72.

**अकृतपरिचर्य** ( akṛta-paricarya ) *adj.* who has not attended or participated in विदग्धानां गोष्ठीष्वकृतपरिचर्याश्च खलु ये RāghPāṇ. (Ka.) 1. 47.

**अकृतपरित्राण** ( akṛta-paritrāṇa ) *adj.* unprotected अकृतपरित्राणे च मूर्छित इव पुनः पुनः पतति भुवि भवनपारावतपतत्रिपत्रधूसरे धूलिपटले…अध्वगः श्रान्तवानायातः NalaCam. i. 51. (16)

**अकृतपरिलम्ब** ( akṛta-parilamba ) *adj.* without delaying प्रावृट्काले कलामप्यकृतपरिलम्बोऽनीयत तं पन्थानम् ( चन्द्रापीडः ) Kād. 304. 1.

**अकृतपर्याप्त** ( akṛta-paryāpta ) *adj.* obtained without doing anything for it राजन् अकृतपर्याप्तमतः परम् TilaMañ. 60. 2.

**अकृतपाणिग्रहणसंस्कार** ( akṛta-pāṇigrahaṇasaṁskāra ) *adj.* who has not performed the sacred ceremony or sacrament of marriage, who is not married असंस्कृतानामकृतपाणिग्रहणसंस्काराणां बान्धवा भर्तृपक्षाः…त्रिरात्रेण शुध्यन्ति HārLa. 49. 5.

**अकृतपात्रविचार** ( akṛta-pātravicāra ) *adj.* who has not given thought to the worthiness of the person कृतेऽप्यनुचिते अकृतपात्रविचारः … मृगयूथपतिर्निजशिरोदानायोद्यतकरो जातः SārṅgaPa. 522. 18.

**अकृतपात्रसंकर** ( akṛta-pātrasaṅkara ) *adj.* **i** in which the utensils are not mixed up स्वादयन् रसम्…अकृतपात्रसंकरैः ।…मुदं जनो नाटकैरिव बभार भाजनैः ŚiśuVa. 14. 50 ( comm. अकृतः पात्राणां भाजनानां संकरो व्यतिकरो येषु तैः ); **ii** in which the *dramatis personae* are not confused ŚiśuVa. 14. 50 ( comm. अन्यत्र भूमिकानां च संकरो व्यतिकरः )

**अकृतपाप** ( akṛta-pāpa ) *adj.* who has not committed sin, not guilty श्लाघ्यश्चाकृतपापस्य मम मृत्युरगर्हितः KathāSaSāg. viii. 6. 59; त्यजति भयमकृतपापम् SārṅgaPa. 1545; त्यजति भयमकृतपापः Subhāṣi. 2847.

**अकृतपुण्य** ( akṛta-puṇya ) *adj.* [*f.* –ā] who has not performed a meritorious act ( i. e. sinful, unfortunate, unlucky ) अतस्त्वामाराध्यां हरिहरविरिञ्चादिभिरपि प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति SaundL. 1; दुर्भगोऽहमकृतपुण्यो, नास्मिन्नवसरे धनं मया लब्धं, कुतोऽन्यदा प्राप्स्यामीति नावसादो भावनीयः ManuBh. i. 377. 23 (*on* 4. 137); नूनं त्वकृतपुण्यास्ते भृत्या येष्वीश्वराः शुभे। कृतागःस्वात्मसात्कृत्वा शिक्षादण्डं न युञ्जते BhāgP. iv. 26. 21; BṛNāP. 9. 130; अदत्तदाना अकृतपुण्याश्च प्रत्यक्षत एव दृश्यन्ते । तद्यथा काणकुब्जिबधिरजडमूकव्यङ्गाः BhaviP. 39B. 23 ( i. 16. 31 ); अकृतपुण्यजनदुष्प्रवेशमिदं देवतायतनम् TilaMañ. 279. 16; मम चाकृतपुण्याया एकः पुत्रोऽत्र वर्तते । तस्य वारोऽद्य संप्राप्तः KathāSaSāg. iii. 4. 269; मज्जानमपि विलिम्पति नाकृतपुण्यस्य वर्षति पयोदे। निर्गमकेलिसमुत्सुकशिशुवारणगाढपरिरम्भः SubhāRaK. 10. 25; नाकृतपुण्यः पश्यति रहसि मुदा वदनमेणाक्ष्याः SaduktiKa. 111. 15; अन्ये पुनरकृतपुण्या अलब्धलाभाः …दिनावसान आगताः स्वगृहम् KathāK. 58. 22; अहम्…कृततीर्थोपवासा पारणकदिने कस्यापि सुकृतिनः अकृतपुण्या पिण्याकमासाद्य…पारणकमकार्षम् PrabaCin. 58. 4; सर्वत्राशाभङ्गः स्फुरं भवत्यकृतपुण्यस्य SārṅgaPa. 699; ĀnandRa. 1. 8. (30)

**अकृतपुण्यक** ( akṛtapuṇya-ka ) *adj.* who has not performed a meritorious act क्रीडन्ति भोगनिमग्नाः शुष्यन्त्यकृतपुण्यकाः ( मानवाः ) PadmP. (Ra.) 21. 58.

**अकृतपुण्यकर्मन्** ( akṛta-puṇyakarman ) *adj.* who has not performed meritorious deeds प्रवर्तते नाकृतपुण्यकर्मणां प्रसन्नगंभीरपदा सरस्वती Kirātā. 14. 3.

**अकृतपुण्यचरण** ( akṛta-puṇyacaraṇa ) *adj.* who has not done meritorious acts अकृतपुण्यचरणैर्न प्राप्यं प्रधानपुरुषयोर्नानात्वम् MāṭhVṛ. 53. 15. (*on* 37)

**अकृतपुण्यातिशय** ( akṛta-puṇyātiśaya ) *adj.* who has not gathered excellence of merit नारदो देवर्षिः कृतकर्तव्यः सर्वविद्योऽपि सन् अनात्मज्ञत्वात् शुशोचैव । किमु वक्तव्यं अन्योऽल्पविज्जन्तुः अकृतपुण्यातिशयोऽकृतार्थ इति Chāndo-UBh. 416. 2 (*on* vii. 1. 0)

**अकृतपुरुषान्तरमैथुन** ( akṛta-puruṣāntaramaithuna ) *adj.* [ *f.* -ā] who has no sexual union with a man other than (the husband i. e. chaste) साध्वाचारा स्त्री मृते भर्तर्यकृतपुरुषान्तरमैथुना पुत्ररहितापि स्वर्गं गच्छति ManvaMu. 226. 21 (*on* 5. 160)

**अकृतपुरुषार्थ** ( akṛta-puruṣārtha ) *adj.* who has not fulfilled his purpose (i. e. not made love) अस्मद्‌मित्रेण जातसख्यं पतिम्…सा मया संसृष्टा… निवर्तयिष्यति । अन्यथा महान्तमीश्वरमाश्रितो मामेवाकृतपुरुषार्थं हनिष्यति JayaMa. 64. 19 (*on* 1. 5)

**अकृतपूर्व** ( a-kṛtapūrva ) *adj.* **i** not done before (by any one), unprecedented सोऽहं यदैवाकृतपूर्वं चरेयं विवित्समानः किमु तत्र साधु MahāBhā. i. 87. 12 = MatsyaP. 41. 12; आपद्गतः खलु महाशयचक्रवर्ती विस्तारयत्यकृतपूर्वमुदारभावम् BhāmiVi 1. 68 = RasGaṁ. 443. 3; **ii** not done before (by a particular person) व्यलीकं वीक्ष्येदं कृतमकृतपूर्वं खलु मया । प्रिया मुञ्चत्यद्य स्फुटमसहना जीवितमसौ Ratnā. 3. 15; किमकृतपूर्वः संप्रति मय्यप्ययमभ्याहारः VeṇiSaṁ. 5. 25.

**अकृतपूर्वता** ( akṛtapūrva-tā ) *f.* the state of not having been done before आजन्मनोऽप्यकृतपूर्वतया परेषां साधारणत्वरहितां पुरुषप्रकाण्डः । प्रत्यग्रतारकगुणां निजपौरुषस्य च्छायां विमुञ्चति निशामिव शीतरश्मिः HarVi. 11. 64.

**अकृतप्रज्ञ** ( akṛta-prajña ) *adj.* [ *f.* -ā] having unformed intelligence, not endowed with wisdom (i. e. stupid, ignorant, dull) कृतप्रज्ञोऽकृतप्रज्ञो बालो वृद्धश्च मानवः । ससहायोऽसहायश्च सर्वं सर्वत्र विन्दति MahāBhā. i. 196. 16; दुर्बुद्धिमकृतप्रज्ञं छन्नं कूपं तृणैरिव । विवर्जयीत मेधावी MahāBhā. v. 39. 35 = SūktiRa. 89. 3; अप्यनार्योऽकृतप्रज्ञः पुरुषोऽपि सुदारुणः । सुमहत्प्राप्नुयात् पुण्यं बलाकोऽन्धवधादिव MahāBhā. xii. 110. 7; मतिमान् पलितोऽब्रवीत् । मार्जारमकृतप्रज्ञं वश्यमात्महितं वचः MahāBhā. xii. 136. 97; न गुरावकृतप्रज्ञे शक्यं शिष्येण वर्तितुम् MahāBhā. xiii. 108. 3; आशीविषस्त्वां दशतु मूढे पण्डितमानिनि । दुर्भगे ह्यकृतप्रज्ञे Rāmā. ii. 133*. (2); ii. 1353*. (3); सोऽहं ( मारीचः ) वनगतं रामम्… अभ्यधावं सुसंक्रुद्धस्तीक्ष्णशृङ्गो मृगाकृतिः । जिघांसुरकृतप्रज्ञः Rāmā. iii. 37. 10; शिष्यार्थं प्रार्थयेद्देवम्…स्वतन्त्रमकृतप्रज्ञमन्यत्रैश्वर्यचिन्तकम् । स्वीकुरुष्वैनम् BṛBrahmaS. i. 5. 20; अपि मय्यकृतप्रज्ञे हतबन्धुः स भार्यया । आशंसमानः शमलं गङ्गायां दुःखितोऽपतत् BhāgP. i. 13. 31; यस्मान्मे भक्षितः पाप कामार्तायाः पतिस्त्वया । तवापि मृत्युराधानादकृतप्रज्ञ दर्शितः BhāgP. ix. 9. 35; हन्त कथमर्भका इव यूयमकृतप्रज्ञा इव निरङ्कुशं प्रतिजानीध्वे NīlaVi. 70. 13; अथवा तिष्ठत्वयमकृतप्रज्ञः ( सौमित्रिः ) JānaPa. 6. 66 (1)

**अकृतप्रज्ञक** ( akṛtaprajña-ka ) *adj.* whose intelligence is not cultivated or well-formed, ignorant अकृतप्रज्ञको बालो मोहं गच्छति जापकः । स मोहान्निरयं याति MahāBhā xii. 190. 10.

**अकृतप्रणति** ( akṛta-praṇati ) *adj.* who has not bowed down (in respect) अकृतप्रणतिस्तस्य प्रविष्टस्य स्वमण्डलम् । अग्रात् सुदूरमध्वानं ससैन्योऽपससार सः RājTa. (Ka.) 4. 532.

**अकृतप्रणयभङ्ग** ( akṛta-praṇayabhaṅga ) *adj.* whose solicitation has not been uncomplied with त्वया…त्रिदशनाथेऽपि भगवति कदाचिदकृतप्रणयभङ्गस्य मे न कार्यः प्रथमप्रार्थनाभङ्गः TilaMañ. 44. 14.

**अकृतप्रणाम** ( akṛta-praṇāma ) *adj.* who has not made obeisance दृष्ट्वा च दूनचेताः समीपागतानकृतप्रणामानेव पप्रच्छ-भद्राः किमाकुला यूयम् TilaMañ. 189. 9; दिवौकसामप्यकृतप्रणामं भूमौ सुरत्राणशिरः पपात MadhuVi. 9. 38.

**अकृतप्रणिपात** ( akṛta-praṇipāta ) *adj.* who has not made obeisance अकृतप्रणिपातः सन्नुपान्ते नृपतेरसौ । उपाविक्षत् MalliC. 6. 449.

**अकृतप्रतिकर्मता** ( akṛtapratikarma-tā ) *f.* the state of not having decorated the body यदपि प्रवासादागते रतं तदप्यकृतप्रतिकर्मतया प्रियया व्रीलितया व्यंजितं दुर्दिनगान्धर्वमिव मन्दरागं भवति DhūrtaViSaṁ. 20 .5.

**अकृतप्रतिकर्मन्** ( akṛta-pratikarman ) *adj.* who has not made any (bodily) decoration अपि प्रव्रजिता भर्तः प्रिया मे प्रियदर्शना । अकृतप्रतिकर्मैव क्षिप्रमानीयतामिति BṛKathāS'loSaṁ. 26. 14.

**अकृतप्रतिकारलज्जा** ( akṛtapratikāra-lajjā ) *f.* shame due to not having effected cure or offered relief नलिनीदलमाहितं सखीभिः परितापोपशमाय यद्यदङ्गे । अकृतप्रतिकारलज्जयेव परितो म्लानिमुपैति तत्तदस्याः SūktiMu. 38. 10 = Subhāṣi. 1080.

**अकृतप्रतिपत्ति** ( akṛta-pratipatti ) *adj.* **i** who has not shown respect स महानुभावो वाङ्मात्रेणाप्यकृतप्रतिपत्तिरदक्षिणेति मां संभावयिष्यति Nāgā. 2. 0 (117) (chāyā); **ii** one to whom no respect is shown कालं कियन्तमप्येवंविधे नीत्वा नृपालये । अकृतप्रतिपत्तिः सोऽग्निशर्मा निर्गतस्ततः Samarā-Saṁ. 1. 118.

**अकृतप्रतिम** ( akṛta-pratima ) *adj.* [ *f.* -ā ] for which no likeness is created, not having a comparison, matchless अधरद्युतिरस्तपल्लवा मुखशोभा शशिकान्तिलङ्घिनी । अकृतप्रतिमा तनुः कृता विधिना कस्य कृते मृगीदृशः RasGaṅ. 101. 17.

**अकृतप्रतिष्ठ** ( akṛta-pratiṣṭha ) *adj.* for which (formal) consecration was not done (अनुत्सृष्टेषु न स्नायात्तथैवासंस्कृतेषु च ) 'असंस्कृतं' अकृतप्रतिष्ठम् CaturCin. iii (1). 874. 17.

**अकृतप्रतीकार** ( akṛta-pratīkāra ) *adj.* who has not taken counter measures लोकस्तु पुनरमुष्मिन्नकृतप्रतीकारानस्मानसमर्थान् समर्थयते SubhaDha. 4. 20 (2)

**अकृतप्रत्यय** ( akṛta-pratyaya ) *adj.* not trusted, in which one has no confidence लोकादेवाकृतप्रत्ययादगुणो गुणवान् वेत्यनवेक्ष्य गमनं कामो द्वेष इति संशयः KāmSū. 357. 18 (6. 6) (comm. अकृतप्रत्ययादिति अकृतनिश्चयाल्लोकात् । किमयं गुणवान् न वेति )

**अकृतप्रत्युपकार** ( akṛta-pratyupakāra ) *adj.* who has not returned an obligation अत्र यदिदमुपकृत्यानपेक्षितप्रत्युपकाराणां गमनम्, यच्चाकृतप्रत्युपकाराणां तद्विरहेऽवसादनं तदुभयमपि जलधरसरित्प्रवाहयोरन्योन्यातिशयितयोरुपन्यस्यमानं प्रत्यनीकन्यासो भवति SaraKaṇṭhā. 503. 20.

**अकृतप्रथमयज्ञ** ( akṛta-prathamayajña ) *adj.* who has not yet performed the first (Soma) sacrifice परीष्टलक्षणमुक्तं भार्गवेन अकृतप्रथमयज्ञे ज्येष्ठे सति करोति तं कनिष्ठः परियष्टा स्यात् परीष्टोऽग्रज उच्यते Rudradatta. *on* ĀpaS'S. ix. 12. 11.

**अकृतप्रधान** ( akṛta-pradhāna ) *adj.* of which the main or principal (sacrificial rite) has not been performed अकृतप्रधानेन कृतप्रधानेन चाङ्गापूर्वेण व्यभिचाराच्च TattvCin. ii (2). 193. 19; ii (2). 194. 15.

**अकृतप्रमोद** ( akṛta-pramoda ) *adj.* which has not been delighted तद्वक्त्रमार्केस्तरुणार्कताम्रं त्वत्प्रीतिवाक्यैरकृतप्रमोदम् । भविष्यति प्रत्युपकारभारनिर्वाहचिन्तागमसान्धकारम् RāmC. 3. 19.

**अकृतप्रयत्न** ( akṛta-prayatna ) *adj.* who has not put up any effort, who has not exerted दृश्यन्ते हि कृतप्रयत्नाश्चाप्रवीणा अकृतप्रयत्नाश्च प्रवीणाः MahāBh. i. 10. 18 (*on* i. 1. 0); अर्थेष्वलभ्येष्वकृतप्रयत्नं … नानुतपन्ति रोगाः AṣṭāSaṁ. i. 20. 20 (1. 5)

**अकृतप्रयोजन** ( akṛta-prayojana ) *adj.* whose purpose has not been served यावद्धयकृतप्रयोजनं द्रव्यं भवति तावत्संस्कारमपेक्षते TantrVā. 1030. 22 (*on* iii. 4. 49); शेषकार्याणि न स्वयमेवाकृतप्रयोजनमपि द्रव्यं प्रयुञ्जते TantrVā. 1037. 20 (*on* iii. 5. 6); अत एवाकृतप्रयोजनस्य लेख्यस्य कार्याक्षमत्वे नाशे वा लेख्यान्तरमुत्पाद्यम् SmṛtiCan. iii. 138. 12.

**अकृतप्रवेश** ( akṛta-praveśa ) *adj.* one who has not been granted permission to enter दुर्गमकृतप्रवेशस्य प्रविशतः प्राकारच्छिद्राद्वा निक्षेपं गृहीत्वापसरतः कन्धरावधो द्विशतो वा दण्डः ArthS'ā. ii. 165. 5 (4. 10)

**अकृतप्रसाद** ( akṛta-prasāda ) *adj.* to whom favour is not shown यथाज्ञापयति देवः सोऽयमिति विज्ञापितो दौवारिकेण न तावदेनमकृतप्रसादं पश्यामीति …मालवसूनोरकथयत् HarṣaC. 122. 11.

**अकृतप्रस्तर** ( akṛta-prastara ) *adj.* to which ceiling has not been fixed up अकृतप्रस्तरे द्वारे द्वारशाखादिकस्य तु । असंस्पर्शेन तल्लिङ्गं पीठं चान्तः प्रवेशयेत् ĪśānS'iPa. ii. 47. 40.

**अकृतप्राग्भार** ( akṛta-prāgbhāra ) *adj.* not fashioned (by man), natural शून्यं गृहं गिरेर्गुहा वृक्षमूलमागन्तुकानां वेश्म देवकुलं शिक्षागृहं केनचिदकृतमकृतप्राग्भारं कथ्यते S'ubhacandra *on* Kārtikeyānutprekṣā. p. 449 [JainLa.]

**अकृतप्रातराश** ( akṛta-prātarāśa ) *adj.* who has not taken his morning meal अकृतप्रातराश उदकान्तं गत्वा प्रयतः शुचौ देशेऽधीयीत ĀpaGS. i. 11. 23.

**अकृतप्राप्ति** ( akṛta-prāpti ) *f.* gaining (the fruit of) what is actually not done कर्मतत्फलयोरेवमेककर्तृपरिग्रहात् । कृतनाशाकृतप्राप्तिरासक्तातिविरोधिनी TattvSaṁ. 479; न चेश्वरे स्थितिस्तस्य शास्त्रानारम्भसक्तितः । कृतनाशाकृतप्राप्ती प्राप्नुतो नुस्तथा सति BṛĀraUBhVā. iii. 2. 143.

**अकृतप्राय** ( akṛta-prāya ) *adj.* as good as not done कृतमपि कर्म यस्याकृतप्रायम् S'ivārkaMaDī. i. 517. 13 (*on* i. 4. 6); कृताकृतात् इत्यस्य कृतमप्यकृतम्

अकृतप्रायं यस्य तस्मादिति व्याख्या PūrvottaVāNaMā. 256.4; तदयमकृतप्रायो विभ्रमः । पुनरन्यः प्रारभ्यताम् S'ṛṅgāSar. 113 (5)

**अकृतप्रायत्व** ( akṛtaprāya-tva ) *n.* the state of being as good as not done तूष्णींहोमस्याकृतप्रायत्वान्नायथापूर्वत्वं नाग्निविनाश इत्यर्थः MayūMāli. 776.13 (*on* x. 8.5)

**अकृतप्रायश्चित्त** ( akṛta-prāyaścitta ) *adj.* [*f.* -ā] **A** who has not performed an expiatory rite एतेष्वकृतप्रायश्चित्ता अतिपातकिनः पर्यायेण कल्पं पच्यन्ते ViṣṇuSm. 43.23; एतैर्व्रात्यैरपूतैरकृतप्रायश्चित्तैः…न संबन्धानाचरेत् ManuBh. i. 96.10 (*on* 2.40); SmṛtiCan. i. 73.4; स्त्रीष्वपि पतितास्वेष एव विधिः । पतितास्वकृतप्रायश्चित्तासु च ManuBh. ii. 430.3 (*on* 11.187); व्रात्याः षोडशवर्षपर्यन्तं यावदकृतोपनयना अकृतप्रायश्चित्ताः HārLa. 201.7; क्षयरोगादीनि च लिङ्गान्यशक्त्याप्यकृतप्रायश्चित्तानां भवन्त्येव BālaKrī. ii. 74.13 (*on* 3.200 (?210); न ह्यकृतप्रायश्चित्तानां भवतामाश्रमप्रवेशमनुमन्यन्ते धार्मिकाः S'atDū. 230.19; अपाङ्क्तेयाः स्तेनादयस्त्यक्तात्मपर्यन्तास्तेषामकृतप्रायश्चित्तानां अन्नं न भोक्तव्यमित्यर्थः VīraMi.(Āhnika.) 501.21; विप्लुतब्रह्मचर्यस्यावकीर्णिनोऽकृतप्रायश्चित्तस्य विवाहनिषेधात् BhaṭṭDī. ii. 331.3 (*on* vi. 8.4); **B** for which expiatory rite has not been performed अभुक्तफलानामकृतप्रायश्चित्तानां च कर्मणां कर्मान्तरफलानुभवान्नाशोऽप्यनुपपन्नः BrahmSūBh.(Rā.) 572.6 (*on* iii. 1.8); न चाकृतप्रायश्चित्तानां कर्मणां भोगैकनाश्यत्वनियमः TattvPradī.(Ci.) 363.7; अकृतप्रायश्चित्तानामेव कर्मणां भोगेन क्षयः SarvaDaKau. 137.1.

**अकृतप्रायश्चित्तता** ( akṛtaprāyaścitta-tā ) *f.* the state of not having performed an expiatory rite पापानामकृतप्रायश्चित्ततया तज्जन्यपापवताम् ManvaVi. 538.4 (*on* 4.171)

**अकृतप्रायश्चित्तत्व** ( akṛtaprāyaścitta-tva ) *n.* the state of not having performed an expiatory rite अन्यथा यत्किंचित्पापवतोऽकृतप्रायश्चित्तत्वेनानधिकारापत्तेः TattvCin. ii (2). 192.2.

**अकृतप्रावरण** ( akṛta-prāvaraṇa ) *adj.* not making use of a cover अकृतनीशारः…अकृतप्रावरण इत्यर्थः SiddhāKau. 569B. 6.

**अकृतप्रेतकार्य** ( akṛta-pretakārya ) *adj.* who has not performed the funeral rites अकृतप्रेतकार्यः…न स्नायादुदधौ SkandP. iii (1). 52.56.

**अकृतप्रेमन्** ( akṛta-preman ) *m.* uncultivated friendship or love अकृतप्रेमैव वरं न पुनः सञ्जातविघटितप्रेमा SubhāRaK. 23.54; Subhāṣi. 1389.

**अकृतप्रेर** ( akṛta-prera ) *adj.* not impelled to move, not set in motion अश्वीयमपि संरुद्धम्…। साशंकैरकृतप्रेरं सादिभिः PadmP.(Ra.) 97.187.

**अकृतफूत्कृत** ( akṛta-phūtkṛta ) *adj.* who has not made a puffing or blowing sound भुञ्जानैश्च ब्राह्मणैः…अकृतफूत्कृतादिशब्दैः…भोक्तव्यम् CaturCin. iii (1). 1389.20.

**अकृतबुद्धि** ( akṛta-buddhi ) *adj.* **A** having uncultivated intellect मम पुत्रेण शप्तोऽसि बालेनाकृतबुद्धिना MahāBhā. i. 38.12; अकृतबुद्धयस्तु वराकाः स्वं स्वं विपाकफलं चानुभवन्त ईश्वरमपरं मिथ्या परिकल्पयन्ति AbhidhKoBh. 102.16 (*on* 2.64); तदिदमकृतबुद्धिसंमोहनम् NyāyBh. 77.13 (*on* ii. 1.6); नरस्याकृतबुद्धेस्तु…ज्ञानं हि दुर्लभम् ParaS. 10.61; गुरुतरधियामस्वाराधं मनोऽकृतबुद्धिभिः Kāvyālaṅ.(Bh.) 5.69; हृता स्थाली मुनिश्रेष्ठ श्येनेनाकृतबुद्धिना BrahmP. 93.15; **B** inconsiderate अवज्ञाताः सुरेन्द्रेण मूढेनाकृतबुद्धिना MahāBhā. i. 348*. (4); सोऽसहायेन मूढेन लुब्धेनाकृतबुद्धिना । न शक्यो न्यायतो नेतुम् ManuSm. 7.30; स नेतुं न्यायतोऽशक्यो लुब्धेनाकृतबुद्धिना YajñaSm. 1.355; अयं दुरात्माकृतबुद्धिरद्य ।…विशतां तमोऽन्धम् BhāgP. viii. 4.10; तेनेदं सकलं शून्यं मद्रदेशं कृतं प्रभो । खादता नरमांसानि दुष्टेनाकृतबुद्धिना NīlaP. 138; निवापकर्म ह्यशुचिः पुत्रार्थे विनियोजितम् ।…मया चाकृतबुद्धिना VarāP. 187.45; युष्मदीयं गृहीतं यत्पापेनाकृतबुद्धिना SkandP. vii (1). 278.52; **C** ignorant मदनागमेष्वकृतबुद्धिरसौ तदनेन संप्रति जयेयमहम् S'aṅkaDigVi. (Mā.) 9.67.

**अकृतबुद्धित्व** ( akṛtabuddhi-tva ) *n.* the state of having uncultivated intellect, the state of not having understood अकृतबुद्धित्वान्न स पश्यति दुर्मतिः (MahāBhā. vi. 40.16) = BhagGī. 18.16 (S'aṅ. असंस्कृतबुद्धित्वात् Rā. अनिष्पन्नयथावस्थितवस्तुबुद्धित्वात्)

**अकृतब्रह्मयज्ञ** ( akṛta-brahmayajña ) *adj.* one who has not performed the Brahmayajña अकृतब्रह्मयज्ञश्चेद् ब्रह्मयज्ञं कृत्वा BālamBha. i. 343.26 (*on* 1.101)

**अकृतब्रह्मविद्य** ( akṛta-brahmavidya ) *adj.* who has not acquired Vedic knowledge नाकृतब्रह्मविद्याः…विप्राः…स्थातुं…तस्य राष्ट्रे चकाङ्क्षुः SivLi. 13.4.

**अकृतभय** ( akṛta-bhaya ) *adj.* not entertaining fear, fearless तन्मम पृष्ठमारूढः सुखेनाकृतभयो गच्छ PañcT. (Textus Simplicior) 4.11 (380.16)

**अकृतभाग** ( akṛta-bhāga ) *m.* the part which is undone अकृतभागसंबन्धात्तदेवाकृतम् Nyās. i. 370.14 *on* P. ii. 1.60 = JaineVyā. 56.4 (i. 3.55)

**अकृतभिक्ष** ( akṛta-bhikṣa ) *adj.* who has not taken food or begged alms भवन्तमन्तरेण पुरीश्वरोऽप्यकृतभिक्ष एव CaitaCa. 199.4 (8)

**अकृतभिद्** ( akṛta-bhid ) *adj.* making no distinction अयमकृतभिदा प्रसादभक्त्या व्यधित च हव्यभुजो नमत्रसव्यान् Surath. 14.70.

**अकृतभेषज** ( akṛta-bheṣaja ) *adj.* who has not administered medicine ततश्चिकित्साशक्तोऽपि यस्मादकृतभेषजः । अर्धमार्गनिवृत्तश्च तेन त्वं गर्हितो ह्यसि SkandP. ii (1). 11.80; iii (1). 41.80.

**अकृतभोजन** ( akṛta-bhojana ) *adj.* who has not taken food स्वस्थः स्थितो ज्ञाननिष्ठस्तिष्ठत्वकृतभोजनः GaṇeP. ii. 22.39; (श्राद्धपूर्वदिने) उपवासिनस्त्वकृतभोजनानेव (निमन्त्रयेत्)…यदा तु पूर्वदिने निमन्त्रणं न कृतं तदानीमभुक्त्वैवाभुक्ते च गृहजने अकृतभोजनानेव ब्राह्मणान् श्राद्धदिने…प्रातरेव निमन्त्रयेत् CaturCin. iii(1). 1137.21; मम राज्येऽतिथिभिरकृतभोजनैर्न यथा स्थीयते तथा कर्तव्यम् VīraMi. 667.20 (*on* 2.186)

**अकृतमङ्गल** ( akṛta-maṅgala ) *adj.* who has not used or incorporated a benediction (in his work) तत्कथम्…अकृतमङ्गल एव विस्रब्धं भाष्यकारः प्रववृते PañcPā. 2.24 (*on* i. 1.0); कृतमङ्गलस्यापि फलादर्शनादकृतमङ्गलस्यापि फलदर्शनात् Upask. 3.14 (*on* 1. 1.1)

**अकृतमङ्गलाचरण** ( akṛta-maṅgalācaraṇa ) *adj.* who has not observed the practice of benediction अकृतमङ्गलाचरणानामपि कार्यपरिसमाप्त्यादिदर्शनात NyāySu.(Ja.) 8B. 12 (*on* i. 1.1)

**अकृतमति** ( akṛta-mati ) *adj.* having uncultivated intellect or understanding अगोत्रोऽसन्मित्रोऽकृतमतिरपूर्वाचितशुभः…पतति MaYānaSū. 6.5 (1.14)

**अकृतमद्यपान** ( akṛta-madyapāna ) *adj.* who has not drunk liquor (अयं ब्राह्मणः) अकृतमद्यपानो न नीरुग् भविष्यति PurusPa. 99.4.

**अकृतमनन** ( akṛta-manana ) *adj.* who has not done any reflection, who has not reflected अकृतमननस्यार्थदार्ढ्याभावेन तद्विषयकनिदिध्यासनायोगात् VedāntPari. 348.2.

**अकृतमुखद्वार** ( akṛta-mukhadvāra ) *adj.* which does not allow the use of its mouth or the opening of its mouth बालवृद्धधेनुकानामकृतमुखद्वाराणामकामानामन्नपानेष्वप्रज्ञप्तानां च स्नेहपानमादेयं भवति Hastyāyur. 581.23 (4.4); अकृतमुखद्वारस्य (गजस्य)…शिरोविरेचनैरेवं नस्यकर्म विगर्हितं भवति Hastyāyur. 619.26 (4.7)

**अकृतमृत्क्षेपविशुद्धिक** ( akṛta-mṛtkṣepaviśuddhika ) *adj.* for which the purification (effected) by the sprinkling of clay is not used (अन्नं) केशकीटरूपसंसर्गदुष्टं वाकृतमृत्क्षेपविशुद्धिकं ज्ञात्वा भुक्त्वा…क्वथितमुदकं पिबेत् ManvaMu. 482.26 (*on* 11.159)

**अकृतयाग** ( akṛta-yāga ) *adj.* **A** to whom the sacrificial worship is not offered अनर्चिता अकृतयागा अग्नयो…अग्निहोत्रिणः प्राणानेव खादितुमिच्छन्ति ManvaMu. 149.24 (4.28); **B** who has not performed sacrifice कृतयागपुरुषस्याकृतयागपुरुषापेक्षयाज्ञवैलक्षण्याभावादिति भावः MayūMāli. 104.39 (*on* ii. 1.2); *m.* unperformed sacrifice यागत्वमपि हि विनष्टाकृतयागयोस्तुल्यम् TantrVā. 368.22 (*on* ii. 1.5)

**अकृतयूष** ( akṛta-yūṣa ) *m.* unprepared soup यूषः कृताख्योऽलवणास्नेहकृद्वारिसाधितः । अकृतस्तैर्विना सिद्धः क्रमाद् गुरुलघू च तौ कृताकृतयूषः MadaPāNi. 67.24; अत्र अकृतयूषः स्नेहलवणाद्यसंस्कृतः कृतयूषः स्नेहलवणादिसंस्कृतः CaraS. viii. 1.11 (comm.) (1941 Ed.); Dalhaṇa *on* SuśruS. i. 46.379.

**अकृतयोगिन्** ( akṛta-yogin ) *m.* a monk of lax behaviour in accepting food अकृतयोगी अगीतार्थः । त्रीन् वारान् कल्प्यमेषणीयं चापरिभाव्य प्रथमवेलायामपि यतस्ततोऽकल्प्यानेषणीयमपि ग्राही Malayagiri on Vyavahārasūtrabhāṣya x. 634 [JainLa.]

**अकृतयोग्य** ( akṛta-yogya ) *adj.* who has had no practice or who has not made himself fit for न चाधिगतशास्त्रोऽप्यकृतयोग्यः…शस्त्रकर्मणि प्रवर्तेत AṣṭāSaṁ. i. 172.24 (1.34)

**अकृतरक्ष** ( akṛta-rakṣa ) *adj.* **i** who has not taken care of the fertility (of one's wife by cohabitation after her menstrual course) अकृतरक्षस्य किं कलत्रेणाकृषतः किं क्षेत्रेण NītiVā. 24.23 (रक्षा = ऋतुरक्षा); **ii** who has not given protection प्रतिरोद्धा गोब्राह्मणरक्षार्थं कृतवैशसोऽशक्ततयाकृतरक्षो जीवन्नपि मुच्यते ManvaVi. 1384.15 (*on* 11.80)

**अकृतरसभावसंविद्** ( akṛta-rasabhāvasaṁvid ) *adj.* **1** who has not gained acquaintance with (literary) sentiments and emotions रहितं कलाभिरखिलाभिरकृतरसभावसंविदम् । क्षेत्रविदमपदिशन्ति (श्रीकृष्णं) जनाः S'iśuVa. 15.38+3; **2 A** (akṛtarasa-bhāvasaṁvid) whose cognition or perception of objects is without attachment; **B** (akṛtarasabhāvasaṁvid) one

who is mere consciousness, in whom there is no presence of attachments to action अकृतरसभावसंविदम् । क्षेत्रविदमपदिशन्ति (परमात्मानं) जनाः S'iśuVa. 15. 38 + 3.

**अकृतराज्य** (akṛta-rājya) *adj.* who has not ruled over the kingdom श्रीवीरश्रमश्राईत्रीषद्धोग्येन कर्मणा । कृतोद्वाहोऽकृतराज्यः प्रव्रजिष्यति सेत्स्यति TriṣaS'aPuC. iv. 2. 104.

**अकृतरुचि** (akṛta-ruci) *adj.* having no liking or taste for विपिनहरिणैः ···दर्भग्रासेऽप्यकृतरुचिभिः सस्पृहं वीक्ष्यमाणः । रामः RāmāCam. 2. 85.

**अकृतरोहण** (akṛta-rohaṇa) *adj.* not grown or sprouted अरूढस्तु यवे पुंसि त्रिषु त्वकृतरोहणे । रूढादन्यत्र NānārthāSaṁ. ii. 53. 8.

**अकृतलक्षण** (akṛta-lakṣaṇa) *adj.* whose character is not specified अकृतलक्षणचोदनाचौत्पत्तिकस्वराणि LāṭyāS'S. vii. 11. 18 (comm. अकृतलक्षणानि (निधनानि) चोद्यन्ते···तस्माद्यो यस्य औत्पत्तिकः स्वरः तेन स्युः); *m.* name of a king वैदेहोऽथ कृतक्षणः (v. l. वैदेहोऽकृतलक्षणः) MahāBhā. ii. 4. 24.

**अकृतलक्ष्य** (akṛta-lakṣya) *adj.* [*f.* -ā] who has not aimed at (some one), who has not made (any one) one's target (of comment) इति चोदितगृहचेटी निगदति कटुकाक्षराण्यकृतलक्ष्या KuṭṭaMa. 660.

**अकृतललित** (akṛta-lalita) *adj.* artlessly charming, having no practice of amorous gestures शबरवनिताः···सभ्रूभङ्गैरकृतललितैरक्षिभिर्वा पिबेयुः Haṁs-Dū.(Vā.) 11.

**अकृतलवन** (akṛta-lavana) *adj.* which is not cut off पार्थाचैरप्यकृतलवनं तोयमात्राभिलक्ष्यं । लक्ष्यं छित्त्वा शफरमवृथा लक्षणां मद्रकन्याम् Nāray. x. 81. 5.

**अकृतलोक** (akṛta-loka) *m.* unartificial or eternal world नास्त्यकृतः कृतेनेति विशेषणात् अकृतलोकप्रेप्सारूपं मुमुक्षुत्वं लब्धम् S'ivārkaMaDī. i. 86. 3 (*on* i. 1. 1)

**अकृतलोप** (akṛta-lopa) *adj.* which is not elided अकृतलोपानामेव लकाराणामादेशाः करिष्यन्ते Pradī. iii. 277B. (*on* iii. 4. 77)

**अकृतवत्** (akṛtava(n)t) *adj.* who has not done (something) ते चैते सुवर्णतस्कराः···जनिषु शल्यमानमकृतवन्तः···उत्पश्य यदनुभवन्ति(?) AvantiKa. 234. 9; स्वगृहेऽधिकृतानां (देवपूजां) अकृतवतां भक्षणाय (द्वितीयः प्रतिषेधः) ManuBh. i. 433. 1 (*on* 5. 27); न च वधं कृतवतोऽकृतवतश्चैकमेव व्रतं युक्तम् Aparā. 1064. 15 (*on* 3. 252); अभोजितायेति रत्नाकरः । भोजनमकृतवते इति तत्त्वम् DaṇḍaVi. 306. 1; एतैः···प्रायश्चित्तमकृतवद्भिः सह···सम्बन्धान् ब्राह्मणो नानुतिष्ठेत् ManvaMu. 41. 24 (*on* 2. 40)

**अकृतवपन** (akṛta-vapana) *adj.* who has not tonsured his head नाश्रोत्रियाय नाचरितवेदव्रताय नाकृतवपनाय ददीत AVPari. xL. 1. 2.

**अकृतवद्व्यूह** (akṛtavad-vyūha) *m.* non-performance of a grammatical operation (like antaraṅgaparibhāṣā) अकृतवद्व्यूहो नाम अन्तरङ्गपरिभाषाया अव्यापारः JaineVyā. 263. 34 (*on* iv. 1. 140); अकृतवद्व्यूहेन सिद्धिः JainePari. 88.

**अकृतवमन** (akṛta-vamana) *adj.* who has not vomited ततः सुखोषितम् ···औषधमात्रां पाययेत् । न त्वकृतवमनमन्यत्रातिक्रूरकोष्ठात् (विरेचयेत्) । अकृतवमनस्य हि श्लेष्मणोपहतमौषधमूर्ध्वं प्रवर्तते । ···श्लेष्मकाले त्वकृतवमनोक्तदोषः (भवति) AṣṭāSaṁ. i. 141. 10 (1. 27)

**अकृतवरण** (akṛta-varaṇa) *adj.* who is not chosen (as a priest) यज्ञं चाकृतवरणोऽनृत्विक् न गच्छेत् ManvaMu. 155. 9 (*on* 4. 57)

**अकृतवाग्दान** (akṛta-vāgdāna) *adj.* [*f.* -ā] whose betrothal has not taken place कन्यायामकृतवाग्दानायाम्···पितृकुले पिण्डनिवृत्तिरशौचनिवृत्तिश्च HārLa. 49. 18; कन्यासु द्विवर्षादूर्ध्वं मृतासु अकृतवाग्दानासु सपिण्डानामेकाहमाशौचम् DīpKa. 78. 7 (*on* 3. 23)

**अकृतवारण** (akṛta-vāraṇa) *adj.* who has not warded off स्वल्पमप्यकृतवारणः कर्णतालैः···अलिगणानाम् TilaMañ. 186. 11.

**अकृतविकृतिक** (akṛta-vikṛtika) *adj.* which has produced no bad results दुष्टारिष्टानि दृष्टेऽप्यकृतविकृतिकानि···क्षीयन्ते···प्राणियूथस्य यत्र JinaS'. 3. 9.

[1]**अकृतविग्रह** (akṛta-vigraha) *adj.* having no body बलवन्तौ बलवन्तमकृतविग्रहं मारुतमपि निन्दयन्तौ HarṣaC. 194. 10.

[2]**अकृतविग्रह** (akṛta-vigraha) *adj.* having no enmity HarṣaC. 194. 10

**अकृतविद्य** (akṛta-vidya) *adj.* who has not cultivated learning, not studied बालो ह्यकृतविद्यश्च न च वेत्ति बलाबलम् Rāmā. i. 19. 7; मूढश्चाकृतविद्यश्च न शुश्रूषति पूर्वजान् Rāmā. vii. 79. 14; पुंसामकृतविद्यानाम्··· । स्थापनादेवदेवस्य विहितं सिद्धिरुत्तमम् ParaS. 18. 3.

**अकृतविभाग** (akṛta-vibhāga) *adj.* who has not divided (ancestral property) अकृतविभागो ज्येष्ठो यदि धार्मिको भवति तदा···कुलं वृद्धिं नयति ManvaMu. 383. 8 (*on* 9. 109)

**अकृतविराम** (akṛta-virāma) *adj.* who has not put a stop to इदमवरं प्रियसुहृदः सुहृद्भयादर्पितार्गलं भवनम् । वेश्यासुरतविमर्देष्वकृतविरामस्य रामस्य PādaTā. 30. 7.

**अकृतविलम्बम्** (akṛta-vilambam) *adv.* without delay अकृतविलम्बं देहि हस्तावलम्बम् StavMā. 166. 17.

**अकृतविवाह** (akṛta-vivāha) *adj.* [*f.* -ā] unmarried ब्राह्मणं स्नातमकृतविवाहं त्यक्तब्रह्मचर्यं उत्सवार्थे ऋत्विजं वृणुते PārāSū. 70. 27; स्नातकेभ्यः अकृतविवाहेभ्योऽन्नं दद्यात् PārāSū. 78. 18; सर्वथा पत्न्या सह यष्टव्यमित्यस्तित्ववचने सति नाकृतविवाहस्याग्निपरिग्रहः ManuBh. i. 298. 30 (*on* 3. 202); कन्यामकृतविवाहां चाक्षतयोनिं दूषयति···स वधमर्हति Aparā. 858. 24 (*on* 2. 288); ततोऽकृतविवाहां मामेको विद्याधरात्मजः । स्वकुट्टिमादिहानैषीत् TriṣaS'aPuC. iv. 7. 243; ज्येष्ठे भ्रातरि अनिविष्टे अकृतविवाहे यदा कनीयान् विन्देत CaturCin. iii (1). 370. 19; कृतसमावर्तनोऽकृतविवाहः स्नातकः CaturCin. iii (1). 379. 18; अयं ब्राह्मणोऽकृतविवाहः···पात्रानर्हः PuruṣPa. 109. 20; स्त्रीणामकृतविवाहानां वाग्दत्तानां मरणे बान्धवाः···त्र्यहेण शुध्यन्ति ManvaMu. 208. 28 (*on* 5. 72)

**अकृतविवाहसंस्कार** (akṛta-vivāhasaṁskāra) *adj.* [*f.* -ā] whose marriage rite is not performed भगिन्यश्चाकृतविवाहसंस्काराः···विवाहयितव्याः Aparā. 731. 6 (*on* 2. 124)

**अकृतविवाहाग्निहोत्र** (akṛta-vivāhāgnihotra) *adj.* who is not married and who has not undertaken (the performance of) the Agnihotra अनिविष्टमकृतविवाहाग्निहोत्रम् Aparā. 445. 24 (*on* 1. 222)

**अकृतविवाहित्व** (akṛtavivāhi-tva) *n.* the state of being unmarried पारिवित्त्यं कनिष्ठे सहोदरे कृतविवाहे···अकृतविवाहि(? ह)त्वम् VīraMi. 930. 17 (*on* 3. 235)

**अकृतविवेक** (akṛta-viveka) *adj.* which has not been distinguished विकल्पाख्योऽलंकारः । पूर्वैरकृतविवेकोऽत्र दर्शितः AlaṅkāSa. 159. 12.

**अकृतविशेषण** (akṛta-viśeṣaṇa) *adj.* not characterised with attributes, not qualified अकृतविशेषणमेकं यत्स्यादुभयोस्तदन्यवैषम्यम् Kāvyālaṅ. (Ru.). 11. 29.

**अकृतविश्राम** (akṛta-viśrāma) *adj.* who has not taken rest प्रतिदिनं भवन्तमन्वेषयन्निमेषमप्यकृतविश्रामः ··· अमानुषमरण्यमविशम् TilaMañ. 389. 2; 392. 15.

**अकृतविश्वास** (akṛta-viśvāsa) *adj.* who has not put confidence (in somebody) यावच्चाकृतविश्वासा द्रुपदे···। तावदेवाद्य ते शक्याः MahāBhā. i. 193. 18; कलत्रपुत्रमित्रबान्धवेष्वकृतविश्वासः ··· प्रस्थानमकार्षीत् YaśasCam. ii. 303. 18; प्रसभमकृतविश्वासैर्यन्त्रायादीयमानतायां तु । नियतो भवति द्वेषः ··· तासाम् KandaCū. iii. 2. 10; अनन्तरं नरपतयो निजपरिजनेष्वप्यकृतविश्वासाः प्रतापरुद्रस्य पादमूलमेव शरणमुपगताः PratāYaBhū. 187. 7.

**अकृतविस्तर** (akṛta-vistara) *adj.* who is not prolix प्रकर्षनामा··· महाप्रतीहारः···अकृतविस्तरस्तामवादीत् TilaMañ. 417. 2.

**अकृतवृद्धि** (akṛta-vṛddhi) *f.* interest which is not stipulated तस्मादधिका वृद्धिरुत्तमर्णादिरकृतवृद्धौ न सिध्यति SmṛtiCan. iv. 364. 10; VīraMi. (Vyavahāra.) 233. 8; कृतवृद्ध्यपवादोऽपि वृद्ध्यभावकथनप्रसङ्गादकृतवृद्ध्यपवादैस्सहोक्तः SmṛtiCan. iv. 367. 2; अकृतवृद्धिप्रकरणे सामान्येनोक्तं वृद्धिपरिमाणं नाशे ग्राह्यम् SmṛtiCan. iv. 419. 14; अकृतवृद्धावपि विशेषान्तरमाह ManvaMu. 316. 31 (*on* 8. 152)

**अकृतवृष्टि** (akṛta-vṛṣṭi) *adj.* (a cloud) which has not produced rain अकृतवृष्टीनां त्वेषां फलं यथाशास्त्रमूहनीयम् AdbhuSāg. 742. 7.

**अकृतवेदिन्** (a-kṛtavedin) *adj.* ungrateful अकृतवेदी मृदुवेगः ··· । दासोऽपि ते न युक्तः पतिरयम् RatiRaha. 13. 80.

**अकृतवैर** (akṛta-vaira) *adj.* **A** who has not borne grudge एष खलु पाण्डवमध्यमस्यात्मजः···अकृतवैरं ब्राह्मणजनं वित्रासयति MadhyaVyā. 1. 2 (4); **B** for whom grudge has not been borne तेनास्म्यकृतवैरेण क्षुद्रेणात्यल्पबुद्धिना··· दूषितः Mṛcch. 10. 28 (174)

**अकृतवैशाख** (akṛta-vaiśākha) *adj.* who has not observed the rites of the Vaiśākha month यो वै ह्यकृतवैशाखः स मे दण्ड्यः SkandP. ii. (7). 11. 72.

**अकृतवैश्वदेव** (akṛta-vaiśvadeva) *adj.* who has not performed the Vaiśvadeva rite अकृतवैश्वदेवः ··· प्रत्याब्दिकश्राद्धं मासि श्राद्धविधिना करिष्ये BālamBha. i. 551. 11 (*on* 1. 249)

**अकृतव्यवसाय** (akṛta-vyavasāya) *adj.* who has not made up his mind, undecided अतत्त्वज्ञस्य शास्त्राणां सततं संशयात्मनः । अकृतव्यवसायस्य श्रेयो ब्रूहि पितामह MahāBhā. xii. 276. 1.

**अकृतव्यवहारनिर्णय** (akṛta-vyavahāranirṇaya) *adj.* a legal suit

against whom has not been decided यदा पुनराहर्त्रादिभिरभियुक्तोऽकृतव्यवहारनिर्णय एव परेतः स्यात् Mitā. 156. 7 (*on* 2. 29)

**अकृतव्यूह** ( akṛta-vyūha ) *adj.* **i** who does not carry out a grammatical operation or rule अकृतव्यूहाः शाकटायनीयाः S'ākaṭāPari. 69; व्यूहः शास्त्रकार्यम्, तदन्तरङ्गत्वात्प्राप्तमपि पश्चादस्य निमित्तविघातो भविष्यतीति बुद्ध्या न कृतं यैः तेऽकृतव्यूहाः PadMañ. *on* KāśiVṛ. *on* P. iv. 1. 82; अकृतव्यूहपरिभाषया सावुत्थितिर्मा भूत् SiddhāKau. 225B. 7; अकृतव्यूहपरिभाषा त्वनित्या LaS'abdeS'e. i. 62. 7; **ii** ( a-kṛtavyūha ) who undoes the grammatical operation or rule अकृतव्यूहाः पाणिनीयाः कृतमपि शास्त्रं निवर्तयन्ति Nyās. i. 262. 2 (*on* P. i. 4. 2); PadMañ. *on* KāśiVṛ. *on* P. iv. 1. 82 ( कृतमपि वा शास्त्रकार्यं निवर्तयन्ति निमित्ताभाव उत्पत्स्यमाने )

**अकृतव्रण** ( akṛta-vraṇa ) *adj.* [ *f.* -ā ] not wounded, not injured, unhurt अकृतव्रण एवासौ व्याघ्रेण भुवि पातितः । रामेण रक्षितश्चाभूत् BrahmāṇḍP. ii. 25. 74; स वराहः शरैरस्य तीक्ष्णैरप्यकृतव्रणः KathāSaSāg. ii. 3. 45; बर्बरश्च तपस्वी स्याच्छूरश्चाप्यकृतव्रणः ।···इति न श्रद्दधाम्यहम् S'ārṅgaPa. 1496; सान्तःशल्याकृतव्रणा ।···कूटसंस्थे मृगे मृगी Subhāṣi. 647; 2767; *m.* name of a person or persons ( a sage, a follower of Paraśurāma, a disciple of Sūta, a promulgator of Purāṇas ) रामस्यानुचरं वीरमपृच्छदकृतव्रणम् MahāBhā. iii. 115. 3; v. 175. 6; v. 181. 16; xiii. 27. 8; आत्रेयः सुमतिर्धीमान्काश्यपो ह्यकृतव्रणः ।···एते शिष्या मम प्रोक्ताः BrahmāṇḍP. i. 35. 63; ii. 25. 56; प्रतस्थे भार्गवः श्रीमानकृतव्रणसंयुतः BrahmāṇḍP. ii. 25. 83; हरप्रसादादत्रापि ह्यकृतव्रणदर्शनम् BrahmāṇḍP. ii. 26. 3; ii. 28. 64; ii. 34. 16; ii. 44. 1; VāyuP. i. 61. 56; ViṣṇuP. iii. 6. 17; रामेण प्रेषितो दूतः संप्राप्तस्त्वकृतव्रणः ViṣṇuDhaP. i. 45. 1; BrahmP. 26. 11; PadmP. v. 19. 214; S'ivaP. ii (3). 39. 54; KalkiP. iii. 16. 8; BhāgP. xii. 7. 5; मित्रमथाप्यकृतव्रणमुनिं प्राप्यागमः स्वाश्रमम् Nārāy. ix. 36. 4.

**अकृतव्रत** ( akṛta-vrata ) *adj.* who has not observed a vow वेदादानं करिष्यन्ति बटवश्चाकृतव्रताः ViṣṇuP. vi. 1. 32; प्राप्तेऽप्यर्हन्मते किं नु मरिष्याम्यकृतव्रतः SamarāSaṁ. 2. 258; 2. 466; कृतव्रतानां हि धनम् । अकृतव्रतानां कुतः S'aṅkaVi.(Ā.) 171. 9; अन्यथेदानीमेव अकृतव्रतस्य मीमांसाधिकारप्रसङ्गात् S'atDū. 75. 16.

**अकृतशकृत्** ( akṛta-śakṛt ) *adj.* who has not done the act of excretion अकृतशकृतापि प्रातः पायुप्रक्षालनं कर्तव्यम् ManuBh. i. 382. 24 (*on* 4. 152)

**अकृतशयनक्रिय** ( akṛta-śayanakriya ) *adj.* who has not gone to bed or sleep अशयितानकृतशयनक्रियान् ( द्विजान् प्रार्थयीत ) SmṛtiCan. v. 190. 12.

**अकृतशात्रव** ( akṛta-śātrava ) *adj.* who has not shown enmity or done any inimical act मुनिस्तु कृपया शत्रुवर्गेप्यकृतशात्रवः SamarāSaṁ. 7. 278.

**अकृतशास्त्राभ्यास** ( akṛta-śāstrābhyāsa ) *adj.* who has not studied the sacred texts इह जन्मन्यकृतशास्त्राभ्यासस्य तद्विषयः प्रज्ञामेधातिशयः प्राग्भवीयातिशयम्···अवगमयति TātPaṬ.(Vā.) 519. 2 (*on* iii. 1. 27)

**अकृतशास्त्रार्थ** ( akṛta-śāstrārtha ) *adj.* who has not accomplished the rite enjoined in the S'āstras अकृतशास्त्रार्थमात्मानमवबुध्यमानो न विरन्तुमर्हति BhāvanāVi. 25. 3.

**अकृतशिल्प** ( akṛta-śilpa ) *adj.* who has not used or learned one's skill प्रकृत्या विप्रेभ्यः पुनरकृतशिल्पा रघुसुवः AnargharaRā. 4. 58 ( comm. विप्रेभ्योऽकृतशस्त्राभ्यासाः )

**अकृतशुद्धि** ( akṛta-śuddhi ) *adj.* for which the purification is not done प्रतिषेधे तु सति कुतोऽकृतशुद्धिना व्यवहारः ManuBh. i. 473. 3 (*on* 5. 110)

**अकृतशुल्क** ( akṛta-śulka ) *adj.* **A** who has not paid the toll ध्वजमूलमतिक्रान्तानां चाकृतशुल्कानां शुल्कादष्टगुणो दण्डः ArthS'ā. i. 272. 4 (2. 21); **B** (a commodity) on which the tax is not paid कृतशुल्केनाकृतशुल्कं निर्वाहयतः···तावच्च दण्डः ArthS'ā. i. 273. 2 (2. 21)

**अकृतशौच** ( akṛta-śauca ) *adj.* who has not done the purification एवं महानसादौ सूदादिभिरकृतशौचैर्व्यवहरद्भिः पाक्यं द्रव्यमदृष्टं परिभोक्तुं न दुष्यति ManuBh. i. 481. 21 (*on* 5. 125); i. 487. 19 (*on* 5. 141); अकृतशौचाचमनो ब्राह्मणः ···गोब्राह्मणाग्नीन्न स्पृशेत् ManvaMu. 171. 7 (*on* 4. 142); अशुचिः, पुरीषादिकं कृत्वाकृतशौचः VīraMi.(Tīrtha.) 41. 8.

**अकृतशौचाचमन** ( akṛta-śaucācamana ) *adj.* who has not purified himself and sipped water (for purification) अकृतशौचाचमनो ब्राह्मणो हस्तादिना गोब्राह्मणाग्नीन् न स्पृशेत् ManvaMu. 171. 7 (*on* 4. 142)

**अकृतश्मशान** ( akṛta-śmaśāna ) who has not prepared the sepulchre (for the dead ancestor) ते ह्यामुष्मिंल्लोकेऽकृतश्मशानस्य साधुकृत्यामुपदम्भयन्ति S'atBr. XIII. viii. 1. 1.

**अकृतश्रम** ( akṛta-śrama ) *adj.* who has not made effort, done practice or taken pains सोऽहम्···कृतास्त्रानकृतश्रमः । प्रतियोद्धुं न शक्ष्यामि MahāBhā. iv. 36. 16; त्वत्प्रसादान्मुनिश्रेष्ठ मामन्ये नाकृतश्रमम् । वक्ष्यन्ति सर्वशास्त्रेषु ViṣṇuP. i. 1. 3; सम्यक्प्रमाणेषु अकृतश्रमाणाम् GitāBh.(S'aṅ.) 535. 11 (*on* 18. 50); मिथ्याज्ञानादहङ्कारी शास्त्रे चैवाकृतश्रमः ( स्थपतिः हन्तव्यः ) SamarāSū. i. 44. 7; ज्योतिःशास्त्रविदे तस्मै नमोऽस्तु···यः···ग्रहनक्षत्रताराणां संख्यानेऽप्यकृतश्रमः NarmaMā. 2. 83; ततः शश्वत्कृताभ्यासः कदाचिदकृतश्रमम् । स एवामुम्··· निहनिष्यति बह्वम् PāṇḍaC. 10. 198; 10. 208; अकृतश्रमोऽसि कम्बलाश्वतराविव गान्धर्वे NīlaVi. 85. 12; *m.* name of a sage शून्यपालोऽकृतश्रमः MahāBhā. v. 388*. 9; PadmP. v. 15. 346; S'ivaP. ii (3). 39. 53 (170A. 15)

**अकृतश्रवण** ( akṛta-śravaṇa ) *adj.* who has not studied the scriptures under a teacher अकृतश्रवणस्यापि···वामदेवस्य तद्दर्शनेन ( तत्त्वसाक्षात्कारदर्शनेन ) S'ivārkaMaDī. i. 55. 10 (*on* i. 1. 1); SiddhāLeSaṁ. 8. 3.

**अकृतश्रवणत्व** ( akṛtaśravaṇa-tva ) *n.* the state of not having studied the scriptures under a teacher अकृतश्रवणत्वेनानुत्पन्नप्रत्ययस्य संन्यासिनः SiddhāTa. 42. 7.

**अकृतश्रीक** ( akṛtaśrī-ka ) *adj.* who has not acquired wealth अथवा अकृतश्रीका द्यूतसभास्थाणवो द्यूतवृत्तयः ManuBh. i. 277. 16 (*on* 3. 150)

**अकृतश्रीपरिग्रह** ( akṛta-śrīparigraha ) *adj.* who has not assumed the royal majesty (rank) स हि प्रथमजे तस्मिन्नकृतश्रीपरिग्रहे । परिवेत्तारमात्मानं मेने स्वीकरणाद्भुवः RaghuVa. 12. 16.

**अकृतसंयोग** ( akṛta-saṁyoga ) *adj.* which has not produced the conjunction अकृतसंयोगस्य कर्मणो यः संयोगारम्भकालस्तस्यात्ययाभावात् कर्म संयोगं करोति न विभागम् NyāyKa. 157. 17.

**अकृतसंलाप** ( akṛta-saṁlāpa ) *adj.* [ *f.* -ā ] who has made no conversation, without making any conversation अकृतसंलापैव सार्धं तया स्थित्वाल्पकालम्···तामवोचम् TilaMañ. 302. 8.

**अकृतसंस्कार** ( akṛta-saṁskāra ) *adj.* [ *f.* -ā ] **i** not consecrated with the rites of marriage अकृतसंस्कारा अपि पुरुषैः क्षतयोनयो न कन्या इति व्यवह्रियन्ते ManuBh. i. 223. 24 (*on* 3. 34); **ii** for whom the funeral rites have not been done द्विविधो हि देशान्तरमृतः कृतसंस्कारोऽकृतसंस्कारश्चेति । ··· अकृतसंस्कारोऽपि द्विविधः SmṛtiCañ. vi. 131. 8; **iii** who has not been consecrated with rites like Jātakarman etc. तस्य ( नियमस्य ) अकृतसंस्कारावधिसमर्पकत्वेन प्रकृतार्थत्वाभावात् VīraMi.(Saṁskāra.) 228. 23.

**अकृतसंहित** ( akṛta-saṁhita ) *adj.* which has not been combined अकृतसंहितानामूष्मान्तानां पटलेऽस्मिन्विधानम् ṚPrāti. 4. 7.

**अकृतसंकल्प** ( akṛta-saṅkalpa ) *adj.* who has not made a resolve यथार्थं संभृतसंभारस्य···अप्यकृतसंकल्पस्य···यज्ञसंकल्पात्पूर्वेक्षणे शुद्धिर्भवति SmṛtiCan. vi. 71. 4.

**अकृतसंकल्पसंभव** ( akṛtasaṅkalpa-sambhava ) *adj.* [ *f.* -ā ] arising even when no thought is entertained (for it) प्रकृत्याकृतसंकल्पसंभवा( ? वां ) देवतास्वपि । स्वप्नमालां तु यः पश्येत् AVPari. lxiii. 1. 52.

**अकृतसंकेत** ( akṛta-saṅketa ) *adj.* **i** who has not learnt the conventional signification of words यदि तादृशीं रचनाम्···कृतां वाकृतसंकेतो विवेचयेद्व्यक्तमपौरुषेयो वेदः PramāVāSvopVṛ. 82. 14; **ii** for which no convention is agreed upon कथम्···प्रतिक्षणविनश्वरेषु च विज्ञानेषु च परस्पराकृतसंकेतेषु पूर्वानुभूतोऽर्थः स्मर्यते Abhidharmadīpa 22. 3.

**अकृतसंकेतविधि** ( akṛta-saṅketavidhi ) *adj.* who has not fixed an appointment मनःखेदस्त्वेवं कथमकृतसंकेतविधयः···नो नयनपथमेष्यन्ति सुहृदः SubhāRaK. 49. 39.

**अकृतसंग** ( akṛta-saṅga ) *adj.* who has not kept company with वनविहङ्गैः सार्धमकृतसङ्गः···एतावन्ति दिवसान्ययापयम् TilaMañ. 383. 19.

**अकृतसंगम** ( akṛta-saṅgama ) *adj.* on which no encounter is effected कश्चिच्चकार पन्थानमृजुं निघ्नन्भटावलिम् । समरे पुरुषैरन्यैर्भयादकृतसंगमम् PadmP.(Ra.) 12. 281. *m.* acquirement of (fruits of) deeds not done इति नश्वरतां प्रयाति जीवे कृतनाशाकृतसंगमौ भवेताम् S'aṅkaDigVi. 15. 153.

**अकृतसंज्ञ** ( akṛta-sañjña ) *adj.* **A** to whom no indication is given नैतत्पार्थ सुविज्ञेयं व्यामिश्रेणेति मे मतिः । नरेणाकृतसंज्ञेन MahāBhā. xiv. 19. 51; **B** having the sensitivity (of evacuation) as not done कृतेऽप्यकृतसंज्ञः CaraS. vi. 19. 7 (1941 Ed.) = AṣṭāHṛ. iii. 8. 11 ( comm. कृतेऽपि पुरीषोत्सर्गे ) = AṣṭāSaṁ. i. 279. 25 (3. 8)

**अकृतसंज्ञता** ( akṛtasañjña-tā ) *f.* the state of having the notion (of an act done) as undone कुर्यात्···मूत्रं तु बस्तिनिस्तोदं कृतेऽप्यकृतसंज्ञताम् AṣṭāHṛ. i. 11. 13.

**अकृतसत्कार** ( akṛta-satkāra ) *adj.* who is not shown respect, who is disrespected भृत्याश्चाकृतसत्कारं दूरमेनमथात्यजन् YogVā. v. 46. 23.

**अकृतसत्क्रिय** ( akṛta-satkriya ) *adj.* who is not honoured or felicitated विष्णुर्दैत्यवधे वृत्ते देवैरकृतसत्क्रियः।···कं वा योगमुपास्त सः HariVaṁ. 39. 2.

**अकृतसत्तीर्थयात्र** ( akṛta-sattīrthayātra ) *adj.* who has not made pilgrimage to good holy places ब्रह्महत्या त्वया पाप कृतेत्यवगतं मया। तत्त्वामकृतसत्तीर्थयात्रं न द्रष्टुमुत्सहे KathāSaSāg. vii. 5. 34.

**अकृतसद्बुद्धि** ( akṛta-sadbuddhi ) *adj.* who did not make a good resolve धिङ्मामकृतसद्बुद्धिम्···हरः। आराधितो मया मिथ्या मृगतृष्णाम्बुलिप्सया BṛBrahmaS. iii. 9. 16.

**अकृतसंताप** ( akṛta-santāpa ) *adj.* not causing distress or affliction अकृतसन्तापो वनदवो विध्माति KathāK. 152. 2.

**अकृतसंधि** ( akṛta-sandhi ) *adj.* which has not undergone the *sandhi* operation एषामकृतसन्धीनामयं लोप इष्यते Prasā. i. 932. 16; विषुण इत्यादौ अकृतसन्धेरपि प्रत्ययदर्शनादन्यत्रापि तथाशङ्कावारणाय LaS'abdeS'e. ii. 196. 7; ii. 379. 9.

**अकृतसंधिकार्य** ( akṛta-sandhikārya ) *adj.* which has not undergone the *sandhi*-operation तस्मादकृतसन्धिकार्याणामेवामी आदेशा वक्तव्याः PadMañ. *on* KāśiVṛ. *on* P. vii. 2. 107.

**अकृतसंध्यता** ( akṛtasandhya-tā ) *f.* the state of one who has not performed the *sandhyā* worship शयानमित्यकृतसन्ध्यतामुपलक्षयति ManvaVi. 253. 26 ( *on* 2. 220 )

**अकृतसंध्योपासन** ( akṛta-sandhyopāsana ) *adj.* who has not performed the *sandhyā* worship केचित्तु अकृतसन्ध्योपासनः सन्ध्योत्तरविहितकर्मणामनधिकारीत्यर्थ इत्याहुः VīraMi.( Āhnika. ) 147. 1.

**अकृतसंन्यास** ( akṛta-sannyāsa ) *adj.* who has not renounced the world, who has not become an ascetic पक्वैरपि वनाहारैर्वानप्रस्थो निवेदयेत्। गच्छेन्नाकृतसंन्यासो ग्रामाद्देवार्चनाय च ParaS. 29. 56.

**अकृतसपिण्डन** ( akṛta-sapiṇḍana ) *adj.* for whom the *sapiṇḍana* ceremony is not performed 'न्युत्क्रमाच···सपिण्डता' इत्यस्य पितृव्यादिपरत्वादकृतसपिण्डनपितृव्यादिपराणीत्याहुः NirṇaSi. 335. 9; 429. 17.

**अकृतसपिण्डीकरण** ( akṛta-sapiṇḍīkaraṇa ) *adj.* for whom the *sapiṇḍīkaraṇa* rite has not been performed प्रेतान्=अकृतसपिण्डीकरणान् VīraMi. ( S'rāddha. ) 4. 1; अपिशब्दात्सुतरामकृतसपिण्डीकरणो( ? णे ) दद्यादिति सिद्ध्यति VīraMi. 317. 9 ( *on* 1. 255 )

**अकृतसम** ( akṛta-sama ) *adj.* as good as not done, as though not done अथ पुनरन्तरेणोपवीतमाचमनं कृतमप्यकृतसमम् ManuBh. i. 108. 19 ( *on* 2. 63 ); कृतमपि नपुंसकग्रहणमकृतसममिति मत्वा पृच्छति Pradī. ii. 416A. 9 ( *on* ii. 2. 2 )

**अकृतसमत्व** ( akṛtasama-tva ) *n.* the state of being as good as not done असत्यां तस्याम् ( योग्यतायाम् ) अकृतसमत्वप्रसङ्गात् TantrVā. 366. 3 ( *on* ii. 1. 5 )

**अकृतसमय** ( akṛta-samaya ) *adj.* [ *f.* -ā ] **1** who is not familiar with the conventional signification of the word यदि च वाच्यार्थवृत्तिः शब्दः स्यात् वाच्योपलब्धावकृतसमयेनापि प्रतिपाद्येत यथा सामान्यमकृतसमयोऽपि प्रतिपद्यत इति NyāyVā. 264. 14 ( *on* ii. 1. 52 ); **2** for which no conventional signification is established, not preconcerted असत्यां हि शक्तौ अकृतसमये निरवलम्बना प्रत्यायकत्वाशङ्का NyāyMañ. i. 222. 16; अकृतसमया चेष्टा न प्रमाणान्तरम् Kiraṇā. 320. 11; चेष्टा द्विविधा कृतसमयाकृतसमया च Upask. 400. 14 ( *on* ix. 2. 3 )

**अकृतसमयत्व** ( akṛtasamaya-tva ) *n.* the state of being that about which no conventional signification has been formulated सङ्केताधीने तु वाचकत्वे सर्वेषामकृतसमयत्वात् किं केन निर्दिश्यते TātpaT.( Vā. ) 418. 19 ( *on* ii. 1. 55 ); NyāySu.( Ja. ) 78A. 13 ( *on* i. 1. 1 )

**अकृतसमाध्वन्** ( akṛta-samādhvan ) *adj.* of whom the *deśāntara* operation is not done i. e. not rectified for difference in longitude of the place east or west of the standard meridian सूर्येन्द्वोरकृतसमाध्वनोर्विधानात् संप्राप्तस्थितिदलदृष्टकालयोश्च। विश्लेषः MaBhāsk. 2. 7.

**अकृतसमावर्तन** ( akṛta-samāvartana ) *adj.* who has not done the ritual symbolising termination of Vedic study, who has not yet returned home after his studies at the house of a preceptor अथ साक्ष्यानर्हाः ···अकृतसमावर्तनो द्विजः VīraMi. 499. 28 ( *on* 2. 68 )

**अकृतसमास** ( akṛta-samāsa ) *adj.* not compounded अकृतसमासयोश्च महदिन्द्रशब्दयोरनेकत्वात् TantrVā. 402. 2 ( *on* ii. 1. 17 )

**अकृतसमासस्पर्श** ( akṛta-samāsasparśa ) *adj.* not having any compound, devoid of compounds अकृतसमासस्पर्शा समग्रगुणगुम्फितादिमा तत्र। एकैव जयति रीतिः Ekāva. 5. 10.

**अकृतसमासान्त** ( akṛta-samāsānta ) *adj.* ( the word at the end of a compound ) to which a *samāsānta* suffix is not applied मूर्धन्नित्यकृतसमासान्त एव मूर्धन्शब्दः SiddhāKau. 656B. 6; Prasā. ii. 785. 8; PariVṛ.( Sī. ) 118. 5; 118. 10.

**अकृतसंबन्ध** ( akṛta-sambandha ) *adj.* ( a word ) whose relationship ( with its meaning ) is not fixed or established न ह्यकृतसंबन्धाच्छब्दादर्थं प्रतिपद्यमानानुपलभामहे S'ābaBh. 55. 6 ( *on* i. 1. 5 ); 57. 7 ( *on* i. 1. 5 ); नित्येऽनित्येऽपि बाह्येऽर्थे पुरुषेण कथंचन। सम्बद्धोऽकृतसम्बधैः शब्दैः कर्तुं न शक्यते VākyaP. iii. 3. 38; जात्यापि हि विशिष्टा व्यक्तय एव वक्तव्या इत्यकृतसम्बन्धस्यानभिधानादवश्यं तत्र सम्बन्धः करणीयः PramāVāSvopVṛ. 31. 6; TattvSaṁ. 2245; S'lokaVār. 6. 257 ( 795. 5 ); NyāyMañ. i. 225. 9.

**अकृतसंबन्धत्व** ( akṛtasambandha-tva ) *n.* the state of being one whose relationship ( with its meaning ) is not fixed or established तेन सर्वावस्थावच्छब्दः सम्बन्धमगत्वैव नष्टत्वादनर्थकः ततश्च तदुत्तरेषामर्थवत्साद्दश्याभावात् स्वयं चाकृतसम्बन्धत्वान्नार्थवत्ता सिद्ध्यति NyāyRa. 795. 12 ( *on* 6. 257 )

**अकृतसंभाषण** ( akṛta-sambhāṣaṇa ) *adj.* who is not engaged in any conversation, who has not said anything ( कृष्णः ) वत्समण्डलीं पुरस्कृत्याकृतसंभाषणो गतः GopāKeCan. 63. 19.

**अकृतसवर्णाविवाह** ( akṛta-savarṇāvivāha ) *adj.* who has not married a girl of the same caste हीनयोनिनिषेवणं द्विविधमकृतसवर्णाविवाहस्य हीनवर्णविवाहः साधारणस्त्रीरूपवेश्यादिभोगश्च BālamBha. iii. 172. 7 ( *on* 3. 289 )

**अकृतसाक्षिन्** ( akṛta-sākṣin ) *m.* an unappointed witness तथा अकृतसाक्षिभेदोऽपि तेनैव दर्शितः SmṛtiCan iii. 184. 9; iii. 185. 19; अयं त्वकृतसाक्षी सामान्येन मनुनोक्तः ManvaMu. 303. 2 ( *on* 8. 76 )

**अकृतसामर्थ्य** ( akṛta-sāmarthya ) *adj.* [ *f.* -ā ] **A** the utility of which is not availed of सर्वत्रैवात्र कृतसामर्थ्या सप्तम्यकृतसामर्थ्या पञ्चमीति कृत्वा पञ्चमीनिर्देशो भविष्यति MahāBh. i. 174. 5 ( *on* i. 1. 66, 67 ); **B** which has not exercised its power न च वाक्यप्रकरणाभ्यां युगपत्कृतसामर्थ्याभ्यामकृतसामर्थ्याभ्यां च शक्यं भवितुम् S'ābaBh. 847. 2 ( *on* iii. 3. 14 )

**अकृतसीमन्त** ( akṛta-sīmanta ) *adj.* [ *f.* -ā ] in whose case the *sīmantonnayana* ceremony ( i. e. the ceremony of the parting of the hair ) has not been performed अकृतसीमन्तायाः प्रसवे सत्यव्रत आह SmṛtiCan. i. 45. 13= CaturCin. iii( 2 ). 735. 19; अकृतसीमन्तायाः प्रसवे विशेषमाह गार्ग्यः VīraMi. ( Saṁskāra. ) 177. 13.

**अकृतसीमन्तोन्नयन** ( akṛta-sīmantonnayana ) *n.* the ceremony of the parting of the hair, which is not performed अकृतसीमन्तोन्नयने चेत् प्रजायेत S'āṅkhāGS. v. 7. 1.

**अकृतसुकृत** ( akṛta-sukṛta ) *adj.* who has not performed good or meritorious deeds स वै···ममानार्यस्य···अकृतसुकृतस्य कृतविस्रम्भः···आगमिष्यति BhāgP. v. 8. 16; अथावासं शान्तेरकृतसुकृतानामसुलभम्···ददर्श···सीतासहचरम् RāmāCam. 2. 77; स्मृतिं याता पुंसामकृतसुकृतानामपि च या हरत्यन्तस्तन्द्राम् GaṅgāL. 5; 45; Mukundā. 22( 7 )

**अकृतसुकृतपुञ्ज** ( akṛta-sukṛtapuñja ) *adj.* who has not performed a good number of meritorious acts अकृतसुकृतपुञ्जैः स्वप्नमध्येऽप्यलभ्याः परमपुरपुरन्ध्रीः···विहाय HariVi. 5. 69.

**अकृतसेतु** ( akṛta-setu ) *adj.* on which no bridge has been built अकृतसेतुम्···रविसुतामतिलङ्घ्य रमापतिं सपदि घोषसमीपमुपानयत् Yādavā. 3. 44.

**अकृतसोमयाग** ( akṛta-somayāga ) *adj.* who has not performed a Soma-sacrifice अतः उक्तादल्पीयसि द्रव्ये यः पूर्वमकृतसोमयागः सोऽपि तस्य नित्यस्य फलं न प्राप्नोति SmṛtiCan. ii. 418. 10.

**अकृतस्त्री** ( akṛta-strī ) *adj.* who has not had a wife पित्र्यादृणादनिर्मुक्तः पूर्वमेवाकृतस्त्रियः [gen. ?]। प्रजारणी तु पत्नी ते···। सदृशी मम गोत्रेण वह्याम्येनाम् MahāBhā. i. App. I. 64. 22.

**अकृतस्नान** ( akṛta-snāna ) *adj.* [ *f.* -ā ] **i** who has not taken a bath यादृशं च शुक्रनिरसनेन अकृतस्नानस्याशुचित्वं न तादृशमेव प्रसवे ManuBh. i. 451. 6 ( *on* 5. 62 ); तस्यैवाकृतस्नानभोजनस्य गमनं कामो द्वेषानुबन्ध इति JayaMa. 356. 3 ( *on* 6. 6 ); **ii** ( a woman ) who has not taken a bath ( on the fourth day of menstruation ) रजस्वलामकृतस्नानां गत्वा त्रिरात्रोपवासानन्तरं घृतप्राशनेन शुद्ध्यति VīraMi. 1034. 8 ( *on* 3. 287 ); **iii** one who has not had the ( *samāvartana* ) bath दारसंग्रहः··· कथमकृतस्नानस्य भवेदिति Kāśī. i. 51. 15 ( *on* 1. 104 )

[1]**अकृतस्नेह** ( akṛta-sneha ) *adj.* who has not watered ( the seeds ) (?) बीजानामकृतस्नेहा आहताः काष्ठशङ्कुभिः। अजैडकं खरोष्ट्रं च पालयिष्यन्ति

नित्यशः BrahmP. 230. 76.

²**अकृतस्नेह** ( akṛta-sneha ) *m.* uncultivated attachment अकृतप्रेमैव ( v. l. अकृतस्नेहो हि ) वरं न वरं संजातविघटितप्रेमा ( v. l. संजातविघटितस्नेहः ) Kavīndravacanasamuccaya. 498.

**अकृतस्पृह** ( akṛta-spṛha ) *adj.* who has not shown any desire ततः स मूलदेवस्तौ तथाभूतौ वधूवरौ । आदाय स्वास्पदं प्रायाद्राजार्थेष्वकृतस्पृहः KathāSaSāg. xii. 22. 106.

**अकृतस्वकार्य** ( akṛta-svakārya ) *adj.* which has not caused its effect अयमकृतस्वकार्यो नामाहेतुः SaraKaṇṭhā. 332. 12.

**अकृतस्वामिकार्य** ( akṛta-svāmikārya ) *adj.* who has not performed the duty towards his master अकृतस्वामिकार्याणामहो जीवितधारिणाम्···दुर्गतिश्च पदे पदे SkandP. iv. 53. 107.

**अकृतस्वार्थ** ( akṛta-svārtha ) *adj.* who has not attained his goal अवशं ननु विप्रयोजयेन्मामकृतस्वार्थम्···मृत्युः BuddhaC. 5. 38.

**अकृतहस्त्यश्व** ( akṛta-hastyaśva ) *adj.* in which elephants and horses are not deployed or are made ineffctive शुष्कचर्मवृत्तशर्कराकोशकैर्गोमहिषोष्ट्रयूथैर्वा त्रस्नुभिरकृतहस्त्यश्वं भिन्नमभिन्नः प्रतिनिवृत्तं हन्यात् ArthS'a. iii. 114. 4 (10. 3) ( comm. अनवस्थापितहस्त्यश्वम् )

**अकृतह्रस्व** ( akṛta-hrasva ) *adj.* in which the shortening of the vowel has not been effected तस्मादलौकिकेन प्रक्रियावाक्येनाकृतह्रस्वेनाङः प्रश्लेषप्रदर्शनमात्रं क्रियते Pradī. vi. 246. (*on* vii. 4. 23)

**अकृतांहस्** ( akṛtāṁhas ) *adj.* who has not committed any wrong or sin स्वयं चेत् कृतपापः स्यात् पीडयेदकृतांहसः । उपवासैश्च दानैस्तान् परितोष्य विशुध्यति MahNirvāT. 11. 20.

**अकृताकार** ( akṛtākāra ) *adj.* (whose final) is not changed into *ā* तत्राकृताकारस्याष्टनोऽसत्त्वेन व्यभिचाराभावात् कृताकारस्याष्टनो निर्देशो व्यर्थ इत्याशङ्क्याह Prasā. i. 236. 22.

**अकृताकारित** ( akṛtākārita ) *adj.* free from the faults of *kṛta* (intentionally prepared by oneself) and *kārita* (intentionally caused to be prepared) एवं निराकृतो भूयोऽप्यकृताकारितेन सः । अन्नेनामन्त्रयाञ्चक्रे TriṣaS'aPuC. i. 6. 201; i. 1. 111; अकृताकारितं शुद्धमाहारं धर्महेतवे । अश्नतोऽपि मुनेर्नित्योपवासफलमुच्यते PārśvC. 3. 282.

**अकृताकारितार्थिन्** ( akṛtākāritārthin ) *adj.* who desires (food) not specially prepared nor caused to be prepared यदन्नमवशिष्यते । अकृताकारितार्थिभ्यः साधुभ्यो देयमेव तत् PariPar. 11. 107.

**अकृताक्षेपपरिहार** ( akṛtākṣepaparihāra ) *adj.* who has not refuted the objection, who has not replied to an objection अकृताक्षेपपरिहारस्य ( सिद्धान्तिनः ) तत्प्रश्नानुपपत्तेः YuktiSneha. 92. 25 (*on* i. 1. 5)

**अकृताखण्डधर्म** ( akṛtākhaṇḍadharma ) *adj.* who has not observed the prescribed duties in full अकृताखण्डधर्माणां पूर्वे जन्मनि जन्मिनाम् । सापदः परिपच्यन्ते गरीयस्योऽपि सम्पदः KaumuMi. 1. 6.

**अकृतागम** ( akṛtāgama ) *m.* (the fault of) experiencing (the effects) of what is not done, unmerited requital तत्र ( आत्मनः ) नित्यत्वपक्षेऽपि कृतनाशाकृतागमौ । फलतस्तुल्यरूपौ चेद्वृथा तत्प्रतिपादनम् S'lokaVār. 5(17). 12 (691. 7) ( comm. किमिदं कृतनाशाकृतागमाविति । कर्तुः कृते कर्मणि नाशो भोक्तुश्चाकृते कर्मण्यागमः ); 5(17). 38 (698. 1); स्यातां ह्यत्यन्तनाशे हि कृतनाशाकृतागमौ । सुखदुःखादिभोगश्च नैव स्यादेकरूपिणः TattvSaṁ. 226; अकृतागमश्च कृतनिष्फलता फलतः समापतति कर्तृगते: SaṁkṣeS'ā. 3. 30; स्मृतिवत्परिहर्तव्यौ कृतनाशाकृतागमौ NyāyMañ. ii. 16. 9; इह कृत्वाशुभं कर्म स नामुत्राश्नुते फलम् । भुङ्क्तेऽन्यः किं तु तदिति कृतनाशाकृतागमौ TriṣaS'aPuC. i. 1. 383.

**अकृतागमदोषदर्शन** ( akṛtāgamadoṣa-darśana ) *n.* the observation of the fault of *akṛtāgama* (experiencing the effects of acts not done) अथ सर्वमिदं स्वभावतश्चेन्ननु वैयर्थ्यमुपैति कर्म कर्तुः । अकृतागमदोषदर्शनं च तदवश्यं विदुषामचिन्तनीयम् [ v. l. विदुषां हि चिन्तनीयम् ] VarāṅgaC. 24. 38.

**अकृतागमप्रसङ्ग** ( akṛtāgama-prasaṅga ) *m.* the contingency (of the fault) of *akṛtāgama* (unmerited requital) स्तुतिमात्रमेतद्, भूतानां भाविनां पावनानुपपत्तेः । उपपत्तौ वा कृतनाशाकृतागमप्रसङ्गात् BālaKrī. i. 66. 7 (*on* 1. 58)

**अकृतागस्** ( akṛtāgas ) *adj.* who has not offended or sinned, innocent अद्रोग्धारश्च धर्मेण शत्रोरप्यकृतागसः Rāmā. i. 260*; आख्याहि वृष भद्रं वः साधूनामकृतागसाम् BhāgP. i. 17. 13; iii. 14. 39; इहापि दृश्यते लोके तिरश्चामकृतागसाम् । नितान्तं बन्धनच्छेदतर्जनाद्यतिदुःसहम् TriṣaS'aPuC. iii. 3. 112; अकृतागसीव दयिते धौर्त्यान्मुहुः पृच्छति । नोक्तं किंचन मुग्धया Subhāṣi. 1585; UpadeS'. 68.

**अकृताग्निकार्य** ( akṛtāgnikārya ) *adj.* who has not done his duties towards the fire, who has not worshipped the fire अत्र पुनरग्निकार्यग्रहणं सन्ध्याकाले कथंचिदकृताग्निकार्यस्य कालान्तरविधानार्थम् Mitā. 10. 26 (*on* 1. 31); VīraMi. 93. 8 (*on* 1. 31)

**अकृताग्निपरिग्रह** ( akṛtāgniparigraha ) *adj.* who has not undertaken (the worship of) the fire अकृताग्निपरिग्रहश्चेदेतत्कुर्यात् CaturCin. iii(1). 1706. 8; VīraMi. (S'rāddha.) 369. 26.

**अकृताग्निसंसर्ग** ( akṛtāgnisaṁsarga ) *m.* not tending the sacred fire अकृताग्निसंसर्गे···प्रायश्चित्तम् BaudhGS. iv. 11. 1.

**अकृताग्निसमारोपण** ( akṛtāgnisamāropaṇa ) *adj.* who has not disposed of his sacred fires (in a prescribed manner) अकृताग्निसमारोपणेनैव संन्यस्तव्यम् S'ivārkaMaDī. ii. 392. 24 (*on* iii. 4. 20)

**अकृताग्निहोत्रत्व** ( akṛtāgnihotra-tva ) *n.* the state or condition of not maintaining the worship of the sacrificial fire पारिवित्त्यं कनिष्ठे सहोदरे कृतविवाहे कृताग्निहोत्रे वाकृतविवाहि( ? ह )त्वमकृताग्निहोत्रत्वं वा VīraMi. 930. 17 (*on* 3. 235)

**अकृताग्न्याधेय** ( akṛtāgnyādheya ) *adj.* who has not set up the (threefold) sacrificial fires or not performed the *ādhāna* rite ज्येष्ठे भ्रातरि··· अकृताग्न्याधेये SmṛtiCan. v. 174. 21; Aparā. 116. 10 (*on* 1. 89)

**अकृताग्र** ( akṛtāgra ) *adj.* (harvest) the first fruits of which are not offered (in *āgrayaṇeṣṭi*) अकृताग्राणि भोक्ष्यन्ति नराश्चैवाग्निहोत्रिणः HariVaṁ. 116. 38.

**अकृताग्रयण** ( akṛtāgrayaṇa ) *adj.* **1** (grain) which is not consecrated by the *āgrayaṇa* (sacrifice) अकृताग्रयणं यच्च धान्यजातम्···विसर्जयेत् ViṣṇuP. iii. 16. 7; **2** (person) who has not performed the *āgrayaṇa* sacrifice अकृताग्रयणस्य नवान्नाशनं प्रतिषिद्धम् ManuBh. i. 340. 3 (*on* 4. 26); जीवनार्थे नवश्यामाकान्नभोजनमकृताग्रयणेनाकर्तव्यम् SmṛtiCan. v. 107. 13.

**अकृताङ्ग** ( akṛtāṅga ) *adj.* **1** who has not cultivated or trained his body अकण्ठो गायनोऽकृताङ्गो नर्तकः···इत्यकिंचित्करो वर्गः AvantiKa. 73. 12; **2** brought back to its natural (original) form स विद्याधरसुन्दरः । अकृताङ्गः कृतः BṛKathāS'loSaṁ. 9. 68. [ Lacôte अक्षताङ्गः ]

**अकृताचमन** ( akṛtācamana ) *adj.* who has not sipped water उच्छिष्टो भुजिसम्बन्धेनाकृताचमनो यावत् ManuBh. i. 369. 27 (*on* 4. 109); अन्नम् ···अकृताचमनेन स्पृश्यते ManuBh. i. 488. 10 (*on* 5. 141)

**अकृताचार** ( akṛtācāra ) *adj.* who does not observe proper conduct नाव्रतो नाकृतात्मा च ( v. l. नाकृताचारो ) नाशुचिर्न च तस्करः । स्नाति तीर्थेषु कौरव्य न च वक्रमतिर्नरः MahāBhā. iii. 83. 92.

**अकृताच्छादन** ( akṛtācchādana ) *adj.* who has not covered himself (with any garment or cloth) अकृतनीशार इति अकृताच्छादन इत्यर्थः Pradī. iii. 228B (*on* iii. 3. 21)

**अकृताञ्जलि** ( akṛtāñjali ) *adj.* who had not folded his hands (palms) in supplication न चात्र शूरान्मोक्ष्यामि न भीतान्न कृताञ्जलीन् ( v. l. त्वभीतानकृताञ्जलीन् ) MahāBhā. vii. 148. 59; अकृताञ्जलिमासीनं व्यासशिष्यं विलोक्य सः । ···चुक्रोध SkandP. iii(1). 19. 19.

**अकृतातिरिक्त** ( akṛtātirikta ) *adj.* which is not left over (i. e. fresh) यः पुनर्भिक्षुः भुक्तवान् प्रवारितः अकृतातिरिक्तं खादनीयभोजनीयं खादेद् भुञ्जीत वा पायन्तिका PrātiSū. 23. 1.

**अकृतात्मचिकित्स** ( akṛtātmacikitsa ) *adj.* who has not (medically) treated himself अकृतात्मचिकित्सेन···सैन्येषु···ऊचे तेभ्यः सुषेणेन RāmC. 35. 89.

**अकृतात्मता** ( akṛtātma-tā ) *f.* the state of not having trained oneself अकृतात्मतया तृषान्वितो घृणया चैव धिया च वर्जितः ।···वान्तमात्मना···श्वा पुनरत्तुमिच्छति Saund. 8. 21.

**अकृतात्मन्** ( akṛtātman ) *adj.* **1** one who has not disciplined his mind, of untrained mind or understanding (*hence* ordinary) चरन्दीक्षां महातेजा दुश्चरामकृतात्मभिः MahāBhā. i. 41. 2; तद्दण्डं धारयत मे दुष्कृतेरकृतात्मनः MahāBhā. i. 42. 2; ii. 61. 5 (v. l.); तथाकृतात्मा लोभेन सहजेन विनश्यति MahāBhā. iii. 2. 37; iii. 165. 2; iii. 205. 12; अकृतात्मानमासाद्य राजानम्···विनश्यन्ति···देशाः MahāBhā. iii. 268. 11; vii. 3. 22; vii. 102. 42; vii. 108. 12; viii. 55. 42; ix. 55. 23; x. 1. 49; x. 15. 7; राज्यं हि सुमहत्तन्त्रं दुर्धार्यमकृतात्मभिः MahāBhā. xii. 58. 21 = SūktiRa- 160. 3; xii. 149. 83; xiii. 6. 12; वनवासे···दुःखानि···। प्राप्यन्ते नियतं वीर पुरुषैरकृतात्मभिः Rāmā. ii. 26. 10; ii. 57. 25; ii. 222*. (8); सुनीतं हितकामेन वाक्यमुक्तं दशानन । न गृह्णन्त्यकृतात्मानः कालस्य वशमागताः Rāmā. vi. 10. 15; सा ह्युद्दिष्टा पुरा भीष्म पितृकन्या मनीषिणा ।···सत्यधर्मभृतां श्रेष्ठा दुर्विज्ञेयाकृतात्मभिः HariVaṁ. 18. 7; दिव्यानामोषधीनां यः प्रभावः स भवद्विधैः । शक्यः सोढुमशक्यस्तु स्यात्सोढुमकृतात्मभिः CaraS. vi. 1. 8 (1941 Ed.); मातापित्रोर्बीजदोषादशुभैश्चाकृतात्मनः । गर्भस्थस्य यदा दोषाः प्राप्य रेतोवहाः सिराः । शोषयन्त्याशु

तन्नाशाद्रेतश्चाप्युपहन्यते CaraS. vi. 30.189 (1941 Ed.); उच्चावचेषु भूतेषु दुर्ज्ञेयामकृतात्मभिः । ध्यानयोगेन संपश्येद् गतिमस्यान्तरात्मनः ManuSm. 6.73; दण्डो हि सुमहत्तेजो दुर्धरश्चाकृतात्मभिः ManuSm. 7.28; अकृतात्मदुरावापं ब्रह्मलोकमवाप्नुहि MadhyaVyā. 1.21; एवंविधं हि विनयं नयसौष्ठवं च नैवाकृतात्महृदयानि समुद्वहन्ति JātaMā. 140.20 (22.87); तथा प्राणो दुराधर्षः सर्वेषामकृतात्मनाम् VāyuP. i. 10.79; BrahmāṇḍP. ii. 13.89; सत्यमत्यन्तमुदितं धर्मशास्त्रेषु धीमताम् । तारणायानृतं तद्वत् पातनायाकृतात्मनाम् MārkP. 8.20; साधु भूतलदेवत्वं दुर्धार्यमकृतात्मभिः । आत्मसंस्कारसंपन्नो राजा भवितुमर्हति NītiSā. 4.4; 5.53; 5.57; अकृतात्मानः असंस्कृतात्मानः तपसा इन्द्रियजयेन च दुश्चरितात् अनुपरताः अशान्तदर्पाः GītāBh. (S'aṅ.) 440.3 (*on* 15.11); अकृतात्मभिः शास्त्रेण गुरूपासनया सहजेन वा विनयेन येऽनभिविनीतास्तैः ManuBh. ii. 9.4 (*on* 7.28); नेदं ज्ञानं त्वया वाच्यं निःशेषेणाकृतात्मनः ParaS. 31.1; जग्राह नियमान्घोरान् दुष्करानकृतात्मनाम् SkandP. iv. 11.133; i(2). 46.43; यैः कोपितं ब्रह्मकुलं राजन्यैरकृतात्मभिः BhāgP. i. 7.48; ते मूर्खा ह्यकृतात्मानः पुत्रशोकादिविह्वलाः । रुदन्ति बहुलालापैर्न कृष्णाक्षरकीर्तने PadmP. i. 50.32; ii. 123.41; कामक्रोधसमाकुलाम् । प्रतरध्वं नदीं बुद्ध्वा दुस्तरामकृतात्मभिः BrahmP. 237.28; यतमाना अप्यकृतात्मानो मत्प्रपत्तिविरहिणस्तत एवासंस्कृतमनसः GītāBh.(Rā.) 602.18 (*on* 15.11); ततोऽकृतात्मा कैवर्तकुल एवात्र स द्विजः । अभ्यजायत KathāSaSāg. vi. 1.129; अकृतात्मभिरसंस्कृतमनोभिः ManvaVi. 737.4 (*on* 6.73); अतस्तु विपरीतस्य नृपतेरकृतात्मनः । संक्षिप्यते यशो लोके SūktiRa. 156.63; कस्तस्य विश्वसेत् प्राज्ञो दुर्मतेरकृतात्मनः Subhāṣi. 2736; **2** who has not realised (the nature of) the self, without spiritual knowledge; नाव्रतो नाकृतात्मा च नाशुचिः⋯स्नाति तीर्थेषु MahāBhā. iii. 83.92= PadmP. i. 39.101; MahāBhā iii. 90.11; प्राप्तुं न शक्यो यः⋯नरैः⋯अकृतात्मभिः MahāBhā. iii. 187.24; मामेष वरदो राम ब्रह्मलोकं निनीषति ।⋯दुष्प्रापमकृतात्मभिः Rāmā. iii. 4.24; परं हि यस्य वा भावो भोगव्र(? वृ)न्दस्य पौष्कर । भोगाशिफलनिष्ठस्य प्रथमं चाकृतात्मनः । न पुनर्मोक्षनिष्ठस्य कर्मणश्शाश्वतस्य च PauṣkS. 32.134; कृतात्मा वाकृतात्मा वा यत्र विज्ञायते नरः । स्वर्गमार्गप्रदं नाम तीर्थं सद्योवरप्रदम् VāyuP. ii. 15.60; BrahmāṇḍP. ii. 13.61; i. 27.56; (नारकाः) एवं बहुविधैर्दण्डैः खण्डयन्त्यकृतात्मनः VarāṅgaC. 5.58; दिष्ट्या मे भगवान् दृष्टो दुर्दर्शो योऽकृतात्मनाम् BhāgP. iii. 22.6; iv. 17.32; viii. 12.39; xi. 3.17; दुर्ज्ञेयमकृतात्मभिः । उपासते त्वां भगवन्⋯ब्राह्मणाः BhāgP. xi. 16.2; उच्चावचेषु भूतेषु दुर्ज्ञेयमकृतात्मभिः । ज्ञानयोगेन संपश्येद् गतिमस्यान्तराम(? त्म)नः ViṣṇuDhaP. ii. 131.40; सत्सङ्गः परमो ब्रह्मन् न लभ्येताकृतात्मना BṛNāraP. 4.35; एतत् पवित्रं पूज्यं च न वाच्यमकृतात्मनाम् NaraP. 68.7; न ह्यात्मा शक्यते द्रष्टुमिन्द्रियैः कामगोचरैः । प्रवर्तमानैरनेकैर्दुर्धरैरकृतात्मभिः BrahmP. 236.79; ततो द्रक्ष्यथ देवेशं दुर्दर्शमकृतात्मभिः LiṅgaP. i. 31.20; वन्दामहे सदा देवीम्⋯दुरापामकृतात्मभिः DevīBhāP. vi. 5.23; vi. 18.36; एवमेतत्पदं प्राप्य दुष्प्राप्यमकृतात्मनाम् MāliniT. 10.12; 18.1; कथंचिद् दृष्टवान् ब्रह्मा दुर्दर्शमकृतात्मनाम् AdhyāRā. i. 2.9; BṛParāSm. 2.150; **3** whose form has not been fashioned महांश्च सोऽप्यनन्तेन ह्यव्यक्तेन तु धार्यते । अनन्तमपरिव्यक्तं दशधा सूक्ष्ममेव च । अनन्तमकृतात्मानमनादिनिधनं च यत् BrahmāṇḍP. i. 19.165.

**अकृतात्मवीर्यतस्** (akṛtātmavīrya-tas) *adv.* due to (one's) not showing one's valour कृतपराधादकृतात्मवीर्यतः⋯कुलाधिपः VarāṅgaC. 21.63.

**अकृतात्मीयकार्य** (akṛtātmīyakārya) *adj.* which has not produced its effect वस्तुनो वा स्वभावेन शक्तेर्वा हानिहेतुना । अकृतात्मीयकार्यः स्यादहेतुः SaraKaṇṭhā. 331.12.

**अकृतादर** (akṛtādara) *adj.* [*f.* -ā] **A** having no interest, disinterested इत्यसत्तर्कसन्दर्भे स्वतन्त्रेऽप्यकृतादरः VakroJī. 1.11; राजा⋯किञ्चित्प्राकृतेऽकृतादरः KumāCaSam. 103.24; मलयजादिविलेपननीरुच्छ(? ढ्छ)यनमाल्यविधावकृतादराः (युवतयः) NemiC. 8.52; **B** showing no respect to प्रायः पुमांसोऽभिनवार्थलाभे गुणोज्ज्वलेष्वप्यकृतादराः स्युः ChandaśCū. ii. 156.6; **C** merciless ततो राजपुरीदेशमशेषमावृणोद्वलैः⋯पाषाणैरकृतादरैः (होसमलेकः) RājTa. (Prā.) 440.

**अकृतादेश** (akṛtādeśa) *adj.* which has not been substituted आदेशनमादिष्टं तदकृतं यस्य सोऽनादिष्टः अकृतादेशादचः पूर्वस्येत्यर्थः PadMañ. *on* KāśiVṛ. *on* P. i. 1.57.

**अकृताधान** (akṛtādhāna) *adj.* who has not set up the sacred fires केचित्पितर्यप्यकृताधाने विधिमिच्छन्ति ManuBh. i. 281.13 (*on* 3.161); तत्र त्वपत्नीकस्यानधीतवेदस्याकृताधानस्य च वचनादधिकार इत्यविरोधः SmṛtiCan. i. 73.12; एवमाधानाधिकारिण्यप्यकृताधाने ज्येष्ठे विद्यमाने CaturCin. iii(1). 374.20; ज्येष्ठेऽकृताधाने कृताधानः कनिष्ठः पर्याधाता VīraMi. (Āhnika.) 503.7; इदं चाधानं ज्येष्ठेऽकृताधाने न कार्यम् NirṇaSi. 236.30; अकृताधानादिके अधिकारिणि पितरि जीवति⋯निषिद्धाः (आधानाग्निहोत्र°⋯मन्त्रदीक्षास्वीकाराः) BālamBha. i. 269.7 (*on* 1.89)

**अकृताध्यापन** (akṛtādhyāpana) *adj.* who has not taught यस्याशौचं विधीयते तं प्रति अकृताध्यापने आचार्यपुत्रे मृतेऽहोरात्रमशौचम् HārLa. 76.16.

**अकृतानुज्ञ** (akṛtānujña) *adj.* who has not been permitted तदा विविशतुः काश्यां सूर्याचन्द्रमसावपि । न गणैरकृतानुज्ञौ SkandP. iv. 85.48.

**अकृतान्न** (akṛtānna) *n.* uncooked food अकृतान्नश्राद्धे चैवम् GautDS. ii. 6.32; ii. 7.48; अन्येभ्यो हि बहिर्वेद्यां नाकृतान्नं विधीयते MahāBhā. xii. 159.3; कृतान्नं चाकृतान्नेन तिला धान्येन तत्समाः (निमातव्याः) ManuSm. 10.94; BālamBha. i. 373.20 (*on* i. 119); अकृतान्नं (हृत्वा) शल्यकः (भवति) ViṣṇuSm. 44.34; कृतान्नं चाकृतान्नेन परिवर्त्य विभज्यते BṛhaspaSm. 203.51; सिद्धमन्नमकृतान्नेन तण्डुलादिना परिवर्तनीयमिति Mitā. 358.16 (*on* 3.39); अकृतान्नं तु व्रीहियवादिकं हृत्वा शल्यकसंज्ञो जायते ManvaMu. 513.7 (*on* 12.65); भैक्ष्यं कृताकृतान्नादिभेदेन द्विप्रकारम् BālaKrī. ii. 19.7 (*on* 3.42) दूराध्वधाम(? व)नात्खिन्नो द्विजालाभे तु शूद्रतः । अकृतान्नं च यत्किंचिद् गृह्णीयादात्मवृत्तये VṛGautaSm. 595.21(14)

**अकृतान्नश्राद्धिक** (akṛtānna-śrāddhika) *n.* offering of uncooked food for the dead अकृतान्नश्राद्धिकसंयोगेऽपि GautDS. ii. 7.48 (comm. भोजनासंभवे यदकृतान्नं पितृभ्यो दीयते तदकृतान्नश्राद्धिकम्)

**अकृतान्वाधान** (akṛtānvādhāna) *adj.* who has not performed the *anvādhāna* rite अकृतान्वाधानेनानग्निना च पञ्चदश्यामपि पितृसेवितं मांसम्⋯ भक्षयितव्यम् SmṛtiCan. v. 410.15.

**अकृतापकृति** (akṛtāpakṛti) *adj.* who has not done any harm (खड्गम्) न प्रहर्तुं क्षमस्त्वयि । अकृतापकृतौ SamarāSaṁ. 4.143.

**अकृतापराध** (akṛtāparādha) *adj.* who has not committed any offence or a sinful act अकृतापराधोऽपि भृकुटिबन्धकुटिल(? लि)तकटाक्षमायताक्षीभिरैक्ष्यत AvantiKa. 37.8; अकृतापराधो जन्मान्तरदोषेण निगृह्यते ManuBh. ii. 127.8 (*on* 8.116)

**अकृतापशब्द** (akṛtāpaśabda) *adj.* who does not use an ungrammatical form (i. e. proficient) (नलः) अकृतापशब्दः शब्दशास्त्रे NalaCam. 4.13(15)

**अकृतापुत्र** (akṛtā-putra) *m.* son of an unappointed daughter i. e. who has not been designated as 'putrikā' अकृतापुत्रस्य पुत्रपत्नीदुहितृभाव एव ManvaVi. 1185.18 (*on* 9.136)

**अकृताप्रिय** (akṛtāpriya) *adj.* who has not done anything unpleasant सततावियुक्तमकृताप्रियं प्रियं वृषसेनवत्सल विहाय यासि माम् VeṇīSaṁ. 5.161.

**अकृताभिनय** (akṛtābhinaya) *adj.* who has not gesticulated अकृताभिनयत्वेष्टायाः प्रामाण्यसंभावनैव नास्ति Kiraṇā. 321.14.

**अकृताभ्यागम** (akṛtābhyāgama) *m.* (the fault of) experiencing (the result) of acts not done by oneself, unmerited requital यथोक्तहेतुत्वात्पारतन्त्र्यादकृताभ्यागमाच्च न मनसः (चैतन्यम्) NyāySū.iii. 2.38; यस्य तु सत्त्वोत्पादः सत्त्वनिरोधः प्रेत्यभावः तस्य कृतहानमकृताभ्यागमश्च दोषः NyāyBh. 245.9 (*on* iv. 1.10); 161.6 (*on* iii. 1.4); अकृताभ्यागमोऽपि स्याद्यदि येन विना क्वचित् । जायेत हेतुना कार्यम् TattvSaṁ. 539; अकृताभ्यागमश्चैवं जीवस्य प्रसज्येत BrahmSūBh. (S'aṅ.) 475.16 (*on* ii. 3.41); ChāndoUBh. 59.5 (*on* i. 8.6); अकृताभ्यागमो दोषः कृतनाशश्च ते भवेत् BṛĀraUBhVā. iv. 3.688; i. 4.1787; ii. 5.359; v. 1.76; vi. 2.134; न पितॄणां न तावन्मृतानामन्यकृतेन प्रतिषेधातिक्रमेण दोषसम्बन्धो युक्तः अकृताभ्यागमादिदोषापत्तेः ManuBh. i. 265.17 (*on* 3.123); एकस्मिन् किञ्चित्पुण्यापुण्यात्मकं कर्म कृत्वा प्रलये नष्टे तदन्यः कश्चिज्जीवः प्राप्नोतीत्यकृताभ्यागमः BrahmSūBh.(S'rī.) ii. 116.2 (*on* ii. 2.39); तथा च प्राणिनां कृतहानमकृताभ्यागमश्च स्यात् Kiraṇā. 95.17; तथानभ्युपगमेऽकृताभ्यागमः कृतविप्रणाशप्रसङ्गश्च VedāntTaSā. 45.7; एकान्तनाशिनि (आत्मनि) च कृतनाशाकृताभ्यागमौ स्याताम् PramāMī. 32.3 (*on* i. 1.42); PañcDa. 6.85; न हि चैत्रेण कृतस्य पापस्य फलं मैत्रो भुङ्क्ते । ततश्च कृतहानिरकृताभ्यागमश्च स्यात् Upask. 142.9 (*on* iii. 1.4); 173.5 (*on* iii. 2.4); 259.4 (*on* vi. 1.5); YuktiSneha. 132.24 (*on* i. 1.5); (आत्मनः) मध्यमत्वे त्वनित्यतापत्तिः । कृतहान्यकृताभ्यागमश्चेति GoviBh. 158.2 (*on* ii. 3.30); 137.1 (*on* ii. 2.35)

**अकृताभ्यागमदोष** (akṛtābhyāgama-doṣa) *m.* the fault of fruition of an act which one has not done अन्यकृतात्कर्मणोऽन्यस्य फलेऽभ्युपगम्यमानेऽकृताभ्यागमदोषापत्तिः ManuBh. i. 94.12 (*on* 2.37); यस्मिन् पक्षे कृतहानमकृताभ्यागमदोषो नास्ति स पक्षोऽभ्युपेतव्यः TātpaṬ.(Vā.) 509.10 (*on* iii. 1.6)

**अकृताभ्यागमप्रसङ्ग** (akṛtābhyāgama-prasaṅga) *m.* the contingency of experiencing the result of acts not done by oneself (अणुश्यामतानित्यत्वदेतत्स्यात्) नाकृताभ्यागमप्रसङ्गात् NyāySū. iii. 2.72; अणुश्यामतादृष्टान्तेनाकर्मनिमित्तां शरीरोत्पत्तिं समादधानस्याकृताभ्यागमप्रसङ्गः NyāyBh. 239.10 (*on* iii. 2.72); संसारस्य अनादित्वाभावेन⋯अकृताभ्यागमप्रसङ्गश्च स्यात् LalitāTriBh. 308.8 (*on* 32); अणिमादिकमैश्वर्यं कार्यरूपं विनैव कर्मणेत्यकृताभ्यागमप्रसङ्गः TātpaṬ.(Vā.)

595. 5 (*on* iv. 1. 21); अकृताभ्यागमप्रसङ्गं वारयति VedāntKa. 247. 25 (*on* ii. 1. 34); उपाधेः परिच्छिन्नत्वे…कृतनाशाकृताभ्यागमप्रसङ्गः VedāntRaMañ. 1. 1 (7. 16); कृतनाशाकृताभ्यागमप्रसङ्गेन जीवोत्पत्त्यसंभवात् BrahmSūBh.(Rā.) 115. 10 (*on* ii. 2. 39); मध्यमपरिमाणस्य सावयवत्वेन देहादिवदनित्यत्वे कृतहानाकृताभ्यागमप्रसङ्गात् SarvaDaSaṁ. 16. 208; 4. 28; भगवानस्य प्रारब्धमेतत्सम्बन्धिगतं कृत्वा तस्य तेन भोगं कारयति ।…न च तयोरमूर्तत्वेनाकृताभ्यागमप्रसङ्गेन च नैवं वक्तुमुचितमिति वाच्यम् AṇuBh. 314. 13 (*on* iv. 1. 17); अहंकारव्यक्तिभेदात् कृतहानाकृताभ्यागमप्रसङ्गः Nyāyāmṛ. 376B. 9; कृतहानाकृताभ्यागमप्रसङ्गाच्चेति हिशब्दार्थः S'ivārkaMaDī. ii. 47. 14 (*on* ii. 1. 34); इह परत्र च जीवभावेनावच्छेद्यचैतन्यप्रदेशस्य भेदेन कृतहानाकृताभ्यागमप्रसङ्गात् SiddhāLeSaṁ. 70. 1; (पापपुण्ययोः) ननु तयोरमूर्तत्वादकृताभ्यागमप्रसङ्गाच्च नैतद्युक्तमिति चेन्न GoviBh. 297. 1 (*on* iv. 1. 17)

**अकृताभ्यागमप्रसञ्जन** (akṛtābhyāgama-prasañjana) *n.* the contingency of experiencing the fruit of acts not done ननु पापिनां चन्द्रलोकगमनेन तत्र भोगः स्यात्ततश्चाकृताभ्यागमप्रसञ्जनम् VedāntKa. 352. 21 (*on* iii. 1. 12)

**अकृताभ्यागमभय** (akṛtābhyāgama-bhaya) *n.* fear of experiencing the result of the act which is not done by oneself अकृताभ्यागमभयं स्यात्कर्माकृतकं यदि । अब्रह्मचर्यवासश्च दोषस्तत्र प्रसज्यते MūlaMāKā. 17. 23.

**अकृताभ्यागमापात** (akṛtābhyāgamāpāta) *m.* contingency of experiencing the result of acts not done by oneself 'शास्त्रफलं प्रयोक्तरी' ति न्यायेन यस्मिन् साधनकृतिस्तस्यैव फलभाक्त्वात् अन्यथा कृतहानाकृताभ्यागमापातात् Nyāyāmṛ. 390A. 7.

**अकृताम्भस्** (akṛtāmbhas) *adj.* with the use of pure or unstored water देवान् दैवेन तीर्थेन तर्पयेदकृताम्भसा S'ivU. 5. 49.

**अकृतायनदृश्** (akṛtāyanadṛś) *adj.* not applied to *āyanadṛkkarman* (i. e. the correction for finding the point of the ecliptic on the hour-circle passing through a planet) निशीष्टकालिकः पूर्वमकृतायनदृग्ग्रहः । स्थाप्यः SiddhāTaVi. 359. 2.

**अकृतारम्भ** (akṛtārambha) *m.* commencement of what has not been begun ते (अमात्याः)…अकृतारम्भमारब्धानुष्ठानमनुष्ठितविशेषं नियोगसंपदं च कर्मणां कुर्युः ArthS'ā. i. 76. 5 (1. 15); NītiVā. 10. 24; अकृतारम्भः, कृतानुष्ठानं, अनुष्ठितविशेषणं, कर्मफलसंग्रहः, तथा सामभेददानदण्डमेतदष्टविधं कर्म ManuBh. ii. 44. 25 (*on* 7. 154); VīraMi. (Rājanīti.) 318. 1.

**अकृतारिकुलक्षोद** (akṛtārikulakṣoda) *adj.* which has not crushed the group of enemies अकृतारिकुलक्षोभा (v. l. °क्षोदा) लम्बना एव बाहवः HarVi. 43. 311.

**अकृतारिकुलक्षोभ** (akṛtārikulakṣobha) *adj.* which has not agitated the group of enemies अकृतारिकुलक्षोभा लम्बना एव बाहवः HarVi. 43. 311.

**अकृतारिपरित्राण** (akṛtāriparitrāṇa) *adj.* which has not spared the enemies अकृतारिपरित्राणं कृपाणं कम्पयन् करे । मूकः…स्वं चख्यौ संख्यकाङ्क्षिणम् Surath. 9. 14.

[1]**अकृतार्घ** (akṛtārgha) *adj.* to whom *argha* (i. e. reception due to a priest) has not been offered, PāraGS. i. 3. 31 (v. l. for अकृतार्घ्य in Stenzler's edition)

[2]**अकृतार्घ** (akṛtārgha) *adj.* of which no value can be estimated, priceless भौजङ्गं नृपतीनां धृतमकृतार्घं विजयदं च (मौक्तिकम्) BṛSaṁ. 81. 27.

**अकृतार्घ्य** (akṛtārghya) *adj.* not received or welcomed by *arghya* (or *argha*) ceremony यद्यप्यसकृत्संवत्सरस्य सोमेन यजेत कृतार्घ्या एवैनं याजयेयुर्नाकृतार्घ्याः S'āṅkhāGS. ii. 16. 10; KausīGS. iii. 10. 34; PāraGS. i. 3. 31.

**अकृतार्चन** (akṛtārcana) *n.* worship which is not offered प्रोक्षितेऽप्रोक्षिते च कृतार्चनेऽकृतार्चने वा ManuBh. i. 433. 13 (*on* 5. 27)

**अकृतार्थ** (a-kṛtārtha) *adj.* **1** whose desire or object is not fulfilled, unsuccessful तौ समीक्ष्य तु वित्रस्तावकृतार्थौ प्रधावितौ MahāBhā. 1. 173. 9; v. 105. 6; v. 113. 10; सुग्रीवः…कृतार्थो वाकृतार्थो वा कृत्यं तव करिष्यति Rāmā. iii. 68. 15; न चाकृतार्थः प्रविशेयमालयम् BuddhaC. 9. 79; 12. 12; Saund. 2. 8; 18. 41; सोऽकृतार्थो ह्यबुद्धे च जातो ध्यानार्थमुद्यतः।…परां बोधिमवाप्नुते MaYānaSū. 70. 3 (11. 59); अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते S'āk. 2. 1; कश्चित्…°ध्यानादिभिश्चोपक्रम्याकृतार्थो गत एवायं कालदष्टः DaśKuC. 49. 20; AvantiKa. 199.15; तमेवं विकारानृतब्रह्मविज्ञानेन परितुष्टमकृतार्थम्…शिष्यम्…आह…सनत्कुमारः ChāndoUBh. 453. 5 (*on* vii. 16. 1); द्विविदो दर्दुरप्रस्थादकृतार्थः समाययौ RāmC. 10. 17; MṛgendraT. i. 11. 2; S'lokaVār. 1. 109 (37. 2); अकृतार्थ एष व्रजति राजपुत्रः TilaMañ. 282. 4; द्विजिह्वाः…ययुर्विसृष्टाः प्रभुणाकृतार्थाः NaraP. 42. 34; BhāgP. ix. 9. 27; VāmaP. 63. 55; अकृतार्थौ विधायैव शिवदक्षौ कृतागसौ BṛDharmaP. i. 40. 15; SaurP. 25. 6; अकृतार्थस्य यत्…निवर्तनं तत्…अदृष्टार्थम् NyāyRa. 36. 21 (*on* 1. 108); RāmāMañ. 284. 13; KathāSaSāg. xviii. 4. 249; वत्सा अकृतार्था गता हहा TriṣaS'aPuC. ii. 6. 200; iv. 7. 56; सः…ब्राह्मणः…यः…अकृतार्थः सन् कर्मणि प्रवर्तते SanatBh. 261. 15 (*on* 2. 40); PrabhāC. 199. 5; आप्राणमकृतार्थस्य बह्वाशस्य कुतः सुखम् PuruṣPa. 185. 28; उत्तरप्रदातारः । तदसिद्धावकृतार्थं मन्यमानं स्वकीयमन्तःकरणं वा TantrRaha. 59. 13; अकृतार्थस्य स्मृत्या निवर्तयितुमशक्यत्वात् YuktiSneha. 13. 35 (*on* i. 1. 1); अकृतार्थो रघुपतिः ।…शत्रोर्हृदयम्…विदलयति AdbhuDa. 9. 14; **2** who has not achieved the aim of life अकृतार्थः पतत्यनर्थे खलु जीवलोकः BuddhaC. 7. 24; 6. 52; अकृतार्थाः…यान्ति किञ्चित्स्थानमशाश्वतम् JayāS. 24. 78; अकृतार्थाश्च ते सर्वे विनंक्ष्यन्त्यचिरादिव BrahmāṇḍP. ii. 51. 29; iii. 2. 217; अकृतार्था विषीदन्तः परलोकमुपास्महे Bhaṭṭi. 7. 91; सर्वं च अन्यद्वेद्यमधिगम्यापि अकृतार्थ एव भवति ChāndoUBh. 337. 13 (*on* vi. 1. 3); 398. 15 (*on* vi. 13. 6); 416. 2 (*on* vii. 1. 1); S'atS'lo. 31; अकृतार्थोऽथवा पतेत् BṛĀraUBhVā. (Sambandha) 837; iii. 5. 195; किं त्वेवमकृतार्थोऽस्मि BhaviP. 90A. 18 (i. 48. 7); मृत्युभीरकृतार्थानाम् MalliC. 6. 221; CaturCin. iii(1). 364. 20; अकृतार्थः सन्…कृतार्थमात्मानं मन्यते VīraMi. 883. 4 (*on* 3. 152); अप्रार्थनीयमकृतार्थैः…वलभेदनपुटभेदनम् ĀnandRa. 1. 8(30); अकृतार्थस्तु यो मृत्युं प्राप्तः खरसमो हि सः VedavyāSm. 4. 26; अकृतार्थस्य मृत्युभयम् KathāK. 152. 26; **3** which has not served its purpose यावत्…प्रकरणी चाकृतार्थस्तावद्यत्सिद्ध्यर्थं कल्प्यते तत्सर्वं वैदिकं भवति TantrVā. 58. 14 (*on* i. 2. 42); 619. 4 (*on* ii. 3. 24); ṬupṬ. 9. 16 (*on* iv. 1. 18); ManuBh. i. 108. 23 (*on* 2. 63); इदं तन्त्रं जगत्यभूत् । अकृतार्थम् ParaS. 1. 33; यावद्धयकृतार्थदशब्दस्तावद्बोधोऽवगम्यते Kāśi. iii. 185. 14 (*on* 5(7). 79); प्राक् च वृत्तेरकृतार्थस्य निवृत्तौ…वृत्तिरेव न स्यात् SaraKaṇṭhā. 650. 9; न ह्यकृतार्थस्य प्रतिपत्तिरपेक्षिता TantrRa. 102. 15; 65. 16; NyāyRa. 470. 19 (*on* 5(7). 78); S'āstrDī. 282. 14 (*on* iii. 5. 1)

**अकृतार्थक** (akṛtārtha-ka) *adj.* who has not accomplished one's object (of life) ज्ञात्वा जीवितमानाद्यं त्यक्त्वा सर्वपरिग्रहम् । स्वहिते वर्तते यो न स नश्यत्यकृतार्थकः PadmP.(Ra.) 111. 16; रे धातर्न दया तेऽस्ति बालवच्चरितं तव । युनङ्क्षि स्नेहभावेन वियुनङ्क्ष्यकृतार्थकम् GaṇeP. i. 25. 10.

**अकृतार्थता** (akṛtārtha-tā) *f.* **A** absence of the accomplishment of the goal भ्रष्टस्य तस्माच्च गुणादतो मे ध्यानानि लब्ध्वाप्यकृतार्थतैव BuddhaC. 1. 77; **B** the state of not having received the fruit (of the act) अतः कृताधिकारोऽपि यो विद्यादकृतार्थताम् BṛĀraUBhVā. (Sambandha) 539; **C** absence of satisfaction तैरथादृश्यत पुरः परिच्छदपरम्परा । बत ब्रुवाणा मौनेन प्रभूणामकृतार्थताम् RāmC. 10. 1; शयनोपचारिकाः षोडश । …समानार्थताकृतार्थता JayaMa. 32. 4 (*on* 1. 3); **D** purposelessness सर्वभावशिवत्वेन नास्तिता बन्धमोक्षयोः । …ततश्च शिवधर्मादेर्वेदादेरकृतार्थता S'ivDṛ. 3. 29.

**अकृतार्थत्व** (akṛtārtha-tva) *n.* **A** the state of not having served (its) purpose तस्मादकृतार्थत्वाद्वृद्धिशास्त्रं व्याप्रियत इति भवत्येव वृद्धिः Nyās. iii. 691. 22 (*on* vii. 2. 3); (विष्णोः) आवाहनं त्वकृतार्थत्वात्कर्तव्यम् S'āstrDī. 649. 8 (*on* x. 1. 1); अकृतार्थत्वं च द्रव्यस्यातिशयार्थमुक्तम् TantrRa. 65. 14; 130. 14; न चाकृतार्थत्वात् प्रतिपत्त्यनर्हत्वम् MīmāKau. i. 273. 5 (*on* i. 4. 23); अकृतार्थत्वरूपसामग्रीहीनत्वाल्लिङ्गस्याप्रवृत्तियुक्ता MayūMāli. 503. 19 (*on* vi. 5. 19); सन्नित्यादिप्रथमानिर्देशः षष्ठीप्रकल्पने सति निरर्थकोऽकृतार्थत्वात् स्यात् Pradī. iii. 9A. 33 (*on* P. iii. 1. 2); जातौ तु पदार्थे सकृदेव लक्षणप्रवृत्तिर्न पुनः पुनस्तेन सकृत्प्रवृत्तस्य द्वित्वस्यार्क इत्यादौ चरितार्थत्वाद् मद्रह्रदादावकृतार्थत्वेऽपि नानर्थक्यमिति Prasā. i. 14. 10; **B** the state of not having achieved the (desired) goal शिष्यस्य हि अकृतार्थत्वात्प्रार्थनोपपद्यते TaiUBh. 193. 10 (*on* 1. 3); द्वितीयवरप्राप्त्याप्यकृतार्थत्वं तृतीयवरगोचरमात्मज्ञानमन्तरेणेत्याख्यायिकया प्रपञ्चयति KāṭhUBh. 114. 4 (*on* 1. 20); **C** the state of not having fulfilled the (assigned) task ते नूनमकृतार्थत्वान्नोत्सहन्ते निवर्तितुम् RāmC. 9. 90; **D** unsuccessfulness, the state of being unsuccessful तद्यथा - मिलति न खलु यस्या इति खलुशब्दः प्रयासस्याकृतार्थत्वं द्योतयति AbhinBhā. ii. 232. 10 (*on* 14. 30); **E** inutility, uselessness अहो ममाकृतार्थत्वमहो मे दुःखहेतुता SamarāSaṁ. 9. 399; **F** purposelessness, the state of being purposeless केचन…स्वर्गकामवाक्ययोरकृतार्थत्वं मन्यमानास्तयोरङ्गसम्बन्धबोधनार्थत्वमित्याहुः VidhiRa. 7 (36. 20)

**अकृतार्थदर्शन** (akṛtārtha-darśana) *n.* the sight of something which has not accomplished its purpose अकृतार्थदर्शनोद्भवोऽर्थविशेषो विस्मयः NāṭaLaRaK. 3111.

**अकृतार्थबुद्धि** (akṛtārtha-buddhi) *f.* the thought of being unsuccessful, the thought of (oneself) not having accomplished one's aim सोऽहमनात्मवित्त्वात्…अकृतार्थबुद्ध्या संतप्ये सर्वदा ChandoUBh. 419. 11 (*on* vii. 1. 3); यत्तरति शोकं मनस्तापमकृतार्थबुद्धिमात्मवित् VedāntKa. 98. 13 (*on* i. 1. 4)

**अकृतार्थबुद्धिता** (akṛtārthabuddhi-tā) *f.* the state of having the notion of oneself not having achieved the aim तरति अतिक्रामति शोकं मनस्तापमकृतार्थबुद्धितामात्मवित् ChāndoUBh. 419. 9 (*on* vii. 1. 3)

**अकृतार्थवत्** ( akṛtārtha-vat ) *ind.* like one whose purpose or object (in life) has not yet been accomplished क्षुधार्तो जगृहे विप्रं तत्पत्न्याहाकृतार्थवत् BhāgP. ix. 9. 26.

**अकृतार्थावबोध** ( akṛtārthāvabodha ) *adj.* one who has not understood the meaning (of the Vedas) यथा वेदमधीत्य स्नायात् इत्यध्ययनानन्तरमकृतार्थावबोधस्य स्नानसरणम् ManuBh. i. 492. 19 (*on* 5. 155)

**अकृतार्थीकृत** ( akṛtārthī-kṛta ) *adj.* rendered futile अस्य चक्रस्य यथाशा तदेतदपि मुञ्च भोः । अकृतार्थीकृतेऽत्रापि गच्छेर्युक्तस्तथाप्यसि TriṣaS'aPuC. iv. 2. 263.

**अकृतार्हणादिक** ( akṛtārhaṇādika ) *adj.* who has not offered (due) honour etc. तं वीक्ष्य तूष्णीमकृतार्हणादिकं रहस्युपासीनमृषिश्चुकोप BhāgP. viii. 4. 9.

**अकृतालय** ( akṛtālaya ) *adj.* (installation) in which a temple is not built कृतालयां परामाहुः प्रतिष्ठामकृतालयात् S'ivaP. vii(2). 36. 47 (593B. 7)

**अकृतावच्छेद** ( akṛtāvaccheda ) *adj.* [*f.* -ā] not delimited सा हि तस्यावस्था देहेन्द्रियाद्युपाधिभिरकृतावच्छेदा बृहती ब्रह्मेति गीयते BrahmSi. 15. 20.

**अकृतावधान** ( akṛtāvadhāna ) *adj.* who has not paid attention to, inattentive राजा…बहुवितर्कव्यग्रतया मुहूर्तमकृतावधानः…आत्मानमेकत्र महावने पतितं व्रजन्तमद्राक्षीत् UdaySuKa. 128. 3.

**अकृतावधि** ( akṛtāvadhi ) *adj.* which has no fixed time limit आह बृहस्पतिः, आधिः…चतुर्विधः…याद्दृच्छिकः सावधिश्च लेखारूढोऽथ साक्षिमान् ।…याद्दृच्छिकः, अकृतावधिः VīraMi. (Vyavahāra.) 234. 29.

**अकृतावरण** ( akṛtāvaraṇa ) who is not covered (with a warm cloth) गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः । अकृतावरण इत्यर्थः Prasā. ii. 655. 16.

**अकृतावसथ्य** ( akṛtāvasathya ) *adj.* who has not installed the (sacred) domestic fire अकृतावसथ्योऽप्यनाहिताग्निर्भवत्येव VīraMi. (Saṁskāra.) 907. 7.

**अकृतावेक्षण** ( akṛtāvekṣaṇa ) *n.* observation or idea of what remains undone प्रत्यक्षपरोक्षानुमेया हि राजवृत्तिः । स्वयं दृष्टं प्रत्यक्षं परोपदिष्टं परोक्षं कर्मसु कृतेनाकृतावेक्षणमनुमेयम् ArthS'ā. i. 46. 6 (1. 9); NītiVā. 15. 9.

**अकृताशन** ( akṛtāśana ) *adj.* who has not taken food (i. e. observing a fast) तेऽपि चैत्रस्य कृष्णादौ स्नातास्तत्राकृताशनाः । भवन्ति नीरुजः सद्यश्चित्रासंस्थे निशाकरे SkandP. vi. 11. 19; vi. 134. 30; vii(1). 186. 9.

**अकृताशिस्** ( akṛtāśis ) not blessed अहं मन्ये आत्मानमकृताशिषम् BhāgP. x. 82. 19.

**अकृताश्रम** ( akṛtāśrama ) *adj.* who is not initiated in the stages of life, who has not taken up the duties of life अहो बत सुकष्टं वै योऽहं बालोऽकृताश्रमः । …यास्यामि निधनं किल BrahmP. 35. 38.

**अकृताश्व** ( akṛtāśva ) *m.* name of a son of Saṁhatāśva कृशाश्वश्चाकृताश्वश्च संहताश्वसुतौ BrahmāṇḍP. ii. 63. 65; अकृताश्वो रणाश्वश्च संहताश्वसुतौ MatsyaP. 12. 34 = PadmP. v. 8. 138.

**अकृतास्त्र** ( akṛtāstra ) *adj.* A not trained in the use of missiles, not skilled in weapons अकृतास्त्रः कृतास्त्रम्…यः पार्थं योद्धुमिच्छेत्स दुर्मतिः MahāBhā iv. 44. 16; v. 149. 34; viii. 24. 147; xii. 2. 11; कृतास्त्रमकृतास्त्रं वा नैनं शक्ष्यन्ति राक्षसाः Rāmā. i. 20. 9 = YogVā. i. 9. 13; आधातुं श्रेयान् । …कृतास्त्रादकृतास्त्रः प्रहर्तव्यसम्पल्लोपात् ArthS'ā. ii. 351. 6 (7. 17); ii. 352. 6 (7. 17); परमनुगृहीता वयमेवम्…किं पुनरकृतास्त्रः क्षीरकण्ठो वत्सोऽयमिति मुग्धोऽस्मि AnargharRā. 1. 40(2); B not trained, unskilled ये हि किलाभ्युपयन्ति च विपरीतख्यातिवादमकृतास्त्राः प्रामाण्यं च स्वत इति च वदन्ति तेषां कुतः कौशलम् NyāyMañ. i. 161. 5.

**अकृतास्त्रक** ( akṛtāstra-ka ) *adj.* not trained in the use of missiles उत्स्मयन्निव राधेयो भीमसेनमुवाच ह…अकृतास्त्रक मा योत्सीर्बाल MahāBhā. vii. 114. 69; vii. 123. 3.

**अकृतास्थ** ( akṛtāstha ) *adj.* who has taken no care, indifferent नरपतिरकृतास्थं भल्लमादाय दोर्भ्यां द्रुतमुपरि विभिन्नं कीलयामास भूम्याम् Rāvaṇā. 3. 52.

**अकृताहन्** ( akṛtāhan ) *adj.* who has not ushered in the day मरुत्…। आदावहःस्वेष जडत्वदस्तद्रविः कृताह्ना अकृताह एव DvyāśraKā. 2. 43.

**अकृताहार** ( akṛtāhāra ) *adj.* [*f.* -ā] who is fasting or has not taken food स्वभ्यक्तमकृताहारं भिषग्बालं निरूहयेत् KāśyaS. 148B. 29; राजा तमकृताहारः…प्रसाद्य समभोजयत् BhāgP. ix. 5. 18; योजयन्नकृताहारान्…गोवृषान्…नारकास्स्मृताः S'ivaP. v. 6. 32 (412B. 8); प्राणानकृताहारा…राधाचातकी…त्यजति UjjvaNīMa. 87. 7.

**अकृताहारसंबन्ध** ( akṛtāhāra-sambandha ) *adj.* one who has not taken in food अकृताहारसंबद्धो (v. l. संबन्धः) निर्जगाम स धीरधीः BṛKathāK. 105. 278.

**अकृताहोरूपहर** ( a-kṛtāhorūpahara ) *adj.* one who does not submit what is to be submitted on a particular day अकृताहोरूपहरं मासमाकाङ्क्षेत ArthS'ā. i. 148. 6 (2. 7)

**अकृताह्निक** ( akṛtāhnika ) *adj.* who has not finished or observed his daily rites अकृताह्निकमेवैनम्…जघान…लक्ष्मणः MahāBhā. iii. 273. 17; तद्रन्धने सर्वे…अकृताह्निका एव तस्थुः CaitaCa. 232. 7 (10)

**अकृति** ( a-kṛti ) *f.* 1 non-fabrication, absence of manufacture आक्रोश इति किम् । अकृतिस्तव पटस्य CāndraVṛ. *on* i. 3. 94; KāśiVṛ. *on* P. iii. 3. 112; JaineVyā. 129. 2 (*on* ii. 3. 93); Prasā. ii. 672. 21; 2 non-observance राजसूयादिकृतावकृतौ च सममेव तेषां विज्ञानम् BrahmSūBh.(Ma.) 60B. 7 (*on* iii. 4. 9); नियमेन जपं कुर्यादकृतौ प्रत्यवायतः PañcDa. 7. 116; 3 non-activity, non-creation विपयिधर्माः…द्वेषाद्वेषौ कृत्यकृती TārkiRa. 293. 10; अपि चेष्टतदन्यहेतुधीजे जगतः कृत्यकृती न ते घटेते S'aṅkaDigVi.(M.) 15. 138.

**अकृतित्व** ( akṛti-tva ) *n.* the state of not being a squared quantity न मूलं क्षयस्यास्ति तस्याकृतित्वात् BījGa. 1. 13.

**अकृतिन्** ( a-kṛtin ) *adj.* 1 unfortunate सुक्षत्रियाणां गतिमुपगतं वत्स महमुपगतोऽप्यकृती द्रष्टुम् VeṇīSaṁ. 6. 479; वयं पुनः…सर्वथैवाकृतिनः KhaṇḍanKhā. 1037. 5; प्रियावियोगविधुरं ममेवाकृतिनस्तव । परिम्लानमभूदङ्गं केतकच्छद तत्कथम् Mukundā. 200; MahāN. 3. 90; HarṣaC. 288. 5; 2 unsuccessful किं त्वेतामकृती नाहं परिणेष्यामि ते सुताम् KathāSaSāg. viii. 6. 231; 3 nonperformer, idle कर्मणां भिन्नानां समानानाम्नामप्येकक्रियायामकृती स्यात् BālaKrī. i. 24. 2 (*on* 1. 7); नाशिष्याय कदा ब्रूयात्…। न दाम्भिकायाकृतिने ParamāKā. 126. 4.

**अकृतिबुद्धि** ( akṛti-buddhi ) *adj.* who has not cultivated his mind or understanding, iguorant म्लेच्छात्र( ? न )कृति( ? त )बुद्धींश्च न सेवेत कदाचन BhelaS. 5. 19 (1. 5)

**अकृतिसाध्य** ( a-kṛtisādhya ) *adj.* which is not to be produced by effort ज्ञानेच्छयोः…अकृतिसाध्ययोः अनारभ्यत्वात् MīmāKau. ii. 134. 1 (*on* iii. 1. 1)

**अकृतापकृति** ( akṛtāpakṛti ) *adj.* who has not done any harm to anybody, innocent मम निःक्षीणभाग्याया दष्टः फणभृता सुतः । अकृतो( ? ता )पकृतिर्दैवात् MalliC. 1. 478.

**अकृतोचितप्रतिपत्ति** ( akṛtocitapratipatti ) *adj.* who has not taken proper action तस्यासंभावयन्नागमनमुपजातभ्रमः स्तम्भित इवाकृतोचितप्रतिपत्तिर्मुहूर्तमवातिष्ठत् ( गन्धर्वकः ) TilaMañ. 223. 4.

**अकृतोत्तमकर्मन्** ( akṛtottamakarman ) *adj.* who has not done any good deed अकृतोत्तमकर्माणो यान्ति मृत्युं निरर्थकाः PadmP.(Ra.) 7. 321.

**अकृतोत्पत्तिप्रतिबन्ध** ( akṛtotpattipratibandha ) *adj.* whose origination has not been obstructed or hindered एतदत्र प्रतिसंख्यायाः सामर्थ्यं यदुताकृतोत्पत्तिप्रतिबन्धानामुत्पत्तिप्रतिबन्धभावः AbhidKoBh. 92. 16 (*on* 2. 55)

**अकृतोदक** ( a-kṛtodaka ) *adj.* to whom a libation of water has been forbidden श्राद्धे नोद्वासनीयानि उच्छिष्टान्या दिनक्षयात् । च्योतन्ते हि सुधाधारास्ताः पिबन्त्यकृतोदकाः VasiDS. 11. 21; येषां कृतानामुदकदानं प्रतिषिद्धं ते अकृतोदकाः SmṛtiCan. v. 405. 3.

**अकृतोद्वाह** ( akṛtodvāha ) *adj.* unmarried सः … प्रव्रजेदकृतोद्वाहः परं वैराग्यमाश्रितः BṛhaspaSm. 305. 534; उत्तमस्त्वकृतोद्वाहो मृगयायाम्…हतः BhāgP. iv. 10. 3; संन्यसेदकृतोद्वाहो ब्राह्मणो ब्रह्मचर्यवान् NaraP. 58. 36; MediK. 41. 8; ViśvaLoK. 87. 8; ViśvaPra. 41. 4; DharK. 538; S'abdaRaSaK. 93. 16.

**अकृतोन्मेष** ( akṛtonmeṣa ) *adj.* not opened किं बहुना – तृतीयमकृतोन्मेषं कायस्थ इति लोचनम् । राजवर्गो वहन्नेष भवेदत्र महेश्वरः UdaySuKa. 12. 2.

**अकृतोपकार** ( akṛtopakāra ) *adj.* which has not served any purpose (not used, not utilised) अरूढस्यापि अकृतोपकारस्यापि शकटादेर्भाटकं दाप्यः SmṛtiCan. iv. 478. 17.

**अकृतोपचार** ( akṛtopacāra ) *adj.* without showing the formalities अरे रे दुष्टसार्थेशसुतानुज्ञां विना मम । गृहीत्वा द्रव्यमकृतोपचारः क्व नु यास्यसि SamarāSaṁ. 6. 201.

**अकृतोपनयन** ( akṛtopanayana ) *adj.* whose *upanayana* (investiture with the sacred thread) has not yet been performed, uninvested with the sacred thread ब्राह्मणादयः…तत्रानुकल्पिकेऽप्यसंस्कृता अकृतोपनयनाः सावित्रीपतिताः…भवन्ति ManuBh. i. 96. 4 (*on* 2. 39); 'असंस्कारा' उपनयनकालेऽप्यकृतोपनयनाः HārLa. 168. 21; व्रात्याः षोडशवर्षपर्यन्तं यावदकृतोपनयना अकृतप्रायश्चित्ता: HārLa. 201. 6.

**अकृतोपम** ( akṛtopama ) *adj.* incomparable, matchless गजाः स्वलंकृता ह्यासन् कृत्रिमा ह्यकृतोपमाः SkandP. i (1). 24. 12 = S'ivP. ii (3). 38. 15

अकृत्याचरण 127 अकृत्रिम

भवति । सम्यक्कर्मान्तेन शीलेऽकृत्याकरणात् MahdhyāViBh. 54. 16 (*on* 4. 10)

30. 70; JayāS. 20. 259 (260); PāraS. 10. 265; 12. 247; 4 B (qualifying an abstract object) यथाहमिह तिष्ठामि त्वं च देवि स्थिताम्बिके । असावकृत्रिमः

*jatru*); द्वावंसावंसफलकावपि द्वावेव चाक्षकौ KāśyaS. 75A. 12; ग्रीवामूलादधः स्कन्धः स्कन्धस्यान्ते तथाक्षकम् । तस्याधः कोटरे कक्षः ParyāRaMā. 920.

²**अक्षक** ( akṣa-ka ) *m. n.* **A** cf. ²*akṣá*; the tree Eleocarpus Ganitrus or Terminalia Bellerica or Dalbergia Ujjeinensis अक्षकैर्बीजकैश्चैव मन्दारैश्चोपशोभितम् ।…भाति चैत्ररथं चैव नन्दनं च महद् वनम् HariVaṁ. 93. 19; वेत्रं तु पत्रवीर्यं वृत्तोग्रं शारदं च कुरवेत्रम् । जाङ्गलजीवन्याख्यश्चाक्षकमित्याहुराचार्याः AbhidhāMañ. 180. 4; NāmaMāli. 211; ( अक्षकः ) तिनिशवृक्षः इति रत्नमाला quoted in S'abdakalpadruma; **B i** the berry of the above plants सेकालेपास्ततः ( ? सेका लेपास्ततः ) शीता बोधिश्लेष्मातकाक्षकैः AṣṭāHr. vi. 37. 70; द्विपलान् सलिलद्रोणे पूते पिष्ट्वाक्षकान् क्षिपेत् AṣṭāSaṁ. ii. 7. 23 (4. 2); मोदकास्त्वपि ये देयाः शृणु तेषां विधिं सताम् । दद्यात् सैवाक्षकं (sic.) द्रोणमाढकं बिल्वमेव च Hastyāyur. 299. 14 (2. 60); अक्षीवश्चाक्षकश्चैव अजकः परिकीर्तितः AśvaVai. 12. 16; महामुनिः स्याद् रुद्राक्षे द्विमुखे च पराङ्मुखः । एकास्ये त्वत्र महिमोऽमुख्यमक्षकमीर्यते NāmaMāli. 213; **B ii** the rosary of the seed of Eleocarpus Ganitrus ( = अक्षमाला, अक्षसूत्र ) वेदाभयेष्टाङ्कुशटङ्कपाशकपालढक्काक्षकशूलपाणिः । …अवतान्मामीशानः SkandP. iii (3). 12. 13.

³**अक्षक** ( akṣa-ka ) *n.* cf. ³*akṣa* **i** the eye चापाकारं भ्रुवाकारं मत्स्याकारमक्षकं तथा ।… प्रयोजयेत् MānaSā. 66. 34; **ii** sense-organ देहे महाभूतविलयनादिः प्रत्याहृतिः स्यादखिलाक्षकेषु TantrSa. 10. 101; अक्षकं त्विन्द्रिये मतम् S'abdaRaSaK. 7. 13.

⁴**अक्षक** ( akṣa-ka ) *m.* name of a son of Danu मरीचिरक्षकश्चैव महागार्ग्योऽङ्गिरावृतः ।…इति पुत्रा दनोर्वंशाः VāyuP. ii. 7. 5.

⁵**अक्षक** ( akṣa-ka ) *m.* a disease of the reptiles ज्वरो नरेषु विख्यातः…। उद्वेष्टवलसकः प्रोक्तो गोषु प्रोक्तस्तथेश्वरः । अक्षको दन्दशूकेषु हारिद्रो महिषेष्वपि । Mānaso. ii. 6. 640.

**अक्षकदम्ब** ( akṣa-kadamba ) *n.* a group of sense-organs क्षीणेष्वक्षकदम्बेषु…। क्षीयते मोहमिहिका YogVā. iv. 35. 58.

**अक्षकदम्बक** ( akṣakadamba-ka ) *n.* the group of sense-organs cf. *akṣa-kadamba* यावत् त्वक्षकदम्बकं स्वविषयं ज्ञानावगाहक्षमम्…निजहिते तावद् बुधैर्यत्यताम् RauhiC. App. 2. 3.

**अक्षकर** ( akṣa-kara ) *adj.* [ *f.* -ā ] with a rosary of beads in the hand ध्यायेत् पुस्तकाक्षकरं गुरुम् MahNirvāT. 13. 88; पुस्तकाक्षकरां स्मरेत् ।… ब्राह्मीम् TantrSā.(K.) 70. 9.

**अक्षकरण** ( akṣa-karaṇa ) *n.* dice as the means आक्षिकः कुम्भकार इत्यत्राक्षकरणक्रियाश्रयः कुम्भानुकूलव्यापाराश्रय इति बोधः VaiyāBhū.(Vr.) 186. 9 (*on* 34)

**अक्षकर्ण** ( akṣa-karṇa ) *m.* the hypotenuse, especially of the triangle formed with the gnomon of dial and its shadow (on an equinoctial day) अक्षकर्णाहतः शङ्कुर्भूयो व्यासार्धताडितः । …वा पूर्ववन् नाडिकाविधिः MaBhāsk. 3. 29; भूपरिधिः । क्रान्तोऽक्षकर्णविहृतस्तत्स्थानजवृत्तवेष्टको भवति ĀryaSi. 1. 58(39); भुजोऽक्षभा कोटिरिनाङ्गुलो ना कर्णोऽक्षकर्णः खलु मूलमेतत् GrahaGa. 72. 14 (9. 13); 80. 30 (9. 40); पलप्रभाघ्नः समशङ्कुरक्षकर्णोद्धृतः स्यादपमज्यकातः । चरादिकेनेष्टहृतिस्ततोऽक्षकर्णोऽसकृत् क्रान्तिगुणश्च तस्मात् GrahaGa. 101. 11 (9. 88); उन्नतम्… तिर्यगक्षवशतोऽक्षकर्णवच्छेदको न तु नरः स लम्बवत् Golā. 218. 19 (25. 34); दशाब्ध्यन्विताक्षप्रभाषष्टिभागोऽक्षकर्णान्वितस्तेन भक्ताक्षभा सा । खनन्दाहता दक्षिणाः स्युः पलांशाः KaraṇaKu. 3. 16 (17); अक्षच्छायावर्गतत्त्वांशयुक्ताः ( ? युक्ता ) मार्तण्डाः स्यादङ्गुलाद्योऽक्षकर्णः GrahaLā. 4. 7; 4. 8; क्रान्तिः स्फुटाभिमतकर्णगुणाक्षकर्णनिघ्नी खखाद्रिहृदपक्रमदिग्भुजः स्यात् GrahaLā. 4. 25.

**अक्षकलह** ( akṣa-kalaha ) *m.* a gambling bout, gambling competition मिथःस्पर्धाबद्धे बलवति वलत्यक्षकलहे व्रजेश त्वां जित्वा…पणमिह कुरङ्गं तव कदा ग्रहीष्यामः StavMā. 107. 23.

**अक्षकला** ( akṣa-kalā ) *f.* the art of gambling एका च नृत्यकुशला… काचिदक्षकलालया ( योगिनी अभूत् ) SkandP. iv. 45. 10.

**अक्षकलि** ( akṣa-kali ) *m.* competition in playing at dice तदक्षकलिदक्षयोः …भजे व्रजनवीनयूनोर्युगम् StavMā. 84. 18 ( comm. अक्षकलहदक्षयोर्द्यूतकलहनिपुणयोः )

**अक्षकशूल** ( akṣaka-śūla ) *n.* pain in the collar-bone पार्श्वांसाक्षकशूलं च वातगुल्मस्य लक्षणम् KāśyaS. 112A. 14.

**अक्षकाम** ( akṣá-kāma ) *adj.* [ *f.* -ā ] fond of dice, dice-loving याः क्रन्दास्तमिषीचयोऽक्षकामा मनोमुहः । ताभ्यो गन्धर्वपत्नीभ्योऽप्सराभ्योऽकरं नमः AV. ii. 2. 5.

**अक्षकाम्या** ( akṣa-kāmyā ) *f.* addiction to dice स्वप्नं तन्द्रीं मन्युम् अशनयाम् अक्षकाम्यां स्त्रीकाम्याम् इति JaimiBr. 1. 98; षड् वै पुरुषे पाप्मानष्षड् विषुवन्त[:] स्वप्नश्च तन्द्री च मन्युश्चाशनया चाक्षकाम्या च स्त्रीकाम्या च JaimiBr. 2. 363.

**अक्षकारणता** ( akṣakāraṇa-tā ) *f.* causality of the sense-organs न चाक्षकारणतामन्तरेणापरोक्षत्वासंभवो भेदाध्यवसायस्येति मन्तव्यम् NyāyMa. 56. 4.

**अक्षकार्य** ( akṣa-kārya ) *adj.* caused or produced by the sense-organs अक्षकार्यं क्रियादिकमपि प्रत्यक्षं स्यात् NyāySu.(Ja.) 254B. 1 (*on* ii. 1. 2)

**अक्षकाष्ठ** ( akṣa-kāṣṭha ) *n.* **1** the wood of the Akṣa tree (i. e. Terminalia Bellerica) दग्ध्वाक्षकाष्ठैर्मलमायसं तु गोमूत्रनिर्वापितमष्टवारान् । विचूर्ण्य लीढं मधुनाचिरेण कुम्भाह्वयं पाण्डुगदं निहन्ति SiddhaYo. 8. 16; **2** the wooden beam (for supporting the balance) मध्ये त्वायसपाशोऽक्षकाष्ठे तुलायोजनार्थो देयः SmṛtiCan. iii. 246. 19; अक्षकाष्ठस्य प्रमाणं पादस्तम्भमध्यप्रमाणाभिधानेनैव सूचितम् VīraMi. (Vyavahāra) 187. 14.

**अक्षकितव** ( akṣa-kitava ) *adj.* clever or deceitful in gambling शकुनिं चाक्षकितवं सहदेवो हनिष्यति MahāBhā. ii. 68. 26; iii. 71*. 1; एषोऽक्षकुशलः ( v. l. °कितवः )…युधि जेष्यति पाण्डवान् MahāBhā. vii. 160. 31.

**अक्षकितव** ( akṣa-kitava ) *m.* a deceitful or clever gambler शौण्डादिमिरिति वक्तव्यम् । इहापि यथा स्यात् ।…अक्षकितवः स्त्रीकितवः MahāBh. i. 390. 26 (*on* ii. 1. 40); CāndraVṛ. *on* ii. 2. 16; KātanVṛ. ii. 5. 8; KāśiVṛ. *on* P. ii. 1. 40; GaṇRa. 2. 101 (145)

**अक्षकितवनिन्दा** ( akṣakitava-nindā ) *f.* censure of the dice and the gambler प्रावेपाः षड्ना मौजवान्वाक्षोऽक्षकृषिप्रशंसा चाक्षकितवनिन्दा च सप्तमी जगती SarvaAnu. x. 34 (comm. अत्र च अक्षकितवनिन्दा च क्रियते )

**अक्षकी** ( akṣakī ) *f.* ( wrong reading for अक्षिकी ) the tree Terminalia Bellerica पित्तश्लेष्मघ्नमम्लं च वातलं चाक्षकीफलम् AṣṭāSaṁ. i. 40. 2 (1. 7)

**अक्षकीफल** ( akṣakī-phala ) *n.* ( = अक्षिकीफल ) the fruit of Terminalia Bellerica पित्तश्लेष्मघ्नमम्लं च वातलं चाक्षकीफलम् AṣṭāSaṁ. i. 40. 2 (1. 7)

**अक्षकील** ( akṣa-kīla ) *m.* the pin of an axle तदाक्षकीलो न्यपतच्छिन्नस्तस्य न वेद सः AdhyāRā. ii. 2. 68; अक्षकीले त्वणिः Vaija. 114. 131; अणी रूप्येऽक्षकीले NānārthSaṁ. 6. 59.

**अक्षकुमार** ( akṣakumāra ) *m.* name of a son of Rāvaṇa ( = **अक्ष** ) हनूमन्तं नियन्तुं नियन्ता निखिलरक्षसामध्यक्षमक्षकुमारमध्यक्षिपत् RāmāCam. 5. 37 (9); नूनमक्षकुमारस्य ( शिर इदम् ) PrasaRā. 6. 35 (? 34) (5); करतलकुलिशेन स व्यदारीत्…अक्षकुमारम् Ragh. 14. 15.

**अक्षकुमारक** ( akṣakumāra-ka ) *m.* name of a son of Rāvaṇa cf. अक्षकुमार; खरदूषणत्रिशिरोमारीचाक्षकुमारकाः । असंख्या निर्जिता रौद्रा राक्षसाः समराङ्गणे SkandP. iii (2). 32. 11.

**अक्षकुलप्रसूति** ( akṣakula-prasūti ) *adj.* wherein grows a cluster of Terminalia Bellerica या क्वाप्युदात्ततरदक्षकुलप्रसूतिः ( comm. अक्षकुलानि विभीतकराशयः तेषां प्रसूतिर्जन्म यस्याः ) S'rīKaC. 4. 54.

**अक्षकुशल** ( akṣa-kuśala ) *adj.* expert in (the game of) dice एषोऽक्षकुशलः…युधि जेष्यति पाण्डवान् MahāBhā. vii. 160. 31; तव हितकरोऽस्म्यक्षकुशलः ManoDū. 38.

**अक्षकुहर** ( akṣa-kuhara ) *m.* the cavity (intended) for the axle (of a wheel) अक्षकुहरे ज्ञेयं क्रमाद्वीजचतुष्टयम् LakṣmīT. 30. 16.

¹**अक्षकूट** ( akṣa-kūṭa ) *m. n.* deception in or through (the game of) dice तद्राज्यम्…अक्षकूटमधिष्ठाय हृतं दुर्योधनेन नः MahāBhā. iii. 34. 3; अक्षकूटं समाश्रित्य सौबलेन दुरात्मना MahāBhā. vii. 284*1.

²**अक्षकूट** ( akṣa-kūṭa ) *m. n.* **1** the prominent part of the forehead above the eye and the part below the eye and above the cheek-bone तेनाक्षकूटे श्वयथुः शरीरे पाण्डुत्वमायाति च पीतमूत्रः HārīS. iii. 8. 6; **2** *m.* the pupil of the eye [ APTE ]

**अक्षकृत्** ( akṣa-kṛt ) *adj.* who plays with the dice (a gambler) अक्षद्यूश्च देवा च तथाक्षकृत् सः KośaKaTa. 1. 7139.

**अक्षकृति** ( akṣa-kṛti ) *f.* square of five (i. e. twentyfive) नवषट्कमक्षकृतिश्च क्षयः कलाः केन्द्रराशिसमाः PañcSi. 3. 2.

**अक्षकृत्या** ( akṣa-kṛtyā ) *f.* witchcraft अक्षकृत्यास्त्रिपञ्चाशीः…ये । सर्वान्विनर्ष्टतेजसोऽरसां जङ्गिडस्करत् AV. xix. 34. 2.

**अक्षकृषिप्रशंसा** ( akṣakṛṣi-praśaṁsā ) *f.* praise of dice and agriculture प्रावेपाः षड्ना मौजवान्वाक्षोऽक्षकृषिप्रशंसा SarvaAnu. x. 34 ( comm. तत्राक्षान्द्वादशी स्तौति ।…त्रयोदशी कृषिं स्तौति )

**अक्षक्लृप्ति** ( akṣa-klpti ) *f.* arrangement of the letters from *a* to *kṣa* (in a mystical diagram in Tantra) अक्षक्लृप्तिरियं दिव्या देवैरपि सुदुर्लभा AhirbuS. 22. 5.

**अक्षकेलि** ( akṣa-keli ) *f.* game of dice सरस्यप्यक्षकेलौ मां विजित्यापि यथापणम् । अवाप्तुं पौरुषं नालमभूः TārāS'a. 185.

**अक्षकैतव** ( akṣa-kaitava ) *n.* fraud or deception in or through (the game of) dice हारितायां क्षणादक्षकैतवेन क्षितौ…पणीचक्रे बान्धवान् धर्मनन्दनः PāṇḍaC. 6. 930.

**अक्षकोटि** ( akṣa-koṭi ) *f.* the cosine of the latitude त्रिज्यावर्गाहतं वा स्वममितनरं भाजयेद् घातजेन । द्युज्यासार्धाक्षकोट्योः MaBhāsk. 3. 28; भानोर्भुजामभिहतां परमापमेन द्युज्यासमेदभजितासहताक्षकोटिः MaBhāsk. 3. 39.

**अक्षकोटी** ( akṣa-koṭī ) *f.* an axle-pin अहर्नामिस्तु सूर्यस्य एकचक्रस्य वै स्मृतः । …अक्षकोट्योर्यु( ? ट्यौ यु )गान्यस्य आर्तवाहाः कलाः स्मृताः MatsyaP. 125. 44.

**अक्षकोविद** ( akṣa-kovida ) *adj.* expert in dice प्रिया हि धूर्ता मम चाक्षकोविदाः MahāBhā. iv. 180*(133); iv. 15. 35 (v. l.); समाहूय महात्मानं जितवन्तोऽक्षकोविदाः MahāBhā. v. 3. 6; HariVaṁ. 89. 24; मया द्यूते बलभद्रः पराजितः । …योऽवमेनेऽक्षकोविदान् ViṣṇuP. v. 28. 16; BrahmP. 201. 16; अक्षकोविदैः । वनं प्रस्थापिताः सर्वे BhaviP. 855A. 12 (iv. 170. 2); शकुनिः सौबलोऽपि स्याद् गान्धारोऽप्यक्षकोविदः KalpaK. 92. 35.

**अक्षकौशल** ( akṣa-kauśala ) *n.* skill in dice तस्याक्षकौशलाद्राज्यमादास्येऽहमसंशयम् MahāBhā. ii. 44. 20; कङ्को नाम्ना परिव्राट्…चाक्षकौशले…पारगः MahāBhā. iv. 23*(2)

**अक्षक्रान्तिसंबन्ध** ( akṣakrānti-sambandha ) *m.* relation between the latitude and the declination स्वाक्षापमौ भुजौ तदिष्टाक्षापमौ कर्णौ नाडीवृत्ते तत्कोटिश्चेति चापजात्यद्वयमक्षक्रान्तिसम्बन्धात् SiddhāTaVi. 193. 6.

**अक्षक्रीड** ( akṣa-krīḍa ) *adj.* addicted to the game of dice, MahāVyu. 245. 939.

**अक्षक्रीडना** ( akṣa-krīḍanā ) *f.* game of dice अक्षक्रीडनयानेन कालक्षेपमकारिषम् MahāBhā. iv. 1100*(8)

¹**अक्षक्रीडा** ( akṣa-krīḍā ) *f.* game of dice यदा तु पर्याप्तमिवाक्षक्रीडया । ( v. l. for °मिहास्य क्रीडया ) तदा देवीम्…उवाच MahāBhā. i. 189. 17; नलशरीरे कलिप्रवेशे अक्षक्रीडायां नलपराजयः MahāBhā. iii. 56 colophon; तत्राक्षक्रीडया देवी विहर्तुमुपचक्रमे MatsyaP. 154. 520; नाक्षक्रीडां करिष्येऽद्य त्वया सह महेश्वर SkandP. v(3). 45. 17; नोपरमत्यक्षक्रीडात्वमार्गदण्डधृतिरपरिणीतस्य AvantiKa. 40. 21; हनूमानक्षक्रीडां विधातुं दशमुखनगरीचत्वरे तत्वरेऽसौ RāmāCam. 5. 38; ManvaMu. 71. 6 (*on* 2. 179); ManoDū. 109; S'abdaRaSaK. 194. 17; S'ṛṅgāSar. 85. (1); 86. (6)

²**अक्षक्रीडा** ( akṣa-krīḍā ) *f.* play with Akṣa ( = the son of Rāvaṇa) हनूमानक्षक्रीडां विधातुं दशमुखनगरीचत्वरे तत्वरेऽसौ RāmāCam. 5. 38.

**अक्षक्रीडाविनोद** ( akṣakrīḍā-vinoda ) *m.* entertainment of the play of dice मृगाङ्कलेखया साकमक्षक्रीडाविनोदेन क्षणमात्रमस्थाम् TilaMañ. 370. 3.

**अक्षक्रीडित** ( akṣa-krīḍita ) *n.* the game of dice आवयोरक्षक्रीडितस्य साक्षी भवतु भवाञ्जयपराजययोः S'ṛṅgāBhū. 62(1)

**अक्षक्षपण** ( akṣa-kṣapaṇa ) *m.* name of a gambler अक्षक्षपणस्तस्मै स्वोदन्तमभ्यधात् KathāSaSāg. xii. 7. 154; नाम्नावस्थोचितेनात्र विद्धयक्षक्षपणं च माम् KathāSaSāg. xii. 7. 182; xii. 7. 153; xii. 7. 188.

**अक्षक्षपणक** ( akṣakṣapaṇa-ka ) *m.* name of a gambler ( = अक्षक्षपण ) अक्षक्षपणको नाम तत्रैकः कितवोऽब्रवीत् KathāSaSāg. xii. 7. 148; xii. 7. 188; xii. 7. 206.

**अक्षक्षपणचण** ( akṣakṣapaṇa-caṇa ) *adj.* famous due to the killing of Akṣa अक्षक्षपणचणरणः…स हनुमान् मौलिरत्नं ददौ ते Nārāy. ix. 35. 3.

**अक्षक्षेत्र** ( akṣa-kṣetra ) *n.* the area for (drawing) the axle (of a Tantric wheel) अक्षक्षेत्रे लिखेत्पद्मम् PauṣkS. 8. 26.

**अक्षक्षेत्र** ( akṣa-kṣetra ) *n.* a right-angle triangle formed with the latitude as one side क्रान्तिक्षेत्रमक्षक्षेत्रान्तर्गतम्…अक्षक्षेत्रं क्रान्तिक्षेत्रान्तर्गतम् SiddhāTaVi. 193. 9.

**अक्षक्षेत्रकोण** ( akṣakṣetra-koṇa ) *m.* an angle of a triangle formed with the latitude as one side अक्षक्षेत्रकोणाद्विषुवस्थिताद्वहिःस्थं क्रान्तिक्षेत्रम् SiddhāTaVi. 193. 10.

**अक्षक्षेत्रजकोटि** ( akṣakṣetraja-koṭi ) *f.* the perpendicular of a right-angle triangle with the latitude as one side (a triangle similar to the celestical latitudinal triangle) अक्षक्षेत्रजकोटिमिराहतमविनष्टकं भजेत् कर्णैः ĀryaSi. 4. 23.

¹**अक्षग** ( akṣa-ga ) *adj.* relating to the sense-organs यचोपमानै रहितं व्यवहारैर्धियोऽक्षगैः । कारणं तदनौपम्यं ये विदन्त्वभयास्तु ते JayāS. 4. 108.

²**अक्षग** ( akṣa-ga ) *adj.* situated in the axle (of a Tantric wheel) तारिकातारकद्वन्द्वमक्षगं पारमेश्वरम् LakṣmiT. 29. 47.

**अक्षगज** ( akṣa-gaja ) *m.* eighty-five खं गोऽश्विनोऽद्रिमरुतोऽक्षगजा नवाशाः GrahaLā. 3. 7.

¹**अक्षगण** ( akṣa-gaṇa ) *m.* the group of sense-organs अधोभूते प्रत्यक्प्रवाहिते अक्षगणे जायत इति अधोक्षजः ViṣṇuSaBh. 77. 18 (*on* 57); प्रयाति येनाक्षगणः स वश्यतां रसोज्झनं तन्निगदन्ति साधवः SubhāRaSaṁ. 884; अक्षगणम् । अन्तर्बोधे परिवर्तयति ParamāSā. 78; तपस्यतोऽस्य । विषयेषु न लोलतां प्रपेदे… अक्षगुणः ( v. l. °गणः ) BhārCam. 4. 65; नाहं भूतगणो देहो नाहं चाक्षगणस्तथा AparoAnu. 13.

²**अक्षगण** ( akṣa-gaṇa ) *m.* a group of beads (of the rosary) BhārCam. 4. 65.

**अक्षगत** ( akṣa-gata ) *adj.* appearing in the axis नेमिस्थदृष्टयाक्षगतं प्रपश्येत् खेटम् Golā. 236. 2. (29. 14)

**अक्षगम्य** ( akṣa-gamya ) *adj.* knowable through senses तस्मादसाधारणमक्षगम्यं वदत्र सामान्यमपह्नुवीत S'lokaVār. 5(4). 187 (405. 3); रूपादिमानक्षगम्यः सन्निकर्षेऽक्षगम्यता IṣṭaSi. 254. 14; नाभावोऽक्षगम्योऽसंयुक्तत्वात् रसवत् PrakaVi. 79. 16; सत्त्वाधैरक्षगम्यं विमतमिति TattvMu. 4. 36.

**अक्षगम्यता** ( akṣagamya-tā ) *f.* the state of being knowable through senses रूपादिमानक्षगम्यस्सन्निकर्षेऽक्षगम्यता IṣṭaSi. 254. 14.

**अक्षगर्भगत** ( akṣagarbha-gata ) *adj.* being or existing within the seed (of the pericarp of the lotus-like heart) हृत्पद्मकर्णिकोर्ध्वस्था शब्दब्रह्ममयी पुरा । अक्षगर्भगतं नादं नदन्ती मन्त्रगर्भितम् । शक्तिः शान्तात्मनो विष्णोः साधकैश्च वशीकृता । शब्दशक्तिः समुद्गीता PāraS. 25. 46.

**अक्षगवाक्षक** ( akṣagavākṣa-ka ) *adj.* having the sense as the window (i. e. entrance) मृद्वया चिदाकाशमृदा ब्रह्मणा ब्राह्मणेन खे । कृतोऽपि न कृतः सर्गमण्डपोऽक्षगवाक्षकः YogVā. vi(2). 62. 45.

¹**अक्षगुण** ( akṣa-guṇa ) *m.* **1** the qualities of an axle यथा यानसमायुक्तोऽक्षः प्रकृत्यैवाक्षगुणैरुपेतः CaraS. iii. 3. 38 (1941 Ed.); **2** the sine of the latitude शङ्कुच्छाया समभ्यस्ता लम्बकाक्षगुणौ फले LaBhāska. 3. 3; अक्षज्यका कोटिगुणा भुजाप्ता लम्बज्यका वाक्षगुणोऽन्यथातः GrahaGa. 73. 29 (9. 19); अक्षज्यकाकोमिहता विभक्ता लम्बज्यया स्यात्पलभा द्विधा सा । अर्कोल्पिका वाभ्यधिकार्कतः स्यान्न्यूनाधिकत्वेऽक्षगुणस्य लम्बात् SiddhāTaVi. 367. 3.

²**अक्षगुण** ( akṣa-guṇa ) *m.* the string of the beads (of the rosary) वैणिकवैयासिकिमुख्याः संविन्मुद्रापुस्तकवीणाक्षगुणान् यम् । हस्ताम्भोजैर्बिभ्रतमाराधितवन्तस्तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि DakṣiMūVaMāSt. 3; कुठारवेदाङ्कुशपाशशूलकपालढक्काक्षगुणान् दधानः । …पायादघोरो दिशि दक्षिणस्याम् SkandP. iii(3). 12. 10; यः स्फाटिकाक्षगुणपुस्तककुण्डिकाढ्याम्…हृदये भवतीमुपास्ते DeviPañ. 4. 14; मुद्रामक्षगुणं सुधाढ्यकलशं विद्यां च हस्ताम्बुजैर्बिभ्राणाम्…वाग्देवतामाश्रये S'āraTi. 6. 4 = 7. 82 = MahNirvāT. 5. 112 = TantrSā.(K.) 75. 25 = 104. 30; तपस्यतोऽस्य । विषयेषु न लोलतां प्रपेदे विजयस्याक्षगुणः कराग्र एव BhārCaṁ. 4. 65.

³**अक्षगुण** ( akṣa-guṇa ) *m.* the natural quality of the senses or sense faculties BhārCaṁ. 4. 65.

**अक्षगोचर** ( akṣa-gocara) *adj.* [ *f.* -ā ] coming within the sphere of the senses इतरेतराभावांशो हि भावानां भेदः न सोऽक्षगोचरः BrahmSi. 56. 21; अत्यासन्नानसंस्पृष्टानणूनेवाक्षगोचरान् । अपरः प्राह NyāyVi. 2. 101; देहान्तराभिसंबन्धो भावित्वान्नाक्षगोचरः BṛĀraUBhVā.(Sambandha.) 1055; यत्सत्तत्क्षणिकत्वेऽपि सत्त्वमप्यक्षगोचरम् । साद्दश्याद्भ्रान्तमक्षं चेदुष्टं प्राग्ग्रहे यथा S'ivDṛ. 6. 55; यथा विदितसंयोगसंबन्धेऽप्यक्षगोचरे । भेदाभेदादिदुस्तर्कविकल्पाधानविभ्रमः SaṁviSi. 86. 22; तपोऽनुभावो न किमत्र बुध्यते विशुद्धबोधैरियताक्षगोचरैः । यदन्यनिःशेषगुणैरपाकृतं तपोऽधिकश्लेज्जगतापि पूज्यते SubhāRaSaṁ. 894; परीक्षित्…आजहाराश्वमेधांस्त्रीन् गङ्गायां भूरिदक्षिणान् । शारद्वतं गुरुं कृत्वा देवा यत्राक्षगोचराः BhāgP. i. 16. 3; सन्निता एव चानन्यवृत्तितया विशेषासाधारणादिपदवाच्या इति ते प्रत्यक्षा भविष्यन्ति । मा नाम एकैकतः परमाणुरक्षगोचरो भवेत् Kāśi. iii. 96. 24 (*on* 5(4). 178); या (देवता) चाक्षगोचरा काचिद्विशिष्टेष्टफलप्रदा । तामेवादौ ममाचक्ष्व BhaviP. 90B. 19 (i. 48. 20)

**अक्षगोचरचेतस्** ( akṣagocara-cetas ) *n.* cognition of objects through sense-faculty अविकल्पकमभ्रान्तं प्रत्यक्षं न पटीयसाम् । अविसंवादनियमादक्षगोचरचेतसाम् NyāyVi. 2. 156.

**अक्षग्रथित** ( akṣa-grathita ) *adj.* strung with beads पञ्चाशदक्षग्रथितान् (? ता) व्योमव्याप्यपि चोदरे । …त्रिमाला…धारयेत् RudrāJābāU. 568. 8 (1. 22)

**अक्षग्रह** ( akṣa-graha ) *m.* seizure of the dice, the throw of dice अक्षग्लहः [ v. l. अक्षग्रहः ] सोऽभिभवेत्परं नः MahāBhā. ii. 53. 5 ( Devabodha अक्षग्रहणरूपा क्रीडा )

¹**अक्षग्रहण** ( akṣa-grahaṇa ) *n.* **1** the mention of the word *akṣa* (i. e. sense-organ) अक्षग्रहणं बाह्येन्द्रियदशकस्योपलक्षणम् PratyabhiVi. ii. 267. 10 (*on* iii. 2. 16); **2** comprehension or cognition by the sense-organs, perceptual cognition संयुक्तविशेषणत्वेन च घटाभावस्याक्षग्रहणे रसादयोऽपि चक्षुषा गृह्येरन्

YuktiSneha. 86. 36 (*on* i. 1. 5); **3** cognition of the sense-organ cf. **अक्षग्रहणकाल.**

**²अक्षग्रहण** (akṣa-grahaṇa) *n.* use of the word *akṣa* (i. e. dice) (अक्षादिभिर्न क्रीडेत्) अक्षग्रहणमुपलक्षणमित्याह अक्षादिभिरिति BālamBha. i. 399. 14 (*on* 1. 138)

**अक्षग्रहणकाल** (akṣagrahaṇa-kāla) *m.* time of cognition of the sense-organ (as an object) अक्षग्रहणकाले तु ग्राहिका धीर्भविष्यति S'lokaVār. 5(3). 66 (288. 4)

**अक्षग्रहणसमुचित** (akṣagrahaṇa-samucita) *adj.* fit for sense-perception रूपस्पर्शादयो भावा अक्षग्रहणसमुचितेन स्पष्टेन वपुषा भासनयोग्याः परमेश्वरेण सृज्यन्ते PratyabhiVi. ii. 266. 7 (*on* iii. 2. 16)

**अक्षग्रहविरति** (akṣagraha-virati) *adj.* having the caesura or pause after the fifth and the ninth (syllables) म्तौ न्सौ गावक्षग्रहविरतिरसंबाधा VṛttaRa. 3. 71.

**अक्षग्राम** (akṣa-grāma) *m.* the group of the sense-organs सुचिरं तर्पयामास सोऽक्षग्राममशेषतः MahāP. 8. 12; तथात्मेच्छावशान्नाक्षग्रामे चेष्टोपपद्यते S'ivDṛ. 4. 99; मनस्युपरतं कुर्यादक्षग्रामं बहिःस्थितम् PāraS. 5. 2.

**अक्षग्राहक** (akṣa-grāhaka) *adj.* [*f.* -ikā] which illumines the sense (i. e. which has the sense as its object of cognition) न चाक्षग्राहिकैव बुद्धिः स्वप्रकाशिका TātpaṬ.(U.) 257. 9 (*on* 5(4). 67); अ(क्ष)प्रतिपत्त्यन्यथाप्रतिपत्तिजन्या हि बुद्धिरक्षग्राहिकां बुद्धिं गृह्णीयात् TātpaṬ.(U.) 257. 10 (*on* 5(4). 67)

**अक्षग्लह** (akṣa-glaha) *m.* seizing of the dice; the stake in playing at dice अक्षेषु ग्लहः P. iii. 3. 70; ग्रहेरप् सिद्ध एव, लत्वार्थं निपातनम्। अक्षस्य ग्लहः। अक्षेष्विति किम्। ग्रहः पादस्य। अन्ये ग्लहिं प्रकृत्यन्तरमाहुः KāśiVṛ. *on* P. iii. 3. 70; अन्ये त्वाहुः अक्षशब्देनात्र तत्साधनं देवनं लक्ष्यते, अक्षकर्मणि देवनविषये यत्पणरूपेण ग्राह्यं तद् ग्लहशब्देनोच्यते PadMañ. *on* KāśiVṛ. *on* P. iii. 3. 70; अक्षग्लहः सो(v. l. अक्षग्लहज्ञो)ऽभिभवेत् परं नः MahāBhā. ii. 53. 5.

**अक्षग्लहज्ञ** (akṣaglaha-jña) *adj.* who knows the stake in gambling with dice अक्षग्लहः सो[v. l. अक्षग्लहज्ञो]ऽभिभवेत् परं नः MahāBhā. ii. 53. 5.

**अक्षग्लानि** (akṣa-glāni) *f.* fatigue of the sense-organ स्फिग्गण्डादिशुष्कतातोदरौक्ष्याक्षग्लानिसन्धिस्फोटनधमनीशैथिल्यैर्मांसम् (पीडयति) AṣṭāSaṁ. i. 701. 25. (1. 19); मांसेऽक्षग्लानिगण्डास्फिक्शुष्कतासंधिवेदनाः AṣṭāHṛ. i. 11. 18.

**अक्षघोष** (akṣa-ghoṣa) *m.* the sound of the axle हविर्धाने प्राची प्रवर्तयेयुर्यद्यक्षघोषः सुवागिति जपति VaikhāS'S. 14. 5.

**¹अक्षचक्र** (akṣa-cakra) *n.* the group of the sense-organs हारीतनामा तापसकुमारकः···रविरिव दृढनियमिताक्षचक्रः···कमलसरः सिस्नासुरुपागमत् Kād. 37. 14.

**²अक्षचक्र** (akṣa-cakra) *n.* the axle and the wheel स एवाक्षः···ह्यक्षचक्रभङ्गाद् वाह्यवाहकदोषात्···अवसानमापद्यते CaraS. iii. 3. 38 (1941 Ed.); Kād. 37. 14.

**अक्षचक्रोपोद्बलित** (akṣacakropodbalita) *adj.* [*f.* -ā] stengthened by the group of sense-organs एवं शून्य एवाहंता अक्षचक्रोपोद्बलिता जीवनम् PratyabhiVi. ii. 263. 6 (*on* iii. 2. 14)

**अक्षचण्डेश्वर** (akṣacaṇḍeśvara) *m.* Caṇḍeśvara (one of the chieftains of S'iva's hosts) marked with the (rosary of) beads अक्षमालार्पितकरश्चाक्षचण्डेश्वरो वरः।···शान्तिं करोतु BhaviP. 262B. 22 (i. 178. 15)

**अक्षचतुष्टय** (akṣa-catuṣṭaya) *n.* a group of four akṣas (*akṣa* being equal to 16 māṣas) and equal to a *pala* पलं नृशण्डयोर्मांसे मानेऽप्यक्षचतुष्टये NānārthāSaṁ. i. 104. 716.

**अक्षचरण** (akṣacaraṇa) *m.* name of the author of the Nyāyasūtras (otherwise known as Akṣapāda (who has eyes on his feet) and Gautama) बादरायणेन °कणभुगक्षचरणसुगतमतादिबाह्यसमयनिरासावसरेऽस्य तन्त्रस्य निरासः (कृतः) ĀgaPrā. 10. 23; कणभक्षाक्षचरणकुमारिलपक्षपातिनोऽपि स्वरूपभेदवादिनः प्रागुन्नीतन्यायेन शिक्षणीयाः NyāyMa. 266. 1; षोडशपदार्थानां तत्त्वतोऽवधारणम्··· निःश्रेयसफलत्वेनाक्षचरणपक्षिलमुनिप्रभृतयो वर्णयन्ति TārkiRa. 4. 1; अजसंयोगस्य कणभक्षाक्षचरणादिभिः प्रतिक्षेपाच्च SarvaDaSaṁ. 15. 153; सन्तु वाक्षचरणादयोऽव्यासाः NyāySu.(Ja.) 252A. 2 (*on* ii. 1. 2); आदिशब्देनाक्षचरणक्षपणकसमन्तभद्रादयो गृह्यन्ते S'ivārkaMaDī. ii. 18. 13 (*on* ii. 1. 13)

**अक्षचरणचरणोपजीविन्** (akṣacaraṇa-caraṇopajīvin) *adj.* who is a disciple or a follower of Akṣapāda, the author of the Nyāyasūtras न खलु वियदुत्पत्तिः संभावयितुमपि शक्या जीवत्सु श्रीमत्कणभक्षाक्षचरणचरणोपजीविषु GoviBh. 143. 3 (*on* ii. 3. 3)

**अक्षचरणपक्ष** (akṣacaraṇa-pakṣa) *m.* the doctrine or view of Akṣacaraṇa i. e. the Nyāya doctrine निपुणदेशिकोपदेशसलिलविमलीकृतमतिः···अक्षचरणपक्षराजीवतापनरोचिश्छटां प्रौढिमाढौकत YātrāPra. 2. 57.(4)

**अक्षचरणपक्षपातिन्** (akṣacaraṇa-pakṣapātin) *adj.* who has a partiality for Akṣacaraṇa, who follows the Nyāya doctrine व्यक्त्याकृतिजातयः पदार्थं इत्यक्षचरणपक्षपातिभिरङ्गीकारात् TattvPradī.(Ci.) 91. 8; कणभक्षाक्षचरणपक्षपातिना तु···परमतप्रमोषः कस्मादिष्यते NyāySu.(Ja.) 53B. 1 (*on* i. 1. 1)

**अक्षचरणपञ्चाध्यायी** (akṣacaraṇa-pañcādhyāyī) *f.* the text consisting of five chapters (composed by) Akṣacaraṇa (i. e. the Nyāyasūtras) यत्पुनरर्वाग्भिरक्षचरणपञ्चाध्याय्याम्···नैगमिक्यः पद्व्यो निरुध्यन्ते NyāyPari. 25. 6.

**अक्षचरणमत** (akṣacaraṇa-mata) *n.* the view or doctrine of Akṣacaraṇa (i. e. the Nyāya doctrine) कणभक्षाक्षचरणमतमवलम्ब्यैवमन्यथाख्यातिमन्यथावर्णयतः···सभये निर्भयमित्यादिभाष्यविरोधः TattvPradī.(ci.) 73. 9.

**अक्षचरणसूत्र** (akṣacaraṇa-sūtra) *n.* the aphorism(s) of Akṣacaraṇa (i. e. the Nyāyasūtras) कणभक्षाक्षचरणसूत्रैष्वप्यतिदिशति PrakaVi. 393. 22.

**अक्षचरार्धज्ञ** (akṣacarārdha-jña) *adj.* who knows the latitude and the elapsed half अक्षचरार्धज्ञोऽर्के छायातो यश्चरार्धमिष्टायाः। इष्टचरार्धादथवा छायां कथयति स तन्त्रज्ञः BrāhmSphuSi. 15. 14.

**अक्षचाप** (akṣa-cāpa) *m.* the arc of latitude अक्षचापगणितं वद तस्मिन् लम्बकेन सहितं विगणय्य MaBhāsk. 8. 25.

**अक्षचापगुण** (akṣacāpa-guṇa) *m.* sine of the latitude अक्षचापगुणसंगुणं हरेल्लम्बकेन शशिकीलकं स्फुटम् MaBhāsk. 6. 9.

**¹अक्षचार** (akṣa-cāra) *m.* the throw of dice अनेकधाष्टापदसारदानदक्षो वशीभूततराक्षचारः। यो द्यूतकृद्यत्तुरङ्गयुद्धक्रीडास्वजेयः समभूत्परेषाम् HammīMaKā. 1. 43.

**²अक्षचार** (akṣa-cāra) *m.* the function of the senses, Hammī-MaKā. 1. 43.

**अक्षचिह्न** (akṣa-cihna) *n.* the mark on dice (पदम्) चरणन्यासाक्षचिह्नयोरपि मङ्कः comm. *on* AnekāSaṁ. 2. 226.

**अक्षच्छल** (akṣa-cchala) *n.* deceit or fraud in (gambling with) dice अवाप्तुकामाः···अक्षच्छलेनापहृतं स्वराज्यम्।···बभूवुः (पाण्डवाः) Yādavā. 23. 10.

**अक्षच्छाया** (akṣa-cchāyā) *f.* the shadow of the gnomon at noon on the equinoctial day (at a particular place which is used in calculating the latitude of the place) भूमेरुन्नतभागास्तत्राक्षच्छायया युक्ताः Golā. 235. 13 (29. 11); प्राग्वद्गतोऽक्षच्छाया तच्छ्रुतिविहृताग्रकार्कसंगुणिता Golā. 242. 10 (29. 36); तथाक्षच्छायेषुघ्न्यक्षभायाः कृतिदशमलवोना यमाशाः पलांशाः GrahaLā. 4. 6; अक्षच्छायावर्गतत्त्वांशयुक्ताः मार्तण्डाः स्यादङ्गुलाद्योऽक्षकर्णः GrahaLā. 4. 7; परोऽक्षच्छायया निघ्नः SiddhāTaVi. 184. 3.

**¹अक्षज** (akṣa-ja) *adj.* [*f.* -ā] related to dice (used in gambling) योऽन्वेति संख्यां निकृतौ विधिज्ञश्चेष्टास्वखिन्नः कितवोऽक्षजासु। महामतिर्यश्च जानाति द्यूतं स वै सर्वं सहते प्रक्रियासु MahāBhā. ii. 53. 4.

**²अक्षज** (akṣa-ja) *adj.* [*f.* -ā] arising out of or acquired through the sense-organs तस्मादक्षजं ज्ञानं न वासनानिमित्तमित्युक्तम् Bṛha. 70. 3 (*on* i. 1. 5); नाक्षजा मतिः PramāVār. 3. 65; गौः इत्येतस्मिन्नक्षजे ज्ञाने वर्णत्रयाव्यतिरेकेण यदि तत् प्रकाशत एव ततो व्यर्थं कार्यमुखेन तन्निरूपणम् TātpaṬ.(U.) 433. 11 (*on* 5(11). 3; 154. 13 (*on* 4. 134); इदंधीरक्षजा रूप्यधीस्स्मृतिस्तत्प्रमोषतः IṣṭaSi. 41. 8; न खलु क्षणभङ्गित्वे भावानामक्षजा मतिः NyāyMañ. ii. 16. 26; अक्षजं विज्ञानं प्रत्यक्षमित्युक्ते स्मृतिरपि प्रत्यक्षा स्यात् NyāyKa. 188. 18; भावनाबलजमक्षजं वा न वा। न तावदक्षजमित्युक्तम् Kāśi. i. 122. 22 (*on* 2. 115); i. 221. 19 (*on* 4. 37); iii. 98. 20 (*on* 5(4). 183); प्रत्यक्षमक्षजं ज्ञानम् SaraKaṇṭhā. 380. 3; नन्वक्षतश्चेद्विकल्पः किमिति प्रथमाक्षसंनिपात एव न जायते, अतो नाक्षज इत्यत आह न हीति NyāyRa. 174. 10 (*on* 4. 126); अक्षजा प्रमितिर्द्वेधा सविकल्पाविकल्पजा TarkBhā. (Ke.) 36. 3; अक्षजादेर्ज्ञानस्य मानत्वम्···केन प्रमाणेन गम्यते NyāySu. (Ja.) 348A. 1 (*on* ii. 2. 6)

**अक्षज** (akṣa-ja) *m. n.* perception arising through the sense-organs, direct perception सदस्मीति च विज्ञानमक्षजो बाधते ध्रुवम् UpadeSā. 351. 13; 352. 14; क्वेदं दृष्टं, वस्तुत्वाभावे अक्षजादेरप्रामाण्यमिति IṣṭaSi. 33. 7; 44. 8; 212. 3; 213. 19; 236. 7; 334. 10; NyāyMañ. ii. 96. 20; BṛĀraUBhVā.(Sambandha) 919; NaiṣkaSi. 157. 5; ज्यैष्ठ्यात्समर्थमथवाक्षजमेकमेव SaṁkṣeS'a. 2. 6 (ii. 4. 5); 2. 123 (ii. 77. 5); तत्राक्षजं द्विधा SaraKaṇṭhā. 380. 15; एतेषां (लोकायतानाम्) मानं त्वक्षजमेव हि ṢaḍdarSa.(Rā.) 162; NyāySu.(Ja.) 291A. 4 (*on* ii. 1. 4); MānaMe. 19. 9; अक्षजस्यैव···प्रत्यक्षत्वात् JñānBiPra. 45. 31.

**³अक्षज** (akṣa-ja) *adj.* [*f.* -ā] caused by the latitude, produced by the axis क्षितिजेऽक्षज्यया तुल्यमक्षजं वलनं ततः Golā. 224. 18 (26. 35); अक्षजं वलनं मध्ये स्यात्समध्रुवसूत्रयोः Golā. 225. 8 (26. 46); तत्समुत्क्षेपणं नामनं च द्विधा।

आयनं चाक्षजं तेन कर्मद्वयं तत्प्रपञ्चः पुनः संविविच्योच्यते Golā. 229.25 (27.2); स्फुटोऽसौ क्रान्तिसंस्कारे दृक्कर्मण्यक्षजे तथा Golā. 230.15 (27.10); धार्ये तथा फलकयन्त्रमिदं यथैव तत्पार्श्वयोर्लगति तुल्यमिनस्य तेजः। छायाक्षजा स्पृशति तत्परिधौ यमंशं तत्रांशके मतिमता सरणिः प्रकल्प्यः Golā. 231.21 (29.25); GrahaLā 4.15; भुजोऽक्षज्या तथा लम्बज्यका कोटिस्त्रिभज्यका। कर्णं इत्यक्षजं जात्यमुक्तं क्षेत्रं सनातनम् SiddhāTaVi. 179.16; आयनं चाक्षजं चोक्तं वलनद्वितयं तु तैः SiddhāTaVi. 336.6; 339.8; दूरस्थितस्यात्र भवेद् विशुद्धाक्षजा प्रभा SiddhāTaVi. 190.11.

4**अक्षज** (akṣaja) *m.* a name of Viṣṇu जघानोत्पत्य गदया हनावसुरमक्षजः BhāgP. iii. 19.2; नारायणे…विधाताधार एकाङ्गो वृषाक्षः सुवृषोऽक्षजः S'esaNā. 1613; जलेशयो जलशयोऽधोक्षजोऽक्षज एकपात् S'abdaRa. (Su.) 2.92.

5**अक्षज** (akṣaja) *n.* a kind of dance (originating from S'iva) ताण्डवोऽस्त्री नृत्तलास्यनटनाक्षजनर्तनम् Vaija. 142.73.

6**अक्षज** (akṣaja) *m.* **i** thunderbolt स्वरुः शम्भोः (? म्बो) मिदुर्वज्रम्… व्याधावः शबलोऽक्षजः ParyāS'aRa. 1.67; **ii** diamond [MW; Apte]

**अक्षजक्षेत्र** (akṣaja-kṣetra) *m.* the latitudinal triangle देशे तत्र पृथक् पृथग्गणकता गोलेऽसि दक्षोऽक्षजक्षेत्रक्षोदविधौ विचक्षण समाचक्ष्व GrahaGa. 107.11 (9.102) = Golā. 261.4 (31.33); प्रचक्ष्व चेदक्षजक्षेत्रविचक्षणोऽसि GrahaGa. 103.3 (9.92) = Golā. 265.6 (31.42)

**अक्षजगम्य** (akṣaja-gamya) *adj.* knowable through sense-perception रूपाद्यक्षजगम्यैश्च सामानाधिकरण्यतः BṛĀraUBhVā. i. 4.586; न हि स्वविवक्षावेदनभ्रमाद्यपि तेऽक्षजगम्यं रूपादिहीनत्वाच्चक्षुराद्यगोचरत्वात् IṣṭaSi. 346.11.

**अक्षजगम्यत्व** (akṣajagamya-tva) *n.* knowability through sense-perception नित्यमक्षजगम्यत्वाद्दुःखस्योपलनीलवत् BṛĀraUBhVā. i. 4.586.

**अक्षजजात्यकोटि** (akṣajajātya-koṭi) *f.* the perpendicular of a latitudinal right-angle triangle हृतिः कला चाक्षजजात्यकोट्या निघ्नी हृता तच्छ्रवणेन लब्धम् SiddhāTaVi. 182.7.

**अक्षजज्ञान** (akṣaja-jñāna) *n.* cognition through sense-perception प्रामाण्यं श्रौतज्ञानस्येवाक्षजज्ञानस्यापि Nyāyāmṛ. 141B.5; अक्षजज्ञानकर्मत्वमपि प्रत्यक्षत्वम् NyāyMañ. i. 29.24; i. 29.20; न हीदमक्षजज्ञानमात्राभिप्रायम् Kāśi. i. 74.7 (*on* 2.21); ii. 18.3 (*on* 5(1).19)

**अक्षजत्व** (akṣaja-tva) *n.* quality or character of being produced by sensory organs (पुनरिति) पारम्पर्येणाक्षजत्वमस्तीत्येतत्प्रदर्शयितुम् TātpaṬ.(U.) 151.9 (*on* 4.120); अक्षजत्वाभावेन तु सविकल्पकस्यापि स्वसंवित्तौ प्रत्यक्षत्वमिष्टम् TātpaṬ.(U.) 154.11 (*on* 4.134); न खल्वक्षजत्वमात्रं प्रत्यक्षलक्षणम् NyāyRaMā. 58.20; अक्षजत्वं ज्ञानसंनिकर्षयोरस्त्येव NyāySu.(Ja.) 485A.5 (*on* ii. 2.1); YuktiSneha. 43.31 (*on* i. 1.4); MānaMe. 19.9; प्रत्यक्षतदाभासयोरक्षजत्वेन सादृश्यात् Kāśi. ii. 17.7 (*on* 5(1).17); iii. 205.9 (*on* 5(8).29)

**अक्षजनित** (akṣa-janita) *adj.* produced by or resulting from (contact with) the sense-faculties (बौद्धमते) चित्तं न विचारकमक्षजनितमखिलं सविकल्पं स्वांशयति YaśasCam. ii. 388.13.

**अक्षजन्मन्** (akṣa-janman) *adj.* arising out of or produced from (contact with) the sense-organs सेयं ज्वालेति संवित्तेस्तैलवर्तिविनाशजा। अनुमा बाधिका दृष्टा सापेक्षाप्यक्षजन्मनः ĀgaPrā. 63.18.

**अक्षजन्य** (akṣa-janya) *adj.* [*f.* -ā] produced or caused by (contact with) the senses यत्रापि सर्पबाधपूर्वको रज्जुविधिरक्षजन्यस्ताद्दृशवाक्यजन्यो वा तत्रापि स एव न्यायः PañcPā. 13.9 (*on* i. 1.1); तथापि हि याथात्म्यानुभवश्शब्दजन्यो वा अक्षजन्यो वा S'atDū. 188.26; मानं सर्वोपजीव्या…अक्षजन्या मनीषा TattvMu. 4.133.

**अक्षजन्यत्व** (akṣajanya-tva) *n.* the nature of being produced by (contact with) the senses भूप्रदेशग्रहणसापेक्षत्वादभावग्रहणस्य तस्य चाक्षजन्यत्वेन तद्भावभावित्वमन्यथासिद्धम् अभावज्ञानस्य TātpaṬ.(U.) 416.7 (*on* 5(9).27); युगपदादिप्रत्ययानामक्षजन्यत्वकालविषयत्वयोः स्थितत्वात् MānaMe. 190.1.

**अक्षजभ्रम** (akṣaja-bhrama) *m.* erroneous cognition arising from (contact with) the senses असदक्षैरसंयोगि कथं भात्यक्षजभ्रमे IṣṭaSi. 139.7; अतोऽक्षजभ्रमेऽपि सदेव भातीति नियन्तुं न शक्यम् IṣṭaSi. 140.7.

**अक्षजमानत्व** (akṣajamāna-tva) *n.* the validity of the cognition produced by (contact with) the senses एवमक्षजमानत्वसिद्धौ विश्वस्य सत्यताम्। किमिति स्थापयेन्न्यायम् AnuVyā. 17A.1 (*on* 1.4)

**अक्षजय** (akṣa-jaya) *m.* victory over (i. e. subjugation of) the senses किं तद्रसायनं तेनेति पृष्टो मुनिराख्यत…कषायाक्षजयं तथा PārśvC. 6.154.

**अक्षजवत्** (akṣaja-vat) *adv.* like sense-perception तर्हि मद्वाक्यमपि ते मानम् अज्ञातार्थबोधकत्वादक्षजवत् IṣṭaSi. 345.4.

**अक्षजाख्य** (akṣajākhya) *adj.* called latitudinal (i. e. the latitudinal triangles created by different latitudes with the use of the gnomon. This is also called *Akṣakṣetra* अग्राग्रखण्डोनितसंयुतं यच्छङ्कोस्तलं स्याद्भुज एव सोऽत्र। कलामिधं स्याच्छ्रवणश्च ताभ्यां कोटिर्भवेत्षडिरिहाक्षजाख्ये SiddhāTaVi. 180.24.

**अक्षजातिबल** (akṣajātibala) *n.* the extreme or supreme power or strength of sense-perception, (akṣajāti-bala) the strength which comes to the senses by their very nature (?) तर्कैस्सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः। दुरन्तध्वान्तखण्डानामक्षजातिबलं हृतम् GuruCandr. i. 283.20.

**अक्षजादिगम्य** (akṣajādi-gamya) *adj.* comprehensible or known by sense-perception etc. न च तद्भेदोऽन्यतस्सिद्धः। सिद्धश्चेत्, न स शास्त्रगम्यः। अप्राप्ते हि शास्त्रमर्थवत्। न च सोऽक्षजादिगम्यः अयोग्यत्वादित्युक्तम् IṣṭaSi. 242.20; 242.23.

**अक्षजादिगम्यत्व** (akṣajādigamya-tva) *n.* the state of being knowable by sense-perception and other (means of knowledge) जगतोऽक्षजादिगम्यत्वेऽपि ब्रह्मणोऽतद्गम्यत्वात् तयोर्भेदो नाक्षजादिगम्यः IṣṭaSi. 242.23.

**अक्षजादिज्ञान** (akṣajādi-jñāna) *n.* knowledge born or arising from sense-organ and others (i. e. knowledge such as perception etc.) साक्षी… विश्वविषयस्याक्षजादिज्ञानस्यात्यन्तिकं प्रामाण्यं गृह्णन् तदन्तर्गतां विश्वस्याबाध्यतामपि स्थापयेदेव NyāySu.(Ja.) 220A.12 (*on* i. 4.6)

**अक्षजादिज्ञानप्रामाण्य** (akṣajādijñāna-prāmāṇya) *n.* validity of knowledge such as that got through senses and others न साक्षिणोऽनभ्युपगमेऽप्यक्षजादिज्ञानप्रामाण्यमप्रामाणिकं प्रसज्यते NyāySu.(Ja.) 348A.5 (*on* ii. 2.6)

**अक्षजादिप्रमेय** (akṣajādi-prameya) *n.* objects of cognitions produced by sight etc. (i. e. cognitions like sense-perception etc.) अक्षजादिप्रमेयपदपदार्थतत्सबन्धज्ञानाद्यसिद्धेः शाब्दप्रामाण्याद्यप्रसिद्धेः IṣṭaSi. 215.22.

**अक्षजादिविषयावगम** (akṣajādi-viṣayāvagama) *m.* knowledge of objects obtained through senses etc. (आगमेन) युक्तोऽक्षजादिविषयावगमस्य बाधः SaṁkṣeS'ā. 2.123 (ii. 77.8)

**अक्षजादृश्यत्व** (akṣajādṛśya-tva) *n.* non-cognisability through sense-perception पुंसां हि अक्षजादृश्यत्वात्तद्भेदो न तद्दृश्यः IṣṭaSi. 352.21.

**अक्षजित्** (akṣa-jit) *adj.* who has conquered (i. e. subdued) one's senses दिव्यहेतेरक्षामामक्षमां वः क्षपयतु भवतामक्षजिल्लक्ष्(? क्ष्य)मक्षम् SudarS'. 74.

**अक्षजीवा** (akṣa-jīvā) *f.* the sine of the latitude इष्टोत्तरगोलापक्रमांशकज्यां खभास्कराभ्यस्ताम्। हृत्वाक्षजीवया तच्चापादुदयेन यत्कालः PañcSi. 4.32; लम्बाक्षजीवे विषुवच्छायाद्वादशसङ्गुणे। क्रान्तिज्याप्ते तु तौ कर्णौ सममण्डलगे रवौ SūrySi. 3.25; कोटिभुजघ्ने गज्ये श्रुतिभक्ते लम्बकाक्षजीवे स्तः ĀryaSi. 4.8(69); लम्बज्यका कोटिरथाक्षजीवा भुजोऽत्र कर्णस्त्रिभुजे त्रिभज्या। कुज्या भुजः कोटिरपक्रमज्या कर्णोऽग्रका च त्रिभुजं तथेदम् GrahaGa. 72.16 (9.14); 82.32 (9.46); ज्या वित्रिभाङ्गापमजाक्षजीवा चाङ्गद्युमौर्व्या विहृता त्रिमौर्व्या। गुण्या तयोश्चापसुसंस्कृतेश्च दृक्षेपचापं स्वदिशि स्फुटं स्यात् SiddhāTaVi. 176.13.

**अक्षजीवाभक्त** (akṣajīvā-bhakta) *adj.* (*f.* -ā] divided by the sine of the latitude त्रिज्यापमज्याहतिरक्षजीवाभक्ता नरः स्याच्च ततोऽस्य दृग्ज्या SiddhāTaVi. 366.7.

**अक्षजीवावर्ग** (akṣajīvā-varga) *m.* square of the sine of the latitude नतासुकोटिज्यकया विनिघ्नी लम्बज्यका भाज्य इहोद्धृतोऽसौ। त्रिभज्यया तत्कृतिरक्षजीवावर्गेण युक्ता हरसंज्ञकः स्यात् SiddhāTaVi. 368.13. cf. **अक्षज्यावर्ग**

**अक्षजीवाहत** (akṣajīvā-hata) *adj.* multiplied by the sine of the latitude अक्षजीवाहतः शङ्कुरिष्टकालसमुद्भवः। भाजितो लम्बकेनाथ शङ्क्वग्रं नित्यदक्षिणम् MaBhāsk. 3.54; अक्षजीवाहतश्शङ्कुर्लम्बकेन समुद्धृतः। अस्तोदयाग्ररेखायाः शङ्क्वग्रं नित्यदक्षिणम् LaBhāska. 3.16.

**अक्षजीविन्** (akṣa-jīvin) *adj.* who makes a livelihood by playing dice (i. e. gambler) चौरिकश्चाक्षजीवी च Vaija. 140.59.

**अक्षज्ञ** (akṣa-jña) *adj.* who knows (the art or skill in gambling with) dice आह्वयिष्यति मां पुनः। अक्षज्ञः MahāBhā. iii. 78.14; यदा सभायां कौन्तेयमनक्षज्ञं युधिष्ठिरम्। अक्षज्ञः शकुनिर्जेता तदा धर्मः क्व ते गतः MahāBhā. viii. 67.3; iii. 63.21; एतस्मिन्नन्तरे प्रायादक्षज्ञस्तत्र नारद। विश्वावसुरिति ख्यातो गन्धर्वाणां महेश्वरः BrahmP. 171.14.

1**अक्षज्ञान** (akṣa-jñāna) *n.* **i** knowledge through (divine) senses, divine perception अक्षज्ञानं जिनक्षेत्रशुद्धिर्मायोपमा स्थितिः। संचिन्त्य च भवादानमिदं कर्माष्टधोदितम् AbhiSaAlan. 1.67; **ii** cognition through sense organs, perceptual cognition अक्षज्ञानेऽपि तत्तुल्यमनुमानं तदिष्यते। ततः संभाव्यते शब्दः सत्यार्थप्रत्ययान्वितः NyāyVi. 2.207; अक्षज्ञानमनेकान्तमसिद्धेरत्प-(? प) राकृतेः। स्पष्टं संनिहितार्थत्वाद्भावनातो निवर्तते PramāSam. 3.4.

2**अक्षज्ञान** (akṣa-jñāna) *n.* knowledge of (gambling with or casting of) dice तुभ्यमक्षज्ञानं ददाम्यहम्। येन वश्या भवन्त्यक्षाः संख्याज्ञानं च जायते KathāSaSāg. ix. 6.377.

**अक्षज्ञानगोचर** ( akṣajñāna-gocara ) *adj.* amenable to sense-cognition समानं तत्र यद्रूपं तदक्षज्ञानगोचरम् । एकाकारमतो ज्ञानमणुष्वेवोपपद्यते TattvSaṁ. 1982.

**अक्षज्ञानजित** ( akṣajñāna-jita ) *adj.* conquered through (i. e. defeated by) the knowledge of dice अक्षज्ञानजितं विधाय विनतं तं पुष्कराख्यं पुनः । धर्मात्मा कृतसंविभागमनुजम् ··· राज्यं स्वं दमयन्त्यवाप्तिसुखितो भेजे यथावन्नलः KathāSaSāg. ix. 6. 416.

**अक्षज्ञानप्राप्ति** ( akṣajñāna-prāpti ) *f.* acquisition or attainment of the knowledge of (the secret of) dice अस्याग्रे विराटपर्व भविष्यति···अस्मिन्पर्वणि··· वृत्तान्ताः···अक्षज्ञानप्राप्तिः MahāBhā. iii. 299. col. 25.

**अक्षज्ञानानुज** (akṣajñānānuja) *adj.* which arises after sense-perception अक्षज्ञानानुजं स्पष्टं तदनन्तरगोचरम् । प्रत्यक्षं मानसं चाह भेदस्तत्र न लक्ष्यते NyāyVi. 2. 157.

**अक्षज्ञानोद्भवत्व** ( akṣajñānodbhava-tva ) *n.* state of arising from the cognition of the sense-organ तथाप्यक्षलिङ्गकेऽनुमानेऽतिव्याप्तिरिति चेत् । न । तस्याक्षज्ञानोद्भवत्वेनाक्षमात्रोद्भवत्वाभावात् NyāySu.(Ja.) 254B. 4 (*on* ii. 1. 2)

**अक्षज्यका** ( akṣajyakā ) *f.* cf. **अक्षज्या,** sine of the latitude अक्षज्यका कोटिगुणा भुजाप्ता लम्बज्यका वाक्षगुणोऽन्यथातः GrahaGa. 73. 29 (9. 19); त्रिज्याक्षभाघ्नी स्वदिगंशमौर्व्या हृताक्षभां तां परिकल्प्य साध्या । अक्षज्यका तद्गुणितापमज्या स्वाक्षज्ययाप्तास्थ तयोस्तु चापे SiddhāTaVi. 364. 4; 365. 19; 371. 20.

**अक्षज्या** ( akṣa-jyā ) *f.* sine of the latitude इष्टापक्रमगुणितामक्षज्यां लम्बकेन हृत्वा या । स्वाहोरात्रे क्षितिजा क्षयवृद्धिज्या दिननिशोस्सा Āryabh. 4. 26 (87); सममण्डलचन्द्रोदयन्त्रच्छेद्यानि शाङ्कवच्छाया । उपकरणाद्यक्षज्यावलम्बकापक्रमाद्यानि PañcSi. 1. 7; 4. 22; 4. 28; अक्षज्यया हरेल्लब्धः शङ्कुः स्यात् सममण्डले । तद्वर्गव्यासकृत्योस्तु विश्लेषे यत् पदं प्रभा MaBhāsk. 3. 38; 3. 39; शङ्कुच्छायाहते त्रिज्ये विषुवत्कर्णभाजिते । लम्बाक्षज्ये तयोश्चापे लम्बाक्षौ दक्षिणौ सदा SūrySi. 3. 14; 3. 16; 4. 24; शङ्कुर्लम्बच्छायाक्षज्या तद्वर्गसंयुतेर्मूलम् । विषुवति विषुवत्कर्णः छाया कर्णोऽन्यदा शङ्कुः BrāhmSphuSi. 3. 7; 3. 10; 3. 11; 3. 51; 11. 34; दृष्ट्वा विषुवच्छायां लम्बाक्षज्ये करोति यो बहुधा । मध्यच्छायार्कज्ञोऽक्षांशान् यो वेत्ति गणकः सः BrāhmSphuSi. 15. 4; उदयेऽस्तमये वाग्रां वेत्ति दिनार्धे नतोन्नतज्ये यः । ताभिर्विषुवच्छायाक्षज्यालम्बान् स तन्त्रज्ञः BrahmSphuSi. 15. 16; विषुवत्कर्णविभक्ते शङ्कुच्छायाहते पृथक् त्रिज्ये । लम्बाक्षज्ये चापं विषुवज्ज्यायाः स्वदेशाक्षः KhaṇḍKhā. 3. 11; अक्षज्या वा बाहुः कोटिर्लम्बज्यका श्रुतिर्ज्या ĀryaSi. 4. 5(69); भुजोऽक्षज्या तथा लम्बज्यका कोटिस्त्रिभज्यका । कर्णं इत्यक्षजं जात्यमुक्तं क्षेत्रं सनातनम् SiddhāTaVi. 179. 15; अथवाक्षज्योना यदा क्रान्तिः सौत्रिज्ययागताम् ( v. l. सौम्यान्तां त्रिज्यया हताम् ) । अक्षज्यया विभज्याप्त( ? प्तिः ) शङ्कुः स्यात् सममण्डले S'ilpaRa. i. 11. 14.

**अक्षज्याकर्ण** ( akṣajyā-karṇa ) *m.* sine of the latitude being the hypotenuse उपवृत्तव्यासार्धकर्णे अयं भुजस्तदाक्षज्याकर्णे कः SiddhāTaVi. App. 33. 4.

**अक्षज्याक्षुण्णविग्रह** ( akṣajyākṣuṇṇa-vigraha ) *adj.* [*f.* -ā] whose figure is multiplied by the sine of the latitude (i. e. the product obtained by multiplying the *vikṣepajyā* by the sine of the latitude) विक्षेपज्यां क्षपाभर्तुरक्षज्याक्षुण्णविग्रहाम् । लम्बकेन हरेल्लब्धं विशोध्यं तत्स्फुटेन्दुतः LaBhāska. 6. 1.

**अक्षज्याघ्न** ( akṣajyā-ghna ) *adj.* multiplier of the sine of the latitude (i. e. multiplied by the sine of the latitude) अक्षज्याघ्नः परक्रान्त्या हृतः शङ्कुः स दोर्गुणः । तच्चापमेव भानुः स्यात् S'ilpaRa. i. 11. 15.

**अक्षज्यापरिणत** ( akṣajyā-pariṇata ) *adj.* [*f.* -ā] (the value) converted in terms of the sine of the latitude समवृत्तेऽक्षवृत्ते च तैरेव स्यान्नतं ध्रुवात् । समवृत्तनतांशज्याक्षज्यापरिणताक्षजम् । द्युज्याग्रे वलनं प्राग्वत् त्रिज्याग्रे परिणाम्यते Golā. 226. 9 (26. 64)

**अक्षज्यावर्ग** ( akṣajyā-varga ) *m.* square of the sine of the latitude लम्बाक्षज्यावर्गं प्रोह्य त्रिज्याकृतेः पदं वान्या । अन्यत्र सर्वदोन्नतनतजीवांशानयनमेवम् BrāhmSphuSi. 3. 12; तद्वर्गं ( शङ्कुच्छायावर्गं ) व्यासार्धवर्गहते छायाशङ्कुवर्गयोगेन विभजेत् लब्धमक्षज्यावर्गः ViṣṇuDhaP. 2. 168 (296B. 10); ऊर्ध्वपक्षेऽव्यक्तवर्गस्थानेऽक्षज्यावर्गः SiddhāTaVi. App. 42. 2.

**अक्षज्याशङ्कुवध** ( akṣajyāśaṅku-vadha ) *m.* product of the sine of the latitude and the sine of the altitude अक्षज्याशङ्कुवधाल्लम्बकलब्धोदयास्तमयसूत्रात् । दक्षिणतः शङ्कुतलं दिवसे रात्रौ तदुत्तरतः BrāhmSphuSi. 3. 65.

**अक्षज्योतिस्** ( akṣa-jyotis ) *n.* sensual perception अक्षज्योतिः ऐन्द्रियकं दर्शनम् ManuBh. ii. 472. 5 (*on* 12. 72)

**अक्षज्योन** ( akṣajyona ) *adj.* [*f.* -ā] reduced by the sine of the latitude अथवाक्षज्योना यदा क्रान्तिः सौत्रिज्ययागताम् । अक्षज्यया विभज्याप्त( ? प्तिः )शङ्कुः स्यात् सममण्डले S'ilpaRa. i. 11. 14.

[1]**अक्षण** ( a-kṣaṇa ) *m. n.* **1** inopportune birth [DBHS.] साधिकरणोऽयशस्वी परत्र संजायतेऽक्षणेषु स च । प्राप्ताप्राप्तविहीनो मनसि महद्दुःखमाप्नोति MaYānaSū. 123. 12 (17. 26); **2** *m.* prohibited or improper time तदेवाक्षणगृहीतायामार्यायां विद्यात् ArthS'ā. [Ed. KANGLE] iv. 9. 26; **3** *m.* absence of time शुद्धान्तान्तर्वधूसक्ते त्वय्यपीक्षितुमक्षणः ( v. l. अक्षमः ) PrabhāC. 142. 2; **4** *adj.* who has no time ( प्राचां ) अक्षणः GaṇRa. 2. 136 (174)

[2]**अक्षण** ( a-kṣaṇa ) *adj.* not decaying, indestructible फलमस्य भवेत्···। कैवल्यं प्रमिताशेषपदार्थं ज्योतिरक्षणम् MahāP. 21. 186; *n.* a rampart कोटो वप्रोऽस्त्रियां सालः प्राकारो वरणः पुमान् । अस्त्री दुर्गोऽक्षणं क्लीबे पुनरावेष्टकः पुमान् KalpaK. 11. 30.

**अक्षणक** ( akṣaṇa-ka ) *adj.* who has no time अविद्यमानः क्षणो यस्य सोऽक्षणकः GaṇRa. 2. 136 (174)

**अक्षणक्षय** ( akṣaṇa-kṣaya ) *m.* extinction of (the eight kinds of) inopportune births रूपादिभ्यो निवृत्तिश्च विचिकित्साक्षणक्षयौ । आत्मना कुशलस्यस्य परेषां तन्नियोजनम् AbhisaAlaṅ. 4. 40.

**अक्षणगृहीत** ( akṣaṇa-gṛhīta ) *adj.* [*f.* -ā] arrested (while moving) at the prohibited time (of night) ( संरुद्धस्य वा तत्रैव घातः ) तदेवाक्षणगृहीतायामार्यायां विद्यात् ArthS'ā. [Ed. KANGLE] iv. 9. 26.

**अक्षणताडन** ( akṣaṇa-tāḍana ) *n.* fine for (movement at) the wrong or improper period (of the night) तूर्यशब्दे राज्ञो गृहाभ्याशे सपादपणमक्षणताडनम् ArthS'ā. i. 355. 7 (2. 36)

**अक्षणदा** ( a-kṣaṇadā ) *adj.* (*f.*) not giving pleasure क्षणदासावक्षणदा वनमवनं व्यसनमव्यसनम् । बत वीर तव द्विषताम् KāvyPra. 157. 1. *f.* not a night, KāvyPra. 157. 1.

**अक्षणद्विगुण** ( akṣaṇa-dviguṇa ) *adj.* double (the amount of fine fixed for movement) at an improper time (i. e. during prohibited hours of night) रक्षिणामवार्यं वारयतां वार्यं चावारयतामक्षणद्विगुणो दण्डः ArthS'ā. i. 357. 1 (2. 36)

**अक्षणनीय** ( a-kṣaṇanīya ) *adj.* not to be cut, not to be injured क्षणमक्षणनीयेषु वनेषु कृतविश्रमः । प्राप्तक्षण इवान्यत्र व्याप सोऽम्भःप्लवः क्षणात् MahāP. 13. 147.

**अक्षणरुचि** ( a-kṣaṇaruci ) *adj.* causing loss of taste (for food) even for a moment दीर्घरोगस्य···अक्षणरुचेः···विदुषामपि हृदयानि नालं सोढुमापातम् HarṣaC. 336. 6 ( comm. न विद्यमाना क्षणमपि रुचिः भोजनाभिलाषः )

**अक्षणविज्ञानविषयता** ( akṣaṇavijñānaviṣaya-tā ) *f.* state of being the object of non-momentary knowledge भेदस्त्वन्याप्येक्षयेति नाक्षणविज्ञानविषयतामुपयाति NyāyMañ. ii. 94. 11.

**अक्षणवेध** ( akṣaṇa-vedha ) *m.* the art of piercing the target (unerringly) [DBHS]

**अक्षणवेधित्व** ( akṣaṇavedhi-tva ) *n.* the state or art of being an *akṣaṇavedhin* [DBHS]

**अक्षणवेधिन्** ( akṣaṇa-vedhin ) *adj.* having the art of hitting the bull's-eye [DBHS]

**अक्षणिक** ( a-kṣaṇika ) *adj.* **A** not having (even) a moment's leisure, completely engrossed असत्पक्षाक्षणिकातिदंभपारुष्यसाधनाः । भवन्त्यनाप्ताः स्वे तन्त्रे प्रायः परविकत्थकाः । तान् ···वर्जयेत् CaraS. i. 30. 77 (1922 Ed.); ( राज्यश्री ) जगाम···उपाध्यायोपधीयमानेन्धनधूमायमानाग्निसंधुक्षणाक्षणिकोपद्रष्टृद्विजाम्···वेदीम् HarṣaC. 207. 16; GaṇRa. 2. 136 (174); ये कैवल्यमसंप्राप्ता ये चातीताश्च मूढताम् । त्रैवर्गिका ह्यक्षणिका आत्मानं घातयन्ति ते BhāgP. xi. 5. 16; **B** non-momentary, perpetual नित्यत्वं च केषांचिद्भावानामक्षणिकस्य वस्तुधर्मातिक्रमादयुक्तम् PramāVāSvopVṛ. 117. 13; क्षणावस्थितरूपं हि वस्तु क्षणिकमुच्यते । स्थिररूपसमाक्रान्तं वस्त्वेवाक्षणिकं पुनः TattvSaṁ. 387; ( सन्तानः ) अक्षणिकस्त्वथ । सिद्धान्तहानिः S'lokaVār. 5 (17). 40 (698. 5); चित्रमक्षणिकस्यापि तत्क्रियां प्रति संयुगे । पर्याप्त( ? य )यौगपद्याभ्यां यद्विरोधोऽस्य नाभवत् HarVi. 43. 185; न चान्यदक्षणिकं वस्त्विष्टम्, इष्टं चेत्, दर्शनहानिः IṣṭaSi. 54. 9; कथमक्षणिकेषु क्रमयौगपद्याभ्यामर्थक्रियाविरहः PrakaPañ. 366. 19; 371. 15; कथं पुनः सन्मात्रानुबन्धिनी क्षणिकता, अक्षणिकस्य सत्तानुपपत्तेः ĀtmaSi. 69. 7; असन्मते त्वक्षणिकं चित्तम् TattvVai. 36. 28 (*on* 1. 32); चित्तसंताने त्वनादावक्षणिके···एकाग्रताधास्यते TattvVai. 37. 13 (*on* 1. 32); तादात्म्यं विपक्षेऽक्षणिके···निश्चीयते TātpaṬ.(Vā.) 159. 12 (*on* i. 1. 5); ते ह्यक्षणिकान्निवृत्ते स्वव्याप्तां सत्तामपि ततो निवर्त्य क्षणिककोटिं सत्तां नीत्वा तत्कोटिव्याप्तां कुरुतः NayaVi. 247. 8 (*on* i. 1. 8); अक्षणिकस्य च कार्यारम्भानुपपत्तिः NyāyRa. 265. 16 (*on* 5(2). 194); एतेन नित्यानामात्मादीनामक्षणिकानां घटादीनां क्रमेण कार्यकरणं प्रत्युक्तम् TarkBhā.(Mo.) 32. 5; चिन्तयन्तो यतः कान्तां नित्यमक्षणिका वयम्

Pañcā. 48. 14; वक्त्रस्याक्षणिकोऽधिवासनविधिः कान्ते प्रिये नाभवत् SaduktiKa. 188. 24; सर्वं क्षणिकं सत्त्वात् । अक्षणिके क्रमयौगपद्याभ्यामर्थक्रियाविरोधात् Syādvā-Mañ. 26. 18; यदक्षणिकं तदसत् यथा शशविषाणम् NyāySiA. 189. 16; न चायमसिद्धो हेतुः।…व्यापककमाक्रमव्यावृत्तावक्षणिकात्सत्त्वव्यावृत्तेः सिद्धत्वाच्च SarvaDaSaṁ. 2. 52; भेदपक्ष आगन्तुकस्यैव तस्य कारणत्वं स्यात् । न भावस्याक्षणिकस्य । आगन्तुकातिशयान्वयव्यतिरेकानुविधायित्वात्कार्यस्य SarvaDaSaṁ. 2. 76; यत्सत्तदक्षणिकं यथाकाशम् TattvPrakā. 102A. 4 (*on* ii. 2. 24); **C** not taking delight, HarVi. 43. 185.

**अक्षणिकतासिद्धि** (akṣaṇikatā-siddhi) *f.* establishment of non-momentariness प्रत्यभिज्ञादाढ्यात् क्षणिकतानुमानादाढ्याच्चाक्षणिकतासिद्धेः NayaVi. 104. 6 (*on* i. 1. 5)

**अक्षणिकत्व** (akṣaṇika-tva) *n.* the state of not being momentary, perpetuality अक्षणिकत्वे किं प्रमाणम् NyāyVār. 420. 19 (*on* iii. 2. 14); क्षणिकत्वादतीतस्य दर्शने च न संभवः । वाच्यमक्षणिकत्वे स्याल्लक्षणं सविशेषणम् PramāVār. 2. 240; अत्यन्तासतोऽपि च लाक्षणिको विरोधः प्रतीयते यथा क्षणिकत्वेनाक्षणिकत्वस्य HetuBiṬ. 7. 15; कृतकाकृतकत्वेन द्वैराश्यं कैश्चिदिष्यते । क्षणिकाक्षणिकत्वेन भावानामपरैर्मतम् TattvSaṁ. 352; तावत्कालप्रतीक्षणादक्षणिकत्वम् NyāyMañ. ii. 27. 19; अक्षणिकत्वे तु न क्रमसंभवः NyāyKa. 73. 23; प्रयोगमप्यक्षणिकत्वे श्रोत्रस्य दर्शयति NyāyRa. 766. 18 (*on* 6. 142); प्रत्यभिज्ञानाच्च घटादेरक्षणिकत्वम् VedāntDī. 108. 4 (*on* ii. 2. 25 [? 24]); यद्दृश्यते तत्प्राप्यतेऽपि । अक्षणिकत्वात् TarkBhā.(Mo.) 2. 3; अथाक्षणिकत्वं, सुस्थितः पर्यायैकान्तवादः PramāMī. i. 1. 32 (26. 26); अक्षणिकत्वे सत्तायाः बाधकप्रमाणप्रवृत्तेः सत्तानुबन्धसिद्धिरिति भावः YuktiSneha. 143. 32 (*on* i. 1. 6); LaCandr. 370. 14; क्षणिका भावाः सत्त्वात् इत्यत्राक्षणिकत्वेऽपि सत्त्वस्य बाधाभावात् विपक्षवृत्तिः शङ्किता भवति MānaMe. 76. 3.

**अक्षणिकत्वपक्ष** (akṣaṇikatva-pakṣa) *m.* the view, which does not accept momentariness (of things), which believes in perpetuality भावोद्याङ्गीकारे चाक्षणिकत्वपक्षपरिक्षयः PrakaPañ. 367. 13; 368. 19; न च उक्तावस्थितिसामान्याभावस्येव कपालादिप्रपञ्चनाशस्यापि ज्ञानोत्पत्तिक्षणे द्वितीयक्षणे वा ज्ञानस्याक्षणिकत्वपक्षे उत्पन्नत्वेन प्रपञ्चसमानकालीनत्वं स्वीकृत्य ज्ञानप्रयुक्तत्वमुच्यतामिति वाच्यम् LaCandr. 162. 20.

**अक्षणिकत्वप्रसङ्ग** (akṣaṇikatva-prasaṅga) *m.* the contingency of being what is not momentary अनुपकारिणि चापेक्षाभावादक्षणिकत्वप्रसङ्गः Bhām. 434. 16 (*on* ii. 2. 26); सापेक्षतायां चाक्षणिकत्वप्रसङ्गः VedāntKa. 283. 13.

**अक्षणिकत्ववादिन्** (a-kṣaṇikatvavādin) *adj.* who upholds the theory of non-momentariness or of stability अक्षणिकत्ववादिना स्थिरसिद्धौ प्रमाणत्वेनोपन्यस्तत्वात् KhaṇḍanKhā. 317. 5.

**अक्षणिकत्वव्यावृत्ति** (akṣaṇikatva-vyāvṛtti) *f.* non-existence or absence of non-momentariness बाधकादक्षणिकत्वव्यावृत्त्यसत्वव्यावृत्त्योर्व्याप्तिग्रहणम् NyāyKa. 76. 13.

**अक्षणिकत्वसिद्धि** (akṣaṇikatva-siddhi) *f.* establishment of non-momentariness प्रत्युत सत्त्वादक्षणिकत्वसिद्धेर्विरुद्धोऽयं हेतुः NyāyMañ. ii. 29. 14; इति पूर्वापरकालयोरेकत्वावगमादक्षणिकत्वसिद्धेः MānaMe, 198. 8.

**अक्षणिकवादिन्** (a-kṣaṇikavādin) *adj.* opponent of the theory of momentariness (of things) इदं तावदयमक्षणिकवादी प्रष्टव्यः। कस्माद्भवाननित्यत्वमिच्छति न संस्काराणां क्षणिकत्वं नेच्छतीति MaYānaSū. 154. 8 (18. 91); Sphuṭā. iv. 2. 12 (*on* 4. 2); KhaṇḍanKhā. 1204. 15.

**अक्षणिकव्यावृत्ति** (akṣaṇika-vyāvṛtti) *f.* the exclusion of non-momentary (things) न त्वक्षणिकव्यावृत्त्या क्षणिकपदामिलाप्येऽवस्तुमात्रव्यावृत्त्या च वस्तुमात्र इति DharmoPra. 59. 9.

**अक्षणिकात्मसिद्धि** (akṣaṇikātma-siddhi) *f.* establishment of the non-momentary (nature of the) soul तथा स्मृतिरिच्छावदनुभूतविषयेति ततोऽप्यक्षणिकात्मसिद्धिः NayaVi. 212. 6 (*on* i. 1. 5)

**अक्षणिकार्थक्रिया** (akṣaṇikārthakriyā) *f.* purposeful action of or in non-momentary thing तस्योत्तरमक्षणिकार्थक्रियामुपपादयन्तो वक्ष्यामः TātpaṬ. (Vā.) 548. 10 (*on* iii. 2. 14)

**अक्षणिवाप** (akṣa-ṇivāpa) *m.* dice-keeper स्फ्यं प्रयच्छति ब्रह्मा यजमानाय…सेनानीप्रभृतय आक्षणि(? नि)वापात् MānS'S. 189. 9.

**अक्षण्वत्** (akṣaṇ-va(n)t) [Alt. Gr. II. 2. p. 889 cf. P. viii. 2. 16] **1A** endowed with eyes स्त्रियः सतीः…पश्यदक्षण्वान् ṚV. i. 146. 16; अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः ṚV. x. 71. 7; अक्षण्वते स्वाहानक्षिकाय स्वाहा TaiS. VII. v. 12. 1; पश्यदक्षण्वान्न विचेत-(? विचेत-) दन्धः TaiĀ. i. 11. 4 (90. 1); (अक्षण्वन्तः) अक्षिमन्तः Nir. 1. 9 (34. 16); यदि परादिर्वत्वस्य प्रतिषेधो वक्तव्यः । अक्षण्वान् । मादुपधायाश्च मतोर्वोऽयवादिभ्यः इति वत्वं प्राप्नोति MahāBh. iii. 397. 10 (*on* P. viii. 2. 16); अवग्रहश्चानिष्टे देशे प्राप्नोति । अक्षण्वान् (अक्षऽण्वान्) MahāBh. iii. 397. 12 (*on* P. viii. 2. 16); । ह्रस्वान्तादन्तोदात्तान्नुटश्च परो मतुबुदात्तो भवति ।…नुटः खल्वपि अक्षण्वता KāśiVṛ. *on* P. vi. 1. 176; अनन्तादुत्तरस्य मतोर्नुडागमो भवति छन्दसि विषये । अक्षण्वन्तः कर्णवन्तः सखायः KāśiVṛ. *on* P. viii. 2. 16; अक्षण्वतेति । अक्षमस्यास्तीति मतुप् Nyās. ii. 311. 17 (*on* P. vi. 1. 176); अक्षण्वतां फलमिदं न परं विदामः BhāgP. x. 21. 7; AnuVyā. 56A. 1 (*on* 3. 4); NyāySū. (Ja.) 578B. 2 (*on* iii. 4. 4); Prasā. ii. 755. 21; **1B** having (eye-like) spot अविभक्तावपि दृश्यते अक्षण्वता लाङ्गलेन KāśiVṛ. *on* P. vii. 1. 76; **2** having sense organs (including eyes), having eyes (and other sense organs) अक्षण्वतामधिपतिस्ताभ्यां याति BhāgP. iv. 25. 54; (अक्षण्वतामिन्द्रियवताम् comm. of S'rīdhara)

**अक्षण्वत्** (a-kṣaṇvat) *adj.* without causing injury, not injuring नापितं शिष्यात्…अक्षु(? क्ष)ण्वन् कुशलीकुर्विति ĀśvaGS. i. 7. 16; नापिताय क्षुरं प्रयच्छति…अक्षु(? क्ष)ण्वन् परिवपेति PāraskaraGS. ii. 1. 20; अथ नापितं समादिशत्यक्षण्वन् वप KauśiSū. 54. 1; VīraMi.(Saṁskāra.) 560. 13.

**अक्षत** (á-kṣata) *adj.* [*f.* -ā] [optionally lengthens its final vowel before *karṇa* in the SV. e. g. अक्षतकर्णी, अक्षताकर्णी ṚTPrāti. 2. 7] **1** uninjured, unhurt, safe **2** unmitigated, unbounded, inexhaustible **3** unbroken, undamaged, whole, continuous **4** ungoaded, unurged, not compelled **5** unpunished **6** unsullied, unspoiled, unsplit **7** intact, not cut off, unconfiscated **8 i** unmarred, undisturbed, full **ii** perfect in, not deficient in **9** usual, constant, common **10** uninfluenced, uninvited by **11** unrefuted, unaffected, uninterrupted, unhampered **12** flawless, unperforated **1** uninjured, unhurt, safe दश मासाञ्छशयानः कुमारो अधि मातरि । निरैतु जीवो अक्षतो जीवो जीवन्त्या अधि ṚV. v. 78. 9 अहमस्मि सपत्नहेन्द्र इवारिष्टो अक्षतः ṚV. x. 166. 2; असपत्नः सपत्नहेन्द्र इवारिष्टो अक्षतः AV(P.) xiii. 3. 11; अजीतोऽहतो अक्षतोऽध्यष्ठां पृथिवीमहम् AV. xii. 1. 11; पतनादभिघाताद्वा शूनमङ्गं यदक्षतम् । शीतान् प्रदेहान् सेकांश्च भिषक् तस्यावचारयेत् SuśruS. iv. 3. 47 = BhāvPra. (Bhā.) viii. 48. 50; अक्षतः क्षपयित्वारीन्…आनयामास काश्यस्य सुताः MahāBhā. i. 96. 43; अक्षतेन शरीरेण तस्थौ गिरिरिवाचलः MahāBhā. iii. 40. 27; v. 16. 28; रणात् प्रतिनिवृत्तोऽयमक्षतो मधुसूदनः HariVaṁ. 95. 7; कुमारमक्षं प्रसमैक्षताक्षतम् Rāmā. v. 45. 1; स्थातुं नियोक्तुर्न हि शक्यमग्रे विनाश्य रक्ष्यं स्वयमक्षतेन RaghuVa. 2. 56; उपचारपदं न चेदिदं त्वमनङ्गः कथमक्षता रतिः KumāSam. 4. 9 = SūktiRa. 151. 11; सूर्यस्तूर्णं रथेन तु । भद्रैस्तैरक्षतैरश्वैः सर्पतेऽसौ VāyuP. i. 52. 43; पञ्चाक्षतास्ते वयम् VeṇiSaṁ. 6. 659; अव्रणमक्षतम् ĪśopBh. 13. 6 (*on* 8); दन्ताली संततं सा नतिनुतिनिरतानक्षतान् रक्षतान्नः ViṣṇuPādāSt. 36; राजन् क्षमासिन्धुरसि क्षणार्धमप्यक्षतः संसदि ते यदासि RāmC. 23. 60; 31. 6; अस्ति सेतुस्तथैवासावस्ति मारुतिरक्षतः RāmC. 31. 83; तद्भग्नमानानपि गृध्यतोऽज्ञाञ्छ्नेऽक्षतः शस्त्रभृतः स्वशस्त्रैः BhāgP. iii. 3. 4; (नन्दः…बालम्) अक्षतं च समालोक्य निजभाग्यमतर्कयत् ĀdiP. 29. 49; दिष्ट्या कायस्थवागुरादतीतं भवन्तमक्षतं पश्यामि PādaTā. 29. 3; UdaySuKa. 90. 4; एतत्तु कुशलं यत्त्वमक्षतः पुनरीक्षितः KathāSaSāg. vi. 1. 179; viii. 6. 28; ix. 3. 180; तपसश्चास्य माहात्म्यात्तत्क्षणं प्राग्वदक्षतम्। शरीरमभवत्तस्य KathāSaSāg. xii. 5. 276; यम्…कीर्तिनिर्मलधृताक्षतदेहम्। …श्रीः सदा न हि मुमोच EI. xiv. 300. 22; द्वन्द्वयुद्धे जयेच्छत्रुं परेण स्वयमक्षतः ĪśānS'iPa. i. 52. 106; DvyāśraKā. 5. 123; Surath. 15. 35 दृग्गोचरं तस्य गता मुरारेः किमक्षता याति कुरङ्गजातिः MohaRāPa. 5. 58; देवाः… । अक्षतास्ते कृताः सद्यो दस्राभ्यामद्भुतं महत् BhāvPra. (Bhā.) 1. 10; VetāPañ. (Jam.) 10. 22; Nārāy. ix. 35. 7; **2** unmitigated, unbounded, inexhaustible समुद्रोऽस्यक्षतो अपरिमितः AV.(P). xvi. 34. 5; यासां पयो अक्षतमक्षतानां ता (न आपो राजसूया अवन्तु) AV.(P.) xiv. 1. 10; यथारूपः शतधारः सहस्रधारो अक्षतः। एवा मे अस्तु धान्यं सहस्रधारमक्षतम् AV.(P.) v. 30. 4; यावन्त्यस्य लोमानि…तावतीरस्य धाराः(:) समुद्रस्येवाक्षताः AV. (P.) xvi. 100. 12; भुवनमसि साहस्रमिन्द्राय त्वा सृमोऽददादक्षतमरिष्टमिलान्दम् (comm. अक्षतमक्षीणम्) MantrBr. i. 8. 5; तस्मै मे भोगान् धुक्ष्वाक्षतान् बृहन् MantrBr. ii. 4. 6 **3** unbroken, undamaged, whole, continuous आचान्तमुत्थाप्योत्तरतोऽग्नेः प्राचो दर्भानास्तीर्य तेष्वक्षतमश्मानमत्याधाय JaimiGS. 1. 12 (10. 16); यवैः सिद्धार्थकैर्लाजैरक्षतैः शालितण्डुलैः … एतैर्द्रव्यैर्युतं कुर्याद्देवतानां निवेशनम् NāṭyaS'ā. 3. 20; JānaHa. 9. 40; तेषां वैरिभिरक्षतः कथमसौ संधास्यते राक्षसः MudrāRā. 6. 8; KalyāKā. 8. 50; इत्युक्त्वा चिन्तयित्वाशु स यथावृत्तमक्षतम्। स्मृतवान् सायमह्नीव समाचरितमात्मनः YogVā. vi(2). 93. 30; अव्यङ्गे चाक्षते पूर्णे मुनेरङ्गिरसः सुते । इष्टके त्वं प्रयच्छेष्टं प्रतिष्ठां कारयाम्यहम् AgniP. 41. 17; BrahmVaiP. iii. 4. 54; मुक्त्वा संकल्पयेत् प्राग्वत् द्वादशीमक्षतां नृप VarāP. 55. 3; अक्षतेनैव वर्मणा PauṣkS. 30. 76 = PāraS. 12. 266; तद्बिम्बमक्षतं स्नाप्य PāraS. 19. 56; PāñcaRā (Ha.) i. 12. 8; हुनेदेधोभिरक्षतैः PāñcaRā. (Nā.) iii. 14. 69;

अहो धनुषि नैपुण्यं मन्मथस्य···। शरीरमक्षतं कृत्वा भिनत्त्यन्तर्गतं मन: SubhāRaK. 14.8; DvyāśraKā. 20.92; करोति यत् कीर्तिसुभिक्षमक्षतम् S'riKaC. 3.17; वैताढ्यकन्दरादाढ्यकुटीगर्भादिवाक्षता: । ···निरीयु: स्यन्दना अपि TrisaS'aPuC. i. 4.333; संधौ वा विग्रहे वापि मयि दूते दशाननी। अक्षता वा क्षता वापि क्षितिपीठे लुठिष्यति Dūtāṅg. 10; CaturCin. ii(1). 466.8; घटमक्षतमव्रणम् । कारयेद्देवताप्रीत्यै MahNirvāT. 5.183; 9.74; आयुधानि पुनरक्षतानि व: सन्तु Yādavā. 17.128; S'ārṅgaPa. 1776; धवलाक्षतमाल्यधृत् EI. xvi. 349.33; शूरस्त्वं वादिदर्पव्युपशमनविधावक्षतं पाटवं न: Subhāṣi. 3474; अव्रणाम् अक्षताम्। ···एतादृशीं स्थालीमादाय कर्म कुर्यादिति शेष: VīraMi. (Paribhāṣā.) 108.16; Bhāsk. i. 20.13 (*on* i. 1.1); **4** ungoaded, unurged, not compelled अतश्च हस्त इत्युक्ता मया श्रद्धा विशेषत:। यस्माद् गृह्णाति सद्धर्मं दायं हस्त इवाक्षत: Saund. 12.36; गम्भीरवेदिन: संज्ञां गजा जगृहुरक्षता: Bhaṭṭi. 14.13; **5** unpunished (bodily) दश स्थानानि दण्डस्य मनु: स्वायंभुवोऽब्रवीत्। त्रिषु वर्णेषु यानि स्युरक्षतो ब्राह्मणो व्रजेत् ManuSm. 8.124; अक्षतो ब्राह्मण: पूर्वोक्तदण्डस्थानेष्वदण्डितो ब्राह्मण इत्यर्थ: SmṛtiCan. iii. 291.8; अक्षत इति। शारीरसकलवधदण्डरहित इत्यर्थ: BālamBha. ii. 37.26 (*on* 2.26); **6** unsullied, unspoiled, unsplit इमां गृह्णीष्व राजेन्द्र···। अपापामक्षतां शुद्धां जानकीं पुरुषोत्तम Abhiṣe. 6.27; कुक्षिं ततस्तत्क्षणमक्षताया विभिद्य मातुर्भगवान् प्रजात: DaśāvaC. 9.4; स्वैरिणी या पतिं त्यक्त्वा सवर्णं कामत: श्रयेत्। अक्षतं च प्रजाद्वारं पुनर्भू: संस्कृता पुन: JātaPā. 16.20; **7** intact, not cut off, unconfiscated राष्ट्रादस्मात्तु निर्वास्यो विभवैरक्षतै: सह Mṛcch. 9.39; सूर्यविप्रस्य विप्रस्य वैद्यस्य च नृपस्य च। प्रवासयेदक्षतेन सपुत्रपशुबान्धव:। अवध्य: सर्वलोकेषु राजा राज्येन पालयेत् BhaviP. 324B.6 (ii(1). 5.69); **8 i** unmarred, undisturbed, full नेत्राणां मदरुचिरक्षतैव तस्थौ S'iśuVa. 8.57; श्रूयते स्म मणितं कलकाञ्चीनूपुरध्वनिभिरक्षतमेव S'iśuVa. 10.76; 14.51; 16.81; भूरुहौघै:···पूरितान् दिग्विभागान्। लक्ष्मीकुर्वन् मुहुरुपनयेरक्षतां प्रीतिमक्ष्णो: MayūSaṁ. 1.45; शृङ्गारिणी पृथुकटाक्षतया च यस्य लक्ष्म्याश्रिता तनुरनुज्झितरत्नकक्ष्या HarVi. 31.22; श्रियमतनु यशश्च तस्य शुभ्रं सुरभि दिवि भ्रमदक्षतामम्लासीत् HarVi. 46.47; KathāK. x. 14.24; कृष्णस्य तज्जपन् स्पर्शाद्रक्षां(?क्षा) स्यादक्षता शिशो: ĪśānS'īPa. i. 41.108; DvyāśraKā. 9.33; आवयोरक्षता प्रीति: सदा सोदरयोरिव TriṣaS'aPuC. iv. 1.335; नरा:···प्राप्नुवन्त्यक्षतं सुखम् PārśvC. 7.370; यच्चोक्तं चञ्चला लक्ष्म्य: स्थिरा: किं श्रमणत्वत:। उपायेन तु रक्ष्यन्ते दक्षतामक्षतां श्रितै: SamarāSaṁ. 3.205; यावज्जीवं हि विदधे यद्यहं तत् कुलीनता। अक्षता स्यादिदं चित्ते सम्यक् तात विचिन्तय PrabhāC. 123.11; अक्षतान् दर्शयामास नि:सामान्यगुणोदयान् PrabhāC. 131.8; भद्राणां प्रतिपादनाय जयतु प्रत्यक्षतामक्षताम्···बिभ्रती, सर्वग्रन्थिविमोचनी भगवती सा मे समीची कृति: NyāyPari. 496.21; Rāgh. 15.7; **8 ii** perfect in, not deficient in सूरिं विजयसिंहाख्यमद्राक्षीदक्षतं गुणै: SamarāSaṁ. 3.36; **9** usual, constant, common परोपद्रवार्थं तु वाक्योच्चारणमक्षत एव धर्म: NyāyMañ. ii. 202.32; **10** uninfluenced, unvitiated तत्र धूमानुमानादे: प्रामाण्यं केन नेष्यते। अतो हि साध्यं बुध्यन्ते तार्किकैरक्षता अपि NyāyMañ. i. 113.9; **11** unrefuted, unaffected, uninterrupted, unhampered कुलालस्य कर्तृत्वमक्षतमेव NyāyVārPari. 211.2; 614.4; न हि चक्षू रूपस्य विशेषणम्। किं तर्हि। चक्षुर्विज्ञानम्। ततश्चक्षुर्विज्ञानासंवेदने कथं रूपं ज्ञायतामिति चोद्यमक्षतमेव TarkBhā. (Mo.) 10.24; यत्र वादी स्वहेतुसाधारणं व्याप्तिभङ्गादिदोषं जानन् प्रतिहेतुनिष्ठतया परस्य उद्भावयति परश्च परिहर्तुं न शक्नोति तत्राप्येवं सत्प्रतिपक्षताक्षतैव स्यात् KhaṇḍanKhā. 918.1; 341.1; यथा श्रावितस्य साक्षित्वं नापगतं तथा साक्षिद्वैधेऽप्युत्कृष्टकोटे: साक्षित्वमक्षतमेव SmṛtiCan. iii. 189.5; न हि कार्यायोगव्यवच्छेद: कारणत्वं किं तु नियतपूर्वसत्त्वम्। तच्च सहकारिविरहप्रयुक्तकार्याभावेऽप्यक्षतम् TattvCin. ii(2). 116.3; आत्मा स्वेनैव सिध्यत्यहमिति निगमैर्यत् स्वयंज्योतिरुक्त: स्वापेऽप्यस्य स्वसिद्धावशयिषि सुखमित्यक्षता प्रत्यभिज्ञा TattvMu. 2.6; 4.59; उपहितविषयत्वेऽपि उपधेयविषयत्वमक्षतमेव (इत्यपास्तम्) AdvaiSi. 250.2; चक्रभ्रमणेनैव व्याख्यातं भ्रमणमत्र चान्यस्य। वेगैकत्वभिदोरिह चिन्ता व्यर्थाक्षते साम्ये KandaCū. ii. 1.42; VidhiRa. 8 (39.20); 35 (186.16); GuruCandr. i. 59.12; तथा च यजेतेत्यादिश्रुतेरिव व्यावहारिकप्रामाण्यमुक्तश्रुतेरक्षतम्, तात्त्विकप्रामाण्यं तु 'तत्त्वमसी' त्यादिश्रुतेरेवेति भाव: LaCandr. 112.14; 162.30; उद्देश्यविधेयतावच्छेदकभावोऽक्षत एव S'aktiVā. 151.3; ('शृङ्गारो मधुर:' इत्यादिरूप:) व्यवहारस्तु वाजिगन्धोष्णेतिव्यवहारवदक्षत: RasGaṅ. 69.7; 118.13; आर्याभेदस्य प्रतिपादनेऽपि वाक्यार्थनिदर्शनात्वमक्षतम् RasGaṅ. 676.12; तदन्तस्य (स्त्रीप्रत्ययान्तस्य) प्रातिपदिकत्वं च···अक्षतम् LaS'abdeS'e. ii. 215.4; VaiyāBhū. 28.16 (*on* 5); तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वरूपं व्यापकत्वमप्यक्षतमेव SetuBa. 245.3; **12** flawless, unperforated वज्रवैदूर्यमाणिक्यमुक्तामणिभिरक्षतै: । ··· धूपैर्दीपैश्च नैवेद्यैरुपहारैश्च भूरिभि:। अभ्यर्च्य देवीमभ्यर्च्यामुषितोऽपि च तां निशाम् ParamāKā. 41.26.

**अक्षत** (a-kṣata) *m.* [AmaK. 1800; Liṅgānu. (Pā.) 109.9; KośaKaTa. 1.6690] (*pl.*) **1 A i** unbroken grain (of barley), barley **ii** (of some corn) **iii** unbroken fried grain **iv** unbroken grain of rice **B** unbroken (unsubdued) foe (*sg.*) **C** a Purāṇa (?) **D** corn in general **E** name of a tribe (descendants of Surabhi) **2 A i** name of S'iva **ii** of Jina **iii** name of a disease (*sg. pl.*) **B i** unbroken grain (of barley) **ii** fried corn **iii** eunuch **3** a boil or sore **1 A i** unbroken grain (of barley), barley शूर्पेणाक्षतान् गन्धान्सुमनसश्चात्र कृत्वा SāmaViBr. iii. 4.2; शमीपलाशश्रीपर्णीनां पत्रैर्वास्तूपकिरेत्। अक्षतैश्च सुमनोभिश्च SāmaViBr. iii. 3.7; उदपात्रे अक्षतानवनीय··· षळ्चेन पाययेत् KauṣīGS. i. 14.10; श्रवणाग्रहायणीकर्मणोरक्षताञ्छित्वा GobhiGS. iv. 8.1 (comm. अक्षतास्तु यवा: प्रोक्ता भृष्टा धाना भवन्ति ते); चत्वारि हवींष्यासादयेदपूपं स्थालीपाकं धाना: सक्तूनुभयमक्षतानाम् KāṭhGS. v. 1.2; अस्तमितानुदितयोर्दध्ना तण्डुलैरक्षतैर्वा (परिचरणम्) PāraGS. i. 9.2; उत्तरपूर्वस्यां दिशि···अवटं खात्वा अक्षतानरिष्टकांश्चान्यानि चाभिमङ्गलानि तस्मिन् मिनोति PāraGS. iii. 5.2; DrāhyāGS. iii. 2.8; अक्षितं चारिष्टं चास्त्वित्यक्षतान् प्रतिदापयेत् GobhiSm. 1.52; अक्षतास्तु यवा: प्रोक्ता भ्र(?भृ)ष्टा धाना भवन्ति ते। भ्र(?भृ)ष्टास्तु व्रीहयो लाजा: GobhiSm. 3.133; सिद्धार्थकवचाहिङ्गुकुष्ठं चैवाक्षतै: सह SuśruS. vi. 36.7; अर्कमूलं शमीपत्रमर्शोभ्यो धूपनं हितम्। तुम्बुरूणि विडङ्गानि देवदार्वक्षता घृतम् CaraS. vi. 14.50; तत्राक्षतानां चोक्षाणां स्थाप्यं पात्रं सदक्षिणम् AṣṭāSaṁ. ii. 190.15 (6.4); अक्षतांस्तण्डुलान् लाजान् पञ्चवर्णौदनं तिलान् AṣṭāSaṁ. ii. 195.9 (6.5); अक्षतैस्तिलतण्डुलै:। समभ्यर्च्य LiṅgaP. i. 103.65; अक्षता यवा: VīraMi. (S'rāddha.) 273.9 = 305.11 = (Pūjā.) 314.8 = (Āhnika.) 340.25 = (Lakṣaṇa.) 577.8 = (Saṁskāra.) 932.20; अक्षतास्तीक्ष्णशूकाश्च यवाश्चैव तु नामत: DhanvNi. 223.13; यवस्तु मेध्य: सितशूकसंज्ञो दिव्योऽक्षत: कञ्चुकिधान्यराजौ RājNi. 223.18 [sg. in this sense in kośas only यवे स्यादक्षत: पुंसि AnekāK. 351] 'अक्षतांस्तत्र निर्वपेत्।' अक्षतान् यवान् CaturCin. iii.(1). 1235.9; **1 A ii** unbroken grain (of some corn) अक्षतै: फलपुष्पैश्च···सर्वत: परिशोभितम् MahāBhā. i App. 36.55; सन्त्यत्र यज्ञपात्राणि दर्भा: सुमनसोऽक्षता: MahāBhā. i. 609*. 6; अक्षतै: सुमनोभिश्च वाचयित्वा महाभुज:। तान् द्विजान् MahāBhā. vii. 58.16; धर्मात्मा···अस्पृशत्। स्वास्तिकानक्षतान् भूमिं सुवर्णं रजतं मणीन् MahāBhā. xii. 40.7; कारयस्व··· रामस्य···क्रियां वैवाहिकीम्···। लाजपूर्णैश्च पात्रीभिरक्षतैश्चाभिसंस्कृतै: Rāmā. i. 1324*. 11; ViṣṇuSm. 19.9; PauṣkS. 41.163; JayāS. 15.260; AhirbuS. 38.27; रात्रौ सिद्धार्थकान् भूतिमक्षतैरन्वितां शुचिम्। (रक्षाशक्तिं प्रकुर्वीत) AṣṭāSaṁ. i. 55.9 (1.9); ललाटे साक्षातै(?चाक्षतै)र्युत: PāraS. 3.29; PārāSū. 38.19; मुनय:···गृहीत्वाक्षताञ्शिरसि विकिरन्तोऽस्य पुनरिदमवोचन् NalaCam. 4.26 (21); BrahmVaiP. ii. 64.95; पूजयांचक्रिरे पुष्पैरक्षतैस्तन्निवासिन: KūrmaP. 266.14 (1.25); जुहुयादक्षतांस्तथा ViṣṇuDhaP. iii. 211.3; विशेषेण तथा दानमक्षतानां महाफलम् ViṣṇuDhaP. iii. 317.32; नद्यश्च चित्रविन्यस्ता मङ्गल्यान्यपराणि च। अक्षताश्च···तथा दर्पणमेव च ViṣṇuDhaP. ii. 163.24; LiṅgaP. i. 27.15; BrahmP. 45.42; अक्षतैर्देवतारक्षां चक्रे चक्रगदाधर: BrahmP. 219.48; श्वेताश्वपुष्पाणि तथाक्षतांश्च···। अश्वत्थवृक्षं च समालभेत ततश्च कुर्यान्निजजातिधर्मान् PadmP. iv. 94.16; GaṇeP. i. 49.12; सिद्धार्थानक्षतांश्चैव···प्रक्षिपेत् प्रोक्षणीपात्रे SaurP. 42.17; कुर्याद्वेदीम्···अक्षतै: सुप्रतिष्ठिताम् SamarāSū. 37.19; तस्मिन् गज उपविश्य श्रीवीतरागनाममन्त्रस्मरणपूर्वमक्षतै: छंटयेथा: KathāK. 3.17; ब्रह्मस्थाने ततो विद्वान् कुर्यादाधारमक्षतै:। तस्मिन् संस्थापयेत् कुम्भं वर्धन्या सह पूजितम् PañcaRā.(Ha.) i. 10.6; S'aṅkhaSm. 12.20; अक्षताश्चाहता: स्मृता: BṛParāSm. 7.156; मुहूर्ते चाक्षतान् क्षिपेत् LaghvāśvaSm. 15.21; अक्षतांश्च फलं पुष्पमर्घ्यपात्रे विनिक्षिपेत् VṛHārīSm. 7.74; 8.110; नामभि:। एतैरावाह्य विकिरेदक्षतान् कुसुमै: समम् Mānaso. ii. 13.854; ii. 13.921; मुक्ताचूर्णैव घटितैरक्षतैरतिनिर्मलै:। पूर्णानि स्वर्णपात्राणि प्राविशन्नृपभौकसि PariPar. 2.66; VasaViKā. 10.80; (कीर्तिश्री:) यावधर्ष्यत दिग्वधूभिरभितस्ताराक्षतैरक्षतै:···शशिस्थालादुपात्तैरिव VasaViKā. added after 10. colophon; PārśvC. 7.372; अक्षता: शिरसि न्यस्ता गुरुभि: SamarāSaṁ. 2.120; गोत्रवृद्धाभिरक्षतैरवर्ध्यत PrabhāC. 197.27; 208.9; KathāK. 31.1; कपिलाय स्वाहा इत्यक्षतान् (समर्पयेत्) S'ārṅgaPa. 2343; TantrSā. (K.) 46.4; Acyutarā. 8.37; Nāṭa. 21.14; **1 A iii** unbroken fried grain (*lāja*) दीर्घायुराप्नोति च तण्डुलेन सिद्धार्थका विघ्नविनाशकार्था:। तिलैर्विवृद्धिं प्रवदन्ति नृणामारोग्यतां याति तथाक्षतैस्तु VarāṅgaC. 23.20; 23.18; AbhidhāCin. 401; ParaNā. 1771; S'abdaRaSaK. 136.11; **1 A iv** unbroken grain of rice अक्षतैर्धवलैर्दिव्यै:···पूजयामि वृषध्वज MṛtyuMāPūSt. 14; नाक्षतैश्चन्दनान्नाना न दध्नो दूर्वया पृथक्। न पुष्पेभ्य: फलं वा(?व)र्तें पात्राणि दधिरेऽङ्गना: DvyāśraKā. 3.71 (comm. अखण्डतण्डुलै:); लोकेऽपि वन्द्यते त्यक्तबहिरन्त:परिग्रह:। अत्र निस्तुषरागाणामक्षतानां निदर्शनम् PārśvC. 1.560; सौरभामोदत: शालेरक्षतानामुपाश्रय:। विमानमिव सौधर्मे सुमन:संवृतो बभौ PrabhāC. 130.41; अक्षताश्चात्र तण्डुला: VīraMi.(Pūjā.)

254. 3; अक्षता: अक्षतं मङ्गलस्य तण्डुला: । पुंसि बहुत्व एवायम् Liṅgānu.(He.) comm. 118. 11; S'abdaRaSaK. 136. 11; **1 B** unbroken (unsubdued) foe यत्र चाभिषेकसलिलेषु कलुषता, मलयजेषु जडघर्षणम्, अक्षतेषु मुशलाभिघात: YaśasCam. ii. 247. 6; **1 C** आतपतण्डुल a *Purāṇa* in S'abdKDru. [PW]; **1 D** corn in general शस्यमात्रे Bhānu. on AmaK. in S'abdKDru. [PW]; **1 E** name of a tribe, descendants of Surabhi [PW]; **2 A i** [*sg.*] a name of S'iva नाम्नामष्टसहस्रेण स्तुतवान् वृषभध्वजम् । नमः शुद्धाय बुद्धाय क्षोभणायाक्षताय च VāyuP. i. 30. 215; नमो रूपाय गन्धाय शाश्वतायाक्षताय च (महेशाय) LiṅgaP. i. 21. 49; जय जय शम्भो जयाद्भुत जयाक्षत जयाव्यय S'ivaP. 7B. 31. 1 (582B. 10); भग्नो बुद्धः कृतकरोऽक्षत उत्सर्वतोमुखः । सुप्रसादो महाकाल: स्थाणू रुद्रश्च भौतिकः KalpaK. 389. 89; **2 A ii** a name (or epithet) of Jina कुर्यादक्षतपूजार्थम् अक्षताय नमः पदम् । धूपार्थे श्रुतधूपाय नमः पदमुदाहरेत् MahāP. 40. 8; **2 A iii** name of a disease पिशीलवीणा । तन्त्र्यास्तन्त्रीं बध्नाति । अक्षतभैषज्यम् Dārila on KauśiSū. 32. 11; **2 B i** *n.* [*sg. pl.*] unbroken grain (of barley, rice etc.) गोष्ठद्वार्यक्षतमश्मानमग्निमुपस्पृश्य् प्रविशेयुः MānS'S. 181. 6; दूर्वापुष्पा एकोदकमक्षतमीशानाभिमुखं प्रक्षिपेत् MānS'S. 239. 13; उपान्ताङ्गुष्ठानामिकाभिः पवित्रमक्षतं गृहीत्वा ··· जुहोति VaikhāGS. 1. 20; तस्य ··· आजह्नुः ··· गन्धांश्च विविधान् बहून् । अक्षतं जातरूपं च प्रियङ्गु मधुसर्पिषी Rāmā. iv. 25. 24; सिद्धार्थमक्षतं चैव कुशाग्रं तिलमेव च यवं गन्धं फलं पुष्पमष्टाङ्गं चार्घ्यमुच्यते AhirbuS. 28. 33 = KulārT. 17. 96; गोमयेनोपलिप्याथ चन्दनेन विभूषयेत् । मध्ये दत्त्वा तु पुष्पाणि शुक्लान्यक्षतमेव च ।··· ध्यायेद्देवं चतुर्भुजम् PāñcaRā. (Ha.) i. 10. 18; गन्धतोयेन सर्वतः । संप्रोक्ष्य···विकिरेदक्षतानि PāraS. 14. 58; अक्षतस्यार्पणं कृत्वा कुर्यात् कौतुकबन्धनम् PāraS. 17. 375; 22. 101; ParaS. 5. 20; तत्र गन्धसुमनोऽक्षतान्यथो नि.क्षिपेद्धृदयमन्त्रमुच्चरन् PāñcaRā. (Nā.) iii. 6. 3; तामद्भुतस्थितिमहं सदकैः श्रयामि। (इत्यक्षतम्) YaśasCam. ii. 401. 6; BrahmVaiP. ii. 4. 40; पुनर्वसोश्चाप्यगुरुं पुष्पस्य च तथाक्षतम् (देयम्) ViṣṇuDhaP. i. 98. 5; ii. 99. 14; अक्षतानि तिलाश्चैव शान्तिपुष्टिकराणि द्रव्याणि ViṣṇuDhaP. ii. 127. 43; स्वस्तिकमक्षतानि लाजा मधु···समालभेत VāmaP. 14. 36; देवस्यारूरुपन् मूर्ध्नि दु(?दू)र्वापुष्पाक्षतानि च BallāC. 35. 15; विन्यस्य चैवं पुनरिष्टकां च गन्धोदकैः संपरिपूर्य गर्तम् । कृत्वा प्रसूनानि परीक्षयेच्च निक्षिप्य चावर्तमथाक्षतानि S'ilpaRa. i. 12. 30; **2 B ii** roasted corn [kośas] **2 B iii** eunuch [kośas, PW] अक्षतं स्यादहिंसिते । षण्ढे लाजेषु AnekāSaṁ. 3. 228; अक्षतं चापि लाजेषु तृतीयप्रकृतावपि ViśvaPra. 62. 74; अक्षतं न द्वयोः षण्ढे लाजेषु त्रिष्वहिंसिते MediK. 63. 79; **3** a boil or sore not produced by cutting [MW]

**अक्षतकण्ठ** (akṣata-kaṇṭha) *adj.* whose voice is unimpeded शाकटिकाः···निसर्गत एवाक्षतकण्ठाः NyāyMañ. i. 374. 3.

**अक्षतकर्णी** (akṣata-karṇī) *adj.* (*f.*) with unharmed ears अक्षतकर्णी अक्षताकर्णी ṚTPrāti. 217.

**अक्षतकर्मन्** (akṣata-karman) *adj.* whose action or enterprise is unimpeded विद्यन्तेऽक्षतकर्माणो निर्भृत्याः शासनैषिणः PadmP. (Ra.) 54. 39.

**अक्षतकान्तिभाज्** (akṣatakānti-bhāj) *adj.* having the lustre of rice grains माङ्गल्यहेतोः स भवन्ति तस्य···दूर्वाक्षतकान्तिभाजः (कटाक्षाः) HammīMaKā. 3. 17.

**अक्षतकाय** (akṣata-kāya) *adj.* whose body is not wounded वीर्यमक्षतकायानां शूराणां न हि वर्धते PadmP. (Ra.) 8. 233.

**अक्षतकेशर** (akṣata-keśara) *adj.* with the mane undisturbed or unruffled तेनासौ सिंहोऽक्षतकेशरः सुखं स्वपिति Hitopa. ii. 76. 3.

**अक्षतक्षम** (akṣata-kṣama) *adj.* of unimpaired endurance or patience विबुधास्पदमक्षतक्षमं दधतं बन्धुरजातरूपताम् । स्थितिमापुरलङ्कृता नलं परितस्तं परिवार्य भूभृतः Kapphiṇā. 5. 32.

**अक्षतक्षेप** (akṣata-kṣepa) *m.* throwing unbroken grains of rice गच्छेत्युक्त्वाक्षतक्षेपाद्गत्वा चोरं ग्रहीष्यति ĪśānS'iPa. i. 32. 139.

**अक्षतक्षोभ** (akṣata-kṣobha) *adj.* whose wrath is undiminished, with unabated fury त्वयि त्र्यक्षाक्षतक्षोभे प्रतिपक्षदिधक्षया···अहीनो जायते गुणः S'rīKaC. 19. 37.

**अक्षतगुण** (akṣata-guṇa) *adj.* whose quality is not diminished or lost माधुर्यमक्षतगुणं दधतं रसस्य···मकरध्वजम्···और्वानलः···अधाक्षीत् HarVi. 8. 15.

**अक्षतचन्द्रबिम्ब** (akṣatacandra-bimba) *m. n.* the disc of the full moon एतत्तदेव मुखमक्षतचन्द्रबिम्बसंवावदूकमवलोकय लक्ष्मणस्य AnarghaRā. 7. 145.

**अक्षतचारुपत्र** (akṣata-cārupatra) *n.* unspoilt lovely petal अब्जिनी विरेजे प्रतिदिशमक्षतचारुपत्रशोभा Rāvaṇā. 4. 56.

**अक्षतचेतस्** (akṣata-cetas) *adj.* with undisturbed mind प्रसादीकृतमस्मै ···तेन काञ्चनदीन्नारलक्षमक्षतचेतसा RājTa.(Ka.) 7. 1118.

**अक्षतजल** (akṣata-jala) *n.* water mixed with unbroken grains of barley or rice (अभिषेकः) अक्षतजलान्तिम उत्तमः स्यात् TantrSa. 8. 175.

**अक्षतण्डुला** (akṣa-taṇḍulā) *f.* name of a medicinal herb महासमङ्गौदनिका···अक्षतण्डुला DhanvNi. 66. 9.

**अक्षततनु** (akṣata-tanu) *adj.* whose body is not wounded or injured तमक्षततनुं दृष्ट्वा लक्ष्मीनिलयवक्षसम् । विस्मितोऽरिंदमो जातः PadmP.(R.) 38. 107; दिष्ट्या त्वामक्षततनुं पश्यामि RāmāMañ. 367. 24; गर्दभोऽपि···अक्षततनुरेव···तस्मादपेतः Pañcā. 238. 2; स प्रापदक्षततनुः पृथुशोणतीरम् S'aṅkaDigVi.(Mā.) 3. 48.

**अक्षतता** (akṣata-tā) *f.* **1** the state of being unimpaired or not annulled घटत्वादिसामानाधिकरण्यरूपवैशिष्ट्यवद्द्रव्यत्वादिवैशिष्ट्यस्याप्यक्षततया घटत्वविशिष्टे शक्तिः S'aktiVā. 40. 8; **2** the state of fullness or unimpairedness कर्ता···क्षतमक्षततां नयेत् PāraS. 11. 384 = PauṣkS. 38. 97.

**अक्षतताप** (akṣata-tāpa) *m.* undiminished or unabated distress खेदाद्विवेद रतिरक्षततापभूमिर्नामापि नाधररसासवपानगोष्ठ्याः S'rīKaCa. 5. 8.

**अक्षतति** (akṣa-tati) *f.* a row of the *Terminalia Belerica* (अम्भोनिधिं स निरवर्णयत्) अक्षततिमिश्रितम्···वनौघम्···वहन्तम् HarVi. 30. 60.

**अक्षततिमि** (akṣata-timi) *m.* unwounded fish of a large size (अम्भोनिधिं स निरवर्णयत्) अक्षततिमिश्रितम्···वनौघम्···वहन्तम HarVi. 30. 60.

**अक्षततुण्डक** (akṣatatuṇḍa-ka) *adj.* whose mouth is without a wound (मेषः) अक्षशं(?त)तुण्डकः···शुभः Mānaso. iv. 9. 1245.

**अक्षततृतीया** (akṣata-tṛtīyā) *f.* name of the third day of the bright half of the month of Vaiśākha अक्षततृतीया वैशाखशुक्लपक्षस्य Aparā. 189. 17 (*on* 1. 146); EI. xiv. 198. 15.

**अक्षततेजस्** (akṣata-tejas) *adj.* of undiminished or unimpaired glory क्षितावक्षततेजास्त्वम्···कृतवान् दुःखरेचनम् MārkP. 3. 8.

**अक्षततोय** (akṣata-toya) *n.* water containing unbroken barley or rice grains करवीरम्···अभ्युक्ष्याक्षततोयेन मन्त्रेणैवं क्षमापयेत् BhaviP. 631A. 19 (iv. 10. 3)

**अक्षतत्त्व** (akṣa-tattva) *n.* essence or secret of dice प्रयुज्य तत्तादृशमक्षतत्त्वं कथं त्वया काङ्क्षितमक्षतत्वम् KīcaVa. 5. 4.

**अक्षतत्व** (akṣata-tva) *n.* **A** state of being unhurt or uninjured अक्षरं चाक्षरणादक्षतत्वादक्षयत्वाच्च MuṇḍaUBh. 323. 14 (*on* i. 2. 13); प्रयुज्य तत्तादृशमक्षतत्त्वं कथं त्वया कांक्षितमक्षतत्वम् KīcaVa. 5. 4; अनन्तफलसंप्राप्तावक्षतत्वे च कारणम् । सविस्मयं तया पृष्टः RājTa.(Ka). 6. 359; **B** state of being unsublated or un-contradicted तेनाप्युपहितस्य प्रपञ्चस्याक्षतत्वेनाषिष्टाभावात् S'atDū. 96. 26; TattvMu. 2. 11; LaCandr. 463. 43; न च शक्त्यंशे ···कार्यकारणयोः समानप्रकारकत्वस्याक्षतत्वान्नानुभवविरोध इति वाच्यम् S'aktiVā. 204. 14; VyutpaVā. 108. 11; 119. 18; 159. 5; उक्तरीत्या ··· सापिण्ड्यसत्त्वेन सपिण्डानिषेधस्यात्राप्यक्षतत्वात् VīraMi.(Saṁskāra.) ii. 698. 17; BālamBha. i. 174. 17 (*on* 1. 52)

**अक्षतत्वच्** (akṣata-tvac) *adj.* whose skin is uninjured अन्ये चापि बलोपेताः सर्वास्त्रैरक्षतत्वचः BhāgP. viii. 11. 35.

**अक्षतत्वोपदेश** (akṣatatvopadeśa) *m.* instruction of non-injuredness (i. e. non-infliction of injury) ब्राह्मणस्य धनदण्डविधानादक्षतत्वोपदेशः शरीरपीडापरिहारार्थः कल्प्यते ManuBh. ii. 129. 4 (*on* 8. 124)

**अक्षतदक्ष** (akṣata-dakṣa) *m.* unbroken or uninterrupted intelligence or dexterity शिशुत्वेऽप्यशिशुप्रज्ञः सोऽभूदक्षतदक्षतः PrabhāC. 183. 26.

**अक्षतदश** (akṣata-daśa) *adj.* **1** having unconsumed wick वंशप्रदीपोऽप्यक्षतदशस्तनयः VāsaDa. 36. 1; **2** having uninterrupted state of life (i. e. longevity) VāsaDa. 36. 1.

**अक्षतदान** (akṣata-dāna) *n.* gift of unbroken barley or rice ब्राह्मणपाणिषूदकपुष्पाक्षतदानानि···यज्ञोपवीतिना कार्याणि CaturCin. III. i. 1124. 7.

**अक्षतदूर्वावाहिन्** (akṣatadūrvā-vāhin) *adj.* **1** bearing or carrying unbroken (i. e. whole) blades of Dūrvā grass अक्षतदूर्वावाहिभिरारब्धमङ्गलाचारैरिव तृणस्थलैरलङ्कृताम्···विन्ध्याटवीमवगाहमानः NalaCa. 6. 11(24); **2** bearing or carrying unbroken grains of barley or rice and Dūrvā grass, NalaCa. 6. 11(24)

**अक्षतदेह** (akṣata-deha) *adj.* having unwounded body अक्षतदेहस्तु पतितो गिरिजासुतः GaṇeP. ii. 83. 37; इन्द्रधर्मौ···तुष्टावक्षतदेहं तं राजानं चक्रतुः शिबिम् KathāSaSāg. i. 7. 96; xii. 2. 81; आगत्याक्षतदेहस्त्वं मम तेजोऽभ्यवर्धय(?यः) PrabhāC. 160. 8.

**अक्षतद्युति** (akṣata-dyuti) *adj.* having unfaded or unimpaired beauty or complexion मुनयः···पपुरक्षिभिरक्षतद्युती···रामलक्ष्मणौ Rāgh. 3. 37.

**अक्षतधर्मात्मन्** ( akṣatadharmātman ) *adj.* having flawless virtue as nature योऽयमक्षतधर्मात्मा भ्राता···नकुलः पतितो भुवि MahāBhā. xvii. 2. 14.

**अक्षतधाना** ( akṣata-dhānā ) *f.* parched unbroken grains of barley अक्षतधानाः कृत्वा सर्पिषा अर्धा अनक्ति ĀśvaGS. ii. 1. 3; अपराह्णे अक्षतधाना भिक्षित्वा··· अग्नौ पाणिना जुहुयात् KauśiGS. ii. 6. 2 = S'āṅkhāGS. ii. 8. 1; उपकल्पयते अक्षतधानाः BhārGS. 2. 1 (30. 16) = HirGS. ii. 16. 3; सदसस्पतिमित्यक्षतधानाञ्जि: PāraGS. ii. 10. 11; ii. 14. 3; अक्षतधानाः भक्षयन्ति GobhiGS. iii. 3. 6; अक्षताः यवाः तत्संपाद्याः धानाः अक्षतधानाः VīraMi. (Saṁskāra.) 932. 21.

**अक्षतधार** ( akṣata-dhāra ) *adj.* of unblunted edge यत्तीक्ष्णाक्षतधारदुर्धरमहाकौक्षेयकाक्षेपणक्षुभ्यत्क्ष्मापतिवल्लभोदरदरीनिर्भिन्नगर्भायते BhāvS'. 102.

**अक्षतधावन** ( akṣata-dhāvana ) *n.* water in which unbroken grains of rice are washed अथ पिबेन्मधुकम्···अक्षतधावनैः KalyāKā. 17. 68.

**अक्षतधी** ( akṣata-dhī ) *adj.* of unimpeded talent or intelligence अप्राक्षुरक्षतधियं खिलतीं सखीभिः S'aṅkaDigVi.(Mā.) 3. 56.

**अक्षतधुर्यवृत्ति** ( akṣata-dhuryavṛtti ) *adj.* **1** of unimpeded excellence अक्षैरक्षतधुर्यवृत्तिः···यः पद्मं विधृतप्रथं रथमिवाध्यास्ते···श्रुतीनां कविः S'rīKaC. 20. 61; **2** having unimpeded course of horses, S'rīKaC. 20. 61.

**अक्षतधूम** ( akṣata-dhūma ) *m.* smoke of unbroken grains (fried barley or rice) प्रत्यागतानक्षतधूममुपस्पर्श्य KāṭhGS. iv. 5. 11.

**अक्षतधैर्यबन्ध** ( akṣata-dhairyabandha ) *adj.* having unwavering courage श्रिया गृहम्···ये पूरयन्त्यक्षतधैर्यबन्धा न ते जगत्यां सुलभा महान्तः YogVā. i. 27. 11.

**अक्षतनय** ( akṣata-naya ) *m.* unfailing polity मुह्यते य इह कृत्यवस्तुनि ज्योतिरक्षतनयात्मकं दधत् HarVi. 14. 54; *adj.* who has not violated the principles of polity ( अहीनाक्षतनयः ) अक्षतनयः न क्षतो नयो न्यायो येन सः अखण्डन्यायवान् VidaMuMa. i. 33. 2.

**अक्षतपक्ष** ( akṣata-pakṣa ) *adj.* **1** whose side or party is uninjured or intact समुद्वहन्नक्षतपक्षभूमिभृद्भिमेदक्षामिह शक्तिमायताम् । मयूरकेतुः HarVi. 12. 48; गण्डस्थलैः···मदाम्भः । मेघा इव क्षतजमक्षतपक्षदैत्यसेनाविनाशपिशुनं ववृषुर्गजेन्द्राः HarVi. 44. 26; **2** with the wings not cut off (i. e. intact) (referring to a mountain) HarVi. 12. 48.

**अक्षतपक्षति** ( akṣata-pakṣati ) *adj.* whose wings are uninjured or uncut कारापञ्जरनिर्मुक्तः पक्षीवाक्षतपक्षतिः । पुनर्जातमिवात्मानममन्यत स डामरः RājTa. (S'rī.) 4. 542.

**अक्षतपत्र** ( akṣata-patra ) *n.* unbroken (i. e. whole) leaf सुस्निग्धाक्षतपत्रैश्च नूतनैरभिभूषितम् । ··· क्रीडास्थलम् PāñcaRā.(Nā.) i. 7. 31.

**अक्षतपद्मिनी** ( akṣata-padminī ) *f.* unmarred or undisturbed (i. e. fresh) bed of lotuses अक्षतपद्मिनीशुचितटाकतटाकसितच्छदः । ···स समयोऽजनि VasaViKā. 6. 25.

**अक्षतपाणि** ( akṣata-pāṇi ) *adj.* having or carrying unbroken grains in the hands लाजसिद्धार्थककरैरन्यैरक्षतपाणिभिः । ( उत्सवं कारयेत् ) PāraS. 13. 160.

**अक्षतपात्र** ( akṣata-pātra ) *n.* **1** a vessel filled with unbroken grains (like barley, rice, parched grains etc.) पूर्णान्यक्षतपात्राणि···। दृष्ट्वा स्पृष्ट्वा च कौन्तेयो बाह्यां कक्ष्यामगात्ततः MahāBhā. vii. 58. 20; हिरण्याक्षतपात्रम् ( शस्तम् ) SiddhaYo. 80. 16 (comm. अक्षता लाजाः ); पुरः सज्जीकृतेऽक्षतपात्रे ··· सिंहासनममिषेकार्थमुल्को यावत्समलङ्करोति Pañcā. 181. 13; PurāPraSaṁ. 84. 3; **2** a rite performed for an *akṣatapātra* पुण्याहवाचनादिभ्य उब्वक्तव्यः, पुण्याहवाचनं प्रयोजनमस्य पुण्याहवाचनम् ··· अक्षतपात्रम् । नेदं वक्तव्यम् । तादर्थ्यात्ताच्छब्द्यं भविष्यति JaineVyā. 233. 15 (*on* iii. 4. 105)

**अक्षतपात्रकर** ( akṣatapātra-kara ) *adj.* [*f.* -ā] holding in the hand a vessel containing unbroken grains तस्य राजपाव्यां व्रजतः काचित् स्त्री सगर्भा अक्षतपात्रकरा सम्मुखा जाता PurāPraSaṁ. 84. 3.

**अक्षतपात्रपाणि** ( akṣatapātra-pāṇi ) *adj.* holding in the hand a vessel containing unbroken grains पुराङ्गनाः···। तमङ्ग वर्धापयितुं तदालये तदाविशन्नक्षतपात्रपाणयः VasaViKā. 13. 62.

**अक्षतपात्रहस्त** ( akṣatapātra-hasta ) *adj.* [*f.* -ā] holding in the hand a vessel containing unbroken grains स्वयोषितश्चाक्षतपात्रहस्ताः प्रास्थानिकं मङ्गलमस्य चक्रुः RāmC. 39. 25 (App. 2)

**अक्षतपुञ्ज** ( akṣata-puñja ) *m.* heap of unbroken grains लिखित्वा ( मातृः )···। अपि वाक्षतपुञ्जेषु नैवेद्यैश्च पृथक् पृथक् । कुड्यलग्नां वसोर्धारां घृतेनैव तु कारयेत् MānS'S. 252. 1; GobhiSm. 1. 14; पूजा च प्रतिमास्वक्षतपुञ्जेषु···वा कार्या VīraMi.(Saṁskāra.) 292. 1; VīraMi.(S'rāddha.) 293. 20; ततोऽक्षतपुञ्जेषु ···गणपतिदुर्गाद्यावाहनं कृत्वा पूजयेत् BālamBha. i. 18. 9 (*on* 1. 11–12); i. 31. 17 (*on* 1. 11–12); ii. 119. 1 (*on* 2. 109)

**अक्षतपुष्प** ( akṣata-puṣpa ) *n.* unbroken flower or unbroken grain and flower सुमनःस्थले निवेश्याक्षतपुष्पैराराध्य AkṣMāU. 486. 10.

**अक्षतपूजन** ( akṣata-pūjana ) *n.* worship with unbroken grains इति प्रतिदिनं कृत्वा जिनस्याक्षतपूजनम् PārśvC. 7. 375.

**अक्षतपूजा** ( akṣata-pūjā ) *f.* worship with unbroken grains (of rice) अक्षतपूजासमुद्यतम् । दृष्ट्वा लोकं शुकी कान्तं निजमेवमवोचत PārśvC. 7. 371; 7. 265; सर्वो लोकोऽक्षतपूजाविषय उद्यमपरो जातः, अक्षतपूजां करोति KathāK. 34. 6.

**अक्षतपूरित** ( akṣata-pūrita ) *adj.* filled with unbroken grains स्थापयेत् ···पात्रं चाक्षतपूरितम् SkandP. ii (2). 32. 34.

**अक्षतपूर्ण** ( akṣata-pūrṇa ) *adj.* filled with unbroken grains पार्वत्यक्षतपूर्णं च ( अञ्जलिं ) शिवोपरि ववर्ष वै SkandP. i (1). 25. 56; एतच्च सुवर्णपात्रमक्षतपूर्णं मध्यदेशे स्थापयेत् CaturCin. i. 698. 1; संस्थाप्य तत्राक्षतपूर्णकुम्भान् ĪśānS'iPa. ii. 44. 15.

**अक्षतपौरुष** ( akṣata-pauruṣa ) *adj.* possessing unimpaired valour परमपूरुषमक्षतपौरुषः ( वसुदेवः )···आशु वहन् ययौ Yādavā. 3. 35.

**अक्षतप्रक्षेपण** ( akṣata-prakṣepaṇa ) *n.* scattering of unbroken grains अक्षतप्रक्षेपणं पुष्पविकिरणम्···एवं मण्डलार्चनम् PārāSū. 49. 7.

**अक्षतप्रताप** ( akṣata-pratāpa ) *adj.* having unimpaired prowess ऋक्षा-( द )क्षतप्रतापः···संवर( णः ) ( जातः ) AvantiKa. 148. 3.

**अक्षतप्रतिबन्ध** ( akṣata-pratibandha ) *adj.* having flawless invariable concomitance अक्षतप्रतिबन्धस्य ( हेतोः )···न हेत्वाभासता भवेत् NyāyMañ. ii. 167. 12.

**अक्षतप्राप्त** ( akṣata-prāpta ) *adj.* who has arrived unwounded or safe अक्षतप्राप्तं पिता चन्द्रप्रभश्च तम् । अभ्यनन्दन्नृपाश्च KathāSaSāg. viii. 1. 156.

**अक्षतफल** ( akṣata-phala ) *adj.* from which fruits are not plucked श्रीवृक्षमक्षतफलं वसितं ( कृत्वा )···पूज्यः···पुरुषोत्तमेष्टः BhaviP. 690B. 10 (iv. 60. 10)

**अक्षतबल** ( akṣata-bala ) *adj.* having unimpaired power इक्ष्वाकुरक्षतबलः···मनोः सूनुः प्रतापवान् NaraP. 25. 19; अक्षतबलेऽप्यभिधाय पापं वत्से जटायुषि RāmāCam. 4. 40; अक्षतबलाः सर्वेऽपि वयं सुखीभवाम ĀnandRa. 7. 35 (6)

**अक्षतबुद्धि** ( akṣata-buddhi ) *m.* name of a former Buddha [DBHS]

**अक्षतम्** ( a-kṣatam ) *adv.* **1** incessantly, unobstructedly, for ever, continuously वक्षो विक्षोभिताघं सततनतिजुषां रक्षतादक्षतं नः S'ivaPāKeSt. 23; अक्षतं यो महीं रक्षन् EI. v. 79. 66 (fn. 16); सर्वामुर्वीमक्ष( ? क्ष )तं रक्षितुम् EI. vi. 340. 53 (fn. 12); पार्श्वस्थबोधिताः सन्तः सर्वाचारक्रमागतम् । आचारमाचरन्त्येव सुप्रबुद्धवदक्षतम् YogVā. iii. 118. 19 (comm. अक्षतम् आसङ्गेनादूषितम् ); चिरं कुरु कुमारेण सहितो राज्यमक्षतम् PārśvC. 3. 549; 6. 1259.

**अक्षतमहावृष्टि** ( akṣata-mahāvṛṣṭi ) *f.* a heavy shower of whole rice-grains अथाक्षतमहावृष्ट्या लाजपुष्पघृतैरपि । वृष्णयोऽवाकिरन् प्रीताः संकर्षणजनार्दनौ MahāBhā. ii. App. I. 21. 1436; अथाक्षतमहावृष्ट्या···। अवकीर्य च लाजैस्तां स्त्रियो जग्मुर्यथागतम् HariVaṁ. 96. 19.

**अक्षतमहाशक्ति** ( akṣata-mahāśakti ) *adj.* possessed of great unimpeded power इत्थं ते परमेश्वराक्षतमहाशक्तेः सदा संश्रितः संसारेऽत्र···क्लिश्याम्यहं केवलम् Stotrā. 11. 12.

**अक्षतमातृ** ( akṣata-mātṛ ) *f.* Virgin Mothers (a class of female deities) तदकरणपक्षेऽप्यक्षतमातरः सर्वैः पूज्या एव BālamBha. i. 573. 24 (*on* 1. 250); यदा तु त्रयोऽपि जीवन्ति तदा नैव कुर्यात्तदाक्षतमातृपूजामात्रं कार्यम् BālamBha. i. 576. 25 (*on* 1. 250); तेषामप्यक्षतमातृपूजावत् पूजनमात्रं कार्यम् BālamBha. i. 577. 6 (*on* 1. 250)

**अक्षतमाष** ( akṣata-māṣa ) *m.* unbroken black bean *Phaseolus Radiatus* अक्षतमाषाः स्विन्नास्तिलसहितास्तण्डुला दधि च गव्यम् । वृषभपिशितं मृगस्य च पञ्चानामश्विनादीनाम् YogYā. 7. 16.

**अक्षतमित्र** ( akṣata-mitra ) *n.* a friend who is not hurt (whose piece (in chess) is not hurt) अक्षतमित्रेण मित्रस्य बलं हन्तु न शक्यते CaturDī. 9. 12.

**अक्षतमित्रवर्ग** ( akṣata-mitravarga ) *adj.* whose host of friends is not hurt नरवाहनदत्तदेवः प्रीतिं परामभजताक्षतमित्रवर्गः KathāSaSāg. xv. 1. 157.

**अक्षतमिश्र** ( akṣata-miśra ) *adj.* mixed with unbroken rice-grains गन्धपुष्पयवसर्षपदूर्वासंयुतं तिलकुशाक्षतमिश्रम् । ··· अर्घ्यमेतत् DevīCatuSt. 8; तं कूपम्···चन्दनाक्षतमिश्रेण···पयसा···निशादौ परिपूरयेत् MayaMa. 4. 12.

**अक्षतमिश्रित** ( akṣata-miśrita ) *adj.* mixed with unbroken rice-

grains तिलैरक्षतमिश्रितैः । (अनलम्…तर्पयेत) JayāS. 15. 153; (अग्निम्) धूपैर्दीपेन दध्ना च तिलैरक्षतमिश्रितैः । (तर्पयेत) PāraS. 7. 130.

**अक्षतमुख** (akṣata-mukha) *n.* unhurt face ततो यावदसौ गोपः प्रदीपमादाय पश्यति तावदक्षतमुखमवलोक्य तच्चरणयोः पतितः Hitopa. ii. 100(2)

**अक्षतमुखग्रास** (akṣata-mukhagrāsa) *adj.* (an animal) with an unconsumed morsel in the mouth तथाक्षतमुखग्रासैर्धनरूपतया स्थितैः । व्यालैः SamarāSū. ii. 89. 7.

**अक्षतमौक्तिक** (akṣata-mauktika) *n.* a pearl that is not pierced through अभ्रंलिहोल्लोलकुले कुचेषु क्षिप्रं क्षिपत्यक्षतमौक्तिकाली: S'rīKaC. 12. 36.

**अक्षतयुक्त** (akṣata-yukta) *adj.* [*f.* -ā] together with unbroken rice grains सर्षपाक्षतयुक्ताभिर्दूर्भिर्गात्राणि मार्जयेत् AṣṭāSam. ii. 195. 14 (6. 5); ततः प्रातर्नित्यपूजां कृत्वा पुनर्देवं संपूज्य गन्धदूर्वाक्षतयुक्तं दमनमादाय NirṇaSi. 67. 30.

**अक्षतयुत** (akṣata-yuta) *adj.* with unbroken grains (of corn) (कुम्भान्…दिक्षु…न्यसेत्) गन्धपुष्पाक्षतयुतान् वस्त्रस्रग्दामवेष्टितान् ĪśānS'iPa. i. 37. 61; ततः शालीन्मध्ये…तण्डुलवरानपि न्यसेत् दर्भांस्तदुपरि च दूर्वाक्षतयुतान् PāñcaRā.(Nā.) iii. 7. 13.

**अक्षतयोनि** (akṣata-yoni) *adj.* (a woman) who is not deflowered, virgin सा चेदक्षतयोनिः स्याद् गतप्रत्यागतापि वा । पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति MahāBhā. xiii. 314*. 1=ManuSm. 9. 176; कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता । पुनर्भूः प्रथमा प्रोक्ता पुनः संस्कारमर्हति NāraSm. 178. 46; पाणिग्रहे मृते बाला केवलं मन्त्रसंस्कृता । सा चेदक्षतयोनिः स्यात्पुनः संस्कारमर्हति VasiSm. 17. 66; कन्या चाक्षतयोनिः स्यात् VṛGautaSm. 515. 17(4); पूर्वं प्रतिगृहीतामक्षतयोनिमपि (कन्यां त्यजेत्) ManuBh. ii. 262. 19 (*on* 9. 72); पुनर्भूर्द्विविधा क्षतयोनिरक्षतयोनिश्च JayaMa. 247. 2 (*on* 4. 2); मुनिदेवतामाहात्म्याद् या पुंयोगेऽप्यक्षतयोनिर्भवति Pradī. iv. 141A. (*on* P. iv. 1. 116); एवं च यानि संस्काराद्दूर्ध्वमक्षतयोन्याः पुनरुद्वाहपराणि तानि युगान्तराभिप्रायाणीति मन्तव्यम् SmṛtiCan. i. 221. 12; अक्षतयोनिः पत्या संस्कारमात्रं कृत्वा परित्यक्ता प्राप्तवैधव्या वा ManvaVi. 1205. 7 (*on* 9. 176); 1282. 18 (*on* 10. 5); जाता योजनगन्धाप्यक्षतयोनिर्मुनेर्गिरा Dhūrtā. 338; विवाहपूर्वं यः पुंयोगस्तदभाववती कन्या नाक्षतयोनिः Prasā. i. 713. 8.

**अक्षतयोनिका** (akṣatayoni-kā) *adj.* (a woman) who is not deflowered, virgin पाराशरवरेणाशु जाता साक्षतयोनिका BṛKathāK. 96. 77; कन्यां पिता त्वक्षतयोनिकाम् । कुलशीलवते दद्यात् BhaviP. 270B. 8 (i. 182. 50); उद्वाहिता च या कन्या न संप्राप्ता च मैथुनम् । …तां कन्यां सा चेदक्षतयोनिका । कुलशीलवते दद्यात् LaS'ātāSm. 45; अकन्येति च यः कन्यां ब्रूयाद् द्वेषेण मानवः…इति वाक्ये अक्षतयोनिकायां कन्याशब्दः स्पष्टः एव VīraMi. (S'rāddha.) 350. 17.

**अक्षतयोनित्व** (akṣatayoni-tva) *n.* the state of being one who is not deflowered, virginity न तावत्पुत्रिका कन्या अक्षतयोनित्वात् Mitā. 476. 27. (*on* 3. 280); न त्वक्षतयोनित्वं कन्यात्वं इति भावः LaS'abdeS'e. ii. 214. 17; Bālam-Bha. i. 277. 2 (*on* 1. 90)

**अक्षतरङ्ग** (akṣata-raṅga) *m.* unbroken or perfect stage भगवति कामाक्षि…तव हि कटाक्षतरङ्गः करुणोर्मिनटीविशङ्कटाक्षतरङ्गः YātrāPra 3. 187.

**अक्षतरु** (akṣa-taru) *m.* the tree *Terminalia Belerica* अवनिपतिः…ताम्…अरण्यभूमिमिवाक्षतरूपसंपन्नाम्…ददर्श Kād. 11. 14; अक्षतरुस्कारस्करमयं शुभम् । प्रासादं तु विनिर्माय ĪśānS'iPa. i. 43. 36; अर्काः केचन केचिदक्षतरवः…अत्र विपिने SūktiMu. 33. 19; अक्षतरूपश्लाध्या वनिताजनतेव भाति पुरवन्या Mukundā. 176; (होमः) वैरिविनाशनः । तथैवाक्षतरूद्भूतपञ्चाङ्गहवनादपि TantrRā. 21. 33; लिखेदस्त्रं फलकेऽक्षतरूद्भवे S'āraTi. 24. 37.

**अक्षतरुधिर** (akṣata-rudhira) *n.* blood without any injury अक्षतरुधिरे…नारदीया शान्तिः कर्तव्या AdbhuSāg. 458. 11.

**अक्षतरूप** (akṣata-rūpa) *n.* unimpaired beauty अवनिपतिः…ताम्… अरण्यभूमिमिवाक्षतरूपसंपन्नाम्…ददर्श Kād. 11. 14; अक्षतरूपश्लाध्या वनिताजनतेव भाति पुरवन्या Mukundā. 176.

**अक्षतरोमन्** (akṣata-roman) *adj.* with unhurt hair (i. e. not even slightly hurt, completely safe) दर्शयिष्यामि युष्माकमपि प्रौढिम्…अङ्गदाय गतः पारमङ्गैरक्षतरोमभिः RāmC. 21. 110.

**अक्षतरोष** (akṣata-roṣa) *m.* undiminished anger भूयोऽप्यक्षतरोषधाम्नि भवति…प्रह्लादे पदयोर्नमति…त्वं करमस्य मूर्ध्नि समधाः Nārāy. vii. 25. 9.

**अक्षतर्पण** (akṣa-tarpaṇa) *n.* soothening of the eye श्लेष्मा…शिरःसंस्थोऽक्षतर्पणात् । तर्पकः AṣṭāHṛ. i. 12. 17.

**अक्षतल** (akṣa-tala) *n.* name of a place or a person याजुषो [क्ष] तलश्रीतिरुमलार्य्यवरोद्भवः EI. xii. 180. 203.

**अक्षतलाज** (akṣata-lāja) *m.* unbroken parched grain (of rice) अथोपकल्पयतेऽक्षतधाना अक्षतलाजान् HirGS. ii. 16. 3 (comm. व्रीहीणां लाजास्तथान्यत्र दृष्टत्वात्)

**अक्षतवक्त्र** (akṣata-vaktra) *adj.* (a jar or water-pot) having unbroken grains of rice or barley in its mouth तत्र सूत्रविनिवेष्टितकुम्भम्…माल्यदामकुसुमाक्षतवक्त्रम् । …पूजयेत् ĪśānS'iPa. ii. 10. 19.

**अक्षतवक्षोभाग** (akṣata-vakṣobhāga) *adj.* whose chest is unhurt रक्षोभीमौ…अक्षतवक्षोभागौ जघटाते YudhiVi. 1. 45.

**अक्षतवत्** (akṣata-vat) *adv.* like one who is uninjured भ्रेजिरेऽक्षतवद्योधाः Bhaṭṭi. 14. 68.

**अक्षतवत्सक** (akṣatavatsa-ka) *adj.* [*f.* -ā] whose children are uninjured (i. e. safe or alive) यथा चन्द्रमुखी दीप्तिर् (? दर्पाद्) बभूव मृतपुत्रिका । पश्चाच्चीर्णव्रता सैव बभूवाक्षतवत्सका BhaviP. 672B. 32 (iv. 46. 4)

**अक्षतवपुस्** (akṣata-vapus) *n.* unimpaired or indivisible form पादपङ्कजरसं तव केचिद् भेदपर्युषितवृत्तिमुपेताः । केचनापि रसयन्ति तु सद्योभातमक्षतवपुर्द्वयशून्यम् Stotrā. 4. 7.

**अक्षतवाच्** (akṣata-vāc) *adj.* whose words are never falsified अर्थेष्वप्रतिषिद्धत्वात् पुरुषेच्छानुरोधिनः । इष्टशब्दाभिधेयत्वस्याप्तो वाक्षतवाग् जनः PramāVā. 4. 109.

**अक्षतवारि** (akṣata-vāri) *n.* water containing unbroken grains कलशान् पूर्ववन्न्यसेत्…गन्धाम्भोऽक्षतवारि च PāraS. 14. 149=14. 265.

**अक्षतवाहन** (akṣata-vāhana) *n.* a conveyance (i. e. chariot) which is unimpaired or unbroken कार्यं निर्गमनं छत्रध्वजाश्वाक्षतवाहनैः NāraS. 33. 77.

**अक्षतविक्रम** (akṣata-vikrama) *adj.* of unchallenged valour तस्याभूत् तनयः…अक्षतविक्रमः EI. xviii. 34. 74.

**अक्षतविग्रह** (akṣata-vigraha) *adj.* having uninjured body, alive ततो वीतप्रग्रहा अक्षतविग्रहा वाहा रथमादाय…महारण्यं प्राविशन् DaśKuC. 4. 17(1); ज्येष्ठो व्याधिसहस्राणां मदनो मतिसूदनः । येन संप्राप्यते दुःखं नरैरक्षतविग्रहैः PadmP. (Ra.) 12. 33; 45. 26; प्रभुकार्यमनिष्पाद्य…कः पुरः शक्नुयात्स्थातुं स्वामिनोऽक्षतविग्रहः SkandP. iv. 45. 20 (comm. अक्षतविग्रहः सन् जीवन् सन्नित्यर्थः); अन्यथा मत्सभां जित्वा को यात्यक्षतविग्रहः PrabhāC. 134. 25.

**अक्षतविचर्चित** (akṣata-vicarcita) *adj.* smeared with unbroken rice पुरःकल्पितमण्डले । स्वार्णं वा राजतं ताम्रं मृण्मयं घटमेव वा । … दध्यक्षतविचर्चितम् । स्थापयेत् MahNirvāT. 10. 141.

**अक्षतविभूषित** (akṣata-vibhūṣita) *adj.* decorated with unbroken grains of rice or barley पञ्चमं तु पुनर्मध्ये दध्यक्षतविभूषितम् । स्थापयेदव्रणं कुम्भम् MatsyaP. 68. 21; 93. 21; सर्वौषध्युदकैः सिक्तान् दध्यक्षतविभूषितान् । वृक्षान्माल्यैरलंकृत्य वासोभिरभिवेष्टयेत् PadmP. v. 24. 194.

**अक्षतविमिश्र** (akṣata-vimiśra) *adj.* mixed with unbroken grains of rice or barley एवं भुक्तेषु विप्रेषु दद्यात्पिण्डान्… । दध्यक्षतविमिश्रांस्तु BhaviP. 275A. 6 (i. 185. 9)

**अक्षतविमिश्रित** (akṣata-vimiśrita) *adj.* mixed with unbroken grains of rice or barley शालिभक्तं सगोधूमं तिलाक्षतविमिश्रितम् । गव्यं च सफलं चैव देयश्चैभ्यस्त्वयं बलिः BhaviP. 325B. 23 (ii(1). 7. 18); ĪśānS'iPa. i. 32. 44.

**अक्षतविमृक्षित** (akṣata-vimṛkṣita) *adj.* covered with unbroken rice grains विचित्रघटमानीय दध्यक्षतविमृक्षितम् ।…साधकः । संस्थाप्य…धूपदीपौ प्रदर्शयेत् MahNirvāT. 8. 158.

**अक्षतवृत्तम्** (akṣata-vṛttam) *adv.* in a manner which does not defile one's character, without defiling one's character सत्कृत्त्री क्षेमचिकीर्नृपस्य दृष्ट्वा पराभ्यासपरां महेलाम् । ररक्ष तामक्षतवृत्तमर्णोराजश्रुलुक्यो धवलाङ्गजन्मा VasaViKā. 3. 38.

**अक्षतव्रत** (akṣata-vrata) *adj.* whose vow is unbroken प्रत्यग्रोष्माणि मांसानि नराणां रुधिराणि च । इत्यन्नपानं पञ्चाक्ष यक्षाणामक्षतव्रत JātaMā. 44. 14 (8. 16); दिनमेकमपि स्थातुं कोऽलं स्त्रीसन्निधौ तथा । चतुर्मासीं यथातिष्ठत्स्थूलभद्रोऽक्षतव्रतः PariPar. 8. 182; PrabhāC. 128. 26.

**अक्षतशक्तियुक्त** (akṣataśakti-yukta) *adj.* endowed with unimpaired power मन्त्राक्षरैरक्षतशक्तियुक्तैरहो हरिद्रारससङ्गपिङ्गैः । तस्याङ्कितः प्राह ललाटपट्टः सुवर्णवर्गैरिव भाग्यशोभाम् Rāṣṭrau. 9. 35.

**अक्षतशरीर** (akṣata-śarīra) *adj.* **A** with uninjured body, not physically hurt अक्षतम् अक्षतशरीरम् ManuBh. ii. 228. 9 (*on* 8. 380); ब्राह्मणः पुनर्महत्यपराधेऽक्षतशरीरो देशान्निःसार्यते ManvaMu. 311. 29 (*on* 8. 124); 357. 8 (*on* 8. 380); (पल्लीपतिना) त्रयोऽप्यक्षतशरीरा मुक्ताः Pañcā. 121. 19; **B** with healed body देवि भगवति…एते चत्वारोऽक्षतशरीरा जीवन्तु VetāPañ.(S'i.) 20. 41; देवि यदि तुष्टासि तदा एष चौरोऽक्षतशरीरो जीवतु VetāPañ.(S'i.) 34. 31.

**अक्षतशरीरता** (akṣataśarīra-tā) *f.* **A** the state of having an uninjured body अलिपोतक केतकीनामन्तः…लाभः स एव भवतो यदि कण्टकानां

KūrmaP. 583. 18 (2. 18); सुवर्णमणिमुक्ताफलस्फटिकपद्माक्षेन्द्राक्षपुत्रजीवकानामन्यतमामक्षमालां कुर्यात् Aparā. *on* 1. 23 (47. 24); अक्षमाला स्त्रियां विद्यादरुन्धत्यां तथापि च । जपसंख्यापरिच्छित्यै रुद्राक्षस्फटिकादिभिः । सूत्रस्यूतैः कृते चापि वलये NānārthāSaṁ. iii. 1. 2; कापालीमक्षमालां झटिति भगवतो भैरवस्यार्पयामि PrasaRā. 4. 34; VīraMi.(Āhnika.) ii. 326. 3; [as an *āyudha* of male and female deities] वहन्तीं करे पुस्तकं चाक्षमालाम् (भारतीम्) DeviBhuSt. 154. 13; S'āraBhuA. 137. 3; BṛParāSm. 2. 14; PauṣkS. 41. 84; शङ्खचक्रगदापद्ममक्षमालां कमण्डलुं दुर्गा…बिभ्रती BrahmVaiP. i. 3. 75; DevīBhāP. ix. 50. 64; S'ivaP. v. 46. 23 (462. 4); ĪśānS'iP. ii. 3. 65; RasRaSa. 6. 25; Rasā. 2. 70; LalitāSaBh. 117. 27 (*on* 151); दधतम्…अक्षमालाम्…उपतिष्ठेद्धरिं सदा PāñcaRā.(Nā.) iii. 15. 58; PārāSū. 39. 25; SātvaT. 5. 20; तथा दशभुजेष्वेव (गणेशस्य) आयुधानि ब्रवीमि वः ।…अक्षमालां लाङ्गलं च SkandP. i(1). 11. 10; कमण्डलुं चाक्षमालां च वामसव्यकरौ धृतौ…एवं पितामहं ध्यात्वा MānaSā. 7. 79; YaśasCam. ii. 299. 12; ViṣṇuDhaP. iii. 44. 7; समुद्भूतस्त्रिलोचनः । शूलपाणिः कपर्दी च अक्षमालां च दर्शयन् VāmaP. 2. 25; BhāgP. iv. 6. 38; BhaviP. 367A. 25 (II. ii. 11. 11); YātrāPra. 1. 81; भार्गवः (Venus) … दण्डाक्षमालावरदाम्बुपात्रः VasiS. 18. 61; कुण्डिका चाक्षमाला च वामेवामे करे क्रमात् MānaSā. 51. 16; अक्षमालामसिं शक्तिं दण्डं शूलं च दक्षिणे । निवेशयेत् Mānaso. iii. 1. 727; ĪśānS'iPa. ii. 21. 79; कण्ठादुदरबन्धान्तमक्षमालां प्रकल्पयेत् S'ilpaRa. ii. 16. 43; **3** a garland of letters beginning with *a* and ending with *kṣa* (this is described as *akalpitā* 'not fashioned (with beads)' in contrast to the rosary of beads) अक्षमाला द्विधा प्रोक्ता कल्पिताऽकल्पितेति च । कल्पिता मणिभिः क्लृप्ता मातृका स्यादकल्पिता । आदिक्षान्ताक्षवर्णत्वादक्षमालेति कीर्तिता KulārT. 15. 48; आदिक्षान्तार्णयोगित्वादक्षमालेति कीर्तिता S'āraTi. 23. 115; आदिक्षान्तैरक्षरैः स्यादक्षमाला यथार्थतः TantrR. 1. 63; LalitāSaBh. 168. 23 (*on* 207); अक्षमालापदेनाकारादिक्षकारान्तमातृकामालोच्यते SetuBa. 164. 25; **4** one of the seven postures (*mudrās*) त्रिशूलयोनीं सुरभिमक्षमालां च लिङ्गकम् । अम्बुजं च महामुद्रामिति सप्त प्रदर्शयेत् DevīBhāP. xi. 17. 9; दशमुद्रिकाः । …लिङ्गयोनित्रिशूलाक्षमालेष्टाभीमृगाह्वयाः Tantrābhi. xi. 69. 9; xi. 69. 12; **5 i** a garland of dice कूटाक्षदेविनः पापान्निर्हरेद् द्यूतमण्डलात् । कण्ठेऽक्षमालामासज्य स ह्येषु विनयः स्मृतः NāraSm. 214. 6; **5 ii** a gambling den यः परित्यक्तबान्धवोऽक्षमालास्वेव शय्यासनविहारी प्रसिद्धः क्रीडनकः तद्दृणमाक्षिकमिति शक्यते निश्चेतुम् ManuBh. ii. 149. 27 (*on* 8. 159); **5 iii** a row of *vibhītaka* trees राजा … विन्ध्यगिरिमेखलामिवाक्षमालोपशोभिताम् … अङ्गलक्ष्मीं दधानम्…विद्याधरमुनिमपश्यत् TilaMañ. 24. 4; **6 i** a name of Arundhatī (Vasiṣṭha's wife) वसिष्ठश्चाक्षमालया (रेमे) MahāBhā. v. 115. 11; अक्षमालायाम्…तनयं वसिष्ठोऽजनयत् BuddaC. 4. 77; भेजे श्वपाकीं मुनिरक्षमालाम् Saund. 7. 28; अक्षमाला वसिष्ठेन संयुक्ताधमयोनिजा ManuSm. 9. 23; अक्षमालाख्या निकृष्टयोनिजा वसिष्ठेन परिणीता…पूज्यतां गता ManvaMu. 368. 4 (*on* 9. 23); TātpaṬ.(Vā.) 2. 16 (*on* i. 1. 1); SkandP. vii(1). 129. 4; vii(1). 129. 34; DharK. 2419; AnekāSaṁ. 4. 286; AbhidhāCi. 849; ViśvaPra. 161. 152; KośaKaTa. 775; KalpaKo. 83. 30; S'abdaRaSaK. 311. 9; **6 ii** name of the daughter of Bhṛgu, Vatsa's mother यस्मिन्नेव तु वासरे सरस्वत्यसूत तनयं तस्मिन्नेव…अक्षमालापि सुतं प्रसूतवती HarṣaC. 60. 14.

[2]**अक्षमाला** (akṣa–mālā) *f.* a series of sense–organs तस्मात्तु तेभ्यः श्रवणादिहेतवस्ततोऽक्षमाला जगतो व्यवस्थिता VarāP. 2. 9.

**अक्षमालाकर** (akṣamālā–kara) *adj.* holding a rosary of beads in the hand कालं नारायणस्यांशं च ददर्श पुरतः सती…अक्षमालाकरं वरम् BrahmaVaiP. i. 15. 26.

**अक्षमालाकरत्व** (akṣamālākara–tva) *n.* the state of holding a rosary of beads in the hand अक्षमालाकरत्वं दृष्टार्थत्वाय जपस्य चात्र विनियोगः VīraMi.(Pūjā.) 325. 1.

**अक्षमालाग्रफलक** (akṣamālāgraphalaka) *n. m.* the central or the most prominent bead in a rosary of beads अक्षमालाग्रफलके मेरुः सुरगिरौ तथा AnekāK. 676.

**अक्षमालाग्रहण** (akṣamālā–grahaṇa) *n.* act of taking away a rosary of beads नाहमेवमस्याः…मर्षयाम्यक्षमालाग्रहणापराधमिमम् Kād. 147. 3.

**अक्षमालाङ्गुलीयक** (akṣamālāṅgulīyaka) *adj.* carrying a rosary of beads as a ring त्रिदण्डी मुण्डितः…अक्षमालाङ्गुलीयकः…पार्थः MahāBhā. I. App. 113. 11.

**अक्षमालाढ्य** (akṣamālāḍhya) *adj.* [*f.* –ā] endowed with a rosary of beads सावित्रीम्…वरदां चाक्षमालाढ्यां त्रिशूलाभयहस्तकाम्…नमाम्यहम् DevīBhāP. xi. 19. 2.

**अक्षमालाधर** (akṣamālā–dhara) *adj.* [*f.* –ā] holding or wearing a rosary of beads अक्षमालाधरा बाला…तपस्तेपे SkandP. vii (3). 36. 76; शिव त्र्यक्षाक्षमालाधर…आधत्स्व सिद्धिं पराम् Stotrā. 11. 11; चण्डी नाम गणोऽभवत् । वृषध्वजः…अक्षमालाधरः SaurP. 32. 54; अक्षमालाधरायेति धीमहे तन्न इत्यपि । वीरभद्रः प्रकारश्च चोदयादिति योजिता (वीरभद्रगायत्री) ĪśānS'iP. ii. 59. 17; कारयेत् तु सुवर्णेन गजवक्त्रं चतुर्भुजम् । अक्षमालाधरम् VasiS. 35. 21; *m.* name of the god Gaṇeśa अक्षमालाधरो ज्ञानमुद्रावान्…इति वैनायकं नाम्नां सहस्रम् GaṇeP. i. 46. 49.

**अक्षमालाधरण** (akṣamālā–dharaṇa) *n.* holding of a rosary of beads कुशाक्षमालाधरणं राजधर्मे हि नेष्यते GaṇeP. ii. 120. 54.

**अक्षमालाधृतकर** (akṣamālā–dhṛtakara) *adj.* with a rosary of beads held in the hand जाबालिर्यत्र तिष्ठति । अक्षमालाधृतकरः SkandP. vi. 143. 26.

**अक्षमालापरिक्षिप्त** (akṣamālā–parikṣipta) *adj.* encircled by a rosary of beads अक्षमालापरिक्षिप्तं ज्योतिषां परमं निधिम् (शिवम्) …नारायणः…ववन्दे MahāBhā. vii. 172. 63.

[1]**अक्षमालापवृत्ति** (akṣamālāpavṛtti) *f.* the turning (i. e. counting) of the beads of rosary अक्षमालापवृत्तिज्ञा कुशासनपरिग्रहा। ब्राह्मीव दौर्जनी संसद् वन्दनीया समेखला NalaCam. 1. 7.

[2]**अक्षमालापवृत्ति** (akṣamālāpavṛtti) *f.* [akṣamā – ālāpa – vṛtti] the way of angry conversation, NalaCam 1. 7 (comm. अक्षमया रुषा संभाषणस्य वृत्तिम्)

**अक्षमालापूर्व** (akṣamālā–pūrva) *adj.* [*f.* –ā] together with a rosary of beads षड्वक्त्रः…रक्ताकल्पः शिखिशक्त्यक्षमालापूर्वा हेतीर्विदधद् बालवेषः ĪśānS'iPa. ii. 12. 57.

**अक्षमालाप्रवृत्ति** (akṣamālā–pravṛtti) *f.* **1** turning (i. e. counting) of the beads of rosary अक्षमालाप्रवृत्तिज्ञा कुशासनपरिग्रहा । ब्राह्मीव दौर्जनी संसद् वन्दनीया समेखला SūktiSu. 32; **2** the throw of the sets of dice SūktiSu. 32.

**अक्षमालाबन्ध** (akṣamālā–bandha) *m.* tying of a garland of dice (as a punishment for cheating in dice–playing) कण्ठेऽक्षमालाबन्धपूर्वकविवासः BālamBha. ii. 298. 24 (*on* 2. 202)

**अक्षमालामणि** (akṣamālā–maṇi) *m.* a bead in the rosary अथाक्षमालामणिसंख्यामाह प्रजापतिः BālamBha. i. 88. 27 (*on* 1. 25)

**अक्षमालामय** (akṣamālā–maya) *adj.* holding a rosary of beads ऋग्वेदः श्वेतवर्न्नः (? र्णः) स्याद् द्विभुजो रासभाननः । अक्षमालामयः सौम्यः प्रीतश्चाध्ययनोद्यतः CaturCin. ii(1). 104. 14.

**अक्षमालामुद्रा** (akṣamālā–mudrā) *f.* name of a gesture अङ्गुष्ठतर्जन्यग्रे तु ग्रन्थयित्वाङ्गुलित्रयम् । प्रसारयेदक्षमालामुद्रेयं परिकीर्तिता Tantrābhi. (11). 75. 6.

**अक्षमालावत्** (akṣamālā–va(n)t) *adj.* holding a rosary of beads रावणः शिखी…अक्षमालावान् BhaṭṭiKā. 5. 61.

**अक्षमालावर्ग** (akṣamālā–varga) *m.* a class of rosaries अत्र स्फाटिकेनेत्यक्षमालावर्गोदाहरणम् PāñcRāRa. 107. 19.

**अक्षमालावलय** (akṣamālā–valaya) *adj.* having a rosary of beads as a bracelet एषोऽक्षमालावलयम्…सभाजने मे भुजम्…प्रयुङ्क्ते RaghuVa. 13. 43; *n.* a bracelet in the form of rosary of beads दक्षिणेन करेणाक्षमालावलयमुद्वहन् KathāSaSāg. xii. 34. 18.

**अक्षमालाविधि** (akṣamālā–vidhi) *m.* the mode of making a rosary of beads मणिं प्रकल्पयेन्मेरुमक्षमालाविधिस्त्वयम् LakṣmīT. 39. 47.

**अक्षमालाविभूषित** (akṣamālā–vibhūṣita) *adj.* decorated with a rosary of beads तन्मध्ये राक्षसाः पञ्च…अक्षमालाविभूषिताः GaṇeP. ii. 10. 10; अक्षमालाविभूषिताः…अपश्यन्…मुनयः नृपम् Hastyāyur. 3. 2 (1. 1)

**अक्षमालासमाकुल** (akṣamālā–samākula) *adj.* abundantly adorned by a rosary of beads अक्षमालासमाकुलं पद्मम्…स्मरेत् PauṣkS. 24. 31.

**अक्षमालास्वरूपिणी** (akṣamālā–svarūpiṇī) *adj.* (*f.*) having the form of the series of letters (from *a* to *kṣa*) देवी…अक्षमालास्वरूपिणीति वा LalitāSaBh. 125. 28 (*on* 167)

**अक्षमालिक** (akṣamāl–ika) *adj.* having a rosary of beads स्याज्जीवः कुण्ड्यक्षमालिकः AgniP. 51. 11.

**अक्षमालिका** (akṣa–mālikā) *f.* [Alt. Gr. II. 2 p. 315] rosary of beads अक्षमालिकां कर्णे कृत्वा ध्यानं विसृज्य च SkandP. iv. 98. 54; PadmP. iv. 110. 45; YogVā. iii. 104. 19; AgniP. 50. 16; °अक्षमालिका…त्रिदण्डादिकोपकरणम् …परिव्राजमपश्यत् AvantiKa. 38. 3; 226. 5; पतिता स्पर्शभीत्येव कम्पलोलाक्षमालिका DarpaDa. 3. 94; सः…आवर्तयामास चिरं मिथ्याक्षमालिकाम् KathāSaSāg. v. 1. 102; xii. 8. 175; अनेन विधानेन … प्रकुर्यादक्षमालिकाम् MālinīT. 19. 75; ĪśānS'iPa. i. 30. 26; KulārT. 16. 19; LakṣmīT. 40. 9; बिभ्राणं पाणिपद्मेन बलक्षामक्षमालिकाम् Surath. 3. 3; राजतैः कुशमूलैश्च गृहस्थस्याक्षमालिका

TantrSā. 19. 28; दक्षिणे परहस्ते तु कारयेदक्षमालिकाम् S'ilpaRa. ii. 22. 148; श्रवणे दधदक्षमालिकां स:…आह S'ivLī. 15. 61; NīlaVi. 42. 12.

**अक्षमालिन्** ( akṣamāl-in ) *adj.* having a rosary of beads नम:… शोभनायाक्षमालिने VāyuP. i. 30. 205; शुक्र: कुण्ड्यक्षमाली स्यात् AgniP. 51. 12; VāmaP. 47. 87.

**अक्षमालेश्वर** ( akṣamāles'vara ) *m.* name of a S'ivaliṅga ततो गच्छेन्महादेवि अक्षमालेश्वरं परम् SkandP. vii. 129. 1.

**अक्षमावत्** ( akṣamā-va(n)t ) *adj.* not having forbearance अथ वैरोचने दोषानिमान्विद्ध्यक्षमावताम् MahāBhā. iii. 29. 16; अक्षमावान्परं दोषैरात्मानं चैव योजयेत् MahāBhā. v. 176*; य:…क्षेप्ता क्षमिणश्चाक्षमावान् । हन्यामहं तादृशानां शतानि MahāBhā. viii. 29. 20.

**अक्षमावह** ( a-kṣamāvaha ) *adj.* [ *f.* –ā ] not causing forgiveness अक्षमावहां ( अनङ्गलेखां ) ताम्…वीक्ष्य स प्रजज्वाल मन्युना RājTa.( Ka. ) 3. 509.

**अक्षमासारसर्वस्व** ( akṣamā-sārasarvasva ) *adj.* whose sole wealth is want of forbearance ( i. e. completely lacking forbearance ) रे शक्र…अक्षमासारसर्वस्वं दुर्वाससमवेहि माम् SkandP. ii(9). 8. 29; अक्षमासारसर्वस्वं किं मां नयसि माधव SkandP. vii(4). 2. 35.

**अक्षमित्व** ( akṣami-tva ) *n.* the state of being intolerant वाक्षमित्वमविज्ञाय न क्लीबत्वमभृत्यवे । तस्मादक्लिश्यमानात्मा परं ब्रह्मैव चिन्तयेत् Yas'asCam. ii. 391. 16.

**अक्षमिन्** (a-kṣamin) *adj.* **A** not being tolerant, not forgiving एतावानेव पुरुषो यदमर्षी यदक्षमी MahāBhā. v. 131. 30; एवं ज्वालामुखो जातो राजा माहेश्वरोऽक्षमी PadmP. iv. 106. 95; समरभटो बुद्ध्वा नृपोऽक्षमी । …निरगाद्योद्धुमग्रत: KathāSaSāg. xii. 7. 281; PāṇḍaC. 11. 162; **B** not possessing forbearance or endurance अन्त:क्षमावतां वासे वसन्नपि निरन्तरम् । अक्षम्यहं यतोऽम्बुस्थ: कुलीरस्तरणे पटु: MalliC. 8. 365; **C** not having patience (unwilling to wait) स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत्काल: कृतान्तोऽक्षमी VetāPañ(S'i.) 54. 23; किं युक्तं सहसाभ्युपैति बलवान् काल: कृतान्तोऽक्षमी S'atTrayī. 2. 249; *m.* name of one of the fifty attendant deities of Viṣṇu who occupy the southern region of the temple धर्मो धर्मधर:…वाडवश्चाक्षमी तथा । गणा: पञ्चाशदेते तु दक्षिणां दिशमाश्रिता: PāraS. 17. 172.

**अक्षमिश्र** ( akṣa-mis'ra ) *adj.* mixed with ( the powder of ) the berries of the *Terminalia Bellerica* रोहिणी चाक्षमिश्रम् । सर्वं संपिष्य तोये RasRaSa. 17. 65.

**अक्षमुद्रा** ( akṣa-mudrā ) *f.* engraving on dice माता पुत्र: पिता भ्राता भार्या मित्रजनस्तथा । अष्टापदपदस्थाने त्वक्षमुद्रेव न्यस्यते MahāBhā. xii. 287. 38; अनेकदेहभेदेन भिन्ना वृत्तिरिहात्मन: । अष्टापदपरिक्षेपे ह्यक्षमुद्रेव लक्ष्यते S'ivaP. vii. 5. 57 ( 507B. 13 )

**अक्षमूल** ( akṣa-mūla ) *adj.* based on sense-organs इदं रजतमित्यनुवर्तमानस्येदमर्थस्यावभासोऽक्षमूल: NītiMā. 20. 1; अक्षमूलोऽनुमानादि: NyāyMāVi. 17. 12. ( *on* i. 1. 4 )

1**अक्षमोषित** ( akṣa-moṣita ) *adj.* robbed ( i. e. defeated ) in gambling नाक्षमोषितमोजो न समाप्तिर्गूढचर्म(?र्य)या ।…कोऽयं वो धर्मसंभव: Kapphiṇā. 18. 71.

2**अक्षमोषित** ( akṣamoṣita ) *adj.* burnt by intolerance नाक्षमोषितमोजो न समाप्तिर्गूढचर्म(?र्य)या ।…कोऽयं वो धर्मसंभव: Kapphiṇā. 18. 71.

1**अक्षमोहित** ( akṣa-mohita ) *adj.* infatuated by ( pleasures of ) sense–organs श्रीत: सुरकुलं हीनमत्रासीदक्षमोहितम् RāghPāṇ.( Dha. ) 18. 124.

2**अक्षमोहित** ( a-kṣamohita ) *adj.* not having any consideration for the earth ( i. e. subjects ) क्षात्रं तु वृत्तत: क्षिप्तमत्रासीदक्षमोहितम् RāghPāṇ( Dha. ) 18. 124 ( comm. न विद्यते क्षमाया: पृथ्व्या ऊहितं वितर्कणं यस्य )

**अक्षमौन** ( akṣa-mauna ) *n.* vow of silence ( i. e. restraint ) in respect of senses वाङ्मौनमक्षमौनं च काष्ठं सौषुप्तमेव च । वाङ्मौनं वचसां रोधो बलादिन्द्रियनिग्रह: । अक्षमौनम् YogVā. vi(1). 68. 7; वाङ्मौनमक्षमौनं च काष्ठमौनं च वेद्म्यहम् । सुषुप्तमौनं मौनेश ब्रह्मन्ब्रूहि किमुच्यते YogVā. vi(1). 68. 2.

**अक्षम्य** ( a-kṣamya ) *adj.* unpardonale अवरिष्टाक्षमक्षम्यं कपिं हन्तुं दशानन: Bhaṭṭi. 9. 26; यदक्षम्यं नु युवयो: ( राधाकृष्णयो: )…तदाग: क्वापि नास्ति StavaMā. 88. 26.

**अक्षम्रक्षण** ( akṣa-mrakṣaṇa ) *n.* oiling of the axle, ( hence ) maintaining one's body with any type of food which is available according to rule यथा शकटं रत्नभारपरिपूर्णं येन केनचित् स्नेहेन अक्षलेपं कृत्वा अभिलषितदेशान्तरं वणिगुपनयति तथा मुनिरपि गुणरत्नभरितां तनुशकटीमनवद्यभिक्षायुरक्षम्रक्षणेन अभिप्रेतसमाधिपत्तनं प्रापयतीत्यक्षम्रक्षणमिति च नाम निरूढम् TattvārthaVār. ix. 6. 19 ( 597. 25 )

1**अक्षय** (a-kṣaya) *adj.* [ *f.*–ā ] **1 i** indestructible, imperishable, permanent **ii** immortal, without death **iii** everlasting, long–lasting **iv** inexhaustible **v** endless, unlimited **2** giving everlasting or long–lasting ( fruit ), having unending ( merit ) **3** not belonging to the dark half of the month; **1 i** indestructible, imperishable, permanent यद्रेवाक्षरं नाक्षीयत तस्मादक्षयम् JaimiUBr. I. vii. 24. 2; अक्षयाल्लँभते लोकान् AtriS. 11. 58; अक्षयं क्षपयेत् कश्चित् क्षत्रिय: क्षत्रियर्षभम् MahāBhā. vii. 160. 24; अक्षया नरशार्दूल जिता लोका मया शुभा: Rāmā. iii. 4. 26; मम ता ह्यक्षया गाव:…। चरन्ति…रक्षिता: स्वेन तेजसा HariVaṁ. 45. 24; विष्णुना हतस्याप्यक्षयो लोको मे भविष्यति BālC. 3. 13 (1); तत: पुण्यान् ययौ लोकान् सर्वकामदुहोऽक्षयान् MārkP. 119. 19; गार्हस्थ्यधर्मरूपा ( धेनु: ) …आजीव्यमाना जगतां साक्षया नापचीयते MārkP. 29. 8; स प्राप्नोत्यक्षयं स्थानम् ViṣṇuP. i. 11. 44; वह्निना येऽक्षया दत्ता: शरास्तेऽपि क्षयं ययु: ViṣṇuP. v. 38. 24; हत: शूर:… । अक्षयान् लभते लोकान् ParāSm. 3. 31; अक्षये क्षयसंकल्पान्मुह्यते शिशुरेव हि YogVā. iii. 102. 1; परेऽव्ययेऽनन्तेऽक्षये ब्रह्मणि…सर्वे एकीभवन्ति MuṇḍaUBh. iii. 2. 7; अक्षय: अक्षीण: GītāBh. (S'aṅ.) 294. 1 (*on* 10. 33); प्राप्तवानहम्…आत्मपदमक्षयं क्षणात् ViveCū. 489; अभिव्यञ्जकतन्त्रस्तु मोक्षस्तेनाक्षयो मत: BṛĀraUBhVā.( Sambandha. ) 300; इत्याहुस्ते परं ब्रह्म यदनादि तथाक्षयम् S'ivDṛ. 2. 2; अग्नौ हुतानि शीर्षाणि यानि तेऽसुरपुङ्गव । भविष्यन्ति यथापूर्वमक्षयाणि AdhyāRā. vii. 2. 15; भीमेन सह संप्राप सगरो मोक्षमक्षयम् BṛKathāK. 119. 23; केवलज्ञानमासाद्य यात्यसौ मोक्षमक्षयम् SubhāRaSaṁ. 920; सप्तलोकमयो विष्णुस्तस्य य: कुरुते गृहम् । तारयत्यक्षयाल्लोँकानक्षयान् प्रतिपद्यते AgniP. 38. 48; पितृणामक्षयं स्थानं मही दत्ता मया BrahmP. 60. 63; अक्षयान् यान्ति नरकांस्तासाम्…पूर्वजा: BrahmP. 87. 61; तेषामप्यक्षयो व्यास रुद्रलोको महात्मनाम् SkandP. v (1). 7. 72; पितृणां चाक्षय: स्वर्ग: पुराणश्रवणाद् भवेत् DevīBhāP. ii. 12. 64; अक्षयान्यत्र तिष्ठन्तु नक्षत्राणि त्वदाज्ञया RāmāMañ. 35. 12; हरिचमू:…क्षयाय रक्षसां सेयमक्षया निपतिष्यति RāmāMañ. 313. 24; शूर:…अक्षयाल्लँभते लोकान् Hitopa. 3. 145; वराटं कारयेद्यस्तु प्रासादं भक्तिमान्नर: । स याति यानैर्विविधै: स्वर्गं प्राप्नोति चाक्षयम् SamarāSū. ii. 84. 12; त्वयाहं शिरसि लगुडप्रहारेण हन्तव्य: । येन कनकमयोऽक्षयो भवामि Pañcā. 258. 2; सुवर्णपुरुषो जात: खण्डितोऽप्यक्षयो हि य: PārśvC. 2. 979; अक्षयमनाशं साद्यपर्यवसितत्वात् । अक्षयं वा परिपूर्णत्वात् AupaSūṬ. 28. 12; मिलन्ति च रसेनाशु वह्निस्थान्यक्षयाणि च Rasā. 7. 146; यत्तु निरतिशयमक्षयमनपेक्षमनन्तं च सुखं तद्वाढं विद्यते SyādvāMañ. 8 (328); **1 ii** immortal, without death दैवसंयोगादक्षयोऽव्ययोऽचिन्त्यो भूतात्मना सह … गर्भाशयमनुप्रविश्यावतिष्ठते SuśruS. iii. 3. 4; ( मधुकैटभौ ) निजबाहू विमृद्नन्तौ भूतभावनमक्षयम् ।…योधयामासतु: प्रभुम् NāṭyaS'ā. 20. 4; तदा मृत्युरचिन्तयत् । सर्वाण्येव क्रमेणाहं भूतान्यद्मि किलाक्षय: YogVā. iii. 2. 3; अव्यया चाक्षयासीति न ह्यन्तस्तेऽधिगम्यते BṛĀraUBhVā. v. 16. 69; प्रसादात्तव देवेश अक्षयाहं भवे प्रभो SkandP. v (3). 4. 20; अक्षया निर्जरा: सर्वा अमराश्च प्रजास्तदा PadmP. ii. 80. 16; सूक्ष्मलिङ्गशरीरं तदा मोक्षादक्षयं प्रिये KulārT. 1. 11; अनेकजन्मसंततेर्यावदद्याक्षय: पुमान् । यद्यसौ मुक्त्यवस्थायां कुत: क्षीयेत हेतुत: Yas'asCaṁ. ii. 272. 18; ततोऽक्षयेण देहेन यशसा च विराजितम् । बुद्धाभ्यनन्दत्तं बन्धुजनो जीमूतवाहनम् KathāSaSāg. iv. 2. 251; अक्षयम्…कृष्णम्…नमत चक्रधरम् VyaktiVi. 95. 4; **1 iii** everlasting, long–lasting अक्षया तव कीर्तिश्च लोके स्थास्यति MahāBhā. iii. 42. 22; xiii. 14. 69; xiii. 30. 13; स्वर्गे वासं तथाक्षयम् । पुत्राणां चाक्षयाल्लोँकान् स्वर्गे ये रक्षसा हता: HariVaṁ. 9. 77; तिलधेनुं च यो दद्यात्…मोदते चाक्षयं कालम् MatsyaP. 187. 28; प्रादाच्च तस्मै भगवान् हरिर्नारायणो वरम् । अक्षयं वंशमिक्ष्वाको: BrahmP. 8. 58; भृगु:…ददर्श नगरम्…वटवृक्षैरथाक्षयै: BrahmVaiP. iii. 41. 11; पद्मस्य मन्त्र:…प्रयच्छत्यतुलां भूतिं भक्तानामक्षयाम् JayāS. 6. 164; 15. 134; SkandP. v (3). 9. 49; कीर्ति: श्रीमण्डलीकस्य…अस्त्वक्षया भुवि EI. xxi. 50. 38; पदे पदेऽश्वमेधस्य लभते फलमक्षयम् S'ārṅgaP. 1932; न्यायेन यद्द्रव्यमुपार्जि भूपैस्तद्भूपतीनां शुभमक्षयं च VīraBhā. 5. 112; MediK. 50. 40; **1 iv** inexhaustible अक्षया बलवन्तश्च पुरुषा: पुरुषादका: । …एतेषामालया: सर्वे विचेया: Rāmā. iv. 39. 25; तदक्षयमपर्यन्तं दुर्जयं वानरं बलम् Rāmā. vi. 325*; पार्थायाग्निर्ददौ…। इषुधी चाक्षयैर्बाणै: MahāBhā. i. 55. 37; पोषो हि त्वदधीनो मे संतानमपि चाक्षयम् MahāBhā. i. 68. 63; वैरोचने: श्रीरपि चाक्षयासीत् MahāBhā. iii. 27. 13; अप्यक्षयं मे यशसो निधानम् BuddhaC. 1. 65; य इच्छेदक्षयं शुक्रम् CaraS. vi. 2 (1). 38; त्रिसाधना शक्तिरिवार्थमक्षयम् RaghuVaṁ. 3. 13; निधीनथाक्षयान् शश्वद्भगिनीत्वे प्रयच्छति ( यक्षिणी ) JayāS. 26. 84; तासु जप्तं हुतं दत्तं फलं भवति चाक्षयम् VasiS. 12. 35; भोगै: पवित्रैरक्षयै: शुभै: PāraS. 5. 137; वाग्मिदर्पज्वरशमनविधावक्षयं पाटवं न: S'atTrayī. 166; कालमक्षयेण तपसा क्षपयिष्यसि AvantiK. 48. 16; अक्षयं प्रवरे क्षेत्रे भवत्यत्र महाफलम् VāmaP. 22. 36; देवानामक्षय: कोशस्त्वया यज्ञ: प्रकल्पित: LiṅgaP. i. 21. 84; नृपाणामक्षयो ह्येष निधिर्ब्राह्मो विधीयते ViṣṇuDhaP. ii. 65. 50; तेन च…कोषमक्षयं प्रणीतवान् शैशवशेषवानयम् NaiṣC. 1. 19; यदीच्छेद-

क्षयं शुक्रम् RasPraSu. 12. 20; अक्षयां लक्ष्मीं स व्यतनोत् EI. i. 310. 28; राजा… ज्ञात्वा वणिजां चाक्षयां श्रियम् BṛKathāMañ. iv. 1. 17; लक्ष्मीं ददात्यक्षयाम्… भक्तिः DaśāvaC. 8. 333; आराधितोऽथ सविता…द्रुपदकन्यया।…स्थालिकामक्षयां ददौ SkandP. iv. 49. 10; **1 v** endless, unlimited परित्यज्य क्षयमिह अक्षयं धर्ममास्थितः MahāBhā. xii. 306. 52; अक्षया जिनात्मजानां प्रतिपत्तिः MaYānaSū. 20. 19 (5. 6); अयमक्षयो राजयक्ष्मा HarṣaC. 335. 12; त्वमक्षयो निधिः श्रुतीनाम् S'iśuVa. 1. 28; 17. 24; शरासने शरान् धारयन्निषुधी अक्षयौ दधत् PadmP. iv. 41. 5; मेने सुखक्षीबतयाक्षयाणि संभोगलीलाधनजीवितानि DaśāvaC. 7. 86; ग्रहनक्षत्रनिर्माणमृत्स्नास्थलमिवाक्षयम्। गिरिम्…तमारुरोह जगद्गुरुः TriṣaS'aPuC. i. 6. 85; अक्षयं हृदयं मेऽस्ति PrabhāC. 146. 16; यस्यैतदक्षयं नित्यं जगत्तं विष्णुमाश्रये S'atDū. 187. 16; सालतालशिलावृष्टिं तैः क्षिप्तामक्षयाम्…दशग्रीवः छित्त्वा चिक्षेप सायकान् RāmāMañ. 342. 9; यश्च यमक्षयमनयन्निशाचराणां निकायमक्षयम् YudhiVi. 3. 47; अक्षया मूलप्रतिदानाभावे शतगुणापि वर्धत एवेत्यर्थः SmṛtiCan. iii. 375. 10; VīraMi.(Vyavahāra.) 231. 9; **2** giving everlasting or long-lasting (fruit), having unending (merit) श्रद्धयेष्टं च पूर्तं च नित्यं कुर्यादतन्द्रितः। श्रद्धाकृते ह्यक्षये ते भवतः स्वागतैर्धनैः ManuSm. 4. 226; (ManvaMu. अक्षये मोक्षफले; ManvaVi. अक्षये चिरकालस्थायिफले); तस्यां दानोपवासाद्यमक्षयं परिकीर्तितम् ViṣṇuSm. 49. 10; अक्षयः अनन्तफलः कैवल्यानिरतिशयो हेतुः स श्रेयान् MāṭhVṛ. 8. 25 (*on* 2); पितॄणां दत्तमक्षयम् SūryaSi. 14. 6; श्राद्धे जपे तथा होमे स्वाध्याये देवतार्चने। दाने तीर्थावगाहे च कृतं भवति चाक्षयम् BṛBrahmaS. i. 13. 124; भक्त्या सर्वं प्रदत्तं हि तत्समस्तमिहाक्षयम् BṛParāSm. 5. 175; दिवसस्याष्टमे भागे मन्दीभवति भास्करः। स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयम् LaS'ātāSm. 109; चन्द्रसूर्योपरागे च दत्तं भवति अक्षयम् LaS'ātāSm. 151; स्वतः क्षणिकमप्यक्षयफलत्वादक्षयमुच्यते BrahmSūBh.(Bhā.) 206. 2 (*on* iii. 4. 20); प्रयागे संगमे दानं श्राद्धं जप्यादि चाक्षयम् AgniP. 111. 7; यः परार्थपरित्यागः सोऽक्षयो मुक्तिलक्षणम् PadmP. v. 19. 253; गङ्गायामक्षयं श्राद्धं प्रयागेऽमरकण्टके KūrmP. 596. 8 (2. 20); बुधश्रवणसंयुक्ता द्विज सा द्वादशी यदि। अत्यन्तमहती नाम तस्यां सर्वमथाक्षयम् NīlP. 771; योऽयमक्षयोऽनन्तफलो निधिरिव ManvaMu. 262. 9 (*on* 7. 83); सत्यभामे जानासि पारिजाततटे दत्तमक्षयं भवति PārijāHa. 39; राधशुक्लतृतीयायां दानमासीत्तदक्षयम् TriṣaS'aPuC. i. 3. 301; **3** not belonging to the dark fortnight of the month अरिक्ताक्षयपञ्चपर्वदिनेषु …सीमन्तकार्यं शुभदं सदैव VasiS. 25. 6.

[1]**अक्षय** (a-kṣaya) *m.* **A** non-destruction अक्षयोऽस्तु गोब्राह्मणानाम् KarṇaBhā. 13(1); अक्षयादक्षरः प्रोक्तः AhirbuS. 2. 32; कारणस्याक्षये तेषां कार्यस्योपरमः कथम् NyāyVi. 2. 103; गणेश भूतेश शिवाक्षयाय प्रपाहि नः VarāP. 25. 20; मोहान्तराच्चेदानन्त्यं मोहानां स्यादतोऽक्षयः IṣṭaSi. 376. 18; संस्कारादेरक्षयेण पुना रागाभिव्यक्तेः SāṁkhyaPraBh. 101. 25 (3. 54); **B** the sun समग्रं दिनमालोकाद्विरमत्यक्षयो यथा YogVā. v. 62. 14; **C** one of the names of Rudra अक्षरश्चाक्षयो योगी MahāBhā. xiii. 17. 119; अक्षयः शम्भुरेव च AgniP. 86. 6; LiṅgaP. i. 65. 144; **D** one of the names of Viṣṇu अक्षयः…विश्वं त्वामाहुः VāmaP. 26. 1; कालाग्निप्रभवो वायुः प्रलयान्तकरोऽक्षयः SkandP. v (1). 63. 80; वासुदेवः…अव्ययोऽक्षयः PañcRā.(Nā.) iv. 3. 14; **E** one of the thousand names of Gaṇeśa अप्रतर्क्योऽक्षयः…इति वैनायकनाम्नां सहस्रम् GaṇeP. 46. 70; **F** one of the names of Jina अक्षयाय नमः MahāP. 40. 25; 25. 114; **G** name of a mountain शैलः इन्द्रकेतुप्रतीकाशः पश्चिमस्यां तथाक्षयः HariVaṁ. 95. 15; तस्य…मूले वज्रमयोऽक्षयः PadmP.(Ra.) 3. 33; **H** name of the 20th year in the 60 year Bṛhaspati cycle [PW.]; **I** name of the third lunar day of the bright fortnight in the month of Vaiśākha तृतीयायां तु वैशाखे शुक्लायामक्षये दिने।…पठेद्वा शृणुयाद्वापि आख्यानमिदम् BṛDharmaP. i. 52. 61; SkandP. ii(2). 29. 51; SaurP. 9. 22; 52. 70; **J** name of a period of time (त्रेतायाः) प्रोक्ताः कालाः…अक्षयसंज्ञिताः SkandP. vi. 217. 66; **K** new-moon day, DharK. 836; [a high number, name of a Samādhi, DBHS]

[2]**अक्षय** (a-kṣaya) *n.* **i** prosperity, TriKāS'e. iii. 3. 123 (comm.); Vaija. 258. 21; NānārthāSaṁ. ii. 72. 301; **ii** gold, NānārthāSaṁ. ii. 41. 92; **iii** one of the means of subjugation अपसिद्धान्ततः सिद्धं निग्रहस्थानमक्षयम् TārkiRa. 359. 15.

[3]**अक्षय** (a-kṣaya) *adj.* having no residence अक्षयः स्वप्नशैलाभः स्थिरस्वप्नपुरोपमः YogVā. iii. 14. 5.

[4]**अक्षय** (a-kṣaya) *m.* residence of Viṣṇu, NānārthāSaṁ. ii. 54. 85.

**अक्षयकर** (akṣaya-kara) *adj.* causing non-destruction श्रद्धा शक्तिश्च दानानां वृद्धयक्षयकरे हिते SkandP. i (2). 4. 41.

**अक्षयकरण्ड** (akṣaya-karaṇḍa) *m.* name of a Samādhi [DBHS]

**अक्षयकरण्डा** (akṣaya-karaṇḍā) *m.* name of a Bodhisattvadhāraṇī [DBHS]

**अक्षयकरायोग** (akṣayakarā-yoga) *m.* presence of perennial (supply of) water and wealth (in the form of fruits etc.) तद्वनं सुन्दरं ह्यासीत्पृथिव्याम्…तदक्षयकरायोगादनावृष्टिर्न दुःखदा S'ivaP. iv. 24. 31 (377A. 12) (comm. क्षयाभावद्वारिसंयोगात् सफलादिसंपत्तत्त्वात् तत्रस्थानामनावृष्टिर्न दुःखदा बभूवेति तात्पर्यम्)

**अक्षयकाम** (akṣaya-kāma) *adj.* who desires an indestructible state (i. e. immortality) यजेताक्षयकामस्तु सदैव पुरुषोत्तमम् BhaviP. 759B. 28 (iv. 107. 26)

**अक्षयकायता** (akṣayakāya-tā) *f.* the state of possessing an indestructible body निपीय पीयूषमुपायमायया जराक्षयादक्षयकायतां गताः DaśāvaC. 3. 6.

**अक्षयकारक** (akṣaya-kāraka) *adj.* [*f.* -*ikā*, -*akā*] conferring imperishable fruit सा लोकैरमावास्येति विश्रुता। पितॄणां वल्लभा तस्मात्तस्यामक्षयकारकम् MatsyaP. 14. 8; युगादयः स्मृता ह्येता दत्तस्याक्षयकारकाः (तिथयः) SkandP. i (2). 5. 123; vii(1). 205. 34; ज्ञेया दशैव घटिका दत्तस्याक्षयकारिकाः BṛNāraP. 27. 23; 23. 54; PadmP. v. 9. 18; महाचैत्री तथापि स्याद्दत्तस्याक्षयकारिका BhaviP. 361B. 36 (ii(2). 8. 122); SaurP. 51. 36.

**अक्षयकारण** (akṣaya-kāraṇa) *n.* cause for indestructibility भवितव्यं च अक्षयकारणेन BṛĀraUBh. 174. 11 (*on* i. 5. 2)

**अक्षयकारिन्** (akṣaya-kārin) *adj.* [*f.* -inī] causing or leading to an imperishable state भववैद्याभिधां विद्यां ददावक्षयकारिणीम् MalliC. 3. 75.

[1]**अक्षयकालदिन** (a-kṣayakāladina) *n.* not the day of (total) destruction अक्षयकालदिनमपि (वनं) नष्टदिग्दिनाधिपेन्दुदर्शनम् YaśasCam. ii. 197. 3 (comm. यत् क्षयकालदिनं न भवति तत्)

[2]**अक्षयकालदिन** (a-kṣayakāladina) *adj.* not providing any opportunity to destructive animals अक्षयकालदिनमपि (वनं) नष्टदिग्दिनाधिपेन्दुदर्शनम् YaśasCam. ii. 197. 3 (comm. न ईषत् क्वचित् क्षयकराणां सिंहव्याघ्रादीनां दिनमवसरो यत्र तत्तथोक्तम्)

**अक्षयकाव्यकीर्ति** (akṣaya-kāvyakīrti) *adj.* having an imperishable or everlasting literary fame क्षेमेन्द्र इत्यक्षयकाव्यकीर्तिश्चक्रे नवौचित्यविचारचर्चाम् AuciViCa. 39. 35.

**अक्षयकृत्** (akṣaya-kṛt) *adj.* making (the fruit of an action) everlasting आधानश्राद्धदानादेः स कालोऽक्षयकृत् स्मृतः BṛParāSm. 7. 92.

**अक्षयकोश** (akṣaya-kośa) *adj.* having inexhaustible wealth or treasure क्षयं क्षितीशोऽक्षयकोश एति YogVā. 4. 53.

**अक्षयक्षय** (akṣaya-kṣaya) *m.* unending (permanent) consumption अक्षयक्षयामयसंशयितजीवित बुधतात (त्वं) न (मे) शरणम्…इति निशादर्शम्…अनभिनन्दन्ती…न क्वचिदप्यापि बध्नाति स्थितिम् YaśasCam. i. 85. 1.

**अक्षयगुण** (akṣaya-guṇa) *m.* **1** inexhaustible merit or quality विश्वत्राणविनिद्रमक्षयगुणज्योत्स्नावितानावृतव्योमागारमनल्पवैभवममुं स्तोतुं वयं नेश्महे PratāYaBhū. 323. 10; **2** name of S'iva (possessing inexhaustible qualities) हीनदोषोऽक्षयगुणः…एवं नाम्नां सहस्रेण तुष्टाव हि हरं हरिः S'ivaP. iv. 35. 99 (393A. 8); वीतदोषोऽक्षयगुणः…एवं नाम्नां सहस्रेण तुष्टाव वृषभध्वजम् LiṅgaP. i. 98. 126; SaurP. 41. 110.

**अक्षयच्छायावृक्ष** (akṣaya-cchāyāvṛkṣa) *m.* the undecaying umbrageous tree *akṣayavaṭa* प्रयागभूमावक्षयच्छायावृक्षसमीपतः NīlaP. App. 374.

**अक्षयजल** (akṣaya-jala) *adj.* [*f.* -ā] having an inexhaustible supply of water अक्षयजलान्नशस्त्रम्…। सर्वं हि दुर्गजालम् MayaMa. 10. 39; अक्षयजला…श्रेष्ठा भूः TantrSa. 1. 30 = MānaSā. App. 446A. 8 = S'ilpaRa. i. 3. 1; अक्षयजलत(रु)विपुलैरणगहनसालमैरणं प्रोक्तम् S'ilpaRa. i. 5. 14.

**अक्षयज्ञान** (akṣaya-jñāna) *n.* inexhaustible or eternal knowledge (अक्षयालोकरक्षया) अक्षयज्ञानरक्षणेन Kāvyānu.(He.) (comm. Viveka) 268. 4; यो (हरः) भाति प्रत्ययोत्कर्षादक्षयज्ञानलाभया। दृशा HarVi. 43. 240.

**अक्षयणीय** (a-kṣayaṇīya) *adj.* not to be reduced or diminished (in size or area) अयं ग्रामः…आचन्द्रार्कसमकालीना(? नोऽ)क्षयनीये(? °णीयः)…छरम्पस्वामिने…प्रतिपादितः EI. vi. 145. 22.

**अक्षयतस्** (akṣaya-tas) *adv.* because of non-destruction सोऽप्यन्यथा प्रदर्श्यैताक्षयतो रागद्वेषयोः S'ivDṛ. 4. 91.

**अक्षयता** (akṣaya-tā) *f.* **i** inexhaustibility प्रयोगमिममुपसेवमानो वर्षशतमायुरवाप्नोति स्त्रीषु चाक्षयताम् SuśruS. iv. 27. 11; **ii** imperishability, permanence, durability, औदार्यनामिषत्वं च महार्थाक्षयतापि च। दानादीनां समस्तं हि ज्ञेयं गुणचतुष्टयम् MaYānaSū. 16. 42; खननं क्रियमाणस्य वस्तुनश्च…तत्खाते सलिलैनैव पूरितेऽक्षयता शुभा MayaMa. 14. 6; किं नाम सुप्तं पतितं सुमन्त्र समुदीक्षसे। रामसूर्योदये यस्य रात्रिरक्षयतां गता RāmāMañ. 63. 22; न हि

ज्ञानं विना क्वापि फलस्याक्षयता भवेत् AnuVyā. 61B. 9 (*on* 3. 4); **iii** the state of giving ever-lasting (fruit) ब्रह्मस्रोत:समीपे तु कृतं कर्म…अक्षयतामेति SkandP. iv. 61. 151; दत्तमक्षयतां याति खड्गेन च (पात्रेण) विशेषत: KūrmaP. 612. 16 (2. 22); NīlaP. 1265; तदेवाक्षयतां व्रजेत् BrahmP. 136. 29; BṛDharmaP. i. 16. 14; BhaviP. 362A. 3 (ii (2). 8. 124)

**अक्षयतूणीत्व** (akṣayatūṇī-tva) *n.* the state of possessing an inexhaustible quiver एतदक्षयतूणीत्वं येन…खाण्डवे।…प्रेषिता: शरा: PañcRā. 2. 23.

**अक्षयतृतीया** (akṣaya-tṛtīyā) *f* name of the 3rd day of the bright half of the month of Vaiśākha (being the beginning of the Satyayuga, it secures permanency to actions performed) ये चाक्षयतृतीयायाम् … श्राद्धं कुर्वन्ति तेषां वै तदानन्त्याय कल्पते SkandP. ii (7). 16. 35; राधशुक्लतृतीयायां दानमासीत् तदक्षयम्। पर्वाक्षयतृतीयेति ततोऽद्यापि प्रवर्तते TrisaS'aPuC. i.3. 301; अक्षयतृतीया वैशाखशुक्लतृतीया SmṛtiCan. i. 156. 14.

**अक्षयतृतीयाश्राद्ध** (akṣayatṛtīyā-śrāddha) *n.* a *śrāddha* ceremony performed on the *akṣayatṛtīyā* day श्राद्धपक्षेऽपि मृताहश्राद्धमक्षयतृतीयाश्राद्धं चेति CaturCin. iii (2). 552. 6.

**अक्षयतृतीयोत्सव** (akṣayatṛtīyotsava) *m.* name of a festival on the *akṣayatṛtīyā* day जटी कस्मिन्नप्यवसरेऽक्षयतृतीयोत्सवे कस्यचित् कौटुम्बिकस्य गृहे भिक्षार्थं गत: Bharaṭ. 21A. 6.

**अक्षयतृप्त** (akṣaya-tṛpta) *adj.* satisfied for ever वयमक्षयतृप्ता: स MahNirvāT. 3. 22.

**अक्षयतृप्ति** (akṣaya-tṛpti) *f.* ever-lasting satisfaction or contentment दक्षिणाप्रवणे देशे श्राद्धं कुर्यात् तु पैतृकम्। पितॄणां पावनो देश: स प्रोक्तोऽक्षयतृप्तिकृत् BṛParāSm. 7. 115; तत्र तद्रसपीयूषं पूर्वमाहृतवान् नृप:।…अक्षयतृप्तिदम् PrabhāC. 145. 30.

**अक्षयतेजस्** (akṣaya-tejas) *adj.* possessed of undiminishing or ever-lasting lustre पुरा भृगुसुतेनोक्त:…। निग्रहो घोरशिष्येण शुक्रेणाक्षयतेजसा LiṅgaP. ii. 50. 3.

**अक्षयतेज:स्वरूप** (akṣayatejas-svarūpa) *adj.* having the form of inexhaustible splendour अक्षयतेजस्स्वरूपम्…भगवन्तमद्राक्षीत् (शिशुपाल:) ViṣṇuP. iv. 15. 14; अक्षयतेज:स्वरूपमित्यर्थ: GītāBhā.(Rā.) 544. 13 (*on* 11. 12)

**अक्षयत्व** (akṣaya-tva) *n* **A** the state of being inexhaustible or irreducible अक्षयत्वात्प्रजनने अजमत्राहुरव्ययम् MahāBhā. xii. 306. 44; तत्र पार्थस्य…अदृश्यत। इषूणामक्षयत्वम् MahāBhā. vii. 120. 50; दानपारमितासहगतो महानिधानोपम आमिषसंभोगेनाप्रमेयसत्व(? त्व)संतर्पणादक्षयत्वाच्च MaYānaSū. 16. 22 (4. 20); को हेतुरक्षयत्वे स्यादिति पृष्टमथाधुना BṛĀraUBhVā. i. 5. 84; सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम्। अहार्यत्वात्…अक्षयत्वाच्च सर्वदा Hitopa. 0. 4; जीवा: …अनादिनिगोदवनस्पतिराशेस्तत्रागच्छन्ति। न च तावता तस्य काचित् परिहाणि:। निगोदजीवानन्त्यस्याक्षयत्वात् SyādvāMañ. 29(71); अत्र प्रथमश्लोकेन प्रार्थितस्य काव्यार्थचोरेभ्यो रक्षणस्य स्वोल्लिखितवैचित्र्याणां समुद्रगतरत्नजातवदक्षयत्वं विचिन्त्य प्रतिषेध आक्षेप: Kuval. 73(9); **B** eternity or deliverance विगाहति ह्यनालम्बमन्धकं वै सनातनम् (v. l. ह्यनालम्बमक्षयत्वमवाप्नुयात्) MahāBhā. xiii. 26. 31; **C** indestructibility, imperishableness यया विद्यया…अक्षरं चाक्षरणादक्षतत्वादक्षयत्वाच्च वेद MuṇḍaUBh. 323. 14 (*on* i. 2. 13); सुकृतस्याक्षयत्वमुच्यते S'vetāUBh. 13. 8 (*on* 1. 0); यच्चत्कामयते चास्मादविद्याकामकर्मणाम्। ब्रह्मण्यवस्थितस्यापि त्वक्षयत्वं श्रुतिर्जगौ BṛĀraUBhVā. iii. 2. 75; य आत्मानमेव लोकमुपास्ते। नेहास्य कर्म क्षीयते इति कर्मणोऽक्षयत्वं प्रतिपादयद्वाक्यमस्य मोक्षोपायत्वं गमयति Aparā. 960. 4 (*on* 3. 57); तत्र कर्मण एवाक्षयत्वं श्रूयते PrakaVi. 30. 22; न हि मोक्षादन्यत्राक्षयत्वम् Nyāyāmṛ. 645B. 11; **D** the state of having imperishable result ज्ञानोत्तरस्यैवमपि ह्यक्षयत्व न चान्यथा AnuVyā. 61B. 10 (3. 4); **E** imperishable nature i. e. unceasing stream (of the bodies) अक्षयत्वं तु देहस्य प्रापिता मरणं तथा।…मन्देहा नाम राक्षसा: BrahmāṇḍP. i. 21. 110; VāyuP. i. 50. 162; **F i** the nature of being enjoyable upto the end of the world फलस्याक्षयत्वं कल्पभोग्यत्वम् VīraMi. (Tīrtha.) 468. 18; **F ii** the state of not being destructible फलस्याक्षयत्वम्… । कीर्तनाद्यनाश्यत्वमित्यन्ये VīraMi.(Tīrtha.) 468. 18; **G** endlessness, continuity प्रादाच्च तस्य भगवान्…वरान्। अक्षयत्वं स्ववंशस्य BrahmāṇḍP. ii. 63. 148; दिश न: परमं योगमपत्यं मत्समं तथा।…अक्षयत्वञ्च वंशस्य AgniP. 217. 12.

**अक्षयत्वश्रवण** (akṣayatva-śravaṇa) *n.* (scriptural) mention of non-decreasing nature वेदेऽपि…अपाम सोममभृता अभूमेत्यादिपुण्यफलस्याक्षयत्वश्रवणात् PañcPā. 63. 18 (*on* i. 1. 1)

**अक्षयत्वहेतु** (akṣayatva-hetu) *m.* cause of not being destructible or liable to decay ऐश्वर्यहेतुरमिज्ञामिस्तदक्षयत्वहेतुश्चानुपधिशेषनिर्वाणेऽप्यनुपच्छेदात् MaYānaSū. 75. 19 (11. 76)

**अक्षयदु:ख** (akṣaya-duḥkha) *n.* eternal misery हिंसा पशूनां क्रतुमध्यलग्ना स्वर्गे यथास्तेऽक्षयदु:खहेतु: S'ivLī. 1. 53.

**अक्षयद्रव्य** (akṣaya-dravya) *n.* imperishable or inexhaustible substance हिरण्यमक्षयद्रव्ये वराटे स्वर्णरेतसो: ViśvaPra. 121. 85; हिरण्यमक्षये द्रव्ये वराटे स्वर्णरेतसि ViśvaLoK. 272. 118.

**अक्षयधनावाप्ति** (akṣayadhanāvāpti) *f.* attainment of inexhaustible wealth श्रीव्यास उवाच। वक्ष्येऽक्षयधनावाप्त्यै प्रतिपत्तिं श्रिय: पते: PañcaRā. (Nā.) iii. 15. 1.

**अक्षयधर्म** (akṣaya-dharma) *m.* the eternal law (स:) क्षयमक्षयधर्मजातराग:…प्रपेदे BuddhaC. 5. 26.

**अक्षयनरक** (akṣaya-naraka) *m.* eternal hell महादोषं विना स्त्री न त्याज्या यतोऽक्षयनरकभाग् भवति SiṁhāDvā. 142. 2(3)

**अक्षयनिका** (akṣayanikā) *f.* (gift of) something inexhaustible [DBHS]

**अक्षयनिधि** (akṣaya-nidhi) *m.* **1** an inexhaustible store or treasure शम्भो: सत्रमवार्यमक्षयनिधिं शंसन्ति योगीश्वरा: S'atTrayī. 290; अक्षयनिधिमव्ययं भाण्डागारम्…अल्पं सन्तं महान्तं करोमि JñātāDhaṬ. 83B. 14; **2** the principal or capital amount अक्षयनिधिं वा मूलधनम्…अल्पं सन्तं महान्तं करोमि JñātāDhaṬ. 83B. 14; **3** an assignment of property for support निबन्धोऽक्षयनिधि: BālaKrī. i. 186. 9 (*on* 1. 314 (? 313)); i. 244. 24 (*on* 2. 124); i. 267. 6 (*on* 2. 189)

**अक्षयनीमिका** (akṣaya-nīmikā) *f.* [=akṣayanīvikā] a permanent endowment एवमादिसमस्ततैलिकश्रेण्या…अक्षयनीमिका प्रदत्ता EI. i. 160. 16; i. 160. 20; वारप्रमुखस्थानेन निवेदिता अक्षयनीमिका EI. i. 174. 7; i. 174. 9; i. 176. 21.

**अक्षयनीमी** (akṣaya-nīmī) *f.* [=akṣayanīvī] a permanent endowment अक्षयनीमीयं निवेदिता EI. i. 173. 6.

**अक्षयनीवी** (akṣaya-nīvī) *f.* a permanent endowment (to a monastery etc.) संघायद्वारहारिका पुनरक्षयनीव्यपहार इत्याचार्यवसुमित्र: Sphuṭā. iv. 107. 23 (*on* 4. 106)

**अक्षयपद** (akṣaya-pada) *n.* **A** the place which is eternal (i. e. *mokṣa*) निरासङ्गा प्रीतिर्विषयनियमोऽन्तर्न तु बहि:…। अयं संक्षेपेण क्षपिततमसामक्षयपदे तपोदीक्षाक्षेपक्षपणनिरपेक्ष: परिकर: KaviKaṇṭhā. 5. 1 (34); त्वामद्राक्षमहं यदक्षयपदानन्दाय JinaCatur. 3; **B** the place which never perishes (i. e. *svarga*) रे रे क्षुद्रमहीक्षित:…योत्स्यध्वे यदि लभ्यमक्षयपदं कान्तारपक्षो वृथा PratāYaBhū. 342. 3.

**अक्षयपितृतृप्ति** (akṣaya-pitṛtṛpti) *f.* undecreasing (i. e. eternal) satisfaction of the deceased ancestors ब्राह्मणा एव न क्षत्रियादय:। श्राद्धे संपत् अक्षयपितृतृप्तिस्तद्धेतव: VīraMi. 287. 26 (*on* 1. 221)

**अक्षयपुण्यद** (akṣayapuṇya-da) *adj.* [*f.* -ā] bestowing undecreasing merit काञ्चीपुरेऽपर: प्रोक्त: श्रीफलोऽक्षयपुण्यद: BṛDharmaP. i. 11. 40; मृतसंजीविनीतीर्थम्…। स्नानं दानं च यत्किञ्चित्सर्वमक्षयपुण्यदम् BrahmP. 95. 32; 131. 52; चित्रानक्षत्रसंयुक्तो गुरुपूर्णो विधुर्यदि। महाचैत्रीति सा ज्ञेया पूर्णिमाक्षयपुण्यदा BhaviP. 361B. 24 (ii(2). 8. 116); माघे पञ्चदशी कृष्णा…एता युगादय: प्रोक्ता: सर्वाश्चाक्षयपुण्यदा: SaurP. 51. 30.

**अक्षयपुमर्थभाज्** (akṣayapumartha-bhāj) *adj.* who attains the imperishable human goal (i. e. *mokṣa*) तथा च द्विविधावृत्ति(? ति)विमुक्तस्तत्साक्षात्कृत्य तिष्ठतीत्यक्षयपुमर्थभाक् स: GoviBh. 324. 1 (*on* iv. 4. 19)

**अक्षयपुरुहूत** (akṣaya-puruhūta) *m.* an epithet of S'iva [PW]

**अक्षयप्रद** (akṣaya-prada) *adj.* who bestows eternity (i. e. *mokṣa*) नान्येन कर्मणा यस्माद्विष(? प्र)कीर्णेन कर्मणा। जायते परया(? मा) शान्तिर्धर्मवश्योऽक्षयप्रद: PauṣkS. 41. 41.

**अक्षयप्रभव** (akṣaya-prabhava) *m.* inexhaustible source अक्षयप्रभवो ह्यस्या गङ्गाया हिमवानिव BṛKathāS'loSaṁ. 18. 237.

**अक्षयफल** (akṣaya-phala) *adj.* [*f.* -ā] **A** the reward or result of which is imperishable (i. e. final deliverance) एष वोऽभिहितो धर्मो ब्राह्मणस्य चतुर्विध:। पुण्योऽक्षयफल: प्रेत्य राज्ञां धर्मं निबोधत ManuSm. 6. 97 (ManvaVi. अक्षयफलो मोक्षहेतु:); शरीरभेदे पुनरनावेश्यत्वादक्षयफल: (हेतु:) MāṭhVṛ. 9. 5 (*on* 2); अक्षरं त्वेतदोंकाराख्यमक्षरं ज्ञेयमक्षयफलम् ManuBh. i. 121. 14 (*on* 2. 84); **B** having undecaying result (i. e. *svarga*) एवंविदानुष्ठितं कर्माक्षयफलम् PrakaVi. 30. 25; एके गृहस्था ब्रह्मविदो वाचि प्राणवायौ च यज्ञनिर्वृत्तिमक्षयफलां जानन्त: सततं वाचि प्राणं च जुह्वति ManvaMu. 148. 17 (*on* 4. 23)

**अक्षयफलकत्व** (akṣayaphalaka-tva) *n.* the state of being productive of imperishable result (i. e. final deliverance) अतो ज्ञानस्याक्षयफलकत्वान्न समानत्वं ज्ञानकर्मणोरित्यर्थ: SāṁkhyaPraBh. 42. 34 (*on* 1. 86)

**अक्षयफलत्व** (akṣayaphala-tva) *n.* **A** the state of yielding the in-

-destructible result (i. e. final deliverance) अक्षरं त्वेतदोंकाराख्यमक्षरं श्रेयम-क्षयफलम् । ··· अतोऽक्षयफलत्वादक्षरमुच्यते ManuBh. i. 121. 15 (*on* 2. 84); ज्ञानिकृतस्य कर्मणो मोक्षान्वयादक्षयफलत्वमुक्तम् Nyāyāmṛ. 645B. 11; (कर्म) स्वतः क्षणिकमपि अक्षयफलत्वादक्षयमुच्यते BrahmSūBh. (Bhā.) 206. 2 (*on* iii. 4. 20); **B** the state of yielding imperishable result (i. e. *svarga*) पुण्यस्याप्यक्षयफलत्वं वेद एवाह PañcPā. 64. 1 (*on* i. 1. 1); अक्षयफलत्वेन हि कर्मणोऽक्षयत्वं न स्वभावतः क्षयित्वात् Aparā. 960. 5 (*on* 3. 57)

**अक्षयफलद** (akṣayaphala-da) *adj.* yielding imperishable or undiminishing reward दशलक्षमक्षयफलदं मनुं प्रतिजप्य निर्मलमतिर्दशाक्षरम् । जुहुयात् ···हुतवहे PañcaRā.(Nā.) iii. 10. 10.

**अक्षयफलप्रद** (akṣayaphala-prada) *adj.* [*f.* -ā] yielding imperishable reward अचिन्त्यश्च रूपेणानेन मे प्राणितं वृथा । तद्गच्छामि वरं दीक्षामप्यक्षयफल-प्रदाम् MalliC. 6. 427.

**अक्षयफलप्रदातृ** (akṣayaphala-pradātṛ) *adj.* who gives imperishable reward (सावर्णिरुवाच) यः स्वयं निर्भयोऽन्येषां भयहर्ता सनातनः । नित्यधामाक्षय-फलप्रदाता भक्तवत्सलः । ···तं देवं वद मे गुह SkandP. ii. (9). 1. 25.

**अक्षयफलश्रवण** (akṣayaphala-śravaṇa) *n.* the scriptural statement of the indestructible reward चातुर्मास्यादिकर्मस्वपि केवलस्य कर्मणः क्षयिफलत्वोपदेशादक्षयफलश्रवणं वायुश्चान्तरिक्षं चैतदमृतम् इत्यादिवदपेक्षिकं मन्त-व्यम् S'rīBh. 132. 2 (*on* i. 1. 1); न हि चातुर्मास्यादिवाक्येषु अक्षयफलश्रवणमर्थ-वादोक्तत्वात् त्यज्यते S'rutaPra. i B. 100. 13 (*on* i. 1. 1)

**अक्षयफलश्रुति** (akṣayaphala-śruti) *f.* mention of imperishable or undiminishing reward एतच्च शासनम्···दत्तस्य स्थैर्यकरणार्थं स्थिरत्वे अक्षयफलश्रुतेः SmṛtiCan. iii. 128. 16.

**अक्षयबल** (akṣaya-bala) *adj.* of undiminished or inexhaustible strength ततो बभूव संमर्दः कपीनां वीर्यशालिनाम् । राक्षसैरक्षयबलैः RāmāMañ. 336. 17.

**अक्षयबाणनिषङ्गवत्** (akṣayabāṇaniṣaṅga-va(n)t) *m.* one of the 1008 names of Viṣṇu (having a quiver containing inexhaustible arrows) नन्दकी यदुसेनाढ्योऽक्षयबाणनिषङ्गवान्···इत्येतत् कथितं विप्र विष्णोर्नामसहस्रकम् SātvaT. 6. 151.

**अक्षयबाणाढ्य** (akṣayabāṇāḍhya) *adj.* full of inexhaustible arrows धनुर्वेदः···इदमाह···जगतामम्ब···इमौ चाक्षयबाणाढ्यौ तूणीरौ···। गृहाण दैत्य-नाशाय BrahmāṇḍP. iii. 17. 42.

**अक्षयबीज** (akṣaya-bīja) *n.* the imperishable source ईश त्वां स्तोतु-मिच्छामि···। अक्षराक्षयबीजं च किं वा स्तौमि निरीहकम् BrahmVaiP. iii. 29. 43.

**अक्षयबुद्धवंशनिर्देशा** (akṣayabuddhavaṃśanirdeśā) *f.* name of a Lokadhātu [DBHS]

**अक्षयबुद्धवंशव्यूह** (akṣayabuddhavaṃśavyūha) *m.* name of a Samādhi [DBHS]

**अक्षयब्रह्मन्** (akṣaya-brahman) *n.* the imperishable Brahman अक्षय-ब्रह्मदात्रे च नमोऽक्षयवटाय वै VāyuP. ii. 49. 83.

**अक्षयब्रह्मलोक** (akṣaya-brahmaloka) *m.* the undecaying (i. e. eternal) world of Brahman i. e. the supreme being इत्येतद्वासुदेवस्य विष्णो-र्नामसहस्रकम्···अक्षयब्रह्मलोकादिसर्वार्थप्त्येकसाधनम् PañcaRā.(Nā.) iv. 3. 175.

**अक्षयम्** (akṣayam) *adv.* without discontinuity, without interruption, forever, constantly ततः स बालो गोविन्दो नवनीतं तदाक्षयम् । ग्रसमानस्तु तत्राथ गोपीभिर्दृष्टोऽथ वै MahāBhā. ii. App. I. 21 (768); क्षीरोदनं च भुञ्जीया-मक्षयं सह बान्धवैः MahāBhā. xiii. 14. 189; अक्षयं पूजितास्तेन भवन्ति पितरोऽव्ययः BrahmāṇḍP. ii. 11. 104; यः स्वादयन्भोगविषं रतिमेति दिने दिने । सोऽग्नौ स्वमूर्ति ज्वलिते कक्षमक्षयमुज्झति YogVā. vi (2). 36. 22.

**अक्षयमण्डल** (akṣaya-maṇḍala) *adj.* whose orb or disc never decreases रविस्तु···सर्वतस्तेज आदत्ते नित्यमक्षयमण्डलः MahāBhā. xii. 318. 55; न ह्येष क्षयमायाति नित्यमक्षयमण्डलः BhaviP. 118A. 25 (i. 66. 53); BrahmP. 30. 11.

**अक्षयमति** (akṣaya-mati) *m.* name of a Bodhisattva, MahāVyu. 23. 58.

**अक्षयमत्ताभ्र** (akṣaya-mattābhra) *adj.* having inexhaustible and intoxicated clouds अन्ते तस्या भुवः शैलो लोकालोकोऽस्ति विश्रुतः ··· क्वचिदक्षयम-त्ताभ्रः क्वचिद्दुर्लभवारिदः YogVā. vi (2). 64. 19.

**अक्षयमात्रक** (akṣayamātra-ka) *n.* all the imperishables, imperishable in general कल्याणं तूत्सवे क्लीबम्···। श्रुतौ च स्त्री तु कल्याणी क्षमागिरिजयोस्त्रि तु । शुभयुक्ते शाश्वतस्तु वदत्यक्षयमात्रके NānārthaSaṁ. ii. 73. 302.

**अक्षयमुक्त** (akṣaya-mukta) name of a high number [DBHS]

**अक्षयमूर्ति** (akṣaya-mūrti) *adj.* whose form is imperishable अक्षय-मूर्तये ।···नमो नारायणाय ते PramāLa. 3A. 8.

**अक्षयमोक्षद** (akṣayamokṣa-da) *adj.* [*f.* -ā] which gives eternal emancipation अतः परं प्रवक्ष्यामि यात्रामक्षयमोक्षदाम् SkandP. ii (2). 46. 1.

**अक्षयमोक्षफलद** (akṣayamokṣaphala-da) *adj.* giving or bestowing the reward in the form of eternal emanciption तस्य पुण्यं ज्ञानद्वारेणाक्षय-मोक्षफलदं भवति TattvPrakā. 204B. 12 (*on* iv. 1. 16)

**अक्षयमोक्षभागिन्** (akṣayamokṣa-bhāgin) *adj.* who attains eternal emancipation असौ···कर्मक्षयादक्षयमोक्षभागी KalyāKā. 7. 6.

**अक्षयमोक्षभाज्** (akṣayamokṣa-bhāj) *adj.* who attains eternal emancipation तपोविधानम् । चरन्ति ये कर्मविनाशनाय ते सर्व एवाक्षयमोक्षभाजः VarāṅgaC. 10. 18.

**अक्षयमोक्षातिशय** (akṣayamokṣātiśaya) *m.* excellence of the eternal emancipation तस्य पुण्यमक्षयमोक्षातिशयाय भवति TattvaPrakā. 205A. 1 (*on* iv. 1. 16)

**अक्षययात्रा** (akṣaya-yātrā) *f.* the festival (of the deity *Jagannātha* at *Purī* observed in) the bright fortnight of the month of *Vaiśākha* (जगन्नाथस्य) इमामक्षययात्रां ये भक्त्या पश्यन्ति हर्षिताः SkandP. ii (2). 46. 36.

**अक्षययौवन** (akṣaya-yauvana) *adj.* [*f.* -ā] having everlasting youth, ever young पुरन्दरश्रीः···प्रमदाम्···ययौ निधायाक्षययौवना ययौ Sara-Kaṇṭhā. 205. 13.

[1]**अक्षयरूप** (a-kṣayarūpa) *n.* the form or nature of other than a house शरणं गृहमक्षयरूपमगृहं कथम् Loc. 101. 22 (*on* 2. 22)

[2]**अक्षयरूप** (akṣaya-rūpa) *n.* the nature of an inexhaustible or never decreasing object इदममुकद्रव्यं दक्षिणाक्षयरूपेण स्वधा संपद्यतां नमः CaturCin. iii (1). 1046. 11.

**अक्षयरोगराज** (akṣayaroga-rāja) *m.* king or chief of the incurable diseases तद्भक्षयेदक्षयरोगराजान् । संक्षेपतः क्षपयितुं मनसाभिवाञ्छन् KalyāKā. 11. 117.

**अक्षयर्द्धि** (akṣayarddhi) *adj.* possessed of or having imperishable wealth or everlasting prosperity त्वां प्राहुरच्युतमृषीश्वरमक्षयर्द्धिम् MahāP. 23. 158.

**अक्षयलोक** (akṣaya-loka) *m.* the undecaying world, heaven [MW.]

**अक्षयवचन** (akṣaya-vacana) *adj.* [*f.* -ā] granting or giving the power of continuous speech or the ability to discuss any point in a learned discussion मयात्र भवेऽस्मै···अक्षयवचना गुटिका दत्तास्ति PrabaK. 36. 3.

**अक्षयवट** (akṣaya-vaṭa) *m.* **i** the imperishable or eternal or everlasting banyan tree at *Gayā* ततो गयां समासाद्य···। तत्राक्षयवटो नाम त्रिषु लोकेषु विश्रुतः MahāBhā. iii. 82. 72; iii. 93. 13; तथाक्षयवटं गत्वा विप्रान् संतोष-यिष्यति VāyuP. ii. 43. 42; ii. 47. 46; ii. 49. 79; एवमेव गयाशीर्षे वटे VişṇuSm. 85. 5; (comm. अक्षयवटे); नमोऽक्षयवटायैव अक्षयस्वर्गदायिने AgniP. 115. 70; अक्षयवटस्य माहात्म्यं तत्रैव दर्शितम् SmṛtiCan. v. 146. 15; (यः कश्चित्कुरुते तस्मिन् पितृपिण्डोदकक्रियाम्) तस्मिन् 'अक्षयवटे' CaturCin. ii (2). 161. 7; ततोऽक्षयवटं गत्वा ··· तत्र श्राद्धं कुर्यात् VīraMi.(Tīrtha.) 446. 19; **ii** name of various holy or sacred trees or places पताकामक्षयवटं तरुं देवोत्थितं शुभम् ···दृष्ट्वा पुण्यं लभेन्नरः BrahmVaiP. iv. 76. 12; मुनिर्जनेऽक्षयवटे गङ्गातीरे सरित्तटे रुरोदोच्चैः BrahmVaiP. iv. 43. 20; पुष्पभद्रानदीतीरे यत्राक्षयवटः शुभः । सिद्धा-श्रमं(? मे) च सिद्धानाम् BrahmVaiP. ii. 18. 16; S'ivaP. ii (5). 34. 20 (260B. 15); उत्तिष्ठोत्तिष्ठ शैलेन्द्र गच्छाक्षयवटान्तिकम् । आजगाम महादेवः BrahmVaiP. iv. 38. 28; iv. 43. 48; ततः प्रयागो नाम स्यात्तत्राक्षयवटोऽपि च BṛDharmaP. i. 6. 27; यत्राक्षयवटोऽप्यस्ति यत्रास्ति मणिकर्णिका । दण्डपाणिः प्रभुर्यत्र VīraBhā. 4. 55; ततोऽक्षयवटे गत्वा तत्प्रदक्षिणप्रणाममपूजादि (ततः पुरुषोत्तमपूजा) VīraMi. (Tīrtha.) 590. 4.

**अक्षयवटच्छाया** (akṣayavaṭa-cchāyā) *f.* shadow of the imperishable banyan tree अक्षयवटच्छायेयम् BālamBha. i. 559. 16 (*on* 1. 249)

**अक्षयवटमूल** (akṣayavaṭa-mūla) *n.* the root of the imperishable banyan tree ददर्श शंकरं विधिः···वसन्तमक्षयवटमूले स्वःसरितस्तटे BrahmVaiP. iv. 4. 41.

**अक्षयवटवृक्ष** (akṣaya-vaṭavṛkṣa) *m.* the banyan tree that lasts forever or is eternal कोऽक्षयवटवृक्षः स्याद्विधिवत्सत्पात्रदत्तदानं यत् PraśnoRa-Māli. 39.

**अक्षयवटश्राद्ध** (akṣayavaṭa-śrāddha) *n.* the *śrāddha* (ancestral worship) performed at the holy place called *Akṣayavaṭa* अक्षयवटश्राद्धफल-

असंबद्धान्यक्षराणि प्रलपसि KhandanKhā. 628. 9; ननु नास्मिन्नर्थेऽक्षराणि सन्ति PadMañ. *on* KāśiVṛ. *on* P. ii. 3. 14; अपरस्मिन् स्रुचि ध्यात्वा सोमाख्येनाक्षरेण तु PāraS. 7. 152; न चार्थात् प्राप्तं सूत्रकारा अक्षरैर्निबध्नन्ति YuktiSneha. 4. 14 (*on* i. 1. 1); मया साध्वससंभ्रान्तया प्रथमं परिचितान्यक्षराणि इदानीमप्यालपितानि JānaPa. 6. 29(4); **1 F** *n. m.* (specifically) the syllable *om* गिरामस्म्येकमक्षरम् BhagGī. 10. 25; एतदक्षरमेतां च जपन् व्याहृतिपूर्विकाम् ManuSm. 2. 78; अक्षरं दुष्करं ज्ञेयं ब्रह्म चैव प्रजापति: ManuSm. 2. 84; उद्गीथशब्देन अक्षरं विशेष्यते BrahmSūBh. (S'aṅ.) 630. 16 (*on* iii. 3. 9); ओम् इत्येतदक्षरं ब्रह्म इति ज्ञात्वोपास्ते AṇuBh. 208. 21 (*on* iii. 3. 2); अकारो ह्यक्षरो ज्ञेय: उकार:( ? र ) सहित: स्मृत: । मकारसहितोङ्कार: LiṅgaP. i. 91. 53; ओङ्कार:…अक्षरम् Tantrābhi. ii. 5. 8; **1 G** *n.* the text (of a song) यतिं लयं वाद्यगतिं पदं वर्णान् स्वराक्षरम् । अनुबध्नाति यत्रैवमनुबद्धा भवेत्तु सा ( ध्रुवा ) NāṭyaS'ā. 32. 331 ( AbhinBhā. अक्षरं गीयमानं पदम् । अन्ये तु चच्च(?ञ्च)त्पुटादितालमक्षरमाहु:); लयतालवर्णपदयतिगीत्यक्षरभावकं भवेत् तत्त्वम् NāṭyaS'ā. 29. 77 ( AbhinBhā. अक्षराणि देवं शर्वमित्यादीनि ); **2 A** *n. m.* the imperishable one, the supreme being यदक्षरं पञ्चविधं समेति AitĀ. II. iii. 8. 2; यदक्षरादक्षरमेति युक्तम् ।…तत्र देवा: सर्व एकं भवन्ति AitĀ. II. iii. 8. 4; यदक्षरं भूतकृतम् । विश्वे देवा उपासते । महर्षिमस्य गोप्तारम् । जमदग्निमकुर्वते ( ? त ) TaiĀ. i. 9. 6 (70. 1); स होवाच एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनणु BṛĀraU. iii. 8. 8; अथ परा यया तदक्षरमधिगम्यते MuṇḍaU. i. 1. 5; कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् BhagGī. 3. 15; अक्षरं ब्रह्म परमम् BhagGī. 8. 3; यमक्षरं क्षेत्रविदो विदुस्तमात्मानमात्मन्यवलोकयन्तम् KumāSaṁ. 3. 50; तदक्षरं तत्सवितुर्वरेण्यम् TattvSa. (3.) 126. 8; अक्षयादक्षर: प्रोक्त: AhirbuS. 2. 32; आनन्दमेकममृतमजं विज्ञानमक्षरम् ।…नमस्याम: प्रजापतिम् BrahmSi. 1. 1; पर एवात्माक्षरशब्दवाच्य: BrahmSūBh. (S'aṅ.) 159. 17 (*on* i. 3. 10); न क्षरति अश्नुते चेति नित्यत्वव्यापित्वाभ्यामक्षरं परमेव ब्रह्म BrahmSūBh. (S'aṅ.) 160. 7 (*on* i. 3. 10); अक्षरं ब्रह्म परमात्मा GītāBh. (S'aṅ.) 91. 8 (*on* 3. 15); क्षराद्विरुद्धधर्मत्वादक्षरं ब्रह्म भण्यते BṛĀraUBhVā. iii. 8. 63; ज्योति: परममक्षरम् । इत्यन्वर्थानि नामानि यस्य लोकेशिन: प्रभो: MahāP. 21. 261; आनन्दमक्षरं ज्ञानं ध्यायेत च तत: परम् PadmP. i. 60. 18; त्वं गौस्त्वमक्षरम् ।…देवि नमस्ते परमेश्वरि VarāP. 28. 34; अक्षरशब्दाभिहित: परमात्मेत्यर्थ: BrahmSūBh. (Rā.) 266. 4 (*on* i. 2. 23); अक्षरविद्यायां तु अक्षरशब्दनिर्दिष्टं परमेव ब्रह्म भूतयोनित्वादेव GītāBh. (Rā.) 562. 20 (*on* 12. 4); परात्मैवाक्षरशब्दवाच्य: VedāntKau. 85. 21 (*on* i. 3. 12); अत्राक्षरशब्दवाच्यं परं ब्रह्मैव BrahmSūBh. (S'rī.) i. 421. 1 (*on* i. 3. 9); ब्रह्मैवाक्षरम् BrahmSūBh. (Ma.) 15B. 5 (*on* i. 3. 10); तथोंकारमयो योगी अक्षरे त्वक्षरो भवेत् S'ārṅgaPa. 4477; अदृश्यत्वादिगुणा: पूर्वं विष्णोरुक्तास्ते च वाजसनेयके अक्षरस्योक्ता: TattvPrakā. 45A. 10 (*on* i. 3. 10); तस्मादक्षरशब्देन पुरुषशब्देन च ब्रह्मैव प्रोक्तम् AṇuBh. 67. 5 (*on* i. 2. 23); तेन ज्ञानमार्गेऽक्षरविषयकाण्येव ज्ञानानि निरूप्यन्ते पुरुषोत्तमविषयकाणि नेति निश्चीयते AṇuBh. 240. 18 (*on* iii. 3. 33); **2 B** *m.* Puruṣa अथास्य पुरुषस्य पर्याया: । पुरुष: आत्मा…ब्रह्म अक्षर: TattvSa. (3)124. 1; **2 C i** *n.* the abode of Brahman ब्रह्मस्थानमनावर्तमेकमक्षरसंज्ञकम् MahāBhā. xii. 192. 123; **2 C ii** *n.* the imperishable, (the abode of Puruṣottama or Viṣṇu) भक्त्या मामभिजानाति इति वाक्ये मामिति पदात् पुरुषोत्तमविषयकं ज्ञानमुच्यते न त्वक्षरविषयम् AṇuBh. 240. 23 (*on* iii. 3. 33); 254. 22 (*on* iii. 3. 47); 240. 20 (*on* iii. 3. 33); पुरुषोत्तमस्याक्षरं ब्रह्म सहजं स्थानमिति AṇuBh. 254. 8 (*on* iii. 3. 47); **2 D i** *m. n.* individual soul अक्षरं च क्षरं चैव क्षराक्षरपरं तथा । तदेतत्त्रितयं भूम्ना कथ्यते तत्त्ववेदिभि: S'ivaP. vii. 5. 13 (506B. 10); अक्षरशब्दनिर्दिष्टो जीवोऽस्तु BrahmSūBh. (Rā.) 291. 16 (*on* i. 3. 9); ब्रह्माक्षरसमुद्भवमित्यत्राक्षरशब्दनिर्दिष्टो जीवात्मा GītāBh. (Rā.) 188. 3 (*on* 3. 15); पुरुषोऽक्षरमुच्यत इति । अत्रोच्यत इत्यनेन जीवस्याक्षरशब्दवाच्यत्वमुक्तम् S'ivārkaMaDī. i. 419. 12 (*on* i. 3. 9); तस्य (=जीवस्य ) हि…अक्षरशब्दवाच्यत्वमुचितम् BrahmSūBh. (S'rī.) i. 379. 1 (*on* i. 2. 22); अक्षरात् जीवात्मन: S'āstrDīPra. 483. 21 (*on* i. 1. 5); **2 D ii** *m.* liberated soul अक्षरशब्दनिर्दिष्ट: कूटस्थोऽचित्संसर्गवियुक्त: स्वेन रूपेणावस्थितो मुक्तात्मा GītāBh. (Rā.) 605. 3 (*on* 15. 16); **2 D iii** *n.* experience of the bliss of individual soul ऐश्वर्याक्षरयो: अपवर्गव्यतिरिक्ततया तुल्यत्वं दर्शितम् NyāySiA. 223. 6; **2 D iv** *n.* totality of individual souls together with the totality of insentient things अक्षरम् अचित्समष्टिसंसृष्टा पुरुष( जीव )समष्टि: S'rutaPra. 248. 13 (*on* i. 1. 22); **2 E i** *n.* primordial matter अव्यक्तं प्रधानम्…अक्षरं क्षेत्रम् TattvSa. (1)119. 2; अक्षरम् ।… इत्याद्यास्त्रैगुण्यवाचका: AhirbuS. 6. 63; किमेतदक्षरं प्रधानं जीवो वोत परमात्मेति । किं युक्तम् । प्रधानमिति BrahmSūBh. (Rā.) 290. 5 (*on* i. 3. 9); तत्र प्रथमतत्त्वं प्रकृति: । अस्य चाविभक्ततमो विभक्ततमोऽक्षरमिति चावस्थाविशेषा: सन्ति Tattvatraya 43; प्रधानमक्षरशब्दवाच्यमस्तु VedāntKau. 84. 10 (*on* i. 3. 10); तमआकाशयोरन्तरालेऽक्षराव्यक्तमहद्भूतादितन्मात्रेन्द्रियाणि क्रमेण बोध्यानि GoviBh. 147. 8 (*on* ii. 3. 11); तस्मिन् परमे…अक्षरमव्याकृतं चेत्येतानि सन्ति LaCandr. 431. 36; **2 E ii** *n.* illusion, Māyā अक्षरमव्याकृतं नामरूपबीजशक्तिरूपं भूतसूक्ष्ममीश्वराश्रयं तस्यैवोपाधिभूतम् BrahmSūBh. (S'aṅ.) 128. 2 (*on* i. 2. 22); अविद्या…निद्रा, अक्षरम्… इत्यादिशब्दै:…उक्ता या माया सैव…जगत: प्रकृति: IṣṭaSi. 144. 8; येयम्…अविद्या… अक्षरम्…इति…बहुधा गीयते PañcPā. 20. 12 (*on* i. 1. 0); अक्षरं कूटस्थशब्दवाच्यं माया LalitāTriBh. 261. 2 (*on* 5); ( प्रकृति: ) सा नित्याक्षराविद्यामायाशब्दवाच्या YatīndraDī. 37. 1; इयमेव क्वचिदविद्येति…क्वचिदक्षरमिति क्वचिच्छक्तिरिति…चोच्यते SarvaMaSaṁ. 41. 19; **2 E iii** *m.* name of Mahat or Buddhi बुद्धिर्मनश्च लिङ्गं च महानक्षर एव च । पर्यायवाचकै: शब्दैस्तमाहुस्तत्त्वचिन्तका: BrahmāṇḍP. iii. 3. 22; **3 A** *n.* name of a Sāman प्रयस्वच्च प्राजापत्यमक्षरं चाक्षारं वा प्रयस्वच्चैव ĀrṣeBr. iv. 5. 1; अथाक्षरं पदनिधनमपरिष्टोभं राथन्तरम् JaimiBr. 3. 16; **3 B** *m. n.* one of the thousand names of Viṣṇu अक्षर:…इति…विष्णोर्नामसहस्रकम् PañcaRā. (Nā.) iv. 3. 26; योऽस्थूलानण्वादिषु सिद्धोऽक्षरसंज्ञ:…तम्…हरिमीडे HariStu. 39; अक्षर…विश्वं त्वामाहु: VāmaP. 26. 0(3); नाम चाक्षरमित्येव AnuVyā. 4B. 4 (*on* 1. 1); क्षेत्रज्ञोऽक्षर एव च ।…केशवस्य…नाम्नां सहस्रम् VisṇuSaBh. 42. 15; ममैषा परमा मूर्तिर्नारायणसमाह्वया । …अक्षरसंज्ञिता KūrmaP. 514. 2 (2. 11); **3 C** *m. n.* one of the thousand names of S'iva अनपायोऽक्षर:…एवं नाम्नां सहस्रेण तुष्टाव हि हरं हरि: S'ivaP. iv. 35. 104 (393A. 12); अक्षरं परमं ब्रह्म ( हरस्य… अष्टोत्तरसहस्रं तु नाम्नां शृणुत सुव्रता: ) LiṅgaP. i. 65. 101; **3 D** *n.* one of the thousand names of Gaṇeśa अमृतमक्षरम्…इति वैनायकं नाम्नां सहस्रम् GaṇeP. i. 46. 69; **3 E** *m.* an attendent of Vāmana अक्षर: प्राक्षरश्चैव…वामनस्यानुगा इमे PāraS. 17. 178; **3 F** *m.* one of the attendants of Haranārāyaṇa अक्षर: प्रक्षरश्चैव ĪśānS'iPa. ii. 54. 113; **3 G** *n.* name of a sacred place अक्षरे पापहा चैव PadmP. v. 29. 156; **3 H** *m.* name of Brahmā अक्षर: करणम्…लोकेश: ParyāS'aRa. 1. 12; **3 I** name of *daṇḍa* (punishment) धर्मपालोऽक्षर:… नामान्येतानि दण्डस्य कीर्तितानि MahāBhā. xii. 121. 20; **4** *n.* water अक्षरम् …( अकम् ) Nigh. 1. 12; तत: क्षरत्यक्षरमुदकम् Nir. 11. 41 (202. 13); **5** *n.* result or consequence सुहृद्भि: आप्तै: असकृद् विचारितं स्वयं च बुद्ध्या प्रविचिन्तिताक्षरम् । करोति कार्यम् Pañcā. 125. 23; **6** *n.* nescience अक्षरमज्ञानम् LalitāTriBh. 262. 3 (*on* 5); **7** *n.* three *kūṭas* beginning with the Vāgbhava, SetuBa. 95. 24; **8 A** *m.* the letter *sa*, Tantrābhi. (2) 21. 10; **8 B** *m.* the letter *pla*, Tantrābhi. (2) 17. 19; **9** *n.* emancipation, AmaK. 2699 etc; **10** *n.* sky, TrikāS'e. i. 2. 1 etc; **11** *m.* sword, AnekāSaṁ. 143 etc; **12** *n.* semen, Liṅgānu.(S'ā.) 119. 5; **13** *n.* penance, AnekāSāṁ. 3. 509 etc.; **14** *n.* sacrifice, AnekāSaṁ. 3. 509 etc.; **15** *n.* a measure of time = $1/5$ Kāṣṭhā [APTE]; **16** *n.* continuance, permanence [APTE]; **17** *n.* the plant *Achyranthes Aspera* [PW]

**अक्षरक** (akṣara–ka) *n.* a letter, syllable यदि तोटकस्य गुरु पञ्चमकं विहितं विलासिनि तदक्षरकम् । रससंख्यकं गुरु न चेदबले प्रमिताक्षरेति कविभि: कथिता S'rutaBo. 31.

**अक्षरकथा** (akṣara–kathā) *f.* talk or discussion about letters (i. e. literature) कथं चात्र दृषद्भावपूर्विकायामवस्थायामीदृशीयमसंभाव्यविषया विशिष्टैवाक्षरकथाविकासिनी प्रौढि: UdaySuKa. 16. 16; यत्पुनरसावक्षरकथोपक्रम: तत्र किं न जानासि ये हि सुदूरवर्तिनोऽपि मनसैव देवीं सरस्वतीं स्मरन्ति तेषामशेषशास्त्रावबोधनिर्मलं ज्ञानं कवित्वं च संपद्यते UdaySuKa. 16. 24.

[1]**अक्षरकर** (akṣara–kara) *adj.* creator or producer of *akṣara* पुराणपुरुषो यज्ञो ज्ञेयोऽक्षरकरो भुवि । अक्षरात् स तु वै श्रेष्ठ: परमात्मा सनातन: BhaviP. 573A. 24 (iii(4). 14. 104)

[2]**अक्षरकर** (akṣara–kara) *m.* a kind of religious meditation [MW]

**अक्षरकलाप** (akṣara–kalāpa) *m.* a cluster of letters तद्बुद्धिमात्रफलतैव च तत्परत्वं वेदान्तवादिसमये न तु शेषभाव: । शेषत्वमक्षरकलापगताप्तिमात्रं प्रत्येव नाध्ययनमर्थधियोऽपि शेष: SaṁkṣeS'ā. 1. 466 (i. 338. 7)

**अक्षरकान्ति** (akṣara–kānti) *f.* imperishable lustre स राम इत्यक्षरकान्तिगौरवान्मनोऽभिरामो गुरुणा कृताह्वय: Rāgh. 1. 61.

**अक्षरकार्यत्व** (akṣarakārya–tva) *n.* being an effect or product of the Immutable (*akṣara*) तथाक्षरात् सम्भवतीह विश्वमिति अक्षरकार्यत्वेन वार्णिताद्विश्वस्मात् परतोऽक्षरादपि परत्वेन S'ivārkaMaDī. i. 378. 17 (*on* i. 2. 22)

**अक्षरकृत** (akṣara–kṛta) *adj.* caused or brought about by the letters or syllables लाघवं वाक्येषु पदकृतं, पदेषु स्वल्पत्वमक्षरकृतम् NyāyVāPari. 387. 9.

**अक्षरकृतविशेष** (akṣarakṛta–viśeṣa) *m.* difference or distinction caused by the letter द्विविधो ह्याकारार्थ: सन्निवेशलक्षणोऽक्षरविशेषलक्षणश्च ।… द्वितीयस्तु न सम्भवत्येव, अक्षरकृतविशेषस्य भेदाभेदव्यवहारस्य शब्दैकविषयत्वात् VyaktiVi. 101. 22.

**अक्षरकोटितस्** (akṣarakoṭi–tas) *adv.* at the rate of a crore per syllable अन्यान् बहुतरान् मन्त्राञ्जपेदक्षरलक्षत: । एकाक्षरांस्तथा मन्त्राञ्जपेदक्षर-

कोटितः S'ivaP. i. 11. 50 (10A. 7)

**अक्षरकोविद** ( akṣara-kovida ) *adj.* [*f.* -ā] expert in (deciphering) letters वसन्ततिलका नाम गणिकाऽक्षरकोविदा । तस्य सुप्तस्य कण्ठस्थं लेखं पश्यति रूपिणः BrKathāK. 72. 62.

**अक्षरकोश** ( akṣara-kośa ) *m.* birch-bark and other material for writing [pw]

**अक्षरकोष्ठागार** (akṣara-koṣṭhāgāra) *n. m.* storehouse of letters (i. e. a very learned person) ( का गतिः, भवतु, सभाजयाम्येनम् ) स्वागतमक्षरकोष्ठागाराय PadmPrā. 8. 19.

**अक्षरक्रम** ( akṣara-krama ) *m.* sequence or order of letters or syllables न च सर्वैः क्रमः पुंभिः सर्वसिद्धः प्रगृह्यते । स्वातन्त्र्येणापि कुर्वन्ति पदवाक्याक्षरक्रमम् TattvSaṁ. 2676; उद्दिष्टं कतिथमिदं वृत्तं संस्थापयेदुपरि तस्य । स्थानद्विगुणानङ्कानेकादीनक्षरक्रमशः JayaChand. 8. 6; एवमेतद्यथासमाम्नातस्याक्षरक्रमाद्यविरोधेनाक्षरक्रमाणामध्यूहनम् SaṅkarKāBh. 217. 11 (*on* iv. 4. 7); एवं च सहस्रनामस्वक्षरक्रमाभावेन कतिपयेषां तत्तत्तिथिनित्यादेवताकत्वे मानाभावेन प्राकृतमुख्यकल्पे प्रयोजकस्य तिथ्यक्षरदैवतैक्यस्य विकृतावभावात् LalitāSaBh. 229. 24 (*on* 296)

**अक्षरक्रीड** ( akṣara-krīḍa ) *m.* a god (*lit.* ceaselessly sporting) अमृतपाः अक्षरक्रीडाः सुराः…मानुषदेवताः PārāSū. 31. 26.

**अक्षरक्ष** ( akṣa-rakṣa ) *m.* a judge दा मासाररसामादामक्षरक्ष क्षर क्षमः ( comm. अक्षरक्ष न्यायपालकः( ? क ) ) Surath. 10. 72.

**अक्षराक्षरभेदतस्** ( akṣarakṣarabheda-tas ) *adv.* on account of (its) division into *kṣara* and *akṣara* ( corresponding to *baddha* and *mukta* ) जीवोऽयं द्विविधस्तावदक्षरक्षरभेदतः । क्षरः प्रकृतिसंयोगाद्बद्ध इत्युपचर्यते । अक्षरः प्रकृतेर्मुक्तो मुक्त इत्यभिधीयते BṛBrahmaS. ii. 3. 5.

**अक्षरक्षार्थम्** ( akṣarakṣārtham ) *adv.* for the protection (of the steadiness) of the axle (*akṣa*) उत्सेधं पञ्चषट्सप्तवाहुल्यम्…तदधस्त्वक्षरक्षार्थं पार्श्वयोरेन्धनं भवेत् MayaMa. 31. 37.

**अक्षरक्षितृ** ( akṣa-rakṣitṛ ) *m.* keeper of the dice अक्षरक्षिता अक्षानां-( ? णां ) पाशानां क्रीडासाधनीभूतानां रक्षिता पालकः VīraMi. (Rājanīti.) 183. 12.

**अक्षरगणन** ( akṣara-gaṇana ) *n.* counting of letters or syllables अन्यत्राप्यनयैव रीत्याऽक्षरगणनस्य प्रसिद्धत्वात् SetuBa. 241. 7.

**अक्षरगणना** ( akṣara-gaṇanā ) *f.* counting of letters or syllables ताश्चाक्षरगणनया चतुर्विंशतिः जगत्य एका ककुप् च संपद्यत इति द्रष्टव्यम् MayūMā. 607. 25 (*on* ix. 2. 6)

**अक्षरगत** ( akṣara-gata ) *adj.* [*f.* -ā] pertaining to the syllables, abiding in the syllables कस्मादक्षरगतायामेव संख्यायां भवानवस्थितो न पुनरन्यसंख्येयगतायामपि ग्रहगतायां चमसगतायां वा S'ābaBh. viii. 3. 28 (1623. 26); तदक्षरगतं यथा – निशितासिरतोऽभीको न्येजतेऽमरणा रुचा । चारुणा रमते जन्ये को भीतो रसिताशिनि । अत्र गतप्रत्यागताभ्यां स एव श्लोकः SaraKaṇṭhā. 277. 17.

**अक्षरगतैकत्व** ( akṣaragataikatva ) *n.* unity subsisting in or pertaining to the letter or the syllable एवं ह्यक्षरगतैकत्वस्यापि सिद्धयापत्तावकारोकारमकाराणामप्यसिद्धिप्रसंगात् VaiyāBhū. 149. 23 (*on* 30)

**अक्षरगमनिका** ( akṣara-gamanikā ) *f.* explanatory paraphrase of words इत्थमक्षरगमनिकां विधाय भावार्थः प्रपञ्च्यते SyādvāMañ. 12. 22.

**अक्षरगर्भ** ( akṣara-garbha ) *m.* interior of or inside the letter सूत्रस्य मणिभ्योऽत्यन्तं भेदात् तद्गर्भेऽपि भेदेनैवावस्थितिः नादस्य त्वक्षरगर्भे तदभेदेन SetuBa. 344. 19.

**अक्षरगामिन्** ( akṣara-gāmin ) *adj.* [*f.* -ī] which pertains to or accompanies the letter प्रथमा वैद्युती मात्रा द्वितीया तामसी स्मृता । तृतीया निर्गुणी विद्यान्मात्रामक्षरगामिनीम् ( ओंकारस्य ) VāyuP. i. 20. 2.

**अक्षरगुप्त** ( akṣara-gupta ) *n.* a variety of *citra-kāvya* in which one syllable is concealed महानपि सुवीरोऽपि बहुरत्नयुतोऽपि सन् । विरसः कुपरीवारो दीनः केनोपसेव्यते ( नदीन इत्यक्षरगुप्तम् ) SūktiMu. 98. 21(1)

**अक्षरगोचर** ( akṣara-gocara ) *adj.* accessible to words, coming in the range of words विकल्पश्च विकल्प्यं च यावत्त्वक्षरगोचरम् । तावत्तत्त्वं न पश्यन्ति तार्किकास्तर्कविभ्रमात् LaṅkāSū. 10. 73 (112. 7)

**अक्षरगौरव** ( akṣara-gaurava ) *n.* prolixity of words, superfluity of words सत्यपि अक्षरगौरवे महतोऽर्थस्य व्याप्तिर्भवति, सुखेन विभागस्यापि परिज्ञानात् Pradi. ii. 29A. 22 (*on* i. 2. 32)

[1]**अक्षरग्रहण** ( akṣara-grahaṇa ) *n.* learning (by heart) the mere text (of the Vedas), learning by rote सकलस्य तावद् वेदस्य स्वाध्यायोऽध्येतव्य इत्यध्ययनभावना विधीयते । …तेन किमित्यपेक्षिते यच्छक्यत इत्युपबन्धात् अक्षरग्रहणमित्यापतति TantrVā. 12. 2 (*on* i. 2. 7); तस्मात् संप्रदायस्याक्षरग्रहणं साधयतो नियमजातमनुग्राहकम् TantrVā. 24. 11 (*on* i. 2. 8); अक्षरग्रहणस्य च फलवत्कर्मावबोधद्वारेण परमपुरुषार्थोपायत्वावधारणात् NyāyMañ. ii. 93. 8; PañcPā. 53. 23 (i. 1. 1); NyāySu. (So.) 36. 32 (*on* i. 2. 7); S'āstrDī. 6. 14 (*on* i. 1. 1); इह ह्यध्ययनानन्तरमक्षरग्रहणं, ततः पदावधारणं, ततः पदार्थस्मरणं…इति परम्परया पुरुषार्थप्रयोजनप्रतिलम्भेन…नादृष्टकल्पनावकाशः Kāśi. i. 45. 4 (*on* 1. 89); अध्ययनानन्तरभावित्वादक्षरग्रहणस्य तदेव तस्य फलं भवितुमर्हति NītiMā. 3. 1; 4. 21; SarvaDaKau. 99. 6; 99. 7; VīraMi. (Saṁskāra.) 228. 22; 507. 14; S'ivārkaMaDī. i. 27. 19 (*on* i. 1. 1); i. 51. 5 (*on* i. 1. 1); MayūMā. 454. 18 (*on* vi. 1. 7); BhāṭṭCin. 2. 7 (*on* i. 1. 1)

[2]**अक्षरग्रहण** ( akṣara-grahaṇa ) *n.* learning the sounds (through the written letters) यत्तु लिप्यक्षरैरक्षरग्रहणमिति तत्र लिपिस्वरूपं संकेतो वर्णवुद्धिश्च न मिथ्याभूताः S'atDū. 134. 3.

**अक्षरग्रहणफल** ( akṣaragrahaṇa-phala ) *adj.* resulting in the learning (or memorisation) of the (mere) text (of the Vedas) गृहीतस्वाध्याये पुरुषेऽधीतवेदत्वप्रसिद्धेश्च अक्षरग्रहणफलमध्ययनम् NītiMā. 3. 7; अनर्थकानां हुंफडित्यादिवाक्यानामध्ययनस्यार्थज्ञानप्रयोजनत्वाभावाददृष्टफलत्वमक्षरग्रहणफलत्वं वाभ्युपेयं स्यात् NītiMā. 4. 6.

**अक्षरग्रहणमात्र** ( akṣaragrahaṇa-mātra ) *n.* mere learning the words (of the Vedic texts) अक्षरग्रहणमात्रेण चाधिकारसिद्धिः अर्थावबोधस्तु कारणान्तरादिति PañcPā 57. 14 (*on* i. 1. 1); NyāyMañ. i. 262. 31; NītiMā. 2. 21; S'rutaPra. iA. 28. 18 (*on* i. 1. 1); स्वर्गायाक्षरग्रहणमात्रं विधेयमिति वदामः NyāyMāVi. 12. 10 (*on* i. 1. 1); 11. 22 (*on* i. 1. 1); अध्ययनविधिर्ह्यक्षरग्रहणमात्रे पर्यवस्यति BrahmSūBh. (S'rī.) iii. 388. 1 (*on* iii. 4. 12 ); VivaPraSaṁ. 175. 22; 177. 1; 197. 14; अर्थावबोधकामो( ? मनो )चितेति कल्पनादक्षरग्रहणमात्राच्च स्नातव्यम्, किंतु मीमांसारब्धव्या SarvaDaKau. 99. 15; VīraMi. (Saṁskāra.) 507. 20.

**अक्षरग्रहणहेतुत्व** ( akṣaragrahaṇahetu-tva ) *n.* the state of being the cause of learning the Vedas (by heart) एवं च तद्ध्ययनस्याक्षरग्रहणहेतुत्वमन्वयव्यतिरेकसिद्धम् VivaPraSaṁ. 176. 3.

**अक्षरग्रहणादिक्रम** ( akṣaragrahaṇādi-krama ) *m.* the sequence of learning the Vedic texts etc. तान्यपि ( विधिवाक्यानि ) तथैवाक्षरग्रहणादिक्रमेण स्वार्थावबोधनं यावद्गतानि न साक्षात् क्रत्वङ्गं भवन्ति TantrVā. 13. 1 (*on* i. 2. 7)

**अक्षरग्रहणादिपरंपरा** ( akṣaragrahaṇādi-paramparā ) *f.* order of (activities like) learning of the Vedic texts etc. किमदृष्टार्थमध्ययनमुताक्षरग्रहणादिपरंपरयार्थज्ञानार्थमिति S'āstrDī. 11. 1 (*on* i. 1. 1); 5. 6 (*on* i. 1. 1); अक्षरग्रहणादिपरंपरया साध्यमानं वाक्यार्थज्ञानमेव भाव्यमङ्गीकर्तव्यम् NyāyRaMā. 19. 23; 26. 11.

**अक्षरग्रहणादिफल** ( akṣaragrahaṇādi-phala ) *adj.* resulting into the learning (by heart) of the Vedic texts etc. तत्प्रतिपादकस्य वेदभागस्याध्ययनं वाक्षरग्रहणादिफलत्वं ( ? °ध्ययनमदृष्टफलमक्षरग्रहणादिफलं ) वा स्यात् Nitimā. 4. 8.

**अक्षरग्रहणान्त** ( akṣaragrahaṇānta ) *adj.* [*f.* -ā] having the learning of the Vedic texts (by heart) as the end or aim ( अध्ययनक्रिया ) सा ह्यधीयमानावाप्तिफलत्वादक्षरग्रहणान्ता PañcPā. 53. 23 (*on* i. 1. 1)

**अक्षरग्रहणार्थत्व** (akṣaragrahaṇārtha-tva) *n.* the state of being aimed at learning the Vedic texts अक्षरग्रहणार्थत्वादस्य विधेः…न तदतिरिक्तघृतमधुकुल्यादिफलान्तरापेक्षित्वम् NyāyMañ. ii. 93. 8.

**अक्षरग्रहणार्थम्** ( akṣara-grahaṇārtham ) *adv.* for the purpose of learning the Vedic texts शब्दार्थमक्षरग्रहणार्थं न त्वर्थज्ञानापेक्षापि BālamBha. i. 169. 15 (*on* 1. 51)

**अक्षरग्राम** ( akṣara-grāma ) *m.* a group of syllables or letters अनर्थकं नाम यद्वचनमक्षरग्राममात्रमेव स्यात् CaraS. iii. 8. 54 (1941 Ed.)

**अक्षरचञ्चु** ( akṣara-cañcu ) *m.* a scribe, a writer (clever in letters) cf. अक्षरचुञ्चु; लेखकोऽक्षरचणोऽक्षरचञ्चुः KośaKaTa. 1. 1480; ParaNā. 1933.

**अक्षरचण** ( akṣara-caṇa ) *m.* a scribe लिपिकारोऽक्षरचणोऽक्षरचुञ्चुश्च लेखके AmaK. 1498; S'abdaRa. (Vā.) 2530; KośaKaTa. i. 1480; S'abdaRaSaK. 122. 8; ParyāS'aRa. 2. 263; PañcTaPra. 2. 27.

**अक्षरचतुष्क** ( akṣara-catuṣka ) *n.* a group of four letters याद्यक्षरचतुष्कं तु वाय्वग्निक्ष्माम्भसां तनुः ĪśānS'iPa. i. 1. 49; तेन ळं क्षं अं अः इत्यक्षरचतुष्करूपा रेवती सिध्यति SetuBa. 9. 8.

**अक्षरचतुष्टय** ( akṣara-catuṣṭaya ) *n.* a group of four letters ततोऽप्यावीतहेतुभिरनैकान्तिक इत्यक्षरचतुष्टयाधिकेनार्धश्लोकेनाह S'arka. 75. 6; अत्रापि हि साध्यपदादूर्ध्वं वृथाक्षरचतुष्टयम् TātpaṬ. (Vā.) 273. 8 (*on* i. 1. 33) शार्ङ्गी… बलानुजद्वयमथाक्षरचतुष्टयम् ।…स्यात् PañcaRā. (Nā.) iii. 3. 6.

**अक्षरचिन्तक** ( akṣara–cintaka ) *m.* one who considers sounds ( i. e. a phonetician, a grammarian, a recitor ) स्वरप्रधानं त्रैस्वर्यमाहुरक्षरचिन्तकाः MāṇḍūS'i. 6.1; द्वौ तकारौ थकारौ च।…संयोगमाहुरक्षरचिन्तकाः MāṇḍūS'i. 14.1; 14.6; 15.1; रङ्ग:…पारावतः सवर्णाभो विहितोऽक्षरचिन्तकैः LomS'i. 1.6; स्वरभक्तिर्द्विविधा त्कृारो रेफ एव च। स्वरोदा व्यञ्जनोदा च विहिताक्षरचिन्तकैः NāraS'i. ii. 6.7; बभूव स हि संवेगः श्रेयसस्तस्य वृद्धये। धातुरेधिरिवाख्याते पठितोऽक्षरचिन्तकैः Saund. 12.9; अटेत पृथिवीं सर्वाम्… । यदि लभ्येत पित्रर्थे साम्नामक्षरचिन्तकः ( तं भोजयेच्छ्राद्धे ) BṛhaspaSm. 337.77.

**अक्षरचुञ्चु** ( akṣara–cuñcu ) *m.* a scribe, writer (clever in writing) लिपिकारोऽक्षरचणोऽक्षरचुञ्चुश्च लेखके AmaK. 1498; Vaija. 137.23; S'abdaRa. (Vā.) 2530.

**अक्षरच्छन्दस्** ( akṣara–cchandas ) *n.* a metre based on the number of syllables आदौ तावद् गणच्छन्दो मात्राच्छन्दस्ततः परम्। तृतीयमक्षरच्छन्दः MṛtaSaṁ. 42.16 (*on* 4.11)

**अक्षरच्छेदिनी** ( akṣara–cchedinī ) *f.* a stylus used for writing करतले पुस्तकं विन्यस्य तदक्षराणि बिन्दुमात्रारहितानि नखच्छेदिन्या ( v. l. अक्षरच्छेदिन्या ) केवलान्येव कुर्वन् राजपुत्र्या मूर्खोऽयमिति निर्णीतः PrabaCin. 4.20.

**अक्षरच्युत** ( akṣara–cyuta ) *adj.* that which is reduced by one syllable कः पाठ्योऽक्षरच्युतः। …श्लोकः पाठ्योऽक्षरच्युतः MahāP. 12.236; AlaṅkāCin. 32.20.

**अक्षरच्युतक** ( akṣara–cyutaka ) *n.* a kind of literary composition having a different meaning with the omission of a letter ( सः ) कदाचिदक्षरच्युतकमात्राच्युतकबिन्दुमतीगूढचतुर्थपादप्रहेलिकाप्रदानादिभिः …सुहृत्परिवृतो दिवसमनयत् Kād. 7.22; संख्ये परासुं सुरलोकनारी प्रवीरमादाय सरागचेताः। सुमेरुकुञ्जं प्रविवेश चारुपियालसालं रमणाभिलाषात्। ( अक्षरच्युतकम् ) HarVi. 48.33; VidaMuMa. iv. 66. (1)

**अक्षरच्युतप्रश्नोत्तर** ( akṣaracyuta–praśnottara ) *n.* a literary game in the form of question and answer based on the absence of a syllable or letter कः पञ्जरमध्यास्ते कः परुषनिस्वनः। … अक्षरच्युतप्रश्नोत्तरम्। शुकः पञ्जरमध्यास्ते काकः परुषनिस्वनः AlaṅkāCin. 32.20.

**अक्षरज** ( akṣara–ja ) *f.* born of letters कलास्त्वक्षरजा ग्राह्याः पञ्चाशत्प्रणवोदिताः ĪśānS'iPa. i. 2.87.

**अक्षरजननी** ( akṣara–jananī ) *f.* producer of letters ( i. e. a reed or pen ) लेखन्यक्षरजननी वर्णमाला मसिप्रसूः इति हारावलीति केचित् [S'abdakalpadruma]

**अक्षरजन्यता** ( akṣarajanya–tā ) *f.* the state of being the product of letters यत्र चाक्षरजन्यताया बाधस्तत्र तदक्षरामेदमात्रं तदर्थविशेषणम् SetuBa. 258.16.

**अक्षरजस्** ( akṣarajas ) *m.* name of a son of Kiṣkindha and S'rīmālā तस्माच्च संभवं प्राप श्रीमालायां सुतद्वयम्। ज्येष्ठः सूर्यरजा नाम ख्यातोऽक्षरजास्तथा PadmP. ( Ra. ) 6.524.

**अक्षरजात** ( akṣara–jāta ) *n.* class of consonants ( नारदः ) प्रत्ययांश्च समाख्याता…। पत्र चाक्षरजातानि स्वरसंज्ञानि यानि च MahāBhā. i. App. I. 111.55.

**अक्षरजीवक** ( akṣara–jīvaka ) *m.* a scribe, a grammarian लेखकः स्याल्लिपिकरः कायस्थोऽक्षरजीवकः AbhidhāRaMā. 2.431; कायस्थोऽक्षरजीवकः AnekāSaṁ. 3.308; लेखके। शब्दशास्त्रपरिष्णाते वदन्त्यक्षरजीवकम् S'abdaRaSaK. 51.18.

**अक्षरजीवन** ( akṣara–jīvana ) *m.* a scribe कायस्थस्स्याल्लिपिकरः करणोऽक्षरजीवनः Vaija. 137.23.

**अक्षरजीविन्** ( akṣara–jīvin ) *m.* a scribe अथ कायस्थः करणोऽक्षरजीविनि S'eṣaNā. 1649 = AbhidhāCin. App. 106 (p. 432); लेखकेऽक्षरजीवी त्वक्षरचञ्चुक्षराचणौ ParaNā. 1933.

**अक्षरजुष्** ( akṣara–juṣ ) *adj.* who enjoys (the company of) the imperishable one ( i. e. the Supreme Being ) पदारविन्दकिञ्जल्कमिश्रतुलसीमकरन्दवायुः। …चकार तेषां संक्षोभमक्षरजुषामपि चित्ततन्वोः BhāgP. iii. 15.43.

**अक्षरज्ञ** ( akṣara–jña ) *adj.* **1** who knows the sounds or letters अक्षरज्ञः…। स्वरमात्राविभागज्ञः स विप्रो मानमर्हति MāṇḍūS'i. 3.7; सहया सगजा सेना सभटेयं न चेजिता। अमात्रिकोऽयं मूढः स्यादक्षरज्ञश्च नः सुतः Kāvyāda. 3.123; उत्कीर्णमप्यक्षरमक्षरज्ञैर्न वाच्यते तद्गुणवर्णमार्गैः KalyāKā. 7.50; **2** a learned person प्राचीनमेतं प्रसुमन्त्रतन्त्रयन्त्रैस्सदा रक्षितमक्षरज्ञैः KalyāKā. 7.19; Kāvyāda. 3.123.

**अक्षरज्ञान** ( akṣara–jñāna ) *n.* knowledge of *akṣara* ( i. e. Brahman ) मोक्षः … ज्ञानमार्गे त्वक्षरज्ञानेनेति विशेषः AṇuBh. 233.24 (*on* iii. 3.29); पूर्वकक्षाविश्रान्तमेवाक्षरज्ञानम् AṇuBh. 240.25 (*on* iii. 3.33)

**अक्षरज्ञानजन्यत्व** ( akṣarajñānajanya–tva ) *n.* the state of being the product of the knowledge of letters तस्य चाक्षरज्ञानजन्यत्वात् पूर्वकक्षाविश्रान्तमेवाक्षरज्ञानम् AṇuBh. 240.25 (*on* iii. 3.33)

**अक्षरज्ञानसापेक्षत्व** ( akṣarajñāna–sāpekṣatva ) *n.* dependence on the knowledge of the letters अतश्चाक्षरज्ञानसापेक्षत्वाद् व्युत्पन्नैश्चतुश्चतुरक्षराणीति ज्ञातुं शक्यमेव LalitāSaBh. 41.33 (*on* 74)

**अक्षरज्ञानस्तुति** ( akṣarajñānā–stuti ) *f.* eulogy of the knowledge or contemplation of the syllable *om* परेणापि कर्मनिन्दयाक्षरज्ञानस्तुतिः BrahmSi. 32.5.

**अक्षरडम्बर** ( akṣara–ḍambara ) *n.* pomp of words, display of words गौडेष्वक्षरडम्बरम् HarṣaC. 4.4; कविना सदनुप्रासे निबद्धेऽक्षरडम्बरे। गकारा बहवो दृष्टा इति व्यवहरन्ति हि NyāyMañ i. 205.4; सत्यर्थे सत्सु शब्देषु सति चाक्षरडम्बरे। शोभते यं विना नोक्तिः स पन्था इति घुष्यते Gaṅgāva. 1.10.

[1]**अक्षरण** ( akṣa–raṇa ) *m. n.* a contest in gambling सौबलः… । कृतवानक्षरणाय व्यवसायम् YudhiVi. 3.63.

[2]**अक्षरण** ( a–kṣaraṇa ) *n.* absence of losing one's form अक्षरं चाक्षरणादक्षतत्वादक्षयत्वाच्च MuṇḍaUBh. 323.14 (*on* i. 2.13)

**अक्षरणिधन** ( akṣara–ṇidhana ) *n.* cf. **अक्षरनिधन** the final part of a *sāman* consisting of one letter or sound or syllable अक्षरणिधनं प्रथमेऽहनि चिकीर्षेत्राज्यदोहानां प्रथमं तृतीये NidāSū. 138.24 (8.5)

**अक्षरत्** ( a–kṣarat ) *adj.* not diminishing, not waning, not oozing, not dripping पीतं च सोमं हि कलावशिष्टं कृष्णक्षये रश्मिभिरक्षरन्तम्। सुधामृतं तत् पितरः पिबन्ति BrahmāṇḍP. i. 23.39.

**अक्षरत** ( akṣa–rata ) *adj.* [*f.* –ā] subjected to or indulging in the sense-organs दूरगमक्षरतायाः प्रचक्षतेऽनक्षगम्यमक्षरतायाः। रूपं नादमयं ते शब्दे चेतांसि ये जना दमयन्ते YudhiVi. 6.141.

**अक्षरतत्त्व** ( akṣara–tattva ) *n.* **1** the true nature of the imperishable ( Brahman ) दृष्ट्वा गीतास्वक्षरतत्त्वम्…तस्मिन्नस्म्यहमित्यत्र विदुर्यं तम्…हरिमीडे HariStu. 26; **2** [*pl.*] the elements (like earth, water, ether, etc.) presiding over the syllables अथाक्षरतत्त्वानि–अथ तत्त्वानि वक्ष्यामि अक्षराणां विशेषतः SmṛtiCan. ii. 380.14 = VīraMi. ( Āhnika. ) 293.23.

**अक्षरतदर्थादिरूप** ( akṣara–tadarthādirūpa ) *adj.* [*f.* –ā] of the nature of ( = governed or regulated by ) syllable and its significance and the like भङ्गलयव्यवस्था प्रतिपाद्याक्षरतदर्थादिरूपा AbhinBhā. ii. 140.15 (*on* 12.39)

**अक्षरतन्त्रत्व** ( akṣaratantra–tva ) *n.* dependence on the imperishable ( Brahman ) इहापि अक्षरतन्त्रत्वात् तद्विशेषणानां यत्र कचिदप्युत्पन्नानाम् अक्षरेण सर्वत्राभिसंबन्ध इत्यर्थः BrahmSūBh.(S'aṅ.) 672.19 (*on* iii. 3.33)

**अक्षरतन्मात्र** ( akṣara–tanmātra ) *m.* the exclusive or self-sufficient immutable principle विज्ञेयोऽक्षरतन्मात्रो जीवितं वापि चञ्चलम् PaiṅgU. 4.17.

**अक्षरतस्** ( akṣara–tas ) *adv.* from the imperishable ( Brahman ) जायन्तेऽक्षरतः…भावाः PañcDa. 4.7.

**अक्षरता** ( akṣara–tā ) *f.* the nature of the syllable *om* प्रचक्षतेऽनक्षगम्यमक्षरतायाः। रूपम् YudhiVi. 6.141.

**अक्षरतूलिका** ( akṣara–tūlikā ) *f.* a pen or reed for writing [Jaṭādhara quoted in S'abdakalpadruma]

**अक्षरतृच** ( akṣara–tṛca ) *m.* a triad of syllables (found in the name *ekarca*) (a kind of *sāman* making use of a *ṛc*) एकर्चो ह त्वाव तृचाज् ज्यायान्। एकर्च इति त्रीण्यक्षराणि, तृच इति द्वे। यो ह त्वावैतान्तृचांश्चाक्षरतृचांश्च वेदोभये मे तृचाः कृता भवन्त्युमे हैवास्य तृचाः कृता भवन्ति JaimiBr. 1.311.

**अक्षरतेजस्** ( akṣara–tejas ) *n.* imperishable light ( i. e. Brahman ) सकार्यमूलप्रकृतिः सकालाक्षरतेजसि।…तिरोभूता तदाभवत् SkandP. ii (9). 24.3.

**अक्षरत्रय** ( akṣara–traya ) *n.* **i** (combination of) three letters or sounds (in the sacred syllable *om*) ओमित्येकाक्षरं जपेत्।…तस्य स्वरूपम्…। अकारश्च तथोकारो मकारश्चाक्षरत्रयम् MārkP. 42.4; योगवृत्तेः पुरा स्वस्मिन् भावयेदक्षरत्रयम् DevīBhāP. vii. 34.41; **ii** three syllables जय( ? प )ति प्रपन्नविधुरोचितव्रतो ( रामः ) बत जानकीति परमक्षरत्रयम् RāmC. 20.47; चतुर्णामग्रेऽक्षरत्रयम् – रवेण जवेन KāvyKaVṛ. 15.3 (1.3); 17.9 (1.3); अत्र श्रीविद्यायां निगूढस्याक्षरत्रयस्योद्धारः LalitāSaBh. 28.9 (*on* 52)

**अक्षरत्रयन्यून** ( akṣaratraya–nyūna ) *adj.* short of three syllables अस्य त्वक्षरत्रयन्यूनस्य कारिकार्थस्य सत्यमर्थं न विद्मः TātpaṬ.(U.) 150.16 (*on* 4.119)

**अक्षरत्रयरूप** ( akṣaratraya–rūpa ) *adj.* [ *f.* –ā ] of the form of three syllables ई उं ऊं इत्यक्षरत्रयरूपा कृत्तिका SetuBa. 9.6.

**अक्षरत्रयसमाहार** ( akṣaratraya–samāhāra ) *m.* a combination of three sounds अक्षरत्रयसमाहार ओंकार: ManuBh. ii. 452.12 (*on* 11.264); अक्षरत्रयसमाहाररूप ओंकार: ManuBh. i. 116.7 (*on* 2.76)

**अक्षरत्रयात्मक** ( akṣaratrayātma–ka ) *adj.* [ *f.* –ikā ] **i** consisting of three sounds प्रणव इत्यक्षरत्रयात्मक: BhāṭṭCan. 106.5 (*on* xvi. 1.13); **ii** consisting of three syllables अक्षरत्रयात्मकद्वितीयपदनञ्पदयो: स्वार्थपरत्वाभावकल्पनापातात् GuruCandr. ii. 266.13; एवमक्षरत्रयात्मिका मूर्तिविद्या SetuBa. 224.20.

**अक्षरत्रयाधिक** ( akṣaratrayādhika ) *adj.* (a verse) to which are added three more syllables ( forming a part of another verse ) अक्षरत्रयाधिकेन श्लोकेन प्रतिजानान आह–नीलोत्पलादिशब्देषु शबलार्थाभिधायिषु। विशेषणविशेष्यत्वसामानाधिकरण्ययो:। न सिद्धि: S'arka. 58.24.

**अक्षरत्रितय** ( akṣara–tritaya ) *n.* a group of three sounds (i. e. *a*, *u* and *m* in *om* cf. **अक्षरत्रय** ) अक्षरत्रितयाव्यक्तविकाराक्षादिरूपिणे ··· नमश्चक्राय चक्रिणे AhirbuS. 1.1.

**अक्षरत्व** ( akṣara–tva ) *n.* **A** imperishability, eternality, permanence, immutability अक्षरत्वं नियच्छेत त्यक्त्वा क्षरम् MahāBhā. xii. 295.39; सनातनत्वाद्वेदानामक्षरत्वात्···च SuśruS. v. 8.141; अक्षरत्वं च मुक्तस्य क्षरणाभावतो मतम् MahāP. 42.103; न हि मिथ्याभूतं वस्त्वक्षरत्वश्रुत्यादिभि: परवाक्यैरुपदिश्यते VedāntTaSā. 19.6; जीवस्य पुरुषशब्दवाच्यत्वं 'द्वाविमौ पुरुषौ लोके' 'प्रधानपुरुषावेतौ' इत्यादिषु प्रधानादिपदान्तरसमभिव्याहाराक्षरत्वाद्युपाधिनाश्रीयते S'rutaPra. iB. 344.27 (*on* i. 2.27); प्रथमं तावदकालकाल्यत्वाजरत्वाक्षरत्वादिवचनेन देशलयाभावात् NyāySiA. 220.26; व्यतिरेकावगमनिमित्तत्वेन चाक्षरत्वेऽपि ब्रह्मण: कर्तृत्वाद्युपपत्ति: BālaKrī. ii. 32.22 (*on* 3.69); अक्षरत्वाद्वरेण्यत्वाद् धूतसंसारबन्धनात्···अवधूतोऽभिधीयते AvadhūU. 1 = KulārT. 17.24; **B** the nature of Akṣara (the imperishable one identified with Viṣṇu) हेत्वन्तरेण विष्णोरेवाक्षरत्वं प्रतिपादयत् सूत्रं पठित्वा व्याचष्टे TattvPrakā. 46A.6 (*on* i. 3.12); **C i** the nature of a syllable, vowel व्यञ्जनस्याप्यक्षरत्वे सति स्वयम्भूरुद्रसेनान्यौ, नारायणपुरन्दरौ इत्येवमादीनामनुष्टुप्त्वं हीयेत Jānāśra. 1.10 (4); अक्षरत्वात् पदत्वाच्च मखे(?मुखे) छन्दसमीरितम् TantrSā.(K.) 78.32; **C ii** the nature of a letter ( मातृकाया: ) अक्षरत्वं क्षराभावाद् वर्णत्वं वर्णसङ्ग्रहात् ĪśānS'iPa. i. 1.61.

**अक्षरत्ववियोग** ( akṣaratva–viyoga ) *m.* loss of imperishability, incompatibility with imperishability न वा तथेति यद्यायः पक्ष: संश्रीयते तदा। अक्षरत्ववियोग: स्यात् पौरस्त्यात्मविनाशत: TattvSaṁ. 130.

**अक्षरत्वव्यवहार** ( akṣaratva–vyavahāra ) *m.* usage as an articulate sound अथ बीजबिन्दुध्वनीनां च त्रिकूटेषु ग्रहात्मिकेति प्रकृततन्त्र एव तस्य ध्वनित्वेन व्यवहारो दृश्यत इति चेत्। हृल्लेखात्रयसंभूतैस्तिथिसंख्यैस्तथाक्ष[रैरित्यादावक्षरत्वव्यवहा]रोऽप्यस्तीति किं तेन, ध्वनित्वस्य सर्वानुस्यूतत्वाच्च SetuBa. 243.25.

**अक्षरत्वश्रवण** ( akṣaratva–śravaṇa ) *n.* ( scriptural ) statement of imperishability अक्षरे परमे व्योमन्नित्यस्य स्थानस्याक्षरत्वश्रवणात् क्षररूपादित्यमण्डलादयो न परमव्योमशब्दाभिधेया: VedāSaṁ. 161.18; S'rutaPra. ii. 628.19 (*on* iv. 3.15)

**अक्षरत्वश्रवणविरोध** ( akṣaratvaśravaṇa–virodha ) *m.* contradiction with the scriptural passage teaching indestructibility or imperishability 'अक्षरे परमे व्योमन्' इत्यक्षरत्वश्रवणविरोधाच्च न चतुर्मुखलोकोऽर्चिरादिप्राप्य: S'rutaPra. ii. 628.19 (*on* iv. 3.15)

**अक्षरत्वश्रुतिविरोध** ( akṣaratvaśruti–virodha ) *m.* contradiction with the scriptural passage teaching indestructibility or imperishability नित्यत्वाक्षरत्वश्रुतिविरोधात् स्वरूपशैथिल्येन प्रसर्पणमनुपपन्नम् S'rutaPra. ii. 369.10 (*on* ii. 3.32)

**अक्षरत्वसिद्धि** ( akṣaratva–siddhi ) *f.* establishment of imperishability or eternity नमनादिवासनानामाश्रयत्वादक्षरत्वसिद्धि: VedāntKa. 298.3 (*on* ii. 2.32)

**अक्षरदर्शन** ( akṣara–darśana ) *n.* perusal of written ( words ) किञ्चिद्गुरुमुखाच्छ्रुत्वा किञ्चिदक्षरदर्शनात्। प्रबन्धोऽयं कुमारस्य भूपतेर्लिखितो मया KumāCaSaṁ. 111.13.

**अक्षरदेवता** ( akṣara–devatā ) *f.* a deity presiding over the syllable (of a *mantra*) ज्ञात्वा द्विज: सम्यक् सर्वाश्चाक्षरदेवता:। कुर्वन् जपादिकम्···श्रेयोऽधिगच्छति BṛPārāSm. 4.25 = BālamBha. i. 109.25 (*on* 1.25); अग्निर्वायू रवि:···रुद्रो ब्रह्मा च विष्णुश्च क्रमशोऽक्षरदेवता:। गायत्र्या: AgniP. 215.18.

**अक्षरदैवत** ( akṣara–daivata ) *n.* a deity presiding over a syllable अक्षरदैवतं व्याख्यास्याम: AVPari. 41(5).6; कान्यक्षरदैवतानि GāyRaU. ii. 406.10.

**अक्षरद्वन्द्व** ( akṣara–dvandva ) *n.* a pair of syllables चेतनस्य यदा मर्म्यं स्वस्मिन् स्वीये च वस्तुनि। मम इत्यक्षरद्वन्द्वं तदा मम्यस्य वाचकम् AhibruS. 52.26; काल इत्यक्षरद्वन्द्वाद्यद्वाच्यं तद्वपुर्मम TantrRā. 36.40.

**अक्षरद्वय** ( akṣara–dvaya ) *n.* **A i** a pair of syllables यस्यां प्रिये प्रथमकमक्षरद्वयम्···गुरु S'rutaBo. 35; **A ii** a pair of syllables (forming a word) एतदेव परं ज्ञानं शिव इत्यक्षरद्वयम् S'ivU. 1.17; 1.18; सूर्य इत्यक्षरद्वयम् SūryU. 510.10; यजामहे···महेत्यक्षरद्वयेन TripuTāU. 539.11; गोपीत्यक्षरद्वयम् GopīU. ii. 67.11; दु:खशोकपरित्राणं हरिरित्यक्षरद्वयम् MahāBhā. xii. 93*.6; अक्षरद्वयमभ्यस्तं नास्ति नास्तीति SkandP. i (2). 2.65 = SūktiRa. 171.3 = VetāPañ.(S'i.) 33.1; जिह्वाग्रे···यस्य हरिरित्यक्षरद्वयम् BṛNāraP. 11.100; रविरित्यक्षरद्वयम्। जिह्वाग्रे···यस्य BhaviP. 257B.20 (i. 173.20); पुण्यसंचैकनिलयं शिव इत्यक्षरद्वयम् S'ivaP. v. 20.51 (429B.10); सर्वदोषहरं यद्धरिरित्यक्षरद्वयम् VasiS. 32.228; 32.58; केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् PañcT. 2.95 (266.3) = 4.7 (378.5) = Hitopa. i. 169 = Pañcā. 172.14 = Tantrākhyā. 89.7 = 125.30 = S'ārṅgaPa. 1473 = Subhāṣi. 2700 = BhojPra. 28.28; देहीति समभ्यस्याक्षरद्वयम् PadmP.(Ra.) 31.26; PañcaRā.(Nā.) i. 1.14; यद्दत्तं गुरुणा मन्त्रं नम इत्यक्षरद्वयम् KāliViT. 1.9; निस्तारबीजं च कृष्ण इत्यक्षरद्वयम् BrahmVaiP. i. 13.20; मुक्ताफलहारे योऽसौ शुक्लगुणस्तद्वाचकेन शुक्लमित्यक्षरद्वयेन हारो वाच्यो न भवति TātpaVṛ. 149.18 (*on* 2.15); न श्रुतावपि लोकानां भयमित्यक्षरद्वयम् PārśvC. 3.572; चतुर्णामग्रेऽक्षरद्वयम्···स्यात् स्वयम्···सदा KāvyKaVṛ. 15.1 (1.3); सर्वे पाखण्डतां गता:। श्रुते पिदधति श्रोत्रे क्रतुरित्यक्षरद्वये S'aṅkaDigVi. (Mā.) 1.34; यशोवीर लिखत्याख्यां यावच्चन्द्रे विधिस्तव। न माति भुवने तावदाद्यमप्यक्षरद्वयम् PurāPraSaṁ. 50.28; अक्षरद्वयं नित्याहृदये कथितम् LalitāSaBh. 75.15 (*on* 113); **B** double consonant or a cluster of two consonants विवृत्त्यां(?त्यां) तु विरामे चाक्षरद्वये। द्विरोष्ठौ तु विगृह्णीयाद्यत्रौकारवकारयो: PāṇiS'i. 24 = LomS'i. 3.7; S'aiśiS'i. 49.

**अक्षरद्वय** ( akṣara–dvaya ) *adj.* [ *f.* –ā ] having or consisting of two syllables वायुप्राणवनस्वै: सा चित्रा स्यादक्षरद्वया TantrRā. 3.72.

**अक्षरद्वयश्लेष** ( akṣaradvaya–śleṣa ) m. combination of two vowels अकारो वासुदेव: स्यादाकारस्तु पितामह इत्यनेकार्थध्वनिमञ्जर्यमभिधानात्ताभ्यामाराध्येत्यक्षरद्वयश्लेषेणार्थे सिद्धे LalitāSaBh. 60.13 (*on* 93)

**अक्षरद्वयसंयोग** ( akṣaradvaya–saṁyoga ) *m.* combination of two syllables पकारेणोच्यते पापं त्रकारस्त्राणवाचक:। अक्षरद्वयसंयोगे पात्रमाहुर्मनीषिण: CampaS'reKa. 34.

**अक्षरद्वयसंधि** ( akṣaradvaya–sandhi ) *m.* the junction of two letters or sounds अक्षरद्वयसंधौ तु तेभ्यो भिन्नोऽपि भवति ( नाद: ) SetuBa. 344.14.

**अक्षरद्वयाधिक** ( akṣaradvayādhika ) *adj.* to which are added two syllables अक्षरद्वयाधिकेन श्लोकपादेनाह S'arka. 63.23.

**अक्षरद्विकलचतुष्कलता** ( akṣaradvikalacatuṣkala–tā ) *f.* the state of having the syllables with two or four *kalās* (musical measures) यथाक्षरद्विकलचतुष्कलतया सर्वमेव···गानम्···संगृहीतम् AbhinBhā. i. 208.22 (*on* 5.6)

**अक्षरद्वितयात्मक** ( akṣaradvitayātma–ka ) *adj.* consisting of two sounds प्रणवं भावयेदेतदक्षरद्वितयात्मकम् AhirbuS. 51.46.

**अक्षरधर्म** ( akṣara–dharma ) *m.* the property of a syllable or text अक्षरावाप्तिर्नाम स्वाधीनोच्चारणयोग्यत्वाख्योऽक्षरधर्म: VivaPraSaṁ. 176.1.

**अक्षरधर्मत्व** ( akṣaradharma–tva ) *n.* the state of being the characteristic of the imperishable principle or Self ब्रह्मलिङ्गानां पूर्वपक्षदशायामक्षरधर्मत्वे बाधकोपन्यासात् S'ivarkaMaDī. i. 424.12 (*on* i. 3.11)

**अक्षरधामन्** ( akṣara–dhāman ) *n.* imperishable or indestructible abode ( अक्षराख्या: पुमांस: ) प्राप्ते प्रलयकाले तु पुनश्चाक्षरधामनि। स्वास्यन्ति ते SkandP. ii (9). 4.23; असावहमिह ब्रह्मन्नक्षरधामनि। राधालक्ष्मीयुतो नित्यं वसामि स्वाश्रितै: सह SkandP. ii (9). 18.6; वासुदेव: परं ब्रह्म बृहत्स्वक्षरधामनि। आदावेकोऽद्वितीयोऽभूत् SkandP. ii (9). 24.2.

**अक्षरधी** ( akṣara–dhī ) *f.* (Vedānta) **1Ai** the feature of the Imperishable (i. e. of the Supreme Being) अक्षरधियां त्ववरोध: सामान्यतद्भावाभ्याम् BrahmSū. iii. 3.33; ( S'aṅ. अक्षरविषयास्तु विशेषप्रतिषेधबुद्धय: सर्वा: ); अक्षरस्य धियोऽक्षरधिय:। अक्षरे धर्मिणि प्रपञ्चप्रतिषेधधिय: VedāntKa. 446.4; अक्षरधियां सर्वत्राविरोध: अपरिग्रह: (? परिग्रह:) BrahmSūBh.(Bhā.) 188.9 (*on* iii. 3.33); **1Aii** the feature of the Imperishable (i. e. Viṣṇu) अक्षरधियां अक्षरसंबन्धिनीनामस्थूलत्वादिधियाम् VedāntDī. 185.1 (*on* iii. 3.33); S'rīBh. 644.11 (*on* iii. 3.33); **1Aiii** knowledge of the Imperishable अक्षरधियां त्ववरोध इति। अक्षरं ब्रह्म तत्संबन्धिन्य:···अस्थूलत्वानणुत्वादिबुद्धय: तासामपि सर्वासु ब्रह्मविद्यास्ववरोध:

परिग्रहः VedāntKau. 328. 2 (*on* iii. 3. 33); VedāntPāSau. 327. 1 (*on* iii. 3. 33); **1Aiv** the feature of the Imperishable (i. e. of the Universal Spirit) cf. अक्षरसंबन्धिनीनां निषेधधियां सर्वासु परविद्यासूपसंहारो युक्तः गुणिनो ब्रह्मणः सर्वत्रैकत्वात् BrahmSūBh.(S'rī.) ii. 342. 1 (*on* iii. 3. 33); अक्षरधियामित्यादि…अक्षरविषयिणीनां धियां श्रुतौ मुक्तिसाधनेषु योऽवरोधः प्रवेशनं गणनेति यावत् AṇuBh. 240. 15 (*on* iii. 3. 33); **1B** the feature causing the knowledge of the Imperishable अक्षरधियः अस्थूलत्वादयः। अक्षरस्य धीः येभ्यः तेऽक्षरधियः LaCandr. 695. 37; **2A** one who possesses the knowledge of the Imperishable अक्षरधियां ब्रह्मज्ञानिनाम् Sūtrārthacandrikā (in S'ivārkaMaDī.) 344. 33 (*on* iii. 3. 33); cf. BrahmSūBh.(Ma.) 138A. 4 (*on* iii. 3. 34); TattvPrakā. 173B. 8 (*on* iii. 3. 34); NyāySu.(Ja.) 563A. 1 (*on* iii. 3. 20); **2B** one whose knowledge pertains to the Imperishable अक्षरधियां निरवयवपरशिवब्रह्मसाक्षात्कारवतां तु अवरोधः परलोकगमनप्रतिबन्धः S'rikarBh. 371. 16 (*on* iii. 3. 33)

**अक्षरनष्टधी** (akṣara-naṣṭadhī) *adj.* who has wasted his intelligence in (learning) letters विद्वानक्षरनष्टधीरिति…यामन्तरेणेश्वरैर्गण्यन्ते गुणिनोऽपि दूषणपदं तस्यै नमस्ते श्रिये SaduktiKa. 50. 1.

**अक्षरनामन्** (akṣara-nāman) *n.* the expression or name *akṣara* (imperishable) अविनाशित्वसाम्याच्चित्प्रकृतौ हरौ च साधारणस्याक्षरनाम्नो ब्रह्मणि समन्वयप्रतिपादनात् TattvaPrakā. 45A. 8 (*on* i. 3. 10); अक्षरनामान्यस्य किं न स्यात् NyāySu.(Ja.) 94B. 10 (*on* i. 1. 1)

**अक्षरनिधन** (akṣara-nidhana) *n.* the final part of the *sāman*, consisting of one syllable एतदक्षरनिधनं भवतीति NidāSū. 90. 18 (5. 9); अक्षरनिधनानां प्रथममायतनमिति NidāSū. 98. 17 (6. 3)

**अक्षरनिमित्तत्व** (akṣaranimitta-tva) *n.* the state of being the cause of the syllabic sound or word तच्चाक्षरनिमित्तत्वादक्षरमित्युच्यते VākyaP. (Vṛtti) 7. 2 (*on* 1. 1); (Vṛṣabhadeva ब्रह्माक्षरमित्यभिधीयते। अक्षराणि वर्णा अकारादयः। तेषां तद् ब्रह्म निमित्तमिति)

**अक्षरनियम** (akṣara-niyama) *m.* the rule as regards the order of heavy and light syllables (in a metre) अक्षरनियमो गुरुलघुनिवेशनियमः AbhinBhā. ii. 234. 18 (*on* 14. 41)

**अक्षरनियमात्मक** (akṣaraniyamātma-ka) *adj.* consisting of a fixed number of syllables अक्षरनियमात्मकं छन्दः Liṅgānu.(He.) (Avacūri) 40. 13.

**अक्षरनिरूपण** (akṣara-nirūpaṇa) *n.* treatment or exposition of *akṣara* (imperishable i. e. Supreme Being) अक्षरनिरूपण एव पुरुषविशेषणाच्च AṇuBh. 66. 18 (*on* i. 2. 22); 'एतद्वै तदक्षरम्' इत्यक्षरनिरूपणं प्रवृत्तम् S'ivārkaMaDī. i. 419. 19 (*on* i. 3. 9)

[1]**अक्षरनिर्दिष्ट** (akṣara-nirdiṣṭa) *adj.* denoted or indicated by syllables प्रस्तारोऽक्षरनिर्दिष्टः NāṭyaS'ā. 14. 117.

[2]**अक्षरनिर्दिष्ट** (akṣara-nirdiṣṭa) *adj.* conveyed or denoted by the term *akṣara* (indestructible i. e. supreme being) इतरौ प्रधानपुरुषौ न भूतयोन्यक्षरनिर्दिष्टौ VedāntKau. 69. 1 (*on* i. 2. 23)

**अक्षरनिर्माण** (akṣara-nirmāṇa) *n.* writing or inscribing the letters लिपिपत्रन्यासे अक्षरनिर्माणे CaturCin. i. 550. 19.

**अक्षरनिर्मित** (akṣara-nirmita) *adj.* created by the syllables (of a song or composition) सङ्कद्भिरितरुद्राहोऽन्तरस्त्वक्षरनिर्मितः। यस्यामसौ रमा SāṁgīRa. ii. 341. 14(4. 357).

**अक्षरनिष्ठ** (akṣara-niṣṭha) *adj.* [*f.* -ā] **1** who meditates on the individual self अतोऽक्षरनिष्ठस्याप्यचिरादिगतिः सिद्धा NyāySiA. 222. 20; **2** pertaining to (i. e. based on) the syllables इयं च संख्याक्षरनिष्ठा LalitāSaBh. 25. 22.

**अक्षरनिष्ठता** (akṣaraniṣṭha-tā) *f.* the state of one who meditates on the individual self भगवदुपासनोपायश्च तदस(v. l. श)क्तस्याक्षरनिष्ठता तदपेक्षिताश्चोच्यन्ते GītāBh.(Rā.) 561. 2 (*on* 12. 0)

**अक्षरन्यास** (akṣara-nyāsa) *m.* **1** writing of the letters शोणितेनाक्षरन्यासो धिक्पिशाचकथामिमाम् KathāSaSāg. i. 8. 15; **2** script अक्षरन्यासे लिपिर्लिविः AbhidhāCi. 484; लिपिकरो लिविकरोऽक्षरन्यासे लिपिर्लिविः S'abdaRa. (Su.) 3. 98; **3** placing on or assigning the (various) syllables (of a *mantra* to the prescribed limbs of the body) विद्या प्रागुदिता तव। तदङ्गान्यक्षरन्यासम्…वक्ष्येऽहम् TantrRā. 18. 2; **4** syntactical connection of words ब्रह्मणा ऋत्विजा मनसा चन्द्रेणेत्यक्षरन्यासः पूर्ववत् BṛĀraUBh. 363. 8 (*on* iii. 1. 6); **5** order of words इयमेवर्क् इति च यथाक्षरन्यासम् ऋच एव पृथिवीत्वमवधारयति पृथिव्या हि ऋक्त्वेऽवधार्यमाणे इयमृगेवेत्यक्षरन्यासः स्यात् BrahmSūBh(S'aṅ.) 782. 1 (*on* iv. 1. 6); **6** arrangement of letters or syllables of the verse वलयारान्तरालेषु रथाङ्गस्य तथोदरे। नियमेनाक्षरन्यासश्चक्रबन्धोऽभिधीयते SāhīSā. 2. 151.

**अक्षरपङ्क्ति** (akṣára-paṅkti) *f.* **1** name of a Vedic metre containing four feet with five syllables in each (generally formed out of the *dvipadā virāj*, cf. ṚPrāti. 7. 32) अक्षरपङ्क्तिश्छन्दः TaiS. IV. iii. 12. 3; VS. 15. 4; अक्षरपङ्क्तयः शंसति पशवो वा अक्षरपङ्क्तयः KauśīBr. 16. 8 (72. 19); असौ वै लोकोऽक्षरपङ्क्तिश्छन्दः S'atBr. VIII. v. 2. 4; अक्षरपङ्क्तिषु ज्यैष्ठकामायोक्थानि प्रणयेयुः PañcBr. viii. 10. 9; xiv. 5. 6; अथ गायत्री एकपदां द्विपदाम् अक्षरपङ्क्तिम् इत्येतानि मृगच्छन्दसानि प्राजायत JaimiBr. 3. 324; 3. 369; पच्छस्त्रिष्टुब्जगतीनामक्षरपङ्क्तीनां द्विपदानां च S'āṅkhāS'S. vii. 26. 4; विराजो द्विपदाः केचित् सर्वा आद्युश्चतुष्पदाः। कृत्वा पञ्चाक्षरान्पादांस्तास्तथाक्षरपङ्क्तयः ṚPrāti. 17. 32; विकृतिः संस्कृतिश्चैवाक्षरपङ्क्तिस्तथैव च। इत्येतानि च छंदांसि कीर्तितानि DevīBhāP. xii. 1. 18; अक्षरपङ्क्तिः पञ्चकाश्चत्वारः ChandasSū. 3. 44; अक्षरपङ्क्तिः शराः JayaChand. 3. 18; **2** a different name for *uttarā-virāj* metre उत्तरस्या दशाक्षराः। तामक्षरपङ्क्तिरित्यप्याचक्षते S'āṅkhāS'S. vii. 27. 24; **3** name of a classical metre of four feet, each of which has the first, fourth and fifth syllables long आद्यचतुर्थं पञ्चमकं चेत्। यत्र गुरुः(? रु) स्यात् साक्षरपङ्क्तिः S'rutaBo. 7; **4** name of the brick of the fire altar (placed with the chanting of a *mantra* in that metre) बृहतीरुष्णिहाः पङ्क्तीरक्षरपङ्क्तीरिति विषुरूपाणि छन्दांसि स्युर्प दधाति TaiS. V. iii. 8. 2; उष्णिहः पुरस्तादुपदधाति…अक्षरपङ्क्तीः पश्चात् BaudhS'S. ii. 43. 12; अग्निर्मूर्धेति तिस्रो गायत्रीः पुरस्तादुपदधाति।…बृहतीः…अक्षरपङ्क्तीरिति विषुरूपाणि छन्दांसि यथावकाशम् ĀpaS'S. xvii. 4. 10; **5** a group of five syllables (i. e. *su, mat, pad, vak, de*) AitBr. 8. 6 (comm.) (234); **6** an (engraved) line of letters बिम्बासनस्य पश्चाद्भागेऽक्षरपङ्क्तैरितिज्ञात् श्रूयते PurāPraSaṁ. 96. 6; **7** series of syllables गीयमानस्य गीतस्य यावदक्षरपङ्क्तयः। तावद्वर्षसहस्राणि इन्द्रलोके महीयते VarāP. 139. 21; **8** a verse किं पुनरिदमक्षरपङ्क्तिद्वयम् PrasaRā. 7. 10. (1)

**अक्षरपङ्क्तिका** (akṣarapaṅkti-kā) *f.* a line of letters (i. e. a statement or sentence) एवं विचिन्त्य योगीन्द्रः… । करेणैतां च तत्कुड्ये लिलेखाक्षरपङ्क्तिकाम् BṛKathāK. 156. 35; समस्यापदमप्राक्षीत् तूर्णमापूरि तेन च। अपरेणापि संपूर्णा तथैवाक्षरपङ्क्तिका PrabhāC. 116. 4.

**अक्षरपङ्क्ती** (akṣara-paṅktī) *f.* cf. अक्षरपङ्क्ति, name of a Vedic metre containing five feet of five syllables each अक्षरपङ्क्त्य एताश्चतस्र एकैका पञ्चविंशत्यक्षरा BaudhS'S. iii. 204. 1; अग्ने तमद्याश्वमित्यक्षरपङ्क्त्यो याज्यानुवाक्या भवन्ति ĀpaS'S. v. 28. 15.

**अक्षरपञ्चक** (akṣara-pañcaka) *n.* a group of five syllables मध्यप्रागाप्ययाम्योदक्कोष्ठेष्वक्षरपञ्चकम् (लिखेत्) ĪśānS'iPa. i. 47. 16; ओं भूर्भुवःस्वरित्यक्षरपञ्चकं हृदयशिरःशिखानेत्रद्वयकरद्वयेषु न्यसेत् VīraMi. (Āhnika.) 288. 17.

**अक्षरपत्र** (akṣara-patra) *n.* a written document इति अक्षरपत्रान्तरस्थबन्धपूर्वकं श्रीतेजःपालाय व्यापारसम्बन्धिनं पञ्चाङ्गप्रसादं ददौ PrabaCin. 99. 2.

**अक्षरपत्रक** (akṣarapatra-ka) *n.* a written document भिन्नश्च विहितः श्रेष्ठिगेहादक्षरपत्रकैः MalliC. 7. 104.

**अक्षरपद** (akṣara-pada) *n.* words consisting of (separate) syllables सः… । तस्मैद्विजेतरतपस्विसुतं स्खलद्भिरात्मानमक्षरपदैः कथयांबभूव RaghuVa. 9. 76; ब्रूहि प्रस्तुतवस्तु संप्रति महत्कर्णे सखीनां सुखं तृप्तिर्निर्भरमेभिरक्षरपदैः प्रागेव मे संभृता SaduktiKa. 97. 23; SūktiMu. 57. 26.

**अक्षरपदप्रसिद्धि** (akṣarapada-prasiddhi) *f.* conventional use of the word *akṣara* न च वर्णातिरिक्ते स्फोटात्मनि अलौकिकेऽक्षरपदप्रसिद्धिरस्ति लोके Bhām. 204. 8 (*on* i. 3. 10)

**अक्षरपदभ्रष्ट** (akṣarapada-bhraṣṭa) *adj.* faulty or defective in syllables and words यदक्षरपदभ्रष्टं मात्राहीनं च यद्भवेत्। क्षन्तुमर्हन्ति मे मातः कस्य वै निश्चलं मनः PuruṣPa. 154. 13.

**अक्षरपदलक्ष्य** (akṣarapada-lakṣya) *adj.* indicated by the word *akṣara* (through secondary signification) अक्षरपदलक्ष्यचैतन्यम्…अस्या अस्तीति एकाक्षरी LalitāTriBh. 261. 10 (*on* 5)

**अक्षरपदवाच्य** (akṣarapada-vācya) *adj.* denoted by the word *akṣara* प्रधानजीवौ न भूतयोन्यक्षरपदवाच्यौ VedāntPāSau. 68. 23 (*on* i. 2. 23)

**अक्षरपदाभिधेय** (akṣarapadābhidheya) *adj.* expressed by the word *akṣara* परमेश्वर एवात्राक्षरपदाभिधेयः BrahmSūBh.(S'rī.) i. 384. 6 (*on* i. 2. 24); i. 422. 2 (*on* i. 3. 9)

**अक्षरपदार्थ** (akṣarapadārtha) *m.* the sense of the word *akṣara* जीवो वाक्षरपदार्थोऽस्तु VedāntKau. 84. 12 (*on* i. 3. 10)

**अक्षरपर** (akṣara-para) *adj.* **i** having reference to the *akṣara* (the imperishable Brahman) अपादानपञ्चम्याक्षरपरमन्त्रद्वयैकविषयत्वस्य प्रतीयमानत्वात् …भूतयोन्यक्षरं ब्रह्मैव स्यात् S'ivārkaMaDī. i. 379. 6 (*on* i. 2. 22); **ii** having

reference to the *akṣara* (the imperishable primordial matter) 'यथा सुदीप्तात्' इति मन्त्रस्याक्षरपरापादानपञ्चम्या तदेकविषयत्वस्य च प्रतीयमानत्वेन परिणाम्युपादानत्वस्यान्यसङ्क्रमणायोगात् S'ivārkaMaDī. i. 379. 4 (*on* i. 2. 22)

**अक्षरपरंपरा** (akṣara-paramparā) *f.* **A** a series of letters or speech-sounds वाक्येषु पुनरतिचिरतरतिरोहिताक्षरपरम्परानुसन्धानमतिक्लिष्टम् NyāyMañ. i. 356. 15; अथाक्षरपरम्परेत्यवगतं तत्रासोपदेश इति शब्दलक्षणात्रातिवर्तते TātpaṬ. (Vā.) 436. 17 (*on* ii. 2. 2); **B** (an engraved) line of letters बिम्बासनस्य पाश्चात्यभागेऽक्षरपरम्परा। ऐतिह्यात् श्रूयते PrabhāC. 166. 16. cf. **अक्षरपङ्क्ति**

**अक्षरपरामर्श** (akṣara-parāmarśa) *m.* reference to the word *akṣara* तत्पदेनाक्षरपरामर्शात्तद्विशेषणमदृश्यत्वादिकं स्यात् S'ivārkaMaDī. i. 378. 4 (*on* i. 2. 22)

**अक्षरपरिगणन** (akṣara-parigaṇana) *n.* a count of the syllables आश्रावयेति चतुरक्षरमित्रादिश्रुतौ…अक्षरपरिगणनस्य…अदृष्टार्थत्व एव सामञ्जस्याच्च BhāṭṭCan. 53. 15 (*on* xiv. 3. 1)

**अक्षरपरिज्ञान** (akṣara-parijñāna) *n.* knowledge of the imperishable Brahman यस्त्वक्षरपरिज्ञानान्मृत्युमृत्युः प्रमीयते। स एव ब्राह्मणो नान्यः BṛĀraUBhVā. iii. 8. 169.

**अक्षरपरिणाममुख** (akṣarapariṇāma-mukha) *n.* the method of giving a figurative or symbolic meaning to words in a passage व्याख्याविनिश्चयः कतमः। येन सूत्रान्तान् व्याचष्टे। …अपि खलु चतुर्दश मुखानि व्याख्याविनिश्चयस्य। …अक्षरपरिणाममुखम् AbhidhSa. 103. 13.

**अक्षरपरिमाण** (akṣara-parimāṇa) *n.* the number of syllables प्रस्तावप्रतिहारणिधनानामक्षरपरिमाणं सर्वत्र यथायोनि चिकीर्षेद्वैच्छन्दसेष्वनादेशे LāṭyāS'S. vii. 9. 6.

**अक्षरपरिलोप** (akṣara-parilopa) *m.* dropping or loss of letters or syllables दुष्टलिप्यक्षरपरिलोपेनावाचकतया वा यल्लेख्यं तत्तु दुर्लेख्यम् VīraMi. (Vyavahāra.) 147. 20.

**अक्षरपर्यन्त** (akṣara-paryanta) *adj.* terminating in the imperishable state (i. e. final deliverance) सर्वधर्मपरं क्षत्रम् … । शश्वदक्षरपर्यन्तमक्षरं सर्वतोमुखम् MahāBhā. xii. 64. 29.

**अक्षरपर्यन्तम्** (akṣara-paryantam) *adv.* upto the *akṣara* (i. e. upto the Brahman) अक्षरपर्यन्तं शतोत्कर्षश्रवणादुपर्यपेक्षा AṇuBh. 88. 9 (*on* i. 3. 26); अक्षरपर्यन्तं गणितानन्दत्वात्पुरुषोत्तमस्यैवानन्दमयत्वेन निरवधिसुखात्मकत्वात् AṇuBh. 255. 5 (*on* iii. 3. 47)

**अक्षरपर्यालोचना** (akṣara-paryālocanā) *f.* careful consideration of the words (of a scriptural statement) अक्षरपर्यालोचना कथमित्यत्राह S'rutaPra. iA. 46. 11 (*on* i. 1. 1)

**अक्षरपाठक** (akṣara-pāṭhaka) *adj.* one who teaches the alphabet शिशूनामक्षरपाठको दारकाचार्यः CaturCin. iii.(1) 491. 21.

**अक्षरपातक** (akṣara-pātaka) *m.* a particular measure of time consisting of a count of two *laghvakṣaras* or four *truṭis* कालोऽनेहा च दिष्टश्च स सूक्ष्मस्त्री त्रुटिस्त्रुटिः। द्वे त्रुटी लघ्वक्षरकस्तौ द्वावक्षरपातकः Vaija. 21. 52.

**अक्षरपिण्ड** (akṣara-piṇḍa) *m.* a group of syllables आर्या त्वक्षरपिण्डेन विज्ञेयात्र प्रयोक्तृभिः NāṭyaS'ā. 15. 223; अक्षरपिण्डस्त्र्यश्रे पञ्चादिर्नवपरश्च विज्ञेयः। अष्टादिश्चतुरश्रे त्रयोदशपरस्तु विज्ञेयः NāṭyaS'ā. 32. 239; सर्वगुरुश्चाष्टादिस्त्रयोदशपरश्च सर्वलघुः। एष त्र्य(त्व)क्षरपिण्डो विज्ञेयो वै ध्रुवाविधानज्ञैः NāṭyaS'ā. 32. 240.

**अक्षरपुरुष** (akṣara-puruṣa) *m.* the supreme person (i. e. Viṣṇu) called *akṣara* अतोऽक्षरपुरुष एवाक्षरात्परतः परत्वेनोच्यते S'rutaPra. iB. 326. 23 (*on*i. 2. 22)

**अक्षरपुरुषोत्तमविभाग** (akṣarapuruṣottama-vibhāga) *m.* distinction between *akṣara* (i. e. the Brahman) and *puruṣottama* (the Supreme Lord, Viṣṇu) तथैवाक्षरपुरुषोत्तमविभागोऽपि AṇuBh. 102. 17 (*on* i. 4. 3)

**अक्षरपुष्कर** (akṣara-puṣkara) *n.* a lotus-diagram inscribed with letters कुम्भं प्रोक्तमनु जपन् समभिपूर्योर्ध्वाधमण्ड्लेषतश्चासिन्नक्षरपुष्करं परियजेत TantrSa. 8. 27.

**अक्षरपूर्वक** (akṣara-pūrvaka) *adj.* [*f.* -ikā] **A** consisting of (mystic) letters प्राकृतं मण्डलं तत्र द्वात्रिंशद्भेदमिष्यते। …गुंणतन्त्राण्यथ त्रीणि तन्त्रमक्षरपूर्वकम् AhirbuS. 12. 21; **B** known through the word सामर्थ्यादपि संप्राप्तो न चेदक्षरपूर्वकः। तादृङ्नोपास्य एवेति प्राहुरागमवेदिनः BṛĀraUBhVā. ii. 5. 75; **C** beginning with (the meditation of) the imperishable (i. e. prime cause) संप्राप्य भावनामन्त्यां ब्राह्मीमक्षरपूर्विकाम् KūrmaP. 15. 13 (1. 1)

**अक्षरप्रकरण** (akṣara-prakaraṇa) *n.* the topic or context of *akṣara* (Brahman) ननु यद्यस्मिन्नधिकरणे भूतयोन्यधिकरणप्रसिद्धमक्षरप्रकरणमविचलमास्ते कथं तदन्तर्गते मन्त्रे वाय्वादिपरत्वपूर्वपक्षोत्थानं वायुलिङ्गादिकं ब्रह्मप्रकरणाद्बलीय इति S'ivārkaMaDī. i. 406. 8 (*on* i. 3. 5)

**अक्षरप्रकरणत्व** (akṣaraprakaraṇa-tva) *n.* the state of being the topic or context of *akṣara* (Brahman) एवं सति पूर्वप्रपाठकस्याक्षरप्रकरणत्वात्…विचैवाग्रिमप्रपाठके निरूप्यते AṇuBh. 254. 24 (*on* iii. 3. 47)

**अक्षरप्रकरणस्थ** (akṣaraprakaraṇa-stha) *adj.* occurring in the section dealing with *akṣara* नाप्यन्तर्यामिप्रकरणस्थं नान्योऽतोऽस्ति द्रष्टेतिवाक्यं अक्षरप्रकरणस्थं नान्यदतोऽस्ति द्रष्टितिवाक्यं चैक्ये मानम् Nyāyāmṛ. 601B. 7; AdvaiSi. 842. 3.

**अक्षरप्रकृति** (akṣara-prakṛti) *adj.* **i** of the nature of letters विश्वेश्वरोऽपि जनपालक दुर्गतस्त्वं किं वाक्षरप्रकृतिरप्यलिपिस्त्वमीश KalyāMaSt. 30; **ii** of imperishable nature, KalyāMaSt. 30.

**अक्षरप्रकृतिभासुर** (akṣaraprakṛti-bhāsura) *adj.* **A** shining like the forms of letters (in the alphabet) षष्टिकोष्ठकसंयुक्तोऽक्षरप्रकृतिभासुरः। यन्त्रशाली देव इव वप्रो यत्र सुरक्षकः RatnaCūKa. 9; **B** shining on account of being indestructible by nature, RatnaCūKa. 9.

**अक्षरप्रतिपत्ति** (akṣara-pratipatti) *f.* knowledge of letters अत एव लिपेरक्षरप्रतिपत्तिर्व्याख्याता NyāyKu. 10. 9.

**अक्षरप्रतिपादन** (akṣara-pratipādana) *n.* propounding the *akṣara* (i. e. the imperishable) इहाक्षरप्रतिपादनानन्तरम्…ततः परस्य पुरुषस्य प्रतिपादनं दृश्यते स पुरुषो ब्रह्मेति S'ivārkaMaDī. i. 378. 15 (*on* i. 2. 22)

**अक्षरप्रतिलोम** (akṣara-pratiloma) *adj.* with syllables in the reverse order शृणु मन्त्रस्य माहात्म्यं भूयोऽपि मुनिसत्तम। पादशः प्रतिलोमोऽयं वैकुण्ठास्त्रं निगद्यते। अक्षरप्रतिलोमोऽयं स्मृतं नारायणास्त्रकम् AhirbuS. 56. 38.

**अक्षरप्रमाण** (akṣara-pramāṇa) *n.* the measurement (i. e. the number) of syllables सर्वेषां छन्दसामक्षरप्रमाणमुक्तम् Jānāśra. 1. 10(2); 6. 17(2)

**अक्षरप्रवाद** (akṣara-pravāda) *m.* divergent opinion about syllables बहुरक्षरप्रवादो भवति NidāSū. 47. 19 (3. 4); 141. 9 (8. 6)

**अक्षरप्रशासनाधीनत्व** (akṣarapraśāsanādhīna-tva) *n.* the state of being subject to the rule of *akṣara* (i. e. Brahman) सूर्यादिधृतेरक्षरप्रशासनाधीनत्वं प्रदर्श्य S'ivārkaMaDī. i. 423. 18 (*on* i. 3. 10)

**अक्षरप्रातिलोम्य** (akṣara-prātilomya) *n.* reversing of the order of letters (in a *mantra*) अक्षरप्रातिलोम्येन सोङ्कारेण क्रमेण तु। फट्कारान्तां च कुर्वीत प्रेच्छन्नरिवधं बुधः BṛParāSm. 4. 51; विद्वेषणार्थं जुहुयाद्बिभीतसमिधाष्टकम्। अक्षरप्रातिलोम्येन LiṅgaP. i. 85. 210.

**अक्षरप्राप्ति** (akṣara-prāpti) *f.* attainment of the imperishable (Brahman) द्वे वै विद्ये वेदितव्ये इति चाथर्वणी श्रुतिः। परया त्वक्षरप्राप्तिर्ऋग्वेदादिमयापरा ViṣṇuP. vi. 5. 65; BrahmP. 233. 63; ज्ञानमार्गेऽक्षरप्राप्त्या भक्तिमार्गे पुरुषोत्तमप्राप्त्या तस्माद्विशेषमत्र ज्ञापयितुमेवं कथनम् AṇuBh. 232. 8-9 (*on* iii. 4. 27); 88. 9 (*on* i. 3. 26)

**अक्षरप्राप्तिसमवेत** (akṣaraprāpti-samaveta) *adj.* inherent in the mastery of the syllables (of the Vedas) अक्षरग्रहणान्तोऽध्ययनविधिः। यदि विधेरदृष्टं फलमपेक्षितं तर्ह्यक्षरप्राप्तिसमवेतमेव तत्कल्पनीयम् VivaPraSaṁ. 197. 12.

**अक्षरप्राप्त्युपाय** (akṣaraprāptyupāya) *m.* means to attain the imperishable (Brahman) स याति परमां गतिम् इत्यन्तेनाक्षरप्राप्त्युपायमुक्त्वा… पूर्वं क्षराक्षरयोः स्वरूपमाह AṇuBh. 241. 23 (*on* iii. 3. 33)

**अक्षरप्रिय** (akṣara-priya) *adj.* [*f.* -ā] **A** who likes that which is imperishable चतुराश्रमवेत्ता च चातुर्वर्ण्यकरश्च ह। क्षराक्षरप्रियः (त्वं देवः) VāyuP. i. 30. 251; **B i** beloved of the imperishable, **ii** who likes the syllables (in the *mantras*) किं तस्य जपपूजायां अक्षरेष्वक्षरप्रिये (कालिके) KālīViT. 3. 11.

**अक्षरबद्धसंश्रय** (akṣarabaddha-saṁśraya) *adj.* whose abode is fixed or rooted in the letters (of the *mantras*) जितं जितं तेऽक्षरबद्धसंश्रय श्रीकान्त…भव नो भवाय BṛBrahmaS. i. 2. 112.

**अक्षरबाहुल्य** (akṣara-bāhulya) *n.* manifoldness of syllables, verbosity अक्षरबाहुल्यादायासभीरुत्वात् प्रश्नः संभवत्येव MuṇḍaUBh. 307. 6 (*on* i. 1. 3)

**अक्षरबाह्य** (akṣara-bāhya) *adj.* [*f.* -ā] outside or not conforming to the (sacred) text वेदार्थमूढानां स्वचित्तप्रभवा एवमादिकल्पना अक्षरबाह्याः BṛĀraUBh. 290. 13 (*on* ii. 3. 6)

**अक्षरबीज** (akṣara-bīja) *n.* the eternal seed (the letter 'ṭham' or 'om') शरच्चन्द्रनिभं तत्राक्षरबीजं विजृम्भितम् S'ivS. 5. 130.

**अक्षरबुद्धि** (akṣara-buddhi) *f.* the concept or idea of the syllable 'om' इहापि अक्षरबुद्ध्या उद्गीथबुद्धिर्निवर्त्यत BrahmSūBh. (S'aṅ.) 629. 7 (*on* iii. 3. 9); नाप्यक्षरबुद्ध्या तद्बुद्धिर्निवर्त्यते BrahmSūBh.(Bhā.) 178. 6 (*on* iii. 3. 9).

**अक्षरबुद्धिक** (akṣarabuddhi-ka) *n.* understanding as (mere) words

or syllables गुरौ मनुष्यबुद्धिं च मन्त्रे चाक्षरबुद्धिकम्…कुर्वाणो नरकं व्रजेत् KulārT. 12. 45.

**अक्षरबोध्यवत्** ( akṣarabodhya-vat ) *adv.* like what is to be known through words औपदेशिकता युक्ता तस्याप्यक्षरबोध्यवत् PrakaPañ. 497. 7.

**अक्षरब्रह्मज्ञान** (akṣarabrahma-jñāna) *n.* knowledge of the immutable Supreme Being अक्षरब्रह्मज्ञानस्य तत्साधनत्व उच्यमाने तद्विरोधः स्यात् AṇuBh. 345. 6 (*on* iv. 3. 17)

**अक्षरब्रह्मन्** ( akṣara-brahman ) *n.* immutable Supreme Being अक्षरब्रह्मण्यानन्दात्मके सत्यपि तस्य परिच्छिन्नत्वान्न परमफलत्वम् AṇuBh. 24. 24 (*on* i. 1. 11); 254. 8 (*on* iii. 3. 47); 254. 20 (*on* iii. 3. 47); 348. 4 (*on* iv. 4. 5); अक्षरब्रह्मसंबन्धिनीनाम्…अस्थौल्यादिधियाम्…संग्रहः कार्यः GoviBh. 241. 5 (*on* iii. 3. 34); अक्षरब्रह्मसंबन्धिनीनां धियां सर्वासु परविद्यासु संग्रहः VedāntSā.(Rā.) 312. 3 (*on* iii. 3. 33); अक्षरब्रह्मसंबन्धिनीनामस्थूलत्वादिनिषेधधियामेव सकलेतरव्यावर्तकधर्मरूपत्वादुपसंहारः परविद्यासु BrahmSūBh. (S'rī.) ii. 343. 4 (*on* iii.. 3. 34)

**अक्षरब्रह्मप्राप्ति** ( akṣarabrahma-prāpti ) *f.* attainment of the immutable Supreme Being ज्ञानमार्गीयस्य ब्रह्मज्ञानेनाक्षरब्रह्मप्राप्तिः AṇuBh. 350. 21 (*on* iv. 4. 11)

**अक्षरब्रह्मविद्** ( akṣarabrahma-vid ) *adj.* who has realised the immutable Supreme Being ब्रह्मविदाप्नोति परम् इति श्रुतावक्षरब्रह्मविदोऽक्षरात्परस्य प्राप्तिरुच्यते AṇuBh. 240. 19 (*on* iii. 3. 33); 260. 3 (*on* iii. 3. 53); 344. 25 (*on* iv. 3. 17)

**अक्षरब्रह्मविद्या** ( akṣarabrahma-vidyā ) *f.* knowledge of the immutable Supreme Being सैवोपनिषदेतत्प्रतिपाद्याक्षरब्रह्मविद्याप्रतिपादकोपनिषदन्तराद्भिद्येत नाक्षरब्रह्मविद्या S'ivārkaMaDī. ii. 281. 3 (*on* iii. 3. 1)

**अक्षरब्रह्मावाप्ति** ( akṣarabrahmāvāpti ) *f.* the attainment of the immutable Supreme Being ओङ्कारपूर्विकास्तिस्रो व्याहृतयो भूर्भुवःस्वरित्येता अक्षरब्रह्मावाप्तिफलत्वेनाव्ययाः ManvaMu. 50. 23 (*on* 2. 81)

**अक्षरभक्षक** ( akṣara-bhakṣaka ) *adj.* **A** eater of letters (one who misses letters in his writing) आकारशीर्षहारी नवदरकारी पदार्थसंहारी । अक्षरभक्षकमेलालिप्तमुखो लेखकः कालः Deśopa. 8. 45; **B** destroying (the things regarded as) imperishable, Deśopa. 8. 45.

**अक्षरभव** ( akṣara-bhava ) *adj.* [ *f.* -ā ] arising from syllables विनियोजयेत् सुधीः…अक्षरभवास्तु कादिभिः…कलाः PañcaRā.( Nā. ) iii. 7. 20.

**अक्षरभाज्** ( akṣara-bhāj ) *adj.* sharing the syllables, having share in the syllables देवता अक्षरभाजः करोति AitBr. 2. 4(46) = 10. 5 (271) = 12. 11 (347); अक्षरभाजो देवताः करोति KauṣīBr. 14. 2 (62. 20) = 18. 5 (81. 2)

**अक्षरभामन्** ( akṣara-bhāman ) *adj.* [ *f.* -mnī ] whose lustre is undiminishing or imperishable न वेद यामक्षरभामसीताम् RāmKṛViKā. 12 ( comm. यामक्षरभामसीतां लोको न वेद । अक्षरमविच्युतं भाम सौभाग्यं यस्याः सा अक्षरभाम्नी सा चासौ सीता च तां न जानातीत्यर्थः )

**अक्षरभावना** ( akṣara-bhāvanā ) *f.* contemplation on the imperishable (self) प्रथमा भावना पूर्वे सांख्ये त्वक्षरभावना KūrmaP. 31. 7 (1. 2); 32. 5, 7, 8 (1. 2); सांख्ये तु मध्यमयोगिन्यक्षरभावना कूटस्थचित्सामान्यभावना YogSā. 13. 14(1)

**अक्षरभिदा** ( akṣara-bhidā ) *f.* a particular letter वर्णोऽस्त्री तु विलेपनाक्षरभिदा रूपे ( ? विलेपनाक्षरभिदारूपे ) द्विमुक् ( ? द्वियुक् ) कुङ्कुमे KośaKaTa. 2. 4840.

**अक्षरभूमिका** ( akṣara-bhūmikā ) *f.* an (even) surface for writing letters on न्यस्ताक्षरामक्षरभूमिकायां कार्त्स्न्येन गृह्णाति लिपिं न यावत् । सर्वाणि तावच्छ्रुतवृद्धयोगात्फलान्युपायुङ्क्त स दण्डनीतेः RaghuVa. 18. 46.

**अक्षरभेद** ( akṣara-bheda ) *m.* **A** division or splitting (of a *mantra*) into units of syllables मन्त्रमक्षरभेदेन प्रणवाद्यन्तगं तु वै । प्रागादावीशदिङ्निष्ठमष्टकं व्यक्तिगं न्यसेत् PauṣkS. 42. 185; सर्वमध्ये त्रिकोणे च पूजयेन्मूलविद्यया । केवलाक्षरभेदेन समस्तव्यस्तयेश्वरि NityāṢoḍa. 1. 197; **B** change or difference of letters or syllables तुल्येऽर्थेऽक्षरभेदादमन्त्रके का विशेषोक्तिः BṛSaṁ. 1. 3; कृपणकृपाणयोस्तुल्यतैव, दृढतरेत्यादिविशेषणसाम्यात् । अक्षरभेदस्त्वाकारभेदत्वादविरुद्ध एव RasGaṅ. 479. 11; ( कमलम् ) पुंस्त्वं च धत्ते न हि ।…कमलशब्दस्य तु लिङ्गानुशासनसिद्धं नित्यक्लीबत्वं केनाप्रमाणीयत इति पुंस्त्वं च धत्ते न वेत्यक्षरभेदः कारितः ( राज्ञा ) PrabaCin. 64. 11.

**अक्षरमण** ( akṣa-ramaṇa ) *n.* playing with dice, gambling यानि कानिचिदनर्थवीचिके जन्मसागरजले निमज्जताम् । सन्ति दुःखनिलयानि देहिनां तानि चाक्षरमणेन निश्चितम् SubhāRaSaṁ. 621; जीवनाशनमनेकधादधद्ग्रन्थमक्षरमणोद्यतो नरः । स्वीकरोति बहुदुःखम् SubhāRaSaṁ. 630; 622; 634; 641.

[1]**अक्षरमय** ( akṣara-maya ) *adj.* consisting of letters or syllables (i. e. the scriptures) स्फुरत्तत्त्वज्योतिस्तदिह जयतादक्षरमयम् YaśasCam. i. 3. 10.

[2]**अक्षरमय** ( akṣara-maya ) *adj.* comprising the immutable (primeval principle) इदं दृश्यं यदा नासीत्…। तदाक्षरमयं तेजो व्याप्तरूपमचिन्त्यकम् BhaviP. 570A. 12 (iii(4). 14. 1)

**अक्षरमर्यादा** ( akṣara-maryādā ) *f.* limit (to the power) of words, the conventional significance or literal meaning of the words किं तन्निषेधः शाब्दोऽर्थ उत तात्पर्यार्थः । नाद्यः । अक्षरमर्यादया तदप्रतीतेः BālamBha. ii. 227. 32 (*on* 2. 135); i. 582. 25 (*on* 1. 252); अत्रत्यभाष्यकैयटाभ्यामक्षरमर्यादया तदर्थालाभात् सर्वथा 'औननत्' इत्यादि चिन्त्यमेव LaS'abdeS'e. ii. 607. 12.

**अक्षरमातृ** ( akṣara-mātṛ ) *f.* the immutable or eternal mother निजशक्तिमक्षरमातरं जगतामपि ।…प्रविचिन्तयेत् ĪśānS'iPa. i. 15. 58.

**अक्षरमात्र** ( akṣara-mātra ) *n.* **1 A** a mere letter or syllable स्वाध्यायाध्ययनविधिर्निष्प्रयोजनमक्षरमात्रमपि न ग्राहयति PañcPā. 50. 3 (*on* i. 1. 1); तस्माद्वेदेऽक्षरमात्रस्याप्यसत्यार्थज्ञानस्याभावाद् वैदिकानां न संदेहोऽपि AṇuBh. 2. 18 (*on* i. 1. 1); 199. 24 (*on* iii. 2. 29); **1 B** any articulate sound अमिनिष्णा( ? ष्टा )नोऽप्यक्षरमात्रे विसर्जनीयेऽपि च MediK. 105. 232; **1 C** mere articulate sounds or syllables (as contrasted with sense conveyed by the *akṣara*) स्वरूपेणापि । अर्थज्ञानानुष्ठानाभ्यामृते जप्यमानेनाक्षरमात्रेणापीत्यर्थः S'rutaPra. iA. 33. 15 (*on* i. 1. 1); नाक्षरमात्रग्रहणानन्तरं स्नानं भवति S'āstrDīPra. 21. 27 (*on* i. 1. 1); 21. 22 (*on* i. 1. 1); अक्षरमात्राध्ययनेनाचार्यत्वमपि सिध्यति S'āstrDīPra. 29. 22 (*on* i. 1. 1); **1 D** each and every syllable अक्षरमात्रे ध्वन्यंशवर्णांशौ वर्तेते एव SetuBa. 232. 23; **2** merely the immutable principle (to the exclusion of the पुरुषोत्तम ) पुरुषोत्तमज्ञानवत एव मायातरणोक्तेरक्षरमात्रज्ञानवतां तथात्वमुचितम् AṇuBh. 288. 12 (*on* iii. 4. 27)

**अक्षरमात्रक** ( akṣaramātra-ka ) *n.* just one syllable ओमित्यक्षरमात्रकेण विदुषामप्येष बद्धोऽञ्जलिः UdaySuKa. 157. 26.

**अक्षरमात्रतस्** ( akṣaramātra-tas ) *adv.* being identical with the imperishable (i. e. Brahman) यदि वाक्षरयाथात्म्यं स्थूलादेरिह भण्यते । स्रग्याथात्म्यमहेर्यद्वत्तथास्याक्षरमात्रतः BṛĀraUBhVā. iii. 8. 79.

**अक्षरमात्रता** ( akṣaramātra-tā ) *f.* the nature or state of being nothing but the imperishable (i. e. *Brahman*) यदि वाक्षरयाथात्म्यं स्थूलादेरिह भण्यते । स्रग्याथात्म्यमहेर्यद्वत्तथास्याक्षरमात्रतः( v. l. ता ) BṛĀraUBhVā. iii. 8. 79.

**अक्षरमात्रत्व** ( akṣaramātra-tva ) *n.* the nature or state of being nothing but the imperishable (i. e. Brahman) सर्वस्याक्षरमात्रत्वान्न किंचिन्नोपसंहृतम् BṛĀraUBhVā. iii. 8. 179.

**अक्षरमात्रान्यथाभाव** ( akṣaramātrānyathābhāva ) *m.* absence of difference in letter and syllable मन्त्राणामक्षरमात्रान्यथाभा( वाभा )वेऽपि तेषामेव शास्त्रेष्वाणवशाक्तशाम्भवादिविभागेनान्यथात्वम् ParāTri. (comm.) 156. 11.

**अक्षरमाधुरी** ( akṣara-mādhurī ) *f.* sweetness of syllables, charming or sweet utterance सुवदने वदने तव राधिके स्फुरति केयमिहाक्षरमाधुरी UjjvaNīMa. 83. 7.

**अक्षरमानशस्** ( akṣaramāna-śas ) *adv.* in accordance with the number of syllables ऋचः स्वच्छन्दवृत्तास्तु पादास्त्वक्षरमानशः NāraS'i. ii. 6. 1.

**अक्षरमाला** ( akṣara-mālā ) *f.* a series or string of letters or syllables अपि च, इयमक्षरमाला पदार्थावगमपूर्वकं वाक्यार्थविज्ञानं जनयेत् TattvBi. 86. 1; पठित्वाक्षरमालां च जजापादिचरित्रकम् BhaviP. 462A. 3 (iii(2). 33. 19); संक्रान्तभृङ्गीपदपङ्क्तिमुद्रं पौष्पं रजः क्ष्माफलके रराज । क्रमाल्लिपिज्ञानकृतक्षणस्य क्षणं मधोरक्षरमालयेव VikraDeC. 7. 36.

**अक्षरमालिका** ( akṣara-mālikā ) *f.* a series or string of letters or syllables (to form a sentence) विधात्रा लिखिता यासौ ललाटेऽक्षरमालिका । दैवज्ञस्तां पठेद् व्यक्तम् Sārā. 2. 1; S'ṛṅgāTi.( Ru. ) 1. 142; SaduktiKa. 95. 8; कालः…लिखत्यक्षरमालिकाम् PārśvC. 7. 77; KāvyKaVṛ. 124. 11 (4. 3); जगत्यब्धीन्दुभङ्गुरे । ममेदमित्यपूर्वेयं कुतस्त्याक्षरमालिका YogVā. v. 9. 48; vi(2). 143. 7.

**अक्षरमाहात्म्य** ( akṣara-māhātmya ) *n.* greatness or efficacy of the syllables (of a *mantra*) अस्यैवाक्षरमाहात्म्यं नालं वक्तुं चतुर्मुखः SkandP. iii(3). 1. 11.

**अक्षरमुख** ( akṣara-mukha ) *m.* having syllables at the tip of his tongue, a scholar, a learned person स्यादक्षरमुखः कालाक्षरिकः शिक्षिताक्षरः TrikāS'e. ii. 7. 4.

**अक्षरमुख** ( akṣara-mukha ) *n.* the beginning of the alphabet, the letter *a* [ APTE ]

**अक्षरमुद्रा** ( akṣara-mudrā ) *f.* a variety of *akṣara-muṣṭikā* (also called *sābhāsā akṣaramuṣṭikā*, the other variety being *nirābhāsā akṣara-*

*muṣṭikā* or *bhūtamudrā* cf. **अक्षरमुष्टिकाकथन** JayaMa. 39. 4 (*on* 1. 3)

**अक्षरमुष्टि** ( akṣara–muṣṭi ) *f.* a kind of riddle in which some letters or syllables of a verse are either (a) arranged in an irregular order, or (b) expressed by means of the signs made by the fingers and finger-joints, known respectively as *akṣara–mudrā* and *bhūtamudrā* श्लोकादेरक्षर-व्यत्यासेन कथनमक्षरमुष्टिः SṛṅgāPra. 386. 11; स रेमे…। प्रहेलिकाभिरख्यानैस्तथा चाक्षरमुष्टिभिः YogVā. iii. 16. 10.

**अक्षरमुष्टिका** ( akṣara–muṣṭikā ) *f.* cf. **अक्षरमुष्टि,** सेयमक्षराणां मुष्टिरित्यक्षरमुष्टिका SaraKaṇṭhā. 300. 15.

**अक्षरमुष्टिकाकथन** ( akṣaramuṣṭikā–kathana ) *n.* the art of explaining or deciphering the *akṣaramuṣṭikā* केशमर्दने च कौशलम्, अक्षरमुष्टिकाकथनम्…इति चतुःषष्टिरङ्गविद्याः कामसूत्रस्यावयविन्यः KāmSū. 33. 9 (1. 3); अक्षरमुष्टिकाकथनमिति। अक्षराणां मुष्टिरिव मुष्टिका गुप्तिरिति। सा साभासा निराभासा च। तत्र साभासा अक्षरमुद्रेत्युच्यते। तथा (? तया) कथनं गूढवस्तुमन्त्रणार्थं ग्रन्थसंक्षेपार्थं च।…निराभासा[ भूत- ]मुद्रेत्युच्यते। तया कथनं गुह्यवस्तुमन्त्रणार्थम् JayaMa. 39. 4 (*on* 1. 3)

**अक्षरमूर्ति** ( akṣara–mūrti ) *adj.* in the form of the word (i. e. the Veda) देवस्त्रिविष्टपजुषां पतिरेषः…यस्यापदानमृषिरक्षरमूर्तिराह ĀścaCū. 7. 24; *f.* the form of the letters or syllables आदिक्षान्तामक्षरमूर्त्या विलसन्तीम्।…गौरीम्…अहमीडे GauriDa. 4.

**अक्षरमैत्रीभाज्** ( akṣara–maitrībhāj ) *adj.* A (words) having consonance or agreement among their letters काव्यस्याक्षरमैत्रीभाजः…। शब्दा अपि पुरुषा अपि साधव एवार्थबोधाय ĀryāSaS'a. 40*; B (men, poets) having familiarity with letters, learned, scholarly ĀryāSaS'a. 40*.

**अक्षरम्लेच्छ** ( akṣara–mleccha ) *m.* barbarian with regard to (the recitation of) the (Vedic) letter or word तान् प्रादुरक्षरम्लेच्छा(? च्छान्) येऽमी वेदोपजीविनः। अधर्माक्षरसंपाठैर्लोकव्यामोहकारिणः MahāP. 42. 182.

**अक्षरयमक** ( akṣara–yamaka ) *n.* repetition of (one or more) syllables, a kind of *śabdālaṅkāra* अक्षरयमकं त्वेकाक्षरमनेकाक्षरं च KāvyālaṅSū. iv. 1. 2.

**अक्षरयाथात्म्य** ( akṣara–yāthātmya ) *n.* **1A** the real nature of the syllable (*om*) यश्च एतत् (ओमिति) अक्षरम्…वेद, यश्च कर्ममात्रवित्, अक्षरयाथात्म्यं न वेद, तावुभौ कुरुतः कर्म ChāndoUBh. 17. 13 (*on* i. 1. 10); **1B** the true nature of the imperishable or immutable self ऐश्वर्याक्षरयाथात्म्यभगवत्प्राप्त्यपेक्षयोपासकभेदम्…प्रास्तौषीत् GītāBh.(Rā.) 408. 1 (*on* 8. 0); अक्षरयाथात्म्यानुसंधानपूर्वकं तदपरोक्षज्ञानमेवात्महितत्वे विशिष्यते GītāBh.(Rā.) 564. 27 (*on* 12. 12); **2** intrinsic sameness with the imperishable or immutable one (viz. Brahman) यदि वाक्षरयाथात्म्यं स्थूलादेरिह भण्यते। स्रग्याथात्म्यमहेर्यद्वत्तथा-स्याक्षरमात्रतः BṛĀraUBhVā. iii. 8. 79.

**अक्षरयुग्म** ( akṣara–yugma ) *n.* a pair of words मा यक्ष इत्यक्षरयुग्ममस्तु मम प्रतीपं प्रतिदित्सतोऽस्मात्। एवं विदित्वेव धनाधिनाथो धनैरनैषीत्परितोषमेनम् Surath. 2. 65.

**अक्षरयुग्मक** ( akṣarayugma–ka ) *n.* a pair of syllables श्रुतम्…येन काशीत्यक्षरयुग्मकम् SkandP. iv. 64. 33.

**अक्षरयोग** ( akṣara–yoga ) *m.* discipline (for the attainment) of the immutable self, meditation on (the essential nature of) the imperishable self अक्षरयोगमात्मस्वभावानुसंधानरूपं परभक्तिजननं पूर्वषट्कोदितमाश्रित्य तदुपायतया सर्वकर्मफलत्यागं कुरु GītāBhā.(Rā.) 564. 16 (*on* 12. 11)

**अक्षरयोजन** ( akṣara–yojana ) *n.* mode of construing the words एवं सोपपत्तिकं भाष्याभिप्रायमुक्त्वाक्षरयोजनमाह NyāySu.(So.) 42. 17 (*on* i. 2. 7)

**अक्षरयोजना** ( akṣara–yojanā ) *f.* mode of construing the words, arrangement of words तत्रैषा अक्षरयोजना BrahmSūBh.(S'aṅ.) 600. 12 (*on* iii. 2. 22); KāṭhUBh. 119. 10 (*on* 1. 28); BrahmSūBh.(Bhā.) 168. 25 (*on* iii. 2. 23); उभयत्राक्षरयोजना उत्तरेषु केषुचिच्छ्लोकेषु द्रष्टव्या IṣṭaSi. 136. 15; 123. 9; 125. 20; 372. 17; PramāMā. 22. 25; TattvPradī.(Ci.) 355. 1; एवं सूत्रस्याक्षरयोजना कृता। अथ तात्पर्यार्थ उच्यते S'rutaPra. i(B). 84. 14 (*on* i. 1. 1); NyāyMāVi. 113. 13 (*on* iii. 1. 6); अथातःशब्दावत्रानन्तर्यहेतुभावयोर्भवतः। अथानन्तरमतो ब्रह्मजिज्ञासा युक्तेत्यक्षरयोजना GoviBh. 4. 7 (*on* i. 1. 1)

**अक्षररचना** ( akṣara–racanā ) *f.* the composition of letters or words (of the *mantras*) मुद्रामण्डलध्यानैरप्यनक्षरैः कर्माणि क्रियन्ते। न च तान्यपौरुषेयाणि नित्यानि युज्यन्ते। तेषां क्रियासंभवेऽक्षररचनायां कः प्रतिघातः पुरुषाणाम् PramāVāSvopVṛ. 82. 26.

**अक्षरराशि** ( akṣara–rāśi ) *m.* the collection of words (forming a text) स्वाध्यायशब्दवाच्योऽक्षरराशिरप्यध्ययननिर्वृत्त्यर्थं एवावसीयते PrakaPañ. 6. 12; अक्षरराशयो वेदाः VedāSaṁ. 168. 9; S'rīBh. 471. 14 (*on* ii. 2. 3); न हि योगाचारादिभिः बुद्धप्रणीतोऽक्षरराशिः सत्य इत्यभ्युपगम्यते S'atDū. 93. 15; नाप्येकवाक्यतया समभिव्याहृतोऽक्षरराशिलक्षणः स्वाध्यायः TantrRaha. 65. 16.

**अक्षरराशिग्रहण** (akṣararāśi–grahaṇa) *n.* learning of the (sacred) text by heart अध्ययनविधिर्हि…अक्षरराशिग्रहणमात्रे पर्यवस्यति VedāntDī. 206. 11 (*on* iii. 4. 12); VedāntSā.(Rā.) 343. 5 (*on* iii. 4. 12); S'rīBh. 3. 15 (*on* i. 1. 1); 687. 5 (*on* iii. 4. 12); अक्षरराशिग्रहणपर्यन्तत्वं हि भगवद्बादरायणाभिमतम् S'rutaPra. iA. 28. 14 (*on* i. 1. 1)

**अक्षरराशिरूप** ( akṣararāśi–rūpa ) *adj.* [*f.* –ā] having the form of a cluster or group of letters (*mātṛkās*) अक्षरराशिरूपे…ललिते नमस्ते BrahmāṇḍP. iii. 30. 21.

**अक्षररुतदेशन** ( akṣararuta–deśana ) *adj.* who receives teaching expressed in spoken words अक्षररुतदेशना वैनेयिकास्ते तथागतस्य मुखादुष्णीषादूर्णायाः शब्दं निःसरतं(? न्तं) शृण्वन्तीत्यादि TattvSaṁPañ. 843. 15 (*on* 3241)

**अक्षररूप** ( akṣara–rūpa ) *adj.* made up of syllables (सामानि) विविधान्यक्षररूपयोगिगीतात्मकस(? सा)मरूपाणि ManvaVi. 1474. 8 (*on* 11. 264)

**अक्षररूपता** ( akṣararūpa–tā ) *f.* indestructibility अविनाशत्वलोपेन तेन चाक्षररूपता। शक्त्या विना शिवे सूक्ष्मे नाम धाम न विद्यते S'aktiSaṁT. i. 1. 98.

**अक्षररूपिक** ( akṣararūp–ika ) *adj.* having the form of letters प्रकृतेर्गुणाः…भूमावक्षररूपिकाः KālīViT. 32. 37.

**अक्षरलक्ष** ( akṣara–lakṣa ) *m. n.* as many lacs as (the number of) the syllables, one lac per syllable जपेदक्षरलक्षं वै चतुर्गुणितमादरात् LiṅgaP. i. 85. 99; क्षीराशनो वाक्षरलक्षजापी ब्रह्मावबोधं लभते IśānS'iPa. i. 33. 127; पुरश्चरणजपं तत्तत्कल्पोक्तसंख्याकं, अनुक्तावक्षरलक्षसंख्याकं कृत्वा NityoNi. 158. 7; कमला कमलोदरवासिनी दैवतमक्षरलक्षमुपास्या IśānS'iPa. i. 20. 33.

**अक्षरलक्षक** ( akṣaralakṣa–ka ) *n.* lac per letter or syllable द्वादशाक्षरतो हीनं जपेदक्षरलक्षकम् PāraS. 15. 17; तल्लक्षसङ्ख्यन्तु जपेत्…तद्दशांशं हुनेदग्नौ सर्वत्राक्षरलक्षके TantraRā. 17. 20; 34. 28.

**अक्षरलक्षतस्** ( akṣaralakṣa–tas ) *adv.* by one lac per letter or syllable अन्यान्बहुतरान् मन्त्राञ्जपेदक्षरलक्षतः S'ivaP. i. 11. 49.

**अक्षरलक्षन्याय** ( akṣaralakṣa–nyāya ) *m.* maxim of one lac per letter or syllable जपसंख्या तु विशेषादर्शनात् अक्षरलक्षन्यायेन…निर्णेया SetuBa. 143. 24.

**अक्षरलभ्य** ( akṣara–labhya ) *adj.* which can be obtained through the syllables or letters (based on a Tantric code) इति ते लेशतः सूक्ष्मो विष्णुशब्दार्थ ईरितः। परस्त्वक्षरलभ्योऽर्थः AhirbuS. 52. 46.

**अक्षरलव** ( akṣara–lava ) *m.* a few syllables किमेतैस्तैः पल्लीजनसमुचितैरक्षरलवैरसाध्यं विश्वानामपि किमपि वस्तु स्मर ततः KaumuMi. 3. 17 कथमक्षरलवलिप्ता जिह्वा। उच्यते– लवशब्देनाल्पत्वस्योक्तत्वाद् इति रक्षितः DurghVṛ. iv. 1. 51.

**अक्षरलाघव** ( akṣara–lāghava ) *n.* economy of syllables, verbal economy क्वचिदक्षरलाघवमाश्रीयते क्वचित्प्रतिपत्तिलाघवमिति वैचित्र्यम् PadMañ. *on* KāśiVṛ. *on* P. i. 2. 35; i. 4. 91.

**अक्षरलाभ** ( akṣara–lābha ) *m.* perception of syllables नन्वेवं शेषेन्द्रियेष्वपि अक्षरलाभस्य श्रुतत्वोक्तेः श्रोत्रेन्द्रियोपलब्धिरेव श्रुतमिति प्रतिज्ञा विशीर्येत JñānBiPra. 9. 22; 9. 19.

**अक्षरलेखन** ( akṣara–lekhana ) *n.* writing of letters न चाक्षरलेखनस्याकथनात् तत्प्रक्षिप्तत्वनिश्चयो युक्तः SetuBa. 37. 5; 37. 1.

**अक्षरलेखिन्** ( akṣara–lekhin ) *m.* writer of letters, a scribe मखद्विषः…आज्ञापयन्तः…अङ्गुलिच्छेदमक्षरलेखिनाम् NīlaVi. 29. 18(1)

**अक्षरलेख्य** ( akṣara–lekhya ) *n.* writing of letters नानादेशावगम्यत्वाद् युगपत्तुल्यबुद्धिभिः। अस्माभिः कृतकः शब्दो भवेदक्षरलेख्यवत् S'lokaVār. 6. 9 (730. 6)

**अक्षरलोप** ( akṣara–lopa ) *m.* elision of (one or more) syllables किं त्रिष्टुभादिष्वेव चोदकप्राप्तेष्वक्षरलोपं कृत्वा गायत्री संपादयितव्या S'āstrDī. viii. 3. 6 (568. 17); MayūMāli. 568. 2 (*on* viii. 3. 6)

**अक्षरलोपक** ( akṣaralopa–ka ) *n.* a sub-type of *bahirlāpipraśnottara* where the meaning is conveyed (only) by suppressing (some) letters cf. **अक्षरच्युतक,** यत्र स्याल्लिपिलोपेन समीचीनोऽर्थविस्तरः। न भवत्यन्यथावृत्तेः तत् स्यादक्षरलोपकम् SāhiSā. 2. 148.

**अक्षरवत्** ( akṣara–va(n)t ) *adj.* possessing the syllable स य एतदेवं वेद ज्योतिष्मान्…कर्मवानक्षरवान्…सामन्वी भवति JaimiUBr. i. 43. 11.

**अक्षरवपुर्धृत्** ( akṣaravapur–dhṛt ) *adj.* **1** (the god) having the body (in the form) of (all) the letters नम ओंकाररूपाय नमोऽक्षरवपुर्धृते SkandP. iv. 73. 101 (comm. अकारादिस्वरूपं कारणत्वेन स्वस्मिन् धारयतीति तथा तस्मै 'ओंकारप्रभवाः स्वराः' इति स्मृतेः); **2** (the god) possessing an imperishable form, SkandP. iv. 73. 101 (comm. कूटस्थवपुर्धृत इति वा)

**अक्षरवर** ( akṣara-vara ) *n.* the best syllable हृदयं तस्य विज्ञेयं यदक्षरवरं स्मृतम् BhaviP. 298B. 19 (i. 206. 10)

**अक्षरवर्जित** ( akṣara-varjita ) *adj.* 1 which is beyond words (i. e. indescribable) अहं ब्रह्म परं ज्योतिराकाराक्षरवर्जितम् AgniP. 377. 4; 2 not knowing writing, illiterate मांसभक्षाः सुरापाना मूर्खाश्चाक्षरवर्जिताः। पशुभिः पुरुषाकारैर्भाराक्रान्तास्ति मेदिनी CāṇaNīDa. 8. 20.

**अक्षरवर्णसामान्य** ( akṣaravarṇa-sāmānya ) *n.* similarity of vowel or consonant अविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयात् Nir. 2. 1 (44. 4); न चाक्षरवर्णसामान्येन यो यच्छ( ?श्छ )त्राकारस्तं तं छत्राकम् इति युक्तं प्रतिपत्तुम् ManuBh. i. 419. 20 (*on* 5. 5)

**अक्षरवर्णसाम्य** ( akṣaravarṇa-sāmya ) *n.* similarity of vowel or consonant ( पदानि ) यानि नैरुक्तैरपि…अक्षरवर्णसाम्यात् निर्ब्रूयादितिवत् प्रपञ्चितानि TantrVā. 214. 19 (*on* i. 3. 18); तथा च वेदव्याकरणे पारमेश्वरेषु शास्त्रेषु मन्त्रदीक्षादिशब्देषु अक्षरवर्णसाम्यात् निर्वचनमनुपपन्नम् ParāTri. 241. 4.

**अक्षरवस्तु** ( akṣara-vastu ) *n.* the imperishable entity (i. e. Brahman) व्याप्यव्यापकसंबन्धो न चाप्यक्षरवस्तुनि BṛĀraUBhVā. iii. 8. 108.

**अक्षरवाक्य** ( akṣara-vākya ) *n.* a (scriptural) passage referring to the imperishable (Brahman) अक्षरवाक्ये च…पूर्ववाक्येन विरोधः स्यात् Nyāyāmṛ. 602A. 8, AdvaiSi. 842. 15; शब्दादिहीनत्वमक्षरवाक्ययोः परमात्मनोऽपि प्रसिद्धम् S'ivārkaMaDī. i. 515. 22 (*on* i. 4. 5)

**अक्षरवाचक** (akṣara-vācaka) *adj.* A clever in reading what is written (i. e. in deciphering written documents) लिपिज्ञोऽक्षरवाचकः…सान्धिविग्रहिकः कार्यो राज्ञा Mānaso. ii. 2. 127; B denoting the imperishable (Brahman) अव्यक्तशब्दोऽप्यक्षरवाचकः AṇuBh. 104. 15 (*on* i. 4. 7)

**अक्षरवाचिन्** ( akṣara-vācin ) *adj.* denoting a syllable or letter उद्गीथशब्द अक्षरवाची सन् कथमादित्ये वर्तते ChāndoUBh. 29. 10 (*on* i. 3. 1)

**अक्षरवाच्य** ( akṣara-vācya ) *adj.* what is expressed by (the word) *akṣara* अक्षरवाच्यं तु प्रधानमेवेति मन्यते पूर्वपक्षवादी BrahmSūBh. (Bhā.) 45. 26 (*on* i. 2. 21)

**अक्षरवादसाम्य** ( akṣaravāda-sāmya ) *n.* similarity in pronunciation of syllables 'त्रिंशका' इत्यपि गुरवः पठन्ति अक्षरवादसाम्यात् च निरुक्तमाहुः तिस्रः शक्तीः कायति—इति त्रिंशका ParāTri. 17. 7.

**अक्षरवायु** ( akṣara-vāyu ) *m.* wind in the form of the syllable (*om*) रुद्रग्रन्थिभ्रुवोर्मध्ये भिद्यतेऽक्षरवायुना BrahmBiU. 71.

**अक्षरविकार** ( akṣara-vikāra ) *m.* modification of a syllable गीतिर्नाम क्रिया…तत्संपादनार्था ऋगक्षरविकारो विश्लेषो विकर्षणमभ्यासो विरामः स्तोभः S'āba-Bh. 1721. 6 (*on* ix. 2. 29); MayūMāli. 607. 17 (*on* ix. 2. 7); छान्दोग्ये…गीतिहेतवोऽक्षरविकारादय आम्नायन्ते NyāyMāVi. 445. 22 (*on* ix. 2. 7); ऋचि प्रणवं दधानी( ? ती )ति किमधिकस्य प्रवणस्य ऋच्याधित्सा आहोस्वित् ऋगक्षरविकारोपदेशः SaṅkarKāBh. 183. 21 (*on* iv. 1. 22); वाचनिकत्वेनाक्षरविकारस्यादोषत्वात् BhāṭṭCan. 105. 16 (*on* iv. 1. 11)

**अक्षरविकारत्व** ( akṣaravikāra-tva ) *n.* the state of being a modification of a syllable प्रगाणाप्रगाणयोरुभयोरप्यक्षरविकारत्वात् S'āstrDī. 599. 16 (*on* ix. 1. 17)

**अक्षरविक्रम** ( akṣara-vikrama ) *adj.* involving (the chanting of the three) syllables (*a*, *ka* and *ha*) in the course (of the *Trirātra* sacrifice) अक्षरविक्रमे( ? मो )ऽयं त्रिरात्रः NidāSū. 141. 8 (8. 6)

**अक्षरविग्रह** ( akṣara-vigraha ) *adj.* [*f.* -ā] 1 possessed of imperishable body (कृष्णं स्तौति) नित्यानन्दं च नित्यं च नित्यमक्षरविग्रहम् BrahmVaiP. iv. 72. 103; 2 having letters for (one's) body कुन्दाभाक्षरविग्रहा…लिपिदेवता ĪśānS'iPa. i. 2. 60 = ii. 6. 3 (46); i. 1. 91.

**अक्षरविज्ञान** ( akṣara-vijñāna ) *n.* 1 knowledge or realisation of the syllable (*om*) तत्र अक्षरविज्ञानवतः कर्म कर्तव्यमिति स्थितमाक्षिपति ChāndoUBh. 17. 4 (*on* i. 1. 10); 2 knowledge or realisation of the immutable Brahman °गुणातीतत्वादिधर्मत्वेनैव ज्ञानिनामक्षरविज्ञानम् AṇuBh. 261. 24 (*on* iii. 3. 54)

**अक्षरविद्** ( akṣara-vid ) *adj.* knower of the alphabet लेखकोऽक्षरविद्धितः AgniP. 220. 5; द्विसम एव शिशुर्लिखिताक्षरं गदितुमक्षमताक्षरवित्सुधीः S'aṅkaDigVi. 4. 2; मन्त्रः…सिद्धोपायोऽक्षरविदां भावनापरिकल्पितः BṛBrahmaS. ii. 7. 53.

**अक्षरविद्या** ( akṣara-vidyā ) *f.* lore of the immutable (Brahman) अक्षरविद्यायां तु अक्षरशब्दनिर्दिष्टं परमेव ब्रह्म GitāBh(Rā.) 562. 20 (*on* 12. 4); VedāntDī. 185. 8 (*on* iii. 3. 33); 'अथ परा यया तदक्षरमधिगम्यते' इत्यक्षरविद्यायाः परविद्यात्वकथनं विरुध्येत S'rutaPra. iB. 337. 5 (*on* i. 2. 23) अक्षरविद्यायाम्…परं ब्रह्मोपासनीयमिति न सिध्यति S'ivārkaMaDī. i. 382. 24 (*on* i. 2. 22); i. 406. 24 (*on* i. 3. 5); ii. 284. 25 (*on* iii. 3. 3)

**अक्षरविधान** ( akṣara-vidhāna ) *n.* injunction (for introduction) of a syllable अक्षरविधानेनाक्षरान्तरमात्रबाधनात् TantrVā. 571. 20 (*on* ii. 2. 29)

**अक्षरविधि** ( akṣara-vidhi ) *m.* disposition or arrangement of syllables शब्देनोच्चरितेनेह येन द्रव्यं प्रतीयते। तदक्षरविधौ युक्तं नामेत्याहुः BṛDe. 1. 42.

**अक्षरविनष्ट** ( akṣara-vinaṣṭa ) *adj.* suffering loss of a syllable or letter सहाध्यायिभिरेवातो वेदः कार्त्स्न्येन रक्ष्यते। स्वराक्षरविनष्टोऽपि द्वैधादन्यैर्न मृष्यते TantrVā. 205. 5 (*on* i. 3. 18)

**अक्षरविन्यास** ( akṣara-vinyāsa ) *m.* A arrangement of letters (in writing) भूर्जपत्रगतोऽयमक्षरविन्यासः Vikramo. 2. 11(9); लिपिरक्षरविन्यासः Lingānu.(Ha.) 8. 10 (comm.) = PañcTaPra. 2. 17 = LaS'abdeS'e. i. 401. 8; लिखिताक्षरविन्यासे लिपिर्लिबिः AmaK. 1499; वर्तिकादिनाक्षरविन्यासः ManuBh. i. 351. 27 (*on* 4. 55); यत्साधुशब्दोपनिबद्धमप्यक्षरविन्यासादस्पष्टार्थं तन्म्लेच्छितम् JayaMa. 39. 17 (*on* 1. 3); त एवाक्षरविन्यासास्त एव पदपङ्क्तयः BhāvPra(S'ā.) 12. 1(1); B (oral) arrangement of syllables न हि पुरुषमन्तरेण क्वचिदक्षरविन्यासो दृष्टः NyāyMañ. i. 216. 4; C (mental) placement of syllables (वपुषि न्यसेत्। अक्षराणि) प्रोक्तश्चाक्षरविन्यासः (गायत्र्याः) BālamBha. i. 109. 32 (*on* 1. 24)

**अक्षरविपर्यय** ( akṣara-viparyaya ) *m.* transposition of sounds स्वरेऽक्षरविपर्ययः Kātan. ii. 5. 23 (comm. नस्य तत्पुरुषे स्वरेऽक्षरविपर्ययो भवति। अनजः)

**अक्षरविपर्यास** ( akṣara-viparyāsa ) *m.* transposition of letters अक्षरसंघातो विविधश्लेषोक्त्या वा अक्षरविपर्यासेन वोक्तिप्रत्युक्तिवैचित्र्यम् AbhinBhā. ii. 349. 24 (*on* 16A. 1)

**अक्षरविभाग** ( akṣara-vibhāga ) *m.* development or separation of *akṣara* (which is, according to Yādavaprakāśa, identifiable with *paramākāśa* the primary space, *mokṣasthāna* the abode of the emancipated and the supreme Lord Īśvara and *vāc* 'Speech') यदि अव्यक्ततमसोर्मध्यपठितमक्षरं परमाकाशः स तावत्राद्यो विभागः…तस्मात्तमः संजायते इति तमस एव विभागश्रवणात्। विभक्तात्तमसो ह्यक्षरविभागः S'rutaPra. iB. 270. 12 (*on* i. 1. 27)

**अक्षरविलिप्त** ( akṣara-vilipta ) *adj.* [*f.* -ī] slightly covered with syllables (said of the tongue) अक्षरविलिप्ती जिह्वा BhāṣāVṛ. *on* iv. 1. 51.

**अक्षरविवर** ( akṣara-vivara ) *n.* the cavity of the Imperishable अक्षरविवरे चराचरं गता रीतिः PratyabhiHṛ. (Adyar ed.) 198. 2 (*on* 20)

**अक्षरविवृद्धि** ( akṣara-vivṛddhi ) *f.* increment of syllable अथ प्रतिच्छन्दोऽक्षरविवृद्धिः Upanidānasūtra 3. 7.

**अक्षरविशेषण** ( akṣara-viśeṣaṇa ) *n.* attribute of the immutable principle अक्षरविशेषणानि न प्रकृतिविशेषणानि नापि पुरुषविशेषणानि सांख्यपुरुषस्य AṇuBh. 66. 19 (*on* i. 2. 22)

**अक्षरविशेषणत्व** ( akṣaraviśeṣaṇa-tva ) *n.* the state of being an attribute of *akṣara* (i. e. the immutable principle) अदृश्यत्वादिकं भूतयोनेर्विशेषणम्। न त्वक्षरस्य…अक्षरविशेषणत्वे हि नपुंसकलिङ्गनिर्देशः स्यात् S'ivārka-MaDī. i. 378. 7 (*on* i. 2. 22)

**अक्षरविशेषलक्षण** ( akṣaraviśeṣa-lakṣaṇa ) *adj.* characterised by a specific sound अत्र कृपणकृपाणयोराकारमात्रकृतो व्यतिरेक उक्तः स चायुक्तः। द्विविधो ह्याकारार्थः संनिवेशलक्षणोऽक्षरविशेषलक्षणश्च। …अक्षरकृतविशेषस्य भेदाभेदव्यवहारस्य शब्दैकविषयत्वात् VyaktiVi. 101. 20; Kāvyānu.(He.) 185. 1.

**अक्षरविशेषात्मक** ( akṣaraviśeṣātmaka ) *adj.* being in the form of a specific sound अक्षरविशेषात्मकाकारभेदलक्षणस्य शब्दधर्मस्यार्थविशेषणभावेनावाच्यस्य यद्वचनं सोऽपि दोष एव VyaktiVi. 102. 4.

**अक्षरविषय** ( akṣara-viṣaya ) *adj.* [*f.* -ā] concerning *akṣara* [i. e. supreme spirit] अक्षरविषयास्तु विशेषप्रतिषेधबुद्धयः सर्वाः सर्वत्रावरोद्धव्याः BrahmSūBh. (S'aṅ.) 672. 8 (*on* iii. 3. 33); Bhām. 639. 17 (*on* iii. 3. 33); [soul] यत्तु यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति इत्यस्याक्षरविषयस्य व्याख्याने सर्वेषु…विनश्यत्सु तत्र तत्र स्थितोऽपि न विनश्यतीत्युक्तम्, तदन्यचित्संसृष्टावस्थाविषयम् NyāySiA. 222. 21; [(in Vallabha Vedānta) immutable principle (Brahman) as distinguished from Puruṣottama] भक्त्या मामभिजानाति इति वाक्ये मामिति पदात् पुरुषोत्तमविषयकं ज्ञानमुच्यते न त्वक्षरविषयम् AṇuBh. 240. 23 (*on* iii. 3. 33)

**अक्षरविषयक** ( akṣaraviṣaya-ka ) *adj.* concerned with *akṣara* (as distinct from Puruṣottama) ज्ञानमार्गेऽक्षरविषयकाण्येव ज्ञानानि निरूप्यन्ते पुरुषोत्तमविषयकाणि न AṇuBh. 240. 18 (*on* iii. 3. 33); [i. e. supreme spirit] अथ परा इत्यादिश्रुत्याक्षरविषयकमूलाज्ञाननिवर्तकत्वस्यैव लक्षणस्योक्तत्वात् GuruCandr. i. 178. 9.

**अक्षरविषयस्मृति** ( akṣaraviṣaya-smṛti ) *f.* recollection of sounds

अक्षरविषयस्मृत्यावृत्त्या मन्त्रावृत्तिः TaiUBh. 245. 13 (*on* 2. 3)

**अक्षरविषयिन्** (akṣara-viṣayin) *adj.* [*f.* -ṇī] concerning *akṣara* (as distinct from Puruṣottama) अक्षरविषयिणीनां धियां श्रुतौ मुक्तिसाधनेषु योऽवरोधः प्रवेशनं गणनेति यावत् AṇuBh. 240. 25 (*on* iii. 3. 33); अक्षरविषयिण्या विद्यायाः सकाशात् तत उत्तमविषयिण्यास्तस्या उत्तमत्वम् AṇuBh. 254. 22 (*on* iii. 3. 47)

**अक्षरविसंस्थुल** (akṣara-visaṁsthula) *adj.* [*f.* -ā] speaking unsteadily, faltering in speech स्वामिहस्थं च प्राप्ताहं विद्यया प्रभो। उक्त्वेति लज्जाललितक्षामाक्षरविसंस्थुला । नतानना महीं चक्रे दृशा नीलोत्पलाकुलाम् BṛKathāMañ. 14. 81.

**अक्षरवैराज** (akṣara-vairāja) *n.* a hymn bearing the *virāj* i. e. decasyllabic character; a hymn consisting of syllables divisible by ten महश्चित्त्वमिन्द्र यत एतॉस्त्वं राजेन्द्र ये च देवा इत्यक्षरवैराजे निविद्धाने S'āṅkhāS'S. xiv. 25. 5; xiv. 26. 5; xiv. 28. 12; xiv. 30. 2.

**अक्षरव्यक्त** (akṣara-vyakta) *n.* distinct or clear pronunciation of sounds or letters (one of the qualities of a good reader or reciter) माधुर्यमक्षरव्यक्तं पदव्यक्तं तु सुस्वरम्। धैर्यं लयसमायुक्तं षडेते पाठके गुणाः S'aiśiS'i. 211.

**अक्षरव्यक्ति** (akṣara-vyakti) *f.* distinct pronunciation of sounds माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः। धैर्यं लयसमर्थं च षडेते पाठका गुणाः PāṇiS'i. 33; YājñaS'i. 199.

**अक्षरव्यतिरिक्त** (akṣara-vyatirikta) *adj.* different from sounds न चाक्षरव्यतिरिक्तोऽन्यः कश्चिदस्ति समुदायो नाम। यतोऽर्थप्रतिपत्तिः स्यात् S'ābaBh. 45. 10 (*on* i. 1. 5)

**अक्षरव्याख्यान** (akṣara-vyākhyāna) *n.* explanation of words अस्य (सूत्रस्य) राद्धान्तसूत्रत्वज्ञापनार्थमक्षरव्याख्यानार्थं चेदानीं तदुपादानम् S'rutaPra. iB. 176. 18 (*on* i. 1. 5)

**अक्षरव्यापार** (akṣara-vyāpāra) *m.* operation on a sound as sound (and not as a part of a word) वृत्तिकारेण त्वस्य सूत्रस्य प्रयोजनं पिण्डीकृत्य प्रदर्शितम्—सर्वथान्त्यस्य वानन्त्यस्य वेके(?क) एव गुणवृद्धी भवतः, न त्वक्षरव्यापारः। अत एव वेदितव्याविल्याह। अक्षरव्यापारप्रदर्शने तु इक एव स्थाने भवत इत्येतावद्वक्तव्यं स्यात् PadMañ. *on* KāśiVṛ. *on* P. i. 1. 3.

**अक्षरव्यावर्तक** (akṣara-vyāvartaka) *adj.* excluding the word *akṣara* अत्र पूर्वं क्षरस्वरूपमुक्तमिति परस्तस्मात्तु इत्यत्र क्षरादेव परत्वमुच्यते। तच्छब्दस्य पूर्वपरामर्शित्वात्तस्यैव पूर्वमुक्तत्वात्। अत एवाक्षरव्यावर्तकस्तुशब्द उक्तः AṇuBh. 242. 3 (*on* iii. 3. 33)

**अक्षरव्योमसूर्य** (akṣaravyoma-sūrya) *m.* the sun in the sky in the form of *akṣara* (i. e. imperishable place) स्वविषयनिजधर्मान् शुद्धसत्त्वान् स सत्त्वान् अवतु भवतुषारादक्षरव्योमसूर्यः PāñcRāRa. 79. 4.

**अक्षरशक्ति** (akṣara-śakti) *f.* goddess presiding over syllables अथाक्षरशक्तयोऽपि—सहा नित्या…गदा रूपा SmṛtiCan. ii. 381. 1; तथाक्षरशक्तयोऽपि। सहा नित्या…गदा रूपेति शक्तयः VīraMi. (Āhnika.) 294. 5.

**अक्षरशत** (akṣara-śata) *n.* a hundred syllables (सः) गूढमक्षरशतैर्व्यस्तारयत्पुस्तकम् S'rīKaC. 25. 142.

**अक्षरशब्दित** (akṣara-śabdita) *adj.* termed as *akṣara* (i. e. imperishable) क्षराक्षरशब्दितयोर्बद्धमुक्तात्मनोः 'ब्रह्मणो रूपे' इति ब्रह्मशरीरत्वाभिधानात् SiddhāSi. ii. 23. 9; अक्षरं 'अथ परा यया तदक्षरमधिगम्यत' इत्यारभ्य प्रकृतमक्षरशब्दितम् S'ivārkaMaDī. i. 85. 26 (*on* i. 1. 1); अक्षरशब्दितपरब्रह्मविषयाः स्थौल्यादिप्रतिषेधबुद्धयः सर्वासूपासनासु नेया न वेति GoviBh. 241. 2 (*on* iii. 3. 34)

**अक्षरशब्दोक्त** (akṣaraśabdokta) *adj.* denoted or expressed by the term *akṣara* पूर्वस्मिन् वचने क्षराक्षरशब्दोक्तौ बद्धमुक्तौ S'rutaPra. iA. 210. 19 (*on* i. 1. 1); जीवजातं क्षराक्षरशब्दोक्तसंसारिरूपेण द्वेधा विभज्य S'ivārkaMaDī. i. 498. 25 (*on* i. 3. 41)

**अक्षरशब्दोदित** (akṣaraśabdodita) *adj.* stated or expressed by the term *akṣara* तदेतदव्यक्तं क्वचिदाकाशशब्दनिर्दिष्टम्…क्वचिदक्षरशब्दोदितम् BrahmSūBh.(Śaṅ.) 231. 10. (*on* i. 4. 3)

**अक्षरशलाका** (akṣara-śalākā) *f.* the needle in the form of the word (yoga) तस्याजननिरेवास्तु नृपशोमौधजन्मनः। अविद्धकर्णो यो योग इत्यक्षरशलाकया YogS'ā. 1. 14 = MohaRāPa. 1. 14.

**अक्षरशस्** (akṣara-śas) *adv.* syllable by syllable, letter by letter अक्षरश एव संवत्सरमाप्नोति TaiS. II. v. 8. 3; अक्षरशो वा एतद्गायत्रीं प्रीणाति MaiS. iii. 1. 1; कथममिष्टुयादित्यक्षरशाइ: AitBr. 26. 2(681); तस्यो एवाक्षरशो गायत्रीमेव प्रातस्सवनं संपद्यन्ते JaimiBr. 1. 243; 2. 73; यो वा इमां पदशः स्वरशोऽक्षरशो वाचं विदधाति स आर्त्विजीनः MahāBh. i. 3. 12 (*on* i. 1. 0); सर्वे वेदा अक्षरशो मे अधीताः MahāBhā. iii. App. I. 21. 72; पातालनृहरेमैनुम्। प्राग्वदक्षरशो न्यस्य PāraS. 23. 61; VarivaRaha. 118; BhāṭṭDī. i. 14. 13 (*on* i. 1. 7); पत्रेष्वक्षरशो हकारपुटितांस्तद्भूतवर्णान् लिखेत् S'āraTi. 7. 53; BālamBha. ii. 160. 3 (*on* 2. 125)

**अक्षरशिक्षक** (akṣara-śikṣaka) *m.* teacher of letters (i. e. writing-system) आययौ मासमूल्येन नित्यमक्षरशिक्षकः NarmaMā. 2. 37; पुत्राचार्यो नाम ग्रामगतगृहस्थकुमाराणामक्षरशिक्षकः SmṛtiCan. v. 184. 2.

**अक्षरशिक्षा** (akṣara-śikṣā) *f.* **1** instruction in letters (i. e. alphabet) द्विजन्मा कृतज्ञो मह्यमक्षरशिक्षां विधाय…निरगात् DaśKuC. 13. 18; बालानामक्षरशिक्षायै शिक्षकगृहं प्रति गमनं दृष्टम् VivaPraSaṁ. 193. 7; अक्षरशिक्षाद्युपयोगिनीः शिक्षाः प्रथमत एव स्वबुद्धिपूर्वकं कुर्वन्ति S'rutaPra. iA. 88. 20 (*on* i. 1. 1); **2** the science of phonetics मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरमित्यक्षरशिक्षायां मन्द्रत्वादिधर्मस्य स्वरनिष्ठत्वोक्तेः BhāṭṭCin. i. 134. 28 (*on* i. 1. 5); **3** the science of (mystic) syllables, theory of Brahman [APTE]

**अक्षरशिरस्** (akṣara-śiras) *n.* top of a letter नादबिन्दुसहिताक्षरलेखेऽक्षरशिरस्यर्धेन्दुं विलिख्य तदुपरि बिन्दुर्लिख्यत इति लिपिसंप्रदायः SetuBa. 52. 2.

**अक्षरशून्य** (akṣara-śūnya) *adj.* inarticulate [MW]

**अक्षरश्रवण** (akṣara-śravaṇa) *n.* hearing the letters (i. e. the words) अक्षरश्रवणकृत एवायं गार्हपत्याङ्गत्वप्रत्ययः TantrVā. 840. 9 (*on* iii. 3. 14)

**अक्षरश्रवणमात्र** (akṣaraśravaṇa-mātra) *n.* mere hearing of the letters (i. e. word) अक्षरश्रवणमात्रलभ्यत्वादियं (समुदायप्रसिद्धिः) बलीयसी TantrVā. 306. 13 (*on* i. 4. 11); स्वरूपमात्राभिधानपक्षे पदान्तरापेक्षाभावादक्षरश्रवणमात्रादेव रूढ्यर्थोऽभिधानसिद्धोऽवयवार्थलक्षितार्थौगिकाद्वाक्यार्थस्थानीयाद्बलीयान् भवति S'āstrDī. 154. 13 (*on* i. 1. 7); MayūMāli. 236. 19 (*on* iii. 3. 4); S'āstrDīPra. 604. 13 (*on* i. 1. 7)

**अक्षरश्री** (akṣara-śrī) *f.* the goddess called *akṣaraśrī* (i. e. S'abdabrahman) एकादश्यां द्विषड्ग्यां स्थानं तत्त्वक्षरश्रियः LakṣmīT. 35. 39.

**अक्षरश्रुति** (akṣara-śruti) *f.* **i** hearing of letters (i. e. words), word as comprising the sounds or letters heard (apart from the meaning conveyed) इन्द्राङ्गत्वमतिश्वास्या नाक्षरश्रुतिकारिता TantrVā. 839. 21 (*on* iii. 3. 14); डलका यासामक्षरश्रुतीनां सन्ति ताडलकवत्यः Prasā. i. 181. 8; **ii** a (Vedic) text containing the word *akṣara* भवेदक्षरश्रुतेर्विष्णावक्काशाभावो यदक्षरात्परतः पर इत्यत्र प्रकृताक्षरमवधीकृत्य कस्यचित् परत्वमुच्येत TattvPrakā. 38B. 4 (*on* i. 2. 22)

**अक्षरश्रुतिप्रत्यभिज्ञान** (akṣaraśruti-pratyabhijñāna) *n.* recognition of the Vedic passage containing the term *akṣara* केवलश्रुतिप्रत्यभिज्ञानादपि 'येनाक्षरं पुरुषं वेद सत्यम्' इति पूर्वोक्तभूतयोनित्वलिङ्गानुगृहीतस्याक्षरश्रुतिप्रत्यभिज्ञानस्य प्रबलत्वात् S'rutaPra. iB. 326. 4 (*on* i. 2. 22)

**अक्षरश्रेणी** (akṣara-śreṇī) *f.* series or sequence of syllables (or words) धिया यदक्षरश्रेण्यो(? ण्या) वर्णाद्वर्णं पदात्पदम्। शब्दार्थचिन्तनं ध्यानं तदुक्तं मानसं(? सो) जपः NaraP. 58. 82; धिया यदक्षरश्रेण्यां यत्तदर्थविचारणम्। मानसस्तु जपः प्रोक्तः BṛNāraP. 31. 96; LiṅgaP. i. 85. 121.

**अक्षरश्रेणीसनाथ** (akṣaraśreṇī-sanātha) *adj.* having a line of (inscribed) letters स्वामिन्नाश्चर्यमक्षरश्रेणीसनाथः किमप्यसौ शरः UdaySuKa. 4. 30.

**अक्षरश्रेष्ठ** (akṣara-śreṣṭha) *n.* the best syllable, the mystic syllable *om* (identified with Brahman) मनुः (आह)-क्षरन्ति सर्वा वैदिक्यो जुहोतियजतिक्रियाः। अक्षरं त्वक्षरश्रेष्ठं ब्रह्म चैव प्रजापतिः। अक्षरश्रेष्ठं ब्रह्मप्रणवः VīraMi.-(Paribhāṣā.) 79. 4.

**अक्षरषट्क** (akṣara-ṣaṭka) *n.* a group of six syllables ततोऽक्षरषट्कमूर्ध्वक्रमेण न्यास्यम् Kāvyānu.(He.) (comm.) 265. 17.

**अक्षरस** (akṣa-rasa) *m.* pleasure in gambling, taking delight in gambling अक्षरसावधानाः…विलोक्यन्ते द्यूतस्थानेषु द्यूतकाराः NalaCam. 1. 31. (2)

**अक्षरसंयुक्त** (akṣara-saṁyukta) *adj.* acquainted with the alphabet, literate, learned शूद्रं चाक्षरसंयुक्तं दूरतः परिवर्जयेत् SkandP. ii (1). 19. 40 = iii (1). 10. 43; SūktiRa. 163. 79.

**अक्षरसंयोग** (akṣara-saṁyoga) *m.* association with the (requisite number of) syllables (as demanded by a particular metre) पूर्णं नाम स्वरश्रुतिपूरणाच्छन्दःपादाक्षरसंयोगात् पूर्णमित्युच्यते NāraS'i. i. 3. 2.

**अक्षरसंलभ्य** (akṣara-saṁlabhya) *adj.* attainable or intelligible through the letters or syllables (अथ परार्थनिरूपणे भगवच्छब्दान्तर्गतभकारार्थनिरूपणम्) परस्त्वक्षरसंलभ्यः…ध्रुवं जगदुपादानमिति भाक्षरचिन्तनम् AhirbuS. 55. 71.

**अक्षरसंश्रय** (akṣara-saṁśraya) *m.* resorting to or dependence on the letters (i. e. text of the sacred scripture) तस्मात् (ज्ञानकर्मणोः) समुच्चयाशेह कार्या नाक्षरसंश्रयात् BṛĀraUBhVā. i. 4. 1768.

**अक्षरावाप्तिफल** ( akṣarāvāpti-phala ) *n.* the fruit in the form of acquisition of letters (वेदे) तव्यप्रत्ययोपात्तत्वेन श्रुतमक्षरावाप्तिफलमुल्लङ्घ्य तत्फलभूतस्यार्थज्ञानस्यापि वैधफलत्वकल्पनायोगात् S'ivārkaMaDī. i. 48. 19 (*on* i. 1. 1); *adj.* having the acquisition of letters as the fruit अक्षरावाप्तिफलोऽध्ययनविधिर्न त्वर्थज्ञानफलः S'ivārkaMaDī. i. 49. 29 (*on* i. 1. 1)

**अक्षरावाप्तिफलक** ( akṣarāvāpti-phalaka ) *adj.* having acquisition of letters (textual learning) as the fruit (अध्ययनविधेः) तस्याक्षरावाप्तिफलकत्वपक्षे…ऐच्छिक एव क्रमः प्राप्नोति S'ivārkaMaDī. i. 37. 20 (*on* i. 1. 1); i. 44. 30 (*on* i. 1. 1); स (अध्ययनविधिः) त्वक्षरावाप्तिफलकः S'ivārkaMaDī. i. 46. 13 (*on* i. 1. 1); i. 62. 26 (*on* i. 1. 1); अध्ययनस्याक्षरावाप्तिफलकत्वमर्थज्ञानपर्यन्तत्वं चेति पक्षद्वयं प्रागुपपादितम् S'ivārkaMaDī. ii. 387. 33 (*on* iii. 4. 12); स्तोभभागांशेऽध्ययनविधेः अक्षरावाप्तिफलकत्वाभ्युपगमात् PūrvottaVāNaMā. 265. 6; 272. 2.

**अक्षरावृत्ति** ( akṣarāvṛtti ) *f.* repetition of letters अनुप्रासोऽक्षरावृत्तिः S'abdaRa.( Vā. ) 3389.

**अक्षराश** ( akṣarāśa ) *m.* name of one of the seventy attendant-deities of Haranārāyaṇa guarding the south-western region of the temple प्रलम्बो लम्बकश्चैव निष्ठुरः खरभाषणः । वीरसेनोऽक्षराशश्च…इत्येते नैर्ऋते स्थिताः ĪśānS'iPa. ii. 54. 111.

**अक्षराशीति** ( akṣarāśīti ) *f.* eighty syllables अक्षराशीतिरेकश्च प्रथमा कण्डिका स्मृता (वाजसनेयिसंहितायाः) PārāS'i. 3; AmoghS'i. 79.

**अक्षराश्रय** ( akṣarāśraya ) *adj.* **1** belonging to or depending on a vowel उदात्तश्चानुदात्तश्च स्वरितश्च त्रयः स्वराः।…त उच्यन्तेऽक्षराश्रयाः ṚPrāti. 3. 1; नासिक्यं रङ्गमुच्यते । उच्चारणविशेषेणात्राक्षराश्रयमुच्यते S'aiśiS'i. 16; **2** based on the letters, literal ब्रह्मा…सुष्वाप…इमं चोदाहरन्मन्त्रं श्लोकं नारायणं प्रति । तं शृणुध्वम्…तदर्थं चाक्षराश्रयम् । आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ता यस्मात्तेन नारायणः स्मृतः S'ivaP. vii(1). 11. 14 (513B. 1)

**अक्षराष्टकत्व** ( akṣarāṣṭaka-tva ) *n.* the state of being a group of or comprising eight letters or syllables अर्धचन्द्राद्यष्टकस्य तु नादनामैकाक्षरावयवत्वं हृल्लेखात्रयसंभूतैस्तिथिसंख्यैस्तथाक्षरैरित्यादिज्ञापकात् । अक्षराष्टकत्वमपि संभवतीति तु वरिवस्यारहस्यव्याख्यायां विस्तरः SetuBa. 204. 20.

**अक्षरास्वारस्य** ( akṣarāsvārasya ) *n.* lack of the self-evident meaning of a word क्रिया च स्नानमेवान्यस्याश्रुतत्वादित्याह - (कृतक्रियः) कृतस्नान इति । अत्र व्याख्यानेऽक्षरास्वारस्यादाह - अथवेति ( Mitā. अथवा कृतक्रियो यावदाशौचं कृतोदकादिक्रियः ) BālamBha. iii. 80. 28 (*on* 3. 28, 29)

**अक्षराह्लाद** ( akṣarāhlāda ) *m.* (source of) eternal joy or bliss किं न वेत्ति नृशंसोऽयमनुरागपरं जनम् । येनेममक्षराह्लादं नयत्यन्यत्र नो हरिम् BrahmP. 192. 20.

**अक्षरितवत्** ( a-kṣaritava(n)t ) *adj.* not slipping or passing out (said of life or vital breath) कथमिवैवमनेकशतशस्त्रमार्गजर्जरितेषु गात्रेष्वक्षरितवतामसूनामवस्थानमासीत् AvantiKa. 145. 20.

**अक्षरितृ** ( a-kṣaritṛ ) *adj.* who does not decay अथाक्षरः पुंसि विरिञ्चे…त्रिस्त्वक्षरितरि स्याचाविद्यमानक्षरे तथा NānārthaSaṁ. ii. 47. 7.

**अक्षरिपु** ( akṣa-ripu ) *m.* enemy in the form of a sense-organ यस्याज्ञानात्मनोऽज्ञस्य देह एवात्मभावना । उदितेति रुषैवाक्षरिपवोऽभिभवन्ति तम् YogVā. vi(1). 6. 3.

**अक्षरी** ( akṣarī ) *f.* **1** name of a *vidyā* accessible to the S'ūdras द्वौ द्रावित्यक्षरीं विद्यां शृणु शूद्रस्य सम्मताम् KāliViT. 1. 18; **2** name of *māyā* or illusion प्रलये या त्वया दृष्टा पुरुषस्योदराम्भसि । सा माया मोहजनिका…अक्षरी KalkiP. ii. 5. 12; **3** stream of water or rain अक्षरी वारिधारायाम् S'abdaRaSaK. 263. 5.

**अक्षरीभू** ( akṣarī-bhū ) IP. [ *fr.* अक्षर ] to become imperishable ततस्त्वापूरयेद् देहमोङ्कारेण समाहितः । अथोङ्कारमयो योगी न क्षरेत् त्वक्षरीभवेत् VāyuP. i. 19. 40; ततश्चापूरयेद् देहमोङ्कारेण समन्वितः । तथोङ्कारमयो योगी अक्षरे त्वक्षरीभवेत् LiṅgaP. i. 91. 45.

**अक्षरूक्ष** ( akṣa-rūkṣa ) *adj.* rugged like an *akṣa* tree सिक्तोऽप्यस्त्रै रिपूणामथ सपदि पयः पायितोऽप्यक्षरूक्षः ।…दोस्तमालप्ररोहः संग्रामाध्वान्तरीपे विलसति सुतरामेतदीयः कृपाणः KhadgaS'. 38 ( comm. अक्षवद्रूक्षः )

**अक्षरेयत्ता** ( akṣareyattā ) *f.* the specific number of syllables (in a metrical foot) छन्दःशब्देनाक्षरेयत्ताविशेषवाचिनो गायत्र्यादेः शब्दस्य ग्रहणम् Pradī. iv. 174 (*on* P. iv. 2. 55)

**अक्षरेश्वरी** ( akṣareśvarī ) *f.* name of a female deity (presiding over Kṣobhaṇī-nyāsa) (क्षोभणीन्यासस्य) वामदेवो मुनिः कामो दैवतं चाक्षरेश्वरी ĪśānS'iPa. i. 2. 83.

**अक्षरेस्थ** ( akṣare-stha ) *adj* [ *f.* -ā ] based on syllable ऋक्स्था वा अन्यत् सहस्रमित्याहुरक्षरेस्था अन्यदिति…अथ यदग्निष्टोमे तदक्षरेस्था PañcBr. xvi. 8. 4; तदाहुर्ब्रह्मवादिनोऽक्षरेस्थो वै त्रिरात्रः PañcBr. xx. 14. 8.

**अक्षरैक** ( akṣaraika ) *n.* a single syllable यजामहे सेवामहे वस्तु महेत्यक्षरद्वयेन कूटत्वेनाक्षरैकेण मृत्युंजयमित्युच्यते TripuTāpU. 4. 6.

**अक्षरैकमात्र** ( akṣaraika-mātra ) *n.* only one letter प्रणमामि महादेवीं मातृकाम्…यदक्षरैकमात्रेऽपि संसिद्धे स्पर्धते नरः । रविताक्ष्यैन्दुकन्दर्पशंकरानलविष्णुभिः TantrRā. 2. 90.

**अक्षरैकात्मत्व** ( akṣaraikātma-tva ) *n.* the state of having the same nature as that of the imperishable Brahman, oneness or identity with the imperishable Brahman यथा शरस्य लक्ष्यैकात्मत्वं फलं भवति तथा देहाद्यात्मताप्रत्ययतिरस्करणेनाक्षरैकात्मत्वं फलमापादयेदित्यर्थः MuṇḍaUBh. 336. 7 (*on* ii. 2. 4)

**अक्षरोच्चारण** ( akṣaroccāraṇa ) *n.* the utterance of a letter or a syllable न चान्यो मन्त्रार्थः शक्यते वक्तुमप्रतीतेः । अतोऽर्थसदसद्भावावनादृत्याक्षरोच्चारणं फलवदाश्रयणीयमिति TantrVā. 56. 18 (*on* i. 2. 39); इतिहासं प्रवक्ष्यामि शृण्वन्तु मुनयः शुभम् । अक्षरोच्चारणादेव यथा प्राप्तं द्विजेन वै DevīBhāP. iii. 10. 17.

**अक्षरोच्चारणमात्र** ( akṣaroccāraṇa-mātra ) *n.* the mere utterance of a letter or a syllable प्राचीनशब्दः…अक्षरोच्चारणमात्रेणैव प्राग्भागमाह ṬupṬ. 190. 12 (*on* ix. 1. 20)

**अक्षरोत्तमनिष्पन्द** ( akṣarottama-niṣpanda ) *adj.* emanating from the greatest Imperishable खे शब्दः शैत्यमप्सु च । अक्षरोत्तमनिष्पन्दान् गुणानेतान् विदुर्बुधाः VāyuP. i. 24. 253 (? 153)

**अक्षरोत्थ** ( akṣarottha ) *adj.* [ *f.* -ā ] emanating from the letter or syllable (of a mantra) परितो वृतां (भगमालिनीम्) शक्तिगणैस्तु तैः । अक्षरोत्थाभिरन्याभिः सरोन्मादमदात्मभिः … यजेत् TantrRā. 8. 7; स्वसमानाभिरभितः शक्तिभिः परिवारिताम् । षट्सप्ततिभिरन्याभिरक्षरोत्थाभिरन्विताम् (सर्वमङ्गलां पूजयेत्) TantrRā. 19. 7.

**अक्षरोद्भव** ( akṣarodbhava ) *adj.* arising from the *bījākṣara* अक्षरोद्भवपिण्डस्य हूंफट्कारौ न चेष्येते HevajraT. i. 8. 9.

**अक्षरोपधान** ( akṣaropadhāna ) *n.* insertion of (additional) syllables (in singing a *sāman* with deficient *pādas*) ये ऊनाक्षराः पादास्तेषु सामकाले अक्षरोपधानं मन्यते शाण्डिल्यः comm. on LāṭyāS'S. vii. 9. 8.

**अक्षरोपधि** ( akṣaropadhi ) *m.* insertion of (additional) syllables (in singing a *sāman* with deficient *pādas*) ऊनाक्षरेषु पादेष्वक्षरोपधिं शाण्डिल्यः LāṭyāS'S. vii. 9. 8. cf. **अक्षरसधातु.**

**अक्षरोपपदा** ( akṣaropapadā ) *f.* name of a metre having dactylus and spondaeus in each foot (also known as Paṅkti and Kuntalatanvī) (भो गौ पङ्क्तिः) अक्षरोपपदेत्यन्ये । कुन्तलतन्वीति भरतः ChandaśCū. 2. 25(3)

**अक्षरोपलम्भ** ( akṣaropalambha ) *m.* cognition of a letter or speech-sound न खलु क्रममेदेऽपि प्रत्येकमक्षरोपलम्भप्रभाविताः संस्काराः परस्परमतिशेरते SphoṭSi. 56. 2.

**अक्षरोपसर्जनभूत** (akṣaropasarjana-bhūta) *adj.* becoming subordinate or secondary to the letters or words तत्र च बह्वयः क्रुश्रयः श्रूयन्ते । तद्भेदश्चार्थभेदमन्तरेण न भवतीत्यक्षरोपसर्जनभूतोऽर्थो नानात्वेनाश्रीयते TantrVā. 433. 9 (*on* ii. 1. 47)

**अक्षरोपासक** ( akṣaropāsaka ) *m.* one who meditates on the imperishable (Brahman) ये तु अक्षरोपासकाः…ते तावत् तिष्ठन्तु GītāBh. (S'aṅ.) 340. 12 (*on* 12. 2); न अभेददर्शिनः अक्षरोपासकस्य कर्मयोगः उपपद्यते GītāBh.(S'aṅ.) 348. 4 (*on* 12. 12); 343. 11 (*on* 12. 5); अक्षरोपासकानां न पुरुषोत्तमोपासकत्वम् AṇuBh. 242. 12 (*on* iii. 3. 33)

**अक्षरोपासना** ( akṣaropāsanā ) *f.* meditation of the imperishable (Brahman) कर्मयोगिनः अक्षरोपासनानुपपत्तिम् (दर्शयति) GītāBh. (S'aṅ.) 348. 5 (*on* 12. 12); सत्यविद्यानामक्षरोपासनं विधायेत्याद्यर्थतो विषयप्रदर्शकं भाष्यं श्रुत्युदाहरणेन व्याचष्टे VedāntKa. 450. 13 (*on* iii 3. 38)

**अक्षरोह** ( akṣaroha ) *m.* modification or substitution of a letter or syllable (in a *ṛc*) अक्षरोहनिषेधेऽपि…ऋगन्तरागमरूपस्योहस्य दुर्निवारत्वादिति चेन्न MīmāKau. iii(1). 102. 17 (*on* i. 2. 54)

**अक्षरौषध** ( akṣarauṣadha ) *n.* (fifty) mystic syllables (of 50 *mantras* cf. TantrRā. 35. 49–53) serving the purpose of herbs अभिषिच्याथ तोयेन क्वथितेनाक्षरौषधैः । … (देवीम्) चक्रे संस्थाप्य पूजयेत् TantrRā. 2. 44; मध्ये कुम्भं तु विन्यसेत् ।…पूरितं क्वारितोयेन क्वथितेनाक्षरौषधैः TantrRā. 2. 62.

**अक्षर्क्ष** ( akṣarkṣa ) *m.* a bear in the form of a sense-organ अक्षर्क्षक्षोभविषमा शून्या निःसारकोटरा । तमोगहनदिक्कुञ्जा नेष्टा देहाटवी मम YogVā. i. 18. 35.

**¹अक्षर्य** ( akṣarya ) *adj.* [ *f.* –ā ] based on or corresponding to the number of syllables, syllabic पुरोजिती वो अन्धस इति पद्या चाक्षर्या च विराजौ भवतः पद्यया वै देवाः स्वर्गं लोकमायन्नक्षर्यया ऋषयो नु ( ? ऽ नु ) प्राजानन् यदेते पद्या चाक्षर्या च विराजौ भवतः स्वर्गस्य लोकस्य प्रज्ञात्यै PañcBr. viii. 5. 7; पद्या वा अन्या विराडक्षर्यान्यास्माल्लोकात् पद्यया विराजात्राचमवरुन्धेऽमुष्मादक्षर्यया PañcBr. xii. 11. 22; अनुष्टुब् द्वे च गायत्र्यावेष आनुष्टुभः ( प्रगाथः ) स्मृतः । विराजावभिसंपन्नः पद्याक्षर्ये स उत्थितः ṚPrāti. 18. 3; cf. GaṇPā. 72. 3 *on* P. v. 1. 2; GaṇRa. 5. 357 (390)

**²अक्षर्य** ( akṣarya ) *n.* name of a *sāman* अक्षर्यं रेवत् ĀrṣeBr. 1. 460 ( अक्षय्यं च रेवत् SHARMA )

**अक्षलक्षाकुल** ( akṣalakṣākula ) *adj.* crowded with a hundred thousand *akṣa* trees ( Eleocarpus Ganitures or Terminalia Bellerica ) खर्जूरार्जुनसर्जबिल्वबकुलप्लक्षाक्षलक्षाकुलम् । पर्यन्ते स ददर्श···गोकुलम् DaśāvaC. 8. 149.

**अक्षलव** ( akṣa–lava ) *m.* degree of latitude पूर्वापरक्षितिजसंगमयोर्विलग्नं याम्ये ध्रुवे पललवैः क्षितिजादधःस्थे । सौम्ये कुजादुपरि चाक्षलवैर्ध्रुवे तदुन्मण्डलं दिननिशोः क्षयवृद्धिकारि Golā. 206. 35 (24. 4); खाङ्काहतं स्वद्युदलेन भक्तं स्पर्शे विमुक्तौ च नतं लवाः स्युः । तज्ज्याहता अक्षलवा विभक्तास्त्रिभज्यया प्रागपरे नते स्यात् । सौम्यान्तकाशे वलनं ग्रहस्य KaraṇaKu. 4. 14(21); याम्योत्तरे स्वस्तिकतस्त्रिभे स्युस्तयोश्च मध्येऽक्षलवाः सदैव SiddhāTaVi. 179. 4.

**अक्षलवज्या** ( akṣalava–jyā ) *f.* the sine formed by a degree of latitude त्रिज्यया च गुणिताक्षलवज्या । उद्गमास्तसमये नियमात् सा चापमक्षवलनं क्रमतस्तत् SiddhāTaVi. 263. 20; तन्नतांशकगुणत्रिगुणाभ्यां भाजिता भवति चाक्षलवज्या SiddhāTaVi. 371. 1.

**अक्षलसत्कर** ( akṣalasat–kara ) *adj.* [ *f.* –ā ] holding a rosary in the hand ब्रह्माणी···। वरदाभयहस्ता च कुण्डिकाक्षलसत्करा NityāṢoḍa. 8. 126.

**अक्षलिङ्गधी** ( akṣaliṅga–dhī ) *f.* perceptual and inferential cognition प्रायः श्रुतेर्विसंवादात् प्रतिबन्धमपश्यताम् । सर्वत्र स्वादनाश्वासः सोऽक्षलिङ्गधियां समः Laghīya. 1. 27.

**अक्षलिङ्गाधिगम्य** (akṣaliṅgādhigamya) *adj.* perceptible through sense-organs and inference तथा गुणगुणित्वेन ह्यक्षलिङ्गाधिगम्ययोः । दुःखात्मनोर्मिथोयोगे नानुमानप्रमाणता BṛĀraUBhVā. i. 4. 585.

**अक्षलिप्तिका** ( akṣa–liptikā ) *f.* a minute of latitude ( i. e. latitude in minutes ) सूर्यक्रान्तिलिप्तिकाः । दिग्भेदे मिश्रिताः साम्ये विश्लिष्टाश्चाक्षलिप्तिकाः SūrySi. 3. 16.

**अक्षलेप** ( akṣa–lepa ) *m.* oiling of the axle यथा शकटं रत्नभारपरिपूर्णं येन केनचित् स्नेहेन अक्षलेपं कृत्वा अभिलषितदेशान्तरं वणिगुपनयति TattvāRāVār. 597. 25 ( *on* ix. 6. 16 )

**अक्षवटिका** ( akṣa–vaṭikā ) *f.* a rosary of beads विघ्नेशं सपरश्वधाक्षवटिकादन्तोल्लसल्लड्डुकैर्दोर्भिः···युतम् ।···संस्मरेत् S'ilpaRa. ii. 25. 57.

**¹अक्षवत्** ( akṣa–va(n)t ) *adj.* possessing the tree *Eleocarpus Ganitrus* or *Terminalia Bellerica* तक्षशिला नगरी । तक्षशिलावान् । अक्षशिलेत्यन्यः । अक्षवान् । शिलावानित्येके GaṇRa. 4. 300 (339)

**²अक्षवत्** ( akṣa–va(n)t ) *adj.* having the sense-faculties अक्षवतां परोक्षम् । श्रीवर्धमानाभिधमात्मरूपमहं स्तुतेर्गोचरमानयामि MahāViSt. (H.)2. 1.

**अक्षवत्** ( akṣa–va(n)t ) *adj.* [ *f.* –ī ] [ wrong reading for अक्षतवत् ? ] having unbroken rice-grains वेद्याकृतिं कृत्वा तस्याम्···अपूपस्वस्तरलाजोल्लोपिकमङ्गलफलाक्षवत्याम्···सर्वरत्नानि चोपकल्प्य MānGS. ii. 6. 4 ( comm. अक्षता अनवहता व्रीहयस्तद्वत्याम् )

**¹अक्षवत्** ( akṣa–vat ) *adv.* like the axle ( of a wheel ) युगाक्षकोटी··· ध्रुवेण प्रगृहीते वै विचक्रमतुरक्षवत् BrahmāṇḍP. i. 22. 78.

**²अक्षवत्** ( akṣa–vat ) *adv.* as in the case of the sense-faculties हेत्वभेदात् सहस्थितिः । अक्षवद्रूपरसवत् PramāVār. 2. 48; वेदान्तानां प्रमाणत्वं नाक्षवद्वस्तुनीष्यते BṛĀraUBhVā. (Sambandha.) 445; विरुद्धाव्यभिचारित्वं न च प्रत्यक्षलिङ्गयोः । प्रत्यक्षापाश्रयात्वित्यं नानपेक्षं तदक्षवत् BṛĀraUBhVā. i. 2. 59; अनुत्पत्तिश्च न ज्ञाता सती कारणमक्षवत् PrakaPañ. 107. 19.

**अक्षवती** ( akṣavat–ī ) *f.* **A** a gambling hall यदाश्रौषं हृतराज्यं युधिष्ठिरं पराजितं सौबलेनाक्षवत्याम् MahāBhā. i. 1. 105 (JñānDī. द्यूतसभा ); स ह्यक्षहृदयज्ञस्तान् क्रीडयामास पाण्डवः । अक्षवत्यां यथाकामम् MahāBhā iv. 12. 4 (MahāBhāraDī. द्यूतशाला; MahāBhāṬ. द्यूतसभा ); सर्वैर्भवद्भिर्विदितं यथायं युधिष्ठिरः सौबलेनाक्षवत्याम् । जितो निकृत्या MahāBhā. v. 1. 10 (MahāBhāraDī. द्यूतशाला); KośaKaTa. 2. 6943; **B** the game of dice आहूय कुन्तीसुतमक्षवत्यां पराजैषीत् सत्यसंधं सुतस्ते MahāBhā. iii. 5. 5 ( BhārBhāDī. द्यूतक्रीडा ); i. 1. 105 ( BhārBhāDī. द्यूतक्रीडा ); iii. 77. 10; v. 1. 10 (BhārBhāDī. द्यूतक्रीडा ); AmaK. 2018; AbhidhāRaMā. 2. 233; Vaija. 140. 59; AbhidhāCin. 486; Liṅgānu. (He.) 58. 5; तस्थौ भिक्षाचरः स्वान्तमक्षवत्या विनोदयन् RājTa. (Ka.) 8. 1740; S'abdaRa. (Vā.) 3139; KośaKaTa. 1. 7129; KalpaK. 213. 101; ParaNā. 1937.

**अक्षवध** ( akṣa–vadha ) *m.* killing or slaying of Akṣa ( a son of Rāvaṇa ) प्राकारमात्रावरणः प्रभावः खरादिभिर्यो निहतैस्तवाभूत् । लङ्काप्रदाहाक्षवधद्रुभङ्गैः क्षाम्यत्यसावप्यधुनातिमात्रम् Bhaṭṭi. 12. 38; UdaySuKa. 110. 4; 138. 23; निर्वाप्य प्रियसंदेशैः सीतामक्षवधोद्धतः । स ददाह पुरीं लङ्काम् RaghuVa. 12. 63.

**अक्षवर्ग** ( akṣa–varga ) *m.* the group of sense-organs एकादशद्वारवतीह देहे सौधे महाराज इवाक्षवर्गैः । संसेव्यमानः ··· बुभुजेऽयमात्मा SarvaVeSāSaṁ. 448; 835.

**अक्षवर्त्मन्** ( akṣa–vartman ) *n.* the range of the senses न चान्यवर्णमात्रस्य पुरःसंबन्धवेदनम् । अक्षवर्त्मातिवृत्तत्वात् संस्कारस्य न तद्गतः SphoṭSi. 105. 2.

**अक्षवलन** ( akṣa–valana ) *n.* latitudinal variation, the angle subtended at the body by the arc joining the north point of the celestial horizon and the north pole of the equator अथवा परितः खेटात् खाङ्कभागान्तरे न्यसेत् । त्रिज्यावृत्तं ततस्तत्र विषुवत्समवृत्तयोः । मध्येऽक्षवलनं विद्याद्विषुवत्क्रान्तिवृत्तयोः Golā. 225. 13 (26. 49); त्रिज्यया च गुणिताक्षलवज्या । उद्गमास्तसमये नियमात्सा चापमक्षवलनं क्रमतस्तत् SiddhāTaVi. 263. 21.

**अक्षवलय** ( akṣa–valaya ) *m. n.* **1** a rosary of beads अक्षवलयमुज्ज्वलस्थूलमुक्ताफलग्रथितम् ··· आवर्तयन्तम् ··· जाबालिमपश्यम् Kād. 42. 16; स्वेदोदबिन्दुमुक्ताक्षवलयवाहिभिर्दिनकराराधननियमा इवागृह्यन्त ललनाललाटेन्दुद्युतिभिः HarṣaC. 74. 2; हस्तं द्वितीयं पुनर्लीलाङ्कुष्ठनिवेशिताक्षवलयम्···बिभ्राणा ···देवी YaśasCam. i. 475. 2; कलङ्क एवाक्षवलयमिति रूपकपरिग्रहे करधृतत्वमेव साधकप्रमाणतां प्रतिपद्यते KāvyPra. 757. 1; ध्यायेयमक्षवलयेक्षुशरासपाशान्···। आबिभ्रतीं निजकरैः··· संमोहनीम् S'āraTi. 6. 61; 18. 92; 23. 9; प्रजापतिमुखैरुपनीय मौञ्जीदण्डाजिनाक्षवलयादिभिरर्च्यमानः । त्वं नारायणः Nāray. viii. 30. 6; **2** the group of sense-faculties आत्मनोऽक्षवलयस्य वृत्तयः··· । त्वामवाप्य दृढदीर्घसंविदः Stotrā. 18. 17.

**अक्षवलय** ( akṣa–valaya ) *adj.* having the rosary of beads एकश्च वरदो हस्तस्तथाक्षवलयोऽपरः MatsyaP. 259. 10.

**अक्षवलयधर** ( akṣavalaya–dhara ) *adj.* holding a rosary of beads शार्ङ्गाक्षवलयधरः पाशाङ्कुशधरः परः । ( विष्णुः ) AgniP. 373. 30.

**अक्षवलयान्वित** ( akṣavalayānvita ) *adj.* having a rosary of beads चिन्तयेद्ब्रह्मभूतं तम्···शार्ङ्गशङ्खगदाखड्गचक्राक्षवलयान्वितम् ViṣṇuP. vi. 7. 85.

**अक्षवलयिन्** ( akṣavalay–in ) *adj.* having a rosary of beads आत्मनाप्याषाढी···अक्षवलयी···भूत्वा···जनयितुरेव जगामान्तिकम् ( सारस्वतः ) HarṣaC. 61. 5; तपस्तपति ते सुतः । जटावानक्षवलयी YogVā. iv. 11. 2.

**अक्षवश** ( akṣa–vaśa ) *m.* [ generally used adverbially in Abl. ] **1** control of the axle; influence of the axle एवमक्षवशात्तस्य संनिवेशो रथस्य तु BhaviP. 95B. 30 (i. 52. 20); **2** influence of or dependence on the latitude यान्त्युदयं मेषाद्या यतस्तदुदया न कालसमाः । क्रान्तिवशाल्लङ्कायां तदूनताधिक्यमक्षवशात् BrāhmSphuSi. 21. 60; जात्यान्यक्षभवानि वै । तथान्यान्यपि दृग्गोले भवन्त्यक्षवशात् SiddhāTaVi. 180. 4.

**अक्षवशतस्** ( akṣavaśa–tas ) *adv.* due to the latitude उन्नतं द्युनिशमण्डले कुजात् सावनं द्युतिविधौ हि तज्ज्यका । तिर्यगक्षवशतोऽक्षकर्णवच्छेदको न तु नरः स लम्बवत् Golā. 218. 19 (25. 34)

**¹अक्षवाट** ( akṣa–vāṭa ) *m.* **1** an arena, a wrestling ground or a place of contest अक्षवाटे करीषस्य कल्यन्तां राशयोऽन्ययाः HariVaṁ. 72. 8; अक्षवाटस्तु मल्लभूः TrikāS'e. ii. 8. 58; AbhidhāCin. 801; तेषां प्रेक्षामण्डपानां मध्यभागेषु जज्ञिरे। अक्षवाटा वज्रमयाः TriṣaS'aPuC. i. 6. 574; ततोऽक्षवाटमृक्षेशवलक्षसिकताचितम् । भूपतिः कारयांचक्रे PāṇḍaC. 10. 201; नियुद्धभूरक्षवाटे KośaKaTa. 1. 6356; 2. 4584; **2** bulbous root of *parpa* etc. **3** *bījapuṣpa* स्यादक्षवाटः··· पर्पादिकन्देऽपि च बीजपुष्पे KośaKaTa. 2. 4584; **4** a gambling house or gambling table [ APTE ]

**²अक्षवाट** ( akṣavāṭa ) *m.* levelling the fire-pit ( one of the *saṁskāras* of Kuṇḍa ) कृत्वैवमक्षवा(? पा)टं तु कुण्डसंस्कारमुत्तमम् JayāS. 15. 47; परिभूषयेत् । वर्मणा चाक्षवाटं तु संकल्प्य PāraS. 7. 35;

**अक्षवाटक** ( akṣavāṭa–ka ) *m.* a wrestling ground or place of contest अक्षवाटका मणिपीठिकाः···सन्ति यथाक्रमम् TīrthaKa. 48. 18.

**अक्षवाटिका** ( akṣa–vāṭikā ) *f.* a wrestling ground or place of contest प्रेक्षार्थमण्डपा अक्षवाटिका मणिपीठिकाः ।···सन्ति TriṣaS'aPuC. ii. 3. 719.

**अक्षवाप** ( akṣa–vāpa ) *m.* a gambler or a keeper of the gambling house cf. **अक्षावाप,** गवेधुके चरौ दृष्टा गोविकर्ताक्षवापयोः । पशू रुद्र इव श्वेतावित्येकवचनश्रुतिः VākyaP. iii. 14. 596 ( Helārāja गा विकृन्ततीति गोविकर्तः, अक्षान् वपतीत्यक्षवापः, तन्नामानौ पशूनां विशसितारौ )

**अक्षवापक** ( akṣavāpa–ka ) *m.* a player at dice स किलाक्षातिवापस्त्वं ( v. l. °क्षवापकस्त्वं ) सभास्तारो मया कृतः MahāBhā. iv. 65. 6 ( MahāBhāraDi. अक्षक्षेपकः )

**अक्षवाम** ( akṣa–vāma ) *m.* an unfair gambler [MW, Apte]

**अक्षवाल** ( akṣavāla ) *m.* name of a village in Kashmir अक्षश्च तत्सुतः। …ग्रामं योऽक्षवालमकारयत् RājTa. (Ka.) 1. 338.

**अक्षविकृति** ( akṣa–vikṛti ) *f.* a defect of the eye-sight सर्पादिभ्रान्तिवचास्याः स्यादक्षविकृतावपि। निवृत्तिर्न निवर्तेत निवृत्तेऽप्यक्षविप्लवे PramāVār. 3. 297.

**अक्षविक्षिप्त** ( akṣa–vikṣipta ) *adj.* bewildered by the influence of the senses क्षत्रपुत्रोऽक्षविक्षिप्तः…। अन्तरिक्षगतिं प्राप निःशङ्कोऽञ्जनतस्करः YaśasCam. ii. 291. 4.

**अक्षविक्षेप** ( akṣa–vikṣepa ) *m.* the distraction of the sense-faculties भक्तानामक्षविक्षेपोऽप्येष संसारसंमतः। उपनीय किमप्यन्तः पुष्णात्यर्चामहोत्सवम् Stotrā. 17. 38.

**अक्षविचक्षण** ( akṣa–vicakṣaṇa ) *adj.* expert or adept in the game of dice लोकेष्वक्षविचक्षणश्च शकुनिः BālBhā. 2. 14.

**अक्षविचित्रगोचर** ( akṣa–vicitragocara ) *m.* diverse object(s) of the senses यथा यथा ह्यक्षविचित्रगोचरे प्रवर्तते चारगतो जिनात्मजः MaYānaSū. 21. 13 (5. 9)

[1]**अक्षविजय** ( akṣa–vijaya ) *m.* victory over (i. e. control of) the senses ईश वासवास्तावकीनहनुसंग्रहं व्यधुः। नूनमक्षविजयेन तावकानुग्रहेण हनुमत्त्वमिच्छवः S'rīVīraSt. 12.

[2]**अक्षविजय** ( akṣa–vijaya ) *m.* conquest over Akṣa (Rāvaṇa's son), S'rīVīraSt. 12.

**अक्षविजयिन्** ( akṣa–vijayin ) *adj.* who is victorious in the game of dice सर्वथा योऽक्षविजयी सुरासेवनतत्परः। तस्यार्थानां सुखानां च समृद्धिः करगामिनी AbhinBhā. ii. 456. 8 (*on* 18. 119)

**अक्षविज्ञान** ( akṣa–vijñāna ) *n.* sense-perception न ह्यसावक्षविज्ञाने रूपादिरिव भासते NyāyMañ. i. 175. 11.

[1]**अक्षविद्** ( akṣa–vid ) *adj.* one who knows the latitude मध्यच्छायातोऽक्षविदानयति रविं दिवाकरज्ञोऽक्षम् BrahmSphuSi. 15. 15; आयनाक्षवलनं हि विनैव स्पष्टसंज्ञवलनं प्रवदेयः। अक्षवित्समवलोक्य विलग्नं कल्पकेषु स महान् SiddhāTaVi. 379. 18.

[2]**अक्षविद्** ( akṣa–vid ) *adj.* skilful in gambling [MW]

[3]**अक्षविद्** ( akṣa–vid ) *adj.* versed in law [MW]

**अक्षविद्या** ( akṣa–vidyā ) *f.* art of playing at dice यदाश्रौषम्… युधिष्ठिरं पराजितं सौबलेनाक्षवत्याम् ( v. l. अक्षविद्याम् ) MahāBhā. i. 1. 105; एवं विक्रीडमानौ तावक्षविद्याविशारदौ। तदा जितो भवान्याथ शंकरो बहुभूषणः SkandP. i(1). 34. 78.

**अक्षविद्वस्** ( akṣa–vidvas ) *m.* a skilful or expert gambler द्यूते तु जितमेवाक्षविदुषा ArthS'ā. iii. 20. 10 (8. 3) = ManuBh. ii. 16. 24 (*on* 7. 52)

**अक्षविधान** ( akṣa–vidhāna ) *n.* (the art of) playing at dice, gambling चतुःषष्टिर्मूलकलाः…( तासामेका ) अक्षविधानम् JayaMa. 31. 21 (*on* 1. 3)

**अक्षविध्वंसन** ( akṣa–vidhvaṁsana ) *m.* slayer of Akṣa (Rāvaṇa's son) (i. e. Hanumat) नमः श्रीरामभक्ताय अक्षविध्वंसनाय च SkandP. iii(2). 37. 3.

[1]**अक्षविनोद** ( akṣa–vinoda ) *m.* the pastime of gambling तथैवाक्षविनोदैश्च शास्त्रास्त्रविनयेषु च।…रेमे MārkP. 20. 5; ( पार्थिवः ) कदाचिदाञ्जनेय इवाक्षविनोदमन्वतिष्ठत् NalaCam. 1. 39(22)

[2]**अक्षविनोद** ( akṣa–vinoda ) *m.* the killing of Akṣa (Rāvaṇa's son), NalaCam. 1. 39(22)

**अक्षविन्दुत्रिकद्वन्द्व** ( akṣavindutrika–dvandva ) *n.* a particular throw of dice in gambling wherein a pair of the threes is obtained, cf. **अक्षबिन्दुत्रिकद्वन्द्व** KalpaK. 213. 104.

**अक्षविन्दुत्रिकद्वय** ( akṣavindutrika–dvaya ) *n.* a particular throw of dice in gambling wherein a pair of the threes is obtained, cf. **अक्षबिन्दुत्रिकद्वय** KalpaK. 213. 104; MediK. 114. 17.

**अक्षविप्लव** ( akṣa–viplava ) *m.* a defect or disorder of the eye-sight or eye सर्पादिभ्रान्तिवचास्याः स्यादक्षविकृतावपि। निवृत्तिर्न निवर्तेत निवृत्तेऽप्यक्षविप्लवे PramāVār. 3. 297; सर्पादिभ्रान्तिवच्चेदमनष्टेऽप्यक्षविप्लवे। निवर्तेत मनोभ्रान्तेः स्पष्टं च प्रतिभासनात् TattvSaṁ. 1314.

**अक्षविभ्रंश** ( akṣa–vibhraṁśa ) *m.* paralysis of the sense-organs कुर्वते ते ( विकाराः ) ह्युपेक्षिताः…स्रोतोरोधाक्षविभ्रंशश्वासश्वयथुपाण्डुताः AṣṭāSaṁ. i. 19. 22 (1. 5)

**अक्षवियुत** ( akṣa–viyuta ) *adj.* deducted from the latitude तन्मध्यविलग्नाख्यं तस्माचापक्रमांशकाः क्रमशः। तैरक्षवियुतयुक्तैर्या ज्या मध्याभिधाना सा PañcSi. 9. 18.

**अक्षविलसद्वृद्धि** ( akṣa–vilasadvṛddhi ) *adj.* having well-developed temporal bones क्षीबाक्षः प्रियदर्शनोऽक्षविलसद्वृद्धिः…स एव जवनो यातस्तृतीयां दशाम् MātaLī. 5. 13.

**अक्षविवर** ( akṣa–vivara ) *n.* a cavity for an axle (in the wheel) or in a *Terminalia Bellerica* एवं मन्त्रद्वयं कोष्ठेष्वालिख्य…। जप्तं विनिक्षिपेदक्षविवरे चत्वरेऽथ वा TantrRā. 14. 78.

**अक्षविवर्त** ( akṣa–vivarta ) *m.* a turn or variety of dice गमो नाक्षविवर्ते स्यादपर्यालोचनेऽध्वनि MediK. 115. 10; S'abdaRaSaK. 223. 8.

**अक्षविशारद** ( akṣa–viśārada ) *adj.* skilful in dice-playing or gambling अयमक्षविशारदो। ध्रुवं विजयते दूरान्नलकुन्तीसुतौ BṛKathāS'loSaṁ. 23. 53.

**अक्षविशेषण** ( akṣa–viśeṣaṇa ) *n.* an attribute of the sense-organs यदक्षविशेषणं निर्दोषत्वमुक्तं तद्व्यवच्छेद्यं दर्शयितुमक्षमेदं तावदाह NyāySu.(Ja.) 257A. 5 (*on* ii. 1. 2)

**अक्षविश्लेषलव** ( akṣaviśleṣa–lava ) *m.* difference of the latitudes in degrees पुरान्तरं चेदिदमुत्तरं स्यात् तदक्षविश्लेषलवैस्तदा किम्। चक्रांशकैरित्यनुपातयुक्त्या युक्तं निरुक्तं परिधेः प्रमाणम् Golā. 182. 18 (21. 14)

**अक्षविषय** ( akṣa–viṣaya ) *m.* **i** an object of experience with the sense-organs एकैकमक्षविषयं भजताममीषां संपद्यते यदि कृतान्तगृहातिथित्वम्। पञ्चाक्षगोचररतस्य किमस्ति वाच्यमक्षार्थमित्यमलधीरधियस्त्यजन्ति SubhāRaSaṁ. 88; **ii** an object of the eyes ( = one appearing before the eyes) तं ( = कृष्णम् ) त्वागतम्…( मुनयः ) तेऽचक्षताक्षविषयं स्वसमाधिभाग्यम् BhāgP. iii. 15. 38.

**अक्षविषयत्व** ( akṣaviṣaya–tva ) *n.* the state of being an object of the sense-organs मनोमात्रपथेऽप्यक्षविषयत्वेन विभ्रमात्। स्पष्टावभासा भावानां सृष्टिः स्वप्नपदं मतम् ĪśvaPraSū. iii. 2. 16; किमिदं विषयस्य प्रत्यक्षत्वं नाम, किमक्षविषयत्वम् उताक्षजज्ञानविषयत्वमिति। तत्राक्षविषयत्वं तावदन्वयव्यतिरेकसमधिगम्यमेव, न प्रत्यक्षगम्यम् NyāyMañ. i. 29. 19.

**अक्षविस्तृत** ( akṣa–vistṛta ) *n.* the width of an axle पञ्चाङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात्। एकविंशाङ्गुलान्तं स्यान्नवधा चाक्षविस्तृतम् MānaSā. 43. 12.

**अक्षवीथी** ( akṣa–vīthī ) *f.* path or course along the latitude, the sun's passage between the Tropic of Cancer and the Tropic of Capricorn नागवीथ्यक्षवीथ्योश्च लक्षणं च प्रकीर्त्यते BrahmāṇḍP. i. 1. 77.

**अक्षवृक्ष** ( akṣa–vṛkṣa ) *m.* the tree *Eleocarpus Ganitrus* or *Terminalia Bellerica* सः … वह्नौ … हविर्महाज्ञालमक्षवृक्षसमित्समिद्धे जुहवांबभूव RāmC. App. ii. 38. 18; अक्षवृक्षस्थिताम्…सरेचण्डीम् Mānaso. ii. 13. 874; दधिपर्णोऽथ दूरादप्यक्षवृक्षमुदैक्षत MalliC. 6. 507; विघट्य निक्षिपेत् क्षारमेकैकं हि पलं पलम्। अर्जुनस्याक्षवृक्षस्य महाराजगिरेरपि RasRaSa. 5. 177; ViśvaPra. 7. 61; KośaKaTa. 2. 5379.

[1]**अक्षवृत्त** ( akṣá–vṛtta ) *n.* happening at dice उग्रंपश्ये राष्ट्रभृत् किल्बिषाणि यदक्षवृत्तमनु दत्तं न एतत् AV. vi. 118. 2; *adj.* engaged in or addicted to gambling [Apte]

[2]**अक्षवृत्त** ( akṣá–vṛtta ) *n.* **i** a small circle drawn around the *sama* i. e. the intersecting point between the prime vertical and the horizon, with a radius equal to the (degree of) latitude of a particular place एवमक्षांशकैर्वृत्तं समाख्यात् परितो न्यसेत्। समकीलकयोः प्रोतं तथा याम्योत्तरं चलम्। तत्तत्खेटोपरि न्यस्तं यैरंशैः खार्धतो नतम्। समवृत्तेऽक्षवृत्ते च तैरेव स्यान्नतं ध्रुवात् Golā. 226. 8 (26. 64); **ii** zodiacal circle [Apte]

**अक्षवृत्ति** ( akṣa–vṛtti ) *f.* faculty or function of the sense-organs न चाक्षवृत्तिजन्मजा न ( ज्ञान ) मेदाविवेकजाः। द्विचन्द्रादिभ्रमास्ते हि न प्रत्यक्षे न च स्मृते VibhraVi. 77.

**अक्षवृद्धि** ( akṣa–vṛddhi ) *f.* increment by one *akṣa* or *karṣa* measure प्राग्दानमाद्ये द्विपलं पलार्धवृद्धिर्द्वितीये पलमक्षवृद्धिः SiddhYo. 75. 12.

**अक्षवेदितृ** ( akṣa–veditṛ ) *adj.* conversant in the game of dice तस्य तस्येह ते वध्या येषां ज्येष्ठोऽक्षदेविता ( v. l. अक्षवेदिता ) MahāBhā. iv. 15. 35.

**अक्षवेदिन्** ( akṣa–vedin ) *adj.* conversant in the game of dice अनक्षज्ञं च धर्मज्ञं सौबलेनाक्षवेदिना। निकृत्या यत्पराजैषीस्तस्मादसि हतो रणे MahāBhā. ix. 60. 44; द्विरभ्यस्ताः पतन्त्यक्षा ग्लहे यद्यक्षवेदिनः। जयं तस्यापरस्याहुः कितवस्य पराजयम् NāraSm. 214. 3; सह दीव्य मयाक्षवेदिना Nalābhyu. 7. 14.

**अक्षवेदी** ( akṣa–vedī ) *f.* the dice-board (i. e. game of dice) यदाश्रौषम् …युधिष्ठिरं पराजितं सौबलेनाक्षवत्याम् ( v. l. अक्षवेद्याम् ) MahāBhā. i. 1. 105.

**अक्षवेद्य** ( akṣa–vedya ) *adj.* perceptible to the sense-organs अतः स्वविवक्षायापि नाक्षवेद्यम् IṣṭaSi. 346. 18; प्रत्येकं ह्यक्षवेद्यं प्रतिनियततया सर्वलोक–

प्रसिद्धम् TattvMu. 4. 37.

**अक्षवेध** ( akṣa-vedha ) *m.* a hole or perforation in an axle or axle-like part (for fixing the pin) लकटे विस्तृतायती । अक्षाभ्यां योजयेत् सम्यग् दृढं बाह्वक्षवेधयोः SamarāSū. 17. 40.

**अक्षवेला** ( akṣa-velā ) *f.* a place near the axle युवं तमिन्द्रापर्वतेत्यक्षवेलायां जपित्वा S'āṅkhāS'S. x. 21. 14 ( comm. तदुद्देश इत्यर्थः )

**अक्षवैरिन्** ( akṣa-vairin ) *m.* an enemy in the form of sense-organs जयन्ति ये धृतिबलतोऽक्षवैरिणं भवन्तु ते यतिवृषभा मुदे मम SubhāRaSaṁ. 681.

**अक्षव्यक्ति** ( akṣa-vyakti ) *f.* manifestation of the sense-organs (either in a group or individually) अक्षव्यक्तिविप्रतीत्यास्पदत्वं याता सर्वा तावकी तावकीव SaṁkṣeS'ā. 3. 71 (ii. 190. 8) ( comm. विप्रतिपन्नमिन्द्रियसमुदायमेकैकं चक्षुरादिकं वाभिप्रेत्याक्षव्यक्तिरित्युक्तम् )

**अक्षव्यपदेश** ( akṣa-vyapadeśa ) *m.* the designation or name of sense-organ समीक्ष्य गमकत्वं हि व्यपदेशो न गृह्यते । तच्चाक्षव्यपदेशेऽस्ति तद्धर्मश्च नियोज्यताम्( ? °ता ) PramāVār. 3. 192; ( मनः ) तन्निबद्ध( = चक्षुर्निबद्ध )मक्षव्यपदेशं लभते Kāśi. i. 259. 12 (*on* 4. 135)

**अक्षव्यसनज** ( akṣavyasana-ja ) *adj.* [ *f.* -ā ] born of or arising from passion for gambling कथमक्षव्यसनजा बुद्धिरापतिता तव MahāBhā. iii. 31. 18.

**अक्षव्याज** ( akṣa-vyāja ) *m.* fraud in gambling अक्षव्याजजिता वनं वनमृगैर्यत् पाण्डवाः संश्रिताः ŪruBha. 1. 63; अक्षव्याजैर्विविधैर्गणनाहस्तादिलाघवैर्निपुणाः । धूर्ताश्चरन्ति…विदेशेषु KalāVi. 9. 26.

**अक्षव्यापार** ( akṣa-vyāpāra ) *m.* operation of the sense-organs (especially of the eye) यदि साक्षात् पारम्पर्येण वाक्षव्यापारस्तत्रास्ति तदा यौगिकोऽयं प्रत्यक्षशब्दस्तत्र भविष्यति TātpaṬ.( U.) 153. 17 (*on* 4. 130); सुषुप्तो निमीलिताक्षो मूर्च्छितश्च भ्रमेदित्यक्षव्यापारं विनापि दोषादेव भ्रमसिद्धेः ' दुष्टाक्षः सर्वदृक् सदा ' इत्युक्तं युक्तमेव IṣṭaSi. 282. 3; अक्षव्यापारमन्तरेणाप्यपरोक्ष आकाशे बाला अयथार्थदर्शिनस्तलमिन्द्रनीलतमालपत्रसदृशं मलिनताञ्च धूमादिकमन्यच … अध्यस्यन्ति PañcPā. 29. 25 (*on* i. 1. 1); स ( अभावः ) च दृश्यानुपलब्ध्यैव गम्यते अक्षव्यापारस्याधिकरणग्रहणोपक्षीणत्वादिति केचित् NyāyVārPari. 489. 1; विनाक्षव्यापारमपरोक्षावभासः स्यात् S'āstrDī. 38. 6 (*on* i. 1. 4); विनाप्यक्षव्यापारममिलापमात्रेणापरोक्षावभासः स्यात् YuktiSneha. 38. 27 (*on* i. 1. 4)

**अक्षव्यापारजन्मन्** ( akṣavyāpāra-janman ) *adj.* born of or arising from the function of the sense-organs अक्षव्यापारजन्मानौ स्तः संशयविपर्ययौ NyāyMañ. i. 85. 20.

**अक्षव्यापारसद्भाव** ( akṣavyāpāra-sadbhāva ) *m.* presence of the function or operation of the sense-organs ननु च प्रत्यभिज्ञानं स एवेत्युपजायते । अक्षव्यापारसद्भावे निष्प्रकम्पमबाधितम् TattvSaṁ. 444; प्रत्यक्षतः प्रसिद्धास्तु सत्त्वगोत्वादिजातयः । अक्षव्यापारसद्भावे सदादिप्रत्ययोदयात् TattvSaṁ. 714; 1530.

**अक्षव्यापारानुपरम** ( akṣavyāpārānuparama ) *m.* non-cessation ( = continuation) of the function or operation of the sense-organs एवमक्षव्यापारानुपरमात् प्रत्यक्षत्वमुक्तम् NyāyRa. 175. 10 (*on* 4. 130)

**अक्षव्यापृति** ( akṣa-vyāpṛti ) *f.* operation of the sense-organs तत्संकेतमनस्कारात्सदादिप्रत्यया इमे । जायमानास्तु लक्ष्यन्ते नाक्षव्यापृत्यनन्तरम् TattvSaṁ. 729.

**अक्षव्यूह** ( akṣa-vyūha ) *m.* a kind of military array (in which the army is divided into three parts – one in the front, the other in the rear and the third divided on the two sides of the king) (" सूच्या वज्रेण चैवैतान् व्यूहेन व्यूह्य योधयेत् ") अक्षव्यूहमेदोऽग्रतः पृष्ठतश्च त्रिधा व्यवस्थितः पार्श्वयोर्भेदनम् ManuBh. ii. 57. 9 (*on* 7. 191)

**अक्षशक्ति** ( akṣa-śakti ) *f.* power of the sense-organs मन्त्रतन्त्रादिसामर्थ्याद् गुडादौ विषशक्तयः । तथैव कर्मसामर्थ्यादन्यदेहेऽक्षशक्तयः PramāVāBh. 56. 17.

**अक्षशब्द** ( akṣa-śabda ) *m.* the (rattling) sound made by the axle (of a cart) स्याच्चेदक्षशब्दः सुवागित्यनुमन्त्रयेत ĀpaS'S. xi. 6. 12; अक्रन्ददग्निरित्यक्षशब्दमनुमन्त्रयते ĀpaS'S. xvi. 12. 7.

**अक्षशब्दवत्** ( akṣaśabda-vat ) *adv.* as in the case of the word *akṣa* (i. e. the use of a word in several meanings) भूतत्वं भूतशब्दवाच्यत्वमेकनिमित्तमन्तरेणानेकेषु पृथिव्यादिष्वेकशब्दप्रवृत्तिरक्षशब्दवत् NyāyKa. 22. 26; न चायं सत्यशब्दः संवृतिपरमार्थयोः साधारणोऽक्षशब्दवत् YuktiSneha. 50. 30 (*on* i. 1. 5); साधारणं हि नामैकं भविष्यत्यक्षशब्दवत् BālaKrī. i. 15. 11 (*on* 1. 7)

**अक्षशब्दाकार** ( akṣaśabdākāra ) *adj.* [ *f.* -ā ] having the form of the word *akṣa* भवत्वनक्षनिवृत्तिरूपा प्रतिपत्तिः अक्षशब्दाकारा तु न प्राप्नोति TātpaṬ. ( U. ) 166. 23 (*on* 4. 187)

**अक्षशब्दार्थवत्** ( akṣaśabdārtha-vat ) *adv.* as in the case of the meanings of the word *akṣa* (i. e. several meanings being expressed by the same word) यत्रैकोऽधिकरणार्थो नोपपद्यते तत्राक्षशब्दार्थवद्भिन्न एवास्तु Khaṇḍan-Khā. 1101. 16.

**अक्षशब्दार्थविज्ञान** ( akṣaśabdārtha-vijñāna ) *n.* knowledge of the object (of cognition) through perception and verbal testimony अक्षशब्दार्थविज्ञानमविसंवादतः समम् । अस्पष्टं शब्दविज्ञानं प्रमाणमनुमानवत् Laghīya. 1. 46.

**अक्षशाक** ( akṣa-śāka ) *m.* *Feronia Elephantum* (i. e. *kapittha*) कपित्थोऽथ दधित्थस्तु…। अक्षसस्यो ( v. l. अक्षशाको ) दधिफलश्चिरपाकी कपिप्रियः DhanvNi. 90. 21.

**अक्षशाला** ( akṣa-śālā ) *f.* a workshop for the manufacture of gold and silver articles अक्षशालायां सुवर्णाध्यक्षः ArthS'ā. i. 6. 4 (1. 1); सुवर्णाध्यक्षः सुवर्णरजतकर्मान्तानामसंबन्धावेशनचतुःशालामेकद्वारामक्षशालां कारयेत् ArthS'ā. i. 210. 2 (2. 13); i. 219. 6 (2. 13); ii. 159. 3 (4. 9)

**अक्षशालिक** ( akṣaśālika ) *m.* 1 owner or manager of a gambling house °तलाराक्षशालिकनियोगिग्रामकूटवार्द्धुषिका हि राष्ट्रस्य कण्टकाः NītiVā. 8. 21; अटव्यां किलान्धकूपे पतितेषु कपिसर्पसिंहाक्षशालिकसौवर्णिकेषु कृतोपकारः कंकायननामा कश्चित्पान्थो विशालायां पुरि तस्मादक्षशालिकाद्व्यापदमवाप NītiVā. 23. 11; 2 an officer in charge of the workshop of precious metals (उ ?)त्कीर्णञ्चाक्षशा( लि )कदुर्गदेवेन( ? ) EI. xviii. 295. 40; xviii. 296. 36.

**अक्षशालिन्** ( akṣaśālin ) *m.* an officer in charge of the workshop of precious metals उत्कीण( र्णं ) चाक्षसा( शा )लि( कु )मारचन्द्रेन( ण ) ताम्र( म्र )-शाश(स)नम् EI. xviii. 298. 29; उत्किर्ण( उत्कीर्णं ) चाक्षशा( ? )लिना( ? )श्रीसा( ? ) मन्तखण्डि( मलेपा ) ( ? मल्लेन ) EI. xviii. 313. 31. cf. **अक्षसालिन्**.

**अक्षशिक्षा** ( akṣa-śikṣā ) *f.* instruction in gambling शकुनौ शिक्षयत्यक्षशिक्षाम् BālBhā. 2. 46.

**अक्षशिञ्जिनी** ( akṣa-śiñjinī ) *f.* the sine of the latitude अग्रानृतलयोर्योगः समदिक्त्वेऽन्यथान्तरम् । तत्रिज्यावर्गविश्लेषपदभक्ताक्षशिञ्जिनी Golā. 226. 14 (26. 67)

**अक्षशिरस्** ( akṣa-śiras ) *n.* 1 the end or top of an axle पूर्वया द्वारा हविर्धाने प्रपद्य दक्षिणस्य हविर्धानस्य प्रागुदगुत्तरस्याक्षशिरसस्तृणं निरस्य राजानमभिमुखोऽवतिष्ठते ĀśvaS'S. I. v. 12. 3; 2 the head of Akṣa (Rāvaṇa's son) त्वां हन्तुमुद्यतवतो दशकन्धरस्य न्यस्तं करे निभृतमक्षशिरो मयैव PrasaRā. 6. 41.

**अक्षशिला** ( akṣa-śilā ) *f.* [ a word included in the मध्वादिगण ] name of a town(?) S'ākaṭāVyā. ii. 4. 196; SiddhaHe. vi. 2. 73; GaṇRa. 4. 300(339)

**अक्षशिष्य** ( akṣa-śiṣya ) *adj.* disciple of Akṣa रामं यो जितवान्संख्ये भार्गवं सुमहाबलम् ।…अक्षशिष्यं महाबाहुमजेयं दैवतैरपि MahāBhā. iv. 1109*. 3.

**अक्षशील** ( akṣa-śīla ) *adj.* given to gambling, a habitual gambler षष्ठेऽध्वशीलोऽक्षशीलश्च ĀpaDS. ii (7). 16. 13 = HirS'S. xxvii. 5. 13.

**अक्षशूल** ( akṣa-śūla ) *adj.* whose eye is a spear, who has a spear of *akṣa* wood, who has an axle as his spear कालकालमम्बुजाक्षमक्षशूलमक्षरम् । काशिकापुराधिनाथकालभैरवं भजे KālabhaiA. 2.

**अक्षशोभित** ( akṣa-śobhita ) *adj.* equipped with an axle व्यूहकादयः । त्रिद्व्येका नाभिसंसक्तास्तद्वन्नेमिविभूषिताः । प्रधिभिश्चावृतास्सर्वे प्रतिमिश्चाक्षशोभिता ( ? °ताः ) PauṣkS. 8. 11.

**अक्षशौण्ड** ( akṣa-śauṇḍa ) *m.* a skilful gambler विभक्तिस्वरस्यावकाशः । अक्षशौण्डः MahāBh. iii. 130. 18 (*on* vi. 2. 52); JaineVyā. 46. 22 (*on* i. 3. 1); 52. 15 (*on* i. 3. 35); CāndraVyā. ii. 2. 16; v. 2. 11; प्रथमया विभक्त्या यन्निर्दिश्यते समासशास्त्रे तदुपसर्जनं भवति … सप्तमीसमासे सप्तमीति … अक्षशौण्डः KāśiVṛ. *on* P. i. 2. 43; सप्तम्यन्तं शौण्डादिभिः सह समस्यते तत्पुरुषश्च समासो भवति । अक्षेषु शौण्डोऽक्षशौण्डः KāśiVṛ. ii. 1. 40; KātanVṛ. ii. 5. 8; AgniP. 354. 7; GaṇRa. 2. 101 (144); PrakriKau. i. 511. 4; SiddhāKau. 174A. 8; एवञ्च क्रियान्वयोऽप्यस्य कर्त्रोचन्वयद्वारैव । यस्य यद्द्वारा कारकत्वं तस्य तद्द्वारैव क्रियान्वय इति व्युत्पत्तेः । अत एव अक्षशौण्ड इत्यादौ समासः LaS'abdeS'e. i. 517. 9.

**अक्षश्रवण** ( akṣa-śravaṇa ) *n.* hypotenuse, cf. **अक्षकर्ण**, तैः क्रान्तिपाताढ्यरवेर्भुजज्या षष्ट्युद्धृताक्षश्रवणेन युक्ता । दिग्घ्नी कृताग्रा भवतीह यष्टिः Golā. 238. 12 (29. 24)

**अक्षश्रवणघ्नी** ( akṣaśravaṇa-ghnī ) *adj.* ( *f.* ) multiplied by the hypotenuse (of the triangle formed by the gnomon and its shadow) गज्याक्षश्रवणघ्नी कुज्योद्वृत्तश्रवोनिघ्नी । तद्भृत्या समकर्णो हृत्वा भक्ता द्युखण्डकर्णो वा ĀryaSi. 4. 17 (73)

**अक्षश्रवस्** ( akṣa-śravas ) *n.* the hypotenuse of the triangle with the gnomon (of 12 *aṅgulas*) as one side and the equinoctial shadow (determined from the given latitude of the particular place) as the other, cf.

अक्षकर्ण, रविगुणमक्षश्रवसा भक्तं तच्चापमक्षांशाः Golā. 258. 10(31. 27)

**अक्षश्रोतस्** ( akṣa-śrotas ) *n.* nave of the axle (of a wheel) अक्षश्रोतःप्रमाणा गन्त्रीचक्रनाभिच्छिद्रप्रमाणा मात्रा यस्य तत्तथा AupaSūṬ. 191. 4.

**अक्षसंयोग** ( akṣa-saṁyoga ) *m.* contact of the sense-organs (with the object of perception) अनीश्वरपक्षे चाक्षसंयोगादिभिरेव सव्यापारे कर्मण्यपि प्रसङ्गात् KhaṇḍanKhā. 521. 20 किं च निरुपचरितेऽनवच्छेदेऽप्यक्षसंयोगोऽप्यभागी PrakaVi. 566. 5; 962. 13; परोक्षज्ञानहेतुरपि शब्दः···सहकारिणानुगृहीतोऽपरोक्षज्ञानमुत्पादयति ···पूर्वानुभवसंस्कारसहित इवाक्षसंयोगोऽभिज्ञातिरिक्तां प्रत्यभिज्ञाम् PrakaVi. 964. 21.

**अक्षसंवेद्य** ( akṣa-saṁvedya ) *adj.* cognizable through (direct) sense-perception तदलं क्षितितोयाग्निमरुतां परिणामजे । चेतोवत्यक्षसंवेद्ये कष्टकल्पनयानया BrĀraUBhVā. iv. 3. 155.

**अक्षसंसद्** ( akṣa-saṁsad ) *f.* gambling session अक्षसंसदि जितापि मृगाक्षी माधवेन परिरम्भपणेन UjjvaNīMa. 434. 5.

**अक्षसंस्तुति** ( akṣa-saṁstuti ) *f.* hymn of dice (ṚV. x. 34) प्रतिषेधोप देशौ तु अक्षैर्मेत्यक्षसंस्तुतौ BṛDe. 1. 52.

**अक्षसंहति** ( akṣa-saṁhati ) *f.* the aggregate of sense-organs तदवस्त्वभिधेयत्वात् साफल्यादक्ष [संहतेः] । नामादिवचने वक्तृश्रोतृवाच्यानुबन्धिनि PramāVār. 3. 11; एवं तर्हि नामादिरूपं भविष्यति । नाक्षसंहतेर्वैफल्यात् PramāVāBh. 192. 26.

**अक्षसक्त** ( akṣa-sakta ) *adj.* addicted to gambling (a variety of drunkard) त्रयो मद्यासक्ते । अक्षेषु द्यूतेषु सक्तः अक्षसक्तः Amarakīrti *on* NāmMā. 122.

**अक्षसङ्गम्** ( akṣa-saṅgám ) *adv.* so that it should touch the axle (वृक्षं) यदक्षसङ्गं वृश्चेदध ईषं यजमानस्य प्रमायुकः स्यात् TaiS. VI. iii. 3. 4; यदक्षसङ्गं स्थाणुमुच्छिन्द्येत् MaiS. iii. 9. 2.

**अक्षसंगुण** ( akṣa-saṅguṇa ) *adj.* [*f.* -ā] multiplied by the sine of the latitude मध्यतिथ्यन्तरासूनामुत्क्रमज्याक्षसंगुणा विष्कम्भार्धेन हर्तव्या MaBhāsk. 5. 42.

[1]**अक्षसंघात** ( akṣa-saṅghāta ) *m.* group or collection of sense-organs कारणं नाक्षसङ्घातः NyāyVi. 2. 248; अङ्कितान्यक्षसङ्घातैः सरोगाणि सदैव हि । शरीरिणां शरीराणि कमलानि न संशयः RasGaṅ. 194. 5.

[2]**अक्षसंघात** (akṣa-saṅghāta) *m.* cluster of lotus seeds, RasGaṅ. 194. 5.

**अक्षसंचारिन्** ( akṣa-sañcārin ) *adj.* moving with an axle (i. e. chariot) निर्ययौ च कृते तस्मिन् रन्ध्रसंचारिणारिणा ( v. l. अक्षसंचारिणारिणा ) KīcaVa. 4. 12

**अक्षसंतर्जन** ( akṣa-santarjana ) *n.* a kind of weapon (axle of a chariot used as a weapon?) cf. **अक्षसम,** काकुदीकं शुकं नाकमक्षिसंतर्जनं (v. l. अक्षसंतर्जनम्) तथा ।···एतैर्विद्धाः सर्व एव मरणं यान्ति मानवाः MahāBhā. v. 94. 38 *m.* name of a soldier in the army of Skanda (स्कन्दस्य सैनिकाः) अक्षसंतर्जनो राजन्कुनदीकस्तमोभ्रकृत् MahāBhā. ix. 44. 53.

**अक्षसंनिकर्ष** ( akṣa-sannikarṣa ) *m.* contact of the sense-organ (with the object of perception) न च समीचीनसंवेदनसाधनादक्षसंनिकर्षादन्यथावभासो युक्तः NyāyMa. 60. 3; नापि तदन्यत्र सत्···अक्षसंनिकर्षापकर्षेण परोक्षतापातात् PrakaVi. 9. 4; 9. 5; VedāntKa. 509. 19; नाक्षसंनिकर्षहीनस्य प्रत्यक्षत्वम् MānaMe. 193. 7.

**अक्षसंनिपात** ( akṣa-sannipāta ) *m.* contact of the sense-organ (with the object of perception) प्रतीमो हि वयमक्षसंनिपातानन्तरम्···आलोचनज्ञानम् ŚāstrDī. 40. 1 (*on* i. 1. 4)

[1]**अक्षसम** ( akṣa-sama ) *adj.* resembling the axle (of a chariot) तस्याप्यक्षसमा बाणाः MahāBhā. vii. 151. 17.

[2]**अक्षसम** ( akṣa-sama ) *adj.* measuring or weighing one *akṣa* (i. e. one *karṣa* = 16 *māṣas*) °शङ्खिनीत्रिफलाविडङ्गानामक्षसमा भागाः SuśruS. iv. 4. 27; दशैतानि समांशानि श्लक्ष्णान्यक्षसमानि च BhelaS. 123. 16 (6. 2); पिबेद्रसेनामलकस्य चापि कल्कीकृतान्यक्षसमानि काले CaraS. vi. 6. 36 (1941 Ed.); vi. 26. 88; (1941 Ed.) दशमूलाढके प्रस्थं घृतस्याक्षसमैः पचेत् AṣṭāSaṁ. ii. 23. 10 (4. 4) = SiddhYo. 11. 35; दशमूलीकषायेण विश्वमक्षसमं पिबेत् SiddhYo. 2. 20; 22. 131; 35. 19; तुल्यक्षीरं पचेदेतैर्घृतमक्षसमैर्भिषक् KāśyaS. 113B. 39.

**अक्षसमक्षम्** ( akṣa-samakṣam) *adv.* present to the eye स्वप्ने वाक्षसमक्षं वा आश्चर्यमतिहर्षदम् । अकस्मादपि जायेत नाख्यातव्यं गुरोर्विना JayāS. 16. 327.

**अक्षसमन्वित** ( akṣa-samanvita ) *adj.* measured in *akṣa* अष्टाविंशतिभिः कल्कैरेतैरक्षसमन्वितैः । चतुर्गुणे जले सम्यग्घृतप्रस्थं विपाचयेत् CaraS. vi. 9. 37 (1941 Ed.); SiddhYo. 1. 258.

**अक्षसमांश** ( akṣa-samāṁśa ) *adj.* having a quantity equal to one *akṣa* (in weight) कल्कैरक्षसमांशैर्मञ्जिष्ठालोध्रमधुकानाम् ।···सिद्धं भिषग्विदध्यात SiddhYo. 58. 89.

**अक्षसमायुक्त** ( akṣa-samāyukta ) *adj.* mixed with *akṣa* एतदक्षसमायुक्तं पीत्वा साधु विरिच्यते BhelaS. 239. 11.

**अक्षसमिध्** ( akṣa-samidh ) *f.* stick of the plant *Terminalia Bellerica* जुहुयादक्षसमिद्भिः ĪśānŚiPa. i. 19. 91.

**अक्षसमुद्भव** ( akṣa-samudbhava ) *adj.* [*f.* -ā] arising from the sense-organs तत्प्रतिभासिन श्चाभिन्नरूपस्यालीकत्वेऽक्षसमुद्भवामपि वृत्तिमनुभवतोऽस्य ···कुतः प्रत्यक्षता HetuBiṬ. 85. 26.

**अक्षसंपात** ( akṣa-sampāta ) *m.* a glance तस्मात्पूर्वाक्षिसंपाते तुल्यत्वमवगम्यते ŚṛṅgāPra. 189. 5.

**अक्षसंप्रदाय** ( akṣa-sampradāya ) *m.* (skill acquired through) the tradition of dice अहं तु तव च तेषां च परस्परं विभवे परिपणनपदाधिरोहिणि क्षणादक्षममाणेन जगत्सामान्यतामक्षसंप्रदायेन तं पराजयघण्टापथे संचारयिष्यामि BhārCam. 4. 23(2) (comm. अक्षविद्यायाः संप्रदायेन शिक्षानैपुण्येन )

[1]**अक्षसंबन्ध** ( akṣa-sambandha ) *m.* contact with the sense-organs आलोचनाक्षसंबन्धविशेषणधियामतः । नेष्टं प्रामाण्यमेतेषां व्यवधानात् क्रियां प्रति PramāVār. 3. 310; अप्रत्यक्षोऽक्षसंबन्धो दूरस्थः शक्तिरूह्यते ŚivDr. 6. 83; सोऽक्षसंबन्धः आनुमानिक एव Kāśi. i. 290. 14(4. 251); TārkiRa. 143. 1; शब्दो द्रव्यं साक्षादक्षसंबन्धसाक्षात्कार्यत्वात् MānaMe. 219. 2.

[2]**अक्षसंबन्ध** ( akṣa-sambandha ) *adj.* related to (i. e. played with) dice. अक्षसंबन्धे देवने ग्रहेग्लहो नित्यं निपात्यः Prasā. ii. 657. 23.

**अक्षसंबन्धफल** ( akṣasambandha-phala ) *n.* the result arising from the contact of sense-organ यत्राक्षसंबन्धफलानुसारः ŚlokaVār. 4. 254 (207. 4); अतोऽक्षसंबन्धफलानुसारात् प्रत्यक्षो वायुरिति निश्चीयते Kāśi. iii. 65. 11 (*on* 5(4). 93); iii. 101. 26 (*on* 5(5). 1); यत्र गोत्वेऽक्षसंबन्धफलमापरोक्ष्यं तत्प्रत्यक्षम् NyāyRa. 207. 11 (*on* 4. 254)

**अक्षसंबन्धहीनात्मन्** ( akṣasambandhahīnātman ) *adj.* lacking in sense-contact अक्षसंबन्धहीनात्मस्वात्मप्रत्यक्षतार्थिनः । प्रत्यक्षशब्दव्युत्पत्तिः कथङ्कारं भवेद्गुरोः MānaMe. 193. 4.

[1]**अक्षसंबन्धिन्** ( akṣasambandh-in ) *adj.* related to the sense-organs तज्जात्याधारभावाद्युगपदखिलमप्यक्षसंबन्धि तत्र TattvMu. 4. 47.

[2]**अक्षसंबन्धिन्** ( akṣasambandh-in ) *adj.* [*f.* -ī] associated with *akṣa* (axle) अक्षसंबन्धिनी या धूस्तदन्तस्य (डच्) न भवति KāśiVṛ. *on* P. v. 4. 74; LaŚabdeŚe. ii. 155. 8; Prasā. i. 645. 11.

**अक्षसंभव** ( akṣa-sambhava ) *adj.* born of (i. e. played with) dice दीव्यतोरनयोर्द्यूते दम्पत्योरक्षसंभवे ।···अंशुमत्या जिते कान्ते BṛKathāK. 134. 43.

[1]**अक्षसंमित** ( akṣa-sammita ) *adj.* A measuring one *akṣa* (i. e. *karṣa*) नागरम्···पाययेताक्षसंमितम् SuśruS. vi. 39. 208; सह तालकदम्बेन कल्कांस्तानक्षसम्मितान् । तस्मिन्नालोड्य तत्सर्वं विपचेन्मृदुनाग्निना BhelaS. 130. 4 (6. 4); B of the size of either the seed of *Eleocarpus Ganitrus* or *Terminalia Bellerica* कुर्वीत मोदकानक्षसंमितांस्तेऽपि तद्गुणाः AṣṭāSaṁ. ii. 41. 5 (4. 7)

[2]**अक्षसंमित** ( akṣa-sammita ) *adj.* [*f.* -ā] of the size of an axle रथमात्री निरूढपशुबन्धस्य वेदिः । अक्षसंमिता पश्चात्तिर्यक् ĀpaŚS. vii. 3. 8.

**अक्षसर** ( akṣa-sara ) *m.* a rosary of beads तस्याङ्गना तु गीर्देवी··· तद्वाहने तु मञ्जीरस्तदक्षसर ईक्षणम् NāmaMāli. 67.

**अक्षसरक** ( akṣasaraka ) *m.* (?) name of a district in Gujrat region अस्तु वस्संविदितं यथा हस्तवप्राहरण्यामक्षसरकप्रापीयहरियानकग्रामे ··· अत्रैव वास्तव्यब्राह्मणधम्मिलाय···ब्रह्मदायोऽतिसृष्टः EI. iii. 320. 12; अस्तु वस्संविदितं यथा मया हस्तवप्रहरण्यामक्षसरकप्रावेश्यज्येष्ठानकग्रामे···ब्रह्मदेयं निसृष्ट(?ष्ट)म् EI. xvii. 107. 12.

**अक्षसरकप्रापीय** ( akṣasaraka-prāpīya ) *adj.* having the revenue (collected) like that of Akṣasaraka अस्तु वस्संविदितं यथा हस्तवप्रहरण्यामक्षसरकप्रापीयहरियानकग्रामे ··· अत्रैववास्तव्यब्राह्मणधम्मिलाय···ब्रह्मदायोऽतिसृष्टः EI. iii. 320. 12 cf. **अक्षसरकप्रावेश्य**.

**अक्षसरकप्रावेश्य** (akṣasaraka-prāveśya) *adj.* belonging to a subdivision of a district (*prāveśa*) named Akṣasaraka अस्तु वस्संविदितं यथा मया हस्तवप्रहरण्यामक्षसरकप्रावेश्यज्येष्ठानकग्रामे···ब्रह्मदेयं निसृष्ट(?ष्ट)म् EI. xvii. 107. 12.

**अक्षसस्य** ( akṣasasya ) *n.* the tree *Feronia Elephantum* (*kapittha*) कपित्थोऽथ दधित्थस्तु··· । अक्षसस्योदधिफलश्चिरपाकी कपिप्रियः DhanvNi. 90. 21

**अक्षसहकारिन्** ( akṣa-sahakārin ) *adj.* helpful to the sense-organ (i. e. the eye) यदवगमोऽक्षसहकारी वाच्यः KhaṇḍanKhā. 1219. 9.

**अक्षसहित** ( akṣa-sahita ) *adj.* A possessed of sense-organs अथ सर्वे प्रत्यक्षं भवति···अस्य भगवतः परोक्षं किमपि नास्ति । किंविशिष्टस्य । स्पर्शरसगन्धवर्णशब्दपरिच्छित्तिरूपसर्वेन्द्रियगुणसमृद्धस्य, तर्हि किमक्षसहितस्य । नैवम् । अक्षातीतस्य TātpaVṛ. 31. 15; B accompanied by the sense-organ केवलवाक्य-

indicating the eye-lids) अक्षिरेखां(? खाः) समालिख्य ··· सौरमन्त्रं समुच्चरेत् MānaSā. 70. 35.

**अक्षिरोग** (akṣi-roga) *m.* disease of the eye द्वंद्वमेति च निर्द्वंद्वस्तासु तास्विह योनिषु । शीर्षरोगेऽक्षिरोगे च MahāBhā. xii. 292. 5; अक्षिरोगानपस्मारान् ···विनिर्दिशेत् BhelaS. 42. 11 (1. 26); चत्वारोऽक्षिरोगाः CaraS. i. 19. 4 (1941 Ed.); तेन खलु समयेनान्यतमस्य भिक्षोरक्षिरोगः प्रादुर्भूतः GiMs. iii(1). viii. 5; सौर्योऽक्ष्यामये । अक्षिरोगे KātyS'S. (comm.) xx. 3. 14; मुखरोगाक्षिरोगैश्च···बाध्यते MārkP. 15. 35; तथाक्षिरोगातीसारकुष्ठाङ्गामयसंज्ञितैः । भिद्यते देहजस्तापः ViṣṇuP. vi. 5. 4; i. 17. 88; स्नानं वर्ज्यम्···आध्मानाजीर्णाक्षिरोगेषु सम्यक् KalyāKā. 6. 13; तमक्षिरोगं गम्भीरिकेति प्रवदन्ति तज्ज्ञाः RugVi. 59. 62; 59. 27; पिङ्गला अक्षिरोगेण मण्डलाक्षी कपिलपिङ्गलाक्षी वा ManuBh. i. 211. 10 (*on* 3. 8); प्लीहाक्षिरोगपवनाश्मरिकुष्ठमेहान् हन्याद्रसायनमिदम् SiddhYo. 74. 14; 61. 3; 61. 5; 69. 29; हृद्रोगाश्चाक्षिरोगाश्च···। एते चान्ये च बहवः···। व्याधयः संप्रकुप्यन्ति KāśyaS. 97B. 17; 185A. 19; 320B. 9; संग्रहस्त्वक्षिरोगाणामत ऊर्ध्वं प्रचक्षते(? प्रचक्ष्यते) Hastyāyur. 33. 19 (1. 4); 151. 17 (1. 18); 580. 10 (4. 3); गुल्मशूलाक्षिरोगाणां नित्यं नाशकरी तथा (विद्या) SkandP. i(2). 62. 59; v(3). 190. 25; मन्त्रस्मृतेरक्षिरोगशिरोरोगादि नश्यति AgniP. 137. 7; अक्षिरोगान्कुक्षिरोगान्···त्वरन्तामिति तानुक्त्वा जगाम त्वरितो यमः BrahmP. 94. 17; 233. 4; गंडमालाक्षिरोगैश्च ··· आस्थाने संभृतो भाति यमः BhaviP. 732B. 21 (iv. 89. 9); नाक्षिरोगः शिरोर्तिर्वा PadmP. v. 29. 94; द्वितीयत्रितये बालं सुनन्दा नाम बाधते । चेष्टा तस्याक्षिरोगश्च सङ्कोचो हस्तपादयोः ĪśānS'iPa. i. 41. 16; i. 41. 25; (मृद्वीकारिष्टः) अक्षिरोगशिरोरोगगलरोगांश्च नाशयेत् S'ārṅgaS. ii. 10. 44; iii. 8. 30; AnekāSaṁ. 2. 55; ViśvaPra. 129. 51; एभिर्विरचिता वर्त्तिश्चूर्णमाश्चोतनं तथा । सर्वेषामक्षिरोगाणां शस्यते सामजन्मनाम् Mānaso. ii. 6. 670; AnekāK. 682; NānārthSaṁ. 26. 37; अक्षिरोगादिकं चापि (तालुकण्टकेन भवति) RasRaSa. 22. 140; कश्चिदक्षिरोगेणाज्यमवेक्षितुमसमर्थः NyāyMāVi. 308. 21 (*on* vi. 1. 9); शिरोऽक्षिरोगज्वरादिकं शारीरकम् VedāntRaMañ. 4. 10 (143. 22); NānārthaMa. 1454; S'abdaRa. (Vā.) 4027; घृताभ्यङ्गेन नित्यशः । अक्षिरोगा न जायन्ते···दन्तिनाम् MātaLī. 11. 20; मूत्राघातास्रपित्तश्रवणगलशिरःश्रोणिशूलाक्षिरोगाः BhāvPra.(Bhā.) 6(2). 12; 6(3). 29; ViśvaLoK. 291. 84; KośaKaTa. 2. 5747; 2. 7742; मूत्राघातोदरार्शःश्वयथुगलशिरःकर्णशङ्खाक्षिरोगाः । ···तांस्तानभ्यासयोगादपहरति पयः पीतमन्ते निशायाः BhojanKu. 190. 13; S'abdaRaSaK. 178. 2; ParyāMu. 23. 213; मुखरोगोऽक्षिरोगश्च शिरोरोगश्च लिङ्गितः AśvaVai. 28. 1; DharK. 381; 1593; 2219; 2352.

**अक्षिरोग** (akṣi-roga) *adj.* [cf. अक्षिरोगिन्] having an eye-disease विलेपी···हिता । व्रणाक्षिरोगसंशुद्धदुर्बलस्नेहपायिनाम् AṣṭāHṛ. i. 6. 28 = AṣṭāSaṁ. i. 31. 21 (1. 7)

**अक्षिरोगक** (akṣiroga-ka) *m.* disease of the eye बालानामक्षिरोगके··· कुर्यादञ्जनवर्तिकाम् KāśyaS. 321A. 26.

**अक्षिरोगघ्न** (akṣiroga-ghna) *adj.* which cures the disease of the eye अगुरु···कर्णाक्षिरोगघ्नम् BhāvPra.(Bhā.) 6(3). 22.

**अक्षिरोगचिकित्सा** (akṣiroga-cikitsā) *f.* treatment of eye-disease अक्षिरोगचिकित्साभिः शमयेदन्धपूतनाम् KāśyaS. 102B. 14.

**अक्षिरोगजित्** (akṣiroga-jit) *adj.* curing eye-diseases (क्षीरम्) मानुषं वातपित्तासृगभिघाताक्षिरोगजित् AṣṭāHṛ. i. 5. 26; नवनीतम्···क्षीरोद्भवं तु सङ्ग्राहि रक्तपित्ताक्षिरोगजित् AṣṭāHṛ. i. 5. 36; AṣṭaSaṁ. i. 24. 1 (1. 6); i. 24. 18 (1. 6); मुञ्जद्रयम् ··· । दाहतृष्णाविसर्पामिमूत्रकृच्छ्राक्षिरोगजित् BhāvPra.(Bhā.) 6(4). 160; 6(4). 226; कुलित्थयूषः···ज्वरातिसारतृड्दाहव्रणकण्ड्वक्षिरोगजित् BhojanKu. 32. 14; 112. 23.

**अक्षिरोगतप्त** (akṣiroga-tapta) *adj.* tormented (afflicted) by an eye-disease दन्ताक्षिरोगतप्तः···। माण्डलिकः स्यान्मेषे कुजदृष्टे शशिनि भूतार्तः Sārā. 23. 3.

**अक्षिरोगनुद्** (akṣiroga-nud) *adj.* which cures the eye-disease दामोदरो बन्धहरः पुष्कराक्षोऽक्षिरोगनुत् AgniP. 283. 9; अञ्जनं दशरात्राणि दन्तिनां चाक्षिरोगनुत् Hastyāyur. 638. 6 (4. 14); (नवनीतम्) क्षीरोद्भवं तु संग्राहि रक्तपित्ताक्षिरोगनुत् BhojanKu. 147. 18.

**अक्षिरोगप्रशमन** (akṣiroga-praśamana) *adj.* which alleviates the eye-disease कतकस्य फलस्यापि योगाश्चत्वार एव ते । अक्षिरोगप्रशमनाश्चक्षुषश्च प्रसादनाः KāśyaS. 184B. 10.

**अक्षिरोगयुत** (akṣiroga-yuta) *adj.* suffering from an eye-disease ये पुरा···परस्त्रियोऽभिवीक्षन्ते अन्धा एव भवन्ति ते । अक्षिरोगयुता वापि MahāBhā. xiii. App. i. 15. 1790.

**अक्षिरोगवत्** (akṣiroga-va(n)t) *adj.* having an eye-disease परदारांश्च कामेन द्रष्टा स्यादक्षिरोगवान् SkandP. i(2). 51. 12; तस्मै हुतवते दद्यात्···। मन्त्रेणानेन विधिवत् प्राङ्मुखायाक्षिरोगवान् CaturCin. i. 745. 7.

**अक्षिरोगविशेष** (akṣiroga-viśeṣa) *m.* a particular eye-disease शुक्तिः पुनः स्त्रियाम् ।···अक्षिरोगविशेषे च NānārthāSaṁ. i. 162. 1398.

**अक्षिरोगव्यथा** (akṣiroga-vyathā) *f.* pain from an eye-disease प्रतिवासरं यः···नयनद्वितयं जलेन । आसिञ्चति ध्रुवमसौ न कदाचिदक्षिरोगव्यथाविधुरतां भजते मनुष्यः S'ārṅgaS. iii. 13. 124; BhojanKu. 192. 17.

**अक्षिरोगसमुत्थ** (akṣiroga-samuttha) *adj.* caused by an eye-disease °अक्षिरोगसमुत्थानां च सर्वेषामुपशमने सर्पिर्वर्तते Hastyāyur. 585. 4 (4. 4)

**अक्षिरोगहृत्** (akṣiroga-hṛt) *adj.* which cures eye-diseases (शतपुष्पा) उष्णा ज्वरानिलश्लेष्मव्रणशूलाक्षिरोगहृत् BhāvPra.(Bhā.) 6(2). 92.

**अक्षिरोगान्तर** (akṣirogāntara) *n.* a variety of eye-disease cf. **अक्षिरोगभेद, अक्षिरोगविशेष.** हर्षणस्तु प्रमोदके । अक्षिरोगान्तरे ViśvaLoK. 114. 86.

**अक्षिरोगार्त** (akṣirogārta) *adj.* [*f.* –ā] afflicted by an eye-disease यावज्जीवकेनार्धपथे गोपांगना दृष्टा दधिघटकिटालपिण्डं चादायात्रेयसकाशं संप्रस्थितातीवाक्षिरोगार्ता GiMs. iii(2). 28. 15; प्लीहशोथाक्षिरोगार्ताः···विरेकार्हा नरा मताः S'ārṅgaS. iii. 4. 11.

**अक्षिरोगिन्** (akṣirog-in) *adj.* afflicted with an eye-disease रसः । मौद्गस्तु पथ्यः संशुद्धव्रणकण्ठाक्षिरोगिणाम् AṣṭāHṛ. i. 6. 31 = AṣṭāSaṁ. i. 32. 5 (1. 7); AṣṭāHṛ. i. 14. 11; AṣṭāSaṁ. i. 207. 2 (2. 2); जाठरी वातज्वरी स्थूलोऽक्षिरोगी KāśyaS. 166A. 5; जन्मतश्चतुरो मासान्पञ्च षड् वाक्षिरोगिणाम् । विघृष्य नारीस्तन्येन चक्षुषी प्रतिपूरयेत् KāśyaS. 183B. 20; तेन शीतकषायेण परिषेकोऽक्षिरोगिणाम् Hastyāyur. 637. 10 (4. 14); ताम्बूलं नातिसेवेत···अक्षिरोग्यपि BhojanKu. 220. 8.

**अक्षिरोमन्** (akṣi-roman) *n.* the hair on the eye-lid, eye lash पक्ष्मर अक्षिरोम तूलं च Liṅgānu.(He.) 139. 14; वपनमस्त्येव । किंतु अक्षिरोमशिखावर्जम् BālamBha. iii. 201. 9 (*on* 3. 327)

**अक्षिरोमसंलुलन** (akṣiroma-saṁlulana) *n.* throbbing of the eye-lashes क्रमेण तु व्यक्तगर्भायाः कुक्षिमात्रगौरवम्···अक्षिरोमसंलुलनं निद्रा···अम्लेऽभिलाषस्तेषु तेषु चोच्चावचेषु भावेष्विति AṣṭāSaṁ. i. 202. 6 (2. 2)

**अक्षिलक्षित** (akṣi-lakṣita) *adj.* indicated (as dwelling) in the eye "य एषोऽक्षिणि" इत्यक्षिलक्षितं द्रष्टारं निर्दिश्य···यदस्य पारमार्थिकं स्वरूपं परं ब्रह्म तद्रूपतयैव जीवं व्याचष्टे BrahmSūBh.(S'aṅ.) 174. 8 (*on* i. 3. 9); 177. 3 (*on* i. 3. 19); अक्षिलक्षितोऽप्यात्मैवोपदिश्यते न छायात्मा Bhām. 223. 2 (*on* i. 3. 19)

**अक्षिलक्षीकृ** (akṣilakṣī-kṛ-) to see, to bring within the range of the eyes अथ कनकपतत्रस्तत्र तां राजपुत्रीम्···अक्षिलक्षीचकार NaiṣC. 2. 107.

**अक्षिलक्ष्मी** (akṣi-lakṣmī) *f.* beauty of the eyes सहते···कामाक्षि निश्चयपदं न तवाक्षिलक्ष्मीः MūkaPañ. 1. 63.

**अक्षिलक्ष्य** (akṣi-lakṣya) *n.* the target for (i. e. visible to) the eye अक्षिलक्ष्यं क्षिपेत्तूणाच्चतुरस्रं च दक्षिणम् । चतुरस्रगतं वेध्यमभ्यसेच्चादितः स्थितः AgniP. 249. 10.

**अक्षिलक्ष्य** (akṣi-lakṣya) *adj.* **i** which is visible to the eye (i. e. clearly available) अचिरेण दिशाममुष्य जेतुः···अपि कल्पतरुं करेऽक्षिलक्ष्यं करवाणि Acyutarā. 2. 22; **ii** which is within the range of sight क्ष्मातलेन्द्रः । ···अक्षिलक्ष्यं व्यतानीत्स्कन्धावारं पाण्ड्यसंपत्प्रचारम् Raghunā. 10. 51.

**अक्षिलक्ष्यता** (akṣilakṣya-tā) *f.* the state of being perceptible to the eyes अर्कमण्डलमगादनूष्मलं बिम्बमैन्दवमिवाक्षिलक्ष्यताम् Nalābhyu. 3. 43.

**अक्षिललित** (akṣi-lalita) *n.* graceful movement of the eyes प्रहरत्ययं हि मदनः सुतनो तवाक्षिललितैः ChandaśCū. 2. 96(3)

**अक्षिलवत्** (akṣila-vat) *adv.* like Akṣila, one of the Pravara Ṛṣis of the Bharadvāja Gotra अक्षिलवत्कतकवद्भरद्वाजवद्बृहस्पतिवदङ्गिरोवदिति HirS'S. xxi. 3. 10. cf. **अक्षील.**

**अक्षिलोध्र** (akṣilodhra) *n.* a kind of *lodhra* tree? (*Symplocos racemosa*) शाबरकलोध्रमपरं सितलोध्रं वक्रलोध्रं च । विज्ञेयमक्षिलोध्रं तत् AbhidhāMañ. 87. 9.

**अक्षिलोमन्** (akṣi-loman) *n.* eye-lash पक्ष्माक्षिलोम्नि AmaK. 2576; AnekāSaṁ. 2. 270; AnekāK. 443; NānārthaMañ 967; श्मश्रुकेशान्वापयेद् भ्रुवोऽक्षिलोमशिखावर्जम् VāsiDS. 24. 5.

**अक्षिव** (akṣiva) *m.* name of the plant *Hyperanthera* (*Guilandina*) *moringa*; *n.* sea-salt cf. अक्षीव [PW]

**अक्षिवत्** (akṣi-vat) *adv.* like (the attribute) eye यद्यप्यमूर्तो गुणः तथापि हायनवदक्षिवच्च गोद्रव्यमवच्छिनत्ति NyāyMāVi. 113. 17 (*on* iii. 1. 6); NānārthaSaṁ. 33. 24 [*f. n.*] (?)

**अक्षिवर्जित** (akṣi-varjita) *adj.* blind अन्धोऽन्धकारेऽक्षिवर्जिते AnekāSaṁ. 2. 234.

**अक्षिवर्त्मन्** (akṣi-vartman) *n.* an eye-lid चत्वार्यक्षिवर्त्मानि द्वे अक्षिणी BhelaS. 93. 8 (4. 7); नेत्रं प्रसारयेत् । कृतकर्मा भिषग्विद्वान् वडिशेनाक्षिवर्त्मनि

AśvaVai. 30. 32.

**अक्षिवह्नि** (akṣi-vahni) *m.* the fire of the eye स (मार:) तनुं तस्य हुत्वाक्षिवह्नौ लेभे तस्याप्यतिमदकरश्रीकमेतच्छरीरम् TārāS'a. 29.

**अक्षिवाक्य** (akṣi-vākya) *n.* a sentence consisting of the word *akṣi* (=ChāndoU. i. 7. 5; iv. 15. 1) ब्रह्मविद्यायां देवयानगतिमात्रस्यान्वयो भवेत् न त्वक्षिवाक्यार्थस्य S'ivārkaMaDī. i. 361. 5 (*on* i. 2. 16); अक्षिवाक्ये उपकोसलविद्योपास्यप्रत्यभिज्ञानात् S'ivārkaMaDī. i. 442. 12 (*on* i. 3. 18)

**अक्षिवाचकत्व** (akṣivācaka-tva) *n.* being expressive of the eye गोशब्दस्याक्षिवाचकत्वमभिधानकोश एव प्रसिद्धम् Kāvyānu.(He.) 190. 15.

**अक्षिवाचित्व** (akṣivāci-tva) *n.* being expressive of the eye गोशब्दस्याक्षिवाचित्वं कविष्वप्रसिद्धम् KāvyālaṅSū. ii. 1. 13 (comm.)

**अक्षिविकार** (akṣi-vikāra) *m.* **A** change of the eye अक्षिविकाराविकाराभ्यां जीवस्य स्थितिगती निश्चीयेते S'rutaPra. ii. 42. 25 (*on* i. 3. 18); **B** an eye-disease सर्वानक्षिविकारांस्तु हन्यादेतन्न संशय: S'ārṅgaS. iii. 13. 115; °कण्ठस्वरश्रोतोऽक्षिविकारा:⋯संभवन्ति Hastyāyur. 388. 24 (3. 6); **C** the amorous look of the eye तत्पुर: सा स्मराकुला । शशंसाक्षिविकारैश्च⋯हृद्गतम् BṛKathāMañ. vi. 1. 188.

**अक्षिविकूणित** (akṣi-vikūṇita) *n.* **A** a side-glance कटाक्षोऽक्षिविकूणितम् AbhidhāCin. 578; KalpaK. 36. 149; **B** a scornful look (*lit.* contraction of the eye) कटाक्षश्चार्धवीक्षणम् । अपाङ्गदर्शनं चापि काक्षश्चाक्षिविकूणितम् ParaNā. 2123; **C** a look with the eye-lids partially closed [MW., Apte]

**अक्षिविकूशित** (akṣi-vikūśita) *n.* cf. **अक्षिविकूणित** [Apte]

**अक्षिविक्षेप** (akṣi-vikṣepa) *m.* **A** rolling of the eyes रेवत्याम्⋯कासहिध्माक्षिविक्षेपवक्त्रवक्रत्वरक्तता: AṣṭāSaṁ. ii. 189. 2(6. 3); **B** a glance दृष्ट्वा च मामलक्षितैरक्षिविक्षेपै: TilaMañ. 369. 6; **C** turning up of eyes शिर:कम्पाक्षिविक्षेपभर्त्सनाङ्गुलितर्जनै: । क्रोधोऽभिनेयो भृत्येषु BhāvPra.(S'ā.) 71. 18(3)

**अक्षिविचारण** (akṣi-vicāraṇa) *n.* artful movement of eyes भ्रूक्षेपाक्षिविचारणोष्ठचलनै:⋯ स्त्रीविभ्रमा निर्जिता: Ubhayābhi. 9. 3.

**अक्षिविदाह** (akṣi-vidāha) *m.* inflammation of the eyes पय एव माहिषम्⋯ । निषेवयेदक्षिविदाहबाधिते KalyāKā. 15. 141.

**अक्षिविद्या** (akṣi-vidyā) *f.* knowledge of (the person in) the eye अक्षिविद्याया: प्रकृतब्रह्मविद्यात:⋯भिन्नत्वेऽप्यक्षिविद्याया गतिरेव प्रकृतब्रह्मविद्याया अपि S'ivārkaMaDī. i. 361. 10 (*on* i. 2. 16)

**अक्षिविमर्द** (akṣi-vimarda) *m.* rubbing of the eyes तां (=निद्रां)⋯ । निश्वासजाड्यजृम्भाक्षिविमर्दैर्वर्णयेत्कवि: BhāvPra.(S'ā.) 23. 2(1)

**अक्षिविमर्दन** (akṣi-vimardana) *n.* rubbing of the eyes आलस्यं तच्छिरश्शूलजृम्भणाक्षिविमर्दनै: । ⋯वर्ण्यते BhāvPra.(S'ā.) 18. 13(1); RasāSu. 120. 6 (2. 61)

**अक्षिविशिख** (akṣi-viśikha) *m.* the arrow of the eye (i. e. bewitching glances) तवाक्षिविशिखैर्विद्ध: सुभगोऽस्मीति जीवति PārśvC. 3. 197.

**अक्षिविशिष्टब्रह्मन्** (akṣiviśiṣṭa-brahman) *n.* the Brahman characterised by (its revelation through) the eye यथा तत्रादित्यविशिष्टब्रह्मणोऽक्षिविशिष्टब्रह्मणश्चाप्रत्यभिज्ञानमुक्तम् VedāntKa. 419. 7 (*on* iii. 3. 23)

**अक्षिविष्** (akṣi-viṣ) *f.* excreta of the eye मज्ञस्तु सार: शुक्रं मलोऽक्षिविट् AṣṭāSaṁ. i. 231. 13 (2. 6); काकनासाक्षिविट्क्षारैर्भेदयेच्छस्त्रवर्जितम् (श्वयथुं दन्तिनाम्) Hastyāyur. 364. 2 (3. 1)

**अक्षिविषय** (akṣi-viṣaya) *m.* object of the eyes अक्षिविषय: सर्वो निश्चेष्टो भवतात्प्रभो BrahmāṇḍP. iii. 24. 63; शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषय: KṛṣṇaA. 1; अक्षिविषय: सहसैव योऽभूत् (हर:) BhikṣāKā. 25. 8.

**अक्षिविस्तार** (akṣi-vistāra) *m.* widening of the eyes परिजने तु रोषस्तर्जननिर्भर्त्सनाक्षिविस्तारै: ।⋯अभिनेय: NāṭyaS'ā. 7. 29; विस्मय: स निगद्यते । क्रियास्तत्राक्षिविस्तारसाधूक्तिपुलकादय: RasāSu. 157. 16 (2. 127)

**अक्षिवेदना** (akṣi-vedanā) *f.* pain in the eye मुखालेपोऽक्षिवेदनास्तम्भप्रशमन: AṣṭāSaṁ. ii. 246. 9 (6. 19); हिक्का श्वासश्च कासश्च शिर:कर्णाक्षिवेदना: । भवन्ति विविधा दोषा: पवनस्य व्यतिक्रमात् SkandP. iv. 41. 99; SarvaSiSaṁ. 10. 46; HaṭPra. 2. 17.

**अक्षिवेप** (akṣi-vepa) *m.* throbbing of the (left) eye अक्षिवेपम्⋯ । तदस्मदश्विना युवमप्रिये प्रति मुञ्चतम् KauśiSū. 58. 1.

**अक्षिवेपन** (akṣi-vepana) *n.* throbbing of the (left) eye चित्ययूपोपस्पर्शनकर्णक्रोशाक्षिवेपनेषु⋯आज्याहुती जुहुयात् GobhiGS. iii. 3. 34; DrāhyGS. ii. 5. 35.

**अक्षिवैराग्य** (akṣi-vairāgya) *n.* loss of redness of eyes, dullness of eye-sight चकोरस्याक्षिवैराग्यं जायते क्षिप्रमेव तु SuśruS. v. 1. 30; AṣṭāHṛ. i. 7. 15=BhojanKu. 197. 6.

**अक्षिव्यथा** (akṣi-vyathā) *f.* pain in the eye दृक् कुञ्चितोच्यते ।⋯ अक्षिव्यथासु सा (प्रयोज्या) SaṁgīRa. iv. 146. 1 (7. 415); दृष्टि:⋯ । कुञ्चिता सूचितानिष्टा दुष्प्रेक्षाक्षिव्यथासु च BhāvPra.(S'ā.) 130. 4(5)

**अक्षिव्यापार** (akṣi-vyāpāra) *m.* movement or winking of the eyes निमिषितं अक्षिव्यापार: Pradī. 1. 15B (*on* 1. 1. 0); अक्षिव्यापारो जयति मुग्धाया: SundaS'. 41.

**अक्षिव्यावृत्ति** (akṣi-vyāvṛtti) *f.* rolling of the eyes अतियोगे (वमनौषधस्य)⋯ °अक्षिव्यावृत्तिविसंज्ञतानिद्राबलाग्निहानयो भवन्ति AṣṭāSaṁ. i. 140. 17 (1. 27)

**अक्षिव्युदास** (akṣi-vyudāsa) *m.* coming out of the eye वातविकाराननुव्याख्यास्याम: । ⋯ अक्षिशूलं च अक्षिव्युदासश्च भ्रूव्युदासश्च CaraS. i. 20. 11; AṣṭāSaṁ. i. 107. 15 (1. 20)

**अक्षिव्रज** (akṣi-vraja) *m.* multitude of eyes दिश: शरै:⋯दारयन्तौ ⋯क्षत्रियसमाजस्योत्फुल्लप्रचलतारकैरक्षि(प्र ?)व्रजैरक्षैरिव ⋯ युद्धरङ्गे चिरं चिक्रीडतु: AvantiKa. 112. 13; आख्यातुमक्षिव्रजसर्वपीतां भैमीम्⋯गाथासुधाश्लेषकलाविलासैरलंचकाराननचन्द्रमिन्द्र: NaiṣC. 10. 133.

**अक्षिशल्य** (akṣi-śalya) *n.* a speck in the eye सूक्ष्ममक्षिशल्यं लेखनोपधमनवालजलवस्त्रजिह्वाभिरपजयेत् AṣṭāSaṁ. i. 183. 13 (1. 37)

**अक्षिशिर:पर्याय** (akṣiśiraḥ-paryāya) *m.* succession of eyes and heads (in various lives) एवं प्रतिपादनेनाक्षिशिर:पर्यायेण तत्र तत्र देहे जन्मना संचारेण सर्वभूतव्यापक:⋯यजमानो भवति S'ivārkaMaDī. i. 575. 15 (*on* i. 4. 29)

**अक्षिशिरोऽतिजाड्य** (akṣiśiro'tijāḍya) *n.* excessive heaviness of the eye and the head (निद्राभिघातात्) जृम्भाङ्गमर्दोऽक्षिशिरोऽतिजाड्यम् (जायते) RugVi. 27. 12.

**अक्षिशीर्ष** (akṣi-śīrṣa) *n.* eye-like and head-like parts (of some weapon or instrument) मुसलं त्वक्षिशीर्षाभ्यां करै: पादैर्विवर्जितम् NītiPra. 5. 38.

**अक्षिशूल** (akṣi-śūla) *m.* *n.* pain in the eyes कर्णाक्षिशूलं कास: ⋯ धूमपानात्प्रशाम्यन्ति CaraS. i. 5. 28 (1941 Ed.); तिमिरश्चाक्षिशूलश्च⋯इत्यशीतिर्वातविकारा: CaraS. i. 20. 12 (1922 Ed.); °कर्णाक्षिशूले ।⋯शस्तं सर्पिर्जीर्णम् HārīS. i. 8. 80; तिमिरमक्षिशूलम् AṣṭāSaṁ. i. 107. 15 (1. 20); SiddhYo. 61. 105; अङ्गशूल – अक्षिशूल°⋯°सर्वशूलानि निर्मूलय LāṅgU. 215. 5; *adj.* with pain in the eyes भवन्ति स्वैश्च कर्मभि:⋯योनिशूलाक्षिशूलाश्च VarāP. 203. 20.

**अक्षिशूलनुद्** (akṣiśūla-nud) *adj.* destroyer or remover of the ocular pain मेषशृङ्गी⋯पाके कटु: पित्तव्रणश्लेष्माक्षिशूलनुत् BhāvPra.(Bhā.) vi. 4. 253.

**अक्षिशूलिन्** (akṣiśūl-in) *adj.* having ocular pain मानुषं पय: । ⋯ तर्पणं चाक्षिशूलिनाम् CaraS. i. 27. 220 (1922 Ed.)

**अक्षिशोथ** (akṣi-śotha) *m.* swelling of the eye अक्षिशोथ: ⋯ कफाभिपन्ने नयने भवन्ति RugVi. 59. 7.

**अक्षिशोभ** (akṣi-śobha) *adj.* possessing the beauty of the eyes पश्यामि⋯सकौतुक इवोत्पलमक्षिशोभम् HarVi. 26. 42.

**अक्षिश्रवस्** (akṣi-śravas) *m.* serpent बभुरक्षिश्रवसो मुखे विशाला: । भरतज्ञकविप्रणीतकाव्यग्रथिताङ्का इव नाटकप्रपञ्चा: S'iśuVa. 20. 44.

**अक्षिश्लथता** (akṣiślatha-tā) *f.* slackness or dullness of the eyes अद्यश्व:प्रसवे ग्लानि: कुक्ष्यक्षिश्लथता क्लम: AṣṭāHṛ. ii. 1. 74.

**अक्षिष्ठ** (akṣiṣṭha) *adj.* [w. r. for आशिष्ठ in JaimiBr. 1. 304, Debru. p. 446]

**अक्षिसंयोग** (akṣi-saṁyoga) *m.* contact with the eye जीव:⋯रूपादिग्रहणकाले मनसोऽक्षिसंयोगे⋯भवत्यक्ष्याश्रित: S'ivārkaMaDī. i. 356. 3 (*on* i. 2. 13)

**अक्षिसंरम्भ** (akṣi-saṁrambha) *m.* inflamation or irritation of the eye लोहितिका नाम गुडि(? टि)का तु स्मृता बुधै: । प्रयोक्तव्याक्षिसंरम्भे क्षिप्रं निर्वाणमिच्छता KāśyaS. 322A. 41.

**अक्षिसंविद्** (akṣi-saṁvid) *f.* visual perception दर्शनं नयने ⋯ अक्षिसंविदि NānārthaMañ. 1009.

**अक्षिसंवृति** (akṣi-saṁvṛti) *f.* closure of the eyes यथाक्षिसंवृति: सर्वरूपालोकशमोऽरिहन् । संवित्संवरणं नाम सर्वदृश्यशमस्तथा YogVā. vi(2). 26. 14.

**अक्षिसंश्रय** (akṣi-saṁśraya) *adj.* having location in the eyes धूमयोग्य: पिबेद्दोषे शिरोघ्राणाक्षिसंश्रये । घ्राणेन CaraS. i. 5. 46 (1941 Ed.)

**अक्षिसंस्कार** (akṣi-saṁskāra) *m.* decoration of the eye अञ्जनं त्वक्षिसंस्कार: Vaija. 171. 157.

**अक्षिसंकेत** (akṣi-saṅketa) *m.* indication by the eyes ज्योतिष्टोमे⋯ अक्षिसंकेतादेरेव साधुप्रयोगासंभवे प्रतिनिधित्वम् MīmāKau. i. 129. 10 (*on* i. 3. 27)

**अक्षिसंकोच** (akṣi-saṅkoca) *m.* **i** contraction of the eyes (a symptom of a disease) बृंहणम्⋯°शिरोरोगाक्षिसंकोचस्पन्दनतिमिर°⋯°निद्रानाशा-

दिषु AṣṭāSaṁ. i. 153.23 (1.29); **ii** contraction of the eyes (as the effect of a sentiment) (हास्यस्य) अनुभावोऽक्षिसंकोचवदनस्मेरतादयः SāhiDa. 183.6.

**अक्षिसंख्यतिथि** (akṣisaṅkhya-tithi) *f.* the second lunar day ब्रह्मास्येन्दुशराक्षिसंख्यतिथयः ख्याता नलिन्या रते PañcSā. 1.10.

**अक्षिसंचार** (akṣi-sañcāra) *m.* movement of the eyes क्षामवाक्याक्षिसञ्चारकार्श्याङ्गश्वसनादिभिः । ग्लानिजा ह्यनुभावाः BhāvPra.(S'ā.) 15.24(1)

**अक्षिसंज्ञा** (akṣi-saṁjñā) *f.* hint or indication with the eye शिरोऽक्षिसंज्ञया त्रस्तवास्तव्यकृतसान्त्वनः ।···चक्रवर्माविशत्पुरम् RājTa.(Ka.) 5.346; प्रबोधयन्ती श्रियमक्षिसंज्ञया सरस्वती तच्चरणाम्बुजद्वयम् । क्षणं निदध्यौ S'ivLī. 11.63; अञ्जनासुतम् । आजुहाव विधुरक्षिसंज्ञया Ragh. 11.71.

**अक्षिसत्ता** (akṣi-sattā) *f.* existence of the eyes अक्ष्णोश्च पैङ्गल्यमाह न चाहुसत्तामक्षिसत्तां च । यदपि अक्षिसत्तां वदतीति गम्यते S'ābaBh. 1655.12 (*on* ix. 1.9)

**अक्षिसदृश** (akṣi-sadṛśa) *adj.* resembling an eye एवंविधस्य दण्डस्योर्ध्वाग्रात्समदशाङ्गुले अधोभागेऽक्षिसदृशं विधाय विवरद्वयम् SaṁgīRa. iii. 6.40; अदर्शनात् इतिवचनादक्षीवाक्षीत्यक्षिसदृशार्थवृत्तिरिहाक्षिशब्द उपात्तः Pradī. iv. 418.17 (*on* P. v. 4.76)=PadMañ. *on* KāśiVṛ. *on* P. v. 4.76.

**अक्षिसंतर्जन** (akṣi-santarjana) *n.* a mythical missile or an incantation used with it काकुदीकं शुकं नाकमक्षिसंतर्जनं तथा MahāBhā. v. 94.38 (Sarvajña. अक्षिसंतर्जनमित्यादयो शराभिमन्त्रणमन्त्रभेदाः; काकुदीकमित्यादयोऽष्टावस्त्रजातयः; Devabodha कामक्रोधौ लोभमोहौ दम्भमानौ तथैव च । मात्सर्यंहिंकृती चैव; others identify it with कृष्ण); अक्षिसंतर्जनं भीमम् ··· रामः ··· आजहार महादेवात् VisnuDhaP. i. 50.4; *m.* name of an attendant of Skanda (शृणु नामानि चान्येषां येऽन्ये स्कन्दस्य सैनिकाः) अक्षसंतर्जनो (v. l. अक्षिसंतर्जनः) राजन् कुनदीकस्तमोऽभ्रकृत् MahāBhā. ix. 44.53.

**अक्षिसंतर्दन** (akṣi-santardana) *n.* a mythical missile or weapon अक्षिसंतर्जनं (v. l. °र्दनं) तथा MahāBhā. v. 94.38.

**अक्षिसंताप** (akṣi-santāpa) *m.* burning sensation of the eyes मूर्च्छापिपासामुखशोषमूर्धतात्वक्षिसंतापतमोभ्रमार्तः RugVi. 15.7.

**अक्षिसंधि** (akṣi-sandhi) *m.* junction or joint of the eyes पाथोबिन्दुभिरक्षिसंधिषु शनैः संसिच्यमानः···निद्रायते सैरिभः SubhāRaK. 9.12.

**अक्षिसंनिपात** (akṣi-sannipāta) *m.* casting of a glance (direct perception) 'आदित्यमवलोकयेत्' इति चाक्षिसन्निपातविधानम् PrakaVi. 2.14; नरस्य···ब्राह्मणपुरुषमुपलभ्याक्षिसन्निपातमात्रेण निर्विचिकित्सा ब्राह्मणत्वबुद्धिरुत्पद्येत CaturCin. iii(1). 342.17; iii(1). 343.15.

**अक्षिसंनिहित** (akṣi-sannihita) *adj.* present in the eyes जाग्रदवस्थायां द्रष्टृत्वेनाक्षिसंनिहितस्य···जीवस्योपदेशात् SiddhāLeSaṁ. 455.2.

**अक्षिसमन्वित** (akṣi-samanvita) *adj.* [*f.* -ā] combined with the letter denoted by the Tantric code-word *akṣi* (prob. *i* or *am* denoted by its synonym *netra*) वामरेखा भवेद्ब्रह्म तरुणाक्षिसमन्विता KālīViT. 22.34.

**अक्षिसंप्रयोगिता** (akṣisamprayogi-tā) *f.* the state of having contact with the eyes सर्वत्राक्षिसंप्रयोगितया पुरोऽवस्थितापरोक्ष एव दृश्यते PañcPā. 29.22 (*on* i. 1.0)

**अक्षिसंबन्धिन्** (akṣi-sambandhin) *adj.* relating to or connected with the eyes अक्ष्णा काण इत्यत्र अक्षिसंबन्धिकाणत्वविशिष्ट इत्यर्थः BhāṭṭCin. i. 99.12 (*on* i. 1.4); SiddhāKau. 142B.8.

**अक्षिसंभव** (akṣi-sambhava) *adj.* occurring or appearing in the eyes काचोऽक्षिसंभवे । उपतापविशेषे NānārthāSaṁ. i. 23.28.

**अक्षिसर्वरोग** (akṣi-sarvaroga) *m.* all (kinds of) diseases of the eye तुत्थमयं चूर्णं मृद्वीकाशाबरमञ्जिष्ठासमभागानि कृत्वाक्षिसर्वरोगशिरोरोगवेदनोपशमनीकायपुष्पपटलबुद्बुदमांसवृद्धिलोहितराजीश्च जयति Hastyāyur. 641.29 (4.14)

**अक्षिसलिल** (akṣi-salila) *n.* water from the eyes (i. e. tears) विकारजनितमक्षिसलिलमश्रु RasTa. 63.5.

**अक्षिसहस्र** (akṣi-sahasra) *n.* a thousand eyes तेभ्यश्चाक्षिसहस्रेभ्यः प्रादुरासन् महार्चिषः MahāBhā. x. 6.8; अत्र विकस्वरनीलोत्पलिन्यपेक्षया अक्षिसहस्रस्य पक्ष्मलताया अधिकगुणत्वम् AlaṅkāSa. 80.5.

**अक्षिसागरविभक्त** (akṣisāgara-vibhakta) *adj.* divided by forty-two (*akṣi*=2, *sāgara*=4) रविगुणिते शककाले माससमेतेऽक्षिसागरविभक्ते । यल्लब्धं ते भगणाः शेषे षट्भजिते पर्व BṛSaṁ. 5.19.

**अक्षिसादृश्य** (akṣi-sādṛśya) *n.* similarity with the eyes य उत्पलाक्षि प्रचलैर्विलोचनैस्तवाक्षिसादृश्यमिव प्रयुञ्जते KumāSaṁ. 5.35.

**अक्षिसाफल्य** (akṣi-sāphalya) *n.* fruitfulness of the eyes शूरौ कौचिद्वन्विनौ···यूथनाथावलीनामातन्वातामक्षिसाफल्यमारात् Raghunā. 10.7; 10.66.

**अक्षिसाहस्र** (akṣi-sāhasra) *n.* a thousand eyes अप्रतिभटाः विबुधटाः (? विबुधभटाः) साफल्यमनैषुरक्षिसाहस्रममरपतेः NīlaVi. 19.19.

**अक्षिसुन्दर** (akṣi-sundara) *adj.* having beautiful eyes मण्डलीकाधिपो राजा···महीपतेः । पक्षिणो मुचुकुन्दाख्यान् प्राहिणोदक्षिसुन्दरान् RājTa.(S'ri.) 1(6).18.

**अक्षिसुषमा** (akṣi-suṣamā) *f.* beauty of the eyes तवाक्षिसुषमा विषमायुधस्य नाराचवर्षलहरी MūkaPañ. 1.93.

**अक्षिसूत्र** (akṣi-sūtra) *n.* the line (of a sculpture or idol) marking the place of the eyes, eye-line मुखायामं त्रिधा भवेत् । अक्षिसूत्रावसानं च तस्याधो त(? धस्त)त्पदान्तकम् MānaSā. 65.6; प्रतिमामानमुच्यते···केशान्तोंऽशैस्ततस्त्रिभिः । ततोऽक्षिसूत्रं वेदांशैः सयवत्रितयैस्ततः ĪśānS'iPa. ii. 41.57; अक्षिसूत्रान्नासिकान्तं तस्माच्च हनुसीमकम् । प्रत्येकं त्रियवाधिक्ययुगभागोदयं तथा S'ilpaRa. ii. 5.2; ii. 5.51.

**अक्षिसूत्रान्तम्** (akṣisūtrāntam) *adv.* up to the eye-line (i. e. the line marking the place of the eyes of an idol) मुखभागेऽक्षिसूत्रान्तमुपरिष्टाद् द्विगोलकम् PāraS. 16.290; केशान्तादक्षिसूत्रान्तं युगांशं त्रियवाधिकम् S'ilpaRa. ii. 5.2.

**अक्षिसूत्रोर्ध्वतस्** (akṣisūtrordhva-tas) *adv.* above the eye-line अक्षिसूत्रोर्ध्वतः कर्णतुङ्गं चाष्टादशा यवाः S'ilpaRa. ii. 5.77.

**अक्षिसेक** (akṣi-seka) *m.* sprinkling over the eyes (अथ ज्वरे मूर्च्छायाश्चिकित्सामाह) अञ्जनं च प्रयुञ्जीत मधुसिन्धुशिलोषणैः । शीताम्भसाक्षिसेकः BhāvPra.(Bhā.) 8(1).850; आश्च्योतनं त्वक्षिसेकस्तस्य कालो निशा मता KośaKaTa. 1.7442.

**अक्षिस्थ** (akṣi-stha) *adj.* **A** (collyrium) present in the eye तथा हि दूरात्रूपं पश्यत्यक्षिस्थमञ्जनं न पश्यति AbhidhKoBh. 32.2 (*on* 1.43); चौररूपोऽयं योऽक्षिस्थमञ्जनमपि हरेत् JaineVyā. 261.15 (*on* iv. 1.125); **B** (the Self) dwelling in the eye तावेतौ आदित्याक्षिस्थौ पुरुषौ एकस्य सत्यस्य संस्थानविशेषौ BṛĀraUBh. 708.2 (*on* v. 5.2); ये सुखाकाशमक्षिस्थम्···उपासते ChāndoUBh. 247.11 (*on* iv. 15.5); अक्षिस्थं द्रष्टारं जीवमात्मानं निर्दिशति BrahmSūBh.(S'aṅ.) 173.7 (*on* i. 3.19); अमृतत्वं चान्यनिष्ठं नाक्षिस्थस्य विष्णुत्वसाधकम् TattvPrakā. 36B.5 (*on* i. 2.18); 152B.13 (*on* iii. 2.10); 193A.10 (*on* iii. 4.34); अत्र चाक्षिस्थ एव प्रतीयते NyāySu.(Ja.) 164B.6 (*on* i. 2.4); श्रुतिश्चाक्षिस्थादित्यस्थयोर्गुणोपसंहाराभावं दर्शयति VedāntPāSau. 313.22 (*on* iii. 3.22); उभयथाप्यादित्यमण्डलस्थ एवायमक्षिस्थोऽपि S'ivārkaMaDī. i. 249.25 (*on* i. 1.21); ii. 318.22 (*on* iii. 3.21); नेतरस्तेषामन्यतमः कोऽप्यक्षिस्थः किंतु परमात्मैव स इति GoviBh. 35.3 (*on* i. 2.17); 199.12 (*on* iii. 2.10)

**अक्षिस्थग्रह** (akṣistha-graha) *m.* comprehension or knowledge of the object existing in the eye अजात्यन्धस्यापि इन्द्रियाधिष्ठानक्षोभेऽपि मात्रया इन्द्रियशक्तेरनपगमनादक्षिस्थग्रहस्याविरोधात् NyāySiA. 202.5.

**अक्षिस्थत्व** (akṣistha-tva) *n.* the nature of dwelling in the eye तदक्षिस्थत्वं छन्दोगश्रुतौ कस्यचित्प्रतीयते TattvPrakā. 34A.8 (*on* i. 2.13); 34A.13 (*on* i. 2.13); न केवलमक्षिस्थत्वम् NyāySu.(Ja.) 164B.7 (*on* i. 2.4); अक्षिस्थत्वलिङ्गमस्तीति चेन्न S'ivārkaMaDī. i. 354.30 (*on* i. 2.13); जीवस्याक्षिस्थत्वश्रवणात् S'ivārkaMaDī. i. 357.20 (*on* i. 2.14)

**अक्षिस्थपुरुष** (akṣistha-puruṣa) *m.* the Person dwelling in the eye एतं त्वेव त इत्यक्षिस्थपुरुषानुकर्षणमङ्गीकृत्य···प्रत्यवतिष्ठते VedāntKa. 162.7 (*on* i. 3.19); अत्राक्षिस्थपुरुषसंबन्धादक्ष्णोरसङ्गत्वाख्यशक्तिर्व्यपदिश्यते TattvPrakā. 35A.1 (*on* i. 2.14); 36B.4 (*on* i. 2.18); अतिदेशश्रुतिरादित्यस्थपुरुषरूपमक्षिस्थपुरुषेऽतिदिशति VedāntKau. 313.25 (*on* iii. 3.22)

**अक्षिस्थप्रकरण** (akṣistha-prakaraṇa) *n.* context dealing with (the Person) dwelling in the eye नैवमुपक्रमेऽप्यक्षिस्थप्रकरणस्य वैष्णवत्वं युक्तम् TattvPrakā. 35B.2 (*on* i. 2.16)

**अक्षिस्थल** (akṣi-sthala) *n.* the region of the eyes (अस्थाम्) अक्षिस्थलेऽष्टकम्···आदिशेत् VisnuDhaP. ii. 115.80.

**अक्षिस्थवाक्य** (akṣistha-vākya) *n.* the statement (of the Upaniṣad) mentioning (the Self as) dwelling in the eye यद् ब्रह्म प्रक्रान्तं तस्यैव पुनरत्राप्यक्षिस्थवाक्ये निगदाच्च GoviBh. 34.8 (*on* i. 2.15)

**अक्षिस्थविद्या** (akṣistha-vidyā) *f.* the *upāsanā* (i. e. contemplation) about (the Supreme Self as) dwelling in the eye अक्षिस्थविद्यायाश्चादित्यस्थविद्ययैकार्थत्वात् TattvPrakā. 35B.4 (*on* i. 2.16)

**अक्षिस्थान** (akṣi-sthāna) *adj.* having the eye as the location or dwelling place, located or dwelling in the eye अक्षिस्थानं पुरुषं विजानतः पाप्मनानुपघातं ब्रुवन्नक्षिस्थानस्य पुरुषस्य ब्रह्मत्वं दर्शयति BrahmSūBh.(S'aṅ.) 115.18 (*on* i. 2.15); 116.5 (*on* i. 2.16); 116.17 (*on* i. 2.16); 117.2 (*on* i. 2.17); 118.8 (*on* i. 2.17); ये···ब्रह्माक्षिस्थानं संयद्वामं वामनीभामनीत्येवंगुणकं

प्राणसहितमुपासते Bhām. 178.14 (*on* i. 2.15); 216.22 (*on* i. 3.19); प्रथमे पर्यायेऽक्षिस्थानं द्रष्टारं ब्रुवन् जीवमेव निर्दिशति PrakaVi. 251.20; नैवंविधस्य नाम्नोऽक्षिस्थाने उपसंहारसंभवः VedāntKau. 313.16 (*on* iii. 3.21)

**अक्षिस्थान** (akṣi-sthāna) *n.* the eye as the location or dwelling place (of Brahman) तथा परमेश्वरानुरूपमेतदक्षिस्थानम् BrahmSūBh.(S'aṅ.) 113.4 (*on* i. 2.13); 113.5 (*on* i. 2.13); किं छायात्माक्षिस्थाने निर्दिश्यते BrahmSūBh.(Bhā.) 41.29 (*on* i. 2.13); स्थानिनः परमात्मनोऽक्षिस्थानात् परिच्छिन्नत्वशङ्काव्युदासपरत्वं सूत्रस्यायुक्तम् S'rutaPra. iB. 309.18 (*on* i. 2.14); तस्मादक्षिस्थाने सहज एव यो भगवानस्ति AṇuBh. 62.23 (*on* i. 2.17); VedāntDī. 177.6 (*on* iii. 3.21); VedāntKa. 140.18 (*on* i. 2.13); VedāntKau. 313.16 (*on* iii. 3.21); आदित्याक्षिस्थानयोरुपदेशातिदेशाभ्यां तात्पर्येण…उक्तरूपं शरीरं न प्रत्याख्यातुं शक्यम् S'ivārkaMaDī. i. 252.5 (*on* i. 1.21); i. 355.18 (*on* i. 2.13); i. 355.20 (*on* i. 2.13); i. 361.20 (*on* i. 2.16); i. 361.21 (*on* i. 2.16); i. 361.22 (*on* i. 2.16); तेन विशालपीठमेवाक्षिस्थानं यस्या इति वा LalitāSaBh. 189.13 (*on* 224)

**अक्षिस्थानता** (akṣisthāna-tā) *f.* the state of having the eye as the dwelling or location ब्रह्मणोऽक्षिस्थानतां संयद्वामत्वादिगुणतां चोक्त्वा BrahmSūBh.(S'aṅ.) 116.1 (*on* i. 2.15)

**अक्षिस्थानत्व** (akṣisthāna-tva) *n.* the state of having the eye as the abode, the state of dwelling in the eye इहाप्यक्षिस्थानत्वादिविलक्षणप्रक्रियादर्शनात् विद्यान्तरत्वम् PrakaVi. 187.17; पूर्वतनविद्यानुवादेन तत्रैवाक्षिस्थानत्वादिविशेषविधानात् PrakaVi. 187.18; चक्षुरधिष्ठातृदेवता वा तादृशपुरुषशब्दाभिधेया रश्मिभिरेषोऽस्मिन्प्रतिष्ठित इति श्रुतेः सर्वगतस्याक्षिस्थानत्वासंभवात् VedāntKau. 58.19 (*on* i. 2.13)

**अक्षिस्थानिन्** (akṣisthān-in) *adj.* having the eye for the abode, dwelling or being present in the eye (= the Brahman) अक्षिस्थानिनो माहात्म्येनैव सर्पिरुदकाद्यश्लेषं वर्णयति (श्रुतिः) S'ivārkaMaDī. i. 361.21 (*on* i. 2.16)

**अक्षिस्थित** (akṣi-sthita) *adj.* (the soul) dwelling in the eye अक्षिस्थितनिरूपकमतिदेशः प्रमाणम् AṇuBh. 201.26 (*on* iii. 2.31)

**अक्षिस्थिति** (akṣi-sthiti) *f.* existence or presence in the eye जीवप्रतिबिम्बयोरक्षिस्थितिस्संभवति S'ivārkaMaDī. i. 357.18 (*on* i. 2.14)

**अक्षिस्पन्द** (akṣi-spanda) *m.* **1** throbbing of the eye (as an evil omen) अक्षिस्पन्दं भुजस्पन्दम्…अश्वत्थ शमयस्व मे BhaviP. 658B.33 (iv. 31.20); अक्षिस्पन्दादिना चैव दुःस्वप्नेत्यादिनापि च। … जुहोति वै IśānS'iPa. ii. 44.19; **2** the plant *Peronia Elephantum* (= दधिफल) दध्याह्वः स्याद्दधिफलोऽक्षिस्पन्दः सुरभिच्छदः KośaKaTa. 1.3221. cf. **अक्षिस्यन्द**.

**अक्षिस्पन्दन** (akṣi-spandana) *n.* throbbing of the eye (as an evil omen) अक्षिस्पन्दने कर्णध्वनने च सुचक्षा अहमक्षीभ्यां भूयासम्…मयि दक्षक्रतू इति जपेत् ĀśvaGS. iii. 6.8; (as a disease) °शिरोरोगाक्षिस्पन्दनतिमिर…सर्पदष्टविसंज्ञेषु शेषौ AṣṭāSaṁ. i. 153.20 (1.29)

**अक्षिस्पर्श** (akṣi-sparśa) *m.* the act of touching the eye अक्षिस्पर्शानन्तरं नासास्पर्श इत्यपि पक्षान्तरमिति छन्दोगाह्निकाद्युक्तं हेयम् VīraMi. (Āhnika.) 82.10.

**अक्षिस्यन्द** (akṣi-syanda) *m.* the plant *Peronia elephantum* (= कपित्थ) (L.) कपित्थे…पुष्पफलो दधिफलो दधित्थग्राहिमन्मथाः। अक्षिस्यन्दो दन्तशठो राजाम्रश्चिरपाक्यपि NighS'e. 1950. cf. **अक्षिस्पन्द**.

**अक्षिस्रवज्जल** (akṣisravaj-jala) *adj.* [*f.* -ā] with tears rolling down from the eyes मनोमयी न शशाप…सस्वेदाक्षिस्रवज्जला GaṇeP. ii. 135.15.

**अक्षिस्राव** (akṣi-srāva) *m.* the eye-gland (of an elephant through which water or mucus oozes out) (हस्तिनः) अक्ष्णोरधस्तादक्षिस्रावौ Hastyāyur. 526.14 (3.29)

**अक्षिहर्तृ** (akṣi-hartṛ) *adj.* who forces or gouges out eyes नैर्घृण्यमक्षिहर्तुर्यत्…न शक्यते वक्तुम् RājTa.(S'rī.) 3.110.

**अक्षिहित** (akṣi-hita) *adj.* wholesome or agreeable to the eyes चक्षुष्यः सुभगे…क(?के)तकेऽक्षिहिते चापि AnekāSaṁ. 3.479; चक्षुष्यः केतके…अक्षिहितेऽन्यवत् MediK. 126.82; ViśvaPra. 122.97; ViśvaLoK. 267.85; S'abdaRaSaK. 242.20.

**अक्षिहीन** (akṣi-hīna) *adj.* **1** without eyes, blind मुखेनेवाक्षिहीनेन निर्वर्मेण नरेण किम् TriṣaS'aPuC. i. 1.310; अन्धोऽक्षिहीनादौ KāvyaKaVṛ. 87.1 (3.5); बाहुकर्णाक्षिहीनस्त्वाद्रिना ताभ्याम् अतो नृपः S'ukrNī. 2.13; **2** less or diminished by two षड्घ्नं चरार्धं दशभागहीनं यो(?या)म्ये तु रामांशयुतं दशाप्तम्। तदक्षिहीनाक्षवियुक्तयुक्तं भानोरुदग्दक्षिणतः प्रभा स्यात् Bhāsv. 5.4.

**अक्षी** (akṣī) *f.* name of a species of tree *Moringa pterygosperma* (*śobhāñjana*) or *Guilandina* or *Hyperanthera moringa* (*akṣīta*) or a kind of reddish or brownish alum (*raktasphaṭikā*) कुसुम्भं खदिरो लाक्षा मञ्जिष्ठा रक्तचन्दनम्। अक्षी च (v. l. अक्षीवं) बन्धुजीवश्च तथा कर्पूरगन्धिनी। माक्षिकं चेति विज्ञेयो रक्तवर्गोऽतिरञ्जनः RasRaSa. 10.93.

**अक्षीक** (akṣīka) *m.* the tree *Dalbergia oujeinensis* cf. **अक्षिक** स्यन्दनास्तिनिसो नेमि(:) अक्षीकश्चाक्षुकोच्छुकः ParyāMu. 15.34; अक्षीकः पुं, रञ्जनद्रुः। आच् इति भाषा। इति रत्नमाला [S'abdaKaDru.]

**अक्षीकृत** (akṣī-kṛta) *adj.* which is used as an axle (for a larger figure of a wheel) परितो विलिखेच्चक्रं पूर्वमक्षीकृतं हि यत् AhirbuS. 22.15.

**अक्षीकृत्य** (akṣī-kṛtya) *ger.* having used as an axle (for a larger figure of a wheel) अक्षीकृत्यैतच्चक्रं तु चक्रमन्यत् प्रवर्तते AhirbuS. 23.29.

**अक्षीगतत्व** (akṣīgata-tva) *n.* eye-sore (the state of being in the eye) (यस्य वा…अक्षमा परोपतापेषु, विद्वेषो व्यसनेषु) विद्वेषो अक्षीगतत्वं अप्रीतिर्वा व्यसनेषु द्यूतादिसप्तव्यसनेषु YaśasCam. (comm.) ii. 237.28.

**अक्षीण** (á-kṣīṇa) *adj.* [*f.* -ā] **1A** not exhausted, not wasted, not decreased, not destroyed **B** imperishable, unchanged **C** inexhaustible **D** unbroken, uninterrupted, continuous **E** endless, permanent, everlasting **2** not waning (moon) **3A** not reduced, not decreasing (in syllables) **B** (in weight or quantity or intensity) **C** (in number) **4** not lacking (in good qualities), not miserable, noble **5** not feeble, not flagging, strong, bold **6** not thin, not lean, huge, massive, large, profuse, excessive **7** unfailing, infallible **8** free from harassment, free from handicap **9** unhurt **10** not meek or humble, boastful. **1A** not exhausted, not wasted, not decreased, not destroyed तद्धि समृद्धं यदक्षीणऽएव पूर्वस्मिन्नन्नेऽथापरमन्नमागच्छति S'atBr. I. vi. 4.14; अक्षीणेषु समस्तेषु विशेषज्ञानकर्मसु। विश्वमेतत् परं चान्यद् भेदभिन्नदृशां नृणाम् ViṣṇuP. vi. 7.52; कुशलाकुशलैः कन्दैरक्षीणैस्तैस्तदा युताः (प्रजाः) BrahmāṇḍP. i. 7.193; ṬupṬ. 37.5 (*on* iv. 3.28); कर्मण्यनेकानि संभवन्ति…अतोऽक्षीणानि तानि ChāndoUBh. 300.9 (*on* v. 10.5); BrahmSūBh. (S'aṅ.) 663.1 (*on* iii. 3.27); आत्मा…। अक्षीणैः कर्मसंतानैः…जनयति BṛĀraUBhVā. iii. 2.66; NyāyMañ. ii. 77.8; पापसमुच्चये। नाक्षीणे जायते पुंसां मार्तण्डाभिमुखी मतिः BhaviP. 112A.13 (i. 63.9); 177B.4 (i. 120.22); अक्षीणायां तु वासनायाम्…नास्ति मनोनाशः JīvanVi. 37.3; **1B** imperishable, unchanged (अक्षितमसि) अक्षितम् अक्षीणम् अक्षतं वा असि इत्येकं यजुः ChāndoUBh. 190.6 (*on* iii. 17.6); (अहम्…सुमेधा अमृतोऽक्षितः) अक्षितः अक्षीणः अव्ययः अक्षतो वा TaiUBh. 213.2 (*on* 1.10); अक्षीणा इति ता (= देवताः) ज्ञात्वा नान्नक्षयमुपाक्षते BṛĀraUBhVā. ii. 2.23; **1C** inexhaustible अक्षीणः खलु दाक्षिण्यकोशो महताम् HarṣaC. 43.4; सः (= अर्जुनः)…अक्षीणबाणोज्ज्वलतूणधारी RāghPāṇ(Ka.) 3.3 (see also **7**); अक्षीणपुण्यनिचया खलु धर्मपत्नी EI. iv. 43.89; अक्षीणगुणमाणिक्यश्रीगभीरमहार्णवः (मन्मसत्यमहीपतिः) EI. iv. 91.93; EI. xix. 113.8; अन्यदा घृतभाण्डमक्षीणं प्रेक्ष्य सुस्थके चित्रकवल्ली दृष्टा PurāPraSaṁ. 82.24; **1D** unbroken, uninterrupted, continuous कच्चिदाचरितां पूर्वैः…। वर्तसे वृत्तिमक्षीणां धर्मार्थसहितां नृपु MahāBhā. ii. 5.8; तरुरिवाक्षीणफलच्छायतयैकान्तपरोपकारी…अक्षीणकुशलाशयः (वराहदासः) EI. xi. 18.4–5; अक्षीणदानसंतानजनितसौरभसमृद्धया AvantiKa. 4.2; तारायाः…बाष्पाम्बुकणाभ्युक्षणैरक्षीणैः…लब्धसंज्ञो वाली RāmāCam. 4.19(2); अक्षि(?क्षी)णपुण्ययशसां प्रभवः EI. iii. 76.26; **1E** endless, permanent, ever-lasting अपास्तमक्षीणमतुल्यम्…शिवालयं मोक्षमुदाहरन्ति VarāṅgaC. 10.7; अहमेव अक्षयः अक्षीणः कालः GītāBh.(S'aṅ.) 294.1 (*on* 10.33); GītāBh.(Rā.) 248.7 (*on* 4.12); ददाति गतिमक्षीणां ध्यानमात्रस्थितो रविः BhaviP. 154A.1 (i. 102.18); **2** not waning (the moon) अथ यदक्षीणे (चन्द्रमसि) दद्यात् समदऽह कुर्याद् देवेभ्यश्च पितृभ्यश्च S'atBr. II. iv. 2.7; **3A** not reduced, not decreasing (in syllable) बृहतीक्षयाच्च बृहत्या व्यत्यासो नोपपद्यते। … अक्षीणाश्च बृहत्यः LāṭyāS'S. x. 7.7; **3B** (in weight or quantity or intensity etc.) अग्नौ सुवर्णमक्षीणं रजते द्विपलं शते YājñaSm. 2.178 (cf. DīpKa. 62.16); ओदनो विशदः सिद्धः…। तण्डुलैः सकलप्रायैरक्षीणैश्चापि पठ्यते KāśyaS. 253B.27; शतशो वापयेदेतत् (= अभ्रकादिकम्) अक्षीणं सावशेषितम्। समांशं रसराजस्य गर्भे द्रवति निश्चितम् Rasā. 8.52; 10.24; 15.74; अक्षीणश्चाग्निबद्धोऽसौ (= रसः) खेचरादिकृत् स हि RasRaSa. 11.83; 30.12; स स्वयं घृतं तोलयंस्तदक्षीणं निरीक्ष्य PrabaCin. 108.13; अक्षीणेन कृतालोका धर्मेणेव निजेन सा KathāSaSāg. vi. 3.95; तेजोऽस्य तत् किमक्षीणम् PariPar. 1.265; **3C** (in number) मण्डूका विविधाहाराइछलपूर्वोपसाधिताः। कियन्तं कालमक्षीणा भवेयुः खादतो मम Tantrākhyā. 117.4; PañcT. 3.95 (360.4); भयात् पलाय्य यातेषु धनिकेषु सुरालयात्। (परिपालकम्) तमयुः पुनरक्षीणा देवागारनिवासिनः NarmaMā. 1.68; **4** not lacking (in good qualities), not miserable, noble निराशिषमनारम्भं निर्नम-

स्कारमस्तुतिम् । अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः MahāBhā. xii. 237. 24; अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः MahāBhā. iii. App. I. 19. 54; v. 220*(2); Subhāṣi. 3048; **5** not feeble, not flagging, strong, bold मरुत्ते विमलोऽक्षीणोऽवैषम्यायास्तु दक्षिणः MārkP. 128. 33; अक्षीणश्चाप्यदीनश्च स्थिरधातिवन्द्रियश्च यः । तस्य साधयितुं शक्या यमिका हन्त्यतोऽन्यथा CaraS. vi. 17. 41 (1922 Ed.)=RugVi. 12. 14; तस्माद्यक्षे मिहि ··· अक्षीणस्यैव देहिनः(?) BhelaS. 3. 11 (1. 4); (राजवाहनः) कंचिद् वाडवं क्षीणं वपुषा वासनया चाक्षीणं न्यभालयत् DaśKuC. 150. 7; अक्षीणम् ··· न पाययेत् ··· यवागूम् SiddhYo. 74. 21; गवाक्षीणेन चञ्चद्भ्रुवा । (लक्षितः) ··· उग्र (त्वम्)···रम्यो भवानीरुचा SaraKaṇṭhā. 276. 18; **6** not thin or lean, huge, massive, large, profuse, excessive यस्त्वक्षीणसुवर्णभारघटि[तं] सद्रत्नपीठस्थितं क्र[त्वें]द्रादिगणान् गुणैरतियौ श्रीभीमना[थ]म्मुदा EI. iv. 43. 99; वल्लालसेनः···अक्षीणा रचयाञ्चकार वशगाः स्वस्मिन् परेषां श्रियः EI. xxi. 217. 12; अश्रं यस्याश्वमेधं क्वचिदपहरतो भाति पत्युः सुराणां प्रत्यंगं यत्कलंकव्रणपटलमिवाक्षीणमक्ष्णां सहस्रम् EI. xii. 192. 58; नीले नेत्रे···घोणोऽक्षीणः···मध्यः पादौ तव मयि विभो शश्वदेते स्फुरन्तु HariC.(Pa.) 31; अक्षीणं दृगरुणिमानम्···तथोत्तमाङ्गकम्पम् । वासोविच्युतिमवकल्प्य वाहनेतुमैरैयान्तरमजनिष्ट मन्युरेव Acyutarā. 11. 15; **7** unfailing, infallible सः (=दशरथः)··· अक्षीणबाणोज्ज्वलतूणधारी RāghPāṇ.(Ka.) 3. 3 (comm. समर्थेन) (see also **1C**); **8** free from harassment or handicap(?) यौगन्धरायणः – अक्षीणं मां कुरु । व्यक्तं भरतरोहको मां द्रष्टुमिच्छति PratiYau. 4. 11(6); **9** unhurt गोपगणाः···प्रैक्षन्त हन्त निपतन्तममुष्य (तृणावर्तस्य) वक्षस्यक्षीणमेव च भवन्तमलं हसन्तम् (कृष्णम्) Nārāy. x. 43. 6; **10** not meek or humble, boastful तामक्षीणां बलिगिरमुपाकर्ण्य कारुण्यपूर्णः···। भूमिं पादत्रयपरिमितां प्रार्थयामासिथ त्वम् Nārāy. viii. 31. 2 (comm. अक्षीणां जगदीश्वरत्वस्यापयित्रीम्)

**अक्षीण** (akṣīṇa) *m.* name of one of the sons of Viśvāmitra (विश्वामित्रस्य पुत्राः) मधुच्छन्दश्च भगवान् देवरातश्च वीर्यवान् । अक्षीणश्च शकुन्तश्च बभ्रुः कालपथस्तथा MahāBhā. xiii. 4. 49.

**अक्षीणऋद्धि** (akṣīṇa-ṛddhi) *adj.* having undiminished wealth प्रायेणाध्यासितग्रामं म्लेच्छैरक्षीणऋद्धिभिः TriṣaS'aPuC. i. 5. 48.

**अक्षीणकण्ठीरव** (akṣīṇa-kaṇṭhīrava) *m.* powerful (*lit.* not weak) lion अक्षीणकण्ठीरवाकुण्ठविक्रान्तिरुग्रं ममर्दोरु दन्तीन्द्रम् (कृष्णः) StavMā. 226. 18.

**अक्षीणकनकाकर** (akṣīṇa-kanakākara) *m.* inexhaustible gold mine पुत्रो मे दीयतां क्षिप्रमक्षीणकनकाकरः BhaviP. 634B. 8 (iv. 13. 18)

**अक्षीणकरुण** (akṣīṇa-karuṇa) *adj.* having undiminished compassion म्लेच्छैरुपद्रुतां क्षोणीमक्षीणकरुणो नृपः । उद्दधार्षीत् क्रमादेवम् RājTa.(Jo.) 1093.

**अक्षीणकर्मन्** (akṣīṇa-karman) *adj.* whose (past) actions have not been exhausted (by experiencing their results) एवमपान्तरतमःप्रभृतयोऽपीश्वराः परमेश्वरेण तेषु तेष्वधिकारेषु नियुक्ताः सन्तः सत्यपि सम्यग्दर्शने कैवल्यहेतौ अक्षीणकर्माणो यावदधिकारमवतिष्ठन्ते, तदवसाने च अपवृज्यन्ते BrahmSūBh.(S'aṅ.) 669. 10 (*on* iii. 3. 32); तथात्माप्यक्षीणकर्मा कर्मजास्तनूः शरीराणि सुरनराद्यात्मकानि गृह्णाति Aparā. 1008. 17 (*on* 3. 161); अक्षीणकर्मणां पुनर्बन्ध इति पुनर्देहसंबन्धोपपत्तेश्च S'rutaPra. ii. 226. 8 (*on* ii. 1. 12)

**अक्षीणकर्मबन्ध** (akṣīṇa-karmabandha) *adj.* whose bondage in the form of (past) actions is unexhausted अक्षीणकर्मबन्धश्च ज्ञात्वा मृत्युमरिष्टतः । उत्क्रान्तिकाले संस्मृत्य पुनर्योगित्वमृच्छति MārkP. 42. 16; S'ārṅgaPa. 4564.

**अक्षीणकल** (akṣīṇa-kala) *adj.* **1** of undiminished arts उदायनो निशानाथ इव नव्योऽकलङ्कभूः । अगम्यस्तमसोऽक्षीणकलोऽभूत्तत्र भूपतिः PrabhāC. 9. 6; **2** whose digits never diminish (i. e. the moon who never gets diminished in her digits) PrabhāC. 9. 6.

**अक्षीणकलस्वर** (akṣīṇa-kalasvara) *adj.* possessed of loud melodious voice यामिन्याः पश्चिमे यामे प्रबुद्धोऽधोक्षजस्ततः । तथैव गायतोऽश्रौषीत् तानक्षीणकलस्वरान् TriṣaS'aPuC. iv. 1. 876.

**अक्षीणकल्मष** (akṣīṇa-kalmaṣa) *adj.* having the impurities (of mind) not destroyed, having the sins not destroyed इदानीमप्यक्षीणकल्मषोऽसीत्यूचे प्रजापतिः Bhām. 218. 19 (*on* i. 3. 19); तत्राप्यक्षीणकल्मषस्य ब्रह्मप्राप्त्यसंभवात् NītiMā. 66. 21.

**अक्षीणकान्ति** (akṣīṇa-kānti) *adj.* whose lustre has not diminished सोऽक्षीणकान्तिरभवन्महासत्त्वशिरोमणिः TriṣaS'aPuC. i. 1. 458.

**अक्षीणकेश** (akṣīṇa-keśa) *adj.* [*f.* -ā] whose hair has not diminished (or fallen) अक्षीणकेशदन्ताम्···श्रुतवानेवंविधः पुरुषः । शीलयतु KandaCū. iii. 1. 13.

**अक्षीणकोश** (akṣīṇa-kośa) *adj.* whose treasury is never exhausted अक्षीणकोशौ···। त्रिवर्गाबाधया राज्यं यथावत् तौ प्रचक्रतुः TriṣaS'aPuC. i. 3. 233; iii. 6. 7.

**अक्षीणकोश** (akṣīṇa-kośa) *m.* inexhaustible treasure भवनानि···। अक्षीणकोशपूर्णानि रत्नवन्ति कुटुम्बिनाम् PadmP.(Ra.) 83. 17.

**अक्षीणकोषश्री** (akṣīṇa-koṣaśrī) *adj.* the prosperity or opulence of whose treasure is (ever) undiminished त्वमप्यक्षीणकोषश्रीर्मत्प्रसादाद्भविष्यसि KathāSaSāg. vii. 1. 73.

**अक्षीणक्षुद्विकारिन्** (akṣīṇakṣudvikār-in) *adj.* whose agony or convulsions (i. e. hankering for more food) due to hunger were not diminished निगीर्णेऽतिथिना तस्मिन्नक्षीणक्षुद्विकारिणा । तद्भार्याप्यादरवती तस्मै स्वमशनं ददौ DarpDa. 6. 43.

**अक्षीणखेलनव्यसन** (akṣīṇa-khelanavyasana) *adj.* whose addiction to play (i. e. gambling) is undiminished अथाहमेकदा प्रतिक्षणमक्षीणखेलनव्यसनः···चिन्तितवानस्मि UdaySuKa. 56. 7.

**अक्षीणगात्र** (akṣīṇa-gātra) *adj.* (an idol) having not too small a form तत्राभिमुखमेवादौ स्पष्टमानगुणान्वितम् ।···यद्भवेत्स्थानमक्षीणगात्रं पृष्ठगतं तु तत् ViṣṇuDhaP. iii. 39. 6.

**अक्षीणगाम्भीर्य** (akṣīṇa-gāmbhīrya) *adj.* **i** possessing undiminishing grandeur or dignity क्षीणोऽप्यक्षीणगाम्भीर्यः समुद्र इव स व्यभात् BuddhaC. 12. 99. **ii** of undiminishing depth, BuddhaC. 12. 99.

**अक्षीणचन्द्र** (akṣīṇa-candra) *m.* undiminishing moon, the moon not in its waning period (i. e. in the bright half of the month) अक्षीणचन्द्रे शुभवासरे च तिथावरिक्ते च गृहप्रवेशः YogYā. 17. 13; अक्षीणचन्द्रे सुहृदुच्चभांशे ···जातोऽत्र दीर्घायुः HorāSā. 6. 56; अक्षीणचन्द्रे शुभवासरे च तथा विविक्ते च गृहप्रवेशः YuktiKa. 34. 4.

**अक्षीणचेतनाकोष** (akṣīṇa-cetanākoṣa) *adj.* whose store of sentience is undiminishing अक्षीणचेतनाकोषस्य मम न परिजनायत्ता प्रभुता AmṛUda. 4. 12(1)

**अक्षीणज्ञानशक्ति** (akṣīṇa-jñānaśakti) *f.* the undiminishing power of the form of knowledge or knowing power अव्ययात्मा अक्षीणज्ञानशक्तिस्वभावोऽपि सन्···संभवामि···आत्ममायया GītāBh.(S'aṅ.) 114. 8 (*on* 4. 6); VīraMi.(Bhakti.) 157. 28.

**अक्षीणता** (akṣīṇa-tā) *f.* inexhaustibleness, state of not diminishing अक्षय्यमक्षीणता ManvaVi. 401. 26 (*on* 3. 202); नाडी··· । विशीर्णेऽक्षीणतां याति मासान्ते मरणं ध्रुवम् (comm. विशीर्णे इति देहस्य विशेषणं, तेनातिकार्श्येऽपि देहे ···कदाचित् अक्षीणतां अनतिकृशतां यदा गच्छति) NāḍīVi. 34.

**अक्षीणतिमिर** (akṣīṇa-timira) *n.* **1** undiminishing (i. e. dense) darkness नेयं विराजते राजन्वर्जितेवामृतत्विषा । निशा नयोज्झिता लक्ष्मीरक्षीणतिमिरावृता RāmāMañ. 274. 26; **2** undiminishing ignorance, RāmāMañ. 274. 26.

**अक्षीणतोय** (akṣīṇa-toya) *adj.* [*f.* -ā] whose water is not exhausted or does not diminish पश्यामि ··· । अम्बामिवार्यामनुकम्पमानामक्षीणतोयाम् (नर्मदाम्) SkandP. v(3). 19. 59.

**अक्षीणत्यागहीन** (akṣīṇatyāga-hīna) *adj.* lacking in unstinted liberality अक्षीणत्यागहीनस्य विभूतिसमयेऽप्यभूत् । संस्कारौपयिकं नास्य पर्याप्तं निधनं धनम् RājTa.(Ka.) 8. 3341.

**अक्षीणत्व** (akṣīṇa-tva) *n.* **1** undiminishing nature न क्षीयते न क्षरति विकारप्रसृतं तु तत् । अक्षरं तेन चाप्युक्तमक्षीणत्वात्तथैव च BrahmāṇḍP. iii. 3. 94; **2** the state of not being miserable अक्षीणत्वमदीनत्वम् JīvanVi. 29. 9; **3** absence of loss or destruction अक्षीणत्वात् संतानस्य कुतो नियोगः BālaKrī. i. 76. 19 (*on* 1. 69)

**अक्षीणदयानिधान** (akṣīṇadayā-nidhāna) *n.* abode of inexhaustible compassion or mercy अद्राक्षमक्षीणदयानिधानमाचार्यमाद्यं वटमूलभागे DakṣiMū-St. 2.

**अक्षीणदुःखवेग** (akṣīṇa-duḥkhavega) *adj.* having undiminishing vehemence of grief सः··· । अक्षीणदुःखवेगश्च शर्म नैवाध्यगच्छत Rāmā. ii. App. I. 23(6)

**अक्षीणदोष** (akṣīṇa-doṣa) *adj.* whose faults or defects are not reduced, not free from faults अक्षीणदोषाद्विषमादिष्टानिष्टभयोज्झितात् । दुर्जनाद्वत देवा अप्यशक्ता इव बिभ्यति KathāSaSāg. xviii. 2. 95.

**अक्षीणद्रविण** (akṣīṇa-draviṇa) *adj.* whose wealth is inexhaustible अक्षीणद्रविणः श्रीमान् हेमपर्वतसंनिभः । पराननुभवन् भोगान् PadmP.(Ra.) 22. 104.

**अक्षीणधन** (akṣīṇa-dhana) *n.* inexhaustible wealth अक्षीणघ(? ध)ननिश्चिन्ताः···नराः । क्रीडन्ति वरनारीभिः PadmP.(Ra.) 31. 73.

**अक्षीणधृताक्षतन्त्र** (akṣīṇa-dhṛtākṣatantra) *adj.* **1** having the axle fixed properly or accurately दृप्तासुरप्राणपणापहारहेतोरिवाक्षीणधृताक्षतन्त्रम् ।

पुरारये प्रारभतात्तयत्नमथो रथं कर्तुममर्त्यलोकः S'rīKaC. 20.1; **2** which possesses the full skill of dice-play, S'rīKaC. 20.1.

**अक्षीणनकुल** ( akṣīṇa-nakula ) *n.* name of a weapon or missile so called because of the inexhaustible mongooses issuing out of it सा नकुली वाणी···। अक्षीणनकुलं नाम महास्त्रं सर्वतोमुखम् ।···संदधे शार्ङ्गधन्वनि BrahmāṇḍP. iii. 23.84.

**अक्षीणनामन्** ( akṣīṇa-nāman ) *adj.* whose name is everlasting, (hence of illustrious name) पानदोषेण भूयसा । क्षयमक्षीणनामानो जग्मुरन्धकवृष्णयः ( comm. अक्षीणनामानः अतिप्रतीताः ) NītiSā. 15.63.

**अक्षीणनिजपक्ष** ( akṣīṇa-nijapakṣa ) *m.* one's own views or conclusions which are never weak (i.e. one's own unassailable or strong views or conclusions) अक्षीणनिजपक्षेषु ख्यापयन्ती गुणानसौ ।···न्यायकन्दली NyāyKa. 330.15.

**अक्षीणनिद्र** ( akṣīṇa-nidra ) *adj.* having unending or excessive sleep कुम्भकर्णः···अक्षीणनिद्रः सततं बभूव DaśāvaC. 7.8.

**अक्षीणनिधिक** ( akṣīṇanidhi-ka ) *adj.* having inexhaustible treasure अक्षीणनिधिके स्थाप्य चारुदत्तं स्वमन्दिरे BṛKathāK. 93.286.

**अक्षीणपक्ष** ( akṣīṇa-pakṣa ) *adj.* whose party is not weak (i.e. whose supporters like love, hatred etc. are strong) अक्षीणपक्षस्य च क्षेत्रज्ञक्षितिनायकस्य रिपवः कुत्र AmṛUda. 1.9.

**अक्षीणपक्षाक्रमण** ( akṣīṇapakṣākramaṇa ) *n.* **1** entering into the bright fortnight क्षुन्दन्नक्षीणपक्षाक्रमणपरिणतेरन्तरिक्षान्तरालं वध्याद्राजा द्विजानामविरतविरहक्ष्वेडपीडाभरं वः S'rīKaC. 12.65; **2** ascending with not weak (i.e. strong) wings, S'rīKaC. 12.65.

**अक्षीणपक्षावलि** ( akṣīṇa-pakṣāvali ) *adj.* **1** who has many strong supporters on his side अचलोऽप्यक्षीणपक्षावलिः । सोऽयं माकनृपो···विजेजीयते YātrāPra. 6.76; **2** having his wings intact, YātrāPra. 6.76.

**अक्षीणपक्ष्माङ्कुर** ( akṣīṇa-pakṣmāṅkura ) *m.* abundant eye-lash उपचितामक्षीणपक्ष्माङ्कुरेषु···आशास्ते मम लोचनं व्रजशिशोर्मूर्तिम् KṛṣṇaKa. 1.54.

**अक्षीणपाप** ( akṣīṇa-pāpa ) *adj.* whose sins are not destroyed सत्यामपि विद्यायां नाक्षीणपापस्य मोक्षः ManuBh. ii. 484.10 (*on* 12.104); ManvaVi. 1460.15 (*on* 11.233)

**अक्षीणबाहुद्रविण** ( akṣīṇa-bāhudraviṇa ) *n.* inexhaustible might and wealth अत्षी( ? अक्षी )णबाहुद्रविणहृतमहीचक्रविख्यातकीर्तेर्यो देवादेकमल्लात् ··· आत्तजन्मा EI. xix. 113.8.

**अक्षीणबुद्धि** ( akṣīṇa-buddhi ) *adj.* possessing unfailing (i.e. sound) intelligence वत्सौपम्येन दोग्धव्यं राष्ट्रमक्षीणबुद्धिना MahāBhā. xii. 88.18; SūktiRa. 157.5.

**अक्षीणभक्ति** ( akṣīṇa-bhakti ) *adj.* having unfailing (i.e. great) devotion अक्षीणभक्तिः क्षीणेऽपि नन्दे स्वाम्यर्थमुद्वहन् । पृथिव्यां स्वामिभक्तानां प्रमाणे परमे स्थितः MudrāRā. 2.22.

**अक्षीणभालनयन** ( akṣīṇa-bhālanayana ) *adj.* with a strong eye on the forehead तं देवदेवम्···अक्षीणभालनयनम्···प्रणनाम महामुनिः SkandP. iii(3). 16.21.

**अक्षीणभूयिष्ठ** ( akṣīṇa-bhūyiṣṭha ) *adj.* [ *f.* -ā ] with the major part not elapsed उत्तिष्ठ यावदक्षीणभूयिष्ठा रात्रिः TilaMañ. 325.17.

**अक्षीणमहर्द्धि** (akṣīṇa-maharddhi) *adj.* possessing great supernatural power तुभ्यं नमोऽक्षीणमहर्द्धये MahāP. 2.73.

**अक्षीणमहानस** (akṣīṇa-mahānasa) *adj.* who possesses the miraculous power of making the food inexhaustible (a variety of *ṛddhi*) लाभान्तरायक्षयोपशमप्रकर्षप्राप्तेभ्यो यतिभ्यो यतो भिक्षा दीयते ततो भाजनाच्चक्रधरस्कन्धावारोऽपि यदि भुञ्जीत तद्दिवसे नान्नं क्षीयते तेऽक्षीणमहानसाः TattvāRāVār. iii. 36.3 (p. 204)

**अक्षीणमहानस** ( akṣīṇa-mahānasa ) *n.* inexhaustible kitchen (i.e. food) महानसमन्नपाकस्थानं तदाश्रितत्वाद्वान्नमपि महानसमुच्यते ततश्चाक्षीणम् ···तच्च तन्महानसं च भिक्षालब्धं भोजनमक्षीणमहानसम् AupaSūṬ. 53A.8.

**अक्षीणमहानसत्व** ( akṣīṇamahānasa-tva ) *n.* state of having inexhaustible kitchen (i.e. food) केषांचिदक्षीणमहानसत्वं क्षीराश्रवत्वं वरकोष्ठबुद्धिः।··· अभूत् VarāṅgaC. 30.69.

**अक्षीणमहानसर्द्धि** ( akṣīṇamahānasarddhi ) *adj.* having inexhaustible food as a miraculous power अन्नस्य पात्रपतितस्याल्पस्याप्यतिदानतः । अक्षयेणाक्षीणमहानसर्द्धयश्च तेऽभवन् TriṣaS'aPuC. i. 1.871.

**अक्षीणमहानसिकत्व** ( akṣīṇamahānasika-tva ) *n.* state of one having inexhaustible food आकाशगामित्वमक्षीणमहानसिकत्वम् SthānṬ. 332B.2.

**अक्षीणमहालय** ( akṣīṇa-mahālaya ) *adj.* whose residence was never filled up ( a kind of *labdhi* ) अल्पदेशेऽपि प्राणिनां सुखम् । असंख्यानां स्थितेरासंस्ते चाक्षीणमहालयाः TriṣaS'aPuC. i. 1.872; अक्षीणमहालयास्तु मुनयो यस्मिन् चतुःशयेऽपि मन्दिरे निवसन्ति तस्मिन् मन्दिरे सर्वे देवाः सर्वे मनुष्याः सर्वे तिर्यञ्चोऽपि यदि निवसन्ति तदा तेऽखिलाः अपि अन्योन्यं( ? अन्योन्य- ) बाधारहितं सुखेन निवसन्ति इति अक्षीणमहालयाः Tattvārthavṛtti 3.36.

**अक्षीणमहालयलब्धि** ( akṣīṇamahālaya-labdhi ) *f.* the miraculous quality of possessing a residence which can never be filled up by any number of visitors अक्षीणमहालयलब्धिप्राप्ता यतयो यत्र वसन्ति देवमनुष्यतैर्यग्योना यदि सर्वेऽपि तत्र निवसेयुः परस्परमबाधमानाः सुखमासते TattvāRāVār. 3.36.3 (p. 204)

**अक्षीणमहिमन्** ( akṣīṇa-mahiman ) *adj.* having undiminished power अक्षीणहिमप्रकरै( v. l. अक्षीणमहिमहिमप्रसरै )रध्वगान्तःकरणानि सीमन्तयन्हेमन्तसमयः समुदजृम्भत RāmāCam. 3.13(25); क्षोणिमण्डलम् । ररक्षाक्षीणमहिमा श्रेयांसः श्रेयसां निधिः TriṣaS'aPuC. iv. i. 92.

**अक्षीणराग** ( akṣīṇa-rāga ) *adj.* **i** having undiminished redness आशां संप्रति वासवीमनुभवन्नक्षीणरागः शशी । ···आलिङ्गति···रजनीम् VasaTi. 46.6; **ii** having undiminished passion, VasaTi. 46.6.

**अक्षीणरागद्वेष** ( akṣīṇa-rāgadveṣa ) *adj.* whose affection and hatred are not diminished अक्षीणरागद्वेषोऽपि मत्प्रियः परमः परम् । पदमाप्नोति BhaviP. 111B.9 (i. 62.32)

**अक्षीणरूपत्व** ( akṣīṇarūpa-tva ) *n.* indestructible nature अक्षितोऽक्षीणरूपत्वात् TaiUBhāVā. 36.58(1)

**अक्षीणलक्ष्मी** ( akṣīṇa-lakṣmī ) *f.* undiminished beauty स्तनपयस्व··· अक्षीणलक्ष्मीपुषा । कामाक्षि स्मितकन्दलेन MūkaPañ. 2.34.

**अक्षीणलक्ष्मीक** ( akṣīṇalakṣmī-ka ) *adj.* having undiminished beauty अक्षीणलक्ष्मीकमिदं सदा ते सौम्यं मुखं तीर्थप NemiC. 6.41.

**अक्षीणलोचन** ( akṣıṇa-locana ) *m.* the sun सूर्यः सूरिर्ग्रहधनो हरिदक्षीणलोचनः NāmaMāli. 110.

**अक्षीणवत्** ( a-kṣīṇava(n)t ) *adj.* not perished क्षीणद्यूतास्तथैवान्येऽपि··· अत्राप्यक्षीणवन्तो नु यशोभिः क्षितवर्जितैः DvyāśraKā. 9.48.

**अक्षीणवासन** ( akṣīṇa-vāsana ) *adj.* having the impressions (of desires etc.) undiminished अज्ञातत्वात्तु तामेतामक्षीणवासनो भवेत् YogVā. iv. 57.18.

**अक्षीणवृत्त** ( akṣīṇa-vṛtta ) *adj.* whose conduct is not impaired अक्षीणवृत्तो न क्षीणो वृत्ततस्तु हतो हतः MahāBhā. iii. App. 32.46.

**अक्षीणवृत्ति** ( akṣīṇa-vṛtti ) *adj.* whose means of livelihood are not diminished अक्षीणवृत्तेरपि कथंचिज्जातलौल्यस्य स्मृत्यन्तरदर्शनाचापरिवृत्तेश्च दण्डः ManuBh. ii. 213.24 (*on* 8.339)

**अक्षीणशक्ति** ( akṣīṇa-śakti ) *adj.* whose strength is not weakened अक्षीणशक्तिः संस्कारो येषां तिष्ठन्ति तेऽनघाः PramāVā. 2.198; अक्षीणशक्तिर्दृष्ट्योऽसौ AdbhuDa. 7.10; 8.21.

**अक्षीणशक्तिक** ( akṣīṇaśakti-ka ) *adj.* whose strength is undiminished भगवानजितप्रभुः···विहरन्नार्यदेशेष्वक्षीणशक्तिकः TriṣaS'aPuC. ii. 3.323.

**अक्षीणश्री** ( akṣīṇa-śrī ) *adj.* whose beauty or splendour is undiminished असावक्षीणश्रीः···प्रपेदे प्रेयस्याः···निलयनम् KoṭiVi. 29.

**अक्षीणश्रेयस्** ( akṣīṇa-śreyas ) *n.* undiminished bliss सर्वं हित्वाग्रहीद्दीक्षामक्षीणश्रेयसे सः PrabhāC. 132.2.

**अक्षीणसंपद्** ( akṣīṇa-sampad ) *adj.* whose wealth is undiminished साथ विज्ञपयामास यक्षमक्षीणसंपदम् PariPar. 3.32; हाटकानां ततः कोटिं क्षोणीं चाक्षीणसंपदम् । भूदेवेभ्यो नृदेवोऽदाद्दक्षिणाम् HammīMaKā. 9.93.

**अक्षीणसर्वकोश** ( akṣīṇa-sarvakośa ) *adj.* having all (kinds of) treasures unexhausted अक्षीणसर्वकोशोऽसावुपचारं परं नृपः । प्रीतो भामण्डले चक्रे PadmP.(Ra.) 30.145.

**अक्षीणसृष्टि** ( akṣīṇa-sṛṣṭi ) *adj.* having noble genealogy or pedigree, continuous ancestry of good or high breed एवमेभिः शुभलक्षणैरक्षीणसृष्टिरसावर्हत्यधिरोढुम्···स्वामिनः ( तुरगी ) UdaySuKa. 125.17.

**अक्षीणहिमप्रकर** ( akṣīṇa-himaprakara ) *m.* non-diminishing mass of snow अक्षीणहिमप्रकरैरध्वगान्तःकरणानि सीमन्तयन्हेमन्तसमयः समुदजृम्भत RāmāCam. 3.13(25)

**अक्षीणांस** ( akṣīṇāṁsa ) *adj.* whose shoulders are stout (not emaciated) तस्याः···शौरिस्तीरे पुरेव···विजहाराक्षीणांसः···सः YudhiVi. 2.64; हीरक्षितिपतिरक्षीणांसः···मधुराक्षरमित्थमाचचक्षे ĀnandRa. 8.14(5)

**अक्षीणाकाङ्क्ष** ( akṣīṇākāṅkṣa ) *adj.* whose desire or longing is not

diminished क्षणदा विरराम तयोरक्षीणाकाङ्क्षयोरेव KuṭṭiMa. 390.

**अक्षीणाक्षिस्तन** ( akṣīṇākṣistana ) *adj.* [ *f.* -ī ] with large eyes and breasts अक्षीणाक्षिस्तनीमपि…शीलयतु KandaCū. iii. 1. 12.

**अक्षीणाग्निबल** ( akṣīṇāgnibala ) *adj.* whose digestive fire and strength are not diminished ( लशुनम् ) अक्षीणाग्निबलानां तु सर्वरोगेषु शस्यते KāśyaS. 176A. 41.

**अक्षीणाघ** ( akṣīṇāgha ) *adj.* whose sins are not exhausted ( पारानन्दमतं ) अक्षीणाघा न निविशन्ति PārāSū. 8. 5.

**अक्षीणाजीवित** ( akṣīṇājīvita ) *adj.* whose life-span is not shortened or reduced अक्षीणाजीवितं पुत्रं कालो मे नीतवान् YogVā. iv. 11. 12.

**अक्षीणामर्ष** ( akṣīṇāmarṣa ) *adj.* possessing unmitigated wrath अक्षीणामर्षमत्युग्रसाध्यसाधनसस्पृहम् । तच्चक्रं प्रस्फुरद्दीप्ति विष्णोरभ्याययौ करम् VisṇuP. v. 34. 44; BrahmP. 207. 43.

**अक्षीणामृत** ( akṣīṇāmṛta ) *n.* inexhaustible nectar प्राशनेऽपि तथा मन्त्रं पदैस्त्रिभिरुदाहरेत् । तानि स्युर्दिव्यविजयाक्षीणामृतपदानि वै MahāP. 40. 141 ( Cūrṇi अक्षीणामृतभागी भव )

**अक्षीणायुस्** ( akṣīṇāyus ) *adj.* whose life has not come to an end मृगसेनः…तमेवाषडक्षीणमक्षीणायुषमवाप्यामुञ्चत YaśasCam. ii. 338. 9.

**अक्षीणार्थ** ( akṣīṇārtha ) *adj.* having undiminished (i. e. inexhaustible) wealth अक्षीणार्थाविदानीं च वरान्मम भविष्यथः KathāSaSāg. x. 7. 90.

**अक्षीणावृतिराशि** ( akṣīṇāvṛtirāśi ) *adj.* whose series of nesciences (due to either moral or intellectual defects) are not reduced अक्षीणावृतिराशिस्तु कीदृगाप्तो भविष्यति TattvSaṁ. 3031.

**अक्षीणिका** ( akṣīṇikā ) *f.* the inexhaustible (sum, treasure, deposit, capital or money), perpetual endowment अक्षयनिधि – अव्ययं भाण्डागारं अक्षयनिधिं वा मूलधनं येन जीर्णीभूतदेवकुलस्योद्धारः करिष्यते अक्षीणिकां वा प्रतीतां वर्धयामि JñātāDhaṬ. 84A. 1.

**अक्षीणिन्** ( akṣīṇin ) *m. n.* EI. xviii. 143. 58. cf. अक्षिणिन् [ Sircar ]

**अक्षीणेन्दु** ( akṣīṇendu ) *m.* the moon who is not waning, the bright or waxing moon सौम्याः शुभाः शुभग्रहाः अक्षीणेन्दुपापयोगरहितबुधगुरुभृगवः NityoNi. 3. 23.

**अक्षीणोत्साह** ( akṣīṇotsāha ) *m.* undiminished enthusiasm भवतो लक्ष्मीरक्षीणोत्साहलक्षणा RāmāMañ. 292. 8.

**अक्षीपाशबन्ध** ( akṣīpāśabandha ) [ wrong analysis of इन्द्राक्षीपाशबन्ध ] [ Viśva. Lāṅgūlopaniṣad 215. 13 ] the snare of the goddess Indrākṣī.

**अक्षीब** ( akṣība ) [ =akṣīva ] *m. Guilandina* or *Hyperanthera moringa, Moringa pterigosperma* अक्षीबे जातस्य अश्वत्थस्य मणिः सर्वविषहरः ArthŚā. iii. 240. 1 (14. 4); विलङ्गाक्षीबकुल्माषमाषगोधूमसंस्कृताः( ? तम् ) । मोदकार्थे महीपाल पिष्टमाढकमिष्यते MātaLī. 11. 17; *n.* sea-salt क्षीबकुञ्जरयोगेऽपि कचिदक्षीबकुञ्जरम् ।…भाति यद्वनम् MahāP. 30. 73; लवणसंपर्कात् अक्षीबसंसर्गात्…पावको वैश्वानरः स्फुटति YaśasCam. i. 512. 20 (comm.); i. 107. 25 (comm.); Vaija. 133. 120; ŚabdaRa.(Vā.) 2915; KośaKaTa. i. 2848; *adj.* sober, not intoxicated अनेकाननमक्षीबम्… । दृष्ट्वैवं देवदेवस्य रूपं भानोर्महात्मनः । … तुष्टुवुस्ते दिवाकरम् BhaviP. 227B. 9 (i. 153. 47); अक्षीबक्षीबयोरैक्यं क्व किलेहाज्ञतज्ज्ञयोः YogVā. iv. 31. 22; अहमप्यङ्ग त्वद्वियोगरुजातुरम् । नित्योत्क्षपितमक्षीबं त्यक्त्वा स्वास्थ्यम्यवेदनः BṛKathāŚloSaṁ. 11. 89; NānārthāSaṁ. ii. 51. 53; ŚabdaRaSaK. 216. 13.

**अक्षीबा** ( akṣībā ) *f.* cf. अक्षीव *Indigofera*, ApūNāMā. 33.

**अक्षीभ** ( akṣībha ) *m.* [ cf. अक्षीव ] *Guilandina* or *Hyperanthera moringa* शिग्रुर्मोचकतीक्ष्णगन्धवृषदा अक्षीभशोभाञ्जनौ ŚabdaRa.(Vā.) 967.

**अक्षीय** ( akṣīya ) *m. Belleric Myrobalan* अक्षीयस्य फलं तिक्तं कषायं कफवातजित् BhojanKu. 112. 19.

**अक्षीय** ( akṣīyá ) *adj.* imperishable [ Debru. p. 791. ŚBK for ŚB *akṣayyá* ]

**अक्षीयमाण** ( á-kṣīyamāṇa ) *adj.* [ *f.* -ā ] not decaying, not diminishing, not perishing यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा स्वधया मदन्ति ṚV. i. 154. 4; शतधारमुत्समक्षीयमाणम्…तं रोदसी पिपृतं सत्यवाचम् ṚV. iii. 26. 9; अनु मन्यतामनुमन्यमानः प्रजावन्तं रयिमक्षीयमाणम् AV. vii. 20. 3; तस्य तेऽक्षीयमाणस्य निर्वपामि TaiS. I. i. 10. 2; इमा मे अग्न इष्टका धेनवः सन्तु षष्टिः सहस्रमयुतमक्षीयमाणाः TaiS. IV. iv. 11. 4; कामदुघा अक्षीयमाणाः VājaS. 17. 3; तदेनाः (इष्टकाः) कामदुघा अक्षीयमाणाः कुरुते ŚatBr. IX. i. 2. 19; तस्मात्तवेष सुतोऽध्यमानः पच्यमानोऽक्षीयमाणो गृहेषु तिष्ठति ŚatBr. X. vi. 1. 8; सहस्रधार उत्सो अक्षीयमाणः BhārŚS. iv. 16. 3; आपो मधुमत्योऽसिन्ते लोक उपदुह्यन्तामक्षीयमाणाः स्वधा नमः GautPiMe. i. 3. 4; महद्बलं धार्तराष्ट्रस्य राज्ञः को वै शक्तो हन्तुमक्षीयमाणः MahāBhā. v. 25. 12; अक्षीयमाणो न्यस्ताखस्त्वद्वाक्येनाहवे हतः । न त्वेनं युध्यमानं वै हन्यादपि शतक्रतुः MahāBhā. vii. 167. 46; अक्षीयमाणवस्त्वपरित्यागेच्छा मत्सरः NyāyVār. 451. 17 (*on* iv. 1. 3); अक्षीयमाणमपि तत् ( मूलद्रव्यं ) पूर्वावस्थातो गम्यते BrahmaSūBh.(Śaṅ.) 457. 13 (*on* ii. 3. 26); अदलत्सहस्रधा हृदयमक्षीयमाणमेकक्षणेनायुः TilaMañ. 190. 17; अपरिपक्वविवेकज्ञानस्याक्षीयमाणा व्युत्थानसंस्काराः TattvVai. 210. 24 (*on* 4. 28); न चाक्षीयमाणेन द्रवत्वेन सत्प्रतिपक्षत्वम् Kiraṇā. 77. 13; अक्षीयमाणानुपजीवत्वेतान् CaturCin. iii(1). 1264. 18.

**अक्षीयमाणद्रवत्व** ( akṣīyamāṇadrava-tva ) *n.* undiminishing fluidity अक्षीयमाणद्रवत्वं तत्राप्यस्ति ( सुवर्णे ) Kiraṇā. 77. 16.

[1]**अक्षीर** ( a-kṣīra ) *adj.* [ *f.* -ā ] **A i** not yielding milk अक्षीरा जननी येषामल्पक्षीरापि वा भवेत् KāśyaS. 3B. 41; तथाश्रोत्रियस्य जरत्या अक्षीरायाश्च ( गोः ) बुद्धिपूर्ववधे त्रैमासिकम् ( प्रायश्चित्तम् ) ManuBh. ii. 406. 4 (*on* 11. 115); **A ii** not having milk अपरास्तु काश्चिदक्षीरा अपि क्षीरम् … परिवेषयामासुः NalaCam. 3. 21(10); **A iii** without milk ( निवेदयेत् ) न भक्ष्यमन्नमक्षीरम् VisṇuDhaP. ii. 91. 20; **B** not yielding milky sap यास्त्वक्षीरा मूलवत्यस्तासां प्रदेशिनीप्रमाणानि त्रीणि काण्डानि प्रमाणमुपयोगे SuśruS. iv. 30. 5.

[2]**अक्षीर** ( akṣīra ) *m. Melix bukajun* महानिम्बः स्मृतोद्रेकी कर्मुको विषमुष्टिकः । केशमुष्टिर्निम्बरको रम्यकोऽक्षीर एव च DhanvNi. 13. 22; RājNi. 13. 26.

[3]**अक्षीर** ( akṣīra ) *adj.* [ *f.* -ā ] [ fr. akṣi + īr- ] casting glances अपरास्तु काश्चिदक्षीरा अपि क्षीरम्…परिवेषयामासुः NalaCam. 3. 21(10)

**अक्षीरपशु** ( akṣīra-paśu ) *m.* a (female) animal not yielding milk (for the time being) अक्षीरपशूनां तु भृतिः क्षीरमूल्यतः कल्पनीया SmṛtiCan. iv. 484. 1.

**अक्षीरभोजित्व** ( akṣīrabhoji-tva ) *n.* the state of one not consuming milk यदि वा भोक्तुरक्षीरभोजित्वम्…फलानि दीयन्ते ŚābaBh. 2287. 7 (*on* xii. 4. 44)

**अक्षीरलवण** ( a-kṣīralavaṇa ) *adj.* (food) without milk and salt अनाक्रोश्यमाक्रुश्यानृतं चोक्त्वा त्रिरात्रमक्षीरलवणं भोजनम् HirŚS. xxvi. 7. 14.

**अक्षीराक्षारभोजन** ( akṣīrākṣāra-bhojana ) *n.* meal not containing milk or acrid substances यमानां मित्रस्य मृगार्थस्याक्षीराक्षारभोजनमयुग्ममाच्छादनमनन्तर्हिता शय्या AVPari. XLVI. (1). 9.

**अक्षीराक्षारालवण** ( akṣīrākṣārālavaṇa ) *adj.* (food) without milk, alkali and salt अक्षीराक्षारालवणं भुञ्जानो द्वादश वर्षाणि नागारं प्रविशेत् ĀpaDS. i. (10). 28. 11.

**अक्षीरिन्** ( akṣīr-in ) *adj.* not possessing milky sap अक्षीरिणः कण्टकिनः कटुकाश्चात्रौषधयो न स्युः DrāhGS. iv. 2. 8.

**अक्षील** ( akṣīla ) *m.* name of a Ṛṣi-ancestor (Pravara) अक्षीलवत्कतवत …इति ( अध्वर्युः ) VīraMi.(Saṁskāra.) 633. 3; अक्षीलशण्डिलधनंजयवामदेवकुत्सष्टिषेणकुशिकच्यवनाश्ववानाः । …गोत्रहेतवो मुनयः ŚabdaRa.(Vā.) 406.

**अक्षीव** ( akṣīva ) [ cf. akṣība ] *m.* rarely *n.* **i** *Guilandina* or *Hyperanthera moringa, Moringa pterigosperma* अक्षीवमरिच°…आखुपर्णिका इति दशेमानि क्रिमिघ्नानि भवन्ति CaraS. i. 4. 11 (1941 Ed.); अक्षीवाश्मान्तक°…कुलत्थमाषाणाम्…कषायं कारयेत्…प्रयुञ्जीत शीतज्वरप्रशमार्थम् CaraS. vi. 3. 267 (1941 Ed.); युञ्जीत विषे…। भिषक् सर्वप्रकारेण तथा चाक्षीवपिप्पलम् SuśruS. v. 8. 120; अक्षीवे जातस्याश्वत्थस्य प्रतानेन वा गुप्तं सर्पा विषाणि वा न प्रसहन्ते ArthŚā. i. 99. 6 (1. 20); अक्षीवमरिच° … निर्गुण्ड्यः । घ्नन्ति क्रमीन् AṣṭāSaṁ. i. 87. 17 (1. 15); अक्षी च बन्धुजीवश्च ( v. l. अक्षीवं बन्धुजीवश्च )…। माक्षिकं चेति विज्ञेयो रक्तवर्गोऽतिरञ्जनः RasRaSa. 10. 93; अक्षीवाणां कषाये तु कुलत्थान् पाचयेद्भिषक् Hastyāyur. 573. 12 (4. 3); अक्षीवश्चाक्षकश्चैव अजकः परिकीर्तितः AśvaVai. 12. 16; **ii** *Indigofera* सामुद्रलवणेऽक्षीवो महानिम्बे च गन्धके । नील्यां त्रिषु निरुन्मादे AnekāK. 875; *n.* sea-salt लवणम् – तद्भेदाः अक्षीवमाणिबन्धविडादयः Liṅgānu.(He.) 67. 9; विडनामगुणाः । सामुद्रं वारिसंभूतमक्षीवमसुरं तथा MadaPāNi. 24. 405; सामुद्रं[यत्तु]लवणमक्षीवं वशिरं च तत् BhāvPra.(Bhā.) 6(2). 245; AbhidhāCin. 941; *adj.* not intoxicated, AmaK. 710; AnekāSaṁ. 3. 687; AnekāK. 875; MediK. 173. 30; BhāvPra.(Bhā.) 6. (24). 0 (203. 31); BhāvPraNi. 57. 106.

**अक्षीवपिप्पल** ( akṣīva-pippala ) *m.* the Pippal tree grown on *Moringa pterigosperma* युञ्जीत विषे…भिषक् सर्वप्रकारेण तथा चाक्षीवपिप्पलम् SuśruS. v. 8. 120.

**अक्षीवमेदक** ( akṣīva-medaka ) *m.* spirituous liquor prepared from *Moringa pterigosperma, Guilandina* or *Hyperanthera moringa* ग्रहणी दीप्यते चास्माद्गजस्याक्षीवमेदकात् Hastyāyur. 573. 20 (4. 3)

**अक्षु** ( ákṣu ) *m.* [DEBRU. p. 926] **1** pole, beam, snare अप: क्षोणी संचते माहिना वां जूर्णो वामक्षुरंहसो यजत्रा ṚV. i. 180. 5; इन्द्रश्चाक्षुजालाभ्यां शर्वं सेनाममूं हतम् AV. viii. 8. 18; अक्षुम्…ब्रह्मणा वि चृतामसि AV. ix. 3. 8; **2** the sun अश्नाति अश्नुते वा अक्षुर्कः Prasā. ii.613. 1; **3** a particular suffix तरतेरक्षुः (तरक्षु) SaraKaṇṭhā.(Gr.) ii. 1. 109; **4** sea अक्षुस्त्वब्धिवप्रयो: Nānārthā-Saṁ. i. 21. 10; **5** rampart, fortification, NānārthāSaṁ. i. 21. 10.

**अक्षुक** ( akṣuka ) *m. Dalbergia oujeinensis* अक्षीकश्चाक्षुकोच्छुकः Paryā-Mu. 15. 34.

**अक्षुण्ण** ( a-kṣuṇṇa ) *adj.* **1A** untrodden, not stepped on रक्षन्त्वक्षुण्णहेमोपलपटलमलं लाघवादुत्पतन्तः । पातङ्गाः … वाजिनस्ते जगन्ति SūryS'. 44; ददुर्निकुट्टनं वक्षस्यक्षुण्ण इव कुट्टिमे (कपयः सुरद्विषः) RāmC. 11. 8; YaśasCam. i. 17. 4; अक्षुण्णेषु पथिषु पृथव्युदकं (भौमान्तरिक्षभेदं) भवति द्विविधम् SthānṬ. 310A. 2; **1B** not practised by anyone else, new, fresh, novel or strange अन्य एवाक्षुण्णः कथाप्रकारो भगवत्या: MālaMā. 3. 114; ये मुग्धाक्ष्या: केऽपि लीलाविशेषा: । अक्षुण्णास्ते चेतसा…भावनीया: Dhvanyā. 476. 3 (*on* 3. 37) (Loc. नवनवरूपतया प्रतिक्षणमुन्मिषन्तः); केयमक्षुण्णा मौनमुद्रा ViddhaS'ā. 2. 3(4); प्रकृष्टनर्तकीषु प्रयत्नरक्षितमक्षुण्णम्…प्रयोगजातमारोपयन्ती TilaMañ. 391. 7; अक्षुण्णं मार्गान्तरं दर्शितमिति मन्तव्यम् TātpaṬ.(Vā.) 178. 11 (*on* i. 1. 5); SevyaSev. 57; अक्षुण्णो विधिरध्वगेन घटितो वीक्ष्य प्रपापालिकाम् SubhāRaK. 17. 50 = Subhāṣi. 1709; SūktiMu. 60. 33; S'rīKaC. 2. 45; Vasa-ViKā. 14. 22; **1C** not familiar with, inexperienced विप्र: … । अक्षुण्णोऽपि विविक्तसूक्तिरचने यः सर्वविद्याब्धिना श्रीमुञ्जेन सरस्वतीति सदसि क्षोणीभृता व्याहृतः TilaMañ. 7. 17; **2A** uncrushed, uninjured, unobstructed अक्षुण्णपुष्पशरकाननपद्मिनीभिः । शोभां पुरन्ध्रिजनता बिभरांचकार HarVi. 23. 9; 8. 11; स भयंकरताटकान्तकारी … मखमक्षुण्णमवर्तयन्महर्षेः RāmC. 8. 67; अयमक्षुण्णकान्तश्रीरधरो हरिणीदृशः । प्रवालपद्मरागादेरुपरि प्रतिगर्जति SaduktiKa. 116. 11; **2B** unbroken, uninterrupted, intact, continuous द्वैविध्यं ब्रह्मचर्यस्य (v. l. तस्याक्षुण्णं ब्रह्मचर्यं) भविष्यति महात्मनः Rāmā. i. 8. 9; Kapphiṇā. 7. 39; EI. xi. 191. 7; इत्यक्षुण्णमनोज्ञचाटुजनितव्रीडः पुरन्ध्रीजनः … पञ्जरशुकैराहारमभ्यर्थ्यते SubhāRaK. 16. 23; SaduktiKa. 160. 17; यदनादि यदक्षुण्णं यदपायविवर्जितम् । तदानन्दसुखं प्राप्तं मया त्वद्दर्शनान्मुने YogVā. i. 6. 28; AdbhuDa. 8. 10(10); **2C** not rejected, not refuted कंसद्विषः…अक्षुण्णोऽनुनयः प्रसन्नदयितादृष्टस्य पुष्णातु वः VeṇīSaṁ. 1. 12; रसाङ्गत्वे च तस्य लक्षणमक्षुण्णमपृथग्यत्नं निर्वर्त्यत इति Dhvanyā. [NSP] 86. 9 (*on* 2. 17) (Loc. अक्षुण्णमिति व्यापकमित्यर्थः); इति रुद्रात् परतो भेदद्वयमक्षुण्णम् LalitāSaBh. 76. 13 (*on* 113); एवमरागान्धस्यापि निमित्तानेकसत्त्वात् पुनः पुनर्विवाहेऽनेकपत्नीत्वमक्षुण्णम् BālamBha. i. 229. 22 (*on* 1. 81); **3** without defects, perfect (cf. **अक्षूण**) गज … शिक्षावेक्षणाक्षुण्णान्तःकरणगर्भ…मात्राशतं तिष्ठ तिष्ठ YaśasCam. i. 483. 2; सः…। दिवौकसाम् …सभया न कयाश्रितः । … शिक्षाविशेषमक्षुण्णं दर्शयन्नाहवाङ्गने HarVi. 43. 273; नर्तकीनामक्षुण्णेन शास्त्रवर्त्मना कृतसूक्ष्मगुणदोषोपन्यासः (राजा)…विदग्धराजलोकस्य मनांसि जहार TilaMañ. 18. 16.

**अक्षुण्ण** ( akṣuṇṇa ) *m.* one of the thousand names of S'iva (*lit.* undivided, impartite, whole) प्रशान्तबुद्धिरक्षुण्णः…एवं नाम्नां सहस्रेण तुष्टाव हि हरं हरिः S'ivaP. iv. 35. 130 (393B. 15); अक्षुण्णः क्षुण्णरूपश्च LiṅgaP. i. 65. 93.

**अक्षुण्णक** ( akṣuṇṇa-ka ) *adj.* **A** novel, unused before सान्द्रच्छायाराजि रजो जातमभीक्ष्णं राजस्त्रीणामञ्जनमक्षुण्णकमक्ष्णाम् Kapphiṇā. 7. 8; **B** not liable to be rubbed off, Kapphiṇā. 7. 8.

**अक्षुण्णकप्रेक्षणक** ( akṣuṇṇaka-prekṣaṇaka ) *n.* inexperienced (i. e. novel) glance स्वयं प्रसन्नेति बिभर्ति लज्जामक्षुण्णकप्रेक्षणकं प्रियायाः Subhāṣi. 2226.

**अक्षुण्णकान्तिक** ( akṣuṇṇakānti-ka ) *adj.* of unimpaired or faultless lustre मुखमस्य… । शशाङ्कमण्डलस्याधाक्षलक्ष्मीमक्षूण (v. l. अक्षुण्ण) कान्तिकम् MahāP. 15. 178.

**अक्षुण्णकिरण** ( akṣuṇṇa-kiraṇa ) *adj.* having unimpaired or unimpeded rays त्रियामावामायाः…गण्डाली न विधुरयमक्षुण्णकिरणः SubhāRaK. 29. 58.

**अक्षुण्णगुण** ( akṣuṇṇa-guṇa ) *adj.* of unimpaired qualities or merits किमश्मनोऽत्यन्तमलीमसात्मनः सुवर्णमक्षुण्णगुणं न जायते HarVi. 12. 22.

**अक्षुण्णता** ( akṣuṇṇa-tā ) *f.* **A** the state of being untrodden or unused जनैरभीक्ष्णमक्षुण्णतयातिदुर्गमम् । उपेयुषो मोक्षपथं मनस्विनस्त्वमग्रभूमिः S'iśuVa. 1. 32; **B** the state of being uninterrupted, continuity कौक्षेयको मामक एष तस्य । रक्षांसि वक्षःक्षतजैः क्षरद्भिः प्रतीक्षतेऽक्षुण्णतया रणेषु YaśasCam. i. 557. 10.

**अक्षुण्णदाक्षिण्य** ( akṣuṇṇa-dākṣiṇya ) *adj.* having uncommon or unhampered kindness or consideration अर्जुनोऽपि… । न तेष्वक्षुण्णदाक्षिण्यो दक्षिणामाविशद्दिशम् PāṇḍaC. 6. 30.

**अक्षुण्णधार** ( akṣuṇṇa-dhāra ) *adj.* having unblunted blade or edge निर्मिमीतेऽत्र पौष्पान् बाणानक्षुण्णधारान्…लोहकारः स्मरस्य SūktiMu. 59. 13.

**अक्षुण्णनामन्** ( akṣuṇṇa-nāman ) *adj.* having unheard of or unknown names हरिवाहनः…अक्षुण्णनामभिः…ओषधीभिरवन्ध्याम्…अटवीं वीक्षमाणः Tila-Mañ. 234. 17.

**अक्षुण्णपाटव** ( akṣuṇṇa-pāṭava ) *n.* unusual or uncommon skill अक्षुण्णपाटवजुषः प्रतिपक्षभेदे । तस्योदधानिषत दैत्यभटाः…स्वसैन्यैः HarVi. 46. 48.

**अक्षुण्णपृष्ठ** ( akṣuṇṇa-pṛṣṭha ) *adj.* having unhurt or uncrushed back अक्षुण्णपृष्ठः पनसः पटु गर्जन्विनिर्ययौ RāmC. 31. 34.

**अक्षुण्णप्रदोष** ( akṣuṇṇa-pradoṣa ) *m.* unhindered (cloudless, clear) evening, unusual evening मदनोत्सवं मदलीलालास्यानामक्षुण्णप्रदोषं नक्षत्रमालामण्डलानाम्…दर्पशातम् (हस्तिनम्) अपश्यत् HarṣaC. 109. 2.

**अक्षुण्णप्रसर** ( akṣuṇṇa-prasara ) *adj.* of unimpeded progress अक्षुण्णप्रसरं समराङ्गने(?णे)।…अरेः सैन्यम्…विनिहत्य HarVi. 43. 350.

[1]**अक्षुण्णम्** ( a-kṣuṇṇam ) *adv.* uninterruptedly, abundantly, without break यस्यां मणिमयी भूमिः तारकाप्रतिबिम्बितैः । दधे कुमुद्वतीलक्ष्मीमक्षूणां (v. l. अक्षुण्णं) क्षणदामुखे MahāP. 14. 57.

[2]**अक्षुण्णम्** ( a-kṣuṇṇam ) *adv.* perfectly, without defect, thoroughly दृढाद्दृढत्वमक्षुण्णमपरीक्ष्यैव संविदाम् । द्वयप्रतीतिमात्रेण द्वयाभ्युपगमो भ्रमः Nyāy-Mañ. i. 275. 11.

**अक्षुण्णमार्ग** ( akṣuṇṇa-mārga ) *m.* untrodden path, novel route, an unacquainted way of life इच्छसि कनकपट्टबन्धम्, तद्विलासिनि,…आश्रय स्वयंवरपथम्, मानयैनमक्षुण्णमार्गेण, भव यात्रोन्मुखी TilaMañ. 285. 10.

**अक्षुण्णरागरभस** ( akṣuṇṇarāga-rabhasa ) *m.* unhampered impetuosity or intensity of the sexual urge चारुभ्रुवां निधुवनावसरे प्रसस्रुरक्षुण्णरागरभसोल्लसिताः विलासाः HarVi. 27. 53.

**अक्षुण्णवामचरित** ( akṣuṇṇa-vāmacarita ) *adj.* [*f.* -ā] possessed of strange and perverse behaviour मम्लुस्तरां शशिकरैरपि ताः सुधार्द्रैरक्षुण्णवामचरिता बत पद्मनेत्राः HarVi. 20. 70.

**अक्षुण्णवेदयज्ञ** ( akṣuṇṇa-vedayajña ) *adj.* whose Vedic studies and sacrificial performances are not violated अक्षुण्णवेदयज्ञस्य हस्तप्रायं त्रिविष्टपम् Vivādaratnākara (BI) 584. 5 [ABORI. viii. 107]

**अक्षुण्णवेध** ( akṣuṇṇa-vedha ) *m.* the act of throwing a spear so as to touch the mark lightly [MW]

**अक्षुण्णशक्ति** ( akṣuṇṇa-śakti ) *adj.* whose power or strength is not subdued अक्षुण्णशक्तिरसुदानन्ततीर्थामृतोदका (गङ्गा) SkandP. iv. 29. 21; कियन्तमिदमक्षुण्णशक्तिनैव मयाधुना । साम्राज्यमिह कर्तव्यम् YogVā. v. 22. 28.

**अक्षुण्णस्वर्गलोकस्थिति** ( akṣuṇṇa-svargalokasthiti ) *f.* undisturbed stay in the world of heaven मौलौ वेगादुदञ्चत्यपि चरणभरन्यञ्चदुर्वीतलत्वादक्षुण्णस्वर्गलोकस्थितिमुदितसुरज्येष्ठगोष्ठीस्तुताय…त्रिपुरहरजगत्क्लेशहन्त्रे नमस्ते Subhā-RaK. 4. 27; SaduktiKa. 3. 34.

**अक्षुण्णाकाङ्क्ष** ( akṣuṇṇākāṅkṣa ) *adj.* whose greed is not subdued संवुक्षितक्षुद्रक्षुण्णाकाङ्क्षध्वाङ्क्षराक्षसक्षिप्यमाणयक्षरक्षितक्षेत्रनिक्षिप्तवनदेवतापोतम् … देवतायतनमुपगम्य YaśasCam. i. 48. 1.

**अक्षुण्णाज्ञ** ( akṣuṇṇājña ) *adj.* whose order (or command) stands undefied (or unviolated) अक्षुण्णाज्ञः स हि विहरते यत्र वीरो मनोभूः Mayū-Saṁ. 2. 15.

**अक्षुण्वत्** ( a-kṣuṇvat ) *adj.* without hurting नापितं शिष्याच्छीतोष्णाभिरद्भिरर्थं कुर्वाणोऽक्षुण्वन् कुशलीकुर्विति ĀśvaGS. i. 17. 16.

**अक्षुत्तृष्** ( a-kṣuttṛṣ ) *adj.* free from hunger and thirst अक्षुत्तृषम्… मोक्षमुदाहरन्ति VarāṅgaC. 10. 8.

**अक्षुत्तृष्ण** ( a-kṣuttṛṣṇa ) *adj.* having neither hunger nor thirst योगिनीगणः…अक्षुत्तृष्णो विलीनाङ्गः केवलं क्षीयतेतराम् PrabhāC. 207. 30.

**अक्षुद्र** ( a-kṣudra ) *adj.* [*f.* -ā] not mean, noble-minded, magnanimous विश्वामित्रम्…अनुजग्मतुरक्षुद्रौ पितामहमिवाश्विनौ Rāmā. i. 21. 7; शृङ्गी शुश्राव तं तदा…अक्षुद्रमनसूयं च MahāBhā. i. 46. 7; अक्षुद्रान् दानशीलांश्च…कार्ष्णं वेदमिमं विद्वाञ्श्रावयित्वार्थमश्नुते MahāBhā. i. 56. 17; वर्तेसे वृत्तिमक्षीणां (v. l. अक्षुद्रां) धर्मार्थसहितां नृषु MahāBhā. ii. 5. 8; ii. 70. 13; कृतज्ञं प्राज्ञमक्षुद्रम्…संश्रयेत महीपतिम् MahāBhā. iv. 120*. 117; अक्षुद्रं दृढभक्तिकम् । …मित्रमत्यागि चेष्यते MahāBhā. v. 39. 37; vii. 159. 29; अक्षुद्रम्…मन्त्रिणं पूजयेन्नृपः MahāBhā. xii. 68. 56; न त्वां नित्यार्थिनो जहुरक्षुद्राः सत्यवादिनः MahāBhā. xii. 84. 8; xii. 116. 18; अक्षुद्राः सत्यवन्तश्च नित्यं भक्तानुयायिनः । न तेषु पापं विज्ञेयम् Hari-Vaṁ. 109. 50; BrahmāṇḍP. ii. 7. 201; अक्षुद्रोऽपरुषस्तथा ।…नराधिपः YājñaSm. 1. 310; VāsaDa. 279. 8; व्यवहारिणमक्षुद्रम्…कुर्वीत ध्वजिनीपतिम् NītiSā. 19. 29;

SkandP. v(1). 7.4; KūrmaP. 409. 2 (1. 48); अक्षुद्रः शीलनियतः सर्वसत्त्वाविहिंसकः। ···स चैवं पालयामास त्रैलोक्यं सकलाः प्रजाः PadmP. v. 25. 99; अक्षुद्रोऽसद्गुणद्वेषी Mitā. 107. 24 (*on* 1. 310); अक्षुद्रः क्षुद्रहिमवद्रिरिं वज्रमुनिर्ययौ PariPar. 12. 361; अक्षुद्रोऽनल्पहृदयः Aparā. 577. 7 (*on* 1. 308); TattvMu. 5. 135; अक्षुद्रः सत्त्वसंपन्नः प्राज्ञः···वणिक्पुत्रो भवेन्मन्त्री KumāCaSaṁ. 53. 11; 70. 25; VīraMi. 351. 3 (*on* 1. 310); VīraMi. (Lakṣaṇa.) 197. 21; Hastyāyur. 378. 2 (3. 3;) सहायैरक्षुद्रैर्भवति गुणहीनोऽपि गुणवान् S'atTrayī. 734; **2** great, not trivial or small आसां कामुकसम्पदां च गणिकाक्षुद्रः की(?कि)लोपद्रवः Mugdhopa. 17; अक्षुद्रमिक्षुचापं परोक्षमवलग्नसीमनि व्यक्षम्। क्षपयतु मे क्षेमेतरमुक्षरथप्रेमपक्ष्मलं तेजः LalitāStaRa. 173; *m.* one of the thousand names of the god S'iva प्रशान्तबुद्धिरक्षुद्रः क्षुद्रहा नित्यसुन्दरः। ···एवं नाम्नां सहस्रेण तुष्टाव वृषभध्वजम् LiṅgaP. i. 98. 157; जयाद्भुत जयाक्षुद्र जयाक्षत जयाव्यय S'ivaP. vii(2). 31. 8 (582B. 10); SaurP. 41. 139.

**अक्षुद्रकथा** (akṣudra-kathā) *f.* talk or discussion about something not trivial, an important discussion अक्षुद्रकथेयं प्रस्तुता NyāyMañ. i. 215. 21.

**अक्षुद्रकर्मन्** (akṣudra-karman) *adj.* of magnanimous deeds शूरमक्षुद्रकर्माणं निषिद्धजनमाश्रयेत् MahāBhā. xii. 68. 57.

**अक्षुद्रकर्मिन्** (akṣudrakarm-in) *adj.* [*f.* -ṇī] not indulging in mean action, of noble deeds धात्रीमानय समानवर्णाम्···देशजातीयामक्षुद्रकर्मिणीम् CaraS iv. 8. 52 (1941 Ed.)

**अक्षुद्रक्षितिपक्षय** (akṣudrakṣitipa-kṣaya) *m.* death of no mean (i. e. a great) king सुदारुणाश्चाक्षुद्रक्षितिपक्षयमाचक्षाणाः क्षणमपि न शाम्यन्ति पुनरुत्पाताः HarṣaC. 254. 13.

**अक्षुद्रगतिशालिन्** (akṣudragati-śālin) *adj.* [*f.* -ī] **i** characterised by noble demeanour or by gentle mind अक्षुद्रगतिशालिन्योस्तयोरन्योन्यसक्तयोः। ऐकरस्यमभूत् पत्या गङ्गायमुनयोरिव Yādavā. 1. 32. **ii** characterised by powerful flow, Yādavā. 1. 32.

**अक्षुद्रचित्त** (akṣudra-citta) *adj.* noble-minded, not mean-minded महात्मानस्तु अक्षुद्रचित्ताः माम् ईश्वरं पार्थ···आश्रिताः सन्तः भजन्ति GitāBh. (S'aṅ.) 262. 12 (*on* 9. 13); गायत्र्योपासकस्य एतत् व्रतं भवति, यत् महामनाः अक्षुद्रचित्तः स्यात् ChāndoUBh. 104. 21 (*on* ii. 11. 2)

**अक्षुद्रतर** (akṣudra-tara) *adj.* [*f.* -ā] very large, very many दमश्रूयमाणे मधुजालके तरोर्गजेन गण्डं कषता विधूनिते। क्षुद्राभिरक्षुद्रतराभिराकुलं विदश्यमानेन जनेन दुद्रुवे S'iśuVa. 12. 54. (comm. अतिस्थूलाभिः)

**अक्षुद्रता** (akṣudra-tā) *f.* magnanimity (the nature of attracting good people to one's side) अक्षुद्रतां दक्षतां च भर्तुर्भेद्येषु कीर्तयेत् NītiSā. 13. 15 (comm. सत्संग्रहशीलताम्)

**अक्षुद्रत्व** (akṣudra-tva) **1** magnanimity, greatness अक्षुद्रत्वं कृतज्ञत्वं दाक्षिण्यं संस्कृतं वचः। तपो यज्ञांश्च दानं च प्रयच्छन्ति पितामहाः BrahmāṇḍP. ii. 12. 42; VāyuP. ii. 14. 39; **2** absence of triviality, noteworthiness, importance यदि चास्वाद्यत्वं तदाक्षुद्रत्वमेव। क्षुद्रतायामनास्वाद्यत्वात् SāhiDa. 248. 5.

**अक्षुद्रत्वोपपत्ति** (akṣudratvopapatti) *f.* plausibility of being great कुबेरकुचेलादिवदिन्द्रपदस्य क्षुद्रत्वेऽपि शिववैकुण्ठपदवन्मुक्तपदस्याक्षुद्रत्वोपपत्तेः SivārkaMaDī. i. 83. 22 (*on* i. 1. 1)

**अक्षुद्रनिपुणमति** (akṣudranipuṇa-mati) *adj.* of magnanimous and sharp intellect (or mind) बोधिसत्त्वः किल···अक्षुद्रनिपुणमतिरविषमव्यवहाररतिः··· अन्यतमस्य राज्ञः श्रेष्ठी बभूव JātaMā. 116. 5 (20. 0)

**अक्षुद्रपरिचारिता** (akṣudraparicāri-tā) *f.* the state of being surrounded by noble persons, the state of having no mean servants दैवसंपन्नता बुद्धिरक्षुद्रपरिवारता (v. l. °परिचारिता)···गुणाः साध्वाभिगामिकाः NītiSā. 4. 7 (VP. Ed.)

**अक्षुद्रपरिचारिन्** (akṣudra-paricārin) *adj.* having no mean servants, being surrounded by no mean persons, cf. **अक्षुद्रपरिचारिता.**

**अक्षुद्रपरिवार** (akṣudra-parivāra) *adj.* having no mean (i. e. noble) retinue, NītiSā. 4. 7; AgniP. 238. 3; Mānaso. ii. 1. 3; cf. **अक्षुद्रपरिवारता, अक्षुद्रपरिवारत्व.**

**अक्षुद्रपरिवारता** (akṣudraparivāra-tā) *f.* the state of having no mean (i. e. noble) retinue दैवसम्पन्नता बुद्धिरक्षुद्रपरिवारता NītiSā. 4. 7; AgniP. 238. 3.

**अक्षुद्रपरिवारत्व** (akṣkudraparivāra-tva) *n.* the state of having no mean (i. e. noble) retinue अक्षुद्रपरिवारत्वं बुद्धिर्दैवसहायता। वश्यसामन्तता शक्तिर्दक्षत्वं क्षिप्रकारिता···इत्येतैर्गुणैर्युक्तो वरो नृपः Mānaso. ii. 1. 3.

**अक्षुद्रपरिषत्क** (akṣudrapariṣat-ka) *adj.* having a council of superior ministers (having no inferior counsellors, cf. *BālaKri.*) तत्र स्वामिसम्पत्। महाकुलीनः···दृढबुद्धिरक्षुद्रपरिषत्को विनयकाम इत्याभिगामिका गुणाः ArthS'ā. ii. 225. 3 (6. 1) (comm. गुणवत्परिवारः); अक्षुद्रपरिषत्को हंसपरिवारः (नराधिपः)। तथा च शंखः—'न हंसो गृध्रपरिवारः कामं तु गृध्रो हंसपरिवारः स्याद्' इति BālaKrī. i. 182. 11 (*on* 1. 305)

**अक्षुद्रपाद** (akṣudra-pāda) *adj.* having not meagre (i. e. big) legs म्लेच्छान्न(?न्नि)कृतिवृद्धांश्च न सेवेत कदाचन। सर्पानः स्व(?)···वक्षुद्रपादांश्च न स्पृशेत् BhelaS. 5. 20 (1. 5)

**अक्षुद्रपादप** (akṣudra-pādapa) *m.* not small (i. e. a big) tree अक्षुद्रपादपालानितैः···प्रधानवारणैरधिष्ठितोद्देशाम्···नगरसीमामलङ्घयम् TilaMañ. 116. 20.

**अक्षुद्रपुत्रत्व** (akṣudraputra-tva) *n.* the qualification of being the son of no mean (i. e. noble) [person] तत्र परिचारकसम्पत्—अक्षुद्रपुत्रत्वम्, अद्वैविध्यं, दमो, जितक्रोधादिता, सहिष्णुता चेति KāśyaS. 38B. 12.

**अक्षुद्रबुद्धि** (akṣudra-buddhi) *adj.* having no mean thought, of noble mind तं नचिकेतसमब्रवीत् प्रीयमाणः···महात्मा अक्षुद्रबुद्धिः KāṭhUBh. 111. 8 (*on* 1. 16)

**अक्षुद्रभद्रप्रकृतित्व** (akṣudrabhadraprakṛti-tva) *n.* the state of being of a noble and benevolent nature अतश्चैनं स राजा लोकपरिपालनसामर्थ्यादक्षुद्रभद्रप्रकृतित्वाच्च यौवराज्यविभूत्या संयोजयामास JātaMā. 208. 9 (31. 2)

**अक्षुद्रभाव** (akṣudra-bhāva) *adj.* of noble nature नाभीष्टं विष्टपान्तः प्रति चरमचरं प्राणिनं प्राणितव्यादन्यद् वस्त्वित्यवेत्य स्वमिव तदपि भो रक्षताक्षुद्रभावाः JinaS'. 4. 6.

**अक्षुद्रमतिविषय** (akṣudramati-viṣaya) *adj.* [*f.* -ā] pertaining to no mean (i. e. noble) thoughts or ideas प्रज्ञावतां हि चक्षुरक्षुद्रमतिविषयासु धिषणासु प्रतिवसति BālRā. 3. 79(3)

**अक्षुद्रमनस्** (akṣudra-manas) *adj.* having a noble heart, noble-minded निद्रा ह्यक्षुद्रमनसां प्रायेण सुलभैव हि PariPar. 2. 519.

**अक्षुद्रयोग्य** (akṣudra-yogya) *adj.* worthy of or fit for a noble person, suitable to a great person धर्मेष्वव्यवहारमिष्टेषु क्षुद्रेष्वप्यक्षुद्रयोग्यं नियमयेदेवं महत्स्वप्यनिष्टेषु क्षुद्रयोग्यम् ManvaVi. 760. 25 (*on* 7. 13)

**अक्षुद्रलील** (akṣudra-līla) *adj.* not mean (i. e. noble) even in casual action or behaviour वेदवेदाङ्गतत्त्वज्ञो यज्ञयाजी तपोरतिः। अक्षुद्रलीलोऽभिमतः सर्वसत्त्वो न हिंसकः ViṣṇuDhaP. i. 14. 7.

**अक्षुद्रविद्य** (akṣudra-vidya) *adj.* (a man) of no mean learning नानन्यजः पितृद्वेषी नारागी निरपत्रपः। नाक्षुद्रविद्यः पापीयानिति भूतार्थसंग्रहः RājTa.(Ka.) 4. 92.

**अक्षुद्रविद्रुमारुण** (akṣudravidrumāruṇa) *adj.* ruddy like a big coral इति वदन्त्यामेव तस्याम्···अक्षुद्रविद्रुमारुणेन···चञ्चुपुटेन प्रसूतमरकतांशुसंतान इव चेतनो जात्यपद्मरागः···द्विजातिशब्देनेवोद्भासितः TilaMañ. 348. 17.

**अक्षुद्रवृत्ति** (akṣudra-vṛtti) *adj.* having no mean tendency, of noble conduct अक्षुद्रवृत्तिर्गम्भीरः साधुराश्रितवत्सलः (स्यात्) AṣṭāSaṁ. i. 11. 19 (1. 3)

**अक्षुद्रशील** (akṣudra-śīla) *adj.* [*f.* -ā] of no mean conduct, of noble conduct कौसल्या मम माता···। वृद्धा चाक्षुद्रशीला च न च त्वां देव गर्हते Rāmā. ii. 33. 17; अक्षुद्रशीलस्तु नरः स पापेभ्यः प्रमुच्यते VarāP. 210. 37.

**अक्षुद्रसचिव** (akṣudra-saciva) *adj.* having noble ministers or counsellors अक्षुद्रसचिवश्चायं कुन्तीपुत्रो महामनाः MahāBhā. xv. 16. 16.

**अक्षुद्रस्वभाव** (akṣudra-svabhāva) *adj.* who is of no mean (i. e. magnanimous or noble) nature (दृष्ट्वा तव रूपम्) लोकत्रयं प्रव्यथितम्···हे महात्मन् अक्षुद्रस्वभाव GītāBh.(S'aṅ.) 312. 2 (*on* 11. 20)

**अक्षुद्रा** (akṣudrā) *f.* a name of Pārvatī (not ordinary i. e. noble) नाम्नामष्टसहस्रेण तुष्टाव परमेश्वरीम्। ··· अनन्तदृष्टिरक्षुद्रा धात्रीशा धनदप्रिया KūrmaP. 126. 9 (1. 12)

**अक्षुद्रारि** (akṣudrāri) *m.* powerful enemy अक्षुद्रारिकृताभिमन्युनिधनप्रोद्भूततीव्रक्रुधः पार्थस्य···पतन्ति धनुषि व्रीडाजडा दृष्टयः SaraKaṇṭhā. 586. 9; S'ārṅgaPa. 4009.

**अक्षुद्रावकाश** (akṣudrāvakāśa) *adj.* of fine (not inferior) appearance [DBHS]

**अक्षुध्** (á-kṣudh) *f.* [Debru. p. 21] **1** freedom from hunger अन्नं च मेऽक्षुच्च मे TaiS. IV. vii. 4. 2; V. iv. 8. 2; अन्नं च मेऽक्षुच्च मे यज्ञेन कल्पन्ताम् VājaS. 18. 10; MaiS. iii. 4. 1; **2** loss of appetite मारुतः कुपितो वह्निं संछाद्य कुरुते गदान्। तस्य···। कण्ठास्यशोषोऽक्षुत्तृष्णा RugVi. 4. 7.

**अक्षुध** (a-kṣudha) *m.* other than the verbal root *kṣudh* सेमक्षुधकुषक्लिशगुधमृडमृदवदवसग्रहः (न कित्) MugdhaBo. 26. 204 (173. 7)

**अक्षुधित** (a-kṣudhita) *adj.* not hungry सुमनाः शुचिभक्ताक्षुधिता-

नुकूलजनोपहितं हितमन्नमश्नीयात् AṣṭāSaṁ. i. 65. 11 (1. 10); अक्षुधितस्यापि धनाभावात् 'अवसाद:' ManuBh. i. 344. 23 (*on* 4. 33); अक्षुधितेनामृतमप्युपभुक्तं च भवति विषम् NītiVā. 25. 30.

**अक्षुध्य** (a-kṣudhyá) *adj.* [DEBRU. p. 791] not hungry, hungerless अक्षुध्या अतृष्या स्त गृहा मास्मद्बिभीतन AV. vii. 60(62). 4; vii. 60(62). 6.

**अक्षुध्यत्** (á-kṣudhyat) *adj.* not being hungry स एनं तृप्तोऽक्षुध्यन्नशोचन्नमुष्मिंल्लोक उपतिष्ठते TaiS. V. iv. 4. 1; MaiS. i. 6. 3; KāṭhS. 21. 7; योऽक्षुध्यल्लौंलभावेन कुर्यादाकण्ठभोजनम् । सुप्तान् व्यालानिव व्याधीन्सोऽनर्थाय प्रबोधयेत् YaśasCam. i. 509. 11.

**अक्षुपूर्व** (akṣu-pūrva) *adj.* (a word) in which something precedes the part *akṣu* (like तरक्षु etc.) स्त्रीविषयवर्णाक्षुपूर्वाणाम् PhiṭSū. 43; स्त्रीविषयवर्णानामक्षुपूर्वाणाम् Prasā. ii. 751. 10.

**अक्षुब्ध** (a-kṣubdha) *adj.* [*f.* –ā] **1** undisturbed, unagitated, unruffled, not confused (i. e. calm, quiet etc. said of both animate and inanimate objects) साधक:…। अनिच्छन्नव्यथोऽक्षुब्ध: स्वेच्छया क्षोभमेति च JayāS. 20. 224; PāraS. 15. 451; अक्षुब्धस्याम्भसो यद्वद्बुद्बुदा: संभवन्ति हि PauṣkS. 10. 8; न क्षुब्धो न च वाक्षुब्धो भाति पूर्ण इवार्णव: YogVā. ii. 14. 34; v. 5. 48; (दृष्टि:) अक्षुब्धा स्यादचकिता वीरा युद्धप्रहार्षिणी BhāvPra.(S'ā.) 125. 17(5); साधक ईषदप्यक्षुब्धो यदि SetuBa. 107. 15; **2** without agitation (i. e. without phenomenal world) संक्षुब्धमक्षुब्धमिति द्विरूपं संवित्स्वरूपं प्रवदन्ति सन्त: YogVā. vi(2). 34. 48.

**अक्षुब्धचित्त** (akṣubdha-citta) *adj.* [*f.* –ā] with an unaffected or unruffled mind द्वैतवर्जितचिन्मात्रे पदे…। अक्षुब्धचित्तविश्रान्त: स जीवन्मुक्त उच्यते SarvaVeSāSaṁ. 973; अनया…। स्नातं त्वनुदिते सूर्ये शीतादक्षुब्धचित्तया SkandP. iv. 47. 54.

**अक्षुब्धचेतस्** (akṣubdha-cetas) *adj.* having unagitated or unruffled mind (स:) यावन्निर्भीकमक्षुब्धचेतास्तदूरोर्ग्रहीतुं प्रवृत्त: ViviTīKa. 98. 18.

**अक्षुब्धत्व** (akṣubdha-tva) *n.* unperturbedness, unagitatedness, profundity स च…। अक्षुब्धत्वेऽर्णवसम: MahāBhā. i. 62. 13 (JñānDī. गम्भीरता)

**अक्षुब्धपक्षतति** (akṣubdha-pakṣatati) *adj.* with unfluttering wings अक्षुब्धपक्षततिभिर्विहङ्गै:…। रामस्य…गिर: श्रुता: YogVā. i. 32. 9.

**अक्षुब्धम्** (a-kṣubdham) *adv.* clearly (i. e. without any doubt) मित्र मित्रस्त्रिनेत्रस्य दिश्युद्गमं याति यत्र त्रिनेत्रर्क्षमध्यस्थित:। तत्र मे तान्त्रिकाक्षुब्धमक्षप्रभां क्षिप्रमाचक्ष्व दक्षोऽसि गोले यदि Golā. 260. 2 (31. 29)

**अक्षुब्धमहाब्धि** (akṣubdha-mahābdhi) *m.* the unagitated (i. e. calm) great sea or ocean तिष्ठाक्षुब्धमहाब्धिवत् YogVā. v. 17. 9.

**अक्षुब्धमहाब्धिवत्** (akṣubdhamahābdhi-vat) *adv.* like the unagitated ocean आत्मैकत्वं विदित्वा त्वं तिष्ठाक्षुब्धमहाब्धिवत् MahāU. 4. 11; 6. 53.

**अक्षुब्धरूपिन्** (akṣubdha-rūpin) *adj.* of changeless form नानारम्भविभासं च साम्येनाक्षुब्धरूपिण:। बीजस्यान्तस्तरुरिव ब्रह्मणोऽन्त: स्थितं जगत् YogVā. iii. 81. 86.

**अक्षुभित** (a-kṣubhita) *adj.* [*f.* –ā] **A** unaffected, undisturbed देशयतिस्ताभिर्विविधप्रकृतिभिराकृतिभिस्तदास्वनितमक्षुभितमवगत्य YaśasCam. ii. 301. 19; **B** unfrightened अम्भोधरध्वनिभिरक्षुभितासि तन्वि RasMañ. 76 (comm. साध्वसं न प्रापिता)

**अक्षुभितात्मतत्त्व** (akṣubhitātmatattva) *n.* the self-principle which never changes (जीव:) अक्षुभितात्मतत्त्वविपरीतेन क्षोभेण…विपर्ययं गच्छति TātpaVṛ. 105. 18 (*on* 1. 83)

**अक्षुभितात्मता** (akṣubhitātma-tā) *f.* undisturbed or unruffled nature क्षोभहेतावपि प्राप्ते क्षान्तिरक्षुभितात्मता BhaktiRaSi. i. 3. 14.

**अक्षुभितेन्द्रिय** (akṣubhitendriya) *n.* undisturbed sense-organ ता योषित:…ददृशुस्तत्र तं मुनिवरं…ध्यानाभियोगादुदारविषयसंनिकर्षेऽप्यक्षुभितेन्द्रियनैभृत्यशोभम् JātaMā. 184. 3.

**अक्षुभ्नन्मनस्** (akṣubhnan-manas) *adj.* whose mind is undisturbed, fearless तस्य नरीनृत्यमानखड्गस्याक्षुभ्नन्मनस: किमन्यदाग: DvyāśraKā. 4. 32.

**अक्षुभ्यत्** (a-kṣubhyat) *adj.* not being disturbed तथाप्यक्षुभ्यति श्रेष्ठिपुंगवे नृपवल्लभा।…पूत्कर्तुं समारेभे महारवै: MalliC. 7. 330; तादृंशि वचनान्यर्थद्वारा सेवमानस्य मनागप्यक्षुभ्यत: परिणामे…सुखं भवति RasGaṅ. 226. 15.

**अक्षुमा** (akṣumā) *f.* [w. r. for क्षुमा] YaśasCaṁ. i. 592. 25 comm. [nt.]

**अक्षू** (akṣū) the root *akṣ*- अक्षू व्याप्तौ संघाते च Pradī. vi. 253 (*on* vii. 4. 60)

**अक्षूक** (akṣūka) *m.* name of a plant अक्षीकश्चाक्षु (v. l. क्षू)कोच्छुक: ParyāMu. 15. 34.

**अक्षूण** (a-kṣūṇa) *adj.* [*f.* –ā] **1** faultless, not defective, perfect यस्यां मणिमयी भूमि: तारकाप्रतिबिम्बितै:। दधे कुमुद्वतीलक्ष्मीमक्षूणां क्षणदामुखे MahāP. 14. 57; 27. 46; क्षोदक्षममक्षूणं सुमतिर्वाक्यं प्रयुञ्जीत Kāvyālaṅ.(Ru.) 2. 8; वक्ष्यामहे भेषजलक्षणार्थम्। सुक्षेत्रमक्षूणगुणप्रशस्तम् KalyāKā. 3. 28; 6. 20; विगलिताग्रहे चात्मग्रहे निराश्रवचित्तोत्पत्तिलक्षणो निरोधापरनामपक्षो मोक्ष: स्वलक्षणेऽक्षिणामक्षूण: YaśasCam. ii. 252. 6; ii. 294. 22; ii. 350. 26; अक्षूणमतिमन्दरमथितविद्यासागरसमासादिततत्त्वावबोधसुधारसै:…सद्भिरारोपितगरिमा … हेमाङ्गदनामा जनपद: GadyCin. 3. 11; 134. 20; श्रीमुकुरविडूरसारवसुधारत्नं सनाथो गुणेनाक्षूणेन EI. iii. 195. 152; **2** not absent, present, unopposed वैशद्यम्…यदि स्वविषयग्रहणम्; तत् परोक्षेऽप्यक्षूणम् PramāMī. i. 1. 14 कर्तास्मि क्षान्तिमक्षूणाम् MalliC. 2. 608; क्षणावतारादक्षूणं मङ्क्षु काङ्क्षामि वर्त्म यत् S'āliC. 4. 87; विदधेकिमपि क्षूणमक्षूणं तदहं पुमान् PrabhāC. 48. 20.

**अक्षूणकान्तिक** (akṣūṇakānti-ka) *adj.* of faultless (i. e. perfect) beauty मुखमस्य…। शशाङ्कमण्डलस्याधाल्लक्ष्मीमक्षूणकान्तिकम् MahāP. 15. 178.

**अक्षूणहेतु** (akṣūṇa-hetu) *m.* the reason of not being deficient or being perfect राशीकृता: पुष्पपरागपुञ्जा: पदे पदे दक्षिणमारुतेन। मत्तस्य चैत्रद्विरदस्य कर्तुमक्षूणहेतोरिव पांसुतल्पान् VikraDeC. 7. 40.

**अक्षेत्र** (a-kṣetra) *n.* **1** uncultivable land, barren soil or barren land अक्षेत्रे बीजमुत्सृष्टमन्तरैव विनश्यति ManuSm. 10. 71; अक्षेत्रे ऊषरे उत्सृष्टमुप्तमपि बीजमन्तरैवादत्वैव फलं नश्यति ManuBh. ii. 350. 24 (*on* 10. 71); न संप्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतित: किमिक्षोर्दोषोऽयम् BhallaS'. 56 = SūktiRa. 32. 63; इक्षोरक्षेत्रमूषरम् Kāvyānu.(He.) (comm.) 309. 20; **2** a wrong context किमत्राक्षेत्रे क्लेशेन Kāśi. i. 60. 24 (*on* 2. 4); **3** other than the *kṣetra* (i. e. a cultivable land) काण्डादक्षेत्रे CāndraVyā. ii. 3. 25; S'ākaṭāVyā. i. 3. 38; काण्डात्प्रमाणादक्षेत्रे SiddhaHe. ii. 4. 24; MugdhaBo. 6. 55 (60. 13); **4** not a proper geometrical figure धृष्टोद्दिष्टमृजुभुजं क्षेत्रं यत्रैकबाहुत: स्वल्पा। तदितरभुजयुतिरथवा तुल्या ज्ञेयं तदक्षेत्रम् Līlā. 161; **5** (fig.) a bad pupil, unworthy recipient or receptacle [APTE]

**अक्षेत्र** (á-kṣetra) *adj.* **1** destitute of cultivable land तद्धाक्षेत्रतरमिवास S'atBr. I. iv. 1. 15; **2** (the soul) which has no body अक्षेत्रं क्षेत्रमात्मानमसङ्गं सङ्गमात्मन:।…अबुद्धत्वाद्धि मन्यते BrahmP. 241. 51.

**अक्षेत्रजत्व** (akṣetraja-tva) *n.* the nature of being other than the one born of one's own lawfully wedded wife (through *niyoga*) अनियुक्तापुत्रस्याक्षेत्रजत्वात् ManvaMu. 394. 11 (*on* 9. 162); नियोगाभावेन तस्याक्षेत्रजत्वात् BālamBha. iii. 40. 1 (*on* 3. 16)

**अक्षेत्रज्ञ** (á-kṣetrajña) *adj.* **A** who is ignorant of (the way or route and other details of) land or region यथाक्षेत्रज्ञोऽन्येन पथा नयेत् S'atBr. XIII. ii. 3. 2; **B** who is ignorant of the spot हिरण्यनिधिं निहितमक्षेत्रज्ञा:…न विन्देयु: ChāndoU. viii. 3. 2.

**अक्षेत्रज्ञ** (a-kṣetrajña) *m.* that which is other than the individual soul (i. e. the Supreme Self) KāśiVṛ. *on* P. v. 1. 124; GaṇPā. 167. 15; JaineVyā. iii. 4. 114 (235. 13); अक्षेत्रज्ञस्य भाव: कर्म वा आक्षैत्रज्ञ्यम् GaṇRa. 7. 404(427); Prasā. i. 861. 8; अथ क्षेत्रज्ञभिन्नोऽक्षेत्रज्ञ उच्यते KośaKaTa. 1. 36.

**अक्षेत्रतर** (ákṣetra-tara) *adj.* having mostly uncultivable land तद्धाक्षेत्रतरमिवास S'atBr. I. iv. 1. 15.

**अक्षेत्रपतित** (akṣetra-patita) *adj.* fallen in (i. e. sown in) a barren land न संप्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतित: किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुव: Dhvanyā. 145. 4 (*on* 1. 14) = BhallaS'. 56 = SūktiMu. 35. 5 = S'ārṅgaPa. 1052 = Subhāṣi. 947.

**अक्षेत्रमहिमज्ञ** (a-kṣetramahimajña) *adj.* who does not know the greatness of the holy place अक्षेत्रमहिमज्ञोऽपि श्रद्धाहीनोऽपि कालत:। काशीप्रवेशादनघोऽमृतत्वं लभते मृत: SkandP. iv. 26. 135.

**अक्षेत्रलक्षण** (akṣetra-lakṣaṇa) *n.* the definition of a non-geometrical figure अथ अक्षेत्रलक्षणे सूत्रम् Līlā. 160(10)

**अक्षेत्रवत्** (a-kṣetrava(n)t) *adj.* [*f.* –ī] having no cultivated land or fields भूयिष्ठं कपिलानि गोकुलधनान्यक्षेत्रवत्यो दिश: नि:संदिग्धमिदं तपोवनम् SvapnVā. 1. 12.

**अक्षेत्रविद्** (á-kṣetravid) *adj.* who does not know the place, who does not know the way अक्षेत्रविद्यथा मुग्ध: ṚV. v. 40. 5; x. 32. 7 [destitute of spiritual knowledge, not knowing the true nature of the *kṣetra* or body, APTE, MW]

**अक्षेत्रसमुद्भव** (akṣetra-samudbhava) *adj.* [*f.* –ā] born in a bad (i. e. improper) region याश्चाक्षेत्रसमुद्भवा विषयुता याश्चातिदुर्ग्राहिकास्ता: सर्वाश्च जलायुका न च भिषक् संपोषयेत्पोषणै: KalyāKā. 21. 51.

ब्रह्मनिष्ठोक्तसत्तायाः…अखण्डधर्मरूपप्रयुक्तत्वस्य वा संभवात् LaCandr. 310. 25.

**अखण्डधर्मविशेष** ( akhaṇḍadharma-viśeṣa ) *m.* a particular attribute which is unitary or unanalysable अभेदस्तु तादात्म्यम् । तादात्म्यं चाखण्डधर्मविशेष एव LaCandr. 74. 9; 448. 32; नन्ववच्छेदकत्वं नानतिरिक्तवृत्तित्वादिकम्…किं त्वखण्डधर्मविशेष एव LaCandr. 548. 28.

**अखण्डधारम्** ( akhaṇḍa-dhāram ) *adv.* in incessant showers, incessantly धाराधरोऽखण्डधारमन्तराले ववर्ष च PariPar. 12. 139.

**अखण्डधारा** ( akhaṇḍa-dhārā ) *f.* incessant or continuous stream वणिक्पुत्रः…घृतं दातुमुद्यतस्तस्य भाजने । अखण्डधारया यच्छन्नुच्चैर्गतिमुपार्जयत् PārśvC. 1. 807; मन्त्रिणा कथापितम् – यद्गृहकलेषु उभयोरपि पक्षयोरखण्डधारा घृतस्य देया PurāPraSaṁ. 66. 25.

**अखण्डधी** ( akhaṇḍa-dhī ) **1** *m.* one of the thousand names of Viṣṇu (*lit.* possessing irrefutable wisdom) विद्याराजो ज्ञानराजो ज्ञानसिन्धुरखण्डधीः ।…इत्येतद्वासुदेवस्य विष्णोर्नामसहस्रकम् PañcaRā.(Nā.) iv. 3. 56 (? 66); **2** *f.* cognition having a unitary object न च प्रकृते किंचिद्धर्मविशिष्टबोधपरत्वम्, अखण्डधीपरत्वात् LaCandr. 525. 27; सोऽयमित्यादिवाक्यज्ञानस्य स इति पदोत्तरायमिति पदविषयत्वेन नाखण्डधीहेतुत्वम् LaCandr. 664. 37.

**अखण्डध्यानधारिन्** ( akhaṇḍadhyāna-dhārin ) *adj.* who performs meditation incessantly (without interruption) अनुसंधाननिरता ज्ञानिनो भगवत्पराः । परमैकान्तिनो ज्ञेया ह्यखण्डध्यानधारिणः BṛBrahmaS. i. 7. 84.

**अखण्डन** ( a-khaṇḍana ) *n.* **1** non-cessation, non-destruction उत्साहादयस्तु सम्पादितस्वकर्तव्यतया प्रलीनकल्पा अपि संस्कारशेषतां नातिवर्तन्ते । कर्तव्यान्तरविषयस्योत्साहादेरखण्डनात् AbhinBhā. i. 283. 7 (*on* 6. 31. (3)); Kāvyānu.(He.) 101. 1; **2** not breaking, leaving entire [MW.]; **3** non-refutation, admission [MW., Apte]; *m.* time, S'abdacandrikā in S'abdaKaDru. [PW]

**अखण्डन** ( a-khaṇḍana ) *adj.* [*f.* -ā] **1** which is not violated, not disobeyed यस्य (वीरसेनस्य) च…अखण्डनयाज्ञया सदृशी राजते राज्यस्थितिः NalaCam. 4. 9(23); **2** not defective, faultless पुंसामेकमखण्डनं पुनरिदं शंभोर्मते मण्डनं यत्…सूक्तयः RājeKaPū. 74; **3A** unbroken, not capable of being broken or divided, an epithet of परमात्मन् [Apte]; **3B** full, entire [Apte]

**अखण्डनक्षत्र** ( akhaṇḍa-nakṣatra ) *adj.* (a day) which covers a full constellation रात्रावखण्डनक्षत्रे स्थिरराशौ गुणान्विते । तां फेलां पृथिवीं देवीम्… स्मरेत् ĪśānS'iPa. ii. 27. 102.

**अखण्डनय** ( akhaṇḍa-naya ) *adj.* [*f.* -ā] whose measures of (royal) policy are not imperfect यस्य (वीरसेनस्य) च…अखण्डनयाज्ञया सदृशी राजते राज्यस्थितिः NalaCam. 4. 9(23) (comm. अखण्डो नयः षाड्गुण्यं यस्याम्)

**अखण्डनवसु** ( akhaṇḍana-vasu ) *adj.* where the Vasus are uninjured लक्ष्मीमखण्डनवसू रणभूमिरेतु नानाध्वजांशुककृतां सुरदारुणासौ HarVi. 11. 45.

**अखण्डना** ( akhaṇḍanā ) *f.* absence of violation (observance) अर्थिष्वपक्षपातश्च शीलस्याखण्डना ध्रुवम् ।…विज्ञेया बोधिसत्त्वानाम् MaYānaSū. 161. 8 (19. 6)

**अखण्डनाडि** ( akhaṇḍa-nāḍi ) *adj.* having unbroken stalk व्याधोऽपि तत्र…। स्तम्बं सुनाडीकमखण्डनाडिं श्रित्वा मृगान्कर्षति न स हन्तुम् DvyāśraKā. 20. 28.

**अखण्डनिर्वाण** ( akhaṇḍa-nirvāṇa ) *n.* permanent happiness अखण्डनिर्वाणरसप्रवाहैर्विखण्डिताशेषरसान्तराणि ।…जयन्ति शीतानि तव स्मितानि KṛṣṇaKa. 1. 99.

**अखण्डनिष्ठ** ( akhaṇḍa-niṣṭha ) *adj.* resulting in or conveying an unanalysable (unitary) sense (devoid of reference to adjunct-relationship) सोऽयमिति वाक्यमखण्डनिष्ठम् SaṁkṣeS'ā. 1. 150 (i. 124. 11); सं[स्व]भावेनोपदिश्यमानाश्च सर्वज्ञत्वादयः सोपाधिकधर्माः…तदभिधानमुखेन तु स्वप्रकाशसुखव्यक्तावेकस्यां तात्पर्यमित्यखण्डनिष्ठा वेदान्ता वक्ष्यन्ते PrakaVi. 36. 18; 776. 16; अखण्डमेव वयं वाक्यार्थमङ्गीकुर्मः । … विज्ञानादिपदमखण्डनिष्ठं लक्षणवाक्यत्वात् प्रकृष्टप्रकाशश्चन्द्र इतिवत् MānaMe. 201. 2.

**अखण्डनीय** ( a-khaṇḍanīya ) *adj.* which cannot be violated येषां तु चारित्रमखण्डनीयम्…ते पात्रभूता यतयो जिताशाः VarāṅgaC. 7. 52.

**अखण्डनीयवीर्य** ( akhaṇḍanīya-vīrya ) *adj.* whose prowess cannot be destroyed अखण्डनीयवीर्योऽयं गीर्वाणैः सकलैरपि PadmP.(Ra.) 17. 209.

**अखण्डनृमुण्डचूड** ( akhaṇḍanṛmuṇḍa-cūḍa ) *adj.* having an unbroken skull on the crest रूपं दिगम्बरमखण्डनृमुण्डचूडं भावत्कमेव तु वतेश मम स्पृहायै DīnākraSt. 28.

**अखण्डपक्ष** ( akhaṇḍa-pakṣa ) *adj.* **1** with wings not cut off, with unhurt wings (पुष्पपुरम्) हैमवत इव रत्नाकरमखण्डपक्षः…अध्यतिष्ठत्…राजहंसो नाम राजा AvantiKa. 20. 20; **2** having an undivided party (on his side), AvantiKa. 20. 20; *m.* (Gr.) the theory of the indivisible or unitary nature (of utterances) तस्मान्नाखण्डपक्षाश्रयणेन प्रथमः पक्ष इति VaiyāBhū. 142. 23 (*on* 30)

**अखण्डपण्डापाण्डित्य** ( akhaṇḍapaṇḍā-pāṇḍitya ) *n.* learning due to irrefutable wisdom अखण्डपण्डापाण्डित्यपरिखण्डितपण्डिताः…अशेषा भाष्यवक्तारो वैयाकरणिका अमी…मिलिताः ParamāKā. 27. 67.

**अखण्डपद** ( akhaṇḍa-pada ) *n.* an indivisible or unitary word, a word as an indivisible unit or entity समानपदे इत्यस्य अखण्डपदे इत्यर्थात् LaS'abdeS'e. ii. 115. 13; ii. 407. 10.

**अखण्डपदत्व** ( akhaṇḍapada-tva ) *n.* the state or characteristic of being an indivisible or unitary word चर्मे नमन्निस्यादावखण्डपदत्वाभावेन णत्वप्राप्तिश्च न LaS'abdeS'e. ii. 924. 4.

**अखण्डपदलक्षकता** ( akhaṇḍapadalakṣaka-tā ) *f.* the indicatory power of an indivisible word मुख्यार्थहीनस्यापि ब्रह्मलक्षकत्वे घटपदमपि पटलक्षकं स्यादिति चेन्न…अखण्डपदलक्षकतायामेव मुख्यार्थावश्यंभावनियमात् AdvaiSi. 784. 6.

**अखण्डपदार्थ** ( akhaṇḍa-padārtha ) *m.* an indivisible entity viz. the Sphoṭa वाक्यं पदं चाखण्डमेव । अनन्तवर्णकल्पने मानाभावात् । ककारादिकं शृणोमीति प्रतीतिर्मानमिति चेन्न । तस्याखण्ड( ? तस्या अखण्ड° )पदार्थविषयत्वात् VaiyāBhū. 249. 10 (*on* 66); न चोक्ता रीतिः साध्वी । तथा सति सोऽयं गकार इतिवद् यो मया हकारः श्रुतः सोऽयं गकार इत्यापत्तिः । एकस्यैवाखण्डपदार्थस्य सकलवर्णरूपत्वात् VaiyāBhū. 257. 6 (*on* 69)

**अखण्डपर** ( akhaṇḍa-para ) *adj.* conveying an unanalysable (unitary) sense (deviod of reference to adjunct-relations) cf. **अखण्डनिष्ठ**, विप्रतिपन्नं वाक्यमखण्डपरं समानाधिकरणवाक्यत्वात् सोऽयं देवदत्त इति वाक्यवत् NyāyPari. 377. 12.

**अखण्डपरत्व** ( akhaṇḍapara-tva ) *n.* the characteristic of conveying an unanalysable unitary sense नन्वस्तु तत्त्वमसिसत्यज्ञानादिवाक्यानामखण्डपरत्वं निष्प्रमाणकम् S'atDū. 167. 26; 160. 21.

**अखण्डपरमानन्द** ( akhaṇḍa-paramānanda ) *m.* undivided supreme bliss अत्यागेऽपि तनोरखण्डपरमानन्दावबोधस्पृशाम् अध्वा कोऽपि शिवप्रसादसुलभः संपत्स्यते योगिनाम् S'atTrayī. 268; तदभ्यन्तरसंस्थाने…अखण्डपरमानन्दविशेषम् (आवरणम्) SiddhāSāU. 6. 5.

**अखण्डपरशु** ( akaṇḍa-paraśu ) *m.* name of Viṣṇu (holding an unbroken axe) सुधन्वाखण्डपरशुः…इति…केशवस्य… । नाम्नां सहस्रम् ViṣṇuSaBh. 90. 74.

**अखण्डपरायण** ( akhaṇḍa-parāyaṇa ) *adj.* dealing mainly with the indivisible (Brahman) तत्प्रसिद्धिरपि त्रयीशिखरैरखण्डपरायणैः NayaMañ. I. i. 2. 8.

**अखण्डपाण्डित्य** ( akhaṇḍa-pāṇḍitya ) *n.* **A** irrefutable or profound scholarship अखण्डपाण्डित्यमबोधयं ते S'aṅkaDigVi.(Mā.) 7. 33; **B** entire or complete scholarship पिण्डविधिप्रतिपत्तावखण्डपाण्डित्यदानदुर्ललिताम् । … अभिष्टुमः पिण्डनिर्युक्तिम् SiddhāSt. 6.

**अखण्डपुण्य** ( akhaṇḍa-puṇya ) *n.* entire merit अन्यदुर्लभं तरुणः । सुन्दरि हसितकरम्बितमखण्डपुण्येन खण्डयत्यधरम् SundS'a. 80.

**अखण्डप्रताप** ( akhaṇḍa-pratāpa ) *adj.* of unimpaired valour सर्वत्राखण्डप्रतापो जयसिंहो राज्यं करोति KumāCaSaṁ. 43. 5.

**अखण्डप्रत्यय** ( akhaṇḍa-pratyaya ) *m.* knowledge of the indivisible object स इति पदत्वेन घटादिविषयकज्ञानादखण्डप्रत्ययात् LaCandr. 664. 37.

**अखण्डप्रबोध** ( akhaṇḍa-prabodha ) *adj.* all-knowing अखण्डप्रबोधैर्रामाभिधेयैरलं दैवतैर्नः S'rīRāmaBhuSt. 25.

**अखण्डप्रयाणक** ( akhaṇḍa-prayāṇaka ) *n.* non-stop or continuous march, forced march कोशलाधीशो मार्गेऽखण्डप्रयाणकैः । नव्यैः काव्यैरिव कविः शास्त्रवर्त्मातिगच्छति MalliC. 6. 91; अखण्डप्रयाणकैर्मोढेरकं प्राप्तः PrabaK. 29. 7; अखण्डप्रयाणकैः । कन्नालीसिद्धपुरेऽगाल्लात्वाशेषकुटुम्बकम् KumāCaSaṁ. 7. 10 =51. 23.

**अखण्डप्रसर** ( akhaṇḍa-prasara ) *adj.* having a continuous flow अखण्डप्रसराः कषाया महतामपि TriṣaS'aPuC. i. 5. 275; स चित्ते जैनशासनम् । अखण्डप्रसरं चक्रे TriṣaS'aPuC. iv. 3. 5; iv. 7. 134.

**अखण्डप्रागभाव** ( akhaṇḍa-prāgabhāva ) *m.* continuous antecedent negation अखण्डप्रागभावस्यैवाखिलभोगहेतुत्वादिति SāṁkhyaPraBh. 163. 17 (*on* 6. 68)

**अखण्डबुद्धि** (akhaṇḍa-buddhi) *f.* impartite cognition, cognition as a whole, non-discursive knowledge तेनाखण्डबुद्धिसमास्वाद्यमपि काव्यमपोद्धारबुद्धया यदि विभज्यते Loc. 6. 20 (*on* 1. 1); अखण्डबुद्धिनिर्ग्राह्यो वाक्यार्थ एव वाच्यः KāvyPra. 251. 4; वाक्यार्थस्याखण्डबुद्धिवेद्यतया SāhiDa. 247. 6.

**अखण्डबोध** (akhaṇḍa-bodha) *n.* indivisible consciousness आधारमानन्दमखण्डबोधम् KaivaU. 1. 14; *m.* knowledge devoid of attributes उत्तरकाल एव लक्षणया अखण्डबोधस्याभ्युपगमात् AdvaiSi. 696. 20.

**अखण्डबोध** (akhaṇḍa-bodha) *adj.* possessed of indivisible consciousness आनन्दरूपोऽहमखण्डबोधः SvātmPra. 29; यस्त्वत्र…आस्ते विशुद्धमविकारमखण्डबोधम् … नमामि BhāgP. iii. 31. 13; द्रष्टारमात्मानमखण्डबोधम् (विज्ञाय…पुमान् विमृत्युः) ViveCū. 41. 223; 45. 253.

**अखण्डबोधकत्व** (akhaṇḍabodhaka-tva) *n.* the characteristic of causing comprehension of the indivisible (Brahman) उक्तश्रुतेरखण्डबोधकत्वेनाव्याहतिः GuruCandr. iii. 90. 14; LaCandr. 611. 30.

**अखण्डब्रह्मचारिन्** (akhaṇḍa-brahmacārin) *m.* one observing continuous celibacy अखण्डब्रह्मचारिणां स्त्रीपरीषहबाधा नास्ति TātpaVṛ. 28. 18 (*on* 1. 20)

**अखण्डब्रह्मतेजस्** (akhaṇḍabrahma-tejas) *n.* the lustre of the impartite Brahman तन्मध्येऽखण्डब्रह्मतेजोमण्डलम् MaṇḍBrU. ii. 1. 5.

**अखण्डब्रह्मधी** (akhaṇḍabrahma-dhī) *f.* knowledge of the indivisible Brahman अखण्डब्रह्मधीश्च न भ्रमनिवर्तिका स्यात् GuruCandr. i. 102. 16; i. 131. 17; अखण्डब्रह्मधीरेव जिज्ञासायाः फलम् LaCandr. 738. 39.

**अखण्डब्रह्मन्** (akhaṇḍa-brahman) *n.* indivisible Brahman, indivisible Highest Entity श्रुतिरखण्डब्रह्माद्वैतभाने ब्रह्मविदः प्रापञ्चिकभेदादर्शनं वदतिAṇuBh. 27. 12 (*on* i. 1. 11); सगुणवाक्यस्यापि…कर्मकाण्डस्यापि…वैद्यकादिशास्त्रस्यापि… अखण्डब्रह्माखण्डकर्माखण्डौषधादिपरत्वं स्यात् AdvaiSi. 688. 9; न हि जरद्गवादिवाक्येऽखण्डब्रह्मपरताग्राहकमुपक्रमाद्यस्ति GuruCandr. i. 466. 22; i. 465. 21; अखण्डब्रह्माकारज्ञानस्य दृश्योच्छेदकत्वे आपातज्ञानरूपस्यापि तस्य तत् स्यात् LaCandr. 7. 8; 518. 33.

**अखण्डब्रह्मबोध** (akhaṇḍabrahma-bodha) *m.* knowledge of the indivisible Brahman अखण्डब्रह्मबोधस्वीकारेणाख्यातं साधुत्वमात्रार्थम् LaCandr. 310. 20.

**अखण्डब्रह्मव्रतवत्** (akhaṇḍabrahmavrata-va(n)t) *m.* name of Viṣṇu अखण्डब्रह्मव्रतवानात्मा योगविवेचकः।…(इत्येतत्…विष्णोर्नामसहस्रकम्) SātvaT. 6. 35.

**अखण्डब्रह्मसाक्षात्कार** (akhaṇḍabrahma-sākṣātkāra) *m.* realization of the indivisible Brahman अखण्डब्रह्मसाक्षात्कारवेलायाम् अभेदानुभवात् LalitāTriBh. 270. 1 (*on* 7); अखण्डब्रह्मसाक्षात्कारात् पूर्वम्…प्रतीतिरनुवर्तत एव AdvaiSi. 155. 7.

**अखण्डब्रह्मसिद्धि** (akhaṇḍabrahma-siddhi) *f.* establishment of the (theory of the) indivisible Brahman अखण्डब्रह्मसिद्ध्युपायत्वेन प्राप्तस्यावाच्यत्वादेः…सिद्धेः AdvaiSi. 785. 2.

**अखण्डब्रह्माण्ड** (akhaṇḍa-brahmāṇḍa) *n.* entire universe (सुदत्तस्य) अखण्डब्रह्माण्डडिम्बडमरकरालैः प्रतिपक्षव्यालैः संचितस्य कीर्तिकुलधनस्यापहारे गाढं गृध्नुता YaśasCam. ii. 243. 5.

**अखण्डब्रह्मात्मैक्य** (akhaṇḍabrahmātmaikya) *n.* oneness of the (individual) self with the indivisible Supreme Self विषयीकृतो वेदान्तवाक्यार्थोऽखण्डब्रह्मात्मैक्यरूपो यैः LaCandr. 875. 34.

**अखण्डब्रह्माद्वैतभान** (akhaṇḍabrahmādvaita-bhāna) *n.* cognition of non-duality of the indivisible Brahman यस्य त्वखण्डब्रह्माद्वैतभानं ब्रह्मेत्येव न त्विदं ब्रह्मेति सखण्डम् AṇuBh. 276. 3 (*on* iii. 4. 16)

**अखण्डब्रह्मानन्द** (akhaṇḍabrahmānanda) *m.* bliss of (realising) the indivisible Brahman वैषयिकसुखानां सर्वेषां मिलितानामप्यखण्डब्रह्मानन्दलेशरूपत्वादखण्डब्रह्मानन्दानुभवो युगपत् सर्ववैषयिकसुखावाप्तेरतिरिच्यते S'ivārkaMaDī. i. 225. 14 (*on* i. 1. 16); PūrvottaVāNaMā. 370. 2.

**अखण्डब्रह्मार्थ** (akhaṇḍabrahmārtha) *adj.* [*f.* -ā] (a scriptural passage) having the indivisible Brahman as its meaning (श्रुतिः) अस्थूलमनणु इत्यादिस्त्वखण्डब्रह्मार्था GuruCandr. i. 493. 23.

**अखण्डभक्ति** (akhaṇḍa-bhakti) *adj.* having undivided or singular devotion नालम्बते तदपि सौख्यमखण्डभक्तिः BṛBrahmS. iii. 5. 29.

**अखण्डभवखण्डन** (akhaṇḍabhava-khaṇḍana) *adj.* destroying the entire worldly existence (श्रुतम्) … गणपतेः खण्डमखण्डभवखण्डनम् BrahmVaiP. iv. 1. 4.

**अखण्डभाग्य** (akhaṇḍa-bhāgya) *adj.* with unimpaired luck अखण्डभाग्यः…आभडः…निषिचतुष्कं न्यास्थत् PrabaK. 100. 20.

**अखण्डभाव** (akhaṇḍa-bhāva) *m.* oneness, unity आत्मानं परात्मनि। विलाप्याखण्डभावेन तूष्णीं भव AdhyāU. 7 = ViveCū. 290; संलक्ष्य चिन्मात्रतया सदात्मनोः अखण्डभावः परिचीयते बुधैः ViveCū. 252.

**अखण्डभुजदण्ड** (akhaṇḍa-bhujadaṇḍa) *adj.* whose staff-like arms are unhurt अखण्डभुजदण्डस्य…यस्य वैरिभिः। ज्येष्ठबन्धुः…प्राप्यते प्राणसंशयम् PāṇḍaC. 13. 664.

**अखण्डभुजविक्रम** (akhaṇḍa-bhujavikrama) *adj.* valour of whose arms is unimpaired चक्रवर्तिन्…अखण्डभुजविक्रम। अत्याहितम् TriṣaS'aPuC. ii. 6. 62.

**अखण्डभूमण्डल** (akhaṇḍa-bhūmaṇḍala) *n.* the entire circle or sphere of the earth अखण्डभूमण्डललीनमाविलं निवार्य Aparā. 1252. 16 (*on* 3. 334); वर्षेलवंशस्य विकासनाय ह्रासास्पदं यद्यपि मे प्रयासः। अखण्डभूमण्डलमण्डनार्कसन्दीपनायाचिरदीपितैर्व(र्वा) VīraBhā. 1. 4; 10. 2.

**अखण्डभोग** (akhaṇḍa-bhoga) *m.* uninterrupted enjoyment (यस्याः पादतले रेखा सा…) भवेदखण्डभोगायोर्ध्वा मध्याङ्गुलिसंगता SkandP. iv(1). 37. 13; अखण्डभोगैरवनौ समेतमाखण्डलं यं नृपम् Raghunā. 7. 6.

**अखण्डम्** (akhaṇḍam) *adv.* **i** without a break, uninterruptedly, continuously अखण्डम्…धृता भूपतिभिः स्ववंशजैः।…मही Kirātā. 1. 29; याम्यनासपुटे यस्य वायुर्वाति दिवानिशम्। अखण्डमेव तस्यायुः क्षयलब्दत्रयेण SkandP. iv(1). 42. 3; अखण्डदीपं यः कुरुते विष्णोः…अश्वमेधस्य फलं प्राप्नोति BṛNāraP. 13. 182; अहो यामाष्टपर्यन्तमखण्डं तत्र कीर्तितम्। बभूव नन्दसदने मुने मोदाभिवर्धनम् ĀdiP. 16. 27; गन्धद्विरदकुलनगोद्दण्डगण्डोपलेभ्यो नियन्तीषु … अखण्डम्। दानाम्भोनिम्नगासु HarVi. 45. 51; राजा तत्राकरोद्राज्यम्…अखण्डं तन्वानो धर्मम् PariPar. 6. 184; अखण्डं खण्डयन्ती सा मुशलैः…कणान् S'āliC. 1. 30; भक्तानां तु विरहभावे तदात्मकत्वमेवाखण्डं स्फुरति AṇuBh. 245. 19 (*on* iii. 3. 37); पुण्ड्राः …अखण्डम् … दासभावमाकलयन्ति ParamāKā. 105. 24; SetuBa. 118. 7; **ii** always, permanently आसेदुषामपि दिवं कविपुंगवानां तिष्ठत्यखण्डमिह काव्यमयं शरीरम् S'ṛṅgāTi.(Ru.) 1. 2; मलीमसाचारनिरर्गलस्थितेरखण्डमन्यन्मलिनं प्रकल्पते HarVi. 12. 28.

**अखण्डमण्डन** (akhaṇḍa-maṇḍana) *adj.* [*f.* -ā] with undisturbed decoration, fully decked हठाहरणखिन्नाम्…जानकीं जनस्थानस्थितामिवाहमखण्डमण्डनां पश्यामि PrasaRā. 7. 8(2).

**अखण्डमण्डपच्छाय** (akhaṇḍa-maṇḍapacchāya) *adj.* provided with unbroken shade of the pavilion अखण्डमण्डपच्छायम् (जिनेन्द्रभवनं चारु कारयामास भूपतिः) PārśvC. 1. 634.

**अखण्डमण्डल** (akhaṇḍa-maṇḍala) *adj.* [*f.* -ā] **1** full-orbed स्वयमन्तर्लक्ष्यो भूत्वा परमाकाशाखण्डमण्डलो भवति MaṇḍBrU. 1. 4(349. 5); तन्नादबिन्दुकलातीतमखण्डमण्डलम् MaṇḍBrU. 2. 1(349. 11); अम्बरात्…आगतम्…चक्रम् …अकुण्ठ(v. l. अखण्ड)मण्डलम् MahāBhā. i. 17. 20; रराजाखण्डमण्डलः। चन्द्रः ViṣṇuP. v. 10. 7; BhāgP. x. 20. 44; अखण्डमण्डलो दृष्टः पुरः कुमुदनन्दनः PadmP.(Ra.) 7. 182; रोचते सर्वभूतेभ्यः शशीवाखण्डमण्डलः।…विजिगीषुः NītiSā. 8. 2; (रावणः) अखण्डमण्डलं चन्द्रमातपत्रं चकार BhaviP. 705A. 14 (iv. 71. 6); NavaSāC. 11. 87; अखण्डमण्डलः…एष पृथिवीपतिः। न निशाकरवज्जातु कलावैकल्यमागतः KāvyPra. 650. 1; ददर्श सा…अखण्डमण्डलं निशाकरम् NemiNir. 2. 52; पूर्णः…अखण्डमण्डलः चन्द्रमाः VīraMi. (Saṁskāra.) 884. 5; **2** (a king) whose circle of kings is not disrupted NītiSā. 8. 2; अखण्डमण्डलेन …। कलिसन्तमसं येन व्यनीयत नृपेन्दुना NavaSāC. 11. 87; KāvyPra. 650. 1; (वसुधाधिपः) जगदाह्लादकश्चण्डप्रतापोऽखण्डमण्डलः। विधिना यश्च चन्द्रार्कविवेकीकृत्येव निर्ममे KathāSaSāg. xii. 24. 5; इत्थं मन्त्रिप्रकाण्डः स रण्डामाखण्डलोपमाम्। अखण्डमण्डलां चक्रे RājTa.(Ka.) 6. 260; *n.* the entire sphere, complete expanse आत्मानमखण्डमण्डलाकारमावृत्य सकलब्रह्माण्डमण्डलम्…ध्यायेत् BhāvU. 548. 12; MaṇḍBrU. 2. 1 (349. 17); अखण्डमण्डलं भूमेर्यस्य पृष्ठे प्रतिष्ठितम् SkandP. i(3B). 11. 10; YogVā. v. 13. 92; आचार्यः…अखण्डमण्डलाकारमानन्दमीश्वरसंनिधौ प्राप्य S'aṅkaVi.(Ā.) 280. 6; KulārT. 6. 24.

**अखण्डमण्डलाकार** (akhaṇḍamaṇḍalākāra) *adj.* of the size of entire sphere तल्लक्ष्यं नासाग्रम्। यदा तालुमूले गाढतमो दृश्यते। तदभ्यासादखण्डमण्डलाकारज्योतिर्दृश्यते MaṇḍBrU. 2. 1 (349. 17); BhāvU. 548. 12; अखण्डमण्डलाकारं व्याप्तं येन चराचरम्। तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः MaṭhāU. 48. 5 = TantrSā.(K.) 63. 15; अखण्डमण्डलाकारस्पन्दरूपा चिदेव यत् YogVā. v. 13. 92; S'aṅkaVi.(Ā.) 280. 6; अखण्डमण्डलाकारं विश्वं व्याप्य व्यवस्थितम्।… मण्डलम् KulārT. 6. 24.

**अखण्डमण्डलाग्र** (akhaṇḍa-maṇḍalāgra) *adj.* whose sword is unbroken अखण्डमण्डलाग्रोऽसौ याति यामिकतां निशि। विष्णुस्तदवरोधेषु Surath. 3. 52.

**अखण्डमण्डलाधीश** ( akhaṇḍamaṇḍalādhīśa ) *m.* the lord of the whole province श्रीधान्याङ्कपुराधीशः केतराज इति श्रुतः । अखण्डमण्डलाधीशो राजासीद्राजशेखरः El. iii. 98. 50.

**अखण्डमण्डूरकुल** ( akhaṇḍa-maṇḍūrakula ) *n.* whole mass of iron-rust अखण्डमण्डूरकुलमिव मनुष्यरूपेण परिणतम् YaśasCam. ii. 44. 4.

**अखण्डमहिमन्** ( akhaṇḍa-mahiman ) *adj.* whose greatness is not destroyed प्रलयेऽप्यखण्डमहिमा शम्भोः प्रसादादहम् SamudraMa. 3. 10.

**अखण्डमहिमोदय** ( akhaṇḍa-mahimodaya ) *adj.* rise of whose greatness is unhindered ययौ स्वयंवरं पाण्डुरखण्डमहिमोदयः PāṇḍaC. 4. 146.

**अखण्डमहीमण्डल** ( akhaṇḍa-mahīmaṇḍala ) *n.* the whole sphere of the earth अखण्डमहीमण्डलसाम्राज्यलाभमिव तनयलाभमवगच्छता…आनन्दरङ्ग-महीपतिना ĀnandRa. 6. 4(2); 7. 56(? 57) (10)

**अखण्डमाणिक्य** ( akhaṇḍa-māṇikya ) *n.* unbroken (single) ruby माणिक्यमुकुटम् अखण्डमाणिक्येन निर्मितं मुकुटम् LalitāSaBh. 36. 19 (*on* 68)

**अखण्डमान** ( akhaṇḍa-māna ) *adj.* of unimpeachable honour अखण्ड-मानो मनुजेश्वराणाम्…। दिशो यशोभिः…चकार राजा रजतावदाताः JānaHa. 1. 13.

**अखण्डमान्मथ** ( akhaṇḍa-mānmatha ) *n.* uninterrupted amorous act(s) अखण्डमान्मथप्रथमोपदेशगुरु भङ्गुरभ्रुवः। …मधु कर्तुमीपुरधरामृतातिथिम् SrīKaC. 14. 1.

**अखण्डमायोपहितत्व** ( akhaṇḍamāyopahita-tva ) *n.* the state of being conditioned by the nescience in its entirety अखण्डमायोपहितत्वस्यैव व्यावर्तकत्वात् AdvaiSi. 742. 11.

**अखण्डमुख्यतात्पर्यकत्व** ( akhaṇḍamukhyatātparyaka-tva ) *n.* the state of having the indivisible (Supreme) as the chief import अखण्डमुख्य-तात्पर्यकत्वं वेदान्तसामान्य एव मयोच्यते LaCandr. 688. 41.

**अखण्डमूर्ति** ( akhaṇḍa-mūrti ) *adj.* having indivisible (i. e. full) form वक्त्रेण त्वमपाहरः शशधरस्याखण्डमूर्तेः श्रियम् PārśvanāSta. 13.

**अखण्डमूर्धन्य** ( akhaṇḍa-mūrdhanya ) *m.* the best of those (whose vows i. e. *brahmacarya* etc. are) not violated अखण्डमूर्धन्यकपालमाहुः संसि-द्धिदं साधकपुंगवेभ्यः SaṅkaDigVi.( Mā. ) 11. 23.

**अखण्डयत्** ( a-khaṇḍayat ) *adj.* **A** not spoiling नापि तस्योप-लभ्यात्मनः किंचिदुपलम्भावरणं संभवति । तस्य सतोऽपि तदात्मानमखण्डयतः सामर्थ्या( ? र्थ्य )तिरस्कारायोगात् PramāVāSvopVr. 87. 3; **B** not rejecting तस्य च प्रणयमनुरूपमखण्डयन्तः…ऐक्षन्त…कुमाराः AvantiKa. 226. 11; **C** not lessening दृढतरोपजातजङ्घाजाड्यमाप्यखण्डयन्ती गतित्वरां क्षणेनैवातिदूरमव्रजम् TilaMañ. 303. 14; **D** not changing आर्तवे तु पुनः सर्वा उपगम्याः प्रिया इव । …उद्गच्छेदनेनैव विधिना नित्यमार्तवे । तुल्यवृत्तिर्यथाकालं स्वं स्वं वासमखण्डयन् BhaviP. 29A. 2 (i. 8. 41); **E** not impeding व्यभिचारादेः सद्धेतौ सिद्धिम-खण्डयतश्च हेत्वाभासत्वाभावात् TattvCin. ii(1). 913. 2.

**अखण्डयशस्** ( akhaṇḍa-yaśas ) *adj.* **A** whose glory is undiminished, of unsullied fame सुन्दस्त्रीदमनेऽप्यखण्डयशसो लोके महान्तो हि ते UttaRāC. 5. 35; SaraKaṇṭhā. 588. 20; AuciViCa. 16. (100); **B** of constant fame तेन स्वमण्डलेऽखण्डयशसा पुण्यकर्मणा । विहारः…निर्मितः RājTa.(Ka.) 1. 94.

**अखण्डयौवनतनु** ( akhaṇḍayauvana-tanu ) *adj.* whose form is ever youthful आसंसारमखण्डयौवनतनोरक्षीणपक्षस्य च क्षेत्रज्ञक्षितिनायकस्य रिपवः कुत्रोपजापः कुतः AmrUda. 1. 9.

**अखण्डरक्तविच्छर्द** ( akhaṇḍa-raktavicharda ) *adj.* dripping blood constantly मुण्डमण्डलैः । अखण्डरक्तविच्छर्दैर्बिभ्रत्यो वक्षसि स्रजः । सहस्रं देवताः BrahmāṇḍP. iii. 20. 66.

**अखण्डरजतत्व** ( akhaṇḍa-rajatatva ) *n.* different silverness (i. e. silverness different from the *vyāvahārika*) अखण्डरजतत्वादेरुत्पत्तौ तस्य पूर्वमननुभूतत्वेन पूर्वानुभूतरजतत्वादिप्रकारकप्रवृत्त्यादिकार्यस्य भ्रमस्थलेऽनुपपत्तेः ( comm. अखण्डेति अतिरिक्तेत्यर्थः ) LaCandr. 45. 9.

**अखण्डरूप** ( akhaṇḍa-rūpa ) *adj.* [ *f.* -ā ] **A** of complete or perfect form संपूर्णतराण्यखण्डरूपाणि Sphuṭā. 104. 6 (*on* 3. 97); **B** whose form is without limitations ते यान्ति तत्पदसरोजमखण्डरूपम् LakṣmīNṛSt. 17; संवि-दश्चाखण्डरूपायाः कथं संकोचकारणस्वातन्त्र्यं मायापरपर्यायं विना ParāTri. (comm.) 140. 13; त्यक्ताखिलोपाधिरखण्डरूपः पूर्णात्मना यः स्थित एष मुक्तः ViveCū. 340; सर्वसिद्धिकृत् । देव्यास्त्वखण्डरूपायाः स्तवनम् NityoNi. 58. 18 = TantrRā. 2. 100; **C** of indivisible form त्रैधं जनः शंसति वर्तमानं भूतं भविष्यन्तमहं पुनस्त्वाम् । ऐकध्यमापन्नमखण्डरूपमाधारमेषां जगतामवैवि( ? मि ) Jīvān. 299. 3; प्रतिपद-मर्थविशेषाज्ञानेऽप्यास्तामखण्डवाक्यस्य । अर्थोऽप्यखण्डरूपो विशिष्टमतिरिक्तमिति हि सिद्धान्तः VarivaRaha. 152; *n.* **1** form or nature without limitations श्रुतेश्च तात्पर्यमखण्डरूपे परे पुरस्तादुपवर्णितं च SaṁkṣeSā. 3. 283 (ii. 311. 16); तमेवा-खण्डरूपेण सर्वजीवैक्यभावनविशेषेण ध्यान( ? य )तोऽस्य साक्षान्मुक्तिरिहैव Saṅka-Vi.(Ā.) 165. 12; मुख्यस्याप्यखण्डरूपस्य वागतीतत्वेन साक्षात्स्तोतुमशक्यत्वात् SetuBa. 8. 8; **ii** one indivisible form, one without a second एकपदम-खण्डरूपकेवलार्थकम् GuruCandr. i. 487. 24.

**अखण्डरूपक** ( akhaṇḍarūpa-ka ) *adj.* possessing a complete form अखण्डैकरसं स्थूलं सूक्ष्मं चाखण्डरूपकम् TejoBiU. 2. 11.

**अखण्डरूपब्रह्मज्ञान** ( akhaṇḍarūpa-brahmajñāna ) *n.* consciousness which is (itself) Brahman which is attributeless ज्ञानत्वं किं जातिविशेषो वा । नाद्यः।…अखण्डरूपब्रह्मज्ञाने तदयोगात् (LaCandr. निर्धर्मकैकव्यक्तिरूपब्रह्मेत्यर्थः) AdvaiSi. 750. 6.

**अखण्डरूपस्थिति** ( akhaṇḍarūpa-sthiti ) *f.* existence in the unlimited form (i. e. Supreme Brahman) अखण्डरूपस्थितिरेव मोक्षः ViveCū. 480.

**अखण्डरोचिस्** ( akhaṇḍa-rocis ) *adj.* (the moon) whose lustre is unimpeded (i. e. who has very brilliant lustre) खण्डमण्डलमखण्डरोचिषः… । रोचते स रचिताञ्जनाक्षरं जैत्रपत्रमिव पुष्पपत्रिणः Surath. 6. 43.

**अखण्डर्क्ष** ( akhaṇḍarkṣa ) *adj.* (the day) with one undivided (whole) asterism अखण्डर्क्षे सुलग्नादौ चुल्हीं कृत्वानुमारुतम् । तत्रेष्टकास्ताः संदध्यात् ĪśānSiPa. ii. 33. 41.

**अखण्डलक्षण** ( akhaṇḍa-lakṣaṇa ) *n.* **1** a common characteristic इह लोके…विविधलक्षणानाम्…चेतनाचेतनमूर्तामूर्तपदार्थानाम्…एकमखण्डलक्षणं भवति TātpaVr. 130. 15; **2** the definition of the impartite (Brahman) न चाखण्डलक्षणवाक्यत्वं हेतुः असिद्धेः Nyāyāmṛ. 436B. 8.

**अखण्डलक्षणा** ( akhaṇḍa-lakṣaṇā ) *f.* the secondary signification with a sense unconnected with the sense of the adjoining word सिद्धेऽखण्ड-तात्पर्ये तन्निर्वाहाय अखण्डलक्षणया मानान्तराविरोधः GuruCandr. i. 326. 16; i. 327. 16.

**अखण्डलचण्डभानु** ( akhaṇḍala-caṇḍabhānu ) *m.* the entire (i. e. the very vast) sun आक्रम्य मण्डलमखण्डलचण्डभानोः BhaviP. 876B. 16 (iv. 187. 13)

**अखण्डवपुस्** ( akhaṇḍa-vapus ) *adj.* having the full (i. e. perfect) body समपादि भगवानखण्डवपुः TirthaKa. 58. 11.

**अखण्डवस्तु** ( akhaṇḍa-vastu ) *n.* the indivisible entity (like the Supreme Spirit) नाखण्डवस्तुविषया वचसः प्रवृत्तिर्लोकेऽपि दृष्टिपथमापतिता SaṁkṣeSā. 1. 103 (i. 92. 11); अखण्डवस्तुविषयः शब्दान्वयो दर्शितः (वेदान्ता-नाम्) SaṁkṣeSā. 1. 216 (i. 168. 16); ऐदंपर्यमखण्डवस्तुविषयं वेदान्तवाक्यस्य… वर्णितम् SaṁkṣeSā. 3. 2 (ii. 147. 21); न च मूलाज्ञानविषयतया घटादेः साक्षि-विषयता, तस्याखण्डवस्तुविषयत्वेन घटचैतन्याविषयत्वात् SiddhāTa. 54. 20.

**अखण्डवस्तुस्वरूप** ( akhaṇḍavastu-svarūpa ) *n.* the form of the indivisible entity अखण्डवस्तुस्वरूपे ( ? स्वरूपपरत्वे ) तु वाक्यस्य पदानां स्वार्थपरि-त्यागेन लक्षणादोषोऽवर्जनीयः NītiMā. 19. 1.

**अखण्डवस्त्वनवलम्बन** (akhaṇḍavastv-anavalambana) *n.* not resting upon the absolute entity; non-manifestation of the Supreme Being लयस्ता-वदखण्डवस्त्वनवलम्बनेन चित्तवृत्तेर्निद्रा VedāntSā.(Sa.) 31. 16 ( comm. आलस्येन चित्तवृत्तेः…प्रत्यगात्मस्वरूपानवभासनात् वृत्तेः स्तब्धीभावलक्षणनिद्रारूपः ); चित्त-वृत्तेः रागादिवासनया स्तब्धीभावात् अखण्डवस्त्वनवलम्बनं कषायः VedāntSā.(Sa.) 32. 2.

**अखण्डवाक्य** ( akhaṇḍa-vākya ) *n.* impartite or indivisible sentence अखण्डवाक्यवाक्यार्थयोरर्थापत्त्या वाच्यवाचकभावलक्षणं संबन्धमवधार्य KāvyPra. 221. 3; प्रतिपदमर्थविशेषाज्ञानेऽप्यास्तामखण्डवाक्यस्य । अर्थोऽप्यखण्डरूपो विशिष्ट-मतिरिक्तमिति हि सिद्धान्तः VarivaRaha. 151.

**अखण्डवाक्यस्फोट** ( akhaṇḍavākya-sphoṭa ) *m.* the underlying power that conveys the meaning of an unsegmented sentence कृष्णेहि रक्षैन-मित्यादौ वाक्येऽशविभागाभावात् … वाक्यस्यैव विशिष्टार्थे शक्तिरिति वाक्यस्फोटः । स द्विविधः सखण्डवाक्यस्फोटोऽखण्डवाक्यस्फोटश्च BhaṭṭCin. i. 61. 22 (*on* i. 1. 4); VaiyāBhū. 236. 4 (*on* 59)

**अखण्डवाक्यस्मृति** ( akhaṇḍavākya-smṛti ) *f.* recollection of an impartite sentence (अखण्डवाक्यार्थे) मध्यमवृद्धव्यवहारदर्शनमात्रस्याखण्डवाक्यानु-भूतेर्व्यवधानात्, अनुभूतेश्च मध्यमवृद्धव्यवहारे तत्कृतसंस्कारोद्बोधात् अखण्डवाक्य-स्मृतिरयत्नमेव जायते Bhāsk. i. 286. 14 (*on* i. 5. 19)

**अखण्डवाक्यस्वीकार** ( akhaṇḍavākya-svīkāra ) *m.* acceptance of an unsegmented sentence आनुपूर्वीविशेषविशिष्टानामेव वर्णपदादीनां वाक्यत्वोपपत्तौ अखण्डवाक्यस्वीकारे प्रमाणाभावात् MīmāKau. i. 120. 4 (*on* i. 3. 24)

**अखण्डवाक्यानुभूति** ( akhaṇḍavākyānubhūti ) *f.* understanding of the whole or indivisible sentence अखण्डवाक्यार्थे…मध्यमवृद्धव्यवहारदर्शन-मात्रस्याखण्डवाक्यानुभूतेर्व्यवधानात् Bhāsk. i. 286. 13 (*on* i. 5. 19)

**अखण्डवाक्यार्थ** ( akhaṇḍa-vākyārtha ) *m.* the indivisible sense of the sentence (in Vedānta) अखण्डवाक्यार्थमनुव्रजन्ती समन्वयोत्थापितबुद्धिवृत्तिः। अक्षादिभिस्तत्त्वनिवेदने हि सद्यः परिम्लायति निर्विशङ्कम् SaṁkṣeS'ā. 2. 96 (ii. 61. 2); NyāyMa. 266. 5; PrakaVi. 775. 25; अखण्डवाक्यार्थसाक्षात्कारे स ( पदार्थानामुद्देश्योपादेयभावः ) बाध्यते VedāntKa. 46. 17 (*on* i. 1. 1); जगत्कारणतयोपलक्षितस्य…सजातीयविजातीयस्वगतनानात्वरहितस्य कारणत्वकृतविकाराश्रयत्वादिदोषपरिजिहीर्षया स्वरूपशोधनाय प्रवृत्तानि निष्प्रत्यूहमखण्डवाक्यार्थं बोधयन्ति NyāyKu. 137. 18; परमार्थतो वा लक्षणया वा बोधनं ( ब्रह्मणः ) नेच्छाम इति चेत् तर्ह्यखण्डवाक्यार्थसिद्धिरेव भवेत् S'atDū. 167. 11; 82. 6; 168. 2; वेदान्तानां निर्विषयत्वं च स्यात्। अखण्डवाक्यार्थस्य स्वप्रकाशस्थ( ? स्य ) चिन्मात्रस्याविद्याद्यध्यासाधिष्ठानत्वेन तत्साक्षित्वेन च नित्यसिद्धत्वात् Nyāyāmṛ. 449B. 8 = AdvaiSi. 690. 6; अद्वैतवाक्यस्य पदार्थशोधनद्वाराखण्डवाक्यार्थमहातात्पर्यकत्वेऽपि अखण्डवाक्यार्थस्यैवाद्वैतरूपस्य तात्त्विकत्वसिद्धिः GuruCandr. i. 495. 22; अखण्डवाक्यार्थानुकूलत्वेन महातात्पर्यस्य परं तत्रायुक्तत्वात् GuruCandr. ii. 222. 7; प्रथमादिरूपस्याद्वितीयादिपदार्थस्य न केवलमखण्डवाक्यार्थविरोधित्वान्निरासः किंत्वसंभवादपि LaCandr. 524. 31; 511. 34; 753. 21.

**अखण्डवाक्यार्थखण्डन** ( akhaṇḍavākyārtha-khaṇḍana ) *n.* refuting (the doctrine) of the indivisible sense of a sentence अखण्डवाक्यार्थखण्डनानन्तरं च…एता एव युक्तयः पुनः प्रतिपादिताः NyāySiA. 239. 11; अथ अखण्डवाक्यार्थखण्डनवादः अष्टत्रिंशः S'atDū. 160. 1.

**अखण्डवाक्यार्थपक्ष** ( akhaṇḍavākyārtha-pakṣa ) *m.* the proposition or view of the indivisible sense of a sentence न ह्यखण्डवाक्यार्थपक्षे नीलपदस्य सकलानीलव्यवच्छिन्नार्थता संभवति NyāyKu. 138. 15.

**अखण्डवाक्यार्थप्रतीति** ( akhaṇḍavākyārtha-pratīti ) *f.* the cognition of the indivisible sense of a sentence प्रथमं घटमानयेति व्यवहारे तस्याखण्डवाक्यार्थप्रतीतिरेव Bhāsk. i. 286. 9 (*on* i. 5. 19)

**अखण्डवाक्यार्थबुद्धि** (akhaṇḍavākyārtha-buddhi) *f.* cognition of the indivisible sense of a sentence लक्षणावृत्तिहेतोरानीतैषाखण्डवाक्यार्थबुद्धिः SaṁkṣeS'ā. 1. 208 (i. 163. 4)

**अखण्डवाक्यार्थभङ्ग** ( akhaṇḍavākyārtha-bhaṅga ) *m.* refutation of (the doctrine of) the indivisible sense of a sentence ( वस्तुनि प्रतीयमाने ) गोत्वादिसंस्थानविशेषविशिष्टतया इत्थमिति प्रतीतेर्व्यावृत्तिश्च निश्चीयत इत्यर्थः। अनेनाखण्डवाक्यार्थभङ्गश्चार्थतः कृतो भवति S'rutaPra. iA. 121. 25 (*on* i. 1. 1)

**अखण्डवाक्यार्थमति** ( akhaṇḍavākyārtha-mati ) *f.* cognition of the indivisible sense of a sentence सम्बन्धिरूपं यदि वस्तु लक्ष्यमखण्डवाक्यार्थमतिः कुतस्त्या SaṁkṣeS'ā. 1. 203 (i. 159. 24)

**अखण्डवाक्यार्थविरोधित्व** ( akhaṇḍavākyārthavirodhi-tva ) *n.* the state of being opposed to the (theory of the) indivisible sense of a sentence प्रथमादिरूपस्याद्वितीयादिपदार्थस्य न केवलमखण्डवाक्यार्थविरोधित्वान्निरासः किं त्वसंभवादपि LaCandr. 524. 31; GuruCandr. ii. 263. 18.

**अखण्डवाक्यार्थसाक्षात्कार** ( akhaṇḍavākyārtha-sākṣātkāra ) *m.* realization of the indivisible sense of a sentence अखण्डवाक्यार्थसाक्षात्कारे स ( पदार्थानामुद्देश्योपादेयभावः ) बाध्यते VedāntKa. 46. 17 (*on* i. 1. 1)

**अखण्डवाक्यार्थानुकूलत्व** ( akhaṇḍavākyārthānukūla-tva ) *n.* the state of being favourable to the indivisible sense of a sentence ( द्वितीयाभावस्य ) अखण्डवाक्यार्थानुकूलत्वेन महातात्पर्यस्य परं तत्रायुक्तत्वात् GuruCandr. iii. 222. 7.

**अखण्डवाद** ( akhaṇḍa-vāda ) *m.* the doctrine of the impartite or indivisible (Brahman) अन्यथा परपक्षेऽप्यखण्डवादानारम्भः स्यात् Nyāyāmṛ. 272B. 6; 563B. 8; तथा सति … स्वगतनानात्वनिषेधपरत्वमभ्युपगतं कथं स्यात्। अखण्डवादानारम्भप्रसङ्गात् Vādā. 91. 3.

**अखण्डवादिन्** ( akhaṇḍavād-in ) *m.* one who holds the doctrine of the indivisible (nature of Brahman) अखण्डवादिनोऽपि स्याद्विशेषोऽनिच्छतोऽप्यसौ AnuVyā. 12A. 3 (*on* i. 2); अखण्डखण्डनादेवं विशेषोऽखण्डवादिना। खण्डितेनापि मनसा स्वीकार्योऽनन्यथागतेः AnuVyā. 45A. 8 (*on* 3. 2); 68B. 8 (*on* 4. 2); अखण्डवादिनापि विशेषमङ्गीकारयति NyāySu.(Ja.) 170B. 9 (*on* i. 2. 6)

**अखण्डवाहिन्** ( akhaṇḍavāh-in ) *adj.* [ *f.* -ī ] continuing uninterruptedly, going on without violation of rules अस्य हि दण्डभयादखण्डवाहिनी लोकयात्रा AvantiKa. 224. 4.

**अखण्डविक्रम** ( akhaṇḍa-vikrama ) *adj.* having invincible or unsubdued valour शुद्धाशुद्धाध्वसंप्राप्तेः संस्मृतोऽखण्डविक्रमः AhirbuS. 53. 18; सोऽखण्डविक्रमः खण्डप्रपाताभिमुखं ययौ TriṣaS'aPuC. ii. 4. 264; अखण्डितं ते भजनं देहि मेऽखण्डविक्रम GaṇeP. i. 90. 34; *m.* **1** invincible valour प्रतापरुद्रनृपतेः…अखण्डविक्रमोद्दामो ग्रसते राजमण्डलम् PratāYaBhū. 354. 5; 375. 2; **2** name of the sound *ḍa* डकारोऽखण्डविक्रमः AhirbuS. 17. 18; LakṣmīT. 25. 17; JayāS. 6. 46.

**अखण्डविग्रह** ( akhaṇḍa-vigraha ) *adj.* having an unbroken (i. e. complete, perfect) form जीवत्वं सर्वभूतानां सर्वत्राखण्डविग्रहम्।…जीवाख्यं त्वंपदं भजे S'ukRaU. 258. 29(2. 5)

**अखण्डविधि** ( akhaṇḍa-vidhi ) *m.* uninterrupted performance कौस्तुभाद्याः…अखण्डविधिसाधिताः। निखिलं संप्रयच्छन्ति JayāS. 30. 113.

**अखण्डविधुमण्डल** (akhaṇḍa-vidhumaṇḍala) *adj.* [ *f.* -ā ] associated with the full orb of the moon अखण्डविधुमण्डला भवति विद्युदुद्योतताम् UjjvaNīMa. 176. 5.

**अखण्डविशेष्य** ( akhaṇḍa-viśeṣya ) *n.* indivisible substantive तस्याखण्डविशेष्यमात्रपरताया वक्तव्यत्वात् S'ivārkaMaDī. i. 194. 17 (*on* i. 1. 5)

**अखण्डविशेष्यतात्व** ( akhaṇḍaviśeṣyatā-tva ) *n.* state of having the nature of an indivisible substantive तादृशविशेष्यतात्वादीनामखण्डविशेष्यतात्वादिभ्यः को विशेषः LaCandr. 63. 14.

**अखण्डविषय** ( akhaṇḍa-viṣaya ) *adj.* [ *f.* -ā ] having the indivisible or undifferentiated as the object तस्मादखण्डविषया न वचःप्रवृत्तिः SaṁkṣeS'ā. 1. 100 (i. 90. 17); तस्मादखण्डविषये वचने विवादं प्राभाकराः परिहरन्तु SaṁkṣeS'ā. 1. 273 (i. 208. 20); अवबोधो जातोऽप्यखण्डविषयो ननु वाक्यजन्यः SaṁkṣeS'ā. 2. 1 (ii. 1. 12)

**अखण्डविषयकत्व** ( akhaṇḍaviṣayaka-tva ) *n.* the state of having the undifferentiated as the object शिवमद्वैतमित्यादिश्रुतिजन्यधीस्त्वखण्डविषयकत्वेनैव बाधिका GuruCandr. i. 379. 12.

**अखण्डवृत्त** ( akhaṇḍa-vṛtta ) *adj.* having unblemished conduct or behaviour संपूर्णतपोविधाना अखण्डवृत्ताः परमाश्रयन्ति VarāṅgaC. 10. 20.

**अखण्डवृत्ति** ( akhaṇḍa-vṛtti ) *adj.* **1** of unhindered or unobstructed operation अखण्डवृत्ति धैर्यं परामृशति यो भवतामिदानीम् HarVi. 45. 28; **2** of indivisible or unanalysable significance किमत्राखण्डवृत्तिः शब्दः किं वा यौगिकः NyāSu.(Ja.) 251B. 12 (*on* ii. 1. 2); *f.* **1** undisturbed mental disposition अखण्डवृत्त्यानिशं ब्रह्मानन्दरसं पिब ViveCū. 380; अखण्डवृत्तिरूढेश्वरबोधस्य निवर्तकत्वयोगात S'aṅkaDigVi.( Mā. ) 15. 137; **2** indivisible significance रूढिस्त्वखण्डवृत्तिः NyāySu.(Ja.) 186B. 8 (*on* i. 4. 6)

**अखण्डवैभव** ( akhaṇḍa-vaibhava ) *adj.* of unbroken greatness, of unlimited sway, विलोकयात्मानमखण्डवैभवम् ViveCū. 413; प्राप्तवानहमखण्डवैभवानन्दमात्मपदम् ViveCū. 489.

**अखण्डवैलक्षण्य** ( akhaṇḍa-vailakṣaṇya ) *n.* an indivisible distinguishing feature सर्पज्ञानत्वादेर्जन्यतावच्छेदकत्वे गौरवात्, तदन्यद् अखण्डवैलक्षण्यं विना जन्यताया अवच्छिन्नत्वानुपपत्तिरनुकूलतर्कः LaCandr. 448. 27.

**अखण्डव्यक्ति** ( akhaṇḍa-vyakti ) *f.* unanalysable individual (i. e. oneness that cannot be distinguished) सायुज्यशब्दस्य क्वचिदौपाधिकभेदाभावः क्वचिदखण्डव्यक्तिमात्रमर्थ इति न युक्तम्, नानार्थत्वापत्तेः LaCandr. 895. 40; 675. 33.

**अखण्डव्यतिरिक्तवस्तु** ( akhaṇḍavyatirikta-vastu ) *n.* an object or a thing other than the indivisible or undifferentiated one ( वैशेषिकः ) नाखण्डव्यतिरिक्तवस्तु वदितुं शक्तोऽनवस्थाभयात् SaṁkṣeS'ā. 1. 270 (i. 206. 17)

**अखण्डव्रत** ( akhaṇḍa-vrata ) *n.* uninterrupted vow, a *vrata* without a break (i. e. observed for a certain period on the prescribed *tithis*) इदमाचरतो ब्रह्मन्नखण्डव्रतमाचरेत्। यथा कथंचित्कमलैर्द्वादश द्वादशीर्मुने। कर्तव्याः MatsyaP. 100. 35; BhaviP. 730B. 1 (iv. 35. 53); मासानामधिपः पूज्यश्चाखण्डव्रतहेतवे SkandP. ii.(5). 12. 44.

**अखण्डव्रतता** ( akhaṇḍavrata-tā ) *f.* observance of uninterrupted vows इदमाचरतो राजन्नखण्डव्रतता भवेत् PadmP. v. 20. 39.

**अखण्डशक्ति** ( akhaṇḍa-śakti ) *adj.* of unimpaired efficacy or strength, possessed of unsurpassable or unlimited strength or power मगधराजो मालवेश्वरस्योरसि अशनिम( हेरि?द्रावि )वाखण्डशक्ति शक्तिं परेण रंहसा चिक्षेप AvantiKa. 113. 7; प्रथमं हि मण्डलमखण्डशक्तिभिर्विजिगीषुभिः स्वमभितः प्रसाध्यते NavasāC. 10. 8; तद्देशम्…प्रविशता जवात्। अखण्डशक्तिना तेन बलादग्राहि थक्कनः RājTa.( Ka. ) 6. 231; अखण्डशक्तेरिन्द्रस्य केन स्यात् सह संगरः YogVā. v. 13. 93; *f.* the significatory power of the unanalysed (word) क्लृप्तावयवशक्त्यैवाभिधानोपपत्तौ सत्यामक्लृप्ताखण्डशक्तिकल्पनानुपपत्तेः ĀgaPrā. 75. 6; अखण्डशक्तिमात्रेणैकार्थप्रतिपादकत्वं रूढिः RasGaṅ. 178. 9; संभवत्यक्षरार्थत्वेऽखण्डशक्तिकल्पनस्यान्याय्यत्वात् SetuBa. 270. 16.

**अखण्डशक्तित्रयत्व** ( akhaṇḍaśaktitraya-tva ) *n.* the state of possessing all the three (royal) powers प्रभुरखण्डशक्तित्रयत्वात्…यः समस्तभुवनाश्रयः

EI. xxv. 23. 26; x. 16. 26; ix. 203. 28; v. 203. 32.

**अखण्डशक्तिरूप** ( akhaṇḍaśakti–rūpa ) *adj.* of the form or nature of indivisible potency भावनाश्रयत्वस्यैवाखण्डशक्तिरूपस्यावच्छेदकतायाः प्रागु-क्तत्वेनैतद्गौरवस्य स्वज्ञासनामात्रकल्पितत्वात् VaiyāBhū. 8. 12 ( *on* 2 ); 20. 9 (*on* 2); 99. 8 (*on* 24); 109. 16 (*on* 24); 159. 11 (*on* 31)

**अखण्डशब्द** ( akhaṇḍa–śabda ) *m.* an indivisible or unanalysable word अखण्डशब्दतत्त्ववादे कस्य कुत्र व्युत्पत्तिः TantraRaha. 27. 3.

**अखण्डशब्दता** ( akhaṇḍaśabda–tā ) *f.* the state of being an indivisible or unanalysable word अखण्डशब्दतया च दण्डिन्यायस्यासंभवात् PrakaPañ. 435. 6.

**अखण्डशब्दत्व** ( akhaṇḍaśabda–tva ) *n.* the state of being an indivisible word अनिर्वचनीये रजतशब्दः···नाप्यौपाधिकः । पाचकादिशब्दवत् अखण्ड-शब्दत्वात् उपाधेरनिरूपणाच्च TattvaPradi.(Ci.) 78. 6.

**अखण्डशब्दोक्ति** ( akhaṇḍaśabdokti ) *f.* expression by an indivisible or unanalysable word ततो नाखण्डशब्दोक्तिर्विशेषणविशेष्ययोः NyāyKu. 176. 4.

**अखण्डशरीर** ( akhaṇḍa–śarīra ) *adj.* having a whole ( i. e. undeformed or perfect ) body सा चाखण्डशरीरेण सुरूपेण कलाविदा । यूना च काणकुण्ठाय मत्कुणाय किलार्पिता BṛKathāS'loSaṁ. 22. 197.

**अखण्डशशिन्** ( akhaṇḍa–śaśin ) *m.* the full moon यस्यान[ ने ] शरद-खण्डशशिप्रसन्ने कोपं व्यनक्ति हृदयस्थमरिप्रियाणाम् । सिन्दूरभूषणविवर्जितमास्यपद्मम् EI. i. 129. 23.

**अखण्डशशिबिम्ब** ( akhaṇḍa–śaśibimba ) *n.* the full orb of the moon कनकालुकामुपरि कापि पाणिना दधती···। अतनोदखण्डशशिबिम्बकोटरप्रसरत्सुषुम्णम-परार्कमण्डलम् S'rīKaC. 14. 42.

**अखण्डशशिबिम्बाभ** ( akhaṇḍaśaśibimbābha ) *adj.* resembling the orb of the full moon अखण्डशशिबिम्बाभं गोमुखश्छत्रमग्रहीत् BṛKathāS'loSaṁ. 10. 3.

**अखण्डशासन** ( akhaṇḍa–śāsana ) *adj.* of unimpeded authority, whose order is not disobeyed महाबलोऽपि···आखण्डल इवाखण्डशासनः प्रशशास गाम् TriṣaS'aPuC. i. 1. 280; ii. 6. 128; अखण्डशासने राज्ञि तस्मिन्नाखण्डलोपमे । एकातपत्रैवाभूद्भूः PariPar. 1. 26; नलः···। आखण्डल इवाखण्डशासनः खण्डयन् रिपून् MalliC. 6. 545.

**अखण्डशिखण्डिनीकुल** ( akhaṇḍa–śikhaṇḍinīkula ) *n.* whole flock of pea-hens प्यधित शैलमखण्डशिखण्डिनीकुलमुदेऽलमुदेत्य घनागमः Kapphiṇā. 8. 24.

**अखण्डशिरस्** ( akhaṇḍa–śiras ) *n.* the whole head कपालग्रहणं चाखण्ड-शिरोवारणार्थम् BālaKrī. ii. 93. 26 (*on* 3. 237 (243) )

**अखण्डशीतांशुमण्डल** ( akhaṇḍa–śītāṁśumaṇḍala ) *n.* the full orb of the moon जयत्यखण्डशीतांशुमण्डलद्युतितस्करी । ···रण्डा NarmaMā. 3. 22.

**अखण्डशील** ( akhaṇḍa–śīla ) *adj.* [ *f.* –ā ] of unblemished or unsullied character ये सत्त्वा मम शासने ब्रह्मचर्यं चरेयुस्ते सर्वे अखण्डशीलाः स्युः GiMs. i. 4. 11; इत्युक्त्वा स मुनिः प्रायाद् गृहीत्वा निजकन्यकाम् । अखण्डशीलां स्वावासम् SkandP. i(2). 9. 57; vi. 54. 31; यद्यप्यखण्डशीला सा तथापि कृतमेतया SamarāSaṁ. 3. 118; तस्यामखण्डशीलायां व्यतीतायां श्रीपुञ्जराजा···प्रासादमकारयत् PrabaCin. 110. 29.

**अखण्डशीलालंकार** ( akhaṇḍaśīlālaṅkāra ) *adj.* [ *f.* –ā ] possessing ornament in the form of unviolated conduct अखण्डशीलालंकारा···महासती । राजन् द्वादशवर्षान्ते मिलिष्यति तव प्रिया MalliC. 2. 340.

**अखण्डश्री** ( akhaṇḍa–śrī ) *f.* eternal prosperity श्रीमद्भानुमुनीश्व[रो] विजयते···श्रीमूलामलसंघनीरजमहार्कोऽश्व( ? °श्व )खण्डश्रियम् व्यात[ न्व ]न् EI. xx. 92. 8.

**अखण्डषट्खण्ड** ( akhaṇḍa–ṣaṭkhaṇḍa ) *adj.* with all the six divisions or parts ( i. e. the entire earth ) अखण्डषट्खण्डमहीमण्डलाखण्डलस्य च । ··· पुत्रोऽसि भरतेशितुः TriṣaS'aPuC. i. 6. 9.

**अखण्डषाड्गुण्यपथ** ( akhaṇḍaṣāḍguṇya–patha ) *m.* the way of the use of all the six royal policies अखण्डषाड्गुण्यपथेषु विद्वान् वसन्त एको रसपार्थिवस्य S'rīKaC. 6. 4.

**अखण्डसच्चिदानन्द** ( akhaṇḍa–saccidānanda ) *m.* existence, consciousness and bliss without parts भृगुः···अखण्डसच्चिदानन्दपूर्णाकारोऽभवत् SkandP. iii(1). 20. 34; iii(1). 20. 13; तदेकमेवाखण्डसच्चिदानन्दरूपं ब्रह्मेत्यर्थः AṇuBh. 223. 22 (*on* iii. 3. 19); अखण्डसच्चिदानन्दस्वरूपा परदेवता···ध्यातव्या LalitāTri-Bh. 273. 14 (*on* 9); 355. 17 (*on* 59)

**अखण्डसत्** ( akhaṇḍa–sat ) *n.* the impartite existential entity अखण्डस-देव सदेवेत्यादेरर्थः GuruCandr. ii. 262. 8; ii. 261. 4; LaCandr. 524. 23; 524. 24.

**अखण्डसत्त्व** ( akhaṇḍa–sattva ) *adj.* possessed of perfect nobility or courage त्वया त्वखण्डसत्त्वेन परार्थे प्राणदायिना । विजित्य मामिमं धर्मं प्राप्तैवाद्य मुनीन्द्रता KathāSaSāg. xii. 5. 147.

**अखण्डसत्स्वरूप** ( akhaṇḍasat–svarūpa ) *n.* the nature of the indivisible existential entity आत्मा वा इदमित्यादिवाक्यस्य तद्भाष्योक्तरीत्या अखण्डसत्स्व-रूपमात्रप्रतिपादकत्वम्···न विवक्षितम् GuruCandr. i. 49. 3.

**अखण्डसंतति** ( akhaṇḍa–santati ) *adj.* having unbroken or continuous line ( of disciples ) प्रौढावदाततोऽयं तु प्राप्तोऽप्याह्वां नवां नवाम् । श्रीसुधर्म-गणाधीशादारभ्याखण्डसंततिः Gurvā. 463.

**अखण्डसर** ( akhaṇḍa–sara ) *n.* name of a sacred bathing place स्नात्वा-खण्डसरे व्यास दृष्ट्वा देवं महेश्वरम् । सद्यः पुण्यवतां लोकान्प्राप्तो वै द्विजसत्तमः SkandP. v(1). 68. 34.

**अखण्डसरस्** ( akhaṇḍa–saras ) *n.* name of a sacred bathing place तत्तीर्थस्योत्तरे भागे सुतीर्थम्··· । नाम्नाखण्डसरः ख्यातम् SkandP. v(1). 68. 32.

**अखण्डसाक्षात्कार** ( akhaṇḍa–sākṣātkāra ) *m.* realization of the impartite i. e. Brahman सगुणोपासकानामखण्डसाक्षात्काराभावात् नाविद्यानिवृत्तिः SiddhāLeSaṁ. 451. 1.

**अखण्डसामर्थ्य** ( akhaṇḍa–sāmarthya ) *n.* invincible strength, unimpaired power सामर्थ्येऽखण्डसामर्थ्ये सतते ज्ञानवीर्यता S'ivDṛ. 7. 64.

**अखण्डसार** ( akhaṇḍa–sāra ) *adj.* with never-failing power or strength अखण्डसारपौगण्डलीलयोद्दण्ड···गोविन्द···मां सदा हन्त पालय StavMā. 127. 27.

**अखण्डसिक्थ** ( akhaṇḍa–siktha ) *m. n.* boiled whole rice-grain अखण्डसिक्थसंपादितम्···वायसेभ्यो दध्योदनबलिमदात् Kād. 64. 15.

[1]**अखण्डसिद्धि** ( akhaṇḍa–siddhi ) *f.* unbroken or complete accomplishment ( of the desired object ) भक्तिश्रद्धासमोपेता सत्क्रिया···। अखण्डसिद्धये तस्या ह्युपायः कथितस्त्वया PauṣkS. 30. 134 = PāraS. 12. 372.

[2]**अखण्डसिद्धि** ( akhaṇḍa–siddhi ) *f.* the establishment or determination of the unqualified entity वाच्यार्थवैशिष्ट्यस्याखण्डसिद्धावुपायत्वात् न तद्विरोधिता AdvaiSi. 676. 15.

**अखण्डसुख** (akhaṇḍa–sukha) *n.* **i** perpetual or infinite bliss मय्यखण्ड-सुखाम्भोधौ बहुधा विश्ववीचयः । उत्पद्यन्ते विलीयन्ते मायामारुतविभ्रमात् KuṇḍiU. 14 = ViveCū. 498; ईश्वरस्याखण्डसुखानुभवत्वादेतादृशद्वितीयाभावात् प्रतिमोपमा नास्ति S'vetāUBh. 198. 15 (*on* 4. 19); ViveCū. 299; 505; **ii** continuous joy अखण्डसुखरूपत्वेऽप्येषामस्ति···। रसे सुगहनास्वादविशेषः BhaktiRaSi. ii. 5. 104; **iii** continuous sensual pleasure तया (करेणुकया) सह···। अखण्डसुखसंभोगश्रि-क्रीड स गजाग्रणीः PārśvC. 1. 727.

**अखण्डसुन्दरवपुस्** ( akhaṇḍasundara–vapus ) *adj.* possessed of a perfectly charming or beautiful form आनन्दोऽयमखण्डसुन्दरवपुर्मूढस्य संसारिणः प्रच्छन्नो वसति स AmṛUda. 5. 10.

**अखण्डसौभाग्य** (akhaṇḍa–saubhāgya) *n.* continuous or undisrupted good fortune क्षितीन्द्रः···अखण्डसौभाग्यविलासया पुनस्तया समं राज्यसुखेष्वरज्यत VikraDeC. 2. 56.

**अखण्डस्नेहनिर्मित** (a–khaṇḍasnehanirmita) *adj.* not prepared with sugarcandy and oil or clarified butter त्यजेत्पर्युषितं सर्वमखण्डस्नेहवर्जितम् ( v. l. अखण्डस्नेहनिर्मितम् ) SkandP. iv. 40. 16.

**अखण्डस्नेहवर्जित** ( akhaṇḍa–snehavarjita ) *adj.* totally devoid of oil त्यजेत्पर्युषितं सर्वमखण्डस्नेहवर्जितम् SkandP. iv. 40. 16 ( comm. निःशेषस्नेह-रहितमित्यर्थः )

**अखण्डस्फुटित** ( a–khaṇḍasphuṭita ) *adj.* not broken or split open, perfectly whole अखण्डस्फुटितैश्चोक्षाक्षतैः पुञ्जत्रयं नराः । पुरो जिनस्य कुर्वाणाः प्राप्नुवन्त्यक्षतं सुखम् PārśvC. 7. 370.

**अखण्डस्फोट** ( akhaṇḍa–sphoṭa ) *m.* indivisible *sphoṭa* ( cf. **स्फोट** ) तथा च प्रत्यक्षाद्वाचकत्वान्यथानुपपत्त्या तदेवेदं पदं तदेवेदं वाक्यमिति प्रतीत्या चाखण्डस्फोटः सिध्यति VaiyāBhū. 249. 24 (*on* 66); 249. 1 (*on* 65)

**अखण्डस्मृति** ( akhaṇḍa–smṛti ) *f.* continuous or unbroken recollection उक्ता भागवती भक्तिरखण्डस्मृतिलक्षणा BṛBrahmaS. iv. 7. 31.

**अखण्डस्वरूप** ( akhaṇḍa–svarūpa ) *n.* the undivided form किंचिज्ज्ञत्व-सर्वज्ञत्वादिविरुद्धांशप्रहाणेनाखण्डस्वरूपं लक्ष्यते SarvaDaSaṁ. 4. 133; अखण्ड-स्वरूपस्य बोधो विरोधिविषयताशालिद्वितीयबोधात्मको न संभवति GuruCandr. ii. 259. 12.

**अखण्डस्वरूपानन्द** ( akhaṇḍa–svarūpānanda ) *m.* the indivisible bliss of the nature of itself i. e. Brahman नाद्यः । अखण्डस्वरूपानन्दे तद-योगात् Nyāyāmṛ. 499A. 12; AdvaiSi. 750. 16.

**अखण्डहेमदण्ड** ( akhaṇḍa–hemadaṇḍa ) *m.* whole or single ( i. e. without joint ) staff of gold स चकार परं सितातपत्रे क्षितिजम्भारिरखण्डहेम-

**अखिलनृपचक्र** ( akhilanṛpa-cakra ) *n.* the circle or group of all kings अखिलनृपचक्रचूडारत्नमस्याः पतिः…भविष्यति TilaMañ. 169. 21.

**अखिलनृपति** ( akhila-nṛpati ) *m.* all the kings विवृतोरुबाहुपरिघेण … हन्तुमखिलनृपतीन् वसुना…विचस्खले S'iśuVa. 15. 57; स च…क्षणात् सुषुवेतमामखिलनृपतिश्लाघ्यं पुण्यं यशश्च फलद्वयम् PāṇḍaC. 14. 331.

**अखिलनृपसुख** ( akhila-nṛpasukha ) *n.* all the royal pleasures ऐक्ष्वाकोऽहं विरक्तोऽस्म्यखिलनृपसुखे Nāräy. x. 77. 11.

**अखिलनौसाधनाध्यक्ष** ( akhilanausādhanādhyakṣa ) *m.* chief of the whole fleet ( नाविकयुवानमद्राक्षम् ) अखिलनौसाधनाध्यक्षम् … अमात्यमुद्दिश्य 'कोऽयम्' इत्यपृच्छम् TilaMañ. 126. 17.

**अखिलपक्ष** ( akhila-pakṣa ) *m.* all the alternatives ( अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता ) अस्याम् ( =व्याप्तिसंज्ञके अलंकारे ) अखिलपक्षेषु सम्भवासम्भवस्थितिः AlaṅkāRa. 77(33)

**अखिलपण्डित** ( akhila-paṇḍita ) *m.* one learned in all subjects or *śāstras* व्यवहारे यथैवाज्ञस्तथैवाखिलपण्डितः। वासनामात्रमेदोऽत्र YogVā. iv. 15. 37.

**अखिलपण्यजीविन्** ( akhila-paṇyajīvin ) *m.* all merchants or traders भूपोपजीवाखिलपण्यजीविहास्यज्ञशिल्पाखिललेखकानाम् । पीडाप्रदो देवपतिश्च राहुः VasiS. 9. 44.

**अखिलपति** ( akhila-pati ) *m.* lord of all ( an epithet of S'iva ) संघातं चारु जङ्घायुगमखिलपतेरंहसां संहरेत्नः S'ivPāKeSt. 18.

**अखिलपत्तन** ( akhila-pattana ) *n.* the entire city अमारिघोषणां चापि घोषताखिलपत्तने NemiC. 7. 8.

[1]**अखिलपद** ( akhila-pada ) *adj.* that which produces a square root in an integer(?) लिप्ताशेषः कुजस्य…सप्ताभ्यस्तः सरूपः पुनरखिलपदो वर्गराशिः स एव LaBhāska. 8. 18.

[2]**अखिलपद** ( akhila-pada ) *n.* **1** all the words यश्च कार्यपरतामेवाखिलपदानामातिष्ठते ĀgaPrā. 34. 20; **2** all places, every place भजदनवस्थितिमखिलपदे सखि सपदि…तव हृदयं स्फुरति StavMā. 264. 25 ( comm. प्रासादे शय्यासनादौ च सर्वस्मिन् स्थाने ); **3** the word *akhila* अत्र सर्वाखिलपदाभ्यां कर्मशब्दवाच्यापूर्वमात्रस्य ज्ञाने समासिदर्शिता AdvaiSi. 502. 4.

**अखिलपदगत** ( akhilapada-gata ) *adj.* [ *f.* -ā ] taking place or occurring in all the words ( in a sentence ) अखिलपदगता लक्षणैवात्र लाभः TattvMu. 4. 99.

**अखिलपदाभिधेय** ( akhilapadābhidheya ) *adj.* to be denoted or expressed by all the words ( of a sentence ) अनेनैव न्यायेनैकमेव पदमखिलपदाभिधेयार्थवाचि संपन्नम् NyāyMañ. i. 365. 16.

**अखिलपदार्थ** ( akhila-padārtha ) *m.* all entities, all created things, all products लभन्ते।…अखिलपदार्थेषु भिन्नेष्वभिन्नं निर्मूलं विश्वमूलं परममहमिति त्वद्विबोधं विशुद्धम् Nāräy. xi. 96. 3.

**अखिलपदार्थपद्धति** ( akhilapadārtha-paddhati ) *f.* the series or group of all entities ( namely the knower and the object to be known, *mātṛ* and *meya* ) लघुमसृणसिताच्छशीतलं भवदावेशवशेन भावयन्। वपुरखिलपदार्थपद्धतेर्व्यवहारानतिवर्तयेय तान् Stotrā. 8. 6.

**अखिलपदार्थव्यवस्था** ( akhilapadārtha-vyavasthā ) *f.* establishment of all the entities ( *padārthas* ) ( in the Nyāya-darśana ) तदखिलपदार्थव्यवस्था विसंष्ठुलीभावभयादपि नाभावाभ्यु( ? भ्युप )गमो युक्तः NyāyMañ. i. 53. 3.

**अखिलपरजन** ( akhila-parajana ) *m.* all the strangers लक्ष्मीं प्राप्याप्यनर्घ्यामखिलपरजनप्रीतिपुष्टिप्रदात्रीं कान्ताम्…चिन्तयस्यार्तचित्तः SubhāRaSaṁ. 404.

**अखिलपरमानन्दद** ( akhilaparamānanda-da ) *adj.* giving highest bliss to all मदीयमतमखिलपरमानन्ददम् S'aṅkaVi.( Ā. ) 226. 3.

**अखिलपरिचित** ( akhila-paricita ) *adj.* known to all अखिलपरिचितम् …चैतन्यमेवात्मेति शैवशास्त्रोक्तं स्वरूपं ध्वनितम् LalitāSaBh. 42. 24 ( *on* 75 )

**अखिलपरिणाम** ( akhila-pariṇāma ) *m.* the entire modification ( all modified objects ) तदेवमादिसर्गमारभ्यात्यन्तिकलयपर्यन्तोऽखिलपरिणामः प्रधानतद्विकाराणामेव SāṁkhyaPraBh. 106. 31 ( *on* 3. 74 )

**अखिलपरिणामिन्** ( akhilapariṇām-in ) *adj.* everything that is subject to modification ( all modified objects ) तथावस्थामिरपि बाधोऽखिलपरिणामिनां कालादिष्विर्यथः SāṁkhyaPraBh. 128. 24 ( *on* 5. 56 )

**अखिलपरिताप** ( akhila-paritāpa ) *m.* all miseries, all troubles भवद्भक्तिस्तावत् प्रमुखमधुरा त्वद्गुणरसात् किमप्यारूढा चेदखिलपरितापप्रशमनी Nāräy. i. 3. 6.

**अखिलपरित्याग** ( akhila-parityāga ) *m.* renunciation of everything श्रेयसी बुद्धिरावृत्तेस्ततो ध्यानं वरं मतम्। ततोऽखिलपरित्यागस्ततः शान्तिर्गरीयसी GaṇeP. ii. 146. 14.

**अखिलपरिपूर्ण** ( akhila-paripūrṇa ) *adj.* fully complete, completely perfect कदाचित् … अखिलपरिपूर्णस्यादिनारायणस्य स्वेच्छानुसारेणोन्मेषो जायते TripāMaNāU. 361. 25(2)

**अखिलपरिमल** ( akhila-parimala ) *m.* all ( sorts of ) fragrance अयि बत गुरुगर्वं मा स्म कस्तूरि यासीरखिलपरिमलानां मौलिना सौरभेण BhāmiVi. App. 6. 14 = RasGaṅ. 690. 9.

**अखिलपर्यनुयोग** ( akhila-paryanuyoga ) *m.* all objections माहेन्द्रजालनिर्मितगुरुविशेषवत्तस्यावस्तुत्वेनाखिलपर्यनुयोगायोग्यत्वात् NyāyMa. 331. 11.

**अखिलपर्वयुज्** ( akhilaparva-yuj ) *adj.* associated with or comprising all the stages गतिरियमभिदाखिलपर्वयुक् NayaMañ. IV. iii. 1. 2.

**अखिलपातालवासिन्** ( akhila-pātālavāsin ) *adj.* all the inhabitants of *pātāla* ( nether-world ) ( जम्भेन ) तेनाप्यखिलपातालवासिनः पन्नगा हताः MārkP. 135. 31.

**अखिलपाप** ( akhila-pāpa ) *n.* all sins यः स्मरति…( सः ) अव्याहताखिलेन्द्रियश्चाखिलपापमोक्षमवाप्नोति ViṣṇuP. iv. 13. 162; कृतस्याखिलपापस्य…। प्रायश्चित्तमिदं प्रोक्तम् BrahmāṇḍP. iii. 7. 75; न हि भगवन्नघटितमिदं त्वद्दर्शनान्नृणामखिलपापक्षयः GopāKeCan. 46. 21; ( काश्याम् ) प्रवेशात्त्वखिलपापनाश एव TristhaSe. 99. 3; अतश्चैतद्वाक्यं संकीर्तनस्याखिलपापविध्वंसकत्वं प्रतिपादयति ViraMi.( Bhakti. ) 52. 17.

**अखिलपाप्मन्** ( akhila-pāpman ) *m.* all sins संरक्ष्याप्नुहि सत्कीर्तिं क्षयं चाखिलपाप्मनः SkandP. i(2). 9. 18.

**अखिलपार्थिव** ( akhila-pārthiva ) *m.* all kings प्रतारकस्याखिलपार्थिवानां संतर्जनायेव मनोभवस्य ( आविर्बभूवाथ पतिंवरा सा ) VikraDeC. 9. 54.

**अखिलपार्श्ववर्तिन्** ( akhila-pārśvavartin ) *adj.* all those who were by the side ( in the vicinity ) नादेन तेनाखिलपार्श्ववर्तिनो मूर्छाकुलाः पतितास्त्वाजमीढ MahāBhā. viii. 932*(3)

**अखिलपालक** ( akhila-pālaka ) *m.* name of Viṣṇu ( protector or guardian of all ) नमो नमस्तेऽखिलपालकाय SkandP. ii(1). 20. 75 = BṛNāraP. 11. 71.

**अखिलपावन** ( akhila-pāvana ) *m.* name of Viṣṇu ( purifier of everything ) नमो नमस्तेऽखिलपालकाय ( v. l. °पावनाय ) BṛNāraP. 11. 71.

**अखिलपितृदिन** ( akhila-pitṛdina ) *n.* all the days sacred to the deceased ancestors प्रतिवर्षमखिलपितृदिनेषु सावत्सादिषु( ? ) तदुपासनमेवास्माभिरादरात् कृतम् S'aṅkaVi.( Ā. ) 220. 7.

**अखिलपुनर्भू** ( akhila-punarbhū ) *f.* all the remarried widows अखिलपुनर्भूविवाहकृतकशिपुचेतनसंबन्धः … आगतः शङ्खनकनामा प्रणिधिः YaśasCam. i. 399. 5 ( comm. पुनर्भूणां पुंश्चलीनां संग्रहस्त्रीविधवानाम् )

**अखिलपुर** ( akhila-pura ) *n.* all towns or cities जम्बूद्वीपान्तस्थो मेरुः सौम्येऽखिलपुरेभ्यः ĀryaSi. 16. 13(187)

**अखिलपुरपुरन्ध्री** ( akhila-purapurandhrī ) *f.* all the women of the city निषधनृपमुखेन्दुश्रीसुधाम्…। पपुः …अखिलपुरपुरन्ध्रीनेत्रनीलोत्पलानि NaiṣC. 16. 128.

**अखिलपुरुष** ( akhila-puruṣa ) *m.* all persons एकैकपुरुषमुक्तावतीतानन्तकल्पेष्वखिलपुरुषमुक्तेरद्यतनः संसारो न कस्यचित् स्यात् NyāyMa. 332. 13.

**अखिलपुरुषार्थ** ( akhila-puruṣārtha ) *m.* all the objects of human pursuit पशुपतिः। पुनस्त्वनिर्बन्धादखिलपुरुषार्थैकघटनास्वतन्त्रं ते तन्त्रं क्षितितलमवातीतरदिदम् SaundL. 31; मया … । हृदिस्थोऽपि श्रीमानखिलपुरुषार्थैकनिलयो दयोदारः स्वामी न च गरुडगामी परिचितः PadyāTa. 13; न…तादृशतपश्चरणाद्दृतेऽखिलपुरुषार्थसाधनम्…चन्द्रकलावतंसस्य निरन्तरध्यानं संभाव्यते Jivān. 151. 13; तस्याखिलपुरुषार्थप्रदत्वमुक्तम् LalitāSaBh. 59. 21 ( *on* 93 )

**अखिलपूजा** ( akhila-pūjā ) *f.* entire worship ( i. e. all the details of the worship ) श्रद्धानिश्छद्मभक्तिभ्यामर्पितेनाम्बुनापि सः। प्रीतस्तुष्यति विश्वात्मा किमुताखिलपूजया SkandP. ii(9). 26. 36.

**अखिलपूरुषोत्तम** ( akhilapūruṣottama ) *m.* the highest of all beings ( Viṣṇu ) अथाभजे त्वाखिलपूरुषोत्तमम् BhāgP. iv. 20. 27.

**अखिलपूर्वज** ( akhila-pūrvaja ) *m.* **i** all the ancestors इष्टे गृहसमायाते …यज्वनि…हृष्यन्त्यखिलपूर्वजाः PrajāSm. 33; **ii** ( akhilapūrva-ja ) who was born before all, the predecessor of all त्वं नाभिकमले विष्णोः संजातोऽखिलपूर्वजः BrahmP. 70. 32.

**अखिलपृथ्वी** ( akhila-pṛthvī ) *f.* the entire earth शुकहरितनितम्बं पश्य…अखिलपृथ्वीमाल्यवन्माल्यवन्तम् BālRā. 10. 51 = SūktiMu. 103. 24.

**अखिलपृथ्वीपति** ( akhilapṛthvī-pati ) *m.* the lord of the entire earth सार्वभौमस्तु दिङ्नागेऽखिलपृथ्वीपतावपि S'abdaRaSaK. 231. 9.

**अखिलपौरजन** ( akhila-paurajana ) *m.* all the urban people, city-

folk करिणि मदालसे स्फुरति…अखिलपौरजनः। पतति S'ṛṅgāSar. 144.

**अखिलप्रख्यात** (akhila-prakhyāta) *adj.* well-known or famous throughout the world श्रीमत्काकतिवीररुद्रम्…अखिलप्रख्यातशौर्योदयम्।…स्तोतुं वयं नेश्महे PratāYaBhū. 323. 9.

**अखिलप्रजा** (akhila-prajā) *f.* all subjects, all people (मदिरावती) अखिलप्रजाप्रमोदेनाद्वितीयरूपमजनयत्तनयम् TilaMañ. 76. 2; आह्लादकारिण्यखिलप्रजानां जैवातृके जग्मुषि गर्भसीमाम्।…अवाप सा रूपम् YātrāPra. 2. 3.

**अखिलप्रज्ञ** (akhila-prajña) *adj.* all-knowing, omniscient अखिलप्रज्ञोऽनादिगुरुः स ईश्वरः Jīvān. 450. 3.

**अखिलप्रद** (akhila-prada) *adj.* bestower of everything ब्रह्मभूतोऽखिलप्रदः GaṇeP. ii. 82. 6; भिक्षो धनार्थिस्त्वयि चेत्प्रसन्नोऽखिलप्रदो माधवभूमिपालः। तत्किं कुबेरेण AlaṅkāMañ. 16. 9.

**अखिलप्रपञ्च** (akhila-prapañca) *m.* the whole phenomenal world, all phenomenal existence, the whole world of phenomenal existence अखिलप्रपञ्चजन्मादिहेतुतया…ब्रह्म लक्षितम् PañcaPā. 40. 14 (*on* i. 1. 1); तथा चाखिलप्रपञ्चस्यैवाविद्यात्वे सत्येकस्य ज्ञानेनाविद्यानाशादन्यैरपि प्रपञ्चो न दृश्येतेति भावः SāṁkhyaPraBh. 120. 27 (*on* 5. 18); अखिलप्रपञ्चात्पुरुषस्य विवेकोऽनुभूयत इति यावत् YogSā. 55. 1(3)

**अखिलप्रपञ्चरूप** (akhila-prapañcarūpa) *n.* all phenomenal forms अखिलप्रपञ्चरूपातिरिक्तः…पुरुषो यो दृश्यते…। स एवात्मा BālaKrī. ii. 46. 20 (*on* 3. 120)

**अखिलप्रपञ्चविलय** (akhilaprapañca-vilaya) *m.* destruction of the whole phenomenal existence यः स्वात्मन्यखिलप्रपञ्चविलये संभावितः शंभुना सोऽयम्…लम्बोदरः पातु नः Rāṣṭrau. 1. 1.

**अखिलप्रपञ्चविवेक** (akhilaprapañca-viveka) *m.* distinction or differentiation from the whole world of phenomena (पुरुषस्य) परिपूर्णत्वादिरूपैरखिलप्रपञ्चविवेकेन च तत्साक्षात्कारस्य सिद्धिरूपस्य भिन्नत्वात् YogSā. 55. 10(3)

**अखिलप्रभाव** (akhila-prabhāva) *adj.* [*f.* -ā] all-powerful, having power over all त्वं शक्तिरेव जगतामखिलप्रभावा DevīBhāP. i. 7. 42.

**अखिलप्रभु** (akhila-prabhu) *m.* the lord of all रामो नारायणः साक्षादवतीर्णोऽखिलप्रभुः AdhyāRā. iv. 2. 35.

**अखिलप्रमाण** (akhila-pramāṇa) *n.* **i** all measurements, all dimensions रूपकर्मस्वरूपाणि न परिच्छेदगोचरे। यस्याखिलप्रमाणानि स विष्णुर्गर्भगस्तव ViṣṇuP. v. 2. 19; **ii** all means of valid knowledge अखिलप्रमाणागोचरं ब्रह्म TripāMaNāU. 359. 12(1); 374. 12(7); अखिलप्रमाणातीतम्…परमानन्दलक्षणापरिच्छिन्नानन्तज्योतिः…विभाति SiddhāSāU. 387. 21(6); एवं चेदखिलप्रमाणपदवीः षोढा विभिन्ना भवानुल्लङ्घ्य व्यवतिष्ठते SaṁkṣeS'ā. 1. 240 (i. 184. 17); वेदोऽपि… अखिलप्रमाणसार्वभौमः BrahmSūBh.(S'rī.) ii. 2. 3 (*on* ii. 1. 1); अखिलप्रमाणसाधारणमव्यवहितं फलमुक्तम् PramāMī. 30. 10 (*on* i. 1. 37); अतो निर्मानमखिलप्रमाणप्रतिपक्षगम्। दुर्मतं कोऽनुगृह्णीयात् AnuVyā. 30A. 1 (*on* 2. 2)

**अखिलप्रमेहिन्** (akhilapramеh-in) *adj.* suffering from all kinds of urinary disease प्रमेहरूपाण्यधिगम्य…क्रियां विदध्यादखिलप्रमेहिणाम् KalyāKā. 11. 28.

**अखिलप्रयाणसामग्री** (akhila-prayāṇasāmagrī) *f.* all the materials (i. e. baggage necessary) for journey अखिलप्रयाणसामग्रीसुविधेयं हिरण्यगर्भनामधेयम्…दूतमाक्षपटलिकेन तमेव लेखार्थं श्रावयामास YaśasCam. i. 395. 5.

**अखिलप्रयोग** (akhila-prayoga) *m.* all (kinds of) methods (in sexual intercourse) मरहट्टप्रोद्भवा वनिताः।…रागिण्यश्चाखिलप्रयोगेषु KandaCū. ii. 5. 23.

**अखिलप्रसू** (akhila-prasū) *adj.* who produces everything (i. e. source of everything) श्रीः…अहं शान्ताखिलप्रसूः LakṣmīT. 18. 19.

**अखिलप्राकृतसुख** (akhila-prākṛtasukha) *n.* all kinds of worldly pleasures निजानन्दानुभवतुच्छीकृताखिलप्राकृतसुखान्तरम्…एनं कृतार्थयिष्यामि Jīvān. 461. 7.

**अखिलप्राणभूत** (akhilaprāṇa-bhūta) *adj.* who is the life (i. e. life-force) of all वायोः पुत्रोऽहमखिलप्राणभूतस्य शोभने AdhyāRā. v. 3. 24.

**अखिलप्राणिप्रयाण** (akhilaprāṇi-prayāṇa) *n.* the departure (i. e. death) of all living beings रटन्त्यनवरतमखिलप्राणिप्रयाणप्रकटनपटवः प्रेतपतिपटहाः HarṣaC. 337. 11.

**अखिलप्राणिप्रिय** (akhilaprāṇi-priya) *adj.* beloved of all living beings श्रीकृष्णो भगवानवोचदखिलप्राणिप्रियो मत्प्रभुः VijñāS'. 97.

**अखिलप्रान्त** (akhila-prānta) *m.* the end of all (religious rites) आ वैदिकक्रियाव्याप्तेरन्यत्रापि क्रियामुखः। नाथस्तादखिलप्रान्ते योजयेत्परमे पदे MṛgendraT. ii. 8. 163.

**अखिलप्रामाणिक** (akhila-prāmāṇika) *m.* all those who know the *pramāṇas* i. e. who are the authorities or sources of knowledge श्रीजयसिंहसूरिसुगुरुः…अखिलप्रामाणिकाग्रेसरं सारङ्गं सहसा विरङ्गमतनोत् HammīMaKā. 14. 23.

**अखिलप्रिय** (akhila-priya) *adj.* dear to all, loving all अन्तरात्मनि यः प्रीतः…अखिलप्रियः।…तस्यार्थो नैव विद्यते GaṇeP. ii. 139. 17; कर्पूरशकलैः पूजा सर्वाभीष्टप्रदा भवेत्। पूजितैस्तैस्तु जग्धैः स्यान्नरो यात्यखिलप्रियः TantrRā. 22. 50.

**अखिलप्रियंकर** (akhila-priyaṅkara) *adj.* doing good to all अनायि…स मन्त्रिभिः…उत्तरकोसलान् मुनिः। विनीतवैवैरखिलप्रियंकरः Rāgh. 1. 35.

**अखिलप्रेमास्पद** (akhila-premāspada) *n.* the object of love of all अखिलप्रेमास्पदं चैतन्यमेवात्मेति…ध्वनितम् LalitāSaBh. 42. 24 (*on* 75)

**अखिलफल** (akhila-phala) *n.* all benefits अखिलफलप्रदा। इयमान्वीक्षकी विद्या विद्यास्थानेषु गण्यते NyāyMañ. i. 11. 8; राजसा: अखिलफलभोगसाधकाः PārāSū. 32. 2; प्रस्थितानाम्…अखिलफलविनाशः क्षुत्पिपासार्तभूतैः VasiS. 37. 51.

**अखिलफलकता** (akhilaphalaka-tā) *f.* the state of having all the fruits or objectives अप्राप्तांशस्य पूर्तिः फलमपि यदि तत्राधिकं योजनीयं शेषांशव्यर्थता स्यादखिलफलकताविध्यतिव्यापनं च VidhiRa. 18. (109. 14)

**अखिलबन्ध** (akhila-bandha) *m.* all bonds or bondages उरुक्रमस्याखिलबन्धमुक्तये समाधिनानुस्मर तद्विचेष्टितम् BhāgP. i. 5. 13; मुक्तयेऽखिलबन्धानाम्…। आस्ते नारायणः LakṣmīT. 17. 26; देहेन्द्रियप्राणशरीरसंगतस्त्वात्मेति बुद्ध्वाखिलबन्धभाग्भवेत् AdhyāRā. v. 4. 18; जीवन्मुक्तो नाम…अखिलबन्धरहितो ब्रह्मनिष्ठः VedāntSā.(Sa.) 32. 17.

**अखिलबन्धन** (akhila-bandhana) *n.* all bondages ज्ञात्वा तान्… मोक्ष्यसेऽखिलबन्धनात् GaṇeP. ii. 140. 38.

**अखिलबन्धु** (akhila-bandhu) *m.* all relatives प्राप्तेष्वखिलबन्धुषु। विराटस्तनयां प्रादादुत्तरामभिमन्यवे DaśāvaC. 8. 582; स राजपुत्रोऽखिलबन्धुभृत्यबद्धोत्सवं तं दिवसं निनाय KathāSaSāg. xii. 34. 377.

**अखिलबल** (akhila-bala) *n.* **A** all powers अखिलबलविलयलब्धात्मस्वभावम्…परमात्मानमुपेयुषः…सिद्धपरमेष्ठिनोऽष्टतयीमिष्टिं करोमि YaśasCam. ii. 374. 21; **B** the entire army स ययौ विक्रमादित्यो राजाखिलबलान्वितः KathāSaSāg. vii. 4. 9.

**अखिलबल्लवी** (akhila-ballavī) *f.* all cowherdesses अखिलबल्लवीः पुलकयन्तम्…भजे…केशवम् StavMā. 29. 15.

**अखिलबस्ति** (akhila-basti) *m. f.* all kinds of enema वमनलेपविरेकाभ्यङ्गधूपकवलाखिलबस्तिम्।…प्रारभेत बहुवातविकारे KalyāKā. 12. 11.

**अखिलबाल** (akhila-bāla) *m.* all young ones सततमखिलबालाः कर्मनामान्यगायन्प्रतिभवनममुष्य श्रीपतेरेव तावत् HariVi. 1. 33.

**अखिलबिम्बशुद्धि** (akhilabimba-śuddhi) *f.* sanctification of all idols इतीरितात्राखिलबिम्बशुद्धिः TantrSa. 4. 109.

**अखिलबीजमातृ** (akhilabīja-mātṛ) *f.* the mother of all *bījamantras*, the mother of all causes त्वं कारणस्य जननीति भवानि शक्तिरुक्तात्मवीर्यगतयाखिलबीजमात्रा HarVi. 47. 102.

**अखिलबुद्धि** (akhila-buddhi) *f.* all the intellect (नमस्ते) अखिलबुद्धिदात्रे…। नित्याय सत्याय GaṇeP. i. 61. 43.

**अखिलबुध** (akhila-budha) *m.* all learned men उत्तंसस्तीरभुक्तेरखिलबुधगुरुः श्रीसदानन्दधीमान्…समचिनुत यशोधर्मलक्ष्मीविहारम् ViraMi. 3. 6 (*on* 1. 1)

**अखिलबुधजन** (akhila-budhajana) *m.* all learned persons किं न वर्णयसि…अखिलबुधजनाश्चर्यकारिणीं कुमारस्य काव्यतत्त्वावबोधशक्तिम् TilaMañ. 111. 13.

**अखिलबोधिन्** (akhilabodh-in) *adj.* [*f.* -ī] enlightening all i. e. known to all कथितं प्राड्विवाकादौ सा भाषाखिलबोधिनी S'ukrNī. 4(5). 87.

**अखिलब्रह्मधर्म** (akhila-brahmadharma) *m.* all qualities of Brahman तन्त्रोपासकेनाखिलब्रह्मधर्मोपसंहारः कर्तव्यो न वा AṇuBh. 224. 6 (*on* iii. 3. 20)

**अखिलब्रह्मनिष्ठ** (akhila-brahmaniṣṭha) *adj.* entirely resting in the Supreme Spirit ब्रह्मा त्वमेवाखिलब्रह्मनिष्ठः Gurvā. 247.

**अखिलब्रह्मयन्त्र** (akhila-brahmayantra) *n.* the entire contrivance of the Supreme Spirit त्रियन्तृयन्त्रेऽखिलब्रह्मयन्त्रे नियन्त्रणा यस्य नियन्त्रणास्ते ParamāKā. 9. 61.

**अखिलब्रह्मविद्** (akhila-brahmavid) *m.* all the knowers of Brahman स बिभर्ति नृपः प्रणाय्यतामखिलब्रह्मविदां पुरःसरः Rāgh. 3. 53.

**अखिलब्रह्माण्ड** (akhila-brahmāṇḍa) *n.* the entire universe ते नामाक्षरस्तम्बः … सततमखिलब्रह्माण्डमण्डलोदरविहारलीलाविशृङ्खलेन मया … आकर्णितो बाढम् UdaySuKa. 83. 17; आर्ये, अयमेव तावदखिलब्रह्माण्डमण्डपमहानटः… भगवानिन्दुशेखरः KaṁVa. 1. 10(8)

**अखिलभक्त** ( akhila-bhakta ) *m.* all the devotees अखिलभक्तरक्षणपरं क्षेत्राधिनाथं भजे TripuMāPūSt.(Saṅ.) 83.

**अखिलभक्ष्य** ( akhila-bhakṣya ) *adj.* [ *f.* -ā] for whom everything is food, i. e. all-eating, omnivorous आशीर्वचनादयम् । जीवितोऽखिलभक्ष्याया वालकः GaṇeP. ii. 7. 35.

**अखिलभय** ( akhila-bhaya ) *n.* all fears निःश्रेयसमखिलभयातीतमाप्तुं यतेत NyāyMañ ii. 45. 2.

**अखिलभारत** ( akhila-bhārata ) *n.* the entire Bhāratavarṣa तदेतदतुलपराक्रमचमत्कारिताखिलभारतस्य श्रीधारावर्षस्य पर्षदा प्रहितं पत्रकम् PārthPa. 3(4)

**अखिलभाव** ( akhila-bhāva ) *m.* **A** all entities यदि वाखिलभावानामभेदात्तदतत्त्वतः । अभेदवादाश्रयणं स्यादन्यविधया गिरा BrahmSi. 67. 6; **B** total attachment, complete devotion शिवार्थी जन्तुस्तच्छिवमखिलभावेन भगवन् भवन्तं हित्वान्यं शरणयतु कं न्यायशरणः NīlaVi. 71. 12.

**अखिलभाषण** ( akhila-bhāṣaṇa ) *n.* a complete statement वक्ष्यामि सारतः सर्वं न क्षमोऽखिलभाषणे BṛBrahmaS. iv. 1. 3.

**अखिलभाषा** ( akhila-bhāṣā ) *f.* all the languages °स्फुटार्थपदम् । अभिरामाविश्रान्तं पठितं निरवद्यमखिलभाषासु KuṭṭaMa. 943.

**अखिलभाष्य** ( akhila-bhāṣya ) *n.* a complete or full commentary अथाखिलभाष्यम् । कर्तुमुद्यतमभूद्गुणसिन्धोर्मानसम् SaṅkaDigVi.(Mā.) 6. 53.

**अखिलभीति** ( akhila-bhīti ) *f.* all fears ततः सः⋯धरित्रीम् । सुखं शशासाखिलभीतिमुक्ताम् PadmP.(Ra.) 21. 158; अथ प्रकृतिभीरुरियखिलभीतिभङ्गक्षमान्न जातु भुजमण्डलादवहितो बहिर्भावय RasGaṅ. 618. 16.

**अखिलभुवन** ( akhila-bhuvana ) *n.* **A** the whole universe, the whole world अखिलभुवनकृतचरणनतिं पशुपतिं प्रपन्नोऽन्यदेवताशून्यममन्यत त्रैलोक्यम् HarṣaC. 151. 8; यस्यैतदखिलभुवनावलम्बिभावभेदसाक्षात्कारिप्रत्यक्षं सः⋯भगवानेवं व्याचष्ट ĀgaPrā. 2. 19; विशाम्पतिः⋯अखिलभुवनमर्यादारक्षणोद्यतैरम्बुराशिभिरिव⋯उपेतम्⋯हेमकूटमारुरोह AvantiKa. 99. 7; 101. 18; YaśasCam. ii. 381. 25; NavaSāC. 3. 62; चलितमखिलभुवनप्रकम्पनमकम्पनमाहतप्लवङ्गसङ्घं प्रजङ्घमङ्गदभुजप्रतापानलशलभावुभावपि निशम्य RāmāCam. 6. 66(2); अखिलभुवनमध्यव्यापकं पीतवर्णम् ( शिवम् )...ध्येहि सद्यम् (*sic.*) ĪśānŚiPa. i. 3. 26; i. 20. 19; अखिलभुवनैकभूषणम् ( कृष्णम् )⋯वन्दे KṛṣṇaKa. 1. 90; TīrthaKa. 74. 28; युगपदखिलभुवनेषु अदृष्टद्वारा तत्कार्यसिद्धये विभुत्वकल्पनमयुक्तम् NyāySiA. 213. 29; Nārāy vii. 24. 3; त्रिपुरवैरिणम्⋯अखिलभुवनवन्दनीयचरणारविन्दम्⋯अस्तौषीत् YātrāPra. 3. 64(1); ĀnandRa. 1. 19(4); **B** all the worlds अखिलभुवनख्यातविद्याधरवंशसंभवाहमपुण्यभागिनी⋯विप्रयुक्ता बन्धुभिः TilaMañ. 272. 14; YaśasCam. ii. 384. 22; अखिलभुवनान्तरेभ्यो युगपदागताभिर्भूयसीभिः पुरन्ध्रिभिः⋯पूज्यमानम्⋯अम्बिकाकान्तम्⋯अभ्यर्च्य UdaySuKa. 104. 17.

**अखिलभुवनज्योतिस्** ( akhilabhuvana-jyotis ) *n.* light of the whole universe यदखिलभुवनज्योतिषामेकमोकः⋯दिश्यादीशस्य भासां तदविकलम्⋯मङ्गलं मण्डलं वः SūryŚ. 73.

**अखिलभुवनतल** (akhila-bhuvanatala) *n.* entire surface of the world अखिलभुवनतलावलोकनप्रासाद इव⋯शाल्मलीवृक्षः Kād. 24. 4.

**अखिलभुवनतुङ्ग** ( akhilabhuvana-tuṅga ) *adj.* loftiest in the whole world अखिलभुवनतुङ्गो नेत्रभङ्ग्या विकृष्टः कथमिव सखि राधे कृष्णशैलस्त्वयाभूत् VidaMā. 4. 36.

**अखिलभुवनबन्धु** ( akhilabhuvana-bandhu ) *m.* friend of the whole world or universe अखिलभुवनबन्धो राधिकाप्रेमसिन्धो पतिमिह कुरु दानं मे BrahmaVaiP. iv. 19. 18; MadaKeC. 102.

**अखिलभुवनबोध** ( akhilabhuvana-bodha ) *m.* enlightening the whole world अखिलभुवनबोधं देवदूतस्य वाक्यम्⋯निशम्य PadmP. i. 31. 208.

**अखिलभुवनभिक्षु** ( akhilabhuvana-bhikṣu ) *m.* mendicant begging all the (three) worlds (by way of alms) वामनस्य⋯अखिलभुवनभिक्षोराश्रमानोकहानाम् । ततिरियम् RāmāCam. 1. 46.

**अखिलभुवनमातृ** ( akhilabhuvana-mātṛ ) *f.* mother of the whole universe अखिलभुवनमातुर्नाट्यवद्विचित्रम्⋯प्रकटय भगवत्या नामयुक्तं पुराणम् DeviBhāgP. i 2. 40.

**अखिलभुवनसुन्दर** ( akhilabhuvana-sundara ) *adj.* loveliest in the whole world शचीपतिः, अभिगम्य⋯अखिलभुवनसुन्दरं मन्दरं शैलम्⋯अतिवाहयामास वर्षगणान् NīlaVi. 31. 10.

**अखिलभुवनाद्भुत** ( akhilabhuvanādbhuta ) *n.* the wonder of the whole world अमीषां च पुनरखिलभुवनाद्भुतानां किसलयान्येव कनकांशुकानि NīlaVi. 111. 17.

**अखिलभुवनाधार** ( akhilabhuvanādhāra ) *m.* support of the whole universe स च⋯अखिलभुवनाधारस्य पशुपतेरप्याधारतावलेपादिव पादैराचक्राम शिरांसि पर्वतानाम् NīlaVi. 74. 17.

**अखिलभुवनाश्चर्य** ( akhilabhuvanāścarya ) *adj.* astonishing the whole world कर्तुं वाञ्छन्नखिलभुवनाश्चर्यमस्योपकारं प्रत्यानीते रघुपतिशरैः पुष्पके खेदमाप VikraDeC. 18. 59.

**अखिलभू** ( akhila-bhū ) *f.* the whole earth भरतकुमारः⋯इत एवाभिवर्तते । य एषः⋯आज्ञावशादखिलभूपरिरक्षणस्थः Prati. 6. 6; योगोऽतियोगसंज्ञोऽयं विजयोऽखिलभूप्रदः VasiS. 37. 165.

**अखिलभूगोल** ( akhila-bhūgola ) *m.* the entire terrestrial globe, the entire earth दधौ कण्ठे हालाहलमखिलभूगोलकृपया ĀnandL. 17.

**अखिलभूत** ( akhila-bhūta ) *n.* all the creatures or beings उवाचाखिलभूतानां मध्ये स्पष्टतरं वचः MahāBhā. ii. 363*.1; विषादतोषरोषाद्यैर्योऽजस्रं सुखदुःखजैः । नृत्यत्यखिलभूतस्थस्तमुपेन्द्रं नमाम्यहम् MatsyaP. 244. 29; अखिलभूतभावनस्य मदनजितो नयनभूता( स्था ? स्त्र )यो बभूवुः ⋯ अमात्याः AvantiKa. 175. 11; SkandP. ii(2). 20. 20; GaṇeP. ii. 146. 4; भावविशुद्धिं भावयेदखिलभूतहितार्थाम् ĪśānŚiPa. i. 22. 12; HammīMaKā. 3. 2; VasiS. 6. 88.

**अखिलभूतल** ( akhilabhū-tala ) *n.* the surface of the whole earth त्यागस्य नाथिनो यस्य पर्याप्तिं समुपागताः । ⋯चित्तानि नानुरागस्य जनस्याखिलभूतले PadmP.(Ra.) 2. 67; हेमाद्रिरित्यखिलभूतलगीतकीर्तिस्तस्याथ सूनुरजनिष्ट CaturCin. iii(2). 3. 21.

**अखिलभूपाल** ( akhila-bhūpāla ) *m.* all the kings एषः⋯अखिलभूपालवृन्दवन्दितपादारविन्दयुगलः⋯हरिवाहनो नाम कुमारः TilaMañ. 163. 6; तवाप्यखिलभूपालमनःक्षोभकरं पुनः । तेजो नरेन्द्र BhaviP. 169B. 16 (i. 116. 77); Ekāva. i. 13. 119 (42. 7)

**अखिलभूभुज्** ( akhila-bhūbhuj ) *m.* all the kings पापर्धि( ? र्द्धि )व्यसनान्तानि राज्यान्यखिलभूभुजाम् BrahmP. 108. 23; भरतो जग्रसे⋯राज्यान्यखिलभूभुजाम् TriṣaŚaPuC. i. 5. 491.

**अखिलभूमण्डल** ( akhila-bhūmaṇḍala ) *n.* the whole terrestrial globe अखिलभूमण्डलपतिरतिवीर्यपराक्रमः⋯तवोदरे चक्रवर्ती तिष्ठति ViṣṇuP. iv. 3. 32; iv. 15. 10; अखिलभूमण्डलविश्रुतैः⋯विद्यारण्यनामभिराचार्यवर्यैः ĀnandRa. 1. 45(4)

**अखिलभूमिप** ( akhila-bhūmipa ) *m.* all the kings दुर्मत्यब्दे दुर्मतयो भवन्त्यखिलभूमिपाः NāraS. 3. 71.

**अखिलभूमिपाल** ( akhila-bhūmipāla ) *m.* all the kings अवाद्यतेवाखिलभूमिपालसौभाग्यलीलाजयडिण्डिमोऽस्य VikraDeC. 9. 148.

**अखिलभूरुह्** ( akhila-bhūruh ) *m.* all the trees वनवह्निर्वनोत्सङ्गे दहन्नखिलभूरुहः PāṇḍaC. 12. 85.

**अखिलभूषण** ( akhila-bhūṣaṇa ) *n.* all the ornaments यात्राविवाहाखिलभूषणं यत्कार्यं द्वितीयादितिथौ सदैव VasiS. 12. 6; स्त्रीरत्नचर्याखिलभूषणानि कार्याणि कर्माणि महेशतिथ्याम् VasiS. 12. 12; 12. 17; अखिलभूषणाढ्यः स प्रापदक्षततनुः पृथु शोणतीरम् SaṅkaDigVi.(Mā.) 3. 48.

**अखिलभेद** ( akhila-bheda ) *m.* all the differences, all the different entities or categories एतच्च सामान्यलक्षणमखिलभेदसंग्रहक्षमं भवति न भवदुक्तम् NyāyMañ. ii. 191. 30; अप्रामाणिकत्वादखिलभेदर्शनस्य NyāyMa. 327. 9; एकमेवाज्ञानमखिलभेदप्रतिभाननिदानम् TarkSaṁ.(Ā.) 140. 4; यच्च परमब्रह्मविवर्तवर्तित्वमखिलभेदानामित्युक्तम् SyādvāMañ. 13(144); अखिलभेदप्रतिभासरहितमखण्डं ब्रह्मावतिष्ठते VedāntSā.(Sa.) 34. 9.

**अखिलभेषज** ( akhila-bheṣaja ) *n.* the dried ginger ( panacea) cf. **विश्वभेषज** कटुत्रिकोष्णाखिलभेषजान्यपि । प्रपाचनान्यामविलायनानि KalyāKā. 11. 45.

**अखिलभैरव** ( akhila-bhairava ) *adj.* terrifying to all, formidable or dreadful to all नमः⋯श्रीभैरवायाखिलभैरवाय VīraBhā. 1. 3.

**अखिलभोक्तृ** ( akhila-bhoktṛ ) *m.* all the experiencers (i. e. Puruṣas or individual souls) अखिलभोक्तृसंयोगादेव प्रधानेन महदादिसर्जनात् SāṁkhyaPraBh. 118. 28 (*on* 5. 9)

**अखिलभोग** ( akhila-bhoga ) *m.* **A** all the enjoyments (i. e. objects of enjoyment) राजपुत्रः⋯। यौवनेऽखिलभोगाढ्यो दर्शनीयोज्ज्वलाकृतिः ViṣṇuP. i. 12. 84; कीर्तिसेना⋯। न्यवसदखिलभोगैश्वर्यभागान्तिकस्था KathāSaSāg. vi. 3. 195; **B** the whole experience अखण्डप्रागभावस्यैवाखिलभोगहेतुत्वादिति SāṁkhyaPraBh. 163. 18 (*on* 6. 68)

**अखिलभ्रान्ति** ( akhila-bhrānti ) *f.* total illusion अहंकाराख्यविक्षेपः⋯। मूलभूतोऽखिलभ्रान्तेर्विभ्राणो दुःखसंगतिम् SarvaSiSaṁ. 12. 39.

**अखिलम्** ( a-khilam ) *adv.* completely, entirely, in its entirety तस्मै सः ⋯ब्रह्मास्त्रम्⋯। प्रोवाचाखिलम् MahāBhā. xii. 3. 2; एतद्धि मत्तोऽधिजगे सर्वमेषोऽखिलं मुनिः ( शास्त्रम् )ManuSm. 1. 59; नाद्याप्यस्या नियतमखिलं शाम्यति विषम् PriyDa. 4. 10; देवम्⋯अवलोक्याखिलं तु तम् PāraS. 6. 10; यद्यत्र ज्ञानं गुह्यं भवेत्

कचित् । तदप्यखिलमाचक्ष्व ParaS. 30. 3; 31. 21; 31. 53; य: परमेश्वरत्वमखिलं लेभो( ? मे ) EI. iii. 107. 34; ParāTri. 280. 5; स एतदखिलं वेत्ति BṛNāraP. 1. 17; उज्जयन्तस्य…प्रमाणमन्यदप्यस्य हर्म्यस्येवाखिलं भवेत् SamarāSū. 59. 222; शृणु पुत्र कथामेकां तदर्थं हृदयेऽखिलम् । … अवधार्य YogVā. i. 1. 18; इत्थं ग्रामपुरादिमानमखिलम् प्रोक्तम् ĪśānS'iPa. ii. 25. 85; UdaySuKa. 115. 29; महिमा तवेह बुद्धो न देवगुरुणा…। तं कोऽवगन्तुमखिलं जडिमालयोऽहम् MahāViSt.( J. ) 2; अज्ञानासम्भवादेव तन्मतमखिलमपाकृतम् MāyāKha. 2A. 11; CampaS'reKa. 250.

**अखिलमङ्गल** ( akhila-maṅgala ) *n.* all auspicious things or deeds वास्तुव्रतप्रतिष्ठाखिलमङ्गलानि ।…द्वितीयादितिथौ VasiS. 12. 6; गृहप्रवेशाखिलमङ्गलाद्यं कार्यं हि मासादितिथौ VasiS. 12. 5; एको न शुभप्रद: स: । स एव वर्गोत्तमसंज्ञितश्चेच्छुभप्रदश्चाखिलमङ्गलेषु VasiS. 32. 52; कन्यालग्नविधेयं तत् पौष्टिकाखिलमङ्गलम् NāraS. 14. 6; अन्यपरमपि तद्भक्त्यानुष्ठितं स्वभावात् संपादयत्येवाखिलमङ्गलानि TattvSaṁkhyāṬ. 5. 4.

**अखिलमङ्गलसंपत्ति** ( akhilamaṅgala-sampatti ) *f.* wealth of all auspicious things अनवरतमखिलमङ्गलसंपत्तिनिकेतनं वलभेदनपुटभेदनं परमास्थावती वसुमती सत्वरमवजगाहे ĀnandRa. 1. 8( 31 )

**अखिलमधुरतासंपद्** ( akhilamadhuratā-sampad ) *f.* wealth of all (types of) sweetness अखिलमधुरतासंपदां संप्रदाय: ।…श्चिरं वो भूयादाभीरनारीकुचकलशतटालंकृतिर्मङ्गलाय StavMā. 220. 7.

**अखिलमधुरिमोत्सेक** ( akhilamadhurimotseka ) *m.* exuberance (*lit.* overflow) of all (types of) sweetness वष्टि त्वामेव तन्वन्नखिलमधुरिमोत्सेकमस्यां मुकुन्द: UjjvaNīMa. 88. 6.

**अखिलमधुव्रतव्रात** ( akhilamadhuvrata-vrāta ) *m.* **i** multitude of all the bees पानगोष्ठीगृहमिवाखिलमधुव्रतव्रातानाम्…एलालतागृहमद्राक्षम् TilaMañ. 245. 19; **ii** group of all drunkards, TilaMañ. 245. 19.

**अखिलमध्यदेश** ( akhila-madhyadeśa ) *m.* the whole of the central region आसीद्द्विजन्माखिलमध्यदेशे प्रकाशशाङ्काश्मनिवेशजन्मा( ? ) । अलब्ध देवर्षिरिति प्रसिद्धिं यो दानवर्षित्वविभूषितोऽपि TilaMañ. 7. 11; **ii** the fertile middle region, TilaMañ. 7. 11.

**अखिलमनु** ( akhila-manu ) *m.* all the *manus* (chants) अखिलमनुषु मन्त्रा वैष्णवा वीर्यवन्त: PañcRā.( Nā. ) v. 4. 6.

**अखिलमनोज्ञगुण** ( akhila-manojñaguṇa ) *adj.* having all attractive qualities विमतान्धकारमपहाय शरै: किरणैरिवाखिलमनोज्ञगुण: । समवर्धयत् स समुपेत्य गुरुं सकल: शशी सलिलराजमिव Rāgh. 18. 80.

**अखिलमनोज्वर** ( akhila-manojvara ) *m.* all mental fevers (i. e. agonies) अखिलमनोज्वरप्रशमनकारणं हि भगवती प्रव्रज्या HarṣC. 338. 12.

**अखिलमनोरथ** ( akhila-manoratha ) *m.* all desires क्षितिपतिसुतानामखिलमनोरथेषु कामधेनुरपीयं राज्यलक्ष्मी: YaśasCam. i. 284. 7; असाविहाखिलमनोरथौघं संप्राप्य याति परमायुरन्ते S'ilpaRa. ii. 28. 60.

**अखिलमन्त्र** ( akhila-mantra ) *n.* all the *mantras* (i. e. sacred formulae or chants) ( मया ) जप्तान्यखिलमन्त्राणि SkandP. iii(3). 2. 72; नमो नमस्तेऽखिलमन्त्रदेवताद्रव्याय सर्वक्रतवे क्रियात्मने BhāgP. iii. 13. 39; भेदश्च प्रणवाद्येकाक्षरात्माखिलमन्त्रत:…स्यात् KulārT. 4. 65.

**अखिलमन्त्रिन्** ( akhila-mantrin ) *m.* all the counsellors कुथे निवेशितपदं धुरीवाखिलमन्त्रिणाम् ।…अनयन्नयनातिथ्यं ( ज्यायांसं स: ) S'rīKaC. 25. 19; उत्कर्षस्याभिषेकाय व्यग्रेष्वखिलमन्त्रिषु । अन्ते(? न्त्ये)ष्टिमकरोद्राज्ञ: कृतज्ञो वामन: परम् RājTa.( Ka. ) 7. 729; विभूत्या संविभक्तेषु भूभुजाखिलमन्त्रिषु । उत्कट्ट( ? र्ष )कोटिं भुट्टाख्य: परं जह्लानुजोऽर्हति RājTa.( Ka. ) 8. 2429.

**अखिलमन्त्रिमण्डल** ( akhilamantri-maṇḍala ) *n.* the group of all ministers or counsellors ( राजा ) अखिलमन्त्रिमण्डले प्रधानममात्यम्…अब्रवीत् Kād. 13. 1.

**अखिलमन्त्रिवर्य** ( akhilamantri-varya ) *adj.* the chief or the foremost among all the ministers or counsellors योऽभूच्चिरं नृपगृहेऽखिलमन्त्रिवर्य: …। शोच्यां दशामितरवत् स गत: किलान्ते RājTa.( S'rī. ) 4. 301.

**अखिलमय** ( akhila-maya ) *adj.* [ *f.* –ī ] comprising all, consisting of all यदस्ति…अखिलमयं ब्रह्म सत्यं ज्ञानमनन्तं तत् तदेव इति बुद्धिसिद्धं कृत्वा ध्वस्तसंशयोऽसि S'aṅkaVi.( Ā. ) 264. 16; नम: श्रीचक्रस्थेऽखिलमयि नमो बिन्दुनिलये…नमस्तेऽम्ब ललिते Nityo. 59. 9.

**अखिलमर्त्यमूर्ति** ( akhilamartya-mūrti ) *adj.* having all mortals as his (manifest) form देवै: सदेड्य: स तु वेदमूर्तिरमूर्तिराद्योऽखिलमर्त्यमूर्ति: MārkP. 102. 22.

**अखिलमर्मन्** ( akhila-marman ) *n.* all the vital parts (of the Vāstupuruṣa) इत्थम्…भेद: पदेष्वखिलमर्मगतो व्यधश्च । उक्त: पृथक् पृथगमुष्य फलं च सम्यक् SamarāSū. 13. 24.

**अखिलमल** ( akhila-mala ) *m.* **i** all dirt यत्कीर्ति: कापि गङ्गाखिलमलनिचयं नाशयन्ती…सौख्यमाविष्करोति PadyaVe. 87 = SūktiSu. 54; **ii** all sins PadyaVe. 87 = SūktiSu. 54.

**अखिलमहीपालक** ( akhilamahī-pālaka ) *m.* the protector of the whole earth राजर्षिप्रवरस्याखिलमहीपालकस्य कथं तत्करणम् BālamBha. ii. 164. 33 ( *on* 2. 127 )

**अखिलमहीमण्डल** ( akhila-mahīmaṇḍala ) *n.* the whole globe of the earth सर्वथा च तथा च कुर्यात् (नृप:)…स्वयं च यथाखिलमहीमण्डलस्वीकरणक्षमो विजिगीषु:…स्यादिति BālaKrī. i. 183. 2 ( *on* 1. 306 )

**अखिलमहीवलय** ( akhila-mahīvalaya ) *n.* the whole globe of the earth ( तात: ) मे…आदाय…स्वकीयात्…कण्ठदेशादखिलमहीवलयवश्यतादेशमालामिव…एकावलीं बबन्ध YaśasCam. i. 288. 1.

**अखिलमान** ( akhila-māna ) *n.* all the means of valid knowledge, all the proofs न चैवाखिलमानानि निश्चिनोत्यखिलो जन: AnuVyā. 60A. 6 ( *on* 3. 4 )

**अखिलमानतस्** ( akhilamāna-tas ) *adv.* on account of all the means of valid knowledge, by all *pramāṇas* तदधीनत्वमेवेति किञ्चित्सादृश्यमेव च । संप्रकाशयत: सूत्रगतावखिलमानत: AnuVyā. 43A. 9 ( *on* 3. 2 )

**अखिलमाननीय** ( akhila-mānanīya ) *adj.* fit to be respected by all अमुष्य सेवावसरेष्ववेलम्…। महत्त्वमेष्यामि सदेति मत्वा मरुच्चचाराखिलमाननीय: Raghunā. 6. 52.

**अखिलमानव** ( akhila-mānava ) *m.* all human beings, all men यद्यप्यशेषवेदार्थो दुर्गमोऽखिलमानवै: AnuVyā. 47B. 2 ( *on* 3. 3 ); स्नात्वोत्थित: सुचरितो ददृशेऽखिलमानवै: ।…तरुणोऽतीवसुन्दर: SkandP. iii( 1 ). 29. 43.

**अखिलमान्य** ( akhila-mānya ) *adj.* honoured or respected by all, fit to be respected by all बभूव तज्जोऽखिलमान्यभट्टाचार्य: SiddhāTaVi. 407. 23.

**अखिलमायानिधि** ( akhilamāyā-nidhi ) *m.* repository of all magic or miraculous powers अखिलमायानिधेर्मयनाम्नो दानवस्य पुत्रीं मन्दोदरीम् PrasaRā. vi. 8( 8 )

**अखिलमार्ग** ( akhila-mārga ) *m.* all paths or ways इति निगदितमात्रे तद्दृशैवाज्ञया तैर्गहनमखिलमार्गेष्वावृतं तत् तथैव VīraBhā. 11. 26.

**अखिलमुक्तिकर** ( akhila-muktikara ) *adj.* bestowing liberation on all त्वां दानवस्त्वखिलमुक्तिकरं मुमुक्षुस्त्वय्यप्रमुञ्चति पपात वियत्प्रदेशात् Nārāy. x. 43. 5.

**अखिलमुनि** ( akhila-muni ) *m.* all sages सा मामव्यादखिलमुनीनां स्तव्या…अघशत्रोर्मूर्ति: StavMā. 53. 6; ज्योति:शास्त्रं समग्रम्…विदित्वा । पूर्वं ब्रह्मा ततोपर्यखिलमुनिगणप्रार्थनाद्यच्चकार VasiS. 1. 2.

**अखिलमुनिजन** ( akhila-munijana ) *m.* all the sages देवि श्रीभद्रकालि …भवतु भगवति त्वद्वपुश्चिद्रसार्द्रं हत्यै नित्यामयानामखिलमुनिजनैरादरात् सेव्यमानम् RasSa. 86.

**अखिलमुनिमण्डली** ( akhilamuni-maṇḍalī ) *f.* group of all sages or monks, all the sages or monks गुणपालश्रेष्ठी … अखिलमुनिमण्डलीराजं श्रीयशोध्वजा( ? ज )नामभाजनम्…एवमपृच्छत् YaśasCam. ii. 343. 11.

**अखिलमूर्ति** ( akhila-mūrti ) *adj.* having all forms, of universal form तासु ( पत्नीषु ) चाष्टावयुतानि लक्षं च पुत्राणां भगवानखिलमूर्तिरनादिमानजनयत् ( विष्णु: ) ViṣṇuP. iv. 15. 36; *f.* all the images (of deities) द्विहस्तसंमितं तत्र यन्त्रं सौदर्शनं न्यसेत् । पूर्वोक्तेन प्रकारेण विनैवाखिलमूर्तिभि: AhirbuS. 38. 65.

**अखिलमूल** ( akhila-mūla ) *n.* origin or source of all ( असंभवस्तु सतोऽनुपपत्ते: ) तदपि विकार: कारणभावात् सदखिलमूलं वायुनभोवत् NayaMañ. II. iii. 3. 5.

**अखिलमूलरूप** ( akhilamūla-rūpa ) *adj.* [ *f.* –ā ] whose form is the origin or source of all देवि प्रसीद परमेऽखिलमूलरूपे BṛDharmaP. i. 41. 19.

**अखिलमृग** ( akhila-mṛga ) *m.* all the animals or beasts बला अखिलमृगाणां हरिरिव खचरबलानां च चन्द्रबलम् । हिमकिरणे बलिनि सति सर्वे बलिनो वियच्चरा नित्यम् VasiS. 20. 11.

**अखिलमोक्षसाधन** ( akhila-mokṣasādhana ) *n.* all the means of liberation त्वमेव मोक्षदस्त्वमेवाखिलमोक्षसाधनम् TripāMaNāU. 358. 23( 1 )

**अखिलमोहकर** ( akhila-mohakara ) *adj.* [ *f.* –ī ] deluding all त्वत्तो बिभेत्यखिलमोहकरी च माया AdhyāRā. ii. 9. 92.

**अखिलमोहिन्** ( akhila-mohin ) *adj.* [ *f.* –ī ] fascinating or infatuating all पुण्ड्रक्रिया जगद् वश्यं करोत्यखिलमोहिनी ĪśānS'iPa. i. 48. 93.

**अखिलयज्ञतन्तु** ( akhilayajña-tantu ) *m.* possessing all sacrificial performances नमस्तेऽखिलयज्ञतन्तवे BhāgP. iii. 19. 30 (Siddhāntapradīpa अखिलयज्ञानां तन्तवे मूलाय; Subodhinī अखिला ये यज्ञतन्तवो यज्ञसंस्था: ;

Bālaprabodhinī अखिलयज्ञतन्तवे अखिलयज्ञप्रवर्तकाय )

**अखिलयज्ञधामन्** ( akhilayajña-dhāman ) *n.* the abode of all the sacrifices पातास्त्वमीड्योऽखिलयज्ञधाम MārkP. 109. 78.

**अखिलयज्ञफल** ( akhilayajña-phala ) *n.* reward or fruit of all the sacrifices जपनिष्ठो द्विजश्रेष्ठोऽखिलयज्ञफलं लभेत् TantraSā.(K.) 32. 11.

**अखिलयज्ञभुज्** ( akhilayajña-bhuj ) *adj.* receiver of all sacrifices त्वं धर्मस्त्वममृतं सत्यं त्वं यज्ञोऽखिलयज्ञभुक् BhāgP. ix. 5. 5.

**अखिलयन्त्ररूप** ( akhilayantra-rūpa ) *adj.* [*f.* -ā] of the form of all the mystical diagrams नमो नमस्तेऽखिलयन्त्ररूपे BrahmāṇḍP. iii. 13. 25.

**अखिलयाग** ( akhila-yāga ) *m.* all (Tantric) worships (performed with the help of all the mystic diagrams) एवं चाखिलयागानां न्यासः स्याद् देवतासु च PauṣkS. 21. 14.

**अखिलयामिनीजागरण** ( akhilayāminī-jāgaraṇa ) *n.* the act of keeping awake throughout the whole night बन्धुसुन्दरी…अखिलयामिनीजागरण-विद्राणवदनश्रियम्…अवलोक्य माम्…अवादीत् TilaMañ. 295. 1.

**अखिलयुवतिजन** ( akhila-yuvatijana ) *m.* all the young women-folk or maidens अखिलयुवतिजनमोहनमनसिजाभिरूपनिजाङ्गं वजारतरायविजयानन्द-रङ्गम्…सरस्वती…सुतरामुपतस्थे ĀnandRa. 8. 36(9)

**अखिलयोगमाया** ( akhila-yogamāyā ) *f.* all the magical or mystic powers of abstract meditation एवं ब्रुवाणमबलाखिलयोगमायाविद्याविचक्षणमवेक्ष्य गताधिरासीत् BhāgP. iii. 23. 9 = PadmP. iv. 15. 24.

**अखिलयोगसिद्धि** ( akhila-yogasiddhi ) *f.* attainment of all yogic powers, attainment of full yogic state तेऽखिलयोगसिद्धिर्भवतु Jīvān. 470. 3; 470. 5.

**अखिलयोगाङ्ग** ( akhila-yogāṅga ) *n.* all the ancillaries to *yoga* (meditation) तदेवमखिलयोगाङ्गसंपन्नस्य संप्रज्ञातो जायते TattvVai. 25. 15 (*on* 1. 20)

**अखिलयोगिन्** ( akhila-yogin ) *m.* all the *yogins* ध्येयायाखिलयोगिभिः सुरगणैर्गेयाय मायाविने…नतिः शंभवे S'ivāL. 55.

**अखिलयोजनसंख्या** ( akhilayojana-saṅkhyā ) *f.* the number of all the *yojanas* अखिलाप्ताखिलयोजनसंख्यापर्यययोजनानि स्युः GaṇiSāSaṁ. 5. 157.

**अखिलरक्षण** ( akhila-rakṣaṇa ) *n.* protection of all अखिलरक्षणजागरूकः …पशुपतिः BhikṣāKā. 33. 6.

**अखिलरक्षा** ( akhila-rakṣā ) *f.* protection of all (beings) अनलभवन-संस्थं ताम्रवर्णं सशूलं सगदमखिलरक्षां (?) स्यादयुग्मं तु षण्डम् ĪśānS'iPa. i. 3. 21.

**अखिलरक्षितृ** ( akhila-rakṣitṛ ) *m.* protector of all स्वाहान्तो गदितो मन्त्रस्तार्क्ष्यस्याखिलरक्षितुः TantrRā. 34. 22.

**अखिलरत्न** ( akhila-ratna ) *n.* all gems or jewels अस्तेयाभ्यासेन स्वत एवाखिलरत्नान्युपतिष्ठन्ते Vidvanmo. 7. 55(4)

**अखिलरत्नकोशाध्यक्ष** ( akhilaratna-kośādhyakṣa ) *m.* the superintendent of the treasury of all gems मयाप्यद्य निरवद्यमणिभिर्भूषणगणैः समेतम-खिलरत्नकोशाध्यक्षस्य महोदधेः ससाक्षिकं समर्पितम् TilaMañ. 81. 20.

**अखिलरस** ( akhila-rasa ) *adj.* 1 containing all the (twelve) *rasas* or sentiments अखिलरसामृतमूर्तिः…कलितश्यामाललितो राधाप्रेयान् विधुर्जयति BhaktiRaSi. i. 1. 1 (comm. अखिलरसा वक्ष्यमाणाः शान्ताद्या द्वादश यस्मिन् तदमृतं परमानन्दः); 2 containing the lasting tastes or relishes, ever tasty, BhaktiRaSi. i. 1. 1 (comm. अखिलः अखण्डः रसः आस्वादो यत्र तादृशम-मृतम्)

**अखिलरस** ( akhila-rasa ) *m.* all emotions or sentiments एकैव षड्ज-मध्या विज्ञेयाखिलरसाश्रया जातिः NāṭyaS'ā. 29. 12; अखिलरसकूपोदञ्चनघटीयन्त्र-मालामिव रुद्राक्षमालां दक्षिणेन पाणिना भ्रमयन्तम्… भैरवाचार्यं ददर्श HarṣaC. 156. 2.

**अखिलराक्षसेन्द्र** ( akhilarākṣasendra ) *m.* the lord of all the Rākṣasas राममतो व्रजामि । इत्थं विचिन्त्याखिलराक्षसेन्द्रः AdhyāRā. iii. 5. 61.

**अखिलरागमेला** ( akhilarāga-melā ) *f.* a kind of Rudravīṇā (रुद्रवीणा) उक्तात्र शुद्धमेलाथ मध्यमेलेति सा द्विधा । सापि पुनरेकैकं द्विविधा तत्राखिलरागमे-लैका अपरैकरागमेला RāgVi. 2. 15.

**अखिलराजक** ( akhila-rājaka ) *n.* host of all kings स कृत्स्नां जित्वा महीमखिलराजकपूजिताङ्घ्रिः ।…अरंस्त निजप्रियाभिः KathāSaSāg. iii. 4. 405.

**अखिलराजन्** ( akhila-rājan ) *m.* all the kings रामशासनमानेन प्राप्तेष्व-खिलराजसु ।… अवतैतातिशक्रस्य राज्ञो यज्ञः सदोचितः RāmāMañ. 500. 16; विमुखं जातेष्वखिलराजसु । चत्वारो वीरपुरुषा दाक्षिणात्याः समाययुः BṛKathāMañ. 15. 104; (रामः) लीलया तोलयन् धनुः । आरोपयामास गुणं पश्यत्स्वखिलराजसु AdhyāRā. i. 6. 24; सत्यं वदस्वाखिलराजसंनिधौ AdhyāRā. v. 4. 6.

**अखिलराजनीति** ( akhila-rājanīti ) *f.* all the royal policies or statecrafts शंलिप्सोः कुतुपाभिधस्य विलसत्कौटिल्यवारांनिधेर्विस्मृत्याखिलराजनीतिरचना गत्वा ददौ दर्शनम् ParamāKā. 5. 34(? 33)

**अखिलराजन्य** ( akhila-rājanya ) *m.* all the kings or princes (कविः) अखिलराजन्यचूडामणिं मुम्मुणिराजमद्राक्षीत् UdaySuKa. 156. 24.

**अखिलराजलोक** ( akhila-rājaloka ) *m.* all the kings, the whole assemblage of kings मुनिरपि क ईदृशम्…अखिलराजलोकसमक्षमुल्लपति TilaMañ. 98. 21.

**अखिलराज्यनीति** ( akhila-rājyanīti ) *f.* all the royal policies or statecrafts अखिलराज्यनीतिकुशलः…सोऽयं कृपावल्लभः (राजा) MohaRāPa. 5. 1.

**अखिलराशि** ( akhila-rāśi ) *m.* all the signs of the zodiac शुभयुक्तेक्षिताः शस्ता विवाहेऽखिलराशयः NāraS. 29. 18.

**अखिलराष्ट्र** ( akhila-rāṣṭra ) *n.* all the countries मृत्युर्बभ्राम…नगराणि पुराणि च । ग्रामाण्यखिलराष्ट्राणि YogVā. iii. 2. 14.

**अखिलराष्ट्रवर्य** ( akhilarāṣṭra-varya ) *adj.* the best of all the countries गोराष्ट्रदेशोऽखिलराष्ट्रवर्यः…। विराजते सह्यगिरीन्द्रसानौ SarvaDaKau. 112. 3.

**अखिलरिक्थग्रहण** ( akhilariktha-grahaṇa ) *n.* the receiving of the entire property अखिलरिक्थग्रहणानुवादश्चानर्थक एव ManuBh. ii. 280. 15 (*on* 9. 132)

**अखिलरिपुक्षय** ( akhilaripu-kṣaya ) *m.* destruction of all the enemies पूर्णः क्षीणोऽपि वा चन्द्रः षष्ठेऽखिलरिपुक्षयम् । करोति NāraS. 30. 14.

**अखिलरूपतन्त्र** ( akhilarūpa-tantra ) *adj.* [*f.* -ā] having Tantras of all characters नमो नमस्तेऽखिलरूपतन्त्रे (? अखिलतन्त्ररूपे) नमो नमस्तेऽखिल-यन्त्ररूपे BrahmāṇḍP. iii. 13. 25.

**अखिलरूपधारिन्** ( akhilarūpa-dhārin ) *adj.* assuming all forms, assuming any form आदाय लेखं दशकन्धरस्य गत्वा निकुम्भोऽखिलरूपधारी । ददौ रघूणां पतये MahāN. 6. 113.

**अखिलरूपरम्य** ( akhilarūpa-ramya ) *adj.* [*f.* -ā] charming in every form आन्दोलयन्ती वपुरायताक्षी हिन्दोलिकायाम्…। अतर्कि लोकैर्गगनान्तरस्था स्वर्दे-वतेवाखिलरूपरम्या PadyaVe. 538.

**अखिलरूपविनाश** ( akhilarūpa-vināśa ) *m.* destruction of all things अखिलरूपविनाशाय धूमकेतुजालमिव समुद्गतम्…शबरसैन्यमद्राक्षम् Kād. 29. 17.

**अखिलरोगबल** ( akhilaroga-bala ) *n.* vehemence of all diseases भिषग्विपश्चिद्रोगान् जयत्यखिलरोगबलप्रमाथी KalyāKā. 10. 25.

**अखिलरोगविनाश** ( akhilaroga-vināśa ) *m.* cure of all the diseases स्तुत्वा जिनेन्द्रम्…अखिलरोगविनाशहेतुम् KalyāKā. 9. 1.

**अखिलरोमन्** ( akhila-roman ) *n.* all sorts of hair (किन्नरग्रहार्दित-शिशुम्) अखिलरोमसर्पनिर्मोकहिङ्गुवचया…धूपयेत् KalyāKā. 18. 74.

**अखिलरोमरन्ध्र** ( akhila-romarandhra ) *n.* all the pores of hair अखिलरोमरन्ध्रनिर्गलद्रुधिरगण्डूषमिव प्रलम्बपृथुलं चिबुकमुद्वहन्तम् … वेतालमद्राक्षीत् TilaMañ. 47. 20.

**अखिलर्क्ष** ( akhilarkṣa ) *n.* an entire constellation मङ्गलेषु त्यजेत् क्रूरं विद्धं भं क्रूरसंयुतम् । अखिलर्क्षम् NāraS. 29. 68.

**अखिलर्तु** ( akhilartu ) *m.* all seasons अखिलर्तुभिः सततसेवितं कामदम् । …कल्पकाङ्घ्रिपमुदञ्चितं चिन्तयेत् PadmP. iv. 99. 24; PañcaRā.(Nā.) iii. 5. 4; विभान्ति वृक्षाः । शाखागणान्तर्गततारकौघा इवाखिलर्तूद्गतपुष्पगुच्छाः Gurvā. 50.

**अखिलर्द्धिद** ( akhilarddhi-da ) *adj.* bestowing all kinds of prosperity जपतामखिलर्द्धिदः ।…अयमोङ्कारः BṛBrahmaS. i. 6. 24.

**अखिलर्द्धिमत्** ( akhilarddhi-ma(n)t ) *adj.* having all kinds of wealth or luxuries (हिरण्यकशिपुः) महेन्द्रभवनम्…अध्युवासाखिलर्द्धिमत् BhāgP. vii. 4. 8.

**अखिललतापटली** ( akhilalatā-paṭalī ) *f.* row of all creepers दिशति दृशमयुग्मलोचनेऽभूदखिललतापटली वनस्थलीषु । अधिवसदसमास्त्रगुप्तयेऽग्रे ग्रथित-तिरस्करिणीव रेणुजालैः S'rīKaC. 7. 7.

**अखिललिङ्ग** ( akhila-liṅga ) *n.* A all distinguishing features पाणिनेर्मत-मिवाखिललिङ्गव्यक्तिकृद्विविधशब्दविशेषम् । … भुवनान्तः सान्द्रमन्धतमसं समरुन्ध-(? न्द्ध) Acyutarā. 8. 22; B all genders, Acyutarā. 8. 22.

**अखिललेख** ( akhila-lekha ) *m.* all the gods अखिललेखलेखादम्भस्त-म्भनसुभगंभावुकदोःस्तम्भसंभावितसुम्भनिसुम्भसुन्दोपसुन्दमधुकैटभप्रमुखानेकदानव-व्यूहविवर्तैरिव विगीतवृत्तैः…धरणीपतिभिः अधिष्ठिता…भूतधात्री ĀnandRa. 1. 8(10)

**अखिललेखक** ( akhila-lekhaka ) *m.* all copyists or scribes भूपोप-जीवाखिलपण्यजीविद्यास्वज्ञशिल्पाखिललेखकानाम् । पीडाप्रदो…राहुः VasiS. 9. 44.

**अखिललेखन** ( akhila-lekhana ) *n.* all kinds of writings संग्रामयोग्या-खिलवास्तुशिल्पनृत्यप्रभेदाखिललेखनानि ।…कार्याणि कर्माणि महेशतिथ्याम् VasiS. 12. 12; 13. 4.

**अखिललोक** (akhila-loka) *m.* **A** all the worlds नारायणादखिललोकस्रष्टृप्रजापतयो जायन्ते ।…अखिललोकाश्च जायन्ते TripāMaNāU. 362. 17, 18(2); त्वं किलाखिललोकानां स्थितिसंहारकारण: BrahmāndP. ii. 52. 22; iii. 6. 12; ĀdiP. 27. 13; तेजस्विनस्तदपनुत्तय आविरासन् । संहारभानव इवाखिललोकसर्गनाशस्फुरत्किरणदन्तुरमण्डलाग्रा: HarVi. 40. 43; **B** all the people ममाप्यखिललोकानां गुरुर्नारायणो गुरु: VisnuP. v. 1. 14; वदाखिललोकानां रक्षणं धर्मसंग्रहम् PadmP. i. 51. 2; BhaviP. 479B. 20 (iii(3). 12. 18); तुतुषुरखिललोका मङ्गलेनेव पूर्णा: RāghPāṇ.(Ka.) 13. 21; नृपतिरखिललोकान् पालयत्यात्तदण्ड: HāsyCū. 125. 14; (शार्ङ्गदेव:) अधुनाखिललोकानां तापत्रयजिहीर्षया ।…आविष्करोति संगीतरत्नाकरम् SaṃgīRa. i. 11. 10 (1(1). 13); वशयति चाखिललोकं श्रीहृदयस्यैवमभ्यासात् Īśān-S'iPa. i. 19. 20; जयति महोत्सवविद्या विद्याधरशापमर्दिनी मूर्ति: । परिभूतशङ्खचूडचूडामणिरखिललोकस्य StavMā. 219. 32; सत्पुरुष: खलु हिताचरणैरमन्दमानन्दयत्यखिललोकमनुक्त एव RasGaṅ. 453. 4; BhāmiVi. 1. 73; साधारणं पितरमखिललोकस्य …पितामहम् NīlaVi. 42. 19; चिन्तनीयमखिललोकस्य…दाक्षायणीरमणम् NīlaVi. 96. 14.

**अखिललोककर्तृ** (akhilaloka-kartṛ) *m.* creator of all the worlds परमात्मा…तद्ब्रह्माखिललोककर्ता…जगत् असृजत S'aṅkaVi.(Ā.) 161. 10.

**अखिललोककान्त** (akhilaloka-kānta) *adj.* [*f.*-ā] pleasing to all people, attractive to the whole world प्रसाधितस्यास्य मधुद्विषोऽभूदन्यैव लक्ष्मी:…। वपुष्यशेषेऽखिललोककान्ता सानन्यकान्ता ह्युरसीतरा तु S'iśuVa. 3. 12; SaraKaṇṭhā. 38. 8.

**अखिललोककारिन्** (akhilalokakār-in) *adj.* creating all the worlds नमो नमस्तेऽखिललोककारिणे GaṇeP. ii. 6. 10.

**अखिललोकचरित** (akhila-lokacarita) *n.* all worldly activities प्रकटय निजमध्वानं स्थगयतरामखिललोकचरितानि । यावद्भवामि भगवंस्तव … दास: Stotrā. 4. 3.

**अखिललोकजित्** (akhilaloka-jit) *adj.* conquering the whole world जयत्यखिललोकजिन्नरककालकेतूद्गम: ।…हरि: NalaCam. 6. 8.

**अखिललोकतापन** (akhilaloka-tāpana) *adj.* warming all the worlds स: (आदिदेव:) … अतप्यत स्माखिललोकतापनं तप: BhāgP. ii. 9. 8 (comm's प्रकाशक:)

**अखिललोकतीर्थ** (akhilaloka-tīrtha) *n.* sacred place or place of pilgrimage for all the worlds (purifying all the worlds) एतेऽलिनस्तव यशोऽखिललोकतीर्थं गायन्त आदिपुरुषानुपदं भजन्ते BhāgP. x. 15. 6 (Vijayadhvaja ज्ञानजनकम्)

**अखिललोकत्रय** (akhila-lokatraya) *n.* the entire three worlds अखिललोकत्रयातिशायिरूपां तापसकन्यकां व्यलोकयम् TilaMañ. 255. 21.

**अखिललोकधामन्** (akhilaloka-dhāman) *m.* the shelter for all the worlds or beings नमो नमस्तेऽखिललोकधामन् GaṇeP. ii. 6. 10.

**अखिललोकधाविन्** (akhilaloka-dhāvin) *adj.* running or travelling through all the worlds, spreading over all the worlds इदंयशांसि द्विषत: सुधारुच: किमङ्कम्…। यशोभिरस्याखिललोकधाविभिर्विभीषिता धावति तामसीमसी NaisC. 12. 89.

**अखिललोकनाथ** (akhilaloka-nātha) *m.* lord of the entire universe अथेह धन्या भगवन्त इत्थं यद्वासुदेवेऽखिललोकनाथे । कुर्वन्ति सर्वात्मकमात्मभावम् BhāgP. i. 3. 39 = ĀdiP. 5. 35; BhāgP. ii. 7. 15; नमो नमस्तेऽखिललोकनाथ GaṇeP. ii. 6. 10.

**अखिललोकनेत्र** (akhilaloka-netra) *m.* the eye of the entire universe भार्गव उवाच…लोके…निर्भासि कौ च गगनेऽखिललोकनेत्र: S'ivaP. ii(5). 50. 25 (281B. 9)

**अखिललोकपाल** (akhila-lokapāla) *m.* **1** all the kings अथैवमखिललोकपालललामोऽपि उपरतानुवृत्तिरुपरराम BhāgP. v. 6. 6; **2** all the protectors or guardians of the world न ते गिरित्राखिललोकपालविरिञ्चवैकुण्ठसुरेन्द्रगम्यम् । ज्योति: BhāgP. viii. 7. 31.

**अखिललोकपालक** (akhila-lokapālaka) *m.* **1** all the kings दध्यौ… नृपो दत्तं तमात्रेयकुलदीपकम् । यस्य प्रभावानुगृहीत ओजसा तिरश्चकाराखिललोकपालकान् BrahmāndP. ii. 40. 43; **2** all the protectors or guardians of the world महात्मत्स्याय नम: । अन्तर्बहिश्चाखिललोकपालकैरदृष्टरूपो विचरस्युरुस्वन: DevīBhāP. viii. 9. 19.

**अखिललोकपितृ** (akhilaloka-pitṛ) *m.* father of all the worlds अखिललोकपितुस्तव पुत्रतामहमयाचमनन्यमनोरथ: Yādavā. 3. 20.

**अखिललोकप्रपालक** (akhilaloka-prapālaka) *adj.* foremost protector of all the worlds प्रयास्यति मयूरेशोऽखिललोकप्रपालक: GaṇeP. ii. 117. 24.

**अखिललोकप्रसिद्ध** (akhilaloka-prasiddha) *adj.* well known to all the worlds अखिललोकप्रसिद्धैस्तैस्तै: … श्रीवेदव्यासपराशरादिभि: … व्याख्यातस्य वेदराशे: NyāyKu. 40. 1.

**अखिललोकबन्धु** (akhilaloka-bandhu) *m.* kinsman or a friend of the whole world देवालयानामपि…। निर्मापकोऽभूदिह रक्षकोऽपि यदूद्भवो वाऽखिललोकबन्ध:(? न्धु:) VīraBhā. 5. 118.

**अखिललोकभयंकर** (akhilaloka-bhayaṅkara) *adj.* causing fear to the whole world उग्रो बालस्ततो जातोऽखिललोकभयंकर: GaṇeP. ii. 74. 6.

**अखिललोकभोग** (akhilaloka-bhoga) *m.* enjoyment of all the worldly pleasures or enjoyment of all kinds of men कुलटाजनस्य । स्वधर्म एवाखिललोकभोग: PadyaVe. 328.

**अखिललोकमातृ** (akhilaloka-mātṛ) *f.* mother of the whole world स्तुतिभिरखिललोकमातरमभिष्टूय, शक्तिं पूजयेत् NityoNi. 59. 24.

**अखिललोकमातृका** (akhilaloka-mātṛkā) *f.* (little) mother of the whole world कुलगुरुमादिदेश…मलयध्वजो नृपाल: । दुहितुरखिललोकमातृकाया विरचयितुं किल मातृकोपदेशम् S'ivLī. 7. 22; अन्वास्यमानमखिललोकमातृकया … भगवत्या सर्वमङ्गलया…साक्षाच्चकार दाक्षायणीरमणम् (विधि:) NīlaVi. 96. 6.

**अखिललोकयात्रा** (akhila-lokayātrā) *f.* all the worldly activities विज्ञानमेव…अखिललोकयात्रानिलयम् PañcPā. 73. 4 (*on* i. 1. 1)

**अखिललोकरक्षण** (akhilaloka-rakṣaṇa) *n.* protection of all the people विधत्स्व वीराखिललोकरक्षणम् BhāgP. iv. 20. 13.

**अखिललोकरञ्जकता** (akhilalokarañjaka-tā) *f.* the state of being delightful to all the people कियतोऽपि च प्रसिद्धस्य रसप्राधान्यादखिललोकरञ्जकतया ख्यातस्य नाटकादे: NāṭyaDa. 26. 2.

**अखिललोकलोचन** (akhilaloka-locana) *n.* eyes of all the people अखिललोकलोचनेन्दीवरानन्दचन्द्रमसम्…आस्थानमण्डपमास्थाय YaśasCam. i. 372. 4.

**अखिललोकवल्लभ** (akhilaloka-vallabha) *adj.* dear to all the people यस्याङ्गेऽखिललोकवल्लभतमं शीलं समुन्मीलति S'atTrayī. 324.

**अखिललोकशरण्य** (akhilaloka-śaraṇya) *adj.* fit to be a shelter for the whole world विधि:…अखिललोकशरण्यम् … नारायणम् … इत्थमस्तावीत् NīlaVi. 54. 16.

**अखिललोकशोक** (akhilaloka-śoka) *m.* suffering of all the people श्रीसोढल:…येन अखिललोकशोकशमनी कीर्ति: समासादिता SaṃgīRa. i. 10. 9 (1(1). 5)

**अखिललोकशौच** (akhilaloka-śauca) *n.* the purification of all the people or world भगवन् अखिललोकशौचोचितप्रवृत्तिकायां मृत्तिकायां को दोष: YaśasCam. ii. 298. 14.

**अखिललोकश्लाघ्य** (akhilaloka-ślāghya) *adj.* worthy of praise by all people भद्रमित्र: … अखिललोकश्लाघ्यविश्वासप्रसूते: श्रीभूतेर्हस्ते … रत्नसप्तकं निधाय YaśasCam. ii. 345. 21; सभ्येष्वप्यर्थ्यादिरञ्जकस्सभास्तारोऽखिललोकश्लाघ्य: Smṛti-Can. iii. 46. 10.

**अखिललोकसंमत** (akhilaloka-sammata) *adj.* agreeable to all people तदद्भुतं रूपमतीव सुन्दरं तथैव गन्धोऽखिललोकसंमत: DevīBhāP. ii. 5. 13.

**अखिललोकसर्ग** (akhilaloka-sarga) *m.* the creation of the whole world (i. e. the entire created universe) तेजस्विनस्तदपनुत्तय आविरासन् । संहारभानव इवाखिललोकसर्गनाशस्फुरत्किरणदन्तुरमण्डलाग्रा: HarVi. 40. 43.

**अखिललोकसाक्षिन्** (akhilaloka-sākṣin) *m.* the witness of (the activities of) the entire world (i. e. all beings) नमस्ते…नारायणायाखिललोकसाक्षिणे BhāgP. viii. 22. 17; त्वमप्रमेयोऽखिललोकसाक्षी GaṇeP. ii. 48. 9.

**अखिललोकसार** (akhilaloka-sāra) *m.* the essence or vital force of the whole universe श्रीरामचन्द्रेऽखिललोकसारे भक्तिर्दृढा नौर्भवति प्रसिद्धा AdhyāRā. i. 1. 10.

**अखिललोकस्रष्टृ** (akhilaloka-srasṭṛ) *adj.* creating all worlds नारायणादखिललोकस्रष्टृप्रजापतयो जायन्ते TripāMaNāU. 362. 17(2)

**अखिललोकहारिन्** (akhilalokahār-in) *adj.* destroyer of the whole world नमो नमस्तेऽखिललोकहारिन् GaṇeP. ii. 6. 10.

**अखिललोकहित** (akhilaloka-hita) *adj.* beneficent to the whole world शिव शंकरेति । नित्यं वदन्त्यखिललोकहिता: प्रशान्ता: BṛNāraP. 21. 73.

**अखिललोकातिशायिन्** (akhilalokātiśāyin) *adj.* which surpasses (the beauty of) all the people तदवश्यमखिललोकातिशायिरूपलावण्येन…दिव्यपुरुषेण केनापि दर्शयित्वात्मानमपसृतेन विप्रलब्धेयम् TilaMañ. 355. 6.

**अखिललोकानुभव** (akhilalokānubhava) *m.* experience of all the people, universal experience महाभारतादिप्रबन्धानां शान्तरसप्रधानताया अखिललोकानुभवसिद्धत्वाच्च RasGaṅ. 37. 7.

**अखिललोकापहास** (akhilalokāpahāsa) *m.* ridicule by all the people

सोऽहं नारायणाख्यो ग्यलिखमखिललोकापहासार्थमेतत् MānaMe. 307. 10.

**अखिललोकेश** ( akhilalokeśa ) *m.* name of Viṣṇu (lord of all the worlds or entire universe) अखिललोकेशः···इति···विष्णोर्नामसहस्रकम् PañcaRā. (Nā.) iv. 3. 40.

**अखिललोह** ( akhila–loha ) *m.* all metals संसिद्धाखिललोहचूर्णवटकादीनां तथा सप्तमः। यो दीयेत भिषग्वराय RasRaSa. 8. 2; 10. 100; 11. 71.

**अखिललोहमौलि** ( akhilaloha–mauli ) *m.* the crest (i. e. the best) of all metals (i. e. gold) भस्मीकृतश्चाखिललोहमौलिः।···निःशेषरोगान्विनिहन्ति वेगात् RasRaSa. 11. 71.

**अखिलवत्सल** ( akhila–vatsala ) *adj.* affectionate to all, kind to all राघवो राज्यमखिलं शशासाखिलवत्सलः AdhyāRā. vi. 16. 55.

**अखिलवन्दन** ( akhila–vandana ) *n.* worship by all एकस्याखिलवन्दनाय विधिना देवत्वमारोपितम् S'ārṅgaPa. 1204.

**अखिलवन्द्य** ( akhila–vandya ) *adj.* fit to be worshipped by all, worthy of respect of all समाजः साधूनामयमखिलवन्द्यश्च भवति JānaPa. 1. 3.

**अखिलवर्जनीय** ( akhila–varjanīya ) *adj.* [*f.* –ā] fit to be avoided or abandoned by all संकीर्णरूपा वसुधात्र वर्णैर्गन्धै रसैर्वाखिलवर्जनीया MānaSā. App. 446B. 2 = TantrSa. 1. 33; S'ilpaRa. i. 3. 16.

**अखिलवर्ण** ( akhila–varṇa ) *m.* **1** all the castes प्रशस्ताखिलवर्णानामीदृग्गन्धा वसुंधरा SamarāSū. 8. 47; क्षितिभृताखिलवर्णाः···धर्मैवर्त्मैनिरता रचनीयाः S'aṅkaDigVi.(Mā.) 5. 19; **2** all sounds न पुनरखिलवर्णगोचरमेकमिति रमणीयम् TattvBi. 31. 4; YuktiSneha. 96. 32 (*on* i. 1. 5)

**अखिलवर्णगोचर** ( akhilavarṇa–gocara ) *adj.* relating to all sounds न पुनरखिलवर्णगोचरमेकमिति रमणीयम् TattvBi. 31. 4; न सर्वेषामखिलवर्णगोचरैकस्मरणजनकत्वम् YuktiSneha. 96. 32 (*on* i. 1. 5)

**अखिलवर्णज** ( akhilavarṇa–ja ) *adj.* [*f.* –ā] born in all castes (i. e. belonging to all castes) अखिलवर्णजाः प्रजाः।···अधुनाप्युत्सवं विदधते S'rīVīraSt. 4.

**अखिलवर्णरूप** ( akhilavarṇa–rūpa ) *n.* the nature or form of all the sounds अखिलवर्णरूपावग्राहि स्मरणमवकल्पते SphoṭSi. 62. 4.

**अखिलवर्णविषय** ( akhilavarṇa–viṣaya ) *adj.* relating to all the sounds मानसमनुव्यवसायरूपमखिलवर्णविषयं संकलनाज्ञानम् NyāyMañ. i. 345. 21.

**अखिलवर्त्मन्** ( akhila–vartman ) *n.* all paths यां विदित्वाखिलं बन्धं निर्मथ्याखिलवर्त्मना। योगी याति परं स्थानम् SaraRaU. 2. 9.

**अखिलवलीमुख** ( akhila–valīmukha ) *m.* all the monkeys तं भूयोऽप्यखिलवलीमुखानखण्डैः शस्त्रौघैर्विदधतमाशु कान्दिशीकान्। आसाद्य···वचनमुवाच रामभद्रः Rāgh. 18. 26.

**अखिलवल्गुवतंस** ( akhilavalgu–vataṁsa ) *m.* the crest of all beautiful ones कापि वामखिलवल्गुवतंसौ माधुरी हृदि सदा स्फुरतान्मे StavMā. 97. 23.

**अखिलवश्यद** ( akhilavaśya–da ) *adj.* [*f.* –ā] which brings about the submission of all आलक्तके कृष्णपशोर्मेघ्याद्यैरखिलवश्यदा (?) ĪśānS'iPa. i. 48. 48.

**अखिलवसुधासुन्दर** ( akhilavasudhā–sundara ) *adj.* beautiful in the whole world अस्ति श्रीमत्यखिलवसुधासुन्दरे चन्दनाद्रौ गन्धर्वाणां कनकनगरी नाम रम्यो निवासः PavaDū.(Dh.) 1.

**अखिलवसुमतीनायक** ( akhila–vasumatīnāyaka ) *m.* all kings आगाद्रेगादभीकैरखिलवसुमतीनायकैः···नगरीं नासरः चेङ्गमाख्याम् ĀnandRa. 7. 10.

**अखिलवस्तु** ( akhila–vastu ) *n.* **1** all things, all objects (मरणोन्मुखः) तत्क्षणेऽप्यनुभूतानामस्ताखिलवस्तुनाम् ViṣṇuP. vi. 5. 31 = BrahmP. 233. 31; तदा च सर्वदेशेभ्यो रत्नान्यखिलवस्तुषु। ऐयरुर्नररत्नानामकुण्ठोत्कण्ठया किल S'āliC. 4. 4; अखिलवस्तुष्वन्तर्यामितया श्रूयमाणः परमेश्वरः S'ivārkaMaDi. i. 368. 17 (*on* i. 2. 19); **2** all affairs, all matters पानीयरेखाप्रतिमस्थैर्यस्याखिलवस्तुषु। तस्याप्रमाणवचसः सेवां प्रणयिनो जहुः RajTa.(Ka.) 8. 871; दिव्यचक्षुर्विवेकात्मा जयत्यखिलवस्तुषु YogVā. ii. 14. 41; **3** all the details (of the case) साक्षिभूता अस्मिन् कार्ये इति सामान्यनिर्देशेऽप्यखिलवस्तुश्रावणं सामर्थ्याद् द्रष्टव्यम् ManuBh. ii. 110. 23 (*on* 8. 80)

**अखिलवस्तुश्रावण** ( akhilavastu–śrāvaṇa ) *n.* a statement of all the details (of the case) साक्षिभूता अस्मिन् कार्ये इति सामान्यनिर्देशेऽप्यखिलवस्तुश्रावणं सामर्थ्याद् द्रष्टव्यम् ManuBh. ii. 110. 23 (*on* 8. 80)

**अखिलवस्तुसंहनन** ( akhilavastu–saṁhanana ) *n.* combination or constitution of all materials पुरुषार्थस्याखिलवस्तुसंहनननिमित्तत्ववचनात् SāṁkhyaPraBh. 36. 9 (*on* 1. 66)

**अखिलवस्त्वन्तर्यामिता** ( akhilavastvantaryāmi–tā ) *f.* the state of being the inner controller of all things (i. e. beings) अखिलवस्त्वन्तर्यामितया श्रूयमाणः परमेश्वरो जीवः···वा प्रधानं वेतिसंशयः BrahmSūBh.(S'rī.) i. 368. 8 (*on* i. 2. 19)

**अखिलवाक्यव्यापिन्** ( akhilavākyavyāp–in ) *adj.* which pervades (i. e. runs through) the whole sentence अनेकविषयमिदं रूपकमखिलवाक्यव्यापि Kāvyānu.(He.) [Parikh Ed.] 401. 12.

**अखिलवाग्गुण** ( akhila–vāgguṇa ) *m.* all the excellences of speech श्रुतिप्रेष्ठोक्तिरखिलवाग्गुणान्वितवागपि। इति द्विधा निगदितो वावदूको मनीषिभिः BhaktiRaSi. ii. 1. 44.

**अखिलवाग्विभूति** ( akhila–vāgvibhūti ) *adj.* possessing all the excellences of speech नमो नमस्तेऽखिलवाग्विभूत्यै BrahmāṇḍP. iii. 13. 26.

**अखिलवाङ्मय** ( akhila–vāṅmaya ) *n.* the entire literature ओमोङ्काराखिलवाङ्मय नित्यशुद्ध त्रयोदशेऽक्षे प्रतितिष्ठ AkṣMāU. 486. 19(5)

**अखिलवाङ्मयविस्तर** ( akhila–vāṅmayavistara ) *m.* the whole expanse or range of literature यस्या विभोरखिलवाङ्मयविस्तरोऽयमाख्यायते परिणतिर्मुनिभिः पुनः सा···बालामभाषत NaiṣC. 11. 16.

**अखिलवाङ्मयस्वामिनी** ( akhilavāṅmaya–svāminī ) *f.* the presiding deity of all Letters अखिलवाङ्मयस्वामिनीं सरस्वतीमपश्यत् UdaySuK. 14. 20.

**अखिलवाङ्मयाध्वन्** ( akhila–vāṅmayādhvan ) *m.* all the paths (i. e. branches) of learning or Letters या···अखिलवाङ्मयाध्वसु यथाभिप्रायमाचेष्टते S'rīKaC. 2. 57.

**अखिलवाञ्छित** ( akhila–vāñchita ) *n.* all wishes or desires देव देहि मेऽखिलवाञ्छितम् GaṇeP. i. 38. 28.

**अखिलवातचिकित्सा** ( akhilavāta–cikitsā ) *f.* treatment of all (diseases caused by) wind-humour भावितामखिलवातचिकित्साम्। श्रावयामि KalyāKā. 12. 1.

**अखिलवातविकार** ( akhila–vātavikāra ) *m.* all diseases due to wind–humour तैलमेतदुपयुज्य मनुष्यो नाशयेदखिलवातविकारान् KalyāKā. 12. 22.

**अखिलवादिन्** ( akhilavād–in ) *m.* propounders of all the philosophical systems इह खलु संगतिसंवेदनापेक्षा सकलपदानामभिधेयधीजनकतेत्यविवादमखिलवादिनाम् NyāyMa. 156. 1.

**अखिलवायुसंक्षोभतस्** ( akhilavāyusaṅkṣobha–tas ) *adv.* due to the disorder of all vital breaths अखिलवायुसंक्षोभतश्शरीरमथ नश्यते KalyāKā. 8. 8.

**अखिलवार** ( akhila–vāra ) *m.* all days (of the week) उद्वाहेऽखिलवारर्क्षतिथिषु क्षौरमिष्टदम् NāraS. 22. 8.

**अखिलवासनाक्षय** ( akhilavāsanā–kṣaya ) *m.* destruction of all the mental impressions अखिलवासनाक्षये सति प्रारब्धफलकमपि कर्म फलसंपत्तये न समर्थम् YogSā. 8. 8(1); 17. 16(1)

**अखिलवासनाहति** ( akhilavāsanā–hati ) *f.* destruction of all mental impressions ये केचित्पुरुषा निजात्मनि चिदानन्दप्रबोधाप्तये यत्नेनाखिलवासनाहतिविधिं वाञ्छन्ति वाञ्छन्तु ते Vidvanmo. 8. 138.

**अखिलवास्तुकर्मन्** ( akhila–vāstukarman ) *n.* all rituals relating to (the construction of) a house नोद्वाहयात्रोपनयप्रतिष्ठासीमन्तचौलाखिलवास्तुकर्म।···कार्यं हि मासादितिथौ कदाचित् VasiS. 12. 5; 13. 2.

**अखिलवाहिनी** ( akhila–vāhinī ) *f.* the whole or entire army or force युक्तमखिलवाहिनीभिः···मकराक्षमैक्ष्वाकशरोऽपि···समक्षमनयज्जनयितुः RāmāCam. 6. 67(1)

**अखिलविक्रिया** ( akhila–vikriyā ) *f.* all the creations or products यश्चेशिता नोऽखिलविक्रियाना(?णा)म्··· वैराजसंज्ञः पुरुषो बभूव BṛBrahmaS. i. 1. 11.

**अखिलविग्रह** ( akhila–vigraha ) *adj.* [*f.* –ā] having everything for (her) body नमो नमस्तेऽखिलविग्रहायै BrahmāṇḍP. ii. 39. 44; *m.* the whole body न्यसेदखिलविग्रहे शिरसि चेति बिन्दुस्वरान् ĪśānS'iPa. i. 18. 2.

**अखिलविघ्नौघ** ( akhila–vighnaugha ) *m.* the entire host of obstacles तेन तस्मै वरो दत्तोऽखिलविघ्नौघहारिणा GaṇeP. i. 44. 17.

**अखिलविज्ञान** ( akhila–vijñāna ) *n.* all knowledge, all sciences तद्द्वाखिलविज्ञानजलवीच्युदधिर्भवान् ViṣṇuP. ii. 14. 11; विदिताखिलविज्ञानौ सर्वज्ञानमयावपि।···यदूत्तमौ ViṣṇuP. v. 21. 18.

**अखिलवित्तप** ( akhilavitta–pa ) *adj.* [*f.* –ā] protecting the whole fortune अहं ममासौ पतिरेष मे सुतो व्रजेश्वरस्याखिलवित्तपा सती BhāgP. x. 8. 42.

**अखिलविद्** ( akhila–vid ) *adj.* all-knowing, omniscient इतीरितः सुरपतिना महेश्वरो हृदि स्थितोऽखिलविदशेषकर्मभिः SkandP. ii(3). 6. 20; प्रवर्तितेऽस्मिन्कर्माध्वन्यखिलविदा कुमारिलेन। उद्धर्तुं भुवनमिदम्··· इयेष चन्द्रचूडः S'aṅkaDigVi.(Mā.) 1. 98; अखिलविदसि···मुरहर Nārāy. i. 1. 10.

**अखिलविदित** ( akhila–vidita ) *adj.* known to all आर्याश्रूर्णीत्यखिलविदितं नाम यस्या गृणन्ति MayūSaṁ. 1. 88; 2. 16.

**अखिलविद्या** (akhila–vidyā) *f.* all (kinds of) lore प्रस्थितोऽखिलविद्यानाम् …निधि: GaṇeP. ii. 46. 11; मन्त्री च तस्य…अखिलविद्यावतारपात्रम्…विभूतिवर्द्धनो नाम UdaySuKa. 24. 22.

**अखिलविद्याधिप** (akhilavidyādhipa) *m.* the lord of all lores or sciences शंकरस्याखिलविद्याधिपत्वविश्वाधिकत्वविश्वसेव्यत्वादय: (गुणा:) SetuBa. 14. 4.

**अखिलविद्यालाभ** (akhilavidyā–lābha) *m.* attainment of all lores or sciences अथ तमखिलविद्यालाभमाकर्ण्य राज्ञ: KathāSaSāg. i. 6. 165.

**अखिलविद्यावग्रह** (akhilavidyāvagraha) *m.* attainment of all lores अग्रे च तस्मादखिलविद्यावग्रहमहामतिमचिन्त्यसिद्धेश्च साधकं कवीनामिन्द्रपदस्य रागिणम्…प्रतानं कविपुङ्गवानामपश्यत् UdaySuKa. 156. 14.

**अखिलविद्याविद्** (akhilavidyā–vid) *adj.* who knows all lores विद्वान् नीतिज्ञ इत्येष सुपाण्डित्यो द्विधा मत: । विद्वानखिलविद्याविन्नीतिज्ञस्तु यथार्हकृत् BhaktiRaSi. ii. 1. 45.

**अखिलविध** (akhila–vidha) *adj.* of all kinds अखिलविधविशाखासख्य-विख्यातशीलाम्…राधिकामर्चयामि StavMā. 70. 23.

**अखिलविधि** (akhila–vidhi) *m.* all injunctions छिद्यन्ते संशया ये … दृष्टमात्रे परेशे ।…अखिलविधिमनोऽगोचरे ब्रह्मणीशे S'atS'lo. 99; (लक्षणम्) तच्चा-तिव्याप्तम्…अखिलविधिषु VidhiRa. 18 (109. 10)

**अखिलविधिच्छिद्र** (akhila–vidhicchidra) *n.* all lacunae in (the performance of) the rites अथाखिलविधिच्छिद्रं(? द्र)पूरणं त्वरितामनो: Īśān-S'iPa. i. 22. 63.

**अखिलविधिव्यासङ्ग** (akhilavidhi–vyāsaṅga) *m.* adherence to all (marriage) rites शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लसद्रोमाञ्चादिविसंष्ठुलाखिल-विधिव्यासङ्गभङ्गाकुल: ।…अवताद्व: शिव: KāvyPra. 701. 3 (comm. सकलवैवाहि-केतिकर्तव्यतारूपव्यापारस्य)

**अखिलविध्यण्ड** (akhila–vidhyaṇḍa) *n.* all the worlds अखिलविध्यण्ड-मण्डलीखण्डनवैतण्डिकम् … त्रिपुरवैरिणम् … निध्याय … मोदते स स: YātrāPra. 3. 63(6)

**अखिलविनियोग** (akhila–viniyoga) *m.* all applications, all usages तद्यन्त्रं प्राग्वदखिलविनियोगेषु योजितम् TantrRā. 23. 100.

**अखिलविपक्षक्षोद** (akhilavipakṣa–kṣoda) *m.* crushing or vanquishing of all the adversaries आधत्त ताम्रम् । मुखमखिलविपक्षक्षोदसंरंभलक्ष्मीकर-किसलयलीलापङ्कजं भद्रकाली HarVi. 7. 63.

**अखिलविप्र** (akhila–vipra) *m.* all Brahmins प्रीतयेऽखिलविप्राणां समं कृत्वा निवेद्य च । प्राग्वदर्घ्योदकं पाणौ दद्यात् PauṣkS. 27. 394.

**अखिलविबुधजन** (akhila–vibudhajana) *m.* all the erudite or learned people एतदभिनवं सुभद्राधनञ्जयाभिधानं नाटकमखिलविबुधजनकर्णा-भरणमिह भवता करणीयम् SubhaDha. 1. 1(8); इत्थम्…पत्रिकामखिलविबुधजनम-हनीयाम् … उपश्रुत्य … °श्रीवजारतरायविजयानन्दरङ्गभूपाल:…महान्तमुत्सवमनुबभूव ĀnandRa. 8. 31(8)

**अखिलविभञ्जन** (akhila–vibhañjana) *n.* dislocation or destruction of all प्रभञ्जन: प्रबलतां भेजेऽखिलविभञ्जने ParamāKā. 127. 15.

**अखिलविभवसंप्राप्ति** (akhilavibhava–samprāpti) *f.* obtainment of all riches सितवस्त्रपुष्पगन्धस्तु नित्यहोमी च मन्त्रजपयजनपर: । धर्मेण योऽर्थवान् सत्यधीर्भवेत्पदमखिलविभवसंप्राप्ते: ĪśānS'iPa. i. 19. 50.

**अखिलविरम** (akhila–virama) *m.* cessation of all (activities) यत्राप्ता: सर्वकामा: स्युरखिलविरमात् केवलीभाव आस्ते । मां तत्रानन्दसान्द्रे कृधि S'atS'lo. 72.

**अखिलविलक्षण** (akhila–vilakṣaṇa) *adj.* distinct or distinguished from everything (else), unparallelled (गुणा:) ते चाखिलविलक्षणा: AnuVyā. 46A. 2 (*on* 3. 2); अखिलविलक्षणतनुलक्षणम्…वन्देमहि…त्वामिह दामोदर Stav-Mā. 48. 15.

**अखिलविशेषगुण** (akhila–viśeṣaguṇa) *m.* all specific qualities आत्मा कदाचिदखिलविशेषगुणशून्य: NyāySiA. 221. 20; ज्ञानस्याखिलविशेषगुणशून्यत्वमस्तु वा मा वा NyāySiA. 221. 24.

**अखिलविशेषविचक्षण** (akhilaviśeṣa–vicakṣaṇa) *adj.* clever in knowing all peculiarities अयम् (कपि:)…भारतेऽस्मिन्नखिलविशेषविचक्षण:… विलसति RāmC. 6. 34.

**अखिलविश्रम्भधामन्** (akhilaviśrambha–dhāman) *n.* abode of complete confidence सा च मे…अखिलविश्रम्भधाम Kād. 177. 10.

**अखिलविश्वकर्तृ** (akhilaviśva–kartṛ) *adj.* maker of the entire universe स सिद्धनाथोऽखिलविश्वकर्ता भर्ता शिवाया: BrahmP. 100. 19.

**अखिलविश्वत्रितय** (akhila–viśvatritaya) *n.* all the three worlds इदं च…अखिलविश्वत्रितयविश्रुतमहिम्ना महावीरजिनवरप्रतिमया प्रसाधितस्य सिद्धायतन-मैत्र्या पवित्रितं तीर्थम् TilaMañ. 319. 22.

**अखिलविश्वप्रभु** (akhilaviśva–prabhu) *m.* lord of the entire universe कपालेभ्यो(? लैर्यो) बद्ध: कथमखिलविश्वप्रभुरसौ SubhāRaK. 42. 36.

**अखिलविश्वभावन** (akhilaviśva–bhāvana) *adj.* who promotes or makes prosper all the worlds नमो नमस्तेऽखिलविश्वा(? श्व)भावन BrahmāṇḍP. ii. 36. 53.

**अखिलविश्वरूप** (ahilaviśva–rūpa) *adj.* of the form of all the worlds आद्यानिरुद्धाखिलविश्वरूप त्वं पाहि न: सर्वभयादजस्रम् VaDuU. 434. 3; योऽनन्तरूपोऽखिलविश्वरूपो गर्भेऽपि लोकान्वपुषा बिभर्ति ViṣṇuP. v. 3. 12; BrahmP. 182. 16; विष्णो… । अनिरुद्धाच्युत (v. l. खिल)विश्वरूप त्वं पाहि न: BṛNāraP. 2. 11.

**अखिलविश्वसृष्टि** (akhilaviśva–sṛṣṭi) *f.* creation of the entire universe यो हेलयैवाखिलविश्वसृष्टिमुन्मीलयत्यब्जभव: स वोऽव्यात् S'rīKaC. 1. 25.

**अखिलविश्वहेतु** (akhilaviśva–hetu) *m.* cause of the entire universe अणोरणीयान् महतो महीयान् सनातनात्माखिलविश्वहेतु: BṛNāraP. 31. 149.

**अखिलविश्वात्मन्** (akhilaviśvātman) *m.* the form of the entire universe अतोऽखिलविश्वात्मना प्रथमबोधनार्थमकारककाराद्यक्षराण्यावश्यकानि Setu-Ba. 239. 21.

**अखिलविश्वोपकारिन्** (akhilaviśvopakārin) *adj.* helping all the worlds अखिलविश्वोपकारिण: कुमारहरिवाहनपादपद्मान् … कमलगुप्त: … विज्ञापयति TilaMañ. 384. 22; 179. 13.

**अखिलविष** (akhila–viṣa) *n.* all the poisons पायात्…पक्षवातैरखिलविष-हरैराश्रितार्तिघ्नवृत्त: श्रीमान् व: पन्नगारि: S'ilpaRa. ii. 25. 90.

**अखिलविषय** (akhila–viṣaya) *m.* **A** all matters नव धिष्ण्यानि नृपाणां विनाशनदान्येव सर्वकार्येषु । अत एवाखिलविषये नूनं वर्ज्यानि VasiS. 22. 10; **B** all the objects or beings आत्मन्…अखिलविषयसमुज्जीवनायुस्त्वमेव KumāCaSaṁ. 109. 6; यत्सत्यमेवंविधमखिलविषयातिशायिनमपवर्गस्य सुभगभावमव-लोक्य जानीम: AmṛUda. 5. 11(34)

**अखिलविष्टप** (akhila–viṣṭapa) *n.* all the worlds अखिलविष्टपाद्भुतैक-सदनं तदायतनम् TilaMañ. 292. 8; 35. 18; YaśasCam. i. 94. 1; स संगसीष्टाखिल-विष्टपेषु सद्य: प्रसादेन कवि: पुराण: S'rīKaC. 1. 24; NayaMañ. IV. iv. 7. 13.

**अखिलविसंवाद** (akhila–visaṁvāda) *m.* all sorts of disputes or quarrels विसंवादप्रसङ्गेनाखिलविसंवादैककारणभूतं द्यूतसमाह्वयव्यवहारमाह Bāla-Krī. i. 272. 8 (*on* 2. 203)

**अखिलवीर** (akhila–vīra) *m.* all the warriors ददृशुरखिलवीरास्तत्त्वमग्र्यं जयस्य S'rīKaC. 23. 47; TilaMañ. 81. 7.

**अखिलवीरुध्** (akhila–vīrudh) *f.* all the plants or creepers संसेचनं मूले पोषायाखिलवीरुधाम् BṛBrahmaS. iii. 9. 127.

**अखिलवीर्य** (akhila–vīrya) *n.* full strength त्वं देवि…भुवने…शक्तासि दु:खशमनेऽखिलवीर्ययुक्ते DevīBhāP. iv. 15. 15.

**अखिलवृजिनघ्न** (akhilavṛjina–ghna) *adj.* destroyer of all the sins तमखिलवृजिनघ्नं व्याससूनु(? नुं) नतोऽस्मि ĀdiP. 4. 25.

**अखिलवृत्तान्त** (akhila–vṛttānta) *m.* the whole story, the complete account जमदग्निसुत:…। प्रोवाचाखिलवृत्तान्तं राज्ञश्चाप्यात्मन: पितु: BrahmāṇḍP. ii. 34. 33.

**अखिलवृत्ति** (akhila–vṛtti) *f.* all the functions or states (of the mind) संधयोऽखिलवृत्तीनामभावाश्चावभासिता: । निर्विकारेण येनासौ कूटस्थ इति चोच्यते PañcDa. 8. 21; जाग्रदादावप्यखिलवृत्तीनां वृत्तिग्राह्यत्वस्वीकार एव युक्त इति SāṁkhyaPraBh. 66. 28 (*on* 1. 148); व्युत्थानकालीन:…चित्तवृत्तिनिरोधो न …°मोक्षे हेतु:…अखिलवृत्तिसंस्कारानुच्छेदकत्वाच्च YogSā. 2. 2(1); 2. 8(1)

**अखिलवृद्ध** (akhila–vṛddha) *m.* all the aged persons तावत्स बालोऽ-खिलवृद्धवृद्ध: प्रोवाच SkandP. iv. 10. 134 = S'ivaP. iii. 13. 50 (311B. 9)

**अखिलवेद** (akhila–veda) *m.* all the Vedas अखिलवेदसारकृतशेखरीम् ।… त्रिपुरसुन्दरीं मनसि भावयामि NavaRaMā.(S'aṅ.) 8; अखिलवेदोक्तविधिविदा वेधसेवापरेण स्वयं पुरोधसा TilaMañ. 78. 11; त्र्यन्तनिष्ठा हि महात्मान:…अखिल-वेदवेद्यं मामेव ज्ञात्वा…उपासते GītāBh.(Rā.) 469. 8 (*on* 9. 20); अत्र वेद: स्वयं प्राह सिसृक्षोरादिपूरुषात् । जन्मैवाखिलवेदानाम् ĪśānS'iPa. ii. 1. 54(10); Tattv-Pradī.(Ci.) 51. 8; SaduktiKa. 38. 9; य: श्रीनिवासोऽखिलवेदज्ञेय:…उपयामि तम् VedāntRaMañ. 4. 10 (148. 20); यथाशक्त्यखिलवेदाध्ययनवत्त्वेन…युक्तस्य Tattv-Prakā. 188B. 7 (*on* iii. 4. 12); अस्य पुनरन्यार्थतयाखिलवेदादिवेद्यत्वात् NyāySu. (Ja.) 2A. 6 (*on* i. 1. 1); 3A. 1 (*on* i. 1. 1); आलोड्याखिलवेदराशिमसकृद्यत्तारकं ब्रह्म तद्राम:…इति यो विज्ञाय…प्राह AdhyāRā. vi. 16. 49; MīmāKau. iii(i). 74. 13 (*on* i. 2. 42); BālaKrī. i. 173. 10 (*on* 1. 266)

**अखिलवेदिन्** (akhila–vedin) *adj.* all-knowing, omniscient अपूज्य-मानास्ते पूज्या: सर्वेऽप्यखिलवेदिन: । आदाय तत्कल्पतरुं निपेतुर्द्यां दिवौकस:

SamarāSū. 6. 17; आवेदनीयं किमखिलवेदिषु भवादृशेषु NīlaVi. 64. 1.

**अखिलवैदिककर्मन्** ( akhila-vaidikakarman ) *n.* all the Vedic ritual acts तत्रापि किमखिलवैदिककर्मानधिकारिजनपरिगृहीतत्वं हेतुः ĀgaPrā. 68. 11.

**अखिलवैरिन्** ( akhila-vairin ) *m.* all the enemies कार्तिकेयेन···। सेनापतित्वमाप्राप्तं प्रताप्याखिलवैरिणः ParamāKā. 90. 28.

**अखिलवैष्णव** ( akhila-vaiṣṇava ) *m.* all the Vaiṣṇavas (those devoted to Viṣṇu as the Supreme God) महापूजैव कर्तव्या स्वशक्त्याखिलवैष्णवैः SkandP. ii(9). 29. 39.

**अखिलव्यञ्जन** ( akhila-vyañjana ) *n.* all the condiments तृप्तान्नं षड्रसवदखिलव्यञ्जनयुतम्···यशोदासूनो···अशान BhagaMāPū. 6.

**अखिलव्यवहार** ( akhila-vyavahāra ) *m.* **A** all the worldly activities नन्वभावानभ्युपगमे भावानामितरेतरसंकरादखिलव्यवहारविप्लवः प्राप्नोति NyāyMañ. i. 52. 20; **B** all the affairs of the state, entire statecraft अखिलव्यवहारज्ञो राज्ञाकारि क्रमेण सः PariPar. 1. 215; **C** all the (bodily) activities तत्र विदेहा नाम स्थूलदेहनिरपेक्षेण लिङ्गदेहेनाखिलव्यवहारक्षमा हिरण्यगर्भादयः YogSā. 19. 14(1)

**अखिलव्याकरण** ( akhila-vyākaraṇa ) *n.* all the grammars वेत्थाखिलव्याकरणानि विद्वन् S'aṅkaDigVi.(Mā.) 7. 42.

**अखिलव्याधि** ( akhila-vyādhi ) *m.* all the diseases or ailments अखिलव्याधिविध्वंसि···। गाङ्गेयं चाथ रूप्यम् RasRaSa. 5. 3 = RaseCin. 6. 7; विषं हि नाम···अखिलव्याधिविध्वंसविधायकतामासादयति RaseCin. 7. 1.

**अखिलव्यापद्** ( akhila-vyāpad ) *f.* all the calamities शाखाः पञ्च तवोद्गता भुजतरोस्ताभिस्तथैकं धृतं संभूयैव किलासिपत्रमभवत्तत्रापि चित्रान्तरम् । विश्वव्यापियशःप्रसूनमखिलव्यापच्छिदे श्रीफलम् SaduktiKa. 206. 27.

**अखिलव्यापार** ( akhila-vyāpāra ) *m.* all the functions or activities चक्षुरादिद्वारतां विनाखिलव्यापारेषु बुद्धेः स्वतः करणत्वं न संभवेत् SāṁkhyaPraBh. 86. 36 (*on* 2. 44); यत्प्रत्यस्तमितप्रपञ्चमखिलव्यापारपारं गतं प्रत्यग्ज्योतिरनुत्तरं शमधनैरालोच्यमेतादृशैः NīlaVi. 44. 8.

**अखिलव्यापिन्** ( akhila-vyāpin ) *adj.* all pervading शुद्धः सूक्ष्मोऽखिलव्यापी प्रधानात्परतः पुमान् ViṣṇuP. i. 12. 52; अखिलव्यापिन् प्रासादे सुस्थिरो भव SkandP. ii(2). 27. 96.

**अखिलव्याप्तमहिमन्** ( akhilavyāpta-mahiman ) *adj.* whose greatness has spread all over (the universe) नमः···। शंकरायाखिलव्याप्तमहिम्ने BrahmāṇḍP. ii. 25. 16.

**अखिलव्यास** ( akhila-vyāsa ) *m.* the full width or breadth तथापि चाखिलव्यासलेखनात्संततिक्षयः BhaviP. 327B. 8 (ii(1). 7. 77)

**अखिलव्योमचर** ( akhila-vyomacara ) *m.* all the planets सुराधिपाद्धानि नव क्रमेण । पूर्वार्द्धमध्यापरभागगेन्दुर्मुङ्क्तेऽखिलव्योमचरास्तथैव VasiS. 3. 16.

**अखिलव्रत** ( akhila-vrata ) *n.* all vows यत्···अखिलव्रतगुप्तिसमितिलतारामपुष्पाकरसमयम्···उशन्ति सद्धीमनाः YaśasCam. ii. 377. 13.

**अखिलव्रीहि** ( akhila-vrīhi ) *m.* whole rice-grains पार्थिवः···अखिलव्रीहिमध्यावस्थापितार्यवृद्धाध्यासितशयनशिरोभागम्···सूतिकागृहमपश्यत् Kād. 71. 16.

**अखिलशक्ति** ( akhila-śakti ) *f.* all the powers वृष्णेः···भगवान्···जातः ···श्रीकृष्ण इत्यभिहितोऽखिलशक्तिपूर्णः SātvaT. 2. 48; अखिलशक्त्याविर्भावपूर्वकमाविर्भूतस्य तस्य···माहात्म्यमुच्यते AṇuBh. 226. 12 (*on* iii. 3. 23)

**अखिलशक्तिधर** ( akhilaśakti-dhara ) *adj.* equipped with all faculties योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां संजीवयत्यखिलशक्तिधरः स्वधाम्ना BhāgP. iv. 9. 6.

**अखिलशब्द** ( akhila-śabda ) *m.* all words परमात्मनि सिद्धेऽखिलशब्दसमन्वये TattvPrakā. 72B. 2 (*on* i. 4. 15)

**अखिलशरीर** ( akhila-śarīra ) *n.* the entire body व्यानो नाम विश्वग्गमनवानखिलशरीरवर्त्ती VedāntSā.(Sa.) 11. 11; VedāntPari. 291. 2; VedāntRaMañ. 1. 3 (28. 17)

**अखिलशरीरक** ( akhilaśarīraka ) *adj.* having the entire (universe) as the body अखिलात्मनि अखिलशरीरके S'rutaPra. iA. 214. 18 (*on* i. 1. 1)

**अखिलशस्त्रास्त्र** ( akhila-śastrāstra ) *n.* all weapons and missiles त्वं बालः स्थविरो भूपोऽखिलशस्त्रास्त्रवित्तमः PadmP. iv. 42. 14.

**अखिलशाकवर्ग** ( akhila-śākavarga ) *m.* all classes of vegetables वासागुलूचीसपुनर्नवार्कपुष्पादितिक्तकटुकाखिलशाकवर्गैः KalyāKā. 11. 80.

**अखिलशाखिन्** ( akhila-śākhin ) *m.* all trees द्रुमस्त्वखिलशाखिषु NānārthāSaṁ. i. 26. 63.

**अखिलशान्ति** ( akhila-śānti ) *f.* pacification of all (evil influences) अखिलशान्तये । अभिषिञ्चेत् TantrRā. 33. 36 (comm. अखिलशान्तये इत्यत्राखिलशब्देन क्रूरदशागोचरेत्यादय उच्यन्ते)

**अखिलशास्त्र** ( akhila-śāstra ) *n.* all the sciences, व्यासो वदत्यखिलशास्त्रनिदेशकर्ता PañcaRā.(Nā.) iv. 8. 5; अहमीदृशमपि पुरुषं कलिताखिलशास्त्रं··· दासयामि Manmatho. i(7). 421. 10; पाद एव नः शुभः शुभग्रहैर्विद्ध इत्यखिलशास्त्रमतं हि VasiS. 32. 75; बभूव पुत्रः···अखिलशास्त्रवेत्ता SiddhāTaVi. 408. 3.

**अखिलशिल्प** ( akhila-śilpa ) *n.* all decorative arts कलिते ललितामुखेन्दौ जाड्यं स यात्यखिलशिल्पधुरंधरोऽपि UjjvaNīMa. 248. 5.

**अखिलशिल्पकर्मन्** ( akhila-śilpakarman ) *n.* all (kinds of) arts संगीतविद्याखिलशिल्पकर्म···कार्यं द्वितीये दिवसे VasiS. 12. 7.

**अखिलशिष्य** ( akhila-śiṣya ) *m.* all pupils मण्डनमिश्रः···प्रत्यहमखिलशिष्यैः सह···निवसन्···व्यासम्···निमन्त्रयामास S'aṅkaVi.(Ā.) 238. 15.

**अखिलशीर्षरुज्** ( akhila-śīrṣaruj ) *f.* all kinds of aches of the head धात्रीवचामलयजम्···। सर्वं समं दृषदि तण्डुलतोयपिष्टं लिम्पेच्छिरस्यखिलशीर्षरुजां शमार्थम् ĪśānS'iPa. i. 45. 147.

**अखिलशुभ** ( akhila-śubha ) *n.* all auspicious things गिरिश···चरणयुगलस्थेऽखिलशुभे···कमर्थं दास्येऽहं भवतु भवदर्थं मम मनः S'ivāL. 27.

**अखिलशुभाशुभ** ( akhila-śubhāśubha ) *n.* all auspicious and inauspicious things तदखिलशुभाशुभबीजनाशोपगतं (मनः) नात्मानुकूल्येन वर्तते NyāyKa. 286. 25.

**अखिलशुश्रूषा** ( akhila-śuśrūṣā ) *f.* complete service शिष्यग्रहणं तु पुत्रत्वेऽप्यखिलशुश्रूषानियमार्थम् BālaKrī. i. 35. 6 (*on* 1. 15)

**अखिलशून्य** ( akhila-śūnya ) *n.* complete void कालस्वभावपरमाण्वसुभृत्प्रधानस्कन्धप्रतीत्यखिलशून्यकथाप्रसङ्गे । जन्मादिसूत्रमवतीर्णम् SaṁkṣeS'ā. 1. 528 (i. 377. 26)

**अखिलशोक** ( akhila-śoka ) *m.* all kinds of miseries इयं च सिद्धिः··· अखिलशोकरहितत्वाद्विशोकेत्युच्यते YogSā. 60. 12.

**अखिलशोधवर** ( akhila-śodhavara ) *m.* all cleansing agents वरसूतकः। अखिलशोधवरेण च वै यथा सकलकञ्चुकदोषविवर्जितः RasPraSu. 3. 5.

**अखिलश्री** ( akhila-śrī ) *f.* all riches मकरध्वजभूभर्ता···मोढपल्लीनामवेलाकूले मूलेऽखिलश्रियाम् ।···स्वपुत्रम्···समालिङ्ग्य UttaKuC. 475.

**अखिलश्रुत** ( akhila-śruta ) *n.* all kinds of (traditional) lores उपाध्यायमखिलश्रुतोपाध्यायं तम्···स्तुवे RāghPāṇ.(Dha.) 12. 50; अखिलश्रुतधारोद्धारादिपुरुषविदुष एकमेव (प्रमाणम्) YaśasCam. ii. 318. 1.

**अखिलश्रुति** ( akhila-śruti ) *f.* all the Vedas ज्ञानं विलोचनमिति प्रथिते तदीये नेत्रे उभे··· । एकं तयोः श्रुतिपथस्य समीपमात्रं यातं प्रपन्नमखिलश्रुतिपारमन्यत् JānaHa. 6. 58; अखिलश्रुतिस्मृतिवचांसि वयं घटयामहे SaṁkṣeS'ā. 3. 242 (ii. 290. 25); यः स्वानुभावमखिलश्रुतिसारमेकम्···करुणयाह···तं व्याससूनुमुपयामि BhāgP. i. 2. 3; उपदेशोऽयमखिलश्रुतिस्मृतिभिरुच्यते BṛBrahmaS. i. 6. 37; सप्तमहायनेऽखिलश्रुतिपारंगततां गतो वटुः S'aṅkaDigVi.(Mā.) 5. 1.

**अखिलश्रेयस्** ( akhila-śreyas ) *n.* all happiness देशनान्तेऽखिलश्रेयःसंभारात्मंभरिर्जनः । प्रणम्य तं विभुं तांश्च ययौ स्थानं निजं निजम् PāṇḍaC. 18. 156.

**अखिलश्रोतृ** ( akhila-śrotṛ ) *adj.* listening all श्रुतिषु तस्य सर्वेभ्योऽखिलश्रोतृत्वान्तर्यामित्वाशनायाद्यतीतत्वा ··· द्यतिशयस्य निर्देशात् TattvPrakā. 89A. 8 (*on*. ii. 1. 23)

**अखिलश्लाघ्य** ( akhila-ślāghya ) *adj.* laudable by all अखिलश्लाघ्यश्च मे विक्रमः ĀnandRa. 8. 6.

**अखिलश्वेतपटाधिप** ( akhilaśvetapaṭādhipa ) *m.* chief of the entire S'vetāmbara sect of the Jainas तस्याखिलश्वेतपटाधिपस्य शक्नोति कः श्वेतपटान् प्रमातुम् Gurvā. 282.

**अखिलसंवेत्तृ** ( akhila-saṁvettṛ ) *adj.* knowing all, omniscient अज्ञताखिलसंवेत्तुर्घटते न कुतश्चन UpādhiKha. 1B. 2.

**अखिलसंश्रय** ( akhila-saṁśraya ) *m.* shelter of all यास्यत्यखिलसंश्रयम् BṛBrahmaS. iv. 8. 26.

**अखिलसंसार** ( akhila-saṁsāra ) *m.* the whole world, the entire cycle of deaths and births भगवन्तोऽखिलसंसारदुःखहन्तारः ViṣṇuP. iv. 5. 16; अपश्यम् ··· अखिलसंसारसृष्टेरादिभूतं भगवन्तमम्बिकानाथम् UdaySuKa. 65. 22; अखिलसंसारमूलाविद्याया हि···ध्वस्तायाः पुनरुद्भवाभावात् NyāyMa. 308. 2; अनया वेधितं चेतो बिसतन्तावपि क्षणात् । पश्यत्यखिलसंसारसागरानर्थविभ्रमम् YogVā. iii. 114. 73.

**अखिलसंस्कार** ( akhila-saṁskāra ) *m.* **A** all impressions असंप्रज्ञातयोगेनाखिलसंस्कारदाहकेन प्रारब्धकर्माप्यतिक्रम्यत इति ज्ञानाद्विशेषः (योगस्य) YogVār. *on* 1. 1; संप्रज्ञातकृताखिलसंस्कारोन्मूलकत्ववचनात् तस्य संस्कारजनकत्वं सिध्यति YogSūVṛ. *on* 1. 51; एवं क्रमेण चरमासंप्रज्ञातेऽखिलसंस्कारदाहो भवति YogSā. 20. 9(1); बुद्धेरेवाखिलसंस्काराधारता न तु चक्षुरादेः SāṁkhyaPraBh. 86. 22 (*on* 2. 42); **B** all consecrations शिवदीक्षामुपागम्याखिलसंस्कारसंस्कृतः।

शिवाचार्यैर्विमुक्तोऽहं पशुपाशैस्तदागमात् SkandP. i(2). 9. 30.

**अखिलसंस्कृति** (akhila–saṁskṛti) *f.* all sanctifying ceremonies जनयित्वात्मजान्वेदविधिनाखिलसंस्कृतीः । न कुर्याच्च: पिता तस्य नरकान्नास्ति निष्कृतिः BrahmP. 111. 11.

**अखिलसखी** (akhila–sakhī) *f.* all female companions अधिगतमखिलसखीभिरिदं तव वपुरपि रतिरणसज्जम् GītGo. xi. 20. 6.

**अखिलसंघलोक** (akhilasaṅgha–loka) *m.* people from all (Jaina) congregations स पत्रिकाः । प्राहिणोदखिलसंघलोकमाह्वातुम् VasaViKā. 10. 20.

**अखिलसच्छक्ति** (akhila–sacchakti) *adj.* having all the real (i. e. good) powers अखिलसच्छक्तिः…इष्टो नो रमापतिः Tattvodyo. 1A. 1.

**अखिलसच्छास्त्र** (akhila–sacchāstra) *n.* all the real (i. e. authoritative) sacred works अर्थः स्वयं विनिर्णीतो वासुदेवेन… । इत्यतोऽखिलसच्छास्त्रविरुद्धत्वेन नानुमा । वर्तते तत्र तेनेशो निर्णीतोऽखिलसद्गुणः AnuVyā. 42B. 5 (*on* 3. 2)

**अखिलसत्कृत** (akhila–satkṛta) *m.* name of Viṣṇu (honoured by all) अष्टबाहुर्दक्षयज्ञपावनोऽखिलसत्कृतः (इत्येतत् कथितं विप्र विष्णोर्नामसहस्रकम्) SātvaT. 6. 49.

**अखिलसत्त्वधामन्** (akhilasattva–dhāman) *n.* **A** the abode of all beings or of all *sattva*-qualities त्वय्यम्बुजाक्षाखिलसत्त्वधाम्नि समाधिनावेशितचेतसैके । त्वत्पादपोतेन महत्कृतेन कुर्वन्ति गोवत्सपदं भवाब्धिम् BhāgP. x. 2. 30; **B** whose body is all creatures नैवं विदामो भगवन्प्राणरोधं चराचरस्याखिलसत्त्वधाम्नः BhāgP. iv. 8. 81 (Śrīdhara अखिलसत्त्वधाम्नः सर्वप्राणिशरीरस्य)

**अखिलसत्त्वनिकेतता** (akhilasattvaniketa–tā) *f.* being the abode of all creatures तव परि ये चरन्त्यखिलसत्त्वनिकेततया त उत पदाक्रमन्त्यविगणय्य शिरो निर्ऋतेः BhāgP. x. 87. 27.

**अखिलसत्त्वमूर्ति** (akhilasattva–mūrti) *adj.* whose form consists of all *sattva*-qualities, embodiment of all *sattva*-qualities (परस्मै पुरुषाय) भूयो नमः…अखिलसत्त्वमूर्तये BhāgP. ii. 4. 13.

**अखिलसत्त्वराशि** (akhilasattva–rāśi) an accumulation of all *sattva*-qualities जुष्टं बताद्याखिलसत्त्वराशेः सांसिध्य(? द्ध्य)मक्ष्णोस्तव दर्शनान्नः BhāgP. iii. 21. 13; ज्ञानात्मकस्याखिलसत्त्वराशेः…। किं वा जगत्यत्र समस्तपुंसामज्ञातमस्यास्ति हृदि स्थितस्य BrahmP. 191. 32.

**अखिलसत्त्वहित** (akhilasattva–hita) *n.* good or well-being of all creatures यतिरिवाखिलसत्त्वहितव्रतो जलनिधिः सकलैरवलोक्यताम् RāghPāṇ.-(Dha.) 8. 2.

**अखिलसत्यता** (akhila–satyatā) *f.* reality of all (worldly objects) बोधः… । स्वोत्पत्तिमात्रात्संसारे दहत्यखिलसत्यताम् PañcDa. 9. 75.

**अखिलसत्रसन्धि** (akhilasatra–sandhi) *adj.* whose (body-) joints are all the *satra*-sacrifices प्राग्वंशकायाखिलसत्रसन्धे ।…भगवन् प्रसीद ViṣṇuP. i. 4. 34.

**अखिलसद्गुण** (akhila–sadguṇa) *adj.* having all *sattva*-qualities तेनेशो निर्णीतोऽखिलसद्गुणः AnuVyā. 42B. 6 (*on* 3. 2); *m.* all good qualities क्षमया तु विना भूपो न भात्यखिलसद्गुणैः ŚukraNī. 1. 82.

**अखिलसन्धि** (akhila–sandhi) *m.* all joints (of the body) जंभज्जृंभायताः काश्चित्तदाननकृतेक्षणाः । मन्दं बभञ्जुरङ्गानि स्वनन्त्यखिलसन्धिषु PadmP. (Ra.) 115. 27.

**अखिलसप्तलोक** (akhila–saptaloka) *m.* all the seven worlds तिष्ठन्तु तावदथवाखिलसप्तलोकसंचारचातुरजुषः प्रमथाधिनाथाः HarVi. 33. 46.

**अखिलसमुद्रावधि** (akhilasamudrāvadhi) *adj.* whose limits are all the oceans, spread up to all the oceans (सुदत्तस्य) उपकरणमखिलसमुद्रावधिवसुधातले दुर्वारप्रसरपर्यैश्वर्यमेव द्विषद्दण्डधरः प्रतीहारः YaśasCam. ii. 239. 5.

**अखिलसंपद्** (akhila–sampad) *f.* entire wealth कस्य वंशोद्भवो ब्रह्मन्ननरण्यो नृपश्च सः । सुतां दत्त्वा स च कथं ररक्षाखिलसंपदः ŚivaP. ii(3). 33. 63 (163B. 1)

**अखिलसंबोध्यविशेष्यक** (akhilasambodhyaviśeṣya–ka) *adj.* having as principal object all who are to be addressed त्वंपदार्थाभेदपरशब्दत्वेन अपरोक्षज्ञानजनकत्वोक्तौ 'यूयं राजानः' इत्यतोऽखिलसंबोध्यविशेष्यकराजत्वप्रकारकापरोक्षशाब्दापत्तिः JñānBiPra. 32. 31.

**अखिलसंभार** (akhila–sambhāra) *m.* all the materials उदेमि भवतो देवादिच्छयैव विवस्वतः । संभृत्याखिलसंभारमिच्छयैव स्वनिर्मितम् LakṣmīT. 22. 9.

**अखिलसर्गध्वंस** (akhilasarga–dhvaṁsa) *m.* destruction of the entire creation युगपदखिलसर्गध्वंसवादे तु भेदः NyāyMañ. i. 230. 31.

**अखिलसस्य** (akhila–sasya) *n.* all (sorts of) crops अखिलसस्यनिष्पत्तये ववर्ष भगवान् पर्जन्यः ViṣṇuP. iv. 20. 30; VasiS. 2. 24; 6. 30; 11. 16.

**अखिलसाक्षात्कार** (akhila–sākṣātkāra) *m.* perception of the entire (universe) योगिनां सर्वाविच्छेदेनैकदाखिलसाक्षात्कारसंभवात् YogSā. 71. 10(4)

**अखिलसात्वत्** (akhila–sātvat) *m.* all the Yādavas (ब्रह्मा) ददर्श तत्राखिलसात्वतां पतिम् BhāgP. ii. 9. 14 (but Vīrarāghava अखिलानां सात्वतां सत्वधर्मैनिष्ठानां पतिं स्वलोकप्रापणेन रक्षकं, सात्वतं पंचरात्रम्; *on* BhāgP. ii. 4. 20 अन्धकादयो यादवप्रभेदाः)

**अखिलसाधन** (akhlia–sādhana) *adj.* [*f.* –ī] accomplisher of everything (i. e. whatever is desired) भवत्वखिलसाधनी मयि च भक्तिरत्युत्कटा Nārāy. iii. 9. 8.

**अखिलसाधारणता** (akhilasādhāraṇa–tā) *f.* the state of being common to all (i. e. giving equal treatment to all) विष्णोः पदमखिलसाधारणतया ददाना केनासि त्वमिह तुलनीया कथय नः GaṅgāL. 11.

**अखिलसाधुसमुदय** (akhila–sādhusamudaya) *m.* groups of all good people आलोक्यमानः सानन्दम् अखिलसाधुसमुदयैः… (सर्वप्रकृतियथोचितविधिविहितगृहीतोपग्राह्यजाल–श्रीवजारतराय)– °विजयानन्दरङ्गभूपालः…अभूतपूर्वं महान्तमुत्सवमनुबभूव ĀnandRa. 8. 31(21)

**अखिलसाधुसंमत** (akhilasādhu–sammata) *adj.* honoured or highly respected by all the good people पुरुषं पुरातनं महानुभावोऽखिलसाधुसंमतः ।… अब्रवीत् (बलिः) BhāgP. viii. 23. 1.

**अखिलसामग्री** (akhila–sāmagrī) *f.* all provisions अखिलसामग्रीसमेते सदा दुर्गातिप्रियदेव मामकमनोदुर्गे निवासं कुरु ŚivaL. 42.

**अखिलसामन्त** (akhila–sāmanta) *m.* all the feudatory kings यथावृत्तमात्मीयमुदधिवृत्तान्तमखिलसामन्तान्तःपुरेषु चिरन्तनाख्यानकव्यपदेशेन स्वप्रयुक्ताभिः कथकपुरंध्रिभिः प्रकाशयतः…मे गताः कतिपयेऽपि दिवसाः TilaMañ. 322. 8.

**अखिलसामर्थ्य** (akhila–sāmarthya) *n.* all powers (which can produce result) यथा चोत्पादस्य पुरस्तादखिलसामर्थ्यरहितस्याङ्कुरप्रागभावस्योपकारं किंचित्कुर्वन्तोऽपि बीजादयोऽङ्कुरमारभन्ते तदुत्पादस्यैव तत्प्रागभावनिवृत्तिरूपत्वात् TātpT. (Vā.) 549. 12 (*on* iii. 2. 14)

**अखिलसामर्थ्यविरहिन्** (akhilasāmarthyavirah–in) *adj.* devoid of all powers (which can produce result) अनाद्यविद्याविनिर्मितालीकाकारविकल्पविज्ञानोदयमन्तरेणाखिलसामर्थ्यविरहिणोऽसतस्तत्र तत्र प्रकाशगोचराभावानिरूपणात् NyāyMa. 108. 8.

**अखिलवाक्य** (akhila–vākya) *n.* the entire sacred literature or all the scriptures इत्थं निशम्याखिलवाक्यसारवेत्तावदद्वाक्यमिदं गिरीशम् GaṇeP. i. 45. 15.

**अखिलसार** (akhila–sāra) *m.* strength of all (the worlds) बटुः (वामनः) जगाम तत्राखिलसारसंभृतः BhāgP. viii. 18. 20; *adj.* [*f.* –ā] which contains the essence of all i. e. best of all सखीनखिलसारया पथिषु हासयन्तं गिरा व्रजे विजयिनं भजे…केशवम् StavMā. 28. 8.

**अखिलसिंहलद्वीप** (akhila–siṁhaladvīpa) *m. n.* the whole Island of Siṁhala (i. e. Ceylon) देवि सोऽयमखिलसिंहलद्वीपभर्तुर्महाराजचक्रकेतोरात्मजन्मा TilaMañ. 231. 17.

**अखिलसिद्धि** (akhila–siddhi) *f.* acquisition of all (supernatural powers like *animā* etc.) योगिनां तु तपसाखिलसिद्धिः NaiṣC. 5. 3.

**अखिलसिद्धिकर** (akhilasiddhi–kara) *adj.* bringing success in all undertakings or works कथयामि न्यासमखिलसिद्धिकरम् PañcRā.(Nā.) iii. 3. 23; षडिति बीजवराणि समुद्धरेदखिलसिद्धिकराणि यथाक्रमम् ĪśānŚiPa. i. 15. 10.

**अखिलसिद्धिद** (akhilasiddhi–da) *adj.* bringing success in all (undertakings) इन्द्रप्रस्थमभून्नाम्ना तदाद्यखिलसिद्धिदम् BrahmāṇḍP. iii. 12. 44; महामन्त्रो वैदिकोऽखिलसिद्धिदः GaṇeP. i. 36. 19.

**अखिलसिद्धिभाज्** (akhilasiddhi–bhāj) *adj.* obtaining success in all undertakings बिलद्वारेऽष्टलक्षं तु जपित्वाऽखिलसिद्धिभाक् ĪśānŚiPa. i. 37. 46.

**अखिलसिद्धिहेतु** (akhilasiddhi–hetu) *m.* cause of the whole creation, source of success in all undertakings शिवास्य शक्तिः परमार्थसूक्ष्मा चितिः स्वतन्त्राखिलसिद्धिहेतुः ĪśānŚiPa. ii. 2. 21.

**अखिलसिन्धु** (akhila–sindhu) *m.* all the oceans (क्षेत्राणि) औदकानि तु सर्वैव प्रोक्तान्यखिलसिन्धुषु BrahmāṇḍP. iii. 31. 18.

**अखिलसुखकृत्** (akhilasukha–kṛt) *adj.* **i** bringing or granting all (kinds of) happiness अखिलसुखकृद्दसावस्तु वो जैनहस्तः JinaS'. 2. 8; **ii** (akhila–sukhakṛt) bringing happiness to all, JinaS'. 2. 8.

**अखिलसुखप्रद** (akhilasukha–prada) *adj.* **i** bestowing all (kinds of) happiness इदमन्नप्रतिष्ठानमुक्तमच्युतभाविनाम् । परमुद्धरणोपायं तथाखिलसुखप्रदम् PauṣkS. 41. 77; **ii** (akhila–sukhaprada) bringing happiness to all, PauṣkS. 41. 77.

**अखिलसुखप्राप्त** (akhilasukha–prāpta) *adj.* which consists of all

happiness, enjoying all bliss स्वत एवाखिलसुखप्राप्ततत्त्वे स्व आत्मनि । ... तत्र विपर्ययः BṛĀraUBhVā. iv. 4. 257.

**अखिलसुखप्राप्तता** ( akhilasukhaprāpta-tā ) *f.* the state consisting of all happiness अखिलसुखप्राप्ततत्त्वे ( v. l. अखिलसुखप्राप्तता च ) BṛĀraUBhVā. iv. 4. 257.

**अखिलसुखप्राप्ति** ( akhilasukha-prāpti ) *f.* attainment of all happiness देवी...दयादाद्यानवद्यां श्रियमखिलसुखप्राप्तिहृद्याम् NityoNi. 103. 31.

**अखिलसुखभोग** ( akhilasukha-bhoga ) *m.* experience of all happiness, enjoyment of all worldly pleasures अखिलसुखभोगाद्धिरण्यगर्भावाप्तिपर्यन्तान्निवर्तयति ब्रह्मजिज्ञासा क्रियमाणा PañcPā. 62. 24 (*on* i. 1. 1)

**अखिलसुखसार** ( akhila-sukhasāra ) *f.* essence of all happiness अखिलसुखसारखानिमिव स्त्रीत्वमुपागताम्...ताम्...अपश्यम् YaśasCam. ii. 31. 6.

**अखिलसुखाधार** ( akhilasukhādhāra ) *adj.* [ *f.* -ā ] source of all happiness धर्मोऽखिलसुखाधारानुरक्ता सगुणा प्रिया PārśvC. 6. 1246.

**अखिलसुखानुभोग** (akhilasukhānubhoga) *m.* experience or enjoyment of all happiness or worldly pleasures अत्र महासरस्यखिलसुखानुभोगवैदग्ध्यवता मनुष्यरूपेण विश्रमितुं सममेव मानसी वृत्तिः ( द्वयोः जाता ) UdaySuKa. 143. 29.

**अखिलसुखोपभोग** ( akhilasukhopabhoga ) *m.* experience of all happiness, enjoyment of all worldly pleasures देव अत्र मनुष्यजन्मनि कल्याणवतामखिलसुखोपभोग एव पर्यवसायो व्यापारः UdaySuKa. 49. 26.

**अखिलसुजन** ( akhila-sujana ) *m.* all good persons सा प्रौढा स्यादखिलसुजनप्रेयसी S'ṛṅgāDī. 1. 14.

**अखिलसुदृश्** ( akhila-sudṛś ) *f.* all lovely-eyed i. e. beautiful women राधा मूर्धन्यखिलसुदृशां राजते सद्गुणेन UjjvaNīMa. 142. 6.

**अखिलसुभाषितभावक** ( akhila-subhāṣitabhāvaka ) *m.* all men enjoying or appreciating good poetry गोष्ठीषु वाखिलसुभाषितभावकानाम् । ... स खलु प्रबन्धः स्यादस्य साधुजनचेतसि पट्टबन्धः UdaySuKa. 1. 22.

**अखिलसुरवर** ( akhila-suravara ) *m.* all prominent or superior gods क्षुद्भ्रैरखिलसुरवरान् मोचयत्यर्कभूतिः PadyāTa. 182.

**अखिलसुरश्रेणी** ( akhilasura-śreṇī ) *f.* the row or line of all gods (i. e. all gods) अखिलसुरश्रेणीसाधारणप्रणया शचीसहचरचरुस्थाली सोमः समञ्जसमीहते AnargharRā. 2. 85.

**अखिलसुरसंभावित** ( akhilasura-sambhāvita ) *adj.* honoured by all gods विहाय त्वय्यन्ते तनुमतनुदानाध्वरजुषामुपर्यम्ब क्रीडन्त्यखिलसुरसंभावितपदाः GaṅgāLa. 34.

**अखिलसुरस्त्री** ( akhila-surastrī ) *f.* all celestial women हरिः...अखिलसुरस्त्रीर्धुवति नः UjjvaNīMa. 403. 6.

**अखिलसुराराध्य** ( akhilasurārādhya ) *adj.* [ *f.* -ā ] to be worshipped by all gods ( देवि ) जयाखिलसुराराध्ये BrahmāṇḍP. iii. 13. 2.

**अखिलसुरार्चित** ( akhilasurārcita ) *adj.* worshipped by all gods धनोऽखिलसुरार्चितः ( चक्रराजः ) AhirbuS.(Pariśiṣṭa) 10. (P. 653)

**अखिलसुरालय** ( akhila-surālaya ) *m.* all temples, (akhilasurālaya) the abode of all the gods ( i. e. heaven ) स्वयमखिलसुरालयप्रदाही कुणपमदन्... स राक्षसधर्ममाललम्बे ( वह्निः ) Ragh. 14. 55.

**अखिलसुहृद्** ( akhila-suhṛd ) *m.* all friends अद्वैताचैरखिलसुहृदां मण्डलैर्मण्ड्यमानः...नरीनर्त्ति गौरो यतीन्द्रः CaitaCan. 200. 6(8)

**अखिलसूक्ष्मशरीर** ( akhila-sūkṣmaśarīra ) *n.* the totality of subtle bodies अत्राप्यखिलसूक्ष्मशरीरं एकबुद्धिविषयतया वनवज्जलाशयवद्वा समष्टिः VedāntSā.(Sa.) 12. 19.

**अखिलसूरिमण्डली** ( akhilasūri-maṇḍalī ) *f.* the circle of all the Jain teachers स जग्रसेऽन्याखिलसूरिमण्डलीमहांसि Gurvā. 111.

**अखिलसेनापरिवृढ** ( akhilasenā-parivṛdha ) *m.* the chief of the whole army दापय निर्देशेन मे स्वदेशमुद्दिश्याद्यैव प्रयाणमखिलसेनापरिवृढं दृढवर्माणम् TilaMañ. 290. 20.

**अखिलसेवनीय** ( akhila-sevanīya ) *adj.* [ *f.* -ā ] to be enjoyed by all परसैन्यसिन्धुः । प्रकाममाविष्कुरुते प्रमोदं श्रियं वितीर्याखिलसेवनीयाम् Raghunā. 3. 47.

**अखिलसौख्य** ( akhila-saukhya ) *n.* all happiness यातु वक्षसि हरेः... लयमियं वनमाला । या कदाप्यखिलसौख्यपदं नः कण्ठमस्य...न जहाति UjjvaNīMa. 382. 8.

**अखिलसौधकोष्ठक** ( akhila-saudhakoṣṭhaka ) *n.* all the enclosures in an edifice पूर्वोक्तसकलानामपि देवानां तत्राखिलसौधकोष्ठकेषु ... कुरुते शिल्पि-( ? ल्प )वित्तमः MānSā. 24. 24.

**अखिलसौभगवत्** ( akhilasaubhaga-va(n)t ) *adj.* possessing all glories नित्यलीलोऽखिलसौभगवान् भगवान् श्रीकृष्ण एव सविशेषं ब्रह्मेति तत्त्वम् CaitCan. 5. 2(1)

**अखिलसौष्ठवरूप** ( akhilasauṣṭhava-rūpa ) *n.* the form which consists of all beauty or perfection केकिपिच्छसदृशे नयने ते ये हरेरखिलसौष्ठवरूपम् । पश्यतो न ĀdiP. 8. 29.

**अखिलस्त्रैण** ( akhila-straiṇa ) *adj.* belonging to all women एकाकिनीं सुतां बालां दृष्ट्वा...गृहीत्वेवाखिलस्त्रैणं लावण्यं त्रिजगद्गतम् । कर्मभिर्निर्मिताम्...पप्रच्छ PadmP.( Ra. ) 7. 156.

**अखिलस्थ** ( akhila-stha ) *adj.* being present everywhere, omnipresent तान्निजे स्म हृदि भावनाया बलेन साक्षात्कृताखिलस्थान् NaiṣC. 14. 4.

**अखिलस्थता** ( akhilastha-tā ) *f.* the nature of being everywhere एकत्राप्यनवस्थस्य कुत एवाखिलस्थता AnuVyā. 25A. 8 (*on* 2. 2)

**अखिलस्मृति** ( akhila-smṛti ) *f.* all the Smṛti Texts न तेनाखिलस्मृत्यध्ययनविधानम् इदमिति च प्रकृतपरत्वात् BālaKrī. i. 19. 9 (*on* 1. 7)

**अखिलस्वधर्म** ( akhila-svadharma ) *m.* the whole of one's own prescribed duties ये वाखिलस्वधर्मत्यागेनापद्यपि द्यूतैकनिरताः तद्विषयतया...दण्डादिवचनान्यवसेयानि BālaKrī. i. 273. 16 (*on* 2. 207)

**अखिलस्वामिन्** ( akhila-svāmin ) *m.* the lord of all अखिलस्वामिनस्तस्याप्तकामता किमु वक्तव्या TattvPrakā. 92A. 3 (*on* ii. 1. 34)

**अखिलहय** ( akhila-haya ) *m.* all the horses रथमधिरुह्य...चारु विकम्पितम्... । सततमखिलहयैर्भगवन् चरसि MārkP. 107. 8.

**अखिलहरघ्न** ( akhilahara-ghna ) *adj.* multiplied by all the denominators विक्रयोऽन्त्यमूल्यघ्नः । नैको द्व्यखिलहरघ्नः स्यात्क्रयसङ्ख्या GaṇiSāSaṁ. 5. 109.

**अखिलहरित्** ( akhila-harit ) *f.* all the directions यदा त्वत्साहाय्यादखिलहरितां पाण्डुतनयैर्जयो लब्धः ManoDū. 8.

**अखिलहारिता** ( akhilahāri-tā ) *f.* the nature of destroying everything विषयादिक्षयिष्णुत्वं कालस्याखिलहारिता । इत्याद्युद्दीपनाः साधारणाः ( शान्तभक्तिरसस्य ) BhaktiRaSi. iii. 1. 17.

**अखिलहृत्सार** ( akhilahṛt-sāra ) *m.* the essence of the heart of all ( रामः ) गृहीत्वा वामहस्तेन लीलया तोलयन् धनुः । ... बभञ्जाखिलहृतसारः ( ? हृत्सारः ) AdhyāRā. i. 6. 25.

**अखिलहृदिस्थित** ( akhilahṛdi-sthita ) *adj.* residing in the heart of all जयाखिलहृदिस्थित MatsyaP. 245. 70.

**अखिलहेतु** ( akhila-hetu ) *m.* the cause of all तमहमखिलहेतुं जिह्ममीनं नतोऽस्मि BhāgP. viii. 24. 61.

**अखिलहैतुकी** ( akhila-haitukī ) *f.* the cause of all or everything त्वम्...ग्रहर्क्षतारकागर्भा चौरस्या( ? स्य )खिलहैतुकी ViṣṇuP. v. 2. 12 ( comm. श्रीधर-अखिलहेतुतः वृष्ट्यादिद्वारा सर्वस्य हेतुरेव हैतुकी )

**अखिलाकार्य** ( akhilākārya ) *n.* all improper acts शौचाचारविचारबाह्यमखिलाकार्यहिताचार्यकम्...मचम् Mugdhopa. 58.

**अखिलाक्ष** ( akhilākṣa ) *n.* all the sense-faculties धीरत्वम्... । तिरस्कृत्याखिलाक्षाणि तच्चिन्तायां प्रवर्तनम् PañcDa. 11. 124.

**अखिलाक्षी** ( akhilākṣī ) *f.* name of a species of Dūrvā grass or *panicum*, (*lit.* having many "eyes") ( दूर्वा ) अपरा चण्डा तीव्रा गन्धाली गन्धदूर्वा स्यात् । मत्स्याक्षिकाखिलाक्षी वल्ली नाली कलाया च AbhidhāMañ. 34. 2.

**अखिलागम** ( akhilāgama ) *m.* all the scriptures अधिकाञ्ची( ? ञ्चि ) केलिलोलैरखिलागमयन्त्रतन्त्रमन्त्रमयैः । अतिशीतं मम हृदयं विषमशरद्रोहिजीवनोपायैः MūkaPañ. 4. 51; स मृकण्डुनन्दनः... । पपात तस्याङ्घ्रिसरोरुहद्वये शिलादसूनोरखिलागमाब्धेः SkandP. i. (3. 2) 1. 16.

**अखिलाघनाशिन्** ( akhilāghanāś-in ) *adj.* destroying all sins यन्नाम्न्यप्यखिलाघनाशि स परं दुष्टोऽसदीयः सखा CaitaCa. 87. 5(3)

**अखिलाघनिबर्हण** ( akhilāgha-nibarhaṇa ) *adj.* destroying all sins वायव्यमाचरेत् स्नानमखिलाघनिबर्हणम् IśānS'iPa. i. 9. 79 = ii. 3. 117; आग्नेयं भसना स्नानमखिलाघनिबर्हणम् IśānS'iPa. ii. 3. 95.

**अखिलाघप्रशमन** ( akhilāgha-praśamana ) *n.* destruction of all sins अखिलाघप्रशमनात्...अर्घ्यमित्यभिधीयते KulārT. 17. 95.

**अखिलाघहन्** ( akhilāgha-han ) *adj.* destroying all sins होमोऽखिलाघहा AgniP. 258. 7.

**अखिलाघहारिन्** ( akhilāghahār-in ) *adj.* [ *f.* -ṇī ] destroying or removing all sins अखिलाघहारिणीं भक्तिं हरेस्ते प्रददामि सम्यक् PadmP. iv. 85. 3.

**अखिलाङ्ग** ( akhilāṅga ) *n.* the entire body, all the limbs अखिलाङ्गैः परवानिवानेकसहस्रसंख्यानाम्...कदलीगृहाणामन्तरेण स्तोकान्तरमतिक्रम्य...रम्भागृहमपश्यत् ( समरकेतुः ) TilaMañ. 227. 19; मुनिभिः पुलकाञ्चिताखिलाङ्गैः...अभावि.

Yādavā. 15. 77; भित्वा( ? त्वा )खिलाङ्गमपि भूजुषेषुणा HammīMaKā. 12. 55; MātaLī. 1. 27; *adj.* having the whole universe as one's body or form नमस्कृत्वा सुरेशाय विष्णवे प्रभविष्णवे। ···यज्ञाङ्गायाखिलाङ्गाय BrahmP. 180. 3.

**अखिलाङ्गदुःखावह** ( akhilāṅgaduḥkhāvaha ) *adj.* causing pain all over the body विदाहकृतदुष्टशोणितम् ··· । करोति ··· शोफमखिलाङ्गदुःखावहम् KalyāKā. 8. 22.

**अखिलाङ्गपरिताडिन्** ( akhilāṅgaparitāḍ-in ) *adj.* striking or hitting the whole body or all the limbs उत्कृत्तकृत्ति रचितं च शरैः शरीरमार्येऽखिलाङ्गपरिताडिनि ताडकायाः BālRā. 3. 6; SūktiMu. 94. 8.

**अखिलाङ्गवर्णन** ( akhilāṅga-varṇana ) *n.* description of all the limbs प्रथमोऽत्र विप्रलम्भः तदनु··· । बाल्यं वयसः सन्धिर्यौवनमखिलाङ्गवर्णनं क्रमशः SūktiMu. 0. 51.

**अखिलाङ्गसंवरण** ( akhilāṅga-saṁvaraṇa ) *n.* concealment or covering of the whole body सत्पुरुषपृषतवधाय व्याधस्याखिलाङ्गसंवरणं यत्रावरणमिवामात्यजनस्य लम्बाञ्चलकं चोलकम् YaśasCam. i. 439. 6.

**अखिलाङ्गिन्** ( akhilāṅgin ) *m.* all corporeal ( =living) beings त्वज्जन्या धवोऽवाचि नाथाहमखिलाङ्गिनाम्। अभयं त्वत्प्रसादेन ददामि वसुधातले BṛKathāK. 139. 87; स कृत्वालोचनां सम्यक् क्षामणां चाखिलाङ्गिषु । चक्रे चतुर्विधाहारप्रत्याख्यानं समाहितः PārśvC. 4. 155.

**अखिलाङ्घ्रि** ( akhilāṅghri ) *m.* all the feet or legs तुरङ्गः पुङ्खीकृत्याखिलाङ्घ्रीन्···अथ वपुरास्यानुपूर्व्या धुनोति SubhāRaK. 35. 20; SaduktiKa. 279. 6.

**अखिलाङ्घ्रिक** ( akhilāṅghri-ka ) *n.* all the pillars or columns देवालयादिसर्वेषां स्तम्भस्थापनमुच्यते। यथाभागावसाने तु स्थापयेदखिलाङ्घ्रिकम् MānaSā. 15. 180.

**अखिलाज्ञता** ( akhilājña-tā ) *f.* the state of commanding all एतत्प्रसादात्संप्राप्ता रावणेनाखिलाज्ञता GaṇeP. i. 73. 31.

**अखिलाज्ञान** ( akhilājñāna ) *n.* all kinds of ignorance, total nescience नृसिंहमखिलाज्ञानतिमिराशिशिरद्युतिम् । संप्रणम्य KathāLa. 1B. 1.

**अखिलाज्ञानमत** ( akhilājñāna-mata ) *n.* the view 'all is nescience' नरसिंहोऽखिलाज्ञानमतध्वान्तदिवाकरः MāyāKha. 2A. 7.

**अखिलातिशायित्व** ( akhilātiśāyi-tva ) *n.* the state of surpassing or excelling all or everything एतदखिलातिशायित्वमुखेन प्रकृतकार्यानुमोदनादाभाषणम् PratāYaBhū. 208. 6.

**अखिलात्मक** ( akhilātma-ka ) *adj.* [ *f.* -ikā ] of the nature of all things हरिः । सर्वस्याधारभूतोऽसौ···अखिलात्मकः VisṇuP. ii. 2. 52 = BrahmP. 18. 59; प्रवृत्ते प्रतिसञ्चरे···प्रलीने च ततस्तस्मिन् ( तेजसि ) वायुभूतेऽखिलात्मके। प्रनष्टे रूपतन्मात्रे कृ( ? हृ )तरूपो विभावसुः BrahmP. 232. 21; तां विलोक्य महादेवी देवाः ··· । प्रणेमुर्मुदितात्मानो भूयो भूयोऽखिलात्मिकाम् BrahmāṇḍP. iii. 12. 74; MārkP. 81. 63; GaṇeP. ii. 104. 33; अतदन्यतयाखिलात्मकैरनुगृह्येय कदा नु धामभिः S'aṅkaDigVi.( Mā. ) 10. 25.

**अखिलात्मज्ञ** ( akhilātma-jña ) *adj.* knowing the heart of everything, conversant with all (relevant) matters राजा···वृणुयात्··· । मन्त्रिणश्चाखिलात्मज्ञान् AgniP. 218. 4.

**अखिलात्मता** ( akhilātma-tā ) *f.* thoroughness, fulness इह धृते प्रविलोकयिता स मां तमहमप्यखिलात्मतया रते। इति विचिन्त्य पराधित पार्श्वतो गृहमणि ज्वलितोज्ज्वलवर्तिकम् HammīMaKā. 7. 48.

**अखिलात्मन्** ( akhilātman ) *m.* **1 A** the essential nature or soul of all, universal soul or spirit स भगवान् ( कृष्णः ) संयोज्यात्मानमात्मनि । ···अजन्मन्यमरे विष्णावप्रमेयेऽखिलात्मनि । तत्याज मानुषं देहम् VisṇuP. v. 37. 75; vi. 5. 75; vi. 5. 83; स्वामिन् न विदितं किं ते सर्वज्ञस्याखिलात्मनः BrahmāṇḍP. ii. 24. 70; तस्यापि द्रष्टुरीशस्य कूटस्थस्याखिलात्मनः । सृज्यं सृजामि सृष्टोऽहमीक्षयैवाभिचोदितः BhāgP. ii. 5. 17; iii. 25. 19; xi. 20. 30; BṛDharP. i. 47. 62; स्वरूपं किं नु जानासि ··· मयूरेशस्य ··· । अनन्तकोटिब्रह्माण्डनायकस्याखिलात्मनः GaṇeP. ii. 122. 17; एवमादीनि कर्माणि मयैवाचरितान्यपि । आरोपयन्ति रामेऽस्मिन् निर्विकारेऽखिलात्मनि AdhyāRā. i. 1. 42; iii. 9. 33; vi. 16. 45; समस्तचिदचिद्वस्तुशरीरायाखिलात्मने । ···विष्णवे नमः VedāntSā.( Rā. ) 1. 6 ( *on* i. 1. 1 ); S'aṅkaVi.( Ā. ) 104. 12; ( श्रीः )अहम्···विष्णोः स्वरूपमखिलात्मनः LakṣmīT. 4. 2; BṛBrahmaS. i. 7. 78; Nārāy. xi. 91. 1; अखिलात्मनि ( सूर्ये ) तापमशुवाने तदभूत् तत्समिहास्ति किं विचित्रम् YātrāPra. 4. 7; **1 B** the vital breath of all ( प्रवृत्ते प्रतिसञ्चरे ) ··· प्रलीने च ततस्तस्मिन् वायुभूतेऽखिलात्मनि । प्रण( ? न )ष्टे रूपतन्मात्रे हृतरूपो विभावसुः VisṇuP. vi. 4. 21; **2** all the individual souls or human beings चित्तत्वं चिन्तयन् रूपं व्यापकं वाखिलात्मसु । अविनाश्येकपिण्डे वा स भवेदजरामरः S'ivDr. 7. 76; NyāyMañ. i. 220. 14; हित्वा समस्तं विधिवादचोदितं भजेत् स्वमात्मानमथाखिलात्मनाम् AdhyāRā. vii. 5. 55; कर्तुरेकस्य यत् कार्यं नियोगेनैककालिकम् । तत् सार्यं नैरपेक्ष्यार्थमेकैकत्राखिलात्मनाम् BālaKri. i. 16. 8 ( *on* 1. 7 ); **3** a form associated with (the appearance of) all i. e. everything in the universe भासयेच्च स्वकालेऽर्थात् पूर्वाभासितमामृशन् । स्वलक्षणं घटाभासमात्रेणाथाखिलात्मना ĪśvaPraSū. i. 4. 2 (comm. सर्वाभासमिश्रेण वपुषा ); *adj.* having the whole universe for one's body ( वसन्ति तत्र भूतानि भूतात्मन्यखिलात्मनि ) अखिलात्मनि अखिलशरीरके S'rutaPra. iA. 214. 17 ( *on* i. 1. 1 )

**अखिलात्मभूत** ( akhilātma-bhūta ) *adj.* **A** who has become (i. e. is) the universal spirit (refers to Viṣṇu) य एव··· । गोलोक एव निवसत्यखिलात्मभूतो गोविन्दमादिपुरुषं तमहं भजामि BrahmS. 5. 46; UjjvaNīMa. 71. 1; **B** who has become identified or one with the universal spirit (Viṣṇu) ततस्तु (ब्राह्मणानाम्) तीर्थास्पदपादरेणून्···। सभाज्य संपूजय पुण्यलक्ष्मीसर्वस्वभूतानखिलात्मभूतान् PadmP. iv. 85. 38.

**अखिलात्मसर्वस्व** ( akhilātma-sarvasva ) *n.* the whole of one's own belongings अलमलमखिलात्मसर्वस्वोपनयनेन NalaCam. 7. 3(4)

**अखिलात्महेतु** ( akhilātma-hetu ) *m.* the cause or source of all the beings अखिलात्महेतौ नारायणे···। भावं विधत्ताम् BhāgP. x. 46. 33.

**अखिलादि** ( akhilādi ) *m.* origin or source of all नमस्ते···अखिलादये ( गणेशाय ) GaṇeP. ii. 37. 3.

**अखिलादृष्ट** ( akhilādṛṣṭa ) *n.* the result of the deeds of all मायातः ···अखिलादृष्टं स्वभावोऽपि च प्रादुर्भूय Nārāy. ii. 5. 3.

**अखिलाद्भुतचिन्ता** ( akhilādbhutacintā ) *f.* all wonderful ideas ध्यातमात्रमुपतिष्ठत एव त्वदपूर्वरद( ? त्वद्रपुर्वरद ) भक्तिधनानाम् ।···अखिलाद्भुतचिन्ताकर्तृतां प्रति च ते विजयन्ते Stotrā. 20. 19.

**अखिलाद्य** ( akhilādya ) *adj.* [ *f.* -ā ] foremost of all अखिलाद्ये···देवि। मुनिजनपरिचिन्तितं तथास्त्रं स्फुरतु सदा हृदये षडङ्गमेतत् TripuMāPūSt. (S'aṅ.) 88.

**अखिलाधार** ( akhilādhāra ) *adj.*? [ *f.* -ā ] supporter of all अहमेवाखिलाधार अहमेव सुखात्सुखम् TejoBiU. 6. 45; अखिलाधारे जायमाने जनार्दने VisṇuP. v. 3. 7 = BrahmP. 182. 11; अवतीर्णोऽखिलाधार त्वमेव परमेश्वर VisṇuP. v. 12. 7 = BrahmP. 188. 30; योऽखिलाधारस्तं द्रक्ष्यामि जगत्पतिम् VisṇuP. v. 17. 6 = BrahmP. 191. 6; VisṇuP. vi. 6. 4; अखिलाधारा···प्रादुरभूच्छक्तिः BrahmāṇḍP. iii. 6. 4; iii. 31. 28; वासुदेवोऽखिलाधारः MārkP. 4. 31; सुदर्शनस्वरूपम्···शृणु । श्रुते यत्राखिलाधारे संशयास्ते न सन्ति AhirbuS. 2. 5; BhāgP. ii. 7. 52; BṛNāraP. 31. 15; यं पश्यन्त्यखिलाधारमीशानम् VāmaP. 27. 27; अखिलाधारे जगन्ति परमेश्वरे । सर्गस्थितिलयान् यान्ति ĀtmaBo. 8; SarvaVeSāSaṁ. 2 = VedāntSā.( Sa. ) 1. 2; योगगम्याखिलाधारा···या DevīBhāP. i. 2. 19; i. 7. 12; iii. 12. 52; ĀdiP. 28. 50; बिभर्ति शिरसा···ब्रह्माण्डं योऽखिलाधारम् SaurP. 23. 41; GaṇeP. i. 82. 38; i. 91. 34; i. 92. 13; ii. 82. 6; नारायणाखिलाधार···नमोऽस्तु ते AdhyāRā. vi. 8. 34; ब्रह्मण्येवाखिलाधारे ह्योतं प्रोतमिदं जगत् BṛBrahmaS. iii. 8. 25; *m.* one of the thousand names of Viṣṇu अखिलाधारः···इति···विष्णोर्नामसहस्रकम् PañcaRā.( Nā. ) iv. 3. 58.

**अखिलाधारिन्** ( akhilādhār-in ) *adj.* supporter of all उपासनमेतस्य ··· ···गोविन्दस्याखिलाधारिणो ब्रूहि GopālaPūTāU. 1. 4.

**अखिलाधिकार** ( akhilādhikāra ) *m.* all rights or privileges अस्य··· उत्तरश्रेणिराज्यमुत्तरकोसलेश्वरसुतः सार्धमखिलाधिकारैः प्रायच्छत् TilaMañ. 426. 19.

**अखिलाधिप** ( akhilādhipa ) *m.* the lord of all दक्षः ... यज्ञं कृतवान् ··· अखिलाधिपः S'ivaP. ii(2). 1. 24 (67B. 3)

**अखिलाध्यापक** ( akhilādhyāpaka ) *m.* all teachers अखिलाध्यापकप्रलयादविदितवेदाः···जनाः Mitā. 396. 12 ( *on* 3. 186)

**अखिलाध्वर** ( akhilādhvara ) *m.* all sacrifices तेऽखिलाध्वरदीक्षिताः ।···ये चानन्दवनौकसः SkandP. iv. 97. 274.

**अखिलानत** ( akhilānata ) *adj.* all (people) who bow down श्रीविट्ठलम् ···प्रणमामि···अखिलानतदत्तबुद्धिम् Prasā. ii. 1. 5.

**अखिलानन्दकर** ( akhilānandakara ) *adj.* causing delight to all इन्दुः शुक्लोऽखिलानन्दकरः SiddhāTaVi. 273. 13.

**अखिलानर्थ** ( akhilānartha ) *m.* all miseries or misfortunes कामित्वादवमन्यते हितमतं धीरोऽप्यमीष्टं नरः । ··· इदमेव मूलमखिलानर्थस्य VijñāS'. 83; पुरुषार्थोऽखिलानर्थप्रध्वस्तिः प्रत्यगात्मनः BṛĀraUBhVā. ii. 1. 4; परब्रह्मानन्दस्फुरणमखिलानर्थशमनम् AdvaiSi. 900. 9.

**अखिलानीक** ( akhilānīka ) *n.* entire army सुग्रीवः···लङ्कामधिगन्तुम्··· अखिलानीकं समनीनहत् RāmāCam. 6. 4(4)

**अखिलानुग** ( akhilānuga ) *adj.* all-penetrating, all-pervasive द्वैविध्यं ब्रह्म वक्ष्यामि शृणु व्यासाखिलानुगम् । यथाग्निर्मां पुरा प्राह AgniP. 1. 8.

**अखिलानुगत** (akhilānugata) *adj.* present throughout (all objects) अखिलानुगतम्…चैतन्यमेवात्मा LalitāSaBh. 42. 24 (*on* 75)

**अखिलानुमान** (akhilānumāna) *n.* all inferences यच्चानन्यथासिद्धतया …अखिलानुमानप्रतिष्ठायतनं प्रत्यक्षमपि बाधते NyāyMañ. ii. 165. 25.

**अखिलान्तःपुर** (akhilāntaḥpura) *n.* entire harem अखिलान्तःपुरपरिवृतया…विलासवत्या…चन्दनेनानुलिप्तमूर्तिः…चन्द्रापीडः Kād. 110. 14.

**अखिलान्न** (akhilānna) *n.* all (sorts of) food अदामहं पृथिवीं ब्राह्मणेभ्यः पूर्णामिमामखिलान्नैः MatsyaP. 42. 24.

**अखिलान्नभुज्** (akhilānna-bhuj) *m.* glutton उदरपिशाचः स्यात्सर्वान्नीनोऽखिलान्नभुक् KośaKaTa. 2. 136.

**अखिलान्यगुण** (akhilānyaguṇa) *m.* all other virtues त्यज दशमुख कापथाध्वगत्वं निजमखिलान्यगुणप्रणाशकारि Rāgh. 14. 41.

**अखिलापगा** (akhilāpagā) *f.* all rivers ययुः । अखिलापगान्तरभिपूरणोत्सुकाः पयसां निधिं किल पयोदमालिकाः Acyutarā. 9. 27.

**अखिलापचय** (akhilāpacaya) *m.* destruction of all अखिलापचये प्रवृत्तः कालो गभीररय उत्तमपूरुषस्त्वम् BhāgP. xi. 6. 15.

**अखिलापवर्ग** (akhilāpavarga) *m.* entire heaven अखिलापवर्गपरिपालकम् …विष्वक्सेनं ध्यात्वा TripāMaNāU. 371. 3(6)

**अखिलाप्त** (akhilāpta) *adj.* divided by the total number अखिलाप्ताखिलयोजनसंख्यापर्याययोजनानि स्युः GaṇiSāSaṁ. 5. 157.

**अखिलाप्ति** (akhilāpti) *f.* attainment of each and every object देवता क्रुष्ण उदितो विनियोगोऽखिलाप्तये BrahmāṇḍP. ii. 33. 4; पूजयेत् सविशेषं तां प्रजपेच्चाखिलाप्तये TantrRā. 28. 33; 14. 44.

**अखिलाभरणभूषित** (akhilābharaṇa-bhūṣita) *adj.* [*f.* –ā] adorned with all (sorts of) ornaments अखिलाभरणभूषिताम्…मूर्तिमतीं श्रियं सवैलक्ष्यमालक्ष्य ĀnandRa. 1. 45(11)

**अखिलाभिधानविद्** (akhilābhidhāna-vid) *adj.* knowing all the names हरिराकुमारमखिलाभिधानवित्स्वजनस्य वार्तमयमन्वयुङ्क्त च S'iśuVa. 13. 68.

**अखिलामय** (akhilāmaya) *m.* all (sorts of) diseases ग्रन्थीन्सशोफानखिलामयानप्येतद्धरेस्स(? त्स)ततमेव निषेव्यमाणम् KalyāKā. 11. 90; 9. 90; 11. 4; लोहरजः…। पृथगेवं सप्तकृत्वो भर्जितमखिलामये योज्यम् RasRaSa. 5. 106.

**अखिलामरमय** (akhilāmara-maya) *adj.* who includes in himself all the gods तत्राखिलामरमयो हरिराविरासीत् BhāgP. viii. 3. 30.

**अखिलामुख** (akhilāmukha) *n.* all the fronts निषेदुषीर्विवादाङ्गनिखनन्नखिलामुखे । मुख्यो स्तृप्त्यै चमूश्चक्रे सुबन्धुर्नाम सार्थकम् Kapphiṇā. 18. 21.

**अखिलायस** (akhilāyasa) *n.* all varieties of iron तस्मादाहृत्य संताड्य मृतमादाय लोहकम् । पुनश्च पूर्ववद् ध्मात्वा मारयेदखिलायसम् RasRaSa. 5. 121.

**अखिलारिविमर्दन** (akhilāri-vimardana) *adj.* destroyer of all the enemies पैशाचमिदमाख्यातमखिलारिविमर्दनम् AhirbuS. 34. 76.

**अखिलार्ति** (akhilārti) *f.* all kinds of diseases or sufferings त्वं ननु धन्वन्तरिः…अखिलार्तिं हर मारुतालयेश Nārāy. viii. 28. 10.

**अखिलार्तिदा** (akhilārtidā) *f.* name of a crore of hells (causing all sorts of suffering) सुदीर्घा चाखिलार्तिदा ।…इति ते नामतः प्रोक्ता घोरा नरककोटयः S'ivaP. v. 8. 22 (415A. 14)

**अखिलार्तिनुद्** (akhilārti-nud) *adj.* curing all diseases महाभ्रसत्त्वमेतत्स्यादेकमप्यखिलार्तिनुत् RasRaSa. 27. 60.

**अखिलार्तिहन्** (akhilārti-han) *adj.* destroyer of all miseries वासुदेवोऽखिलार्तिहा BṛDharmaP. i. 30. 23.

**अखिलार्तिहृत्** (akhilārti-hṛt) m. one of the thousand names of Viṣṇu (lit. remover of all sufferings) धर्मद्रष्टाखिलार्तिहृत् ।… विष्णोर्नामसहस्रकम् PañcaRā.(Nā.) iv. 3. 97(107)

**अखिलार्थ** (akhilārtha) *adj.* who has all kinds of desires सुक्षेत्रं वापितं ह्येतदखिलार्थस्य मेऽखिलम् । फलिष्यत्यमृतत्वेन PāraS. 12. 381; PauṣkS. 30. 143; *m.* **i** all (desired) objects or aims, all objects (of desires) तव वरद वराङ्घ्रावाशिषेहाखिलार्थे ह्यपि मुनिभिरसक्तैरादरेणार्हणीये । यदि रचितधियं माविद्यलोकोऽपविद्धं जपति न गणये तत् BhāgP. iv. 7. 29; यः…भिक्षाशनः पूरयतेऽखिलार्थान् GaṇeP. i. 88. 6; तस्याहं सुलभो वत्स नित्ययुक्तस्य योगिनः । कैवल्यादखिलार्थेषु यस्य नो विशते मनः BṛBrahmaS. i. 6. 53; रामं गृणन्नेति नरोऽखिलार्थान् AdhyāRā. iii. 1. 46; **ii** all meanings अत्र तु…अखिलार्थबोधनियमो नियमादृष्टं प्रकल्पयति VarivaRaha. 157.

**अखिलार्थ** (akhilārtha) *m.* **A** all the objects of desire अखिलार्थसंसिद्ध्यै वक्ष्ये त्रैलोक्यमोहनं मन्त्रम् ĪśānS'iPa. i. 38. 1; i. 25. 52; i. 31. 67; i. 33. 132; ĀnandRa. 5. 64; **B** all the objects of knowledge चिदात्मतत्त्वं हि…अखिलार्थविबोधेष्वभासमानम् NyāyMa. 298. 5; S'ivLī. 5. 24; न चाखिलार्थप्रतिबन्धकावरणप्रक्षयानुपपत्तिः SarvaDaSaṁ. 3. 109; यत्सत्ताव्यपगमयोरिहाखिलार्थप्रत्यक्षीकृतिपटिमापटुत्वलाभः । …तस्यै(? तस्मै) देवाय त्रिभुवनचक्षुषे नमस्या YātrāPra. 1. 43; **C** all the wealth किं सैव पूर्वमखिलार्थविलुण्ठनाय कान्ताकृतिः कपटकाममयी न सृष्टा SamaMā. 4. 24.

**अखिलार्थकृत्** (akhilārtha-kṛt) *adj.* who fulfills all desires, giving all the desired objects विख्यातं त्रिषु लोकेषु… । एवं मां कुरु विघ्नेश यदि तुष्टोऽखिलार्थकृत् GaṇeP. i. 37. 32; एवं वदत्सु बालेषु मयूरेशोऽखिलार्थकृत् । आविरासीत् तत्पुरतः GaṇeP. ii. 99. 48; ii. 122. 15.

**अखिलार्थघस्मर** (akhilārtha-ghasmara) *adj.* devourer of all the objects त्वाम्…अखिलार्थघस्मरम् । आविशन्नहमुमेश सर्वदा पूजयेयमभिसंस्तुवीय च Stotrā. 13. 20.

**अखिलार्थता** (akhilārtha-tā) *f.* obtainment of all desires येनेत्सैत्कर्मणा तत्र जयाहोमेऽखिलार्थता NyāyMāVi. 162. 6 (*on* iii. 4. 13); **अखिलार्थतया** (akhilārthatayā) [Inst.] *adv.* fully, in all respects देवि…वेदोऽपि… अखिलार्थतया न वेद (त्वाम्) DevīBhāP. i. 7. 33.

**अखिलार्थद** (akhilārtha-da) *adj.* [*f.* –ā] leading to the fulfilment of all desires, giving or securing all objects of desire देवाः … । तुष्टुवुश्च महादेवीमम्बिकामखिलार्थदाम् BrahmāṇḍP. iii. 12. 75; गणपूजां प्रवक्ष्यामि…अखिलार्थदाम् AgniP. 71. 1; देहोऽयं मानुषो राजन्पुरुषस्याखिलार्थदः BhāgP. ix. 9. 28; यस्मिँल्लक्ष्मीः स्थिरा…अखिलार्थदे (कार्तवीर्ये) GaṇeP. i. 77. 15; ii. 79. 28; ii. 120. 49; भवानीं केचनाचार्याः प्रवदन्त्यखिलार्थदाम् DevīBhāP. iii. 1. 31; संग्रामविजयाख्योऽयं सूर्यमन्त्रोऽखिलार्थदः ĪśānS'iPa. i. 27. 55; i. 28. 154; तं गोपालमन्त्रमखिलार्थदम् (जपेत्) PañcaRā.(Nā.) iii. 13. 20; उपवने … कनकभासितभूमितलेऽञ्चिते विबुधशालिशतैरखिलार्थदैः ।…उपरिसंस्थितम्…त्रिदशनाथमनारतमाश्रये S'ilpaRa ii. 25. 1; तारकत्वाप्रमत्तत्वे भक्तिरुक्ताखिलार्थदा TantrRā. 26. 53.

**अखिलार्थदर्शिन्** (akhilārthadars'-in) *adj.* [*f.* –ī] knower of all objects योगबुद्धिमखिलार्थदर्शिनीम् । किं विडम्बयितुमुच्यते मुधा दुष्टहेतुनिकुरुम्बशम्बरम् NyāyMañ. i. 100. 8.

**अखिलार्थदृश्** (akhilārtha-dṛś) *adj.* knower of all objects, omniscient भगवान् वीरः सिद्धार्थनन्दनः । विपुलाद्रिमलंकुर्वन्नेकदास्ताखिलार्थदृक् MahāP. 1. 196; (जीवः) केवलेनाखिलार्थदृक् MahāP. 12. 237; (दृष्टोऽसि त्वम्) अव्यक्तः …ब्रह्मरूपोऽखिलार्थदृक् GaṇeP. ii. 40. 37.

**अखिलार्थविद्** (akhilārtha-vid) *adj.* मूलदेवेच्छया जाता शक्तिः पञ्चदशाक्षरा । चराचरं ततो जातं यामाराध्याखिलार्थवित् AgniP. 124. 3; लोकाध्यक्षोऽखिलार्थवित् । दर्शयामास तान् रूपम् GaṇeP. i. 12. 32; ii. 79. 21; ii. 128. 30.

**अखिलार्थिन्** (akhilārth-in) *adj.* **A** [used as a noun] all the aspirants or supplicants कः पूरयेदशेषान्कामान्… । अखिलार्थिनां यदि त्वं न स्याः कल्पद्रुमो राजन् Kāvyālaṅ.(Ru.) 8. 48; **B** desirous of all (i. e. everything) किं तुष्टेन प्रदातव्यं वासवेनाखिलार्थिना GaṇeP. ii. 107. 24.

**अखिलार्ध** (akhilārdha) *n.* (vertical) half of the whole (body) मुखार्धमखिलार्धमार्दितसुपक्षघातादपि । स्थितिर्भवति निश्चलम् KalyāKā. 8. 10.

**अखिलार्पण** (akhilārpaṇa) *n.* offering of all things नीराजनं च पुष्पाणामञ्जलिश्चाखिलार्पणम्…द्वात्रिंशदुपचारैस्तु यः समाराधयेच्छिवम् PadmP. iv. 110. 340.

**अखिलार्भक** (akhilārbhaka) *m.* all the children अखिलार्भकाः । चक्रुरार्तस्वरम्…मृतो बाल इति GaṇeP. ii. 19. 22.

**अखिलालम्ब** (akhilālamba) *m.* the support of all निरालम्बोऽखिलालम्बो निर्गुणोऽपि गुणास्पदम् SkandP. iv. 59. 9.

**अखिलालोक** (akhilāloka) *m.* light or enlightenment for all कलाविदः …अखिलालोकभूताश्चेतोविहारिणः ParamāKā. 27. 77.

**अखिलालोक्य** (akhilālokya) *adj.* all that is to be known or comprehended निर्मनस्के मनोहंसे पुंहंसे सर्वतः स्थिरे । बोधहंसोऽखिलालोक्यसरोहंसः प्रजायते YaśasCam. ii. 392. 4.

**अखिलावनिपाल** (akhilāvanipāla) *m.* all the kings इयमखिलावनिपालतिलकस्य यौवनोपचयपीनपाञ्चाललललनाकुचोन्नाहलालितपृथूरस्थलस्य कुशस्थलपतेः… कुसुमावली नाम TilaMañ. 266. 21.

**अखिलावनिभार** (akhilāvani-bhāra) *m.* burden of the entire earth भगवानखिलावनिभारावतरणार्थमवतरणमाचचक्षे ViṣṇuP. iv. 13. 53.

**अखिलावाप** (akhilāvāpa) *m.* all the consideration about enemy's kingdom इममखिलावापभागप्रवृत्तिहेतुकं श्लोकं व्यचीचरम् YaśasCam. i. 473. 7 [cf. comm. अखिलो योऽसौ आवापः परमण्डलचिन्ता]

**अखिलावास** (akhilāvāsa) *m.* the abode of all योऽसौ तवेरितो देवः परमात्मा सनातनः । शक्तिमानखिलावासः AhirbuS. 51. 70; SkandP. ii(9). 17. 27.

**अखिलाविद्या** (akhilāvidyā) *f.* entire nescience अखिलाविद्योपधानाति-

गम्…ब्रह्मामृतं प्राप्यते Bhām. 766.3; जगदत्राखिलाविद्यानिर्मितं पटवत् परे। … संप्रचक्षते VedāntSiSūMañ. 1.50.

**अखिलावृति** (akhilāvṛti) *f.* all the enclosures ध्यात्वा नमोन्तं तारादि पूजयेदखिलावृतीः ĪśānŚiPa. i. 21.85.

**अखिलाशयविद्** (akhilāśaya-vid) *adj.* who knows the entire mind or all the thoughts पथं ददौ…आर्यामयं तदखिलाशयविन्महेशः ŚivLī. 20.45.

**अखिलाशर्मन्** (akhilāśarman) *n.* all the miseries याच्ञेयमखिलाशर्मजननी पापरूपिणी। केनाप्यतो न कार्यैव क्षत्रियेण विशेषतः BrahmP. 168.5.

**अखिलाशा** (akhilāśā) *f.* all directions स च मण्डः … दीपयन्नखिलाशान्तानद्युतद्दानवेश्वरः BrahmāṇḍP. iii. 21.23; HarVi 30.49; TilaMañ. 402.22; मण्डनमिश्रः … शिष्यानखिलाशाजयसमर्थानाचकार ŚaṅkaVi.(Ā.) 238.12; StavMā. 294.13; अथाखिलाशाविजयोत्सुकाय महीभुजे … नेपालभूपो निजकार्यभागं व्यजिज्ञपत् Raghunā. 9.1; Mukundā. 158.

**अखिलाशिस्** (akhilāśis) *f.* all blessings चक्रे गते मुनिरदादखिलाशिषोऽस्मै Nārāy. ix. 33.9.

**अखिलाश्रमिन्** (akhilāśram-in) *adj.* members of all the stages of life (*āśramas*) सर्वेषां चैव वर्णानामखिलाश्रमिणामपि। वेंकटेश्वरदेवस्य दर्शनादेव… मुक्तिर्भविष्यति SkandP. ii(1). 18.29; सर्वेषां चैव वर्णानामखिलाश्रमिणामपि। रामेश्वरमहालिङ्गदर्शनादेव…मुक्तिर्भविष्यति SkandP. iii(1). 43.32.

**अखिलाश्रय** (akhilāśraya) *m.* A shelter or resort of all बृहत्त्वाद्बृंहणत्वाच्च भावानामखिलाश्रयात्…ब्रह्मा तेन निरुच्यते BrahmāṇḍP. i. 3.21; ब्राह्मणा वेदवक्तारः…मां सेवन्तेऽखिलाश्रयाः KalkiP. i. 4.12; एक एवाद्वितीयोऽभूदात्माधारोऽखिलाश्रयः VedāntTaSā. 26.3; 27.1; सर्वकेन्द्रेऽखिलाश्रयः…भूगोलो व्योम्नि तिष्ठति SiddhāTaVi. 27.1; B one of the thousand names of Viṣṇu श्रीमुकुन्दोऽखिलाश्रयः।…इति…विष्णोर्नामसहस्रकम् SātvaT. 6.100.

**अखिलास्त** (akhilāsta) *m.* end of all (the universe) अर्था व्यभिचरन्त्येते नियतिर्नाखिलास्ततः YogVā. vi(2). 144.43.

**अखिलाहित** (akhilāhita) *adj.* harmful to all विशाखेनाखिलाहितः। तारको निहितो(°हतः) सङ्ख्ये ParamāKā. 93.70.

**अखिलीकृत** (a-khilīkṛta) *adj.* not finished काप्यखिलीकृतमण्डनभूषा त्यक्तसखीप्रणया हरमैक्षत् MatsyaP. 154.472.

**अखिलीकृत्य** (a-khilīkṛtya) *ger.* having not destroyed विपक्षमखिलीकृत्य प्रतिष्ठा खलु दुर्लभा ŚiśuVa. 2.34 (comm. खिलमुत्सन्नमकृत्वा) = SṛṅgāPra. 275.9.

**अखिलेक्षित** (akhilekṣita) *adj.* witnessed by all एकरामं जगत्सर्वम्…। त्रिराममधुना जातं सुताभ्यां तेऽखिलेक्षितम् PadmP. iv. 66.45.

**अखिलेन्दु** (akhilendu) *m.* the full or complete moon सुभ्रूनेत्राखिलेन्दुद्युतिमुखकमला हेलती पातु युष्मान् ĪśānŚiPa. i. 32.134.

**अखिलेन्द्रिय** (akhilendriya) *n.* all the sense-organs मानुषे लोके वात्सल्यं नाम केवलमखिलेन्द्रियवशीकरणचूर्णमुष्टिः MahāvīC. vi. 40.1 (177.10); बुद्धिमनोऽहंकारविरहादखिलेन्द्रियोपशमावहात्तदा द्रष्टुः स्वरूपेऽवस्थानं मुक्तिः इति कापिलाः YaśasCam. ii. 270.10.

**अखिलेन्द्रियक्षय** (akhilendriya-kṣaya) *m.* destruction of all the sense-organs or sense-faculties तदनन्तरमखिलेन्द्रियक्षयवशादमनस्कसुखब्रह्मानन्दसमुद्रे…अचलं परं ब्रह्म प्राप्नोति MaṇḍBrU. 3.1 (351.14)

**अखिलेप्सित** (akhilepsita) *n.* all the desires प्रसन्ना भव सुप्रीत्या कुरु तस्याखिलेप्सितम् ŚivaP. iii. 3.26 (297A.11); किं च तस्य धरणौ न कथं स्याद्धूणनेतुरखिलेप्सितसिद्धिः ĀnandRa. 8.25; TantrRā. 21.3.

**अखिलेश** (akhileśa) *m.* lord of all, master of the whole world or universe को वाविंतुं प्रभवति त्वद्वतेऽखिलेश GaṇeP. i. 83.28; दूतोऽहम् … यस्याखिलेशस्य हुताशुना त्वया भार्या AdhyāRā. v. 4.8; i. 7.57; स्वतन्त्रायाखिलेशाय …नमो नारायणाय ते ViṣṇuTaNi. 19B.6; दास्यामि भैक्ष्यमखिलेश दिने परस्मिन् BhikṣāKā. 11.13; विलपति परिरभ्य…प्रतिलतिकं प्रतिशाखि सोऽखिलेशः CaitCa. 223.4(9); StavMā. 198.19; (of the sun) नमः … अंशुमालिने…अखिलेशाय SaurP. 1.33; (of the Supreme Being) अविद्याराक्षस्या गिलितमखिलेशं परगुरो पिचण्डं भित्त्वास्याः सरभसममुष्मादुद्हरः ŚaṅkaDigVi.(Mā.) 9.28.

**अखिलेशत्व** (akhileśa-tva) *n.* the lordship over all अखिलेशत्वाद्भूमा विष्णुः सुखाधिकः AnuVyā. 12A.11 (*on* 1.3); NyāySu.(Ja.) 173A.10 (*on* i. 3.2)

**अखिलेशपत्नी** (akhileśa-patnī) *f.* wife of the lord of the whole universe (i. e. Pārvatī) प्रणेमुरेतामखिलेशपत्नीम् KūrmaP. 742.3 (2.38)

**अखिलेशान** (akhileśāna) *m.* lord of the whole universe विचार्यैवाखिलेशान काम(?मं) पूर्णं कुरुष्व मे ŚivaP. ii(4). 6.7 (200A.2)

**अखिलेशितृ** (akhileśitṛ) *m.* the lord of all or the master of the whole (world) अखिलेशितुः … विष्णोर्विभूतिमहिमसमुद्रद्रप्सविप्रुषः। कः … गणयेत् SaṁviSi. 82.18.

**अखिलेश्वर** (akhileśvara) *m.* the lord of all, the lord of the whole (world) भगवान् केशवः…आजगाम…अखिलेश्वरः BrahmāṇḍP. ii. 42.19; BhāgP. x. 3.21; KṛṣṇaKa. 3.49; मोहं जगत्त्रयभुवामपनेतुमेतदादाय रूपमखिलेश्वर देहभाजाम् Kuval. 87(11); ते रूपमतिहृद्यमखिलेश्वर नतोऽस्मि NaraP. 31.86 (91.2); BṛDharmaP. i. 46.81; LiṅgaP. i. 96.33; DevīBhāP. iv. 10.30; viii. 19.17; PañcaRā.(Nā.) iv. 3.139; SātvaTa. 9.42; BṛBrahmaS. i. 2.112; CaitaCa. 186.21(8); AdvaiSi. 900.13; तमेव गच्छ भद्रं ते स तु राजाखिलेश्वरः AdhyāRā. iii. 5.17; vii. 8.54; आयाति…अखिलेश्वरे रतिपतौ तत्कालमस्याज्ञया। आस्ये पूर्णशशाङ्कता … आसीत् BhāmiVi. 2.65 = RasGaṅ. 322.9; (of a king) सर्वाधिपत्यः सर्वेभ्यो भव त्वमखिलेश्वरः MārkP. 118.41; (of Śiva) देवाधिवचनं श्रुत्वा तथेत्याहाखिलेश्वरः BrahmaP. 127.57; BhikṣāKā. 11.11; KathāKau. 15.13; (of the Supreme Being) मनो दधौ चात्मना तु सर्वान्मन्यखिलेश्वरे ĀdiP. 18.61; BhedaDhi. 3.2; GaṇeP. i. 88.43; (of Gaṇeśa) अपारगुणपारोऽयं ढुण्ढिराजोऽखिलेश्वरः GaṇeP. ii. 38.13; ii. 99.29; ii. 100.1.

**अखिलेश्वरी** (akhileśvarī) *f.* name of a goddess (ruler of all, ruler of the whole world) शिवोऽपि वृषमारूढः समायातोऽखिलेश्वरीम् BrahmāṇḍP. iii. 14.2; iii. 15.51; हरस्य ध्याननिष्ठत्वात्कथं कुर्मोऽखिलेश्वरि GaṇeP. ii. 4.28; इति चक्रकृतं स्तोत्रं श्रुत्वा प्रीतोऽखिलेश्वरि BṛBrahmaS. i. 2.120.

**अखिलेष्ट** (akhileṣṭa) *adj.* [*f.* -ā] acceptable to all (mantras) तत्तद्वीजोर्ध्वसंस्थप्रणतियुतपरायार्णवत्ताखिलेष्टा TantrSa. 5.28.

**अखिलेष्टद** (akhileṣṭa-da) *m.* name of Viṣṇu अखिलेष्टदः…इति… विष्णोर्नामसहस्रकम् PañcaRā.(Nā.) iv. 3.76; iv. 3.158; *adj.* [*f.* -ā] granting all the desired objects महालिङ्गाभिधं यन्त्रं तत्र पूजाखिलेष्टदा TantrRā. 33.86.

**अखिलेष्टिमय** (akhileṣṭi-maya) *adj.* composed of all the sacrifices यज्ञैर्यजन्ति परमात्मविदो भवन्तं विष्णुस्वरूपमखिलेष्टिमयं विवस्वन् MārkP. 103.10.

**अखिलोग्रविषारि** (akhilograviṣāri) *adj.* hostile to (i. e. strong antidote for) all terrific or fatal poisons कुष्ठचन्दन°…°पूतिकरंजैः। पकसर्पिरखिलोग्रविषारि KalyāKā. 19.65.

**अखिलोच्चाटनकर्मन्** (akhiloccāṭanakarman) *n.* all sorts of rites meant for driving out (a man from his high status or position) हरवह्नियमाहिवायुतारास्त्वखिलोच्चाटनकर्मसिद्धिदाः स्युः ĪśānŚiPa. i. 5.52.

**अखिलोत्खात** (akhilotkhāta) *adj.* entirely dug out, completely uprooted अखिलोत्खातपातालमूलम्…ब्रह्मस्तम्बं धुनीयाम् MahāvīC. 5.45.

**अखिलोत्तम** (akhilottama) *adj.* most supreme, the best of all जिज्ञास्यम्…वासुदेवाख्यमद्वन्द्वं परं ब्रह्माखिलोत्तमम् AnuVyā. 6B.8 (*on* 1.1)

**अखिलोत्पत्तिकारण** (akhilotpatti-kāraṇa) *n.* cause of the creation of the whole world शक्तिबीजं तु तद्योगादखिलोत्पत्तिकारणम् ĪśānŚiPa. ii. 1.121; अस्ति वाग्ब्रह्म तत्किंचिदखिलोत्पत्तिकारणम् ŚivLī. 14.42.

**अखिलोत्पात** (akhilotpāta) *m.* all the (natural) calamities अखिलोत्पातप्रशमनशान्तिकमिश्राख्यपैत्रिकाध्यायाः VasiS. 1.12.

**अखिलोत्सव** (akhilotsava) *m.* all festivals or festivities राधाव्रजेन्द्रसुतसङ्गमरङ्गचर्यां वर्याम्…अखिलोत्सवेभ्यः…ललितां नमामि StavMā. 287.7; कामधेनुरखिलोत्सवसंगे…धर्मवृद्धिरियमस्तु सदा वः YaśasCam. ii. 262.5; शिवबिम्बमेकमखिलोत्सवोचितम्। परिकल्प्य ŚivLī. 18.3.

**अखिलोदर** (akhilodara) *n.* all abdominal diseases (dropsy etc.) कुष्ठानि मेहानखिलोदराणि…एतत् (औषधम्) हरेत् KalyāKā. 11.90.

**अखिलोदार** (akhilodāra) *adj.* I magnanimous among all (deities) अस्ति … वस्तु … अखिलोदारं किशोराकृति KṛṣṇaKa. 1.2 (comm. अखिलेभ्यो महारुद्रादिभ्य उदारं महत्); II omniscient, KṛṣṇaKa. 1.2 (comm. अखिलस्य उदारं ज्ञातृ सर्वज्ञम्); III compliant, considerate, (comm. अखिलासु गोपीषूदारम् दक्षिणम्) KṛṣṇaKa. 1.2.

**अखिलोन्नतिबीज** (akhilonnati-bīja) *n.* the seed i. e. cause of all sorts of prosperity एवमखिलोन्नतिबीजं समासतोऽभिहितम् BālaKrī. i. 184.22 (*on* 1.307)

**अखिलोपतापिन्** (akhilopatāpin) *adj.* harassing all the men सर्वदैव हृदयं मलीमसं न क्षणं स्पृशति ते प्रसन्नताम्। तत्खलत्वमखिलोपतापिनः पुष्पकार्मुकनृपस्य वल्लभः VikraDeC. 14.44.

**अखिलोपदिष्टविलय** (akhilopadiṣṭa-vilaya) *m.* destruction of all the preachings or all that has been taught (i. e. sacred texts) अवान्तरप्रलयेनाखिलोपदिष्टविलयात् कथमग्निहोत्रादिकर्मप्रवृत्तिः प्राथमिकी ViraMi. 897.4 (*on* 3.186)

**अखिलोपसंहार** (akhilopasaṁhāra) *m.* withdrawing of everything

अखिलोपसंहारेण स्वात्मावशेषविभावनां प्रत्यनुगुणत्वात् SetuBa. 83. 27.

**अखिलोपाख्याविरहिन्** ( akhilopākhyā-virahin ) *adj.* which is devoid of every capability (such as producing a result etc.) अन्तरेणापि ज्ञेयसामर्थ्यमखिलोपाख्याविरहिण्यसति विज्ञानमेव···उपजायते NyāyMa. 104. 11.

**अखिलोपाधिविनिर्मुक्त** ( akhilopādhi-vinirmukta ) *adj.* bereft of all delimiting adjuncts अखिलोपाधिविनिर्मुक्तम्···ब्रह्म NirāU. 255. 8.

**अखिलोरणक्षोभ** ( akhiloraṇa-kṣobha ) *m.* confusion or agitation amongst all the rams अखिलोरणक्षोभक्षुभितचित्तेनाविकटाधिपतिनातीवतीक्ष्णविषाणविनिर्मितमर्मप्रहारः ··प्रेतभावमनुसरन् YaśasCam. ii. 219. 2.

**अखिलौषध** ( akhilauṣadha ) *n.* all herbs हरिहरे···फलवार्यखिलौषधं च ( न्यसतु ) TantrSa. 3. 77.

**अखिलौषधीजन्मन्** ( akhilauṣadhī-janman ) *n.* growth or production of all herbs or annual plants तेनाखिलौषधीजन्म भवत्यनिलसारथे MārkP. 99. 31.

**अखु** ( a-khu ) *m.* other than a proper name, not an appellation भृञोऽखौ JaineVyā. ii. 1. 93; ii. 2. 159; iii. 2. 84; iii. 3. 112; iii. 4. 21; iii. 4. 26; v. 4. 89.

**अखुविषय** ( akhu-viṣaya ) *m.* sphere or case other than that of a proper name भृञः क्यब् भवति अखुविषये JaineVyā. 99. 1 (*on* ii. 1. 93); 210. 1 (*on* iii. 3. 112)

**अखेचर** ( a-khecara ) *adj.* not moving in the sky नक्षत्रमनुना मुक्तमखेचरमनुत्तमम् । कस्मान्नोपैति वामोरु चन्द्रकाननमागतम् GopāKeCan. 136. 28.

**अखेट** ( a-kheṭa ) *adj.* not low i. e. best, excellent निम्नन्नखेटखटकामुखहस्तकृष्टमौर्वीविनिर्गलविनिर्गतमार्गणौघैः । तां रेवतीमपि खटाखुमवैमि HarVi. 35. 49; 37. 51.

**अखेटिक** ( akheṭika ) *m.* **1** a dog trained for the chase, a hunting dog विश्वकद्रुरखेटिकः Hārāva. 221; **2** a tree in general [APTE]

**अखेद** ( a-kheda ) *m.* absence of fatigue or lassitude, happiness, solace अदृष्टखेदाखेदो यः संतुष्ट इति कथ्यते MahāU. 4(36); बलानां हर्षणं नित्यं प्रजानामन्ववेक्षणम् । कार्येष्वखेदः···उत्थानं हि नरेन्द्राणां बृहस्पतिरभाषत MahāBhā. xii. 58. 8; तदखेदाय भूयस्ते वर्णयामि कथां शृणु KathāSaSāg. xii. 10. 4; xii. 19. 3; *adj.* having no fatigue, without fatigue, unwearied शनैरनीयन्त रयात्पतन्तो रथाः···अखेदैः ।···तुरङ्गैः S'is'uVa. 3. 68; लीला रहस्यधिगता च गुणानखेदैः साधूनिता नवरता रमणीष्टकान्तैः HarVi. 5. 149; तत्राकरोदखेदं मामङ्गाभ्यङ्गाशनादिभिः BṛKathāS'loSaṁ. 18. 218; 20. 309; **अखेदात्** ( a-khedāt ) *adv.* [*Abl.*] without fatigue or effort, easily प्रहर्तुमिच्छास्ति भटाः पुनश्चेत् समेत्य शस्त्रान्तरमाददीध्वम् । विधूय गच्छामि तदप्यखेदान्मरुत्तरूणामिव पाण्डुपत्रम् RāmC. 22. 15; **अखेदेन** ( a-khedena ) *adv.* [*Inst.*] without fatigue or effort, easily तत्र ···अन्तर्णीतमत्वर्थो बहुव्रीहिरखेदेन गुणं विधत्ते TantrVā. 295. 7 (*on* i. 4. 4); एवमखेदेन मनोनिरोधे परमधर्मे प्रवर्तमानं योगिनमीश्वरोऽनुगृह्णाति JīvānVi. 105. 17.

**अखेदज** ( akheda-ja ) *adj.* produced or born without fatigue or effort प्राणस्पन्दो निरुध्यते । पूरकाद्यनिलायामादृढाभ्यासादखेदजात् S'āṇḍU. 415. 22 (1. 45)

**अखेदतस्** ( akheda-tas ) *adv.* without difficulty ( योगी ) योजनानां शतं गत्वा मुहूर्तादित्यखेदतः MālinīT. 13. 36.

**अखेदद** ( a-khedada ) *adj.* not giving discomfort, not causing inconvenience, comfortable यावज्जीवाधिकारं तु यदेभ्योऽमिमतं हि यत् । प्रीत्यर्थं परमेशाय अङ्गीकृतमखेददम् PausṅkS. 31. 205; सुधौतं परिधायाथ वस्त्रयुग्ममखेददम् JayāS. 9. 53.

**अखेदनियतिपात** ( akheda-niyatipāta ) *m.* one of the six necessary accomplishments (corresponding to the six perfections consisting in) indefatigableness i. e. not being depressed by any of the transmigratory miseries for ever षट्पारमिताधिकारेण षड्विधो नियतिपात एष निर्दिष्टः । ···अखेदनियतिपातो नित्यं संसारदुःखैरखेदात् MaYānaSū. 166. 23 (19. 38)

**अखेदनिश्चय** ( akheda-niścaya ) *m.* a resolution or determination of absence of exhaustion चतुर्विधानुभावेन प्रीयणाखेदनिश्चयः MaYānaSū. 71. 22 (11. 62)

**अखेदनीय** ( a-khedanīya ) *adj.* not to be troubled केन वा खल्वविनयेन खेदितमखेदनीयं देव्याः···मनः Kād. 234. 9.

**अखेदम्** ( a-khedam ) *adv.* without fatigue or difficulty or effort फलं स्वेच्छालभ्यं प्रतिवनमखेदं क्षितिरुहाम् S'atTrayī. 281; PraboCan. 4. 19 (76. 5); SūktiMu. 128. 3; BhojPra. 60. 28; प्रलयपयोधिजले धृतवानसि वेदम् । विहितवहित्रचरित्रमखेदम् GītaGo. i. 1. 1.

**अखेदमनस्कार** ( akheda-manaskāra ) *m.* the mental activity of absence of fatigue अखेदमनस्कारो दानादिप्रयोगपरिखेदे शत्रुसंज्ञाकरणात् MaYānaSū. 72. 26 (11. 65)

**अखेदवत्** ( akheda-va(n)t ) *adj.* undisturbed, without fatigue, unwearied जपेल्लक्षं समाहितः । ···अखेदवान् JayāS. 26. 62; विसृज्य पयसः पानमनारोहादखेदवान् । सखेदमनुदुद्राव द्रुतमश्वां ह्येश्वरः PāṇḍaC. 12. 217.

**अखेदावह** ( a-khedāvaha ) *adj.* not causing fatigue or pain मृदुभिरखेदावहैः करैर्दण्डादिभिः किरणैश्चेत्यभङ्गः शब्दश्लेषः Kāvyānu.(He.) 277. 6.

**अखेदित** ( a-khedita ) *adj.* having no fatigue or effort किमु रोमवल्ली कामेन ते व्यरचि जेतुमखेदितेन RomāS'. 93.

**अखेदितृ** ( a-kheditṛ ) *adj.* not dejected, not downcast पाता न मां त्वम्···अखेदिता यद्यनुनातिखेत्त्रीम् DvyāśraKā. 10. 50.

**अखेदित्व** ( akhedi-tva ) *n.* **i.** the state of being without exhaustion प्रमुदिता अखेदित्वात् MaYānaSū. 80. 26 (12. 9); **ii** not causing fatigue (as one of the qualities of speech ) संस्कारवत्त्वम्···अव्युच्छित्तिरखेदित्वं पञ्चत्रिंशच्च वाग्गुणाः AbhidhāCin. 71.

**अखेदिन्** ( akhed-in ) *adj.* free from misery or sorrow, free from any mental disturbance तथा···जगति विहर्तव्यमखेदिना YogVā. iv. 61. 8; vi(2). 44. 6.

**अखेय** ( a-kheya ) *adj.* impossible to dig नाखेयः सागरोऽप्यन्यस्तस्य Bhaṭṭi. 6. 57.

**अखोड** ( a-khoḍa ) *adj.* unimpeded (in its course or function) ददर्श ···स दयालुमीश्वरम्···परान्प्रति प्रश्नह्लिताखोडसुदर्शनायुधम् DhātuKā. 1. 70.

**अखोर** ( a-khora ) *adj.* unobstructed, unimpeded (in its course or function) cf. **अखोड** ददर्श ··· स दयालुमीश्वरम् ··· अखोरधौरत्पतगेन्द्रवाहनम् DhātuKā. 1. 71.

**अख्खलीकृत्य** ( akhkhalī-kṛ́tya ) *grd.* [DEBRU. p. 786] having made a greeting sound अख्खलीकृत्या पितरं न पुत्रो अन्यो अन्यमुप वदन्तमेति ṚV. vii. 103. 3 ( Sāy. अख्खलशब्दं कृत्वा )

**अख्य** ( a-khya ) (*Gr.*) other than the root *khyā-* पुंसः सन् खप्यम्परेऽख्ये MugdhaBo. 2. 33 (7. 18)

**अख्या** ( a-khyā ) (*Gr.*) other than the root *khyā-* व्यञ्जनान्तस्थातोऽख्याध्यः SiddhaHe. iv. 2. 71.

**अख्याग्** ( a-khyāg ) (*Gr.*) other than the root *khyā-* पुमोऽशिट्यघोषेऽख्यागि रः SiddhaHe. i. 3. 9.

**अख्यात** ( a-khyāta ) *adj.* **i** which is not cognised अख्यातस्य ख्यातता चेत्क्रियेत अनिर्वाच्यस्यैव सा स्यात् IṣṭaSi. 191. 15; **ii** not famous, invented, imaginary मिश्रं ख्याताख्यातम् SāhiDa. 358. 9.

**अख्यातत्व** ( akhyāta-tva ) *n.* the state of not being cognised उभयोरपि तत्राख्यातत्वाविशेषात् IṣṭaSi. 131. 9.

**अख्यातपूर्वविजय** ( akhyāta-pūrvavijaya ) *adj.* whose former victories were not well known or were not famous अख्यातपूर्वविजयान्···न स संजगृहे भटान् Gaṅgāva. 1. 76.

**अख्यातभाग** ( akhyāta-bhāga ) *m.* that part which is not perceived or cognised तस्य नैवान्यथाख्यानमख्यानेऽख्यातभागवत् IṣṭaSi. 269. 12.

**अख्यातशुक्त्यंश** ( akhyāta-śuktyaṁśa ) *m.* the part or aspect (of the object) consisting of the shell which is not cognised सोऽपीदमात्मना भाति चेत् न तस्यान्यथाख्यानमितरांशवत् । न चेत् नतरामख्यातशुक्त्यंशवत् IṣṭaSi. 269. 15.

**अख्यातस्वभाव** ( a-khyātasvabhāva ) *adj.* whose nature is not cognised सर्वा वा अख्यातस्वभावस्य जडस्य ख्यातिः IṣṭaSi. 191. 13; 191. 20.

**अख्याति** ( akhyāti ) *f.* name of the principle called *Mahat* विद्या गौर्यवनी ब्राह्मी वधूर्वृद्धिमेतिमैवुः । अख्यातिरीश्वरः प्राज्ञेत्येते तद्वाचका मुने AhirbuS. 7. 9.

**अख्याति** ( a-khyāti ) *f.* **1** non-cognition गोत्वशब्दविशिष्टार्थसत्तामात्रगतेर्भवेत् । विषाणाकृतिनीलादिभेदाख्यातेस्तु तन्मतम् TattvSaṁ. 895; असत्ख्यातीति इयमेव भ्रान्तिः···असतोऽख्यातेः IṣṭaSi. 118. 14; यस्त कस्यचिदख्यातेस्सर्वदा संभवात् IṣṭaSi. 141. 19; 191. 16; 302. 18; 320. 12; अख्यातिर्यदि न ख्याति ख्यातिरेवावशिष्यते PratyabhiHṛ. 10. 8(4); **2** ignorance व्याख्यातॄणामेवाख्यातिं ख्यापयति ĀgaPrā. 57. 5; **3** infamy एवं दैवोपनीतानामख्यातीनां चिकित्सितम् । स्वधियामात्यबुद्ध्या वा पारमेति मनस्विनाम् RājTa.(Ka.) 7. 1451; 8. 2687; अनादेयादानाद्दरिद्रोऽयमिति लोकेऽख्यातिः ManvaVi. 985. 22 (*on* 8. 171); राजा दण्डानर्हान्···दण्डयन्···महतीमख्यातिं प्राप्नोति ManvaMu. 312. 20 (*on* 8. 128); **4** the theory relating to error (according to Prābhākara school) consisting in **i** the non-apprehension of the difference between two objects (e. g. silver and 'this') and between the two cognitions of the forms of re-

membrance (of silver) and perception (of the shell as 'this') respectively; **ii** cognition which is not erroneous i. e. valid cognition (since all cognitions are valid according to the school); **iii** more than one cognition (i. e. two, remembrance and perception of silver and 'this') not cognised distinctively आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा । परीक्षकाणां विभ्रान्तौ विवादात्सा विविच्यते VibhraVi. 1; तत्र सत्पक्षस्त्रिधा भिन्नः आत्मख्यातिरख्यातिरन्यथाख्यातिरिति IṣṭaSi. 40. 3; सोऽप्यख्यातिमेव नुदन् शुक्तिरूप्यविवेकेन अन्यथाव्यवहारं निवर्तयति IṣṭaSi. 42. 19; 142. 1; ते एते ग्रहणस्मरणे विविक्ते अपि विविक्ततया न गृह्येते इति विवेकाग्रहणमख्यातिः NyāyMañ. i. 165. 14; i. 162. 24; i. 165. 7; ii. 110. 24; अख्यातिरन्यथाख्यातिरसत्ख्वातिरितीतरा । दृश्याश्चिन्मात्ररूपस्य भासश्चित्वचमत्कृताः YogVā. vi(2). 166. 7; अख्यातिम्…इच्छद्भिर्न विमन्तव्यमिदम् NyāyPari. 37. 1; तस्मादख्यातिरेव युक्ता VivaPraSaṁ. 34. 9; 39. 17; अख्यात्यात्मख्यात्यनिर्वचनीयख्यात्यन्यथाख्यात्यसत्ख्यातिवादिनो निरस्य सत्ख्यातिपक्षस्वीकारात् YatīndraDī. 8. 7; साङ्ख्याश्चाख्यातिमेव मन्यन्ते SarvaDaKau. 33. 23; 34. 13; संसर्गाग्रहरूपेयमख्यातिः BhāṭṭCin. i. 21. 2 (*on* i. 1. 4); यत्पुनर्भ्रान्तिज्ञानानामविवेकात्मकत्वमिति तन्मन्दम् । अभावमभ्युपगच्छतोऽख्यातेर्विवेकाभावस्वरूपस्याविवेकस्य वक्तुमयोग्यत्वात् SarvaMaSaṁ. 35. 12; न तावत् अख्यातौ आरोपितस्य क्वचिदपि सत्त्वं आरोपस्यैव असंमतत्वात् । अविविक्तानेकख्यातिः अख्यातिः इति अङ्गीकारात् TarkSaṁ.(Ā.) 134. 17; **5 i** (according to the Pratyabhijñā School) cognition of what is not complete or perfect i. e. cognition of what is limited साधिता प्रत्यभिज्ञायामख्यातेर्जीवता परम् SiTrayī. 1. 21; अपूर्णख्यातिरूपा अख्यातिरेव भ्रान्तितत्त्वम् PratyabhiVi. ii. 123. 4 (*on* ii. 3. 13); **5 ii** a stage in the unfolding process of the universe when the universal subject is isolate i. e. without an object [nt] श्रीपरमशिवः…पूर्वं चिदैक्याख्यातिमयानाश्रितशिवपर्यायशून्यातिशून्यात्मतया प्रकाशाभेदेन प्रकाशमानतया स्फुरति PratyabhiHṛ. 9. 1(4); **5 iii** the condition in which the universal subject confined by the *kañcukas* does not know its real nature [nt] (चिदात्मा) चिदानन्देच्छाज्ञानक्रियाशक्तिरूपत्वेऽपि अख्यातिवशात् कलाविद्यारागकालनियतिकञ्चुककवलितत्वात् पञ्चकस्वरूपः PratyabhiHṛ. 16. 5(7)

**अख्यातिकाल** (akhyāti-kāla) *m.* the time of non-cognition (as during the state of *suṣupti*) or complete unconsciousness (during deep sleep) सतोरेवान्यथाख्यातौ भ्रम इष्टे अग्रहो नार्थवान् । ग्रह एव त्वर्थवान्, अख्यातेरन्यथाख्यात्ययोगादख्यातिकाल इव IṣṭaSi. 262. 8 (comm. अख्यातिकाल इवेति । सुषुप्तादाविवेत्यर्थः)

**अख्यातिगर्भ** (akhyāti-garbha) *adj.* consisting of (i. e. based on) non-cognition of difference (between *pratyakṣa* perception and *smaraṇa* remembrance) अख्यातिगर्भमयथार्थगोचरं वा भ्रान्तिज्ञानमपि विशिष्टविषयमेव S'atDū. 168. 1.

**अख्यातिपक्ष** (akhyāti-pakṣa) *m.* (Philo.) the theory of Akhyāti (as held by Prābhākara school) प्रतीतिन्यायविरुद्धं बाधकाननुरूपमख्यातिपक्षं मा चीक्लृपः IṣṭaSi. 44. 22; अख्यातिपक्ष एवं हि हीयेतैकत्ववेदनात् NyāyMañ. i. 165. 22; अख्यातिपक्षे तु नानुमा शक्यबाधा NayaVi. 233. 6 (*on* i. 1. 13); अख्यातिपक्षे सत्त्वे सति भेदाग्रहेण ख्यातिबाधोपपत्तिः S'rutaPra. iB. 7. 12 (*on* i. 1. 1); TarkSaṁ.(Ā.) 82. 3; तत्राख्यातिपक्षे निरन्तरास्स्मृतयः NyāyKu. 66. 15; अख्यातिपक्षेऽपि तत्सामग्र्यनुप्रविष्टं ज्ञानं तत्तच्छब्देन व्यपदिश्यते NyāyPari. 53. 4; NyāySu. (Ja.) 46A. 3 (*on* i. 1. 1); 47B. 3 (*on* i. 1. 1); अख्यातिपक्षे रजतस्मरणस्यैव शुक्तौ प्रवर्तकत्वम् AdvaiSi. 339. 9; Nyāyāmṛ. 425B. 4.

**अख्यातिप्रसङ्ग** (akhyāti-prasaṅga) *m.* the contingency of (accepting the validity of) the theory of Akhyāti (as held by the Prābhākara school) न च संसर्गप्रतीतेरभ्युपगमान्नाख्यातिप्रसङ्गः, तथापि विज्ञानद्वयाभ्युपगमेनाख्यातिप्रसङ्गस्य दुर्वारत्वात् TattvPradī.(Ci.) 78. 13; TarkSaṁ.(Ā.) 6. 28.

**अख्यातिप्राण** (akhyāti-prāṇa) *adj.* having illusion for its nature, based on illusion परापरं तु इदंभावरूपस्य प्रत्यवमर्शस्य अख्यातिप्राणस्य उद्बोधमात्रेऽपि अहंभाव एव विश्रान्तेः श्रीसदाशिवादिभूमौ पश्यन्तीदशायाम् PratyabhiVi. i. 254. 3 (*on* i. 5. 13) (comm. Bhāskarī मायातत्त्वस्पर्शात् मायाजीवितस्य)

**अख्यातिबीजवाप** (akhyāti-bījavāpa) *m.* the sowing of the seed of ill fame भ्रमयन्नङ्कुशं दर्पात्…सः । आख्यातिबीजवापाय (? अख्यातिबीजवापाय) चखानेव नभःस्थलीम् VikraDeC. 4. 112.

**अख्यातिमत** (akhyāti-mata) *n.* (Philo.) the theory of Akhyāti (which does not recognise illusory knowledge as distinct from true knowledge; hence according to this theory all knowledge is real) सर्वेष्वेव पक्षेष्वयथावस्तुख्यातितां लक्षणांशं न व्यभिचरति अध्यासः । अख्यातिमतेऽपि यथा विविक्ते वस्तुनि तथा न ख्यातिः किंत्वविविक्ततया PrakaVi. 8. 18; अख्यातिमते हि रजतस्यासंनिधानाग्रहः संनिहितत्वेन व्यवहारहेतुत्वाद्भ्रमः VedāntKa. 16. 10 (*on* i. 1. 0); TarkSaṁ.(Ā.) 81. 25; तस्मादधिष्ठानांशेऽन्तःकरणवृत्तिः, अध्यस्तांशे चाविद्यावृत्तिः । तस्यां च तादात्म्यस्य भानात् नाख्यातिमतप्रवेशः AdvaiSi. 652. 3.

**अख्यातिमतानुमति** (akhyātimatānumati) *f.* acceptance of the (validity of the) theory of Akhyāti (as held by the Prābhākara school) तथा सति ज्ञानद्वयस्वीकारेणाख्यातिमतानुमतिप्रसङ्गः TattvPradī.(Ci.) 78. 12.

**अख्यातिमतापत्ति** (akhyātimatāpatti) *f.* contingency of (accepting) the theory of Akhyāti (according to which there is no erroneous cognition) न हि ग्रहणस्मरणाभ्यामन्यः प्रकारः समस्ति । तस्मादिदमंशरजततादात्म्यविषयमेकं विज्ञानं न घटते । नाप्यनेकमख्यातिमतापत्तेरिति चेत् उच्यते SarvaDaSaṁ. 16. 634.

**अख्यातिरूप** (akhyāti-rūpa) *adj.* of the form of Akhyāti or illusion, illusive एष परमेश्वर एव…अदृष्टसंदर्शनमेवमख्यातिरूपमण्डं मायामलम् ParāTri. 250. 6.

**अख्यातिलाघव** (akhyāti-lāghava) *n.* ease in (accepting) the theory of Akhyāti (non-recognition of the non-association of the *dharma* or essential property of one object, viz. silver, with that of another, e. g. an oyster) सर्वैरप्यन्यथाख्यातिर्दुस्त्यजत्वाल्लघीयसी । तद्वादिनाप्यवर्ज्यत्वात् ततोऽप्यख्यातिलाघवम् NyāyPari. 40. 1.

**अख्यातिवाद** (akhyāti-vāda) *m.* (Philo.) the theory of Akhyāti (as held by the Prābhākara school) 'नेदं रजतम्' इति निषेधकज्ञानं तत्राध्यासनिवर्तकमिति चेत्, मैवम्, निषेधः परमार्थरजतगोचर इत्यख्यातिवादे प्रतिपादितत्वात् VivaPraSaṁ. 123. 1; नापि बुद्धेः कर्तृत्वमात्मन्यारोपयितुं शक्यम्, अख्यातिवादे भ्रान्त्यभावात् VivaPraSaṁ. 242. 3; अख्यातिवादश्चानुमानमात्रोच्छेदश्चापद्येयाताम् AdvaiSi. 497. 13.

**अख्यातिवादित्व** (akhyātivādi-tva) *n.* the state of being an exponent of the theory of Akhyāti (as held by the Prābhākara school) भ्रान्तिस्तु साङ्ख्यमते नास्ति, प्राभाकरवदख्यातिवादित्वात् SarvaDaKau. 106. 23; तवापि ख्यातिरेव भ्रम इति अख्यातिवादित्वहानिः IṣṭaSi. 142. 8.

**अख्यातिवादिन्** (akhyātivād-in) *m.* an advocate or exponent of the theory of Akhyāti (as held by the Prābhākara school) तस्मादसत् ख्याति, अनिर्वचनीयं ख्याति, तुच्छं ख्यातीति वा भ्रम इति अख्यातिवादिना नाश्रयितुं शक्यते IṣṭaSi. 142. 10; यथाहुः अख्यातिवादिनः "येषामपि विपरीतख्यातिस्तेषामप्यज्ञानवासनानिबन्धनो भ्रम" इति TātpaṬ.(Vā.) 90. 5 (*on* i. 1. 2); Bhām. 18. 23 (*on* i. 1. 1); TattvPradī.(Ci.) 5. 9; अख्यातिवादिनस्तु यत्र यदध्यास इति प्रसिद्धिस्तयोरेव विवेकाग्रहणनिबन्धनोऽयथाव्यवहार इति वदन्ति PrakaVi. 8. 8; ननु 'इदं रजतम्' इत्यत्र चक्षुरादिप्रमाणाभावात् पारिशेष्यात् स्मर्यमाणमेव रजतं न पुनस्तत्सदृशमित्यख्यातिवादिन आहुः VivaPraSaṁ. 31. 6; Nyāyāmṛ. 548B. 7; AdvaiSi. 340. 1; PūrvottaVāNaMā. 334. 8.

**अख्यातिवैषम्य** (akhyāti-vaiṣamya) *n.* difference (of view-point) from the theory of Akhyāti (as held by the Prābhākara school) अन्यथा त्वचा शङ्खं चक्षुषा च शुक्तिसादृश्यं ज्ञात्वा निमीलितनेत्रस्य नेत्रगतदोषात् पीतत्वरूप्यादिभ्रमः स्यात् रूप्येदमंशयोस्तादात्म्यभानेनाख्यातिवैषम्येऽपि ज्ञानैक्यानुभवविरोधस्याख्यातिपक्षदोषस्य साम्याच्च Nyāyāmṛ. 425B. 4.

**अख्यातिसमर्थन** (akhyāti-samarthana) *n.* support of the theory of Akhyāti (as held by the Prābhākara school) यदपि तिक्तशर्करादिप्रत्ययेष्वख्यातिसमर्थनकदाशया पित्तवृत्तेस्तिक्तत्वस्य संवेद्यमानस्य तत्स्थत्वेनाग्रहणमुपवर्णितं तदपि कुशकाशावलम्बनप्रायम् NyāyMañ. i. 169. 2.

**अख्यातिसंभव** (akhyāti-sambhava) *m.* possibility of the theory of Akhyāti (as held by the Prābhākara school) अत्रासंसर्गाग्रहस्य प्रवृत्तिव्यवहारादिहेतुत्वानुपपत्तेर्नाख्यातिसम्भवः BhāṭṭCin. i. 21. 13 (*on* i. 1. 4)

**अख्यातिस्वीकार** (akhyāti-svīkāra) *m.* acceptance of the theory of Akhyāti (as held by the Prābhākara school) अस्त्यख्यातिस्वीकारे प्रयोजनम् NyāSu.(Ja.) 53B. 1 (*on* i. 1. 1)

**अख्यात्यभाव** (akhyāty-abhāva) *m.* absence of erroneous cognition अख्यात्यभावे च सर्वो जनस्सर्वदा सर्वज्ञस्स्यात् IṣṭaSi. 116. 11.

**अख्यान** (a-khyāna) *n.* non-manifestation, non-perception असतो नरशृङ्गादेरख्यानात् TattvPradī.(Ci.) 76. 12.

**अख्यानख्यानता** (akhyānakhyāna-tā) *f.* non-perceptibility and perceptibility अख्यानख्यानता ज्ञेया असदर्थसदर्थयोः । आश्रयस्य परावृत्तिर्मोक्षोऽसौ कामचारतः MaYānaSū. 170. 9 (19. 54)

**अख्यानव्याप्त** (akhyāna-vyāpta) *adj.* pervaded by non-manifestation or non-cognition अख्यानव्याप्तं ह्यसत्त्वं नृशृङ्गादौ IṣṭaSi. 40. 10.

**अख्यानाभाव** (akhyānābhāva) *m.* absence of non-manifestation or non-cognition इदं नासत् रूप्यम्, अख्यानाभावात् IṣṭaSi. 40. 10.

**अख्यापन** ( a-khyāpana ) *n.* non-revelation, absence of display न हि विभूतिख्यापनेन कश्चिदतिशयो लभ्यते न चास्याख्यापनेन किञ्चिद्धीयते NyāyVār. 467. 2 (*on* iv. 1. 21); नोपालमेत ( v. l. उपालभते ) शयने रागप्रत्यायनाय ( Sūtra reads °प्रत्यानयनाय )…। तस्य तमिह न ख्यापनमु( v. l. मुहुरख्यापनमु )-चितं स्याद्रामभावस्य KandaCū. iv. 2. 40.

**अख्यापित** ( a-khyāpita ) *adj.* not mentioned or stated अख्यापिते हि विषये हेतुवृत्तेरसंभवात् PramāVār. 4. 21.

[1]**अग्** ( a-g ) *adj.* **1** (ending with a sound) other than *g* पूर्वपदात्संज्ञायामगः P. viii. 4. 3; पूर्वपदात् खावगः JaineVyā. v. 4. 87 ( Vṛtti षकाररेफवतः पूर्वपदात् अगकारान्तात् उत्तरस्य नकारस्य णो भवति खुविषये ); एत्यगः S'ākaṭāVyā. ii. 2. 157 ( comm. अगकारान्तात्परस्योत्तरपदस्य सकारस्यैकारे परे षिर्भवति… श्रीषेणः । वारिषेणः…अग इति किम् । विष्वक्सेनः ); पूर्वपदस्थान्नाम्न्यगः SiddhaHe. ii. 3. 64 ( comm. गन्तवर्जपूर्वपदस्थात् रषृवर्णात् परस्योत्तरपदस्थस्य नो ण् स्यात् संज्ञायाम्…अग इति किम् । ऋगयनम् ); **2** having no indicatory letter *g* भाव्योऽग् S'ākaṭāVyā. i. 1. 4; एतोऽगैप् S'ākaṭāVyā. i. 4. 116 ( comm. लेडादेशस्य म्वेनादेरेकारस्य ऐबादेशो भवति । आमोऽपवादः । अग् । अगकारानुबन्धकः )

[2]**अग्** ( ag- ) I P. [DhātuPā. I. 830] **1** to move crookedly, to move in a zigzag manner अक अग कुटिलायां गतौ भ्वादिः परस्मैपदी KāvyKaVṛ. 86. 15 (3. 5); 93. 6 (3. 5); अग कुटिलायां गतौ…अगति । अगयति DhātuPra. 1. 797 (56. 12); त्सरति स्याद्वक्रगतावकत्यगति च स्मृतम् KośaKaTa. 2. 1335; **2** to go अग इग गतौ KāvyKaVṛ. 92. 25 (3. 5); अगन्ति विहरन्तीत्यगाः । 'अग कल्याणविहारयोः' इति धातोः पचाद्यच् Appaya Dīkṣita's Vṛtti *on* Yādavā. 6. 68; **3** to be auspicious 'अग कल्याणविहारयोः' इति धातोः पचाद्यच् ।… तत्र 'अग कल्याणविहारयोः' इति धातुः प्रसिद्धधातुपाठतद्वृत्त्यादिषु न दृष्टः । तथापि शिष्टव्यवहारादादरणीयः Appaya Dīkṣita's Vṛtti *on* Yādavā. 6. 68.

[1]**अग** ( a-ga ) *adj.* **1** unable to move, immovable नगोऽप्राणिनि वा ।… अप्राणिनीति किम् । अगो वृषलः शीतेन CāndraVṛ. *on* v. 2. 96; नगो वाजीवे ।… अजीव इति किम् । अगो देवदत्तः शीतेन JaineVyā. iv. 3. 185; नगोऽप्राणिष्वन्यतरस्याम्…अप्राणिष्विति किम् । अगो वृषलः शीतेन KāśiVṛ. *on* P. vi. 3. 77; Prasā. i. 673. 19; SiddhāKau. 180B. 10; वागोऽप्राणिनि । अप्राणिनि अग इति वा निपात्यते…अगो वृषलः शीतेन S'ākaṭāVyā. ii. 2. 63; न गच्छति स्वतो न प्रवर्तते इत्यगं विश्वम् NyāySu.(Ja.) 136B. 7 (*on* i. 1. 6); **2** fixed (zodiacal signs Meṣa etc.) क्रूरः सौम्यः पुरुषवनिते ते चरागद्विदेहाः Bṛhajjā. 1. 11; **3** difficult to attain, inaccessible स च स्वर्लोकमारोक्ष्यन् सुनीतिं जननीं ध्रुवः । अन्वस्मरदगं हित्वा दीनां यास्ये त्रिविष्टपम् BhāgP. iv. 12. 32; **4** not passing away, not perishing, permanent न गच्छतीत्यगोऽनश्वरः Kāvyānu.(He.) 275. 8.

[2]**अग** ( ag-a ) *adj.* sporting ( पर्वतः ) अधाकागाङ्गकागाङ्गाङ्गकागखगाङ्गकः Yādavā. 6. 68 ( comm. गाङ्गके गङ्गासंबन्धिनि जले अगन्ति विहरन्तीत्यगाः )

[3]**अग** ( a-ga ) *m.* a letter other than *g* एति संज्ञायामगात् P. viii. 3. 99.

[4]**अग** ( a-ga ) *m.* (a suffix) other than (those denoted by) *ga* (= Ārdhadhātuka suffixes) न धुखेऽगे JaineVyā. i. 1. 18; i. 4. 109; ii. 1. 27; iv. 4. 48; v. 2. 81; v. 2. 151; (मिङ्शिङ्: JaineVyā. ii. 4. 93) शेषोऽग एव JaineVyā. ii. 4. 94.

[5]**अग** ( a-ga ) *m.* [Mayr. AltGr.II. i. p. 78] **1** a tree **2** a mountain **3** the number seven **4** the letter *h* **5** grains of rice **6** the sun **7** a raptile **8** a jar **1** a tree फलमल्पमपि प्रीत्यै स्यादगस्याधिरोपितुः BrahmāṇḍP. ii. 49. 56; शैलवृक्षौ नगावगौ AmaK. 2372; AnekāSa. 280; पुष्पैः सदानतः…अगः S'iśuVa. 4. 63; अगान्निरगान्मधुपावलिः S'iśuVa. 6. 7; अगा वृक्षाः CāndrVṛ. *on* v. 2. 96; KāśiVṛ. *on* P. vi. 3. 77; JaineVyā. 311. 16 ( *on* iv. 3. 185); स्नानव्याकुलयोषिद्गलमुपादायागमुपारूढम् … प्रणमत गोविन्दम् GovindA. 6; MahāP. 23. 150; मिथश्च पुष्पैर्नं मनोज्ञलक्ष्मीमहानिशान्ता विहसन्ति नागाः HarVi. 5. 64; गगनं गां नगानगान् । शरैः पूरयता…सुकेतुना HarVi. 43. 262; नृप हेतुरगान् पश्य त्वं लक्ष्म्या ज्वलितानिमान् RāghPāṇ.(Dha.) 7. 61; NalaCam. 2. 18; त्रिमूलकं द्विधोत्थानं पञ्चशाखं चतुश्छदम् । योऽगं वेत्ति नवच्छायं दशभूमिं स (च) काव्यकृत् YaśasCam. i. 479. 10; ii. 145. 10; अजिहेठदगांस्तान्…भीमस्य…चमूलेशो नोपद्रवमवीवृतत् DvyāśraKā. 9. 21; 20. 77; अगानसौ किन्नरकामिनीजनः सगानसौख्यः फलितान्निषेवते Surath. 4. 30; यत्र…अशोकाम्रजम्बवः । … विलसन्त्यगाः PārśvC. 6. 103; Nalo. 2. 15; NemiC. 12. 42; अधरीचकार सुदृशामखिलामपि मानसंस्थितिमगो वकुलः HammīMaKā. 5. 24; तं हि प्रदहति सहसा कोटरान्निर्यथागम् CaitaCa. 19. 4(1); भग्नोर्मिबाहु च पतद्भिरगैर्बभूव यन्निर्मितौ जलधिवर्त्म स सेतुरव्यात् YātrāPra. 5. 55; **2** a mountain सप्तपातालनालं च त्वगमक्षात्मनाम्बुजम् ? PauṣkS. 29. 125 शैलवृक्षौ नगावगौ AmaK. 2372; AnekāSa. 2. 80 केनचिज्जनस्य… । नगेन(? नागेन) नागेन…अरोधि पन्थाः पृथुदन्तशालिना S'iśuVa. 12. 48; वृक्षे शाखाः शिलाश्चाग इत्येषा लौकिकी मतिः । अगाख्यपरिशिष्टाङ्गैरन्तर्योपलम्भनात् TattvSaṁ. 831; अगवने जातं दुःखं जहातु तपस्विनी ĀścaCū. 4. 1; आभात्यसौ गजतया…सदानयागः HarVi. 5. 6; 5. 36; 5. 103; कुसुमसुधामलयोऽगस्तनुते यस्मिन्वपुः सुधामलयोगः Kapphiṇā. 6. 12; प्रवहवशविसंस्थुलाय वेचि स्पृहयति नाम्बुरुहैकबन्धवेऽगः RāmC. 6. 54; तेन भूर्भारवत्येषा समुद्रागद्रुमैर्न हि SkandP. iv. 58. 117; S'ivaP. ii(5). 5. 39 (226A. 11); हनूमान्धारयामास तत्रागं यत्र संस्थितः AgniP. 10. 20; यश्चोद्धृत्तभुजङ्गहारवलयोऽगं गां च योऽधारयत् । पायात्स…त्वां सर्वदो माधवः Dhvanyā. 235. 11 (*on* 2. 21); यश्चागं गोवर्धनपर्वतं गां च भूमिं पातालगतामधारयत् Loc. 95. 19 (*on* 2. 22); SaraKaṇṭhā. 192. 26; KāvyPra. 419. 3; Kāvyānu.(He.) 191. 14; DvyāśraKā. 16. 72; AlaṅkāSa. 96. 5; SaduktiKa. 26. 12; SāhiDa. 489. 5; भाति सदानत्यागः स्थिरतायामवनितलतिलकः KāvyPra. 535. 5; SāhiDa. 473. 10; अगसुताक्षिप्तो हरः पातु वः EI. xxi 44. 4; स भाति पृथिवीश्वरः श्रयति यत्र सिंहासनं श्रयन्ति रिपवोऽप्यगम् EI. xv. 351. 18; बिभरांबभूव कं विष्णुः…अगम्…गोवर्धनम् VidaMuMa. 2. 59(1); विषादी भैक्ष्यमश्नाति सदारोऽगं न मुञ्चति VidaMuMa. 4. 52; मन्त्रिवरः…मुनीन्द्रतुल्यं तमगं ददर्श KīrtiKau. 9. 46; अगः सनग आसन्नः सालतालततः Yādavā. 6. 67; 6. 99; YudhiVi. 5. 104; तौ… । विद्धतुरगमाकलय्य दुर्गं नगनगरीति निरुद्धनामधेयम् RājTa.(Prā.) 939; तारापथोल्लङ्घिषु धान्यकूटेष्वगास्तदौन्नत्यमवाप्तुकामाः Raghunā. 1. 38; ĀnandRa. 2. 47; **3** the number seven सौम्ये रसाः खं याम्येऽगाः सौम्ये खार्कास्त्रयोदश ( शरांशाः ) SūrySi. 8. 7; कृतवसुनवाष्टनवनवषड्( ? ट्त्रि )नवागेन्दवो ज्ञशीघ्रस्य BrahmSphuSi. 1. 17; 1. 26; मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत् VṛttaRa. 3. 91; Bhāsv. 1. 7; 2. 3; 3. 7; 3. 10; 4. 14; बुधशुक्रयोरथ कुजाद्विक्षेपका: खेश्वरा द्वीषुक्ष्माः षडगाः षडग्निशशिनः KaraṇaKu. 6. 9(27); पञ्चर्तवेगाङ्कविशिखाः GrahaLā. 13. 1; संज्ञा हयाश्च तुरगाः सप्तागमुनयोऽपि च GaṇiNā. 25; अगाः सप्त VīraMi.(Lakṣaṇa) 609. 20; **4** the letter *ha* रश्च अगश्च स्वं च तेषां समाहारो र( ? रा )गस्वम् । अगशब्देन स्थाणुर्हकारः । हः शिवः… स्थाणुरिति कोशात् LalitāSaBh. 31. 7 (*on* 54); **5** (pl.) grains of rice अगाः शालयः JaineVyā. 311. 16 (*on* iv. 3. 185); **6** the Sun अगः…भानौ AnekāSaṁ. 2. 29; ViśvaPra. 24. 2; AnekāTi. 2. 8; NānārthaMa. 257; NānārthaRaMā. 232; ParaNā. 2600; ViśvaLoK. 47. 3; KośaKaTa. 2. 4017; **7** a reptile अगः स्यात् ।…सरीसृपे AnekāSaṁ. 2. 29; ViśvaPra. 24. 2; AnekāTi. 2. 8; NānārthaMa. 257; NānārthaRaMā. 232; ViśvaLoK. 47. 3; ParaNā. 2600; S'abdaRa.(Su.) 2. 6; **8** a jar [Mayr.] अगः कुम्भः । तत्र स्त्यानः संहत इत्यगस्त्यः Durga *on* Nir. 1. 5; प्रासादागतडागनागमणिभूदानादिनानातपः प्रागल्भ्येन महेन्द्रचन्द्रवरुणब्रह्मेशविष्णुस्थली । …जिता VīraMi. ( Saṁskāra. ) 121. 23(1); **अग** has been mentioned as a synonym of **ओ** (EkārthaNā. 1. 14) and of पङ्क्ति (AnekāTi. 2. 203)

**अगकारपरावृत्त** ( agakāra-parāvṛtta ) *adj.* excluded from non-*ga* अगकारपरावृत्तगवर्णाभावतो भवेत् । गान्यबुद्ध्यनिरूप्यत्वं कस्य धर्मो हि धर्मिणः TattvSaṁ. 2481.

**अगकारान्तपूर्वपद** ( agakārānta-pūrvapada ) *n.* the first member not ending with *ga* पुरगावणमित्यत्र 'अगः' इति प्रतिषेधस्तु न । अगकारान्तपूर्वपदादित्यर्थात् LaS'abdeS'e. ii. 175. 8.

**अगखगकाकक** ( agakhagakākaka ) *adj.* who does not crave for sensual pleasures अगा गाम्…खगाङ्गागकङ्गागखगकाकक Kāvyāda. 3. 91 ( comm. अगति गच्छति इति अगं नश्वरमित्यर्थः, खानि इन्द्रियाणि गच्छतीति खगम् इन्द्रियविषयम्, ततश्च अगं खगं च यत् कं सुखं तदर्थं न ककते अभिलषतीति अगखगकाककः )

**अगगात्र** ( aga-gātra ) *adj.* [ *f.* -ā ] having a mountain-like body अहिगाद्यगगात्र ऋश्यकण्ठोत्कण्ठी…प्रेत्य आविरासन् DvyāśraKā. 4. 61.

**अगगु** ( aga-gu ) *adj.* having incoherent speech रे रे रोरुरूरोरुगागोऽगाङ्गगोऽगगुः Kāvyāda. 3. 92.

**अगगुण** ( aga-guṇa ) *adj.* multiplied by seven विभजेत्…पिण्डम् । शशिनोऽगगुणं वसुभिः KhaṇḍKhā. 1. 19.

**अगगुहा** ( aga-guhā ) *f.* a mountain-cave रश्मिष्वगगुहोन्मुक्तच्छायाजालभयादिव । गवाक्षादिष्विवोड्डीय प्रविष्टेषु गृहान्तरम् YogVā. vi(1). 1. 15.

**अगगो** ( aga-go ) *m.* the number ninety seven भौमस्य…देवेन्दु जातीन्द्वगगो नगार्धाः Bhāsv. 4. 7.

**अगङ्का** ( agaṅga-kā ) *f.* other than ( the river ) Gaṅgā, PrakriKau. i. 333. 2.

**अगङ्गदेश** ( agaṅga-deśa ) *m.* region where there is no (river) Gaṅgā. अगङ्गदेशे विज्ञाय निकटं मरणम्…शृणुयात्…इदमाख्यानम् BṛDharmaP. i. 52. 64.

**अगङ्गदेशवासिन्** ( agaṅgadeśavās-in ) *adj.* one residing in the region without the river Gaṅgā अगङ्गदेशवासी यो भग्नरागः…न गङ्गामाश्रयेद्देवीं परः स विधिवञ्चितः BṛDharmaP. i. 55. 45.

**अगङ्गवास** ( agaṅga-vāsa ) *m.* residence in a region without the river

Gaṅgā अगङ्गवासं सन्त्यज्य यो गङ्गावासमाव्रजेत् । स हि बुद्धिमतां श्रेष्ठः BṛDharmaP. i. 55. 50.

**अगङ्गाका** ( agaṅgā–kā ) *f.* other than ( the river ) Gaṅgā, PrakriKau. i. 334. 3.

**अगङ्गात्व** ( agaṅgā–tva ) *n.* the state of not being (the river) Gaṅgā गङ्गाशब्दलक्ष्यस्यागङ्गात्ववत् Nyāyāmṛ. 534B. 8; LaCandr. 674. 38.

**अगङ्गिका** ( a–gaṅgikā ) *f.* other than (the river) Gaṅgā, PrakriKau. i. 333. 3.

**अगचर** ( aga–cara ) *m.* monkey पादपचरः अगचरः वनस्पतिचरः । इत्यादि-द्वादशनामानि मर्कटस्य NāmMā. 12 (comm.)

**अगच्छ** ( a–gaccha ) *adj.* [ AltGr. II. i. p. 182 ] not going L; *m.* a tree, Vaija. 45. 5 [MW] cf. **गच्छ** TrikāS'e. ii. 4. 2.

**अगच्छत्** ( a–gaccha(n)t ) *adj.* [ *f.* –ntī, –tī ] **A** not going, not moving, not attaining योजनानां सहस्रं तु शनैर्याति पिपीलिका । अगच्छन्वैनतेयोऽपि पदमेकं न गच्छति MāṇḍūS'i. 16. 8; NāraS'i. ii. 8. 16; MārkP. 20. 38; SūktiRa. 78. 5; Subhāṣi. 2686; द्रागिमां चमरीं पश्य सितवालामगच्छतीम् MatsyaP. 209. 27; मन्दोदरी विभोः । अपश्यद्वदनं तृप्तिमगच्छन्ती PadmP.(Ra.) 73. 152; द्रवत्वेन विना चैषां संश्लेषः कथ्यते कथम् । आगच्छतां ( v. l. अगच्छतां ) च विश्लेषो न भवेद्वायुना कथम् S'lokaVār. 6. 110 (758. 6); भीमतत्त्वमगच्छति । समरे ( ब्राह्मीम्…श्रियमासदत् ) HarVi. 43. 113; अगच्छतोऽपि सन्निधानोपपत्तेर्गगनवत् PrakaPañ. 343. 11; अगच्छति गतिभ्रमे…इत्येवं नेयम् NyāyVārPari. 397. 4; अत्र रतिसुखानुभवाज्जिगमिषोरप्यगच्छत आलस्यं निष्पद्यते SaraKaṇṭhā. 594. 1; सर्वगतो ह्यसावगच्छन्नेव शक्नोति देहान्तरेण सम्बन्द्धुम् NyāyRa. 707. 17 (*on* 5(17). 73); नौयानात् अगच्छत्स्वपि वृक्षेषु गच्छत्प्रत्ययः PramāMī. 5. 20 (*on* i. 1. 7); न चागच्छति पटे तदाश्रयं चित्रं गच्छति TattvVai. 190. 26 (*on* 4. 10); सीवन्याः पार्श्वतोऽधस्ताद्विध्येद् व्रीहिमुखेण वै । मुष्ककोषमगच्छन्त्यामन्त्रवृद्धौ विचक्षणः BhāvPra.(Bhā.) 8(42 ? 43). 24; **B** not flowing पिच्चिते…नातिस्रवति शोणितम् । अगच्छति भृशं तस्मिन् दाहः…जायते S'uśruS. iv. 2. 27; **C** not having sexual intercourse ऋतावगच्छन्पत्नीं त्रिरात्रमुपवसेत् ViṣṇuSm. 54. 8; BālaKrī. i. 82. 21 (*on* 1. 79); VīraMi. (Vyavahāra.) 406. 4; **D** not serving its purpose संदिग्धेषु वाक्यशेषादित्यनेनागच्छत्…वाक्यम्…क्लेशेन गमयितव्यम् TantrVā. 1004. 13 (*on* iii. 4. 36)

**अगच्छेद** ( aga–ccheda ) *m.* cutting of a tree सदोत्सर्गोऽप्यगच्छेदाद् ऋजुगामीव नो मतः PārśvC. 6. 338.

[1]**अगज** ( a–gaja ) *adj.* **A** having no elephant, without elephant अधनेनार्थमार्जयितुं न शक्यते गजोऽगजेनेव Bārhas. 6. 9; NalaCam. 1. 47(12); शोच्यो रणः कीदृशः…अगजः VidaMuMa. 3. 15; निःसामर्थ्यं तद्विलोक्य गजागारमिवागजम् । तत्यजुर्विजयाशंसाम् RājTa.(Ka.) 8. 2529; **B** which is not an elephant पश्यैनमगजं गजम् NalaCam. 6. 57; **C** without any (rival) elephant अगजान्यस्य तु गजान्नगवर्ष्मसुवर्ष्मणः । अजस्रदानिनो दृष्ट्वाभवन्नन्येऽपि दानिनः SkandP. iv. 43. 22; *m.* other than an elephant किमयमगजे गजत्वोल्लेखीत्ययमयथार्थः NyāySu.(Ja.) 461A. 4 (*on* iii. 2. 1); नगरादगजे SiddhaHe. v. 1. 87.

[2]**अगज** ( aga–ja ) *adj.* **A** born on mountain कचाचितौ विष्वगिवागजौ गजौ Kirātā. 1. 36; सः…गज इवागजः ।…विजहार MahāP. 11. 67; गजा मुमूर्छुः शरवर्षतोऽगजाः RāghPāṇ.(Dha.) 6. 43; राजा…सगजमप्यगजं तद्वनमाससाद NalaCam. 1. 47(12); 6. 57; SkandP. iv. 43. 22; हस्ती स्यान्ननु कीदृशो बहुमतः…अगजः VidaMuMa. 3. 15; VīraBhā. 8. 44; **B** produced from a tree [PW., MW., APTE]; *n.* bitumen [PW., MW., APTE]

**अगजगजीव** ( agajaga–jīva ) *m.* stationary and moving living beings जय जय जय निर्गुण गुणधारित्र( ? न्न )गजगजीवतत्त्वशुभकारिन् BhaviP. 600A. 29 (iii(4). 25. 7)

**अगजङ्गम** ( aga–jaṅgama ) *adj.* moving creatures in which are unapproachable गरुत्मतागजङ्गमम् … पतङ्गनन्दिनीह्रदम् … निरीक्ष्य StavMā. 187. 27.

**अगजनाथ** ( a–gajanātha ) *adj.* bereft of (Airāvata) the best of elephants विदधासि…अगजनाथममरेन्द्रम् KuṭṭaMa. 33.

**अगजा** ( aga–jā ) *f.* name of Pārvatī (daughter of mountain) वलक्षं रुद्राक्षं द्विजतनुभिरेवेह विहितम् … श्रुतिविदितमार्गोऽयमगजे S'ivaP. i. 25. 44 (34A. 1); कल्याणायास्तु तद्धाम … यद्गजोऽप्यगजोद्भूतम् EI. i. 363. 5; VāstuVi. 1. 1; S'rīKaC. 16. 7; YātrāPra. 3. 172.

**अगजाति** ( aga–jāti ) *f.* a species of tree तत्र च प्रमदोद्याने सर्वा एवागजातयः । कुसुमस्तबकैश्छन्नाः PadmP.(Ra.) 46. 154.

**अगजानुविधेयगति** ( a–gajānuvidheyagati ) *adj.* whose gait cannot be imitated by the elephants अगजामगजानुविधेयगतिम् ।…कलये YātrāPra. 3. 172.

**अगजापुत्र** ( agajā–putra ) *m.* son of Pārvatī गजास्यमगजापुत्रम्…। नमामि VāstuVi. 1. 1.

**अगजाभुजंग** ( agajā–bhujaṅga ) *m.* god S'iva (the lover of Pārvatī) जाते प्रभातसमयेऽप्यगजाभुजंग पश्य स्वपित्ययमितो विधुरन्तरब्धेः S'rīKaC. 16. 7.

**अगञ्जित** ( a–gañjita ) *adj.* **i** unquestioned तत्साम्राज्यमगञ्जितम्…यद्बाला बलवन्मनोभवभयभ्रश्यत्त्रपं सत्रपा तत्कालोचितनर्मकर्म दयितादभ्यास्यमभ्यस्यति SubhāRaK. 19. 6; **ii** unshaken सोऽपि व्यज्ञापयद्देव त्वत्प्रभावादयं जितः (? दगञ्जितः) ।…स्वैरं भ्रान्तोऽस्मि भूतले PāṇḍaC. 2. 149; धीरः सचेतनो मौनी यो मार्गे यात्यसङ्गतः । बलिष्ठैरपि मोहाद्यैः स शिवं यात्यगञ्जितः PārśvC. 6. 376; **iii** not terrified अथागञ्जितश्च चौरैरिव परीषहैः ।…सार्थवाहमहामुनिः ।…पुण्यद्रव्यमुपार्जयत् S'āliC. 3. 70.

**अगड** ( agaḍa ) *m.* **A** a stall गजानामगडोऽपि च…एवं प्रायाणि चान्यानि यन्त्राणि सिध्यन्ति कल्पनात् SamarāSū. 31. 62; **B** bolt of the gate तडिकार्गला अगडकाष्ठानि YaśasCam.(comm.) i. 501. 11.

**अगडुकण्ठ** ( a–gaḍukaṇṭha ) *adj.* having no goitre on the neck यस्त्वां श्रीकण्ठ नौत्यार्तः कण्ठेगडुररुःशिराः । भवत्यगडुकण्ठः सः DvyāśraKā. 5. 134.

**अगडुलादि** ( a–gaḍulādi ) *adj.* not belonging to the group *gaḍulādi* प्राक्त्वादगडुलादेः SiddhaHe. vii. 1. 56; S'ākaṭāVyā. iii. 3. 6.

[1]**अगण** ( a–gaṇa ) *adj.* having no body of attendants एकश्चाप्यगणः संख्ये प्रत्याश्वासमरोचयम् MahāBhā. ix. 30. 36; सगणो वागणो वास्तु निहतो नियतं मया RājaTa.(Ka.) 8. 2126; *m.* one who does not belong to the body of demi-gods (S'iva's attendants) क्षतं क्षुण्णासुरगणैरगणैरिव किं यशः Kirātā. 15. 8.

[2]**अगण** ( a–gaṇa ) *adj.* innumerable येन गभीरे समरे रिपुगणमुन्मथ्य मार्गणैरगणैः । मार्गणनिवहविलब्धाः…करिणः LaṭaMe. 1. 6.

**अगणत्** ( a–gaṇat ) *adj.* [ = अगणयत् ] not taking into account, not taking into consideration क्रोधः…सर्वं दहति जीवानामगणंश्च निजेतरम् PārśvC. 2. 363.

[1]**अगणन** ( a–gaṇana ) *adj.* countless, innumerable प्रिये वाजिसहस्राणि तेनानीतानि विंशतिः । चीनदेशजसद्वस्त्रयुग्मान्यगणनानि च KathāSaSāg. vii. 9. 75.

[2]**अगणन** ( a–gaṇana ) *n.* **1A** neglect, disregard, not caring for दोषे व्याकरणं गुणेऽप्यगणनम्…लोकानां विनिपातलक्षणमिदम् DaśāvaC. 5. 141; नात्र त्रासभावध्वनित्वं शङ्क्यम्…नापि दैन्यध्वनित्वम्, सकलसैन्यक्षयेऽपि विपदस्तेनागणनात् RasGaṅ. 112. 10; **1B** not caring for, disregard (as one of the several rules of conduct for a tāntric *upāsaka*) तृतीयं धर्ममाह–अगणनं कस्यापि । स्वशास्त्रविरुद्धं यदि गीर्वाणगुरुर्वदेत्तर्हि स गुरुरिति गणनं न कर्तव्यम् ParaśuKS. 1. 15 (31. 16); **2** absence of enumeration, non-inclusion अत एव लिङ्गशरीरमध्ये प्राणानामगणनेऽपि न न्यूनता SāṁkhyaPraBh. 83. 25 (*on* 2. 31); एकार्थीभावफलेषु भाष्येऽस्यागणनात् LaS'abdeS'e. ii. 29. 7; भाष्ये नित्येष्वस्यागणनान्नास्य नित्यत्वम् LaS'abdeS'e. ii. 395. 9; शूद्रापुत्रस्य…ततो भेदेन तत्रागणनम् BālamBha. ii. 179. 10 (*on* 2. 132); ii. 236. 18 (*on* 2. 136); **3** not counting, non-calculation अकरणपक्षे च एकस्या विंशतेरगणने…भागदाने द्वे अवशिष्येते इत्युपपन्नम् MīmāKau. ii. 128. 24 (*on* ii. 4. 27); त्रिवृत्तस्य प्रत्येकं चक्रत्वाभावादगणनम् SetuBa. 40. 14.

**अगणनतस्** ( agaṇana–tas ) *adv.* owing to not being counted or separately noticed, on account of absence of separate mention ( प्राणः ) तेजोवद्वा न तत्त्वान्तरमगणनतो वायुतानुज्झनाच्च TattvMu. 1. 53.

**अगणनप्रसङ्ग** ( agaṇana–prasaṅga ) *m.* contingency of not counting or mentioning separately अन्यथा मालारूपस्योपमादेः तद्भेदगणनेऽगणनप्रसङ्गात् RasGaṅ. 308. 6.

**अगणना** ( a–gaṇanā ) *f.* **1** disregard, not paying attention to धाष्टर्य-जैह्म्यादिसंभूतमवहित्थं भयात्मकम् । तच्चागणनया कार्यं नाति चोत्तरभाषणात् NāṭyaS'ā. 7. 124; **2** absence (or impossibility) of counting (or enumerating) अनन्तेषु (अ)गणनां नीतेषु VakroJī. 242. 9.

**अगणनीय** ( a–gaṇanīya ) *adj.* not to be taken into account, not worthy of regard or (separate) enumeration महाब्धेस्तु … ग्रीष्मघनागमावप्यगणनीयौ AuciViCa. 23. 22; न ते वैचित्र्यविशेषमावहन्तीत्यगणनीयाः RasGaṅ. 367. 5; *n.* a high number [DBHS.]

**अगणनीयता** ( agaṇanīya–tā ) *f.* uncountability, being innumerable तत्पुनर्गुणानामगणनीयतया क्रियते Ekāva. 6(1). 77 (158. 2)

**अगणनीयत्व** ( agaṇanīya–tva ) *n.* not being worthy of consideration, not being worthy of recognition, worthlessness त्वदुक्तदूषणगणानामगणनीयत्वात् AdvaiSi. 836. 22; अत्र को वा इत्यनेन वाच्यलक्ष्यव्यतिरिक्तस्यागणनीयत्वस्य शेषकमठाभ्यामप्रकृताभ्यामन्वयः प्रतीयते RasGaṅ. 430. 12.

**अगणमद्** ( a-gaṇamada ) *adj.* not infatuated with (his) bands (of followers) तोदी सदिगगणमदोऽकलहं स सदा बलं विदन्तरिदम् । आर···आरम् Kāvyālaṅ.(Ru.) 4.14 ( comm. न गणेन सहायवर्गेण मदो यस्यासावगणमदः )

**अगणयत्** ( a-gaṇayat ) *adj.* [ *f.* -ntī ] **1** not minding, disregarding, not caring for प्रदोष एवाभिप्रस्थितः सन्नसद्वयःप्रमाणमगणयन्त्यात्मयौवनावस्थामेव चिन्तयन्त्या असद्रेहिन्यान्यथाशङ्कमानया निवारितोऽसि Ubhayābhi. 2.14; मया हि ···परिणतवयसापि सता···मत्संवर्धनक्लेशमतिमहान्तमपि स्नेहवशादगणयता यत्तातेन परिपालितस्तत्सर्वमेकपदे विस्मृतम् Kād. 35.17; अथ तत्र क्वापि गणिकागणयन्ती परिचितं हतद्रविणम् । प्रविशन्तमेव मन्दिरमीर्ष्याव्याजेन निरुरोध KuṭṭaMa. 331; ततोऽप्यनिवर्तमानो यथाशास्त्रं धनेन दण्डनीयः । तदप्यगणयन्नैश्वर्यादिना हन्तव्यः ManuBh. ii. 130.16 (*on* 8.129); आज्ञां गुरोरगणयन्नविवेकलोलामेकाकिनीं कथमहं भवतीं लजेयम् ĀścaCū. 3.31; आत्मानमप्यगणयंश्च रणानुरोधी···प्लवङ्गः···रजनीचरमभ्यधावत् RāmC. (App. 2) 37.52; संप्रति लोकयात्रामाद्रियमाणो( ? णा ) येऽत्यन्तपरार्थाः स्वोपकारमगणयन्तोऽपि परोपकाराय यतन्ते सन्तस्तान् प्रत्याह Kāśi. i. 2.17 (*on* 0.3); प्रस्थानसमयपरिम्लानमुखी: सुमुखीरप्यगणयन्तः···रक्षोभटा: Rāmā-Cam. 6.40 (5); तीव्रयौवनमदेनागणयन्ती महेश्वरम् BṛDharmaP. i. 36.70; अहमपि···मार्गामार्गमगणयन्···प्रधावितुमुर्वीपथेन लग्नः UdaySuKa. 30.9; त्रुटन्तमप्यगणयन्त्यो हारादिमणिसरकलापम्···मिलिताश्च तोरणद्वारेषु कामिन्यः UdaySuKa. 146.9; कस्यचित्कवेः ··· महतोऽपि तज्जातीयानगणयतः ··· स्वाभिप्रायाविष्करणमेतत् VyaktiVi. 56.21; शाठ्यादगणयन् न्यायं दण्ड्यो लिखितदूषकः RājTa.(Ka.) 6.29; दुःसहानगणयन् परीषहानार्षभिर्विहरति स्म मेदिनीम् PariPar. 3.292; 8.198; पायाद्वः···अब्धेः क्षुभितमगणयन्नद्भुतः कूर्मराजः SaduktiKa. 30.2; तादृग्राज्यसुखं हित्वा दुःखान्यगणयन् पथि ।···यात्यसौ मुदा PārśvC. 3.122; अगणयन्नागमसृणिम् । ··· जनः कं नानर्थं जनयति मदान्धो द्विप इव SindūPra. 50; PañcDa. 7.234; कुमारोऽहंकारात् परिषदि समानानगणयन् मुजौ वक्षः पश्यन्नववयसि कान्ति वितनुते S'ārṅgaPa. 577; NyāySu.(Ja.) 73A.2 (*on* i. 1.1); स वराहस्तान्यायुधान्यगणयन्···पर्वतान्तरगतं कन्दरं विवेश SiṁhaDvā. 147.0(24); स खलु···इन्द्राददहरत दिवं त्वामगणयन् Nārāy. vii. 24.2; सा दुरितमगणयन्ती पर्यटन्ती दिगन्तान् कृशरुचिमचिरेन्दुं रोहिणीवान्विियाय ( रामभद्रम् ) MahāN. 3.21; NīlaVi. 110.1; षडिकासिद्धिमगणयता भगवता भाष्यकारेणोक्तम् PāṇiTaVāNaMā. 9.17; असत्सैन्यैर्निरोधं कृतमगणयता स्वे पुरे सूपदिष्टम्···योगं स किल निशमयन् प्रापदन्तर्मुखत्वम् Jīvān. 75.2; **2** without actually counting फलानां भूरुहस्यास्य संख्यामगणयन्नपि । वेद्म्यहम्···कथयिष्यामि ते क्षणात् PāṇḍaC. 6.804; दधिपर्णः··· । कुञ्जमूचे फलान्यस्य ( वृक्षस्य ) कथयागणयन्नपि MalliC. 6.507; अत्र विभीतके यावन्ति फलानि तिष्ठन्ति तान्यगणयन्नहं तेषां संख्यां जानामि KathāK. 164.29; **3** not recognizing, not accepting, setting aside केचिदिमानपि चतुरो भेदानगणयन्तः··· त्रिविधमेव काव्यमाचक्षते RasGaṅ. 24.3.

**अगणयमान** ( a-gaṇayamāna ) *adj.* disregarding, not caring for यश्चासच्छासनमगणयमानस्स्वल्पामप्यत्राबाधा[ म् ] कुर्यात् EI. xv. 42.19; iii. 262.92; xxii. 173.24; xxiii. 87.35.

**अगणयित्वा** ( a-gaṇayitvā ) *ger.* **1** having discarded or disregarded, disregarding, not caring for प्रणयमगणयित्वा यन्ममापद्गतस्य । अधरमिव मदान्धा पातुमेषा प्रवृत्ता फलमभिनवपाकं राजजम्बूद्रुमस्य Vikramo. 4.27=VyaktiVi. 77.27; किं मामगणयित्वैव स्वातन्त्र्येण विचेष्टसे KathāSaSāg. vii. 6.76; अहो अगणयित्वैव मामयं भजतेऽपराम् KathāSaSāg. vii. 8.162; राजनिर्मितमर्धमगणयित्वा स्वयं कल्पितेन महतार्घेण···विक्रयं कुर्वताम् ( वणिजां दण्डः ) Aparā. 827.3 (*on* 2.250); राजदण्डमगणयित्वा स्वयं जितार्थसाधनमध्यवसाय राजाज्ञां विनापि कृते द्यूते परिपणितं पराजितेन देयम् DaṇḍaVi. 111.19; कथमगणयित्वैव शस्त्रवृष्टिमेषः ( उदयनः ) AmṛUda. 2.17(1); **2** not minding, leaving out of consideration अपूर्वमगणयित्वैव यागादिकर्तृषु धार्मिकशब्दमुपचरन्तो दृश्यन्ते Kāśi. i. 159.16 (*on* 2.192); अगणयित्वैव तदलङ्कारा उदाहृताः KāvyPra. 562.3; व्यङ्ग्यमलङ्कारान्तरं चागणयित्वैव तत्तदलङ्कारा उदाह्रियन्ते CitraMī. 18.15.

**अगणय्य** ( a-gaṇayya ) *ger.* not paying attention to, not caring for, disregarding अगणय्य स तान्सर्वान्··· । पद्मान्यगृह्णात् MahāBhā. iii. 765*.1; चम्पकस्ताञ्शरान्मुक्तानगणय्य महामनाः । रामास्त्रं प्रमुमोचाथ पुष्कलं प्रति PadmP. iv. 51.49; अगणय्य च दुःखानि प्राप्तासीद् व्रजसंनिधिम् ĀdiP. 17.41; शशिध्वजस्तत्प्रहारमगणय्य···। तं जघ्ने बाणवर्षेण KalkiP. iii. 9.8; प्रबलतरोन्मादादयं त्वामप्यगणय्य धावमानं च । मच्चेतोऽपस्मारं नियमय शंभो पदाभ्यां ते AryāS'. 36.

**अगणिका** ( a-gaṇikā ) *f.* not a courtezan (but still an unchaste woman) पुंश्चल्या व्यभिचारिण्या अगणिकाया अपि···अन्नं न भुञ्जीत ManvaMu. 183.20 (*on* 4.211)

**अगणिकान्वय** ( a-gaṇikānvaya ) *adj.* [ *f.* -ā ] not born in the family of a courtezan, born in a good family गणिकाध्यक्षो गणिकान्वयामगणिकान्वयां वा···सहस्रेण गणिकां कारयेत् ArthS'ā. i. 301.1 (2.27)

**अगणित** ( a-gaṇita ) *adj.* [ *f.* -ā ] **1 A** countless, innumerable, unlimited प्रसन्ना ये प्रयच्छन्ति स्वल्पेऽप्यगणितं वसु । ···तान् गच्छेत् स्वैरपि व्ययैः KāmSū. 351.13 (6.5); अगणितनरहयकरिकुलविमर्दजनितेन रेणुतुहिनेन EI. xvii. 340.8; दृश्यन्ते दारुनार्यो युगपदगणिताः स्तम्भसूत्रप्रयुक्ताः S'atS'lo. 55; गणानां पार्वतीभर्तुर्गणैरगणितैर्युतम् । ··· कल्पपादपकाननम् BṛKathāS'loSaṁ. 5.24; स प्रदेशः सकौतुकैः । जनैरगणितैर्व्याप्तः BṛKathāS'loSaṁ. 21.152; गणभृद्भिरप्यगणितानननगूंस्तव सद्गुणान् वयमभीष्टुमहे MahāP. 23.120; एषां तु चतुर्णामपि संकीर्णानां स्युरगणिता भेदाः Kāvyālaṅ.( Ru. ) 10.24; BālRā. 6.3; त्वया कृतानि पापानि महान्त्यगणितानि वै BṛNāraP. 34.37; पिता । उपायनं प्रेषितवान् गजैरगणितैस्तथा DvyāśraKā. 9.163; राजवेश्मन्यगणिता नाममात्रं नृपात्मजाः ( पार्थिवोपप्लवप्रियाः ) RājTa. ( Ka. ) 8.706; यद्यस्याप्युदरे भवेदगणितस्तावन्मणीनां गणस्तत्किं नैष ( जलधिः ) करोति रत्नकरकासारैः समृद्धं जगत् SaduktIKa. 269.28; नमोऽगणितकल्याणगुणपूर्णाय विष्णवे Vādā. 1.1; रत्नानि···। ददात्यगणितान्येवमर्थिभ्यः सिकता यथा KathāKau. 6.47; ( स्नात्वा ) वाराणस्यामगणितं फलम् BālamBha. iii. 200.10 ( *on* 3.327 ); **1 B** not (distinctly) enumerated or specified अगणितोऽपि गणः सम्बन्धग्रहहेतुः आकृतिगण इव शब्दानाम् NayaVi. 103.4 ( *on* i. 1.5 ); **1 C** not (actually) mentioned or enumerated व्यावर्तकसमसङ्ख्येनाल्पेनागणितेनापि धर्मेण सादृश्यव्यवहारात् TattvCin. iii. 20.4; वेदशाखाव्यासदशायां निरुक्तशाखाया अगणितत्वात् NyāyPari. 476.13; **1 D** not specifically numbered or counted, not specified fully or in detail चतुर्णां वेदनयनपक्षास्त्वगणिताः क्रमात् YuktiKa. 69.7; निक्षिप्यत इति निक्षेपः, मुद्राङ्कितमगणितं वा यन्निधीयते स उपनिधिः। ब्राह्मणपरिव्राजकवदुपदेशभेदः ManvaMu. 323.11 (*on* 8.185); **2 A** not cared for, disregarded, not reckoned हस्तादुत्पत्य यान्त्या गगनमगणिताधैर्यवीर्यावलेपम्···सप्तलोकीजनन्यास्तर्जन्या जन्यदूयो नखरुचितयस्तर्जयन्त्या जयन्ति CaṇḍiS'. 54; यादृच्छिकं हि स्वप्नसुखमगणितसाम्परायिकैहिकनिमित्तम् Kāśi. ii. 35.17 ( *on* 5(2).12 ); स्फुरदनन्तचिदात्मकविष्टपे··· । अगणितापरचिन्मयगण्डिके प्रविचरेयमहं भवतोऽर्चिता Stotrā. 5.24; ( येन ) सत्त्वं वसुमहीपतेरगणितं रूपेण चन्द्रस्मयः BṛKathāMañ. 18.42; अन्तर्थे सततं लुठन्त्यगणितास्तानेव पाथोधरैरात्तानापततस्तरङ्गवलयैरालिङ्ग्य गृह्णन्नसौ । व्यक्तं मौक्तिकरत्नतां जलकणान् संप्रापयत्यम्बुधिः प्रायोऽन्येन कृतादरो लघुरपि प्राप्तोऽर्घ्यते स्वामिभिः RājTa.(Ka.) 3.202= Subhāṣi. 889; अथ सुगतपुरं प्रतस्थतुस्तावगणितसद्गुरुगौरवोपदेशौ PrabhāC. 65.29; **2 B** not given (due) consideration, unheeded, neglected किमेनया··शेषितं महापातकेषु, किमगणितमकार्येषु, किमप्रवर्तितं वर्णसङ्करेषु, किममित्रं मर्यादासु AvantiKa. 47.11.

**अगणितकिरातचक्र** ( agaṇita-kirātacakra ) *adj.* not caring for the multitude (or group) of *kirātas* स्वस्त्रीयं तु सुंहनाथम्···विन्ध्यपार्श्वसंनिकृष्टं श्रुत्वा ततो बलैकदेशेनात्मानमावार्य प्रत्यमित्रं जिगमिषुरवक्र इत्यध्वनानेनागणितकिरातचक्रः परिक्रान्तवान् AvantiKa. 173.6.

**अगणितकुशल** ( a-gaṇitakuśala ) *adj.* not expert in (astronomical) calculations; not good at contemplation (of facts) मनोऽपि चागणितकुशलस्य नैवमर्थम् ( v. l. नैव समर्थम् ) BhāvanāVi. 150.1 ( comm. गणितशब्देन मानसोऽभ्यासो योगोऽभिधीयते ··· अथवा गणितकुशलो दैवज्ञः अगणितकुशलोऽदैवज्ञः )

**अगणितकृतकीर्ति** ( agaṇitakṛta-kīrti ) *adj.* who has increased his fame manifold अगणितकृतकीर्तिः···निजगृहमथ गत्वा शम्भुराजो ननन्द ParamāKā. 176.52.

**अगणितक्रमम्** ( agaṇita-kramam ) *adv.* not minding or caring for the serial order (not serially), simultaneously गुणगणैरगणितक्रममाक्रम्यमाणयोः···अतिचक्रमुः कतिपयेऽपि दिवसाः TilaMañ. 104.5.

**अगणितगजकुल** ( agaṇita-gajakula ) *n.* innumerable herds of elephants सापि···भ्रमन्ती कथमपि विन्ध्यवनमिदम्···अगणितगजकुलकलिलम्···अविशत् HarṣaC. 320.18.

**अगणितगरुड** ( agaṇita-garuḍa ) *adj.* which has disregarded Garuḍa अगणितगरुडः···जयति ।···श्रियः केलिः AryāSaS'a. 24*.

**अगणितगुण** ( agaṇita-guṇa ) *adj.* **1** endowed with or possessed of innumerable (good) qualities अगणितगुणम्···प्रणतोऽस्मि रामचन्द्रम् AdhyāRā. iii. 8.44; प्रणमत मधुभिदम्···अगणितगुणम् ĪśānS'iPa. i. 19.73; स्वासु विद्यासु विप्राः प्राप्ता निष्ठामगणितगुणाः EI. xiii. 291.7; अगणितगुणेन सुन्दर कृत्वा चारित्रमभ्युदासीनम् । भवतानन्यगतिः सा विहितावर्तेन तरणिरिव ĀryāSaS'a. 47; **2** who has disregardad the (binding) rope, ĀryāSaS'a. 47; *m.* innumerable qualities सत्त्वादिस्थैरगणितगुणैर्हन्त विश्वं प्रसूय व्यक्तं धत्ते प्रहसनकरीं या कुमारीति संज्ञाम् RasiJī. 36.

**अगणितगुणगण** ( agaṇita-guṇagaṇa ) *adj.* possessed of an unlimited

or uncountable host of good qualities गन्धर्ववती … गणपतिमगणितगुणगणमसूत …तनयम् EI. xii. 73. 15.

**अगणितगुणदोष** ( aganita-gunadosa ) *adj.* not caring for (any difference between) virtue and vice or right and wrong अगणितगुणदोषो युद्धतीक्ष्णश्च बाल्यात्र च दहति न कश्चित् सन्निकृष्टो रणाग्निः PañcRā. 2. 15; इह सरजसि मार्गे चञ्चलो यद्विधाता ह्यगणितगुणदोषो हेतुशून्यत्वमुग्धः Subhāsi. 3136.

**अगणितगुणभू** ( aganitaguna-bhū ) *f.* the receptacle of innumerable (good) qualities अगणितगुणभूः…नाम्नाभूदर्जुनोऽस्मान्नरपतिः ViraMi. (Saṁskāra.) 118. 17.

**अगणितगुणसत्त्व** ( aganitaguna-sattva ) *adj.* having unlimited qualities and strength अगणितगुणसत्त्वान्…। पवनहितकुमारः प्रेषयामास दूतान् AdhyāRā. iv. 4. 54.

**अगणितगुणौघ** ( aganitagunaugha ) *m.* a flood (host) of innumerable virtues विविधविबुधवृन्दानन्दसन्दोहकन्दो यदि( ? द )गणितगुणौघः सोऽद्य हेमाद्रिसू-( ? सू )रिः । …व्रतनिवहमिदानीं पौर्णमासीं ब्रवीमि CaturCin. ii(2). 160. 4.

**अगणितगुरु** ( aganita-guru ) *adj.* 1 not careful (to act decently in the presence) of respectable or elderly persons, not paying any attention to the elderly persons अगणितगुरुः…रतिलम्पटः।…लज्जायां मां निमज्जयति प्रियः SaduktiKa. 94. 13; दर्पादगणितगुरुः … बलितया … प्रपेदे तस्येदं फलमुचितमेव HaṁsDū.( Rū. ) 132; 2 who has disregarded (the advice of) the preceptor, HaṁsDū.( Rū. ) 132.

**अगणितगुरुभीति** ( aganita-gurubhīti ) *adj.* who has disregarded great fear or danger उपगतमवलोक्यावज्ञया सैन्यमुच्चैरगणितगुरुभीतिर्मुक्तसंरम्भमग्रे। हरिणपरिवृढोऽस्थात् HarVi. 41. 26.

**अगणितगुरुशोक** ( aganita-guruśoka ) *m.* unlimited great distress or affliction अगणितगुरुशोकसंप्रमूढावथ सुमतिश्च तटातकाप्यभूताम् SivLī. 7. 44.

**अगणितजनापवाद** ( aganita-janāpavāda ) *adj.* [ *f.* -ā ] who has disregarded or not cared for infamy अगणितजनापवादा … वराकी ज्वरस्य तल्पं प्रकल्पयति ĀryāSaSa. 67.

**अगणिततनूतापम्** ( aganita-tanūtāpam ) *adv.* without caring for physical hardship पितुश्च पितामहान् । अगणिततनूतापं तप्त्वा तपांसि भगीरथः …चिरादुददीधरत् UttaRāC. 1. 23.

**अगणितत्रपम्** ( aganita-trapam ) *adv.* disregarding shame, shamelessly तस्य…दृष्टिपातचकितैर्गगनाग्रात् । निर्जरैरगणितत्रपमाशु स्त्रीगणस्य पुरतोऽपि पलायि Surath. 11. 5.

**अगणितत्व** ( aganita-tva ) *n.* the state of not being considered or not being taken into account पुरुषस्येव काव्यस्य लक्षणगुणालङ्कारव्यवहारो न युक्तः… काव्यस्य…विरचनकाले प्रतिपत्तिकाले वा प्रापकसत्तायां तेषामगणितत्वाच्च AbhinBhā. ii. 295. 9 ( *on* 16. 0 )

**अगणितद्रविणवितरण** ( aganitadravina-vitarana ) *n.* giving away of immense wealth अदृष्टे तु विषये वैदिकेष्वगणितद्रविणवितरणादिक्लेशसाध्येषु कर्मसु तत्प्रामाण्यावधारणमन्तरेण प्रेक्षावतां प्रवर्तनमनुचितम् NyāyMañ. i. 155. 4.

**अगणितनिजखेद** ( aganita-nijakheda ) *adj.* not minding one's own exhaustion or fatigue अगणितनिजखेदः पादसंवाहनाभिः परिचरति च हृष्यं लक्ष्मणो रामभद्रम् BālRā. 6. 43.

**अगणितनिजग्लानि** ( aganita-nijaglāni ) *adj.* disregarding or unmindful of one's own exhaustion or fatigue यत्र स्नेहादगणितनिजग्लानिभिर्मुग्धदारैः। सौधोत्सङ्गे शशधररुचः…व्याकृष्यन्ते रुचिरचमरीवालभारभ्रमेण PavaDū.(Dh.) 41.

**अगणितनिजश्रम** ( aganita-nijaśrama ) *adj.* not caring for or disregarding one's own exertion यद्वयम्…आकर्ण्य वा मदीयमाक्रन्दम्…अगणितनिजश्रमो नागच्छेत् TilaMañ. 314. 9.

**अगणितनिदाघ** ( aganita-nidāgha ) *adj.* not caring for or unmindful of summer heat सरसंतापादगणितनिदाघमालिङ्गते मिथुनम् ĀryāSaSa. 450.

**अगणितनिधन** ( aganita-nidhana ) *adj.* disregarding poverty ( *or* one's death ) शून्ये क्षिप्त्वाम्बु गर्जत्यगणितनिधनो वारिवाहः सगर्वम् Subhāsi. 852.

**अगणितपतिनर्मन्** ( aganita-patinarman ) *adj.* disregarding or paying no heed to the jokes of the husband अगणितपतिनर्मा कूणितभ्रूलतान्तस्त्यजति कुलवधूनां वासगेहानि सार्धः YaśasCam. i. 359. 1.

**अगणितपरपक्ष** ( aganita-parapaksa ) *adj.* disregarding or not heeding the side of the adversary or the army of the enemies ( हरिः ) अगणितपरपक्षः श्येनपातं पतित्वा…गृहीत्वा कंसमुच्चैः कचेषु । अनुपतति शिलायां पोथितम् KaṁVa. 6. 44.

**अगणितपरिखेद** ( aganita-parikheda ) *adj.* [ *f.* -ā ] disregarding grief or sorrow अगणितपरिखेदा याति षण्णां सुतानामपचयगमनार्थे सप्तमं रक्षमाणा ( देवकी ) BālC. 1. 10.

**अगणितपरिशुद्धि** ( aganita-pariśuddhi ) *adj.* disregarding (i. e. not observing the rules with regard to) purity अगणितपरिशुद्धिर्मन्त्रतत्त्वानभिज्ञः स पतति खलु मूर्खो देशिकः साधको वा ĪśānSiPa. i. 3. 3.

**अगणितपुरुषगामिन्** ( aganitapurusa-gāmin ) *adj.* [ *f.* -ī ] running after many men कामतश्चरन्त्यः अगणितपुरुषगामिन्यः स्त्रियः HārLa. 202. 21.

**अगणितपूर्व** ( aganita-pūrva ) *adj.* 1 who was disregarded or ignored earlier कथमगणितपूर्वं द्रक्ष्यते तं नरेन्द्रः PratiYau. 1. 11; ii not thought of before कथमगणितपूर्वः सर्वलोकाधिदायी । समजनि परिणामः कष्टमेवंविधोऽयम् MadaKeC. 102.

**अगणितप्रणय** ( aganita-pranaya ) *adj.* who does not pay attention to a request न कथयत्यमगणितप्रणयोऽयम् ( वृक्षः ) JānaPa. 6. 17(5)

**अगणितप्रतियात** ( aganita-pratiyāta ) *adj.* who has returned unheeded or unnoticed आगतानगणितप्रतियातान् वल्लभानभिसिसारयिषूणाम् । प्रापि चेतसि…सुभ्रुवामवसरः सरकेण SiśuVa. 10. 20

**अगणितप्रोषदोष** ( aganita-prosadosa ) *adj.* not caring for the pain of burning, disregarding the pain of heat (of fire) पुण्याग्नौ पुण्यवाञ्छः प्रथममगणितप्रोषदोषः प्रदोषे पान्थस्तप्त्वा प्रसुप्तः प्रतततनुतृणे धामनि ग्रामदेव्याः SaduktiKa. 182. 21.

**अगणितप्लोषदोष** ( aganita-plosadosa ) *adj.* not caring for or not heeding the inconvenience of severe or scorching heat पुण्याग्नौ पूर्णवाञ्छः प्रथममगणितप्लोषदोषः प्रदोषे पान्थः सुप्त्वा यथेष्टं तदनु…वाते वाति प्रकामं हिमकणिनि रणन् कोणतः कोणमेति SūktiMu. 64. 12; SārṅgaPa. 3946; Subhāsi. 1857.

**अगणितफलदायक** ( aganitaphala-dāyaka ) *adj.* bestowing or granting innumerable fruits (i. e. unlimited or incalculable favours) अगणितफलदायकः प्रसुमें जगदधिको हृदि राजशेखरोऽस्ति SivaL. 70.

**अगणितबाध** ( aganita-bādha ) *adj.* [ *f.* -ā ] not paying heed to pain or trouble सदा लोकान् धत्ते यदगणितबाधा वसुमती SaduktiKa. 304. 2.

**अगणितबाल** ( aganita-bāla ) *adj.* not caring for young girl शुककुलमगणितबालं नाहं यास्यामि शालिरक्षायै SrṅgāMañ.(A.) 10. 8.

**अगणितभय** ( aganita-bhaya ) *adj.* [ *f.* -ā ] paying no heed to fear (inspired by some one or something) दृष्टिरगणितभयासिलतामवलम्बते स्म SiśuVa. 15. 9; शाखिशिखरे … वसति । … अगणितभयम् … खगमिथुनम् ĀryāSaSa. 579.

**अगणितभवक्लेश** ( aganita-bhavakleśa ) *adj.* disregarding or not caring for the sufferings caused by mundane existence शमक्षमैरङ्गैरगणितभवक्लेशविपदः कदा मे स्याच्चुतिर्हरचरणसेवासुखरसैः Subhāsi. 3416.

**अगणितभी** ( aganita-bhī ) *adj.* immune to fear, fearless, bold तत्रास्ति… राजा रणाङ्गणेष्वगणितभीर्भीमो नाम NalaCam. 2. 28(10); रणाङ्गणेष्वगणितभीर्भीमो नाम तदग्रसुतः EI. iii. 308. 16.

**अगणितभूभुज्** ( aganita-bhūbhuj ) *adj.* not caring for or disregarding the king (i. e. not afraid of the king) उपेक्ष्यमाणास्ते दर्पात्तेनागणितभूभुजा । ज्वलिते ज्वलने देहान् बहवो जुहुवुः शुचा RājTa.(Ka.) 8. 2225.

**अगणितमरण** ( aganita-marana ) *adj.* not caring for or disregarding death भटोऽन्यः।…अगणितमरणः प्रविश्य वेगादरिकरतः करवालमाचकर्ष VikraDeC. 6. 76.

**अगणितमरुद्गण** ( aganita-marudgana ) *adj.* not paying heed to the hosts of gods अथवाब्धमेव खलु यूयमगणितमरुद्गणौजसः SiśuVa. 15. 64.

**अगणितमहायन्तृ** ( aganita-mahāyantr ) *adj.* disregarding the competent or skilful conductor अगणितमहायन्ता दन्ती न विन्दति चातुरीम् RājTa.(Prā.) 672.

**अगणितमहिमन्** ( aganita-mahiman ) *adj.* not paying heed to or not caring for (the family) prestige अगणितमहिमा लङ्घितगुरुधनेहः…तस्यास्त्वयि रागः प्राणनिरपेक्षः ĀryāSaSa. 10 ( comm. महिमा कुलप्रतिष्ठा )

**अगणितयशस्** ( aganita-yaśas ) *adj.* disregarding or not caring for fame or glory अगणितयशसा त्यक्तस्थितिना क्रियतेऽथ याकृतज्ञेन । स्निग्धे सुहृदि सरागे मित्रे तव वञ्चना न युक्ता सा KalāVi. 2. 61.

**अगणितयुक्तायुक्त** ( aganita-yuktāyukta ) *adj.* disregarding or not caring for discrimination between proper and improper or right and wrong ( दग्धात्मजन्मा ) अगणितयुक्तायुक्तो लगयति चेतो यदस्थाने KuttaMa. 995.

**अगणितरस** ( aganita-rasa ) *adj.* possessed of innumerable tastes द्रव्याण्येतान्यचिन्त्यान्यगणितरसवीर्यप्रपाकप्रभावान्युक्तानि KalyāKā. 10. 24.

**अगणितराजापाय** ( aganita-rājāpāya ) *adj.* disregarding the penalty or punishment (imposed) by a king अगणितराजापायोऽविच्छिन्नायः स्वभाव-

तस्त्यागी। किमुपेक्षितोऽनुरक्तो वामधिया शौल्किकाध्यक्षः KuṭṭaMa. 531 (comm. तुच्छीकृतराजदण्डादिभयः)

**अगणितराज्याभिलाष** (agaṇita-rājyābhilāṣa) *adj.* not caring for (i. e. setting aside) the desire for a kingdom रामः … पितृवचनाच्चागणितराज्याभिलाषो भ्रातृभार्यासमेतो वनं प्रविवेश ViṣṇuP. iv. 4. 95.

**अगणितराज्यैश्वर्य** (agaṇita-rājyaiśvarya) *adj.* disregarding or not caring for the greatness of sovereignty क्वासौ तृणवदगणितराज्यैश्वर्यः (रामः) Prati. 2. 6(2)

**अगणितरिपु** (agaṇita-ripu) *adj.* not minding or not caring for the enemies अगणितरिपुभिः…चमूनामाक्रान्ता भ्रातृभिर्मे दिशि दिशि समरे कोटयः संपतन्ति VeṇīSaṁ. 2. 356.

**अगणितरौद्रक्लेश** (agaṇita-raudrakleśa) *adj.* [*f.* -ā] **1** not caring for severe pain अगणितरौद्रक्लेशा प्रकाशयन्ती स्वम्…हरसि मां सुतनु ĀryāSaS'a. 99; (comm. रौद्रः दुःसहः) **2** not caring for the trouble of heat, ĀryāSaS'a. 99 (comm. घर्मसंबन्धी क्लेशः)

**अगणितलज्ज** (agaṇita-lajja) *adj.* disregarding shame [MW.]

**अगणितलाघव** (agaṇita-lāghava) [*f.* -ā] not caring for or not minding disrespect or infamy केवलमगणितलाघवदूरपरित्यक्तधीरताभरणा। मुखरयति मां दुराशा KuṭṭaMa. 96. (comm. लाघवं अपकर्षः)

**अगणितवाच्यावाच्यम्** (agaṇita-vācyāvācyam) *adv.* not caring for what should and should not be spoken अगणितवाच्यावाच्यं क्रीडन्ति जनाः प्रवृद्धहर्षेण KuṭṭaMa. 889 (comm. इदं बालेभ्यः गुरुभ्यः स्त्रीभ्यः तत्सन्निधौ च वाच्यं न वाच्यं इति अनादृत्यैव अविशेषेण अश्लीलादिवाक्प्रवर्तनं यथा स्यात् तथा)

**अगणितवीत** (agaṇita-vīta) *adj.* disregarding the prick of the goad अभिगच्छति पुनरस्मिन्नगणितवीतैर्यथायथं त्वरितम् (करिभिः) YaśasCam. i. 500. 8 (comm. वीतं अङ्कुशकर्म)

**अगणितव्यथ** (agaṇita-vyatha) *adj.* not caring for or disregarding pain or suffering अभ्यगादगणितव्यथस्तथा कोऽप्यरिं कपियुवा जवोत्तरः RāmC. 29. 46.

**अगणितव्ययक्रिय** (agaṇita-vyayakriya) *adj.* not caring for expenditure द्वौ सुहृदौ … स्वकर्मबलोपार्जितवित्तत्वादगणितव्ययक्रियौ … प्रतिवसतः Pañcā. 46. 4.

**अगणितव्रणौघ** (agaṇita-vraṇaugha) *adj.* not caring for a number of wounds ययावराक्षसं कृत्वा सौमित्रिर्भ्रातुरन्तिकम्। जयोत्सवादगणितव्रणौघैः प्लवगैर्वृतः RāmC. 35. 18.

**अगणितशरीरक्लेशम्** (agaṇita-śarīrakleśam) *adv.* not caring for bodily exertion, without caring for physical exertion or pain अनुल्लिखितार्थलाभसमुल्लासेन किंचिदप्यगणितशरीरक्लेशमायस्यद्भिरपि सुरासुरैरालोकमानः सागरमथनसंरम्भमानन्द गोविन्दः NīlaVi. 88. 10.

**अगणितशूद्रदोष** (agaṇita-śūdradoṣa) *adj.* who did not care for or mind the sin of (taking food from) a *śūdra* विदेश इत्यगणितशूद्रदोषानमूनथ। आभीरो भोजयामास KumāCaSaṁ. 13. 3.

**अगणितश्रम** (agaṇita-śrama) *adj.* unmindful of fatigue or exertion स्खलिताकुलिते गमने तन्वङ्ग्या अगणितश्रमेण कल्याणभागिना (त्वया)…सत्वरमयं प्रापणीयो लेखः TilaMañ. 349. 13.

**अगणितसंगर** (agaṇita-saṅgara) *m.* countless or innumerable wars यः समरघङ्घलाख्यामन्वर्थवतीं दधार रणरौद्रः। अपरामगणितसङ्गरकरिरदनाग्राङ्कितोरस्कः EI. i. 13. 8.

**अगणितसर्वशङ्क** (agaṇita-sarvaśaṅka) *adj.* [*f.* -ā] ignoring all misgivings अगणितसर्वशङ्कया तरलहृदयतां दर्शयन्त्याद्य मया किं कृतमिदम् Kād. 197. 6.

**अगणितसहचरवचस्** (agaṇita-sahacaravacas) *adj.* who has disregarded the counsel of a companion अगणितसहचरवचसो दुर्व्यसनमहाब्धिमग्नवपुषस्ते KuṭṭaMa. 429.

**अगणितसुखसौभाग्य** (agaṇita-sukhasaubhāgya) *n.* unlimited or limitless pleasure and fortune (सुदत्ताचार्यस्य कीर्तिपर्तिवरा) अक्षयक्षयामयसंशयितजीवित बुधतात न शरणमगणितसुखसौभाग्यभाषितजन्मलग्नायाः प्रबन्धनिधुवनविधीनाम् इति निशादर्शम्…अनभिनन्दन्ती…न क्वचिदद्यापि बध्नाति स्थितिम् YaśasCam. i. 85. 1.

**अगणितसृणि** (agaṇita-sṛṇi) *adj.* who has disregarded or defied the goad अगणितसृणिभिः प्रधावितैर्यैः कुलगिरयः परिघट्टितास्तटेषु VikraDeC. 6. 41; अयम्…उदस्तकरार्गलः। अगणितसृणिः … प्रविशति नृपस्यान्तःकक्षां जवादरिमुद्गरः SaduktiKa. 203. 26.

**अगणितस्खलदुत्तरीय** (agaṇita-skhaladuttarīya) *adj.* [*f.* -ā] unmindful of the dropping of the upper garment आलोक्य मामगणितस्खलदुत्तरीया।…आश्लिष्टवती MālaMā. 4. 137 = SaraKaṇṭhā. 614. 17.

**अगणितस्वाङ्गव्यय** (agaṇita-svāṅgavyaya) *adj.* not caring for the emaciation of one's own body पाथोनाथ…तं हन्त सदा वहस्यगणितस्वाङ्गव्ययो वाडवम् SūktiMu. 27. 8.

**अगणितस्वार्थ** (agaṇita-svārtha) *adj.* who does not care for or entertain selfish considerations, who does not care for one's own benefit ये कारुण्यपरिग्रहादगणितस्वार्थाः…ते साधवः SaduktiKa. 302. 25.

**अगणिताङ्कुश** (agaṇitāṅkuśa) *adj.* not caring for or disregarding the (prick of the) goad स ययौ मत्तहस्तीव वेगादगणिताङ्कुशः DarpDa. 1. 45.

**अगणिताज्ञ** (agaṇitājña) *adj.* whose orders are disregarded or defied भृत्यैरगणिताज्ञस्य…अरतिस्तस्य व्यथितस्याधिकाभवत् RājTa.(Ka.) 7. 716.

**अगणितात्मविनिपात** (agaṇitātmavinipāta) *adj.* [*f.* -ā] not minding one's own downfall (कृतः) दिवापि संत्रासकारिणि स्त्रीणामगणितात्मविनिपातया (त्वया) निशायामिह महीयसि महीपतिक्रीडावने प्रवेशः TilaMañ. 315. 9.

**अगणितात्यय** (agaṇitātyaya) *adj.* who has not cared for or who has defied danger or risk प्रभुकारणादगणितात्यययोर्युवयोर्वधात् क इव नो महिमा RāmC. 26. 80.

**अगणिताधोरण** (agaṇitādhoraṇa) *adj.* who has disregarded the conductor अन्तरान्तरा समाघ्रायान्यां गजपदवीमगणिताधोरणमसूयया साचीकृत्य(म?प)दम्…स्वेच्छया प्रतिष्ठमानः…तं प्रदेशमाससाद द्विरेदेन्द्रो हेमकूटः AvantiKa. 78. 8.

**अगणितानन्द** (agaṇitānanda) *m.* incalculable happiness अगणितानन्ददायिने नमो नमः SāmaraU. 261. 15.

**अगणितानन्ददायिन्** (agaṇitānandadāy-in) *m.* giving immeasurable pleasure or extreme happiness उवाचायं शिवः।…श्रीं श्रीं श्रीकृष्णाय तुभ्यं नमो नमः। …अगणितानन्ददायिने नमो नमः SāmaraU. 261. 15.

**अगणितापकारम्** (agaṇitāpakāram) *adv.* unmindful of injury or harm done पर्वतस्तु … जनैरगणितापकारं सरासभारोहणावतारो महान्कण्ठप्रदेशप्राप्तप्राणः…कालासुरेण दृष्टः YaśasCam. ii. 356. 21.

**अगणितायव्यय** (agaṇitāyavyaya) *adj.* of unlimited or incalculable income and expenditure, which cares neither for income nor for expenditure अथ पिङ्गलकः…अगणितायव्ययम्…राजत्वमनुबभूव Pañca. 4. 30; Tantrākhyā. 4. 17.

**अगणितायास** (agaṇitāyāsa) *adj.* not minding troubles अगणितायासश्च गत्वा सत्वरं समर्पय…तस्य…कुमारकुशलप्रवृत्तिलेखम् TilaMañ. 195. 10.

**अगणितार्यकुलोपचार** (agaṇitāryakulopacāra) *adj.* [*f.* -ā] who does not care for rules or modes of behaviour in a noble family तारुण्यमोहमदनस्वजनोपरोधैः…नार्यो भवन्त्यगणितार्यकुलोपचाराः NāgaSa. 15. 13.

**अगणिताश्लोक** (agaṇitāśloka) *adj.* not caring for or regardless of disrepute नृपः…। नयत्यगणिताश्लोको धन्यंमन्यः स वासरान् PārśvC. 6. 1063.

**अगणितिन्** (agaṇit-in) *adj.* not caring for, regardless of (with Loc.) इष्टादिभ्योऽनेनेत्यनेनेष्टादेः प्रथमान्तादनेनेति तृतीयार्थे इन् भवति। … अगणिती मदने। GaṇRa. 7. 411 (436)

**अगणितेषुराशि** (agaṇiteṣurāśi) *adj.* who did not care for the volley of arrows संरम्भवेगोज्झितवेदनेषु गात्रेषु बाधिर्यमुपागतेषु। मुनेर्बभूवागणितेषुराशेर्लौहस्तिरस्कार इवात्ममन्युः Kirātā. 17. 49.

**अगणित्वा** (a-gaṇitvā) *ger.* [for अगणयित्वा] having disregarded तत्सर्वं द्राग्ज्ञोऽगणित्वा जगाम S'aṅkaDigVi.(Mā.) 14. 113.

**अगणेय** (a-gaṇeya) *adj.* innumerable, immeasurable उत्थितान्यगणेयानि कबन्धानि समन्ततः। चिह्नभूतानि जगतो विनाशार्थाय भारत MahāBhā. vi. 53. 23; = vii. 65. 26; vii. 72. 12; viii. 19. 67; viii. 36. 34; viii. 535*. 2; अगणेयवीरहरिवाहिनीपतेरहमस्य हस्तविशिखो वलीमुखः RāmC. 20. 64; 33. 64; निजागणेयदुरीहितान्ध्मातोदरचर्मपुटः YaśasCam. ii. 356. 18; दीयतामस्मै…पारितोषिकम्, अगणेयं पाथेयं च YaśasCam. ii. 364. 22. *n.* a high number [DBHS]

**अगणेयगुणविशेष** (agaṇeya-guṇaviśeṣa) *adj.* [*f.* -ā] possessing innumerable special or uncommon qualities अगणेयगुणविशेषामशेषभुवनमातरम् …मीनाक्षीमध्यक्षयन्…वाणीमभाणीत् YātrāPra. 5. 78(2)

**अगणेयपरिवर्त** (agaṇeya-parivarta) *m.* square of *agaṇeya* (a high number) [DBHS.]

**अगणेयसाहस** (agaṇeya-sāhasa) *adj.* of inconceivable daring समरे स ममाथ यूथपानगणेयानगणेयसाहसः RāmC. 33. 64.

**अगण्य** (a-gaṇya) *adj.* [*f.* -ā] **1A** not to be counted (i. e. to be omitted or dropped) एका च सूक्तं समयास्तु गण्याः (v. l. Benares Ed. 15. 27 समयास्त्वगण्याः) परावराध्र्याः ṚPrāti. 15. 14; **1B** not to be expressed (as being the eighth) तं चैवार्थमभिसमीक्ष्याष्टमं मासमगण्यमित्याचक्षते कुशलाः

CaraS. iv. 4. 24 (1922 Ed.); **2** countless, incalculable, beyond measure कलिर्यस्या[गण्यान्स्थ]गयति न तुङ्गान्गुणगणान् EI. xviii. 127. 6; स: (अधर:) … अधरत्वमगण्यमागात् YaśasCam. i. 123. 6; KaumuMi. 8. 2; EI. ii. 187. 30; तस्यागण्यगुणार्णवो गणपति:…सूनु: EI. iii. 112. 5; PāṇḍaC. 15. 3; SamarāSam. 7. 234; यथा हि दक्षिणावर्तशङ्ख: कृष्णश्च चित्रक: । पुण्यैरगण्यै: प्रत्यक्षस्तथा तस्याभवन्मुनि: S'āliC. 1. 85; 4. 33; GopāKeCan. 64. 28; 93. 30; 99. 31; वीक्ष्यन्ते परीक्षकैर्विपणिषु … अगण्यानि पण्यानि TirthaKa. 98. 9; PrabaK. 54. 10; विन्देयं सुगुरोर्गिरां परिचयं पुण्यैरगण्यैरहम् S'aṅkaDigVi.(Mā.) 9. 37; 11. 49; S'ārṅgaPa. 168; जीवरक्षाभवं पुण्यमगण्यं ते भविष्यति PālaGoKa. 97; EI. iv. 20. 246; VidhiRa. 5(31. 15); Rāṣtrau. 9. 62; BhramDū. 46; RasGaṅ. 458. 5; एतदेव मम पुण्यमगण्यं यत् कृशोदरि दृशोरतिथिस्त्वम् PadyaVe. 275; 438; **3** incomprehensible, beyond estimation हिरण्योदराचैरगण्ये … नमस्ते भवानि BhavāBhu. 15; YaśasCam. i. 9. 7; **4** not worth considering, insignificant ज्ञातीनगण्यान्हत्वान्यान्कस्माद्राज्यार्हलक्ष्मणौ । नावधीरुद्धतावेतौ RājTa.(Ka.) 7. 1248; *m.* **1** one of the names of S'iva (the immense, the incomprehensible one) (नाम्नामष्टसहस्रेण स्तुतवान् वृषभध्वजम्) क्षराक्षरप्रियो धूर्तोऽगण्योऽगण्यगणाधिप: VāyuP. i. 30. 251; **2** one of the names of Jina (the immense, the incomprehensible one) (नाम्नामष्टसहस्रेण तोष्टुमोऽभीष्टसिद्धये) अगण्य: पुण्यधीर्गुण्य: MahāP. 25. 137.

**अगण्यकारुण्यरस** (agaṇyakāruṇya-rasa) *m.* sentiment of immense compassion अगण्यकारुण्यरसाम्बुराशौ निमज्जयामास न कस्य चेत: RāmC. App. ii. 39. 83; उत्कर्णौ मुनिभूमीन्द्रौ… । जातावगण्यकारुण्यरससंसिक्तमानसौ MalliC. 1. 259.

**अगण्यगणाधिप** (agaṇyagaṇādhipa) *m.* one of the names of S'iva (= Lord of innumerable attendants) (नाम्नामष्टसहस्रेण स्तुतवान् वृषभध्वजम्) क्षराक्षरप्रियो धूर्तोऽगण्योऽगण्यगणाधिप: VāyuP. i. 30. 251.

**अगण्यगुण** (agaṇya-guṇa) *m.* innumerable good qualities or attributes नारायणोऽगण्यगुणनित्यैकनिलयाकृति: ।…प्रीयताम् UpādhiKha. 1B. 1; भावा भवन्त्याज्ञया … यस्यागण्यगुणाकरस्य … सोऽयं … प्रीतोऽस्तु नारायण: TattvPrakā. 224B. 8 (*on* iv. 4. 23); *adj.* having innumerable good qualities अगण्यगुणनागरीगुणगरिष्ठगान्धर्विकामनोजरणचातुरीपिशुनकुञ्जपुञ्जोज्ज्वला ।…शरणमस्तु वृन्दाटवी StavMā. 302. 4 (comm. अगण्यगुणेभ्यो नागरीगणेभ्यो गरिष्ठाया: गान्धर्विकाया: श्रीराधाया:)

**अगण्यजगदण्ड** (agaṇya-jagadaṇḍa) *n.* innumerable worlds अगण्यजगदण्डाढ्य: कोटिब्रह्माण्डविग्रह: BhaktiRaSi. ii. 1. 71.

**अगण्यता** (agaṇya-tā) *f.* **A** the state of being incalculable or uncountable तव कृष्ण गुणास्ततो नरैरसमानस्य दधत्यगण्यताम् S'iśuVa. 16. 6; **B** the state of not being worthy of attention, S'iśuVa. 16. 6; वारिपतनादीनां दोषाणाम्…अगण्यतया तुच्छत्वम् AlaṅkāRa. 68. 15.

**अगण्यत्व** (agaṇya-tva) *n.* countlessness, innumerableness येषामगण्यत्वमवेक्ष्य कोऽपि नान्यो मुनिभ्य: प्रभू(? सु)तामुपैति । दानानि तान्याचरितुं प्रवन्धो हेमाद्रिदेवस्य जगाम पारम् CaturCin. i. 1056. 7.

**अगण्यपण्य** (agaṇya-paṇya) *n.* **A** countless articles of trade, innumerable commodities अगण्यपण्यपूर्णापणा विपणिनो विपणीर्विमेजु: S'iśuVa. 5. 24; पुनरगण्यपण्यविनिमयेन तत्रत्यमचिन्त्यमात्माभिमतवस्तुस्कन्धमादाय प्रत्यावर्तमानस्य YaśasCam. ii. 345. 24; **B** large number of booths or shops अस्ति … शश्वदगण्यपण्यविस्तारितमणिगणादिवस्तुजातव्याख्यातरत्नाकरमाहात्म्या … पुष्पपुरी नाम नगरी DaśKuC. 1. 6.

**अगण्यपुण्य** (agaṇya-puṇya) *n.* immeasurable or unlimited merit नि:सङ्गं यस्य मानसम् । सोऽगण्यपुण्यसंपन्न: … सुखमश्नुते YaśasCam. ii. 367. 15; ii. 408. 20; अगण्यपुण्यविरहादहं सर्वस्य दुर्लभा BrahmP. 122. 18; HammīMaMa. 5. 21(? 22)(1); MalliC. 5. 120; अगण्यपुण्यामृतसारसिन्धु: । हेमाद्रि:…ब्रूते चतुर्थीव्रतम् CaturCin. ii(1). 501. 2; तौ…अगण्यपुण्यपण्यानि क्रीणीत: स्म S'āliC. 6. 102; वर्धमानस्य…। निरमाप्यत संप्राप्यागण्यपुण्यभरैर्जनै: ।…प्रतिमा PrabhāC. 84. 16; 138. 2; अगण्यपुण्यमजैयन्ती मदीयपुण्ये कृशेऽपि कथं लुब्धासि PrabaCin. 58. 7 = KumāCaSaṁ. 42. 23; PrabaCin. 108. 14; अगण्यपुण्यलावण्यरसप्रसरसारणि: । हीरादेवीति तस्यासीत्प्रेयसी HammīMaKā. 4. 138; (वैकुण्ठपते) अगण्यपुण्यैकगृहीतभा(? ना)म्ने…नमस्ते BṛBrahmaS. i. 2. 116; अगण्यपुण्यसुलभां द्रक्ष्यामि गोदावरीम् YātrāPra. 7. 12; GopāKeCan. 77. 28.

**अगण्यपुण्यकृत्** (agaṇyapuṇya-kṛt) *adj.* causing immeasurable or boundless merit दानं पात्रायागण्यपुण्यकृत् PārśvC. 2. 956.

**¹अगण्यपुण्यवत्** (agaṇyapuṇya-vat) *adv.* like immeasurable or boundless merit सुता:…अगण्यपुण्यवत्केऽपि संपदानन्ददायिन: S'āliC. 3. 4.

**²अगण्यपुण्यवत्** (agaṇyapuṇya-va(n)t) *adj.* possessed of immeasurable or boundless merit अगण्यपुण्यवत्पुंसां कुतो दोषो गुणायते CampaS'reKa. 318.

**अगण्यप्राण** (agaṇya-prāṇa) *m.* insignificant life पितुरनिशमगण्यप्राणनिर्मन्थनीय:…व्रजनवयुवराज: StavMā. 39. 19.

**अगण्यप्राय** (agaṇya-prāya) *adj.* almost insignificant बन्धुमेकं व्यधु: कमलियादय: । अगण्यप्रायमुत्सेकादुत्तमप्रक्रियास्पदम् RājTa.(Ka.) 8. 2062; 8. 3119.

**अगण्यप्रायता** (agaṇyaprāya-tā) *f.* the state of being almost insignificant अगण्यप्रायतां प्राप्ते वंशे यत्कौशलादसौ । दिगन्तरेषु…प्राप प्रथां पुन: RājTa.(Ka.) 8. 2167.

**अगण्यमत्तमातङ्ग** (agaṇya-mattamātaṅga) *m.* **1** innumerable infatuated elephants अगण्यमत्तमातङ्गसङ्गमा म्लेच्छभूरिव या (अरण्यानी) PārśvC. 2. 799; **2** innumerable intoxicated low-caste people, PārśvC. 2. 799.

**अगण्यमहिमन्** (agaṇya-mahiman) *adj.* of immeasurable greatness मथुरावासिन:…। अगण्यमहिमान: PadmP. iv. 73. 46; (माघे मासि) चतुर्दशी कृष्णा…अगण्यमहिमाढ्या वै शिवरात्रि: BṛDharmaP. i. 15. 53; अर्जुनो भूमिपाल: ।…शौर्यौदार्यगुणैरगण्यमहिमा VīraMi.(Paribhāṣā.) 2. 9.

**¹अगण्यमान** (a-gaṇyamāna) *adj.* **1** not worthy of consideration अगण्यमानो नरक: HarṣaC. 300. 13 (comm. न गणनार्ह: । कुत्सितो नरो नरक:); **2** not cared for कन्यान्त:पुरम् … अगण्यमानरहस्यरक्षासमयम् … आकुलीबभूव DaśKuC. 35. 1.

**²अगण्यमान** (agaṇya-māna) *adj.* of immeasurable or unlimited extent or dimensions अगण्यमानो नरक: HarṣaC. 300. 13 (comm. अगण्यश्च मानो यस्य).

**अगण्यमानत्व** (agaṇyamāna-tva) *n.* **1** absence of consideration न कारणहेतु: साधारणत्वेनागण्यमानत्वात् Sphuṭā. 127. 26 (*on* 2. 52); **2** not being worthy of consideration, not being counted or taken into account नहि शब्दस्य स्वार्थप्रत्यायनलक्षणं फलमस्तीति शब्दसंदर्भ आरभ्यते श्रूयते वा, तस्य काकदन्तपरीक्षासाधारणत्वेनागण्यमानत्वात् DharmoPra. 7. 22.

**अगण्यरत** (agaṇya-rata) *n.* insignificant or blameworthy sexual intercourse धीरोऽवितागण्यरते…व: RāmKṛViKā. 24.

**अगण्यरत्न** (agaṇya-ratna) *n.* countless gems (स:) तत्राभ्यपश्यन्नगराण्यगण्यरत्नप्रयत्नक्रयविक्रयाणि DaśāvaC. 7. 73.

**अगण्यरूप** (agaṇya-rūpa) *adj.* of an unimaginable or inconceivable nature or extent पुरापि यत्पुण्यमगण्यरूपं श्रीकामदेवेन कृतं न विद्म: । येन… हेमाद्रिरप्यस्य गृहेऽवतीर्ण: CaturCin. ii(1). 2. 8.

**अगण्यलावण्य** (agaṇya-lāvaṇya) *n.* inconceivable or boundless beauty स राजा…अगण्यलावण्यपुण्याङ्गीं ताम्…विलोक्य…अग्रमहिषीं चकार PrabaCin. 113. 23.

**अगण्यवृत्ति** (agaṇya-vṛtti) *adj.* **A** of insignificant status (person) नैसर्गिकीं विरसतां दधतोऽप्यमीक्ष्णमासेदुषोऽपि जडिमानमगण्यवृत्ते: । वाक्यस्य सारगुरुणो गुरुभि: परीक्ष्यम् HarVi. 36. 13; **B** of negligible utility, HarVi. 36. 13.

**अगण्यसौहृद** (agaṇya-sauhṛda) *n.* immeasurable or profound friendship ममाप्यत्र विभागोऽस्तु पुण्यस्यागण्यसौहृदात् PrabhāC. 53. 6.

**अगण्यहिरण्य** (agaṇya-hiraṇya) *n.* incalculable gold (coins), immeasurable wealth मनीषिणां मानसमन्दिरेषु श्रीमानमात्यो निवसन्नजस्रम् । तेभ्य: सकृत्तं वितरत्यगण्यहिरण्यविश्राणनकैतवेन KirtiKau. 6. 54.

**अगण्यार्थवर्षिन्** (agaṇyārtha-varṣin) *adj.* showering unlimited or immeasurable wealth, very generous नृपं तेषां ह्यगण्यार्थवर्षिणं नयनैपुणात् । उपजीवितुमिच्छाभूत्तद्रक्षणवणिज्यया RājTa.(Ka.) 8. 2885.

**अगण्योद्भव** (agaṇyodbhava) *adj.* of incomprehensible birth संसारोदन्वदम्भसि…अगण्योद्भवौर्वेषुद्भीमे…मज्जतो जन्तुराशीन् ।…ब्राह्मी…नाभ्यते या यतिपतिगदिता सा हताद्रो द्विषन्तम् JinaS'. 4. 5; *m.* innumerable births, JinaS'. 4. 5.

**अगत** (á-gata) *adj.* [*f.* -ā] **1A** who or which has not gone to, not reached **B** who or which has not attained (some state), not undergone (some experience), not achieved (some desire) **C** which has not happened or elapsed already, future **D** not moved, not gone forward **E** which has not gone, ever present **2A** never obtained, not obtainable, unattainable **B** which is not yet reached or attained **B** not comprehended or understood **C** which is yet to elapse **1A** who or which has not gone to, not reached प्रच्युतो वा एष एतस्मा॒यतनादगत: प्रतिष्ठां स यजमानं चैवाध्वर्युं च ध्यायति KāṭhS. 19. 5; KapiKaS. 30. 3; प्रच्यु॑तं वा ए॒तद॒स्माल्लो॒का-

कुण्डाशी सोमविक्रयी ManuSm. 3.158 (also, a cremator of a dead body on payment, Nandana ( *on* 3.158 ) and SmṛtiCan. v. 183.1 अगारदाही तु द्विधा देवलेन दर्शित:– अगारदाही स ज्ञेय: प्रेतदग्धा धनेन य: । स चाप्यगारदाही स्याद् द्वेषाद्यो वेश्मदाहक: ); अगारदाही गरद: कुण्डाशी सोमविक्रयी । ··· रुधिरान्धौ ( ? न्धे ) पतन्त्येते BrahmāṇḍP. iii. 2.167; ii. 19.31; AvantiKa. 197.1; अगारदाही कुण्डाशी सोमविक्रयिणो द्विजा: KūrmaP. 603.3 (2.21); अगारदाही मित्रघ्न: शकुनिग्रा( v. l. ग्रा )मयाजक: । रुधिरान्धे पतन्त्येते सोमं विक्रीणते च ये BrahmP. 22.22; BhaviP. 832A.15 (iv. 152.6); अगारदाहिनो धेनुस्त्रीशिशुब्राह्मणान्तका: । बहवो रक्षितास्तेन दिग्वार्तामात्रसेवका: NarmaMā. 2.28; अगारदाही मित्रघ्न: शाकुनिर्ग्रामदाहक: । रुधिरान्धे पतन्त्येते BṛBrahmaS. ii. 3.67.

**अगारद्वार्** ( agāra–dvār ) *n.* the door of a house आवाभ्यां हन्त पान्थाभ्यां किमागो विहितं क्वचित् । येन क्षिप्तौ तवागारद्वारि विन्यस्तयामिके MalliC. 7.476.

**अगारधूम** ( agāra–dhūma ) *m.* smoke collected in a house, kitchen–soot शिखिपित्तार्धयुतं स्यात् पलाशबीजमगदो मृतेषु वर: । वार्ताकुफाणितागारधूमगोपित्तनिम्बं वा CaraS. vi. 23.51 (1941 Ed.); गोमयमालतीमूषिककर्ण्यन्यतमकल्को रसो वागारधूमो वा AṣṭāSaṁ. i. 48.16 (1.8); अगारधूममञ्जिष्ठारजनीलवणोत्तमै: । लेपो जयत्याखुविषं कर्णिकायाश्च पातन: AṣṭāHṛ. vi. 38.18; अगारधूम: । भगंदरे नाड्युपदंशयोश्च दुष्टव्रणे शोधनरोपणोऽयम् SiddhYo. 48.10; 51.50; अगारधूमो दार्वी च मेघनादो हरिद्रया । दध्याज्यपेषित: पीतो मुख्याहिगरलापह: ĪśānS'iPa. i. 40.15; सव्योषसर्जिकाक्षारयवक्षारनिशाद्वयै: । अगारधूमसहितैर्बस्तमूत्रेण कल्पितै: । ··· लेपो विचर्चिकादद्रुरसिकाकिटिभापह: RasRaSa. 29.69.

**अगारधेनु** ( agāra–dhenu ) *f.* cow reared at home, domesticated cow केचित्तु अगारधेनुशब्दमत्राधीयाना अगारधेनोरपत्यमागारधैनवो वत्स इत्याहु: GaṇRa. 3.164 (199, f. n. 6)

**अगारनवीकार** ( agāra–navīkāra ) *m.* renovation of the sanctum of a temple यावती तव संपत्तिस्तावतीमखिलां विभो । प्राकारगोपुरागारनवीकाराय कल्पय SkandP. i.(3B). 23.13.

**अगारपरम्परा** ( agāra–paramparā ) *f.* (uninterrupted) row of houses (प्लवगप्रवीर:) तत्राणिमादिगुणसंश्रयणादशब्दलब्धान्तरश्चिरमगारपरम्परासु । साक्षाच्चकार चकितश्चषकोपधाना: पौरी: प्रियौघपरिरम्भसुखप्रसुप्ता: RāmC. 19.2.

**अगारपरिसर** ( agāra–parisara ) *m.* environs or neighbourhood of a house पुनरतीते निशीथे निबिडान्धकारमगारपरिसरमधितिष्ठता मया बहिरागता सौदामिनी सरभसं करेण गृहीता Mukundā. 128(4)

**अगारप्रवेश** ( agāra–praveśa ) *m.* entrance into a (new) house अगारप्रवेशं व्याख्यास्याम: BhārGS. 2.4 (34.8)

**अगारभेद** ( agāra–bheda ) *m.* division into (various) apartments ( प्रासाद: ) अगारभेदरहित: सर्व: सर्वदिवौकसाम् ViṣṇuDhaP. iii. 86.17.

**अगारमध्य** ( agāra–madhya ) *n.* interior of a house, middle of a house कपोतो वागारमध्येऽधिपतेत् BaudhGS. iii. 6.1; ĀgniveGS. ii. 5.2 (79.1)

**अगारवत्** ( agāra–vat ) *adv.* like a house आचन्द्रार्कम[गा]-[रव]त् वसु-[म]तीमाचक्रवाळाचलं श्रीमानाहव[राघ]वो हरिहर[:*] स्वां पालयत्यन्वहम् EI. iii. 123.78.

**अगारवनदाहिन्** ( agāravanadāh–in ) *adj.* one who sets fire to houses as well as forests नरकं प्रतिपद्यते । अगारवनदाही च नास्तिकश्च तथा नर: ViṣṇuDhaP. iii. 111.15.

**अगारवसु** ( agāra–vasu ) *n.* house and wealth नागारवसूनीतरस्मै ( दद्यात् ) PārāSū. 78.24.

**अगारवास** ( agāra–vāsa ) *m.* residence in a house (i. e. householder's life) अगारवासो गृहवासस्तमावसामि SthānṬ. 247A.11.

**अगारविध्वंस** ( agāra–vidhvaṁsa ) *m.* crumbling or dilapidation of apartments ( हे दु:सह यत्र ) प्राकारागारविध्वंसा:···तद् गृहं तु समासाद्य वस नित्यम् LiṅgaP. ii. 6.45.

**अगारविमुक्त** ( agāra–vimukta ) *m.* who has renounced his householder's life, a monk, a mendicant द्विविधो गदितो धर्म:···। आद्योऽगारविमुक्तानामन्यश्च भववर्तिनाम् PadmP.(Ra.) 14.164.

**अगारवेणु** ( agāra–veṇu ) *m.* bamboo used in the structure of a house अगारवेणूनामिदम् । आगारवैणवम् GaṇRa. 3.164(199)

**अगारसंगत** ( agāra–saṅgata ) *adj.* pertaining to (residence in) a house, domestic अनुग्रशक्तय: केचिन्नमस्कृत्य मुनिं जना: । उपासांचक्रिरे धर्मं विधिनागारसंगतम् PadmP.(Ra.) 86.12.

**अगारसंभव** ( agāra–sambhava ) *adj.* produced in the house (i. e. gathered on the wall near the fire-place) गोमयस्वरसो वापि हितो वा मालतीरस: ।···धूमो वागारसंभव: SuśruS. v. 1.58.

**अगारस्तूप** ( agāra–stūpa ) *m.* main or central beam of a house ओदनपिण्डं संवृत्योत्तरेण यजुषागारस्तूप उद्विद्धेत् ĀpaGS. vii. 19.7 ( comm. **यथा**गारस्तूपे पृष्ठवंशे पतति तथोद्विद्धेत् ) [Oldenberg summit of house]

**अगारस्थ** ( agāra–stha ) *adj.* dwelling in houses [DBHS.]

**अगारस्थापन** ( agāra–sthāpana ) *n.* setting up or building a house तत्र यथा रामस्य दानं, अगारस्थापनम्···गुरुभक्तिस्तथा सर्वमारब्धम् PrabaK. 81.26.

**अगारस्थित** ( agāra–sthita ) *m.* a house-holder अगारं गेहं तद्वृत्तयो अगारस्थिता गृहिण: SthānṬ. 371A.2.

**अगारस्थूणाव(? वि)रोहण** ( agārasthūṇāva(? vi)rohaṇa ) *n.* appearance of sprouts on the columns of the house अगारस्थूणाव( ? वि )रोहणे ··· अन्येषु चाद्भुतोत्पातेष्वमावास्यायाम्···उत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यते ĀpaGS. viii. 23.9 ( comm. अगारस्य स्थूणा: अगारस्थूणा:, तासां विरोहणे अङ्कुरोपजनने )

**अगारहरण** ( agāra–haraṇa ) *n.* depriving (people) of their houses पौरानगारहरणाद्यपकारैर्निरङ्कुशा: । तद्बन्धवो बाधमाना विरागमनयज्ज( ? ज्ञ )नम् RājTa.(Ka.) 8.2041.

**अगारान्त** ( agārānta ) *adj.* (a cpd. word) ending in *agāra* अगारान्ताट्ठन् P. iv. 4.70; CāndraVyā. iii. 4.71; ठोऽगारान्तात् JaineVyā. iii. 3.187; S'ākaṭāVyā. iii. 2.73; अगारान्तादिक: SiddhaHe. vi. 4.75.

**अगारान्तरापतित** ( agārāntar–āpatita ) *adj.* who has come into house विदुष: पुरुषानमिषन्नगारान्तरापतित: कपोत इव निर्वास्य स्वयमेकैश्वर्ये वर्तते Yaśas-Cam. i. 455.1.

**अगारावकाश** ( agārāvakāśa ) *m.* (a piece of) land on which a house is to be constructed, site for a house दक्षिणाप्रत्यक्प्रवणमगारावकाशमुद्धत्य पलाशेन शमीमयेन वोदूहेनैतामेव दिशमुत्तरयोदूहति ĀpaGS. vii. 17.1.

**अगारि** ( agāri ) *m.* enemy of the mountains, Indra सहस्रनयनोऽगारि: AnekāNi. 105; इन्द्रे स्यु: प्राग्दिशानाथमहेन्द्रदनुजारय: । सर्वाङ्गनयनागारिश्चिन्तामणिवरासना: NāmaMāli. 10.

**अगारिणी** ( agār–iṇī ) *f.* housewife पुरा बहुमताभूवमार्थिकाणामगारिणी । तिरस्कुर्वन्ति मामेता भिक्षुकीमधुना पुन: PāṇḍaC. 4.383 cf. **अगारिन्.**

**अगारित** ( agārita ) *n.* sprouting of buds on the tree *Butea frondosa* अगारितं पलाशानां कलिकानिर्गमो भवेत् Hārāva. 43 cf. **अङ्गारित.**

**अगारित** ( a–gārita ) *adj.* [*gṛ– vijñāne?*] unknown इत्यादि वाद्यशतदेवनमध्य एव लोक: समालपदगारितकृष्णवीर्य: DhātuKā. 3.37 ( comm. **लोको**ऽगारितकृष्णवीर्योऽज्ञातकृष्णवीर्य: सन् )

**अगारिन्** ( agār–in ) *m.* a house-holder, layman अगारी गृहस्थो भवति TātpaVṛ. 344.11 (*on* 3.51); सर्वात्मना यतीन्द्राणामेतच्चारित्रमीरितम् । यतिधर्मानुरक्तानां देशत: स्यादगारिणाम् YogS'ā. 1.46 = TriṣaS'aPuC. i. 3.624; पञ्चधा स्यादवग्रह: । इन्द्रचक्रिनृपागारिसाधुसम्बन्धिभेदत: TriṣaS'aPuC. i. 6.205.

**अगारैकदेश** ( agāraikadeśa ) *m.* part of a houshhold अगारैकदेशे प्रघण: प्रघाणश्च P. iii. 3.79; तत्र बाह्ये प्रकोष्ठे निपातनम्, नागारैकदेशमात्रे PadMañ. *on* KāśiVṛ. *on* P. iii. 3.79; पिण्डो बाले बले सान्द्रे देहागारैकदेशयो: MediK. 43.18; ViśvaPra. 150.14; S'abdaRaSaK. 300.16.

**अगार्दभरथिक** ( a–gārdabharathika ) *adj.* **i** not fit for a donkey-cart, **ii** other than one fit for a donkey-cart गुणप्रतिषेध इति किम् । गार्दभरथिकादन्योऽगार्दभरथिक: KāśiVṛ. *on* P. vi. 2.155; Prasā. ii. 740.4; SiddhāKau. 652A.8.

**अगार्ध्यार्थ** ( a–gārdhyārtha ) *adj.* not denoting greediness, not intended to mean greed क्षुधवसपूजार्थाञ्चागार्ध्यार्थलुभ: क्त्वश् चेम् MugdhaBo. 26.102 (161.13)

**अगालित** ( a–gālita ) *adj.* not strained [nt.]

1**अगालिशालिन्** ( a–gāliśālin ) *adj.* not abounding in (i. e. bereft of) abuses अगालिशालीनि··· । महात्मनामाननकाननानि न कस्य संतापभरं हरन्ति Surath. 1.46.

2**अगालिशालिन्** (agāli–śālin) *adj.* abounding in rows of trees, Surath. 1.46.

**अगालीवलय** ( agālī–valaya ) *n.* circle of rows of hills सा यामिनी संकुलजन्यदोलाकोलाहलेनोभयसैन्यजेन । अगादगालीवलयप्रतिश्रुत्प्रतिश्रुताशेषवियद्ग्रहेण RamC. 35.123.

**अगावह** ( agāvaha ) *m.* name of a Yādava hero आगावह: ( v. l. अगावह: ) पृथु: कह्व: शतद्युम्नो विदूरथ: HariVaṁ. 81.99; अगावह: सुमित्रश्च HariVaṁ. 98.16; अगावहं महात्मानं वृकदेवी व्यजायत HariVaṁ. 25.7 = BrahmP. 14.46.

**अगाष्टकु** ( agāṣṭaku ) *nu.* the number 187 द्युवृन्दतोऽगाष्टकुभिर्गजाम्बुदै: ···दलं चरार्धम् Bhāsv. 5.2.

**अगाह्य** ( a-gāhya ) *m.* one of the names of Jina ( the Unfathomable ) ( भो जिन ) त्वाम्···नाम्नामष्टसहस्रेण तोष्टुमोऽभीष्टसिद्धये ।···अगाह्यो गहनं गुह्यम् MahāP. 25. 149.

**अगि** ( a-gi ) (Gr.) not preceded by a verbal prefix or preposition वागेः JaineVyā. i. 2. 39 ( comm. अगेः क्रमो वा दो भवति । ··· अगेरिति किम् संक्रामति ); i. 2. 71; ii. 1. 111; ii. 1. 116; ii. 3. 24; ii. 3. 62; ii. 3. 64; v. 1. 48; अगेर्ह्व्याम् । अगेरिणोर्धः स्यात् किति ह्वाम् । अगेः किम् । अन्वियात् MugdhaBo. 9. 15 (105. 4); 18. 23 (125. 19); 23. 34 (138. 17); 23. 58 (141. 1); 24. 7 (142. 13); 26. 15 (150. 3); 26. 35 (152. 23); 26. 116 (163. 9)

[1]**अगित्** ( a-git ) (Gr.) other than *git* विरामेऽगिदनाङ् चाद्यण्वानुनासिकः S'ākaṭāVyā. i. 1. 68.

[2]**अगित्** ( ag-it ) (Gr.) having an indicatory *ak* णेरग्लोपेऽपि संबन्धस्त्व-गितामपि सिद्धये SiddhāKau. 366B. 7.

**अगिदेवी** ( agi-devī ) *f.* name of a goddess अगिदेवीवरलब्ध(? ब्ध)प्रसाद ···रामदेवपादा: EI. xxiii. 143. 3.

**अगिर** ( agira ) *m.* 1 fire 2 the sun 3 Rākṣasa [ Jaṭādhara in S'abdaKaDru. ] 4 the heaven [ Apte ]

**अगिरि** ( a-giri ) *m.* no mountain, mountain which has lost its character कुपितवति श्रीविजये···नरेन्द्रदण्डाधिपतौ गिरिरगि[रि]र्व्वनमवनं जलम-जलम् EI. x. 151. 19.

**अगिरिभिद्** ( a-giribhid ) *adj.* not breaking any mountain ( नदीः ) ता अगिरिभिदोऽपि नातीयात् ĀpaS'S. xi. 20. 6 ( comm. )

**अगिरौकस्** ( á-giraukas ) *adj.* [ AltGr. II. 1. p. 278 ? ] not at home in the mountain धन्व॑च्च्रि॒चे अ॒नाशवो॑ जी॒राश्चि॒दगि॑रौकसः R̥V. i. 135. 9.

**अगिल** ( a-gila ) (Gr.) other than the word *gila* अगिलस्य गिले(मुम्) CāndrVyā. v. 2. 81; गिलगिलगिलयोरचोऽगिलस्य S'ākaṭāVyā. ii. 2. 77; Kātan. iv. 1. 24; SiddhaHe. iii. 2. 115.

**अगीत** ( a-gīta ) *adj.* i not sung, not chanted सावित्रीगेयं यत्रागीतम् DevaBr. 3. 23; ii devoid of songs, without songs अवाद्यमानवादित्रमगीतम-जनारवम् । रङ्गस्थलमिवासन्नपात्रागममभूत्पुरम् UdaySuKa. 107. 10; *n.* not a chant अच्छन्दांस्यगीतानि यजूंषि KāvyMī. 2. 22.

**अगीतकाङ्गत्व** ( agītakāṅga-tva ) *n.* state of not being an auxiliary part of music विचारणीयस्य चावापनिष्क्रामादेरगीतकाङ्गत्वमस्त्येव AbhinBhā. i. 179. 13 ( *on* 4. 267 )

**अगीतापाठिन्** ( a-gītāpāṭhin ) *adj.* one who does not study the (Bhagavad-)gītā अमेध्यस्पर्शनिरतास्त्यक्तविष्णूत्सवाश्च ये । अगीतापाठिनो विष्णौ सामान्यमतयो द्विजाः···दैवे पित्र्ये न वै पूज्याः BrBrahmaS. iv. 4. 60.

**अगीतित्व** ( agīti-tva ) *n.* the nature of being different from ( the Sāman ) chanting ऋगक्षराणामगीतित्वान्निवृत्तिः S'ābaBh. 1727. 13 ( *on* ix. 2. 34 ); स्तोभा नोत प्रदिश्यन्ते नागीतित्वेन वर्णवत् NyāyMāVi. 448. 15 ( *on* ix. 2. 10 )

**अगीतोह** ( agītoha ) *adj.* in which the mode of chanting the model is not introduced यद्वेतदप्याद्या विरता एवोहनादिति, अगीतोहास्ते भवन्ति NidāSū. 23. 10 (2. 1)

**अगीयमानसाममन्त्रता** ( agīyamānasāmamantra-tā ) *adj.* the state of consisting of *mantras*, not chanted with the *sāman* chant अन्ये···अगीय-मानसाममन्त्रतावशाच्च ऋग्वेदमेवाथर्ववेदमाचक्षते NyāyMañ. i. 237. 5.

**अगीष्क** ( agīṣ-ka ) *adj.* speechless अगीष्कः···इत्यत्र विसर्जनीयत्वषत्वादेर-सिद्धत्वात् DurghVr̥. vii. 4. 13; PariVr̥.(Sī.) 2. 8; 2. 15.

**अगीष्पाश** ( a-gīṣpāśa ) *adj.* [ *f.* -ā ] whose speech is not bad ( i. e. good ) स्त्रियम् । ससपिष्कामगीष्पाशाम्···स ऐक्षत DvyāśraKā. 3. 91.

[1]**अगु** ( á-gu ) *adj.* [ AltGr. II. i. p. 293; III. p. 219 ] Ai without cows ( i. e. poor ) उ॒क्थं च॒न श॒स्यमा॑न॒मगो॑र॒रि॒रा चि॑केत R̥V. viii. 2. 14 ( Sāy. गायतेर्गौः, अगो: अस्तोतुः ); Aii without an ox हलमगु बलस्य SaduktiKa. 308. 3; B having no cow i. e. cowness न चैवं विषयः कश्चित् बहुव्रीहेः प्रकल्पते । अगुरश्च इति व्याप्तिर्नञ्समासेन यस्य न VākyaP. 3(14). 306; C having very few cows 'अगुर्यथाविधी' ति केचित्पठन्ति तत्र नञल्पवचनो द्रष्टव्योऽल्पगुरिति ManuBh. i. 248. 6 ( *on* 3. 85 ); D wicked [ Apte ]

[2]**अगु** ( a-gu ) *adj.* having no lustre, dull अगो धनंजयं प्राप्य भविष्यसि वृथाश्रमः KīcaVa. 4. 37.

**अगु** ( a-gu ) *m.* 1 the planet Rāhu ( who is of the nature of darkness and so deprived of lustre or rays ) राहुस्तमोऽसुरोऽगुश्च HorāSā. 2. 40; राहुस्तमोऽगुरसुरश्च Br̥hajjā. 2. 3; रविविधू विदधीत···। समलवावयवौ तु विधुग्रहं समवगन्तुमगुं च तदोक्तवत् GrahaGa. 112. 7 (11. 2); राहुः सर्पासुरफणितमः-सैंहिकेयागवश्च JātaPā. 2. 4; शैला द्वौ खशरा अगोः GrahaLā. 1. 7; 1. 11; 5. 2; राहौ स्युः···अगुः स्वर्भानुभरणभारणाभ्रपिशाचकाः KośaKaTa. 1. 710; राहावगुरु-दाहृतः S'abdaRasaK. 59. 4; 2 darkness [ Apte ]

**अगुञ्जिन्** ( a-guñjin ) *adj.* not making sound अगुञ्जिमञ्जुमुरजं विध्वस्त-गीतध्वनि ।···कथं पुनरिदं ( ? पुरमिदं ) मौनव्रते वर्तते BālRā. 6. 12.

**अगुटिकान्वेषिन्** ( aguṭikānveṣin ) (?) *adj.* who was searching for the horses or pebbles द्रङ्गाधिपेनागुटिकान्वेषिणा( v. l. गुटिका° ) स ह्यवाप्यत RājTa.(Ka.) 8. 1578.

**अगुड** ( a-guḍa ) *adj.* other than brown sugar ( i. e. jaggery ) कदलील-वलीधात्रीफलान्यगुडमैक्षवम् । अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते PadmP. iv. 79. 55 = Br̥DharmaP. ii. 5. 11.

**अगुडपिष्टशीथुज** ( a-guḍapiṣṭaśīthuja ) *adj.* [ *f.* -ā ] prepared from other than jaggery, (fermented) flour and molasses ( i. e. not distilled from jaggery, flour and molasses ) वारुणीम्···अद्भुतामगुडपिष्टशीथुजाम्···अपां-पतिः संनिधाप्य निपपात पादयोः S'ivLī. 10. 51.

**अगुण** ( a-guṇa ) *adj.* [ *f.* -ā ] 1A without any qualification B without a subsidiary ( substance etc. ) C not secondary, principal 2A destitute of any good quality B having bad qualities 3A without the (three) qualities B without any quality C without any attribute 4 without a string 5 without the *guṇa* change 1A without any qualification सगुणस्थानेऽगुणः सर्वविकार एकत्वात् KātyS'S. vi. 7. 23; तस्य ( ब्राह्मणस्य ) तेन गुणेन सगुणम् । शूद्रस्य गुणाभावादगुणमेव ṬupT. 99. 7 ( *on* vi. 1. 27 ); 1B without a subsidiary ( substance etc. ) अगुणे तु कर्मशब्दे MīmāSū. ii. 2. 9; अगुणा च कर्मचोदना MīmāSū. ii. 3. 6; तदिहागुणश्च कर्मशब्दः TantrVā. 580. 18 ( *on* ii. 2. 25 ); MīmāKau. i. 262. 14 ( *on* i. 4. 18 ); iiiB. 268. 3 ( *on* ii. 2. 24 ); 1C (Gr.) not secondary, principal ध्रुवचेष्टितयुक्तिषु चाप्यगुणे तदनल्पमतेर्वचनं स्मरत MahāBh. i. 335. 7 ( *on* i. 4. 51 ); 2A destitute of any good quality गुणान् गुणवतः शल्य गुणवान् वेत्ति नागुणः MahāBhā. viii. 27. 54; ( याचकाः ) संदृष्टमन्नपानार्थं गुण-ज्ञमगुणं तु वै । त्यजन्ति PauṣkS. 36. 124; लोकादेवाकृतप्रत्ययादगुणो गुणवान् वेत्यनवेक्ष्य गमनं कामो द्वेष इति संशयः KāmSū. 357. 19 (6. 6); Mr̥ch. 4. 22; MārkP. 23. 108; Kirātā. 15. 15; ĀścaCū. i. 14. (1); अप्यगुणो मर्मज्ञः···सिद्धा इमे नरा स्त्रीषु RatiRaha. 13. 26; स्वयमगुणं वस्तु न खलु पक्षपाताद् गुणवद् भवति NītiVā. 28. 47; किमिश्चोदोषोऽसौ न पुनरगुणाया मरुभुवः BhallaS'. 56; S'ivaP. ii(3). 8. 11 (131B. 4); ii(3). 31. 44 (160A. 1); अन्धः काणश्च तौ द्वौ द्वौ स्याद्वै च सगुणोऽगुणः BhaviP. 322B. 16 ( ii(1). 5. 32 ); GaṇeP. ii. 139. 35; वित्तहीनस्तु सद्गुणोऽप्यगुणः KalāVi. 2. 56; SubhāRaK. 42. 24; VyaktiVi. 60. 17; SūktiMu. 35. 5; S'ārṅgaPa. 1052; SaduktiKa. 267. 22; 225. 6; RasāSu. 36. 18 (1. 156); Subhāṣi. 947; निर्दोषाप्यगुणा वाणी न विद्वज्जन-रञ्जिनी MadhuVi. 1. 19; 2B having bad qualites स्यादन्यथाऽगुणस्य हि संयोगो दुःखहेतुः सः KandaCū. iv. 2. 26; खातेऽम्बुनि अगुणे यदि ··· शत्रुतो भयम् VasiS. 45. 83; 3A without ( the three ) qualities बहवस्तु पुरुषाः चेतनवन्तोऽगुणाः SuśruS. iii. 1. 9; सत्त्वरजस्तमांस्यस्मिन्न सन्त्यतोऽगुणः ( पुरुषः ) TattvSa. 123. 4; 123. 12; गुणवत्यगुणस्य सतः सस्यार्थमपार्थकं चरति SāṁkhyaKā. 60; त्रिगुणं व्यक्तमव्यक्तम्, अगुणः पुरुषः SāṁkhyaKāBh. 8. 31 ( *on* 11 ); साङ्ख्या-स्त्वामगुणमथाहुरेकरूपम् KūrmaP. 25. 62; स्यादेतत् पुरुषश्चेदगुणोऽपरिणामी कथ-मस्य मोक्षः SāṁkhyaTaKau. 472. 1 ( *on* 62 ); SyādvāMañ. 15. (77); MāṭhVr̥. 20. 13 ( *on* 11 ); 74. 19 ( *on* 60 ); धिष्ण्यं गुणानाम्···अगुणमपि मुखं खण्डितामूर्ति-कीर्ते: JinaS'. 3. 2; 3B without any quality ( of the Nyāya-Vaiśeṣika system ) एकद्रव्यमगुणं संयोगविभागेषु अनपेक्षकारणमिति कर्मलक्षणम् VaiśeSū. i. 1. 17; ( कार्यद्रव्यम् ) क्षणमात्रमगुणं तिष्ठति BrahmSūBh.(S'aṅ.) 366. 8 ( *on* ii. 2. 11 ); सामान्यवानगुणः ( गुणः ) NyāyKa. 15. 16; उत्पन्नं द्रव्यं यावदगुण-मुत्पद्यते Kiraṇā. 118. 13; 159. 15; अगुण इति गुणलक्षणांशस्यासिद्धेः Khaṇḍan-Khā. 1072. 5; TattvPradī.(Ci.) 183. 1; गुणः सामान्यवानगुणः TarkSaṁ.(Ā.) 56. 8; VivaPraSaṁ. 18. 7; Vādā. 104. 2; Upask. 35. 5 ( *on* i. 1. 17 ); Sarva-DaKau. 5. 10; 3C without any attribute अगुणो गुणकार्यश्च MahāBhā. xiii. 17. 92; व्यतीतं चिन्तयेत् ··· नित्यमतीन्द्रियमगुणम् ViṣṇuSm. 97. 2; शृणु तत्परं सूक्ष्मम् ··· नामजात्यादिरहितमवर्णमगुणं त्वयि । ··· तद्विष्णोः परमं पदम् AhirbuS. 31. 8; ViṣṇuP. i. 22. 41; MārkP. 4. 37; 46. 13; नमः शरण्याय नमोऽगुणाय MatsyaP. 154. 263; अगुणो गुणभाजनः EI. x. 8. 2; x. 10. 2; तथा गुणवदगुणमिति वा···यो विकल्पयितुमिच्छति AitUBh. 277. 3 ( *on* 4. 0 ); UpadeSā. 19. 26; व्यतिरिक्तवृत्तिरगुणो गुणस्थितिः HarVi. 6. 58; अन्तर्यामी परः साक्षाद्-शरीरोऽगुणोऽद्वयः BrĀraUBhVā. i. 4. 945; i. 4. 1364; iii. 7. 33; स एवेदं ससर्जाग्रे भगवानात्ममायया सदसद्रूपया चासौ गुणमय्यागुणो विभुः BhāgP. i. 2. 30; i. 18. 14; ii. 6. 30; ii. 8. 1; x. 3. 19; x. 16. 40; xi. 24. 11; जननि — त्वं

पापपुण्यरहिता सगुणागुणा च DevīBhāP. iii. 23. 53; AgniP. 17. 1; BṛNāraP. 2. 20; अगुणं ध्रुवमक्षय्यमलिङ्गं शिवलक्षणम् LiṅgaP. i. 3. 3; BrahmP. 239. 94; GaṇeP. ii. 122. 15; S'ivaP. ii(1). 9. 27 (48A. 7); अकारमूर्तिमगुणम् … धारयेत् ĪśānS'iPa. ii. 67. 14; SubhāRaK. 42. 24; तत्रैक आहुरगुणं ब्रह्मेति KarmaNi. 1. 4; S'aṅkaDigVi.(Mā.) 8. 110; 14. 86; तस्य पुनर्…अगुणक्रियमात्मानमबाह्येन चक्षुषा साक्षात्कुर्वत: PārvPa. 2. 5 (1); BallāC. 115. 12; PraboSu. 245; SiddhāKau. 331B. 2; (त्वम्) अगुणोऽद्वय: AdhyāRā. vi. 13. 6; vii. 5. 61; VṛGautaSm. 501. 20(1); AnekāTi. 1. 21; **4** without a string यदि तदगुणं कण्ठे मा धास्तथोरसि मा कृथा: SaduktiKa. 225. 6; **5** without the *guṇa* change उञ्छादिषु युगशब्द: घञन्तोऽगुणो निपात्यते SiddhāKau. 621B. 4.

**अगुण** (a–guṇa) *m.* **1** fault, demerit, defect, flaw, vice, bad quality गुणान् पश्यन्ति नागुणान्। … ये ते उत्तमपूरुषा: MahāBhā. ii. 65. 6; vii. 9. 41; xii. 84. 16; xii. 104. 45; न हि कंचन पश्यामो राघवस्यागुणं वयम् Rāmā. ii. 859*. 1; ii. 993*. 10; ii. App. i. 25. 34; कर्माणि चैषां सर्वेषां योगायोगगुणागुणा:। … सर्वमेतत्समाख्यातम् CaraS. i. 1. 139; i. 27. 12; (जानीयात्) सारासारं च भाण्डानां देशानां च गुणागुणान् ManuSm. 9. 331; 3. 22; अवसानेषु सर्वेषामतृप्तिर्नागुण: स्मृत: PauṣkS. 1. 51; 2. 9; बोधिसत्व(? त्त्व)गोत्रे समासेन चतुर्विध आदीनव: येन गोत्रस्थोऽगुणेषु प्रवर्त्तते MaYānaSū. 11. 27 (3. 7); गुणागुणान् वैशिके वक्ष्याम: KāmSū. 69. 4 (1. 5); गुणागुणमनुचिन्त्य शरीरकाञ्चनकस्य EI. xvii. 347. 13; MārkP. 25. 12; MatsyaP. 215. 96; Kirātā. 6. 21; S'iśuVa. 16. 44; मुक्तागुणस्तु हृदये मुक्तागुण एव वनितानाम् EI. xvii. 340. 7; ह्रेपणमगुणो यस्मिन् KuṭṭaMa. 380; गुणा गुणा: अगुणा दोषा: ManuBh. i. 217. 18 (*on* 3. 22); PāraS. 30. 10; 10. 68; RāmC. 8. 86; YogVā. vi(2). 80. 37; प्रतिभाविवेकविकलता हि न गुणागुणयोर्विभागसूत्रं पातयति KāvyMī. 14. 15; AgniP. 220. 23; SkandP. i(2). 58. 41; iv. 35. 224; i(2). 1. 53; BhaviP. 25B. 25 (i. 7. 16); SamrāSū. 44. 1; क्वापि कस्य च कुतोऽपि कारणाच्चित्तवृत्तिरिह किं गुणागुणै: SubhāRaK. 40. 22; ĀryāSaS'a. 204; TriṣaS'aPuC. iii. 8. 17; RasāSu. 5. 15 (1. 32); निसर्गतस्त्रिवर्ग: स्यादनित्याद्यगुणान्वित: EI. xiv. 93. 59; भर्तृणामगुणं गुणं मद्गृहात्…संचिन्त्य सर्वं वदेत् JātaPā. 16. 4; DaṇḍaVi. 199. 4; HammīMaKā. 2. 5; Acyutarā. 12. 39 + 16; अङ्गप्रत्यङ्गनिर्वृत्तौ ये भवन्त्यगुणा गुणा: BhāvPra. (Bhā.) 3. 287; देशान्तराणां गुणागुणं लाभालाभहेतुत्वम् BālamBha. i. 367. 19 (*on* 1. 119); S'ukrNī. 1. 132; गुणागुणौ यौवनम्…चतुरेणैवं प्रयुञ्जीत NāṭyaS'ā. 9. 99; CāṇaNīDa. 17. 4; S'atTrayī. 37; अन्यथा त्वगुणं कृत्वा RasRaSa 2. 16; भुजग: पादतलाहतोऽप्यकाले। न करोत्यगुणं कयापि बुद्धया PañcT. 1. 32 (28. 11); **2** non-attribute, not quality शब्द: स्पर्शवतामगुण: VaiśeSū. ii. 1. 25; न ह्यगुणो गुणिनं विकर्तुमुत्सहते Bṛha. 218. 5; IṣṭaSi. 90. 20; विभाषा इति योगविभागादगुणे स्त्रियां च क्वचित् SiddhāKau. 150B. 15; **3** (Gr.) absence of *guṇa* operation दीर्घ इण: परोक्षायामगुणे Kātan. iii. 3. 17; iii. 4. 2; iii. 5. 42; iii. 6. 1; नकारोऽगुणार्थ: KātanVṛ. iii. 2. 15; iii. 5. 41; क्षिणोत्यावगुणे क्षिणो: DaivaVyā. 13; **4** name of the son of Yakṣa यक्ष: … तत्सुतस्त्वगुणस्त्वासीत् S'ivaP. v. 39. 24 (452A. 6); **5** inefficaciousness of medicine क्रूरार्दिते विलग्ने वैद्यान्न गुणस्तदौषधाद्रोग:। वृद्धिमुपयाति दशमे क्रूरैर्निजबुद्धितोऽप्यगुण: TājiNī. iii(1). (5). 46 (342)

**अगुणक** (aguṇa–ka) *adj.* without attributes सर्वम्…अगुणकम् TattvMu. 4. 134.

**अगुणकण** (aguṇa–kaṇa) *m.* a little bit of vice अगुणकणो गुणराशिर्द्वयम्…खलमुखे पतितम्। प्रसरति तैलमिवैक: सलिले घृतवज्जडत्वमेत्यन्य: Subhāṣi. 466.

**अगुणग्रन्थिगहन** (a–guṇagranthigahana) *adj.* [*f.* –ā] who is different from one who is unfathomable due to the knot (i. e. combination) of the (three) qualities (i. e. Sattva, Rajas and Tamas) प्रकृतिमगुणग्रन्थिगहनाम्। …लक्ष्मीमभिदधति सन्तो भगवतीम् DevīPañ. 5. 25.

**अगुणग्रह** (a–guṇagraha) *adj.* who has no strong feeling (or attachment) for (the products or modifications of) the (three) *guṇas* (viz. Sattva, Rajas and Tamas) निरीक्ष्य चेत्थं त्वगुणग्रहोऽगुणं न याति मोहं ग्रहदोषमुक्तित: UpadeSā. 460. 26.

**अगुणग्राहिन्** (a–guṇagrāhin) *adj.* who does not know the merits अगुणग्राहिणोऽपि स्यादङ्गं सोऽपि गुणग्रह: PramāVār. 2. 155; मदस्य रागहेतुत्वेऽगुणग्राहिणोऽपि रागो भवेत् PramāVāBh. 123. 20.

**अगुणज्ञ** (a–guṇajña) *adj.* [*f.* –ā] who does not appreciate merits or virtues नष्टं दाक्षिण्यमगुणज्ञे PañcT. 1. 103 (105. 12); नष्टो गुणोऽगुणज्ञे Tantrākhyā. 30. 9; भगवति कमलालये भृशमगुणज्ञासि MudrāRā. 2. 5(2); अगुणज्ञासीत्यधिक्षेप: HarṣaC. 57. 7; अगुणज्ञौ तव पितरौ JayMa. 227. 20 (*on* 3. 5); नैव न: प्रियतमोभयथासौ …। एकतो हि धिगमूमगुणज्ञामन्यत: कथमद:प्रतिलम्भ: NaiṣC. 5. 69; वृथा दुग्धोऽनड्वान्…मया मूढेन त्वां कृपणमगुणज्ञं प्रणमता Subhāṣi. 449; 341; अगुणज्ञस्य कपटकूटस्य कूबरस्य समीपे न स्थितोऽहम् KathāK. 162. 15.

**अगुणतस्** (a–guṇatas) *adv.* not secondarily, not subordinately (i. e. principally) अथागुणतो धातुना अभिधीयमानव्यापारता, क इदानीं प्रत्ययार्थ: BhāvanāVi. 32. 3; 38. 3; 109. 2; 179. 3.

**अगुणता** (aguṇa–tā) *f.* **1** the state of being without a bow-string आपच्चापं बलारेर्न परमगुणतां पूस्त्रयप्लोषिणोऽपि CaṇḍīS'. 65; **2** the state of being without efficiency, uselessness, futility, CaṇḍīS'. 65; प्रयुक्ता नूनमा(? म)स्थाने प्रणयप्रशमक्षमा:। प्रयान्त्यगुणतामेव मानम्लानिकरा: परम् RāmāMañ. 306. 16; **3** the state of having no quality वैशेषिकपक्षेऽगुणतया तदभावात् KhaṇḍanKhā. 624. 24; **4** absence of merit, defect रसास्वादो व्यवहितप्राय इत्यस्यागुणता (श्लेषस्य) SāhiDa. 464. 2.

**अगुणत्याग** (a–guṇatyāga) *m.* absence of abandonment of three qualities (viz. Sattva, Rajas and Tamas) अगुणत्यागाच्चाप्येवम्। यदा हि नाहं न मम किंचिदिति मुक्ताहंकारममकारो भवति तदा ब्रह्मता भवति ManuBh. ii. 468. 18 (*on* 12. 50)

**अगुणत्व** (aguṇa–tva) *n.* **1** the state of having no speciality (in the form of being enjoined as accessory etc.) स्रौवेण वागुणत्वाच्छेषप्रतिषेध: MīmāSū. x. 7. 44; x. 7. 48; **2** the state of not being an accessory or subordinate rite समत्वादगुणत्वम् MīmāSū. xi. 1. 15; S'ābaBh. 2110. 8 (*on* xi. 1. 15); अन्येषामगुणत्वं स्यात्। अनङ्गत्वमित्यर्थ: S'ābaBh. 2110. 18 (*on* xi. 1. 15); अगुणत्वादनामत्वादमन्त्रत्वादनन्वये। अष्टत्वाद्यप्रमाणं चेन्नार्थवादतयान्वयात् NyāyMāVi. 54. 5 (*on* i. 4. 12); **3** (Gr.) the state of not having the guṇa–substitute अतोऽन्यत्र विधाने वावगुणत्वम् Vār. 7 *on* P. vii. 3. 85; अगुणत्वं विदेस्तथा PrakriKau. ii. 67. 1; युग इति घञन्त:। निपातनादगुणत्वं कालविशेषे रथाद्यवयवे च प्रयोग:। अन्यत्र योग: Prasā. ii. 746. 8; **4 i** the state of not possessing the qualities (Sattva, Rajas and Tamas) (पुरुष:) कस्मादकर्ता। उदासीनत्वादगुणत्वाच्च TattvSa. 123. 15 (*on* 3); **4 ii** the state of not possessing qualities or being free from qualities नान्योऽवयव्यवयवेभ्यो द्रव्यान्तरगुणानां द्रव्यान्तरगुणाकारणत्वे अगुणत्वप्रसङ्गात् NyāyVār. 231. 8 (*on* ii. 1. 31); नापि गुणद्वारको व्यय: संभवति अगुणत्वात् MuṇḍaUBh. 310. 6 (*on* i. 1. 6); अत आत्मनोऽपि…अगुणत्वं वाभ्युपेयम् IṣṭaSi. 90. 13; 358. 16; तज्जातित्वे सति अगुणत्वसंख्यात्वैकत्वानामन्यतमत्वं तत् TarkSaṁ.(Ā.) 2. 18; 58. 1; गुणत्वे तु न ज्ञानाश्रयत्वसंभव: गुणानामगुणत्वात् S'rutaPra. iA. 150. 23 (*on* i. 1. 1); न च वेद्यस्यागुणत्वमुत्तरस्य सगुणत्वमिति वाच्यम् AṇuBh. 27. 6 (*on* i. 1. 11); **4 iii** the state of not having the requisite standard quality अगुणत्वगुणसंश्रयै:। यथाकामात् पदार्थानामर्घं हीनाधिकं भवेत् S'ukrNī. 2. 359; **5 i** the state of not possessing any virtue or meritorious quality तस्मान्मौनेन भोक्तव्यमगुणत्वमनिच्छता BhaviP. 211A. 28 (i. 140. 33); **5 ii** the state of not being a quality पिठरोपादानत्वेऽपि कर्मणोऽगुणत्वात् NyāyVārPari. 518. 11; संयोगस्य … अगुणत्वोपपत्तौ अव्यवच्छेद्यत्वात् VedāntKa. 266. 9 (*on* ii. 2. 13); **5 iii** the state of not being a merit (i. e. the state of not being described as merit) अत्र पर्यन्ते … गुणस्य दोषत्वेनावर्णनात् तत्त्वेन वर्ण्यमानस्य च रवितुरगाद्यदानस्यागुणत्वात्…व्याजस्तुति: RasGaṅ. 691. 13.

**अगुणत्वप्रसङ्ग** (aguṇatva–prasaṅga) *m.* contingency of (the defect of) the state of being free from qualities नान्योऽवयव्यवयवेभ्यो द्रव्यान्तरगुणानां द्रव्यान्तरगुणाकारणत्वे अगुणत्वप्रसङ्गात् NyāyVār. 231. 8 (*on* ii. 1. 31)

**अगुणत्वोपपत्ति** (aguṇatvopapatti) *f.* the possibility of not being a quality संयोगस्य … अगुणत्वोपपत्तौ अव्यवच्छेद्यत्वात् VedāntKa. 266. 9 (*on* ii. 2. 13)

**अगुणदर्शन** (aguṇa–darśana) *n.* perception of the defect तत एव च नात्मीयबुद्धेरपि गुणेक्षणम्। कारणं हीयते सापि तस्मान्नागुणदर्शनात् PramāVār. 2. 246.

**अगुणदर्शिन्** (a–guṇadarśin) *adj.* who does not perceive or appreciate merits or virtues सती … स्वसुतापि च। नाहूता यज्ञविषये दक्षेणागुणदर्शिना S'ivaP. ii(2). 27. 23 (103A. 12)

**अगुणनिबन्धनत्व** (aguṇanibandhana–tva) *n.* the nature of not being caused by quality साधितं हि द्वित्वादिव्यवहारस्य अगुणनिबन्धनत्वम् TarkSaṁ. (Ā.) 64. 14.

**अगुणनिस्राव** (aguṇa–nisrāva) *m.* faulty discharge हिंस्यते धमनीमर्म यदा नागस्य मर्मसु। तदाऽप्यगुणनिश्रा(? स्रा)वाद्गजस्त्यजति जीवितम् Hastyāyur. 514. 30 (3. 23)

**अगुणपरतन्त्र** (aguṇa–paratantra) *adj.* which depends on what is other than a quality or property (i. e. its possessor) गुणानामगुणपरतन्त्रस्वभावत्वात् NayaVi. 121. 2 (*on* i. 1. 5)

**अगुणभाव** ( a-guṇabhāva ) *m.* absence of the subordinate character प्रधानेनागुणभाव उपलक्ष्यते गुणभावो यत्र नास्ति स कर्तेति Nyās. i. 301. 3 (*on* i. 4. 54); प्राधान्येनागुणभावो लक्ष्यते PadMañ. *on* KāśiVṛ. *on* P. i. 4. 54.

**अगुणभूत** ( a-guṇabhūta ) *adj.* [*f.* –ā] which is not (rendered) subordinate अगुणभूतो यः क्रियाप्रसिद्धौ स्वातन्त्र्येण विवक्ष्यते तत्कारकं कर्तृसंज्ञं भवति KāśiVṛ. *on* P. i. 4. 54; अगुणभूता यत्र शक्यार्थता तत्र यथा स्यात् प्रयोज्यो भृत्यो नियोज्यो दास इति Nyās. iii. 811. 3 (*on* vii 3. 68)

**अगुणमय** ( a-guṇamaya ) *adj.* not consisting of or not the product of the (three) qualities (Sattva, Rajas and Tamas) कामधियस्त्वयि रचिता न परम रोहन्ति… । ज्ञानात्मन्यगुणमये गुणगणतोऽस्य द्वन्द्वजालानि BhāgP. vi. 16. 39.

**अगुणयत्** ( a-guṇayat ) *adj.* not repeating बहुदेवताविभागमपेक्षमाणस्य तत्रागुणयतः विस्मृतं स्यात् ManuBh. i. 367. 12 (*on* 4. 100)

[1]**अगुणरूप** ( aguṇa–rūpa ) *adj.* whose nature or form is without attributes ब्रह्मणोऽगुणरूपस्य माया वर्णस्वरूपिणी BhaviP. 431B. 22 (iii(2). 4. 60)

[2]**अगुणरूप** ( aguṇa–rūpa ) *adj.* **i** having defective nature 'संपत्तिआवि खञ्जइ' इत्यादावगुणरूपस्यापि गत्यन्तराभावेनादरणीयत्वात् AlaṅkāRa. 71. 31; **ii** of the nature of defect itself गुणागुणरूपस्तुतिनिन्दावादस्तु सर्वत्र यथासंभवं कल्प्यः MīmāKau. iii(1). 31. 17 (*on* i. 2. 10)

**अगुणरूपिन्** ( aguṇarūp-in ) *adj.* who possesses a form which is without attributes पापाः… । तत्त्वं ते नैव जानन्ति शिवस्यागुणरूपिणः SivaP. ii(3). 28. 24 (155B. 14)

**अगुणवचन** ( a-guṇavacana ) *m.* a word not expressive of or conveying a quality (as its sense) कथमगुणवचनो गुणं ब्रूयात् S'ābaBh. 356. 1 (*on* i. 4. 22); कथमगुणवचन इति वाचकत्वमभ्युपेतं मन्वानस्य प्रश्नः TantrVā. 319. 10 (*on* i. 4. 22); S'āstrDī. 84. 8 (*on* i. 4. 13); अगुणवचनेभ्योऽपि हेतौ पञ्चमी समर्थनीया S'ivārkaMaDī. i. 116. 31 (*on* i. 1. 2); i. 214. 33 (*on* i. 1. 14); i. 563. 30 (*on* i. 4. 25); *adj.* not expressive of a quality अगुणवचनादपि प्रशस्यशब्दात्सादेवादेशविधेर्ज्ञापकादजाद्योर्विधिः Prasā. i. 920. 15; न च क्षिप्रक्षुद्रावगुणवचनौ LaS'abdeS'e. ii. 372. 11.

**अगुणवचनत्व** ( aguṇavacana-tva ) *n.* the nature of not being expressive of a quality अगुणवचनत्वाद्…अप्राप्तमेव ष्यञं कृतवान् NyāyMañ. i. 381. 10; न तु वपावानित्ययं शब्दो गुणमुक्तवान् । अगुणवचनत्वात् Prasā. i. 495. 14; LaS'abdeS'e. ii. 372. 9.

**अगुणवत्** ( a-guṇava(n)t ) *adj.* **1** which does not possess qualities द्रव्याश्रय्यगुणवान् … इति गुणलक्षणम् VaiśeSū. i. 1. 16; गुणा येषु वर्तन्ते ते गुणवन्तो न गुणवन्तोऽगुणवन्तः Kiraṇā. 161. 20; अत आह अगुणवानिति (गुणः) Upask. 33. 14 (*on* l. 1. 16); **2** who is not possessed of good qualities or virtues सवर्णजोऽप्यगुणवान् नार्हः स्यात्पैतृके धने BṛhaspaSm. 201. 34; नश्यन्ति गुणशतान्यपि पुरुषाणामगुणवत्सु पुरुषेषु PañcT. i. 101 (105. 7); नश्यन्ति गुणा गुणिनां पुरुषाणामगुणवत्सु पुरुषेषु Pañcā. 60. 16; Tantrākhyā. 30. 3; PauskS. 36. 124; बृहस्पतिरपि 'सवर्णजोऽप्यगुणवान्नार्हस्स्यात् पैतृके धने' इति । अगुणवान् पितृदृष्टादृष्टकार्योपयोगिगुणरहितः SmṛtiCan. iv. 630. 20; iv. 742. 16; **3** (act etc.) which is not virtuous or meritorious गुणवद्गुणवद्वा कुर्वता कार्यजातं परिणतिरवधार्या यत्नतः पण्डितेन S'atTrayī. 45 = SubhāRaK. 49. 29 = Subhāṣi. 2934 = S'ārṅgaPa. 1391.

**अगुणवत्त्व** ( aguṇavat-tva ) *n.* state of having no quality, non-possession of attributes उत्क्षेपणादीनां पञ्चानामपि…अगुणवत्त्वम् PadārthaSaṁ. 290. 3; NyāyKa. 290. 20; Kiraṇā. 161. 15; Upask. 34. 14 (*on* i. 1. 16); DaṇḍVi. 295. 19; Hastyāyur. 389. 9 (3. 6)

**अगुणवश्य** ( a-guṇavaśya ) *adj.* who is not under the control of qualities (*Sattva, Rajas* and *Tamas*) निरञ्जनस्य-अगुणवश्यस्य (ईश्वरस्य) S'rutaPra. ii. 281. 25 (*on* ii. 2. 3); iB. 148. 23 (*on* i. 1. 4)

**अगुणवादिन्** ( a-guṇavādin ) *adj.* not speaking about virtues, fault-finding न…जनोऽस्त्यगुणवादी यो रामस्य भुवि भूपते Rāmā. ii. 47*. 3.

**अगुणविद्** ( a-guṇavid ) *adj.* who does not understand good qualities पुरोभागी भागी पुरुषपशुतायामगुणवित् समस्तो नाम स्तात् SiddhāSi. i. 3. 1.

**अगुणविधि** ( a-guṇavidhi ) *m.* non-operation of the Guṇa substitute जाग्रोऽगुणविधिः Vār. 9 (*on* P. i. 2. 1)

**अगुणविधिपर** ( a-guṇavidhipara ) *adj.* not meant for enjoining an accessory अगुणविधिपरे हि वाक्ये भवत्यनेकगुणविधानम् S'ābaBh. 593. 13 (*on* ii. 3. 4)

**अगुणवृद्धिभाज्** ( a-guṇavṛddhibhāj ) *adj.* which does not undergo *guṇa* or *vṛddhi* ज्ञापक एवाकारान्तानामन्येषां चागुणवृद्धिभाजामदहनासादीनामदादिषु पाठः सार्वधातुकेऽतो लोपाभावस्य Pradī. v. 308B (*on* vi. 4. 46)

**अगुणवृद्धिसंज्ञक** ( a-guṇavṛddhisañjñaka ) *adj.* devoid of the terms *guṇa* or *vṛddhi* अन्यथा 'अचश्च' इत्यस्य स्वसंज्ञया विधाने नियमस्य 'दिव उत्' इत्यादिष्वगुणवृद्धिसंज्ञकेषु तत्संज्ञकेषु च यत्रेङ् न संभवति 'अष्टन आ विभक्तौ' इत्यादौ, तत्र चरितार्थत्वात् 'दिव औत्' इत्यादिषु गुणवृद्धिसंज्ञकेषु यत्रेक् संभवति तत्रायं नियमः स्यात् PadMañ. *on* KāśiVṛ. (*on* P. i. 1. 3)

**अगुणव्यतिरेक** ( a-guṇavyatireka ) *adj.* devoid of the change of the (three) qualities (such as *Sattva, Rajas* and *Tamas*) (i. e. not being the product of Prakṛti) सः जीवेश्वरादिभेदज्ञानेन…अगुणव्यतिरेके सत्त्वादिगुणविक्रियाहीने विष्णुलोके पूर्ववत् सर्वमुक्ताधिपतिर्जायते NyāySu.(Ja.) 437A. 2 (*on* ii. 3. 14)

**अगुणशील** ( a-guṇaśīla ) *adj.* who does not possess good qualities or good character गुणिनि गुणज्ञो रमते नागुणशीलस्य गुणिनि परितोषः S'ārṅgaPa. 293 = Subhāṣi. 253 = MādhavaĀ. 39.

**अगुणसंयोग** ( aguṇa-saṁyoga ) *m.* possession of defect (such as blindness) त्वमप्यगुणसंयोगात् प्राप्तं राज्यं न लब्धवान् MāhāBhā. i. 129. 14.

**अगुणाख्यान** ( aguṇākhyāna ) *n.* narration of a fault or defect प्रजापतेरगुणाख्यानम् KātyS'S. xii. 4. 20.

**अगुणात्मन्** ( a-guṇātman ) *adj.* not possessing good qualities शत्रोरप्यगुणात्मनोऽपि विदधत्युच्चैर्गुणोत्कीर्तनम् । … कष्टं किं न मनस्विनोऽपि मनुजाः कुर्वन्ति वित्तार्थिनः SindūPra. 75.

**अगुणान्तरज्ञ** ( a-guṇāntarajña ) *adj.* [*f.* –ā] not discriminating between one quality and another या दुष्करान्येन जगद्विभूतिस्तामिन्दुरुद्यन्कृतवानशेषम् । कान्ताप्रियाणीति तथास्तमागाद्विधेर्विचेष्टा ह्यगुणान्तरज्ञा Rāvaṇā. 6. 79.

**अगुणाय** ( aguṇāya– ) [*denom.* from *aguṇa*] to become a demerit or a defect गुणा अप्यगुणायन्ते गाढग्रहघनीकृताः DaśāvaC. 5. 142.

**अगुणारोप** ( aguṇāropa ) *m.* attribution of demerits or bad qualities शत्रावप्यगुणारोपं काकतीन्द्रो न मृष्यति PratāYaBhū. 16. 7.

**अगुणार्थम्** ( a-guṇārtham ) *adv.* not intended for (expressing) any (specific) quality (स्तोत्रशस्त्रे) वशावद्वागुणार्थं स्यात् MīmāSū. ii. 1. 15 (S'ābaBh. सगुणे चोदिते निर्गुणेनाभिधानं भविष्यति)

**अगुणाश्रय** ( a-guṇāśraya ) *m.* not the abode of the (three) qualities (such as *Sattva, Rajas* and *Tamas*) प्रायशः साधवो लोके परैर्द्वन्द्वेषु योजिताः । न व्यथन्ति न हृष्यन्ति यत आत्मागुणाश्रयः BhāgP. i. 18. 50; निजैकाश्रयतागुणाश्रयम् । वन्ने वरम्…रमा मुकुन्दम् BhāgP. viii. 8. 23.

**अगुणित** ( a-guṇita ) *adj.* [*f.* –ā] beyond calculation, countless धातकीकुसुमानां गौ(? गो)णीरगुणिताः (v. l. अगणिताः) … लोकेनादाय व्रजता … व्याप्तदिगन्तरम्…वनग्रामकं ददर्श HarṣaC. 305. 13.

**अगुणिन्** ( a-guṇin ) *adj.* devoid of (good) qualities गुणिनमगुणिनं वितर्कयन्ती… । वितरति मतिविप्लवं नृपाणामियमुपसर्पणमात्रकेण लक्ष्मीः VikraDeC. 6. 36; न ह्यगुणिनि भक्तिरुपपन्ना TattvPrakā. 158B. 5 (*on* iii. 2. 28).

**अगुणिनय** ( aguṇi–naya ) *m.* the doctrine that (the soul) is devoid of qualities (आत्मद्रव्यम्) अगुणिनयेनोपाध्यायविनीयमानकुमारकाध्यक्षवत् केवलमेव साक्षि TattvPradī.(A.) 371. 7 (after 3. 75)

**अगुणीकारलिङ्ग** ( aguṇīkāra–liṅga ) *n.* characteristic which may convert (the category of quality) into non-quality सादृश्यं शक्तिसंख्याप्रभृति च कतिचिद्भिन्नमूचुर्गुणादेः । स्यादत्रातिप्रसक्तिः प्रतिगुणमगुणीकारलिङ्गोपलब्धेः Tattv-Mu. 5. 120.

**अगुणीभाव** ( a-guṇībhāva ) *m.* the state of being not subordinate प्राधान्येनागुणीभावेन विवक्षितो योऽर्थः स कर्तृसंज्ञः Prasā. i. 404. 12; सर्वथागुणीभावः स्वातन्त्र्यमिति तात्पर्यम् Prasā. i. 404. 21.

**अगुणीभूत** ( a-guṇībhūta ) *adj.* which is not subordinate क्रियां प्रत्यगुणीभूतं नेश्वराद्यपि सिध्यति BṛĀraUBhVā. iii. 2. 163.

**अगुणैकभू** ( aguṇaikabhū ) *f.* the sole abode of bad qualities ततः शौरिः कृतोद्वेगो गुरूणामगुणैकभूः । विरचय्य चितामत्र कृशानुमविशत्स्वयम् PāṇḍaC. 2. 117.

**अगुणोक्तितस्** ( aguṇokti-tas ) *adv.* because of (the word) not expressing attribute किमग्नीवरुणौ श्लिष्टकृच्छन्देन विवर्जितौ । वक्तव्यौ सहितौ वाचो रूढत्वादगुणोक्तितः NyāyMāVi. 543. 12 (*on* x. 4. 19)

**अगुणोत्पत्ति** ( aguṇotpatti ) *f.* originative injunction not specifying (any) accessory अगुणोत्पत्तौ कर्मणि तत्रैव गुणः TantrVā. 540. 16 (*on* ii. 2. 24)

**अगुण्य** ( a-guṇya ) *adj.* [*f.* -ā] not possessing (good) qualities; possessing defects पार्थिवोऽर्थिनं गुण्यगुण्य इति न व्यजीगणत् S'iśuVa. 14. 47; हुं लज्जते (जयसिंहः) त्वां न जयाम्यहिम्यज्योत्स्ना तमिस्रामिव यद्यगुण्याम् DvyāśraKā. 18. 86 (comm. अगुण्यामालोकविनाशकत्वादिदोषैर्निर्गुणाम्)

**अगुण्यमान** (a-guṇyamāna) *adj.* not being repeated केवलं बहुवेदस्यागुण्यमानं प्रणश्यतीति स्वाध्यायो न निवर्तते ManuBh. i. 447.11 (*on* 5.59); अगुण्यमानं तु सदा साधूनां विस्मृतं श्रुतम् । अनभ्यसनतो नश्यत्यधीतं धीमतामपि PariPar. 9.56.

**अगुण्यवृत्ति** (aguṇya-vṛtti) *f.* conduct or action of one who does not possess good qualities साधवः ··· । तुलयन्ति न राम विक्रमं द्विषतीतापमगुण्यवृत्तिभिः JānaHa. 4.67.

**अगुदृग्योग** (agudṛg-yoga) *m.* association with the aspect of the planet Rāhu (भानुना शोकः ।) चन्द्रगुरुदृग्योगान्निश्चयेन (v. l. चन्द्रागुदृग्योगान्निश्चयेन JaimiUpaSū. iv. 1.52. (Bangalore, 1955)

**अगुप्त** (á-gupta) *adj.* [*f.* -ā] **A i** unprotected, unguarded अन्ये वा वै निधिमगुप्तं विन्दन्ति TaiS. V. vi. 6.2; तथाप्यगुप्तानां सीमावरोधविचयं दद्युः ArthS'ā. ii. 178.3 (4.13); अकालसहमत्यल्पं मूर्खव्यसनिनायकम् । अगुप्तं भीरुयोधं च दुर्गव्यसनमुच्यते Hitopa. 3.134; **ii** unprotected (i. e. having no guardian (such as husband etc.), unrestrained, independent ब्राह्मण्यामगुप्तायां क्षत्रियस्योत्तमः (दण्डः) ArthS'ā. ii. 181.3 (4.13) (comm. तस्यां स्वतन्त्रायां क्षत्रियस्य गन्तुः उत्तमः साहसदण्डः); शूद्रो गुप्तमगुप्तं वा द्वैजातं वर्णमावसन् । अगुप्तमङ्गसर्वस्वैर्गुप्तं सर्वेण हीयते ManuSm. 8.374 (ManvaMu. भर्त्रादिभी रक्षितामरक्षितां वा); ब्राह्मणीं यद्यगुप्तां तु गच्छेतां वैश्यपार्थिवौ । वैश्यं पञ्चशतं कुर्यात्क्षत्रियं तु सहस्रिणम् ManuSm. 8.376; अगुप्ता व्याख्याता । भ्रष्टशीलानाथा च ManuBh. ii. 226.26 (*on* 8.376); यद्यप्यगुप्ता परदाराव्यपदेश्या भवति विवाहसंस्कारे सति, तथापि स्वैरिणी भर्तृस्वतामतिक्रान्ता ManuBh. ii. 229.10 (*on* 8.385); ii. 226.9 (*on* 8.374); Mitā. 311.24 (*on* 2.286); अगुप्तासु भवेद् दण्डः सुगुप्तास्वधिको भवेत् MatsyaP. 227.138; ViṣṇuDhaP. ii. 72.123; अगुप्ते मानसव्यभिचारादरक्षिते गृहेऽवरुद्धे इति यावत् SmṛtiCan. iv. 745.19; अगुप्तया अरक्षितव्या(? या) इत्थं सवर्णया सह संगतः पञ्चशतानि दण्ड्य इति Subodhi. 105.3 (*on* 2.286); 104.31 (*on* 2.286); परिणीता अनेकविधा ··· गुप्ता अगुप्ता चेति DaṇḍaVi. 154.5; (अगुप्तमङ्गसर्वस्वी गुप्तं सर्वेण हीयते) अगुप्तमरक्षितम् DaṇḍaVi. 172.16; 167.22; **Bi** not concealed, not invisible (मन्त्री) यथा सिद्धादिषु द्विज । गगनस्थेष्वदृश्यः स्यादाचरेन्न्यासमात्मनः । अगुप्तस्य यतो वीर्यं मन्त्रजस्याहरन्ति ते JayāS. 11.8; **Bii** unbridled, licentious (इदम्··· उद्यानं पश्यतु भवान्) हृदयमिव दुरात्मनामगुप्तम् Mṛcch. 8.4; **C** uncontrolled इन्द्रियाणि ह्यगुप्तानि दुःखाय च भवाय च Saund. 13.54; गुप्तानि शब्दादिषु रागादिनिरोधाद् अगुप्तानि च आगमश्रवणेर्यासमित्यादिष्वनिरोधादिन्द्रियाणि येषां ते (गुप्तागुप्तेन्द्रियाः) AupaSūṬ. 66.1.

**अगुप्तत्व** (a-guptatva) *n.* state of being unprotected उभयत्र दत्तयोर्गुप्तत्वागुप्तत्वयोर्मूलानुक्तयोर्विशेषणयोः फले आह BālamBha. ii. 334.19 (*on* 2.286)

**अगुप्तत्वपक्ष** (aguptatva-pakṣa) *m.* the alternative of the state of being unprotected द्विजातिस्त्रियमभिगच्छतः शूद्रस्य तस्यागुप्तत्वपक्षे एकाङ्गच्छेदः DaṇḍaVi. 172.7.

**अगुप्तब्राह्मणीगमन** (aguptabrāhmaṇī-gamana) *n.* sexual intercourse with an unprotected Brahmin woman बलादगुप्तब्राह्मणीगमने तु सहस्रपणात्मकः (दण्डः) DaṇḍaVi. 168.9; मिताक्षरापक्षे तु यद्यपि तत्सममिति संख्यासाम्यनिरूपकोऽगुप्तब्राह्मणीगमनदण्ड एकत्र ब्राह्मणकर्मकोऽन्यत्र क्षत्रियवैश्यकर्मक एवेति विशेषोऽस्ति DaṇḍaVi. 168.21; अगुप्तब्राह्मणीगमने यो दण्डः स इत्यर्थः VyavaMa. 248.6.

**अगुप्तश्रुतचारित्र** (agupta-śrutacāritra) *adj.* endowed with unconcealed erudition and character श्रुतचारित्रयोर्जाता यस्याहंता न विद्यते । अगुप्तश्रुतचारित्रं नारदं तं नमाम्यहम् SkandP. i(2). 54.28.

**अगुप्तागमन** (aguptā-gamana) *n.* sexual intercourse with an unprotected woman अगुप्तागमने पञ्चशतानि प्रवासनाङ्कने ManuBh. ii. 229.10 (*on* 8.385)

**अगुप्तासवर्णागमन** (aguptāsavarṇā-gamana) *n.* sexual intercourse with an unprotected woman of the same caste अगुप्ता(? अगुप्त)सवर्णागमने दण्डमाह सहस्रमिति BālamBha. ii. 334.20 (*on* 2.286)

**अगुप्तिमत्** (agupti-ma(n)t) *adj.* having no protection चन्दने विषधरान्सहामहे वस्तु सुन्दरमगुप्तिमत्कुतः । रक्षितुं वद किमात्मसौष्ठवं संचिताः खदिर कण्टकास्त्वया BhallaS'. 32 = SūktiMu. 33.51 = SūktiRa. 171.19 = S'ārṅgaPa. 1043 = Subhāṣi. 798.

**अगुप्तैकाङ्गसर्वस्विन्** (aguptaikāṅgasarvasv-in) *adj.* one who has received (the punishment of) a limb (being cut off) and (confiscation of) the whole property when the sin is committed against an unprotected woman अगुप्ते ब्राह्मण्येकाङ्गकर्तनं सर्वस्वग्रहणं चेत्येकाङ्गसर्वस्वं तद्वानगुप्तैकाङ्गसर्वस्वी ManvaVi. 1093.9 (*on* 8.374)

**¹अगुरु** (a-guru) *m.* other than a preceptor or an elder तान्न साधारणे श्मशाने प्रयुञ्जीत···नागुरवे BaudhPiMe. ii. 2.3; उच्छिष्टमगुरोरभोज्यम् VasiSm. 14.17; शुश्रूषणं चाप्यगुरोरवैर्व्यकार्यमेतद्धि सदा द्विजानाम् BrahmāṇḍP. ii. 15.45; इदं त्वगुरोः श्रेयसः प्रत्युत्थानमासनस्थस्यैव सम्भवति ManuBh. i. 137.9 (*on* 2.119); उच्छिष्टमगुरोः ··· ब्रह्मचारी वर्जयेत् Mitā. 11.9 (*on* 1.33); अदेवे देवबुद्धिर्या गुरुधीरगुरौ च या YogS'ā. 2.3 = TriṣaS'aPuC. ii. 3.891; BālamBha. i. 432.20 (*on* i. 167)

**अगुरु** (a-guru) *adj.* [*f.* -rvī] **1** who has no teacher नृपः···अगुरूणां गुरुर्भवेत् MahāBhā. iv. 329*.8; अगुरूणामियं गुर्वी रत्नाकरतनूद्भवा MalliC. 8.96; **2** not having the meaning 'preceptor' अनुपसर्गाचरेराङि चागुरौ (यत्) Vār. 1 (*on* P. iii. 1.100); चरेराङि चागुरौ (यः) Kātan. iv. 2.14; अगुरावाङः (चरः यत्) CāndraVyā. i. 1.111; आङोऽगुरौ (चरः यः) Sākaṭā-Vyā. iv. 3.71; चरेराङस्त्वगुरौ (यः) SiddhaHe. v. 1.31; अगुरौ किम् । आचार्यः PrakriKau. ii. 477.5; **3** not heavy, light अगुरवः परमाणवः स्युः NyāyVār. 240.10 (*on* ii. 1.31); लघु स्यादगुरुण्यपि AnekāSa. 768; लघुनि चागुरुः TrikāS'e. 3.330; अगुरुस्त्वगरौ लघौ AnekāSam. 3.513; अगुरुः स्यात्···लघुन्यपि Viśva-Pra. 141.197; अगुरु ··· लघुनि स्यात् NānārthāSam. ii. 60.157; अगुरु ··· लघुनि MediK. 141.111; AnekāTi. 2.263; NānārthaMa. 335; ViśvaLoK. 294.102; S'abdaRaSaK. 264.15; **4** insignificant अगुरुं भरासहिष्णुं जनम् ··· विवर्ज्य कृतवसतिमिवार्णवोपकण्ठे (महेन्द्रं समीयुः) Bhaṭṭi. 10.48 (comm. अगुरुं लघु तुच्छमित्यर्थः); एकं मुक्त्वोर्वीमगुर्वी दधाना व्यर्था मूर्धामालयो व्यालनेतुः Acyutarā. 7.54; **5** not long (i. e. short in duration) कालोऽयम्···अगुरुर्न चातिलघुरप्याद्यन्तहीनो महान् KalyāKā. 4.2; **6** not profuse (i. e. parsimonious) तादृशोपस्थित्योश्चानुगतानतिप्रसक्तस्य कारणतावच्छेदकस्यागुरोर्दुर्वचतया S'aktiVā. 32.15; तादृशात्मनेपदत्वस्यागुरोर्निर्वचनासंभवात् VyutpaVā. 199.31; **7** (vowel) not heavy (by nature or by position) अपिनान्त्यस्य गुरोरगुरोश्चेत्यर्थः LaS'abdeS'e. i. 114.21; **8** not offensive, not troublesome [DBHS]

**²अगुरु** (aguru) *m. n.* cf. **अगरु** **1** tree called Agallochum, *Amyris agallocha* प्रविवेश ··· अशोकवनिकाम् । चन्दनागुरुचूतैश्च ··· समन्तादुपशोभिताम् Rāmā. vii. 42.2; अवतीर्णोऽसौ द्वीपम् ··· अगुरुचन्दनैः । ··· उपशोभितम् PadmP. (Ra.) 6.92; 42.14; KalyāKā. 12.12; लवलीग्रन्थिपर्णकागुरुद्राक्षाकस्तूरिकादीनामुत्पादः KāvyMī. 93.24; वृक्षमगुरुं गणनायकः (उपाश्रितः) SkandP. vi. 252.21; iv. 1.9; NemiC. 5.51; वृक्षे लघुनि चागुरुः TrikāS'e. iii. 3.330; नागपुन्नागलवङ्गागुरुचन्दनाः···विचित्रा यत्र शाखिनः PārśvC. 7.62; (इदम्) सुरदारुमलयमुस्तकलाक्षागुरुशीलचूर्णकर्पूरम् S'ārṅgaPa. 3262; चम्पकाशोकपुन्नागनारङ्गागुरुचन्दनैः ।···युतम् (काननम्) CitraPaC. 98; Anyo. 2 = PadyaVe. 670; **2** aloe wood करमाहारयामास··· । चन्दनागुरुवस्त्राणि मणिमुक्तमनुत्तमम् Mahā-Bhā. ii. 27.26; अगुरु – जोङ्गकं कालं कालचित्रं मण्डलचित्रं वा ArthS'ā. i. 189.1 (2.11); i. 277.1 (2.22); SuśruS. vi. 21.11; अनभिज्ञो यथा जात्यं दहेदगुरुकाष्ठवत् Saund. 15.26;-रास्नागुरुणी शीतापनयप्रलेपनानां (श्रेष्ठे) CaraS. i. 3.26 (1922 Ed.); i. 4.37 (1922 Ed.); BhelaS. 206.27 (6.26); द्वित्रीन्द्रियाष्टभागैरगुरुः···गन्धाः कर्तव्याः सर्वतोभद्राः BṛSaṁ. 77.23; AmaK. 1326; कटुतिक्तोष्णमगुरु स्निग्धं वातकफापहम् AṣṭāSaṁ. i. 78.23 (1.12); AṣṭāHṛ. i. 15.43; PadmP.(Ra.) 78.8; NāgaSa. 4.4; मनःशिलालभल्लातसूक्ष्मैलागुरुचन्दनैः (वल्मीकं नाशयेत्) SiddhYo. 57.8; ParyāRaMā. 14.263; YaśasCam. i. 295.3; कृष्णेनागुरुणा कृष्णं धूपयन्ति SkandP. vii(4). 23.47; (मन्त्रिणः) महीपतिम् । अगुरुभिश्चाभियुक्तायां चितायामध्यरोपयन् DeviBhāP. ii. 11.2; अगुरौ प्रवरं शृङ्गं शीर्षकं मृदुलं लघु S'esaNā. 1672; मङ्गल्या च वचा रुद्रा मल्लिगन्धागुरुस्तथा DharK. 1955; Rasā. 1.39; CaturCin. ii(2). 53.6; चन्दनागुरुकस्तूरीकर्पूरैर्यागमण्डपम् । धूपयेत् MahNirvāT. 5.79; PañcSā. 3.16; S'ārṅgaP. 214; 1000; 3206; 3257; MadaPāNi. 25.14; RājNi. 421.17; 430.2; Kumā-CaSaṁ. 109.10; अगर्वगुरुलोहे तु राजार्हं कृमिजं च तत् ParaNā. 2225; BallāC. 72.9; TantrSā.(K.) 23.26; 49.30; 49.32; 53.25; AlaṅkāS'e. 17.0(14); अगुरु इति षण्ढत्वमार्षम् VīraMi.(Pūja.) 155.25; अगुर्वगरु चायुस्कं राजार्हं जोङ्गकं तथा KośaKaTa. 1.3472; अगुरुर्वंशुकः कैश्यः शृङ्गारो विश्वरूपकः KalpaK. 65.406; 469.75; **3** powder or paste of aloe wood गुरूणि वासांस्यगुरूणि चैव सुखाय शीते ह्यसुखाय घर्मे BuddhC. 11.42; पलाशसमिधः ··· चन्दनागुरुणा तद्वत् कुङ्कुमेनाभिषिञ्चिताः (होतव्याः) MatsyaP. 93.143; BrahmāṇḍP. ii. 22.52; VāyuP. ii. 13.32; AṣṭāHṛ. i. 3.20; कुङ्कुमेनानुदिग्धाङ्गोऽगुरुणा गुरुणापि वा (स्वप्यात्) AṣṭāSaṁ. i. 15.20 (1.4); EI. iv. 79.48; कफे···चण्डागुरुश्यामनुलेपनम् SiddhYo. 39.4; 19.8; 49.3; YaśasCam. i. 529.6; चन्दनागुरुकर्पूरकस्तूरीकुङ्कुमादिभिः । ··· पूजयेद् द्विजदम्पती SkandP. ii(8). 8.11; BrahmVaiP. iii. 7.4; ViṣṇuDhaP. i. 141.13; अगुरुं दक्षिणे दद्यादघोरेण LiṅgaP. i. 81.14; BrahmP. 220.167; BṛDharmaP. i. 16.11; BhaviP. 89B.11 (i. 47.63); कुङ्कुमागुरुकर्पूरस्पृक्कैलाचन्दनादिभिः । सुगन्धा मिश्रितैरेभिः ··· वसुन्धरा SamarāSū.

**अगृह्याद्यात्मता** ( agṛhyādyātma-tā ) *f.* the state of being incomprehensible etc. ( आत्मा ) अगृह्याद्यात्मतां यातः स्वमहिम्नि व्यवस्थितः BṛĀraUBhVā. iv. 4. 1159.

**अगेन्द्र** ( agendra ) *m.* A a lordly mountain आरुह्यागेन्द्रम् ··· महेन्द्रम् । ···वायुपुत्रेण···लङ्घितः सागरः Abhiṣe. 2. 1; BhāgP. iii. 13. 23; उत्क्षिप्तगात्रः स विडम्बयन्नभः समुत्पतिष्यन्तमगेन्द्रम् ··· करेणुरारोहयते निषादिनम् S'iśuVa. 12. 5; तिलतुलां यान्त्यगेन्द्रा युगान्ते SūryaS'. 78; तम्···अगेन्द्रं गान्धर्वाहिरधिरुह्य RāmC. 16. 1; NavaSāC. 4. 59; UdaySuKa. 82. 17; Raghunā. 8. 77; **B** a particular lordly mountain **i** Mandara उपर्यगेन्द्रम् ··· सहस्रबाहुः । तस्थौ BhāgP. viii. 7. 12; **ii** Meru अगेन्द्रो धनुः ··· रथचरणपाणिः शर इति । दिधक्षोस्ते कोऽयं त्रिपुरतृणमाडम्बरविधिः Mahimna. 18 = YaśasCam. ii. 255. 15; **iii** Himālaya अङ्कादगेन्द्रजनुषः कृतसंनिधाना । दुर्गा YātrāPra. 1. 48; 1. 105; ĀnandMaSt. 48; योगे योऽगेन्द्रजाया रतम्···धत्ते RasSa. 240. 1.

**अगेन्द्रकन्दर** ( agendra-kandara ) *n.* cave in a big mountain इयं परिभ्रान्तिरगेन्द्रकन्दरे···ते शंसति कार्यगौरवम् NavaSāC. 4. 59.

**अगेन्द्रकन्या** ( agendra-kanyā ) *f.* daughter of Himālaya ( = Pārvatī ) अगेन्द्रकन्यापरिणीरमुष्याः स्वप्ने स्वयं लोचनगोचरोऽभूत् YātrāPra. 1. 105.

**अगेन्द्रकुल** ( agendra-kula ) *n.* group of lordly mountains अगेन्द्रकुलपक्षतिप्रलयभीषणारम्भदम्भोलिदहनदुर्वारडम्बरमासूत्रितं रक्षसाशुशुक्षणिप्रकरम् ··· नियमयितुम् UdaySuKa. 82. 17.

**अगेन्द्रजनुस्** ( agendra-janus ) *f.* ( Pārvatī ) born of Himālaya अङ्कादगेन्द्रजनुषः कृतसंनिधाना । दुर्गा YātrāPra. 1. 48.

**अगेन्द्रजा** ( agendra-jā ) *f.* ( Pārvatī ) born of Himālaya नासा विनाशयतु तापमगेन्द्रजायाः ĀnandMaSt. 48; RasSa. 240. 1.

**अगेन्द्रधैर्य** ( agendra-dhairya ) *adj.* possessed of the steadfastness of a lordly mountain अवनीपतिः···अपरं तीरमगादगेन्द्रधैर्यः Raghunā. 8. 77.

**अगेन्द्रसंनिभ** ( agendra-sannibha ) *adj.* resembling a lordly mountain भगवान्यज्ञपुरुषः···अगेन्द्रसंनिभः BhāgP. iii. 13. 23.

**अगेपन** ( a-gepana ) *adj.* not deterred, not shaken, firm अगेपनोऽग्लेपत स व्रजम् DhātuKā. 1. 48.

**अगेशय** ( age-śaya ) *adj.* S'iva ( residing on the mountain ) अगेशयम् । ···धाम पुंगवध्वजमाश्रये Acyutarā. 1. 0.

**अगेषुमित** ( ageṣu-mita ) *adj.* numbering fifty-seven ( चलाङ्काः ) द्विरगेषुमिताः ··· आर्के: GrahaLā. 3. 5.

**अगो** ( á-go ) *adj.* destitute of cows, poor उक्थं चुन शस्यमानमगोरॅरिरा चिकेत Ṛ.V. viii. 2. 14; SV. 1. iii(1). 4. 3; ते ह्यगावोऽभद्रा आसुः JaimiBr. 2. 370; *m.* A not a cow or bull ( i. e. any other animal ) जुहोति···सौर्यं गां वा श्वेतं तदभावेऽगौः श्वेतः स्यात् HirS'S. vi. 8. 26; पशुश्चेदाप्लाव्यागामग्रेणाग्नीन्परीत्य PāraGS. iii. 11. 1; एतेनाघटोऽगौरधर्मश्च व्याख्याताः VaiśeSū. ix. 1. 8; असन् अश्वो गवात्मना अगौः NyāyBh. 262. 2 ( *on* iv. 1. 37 ); JaineVyā. 58. 28 ( *on* i. 3. 68 ); विपक्षव्यापकश्च अगौरयं विषाणित्वात् NyāyVār. 166. 11 ( *on* i. 2. 45 ); अगौरिति विज्ञानं गोशब्दश्राविणः··· । येनागोः प्रतिषेधाय प्रवृत्तो गौरिति ध्वनिः TattvSaṁ. 914; 943; धेनुरपि गौः अगौः इत्युच्यते क्षीराख्यं फलं न प्रयच्छति इति GītāBh.(S'aṅ.) 125. 6 ( *on* 4. 18 ); UpadeSā. 412. 145; गोसामान्यस्य भिन्नत्वादगौरित्येष भिद्यते S'lokaVār. 5(13). 66 ( 583. 1 ); प्रतिपन्नगोस्वलक्षणोऽपि भ्रान्त्या तदन्याध्यवसायात् तत्साध्यार्थक्रियायां न प्रवर्तते । यदा तु तद्व्यवच्छेदो भवति-अगौर्न भवति-इति तदा प्रवर्तते S'arka. 24. 10; 47. 24; अगावोऽनश्वाश्च हस्त्यादयः NyāyMañ. i. 278. 17; के पुनरगावो यद्व्यावृत्त्या गवाकारेष्वेकत्वमारोप्यते NyāyKa. 320. 2; अगवं यक्षृत् । ··· अञ्जनं प्रशस्यते रात्रिदिनेष्वपश्यताम् SiddhYo. 61. 191; शाबलेयादिविशेषरूपस्यैवागावोऽश्वादयोऽपोह्याः स्युः NyāyRa. 567. 16 ( *on* 5(13). 5 ); 581. 9 ( *on* 5(13). 57 ); न ह्यप्रतीते गवि तद्व्यतिरेकात्मनागवां निरूपणं संभवति S'āstrDī. 104. 4 ( *on* i. 1. 5 ); उक्तं हि वाक्यपदीये न हि गौः स्वरूपेण गौर्नाप्यगौः गोत्वाभिसंबन्धात्तु गौः KāvyPra. 33. 5; BhāvPra.(S'ā.) 161. 15(6); RasGaṅ. 183. 6; गोपिण्डेभ्यगोभ्योऽश्वादिभ्यो व्यावृत्तिरस्ति TarkBhā.(Ke.) 76. 6; गोत्वं कुत्र वर्तते···नाप्यगवि विरोधात् Upask. 52. 7 ( *on* i. 2. 3 ); 376. 8 ( *on* ix. 4. 4 ); अभूत्सुरगौरगौः···कल्पद्रुमः कल्पनातीतः···भूधवे दानप्रोन्नतचारुपाणिकमले EI. xi. 281. 4; **B** not the word *go* अगोर्गोः समपद्यत MahāBh. i. 71. 17 ( *on* i. 1. 15 ); नञः परस्याः प्रकृतेः सान्तो न···अगौः JaineVyā. 276. 35 ( *on* iv. 2. 67 ); नाशिष्यगोवत्सहले CāndraVyā. v. 2. 102 = S'ākaṭāVyā. ii. 2. 114 = SiddhaHe. iii. 2. 148 = SaraKaṇṭhā.(Gr.) vi. 2. 120; KāśiVṛ. *on* P. v. 4. 71; vi. 3. 83.

**अगोअर्घ** ( á-goargha ) *adj.* not worth a cow यत्कुलयां ते शफेन ते क्रीणानीति पणेतागोअर्घं॰ सोमं कुर्यादगोअर्घं यजमानमगोअर्घमध्वर्युम् ··· गवां ते क्रीणानीत्येव ब्रूयाद्गोअर्घमेव सोमं करोति TaiS. VI. i. 10. 1.

**अगोःप्रापणम्** ( a-goḥprāpaṇam ) *adv.* at such a height where a bull ( or cow ) cannot reach रौद्रान्यजमानोऽञ्जलिनोदस्यत्यगोःप्रापणम् KātyS'S. v. 10. 18 ( comm. यथा क्षिप्तानूर्ध्वमुखोऽपि गौर्न प्राप्नुयात् )

**अगोकुलविषयवृत्ति** ( a-gokulaviṣayavṛtti ) *adj.* who has no inclination to the objects of the group of sense-organs नन्दाय गोकुलविषयवृत्तयेऽपि अगोकुलविषयवृत्तये···विश्वमूर्तिः···व्याजहार ĀnandRa. 1. 37(2)

**अगोग्रहण** ( ago-grahaṇa ) *n.* knowledge of what is not a cow यस्य गोप्रतिषेधकाः पूर्वं नञादयो न प्रसिद्धाः तस्यागोग्रहणं नास्ति S'arka. 47. 24.

**अगोग्रहम्** ( a-graham ) *adv.* without seizing the cows जय···गामगोहरम् S'ārṅgaPa. 549(7) ( comm. अगोग्रहम् )

**अगोघ्न** ( a-goghna ) *adj.* not killing the cows मत्तवारणाः···अगोघ्ना अपि गोशीर्षम्···उप( ? द्व )हन्तः AvantiKa. 105. 6.

**अगोघ्रात** ( a-goghrāta ) *adj.* not smelt by a cow अगोघ्रातमस्पृष्टं शूद्रवायसैः···अन्नाद्यमद्यात् VedavyāSm. 3. 57.

**अगोचर** ( a-gocara ) *adj.* [ *f.* -ā ] **1 i** not within the range ( of sense-organs or mind ) **ii** not within the scope ( of sight ), imperceptible **iii** beyond the range ( of words ), indescribable, inexpressible **iv** beyond the range ( of mind ), inconceivable **v** beyond the sphere ( of understanding ), incomprehensible **vi** not to be qualified **vii** unknown, not knowable **viii** beyond the reach ( of valid cognition ), beyond ( proof ) **ix** inaccessible, unattainable, unreachable **2** incurable, beyond control **3** impossible **4** unfit **5** without an object, having no object. **1 i** not within the reach or range or scope ( of any of the senses or mind in general ), not an object खानामगोचरोऽहम् SvātmNi. 119; अध्यासः स कथं स्वामिन् भवेदात्मन्यगोचरे SarvaVeSāSaṁ. 468; सर्ववेदान्तसिद्धान्तगोचरं तमगोचरम् । गोविन्दं परमानन्दं मद्गुरुं प्रणतोऽस्म्यहम् ViveCū. 1; प्रसीद व्यक्त विस्तीर्ण विस्तीर्णानामगोचर PañcaRā.( Nā. ) iv. 4. 7; सत्तामात्रमगोचरम् ··· तज्ज्ञानं ब्रह्मसंज्ञितम् KulārT. 9. 7; रूपं तवाशेषविकारहीनमगोचरं निर्मलमेकरूपम् KūrmaP. 132. 3 ( 1. 12 ); वेदविद्भिर्हि वेदान्तैरस्वगोचरमिति श्रुतिः LiṅgaP. i. 27. 50; i. 86. 58; परं ब्रह्म ··· अगोचरम् GaṇeP. ii. 51. 30; रामं विद्धि परं ब्रह्म···अगोचरम् AdhyāRā. i. 1. 32; ततः परममाकाशमतीन्द्रियमगोचरम् । ··· अश्नुते S'ārṅgaPa. 4597; तदात्मानं ज्ञात्वा ··· अगोचरम् BṛBrahmaS. i. 7. 37; **1 ii** not within the scope ( of visual sense ), imperceptible अथ दृष्टयगोचरान् कपोतान् विज्ञाय लुब्धको निराशः श्लोकमेकं पठन् निवृत्तः PañcT. [ Ed. Kosegarten ] 2. 2 ( 106. 14 ); चरमं चारुशीलानां विनयेन विमार्गताम् । आविर्भवन्ति भव्यानामभव्यानामगोचराः ( ओषधयः ) RāmC. 35. 98; नरेन्द्रोऽपि तेन चर्मचक्षुषामगोचरेण तस्य साक्षान्निजदिव्यरूपाविष्करणेन···प्रतिग्राहणाय···आवर्जितमनाः···तं जग्राह TilaMañ. 45. 6; स शिवः···अगोचरस्तदान्येषां तत्रैवान्तरधीयत BṛDharmaP. i. 33. 37 ( ? 27 ) ( हरः ) अगोचरो दृष्टिगतः GaṇeP. ii. 79. 5; स खलु दृष्टेरगोचरो बभूव UdaySuKa. 30. 14; 142. 28; तस्यास्तुङ्गस्तनच्छाया चकास्ति त्रिवलीतटे । लीना तिमिरलेखेव वदनेन्दोरगोचरे VikraDeC. 8. 50; कङ्कादीनपि···दृष्टेरगोचरान् । स्वपक्षबलसामर्थ्यात् प्रहर्तुं शालिवा(?वः )क्षमः Mānaso. iv. 13. 1377; युगादिनाथस्य···आहारनी(? वि)-हारविधिर्लोचनानामगोचरः TriṣaS'aPuC. i. 2. 661; श्रीनामेयविभोर्बिम्बं पित्तलामयमद्भुतम् । दृशामगोचरं रोचिःपूरतः सूर्यबिम्बवत् PrabhāC. 181. 18; सृष्टेरादौ त्वमेकासीत्त( ? त )मोरूपमगोचरम् MahNirvāT. 4. 25; स जगाद दृशोरगोचरः S'ivLī. 15. 54; मायामनुष्यः सहसा तदक्ष्णामगोचरो गोकुलपालकोऽभूत् HariVi. 2. 14; **1 iii** beyond the range ( of words ), indescribable, inexpressible, inexplicable वाचामगोचरां हर्षावस्थामस्पृशत् DaśKuC. 144. 1; प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् । वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ViṣṇuP. vi. 7. 53; ( राजनायिका ) वाचामगोचरमगोचरमेव बुद्धेरीदृक्तया न कलनीयमनन्यतुल्यम् । त्रैलोक्यगर्भपरिपूरितशक्तिचक्रसाम्राज्यसंपदभिमानमभिस्पृशन्ती BrahmāṇḍP. iii. 18. 6; अस्मद्गिरामगोचरोऽयमस्याः पुण्याशयायाः शोकः HarṣaC. 326. 5; वाचामगोचरः···परमात्मा S'vetāUBh. 50. 2 ( *on* 1. 0 ); 93. 19 ( *on* 1. 7 ); वाचामगोचरोऽहम् SvātmNi. 139; अचैव तव गिरामगोचरे न प्रयाति विषयान्तरं मनः TripuMāPūSt.( S'aṅ. ) 114; ध्वनेस्तत्त्वं गिरामगोचरम् Dhvanyā. 33. 1 ( *on* 1. 1 ); यतो जानाति नैतस्य तत्त्वं वाचामगोचरम् BṛKathāK. 18. 3; यो युवराजसमरकेतुस्नेहः ··· अगोचरः सुहृदाश्वासनानाम् TilaMañ. 385. 5; नमामि गणनाथम् ··· वाचामगोचरम् GaṇeP. i. 3. 7; i. 37. 25; i. 48. 38; ii. 54. 55; तस्यैतस्य ··· स्वरूपभेदो वाचामगोचरः VedāSaṁ. 74. 9; वाचामगोचरं प्राप्य कष्टमिष्टवियोगतः । मूर्च्छामगच्छतामाशु ते PāṇḍaC. 8. 472; 12. 309; त्वच्चारित्रमगोचरं कविगिराम् SaduktiKa. 195. 5; वाचामगोचराणि संग्रामसिंहस्य···तानि चरित्राणि HammīMaMa. 2. 30(5); प्रियत्वं वाचामगोचरम् S'rutaPra. iA. 61. 3 ( *on* i. 1. 1 ); शान्तिमलप्यथावस्थान्तरं वाचामगोचरम् । नयनत्वनुभवं रोमविकारेण सहोत्थिता SamarāSaṁ. 7. 389; प्रतापरुद्रदेवस्य गुणा वाचामगोचराः PratāYaBhū. 12. 4; स्वगोचरानेवमगोचरो गिरां बलानुजो बालधिया-

मपाहरत् । … अवर्णवादान् Yādavā. 14. 68; इह…सौख्यम् अगोचरमाचर Nalo. 2. 27; अभिसारिकायाः । अभूत्सुखं यत्किमपीति वाचामगोचरं तत्स्वयमेव वाच्यम् Subhāṣi. 1944; पितृव्यस्य तथाभूतं मृत्युं श्रुत्वा धराधिपः । वाचामगोचरं कष्टं कलयामास मानसे HammīMaKā. 4. 29; पिता मम प्रतापी तत्कृच्छ्रं वाचामगोचरः ParamāKā. 34. 23; अगोचरं वाचाम् … भवनम् NīlaVi. 40. 14; अगोचरं यन्मनोवचसाम् । तत् … महो वन्दे BhāṭṭCin. i. 1. 3 ( *on* i. 1. 0 ); ननु भाव वचसामगोचरं वस्तु वचसैव श्लाघमानो व्याहतिमपि न चेतयसे AmṛUda. 1. 14(1); न जानाति परो ब्रह्मा हरिं वाचामगोचरम् SiṁhāDvā. 167. 1; **1 iv** beyond the range of (mind and intellect); inconceivable भूतभविष्यदादिसकलसुरासुरमुनिजनमनसामप्यगोचरः … वासुदेवः ViṣṇuP. iv. 15. 30; ततः परमनिर्वाणमतीन्द्रियमगोचरम् । यद्बुद्धेर्यन्न चाख्यातुं शक्यते तत्समश्नुते MārkP. 40. 46; शब्दब्रह्म त्वहेयं यद्धृदयाकाशमध्यगम् । … मनसा ( स्या )दगोचरम् PauṣkS. 34. 59; अगोचरो मनस्तर्कैः सोऽयं देवो मयेक्षितः GaṇeP. i. 91. 15; ii. 130. 19; तरुणाः … अपि यन्मनोरथगतेरगोचरं तदवापुः S'rīKaC. 14. 52; राजा श्रीललितादित्यः … । विधेर्बुद्धेरगोचरः RājTa.(Ka.) 4. 126; अयो( ? गो )चरस्तस्य विधेः प्रचारो यः सज्जनानामथ दुर्जनानाम् Surath. 2. 41; विधेर्विलसितं हन्त विचाराणामगोचरे( ? रम् ) । सुघटं यो विघटयेदघटं घटयेदपि MalliC. 1. 294; 2. 448; यन्मनोरथशतैरगोचरं न स्पृशन्ति कवयो गिरापि यत् S'ārṅgaPa. 453; आचरति दुर्जनो यत्सहसा मनसोऽप्यगोचरानर्थान् SāhiDa. 440. 10; Subhāṣi. 3115; सर्वयोगिमनसामगोचरम् । … सर्वगं जयति धाम Vidvanmo. 5. 21; **1 v** beyond the sphere (of words and mind), incomprehensible यत्तदात्मविज्ञानसुखम् … प्राकृतपुरुषवाङ्मनसयोरगोचरमपि KāṭhUBh. 167. 18 (*on* 5. 14); प्रत्यङ्मात्रैकदृष्टित्वाद्धियां वाचामगोचरः BṛĀraUBhVā. (Sambandha.) 1086; तत्त्वं मनोवाचामगोचरम् … संप्रकाशते KulārT. 3. 93; 5. 73; वदन्त्यगोचरं वाचां बुद्ध्यादीनामतीन्द्रियम् । त्वां वेदवादिनः AdhyāRā. i. 3. 21; iii. 9. 30; ( नतोऽस्मि…नीलकण्ठम् ) मनोवाचामगोचरम् VarāP. 144. 23; अत्याश्चर्यं विभो दृष्टं मनोवाण्योरगोचरम् GaṇeP. ii. 61. 38; ii. 133. 29; यं चागोचरमामनन्ति मनसां वाचां च… । तस्मै…नमो विष्णवे NyāyMa. 2. 1; निर्गतं मनसो वाचो यदि तत्स्यादगोचरम् AnuVyā. 6B. 9 (*on* 1. 1); 30A. 2 (*on* 2. 2); 68B. 3 (*on* 4. 2); अहो महात्मनो मनोवचसोरगोचरः कोऽपि व्यसनोत्करः MohaRāPa. 1. 23(42); अहेयमनुपादेयं मनोवाचामगोचरम् । …ब्रह्म पूर्णम् ViveCū. 243; पुंसां दृग्वाङ्मनसामगोचरोऽपि हरिः । कृपया फलति PraboSu. 257; मनोवाचामगोचरः … तमुवाच महेश्वरः ParamāKā. 44. 39; नन्वेष वाङ्मनसयोरगोचरोऽपि AmṛUda. 1. 13(2); **1 vi** not to be distinguished or qualified शुक्लादिदीर्घादिघनादिहीनमगोचरं यच्च विशेषणानाम् ।…रूपाय तस्मै भगवन्नताः स्मः ViṣṇuP. iii. 17. 32; **1 vii** unknown, not amenable to knowledge बुद्धवचनत्वप्रसाधनार्थं कारणविभाज्यमारभ्य श्लोकः । आदावव्याकरणात्समप्रवृत्तेरगोचरात्सिद्धेः MaYānaSū. 3. 5(1. 7); अभिन्नदेशकालानामन्येषामप्यगोचराः । विप्लुताक्षमनस्कारविषयाः किं बहिःस्थिताः NyāyVi. 2. 46; काव्यतत्त्वार्थभावनाविमुखानाम् … अगोचर एवासावर्थः Dhvanyā. 94. 3 ( *on* 1. 7 ); शब्दब्रह्ममहो … अनभ्यासादगोचरम् PāraS. 6. 86; इति ते कथितं ध्यानं ब्रह्मादीनामगोचरम् KāliViT. 25. 6; अद्य प्रतीतोऽसि मम देवानामप्यगोचरः AdhyāRā. ii. 9. 60; देवम् … देवैरगोचरम् … प्रणवेनैव मन्त्रेण पूजयेत् SaurP. 42. 40; तरुसंकटसीम्नि कर्णिकारैस्तनुलेखा परिपस्पृशे सुरीणाम् । अधिगन्तुमिवाङ्गनाङ्गसङ्गान्नवसौरभ्यमगोचरं विधातुः S'rīKaC. 8. 19; उत्तमकुमारराट् । किं जीवति मृतो वाथ ज्ञानिनां किमगोचरम् UttaKuC. 367; इति ब्रुवाणं तं विप्रं गजशास्त्रविशारदम् । विज्ञायागोचरैरर्थैर्न्यमन्त्रयत सान्त्वयन् Hastyāyur. 16. 13 ( 1. 1 ); सोऽब्रवीत् देवानां चरित्रमगोचरम् SiṁhāDvā. 19. 2(20); भाव भक्तियोगो योऽगोचरः शास्त्रकृतां स च सचमत्कारं ज्ञानमेव जनयति CaitaCa. 5. 16(1); **1 viii** beyond the range or scope of the valid means of cognition, beyond proof ननु चाशक्तिजा दोषाः प्रमादजनिताश्च ये । परिहर्तुमशक्यत्वान्निषेधस्याप्यगोचराः TantrVā. 233. 20 (*on* i. 3. 25); यद्यपि प्रमाणान्तरागोचरं ब्रह्म S'rīBh. 146. 9 (*on* i. 1. 4); निवृत्तिधर्मः सुतरामगोचरः S'ivLī. 5. 70; मुक्तगम्यमिदं सर्वमवाङ्मनम(? स)गोचरम् GopāKeCan. 147. 8; **1 ix** inaccessible, unattainable, unreachable (तं मनोहरमागम्य गिरिम्) मानुषाणामगोचरम् Bhaṭṭi. 6. 94; न भवत्यल्प इव महानगोचरः YaśasCam. ii. 68. 4; देवानामप्यगोचरम् । वक्तव्यं यद्गुह्यतमं दास्ये ज्ञानं तवानघ KūrmaP. 7. 10 (1. 1); 8. 1 (1. 1); अर्जुनः । गतो राधापतिस्थानं यत्सिद्धैरप्यगोचरम् PadmP. iv. 74. 49; यदुग्रं गहनं घोरमप्रधृष्यमगोचरम् । हृदि यद्भवतां कार्यमग्निस्तत्साधयिष्यति SaurP. 60. 39; आयुष्मता तु तत्प्राप्तमाशिषां यदगोचरम् BṛKathāS'loSaṁ. 3. 109; कुत्रचिदगोचरे मानवजनस्य गतवान् UdaySuKa. 145. 16; त्वद्वाचां स्वरमात्रिकां मदकलः पुंस्कोकिलो घोषयत्यभ्यासस्य किमस्त्यगोचरमिति प्रत्याशया मोहितः SubhāRaK. 16. 70; क्व वा मलयशैलेशः क्व च मेरुरगोचरः S'āliC. 4. 75; कुमारश्च … द्वारम्… । प्रायो वक्रीकृतं तत्र मानवानामगोचरम्…दृष्ट्वा UttaKuC. 117; 250; त्वयि रुचिरुचिता नितान्तकान्ते शुचिपरिपाक शुचामगोचरोऽसि AmṛUda. 1. 6; **2** incurable, beyond the power (of medicine) अन्यदाथ महादाहज्वरोऽभूत्पृथिवीपते । सर्ववैद्यप्रयुक्तानामौषधीनामगोचरः PadmP.(Ra.) 22. 122; **3** impossible to prevent (हर्षः) प्रज्ञाप्रयत्नानामगोचरेण…शोकेन कवलीकृतं ज्येष्ठं भ्रातरमपश्यत् HarṣaC. 244. 2; **4** unfit एवमुच्चावचवचा अगोचरोऽसि वादकथायाः MudriKu. 3. 16(1); **5** (as *bahuvrīhi* Cpd.) without an object, not having an object तदप्यकारणं यस्मान्नैव ज्ञानमगोचरम् TattvSaṁ. 592; **अगोचरेण** ( a–gocareṇa ) *adv.* without the knowledge of, unknown to कथं देवपादानामगोचरेणैवं क्रियते Hitopa. 2. 79(24)

**अगोचर** ( a–gocara ) *m.* the waste land ( which is not a pasture ) मृतं कृशातिमेद्यं च वृद्धं व्यालं विषैर्हतम् । अगोचरभृतम् … मांसमुत्सृजेत् CaraS. i. 27. 311 (1941 Ed.); अतिमेद्यं त्यजेन्मांसं हतं व्याधिविषोदकैः । स्वयं मृतं धूमपूर्णमगोचरमृतं( ? °भृतं )कृशम् AṣṭāSaṁ. i. 35. 14 (1. 7)

**अगोचर** ( a–gocara ) *m. n.* **i** not an object (i. e. Brahman), non-object, non-sphere, non-scope अरुंतुदत्वं महतां ह्यगोचरः Kirātā. 14. 55; 17. 11; क्व संख्यातिगास्तद्गुणाः…वाचस्पतेरप्यगोचरः HarṣaC. 140. 11; इदं तत्परमं तत्त्वं तत्त्ववादी जगाद यत् । सर्वसंपत्प्रदं चैव केशवादेरगोचरः TattvSaṁ. 3540; सत्यमगोचरे गिरां दशकण्ठक्रीडितानि AnargharRā. 7. 57(1); अथ शुद्धं भवेद्वस्तु यद्वै वाचामगोचरः AparoAnu. 136; तथा तेषामगोचर एव वर्तते SanatBh. 223. 9 (*on* 1. 27); चक्षुषो ह्यगोचरे पृष्ठतोऽप्युपस्पृष्टः केनचित् हस्तस्यायं स्पर्शः जानोरयमिति विवेकेन प्रतिपद्यते BṛĀraUBh. 178. 11 (*on* i. 5. 3); नानन्दमयता न्याय्या धियां वाचामगोचरे TaiUBhāVā. 111. 2( 2 ); 136. 6( 2 ); गता गिरामगोचरे यदीयनीरचारुता । … धुनोतु नो मनोमलं कलिन्दनन्दिनी YanunāA. 4; न चागोचराद्भेदोऽगोचरस्य चाभावोऽगोचरेऽपि ज्ञातुं शक्यते IṣṭaSi. 6. 13; किंतु क्वचित् कृष्टधनुर्धरोष्मणः तव प्रतापस्य भवेदगोचरः Kapphiṇā. 2. 29; अनुभूतयो भावनोपजननद्वारा … स्मृतिप्रत्ययं स्वगोचर एवादिध( ? वाधि )त्सन्ति नान्यगोचरे नाप्यगोचरे TattvBi. 49. 3; वस्तु वचसामगोचर इति प्रथयितुम् VakroJī. 106. 14; न चागोचरे सहस्रेणाप्युपायैरेतत्प्रवर्तयितुमर्हतीति TātpaṬ.(Vā.) 137. 3 (*on* i. 1. 4); एवं यतन्तं विजने मामाहागोचरो गिराम् BhāgP. i. 6. 21; इष्टसिद्धिः प्रसिद्धांशे हेत्वसिद्धिरगोचरे NyāyKuA. i. 163. 10; निर्गुणाय नमो नमः । चिदानन्दस्वरूपाय वेदानामप्यगोचर GaṇeP. ii. 37. 4; विक्रमेण न यत् साध्यं यद्बुद्धीनामगोचरः TriṣaS'aPuC. iii. 3. 35; यद्यपि जगद्गुरोर्यथार्थवादित्वगुणपरीक्षणं मादृशां मतेरगोचरः SyādvāMañ. 2(22); नास्ति मृत्योरगोचरः SarvaDaSaṁ. 1. 17; यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरः SarvaDaKau. 108. 19; **ii** name of Jina ( नाम्नामष्टसहस्रेण तोष्टुमः ) दिष्टिर्दैवमगोचरः MahāP. 25. 187; **iii** that which cannot be achieved or done अगोचरे गुणानामभूमौ सौभाग्यानामविषये वरप्रदानानाम् … लक्ष्म्या महत्त्वे स्थितम् ( हर्षमद्राक्षीत् ) HarṣaC. 113. 5; सर्वथा न किंचिदगोचरो भवितव्यतानाम् VāsaDa. 258. 6; **iv** that which is not subject to स एव सायं नयनैरलङ्घ्यत त्विषां निधिः को नियतेरगोचरः RāmC. 18. 6; *n* **i** not an object अगोचरे वागिव चोपरेमे शक्तिः शराणां शितिकण्ठकाये Kirātā. 17. 11 ( comm. अवाङ्मनसगोचरे ब्रह्मणि ); विधिः …कदाचिदन्यदाधत्ते मानसस्याप्यगोचरम् PadmP. (Ra.) 17. 85; नागोचरं ययोरस्ति ब्रह्म मुक्त्वा निरञ्जनम् TaiUBhāVā. 103. 15(2); मनसो वाचश्चागोचरं यतः NyāySu.(Ja.) 122A. 8 (*on* i. 1. 5); तथापि वाचामगोचरमवोचत लोचनान्तः AmṛUda. 2. 9; **ii** not an object (of perception etc.) सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः Vikramo. 4. 9 = VakroJī. 150. 13 = KāvyPra. 427. 5 = SāhiDa. 440. 2; गतास्ते चाधुना सर्वे दर्शनानामगोचरम् PadmP.(Ra.) 5. 262; श्रावकश्राविकौघेषु शोकः कोकेष्विवाधिकम् । श्रीमल्लिभास्करे प्राप्ते नयनानामगोचरे MalliC. 8. 568; अहो अगोचरे वाचां राज्ञोऽस्य चरितं महत् PārśvC. 3. 663.

**अगोचर** ( a–gocara ) *m.* improper behaviour [DBHS]

**अगोचरचरित्र** ( agocara–caritra ) *n.* behaviour which is beyond the range (of words) वाचामगोचरचरित्रपवित्रिताय तस्मै नमो भगवते मकरध्वजाय S'atTrayī. 112.

**अगोचरतर** ( agocara–tara ) *adj.* [*f.* –ā] far beyond the range (of words, mind etc.) केवलम् । मनोवागादिवृत्तीनामगोचरतरं परम् S'aṅkaVi.(Ā.) 106. 5; आकर्ण्य सादरमनन्तरमाप्तवाचां वाचामगोचरतरामनघां स वाचाम् । तस्याधरीकृतसुरद्रुगणस्य वृत्तिं राजा दिदृक्षुरभवन्मुदितान्तरात्मा ĀnandRa. 2. 17.

**अगोचरता** ( agocara–tā ) *f.* **A** the state of being out of the range (of sight, words etc.) लुब्धकोऽपि तान् दृष्टेरगोचरतां गतान् विज्ञाय PañcT. 2. 2(9) [187. 2]; बुद्धेरगोचरतया न गिरां प्रचारः S'āntiS'. 3. 14; चित्तस्य चापि यदगोचरतामुपैति तत्तु प्रयच्छतितरां बत बुद्धिरत्नम् RājTa.(Jo.) 1202; वाचामगोचरतां गता … सुतनोर्लक्ष्मीः S'ṛṅgāMañ.(A.) 24. 11; **B** the state of not being an object (of knowledge) परानुभवसंवेद्यस्य वस्तुनो वक्तुरगोचरतां प्रतिपादयितुं संवृतिः क्रियते VakroJī. 107. 19; अप्रसिद्धिः साकल्येनागोचरता TattvPrakā. 12B. 12 (*on* i. 1. 5); कार्त्स्न्ये( ? त्स्न्यें )नागोचरता त्वानन्त्यात् GoviBh. 16. 3 (*on* i. 1. 11)

**अगोचरत्व** (agocara-tva) *n.* the state of not being an object of or being beyond the range of (words, perception, knowledge etc.) अज्ञानां सर्वभूतानां निशेव निशा परमार्थतत्त्वम्, अगोचरत्वादतद्बुद्धीनाम् GītāBh. (S'aṅ.) 68. 13 (*on* 2. 69); 381. 10 (*on* 13. 12); यदुक्तं विदितादन्यद्वागादीनामगोचरत्वात् KenUBh. 80. 11 (*on* 2. 3); प्रत्यक्षस्यागोचरत्वादनुमानं प्रदूषितम् S'ivDr. 2. 62; जनकागोचरत्वेऽप्युत्तरोत्तरस्मृतौ पूर्वपूर्वस्मरणजनितज्ञाततावभासनात् NyāyKuA. ii(2). 4. 5; अतः प्रमाणान्तरागोचरत्वेन शास्त्रैकविषयत्वाद्यतो वा इमानि इत्यादिवाक्यम् ··· ब्रह्म प्रतिपादयतीति सिद्धम् S'rīBh. 146. 7 (*on* i. 1. 3); तथा च सत्येतन्मनः स्वगोचरेषु दृश्येषु प्रयोजनभावं प्रयोजनवति दृग्वस्तुन्यगोचरत्वं च बुद्ध्वा निरिन्धनाग्निवत्स्वयमेवोपशाम्यति JivanVi. 85. 8; अतिव्याप्तिनिरासः···समासोक्तिपरिणामयोर्विषयिताद्रूप्यस्यागोचरत्वात् RasGaṅ. 299. 10.

**अगोचरत्वाभिधान** (agocaratvābhidhāna) *n.* statement about the state of not being an object of or being beyond the range of speech, mind etc. निर्विशेषं तु ब्रह्म वाक्यशेषे श्रूयते, वाङ्मनसयोरगोचरत्वाभिधानात्–यतो वाचो निवर्तन्ते अप्राप्य मनसा सह BrahmSūBh.(S'aṅ.) 60. 10 (*on* i. 1. 19)

**अगोचरभूत** (agocara-bhūta) *adj.* which is beyond the range of or is not an object of (words) उपाख्या शब्दः, तस्यागोचरभूतमभिधानायोग्यमेव संपद्यते VakroJī. 24. 4.

**अगोचरभृत** (a-gocarabhṛta) *adj.* not reared on a pasture मृतं कृशातिमेध्यं च वृद्धं व्यालं विषैर्हतम्। अगोचरभृतम्···मांसमुत्सृजेत् CaraS. i. 27. 308; अतिमेध्यं त्यजेन्मांसं हतं व्याधिविषोदकैः। स्वयं मृतं धूमपूर्णमगोचरमृतं(? °भृतं) कृशम् AṣṭāSaṁ. i. 35. 14 (1. 7)

**अगोचरयत्** (a-gocarayat) *adj.* not comprehending an object न च वर्तमानरजतावभासि ज्ञानं भविष्यत्तामस्यागोचरयत्न ··· शुक्तिं गोचरयता प्रत्ययेन बाध्यते ··· इति युक्तम् Bhām. 546. 9 (*on* iii. 2. 3); VedāntKa. 363. 5 (*on* iii. 2. 3); तत्स्वात्मानमप्यगोचरयत्कथं स्वप्रामाण्यं गोचरयेत् PramāMā. 12. 8.

**अगोचरविचारित्व** (agocaravicāri-tva) *n.* movement in inaccessible places रोहितः प्रवरस्तेषां (मत्स्यानां) परं चिलिचिमोऽवरः। अगोचरविचारित्वात् (v. l. नित्यं शैवालभक्ष्यत्वात्) सर्वदोषकरो हि सः AṣṭāSam. i. 35. 10 (1. 7)

**अगोचरव्यज** (a-gocaravyaja) *adj.* in which the passage of a rope-bound pitcher becomes invisible (i. e. deep) ऊपाकरे प्लवानर्हे संचरेऽगोचरव्यजे।···खलस्य मृत्योर्निगमे कूपे···त्वं वेक्षस्यहमीक्षिष्ये DvyāśraKā. 13. 26 (comm. व्यज ऊपाकर्षणाय रज्जुबद्धघट्यादीनां निक्षेपमार्गः)

**अगोचरीकृत** (a-gocarīkṛta) *adj.* **i** who has not been subjected or affected न जातु कोऽपि जन्तुरनेनानभिजातेनागोचरीकृतो जीवति AmṛUda. 3. 1(3); **ii** which is not made an object प्रत्यक्षादयो मात्रयाप्यगोचरीकृतप्रवृत्तिनिवृत्तयो न प्रवृत्तिनिवृत्त्यङ्गभावं जहति BrahmSi. 24. 24.

**अगोज्ञ** (a-gojña) *adj.* who is ignorant of a bull अगोज्ञाय कश्चित्··· उपदिशत्ययं गौरिति MahāBh. i. 40. 13 (*on* i. 1. 1)=i. 259. 18 (*on* i. 3. 2)

**अगोतस्** (ago-tas) *adv.* from the non-bull अगोतो विनिवृत्तिश्च गौर्विलक्षण इष्यते। भाव एव ततो नायं गौरगोमे प्रसज्यते TattvSaṁ. 1085.

**अगोता** (agó-tā) *f.* [Debru. p. 617] want of cows, kinelessness मागोतायै सहसस्पुत्र मा निदेऽप द्वेषांस्या कृधि ṚV. iii. 16. 5; क्षुधामारं तृष्णामारमगोतामनपत्यताम्। अपामार्ग त्वया वयं सर्वं तदप मृज्महे AV. iv. 17. 6; [want of rays, want of praise, Apte]

**अगोत्तम** (agottama) *m.* the best of mountains, a great mountain निपतितमादाय···आर्तवमगोत्तमात्···पाञ्चाली भीममगदत् तरसा YudhiVi. 5. 10.

**अगोत्र** (á-gotra) *adj.* [*f.* -ā] **i** not having a family name or lineage (i. e. having no origin or source, causeless) एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति ··· अमुखममात्रमगोत्रम् S'atBr. XIV. vi. 8. 8; यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रम्···तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः MuṇḍaU. i. 1. 6; अगोत्रमनन्वयमित्यर्थः MuṇḍaUBh. 309. 11 (*on* i. 1. 6); अगोत्रं कारणरहितम् Bhām. 183. 3 (*on* i. 2. 21); अगोत्रमवर्णं प्राक्तननामरूपरहितम् S'rutaPra. i(A.) 188. 4 (*on* i. 1. 1); अगोत्रं वंशहीनम् PrakaVi. 197. 18; अगोत्रस्य त्ववर्णस्य कुतस्तत्रोपवीतकम् NirguMāPū. 3; अगोत्रमस्पर्शमरूपगन्धम् ··· गोपेन्द्र ये त्वामुपासन्ति धीरास्ते ··· भवधर्ममुक्ताः VarāP. 36. 18; LiṅgP. i. 86. 53; शङ्करी शान्तमानसा। अगोत्रा गोमती गोप्त्री KūrmP. 123. 2 (1. 12); S'aṅkaDigVi. 14. 36; **ii** not having a noble lineage अगोत्रोऽयं (शिवः) गिरिश्रेष्ठ जामाता ते न संशयः SkandP. i(1). 25. 79; **iii** not belonging or affiliated to any Buddhist family or communion cf. **अगोत्रस्थ,** अगोत्रोऽसन्मित्रोऽकृतमतिरपूर्वाचितशुभस्त्वसत्यस्मिन् धर्मे MaYānaSū. 6. 5 (1. 14); श्रावकयानाभिसमयगोत्रम् ··· अनियतैकतरगोत्रम् अगोत्रं च पञ्चमम् LaṅkāSū. 2. 127 (27. 20); **iv** (Gr.) (a word) having no *gotra*-suffix appended to it, not ending in a *gotra*-suffix (तस्य समूहः) तस्येति षष्ठीसमर्थात् समूह इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। किमिहोदाहरणम्। चित्तवदाद्युदात्तमगोत्रं यस्य च नान्यत् प्रतिपदं ग्रहणम् KāśiVṛ. *on* P. iv. 2. 37; *n.* (Gr.) (a word which is) not a *gotra*-name उदीचां वृद्धादगोत्रात् P. iv. 1. 157; अगोत्रादादैजाद्यच: CāndraVyā. ii. 4. 90.

**अगोत्रकुलसंपन्न** (a-gotrakulasampanna) *adj.* [*f.* -ā] not born in the (same) *gotra* and *kula* कन्यामुद्वाहयेत् ततः।···मातृतः पञ्चमादूर्ध्वं पितृतः सप्तमात् तथा। अगोत्रकुलसंपन्नां रोगहीनां सुरूपिणीम् SaurP. 17. 42.

**अगोत्रचरण** (a-gotracaraṇa) *adj.* not belonging to any *gotra* and Vedic school अनग्निरनिकेतश्च अगोत्रचरणो मुनिः MahāBhā. i. 86. 12; MatsyaP. 40. 12; अपरेयं परा विद्या यया ब्रह्माभिगम्यते। यत्तदद्रश्यमग्राह्यमगोत्रचरणं ध्रुवम् AgniP. 1. 18.

**अगोत्रज** (a-gotraja) *adj.* not born in the same family or clan अगोत्रजोऽप्येष यदस्य कोशं रत्नत्रयाढ्यं स्ववशीचकार Gurvā. 4.

**अगोत्रत्व** (agotra-tva) *n.* **i** the state of not having a family name or lineage अगोत्रत्वादिविशेषणं जीव इव न ब्रह्मणि स्वारस्येनान्वेति S'ivārkaMaDī. i. 380. 15 (*on* i. 2. 22); i. 380. 17 (*on* i. 2. 22); i. 380. 21 (*on* i. 2. 22); **ii** the state of not being a *gotra*-name दारदिकेत्यत्र जातेश्च (P. vi. 3. 41) इति (पुंवद्भावस्य) निषेधो न। दरदोऽगोत्रत्वेनाजातित्वात् LaS'abdeS'e. ii. 96. 7.

**अगोत्रधर्म** (a-gotradharma) *m.* an act prohibited for a (noble) family or clan अनृतात् पारदार्याच्च तथाऽभक्ष्यस्य भक्षणात्। अगोत्रधर्माचरणात् क्षिप्रं नश्यति वै कुलम् PadmP. i. 55. 18.

**अगोत्रसाक्षिन्** (agotra-sākṣin) *adj.* a witness to the lack of a (noble) family (i. e. wanton behaviour) यावल्लोलाक्षि नायं प्रतिफलति(? प्रतिफलित)वलच्चंद्रिकाकर्बुरान्तःकालिन्दीवीचिमैत्रीमवतरति तवागोत्रसाक्षी कटाक्षः SaduktiKa. 147. 22.

**अगोत्रस्थ** (a-gotrastha) *adj.* (Buddh.) not affiliated or belonging to a Buddhist family or communion cf. **अगोत्र.** अगोत्रस्थविभागे श्लोकः। ऐकान्तिको दुश्चरितेऽस्ति कश्चित् ··· निहीनशुक्लोऽस्त्यपि हेतुहीनः MaYānaSū. 12. 19 (3. 11); अगोत्रस्थः पुद्गलो गोत्रेऽसति चित्तोत्पादेऽपि यत्नसमाश्रये सत्यभव्यश्चानुत्तरायाः सम्यक्संबोधेः परिपूरये BodhiBhū. 1. 17.

**अगोत्रादि** (a-gotrādi) *adj.* other than the class of words beginning with *gotra* कुत्सने च सुप्यगोत्रादौ P. viii. 1. 69.

**अगोत्रार्थम्** (agotrārtham) *adv.* for the purpose of (the inclusion of) an *agotra* (a non-descendant) गोत्रावयवादगोत्रार्थमिति चेत्तदनिष्टम् Vār. 1 *on* P. iv. 1. 79.

**अगोत्व** (a-gotva) *n.* **i** absence of cowness **ii** (ago-tva) character of a non-cow केन गोरगोत्वं प्रसक्तं यत् प्रतिषिध्यत इति NyāyVār. 333. 6 (*on* ii. 2. 67); केन ह्यगोत्वमासक्तं गौ(? गो)र्येनैतदपोह्यते TattvSaṁ. 989; न त्वश्वं गृहीत्वाश्वान्तरे गौरिति प्रतिसंधानं दृष्टं, तत् कस्य हेतोः, तयोरगोत्वात् TātpaṬ. (Vā.) 378. 4 (*on* i. 2. 30); शुक्लस्य पटस्यागोत्वम् ··· किं न पश्यसि NyāyKu. 128. 7.

**अगोत्वारोप** (agotvāropa) *m.* attribution of the character of the non-cow अगोत्वारोपपूर्वकगोत्वबुद्ध्या ग्वौ गोऽभवदित्यादौ च्व्यन्तप्रतिषेधस्यावश्यकत्वेन तत्प्रत्याख्यानपरभाष्यविरोधापत्तेः LaS'abdeS'e. ii. 401. 6.

**अगोद्धारक** (agoddhāraka) *adj.* lifting the mountain (viz. the Govardhana) यः (कृष्णः)···अगोद्धारकोऽपि नागोद्धारकः RasGaṅ. 572. 19.

**अगोधन** (a-godhana) *adj.* without the (possession of) wealth in cattle अगोधनं जयं प्राप्य भविष्यसि वृथाश्रमः KīcaVa. 4. 37.

**अगोनिवृत्त** (ago-nivṛtta) *adj.* differentiated from the non-cow कस्मादगोनिवृत्तं तदथ जातं स्वलक्षणम् NyāyMañ. i. 286. 18.

**अगोनिवृत्ति** (ago-nivṛtti) *f.* negation or exclusion of or distinction from the non-cow अगोनिवृत्तिः सामान्यं वाच्यम् TattvSaṁ. 915=S'lokaVār. 5(13). 1 (566. 1); TattvSaṁ. 1075; कुर्यादगोनिवृत्तिं चेन्नापोहेतात्मवद्धि तान् S'lokaVār. 5(13). 6 (567. 6); यदेव प्रतिभाति तदेव वस्तुनो रूपम्। तच्चेदगोनिवृत्तिशब्देनाभिमतं न च काचित् क्षतिः S'arka. 27. 6; अगोनिवृत्त्या च गवात्मनोऽश्वादयो वस्तुरूपाः सन्त्येव NyāyRa. 305. 16 (*on* 5(3). 136); न चागोनिवृत्तिरूपस्याभावस्याश्रयभूतं भावान्तरं भवन्मते संभवति NyāyRa. 566. 22 (*on* 5(13). 2); न चायमगोनिवृत्तिमात्रविषयः प्रत्ययः MānaMe. 232. 7.

**अगोनिवृत्त्यात्मक** (agonivṛttyātma-ka) *adj.* of the form or nature of the negation or exclusion of the non-cow यदि गौरप्यगोनिवृत्त्यात्मक एव मन्यते ततोऽप्रतिष्ठमितरेतराश्रयमपि प्राप्नोति S'arka. 48. 23; अगोनिवृत्त्यात्मकं यदपोहान्तरं तस्मिन् ग्रहीतव्ये वस्तुरूपस्यैवाश्वादिसामान्यस्यापोहः NyāyRa. 591. 13 (*on* 5(13). 96)

**अगोनिवृत्त्यात्मन्** (agonivṛtty-ātman) *adj.* of the form or nature of the negation or exclusion of the non-cow स (गौः) चेदगोनिवृत्त्यात्मा

भवेदन्योऽन्यसंश्रयः। सिद्धश्चेद्गौरपोहार्थं वृथापोहप्रकल्पनम् TattvSaṁ. 944 =S'lokaVār. 5(13). 84 (587. 9); येऽप्यमी शाबलेयादयोऽवान्तरविशेषास्तेऽपि नागोनिवृत्त्यात्मानो गोविकल्पस्यावलम्बनम् NyāyRa. 567. 9 (*on* 5(13. ). 5)

**अगोनिषेधसिद्धि** (agoniṣedha-siddhi) *f.* establishment of the negation of non-cow अगोनिषेधेन गोसिद्धिः गोसिद्ध्या चागोनिषेधसिद्धिः NyāyMañ. i. 278. 31.

**अगोप** (a-gopa) *adj.* [*f.* -ā] **i** without the cowherd ततो गावो निवृत्तास्ता अगोपाः स्वं निवेशनम् MahāBhā. i. 71. 27; vi. 15. 49; vii. 1. 23; यथा ह्यनुदका नद्यो यथा वाप्यतृणं वनम्। अगोपाला (v. l. अगोपाश्च) यथा गावस्तथा राष्ट्रमराजकम् Rāmā. ii. 61. 20; MatsyaP. 25. 32; **ii** having no herdsman or grazier धार्तराष्ट्रास्त्रिधाभूता विध्यन्ते पाण्डुसृञ्जयैः। अगोपाः पशवोऽरण्ये बहुभिः श्वापदैरिव MahāBhā. vii. 70. 23; vii. 68. 13; यथा ह्यगोपाः पशवो यथा सैन्यमनायकम्। एवं प्रजाः प्रजापाल भवन्ति ह्यनधिष्ठिताः Rāmā. ii. 282*(13); *m.* **i** non-cowherd, other than a cowherd or other than the one milking the cows गवां दोह इवागोपै राज्ञां भृत्यानुशासनम्। नश्यतां दुष्करमभूत्तस्योग्रायां युधः कृतौ DvyāśraKā. 5. 68 (comm. अगोपैरगोधुग्भिः); चित्रं गवां दोहोऽगोपेन PrakriKau. i. 449. 1; SiddhāKau. 155A. 3; BhāṭṭCin. i. 95. 4 (*on* i. 1. 4); **ii** other than the protector of the earth, non-king, DvyāśraKā. 5. 68 (comm. अगोपैरभूपैः)

**अगोपदा** (agopadā) *f.* name of a river महेश्वरी चार्जुनी च बाहुदा चाप्यगोपदा ParyāS'aRa. 3. 74.

**अगोपन** (a-gopana) *n.* **i** not protecting अगोपनाद् यत्र छलेन रक्षिसमक्षकृतोऽप्यपहारो गोप्यते तदेकं स्तेयं ग्रहणस्यापह्नवात् DaṇḍaVi. 80. 8; **ii** non-concealing (of the sacred text) अगोपनं स्वभक्तानामभक्तानां च गोपनम् TantrRā. 36. 80 (comm. आगमादीनामिति यावत्)

**अगोपनीय** (a-gopanīya) *adj.* not to be kept secret, not to be concealed (while teaching) (राजा) सचिवैः सह सामान्यं मन्त्रेष्वगोपनीयं संधिविग्रहादि … चिन्तयेत् ManvaMu. 257. 10 (*on* 7. 56); मनुः … शुश्रूषुशिष्येभ्यः अगोपनीयम्…ममेदं सर्वमुक्तवान् ManvaMu. 524. 1 (*on* 12. 117)

**अगोपनीयत्व** (agopanīya-tva) *n.* the state of being what should not be concealed or kept secret तव सच्छिष्यत्वेन त्वय्यगोपनीयत्वात् SetuBa. 179. 18.

**अगोपम** (agopama) *adj.* similar to a mound or hill मृत्कूटैश्चाप्यगोपमैः। आपातमाचरेच्छौचम् SkandP. iii(2). 5. 46.

**अगोपयत्** (a-gopayat) *adj.* not concealing i. e. showing openly ईर्ष्यामगोपयन्नार्याः…। स्वयमन्याभिगम्यत्वं करोति हि जडो जनः RājTa(Ka.) 8. 232.

**अगोपयस्** (ago-payas) *n.* milk of the non-cow (i. e. any animal other than the cow) तदगोपयस्सिद्धपायसविषयम् SmṛtiCan. v. 256. 6.

**अगोपवनादि** (a-gopavanādi) *adj.* any word not included in the list beginning with the word *gopavana* यञञोऽगोपवनादिश्यापर्णान्तात् S'ākaṭāVyā. ii. 4. 110.

**अगोपा** (á-gopā) *adj.* without a cowherd पशुनैति स्वयुरगोपाः ṚV. ii. 4. 7; धेनुं चरन्तीं प्रयुतामगोपाम् ṚV. iii. 57. 1; ईयुर्गावो न…अगोपाः ṚV. vii. 18. 10.

**अगोपायत्** (a-gopāyat) *adj.* not protecting शरवेध्यकमिवात्मानमगोपायन् युद्धाभिमुखो भवेत् BālaKrī. ii. 105. 7 (*on* 3. 243)

**अगोपाल** (a-gopāla) *adj.* [*f.* -ā] having no cowherd (to watch) यथा गावो ह्यगोपालास्तथा राष्ट्रमनायकम् MahāBhā. xiii. App. 1. 15 (1278); अगोपाला यथा गावस्तथा राष्ट्रमराजकम् Rāmā. ii. 61. 20 = SūktiRa. 41. 5.

**अगोपाल** (a-gopāla) *m.* non-cowherd एवं ह्यत्राश्चर्यं व्यज्येत यदि दुर्दोहानां गवां दोहे कर्मत्वमकुशलस्य चागोपालस्य कर्तृत्वम् VedāntKa. 43. 7 (*on* i. 1. 1)

**अगोपालक** (a-gopālaka) *m.* non-cowherd आश्चर्यो गवां दोहोऽगोपालकेन JaineVyā. 75. 6 (*on* i. 4. 69); KāśiVṛ. *on* ii. 2. 14; Nyās. i. 3. 23 (*on* i. 1. 0); Pradī. ii. 526B. 18 (*on* ii. 3. 65); PariVṛ.(Sī.) 4. 22.

**अगोपालकादि** (a-gopālakādi) *adj.* (words) other than *gopālaka* etc. पुंयोगात् खोरगोपालकादेः JaineVya. iii. 1. 38.

**अगोपिण्डात्मक** (agopiṇḍātmaka) *adj.* of the nature of the individual non-cow यदि भावः स किं गोपिण्डस्वभावोऽथागोपिण्डात्मकः NyāyKa. 320. 11.

**अगोपित** (a-gopita) *adj.* **i** uncovered, kept open, exposed to pollution अपात्रस्थमगोपितम् (दुष्टं हविः) PāraS. 18. 285; तलमध्यस्थितैर्लग्नैरङ्गुल्यग्रैरगोपितैः। निपीड्य मध्यमां तिष्ठत्यङ्गुष्ठो मुष्टिरुच्यते (comm. अगोपितैः प्रकटैः) SaṁgīRa. iv. 39. 1; **ii** not concealed, not hidden, not kept in secret अगोपिते रत्ननिधौ…त्वय्योत्मायं समर्पितः Vītarā. 13. 7; TriṣaS'aPuC. iii. 1. 348.

**अगोपीतस्** (agopī-tas) *adv.* from a woman (i. e. Devakī) other than the cowherdess योऽजनि नागोपीतः (कृष्णः) (comm. अगोपीतः देवकीतः) Nalo. 1. 2.

**अगोपीसंविभागार्ह** (a-gopīsaṁvibhāgārha) *adj.* unworthy of being shared or enjoyed by cowherdesses स वेणुः शंखरूपेण प्राचा परिपचेलिमः। अगोपीसंविभागार्हं पपौ तस्याधरामृतम् Yādavā. 10. 105.

**अगोपुच्छ** (a-gopuccha) *n.* other than the word or expression *gopuccha* आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् P. v. 1. 19.

**अगोऽपोढ** (ago'poḍha) *adj.* different from non-cow न ह्यगोऽपोढोऽयमिति विकल्पः ĀtmaTaVi. 282. 1.

**अगोऽपोह** (ago'poha) *m.* the negation of the non-cow अथासत्यपि सारूप्ये स्यादपोहस्य कल्पना। गवाश्वयोरयं कस्मादगोऽपोहो न कल्प्यते TattvSaṁ. 937; तस्मात्प्रात्यात्मिकै रूपैरगोऽपोहो न युज्यते S'lokaVār. 5(13). 8 (568. 3); 5(13). 51 (579. 7); 5(13). 57 (580. 8) 5(13). 76 (585. 8); अतश्च गोऽश्वयोरपोहं कुर्वतोरगोऽपोहेऽश्वोऽभ्यधिको दृश्यते S'arka. 41. 6; 42. 7; एवमप्यगोऽपोहे को दोषः NyāyRa. 567. 19 (*on* 5(13). 6)

**अगोऽपोहगिर्** (ago'poha-gir) *f.* the expression of *ago'poha* गोत्वं वस्त्वेव तैरुक्तमगोऽपोहगिरा स्फुटम् S'lokaVār. 5(13). 1 (566. 2)

**अगोऽपोहन** (ago'pohana) *n.* negation of non-cow अगोऽपोहनादितराभावेनानुविद्धा सत्तैव शाबलेयाद्यनुगता निवृत्तिः NyāyRa. 569. 20 (*on* 5(13). 13)

**अगोऽपोहवत्** (ago'poha-vat) *adj.* having (i. e. referred to by) the exclusion of non-cow स चाश्वापोहः सिंहादेरप्यस्तीति सोऽपीदानीमगोऽपोहवानेव जातः S'arka. 42. 8.

**अगोऽपोहविशिष्ट** (ago'poha-viśiṣṭa) *adj.* specified by the exclusion of the non-cow अगोऽपोहविशिष्टः शाबलेयो बाहुलेये नास्ति S'arka. 63. 19.

**अगोप्तृ** (a-goptṛ) *adj.* non-protector अगोप्तारः … निरयगामिनः MahāBhā. xiii. 24. 78; गोप्तारश्चाप्यगोप्तारः प्रभविष्यन्ति शासिनः HariVaṁ. 117. 31; VāyuP. i. 58. 56; BrahmāṇḍP. i. 31. 57; LiṅgaP. i. 40. 31; BrahmP. 230. 73; चण्डदण्डमगोप्तारं क्षितिपं नेच्छति क्षितिः PāṇḍaC. 15. 43.

**अगोप्य** (a-gopya) *adj.* **A i** which is not to be concealed, not secret अगोप्यमृणशुद्धिश्च दायादो धनविक्रयः। कन्यादानम् DakṣaSm. 3. 16; अप्रच्छन्ने… अगोप्ये चाभिनयः AbhinBhā. ii. 30. 19 (*on* 9. 22); **A ii** which cannot be hidden, beyond concealment लज्जावती सा पुलकैरगोप्यैरनक्षरं कौतुकमाचचक्षे Nalābhyu. 1. 34; PadyaVe. 348; **B** (a security) which the creditor is not bound to preserve or keep intact (आधिः) स द्विविधः गोप्यश्चागोप्यश्च BālaKrī. i- 222. 20 (*on* 2. 60)

**अगोप्रतिषेध** (ago-pratiṣedha) *m.* negation of non-cow पुरा गौरिति विज्ञानं गोशब्दश्रवणाद् भवेत्। येनागोप्रतिषेधाय प्रवृत्तो गौरिति ध्वनिः Kāvyālaṅ-(Bh.) 6. 19; अथ गोसामान्यमगोप्रतिषेधेन सिद्ध्यति NyāyMañ. i. 278. 30.

**अगोप्रद** (a-goprada) *adj.* who does not offer cow (or cows) नागोप्रदास्तत्र पयः पिबन्ति (स्वर्गलोके) MahāBhā. xiv. App. I. 4. 1466.

**अगोप्राप्ति** (ago-prāpti) *f.* establishment or obtainment of non-cow तद्व्यतिरेकेणागोप्राप्तेः तत्प्रतिषेधेन च गौरेक एव पिण्डः प्राप्नोति S'arka. 48. 13.

**अगोभरणदीक्षित** (a-gobharaṇadīkṣita) *adj.* who has not taken a vow to tend cows अगोभरणदीक्षितैः …अलमशाम्बरीबालकैः YātrāPra. 7. 117.

**अगोभिन्न** (ago-bhinna) *adj.* different from non-cow अगोभिन्नं च यद्वस्तु तदक्षैर्व्यवसीयते TattvSaṁ. 1061.

**अगोमत्** (a-goma(n)t) *adj.* [*f.* -ī] not possessed of cattle अगोमती गोमती संपन्ना गोमतीभूता MahāBh. i. 162. 13 (*on* i. 1. 62); PadMañ. *on* KāśiVṛ. *on* P. i. 1. 61; Pradī. iv. 348A. 5 (*on* v. 2. 94)

**अगोमिन्** (a-gomin) *adj.* non-possessor of cow(s) or cattle अगोमी गोप्रदातृणां कथं लोकान्निगच्छति MahāBhā. xiii. 70. 36.

**अगोरस** (a-gorasa) *m.* not (cow's) milk यः। अरातिलोकं मथितं सहस्रधा चकार दण्डाहतमप्यगोरसम् HarVi. 12. 8; *adj.* **1** void of interest or hope in (the acquisition of) territory, HarVi. 12. 8; **2** wanting in (cow's) milk अगोरसम्। गृहम्…नरकस्यापरो विधिः BhaviP. 856A. 29 (4. 171. 8) = SūktiRa. 176. 3.

**अगोरुध** (á-gorudha) *adj.* [DEBRU. p. 70] who does not hold back the cows अगोरुधाय गविषे…वर्चः। …वोचत ṚV. viii. 24. 20.

**अगोरूप** (ago-rūpa) *adj.* of the nature or form of non-cow नासावात्मीयेन शाबलेयत्वादिना विशेषरूपेणागोरूपानश्वानपोहते S'arka. 28. 6; 42. 9; आरोपितमगोरूपमिव व्यवच्छिन्दन्ति विकल्पाः NyāyMañ. i. 277. 7; NyāyRa. 581. 12 (*on* 5(13). 57); 581. 13 (*on* 5(13). 57); 587. 12 (*on* 5(13). 80)

**अगोलक** ( a-golaka ) *adj.* different from the eye-ball अगोलकं चक्षुः NyāyMañ. ii. 51. 25.

**अगोविन्द** ( a-govinda ) *m.* other than Govinda (Kṛṣṇa) किंचासौ पाञ्चजन्यस्य…ध्वनिः। तदयुक्तं यतो नायमगोविन्देन वाद्यते PāṇḍaC. 16. 28.

**अगोविषय** ( ago-viṣaya ) *adj.* related to non-cow अगौर्न भवतीति अयमपोहः किं गोविषयोऽथागोविषय इति NyāyVār. 333. 3 (*on* ii. 2. 67); कथमन्यविषयादपोहादगोविषयात् गवि प्रतिपत्तिरिति TātpaṬ.(Vā.) 491. 24 (*on* ii. 2. 65)

**अगोव्यवच्छेद** ( ago-vyavaccheda ) *m.* preclusion of non-cow अगोव्यवच्छेदेन गवि प्रत्याय्यमाने प्रथमं तावद्गाव एव प्रत्येतव्याः S'arka. 47. 22; 31 .2.

**अगोव्यवहार** ( ago-vyavahāra ) *m.* cognition of non-cow गोव्यवहारे सिद्धे तद्व्यतिरिक्तेऽगोव्यवहारः। अगोव्यवहारे च सिद्धे SarvaDaKau. 41. 2.

**अगोव्यावृत्त** ( ago-vyāvṛtta ) *adj.* differentiated from a non-cow बाह्यं हि विधिरूपमप्यगोव्यावृत्तम् TātpaṬ.(Vā.) 486. 24 ( *on* ii. 2. 65 ); ĀtmaTaVi. 381. 1; अगोव्यावृत्तो वा गोत्वात् NyāyPari. 147. 10; गौरयमिति प्रतीतेरगोव्यावृत्तोऽयमिति विषयः Upask. 52. 2 (*on* i. 2. 3)

**अगोव्यावृत्तता** ( agovyāvṛtta-tā ) *f.* the state of being differentiated from a non-cow अगोव्यावृत्ततायां वा नैष प्रश्नो निवर्तते NyāyMañ. i. 286. 17.

**अगोव्यावृत्तत्व** ( agovyāvṛtta-tva ) *n.* the state of being differentiated from a non-cow अगोव्यावृत्तत्वं हि सकलगोव्यक्तिष्वनुगतम् SarvaDaKau. 40. 20.

**अगोव्यावृत्ति** ( ago-vyāvṛtti ) *f.* exclusion of the non-cow न शाबलेयविज्ञानमगोव्यावृत्तिबन्धनम् S'lokaVār. 5(17). 5 (567. 4); यदि तु सविकल्पकविकल्पविषयमेवान्तरसामान्यं शाबलेयत्वं बाहुलेयत्वं वोच्यते ततोऽगोव्यावृत्त्यात्मके तस्मिन् गृहीते नापरस्य तद्रूपत्वमिति न तत्र गोप्रत्ययः स्यात् S'arka. 27. 20; अगोव्यावृत्तेराश्रयं ब्र( ? ब्रू )युः NyāyMañ. i. 277. 26; प्रतिभासे वा कथं नागोव्यावृत्तिभासः TātpaṬ. (Vā.) 487. 5 (*on* ii. 2. 65); गवाकारेष्वप्यगोव्यावृत्तिरेकं निमित्तमस्ति NyāyKa. 320. 1; NyāyRa. 566. 12 (*on* 5(17). 5); अगोव्यावृत्तिं हि प्रतीयतावश्यं प्रथममेव गौः प्रत्येतव्यः S'āstrDī. 104. 4 (*on* i. 1. 5); गवादिशब्दानामगोव्यावृत्त्यादिरूपः … शब्दार्थः Kāvyānu.(He.) 28. 22; गोत्वं ह्यगोव्यावृत्तिरूपम् PrakaVi. 539. 16; गवादिपदप्रवृत्तिनिमित्तमप्यगोव्यावृत्त्यादिरेव Upask. 52. 5 (*on* i. 2. 3)

**अगोशब्द** ( ago-śabda ) *m.* the word *ago* ( non-cow ) विधिरूपगोशब्दसिद्धौ तद्व्यतिरेकोऽगोशब्दसिद्धिः तदभावे त्वगोशब्दासिद्धौ तदपोहात्मकगोशब्दासिद्धिः तत्सिद्धौ च गोशब्दसिद्धिः, इतीतरेतराश्रयः स्यात् NyāyRa. 594. 17; 18 (*on* 5(17). 110); यथा चागोव्यावृत्त्या गौर्गृह्यमाणोऽपि नावस्तुनालम्बनभूतेन शक्यते ग्रहीतुमित्युक्तम्। …तथा तत्रागोशब्दापोहेऽपि वाच्यम् S'arka. 57. 20.

**अगोशब्दवाच्यत्व** ( agośabdavācya-tva ) *n.* the state of not being denoted by the word *go* न चैवं गवादिशब्दानामपि सास्नादिमान् गौरित्यादिव्युत्पादनादुपाधिगोचरत्वमिति वाच्यं सास्नादेरगोशब्दवाच्यत्वात् NyāyKu. 155. 3.

**अगोशब्दाभिधेयत्व** ( agośabdābhidheya-tva ) *n.* the state of not being denoted by the word *go* अगोशब्दाभिधेयत्वं गम्यतां च कथं पुनः S'lokaVār. 5(17). 81 (587. 3) = TattvSaṁ. 941; तादृक्प्रत्यवमर्शश्च यत्र नैवास्ति वस्तुनि। अगोशब्दाभिधेयत्वं विस्पष्टं तत्र गम्यते TattvSaṁ. 1063.

**अगोशब्दार्थत्व** ( agośabdārtha-tva ) *n.* the state of not being the meaning of the word *go* गोसादृश्यस्यागोशब्दार्थत्वात् NyāyKu. 155. 9.

**अगोष्ठश्व** ( a-goṣṭhaśva ) *adj.* not (just) a dog in the manger (i. e. brave, not only in words, but also in deeds) ग्रामतक्षैः कौटतक्षैः स्यूतानश्वस्तोऽचलत्। सोऽगोष्ठश्वैरतिश्वैर्युङ् व्याघ्रश्वैरिव लुब्धकः DvyāśraKā. 19. 127.

**अगोष्पद** ( a-goṣpada ) *adj.* **A** where there are no (marks of) the hooves of the kine अगोष्पदम् KauśiSū. 39. 23; अगोष्पदसमे देशे तौ जयाय विचेरतुः Rāvaṇā. 18. 56; **B** where cows cannot enter, impenetrable यत्र तु सेवितप्रसङ्गोऽस्ति तत्रैव स्यादगोष्पदमिति। यत्र त्वत्यन्तासम्भव एव तत्र न स्यादगोष्पदान्यरण्यानीति। असेवितग्रहणात् तत्रापि भवति। यानि हि महान्त्यरण्यानि येषु गवामत्यन्तासम्भवस्तान्येवमुच्यन्ते KāśiVṛ. *on* vi. 1. 145; Nyās. i. 310. 26 (*on* i. 4. 63); असेविते नञ्पूर्वस्य निपात्यते। न विद्यते गवां पदमस्यामगोष्पदा अरण्यानी JaineVyā. 300. 11 (*on* iv. 3. 116); S'ākaṭāVyā. ii. 2. 27; अगोष्पदमिदं देव देवैरध्युषितं वनम् MahāP. 27. 33; 28. 23; तेन यत्र गवामत्यन्तमसंभवस्तत्रैव अगोष्पदशब्दः प्रयोक्तव्यः न तु सेवितप्रसङ्ग इति केचिदाहुः। अन्ये तु अविशेषेण अगोष्पदशब्दप्रयोगमिच्छन्ति Pradī. v. 141B. 9 ( *on* vi. 1. 145 ); **C** not done, improper अगोष्पदमनाचरिते (comm. अगोष्पदमिति सकारो व्यवधीयते अनाचरिते। अगोष्पदमयं ब्राह्मणः पानागारं सेवते। अगोपदमन्यत् ) ṚTPrāti. 204.

**अगोसिद्धि** ( ago-siddhi ) *f.* establishment of non-cow यदि त्वगोसिद्ध्यर्थं विधिरूपो गौरङ्गीक्रियते NyāyRa. 587. 21 (*on* 5(13). 84)

**अगोहरम्** ( a-goharam ) *adv.* without seizing the cattle जय…गामगोहरम् S'ārṅgaPa. 549 ( comm. अगोग्रहम् )

**अगोह्य** ( á-gohya ) *adj.* [DEBRU. p. 792] not to be concealed or covered, bright तत्सविता वोऽमृतत्वमासुवदगोह्यं यच्छ्रवयन्त ऐतन ṚV. i. 110. 3; अगोह्यस्य यदसस्तना गृहे तदद्येदमृभवो नानु गच्छथ ṚV. i. 161. 11 = Nir. 11. 16 (194. 17); सुषुप्वांस ऋभवस्तदपृच्छतागोह्य क इदं नो अबूबुधत् ṚV. i. 161. 13; द्वादश द्यून्यदगोह्यस्यातिथ्ये रणन्नृभवः ṚV. iv. 33. 7; एन्द्र नो गधि प्रियः … अगोह्यः ṚV. viii. 98. 4 = AV. xx. 64. 1; SV. I. v (i). 1. 3; नरा वा शंसं पूषणमगोह्यम्…अभ्यर्चसे गिरा RV. x. 64. 3.

**अगौःपूर्व** ( a-gauḥpūrva ) *adj.* not preceded by the word *gauḥ* र स्यादारभतेऽन्वपि। अगौःपूर्वे BhārS'i. 90.

**अगौकस्** ( agaukas ) *m.* **A** tree-dweller, bird अगौकसः। विहंगासिंहशरभाः AnekāSaṁ. 3. 739; पित्सन्दीडाण्डजोऽगौकाः AbhidhāCin. 1317; अगौकाः … शरभे सिंहपक्षिणोः ViśvaPra. 178. 57 = DharK. 2733 = ViśvaLoK. 392. 46; अगौकाः पुंसि शरभे पक्षिपञ्चास्ययोः MediK. 188. 48; **B** mountain-dweller, lion or a fabulous eight-footed animal, *śarabha*, AnekāSaṁ. 3. 739; ViśvaPra. 178. 57 = DharK. 2733 = ViśvaLoK. 392. 46; MediK. 188. 49; अगौकाः … केसरी KalpaK. 318. 5.

**अगौण** ( a-gauṇa ) *adj.* **1** non-figurative, not subordinate यजमाने चात्माभिधायिपदं कल्प्यमानमगौणं भवति S'ābaBh. 1119. 10 (*on* iii. 8. 15); अगौणे चैवमेकत्वे नीलादीनां व्यवस्थिते। तत्संवेदनवेलायां कथं नास्त्यस्य वेदनम् TattvSaṁ. 133; 317; ब्रह्म साक्षात् अव्यवहितम् … अगौणम् BṛĀraUBh. 401. 6 (*on* iii. 4. 1); अगौणलक्षणत्वाभावादनुमानमप्रमाणम् NyāyMañ. i. 108. 18; अगौणमेकं पदमन्यदत्र SaṁkṣeS'ā. 1. 212 (i. 166. 1); अगौणाव्यवधानादिविशेषणविशेष्यता BṛĀraUBhVā. iii. 5. 21; BrahmSūBh.(Rā.) 413. 1 (*on* ii. 1. 9); सच्छब्दवाच्यस्य स्वरूपत्वेन व्यपदेशादगौणमीक्षणमित्यप्ययुक्तम् S'rutaPra. iB. 190. 6 (*on* i. 1. 12); **2** not less important, real देवेन तस्य चागौणं गोणत्रितयमर्पितम् SamarāSaṁ. 6. 433.

**अगौणत्व** ( agauṇa-tva ) *n.* the state of being non-figurative, state of being the primary sense तत्र कुत एतदात्मशब्दादीक्षतेरगौणत्वम् BrahmSūBh. (S'aṅ.) 43. 3 (*on* i. 1. 6); BṛĀraUBh. 409. 5 (*on* iii. 5. 1); ईक्षणस्य चागौणत्वमात्मशब्देन साधितम् S'rutaPra. ii. 477. 18 (*on* iii. 3. 17); CaturCin. iii(1). 305. 17.

**अगौपवन** ( a-gaupavana ) *m.* not a descedant of Gopavana ( हिरण्यमस्मै ददाति ) आत्रेयाय … क आत्रेयमिति त्रिरुक्त्वा सक्तुच्छेषमहालेयमवालेयम् … अगौपवनमिति KātyS'S. x. 2. 21.

**अगौर** ( a-gaura ) *adj.* [*f.* -ī] not white, dark करासङ्ग वशेशं खगौरवस्य…वलयां शङ्कामगौरीं मे वनात्मक SaraKaṇṭhā. 281. 3; कनकगिरिरगौरः… अजनि…विष्वग्द्रीचि यत्कीर्तिपूरे HammīMaKā. 3. 78.

**अगौरनेत्र** ( a-gauranetra ) *adj.* other than white-eyed, not white-eyed अगौरनेत्रैरललाटनेत्रैः अपूरकामैरमरैरलं नः DakṣiMūSt. 14.

**अगौरव** ( a-gaurava ) *adj.* **1** unworthy of respect अल्पलोकमगौरवम्। गृहं कृपणवृत्तीनां नरकस्यापरो विधिः Rāmā. ii. 763(A)*; **2** having disrespect नागौरवो बन्धुषु…कश्चन तस्य राज्ये राज्ञो ययातेरिव नाहुषस्य BuddhaC. 2. 11.

**अगौरव** ( a-gaurava ) *n.* **1** disrespect मानः कतमः। सत्कायदृष्टिसंनिश्रयेण च्चित्तस्योन्नतिः। अगौरवदुःखोत्पत्तिसंनिश्रयदानकर्मकः AbhidhSa. 7. 4; चन्द्रमुखीत्यमुनिमतं बाल इत्यगौरवोपेतम् HarṣaC. 325. 2; TātpaṬ.(U.) 1. 15 (*on* 1. 2); Nyās. i. 1. 7 (*on* P. i. 1. 0); दारिद्र्यात् … ममेदृशमगौरवम्। तदत्र कृत्रिमं युक्त्या विज्ञानं प्रयुनज्म्यहम्। येनास्य…भवेयं अगौरवास्पदम् KathāSaSāg. 10. 42; **2** absence of (metrical) heaviness (i. e. length) यदा तीव्रप्रयत्नेन संयोगादेरगौरवम्। न च्छन्दोभङ्गः…तदा दोषाय SaraKaṇṭhā. 120. 6; **3** absence of complexity बह्वङ्गीकारस्य लोकानुकूल्येनागौरवात् TattvPrakā. 55A. 1 (*on* i. 3. 28)

**अगौरवभेद** ( a-gauravabheda ) *m.* absence of distinction as regards greatness तामगौरवभेदेन मुनींश्चापश्यदीश्वरः KumāSaṁ. 6. 12.

**अगौरवलाघव** ( a-gauravalāghava ) *n.* absence of heaviness or lightness बहिरन्तर्मलापायाद् अगर्भवसतिर्मता। कर्मनोकर्मविश्लेषात् स्यादगौरवलाघवम् MahāP. 42. 104; DaṇḍaVi. 129. 23.

**अगौरवोपेत** ( agauravopeta ) *adj.* disrespectful चन्द्रमुखीत्यमुनिमतं बाल इत्यगौरवोपेतम् HarṣaC. 325. 2.

**अगौरादि** ( a-gaurādi ) *adj.* (Gr.) (words) other than *gaura* etc. उपाद्द्व्यजजिनमगौरादयः P. vi. 2. 194.

**अगौरी** ( agaurī ) *f.* name of a goddess अगौरी च विगौरी च सुगौरी गौरिविक्रमा TantrSa. 9. 152.

**अग्ग्रहण** ( ag-grahaṇa ) *n.* embedding the term *ak* (in the aphorism

or *sūtra*) घेडादेर्दधिथेत्यादिसिद्धयेऽग्ग्रहण( ? ज्ग्रहण )मावश्यकम् । अन्यथोपदेशे एजन्तानामात्वविधानेनाज्ग्रहण ( ? ग्ग्रहण )मेव कुर्यात् LaS'abdeS'e. ii. 498. 2.

**अग्धाद्** ( agdhád ) *adj.* [AltGr. I. 76] (fire) which eats the uneaten अग्धादेकोऽहुतादेकः समसनादेकः TaiS. III. iii. 8. 2 = BaudhS'S. i. 126. 18 = i. 127. 1 = i. 127. 5 = ii. 176. 2.

**अग्नामरुतौ** (agnā-marutau) *m.* (*du.*) Agni and Marut आदैचीति किम् । अग्नामरुतौ CāndraVṛ. *on* v. 2. 24; SiddhāKau. 206A. 17; KośaKaTa. i. 480.

**¹अग्नायी** (agnáyī) *f.* [DEBRU. p. 415] wife of Agni उप ह्वये…। अग्नायीं सोमपीतये ṚV i. 22. 12; देवपत्नीरिन्द्राण्य१ग्नाय्यश्विनी राट् ṚV. v. 46. 8 = AV. vii. 49. 2; TaiBr. iii. 12. 1; अग्नायी । पृथ्वी । इडा । … इति संस्तविकाः AVPari. 48. 134; ये च देवगणाः समाम्नाताः प्रथमे स्थाने । अग्नायी पृथिवीळेति स्त्रियः Nir. 7. 8 (136. 16); अग्नाय्यै स्वाहेति S'āṅkhāS'S. iv. 19. 5; VārāGS. 13. 2; रजन्यजस्थिताऽग्नायी स्रुवपाणिरथानले । … कर्तव्या MatsyaP. 286. 7; JaineVyā. 156. 23 (*on* iii. 1. 40); ङेऽग्नायी CāndraVyā. v. 2. 33; CāndraVṛ. *on* iii. 3. 45; *on* v. 2. 33; KāśiVṛ. *on* P. iv. 1. 37; वरुणानी न नाग्नायी तस्याः सीमन्तिनी समा Bhaṭṭi. 5. 22; तथाग्नायी तथा देवी सुवर्णाख्या प्रवर्तते VarāP. 112. 14; SiddhaHe. iii. 2. 52; MugdhaBo. 4. 25 (44. 5); Prasā. i. 349. 21; i. 586. 23; SiddhāKau. 122A. 7; अथाग्नायी स्वाहा च हुतभुक्प्रिया AmaK. 1395; अग्नायी दहनप्रिया TrikāS'e. i. 1. 70; KalpaK. 379. 21.

**²अग्नायी** ( agnāyī ) *f.* name of the Tretāyuga कृतं सत्ययुगं त्रेताऽग्नायी द्वापरयज्ञियौ ( comm. त्रेता अग्नायी इति द्वे त्रेतायुगस्य ) TrikāS'e. i. 4. 31.

**अग्नायीपति** ( agnāyī-pati ) *m.* husband of Agnāyī, Agni पर्वतोऽप्यग्नायीपतिविजये जठरधनंजये च हव्यकव्यकर्मभिः समाचरितसमस्तसत्त्वसंहारः Yaśas-Cam. ii. 359. 1.

**अग्नाविष्णू** (agnáviṣṇū ) *m.* (*du.*) Agni and Viṣṇu अग्नाविष्णू महि तद्वां महित्वम् AV. vii. 29. 1; अग्नाविष्णू मा वामवक्रमिषम् TaiS. I. i. 12. 1; II. iii. 11. 1; AitBr. I 1. (8); KauṣīBr. 16. 8 (73. 3); अग्नाविष्णू सजोषसा TaiBr. III. xi. 3. 1; III. xi. 9. 1; III. iii. 7. 6; यद्वै दीक्षन्ते । अग्नाविष्णू एव देवते यजन्ते S'atBr. XII. i. 3. 1; S'āṅkhāS'S. ii. 4. 3; ĀśvaS'S. I. ii. 8. 2; GaṇPā. 212. 24; JaineVyā. 254. 18 (*on* iv. 1. 65); CāndraVṛ. *on* iv. 2. 155; KāśiVṛ. *on* P. v. 2. 61; GaṇRa. 7. 433. (457); अग्नाविष्णवोः साधारणस्य वैश्वानरशब्दस्य BrahmSūBh.(Ma.) 13A. 4 (*on* i. 2. 24); Prasā. i. 880. 19; Tattv-Prakā. 39A. 11 (*on* i. 2. 24); अग्नाविष्णू इत्यपि मनुवरेण स्तुतिं चादधीत TantrSa. 4. 98; LaS'abdeS'e. i. 62. 11.

**अग्नावैष्णव** ( agnāvaiṣṇava ) *adj.* belonging to Agni and Viṣṇu cf. **आग्नावैष्णव,** अग्नावैष्णवमेकादशकपालं निर्वपेत् GopBr. ii. 1. 12.

**अग्नाशिन्** ( ag-nāśin ) *adj.* having cancellation of *ak* ङेऽशास्वग्नाश्यृदितः S'ākaṭāVyā. iv. 1. 211.

**अग्नि** ( agní ) *m.* [IE. MAYR. DEBRU. p. 741; TURN. 55; POK. 293 / तद्वा एनमेतदग्रे देवानामजनयत । तस्मादग्निरग्रिर्ह वै नामैतद्यदग्निरिति । स जातः पूर्वः प्रेयाय यो वै पूर्व एत्यग्र एतीति वै तमाहुः सोऽएवास्याग्निता S'atBr. II. ii. 4. 2; अथ यो गर्भोऽन्तरासीत् । सोऽग्निरसृज्यत स यदस्य सर्वस्याग्रमसृज्यत तस्मादग्निरग्रिर्ह वै तमग्निरित्याचक्षते परोऽक्षम् S'atBr. VI. i. 1. 11; अग्निः कस्मात् । अग्रणीर्भवति । अग्रं यज्ञेषु प्रणीयते । अङ्गं नयति सन्नममानः । अक्नोपनो भवतीति स्थौलाष्ठीविः । न क्नोपयति न स्नेहयति । त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिः । इतात् । अक्ताद्दग्धाद्वा । नीतात् । स खल्वेतेरकारमादत्ते गकारमनक्तेर्वा दहतेर्वा नीः परः Nir. 7. 14 (139. 6); BṛDe. 2. 24; aṅg + ni, Uṇā. 4. 50; SiddhāKau. 550B. 3; (अङ्गत्यूर्ध्वं यातीत्यग्निः AmaKoUd. 17. 14 (*on* i. 1. 53)); अग्निरित्यन्तोदात्तम् PāṇiS'i. 41; included in *Utkarādigaṇa* P. iv. 2. 90; *kṣubhnādigaṇa* P. viii. 4. 39; *sākṣātprabhṛtigaṇa* P. i. 4. 74 (as *gati*); feminine P. iv. 1. 37; derivatives P. iv. 2. 33; iv. 2. 126; accent P. vi. 1. 120; vi. 1. 177; vi. 2. 142; *devatādvandvas* P. vi. 3. 27; VājaPrāti. 2. 35; 2. 56; *sandhi* P. viii. 3. 82; viii. 3. 97; VājaPrāti. 3. 76; 5. 33; TaiPrāti. 6. 5; 11. 13; 13. 15; YājñaS'i. 205; other etymologies यस्मादग्रे स भूतानां सर्वेषां निर्मितो मया । तस्मादग्नीत्यभिहितं पुराणज्ञैर्महर्षिभिः । यस्मात्तु सर्वकृत्येषु पूर्वमस्मै प्रदीयते । आहुतिर्दीप्यमानाय तस्मादग्नीति कथ्यते । यस्माच्च नयति ह्यग्र्यां गतिं विप्रान् सुपूजितान् । तस्माच्च नयनाद्राजन् वेदेष्वग्नीति चोच्यते VṛGautaSm. 602. 14(15); MahāBhā. xiv. App. 4. 2563; अङ्गीकारं समीपं स्वमागतं निखिलं जगत् । नयत्यात्मानमित्येवमग्निशब्दो निरुच्यते । स्वात्मोपसर्पणं जीवं नेताग्निः स्वं परं पदम् AhirbuS. 57. 44; ते अग्निम् अग्रगामिनं जातवेदसं सर्वज्ञकल्पमब्रुवन् KenUBh. 52. 10 (*on* 3. 3); अङ्गयति गमयति जगतोऽग्र( ? जगत् अग्र )जन्म प्रापयतीत्यग्निरग्रणीरित्यर्थः अथवा अभितः सर्वत्र गत इत्यग्निः । अथवाङ्क्ते जानाति विश्वमित्यग्निः PrakaVi. 214. 19; बलज्ञानस्वरूपत्वाद्वायुरग्निरगं नयन् ( हरिः ) AnuVyā. 9A. 1 (*on* 1. 1); अङ्गति हृत्पुण्डरीके ध्येयत्वेन गच्छत्याविर्भवतीत्यग्निः VedāntKau. 74. 4 (*on* i. 2. 29) ]

**1** fire, ordinary fire **2 i** sacrificial fire, sacred fire **ii** gārhapatya **iii** āhavanīya **iv** dakṣiṇāgni **v** sacrificial fire with other names and attributes **vi** domestic fire **vii** fire worshipped by the Brahmacārin **viii** funeral fire **ix** Tantric fire **x** fire for ordeal etc. **xi** fire for penance **xii** kitchen fire **xiii** five fires **3 i** god of fire **ii** killer of demons **iii** with ghee as food etc. **iv** as gṛhapati, viśpati **v** as damūnas **vi** son of strength **vii** as guest **viii** with smoke as banner **ix** bringer of gods to the sacrifice **x** as hotṛ **xi** messenger **xii** mentioned with Manu **xiii** with ṛta, vrata **xiv** who taught the Sāmaveda **xv** presiding over a Sāma Saṁhitā **xvi** presiding over a specific Sāman **xvii** as jātavedas **xviii** as vaiśvānara **xix** as sviṣṭakṛt **xx** called Aṅgiras **xxi** called Bhārata **xxii** other epithets of Agni **xxiii** mentioned in association with other gods in compounds **4 i** fire-altar **ii** earth for sacrificial fire-altar **iii** brick for building the altar **iv** area for the fire-altar **v** text dealing with the rite of fire-altar **vi** rite of preparing the fire-altar **5** fire as one of the five elements **6 i** the plant *Plumbago zeylanica* **ii** a kind of *citraka* **iii** *bhallātaka* **iv** *Semicarpu sanacardium* **v** *Citrus acida* **vi** *jāra* **7 i** number three **ii** the third house in a horoscope **iii** the third lunar day **8** a sage who composed various Sāmans **9** digestive faculty, digestive fire **10** cauterization **11 A i** year **ii** lord of the first year **B** south-east direction **C** the asterism Pleiades **D i** name of a *muhūrta* **ii** the seventh part of the night **E** the tenth of the sixty divisions of a zodiacal sign **12** burning sensation, sorrow **13** a mental disposition **14** a synonym of *kleśa* **15** heat of fire **16 i** mystic fire in the Mūlādhāra **ii** Kuṇḍalinī **17** fire or heat in the body **18** danger from fire **19** Hiraṇyagarbha **20** Virāj **21** sacrifice **22** incarnation of fire **23** world of the god of fire **24** a kind of earthquake **25 i** deity of speech **ii** of Sudarśana *mantra* **iii** of Lavaṇa *mantra* **iv** of Vyāhṛtis **v** of the first syllable of Gāyatrī **vi** of a syllable of the *mantra* for Viṣṇu **vii** the mouth of Gāyatrī **viii** of the first day of the lunar fortnight **ix** god of Agnihotra **x** deified types of fires **xi** god of Kṛttikā **xii** regent of a quarter **xiii** god of the south-east **xiv** of the *udātta* **xv** of time **xvi** of the sword **26 i** name of one of the Vāstudevatās **ii** one of the ten Rudras **iii** one of the hundred Rudras **iv** attendant of Viṣṇu **v** name of Bālakṛṣṇa **vi** attendant of Skandasena **vii** deity of the eastern gate **viii** a group of Bhavanavāsin gods **ix** leader of S'iva's attendants **x** one of the seven sages **xi** son of Ūru **xii** father of Mars **xiii** first son of Brahmā **xiv** lord of Saṁvatsara **xv** son of Saṁvatsara **xvi** son of Marutvatī **xvii** son of Aṅgiras **xviii** seer of a *mantra* **xix** members of the Kaśyapa family **xx** one of the ten *pitṛs* **xxi** one of the forms of S'iva **xxii** one of the eight Vasus **xxiii** *rathantara* Sāman **xxiv** a Brahmin priest **xxv** one of the hells **27 i** mystic name for letter *i* **ii** *e* **iii** *ai* **iv** *r* **v** *raṁ* **vi** *rāṁ* **vii** *ṣa* **viii** *haṁ* **ix** group of Vyāpaka letters **x** group of ten syllables **28 i** fiery, vehement **ii** a fiery person **29** gold. **1** fire, ordinary fire अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यः ṚV. i. 12. 6; यद्वातजूतो वना व्यस्थादग्निर्ह दाति रोमा पृथिव्याः ṚV. i. 65. 8; हरयो धूमकेतवो वातजूता उप द्यवि । यतन्ते वृथगग्नयः ṚV. viii. 43. 4; आ घर्मो अग्निमृतयन्नसादि ṚV. v. 43. 7; अग्ने विश्वेभिरग्निभिर्जोषि ब्रह्म सहस्कृत ।… प्र स विश्वेभिरग्निभिरग्निः SV. II. vii. 1. 6. 1–2; अस्य देवाः प्रदिशि ज्योतिरस्तु सूर्यो अग्निरुत वा हिरण्यम् AV. i. 9. 2; ii. 10. 2; अग्नेर्वातस्य ध्राज्या तान् विषूचो वि नाशय AV. iii. 1. 5; अजो ह्य१ग्नेरजनिष्ट शोकात् AV. iv. 14. 1; अग्निरिवैतु प्रतिकूलमनुकूलमिवोदकम् AV. v. 14. 13; अग्नेरिवास्य दहत एति शुष्मिणः AV. vi. 20. 1; अग्नेर्वातान्मधुकशा हि जज्ञे AV. ix. 1. 1; ix. 1. 3; यथा वातश्चाग्निश्च वृक्षान्प्सातो वनस्पतीन् AV. x. 3. 14; अग्नेश्चरुर्यज्ञियस्त्वाध्यरुक्षत् AV. xi. 1. 16; xii. 1. 20; अग्नेस्तनूरसि वाचो विसर्जनम् TaiS. I. i. 5. 2; वरुणो विक्ष्वग्निं दिवि सूर्यमदधात् TaiS. I. ii. 8. 2; VājaS. 4. 31; अग्निस्त्वा श्रीणातु TaiS. I. iii. 10. 1; अक्रन्ददग्निः स्तनयन्निव द्यौः TaiS. I. iii. 14. 2; पुरूणि पृथून्यग्निरनुयाति भर्वन् TaiS. I. iii. 14. 4; युनज्मि त्वा ब्रह्मणा दैव्येनेत्याहैष वा अग्नेर्योगस्तेन । एवैनं युनक्ति TaiS. I. vi. 10. 1; अग्निष्टे त्वचं मा हिंसीत् VājaS. 1. 22; 5. 1; 6. 18; भ्राजन्तो अग्नयो यथा VājaS. 8. 40; अभिषिञ्चाम्यग्नेर्भ्राजसा VājaS. 10. 17; अग्निरिव कक्षं दहति ब्रह्मपृष्ठमनादृतम् SaṁhiUBr. 3. 14;

अस्यामोषधयो जायन्तेऽग्निरेनाः स्वदयति AitĀ. II. i. 7.2; न तत्र…नेमा विद्युतो भान्ति कुतोऽयमग्निः KāṭhU. 5.15; गृहांस्तस्याग्निर्दाहुको भवति ĀpaS'S. v. 3.4; नास्याग्निं गृहाद्धरन्ति ĀpaS'S. v. 7.6; अग्निविद्युत्स्तनयित्नुवर्षामहाभ्रप्रादुर्भावाच्च S'āṅkhāGS. vi. 1.12; गन्धर्वे देवकुले वा द्रावग्नी प्रज्वाल्य KāṭhGS. ii. 7.3; जज्वाल सौम्यार्चिरनीरितोऽग्निः BuddhaC. 1.22; ये भूतविषवाय्वग्निसंप्रहारादिसंभवाः।… रोगाः CaraS. i. 7.51 (1941 Ed.); मथ्यमन्थनमन्थानसंयोगादग्निसंभवः CaraS. i. 11.24 (1941 Ed.); यथाग्नौ व्यपोढे केवलमग्निगृहं शीतीभवति CaraS. i. 20.16 (1941 Ed.); अग्निर्वातकफस्तम्भशीतवेपथुनाशनः SuśruS. iv. 24.87; यथा हि तूलमैषीकमग्नौ प्रोतं प्रदीप्यते BaudhDS. ii. 7.15; अवक्षेपः प्रतिमानमग्निर्गण्डिका … इति कात्वं विद्यात् ArthS'ā. i. 228.3 (2.14); आवेगो नाम उत्पातवातवर्षाग्नि° … °व्यसनाभिघातादिभिर्विभावैः समुत्पद्यते NāṭyaS'ā. 7.95; अग्नेरूर्ध्वज्वलनम् … अदृष्टकारितम् VaiśeSū. v. 2.13; तदनित्यत्वमग्नेर्दाह्यं विनाश्यानुविनाशवत् NyāySū. iv. 1.27; इष्टं चेदेकचित्तानां यद्यग्निः साधयिष्यति Avimā. 4.7; काष्ठादग्निर्जायते मथ्यमानात् PratiYau. 1.18; ज्वलन्तमप्यग्निमचिन्तयित्वा। येनैव मानेन समं प्रसूतस्तेनैव मानेन दिवं प्रयामि ŪruBha. 1.47; ततस्तामभ्यवपत्तुकामो यौगन्धरायणो नाम सचिवस्तस्मिन्नेवाग्नौ पतितः SvapnVā. 1.12(34); लोहभाण्डमग्नौ प्रक्षिप्तं शुध्येत् ViṣṇuSm. 23.2; वने रणे शत्रुजलाग्निमध्ये…। सुप्तम्…रक्षन्ति पुण्यानि पुराकृतानि S'atTrayī. 46; चत्वारो धनदायादा धर्माग्निनृपतस्कराः S'atTrayī. 490; तदेवाग्निस्तदादित्यस्तद्वायुस्तद्धि चन्द्रमाः TattvSa. (3) 126.5; घटादेरामद्रव्यस्याग्निना संबद्धस्याग्न्यभिघातान्नोदनाद्वा तदारम्भकेष्वणुषु कर्माण्युत्पद्यन्ते PadārthaSaṁ. 106.20; नायकः श्रोत्रियागारादग्निमानाय्य …हुत्वा च त्रिः परिक्रमेत् KāmSū. 228.18 (3.5); आसारेण त्वमपि शमयेस्तस्य नैदाघमग्निम् MeghDū. 17+1*; उपदेशं विदुः शुद्धम्…। श्यामायते न युष्मासु यः काञ्चनमिवाग्निषु Mālavikā. 2.9; चकार सा … लाजविसर्गमग्नौ RaghuVa. 7.25; व्यावर्तितातपरुजः प्रथमाभ्रवृष्ट्या वृक्षस्य वैद्युत इवाग्निरुपस्थितोऽयम् Vikramo. 5.16; न खलु न खलु बाणः संनिपात्यः … मृदुनि मृगशरीरे पुष्पराशाविवाग्निः S'āk. 1.10; धूमो लक्षणमग्नेरिति हि वदन्ति S'ābaBh. 12.2 (on i. 1.2); अग्निराप्तोपदेशात् प्रतीयते 'अत्राग्निः' इति NyāyBh. 11.13 (on i. 1.3); (कांस्यम्) सुरामात्रेण संस्पृष्टं शुध्यतेऽग्न्युपलेखनैः ParāSm. 7.23; न महानसादिषु दृष्टो धूमः पर्वतस्थमग्निं प्रतिपादयितुं क्षमः Bṛha. 101.10 (on i. 1.5); विषशस्त्राग्निरज्जवः। परेभ्यो नैव देयाः VarāṅgaC. 15.119; ऋषीणाम्…अग्रतः। अग्नौ शुद्धिं गता देवी KundaMā. 1.13; चन्द्रो जलमर्कोऽग्निः ĀryaBh. 4.37(94); अग्नौ। न ध्वान्तमन्तर्भवनेऽवकाशं करोति YogYā. 8.15; शुक्रः क्षितिजे … दिशोऽग्निविद्युद्रजसा च पीडयेत् BṛSaṁ. 9.41; शीतस्पर्शस्याग्निना विरोध[संब]न्धः HetuBiṬ. 7.12; नीहारतिमिराङ्गारश्वभ्राग्निवननिम्नगाः। वदन्ति सत्रम् NītiSā. 19.69; दैवाग्न्युदकव्याधिमरकविषूचिकादुर्भिक्षाण्यासुरी वृष्टिरिति Tantrākhyā. 17.25; पीडनं पुनरष्टधा दैवाग्न्युदकव्याधिमरकविषूचिकादुर्भिक्षासुरीवृष्टि(भि)र्भवति PañcT. 1.59 (62.15); वरमग्नौ प्रदीप्ते तु प्रपातः पुण्यकर्मणाम् PañcT. 3.78 (349.8); Pañcā. 34.14; ये भूतविषवाय्वग्निक्षतभङ्गादिसंभवाः। … ते स्युरागन्तवो गदाः AṣṭāSaṁ. i. 20.11 (1.5)=AṣṭāHṛ. i. 4.32; AṣṭāSaṁ. i. 7.1 (1.2); सहसैवोत्थितोऽन्तःपुरेऽग्निः Ratnā. 4.14; आहिताग्नेर्नान्येनाग्निना संस्कारो विहितः Nāgā. 5.12(17); (राजपुत्रौ) अग्निमारुताविव समभिव्यक्ततेजोबलौ … प्रकाशतां जग्मतुः HarṣaC. 193.8; सः … राजवाहनेन … अवन्तिसुन्दरीम् … अग्निं साक्षीकृत्य संयोजयामास DaśKuC. 33.1; इन्धनौघधगप्यग्निस्त्विषा नात्येति पूषणम् S'iśuVa. 2.23; तत्र भेषजसंपत् – सुभूमौ जातम् … अग्नितोयजन्तुविण्मूत्रजरादिभिरनुपहतं तत्तद्रोगयोग्यम् KāśyaS. 37B.39; कान्तावियोगः…रणस्य शेषः… विषमा सभा च विनाग्निमेते प्रदहन्ति कायम् CāṇaNīDa. 2.14; अग्निरुष्णं विना (न भवति) SāṁkhyaKāBh. 24.18 (on 41); क्षेत्रोदकबीजाग्नीन्धनादीनि सर्वत्रावस्थितानि सर्वत्राङ्कुरपाकादिकार्यं कुर्युः NyāyVār. 221.16 (on ii. 1.31); घटः … अग्निना संयुक्त उष्णो भवति MāṭhVṛ. 34.2 (on 20); कर्त्रन्तरेऽस्य नाख्यातं प्रयुज्येत … 'अग्निर्ज्वलति' इति BhāvanāVi. 18.4; आः कोऽयमग्निर्नामास्मत्प्रसूतिपरिशोधने UttaRāC. 4.10(9); आरण्योऽग्निरिव दुःसहदुःखामर्षजं तेजो विक्रमयति AnarghaRā. 4.14(6); हेम यथाग्नौ…। दग्ध्वात्मानं ज्ञं परिशिष्टं च विदुर्यं तम् … हरिमीडे HariStu. 41; अग्नौ हि कर्माणि प्रस्तूयन्ते ChāndoUBh. 87.9 (on ii. 2.1); विश्वंभरः अग्निः BṛĀraUBh. 103.8 (on i. 4.7); स्वभावो नाम पदार्थानां प्रतिनियता शक्तिः अग्नेरौष्ण्यमिव S'vetāUBh. 59.19 (on 1.2); एनम् … अग्निरपि न भस्मीकरोति GītāBh.(S'aṅ.) 40.10 (on 2.23); या तु प्रसिद्धेऽग्नावग्निबुद्धिः न सा चोदनातन्त्रा BrahmSūBh.(S'aṅ.) 26.15 (on i. 1.4); प्रकाशोऽर्कस्य तोयस्य शैत्यमग्नेर्यथोष्णता। … स्वभावः ĀtmaBo. 24; सूर्यात्सूर्यप्रतीतिर्न भवति सहसा नापि चन्द्रस्य चन्द्रात्। अग्नेरग्नेश्च S'atS'lo. 87; नाडीषु पीड्यमानासु वाय्वग्निभ्यां भवेत्क्षुधा SvātmPra. 64; यद्वदग्नौ मणित्वं हि मणौ वा वह्निता(? तां) पुमान्।…पश्यत्यज्ञानयोगतः AparoAnu. 83; अग्नेरौष्ण्यमपां शैत्यम् SarvaSiSaṁ. 3.2; यथाग्नेस्तृणकूटस्य…। सहयोगो न घटते SarvaVeSāSaṁ. 185; धूमोऽग्निरचलः S'ivāL. 6; यथैवाग्निरुष्णो भास्वर इत्यपि S'lokaVār. 2.130 (85.3);

शान्त्यर्थमग्निलवणदध्यक्षतप्रभृतेः शिरस उपरि भ्रामणम् TantrVā. 390.21 (on ii. 1.12); न ह्यग्नौ गन्धादि सिकतासु वा तैलादि शक्यते साधयितुम् TātpaṬ.(U.) 43.6 (on 2.34); यत्रार्थाविसंवादित्वमस्ति तत्र प्रामाण्यम् यथाग्नौ धूमस्य TātpaṬ.(U.) 54.2 (on 2.47); BṛĀraUBhVā. i. 4.1110; पृथिव्यग्निरथाचार्यो माता या चाधरा हनुः। पूर्वं स्यात्संहितारूपम् TaiUBhāVā. 17.7(1); अग्नेः शीताङ्गता यथा NaiṣkaSi. 45.4; 131.7; धूमाग्न्योरिव संबन्धमन्यपक्षे कुतोऽस्य धीः IṣṭaSi. 280.16; मानान्तराधिगतता हि न लक्षणायां किंचित्करी भवति पिङ्गलतावदग्नेः SaṁkṣeS'ā. 1.153 (i. 126.22); शुष्कदारु चाग्नौ क्षिप्तं क्षिप्रं दह्यते ManuBh. ii. 448.5 (on 11.245); याति विस्तारमग्निः TāpaVa. 2.4; रज्जुशस्त्राग्निपानीयजराज्वरगरक्षुधाम्। नायमन्यतमेनापि केन नाम मृतो भवेत् BṛKathāS'loSaṁ. 20.74; प्राग्वान्तधूमजालोऽग्निर्ज्वालाभिर्लभतेऽन्वयम् Kapphiṇā. 16.45; (वृक्षस्य) मूलं नाप्नोत्यग्निरापः खनन्ति RāghPāṇ.(Dha.) 11.18; नाग्नेरौष्ण्यं पृथग्भवेत् S'ivDṛ. 3.7; तत्र प्रत्यक्षयोग्यार्थानुमापकं दृष्टम्। यथा धूमोऽग्नेरिति NyāySā. 5.7; बहलस्तेजः प्रदीपोऽग्निः ĀtmaSi. 49.21; अग्निं वा दीप्तिवर्जितम्। पश्यन्नेकादशे मासि यमलोकं प्रपद्यते ParaS. 11.41; तदंशा जीवसंज्ञकाः। … यथाग्नौ विस्फुलिङ्गकाः KulārT. 1.9; अग्निर्वराहमहिषा नकुलाः शृगालाः। … परिवर्जनीयाः KalyāKā. 1.37; अग्निरिव स्वाश्रयमेव दहन्ति दुर्जनाः NītiVā. 1.40; यथाग्निना सिञ्चेत् BrahmSūBh.(Bhā.) 9.28 (on i. 1.3); यतोऽग्नेरूर्ध्वज्वलनं भवति SāṁkhyaTaKau. 280.1 (on 13); अग्निरुष्णस्वभावः Bhām. 414.8 (on ii. 2.18); अग्निना सिञ्चेदित्यादिना स्मारितैरनेकान्तः NyāyKuA. i. 207.2; धूमोऽपि नाग्निं गमयेत् ĀtmaTaVi. 219.18; जलमग्निर्विषं शस्त्रम् …। निमित्तं किंचिदासाद्य देही प्राणैर्विमुच्यते Hitopa. 1.124; भूपयःपवनाग्नीनां तृणादीनां च हिंसनम्। यावत्प्रयोजनं स्वस्य तावत् कुर्यात् YaśasCam. ii. 336.12; अभ्यूषखादिका फलानां विटपस्थानामग्नौ प्लोषितानां खादनं यत्र JayaMa. 56.7 (on 1.4); फलाग्निजलवृष्टीनां पुष्पधूमाम्बुदाः…। ख्यापयन्ति भविष्यत्वम् SiddhYo. 80.1; वार्यग्निभस्मरविमन्त्रधरादिभेदाच्छुद्धिं वदन्ति SubhāRaSaṁ. 760; परीक्षाग्नौ … हेम्नः AśvaCi. 11.32; शनैर्मृद्वग्निना पचेत् AśvaVai. 8.13; तत्राग्न्यादित्यकुविषैरौषधैर्विद्युतापि वा। उत्पत्तिर्या व्रणस्य स्यात् Hastyāyur. 352.24 (3.1); व्याप्तिग्रह इव धूमाग्न्योः AbhinBhā. i. 279.11 (on 6.31); ततोऽग्नेः शीतापनोदस्मृतिरित्यादिरपर्यवसितः शब्दार्थः स्यात् Loc. 56.20 (on 1.21); यो मणिर्दृश्यते दूराद् ज्वलदग्निसमच्छविः। वंशकान्तिः स विज्ञेयः YuktiKa. 91.17; सर्वाणि तेजांसि मृदूभवन्ति स्वयोनिमासाद्य यथाग्निरम्भः CaṇḍaKau. 2.16; अनुमेये सत्त्वमेव निश्चितम्। … निश्चितग्रहणेन संदिग्धासिद्धस्य। यथाग्निरत्र TarkBhā.(Mo.) 13.15; काष्ठेष्वग्निभयं विद्यात् VāstuVi. 2.37; खेचरान्दग्ध्वाग्नेः सदृशा दृशा निशिचरा रुन्धन्ति रन्ध्रं दिवः RāmāCam. 1.48; शस्त्रानिलपिशाचाग्निभूतयक्षभयार्दिताः। … नश्यन्ति भुजङ्गकुटिले जनाः SamarāSū. 10.66; 34.8; किमिति … ज्वलत्यग्नावात्मानं क्षिपसि UdaySuKa. 78.14; स जुहाव जटां वह्नौ (v. l. अग्नौ) DarpDa. 3.114; विषशस्त्राग्निसर्पेभ्यो न भयं विद्यते नृणाम्। … घोरं ज्ञातिकृतं भयम् RāmāMañ. 302.15; शोकादुपकोशाग्निमाविशत् BṛKathāMañ. i. 2.209; ततोऽत्र दीपोद्देशेन दत्त्वाग्निं वासवेश्मनि KathāSaSāg. ii. 2.110; धूमोऽयमाहोस्विद् धूलिसन्तान इति संशयानस्य अग्निवातावर्तयोरनवस्थितो वितर्कः Kāśi. iii. 115.11 (on 5(5).32); यद्यग्निरश्वविलक्षणो दहति अथ कस्मादाकाशमपि न दहति S'arka. 9.5; अग्निमावेष्ट्य व्यवस्थितस्य समानाख्यस्य वायोर्जयात् RājMār. 57.24; वेदार्थस्योद्देश्येन कार्यरूपेणाग्नेरिव धूमेनाव्याप्तेः S'āstrDī. 17.24 (on i. 1.2); यथा खलु वेण्वाश्रयोऽग्निर्वेणुं विनाशयन् स्वयमप्याश्रयाभावाद् विनश्यति NyāyMa. 322.6; संसाराग्निविदीपनव्यपगतप्राणात्मसंजीवनीम्। … भौमाः पिबन्त्वन्वहम् S'rīBh. 1.6 (on i. 1.0); शस्त्राग्न्यम्बुवायवश्छेदनदहनक्लेदनशोषणान्यात्मानं प्रति कर्तुं न शक्नुवन्ति GītāBh.(Rā.) 92.3 (on 2.23); अग्निव्यक्तिगुण्यात्मनः प्रति प्रकाशजातिगुणशरीराणां यथा ह्यंशत्वम् VedāntSā.(Rā.) 17.7 (on i. 1.2); परमात्मनो द्युभ्वादित्यादीनाम् (v. l. अग्निद्युभ्वादित्यादीनाम्) VedāntDī. 41.11 (on i. 2.31); सर्वेषामग्निजलादीनां भावानाम्…दृष्टैव शक्तिः VedāSaṁ. 119.14; स्वस्य स्वयमेवात्मा शास्ता चाग्निरात्मानं दहतीतिवदत्यन्तानुपपन्नः VedāntTaSā. 49.6; एवमाकारभेदेनोभयार्थत्वाद्विनियुक्तविनियोगदोषो न स्यात् यथाग्नेर्दाहभासमानत्वयोः NītiMā. 3.12; शरशूलाग्निनागांश्च टङ्कं च करवालकम्।…बिभ्रदष्टबाहुं त्रिलोचनम् ĪśānS'iPa. i. 31.95; अद्रावत्र प्रज्वलत्यग्निः KāvyPra. 472.2; वमन्त्यग्निं तथा धूमम् NāraS. 37.2; तदा जनानां भयदो जलाग्निरोगास्त्रचौराग्निनिशाचरेभ्यः VasiS. 7.14; आकाशाध्वा च धूमोऽग्निपिशुनो ज्वलनाग्रजः ParyāMu. 22.64; पावको हव्यवाहोऽग्निः ParyāMu. 23.39; चन्दनेऽपि…अग्निरुत्तिष्ठति SubhāRaK. 21.31; अग्निश्चेदतिशीतलः Mugdhopa. 7; तीव्रं तेजोऽग्निरौर्वः PārijāHa. 3; जपावर्णकुसुमे … अहो3 किंस्वि3दमू3 अग्नी3 इत्युज्झ्येते इहार्भकैः DvyāśraKā. 1.28; विशिष्टः(? वशिष्ठः) पुत्रक्षयोपतप्तोऽग्निं प्रविष्टः Kāvyānu.(He.) 59.6; दीप्त्याग्निर्भाति Candrā. 5.54; स किल्बिषं प्रुष्यतु वः शराग्निः S'rīKaC. 1.6; अर्चिष्मान् अग्निस्तद्वति सार्चिष्मति AdbhuSāg. 71.23; अग्निर्यथा घनघातपिट्टनं न लभते TātpaVṛ. 28.5 (on 1.20); कारणं यथा…संदिह्यमाने धूमेऽग्निः PramāMī. 42.22 (on i. 2.12); नालं दग्धुं कक्षमग्निर्विना वायुं

ज्वलन्नपि TrisaS'aPuC. ii. 6. 485; विनाग्निं गन्धमहिमा काकतुण्डस्य नैधते VītaRā. 9. 5; इतिशब्दोन्नयेऽग्नावित्यप्युन्नीते स्मृतिर्भवेत् AnuVyā. 3B. 2 (*on* i. 1); अग्निचन्द्रौ भगवतो नेत्रे S'aṅkaVi.(Ā.) 48. 12; वारिदश्रेणीष्वन्तरिता ज्वलद्द्युतिकला धूमेष्विवाग्नेश्छटा: GopāKeCan. 147. 27; प्रतिज्ञादोषो यथा प्रत्यक्षादिप्रमाणविरोधो यथानुष्णोऽग्नि: Aparā. 610. 28 (*on* 2. 6); या तु मनुष्यमृत्यवे विषं ग्रामादिदाहाय चाग्निं ददाति Aparā. 852. 3 (*on* 2. 279); चिताग्निभस्म तेनैव ग्राहयेत् परमेश्वरि Rasā. 3. 8; अये पुण्यवतामग्निरेव रत्नं भवतीति प्रवाद: सत्य एव संवृत्त: PrasaRā. vi. 39 (4); पीडनं पुनरष्टधा दैवाग्न्युदकव्याधिमरकविद्रवदुर्भिक्षासुरीवृष्टिभिर्भवति Pañcā. 34. 14; यत्र धूमस्तत्राग्नि: TarkBhā.(Ke.) 36. 17; काप्यग्नि: क्वचिदद्रिभू: SaduktiKa. 5. 20; क्षत्रस्याग्नेरपि मह: सहजम् HammīMaMa. 1. 14(1); उद्धूमकेशं पदलग्नमग्निमेकं विषेहे VasaViKā. 3. 7; तदंशा जीवसंज्ञका: । अनाद्यविद्योपहिता यथाग्नेर्विस्फुलिङ्गका: । दार्वाद्युपाधिसंभिन्ना: SaṁgīRa. i. 24. 1 (1. 2); वृषाकपिशब्देन कृष्णाग्नी KāvyKaVṛ. 71. 26 (3. 3); दास्यामथोषदत्तस्य क्लीबत्वे धक्ष्यतेऽग्निना SamarāSaṁ. 1. 279; आवेगस्तु महोत्पातवातवर्षाग्निकुञ्जरात् BhāvPra.(S'ā.) 20. 14(1); यथा विषं यथा वज्रं शस्त्राग्नी प्राणहा यथा RasPraSu. 5. 15; अग्निं ज्वालय यामकम् RasRaSa. 5. 59; अग्नि: करणत्वम् ··· इष्टसाधनता इत्यादिपदेभ्य:···अन्वयाबोधात् TattvCin. iv(1). 233. 3; यथाग्निजलादीनामौष्ण्यादिशक्तियोग: स्वाभाविक: NyāyPari. 391. 15; भस्मच्छन्नमग्निं लोहकारा दृतिभ्यां धमन्ति JīvanVi. 86. 1; न वेद यन्नृपाग्निस्त्रीविप्रा: कस्यापि न स्वका: KumāDeC. 15. 23; और्वं दहन्तमेवाग्निं संतर्पयति सागर: S'ārṅgaPa. 219; अलसशालायां ते···अग्निं दापयित्वा निरूपयामासु: PurusPa. 40. 8; सूर्यकान्तेनाग्निर्जायते TattvPrakā. 10A. 13 (*on* i. 1. 3); अग्निपर्वतसंयोगानाम् ··· अग्निमच्छब्दवाच्यविशिष्टत्वे NyāySu.(Ja.) 376A. 7 (*on* ii. 2. 6); स्वयं धूमादग्निमनुमाय परं बोधयितुं पञ्चावयवोपेतमनुमानवाक्यं प्रयुङ्क्ते तत्परार्थम् TarkKau. 12. 25; सुवर्णमग्नौ घटनार्थं प्रताप्यमानमक्षीणं भवति DīpKa. 62. 16 (*on* 2. 178); सादृश्यातिशयमहिम्ना भेदप्रतीतिस्थगनमात्रम् । यथा अग्निमाणवकयो: SāhiDa. 52. 1; पृथिव्यामप्यहं पार्थ वायावग्नौ जलेऽप्यहम् KumāPraPra. 66. 16; यन्त्रलाङ्गलशस्त्राग्निमुशलोदूखलादिकम् । दाक्षिण्यविषये हिंस्रं नार्पयेत् करुणापर: KumāPraPra. 75. 13; हिमादग्नि: ···आपतत् RājTa.(Jo.) 941; मनुष्यहारिण: ··· कटेन वेष्टयित्वा तत्प्रभवेणाग्निना दाह्या: DaṇḍaVi. 125. 20; नाग्निस्तृप्यति काष्ठानाम् SiṁhāDvā. 31. 10; अग्निं प्राप्य यथा सद्यस्तूलराशिर्विनश्यति SiṁhāDvā. 129. 4; नीरं क्षीरायते तस्मिन्नग्ने (v. l. अग्नौ) रक्षति तत्पय: VetāPañ.(S'i.) 10. 47; ते सर्वेऽग्नय इवाद्युतन् RājTa. (S'rī.) 4. 355; दहन्तमप्यौर्वमग्निं संतर्पयति वारिधि: Subhāṣi. 227; अग्नौ क: शलभायते BallāC. 27. 4; शयनं चाशनं चाति न भजेन्न द्रवाधिकम् । नाग्न्यातपौ BhāvPra.(Bhā.) 5. 225; प्रतापोऽर्काग्निवज्राद्यै: AlaṅkāS'e. 14. 4; ईश···सिद्धादय: स्वरगणा: मुखरन्ध्रमग्नि:···तव Nāräy. ii. 6. 6; लिङ्गम् ··· यथा धूमोऽग्ने: Upask. 89. 10 (*on* ii. 1. 15); यद्यग्निर्न स्यात् तर्हि धूमोऽपि न स्यात् SarvaDaKau. 33. 5; वैश्वानरो यद्यप्यग्नावेव प्रसिद्ध: AṇuBh. 67. 21 (*on* i. 2. 24); श्रोत्रियागारादग्निराह्रियते VedāntPāSau. 238. 8 (*on* ii. 3. 47); यथा सर्वगोऽप्यग्नि: स्वमहिम्ना विद्युदादिरूपेण···दृश्यो भवति VedāntKau. 59. 21 (*on* i. 2. 14); दुन्दुभितच्छब्दाग्निधूमादीनां दृष्टान्तानामुक्तिश्चायुक्ता स्यात् Nyāyāmṛ. 278A. 6; धूमाग्न्योस्संयोगस्तावत्प्रत्यक्षेण प्रकाशते TantrRaha. 10. 12; यथा नैकस्याग्ने: शीतोष्णस्वभावत्वम् YuktiSneha. 20. 38 (*on* i. 1. 2); वृत्तिर्न बुद्धेर्भागोऽग्ने: स्फुलिङ्गवद्विभक्तांश: ··· न भवति YogSā. 3. 6(1); अग्नेर्यथा स्फुलिङ्गा: क्षुद्रास्तु व्युच्चरन्तीति PraboSu. 208; यथा कारीषोऽग्नि: शीतापनयनेन बटूनध्ययनसमर्थान् करोति Kuval. 56(26); यदि निश्चयस्तवायं प्रेषय गरलाग्निगङ्गौघान् ĀryāS'. 7; अग्नौ प्रतापनेन निष्पादितेषु ··· भक्ष्यविशेषेष्वतिव्याप्ते: S'ivārkaMaDī. i. 308. 17 (*on* i. 2. 1); औष्ण्यप्रत्यक्षेणाग्नेर्विपक्षत्वावगतौ MīmāKau. i. 13. 21 (*on* i. 3. 3); यत्र यत्र धूमस्तत्राग्निरिति साहचर्यनियमो व्याप्ति: TarkSaṁ.(A.) 34. 12; SarvaMaSaṁ. 4. 15; तेज: । तत्पुनरर्कचन्द्राग्निनक्षत्रसुवर्णादिरूपम् MānaMe. 155. 6; ब्राह्मण्या क्रन्दन् कुमारोऽग्नौ प्रक्षिप्त: VetāPañ.(Jam.) 28. 3; प्रत्यक्षेणाग्नौ भस्मीभावावगमात् MayūMāli. 580. 10 (*on* ix. 1. 4); शुद्धगोधूमचूर्णं तु साम्बु गाढं विमर्दयेत् । विधाय वटकाकारं निर्धूमेऽग्नौ शनै: पचेत् BhojanKu. 35. 8; छागादेस्सकलस्यापि खण्डान्यग्नौ तु भर्जयेत् BhojanKu. 52. 11; भर्तरि रुचां लोकान्तरं प्रस्थिते सन्ध्याग्निं विशति PadyaVe. 554; अहह हिमकरो मामग्निना सिञ्चतीव JānaPa. 2. 16; तेनाग्निना संसारलक्षणेन LalitāSaBh. 97. 20 (*on* 130); विधि: ··· सूर्यं वाडवमग्निमत्र कृतवान् AlaṅkāMañ. 99. 17; पुद्गल: । स च द्विविध: परमाणुस्तत्संघातश्च । वाय्वग्निजलपृथिवीतनुभुवनादिक: GoviBh. 133. 14 (*on* ii. 2. 32); अग्निश्चन्दनलेपो विषममृतं मरणमेव जीवातु: । सुन्दरि विरहिजनानां काचन लोकोत्तरा रीति: SundaS'. 58; वनितानवनीतानां द्रावकोऽग्निर्जपादिना । जायते साधको नित्यं कन्दर्पाधिकसुन्दर: TantrRā. 3. 34; तले भूमौ तत: खात्वा तत्राग्निं ज्वालयेत् सदा TantrRā. 20. 60; अस्यते क्षिप्यते यत्तु मन्त्रयन्त्राग्निभिश्च तत् । अस्त्रम् S'ukraNī. 4(7). 191; **2 i** sacrificial fire, sacred fire प्र व: सतां ज्येष्ठतमाय सुष्टुतिमग्नाविव समिधाने हविर्भरे ṚV. ii. 16. 1; अयं सो अग्निराहुत: पुरुत्रा यमीशान: समिदिन्धे हविष्मान् ṚV. vii. 1. 16; राये अग्ने महे त्वा दानाय समिधीमहि SV. I. i. 2. 5. 3; समास्त्वाग्न ऋतवो वर्धयन्तु AV. ii. 6. 1; अयमग्निर्दीदायद् दीर्घमेव सजातैरिद्धोऽप्रतिब्रुवद्भि: AV. iii. 8. 3; यद्वा कपोत: पदमग्नौ कृणोति AV. vi. 29. 1; शिशानो अग्नि: क्रतुभि: समिद्ध: AV. viii. 3. 1; ix. 3. 12; एतमिध्मं समाहितं जुषाणो अग्ने प्रति हर्य होमै: AV. x. 6. 35; xi. 1. 1; तद्यस्यैवं विद्वान्व्रात्य उद्धृतेष्वग्निषु···अतिथिर्गृहानागच्छेत् AV. xv. 12. 1; xviii. 2. 28; घृतेन त्वा समुक्षाम्यग्न आज्येन वर्धयन् AV. xix. 27. 5; अग्ने हव्यꣳ रक्षस्व TaiS. I. i. 4. 2; समायुषा सं प्रजया समग्ने वर्चसा पुन: । ···अहं गच्छे TaiS. I. i. 10. 2; अग्ने त्वꣳ सु जागृहि TaiS. I. ii. 3. 1; यो नो दूरे अघशꣳसो यो अन्त्यग्ने माकिष्टे व्यथिरादधर्षीत् TaiS. I. ii. 14. 2; I. iii. 12. 1; पर्यस्वाꣳ अग्न आगमम् TaiS. I. iv. 45. 3; ऋध्नवत् खलु स इत्यब्रवीद्यो मद्देवत्यमग्निमादधाता इति TaiS. I. v. 1. 2; भागधेयं वा अग्निराहित इच्छमान: प्रजां पशून् यजमानस्योपदोद्राव TaiS. I. v. 1. 4; अग्ने हव्यꣳ रक्ष VājaS. 1. 11; समिधाग्निं दुवस्यत VājaS. 3. 1; अग्निर्यज्ञ: VājaS. 4. 11; 6. 26; आ घा ये अग्निमिन्धते VājaS. 7. 32; गविष्ठिरो नमसा स्तोममग्नौ दिवीव रुक्ममुरुव्यञ्चमश्रेत् VājaS. 15. 25; आग्निं मन्थन्ति AitBr. 3. 4(65); एष ह वा अस्य स्वो योनिर्यदग्निरग्ने: AitBr. 3. 5(71); तदिदमग्नौ देवयोन्यां प्रजनने रेत: सिच्यतेऽग्निर्वै देवयोनि: AitBr. 4. 5(97); स्वेनैव तच्छन्दसाग्नीनाधत्ते KausīBr. 1. 1 (1. 18); त्रिवृद्वा अग्निरङ्गारा अर्चिर्धूम इति KausīBr. 28. 5 (136. 13); कृत्तिकास्वग्निमादधीत TaiBr. I. i. 2. 1; वसन्ता ब्राह्मणोऽग्निमादधीत TaiBr. I. i. 2. 6; त्रिरेवाग्नीन्संप्रोक्षति GopBr. i. 1. 14; तद्यदेतदग्नीन् मन्थन्ति JaimiBr. 1. 1; यथाग्नेर्मन्थनम् ChāndoU. i. 3. 5; प्रवत्स्यन्नग्नीन् प्रज्वल्याचम्यातिक्रम्योपतिष्ठते ĀśvaS'S. I. ii. 5. 1; प्रातरग्निहोत्रं हुत्वान्यमाहवनीयं प्रणीयाग्नीनन्वादधाति ĀpaS'S. i. 1. 2; iv. 1. 9; शमीगर्भादग्निं मन्थति ĀpaS'S. v. 10. 7; अध्वर्युरुत्तरवेद्यामग्निं प्रतिष्ठापयति ĀpaS'S. viii. 5. 25; अग्निर्मथ्यमानो न जायेत ĀpaS'S. ix. 3. 3; x. 19. 6; प्रवर्ग्यमुद्वास्य पशुबन्धवदग्निं प्रणयति ĀpaS'S. xi. 5. 9; खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय ĀpaS'S. xv. 20. 2; चतुर्भिरुखायामग्निमभ्यादधाति ĀpaS'S. xvi. 5. 9; स्वयमातृण्णायामग्निं प्रतिष्ठाप्य ĀpaS'S. xvii. 14. 4; xxii. 28. 14; संवत्सरं व्यर्णे नैतन्धवेऽग्निमिन्धीत ĀpaS'S. xxiii. 13. 12; xxiv. 2. 11; सोमयाजिनं चेन्न विन्देत्···अग्निमुपरिष्टाद्धारयेयु: MānS'S. 70. 15; अग्नी प्रणीयमानौ यथेतमनुगच्छेत् LāṭyāS'S v. 1. 3; प्रवेश्यमानं राजानमनुप्रविशेदव्यवयन्नग्निना LāṭyāS'S. v. 6. 1; अग्निराहवनीय: VaitS'S. 1. 6; उपोषन्त्यग्निभि: KausīGS. v. 3. 27; v. 2. 4; v. 6. 6; पशुश्चेदाप्लाव्यागामग्रेणाग्नीन् परीत्य पलाशशाखां निहन्ति PāraGS. iii. 11. 1; कृष्णद्वैपायन: पुरा । त्रीनग्नीनिव कौरव्याञ्जनयामास वीर्यवान् MahāBhā. i. 1. 54; ii. 5. 30; ii. 7. 23; साधयिष्याम तं राजन् वयं त्रय इवाग्नय: MahāBhā. ii. 18. 3; पश्य नानाविधाकारैरग्निभिर्निचितां महीम् । ··· ययातेर्यज्ञकर्मभि: MahāBhā. iii. 129. 5 (Nīlakaṇṭha अग्निस्थापनार्थैरिष्टकारचितै: स्थण्डिलै:); iii. 134. 11; पीतलोहितनीलश्च ज्वलत्यग्निर्हुतो द्विजै: MahāBhā. vi. 3. 38; आर्तिं मे हृदये रूढाम्···त्वं सिञ्चन् सर्पिषेवाग्निमुद्दीपयसि संजय MahāBhā. vi. 15. 70; viii. 62. 54; viii. 68. 20; शुशुभे संवृतो राजा वेदी त्रिभिरिवाग्निभि: MahāBhā. x. 9. 7; xii. 9. 5; विशाखयूपे देवानां सर्वेषामग्नयश्चिता: MahāBhā. xii. 12. 3; xii. 15. 31; यश्चाग्नीनपविध्येत तथैव ब्रह्मविक्रयी । एतान्येनांसि सर्वाणि MahāBhā. xii. 35. 8; xii. 49. 24; तमहम् ··· अथाग्निषु ··· । समपृच्छमनामयम् MahāBhā. xiii. 14. 47; viii. 14. 42; ix. 34. 12; चितोऽग्निर्ब्राह्मणैस्तत्र Rāmā. i. 3. 22; हयस्य यानि चाङ्गानि···ब्राह्मणा: । अग्नौ प्रास्यन्ति Rāmā. i. 13. 31; i. 8. 10; राघव: कुशलं परिपृच्छति । पुत्रेष्वग्निषु दारेषु Rāmā. ii. 2. 26; ii. 40. 19; v. 33. 43; vii. 5. 7; अग्नावग्नि: ··· इति होम: GautDS. i. 5. 9; न वाय्वग्निविप्रादित्याप: ··· प्रति पश्यन्वा मूत्रपुरीषामेध्यान्व्युदस्येत् GautDS. i. 9. 13; कृष्णकेशोऽग्नीनादधीतेति श्रुति: BaudhDS. i. 2. 6; ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते BaudhDS. i. 5. 83; i. 6. 49; श्रामणकेनाग्निमाधाय BaudhDS. ii. 6. 17; ii. 8. 7; iii. 1. 10; iii. 1. 14; VaikhāDS. i. 5. 3; योऽग्नीनुपविध्येत् VāsiDS. 1. 23; तासामग्नि: प्रकृतित: प्रयाजवत् स्यात् MīmāSū. iii. 6. 16; ते सर्वार्था: प्रयुक्तत्वादग्नयश्च स्वकालत्वात् MīmāSū. iii. 7. 39; त्रयोऽग्नय: AtriS. 25; तपसस्तेजसा दीप्ता हूयमाना इवाग्नय: CaraS. i. 1. 14; गुरुमातृपितृत्याग: स्वाध्यायाग्न्यो: सुतस्य च ManuSm. 11. 59; दम्पत्योर्विप्रयोरग्न्यो: ··· । अन्तरे यदि वा गच्छेदहोरात्रेण शुध्यति AṅgiSm. 61; माता पिता गुरुर्भार्या···। अभ्यागतोऽतिथिश्चाग्नि: पोष्यवर्ग उदाहृत: DakṣaSm. 2. 36; हूयमाने तथा चाग्नौ नाशौचं नैव सूतकम् DakṣaSm. 6. 14; एत एव त्रयो लोका एत एव त्रयोऽग्नय: ViṣṇuSm. 31. 7; अग्निं (हत्वा) बक: (भवति) ViṣṇuSm. 44. 35; नाग्निं लङ्घयेत् ViṣṇuSm. 71. 36; प्रदीप्तोऽग्निर्भाति प्रविचरति धूमो मुनिवनम् SvapnVā. 1. 16 अग्नयो वायवस्तथा···। क्रमेण तस्मादेकैकं स्वनाम्ना तर्पयेद्गणम् PauṣkS. 19. 133; गुर्वग्निमन्त्रशास्त्राणां दूषकादिषु जन्तुषु । शेषं मायामयं सर्वम् JayāS. 12. 36; अग्निरापश्च वेदाश्च ··· विप्रस्य श्रोत्रे

तिष्ठन्ति ParāSm. 12. 21; न लङ्घ्यम्···वाय्यग्न्योर्नान्तरा गतिः BṛParāSm. 6 .267; आहिताग्निस्तु यो विप्रः शूद्रान्नान्न निवर्तते। पञ्चैतानि प्रणश्यन्ति आत्मा ब्रह्म त्रयोऽग्नयः VṛS'ātāSm. 63; सर्वादित्यैः समं पूषा पावकोऽयं सहाग्निभिः ViṣṇuP. i. 9. 63; ततोऽग्नीन् भगवान् पञ्च जित्वा ViṣṇuP. v. 33. 20; ततस्तस्या वरं प्रष्टुमग्निं स प्रमुचो मुनिः। विवेश वह्निशालाम् MārkP. 75. 29; ये पूज्याः स्युर्द्विजातीनामग्नयः सूत सर्वदा। तानिदानीं समाचक्ष्व तद्वंशं चानुपूर्वशः MatsyaP. 51. 1; दाराग्नयश्चातिथयः इष्टाः श्राद्धक्रियाः प्रजाः BrahmāṇḍP. i. 7. 174; ii. 10. 91; अग्नीनाधाय स स्वर्गे राजते सुदृढव्रतः BrahmāṇḍP. ii. 18. 2; यदग्नौ प्रहृतमात्रायां वपायामजस्तूपर उदगात् S'ābaBh. 125. 2 (*on* i. 2. 10); जातपुत्रः कृष्णकेशोऽग्नीनादधीत S'ābaBh. 169. 1 (*on* i. 3. 3); प्रिये पश्य···अत्र हि···तर्षोऽग्निः MattaVi. 9(7); तत्राग्नावरुणे ताम्रे तप्तहेमसम( ? मा )र्चिषि। ··· ध्रुवमारोग्यमादिशेत् AṣṭāSaṁ. ii. 194. 1 (6. 4); स चात्राग्निं परिक्रम्य···मुमोह BṛKathāS'loSaṁ. 22. 104; अग्नयश्च स्वकालत्वात् S'lokaVār. 1. 57 (19. 1); तथा संस्कारः संमार्गावघातादिरग्निव्रीह्यादेः TantrVā. 675. 8 (*on* iii. 1. 6); आधानेनाग्नय उत्पाद्यन्ते न त्वेतेन व्रीह्यादयः ṬupṬ. 3. 18 (*on* iv. 1. 2); 286. 13 (*on* x. 8. 16); उपकोसलो ह ··· अग्नीनां परिचरणं कृतवान् ChāndoUBh. 233.12 (*on* iv. 10. 1); अग्नेरश्वमेधक्रत्वौपयोगिकस्य अर्कत्वम् BṛĀraUBh. 21. 17 (*on* i. 2. 1); यस्मिन् हूयते हविः सः अग्निः GītāBh. (S'aṅ.) 264. 9 (*on* 9. 16); वसन्ते ब्राह्मणोऽत्राग्नीनादधीत SarvaSiSaṁ. 12. 33; कर्तारमश्वमग्निं च चित्यं सर्वं प्रजापतिम्। अश्वमेधफलं चार्कं वेत्ति मृत्युं यथोदितम् BṛĀraUBhVā. i. 1. 5; देवाः पितृगणाश्चैव ··· अग्नयस्तथा। सात्त्विकं दानमश्नन्ति VṛGautaSm. 510. 23(3); देवाग्निगिरिगोष्ठेषु नद्यां वा न श्मशानके। (बहिर्निर्गमनार्थं स्थानम्) न गृह्णीयात्कदाचन PāraS. 2. 19; निन्दा शिवशिवज्ञानगुर्वग्निशिवयज्वनाम्। ··· महासमयगर्ताः स्युरिमाः MṛgendraT. ii. 8. 170; पूर्वं गृहं यस्याग्नीनां यज्वनां तथा। ···भूमिः सर्वसाधारणा मता PañcaRā.(Ha.) i. 5. 21; अग्नौ तिष्ठति विप्राणां हृदि देवो मनीषिणाम् KulārT. 9. 44; अरणिं त्वां मथित्वाग्निमुत्पाद्य मणिनापि वा ParaS. 8. 17; आचम्य वैष्णवैः सार्धं भुञ्जीतान्यैश्च शक्तितः। अग्निर्भूत्वान्नमश्नीयात् सोमरूपमवस्थितम् ParaS. 27. 25; विप्राग्निदेवपितृषु भक्तम् ··· शिष्यमाचार्यः ज्ञापयेद्विधिवन्मन्त्रान् LakṣmīT. 21. 38; आचरेत्स्नानमाग्नेयम् ··· देवाग्निगुरुवृद्धानां समीपेऽन्त्यजदर्शने ĪśānS'iPa. i. 9. 62; अग्नीदग्नीन् विहर EI. ii. 176. 12; अग्नयश्च द्विजातीनाम् ··· समिन्धत BhāgP. x. 3. 4; अग्नयोऽतिथिशुश्रूषा यज्ञो दानं सुरार्चनम्। गृहस्थस्य समासेन धर्मोऽयं मुनिपुङ्गवाः KūrmaP. 25. 11 (1. 2); देवाग्निगुरुसाधूनां निन्दा गोब्राह्मणस्य च SkandP. i(2). 41. 55; S'ivaP. v. 6. 12 (412A. 10); अभुक्तवत्सु येऽश्नन्ति बालपित्रग्निमातृषु। ··· अधमा इमे VāmaP. 12. 12; 12. 16; अग्निहोत्रं समादाय गृह्यं चाग्निं परिच्छदम्। ग्रामादरण्यं निःसृत्य निवसेद्विजितेन्द्रियः ViṣṇuDhaP. ii. 130. 6; सर्वे देवाः ··· । विराजन्ते विमानस्था दीप्यमाना इवाग्नयः BrahmP. 39. 27; अग्नयोऽपि तथा स्थाप्या विधिवन्मनसा किल DevīBhāP. iii. 12. 45; vi. 4. 1; दीयमानं तु यो मोहाद् गोविप्राग्निसुरेषु च। निवारयति पापात्मा तिर्यग्योनिं व्रजेत सः PadmP. i. 57. 57; अग्निः ··· पूजास्थानानि वै हरेः PadmP. iv. 84. 62; iv. 90. 6; v. 14. 81; धर्मार्थेऽग्निर्ज्वलत्यसौ BṛDharmP. i. 1. 39; ये निन्दन्ति महात्मानं वाचकं धर्मदेशिकम्। देवाग्निगुरुभक्तांश्च ···आखिद्यन्ते S'ivaP. v. 10. 21 (417B. 2); वसिष्ठस्त्वग्रतो यातु सदारः सहितोऽग्निभिः AdhyāRā. i. 6. 37; पूजाग्न्यतिथिदेवानाम् ··· धर्मोऽयं गृहिणां कृतः SamarāSū. 7. 19; (नृपः) तिलान् जुहुयादग्नौ तत्प्रतीकारहेतवे YuktiKa. 206. 5; त्रेतारूपा अग्नयः आहवनीयादयः AbhinBhā. ii. 47. 15 (*on* 9. 88); विना नैवाग्निविद्याभ्यां क्रत्वनुष्ठानसंभवः S'āstrDī. 164. 9 ( *on* ii. 3. 3 ); यथा···वेदे कालो विद्या अग्निश्च NyāyRaMā. 116. 2; अग्नीनादधीतेति निर्वर्त्यकर्माभिधायिन्या द्वितीययाग्नीनां निर्वर्त्यत्वावगमात् TantrRa. 26. 12; अहमाहवनीयादिकोऽग्निः GītāBhā. (Rā.) 465. 3 ( *on* 9. 16 ); कृष्णाजिनाग्निसमिदाज्यजुहूस्त्रुवादिपात्रैस्तथेष्टिपशुसोममुखैर्मखैश्च PraboCan. 6. 13 (107. 2); यः प्रीणयति···पृ( पि )तृगोऽग्निमुख्यान्···स सुखी सदा स्यात् EI. ii. 226. 3; अग्नीनुपचरेन्नित्यं वन्यमाहारमाहरेत् S'aṅkhaSm. 6. 2; नाद्योतिष्ट तथाग्नीनाम्···यथैषामरुचत्त्रयी DvyāśraKā. 7. 24; तत्संताननिदानमग्निषु वषट्कुर्वन्तु हव्यं द्विजाः PārthPa. 61; अयागस्याग्नेः चयनस्य वा सन्निपत्योपकारिणोऽङ्गं स्यात् SaṅkarKāBh. 7. 4 (*on* i. 1. 15); यः प्राशितयवोऽग्नीनादधीत SaṅkarKāBh. 125. 21 (*on* iii. 1. 22); ससोमश्येनाग्नीन् नयति चयनान्तर्द्विजगणः EI. xix. 298. 16; अमी त्रयोऽपि स्फुटव( ब )हुवसुना यज्वनेवाग्नयस्ते EI. i. 216. 21; अग्निर्गार्हपत्यादिः SmṛtiCan. iv. 589. 10; पितृविप्रपाण्यग्नौ होमेऽपि हुतशेषभाजो विश्वेदेवा न भवन्ति SmṛtiCan. v. 335. 7; तस्यासंस्तनया-[स्त्र]यस्त्र( स्त्र )य इव ख्याताः [क्रतोर]ग्नयः EI. xviii. 46. 370; स श्रीमान् सततातताध्वरवरस्तोमाग्निधूमैर्घनान् कृत्वैतान् समयोच्चितां वितनुते विश्वप्रियां प्रावृषम् EI. xv. 353. 35; अग्निः आहितः S'rutaPra. ii. 75. 25 (*on* i. 3. 33); 'अग्नेः' अन्वाहार्यपचनादेः CaturCin. iii(1). 1121. 14; अग्न्यादित्ययोरन्योन्यतेजःसंबन्धादग्निगताहुत्या आदित्याप्यायनम् ManvaVi. 326. 13 (*on* 3. 16); अन्तरेणाग्निविद्याभ्यां कर्मानुष्ठित्यसंभवात् NyāyMāVi. 95. 1 (*on* ii. 3. 3); देवाग्निमन्त्रोक्षणादावस्ति प्रतिनिधिर्न वा NyāyMāVi. 321. 11 (*on* vi. 3. 5); अहम्···यावज्जीवं वसामि···दण्डाजिनी सविनयो बुध जुह्वदग्नौ S'aṅkaDigVi.(Mā.) 2. 16; 2. 36; स मण्डनार्यः···। आनर्च दैवोपगतान्मुनीन्द्रानग्नीनिव त्रीन् S'aṅkaDigVi.(Mā.) 8. 52; त्रयोऽग्नयः ··· त्रिषु लोकेषु विश्रुताः S'ārṅgaPa. 174; 'देवतोद्देशेन द्रव्यत्यागो यागः' स एवोद्देशोऽग्नौ प्रक्षेपणान्तो होमः Subodhi. 64. 29 (*on* 2. 135–136); हुतं नैवं यथाकालमग्नौ हव्यमृगन्ततः S'aṅkaVi.(Ā.) 7. 6; तत्रान्ते यजुर्वेदविधिनैवात्मन्यग्नीन्समारोप्य···प्रव्रज्याश्रमे मनो योजयेत् DīpKa. 81. 20 (*on* 3. 57); तत्राग्निमाधाय ततः पुरोधाः ··· । संयोजयामास वधूवरौ Nalābhyu. 5. 52; जरामर्याग्निहोत्रेऽग्निस्तदिन्धनम् AṇuBh. 285. 15 (*on* iii. 4. 24); अकृतशौचाचमनः···गोब्राह्मणाग्नीन् न स्पृशेत् ManvaMu. 171. 8 (*on* 4. 142); यथाधानसाध्यानामग्नीनां क्रत्वर्थत्वेऽपि नाधानस्य क्रत्वर्थत्वम् YuktiSneha. 7. 20 (*on* i. 1. 1); प्रचयसिद्धसमुदायेन षट्चितिकोऽग्निः सप्तसंस्थो ज्योतिष्टोम इतिवदुपपन्नत्वाच्च TristhaSe. 2. 9; तपसस्तेजसा दीप्ता हूयमाना इवाग्नयः BhāvPra.(Bhā.) 1. 42; सत्यं यूपं तपो ह्यग्निः ··· मम PurāPraSaṁ. 120. 6; उद्देश्ययोरग्न्योराधानोत्पादितयोः···सङ्ख्याविवक्षा युक्ता S'ivārkaMaDī. i. 254. 16 (*on* i. 1. 21); उपकोसलः···अग्नीन् परिचरन्नास्त S'ivārkaMaDī. i. 354. 10 (*on* i. 2. 13); अग्निं चिनुत इति चयनेनाग्निं संस्कुर्यात् VidhiRa. 2 (6. 12); तत अग्नेरुत्तरतः स्थित्वा VīraMi.(Saṁskāra.) 981. 25; अत्राग्निगोब्राह्मणानां स्पर्शे यदाचमनं विहितम् VīraMi.(Āhnika.) 102. 17; अद्य हुतं विधिवदग्निषु NīlaVi. 63. 2; अग्निविद्ययोश्च स्वजनकीभूताधानाध्ययनापेक्षत्वात् MīmāKau. ii. 26. 14 (*on* ii. 3. 4); अग्नेः परेद्युः कर्मापवर्ग एव तदपनयेन पितृयज्ञस्याग्न्यभावापत्तेः BhāṭṭCan. 14. 5 (*on* xiii. 2. 10); **2 ii** (sacrificial fire called) *gārhapatya* अयं तस्माद्गार्हपत्यो नो अग्निरुदिन्नयाति सुकृतस्य लोकम् AV. vi. 121. 2; अग्निर्मा तस्मादेनसो गार्हपत्यः प्र मुञ्चतु AV. vii. 64. 2; याम् ··· कृत्याम् ··· । अग्नौ वा त्वा गार्हपत्येऽभिचेरुः AV. x. 1. 18; xii. 2. 44; यदा गार्हपत्यमसपर्यैत्पूर्वमग्निं वधूरियम् AV. xiv. 2. 20; यो नो अग्निर्गार्हपत्यः पशूनामधिपा असत् AV. xix. 31. 2; अयमग्निर्गृहपतिर्गार्हपत्यः VājaS. 3. 39; अयं सो अग्निः VājaS. 12. 47 ( comm. अयं स गार्हपत्योऽग्निश्चीयते ); **2 iii** (sacrificial fire called) *āhavanīya* अग्नावग्निश्चरति प्रविष्टः TaiS. I. iii. 7. 2; अग्नेस्तनूरसि VājaS. 1. 15 ( comm. आहवनीयोऽत्राग्निरुच्यते ); अग्नेः प्रियं पाथोऽपीतम् VājaS. 2. 17; 3. 14; सं त्वमग्ने सूर्यस्य वर्चसागथाः VājaS. 3. 19; 3. 38; सोऽग्निमेवाभीक्षमाणो व्रतमुपैति S'atBr. I. i. 1. 2; उत्तरमग्निमनुव्रजन्नुत्तराः ĀśvaS'S. I. ii. 17. 6; अग्नावनुगतेऽन्तराहुती। हिरण्य उत्तरां जुहुयात् ĀśvaS'S. I. iii. 14. 23; अग्नये समिध्यमानायेति संप्रेषितः S'āṅkhāS'S. i. 4. 4; वेदेनाग्निं त्रिरुपवाजयति MānS'S. 19. 14; उपर्याहवनीये प्रस्तरं धारयन्नग्निं कल्पयति ĀpaS'S. ii. 9. 7; यथाहितस्याग्नेरङ्गाराः पदमभ्यववर्तेरन् ĀpaS'S. v. 14. 14; त्रिः स्त्रुचाग्निमुदञ्चमतिवल्गयति ĀpaS'S. vi. 11. 3; xvii. 16. 9; **2iv** (sacrificial fire called) *dakṣiṇāgni* or *anvāhāryapacana* अग्ने पुरीष्य VājaS. 3. 40; अग्निं प्रत्येयादग्ने तमद्याश्वं न स्तोमैरिति ĀśvaS'S. I. ii. 7. 10; सकृदाच्छिन्नमग्नौ प्रहरति ĀpaS'S. i. 10. 13; **2 v** sacrificial fire with other names and attributes अग्नेष्टे प्राणममृतादायुष्मतो वन्वे ··· । यथा न रिष्याः AV. viii. 2. 13; यो नो अग्निः पितरो हृत्स्वन्तराविवेशामृतो मर्त्येषु AV. xii. 2. 33; वैश्वानरमृताय जातमग्निम् TaiS. I. iv. 13. 1; अग्ने अङ्गिर आयुना नाम्नेहि VājaS. 5. 9; विदेरग्निर्नभो नाम TaiS. I. ii. 12. 1; विदेदग्निर्नभो नाम VājaS. 5. 9; तस्मादग्निचितः पापं न कीर्तयेन्नो अग्निं बिभ्रतः ĀpaS'S. xvi. 10. 6; उखाया अग्निमुद्धृत्य ··· अप्सु भस्म प्रवेशयति ĀpaS'S. xvi. 12. 11; **2 vi** *smārta* or domestic fire सायंसायं गृहपतिर्नो अग्निः AV. xix. 55. 3; देवानां पत्नीरग्निर्गृहपतिर्यज्ञस्य TaiS. I. vi. 4. 4; सुगृहपतिस्त्वं मयाग्ने गृहपतिना भूयाः VājaS. 2. 27; तमग्निमिन्धीत S'āṅkhāGS. i. 1. 2; अन्यतमस्मादग्निमिन्धीत S'āṅkhāGS. i. 1. 8; i. 8. 17; पश्चादग्नेः कन्यामुपवेश्यान्वारब्धायां महाव्याहृतिभिस्तिस्रो जुहोति S'āṅkhāGS. i. 12. 11; ii. 10. 2; अग्नेः समन्तात् पाणिना सोदकेन त्रिः परिमार्ष्टि KauṣīGS. i. 3. 2; अग्नेरुत्तरत उपविशतः प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरः KauṣīGS. ii. 4. 2; अग्नौ स्थालीपाकं श्रपयन्ति ĀśvaGS. i. 11. 11; इत्यग्निमीक्षमाणो जपति ĀśvaGS. ii. 3. 5; अथैनम् ··· परिस्तीर्य प्रागग्रैर्दर्भैरग्निं परिस्तृणाति BaudhGS. i. 3. 4; दर्भानद्भिस्संस्पृश्याग्नावनुप्रहरति BaudhGS. i. 3. 12; i. 4. 11; अग्निमत्रानीय तस्मिन्नाज्यभागान्तं हुत्वा सहिरण्यकांस्ये संपातानवनयेत् KāṭhGS. iii. 10. 4; पश्चादग्नेर्दर्भेषु प्राङासीनः ··· त्रिरन्वाह KāṭhGS. iv. 1. 20; v. 9. 9; अपरेणाग्निं द्वयान्दर्भान् पूर्वापरानुदगग्रान्स्तृणाति BhārGS. 1. 7 (7. 1); अग्निं उपसमाधाय भर्ता भार्यामभ्युदानयति MānGS. i. 10. 5; ii. 1. 2; कपोते गृहान् प्रविष्टे तस्याग्नौ पदं दृश्येत MānGS. ii. 17. 1; अग्नेरभ्याहितस्य···पश्चादहते वाससि कुमारं प्राक्शिरसमुत्तानं संवेश्य VārāGS. 2. 4; अग्निं मथित्वा लौकिकं वाहृत्य न्युप्योपसमादधाति HirGS. i. 1. 10; गृहस्थोऽग्निमौपासनमाधाय ··· जुहोति VaikhāGS. i. 8; प्रदक्षिणमग्निं पर्याणीयैके PāraGS. i. 5. 1; प्रदक्षिणमग्निं पर्युक्ष्योत्तिष्ठन्त्समिधमादधाति PāraGS. ii. 4. 3; अग्निः उपसमाहितो भवति GobhiGS. ii. 1. 12; भार्यादिरग्निस्तस्मिन् कर्मकरणं प्रागग्न्याधेयात् BaudhDS. ii. 2. 75; पञ्च वा एतेऽग्नयः आत्मस्थाः BaudhDS. ii. 10. 47;

भार्यादिरग्निर्दायादिर्वा GautDS. i. 5. 6; 'भार्यादिरग्निर्दायादिर्वा' इति । ··· अग्न्यर्थं स्वाधानम् । अग्निश्च कर्मार्थः । कर्माणि च भार्याद्वितीयस्य ManuBh. i. 238. 6 (*on* 3. 60); लाजाहोममभिनिर्वर्त्य त्रिः प्रदक्षिणमग्निमावर्त्य सप्तपदानि स्त्री प्रक्रम्यते ManuBh. ii. 178. 5 (*on* 8. 227); अग्नये कव्यवाहनाय स्वधा नमः ViṣṇuSm. 21. 7; अथाग्निं परिसमूह्य···जुहुयात् ViṣṇuSm. 67. 1; एत पितरः सर्वांस्तानग्न आ मे ···इत्यावाहनं कृत्वा ViṣṇuSm. 73. 12; अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव वा । स्नात्वा सचैलं स्पृष्ट्वाग्निं घृतं प्राश्य विशुद्ध्यति ParāSm. 3. 42; तमग्निमात्मसात्कृत्वा क्षिप्रं स्यादुत्तराश्रमी GobhiSm. 1. 83; (पार्वणादिश्राद्धसंबन्धिपिण्डान्) अथ वाग्नौ जलेऽपि वा प्रक्षिपेत् Aparā. 550. 14 (*on* 1. 256); अष्टभिर्मन्त्रैर्लोमादिक्रमेण गृह्योक्तविधिनाग्निमुपसमाधाय मज्जापर्यन्तां तनुं जुहुयात् DīpKa. 96. 26 (*on* 3. 247); ब्राह्मणादिभिः सायंप्रातरग्नावाहुतिः प्रक्षिप्ता सूर्यमुपतिष्ठते ManvaMu. 13. 30 (*on* 1. 31); परिवेदनम्···दाराग्न्योर्यथाक्रमं संयोगः VīraMi. 930. 13 (*on* 3. 234); **2 vii** sacred fire worshipped by the Brahmacārin प्रोषितो भैक्षादग्नौ कृत्वा भुञ्जीत ĀpaDS. i(1). 3. 42; गुर्वभावे तदपत्यवृत्तिस्तदभावे वृद्धे सब्रह्मचारिण्यग्नौ वा GautDS. i. 3. 7; हुत्वाग्निं विधिवत् ··· अभ्यसेत् LaViṣṇuSm. 2. 4; (संनिधौ वसेत्) आचार्याभावे तत्पुत्रस्य तदभाव आचार्यपत्न्यास्तदभावेऽग्नेः Aparā. 71. 6 (*on* 1. 49); आचार्याग्न्योरिच्छाविकल्पः । दोषवति चाचार्येऽग्निः BālaKrī. i. 56. 18 (*on* 1. 49); अत्र दिवादित्यं रात्रौ सोमं (ईक्षेत) तयोरभावेऽग्निमिति व्यवस्था VīraMi. 45. 10 (*on* 1. 20); **2 viii** funeral fire ये अग्निदग्धा ये अनग्निदग्धाः ṚV. x. 15. 14; शरीरमग्निना संयोज्यानवेक्षमाणा अपोऽभ्यवयन्ति VasiDS. 4. 11; चितामारुरुहुः स्त्रियः । ··· कृष्णपत्न्योऽविशन्नग्निं रुक्मिण्याद्यास्तदात्मिकाः BhāgP. xi. 31. 20; व्रज त्वं पतिना सहाग्निम् VāmaP. 72. 7; सती श्रीमाणिक्यद्रे(? देवी) अग्नौ प्रविश्य EI. x. 39. 11; भोऽ(? अ)ग्ने त्वमस्माद्दग्धव्यात् प्रेताज्जातोऽसि अयं पुनः प्रेतस्त्वत्सकाशात् पुण्यलोके जायताम् HārLa. 125. 11; स्वामिनोऽङ्गं चितामध्ये विदधेऽथ पुरन्दरः । अग्नीनग्निकुमाराश्च विचक्रुस्तत्र वेगतः MalliC. 8. 570; (सा) पत्या सहाग्नौ प्रविष्टा PurāPraSaṁ. 4. 11; जनकेन ··· अग्निना साकं संस्कारो नैव दापितः CampaS'reKa. 84; कदाचिन्मृत्युमापन्ना स्वसा मत्प्राणवल्लभा । अग्नावहं प्रवि(? वे)क्ष्यामि तस्या मोहान्महामते CampaS'reKa. 430; **2 ix** holy fire in Tantras and allied systems नवनाभं तु (मण्डलम्) ··· । दृष्टेन पूजितेनाथ तथाग्नौ कल्पितेन च । मोक्षो येन भवत्याशु PauṣkS. 1. 12; ततोऽग्नौ प्राकृतान्बन्धांस्तदीयाञ्जुहुयाद्गुरुः PauṣkS. 1. 38; पीठयन्त्रस्थण्डिलप्रकृतिशुद्धोदकाग्निवायुदिगाकाशप्रतीकेषु ··· अर्चयेदीशम् PārāSū. 42. 16; अग्निषु वायुषु दिक्षु ··· यां देवतामावाहयेत् PārāSū. 46. 26; पूजयेत् पुरुषोत्तमम् । स्थण्डिले प्रतिमायां वा जले वाग्नावथापि वा ParaS. 4. 25; अग्नौ हुत्वाखिलान्मन्त्रानावाह्य च परं प्रभुम् ParaS. 8. 9; हेमरत्नांशुकादीनां स्थानस्याग्नेः स्रुवस्य च (शुद्धिः प्रक्षालनात्) ParaS. 12. 37; 13. 32; मध्ये तथाग्निमाधाय क्रव्यादांशं परित्यजेत् TantrRā. 5. 58; 7. 81; 10. 21; ज्वलितेनानिशं मासादग्निनाग्नौ पतेद्रिपुः TantrRā. 10. 39; कृत्वा योनिं कुण्डमध्ये तत्राग्नौ विधिवद्धुनेत् TantrRā. 14. 26; तद्दशांशं हुनेदग्नौ सर्वत्राक्षरलक्षके TantrRā. 17. 20; कुम्भाग्निमण्डलशिवानां प्रदक्षिणं कारयेत् ĪśānS'iPa. ii. 16. 56(6); ii. 18. 25; ii. 22. 57; चरोः···संपातम् ···शिवाग्निगुरुशिष्याणां वार्धानीकुम्भयोः समम् MālinīT. 8. 122; देवाग्निगुरुदेवीनां पूजां कृत्वा MālinīT. 8. 131; भूमीशो निजमांसं समार्पयत् । विद्यासिद्धिनिमित्तं सा चिक्षेपाग्नौ यथाविधि MalliC. 1. 470; तस्यैवाग्नेः साक्षिकममरदत्तस्य पाणिग्रहणं बभूव KathāK. 113. 10; निर्घृणविप्रैः स वराक उत्पाट्य वह्नौ (v. l. अग्नौ) जुहुवे PrabaK. 8. 19; **2 x** (Law) fire for ordeal, oath etc. अग्निं वाहारयेदेनम् ManuSm. 8. 114; राजा सत्पुरुषः सभ्याः शास्त्रं गणकलेखकौ । हिरण्यमग्निरुदकमष्टाङ्गः (व्यवहारः) समुदाहृतः NāraSm. 9. 15; ततः परम् ··· घटाग्न्युदकविषाणामन्यतमम् ViṣṇuSm. 9. 11; न कुष्ठ्यसमर्थलोहकाराणामग्निर्देयः ViṣṇuSm. 9. 25; घटोऽग्निरुदकं चैव···। दिव्येनायाति (v. l. दिव्यान्येतानि)···निर्दिष्टानि स्वयम्भुवा BṛhaspaSm. 80. 3; तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये YājñaSm. 2. 95; अग्निर्जलं वा शूद्रस्य YājñaSm. 2. 98; मुक्त्वाग्निं मृदितव्रीहिरदग्धः शुद्धिमाप्नुयात् YājñaSm. 2. 107; अग्निर्गोवाहनदहनः ··· तस्य कूटसाक्षित्वे लिङ्गम् ManuBh. ii. 123. 22 (*on* 8. 108); सत्येनाग्निं प्रविशामि यदि न ब्राह्मणः ManuBh. ii. 126. 17 (*on* 8. 116); ज्वलन्नग्निना दीप्यमानोऽयोमयो लोहमयः ManuBh. ii. 191. 28 (*on* 8. 271); (ब्रह्महा) अग्नौ वात्मानं क्षिपेत्समिद्धे त्रिरुत्थाय पुनः पतेत् ManuBh. ii. 391. 28 (*on* 11. 72); विंशत्युत्तरत्रिशतनिष्कप्रभृत्यग्निः SmṛtiCan. iii. 235. 10; घटग्रहणमग्न्यम्बुविषाणां परिसंख्यानार्थम् SmṛtiCan. iii. 240. 2; अग्निजलविषाणां शूद्रस्य एव विकल्पोऽस्तु Subodhi. 41. 30 (*on* 2. 98); 42. 18 (*on* 2. 99); महापातकाभियोगेषु ··· अग्निं वहेयुः DīpKa. 50. 25 (*on* 2. 99); हेमाग्नी दृशौ अथ हृदित्यर्थोऽन्वयः DaṇḍaVi. 12. 16; अग्निः फालस्तप्तमाषश्च क्षत्रियस्य VīraMi. (Vyavahāra.) 178. 16; अग्निजलविषाणां श्रो(? श्रौ)तानां श्रौतशूद्रे एव विकल्पोऽस्तु BālamBha. ii. 108. 14 (*on* 2. 98); एतानि चत्वारीति । तुलाग्निजलविषाणीत्यर्थः BālamBha. ii. 109. 23 (*on* 2. 99); हेमाग्न्यम्बुस्वपुरुषाः साधनाङ्गानि वै दश S'ukrNī. 4(5). 36; शपथार्थे हिरण्याग्नी S'ukrNī. 4(5). 40; अग्निर्विषं घटस्तोयं धर्माधर्मौ च तण्डुलाः । ··· निर्दिष्टाः ··· दिव्यनिर्णये S'ukrNī. 4(5). **235;** **2 xi** fire for penance चतसृषु दिक्षु चत्वारोऽग्नयः उपरिष्टादादित्य इत्येवं पञ्चानामग्नीनां मध्ये तिष्ठेत् (वानप्रस्थः) Mitā. 363. 19 (*on* 3. 52); सूर्य उपरिष्टाद्दिक्चक्रचतुष्टये चत्वारोऽग्नयः । एषां पञ्चानामग्नीनां मध्ये ग्रीष्मे व्यवस्थितः स्यात् Aparā. 944. 1 (*on* 3. 51); **2 xii** kitchen fire, fire for cooking भोज्यमन्नं परीक्षार्थं प्रदद्यात् पूर्वमग्नये NītiSā. 7. 15; तस्मादग्निं समारोप्य जम्बालसदृशं पचेत् KulārT. 5. 13; अग्निं विना यत्कालेनैव पक्वरसास्त्रावि तदशननियमवान् वा स्यात् Aparā. 942. 21 (*on* 4. 48); अग्नौ कण्डनके चैव पेषणे तोयसंग्रहे । हिंसा सदा गृहस्थानाम् LiṅgaP. i. 78. 5; **2 xiii** fires (five in number) cf. **पञ्चाग्नि,** मितश्च संमितश्चैव तथा च शालकण्टकः । कूष्माण्डो राजश्रेष्ठास्तेऽग्नयः स्वाहासमन्विताः BhaviP. 53B. 22 (i. 23. 23); **3 i** god of fire अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ṚV. i. 189. 1; अर्चा देवायाग्नये ṚV. v. 16. 1; नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः ṚV. viii. 75. 10; अग्ने विवस्वदा भरास्मभ्यम् SV. I. i. 1. 1. 10; I. i. 2. 4. 10; भगो न चित्रो अग्निर्महोनां दधाति रत्नम् SV. I. v. 2. 2. 3; अग्ने विश्वेभिरग्निभिर्जोषि ब्रह्मसहस्कृत SV. II. vii. 1. 6. 1; अग्निः प्रियेषु धामसु···वि राजति SV. II. viii. 2. 19. 3; नि वर्तस्व पुनरग्न इषायुषा SV. II. ix. 2. 8. 2; मित्रेणाग्ने मित्रधा यतस्व AV. ii. 6. 4; iv. 4. 6; अपामग्निस्तनूभिः संविदानो य ओषधीनामधिपा बभूव AV. iv. 15. 10; ममाग्ने वर्चो विहवेष्वस्तु AV. v. 3. 1; अग्ने पृतनाषाट् पृतनाः सहस्व AV. v. 14. 8; अग्निर्वनस्पतीनामधिपतिः स मावतु AV. v. 24. 2; धाता रातिः सवितेदं जुषन्तां प्रजापतिर्निधिपतिर्नो अग्निः AV. vii. 17. 4; अथास्येतरमात्मानं देवाः प्रायच्छन्नग्नये AV. xi. 8. 31; देवो अग्निः संकसुको दिवस्पृष्ठान्यारुहत् AV. xii. 2. 12; xii. 2. 45; तं त्वा···पर्यग्निरायुषा वर्चसा दधातु AV. xiii. 1. 17; xiii. 1. 27; येनाग्निरस्या भूम्या हस्तं जग्राह दक्षिणम् AV. xiv. 1. 48; xvi. 9. 2; अग्निर्मा गोप्ता परि पातु विश्वतः AV. xvii. 1. 30; सर्वांस्तानग्न आ वह पितॄन् AV. xviii. 2. 34; देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि TaiS. I. i. 4. 2; अग्नेर्वामपन्नगृहस्य सदसि सादयामि TaiS. I. i. 13. 3; यस्त्वा स्वश्वः सुहिरण्यो अग्न उपयाति वसुमता रथेन । तस्य त्राता भवसि TaiS. I. ii. 14. 4; अयं नो अग्निर्वरिवः कृणोतु TaiS. I. iii. 4. 1; शृणोत्वग्निः समिधा हवं मे TaiS. I. iii. 13. 1; आ वो राजानमध्वरस्य रुद्रꣳ होतारꣳ सत्ययजꣳ रोदस्योः । अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् TaiS. I. iii. 14. 1; एष ते योनिरग्नये त्वा तेजस्वते TaiS. I. iv. 29. 1; ते देवाः ··· अग्नौ वामं वसु सं न्यदधत TaiS. I. v. 1. 1; सप्तसप्त वै सप्तधाग्नेः प्रियास्तनुवः TaiS. I. v. 4. 4; उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये । आरे अस्मे च शृण्वते ··· अग्निर्मूर्धा दिवः ककुत् पतिः पृथिव्या अयम् । अपाꣳ रेताꣳसि जिन्वति TaiS. I. v. 5. 1; अग्ने त्वं नो अन्तमः । उत त्राता शिवो भव वरूथ्यः TaiS. I. v. 6. 2; त्वमग्ने शोचिषा शोशुचान आ रोदसी अपृणा जायमानः··· अस्माकमग्ने मघवत्सु धारयानामि क्षत्रम् TaiS. I. v. 11. 2; अग्निर्मा दुरिष्टात पातु TaiS. I. vi. 3. 1; अग्निर्वै देवानामन्नादः TaiS. I. vi. 11. 5; अग्निर्भूतानामधिपतिः TaiS. III. iv. 5. 1; सरस्वत्यै पूष्णेऽग्नये स्वाहा VājaS. 4. 7; अग्नये त्वा रायस्पोषदे VājaS. 5. 1; स प्रथमो वरुणो मित्रो अग्निः VājaS. 7. 14; 8. 10; अग्ने ··· वर्चस्वांस्त्वं देवेष्वसि VājaS. 8. 38; अवसेऽग्निमन्वारभामहे VājaS. 9. 26; अग्निः पृथुर्धर्मणस्पतिर्जुषाणः VājaS. 10. 29; 10. 30; अन्वग्निरुषसामग्रमख्यत् VājaS. 11. 17; अग्नेऽभ्यावर्तिन्नभि मा नि वर्तस्व VājaS. 12. 7; अग्ने पुरीष्याधिपा भव त्वं नः VājaS. 12. 58; यो नो दूरे अघशꣳसो यो अन्त्यग्ने VājaS. 13. 11; आविष्कृणुष्व दैव्यान्यग्ने VājaS. 13. 13; अग्ने पथो देवयानान् कृणुध्वम् VājaS. 15. 53; अग्निर्वै देवानामवमः AitBr. 1. 1(6); अग्निर्मुखं प्रथमो देवतानाम् AitBr. 1. 4(24); 2. 1(35); ते देवाः स्वर्गं लोकं यन्तोऽग्निमूचुः KauṣīBr. 1. 1 (1. 2); 1. 2 (2. 6); स वै···जुहोत्यग्नये सायम् KauṣīBr. 2. 1 (3. 21); अथ यत् ··· अग्नीनुपतिष्ठतेऽभिवादो हैष देवतायै KauṣīBr. 2. 5 (5. 20); 3. 3 (10. 3); हृदा मतिं जनय चारुमग्नये TaiBr. I. iv. 2. 2; अग्निर्वै ब्रह्म ṢaḍviBr. i. 1. 4; अग्नेर्गायत्र्यभवत्सयुग्वा DevaBr. 2. 7; मुखमग्निः DevaBr. 4. 1; स (ब्रह्मा) ··· तेभ्यः ··· (लोकेभ्यः) त्रीन्देवान्निरमिमीताग्निम् GopBr. i. 1. 6; अथात्रैव तिष्ठन्नग्निं यथाङ्गमुपतिष्ठते S'āṅkhāĀ. 1. 5 (3. 12); स त्वमग्निꣳ स्वर्ग्यमध्येषि KāṭhU. 1. 13; अग्निमग्नीषोमाविति पौर्णमास्याम् ĀśvaS'S. I. i. 3. 9; अत्याक्रम्याश्राव्याहाग्निं यजेति BaudhS'S. i. 25. 5; उत्तरार्धपूर्वार्धेऽग्नये जुहोति ĀpaS'S. ii. 18. 4; अग्निमुपतिष्ठतः KauṣīGS. ii. 1. 28; KāṭhGS. i. 2. 1; VārāGS. 6. 16; VaikhāGS. 1. 4; PāraGS. i. 6. 2; JaimiGS. 1. 23 (24. 4); नमोऽग्नयेऽप्सुमते BaudhDS. ii. 5. 9; प्रजाभिरग्ने अमृतत्वमश्याम् BaudhDS. ii. 6. 35; पृथिवीसमं तस्य तेऽग्निरुपद्रष्टर्चस्ते महिमा BaudhDS. ii. 8. 12; अग्निः प्रजापतिः सोमो रुद्रोऽदितिर्बृहस्पतिः (नक्षत्रदेवता ह्येताः) JyotiVe. 32; **यदपि**

Vi. 258. 11; **B** digestion due to the gastric fire ज्ञात्वाग्निपाकं जठरे नरस्य देयो विधिज्ञैः क्षयरोगशान्त्यै (बलादिचूर्णप्रयोगः) HāriS. iii. 9. 44.

**अग्निपाकादनीय** (agnipākādanīya) *adj.* which is to be eaten after cooking or boiling on fire (पितॄणाम्) अत्राग्निपाकादनीयात् फलादन्यत् फलम् VīraMi.(S'rāddha.) 56. 1.

**अग्निपाकिक** (agni-pākika) *m.* gland, swelling of flesh अग्निपाकिक-रुक्माढ्या सूक्ष्मत्वक्पटसंवृता।…जरायोषित् प्रनृत्यति TaiUBhVā. 84. 1(2) (comm. अग्निपाकिकशब्देन शरीरे दृश्यमाना मांसग्रन्थयो गृह्यन्ते)

**अग्निपाक्य** (agni-pākya) *adj.* which is to be cooked on fire अग्नि-पाक्ये हविषि एकदेशक्षाणस्यावर्जनीयत्वात् BhāṭṭDi. ii. 274. 3 (*on* vi. 4. 5)

**अग्निपात** (agni-pāta) *m.* falling in fire सौरर्क्षे शुभयोर्मध्ये शशी रज्ज्वग्नि-पातजम्। कुर्यान्मृत्युम् Sārā. 46. 6.

**अग्निपात्र** (agni-pātra) *n.* **1** pan or vessel for fire (शिवस्य) अभयं शूलपाशौ च डमरुं दक्षिणे करे। कपालं चाग्निपात्रं च S'ilpaRa. ii. 22. 52; **2** an object wherein fire remains in latent form अरणिः अग्निपात्रम् Prasā. ii. 604. 2.

**अग्निपात्रसंमार्ग** (agnipātra-sammārga) *m.* ceremonial cleansing of the (sacrificial) fire and utensils न चैवम्…अग्निपात्रसम्मार्गादेर्दार्शपूर्णमासिक-स्यापि प्रसङ्गापत्तिः BhāṭṭDi. ii. 31. 15 (*on* iii. 6. 10); iv. 183. 22 (*on* xi. 3. 9)

**अग्निपादप** (agni-pādapa) *m.* name of a tree (either *citra(ka)* or *śamī* which is supposed to contain fire) शम्यां सक्तुफला लक्ष्मीः शिवा तुङ्गा-ग्निपादपः NighS'e. 254. 1961; चित्रोऽग्निपादपे S'abdaRaS'aK. 254. 4.

**अग्निपानीयव्रत** (agnipānīya-vrata) *n.* name of an observance in which one (first) throws himself into fire and (then) into water [PW]

**अग्निपाल** (agni-pāla) *m.* the *citraka* plant अग्निपालः चित्रके ApūNā. 48A. 1. cf. **अग्निपादप.**

**अग्निपिङ्गल** (agni-piṅgala) *adj.* redish brown like fire, fiery अग्नि-पिङ्गलभ्… ऊर्ध्वगं विभाति चक्षुः HarVi. 21. 39.

**अग्निपिण्ड** (agni-piṇḍa) *m.* **i** fire-ball तमसुत्र राजन् राजपुरुषा अयसयैरग्निपिण्डैः संदंशैस्त्वचि निष्कुषन्ति BhāgP. v. 26. 19; मार्तण्डः रश्मिभिः। वृतोऽग्निपिण्डसदृशो दध्रे नातिस्फुटं वपुः BrahmP. 32. 47; **ii** meteor उल्का अग्निपिण्डाः SthāṇT. 420A. 2.

**अग्निपितृ** (agni-pitṛ) *m.* (pl.) name of a class of Manes अग्निपितृभ्यः स्वधा नमः ĪśānS'iPa. ii. 15. 6(21)

**अग्निपितृकार्य** (agnipitṛ-kārya) *n.* offering of oblation in the sacri-ficial fire and libation to the Manes यश्च वैद्यम्… छिन्दन्तं भिन्दन्तमग्निपितृ-कार्यप्रवणम्…चोपतिष्ठति…तं च नानुयायात् AṣṭāSaṁ. i. 251. 18 (2. 12)

**अग्निपित्तजित्** (agnipitta-jit) *adj.* curing (*lit.* conquering the excess of) gastric fluid and bile महावल्ली…अग्निपित्तजित् BhojanKu. 85. 2.

**अग्निपिशुन** (agni-piśuna) *m.* smoke (as suggestive of fire) आका-शाध्वा च धूमोऽग्निपिशुनो ज्वलनाग्रजः ParyāMu. 22. 64.

**अग्निपीडन** (agni-pīḍana) *n.* calamity or destruction caused by fire अभ्युदकयोरग्निपीडनमप्रतिकार्यं सर्वदाहि च ArthS'ā. iii. 25. 2 (8. 4)

**अग्निपीत** (agni-pīta) *adj.* **1** accepted (*lit.* drunk) by Agni (as an offering) अग्निपीतस्येति भक्षमन्त्रं संनमति ĀpaS'S. xiii. 14. 14; VaikhāS'S. 16. 18; इन्द्राग्निभ्यां पिबद्भ्यामर्धमिन्द्रपीतमर्धमग्निपीतम् TantrVā. 811. 20 (*on* iii. 2. 40); **2** engulfed by fire अहंतया समाक्रान्तो धूमपीताग्निपीतवत्। अन्तरा वर्तमानो हि सूर्याचन्द्रमसोर्द्वयोः LakṣmiT. 40. 116 (comm. यथा धूमाग्न्योर्मध्ये वर्तमानो धूमेनाग्निना च संबद्धो भवति)

**अग्निपुच्छ** (agni-puccha) *n.* **1** extreme point (*lit.* tail) of the sacrificial fire-altar (arranged in the shape of an eagle) अग्नेः … उपतिष्ठते … पक्षम्…अपरेणाग्निपुच्छमतिक्रम्य प्राङ्मुख उत्तरम् AitĀ. V. i. 2. 5; पश्चादग्निपुच्छ-स्योपविश्याभिहिंकृत्य ĀśvaS'S. I. iv. 8. 25; I. iv. 10. 10; दक्षिणस्याः श्रोणेः पश्चादग्निपुच्छस्य वासन्त्यां कृष्णाजिनमास्तीर्य … अभिषिञ्चति MānS'S. 157. 15; **2** extinction of fire [Apte]; *adj.* [*f.* -ā] having a tail as glowing as fire, having a fiery tail अग्निपुच्छामग्निखुराम्…भुञ्जते कपिलां ये तु शूद्रा लोमेन मोहिताः। पतितांस्तान् विजानीयात् MahāBhā. xiv. App. x. 4. 1734 = VṛGauta-Sm. 567. 16(9); अग्निपुच्छा अग्निमुखी…कपिलां शूद्रान्(? शूद्रः) कामतः सदृशीं पिबेत्। पतितः स हि विज्ञेयः VarāP. 112. 14.

**अग्निपुञ्ज** (agni-puñja) *m.* mass of fire देवानामग्निपुञ्जश्च प्रदीप्तश्च सुमेरुवत् PāñcaRā.(Nā.) i. 13. 3; (देवी) व्याघ्रचर्माम्बरधरा व्यालयज्ञोपवीतिनी। वृश्चिकैरग्निपुञ्जाभैर्गोनसैश्च विभूषिता SkandP. v(3). 14. 36; अग्निपुञ्जनिभाकारा विशाला शाल्मली परा SkandP. v(3). 154. 75.

**अग्निपुत्र** (agni-putra) *m.* **1** son of Agni अग्निपुत्रैव ते KāṭhGS. 41. 17 (Devapāla अग्नेः पुत्रः ऋग्वेदः … अग्नेः पुत्रो भूलोकः); अग्निपुत्रः … केतुः स ते पीडां व्यपोहतु BhaviP. 260B. 33 (i. 175. 49); **2 i** name of Kārttikeya स्वामिने नमः शंकरायाग्निपुत्राय कृत्तिकापुत्राय नमः AVPari. 20(6). 5; अग्नेः पुत्रः (v. l. अग्निपुत्रः) कुमारः … कार्त्तिकेयः MahāBhā. i. 60. 22; पुष्पदन्तं च …। प्रददावग्निपुत्राय पार्वती MahāBhā. ix. 44. 47 = SkandP. i(2). 30. 58; अग्निपुत्रः कुमारस्तु शरस्तम्बे श्रिया वृतः HariVaṁ. 3. 36 = BrahmP. 3. 40; S'ivaP. v. 31. 28 (442A. 9); अग्निपुत्रः कुमारस्तु शरस्तम्बे व्यजायत VāyuP. ii. 5. 24 = MatsyaP. 5. 26 = AgniP. 18. 38 = PadmP. v. 6. 26; **2 ii** name of Bālakṛṣṇa identified with Kārttikeya नैगमेयोऽग्निपुत्रश्च षाण्मातुरः…इत्येतत्कथितं देवि सहस्रं नाम…विष्णोर्बालकत्वमुपेयुषः PañcaRā.(Nā.) iv. 8. 137; **2 iii** name of prince Sudarśana इध्मार्थं तु गते तस्मिन्नग्निपुत्रे सुदर्शने MahāBhā. xiii. 2. 48; **2 iv** name of a sage भरद्वाजश्च तेजस्वी अग्निपुत्रश्च Rāmā. vii. 96. 4; कृशाश्वस्याग्निपुत्रस्य भार्याः (त्वामभिषिञ्चन्तु) AgniP. 219. 7; **2 v** name of Viṣṇusena also known as Avimāraka अहो वीर्यमग्निपुत्रस्य AviMā. 4. 15(1); **2 vi** name of monkey-chief Nala अग्निपुत्रश्च बलवान् नलः परमदुर्जयः BrahmāṇḍP. ii. 7. 229; **2 vii** name of monkey-chief Nīla नीलतीर्थम्…अग्निपुत्रेण नीलेन कृतम् SkandP. iii(1). 42. 44; [*pl.*] **1** name of a group of Ṛtuketus मृगशीर्षे…अग्निपुत्रान् विनिर्दिशेत्। तेषाम्…कर्माणि…। अग्निर्दहति राष्ट्राणि…जायते भयम्। उदये ह्यग्नि-पुत्राणामेतद्भवति लक्षणम् AVPari. 55(3). 1; **2** name of a group of sages तेऽग्निपुत्रा व्रजे सत्त्वरूपतां प्राप्ताः SāmaraU. 248. 14; **3 i** name of a group of comets अग्निपुत्रा वराहसंहितायाम्। शुकवदनबन्धुयावकलाक्षाक्षतजोपमा हुताशसुताः AdbhuSāg. 159. 11; **3 ii** name of a group of comets also known as Viśvarūpa अन्यान् विश्वरूपसंज्ञानग्निपुत्रानाहाथर्वमुनिः AdbhuSāg. 159. 18.

**अग्निपुनःसंस्कार** (agni-punaḥsaṁskāra) *m.* second consecration of fire दृश्यते च प्रथमवत्सरगतार्त्यादिनिमित्तके ईदृशे एवाग्निपुनःसंस्कारे पुनर्वसु-नियमो बौधायनाद्युक्तः BālamBha. i. 72. 4 (*on* 1. 14)

**अग्निपुर** (agni-pura) *n.* **1** name of a city founded by king S'āntaśrī [PW]; MahāBhā. xiii. 26. 41 refers to a place as अग्नेः पुरम् (अग्नेः पुरे नरः स्नात्वा विशालायां कृतोदकः) **2** mystic triangle tapering upwards, supposed to be the seat of Agni त्रीण्यग्निपुररूपाणि मार्जयेद् द्वेऽथ योनिवत् PauṣkS. 15. 16; प्रथमार्णं धूम्रवर्णं वाय्वग्निपुरगं स्मरेत् ĪśānS'iPa. i. 39. 143; **3** the South-East अग्निपुरे यदा मध्याह्नेऽस्ततदेश(? ह्नेऽर्कस्तदेश)निर्ऋत्योरस्तम-योदयौ LalitāSaBh. 128. 6 (*on* 171)

**अग्निपुरतस्** (agnipura-tas) *adv.* from the city of fire (i. e. from where the fire was blazing all around) जगतां माता …। निर्जगामाग्निपुरतो वरद्वारात् प्रतापिनी BrahmāṇḍP. iii. 29. 44.

**अग्निपुरस्कृत** (agni-puraskṛta) *adj.* with Agni in front अपश्यत् स यमं तत्र देवमग्निपुरस्कृतम् Rāmā. vii. 21. 2.

**अग्निपुरःसर** (agni-puraḥsara) *adj.* **1** (along) with the (three sacred) fires उदक्प्रतस्थे स्थिरधीः सानुजोऽग्निपुरःसरः RaghuVa. 15. 98 (Vallabha त्रेताग्निसहितः); **2** accompanied by funeral fire (निर्हरेयुः सुतादयः) प्रेतमग्निपुरःसरम् GobhiSm. 3. 25; **3** headed by Agni सर्वे वागी-न्द्रा(? शा)ग्निपुरःसराः। देवर्षय ऊचुः GaṇeP. ii. 40. 2.

**अग्निपुरा** (agni-purā́) *f.* [Debru. p. 260] a stronghold of fire अग्नि-पुरामेवास्मा एतत् करोति सा हैषाग्निपुरा दीप्यमाना तिष्ठति S'atBr. VI. iii. 3. 25.

**अग्निपुराण** (agni-purāṇa) *n.* Purāṇa narrated by Agni अग्निपुराणं च रुचिरं परिकीर्तितम् BrahmVaiP. iv. 133. 15; YuktiKa. 98. 11; हरिवंशाग्नि-पुराणमत्स्यपुराणपद्मपुराणेषु AdbhuSāg. 443. 11; 657. 20; काव्यस्योपादेयत्वमग्नि-पुराणेऽप्युक्तम् SāhiDa. 5. 9; अथ गयोत्पत्तिर्गयाप्राशस्त्यनिमित्तं च वाय्वग्निपुराण-मूलकमुच्यते TristhaSe. 333. 16; 361. 11; मत्स्यपुराणे तु भागवतीयगणनातः षट्शताग्निपुराणम् … अधिकमुक्त्वा VīraMi.(Paribhāṣā.) 12. 23; (Āhnika.) 412. 9; अग्निपुराणे पञ्चरात्रपरिगणने पाशुपतादिपञ्चरात्राणि पठितानि VīraMi. 11. 14 (*on* 1. 3); अग्निपुराणे दम्भोलिपदस्य … स्त्रीलिङ्गतापि सुवचा LalitāSaBh. 153. 21 (*on* 195); अग्निपुराणं वह्निपुराणत्वेन गणितं पुराणगणनायाम् BālamBha. i. 7. 6 (*on* 1. 3)

**अग्निपुराणकोश** (agnipurāṇa-kośa) *m.* lexical portion occurring in the Agnipurāṇa (i. e. Adhyāya 347 and Adhyāyas 359 to 366) चम्पकादि-शब्दा वृक्षे शक्ता अपि तत्तत्पुष्पेष्वपि निरूढलाक्षणिकाः। द्विहीनं प्रसवे सर्वमित्यग्नि-पुराणकोशात् LalitāSaBh. 31. 24 (*on* 55); निधिर्ना शेवधिरित्यग्निपुराणकोशात LalitāSaBh. 37. 20 (*on* 71)

**अग्निपुराणानुयायिन्** (agnipurāṇānuyāyin) *adj.* follower of the Agni-purāṇa लोलश्चलसतृष्णयोरित्यग्निपुराणानुयाय्यमरः LalitāSaBh. 35. 17 (*on* 64)

**अग्निपुराणीय** (agnipurāṇ-īya) *adj.* occurring in the Agnipurāṇa शूलपाणिना त्विदमग्निपुराणीयत्वेनोक्तम् NirṇaSi. 343. 11; दध्यक्तं पिण्डत्रयं

जनार्दनहस्ते देयम्, त्रयः पिण्डा मया दत्ताः ··· इति अग्निपुराणीयमन्त्रलिङ्गात् VīraMi.(Tīrtha.) 391. 7; ललाटमलिकं गोधिरित्यग्निपुराणीयकोशात् LalitāSaBh. 32. 17 (*on* 56); 60. 21 (*on* 93); 144. 31 (*on* 186); 172. 20 (*on* 209)

**अग्निपुरोग** (agni-puroga) *adj.* headed by Agni ब्रह्मेन्द्राग्निपुरोगास्त्वां विबुधाः···बोधयन्ति Rāmā. ii. 278*(3)

**अग्निपुरोगम** (agni-purogama) *adj.* headed by the fire-god अथर्वा··· देवान् अग्निपुरोगमान्···अप्रार्थयत् BṛSarvaAnu. 1. 6 (1. 9); देवा वरं तस्मै ददुरग्निपुरोगमाः MahāBhā. iii. 139. 17; सुरसेनागणपतिम्···। अभ्यषिञ्चन्सुरगणाः समेत्याग्निपुरोगमाः Rāmā. i. 36. 30; i. 48. 1; अचोदयद् ब्रह्मा निग्रहार्थं सुरद्विषाम् । ··· साध्यांश्च देवांश्चाग्निपुरोगमान् HariVaṁ. 43. 68; देवाश्चाग्निपुरोगमाः । पप्रच्छुर्धिषणम् SkandP. ii(7). 23. 23; iii(1). 38. 76; BrahmP. 42. 37; PadmP. ii. 56. 10; SaurP. 49. 8.

**अग्निपुष्प** (agni-puṣpa) *adj.* [*f.* -ā] (a cow) with fiery red marks on hooves and teeth (आशा) अग्निपुष्पा अग्निलोमा तथान्या चानलप्रभा । तामाग्नेय्यां सदा दद्यात् BhaviP. 843A. 8 (iv. 161. 35)

**अग्निपुष्पिका** (agni-puṣpikā) *f.* name of a plant धातक्यां तु धातुपुष्पा वह्निपुष्प्यग्निपुष्पिका NighS'e. 2037; KośaKaTa. 1. 4055.

**अग्निपूजन** (agni-pūjana) *n.* worship of Agni एकोद्दिष्टे विशेषेण प्रागेव ह्यग्निपूजनम् BṛParāSm. 7. 84; NīlaP. 804; BrahmP. 99. 2.

**अग्निपूजा** (agni-pūjā) *f.* worship of Agni सायमेवाग्निपूजेत्येके HirS'S. xxvi. 1. 136 = ĀpaDS. i(1). 4. 17; अग्निपूजा च नित्या यथा गृहमेधे HirS'S. xxvii. 5. 185 = ĀpaDS. ii(10). 25. 7; बलिहोमस्वस्तिवाचनैः पर्वसु चाग्निपूजाः कारयेत् ArthS'ā. ii. 129. 6 (4. 3); गुरुदेवाग्निपूजाश्च भक्षयन्वर्जयेद्बुधः KāśyaS. 179A. 38; सूर्ये एकाकी सन्नग्निपूजया तृप्यति ṬupṬ. 186. 22 (*on* ix. 1. 9); अग्निपूजां वै कुर्यात् LiṅgaP. ii. 49. 3; PadmP. i. 31. 50; अग्नीन्धनमग्निपूजा Smṛti-Can. i. 86. 3; VīraMi.(Pūjā.) 272. 16.

**अग्निपूजापर** (agnipūjā-para) *adj.* intent on the worship of Agni अग्निपूजापरा नित्यम्···स्वर्गस्य भागिनः S'ivaP. i. 13. 85 (13A. 12)

**अग्निपूजारत** (agnipūjā-rata) *adj.* devoted to the worship of Agni अग्निपूजारता नित्यं ते विप्राः स्वर्गगामिनः PadmP. i. 31. 43.

**अग्निपूत** (agni-pūta) *adj.* purified by fire सर्वेभ्यो मृन्मयं श्रेष्ठमग्निपूतजलाप्लुतम् (पाकपात्रम्) PrajāSm. 112; य इदमथर्वशिरो ब्राह्मणोऽधीते···सोऽग्निपूतो भवति AS'iraU. 7; KaivaU. 24; NṛsiṁPūTāU. 5. 1(3); RāmRaU. 5. 17.

**अग्निपूर्ण** (agni-pūrṇa) *adj.* [*f.*-ā] filled with fire अग्निपूर्णानि पात्राणि ···भिषङ् मुमूर्षतां वेश्म प्रविशन्नेव पश्यति CaraS. v. 12. 34; (कपिला) अग्निपूर्णा ···अग्निपृष्ठा SkandP. v(3). 39. 7.

**अग्निपूर्णपात्र** (agnipūrṇa-pātra) *n.* pot filled with fire दृष्ट्वाग्निपूर्णपात्रं च···कुसुमानि च।···वाहानां हेषितं शुभम् AśvaVai. 3. 126.

**अग्निपूर्णिमा** (agni-pūrṇimā) *f.* full-moon day in the month of Māgha माघी स्यादग्निपूर्णिमा Vaija. 23. 74.

**अग्निपूर्वत्व** (agnipūrva-tva) *n.* the state of being preceded by fire धूमेऽग्निपूर्वत्वगतिः PramāVāBh. 58. 25.

**अग्निपृथक्त्व** (agni-pṛthaktva) *n.* separateness of (sacred) fires प्रत्यग्नि दाह्यद्रव्यपृथक्त्वात् अग्निपृथक्त्वात् असंसर्गस्य विधित्सितत्वात् प्रत्यग्नि अरणिभेदः SaṅkarKāBh. 148. 17 (*on* iii. 2. 62)

**अग्निपृष्ठ** (agni-pṛṣṭha) *adj.* [*f.* -ā] with a firey back कपिला तावत्कुण्डात्समुत्थिता।···अग्निपृष्ठा SkandP. v(3). 39. 8.

**अग्निपैङ्गल्य** (agni-paiṅgalya) *n.* tawniness of fire सामान्यादेरग्निपैङ्गल्यवद्वहिरङ्गत्वात् PrakaVi. 13. 20.

**अग्निप्रकम्पित** (agni-prakampita) *n.* one of the four kinds of tremors of the earth, a kind of earthquake (shaken by fire) प्रकम्पितायां भूमौ ··· दिशः सर्वा भवेयुश्च सूर्योदयसमप्रभाः । यदेतल्लक्षणोपेतं विद्यादग्निप्रकम्पितम् AV-Pari. 62(1). 5.

**अग्निप्रकरण** (agni-prakaraṇa) *n.* the section dealing with the fire-altar अग्निप्रकरणे श्रूयमाणोऽग्नेर्धर्मो गम्यते यागः S'ābaBh. 1263. 8 (*on* iv. 3. 31); 1534. 7 (*on* vii. 1. 12); अग्निप्रकरणे यत्सप्तदशवतीमुपदधाति TantrVā. 151. 4 (*on* i. 3. 8); तदाहुः किं तदसदासीत् ··· स योऽयं पुरुषः प्राण एष एवेन्द्र इत्यग्निप्रकरण( ? णे) वाजिनां प्रागुत्पत्तेः प्राणसद्भावश्रवणात् BrahmSūBh.(Bhā.) 144. 5 (*on* ii. 4. 1); 145. 7 (*on* ii. 4. 2); अग्निप्रकरणे समाम्नाता इष्टकाधर्माः S'āstrDī. 309. 15 (*on* iii. 6. 12); S'rutaPra. iB. 300. 13 (*on* i. 2. 9); VidhiRa. 2 (8. 5); S'ivārkaMaDī. i. 48. 3 (*on* i. 1. 1); i. 58. 31 (*on* i. 1. 1); गुर्वनुगमनादीनामग्निप्रकरणेऽश्वमनु गर्दभं यन्ति इति विधेः BhāṭṭCin. ii. 17. 17 (*on* i. 3. 2); BhāṭṭDī. iii. 250. 14 (*on* x. 3. 4); MīmāKau. ii. 128. 11 (*on* ii. 4. 26); iii(1). 59. 13 (*on* i. 2. 33); MayūMāli. 782. 14 (*on* x. 8. 11); 784. 3 (*on* x. 8. 11); BhāṭṭCan. 66. 7 (*on* xiv. 4. 2)

**अग्निप्रकरणाम्नातत्व** (agniprakaraṇāmnāta-tva) *n.* the state of being mentioned in the section relating to the rite of Agnicayana (the rite of laying the bricks for the fire-altar) लोकंपृणाया अग्निप्रकरणाम्नातत्वेन प्राकरणिकेष्टकान्तरैः क्रमक्रमत्वात् MayūMāli. 433. 2 (*on* v. 3. 8)

**अग्निप्रकरणाम्नान** (agniprakaraṇāmnāna) *n.* mention in the section relating to the rite of Agnicayana (the rite of laying the bricks for the fire-altar) मन्त्रस्य विनियोगविधितेनाश्चाभिधानीग्रहणसंबन्धमात्रेण तस्याग्निप्रकरणाम्नानं चरितार्थम् VidhiRa. 26 (135. 8)

**अग्निप्रकाश** (agni-prakāśa) *adj.* having the brilliance of fire अग्निप्रवेशं यश्चापि कुरुते मद्गतात्मना । स यात्यग्निप्रकाशेन विमानेन यमालयम् MahāBhā. xiv. App. I. 4. (816); VṛGautaSm. 529. 12(5)

**अग्निप्रकाशक** (agni-prakāśaka) *adj.* which is indicative of fire-god अयं मन्त्रः स्वसामर्थ्येनाग्निप्रकाशकः ṬupṬ. 185. 1 (*on* ix. 1. 4); अयं हि ··· अग्निप्रकाशक इत्यविवादम् MīmāKau. iii(1). 97. 8 (*on* i. 2. 48); ii. 212. 8 (*on* iii. 1. 23)

**अग्निप्रकाशकत्व** (agniprakāśaka-tva) *n.* the state of being indicative of the fire-god लिङ्गेनेति तासामग्निप्रकाशकत्वादिति भावः MayūMāli. 201. 3 (*on* iii. 1. 11)

**अग्निप्रकाशकमन्त्र** (agniprakāśaka-mantra) *m.* a *mantra* or vedic statement which refers to fire-god अत एवाग्निप्रकाशकमन्त्रेणाग्निप्रकाशनानन्तरं अग्नय इति···हविस्त्यागो न पर्यायान्तरेण TattvCin. iv(2). 519. 1; आग्नेयशब्दस्याग्निप्रकाशकमन्त्रपरत्वाश्रयणेन साक्षादेव तद्विशेषणविधिः संभवति MayūMāli. 709. 20 (*on* x. 4. 16); केनप्रकारेणेति प्रकारचिन्तायामग्निप्रकाशकमन्त्रमध्ये तद्धितप्रत्ययान्ततया तत्प्रकार उक्तः VīraMi.(Saṁskāra.) 601. 10; 602. 23.

**अग्निप्रकाशकमन्त्रान्तर** (agniprakāśaka-mantrāntara) *n.* another *mantra* which refers to the fire-god अग्निप्रकाशकमन्त्रान्तराणां न्यायादेव प्राप्तेः MīmāKau. iii(2). 98. 20 (*on* ii. 1. 26)

**अग्निप्रकाशन** (agni-prakāśana) *n.* expression of the fire-god न खल्विन्द्राभिधानस्य मन्त्रस्याग्निप्रकाशने। शक्तिरस्ति S'āstrDī. 211. 13 (*on* iii. 2. 2); इन्द्रप्रकाशेन चाग्निप्रकाशनरूपकार्यसिद्धेरभावात् BhāṭṭDī. iv. 250. 23 (*on* xii. 2. 7); इन्द्रप्रकाशनेनाग्निप्रकाशनरूपोपकारालाभेन नात्र प्रसङ्गस्य प्रसक्तिः LaCandr. 359. 35; इन्द्रप्रकाशनेनाग्निप्रकाशनरूपोपकारासिद्धेः GuruCandr. i. 277. 22; तेषामग्निप्रकाशनमात्रेण देवताप्रकाशनार्थत्वस्य वक्तव्यत्वाच्च MayūMāli. 111. 13 (*on* ii. 1. 5)

**अग्निप्रकाशनलिङ्ग** (agniprakāśana-liṅga) *n.* indication which reveals the fire-god अग्निप्रकाशनलिङ्गात्क्रमसहकृतात्तदीये सामिधेनीकार्ये निवेश इति MīmāKau. ii. 361. 1 (*on* iii. 3. 14)

**अग्निप्रकाशनानन्तरम्** (agniprakāśanānantaram) *adv.* after revealing or indicating the fire-god अग्निप्रकाशनानन्तरमग्नय इति···हविस्त्यागो न पर्यायान्तरेण TattvCin. iv(2). 519. 1.

**अग्निप्रकाशनार्थ** (agniprakāśanārtha) *adj.* having the purpose of revealing or referring to the fire-god अग्निप्रकाशनार्थसामिधेनीमन्त्रलिङ्गात्प्रवरविधायकब्राह्मणेभ्यश्चायमर्थोऽवगम्यते VīraMi.(Saṁskāra.) 601. 13.

**अग्निप्रकाशाक्ष** (agniprakāśākṣa) *adj.* whose eyes are shining like fire, having eyes lustrous like fire जलक्रीडासु रुचिरं वाराहं रूपमस्मरत् ··· विद्युदग्निप्रकाशाक्षम् VāyuP. i. 6. 13.

**अग्निप्रकृति** (agni-prakṛti) *adj.* having a bilious nature or constitution एते ह्यग्निप्रकृतयः SuśruS. v. 8. 11; *f.* fiery disposition अग्निप्रकृत्या चपलोऽतितीक्ष्णश्चण्डः क्षुधालुर्बहुभोजनश्च BṛSaṁ. 68. 110.

**अग्निप्रकृतिक** (agniprakṛti-ka) *adj.* [*f.* -ā] having fire for its source or cause अत्रापि अग्निप्रकृतिका धूमधार्मिणी उत्पत्तिः स्फुटैव Bhāsk. ii. 174. 11 (*on* ii. 4. 11)

**अग्निप्रकोपन** (agni-prakopana) *n.* excitement of the digestive faculty इति प्रोक्तं निदानं च नरस्याग्निप्रकोपनम् HārīS. iii. 6. 14.

**अग्निप्रक्षेप** (agni-prakṣepa) *m.* 1 throwing into fire यद्द्रव्यं यावन्तमग्निप्रक्षेपं सहते यावताग्निप्रक्षेपेण न नश्यति तावन्तं कुर्यादित्यर्थः Aparā. 256. 10 (*on* 1. 183); 2 offering (an oblation) into fire अग्निप्रक्षेपतत्त्यागयोरुभयोरपि सहितयोर्होमत्वेन एकांशेऽध्वर्युकर्तृकत्वेऽपि अन्यांशे यजमानकर्तृकत्वेन होमं करिष्ये इत्यमिलापसंभवात् VīraMi.(Tīrtha.) 61. 8; इन्द्राय स्वाहा तुभ्यं स्वधेत्यादौ अग्निप्रक्षेपोपहितदेवोद्देश्यकत्यागबोधकस्वाहापदवित्तुद्देश्यकत्यागबोधकस्वधापदयोरपि नमःपदवद्देशनादेशितोच्चारणकर्तृत्वोपलक्षितपुरुषीयत्यागवाचकता VyutpaVā. 174. 20.

**अग्निप्रक्षेपक** (agni-prakṣepaka) *m.* one who sets fire to (some-

thing), an incendiary सस्यपूर्णक्षेत्रभाण्डागारादौ द्वेषेणाग्निप्रक्षेपकाणाम् VīraMi. 504. 18 (*on* 2. 74)

**अग्निप्रख्य** (agni-prakhya) *adj.* resembling fire, which is just like fire भवन्तमभिद्रुतः स किल निगिलन्नग्निप्रख्यं पुनर्द्रुतमुद्वमन् । दलयितुमगात् Nāray. x. 50. 8.

**अग्निप्रज्वालन** (agni-prajvālana) *adj.* which causes inflammation of fire मण्डूकवसासिद्धेन पयसा कुलीरादीनां वसया समभागं तैलं सिद्धमभ्यङ्गो गात्राणामग्निप्रज्वालनम् ArthS'ā. iii. 225. 1 (14. 2); *n.* enkindling of fire दर्भद्वयं गृह्याग्निप्रज्वालनं घृतं त्रिधा वर्तयेत् LiṅgaP. ii. 25. 84.

**अग्निप्रणयन** (agni-praṇayana) *n.* **1 A** the rite of carrying forward the fire (from the Gārhapatya fire to the place where the Āhavanīya is to be set up) उक्तमग्निप्रणयनम् ĀśvaS'S. I. iii. 1. 7; I. iii. 13. 3; I. iv. 8. 29; II. vi. 4. 10; II. vi. 4. 13; अग्निप्रणयनमप्रवर्ग्ये S'āṅkhāS'S. v. 12. 1; MānS'S. 117. 5; 175. 16; एतत्कर्माग्निप्रणयनेषु सर्वेषु LāṭyāS'S. v. 1. 7; अग्निप्रणयनं कृत्वा तस्यामावाहयेत्सुरान् MatsyaP. 93. 9; तत्र लक्षणोल्लेखनाग्निप्रणयनपरिसमूहनपर्युक्षणब्रह्मप्रणीतास्तरणाज्योत्पवनाघाराज्याभागाग्निहोमान् कृत्वा KāśyaS. 57B. 2; बलिशेषस्य हवनमग्निप्रणयनं तथा GobhiSm. 3. 139; यत्र आद्येष्टावेवाग्निप्रणयनं कृतम् BhāṭṭDī. iv. 248. 14 (*on* xii. 2. 5); प्रातरग्निहोत्रं हुत्वादधातीत्यग्निप्रणयनं पिण्डपितृयज्ञार्थं आहोस्वित् दर्शार्थमिति SaṅkarKāBh. 19. 9 (*on* i. 2. 20); सौमिकं यत्सधर्मकमग्निप्रणयनं तदेव ग्रहीतव्यम् NyāyMāVi. 385. 23 (*on* vii. 3. 8); सोमे सधर्मकमग्निप्रणयनमस्ति Subodhi. 67. 14 (*on* 2. 136); अग्निप्रणयनं तयोरेव UpaParā. 28. 9; सधर्मकं यत् सौमिकमग्निप्रणयनम् LaCandr. 425. 21; अग्निप्रणयनसोमराजप्रणयनयोः साहित्यस्य चानुरोधेन शालामुखीयसमीपवर्त्तिसोमलताया इव तदन्तर्वर्त्तिन एवाग्नेः प्रणयनम् BhāṭṭCan. 81. 12 (*on* xv. 2. 14); सोमे सधर्मकमग्निप्रणयनम्…अग्निप्रणयनं नाम गार्हपत्यादाहवनीयादिष्वग्निनयनम् BālamBha. ii. 198. 3 (*on* 2. 135); **1 B** (in the Soma sacrifice) the act of bringing or carrying forward the fire from the Āhavanīya at the Prācīnavaṁśa to the Uttaravedī प्राचीनवंशगत आहवनीयेऽवस्थितस्याग्नेः सौमिक्यामुत्तरवेद्यां नयनं यदस्ति तदेतदत्राग्निप्रणयनम् Sāy. *on* AitBr. 5. 2(115); स एव…अग्निप्रणयनादूर्ध्वं गार्हपत्यकार्ये विनियुक्तः BhāṭṭDī. iv. 226. 13 (*on* xii. 1. 6); **2** the sacred fuel stick (*samidh*) used for carrying forward the fire (from the Gārhapatya to the place where the Āhavanīya is fo be set up) गार्हपत्येऽग्निप्रणयनान्याधाय MānS'S. 32. 2; 32. 6; 44. 7; 44. 12; 69. 7; VārāS'S. I. iv. 3. 8.

**अग्निप्रणयनकाल** (agnipraṇayana-kāla) *m.* the time for carrying forward the fire वरुणप्रघासेष्वग्निप्रणयनकाले पश्चादाहवनीयस्योपविशति MānS'S. 117. 5.

**अग्निप्रणयनक्रिया** (agnipraṇayana-kriyā) *f.* the rite of carrying forward the fire (from Gārhapatya to the Āhavanīya) दर्शकर्मार्थम्…अग्निप्रणयनक्रिया Bhām. 593. 8 (*on* iii. 3. 7)

**अग्निप्रणयनभूमि** (agnipraṇayana-bhūmi) *f.* the place to which the sacred fire is carried forward वेदिका अग्निप्रणयनभूमिः HārLa. 138. 3.

**अग्निप्रणयनमन्त्र** (agnipraṇayana-mantra) *m.* the chant used for carrying forward fire अग्निप्रणयनमन्त्रैः प्राजापत्यं प्रणीय AVPari. xxxvii. 11. 1.

**अग्निप्रणयनविधायक** (agnipraṇayana-vidhāyaka) *adj.* (the statement) which enjoins the rite of carrying the fire (from the Gārhapatya to the place where the Āhavanīya is to be set up) आद्यं द्वयोश्चातुर्मास्यपर्वणोरग्निप्रणयनविधायकम् BālamBha. ii. 198. 7 (*on* 2. 135)

**अग्निप्रणयनविधि** (agnipraṇayana-vidhi) *m.* the injunction relating to carrying the fire (from the Gārhapatya to the place of the Āhavanīya) अग्निप्रणयनविधावुद्देश्ययोः पर्वणोरस्ति…संदेहः UpaParā. 27. 4.

**अग्निप्रणयनादि** (agnipraṇayanādi) *adj.* commencing with the rite of carrying the fire (from the Gārhapatya to the Āhavanīya) अग्निप्रणयनादि पाशुकं कर्म ĀpaS'S'. xix. 13. 1; अग्निप्रणयनादयो हृदयशूलान्ताः पशवोऽग्नीषोमीयसवनीयौ परिहाप्य S'āṅkhāS'S. vi. 1. 21.

**अग्निप्रणयनादिक** (agnipraṇayanādi-ka) *adj.* [*f.* -ā] commencing with the rite of carrying the fire (from the Gārhapatya to the Āhavanīya) अतोऽग्निप्रणयनादिकैवाग्निहोत्रेतिकर्तव्यतेत्युच्यते TantrVā. 553. 5 (*on* ii. 2. 26)

**अग्निप्रणयनादिधर्म** (agnipraṇayanādi-dharma) *m.* the accessory ritual commencing with the rite of carrying the fire (from the Gārhapatya to the Āhavanīya) अग्निप्रणयनादिधर्मा( ? र्मो )त्सादनादि वौपवसथिकं कर्म कृत्वा श्वोभूते प्रसुनुयुः ĀśvaS'S. II. vi. 4. 10.

**अग्निप्रणयनीय** (agnipraṇayan-īya) *adj.* [*f.* -ā] **A** (verses) which are associated with (i. e. which are recited during) the rite of carrying the fire (from the Āhavanīya to the Uttaravedi) पश्चाद्दार्शपौर्णमासिकाया वेदेरुपविश्य प्रेषितोऽग्निप्रणयनीयाः प्रतिपद्यते ĀśvaS'S. I. ii. 17. 2; I. iv. 1. 26; प्र देवं देव्येति तिसृणामासीनः प्रथमाम् । … इत्यग्निप्रणयनीयाः S'āṅkhāS'S. iii. 14. 13; यथा सामिधेन्यस्तथाग्निप्रणयनीयाः MānS'S. 132. 3; अग्निप्रणयनीया ऋचः समापयेत् Sāy. *on* AitBr. 5. 2(122); **B** (sticks) which are associated with the rite of carrying the fire गार्हपत्येऽग्निप्रणयनीयानादीप्य VaikhāS'S. 1. 12; 10. 5.

**अग्निप्रणयनोत्तरकालीन** (agnipraṇayanottarakāl-īna) *adj.* belonging to the time subsequent to the rite of carrying the fire शालामुखीयस्य प्रकृतावग्निप्रणयनोत्तरकालीनयज्ञभागधर्मत्वेन प्रधानाश्रितत्वात् BhāṭṭDī. iv. 226. 23 (*on* xii. 1. 6)

**अग्निप्रणाडी** (agni-praṇāḍī) *f.* fire as means or channel अनारभ्याधीतं पर्णमयीत्वं यथा जुहूप्रना( ? णा )ड्या प्रकृतौ निविष्टम्, तथैवाग्निप्रना( ? णा )ड्या तत्संस्काररूपमाधानं प्रकृतौ निविशते इति चेत् NyāyMāVi. 182. 5 (*on* iii. 6. 5)

**अग्निप्रणाम** (agni-praṇāma) *m.* homage to Agni उदायुषेत्यग्निप्रणामं कुर्यादित्येके VaikhāGS. 3. 3.

**अग्निप्रणिधान** (agni-praṇidhāna) *n.* cauterization भिषजाग्निप्रणिधानं क्रियमाणं यथातुरकालमप्रदोषं भवति Hastyāyur. 330. 8 (2. 70); 454. 8 (3. 10)

**अग्निप्रणिधि** (agni-praṇidhi) *m.* cauterization यन्त्रोपकरणान्यत्र यथोक्तान्युपकल्पयेत् । प्रतिकर्मविधिप्रोक्तं शस्त्राग्निप्रणिधौ च यत् Hastyāyur. 485. 23 (3. 16)

**अग्निप्रतपन** (agni-pratapana) *n.* fomentation पुष्टस्याग्निप्रतपनं कार्यमुष्णं तथौषधम् SuśruS. i. 12. 20; तुच्छदग्धेऽग्निप्रतपनम् AṣṭāSaṁ. i. 75. 5 (1. 12); i. 194. 10 (1. 40); AṣṭāHṛ. i. 30. 49.

**अग्निप्रताप** (agni-pratāpa) *m.* **A** fomentation साध्यासु (विसूचिकासु) पाष्ण्योर्दहनम् प्रशस्तमग्निप्रतापो वमनं च तीक्ष्णम् SuśruS. vi. 56. 12; **B** heat of fire किमग्निप्रतापसंपर्कात् घृतकाठिन्यप्रविलय इव प्रपञ्चप्रविलयः कर्तव्यः BrahmSūBh.(S'aṅ.) 593. 2 (*on* iii. 2. 21)

**अग्निप्रतापित** (agni-pratāpita) *adj.* heated with fire बद्धाङ्घ्रयस्ते निगडैर्लौहैरग्निप्रतापितैः MārkP. 14. 60.

**अग्निप्रतिपत्ति** (agni-pratipatti) *f.* (inferential) cognition of fire अग्निप्रतिपत्तिवद् धूमेनोदकप्रतिपत्तिरपि भवतु NyāyBh. 183. 2 (*on* iii. 1. 51); यथा धूमं गृहीत्वाग्निप्रतिपत्तिरेवमेकदेशं गृहीत्वा वृक्षप्रतिपत्तिरिति NyāyVār. 210. 3 (*on* ii. 1. 28); 387. 19 (*on* iii. 1. 50); SaṅkarKāBh. 214. 5 (*on* iv. 3. 31); मिथ्याधूमगृहीतादिव बाष्पादग्निप्रतिपत्तिः PrakaVi. 422. 23.

**अग्निप्रतिपादक** (agni-pratipādaka) *adj.* leading to (inferential) knowledge of fire न च धूममात्रमग्निप्रतिपादकं धूममात्रे वायं पश्यति NyāyVār. 53. 1 (*on* i. 1. 5)

**अग्निप्रतिपादकत्व** (agnipratipādaka-tva) *n.* capacity of producing knowledge of Agni शतरुद्रीयस्याग्निप्रतिपादकत्वकल्पनमयुक्तम् S'ivārkaMaDī. i. 580. 7 (*on* i. 4. 29); समिदादिपदस्याग्निप्रतिपादकत्वाभावात् BhāṭṭaDī. iii. 137. 19 (*on* ix. 2. 19)

**अग्निप्रतिभास** (agni-pratibhāsa) *m.* appearance of fire अग्निप्रतिभासजननयोग्यवासनासनाथच्चित्तसंतानादग्निप्रतिभासः PramāVāBh. 415. 29.

**अग्निप्रतिम** (agni-pratima) *m.* **i** bright or dazzling like fire कुमारमग्निप्रतिमं गणेशम्…ददर्श KūrmP. 272. 5; **ii** tormenting or burning like fire अहं त्वकाले वनसंश्रयान्ते शोकाग्निनाग्निप्रतिमेन दह्ये BuddhaC. 9. 14.

**अग्निप्रतिलम्भ** (agni-pratilambha) *m.* acquisition of fire तं (बाष्पम्) कश्चिद्धूमं मत्वास्याधस्तादग्निरस्तीत्यभिमन्यमानोऽग्न्यर्थी तदाजिहीर्षया यतमानोऽग्निप्रतिलम्भान्न विसंवादमृच्छति NyāyRaMā. 94. 25.

**अग्निप्रतिषेध** (agni-pratiṣedha) *m.* prevention of fire, precautionary measures against fire नागरिकप्रणिधावग्निप्रतिषेधो व्याख्यातः ArthS'ā. ii. 129. 4 (4. 3)

**अग्निप्रतिष्ठा** (agni-pratiṣṭhā) *f.* establishment or installation of fire अग्निप्रतिष्ठां कृत्वा प्रतिमास्थं देवम्…अग्नावावाह्य पूजयित्वा VīraMi.(Pūjā.) 138. 4; VīraMi.(Rājanīti.) 391. 24.

**अग्निप्रतिष्ठान** (agni-pratiṣṭhāna) *adj.* which establishes the fire अग्निप्रतिष्ठानो ह्यग्निष्टोमः KāṭhS. 14. 9.

**अग्निप्रतिष्ठापन** (agni-pratiṣṭhāpana) *n.* the rite of installation or consecration of the (sacred) fire चरवश्च प्रतिदैवतमग्निप्रतिष्ठापनान्वाधानादिपूर्वकम्…कार्याः Mitā. 104. 26 (*on* 1. 299)

**अग्निप्रतिष्ठित** (agni-pratiṣṭhita) *adj.* installed or consecrated by the fire-god अग्निप्रतिष्ठितं लिङ्गं तत्रास्तेऽनेकवर्णवत् BrahmP. 98. 22.

**अग्निप्रतीकार** (agni-pratīkāra) *m.* steps against (an outbreak of) fire अग्निप्रतीकारं च ग्रीष्मे मध्यमयोरह्नश्चतुर्भागयोः ArthS'ā. i. 352. 8. (2. 36)

**अग्निप्रतीति** ( agni-pratīti ) *f.* perception of fire धूमादग्निप्रतीतिश्च न चायं नियमः स्थितः S'ivDr. 5. 58; आशुभाविन्यामग्निप्रतीतौ क्रमो न लक्ष्यते Loc. 185. 23 (*on* 3. 33)

**अग्निप्रत्यक्ष** ( agni-pratyakṣa ) *n.* direct perception of fire अग्निप्रत्यक्षेण हि धूमे न किंचित् उद्व्यूढम् PratyabhiVi. i. 359. 8 (*on* i. 7. 4); Bhāsk. 359. 17 (*on* i. 7. 4)

**अग्निप्रत्यभिज्ञान** ( agni-pratyabhijñāna ) *n.* recognition of fire अग्निकार्ये धूमेऽग्निप्रत्यभिज्ञानं न दृश्यत इति चेद्भवतु न तत्र प्रत्यभिज्ञानम् । तथापि न दोषः । अग्नेर्निमित्तकारणमात्रत्वात् BrahmSūBh.( Rā. ) 449. 14 (*on* ii. 1. 16)

**अग्निप्रत्यय** ( agni-pratyaya ) *m.* cognition of fire यश्च धूमप्रत्ययेनैव कृतार्थो भवति नासावग्निप्रत्ययमाद्रियते S'ābaBh. 1616. 14 (*on* viii. 3. 7); अग्निप्रत्ययेन यात्र देवता सा प्रतीयते S'ābaBh. 1939. 2 (*on* x. 4. 42)

**अग्निप्रत्यागतप्राण** ( agnipratyāgata-prāṇa ) *adj.* whose life was revived by fire लुब्धः … । अग्निप्रत्यागतप्राणस्ततः प्राह विहंगमम् MahāBhā. xii. 142. 32.

**अग्निप्रथम** ( agni-prathama ) *adj.* having Agni (fire) in the forefront अथाग्निप्रथमाः प्रतिपद्यन्ते BaudhS'S. ii. 26. 12; अग्निप्रथमाः सोमप्रथमा वा प्राञ्चोऽभिप्रव्रजन्ति ĀpaS'S. xi. 17. 3.

**अग्निप्रद** ( agni-prada ) *adj.* **1** who enkindles the ( funeral ) fire, who performs cremation पाशच्छेत्ता तु यस्तस्य वोढा वाग्निप्रदस्तथा । सोऽतिकृच्छ्रेण शुद्ध्येत्तु BṛhaspaSm. 385. 85; **2** kindler of digestive fire, appetiser, तक्रम्…अग्निप्रदं श्लेष्मविनाशनं च KalyāKā. 5. 28; BhāvPra.( Bhā. ) 5. 236; 6( 5 ). 64; **3 A** who offers fire ग्रीष्मे वारिप्रदा ये च शीते चाग्निप्रदा नराः BrahmP. 214. 112; **3 B** causing or indicating (the danger of) conflagration आषाढद्वयमूलेन्द्रधिष्ण्यानां याम्यगः शशी । अग्निप्रदः NāraS. 2( 2 ). 4.

**अग्निप्रदक्षिण** ( agni-pradakṣina ) *n.* circumambulation of the sacred fire ( keeping it to the right ) उपनयनमादित्यदर्शनमग्निप्रदक्षिणं परीत्य ManuBh. i.509. 17 (*on* 6. 36); अग्निप्रदक्षिणे ताम्रं तदा पद्मावतीमुखम् KathāSaSāg. iii. 2. 81; बभौ किमपि तापाच्च धूमाच्चाग्निप्रदक्षिणे । अकोपेऽप्यरुणोद्बाष्पं तच्छशाङ्कवतीमुखम् KathāSaSāg. xii. 36. 192.

**अग्निप्रदक्षिणीकरण** ( agni-pradakṣiṇīkaraṇa ) *n.* circumambulation of the sacred fire ( keeping it to the right ) cf. **अग्निप्रदक्षिण,** परिणयनशब्दे … अग्निप्रदक्षिणीकरणमेवार्थः प्रतीयते VīraMi. ( Saṁskāra. ) 585. 19.

**अग्निप्रदग्ध** ( agni-pradagdha ) *adj.* burnt with fire बीजान्यग्निप्रदग्धानि न रोहन्ति SarvaVeSāSaṁ. 850.

**अग्निप्रदातृ** ( agni-pradātṛ ) *m.* enkindler of fire, one who lights the funeral pyre ( दुर्मृतानाम् ) वोढारोऽग्निप्रदातारः … । तप्तकृच्छ्रेण शुध्यन्ति ParāSm. 4. 3.

**अग्निप्रदान** ( agni-pradāna ) *n.* **A** giving of fire इच्छामि दीप्तं वह्निमनुवेष्टुम् । तदर्हसि मामग्निप्रदानेन समुद्धर्तुम् PañcT. ( Kosegarten's Ed. ) 3. 209 (188. 1); **B** (putting fire in the mouth of a corpse and) lighting the funeral pyre यदा युगपज्जायापत्योर्मरणं तदा सहैव पितृमेधः । … अत्र विभज्याग्निप्रदानं केचिदिच्छन्ति तदसदिति भाष्यकारेणोक्तम् SmṛtiCan. vi. 84. 7; पुत्रबहुत्वेऽग्निप्रदानम् … ज्येष्ठेनैव कर्तव्यम् SmṛtiCan. vi. 86. 7; **C** setting on fire, incendiarism बन्धनाग्निप्रदानोग्रघातव्रणरणक्रिया(:) । शस्त्रास्त्रलोहकर्माणि चतुर्दश्यां विधीयते (sic.) NāraS. 4. 17.

**अग्निप्रदानमन्त्र** ( agnipradāna-mantra ) *m.* a *mantra* or sacred verse recited at the time of ( putting fire in the mouth of a corpse and ) lighting the funeral pyre अग्निप्रदानमन्त्रोऽस्या (नार्याः ) न प्रयु( यो ? )ज्य इति स्थितिः GobhiSm. iii. 52; HārLa. 183. 19.

**अग्निप्रदीपन** ( agni-pradīpana ) *adj.* [ *f.* –ī ] promoting digestion आजं दधि … दुर्नामश्वासकासेषु हितमग्निप्रदीपनम् HārīS. i. 8. 32; तक्रेण क्वथितं प्रातः पिबेदग्निप्रदीपनम् ĪśānS'iPa. i. 45. 161; एषा सूर्यप्रभा नाम गुटिकाग्निप्रदीपनी RasRaSa. 19. 40.

**अग्निप्रदेश** ( agni-pradeśa ) *m.* scope of the technical term *agni* ( i. e. stems in *–i* and *–u*) इकार उकारश्चाग्निसंज्ञो भवति । … अग्निप्रदेशाः । अग्नेरमोऽकारः … इत्येवमादयः KātanVṛ. ii. 1. 8.

**अग्निप्रधान** ( agni-pradhāna ) *adj.* [ *f.* –ā ] **i** having Agni as the chief or mouth-piece (said of the Vasus) तत्र यत्प्रथमममृतं रोहितरूपलक्षणं तद्वसवः प्रातःसवनेशाना उपजीवन्ति अग्निना मुखेन अग्निना प्रधानभूतेन अग्निप्रधानाः सन्तः उपजीवन्तीत्यर्थः ChāndoUBh. 148. 7 (*on* iii. 6. 1); **ii** having Agni as the principal or presiding deity (said of the earth) यथा पृथिव्यग्निगर्भा…इत्यादिश्रुतिभ्यो भूरग्निप्रधाना भवति AṇuBh. 333. 26 (*on* iv. 3. 2)

**अग्निप्रपतन** ( agni-prapatana ) *n.* **i** self-immolation by leaping into fire (as an atonement) ब्रह्महत्यासमेष्वेवं कामतो व्रतमाचरेत् । … अग्निप्रपतनं केचिदिच्छन्ति मुनिसत्तमाः VṛHārīSm. 9. 253; **ii** self-immolation (by a woman on her husband's funeral pyre) cf. **अग्निप्रवेश,** साध्वीनामिह नारीणामग्निप्रपतनादृते । नान्यो धर्मोऽस्ति विज्ञेयो मृते भर्तरि कुत्रचित् VṛHārīSm. 11. 202.

**अग्निप्रबोधन** ( agni-prabodhana ) *adj.* promoting digestive faculty, stomachic चूर्णम्…आमातिसारशमनं ग्राहि चाग्निप्रबोधनम् S'ārṅgaS. ii. 6. 47; *n.* kindling of the sacred fire देवालयस्य विधिवत् कुर्यादग्निप्रबोधनम् BhaviP. 260A .5 (i. 175. 17)

**अग्निप्रभ** ( agni-prabha ) *adj.* refulgent or brilliant like fire बभूवुस्तनयास्तस्य तस्यामग्निप्रभास्त्रयः RāmāMañ. 411. 13; *m.* name of a sage अहमग्निप्रभो नाम मुनिर्भृगुकुलान्वयः MahāBhā. xii. 274*(2); *n.* name of a holy spot (in S'ālagrāmakṣetra) ( शालग्रामक्षेत्रे ) पुनश्चाग्निप्रभं नाम गुह्यं क्षेत्रं परं मम VarāP. 145. 52; ( तीर्थम् ) अग्निप्रभं च पुंनागं देवप्रभमनुत्तमम् BrahmP 25. 22.

**अग्निप्रभव** ( agni-prabhava) *adj.* born of (i. e. son of) Agni ( अनलप्रभवं भृगुम् ) यद्यपि … भृगुसृष्टिरपि मनुत इति एवोक्ता तथापि कल्पभेदेनाग्निप्रभवत्वमुच्यते ManvaMu. 193. 6 (*on* 5. 1); *m.* increase of digestive faculty सुतीक्ष्णमग्निप्रभवैकहेतुम्·· तैलम् ( आह ) KalyāKā. 5. 33.

**अग्निप्रभा** ( agni-prabhā ) *f.* **1** glow of fire सा…ध्वजिनी…व्यरोचताग्निप्रभया निशायाम् MahāBhā. vii. 138. 13; अग्निप्रभां धूम्रवर्णध्वनिगन्धशिखाकृतीः । शुभचेष्टादिकं ज्ञात्वा कल्पयेत्तु शुभाशुभम् KulārT. 16. 23; **2** a species of śatapadī (centipede) शतपद्यस्तु परुषा कृष्णा चित्रा कपिला … श्वेता अग्निप्रभा इत्यष्टौ । ताभिर्दष्टे शोफो वेदना दाहश्च हृदये । श्वेताग्निप्रभाभ्यामेतदेव…श्वेतपिडकोत्पत्तिश्च SuśruS. v. 8. 30 [name of a Gandharva maid, DBHS.]

**अग्निप्रभाकर** ( agniprabhā-kara ) *m.* name of one of the four aspects of Nṛsiṁha or Man-Lion incarnation of Viṣṇu चतस्रो मूर्तयो विभोः । सूर्यलोकप्रदश्चाद्यो द्वितीयोऽग्निप्रभाकरः । अत्युग्रदर्पशमनश्चतुर्थो विश्वसूकरः । … नृसिंहभूतयः ( ? नृसिंहमूर्तयः ) सर्वे ( sic ) ध्येयाः JayāS. 29. 8.

**अग्निप्रभाव** ( agni-prabhāva ) *adj.* having the power of fire अभिमन्त्र्य च सर्षपान्…मन्त्रेणाग्निप्रभावेन…प्रक्षिपेत्सैन्यमध्ये च JayāS. 26. 88.

**अग्निप्रमा** ( agni-pramā ) *f.* valid knowledge about (the existence of) fire यस्य कस्यचिद्व्याप्तिज्ञाने नारिकेलद्वीपवासिनोऽप्यग्निप्रमा भवेत् NyāySu. (Ja.) 396B. 12 (*on* ii. 2. 7)

**अग्निप्रयुक्त** ( agni-prayukta ) *adj.* conditioned or necessitated by the sacred fires अग्निप्रयुक्तमाधानं न कर्मप्रयुक्तम् S'ābaBh. 1039. 3 (*on* iii. 6. 15); अग्निप्रयुक्तश्च पवमानेष्टिसंस्कारः S'ābaBh. 1041. 7 (*on* iii. 6. 17); स चाग्निप्रयुक्तः शेष्यस्ति ṬupṬ. 13. 12 (*on* iv. 1. 30); 149. 9 (*on* vi. 8. 20); अग्निष्ठस्यैव पूर्वेद्युरग्निप्रयुक्तमुच्छ्रयणम् SaṅkarKāBh. 50. 12 (*on* i. 4. 29)

**अग्निप्रयुक्तत्व** ( agniprayukta-tva ) *n.* the state of being conditioned by the sacred fires श्रुत्यादीनामभावान्न कर्मप्रयुक्तताधानस्य, वाक्यसामर्थ्याच्चाग्निप्रयुक्तत्वम् S'ābaBh. 1513. 12 (*on* vi. 8. 21)

**अग्निप्रयोग** ( agni-prayoga ) *m.* **A i** application of fire (for burning something) अयं खलु शुक्तिकाविषयोऽग्निप्रयोगादिव्यवहारो भस्महेतुः NyāyKu. 51. 3 **A ii** application of (i. e. contact with) fire-like substances or heat बाष्पैः साकं गन्धकादिपरागा अपि भूमितः । गच्छन्त्यूर्ध्वं ततश्चाग्निप्रयोगादग्निशस्त्रवत् । तारारूपाः सुगोलाग्निकणा भूमिं प्रयान्ति हि SiddhāTaVi. 36. 3; **B** name of a section dealing with the preparation of the sacrificial fire-place, also known as अग्निकाण्ड ( = TaiS. IV. i. 9. 1 ) अग्निप्रयोगे पुनराकूतिमग्निमित्यादिषु षट्सु मन्त्रेषु पठितेषु षड्भिर्दीक्षयतीति वचनेन विनियुक्तेषु स्वाहालिङ्गबलाद्धोमद्वारा दीक्षार्थत्वे प्राप्ते लिङ्गाद्धोमप्राप्तिः BhāṭṭCin. i. 74. 30 (*on* i. 1. 4)

**अग्निप्रयोजक** ( agni-prayojaka ) *adj.* causing the setting up of (separate) sacrificial fire एतद्धोमस्याप्याधानद्वाराग्निप्रयोजकस्याग्निसंबन्धित्वाविशेषात् प्रायणीयादिपदवदनतिदेशकत्वात् BhāṭṭDī. ii. 198. 4 (*on* v. 3. 9)

**अग्निप्रयोजकत्व** ( agniprayojaka-tva ) *n.* the state of causing the setting up of (additional) sacrificial fire क्रतुविधीनामाधानविधिसिद्धाग्निग्रहणेनैवोपपत्तौ स्वयमग्निप्रयोजकत्वाभावादनाहिताग्नेरनधिकार एव क्रतुष्विति वैगुण्यशङ्का दूरादपास्तैव BhāṭṭDī. ii. 24. 21 (*on* iii. 6. 5); iv. 105. 18 (*on* x. 8. 5)

**अग्निप्रयोजन** ( agni-prayojana ) *adj.* intended for signifying the deity Agni यदि तेऽग्निप्रयोजनास्ततस्त ( मन्त्रविशेषाः ) आग्नेय्या( ? या )नाग्निशब्दसंनिधानात् S'ābaBh. 158. 7 (*on* i. 2. 43)

**अग्निप्रयोज्य** ( agni-prayojya ) *adj.* **i** caused by fire न दृश्यते तावदग्निप्रयोज्यो धूमे विशेष इति च न वाच्यम् KhaṇḍanKhā. 680. 7; **ii** brought about or granted by (Vaiśvānara) Agni अग्निप्रयोज्यफलस्यात्मगामित्वावगते-

रिष्टिकर्तैर्येव फलम् BhāṭṭDī. ii. 138. 2 (*on* iv. 3. 14)

**अग्निप्रवर्धन** (agni-pravardhana) *adj.* promoting digestive faculty पयस्त्रिदोषशमनं वृष्यं चाग्निप्रवर्धनम् HāriS. i. 8. 13.

**अग्निप्रविष्ट** (agni-praviṣṭa) *adj.* [*f.* -ā] who has entered into fire अनर्जुनायां च भुवि (v. l. अर्जुनेऽग्निप्रविष्टे तु)…। जीवितुं नोत्सहेरन् वै भ्रातरोऽस्य सहानुगाः MahāBhā. vii. 120. 14; अग्निप्रविष्टं राजानं श्रुत्वा … अहमपि … तपस्तप्स्ये BrahmP. 138. 28; अग्निप्रविष्टां सीतां च रामः प्राप ह्यकल्मषाम् BṛDharmP. i. 22. 57; जीवेदग्निप्रविष्टो वा नरः KulārT. 12. 79.

**अग्निप्रवेश** (agni-praveśa) *m.* (self-immolation) by entering into fire, voluntary death by fire **i** (for attaining the highest goal) **ii** (as an ordeal) **iii** (out of grief, calamity, inability to fulfil one's word) **iv** (in dream) **v** (by a woman on her husband's pyre) **vi** (as expiation) **vii** (as religious duty) **viii** (as an item of worship of god) **ix** (for attaining some extraordinary power) **x** (in madness) **xi** (by a sacrificer as enjoined) **xii** (for achieving desires) **i** (for attaining the highest goal) वीराध्वाने वानाशके वापां प्रवेशे वाग्निप्रवेशे वा महाप्रस्थाने वाथ परिव्राट् … ब्रह्मभूयाय भवति JābālaU. 5; ParaHaṁsPaU. 483. 12; YājñaU. 601. 27 (2. 1); अनशनमपां प्रवेशमग्निप्रवेशं वीराध्वानं महाप्रस्थानं वृद्धाश्रमं वा गच्छेत् KaṭhRuU. 1 = KaṭhS'rU. 2(3); अग्निप्रवेशाद्ब्रह्मलोकः VasiDS. 29. 4; अग्निप्रवेशे नियतं ब्रह्मलोको विधीयते MahāBhā. xiii. 57. 16; अग्निप्रवेशं यश्चापि कुरुते मद्गतात्मना । सः … मम लोकं प्रपद्यते MahāBhā. xiv. App. I. 4(1444) = VṛGautaSm. 555. 5(7); MahāBhā. xiv. App. i. 4(815) = VṛGautaSm. 529. 11(5); अग्निप्रवेशेऽथ जले…। सोमतीर्थे मृतो यस्तु नासौ मर्त्येऽभिजायते MatsyaP. 191. 97 = PadmP. i. 18. 92; MatsyaP. 183. 77; एतद्वै परमं तपो यं प्रेतमग्नावभ्यादधाति अग्निप्रवेशसामान्यात् BṛĀraUBh. 717. 18 (*on* 5. 11); अग्निप्रवेशं यः कुर्यात्तस्मिंस्तीर्थे SkandP. v(3). 29. 29; यो मृतोऽमरकण्टके । अग्निप्रवेशे…अनाशने PadmP. i. 13. 29; S'ivaP. iii. 15. 60 (314B. 9); ManuBh. i. 506. 9 (*on* 6. 32); PañcPā. 63. 6 (*on* i. 1. 1); KathāK. 81. 25; **ii** (as an ordeal) वैदेह्याः … अग्निप्रवेशनम् । अग्निप्रवेशे च तदा अदाहः परमाद्भुतः Rāmā. i. App. i. 1(259); vi. 104 colophon; Abhiṣe. 6. 22(4); अग्निप्रवेशपरिनिर्गमशुद्धभावां सीतां रघूत्तम…आद्रियस्व MahāVīC. 7. 3 (191. 13); अग्निप्रवेशः कार्यो मे राज्ञो हृदयशुद्धये KathāSaSāg. iii. 2. 116; सतीत्वपरीक्षार्थमग्निप्रवेशे सीतावाक्यम् MahāN. 9. 103(1); **iii** (out of grief, calamity, inability to fulfil one's word) अग्निप्रवेशे सुहृदस्ते को हेतुः MudrāRā. 6. 15(28) = VakroJī. 234. 13; सामान्योऽपि तावच्छोकः…अभस्मीकरणोऽग्निप्रवेशः HarṣaC. 221. 6; [तदवमानलज्जाकृताग्नि]प्रवेशमिव … प्रतिबिम्बपतङ्गमण्डलम् AvantiKa. 6. 16; वरमग्निप्रवेशम् … सपत्नीविषसंयुतम् । इयं न मन्यते कान्तं भवन्तम् PadmP. ii. 79. 4; SaraKaṇṭhā. 737. 3; दुःखार्तः…। अग्निप्रवेशाय चिताम् … करोमि KathāSaSāg. vii. 2. 79; ix. 5. 6; xii. 5. 171; xiv. 4. 172; TātpaVṛ. 82. 15 (*on* 1. 62); जिनदत्तां मारयामि नो चेत्तर्हि अग्निप्रवेशं करोमि SamyaKau. 43. 21; देव यदि वाचा व्यभिचरिष्यति (? सि) तदाहमग्निप्रवेशं करिष्यामि PuruṣPa. 198. 11; मम राज्यं दायादैरपहृतम्… अग्निप्रवेशं कर्तुं काष्ठानि संचिनोमि SiṁhāDvā. 155. 10(12); PālaGoKa. 50; इदं चाग्निप्रवेशप्रायोपवेशनात्मकमात्महननम् TristhaSe. 293. 26; JānaPa. 7. 15(41); **iv** (in dream) अग्निप्रवेशं कुरुते स्वप्नान्ते यः…तदन्तं तस्य जीवितम् VāyuP. i. 19. 31 = LiṅgaP. i. 91. 34; पित्तप्रकृतिः पित्तदूषितो वाग्निप्रवेशकनकपर्वतादीन् पश्यति PadārthaSaṁ. 184. 6 (comm. अग्निप्रवेशकनकपर्वताभ्युदितार्कमण्डलादिकम्); **v** (by a woman on her husband's pyre) सः…स्वर्गलोकमितो गतः । … ते जननी … चकाराग्निप्रवेशाय … मतिम् BrahmāṇḍP. ii. 47. 82; ददर्श …अग्निप्रवेशायोद्यतां राजा राज्यश्रियम् HarṣaC. 329. 18; मां त्यक्त्वा स गतो भर्ता …वरमग्निप्रवेशः PadmP. ii. 41. 53; iv. 102. 61; अग्निप्रवेशं ते कुरुतः स पतिव्रते KathāSaSāg. xii. 5. 388; तत्कृतस्याग्निप्रवेशस्य फलमकर्ता भर्ता भुङ्क्ते Aparā. 110. 27 (*on* 1. 87); 109. 29 (*on* 1. 87) = CaturCin. ii(2). 957. 6; भर्तरि मृते सति पत्नी … अग्निप्रवेशेन देहत्यागं कर्तुं वाञ्छति SmṛtiCan. vi. 90. 17; vi. 91. 18; CaturCin. ii(2). 956. 17; PañcDa. 11. 127; राजा … शरीरं विससर्ज । तस्य…स्त्रियोऽग्निप्रवेशाय प्रारम्भं चक्रुः SiṁhāDvā. 19. 2 (27); 210. 0 (34); तया चौरस्य शरीरमादाय … अग्निप्रवेशं कर्तुमारब्धम् VetāPañ.(S'i.) 34. 28; महाभारते पतिव्रतायाः सत्या अग्निप्रवेश उक्तो न त्वग्निप्रवेशेन पतिव्रतात्वम् BālamBha. i. 218. 16 (*on* 1. 77); i. 236. 14 (*on* 1. 86); **vi** (as expiation) महतः पापस्याग्निप्रवेशादृते नान्यत्प्रायश्चित्तम् Nāgā. 5. 19(4); न चान्यतममग्निप्रवेशादिकं द्वादशाब्दसमाप्तिविधिमास्थायेति युक्तम् BālaKrī. ii. 109. 27 (*on* 3. 250); ii. 109. 21 (*on* 3. 250); ii. 105. 15 (*on* 3. 249); नान्यत् … सर्वपापोपशान्तये । अग्निप्रवेशं मुक्त्वैकं प्रायश्चित्तम्…अग्निप्रवेशे…किं कर्तव्यम् PadmP. iv. 102. 69; KathāSaSāg. xii. 2. 158; न…अग्निप्रवेशादीनां द्वादशवार्षिकमध्ये पाठः Mitā. 424. 6 (*on* 3. 244); 424. 1 (*on* 3. 244); 424. 11 (*on* 3. 244); 446. 14 (*on* 3. 260); AlaṅkāSa. 99. 11; 198. 18; अनेकब्राह्मणवधः … यदि तु कामतस्तदा … अग्निप्रवेशः Aparā. 1057. 16 (*on* 3. 243); ManvaMu. 498. 2 (*on* 11. 240); Manvarthacandrikā. 1464. 3 (*on* 11. 240); **vii** (as religious duty) महाप्रस्थानिकं वासौ कुर्यादनशनम् …अग्निप्रवेशमन्यत् KūrmaP. 648. 4 (*on* 2. 27) = PadmP. i. 58. 36; CaturCin. ii(2). 943. 1; ii(2). 956. 1; ii(2). 960. 2; **viii** (as an item of worship of god) अग्निप्रवेशाभिमुखी … जगौ … तव देव … धूपोऽगुरुर्वपुरिदं हृदयं प्रदीपः SkandP. iii(3). 17. 42; **ix** (for attaining some extraordinary power) उद्यतोऽग्निप्रवेशाय दिव्यासाध्यफलाप्तये…अग्निप्रवेशं विदधे चन्द्रस्वामी KathāSaSāg. xii. 25. 70; (इमं मन्त्रं गृहीत्वा … वह्नौ प्रविश्य साधय) अग्निप्रवेशं करिष्यामि VetāPañ.(S'i.) 46. 31; मन्त्रेण जलादुत्थायाग्निप्रवेशाक्षमोऽभवत् VetāPañ.(Jam.) 94. 11; **x** (in madness) साधुकारश्रुतेर्लुब्धः कश्चिदुन्मत्तको यथा । अग्निप्रवेशं कुर्वीत BṛKathāS'loSaṁ. 15. 118; **xi** (by a sacrificer as enjoined) तस्य च क्रतोस्तृतीयसवने यजमानस्याग्निप्रवेश आम्नायते NyāyMāVi. 507. 4 (*on* x. 2. 23); मरणानुकूले व्यापारेऽग्निप्रवेशादावितिकर्तव्यतारूपे विधित एव प्रवृत्तिः Mitā. 29. 4 (*on* 1. 86); BālamBha. i. 236. 14 (*on* 1. 86); **xii** (for achieving desires) कृतात्ममरणे अनाशकेनाहारत्यागेन वः…अग्निप्रवेशेन वा…सद्यः शौचम् HārLa. 113. 10; अग्निप्रवेशादिना विपन्नानाम् सायुज्यम् VīraMi. (Tīrtha.) 180. 1.

**अग्निप्रवेशन** (agni-praveśana) *n.* **1** entering the fire, self-immolation by fire (by a Vānaprastha) अग्निप्रवेशनं वीराध्वानमनाशकं वा वृद्धाश्रमं वा गच्छति MānS'S. 183. 21; अग्निप्रवेशं यश्चापि (v. l. अग्निप्रवेशनं यश्च) कुरुते … । स याति यमालयम् MahāBhā. xiv. App. i. 4(815); xiii. App. i. 15(3796); (by a widow) दधीचेर्मरणं साध्व्यास्तथा चाग्निप्रवेशनम् BrahmP. 110. 82; मृते मरणं तेन सहाग्निप्रवेशनेन Aparā. 109. 23 (*on* 1. 87); (ordeal) वैदेह्याः … अग्निप्रवेशनम् । अग्निप्रवेशे च तदा अदाहः परमाद्भुतः Rāmā. i. App. i. 1(258); (expiation) चरेद् ब्रह्महणो व्रतम् । अग्निप्रवेशनं वा BṛNāraP. 28. 17; तन्मे मृतेऽस्मिन् पापस्य प्राप्तमग्निप्रवेशनम् KathāSaSāg. xii. 23. 179; (suicidal) विषमुद्बन्धनं वापि शस्त्रमग्निप्रवेशनम् । करिष्ये न हि तानृद्धान्पुनर्द्रष्टुमिहोत्सहे MahāBhā. iii. 8. 6; वरमग्निप्रवेशनम् । … दीनानामपरक्षणात् S'ivaP. iii. 27. 28 (327A. 13); (मम…पुत्रः) तदभावे मया कार्यं प्रातरग्निप्रवेशनम् KathāSaSāg. iii. 4. 270; xvii. 5. 159; (as a magical feat) कुरुते तथैवाग्निप्रवेशनम् । … सिद्धविद्यः सः KathāSaSāg. xii. 25. 55; **2** transference into fire सूर्यकिरणानां रात्रिष्वग्निप्रवेशनमागमसिद्धम् Kuval. 90(62)

**अग्निप्रवेशशुद्ध** (agnipraveśa-śuddha) *adj.* purified by enteriug the fire अग्निप्रवेशशुद्धानां पुनश्च नरकः कथम् PadmP. iv. 102. 99.

**अग्निप्रवेशहेतु** (agnipraveśa-hetu) *m.* reason for entering the fire अग्निप्रवेशहेतौ धीः शृङ्गारे यादृशी तथा । धीरस्योदेति विषये PañcDa. 11. 127.

**अग्निप्रवेशाध्यवसाय** (agnipraveśādhyavasāya) *m.* decision to enter into fire तत्रानौचित्यपरिहारो यथा … अवसिते च समीहिते तया विना क्षणमपि न जीवामीत्यविज्ञातवासवदत्तासंनिधेर्वत्सराजस्याग्निप्रवेशाध्यवसायः SaraKaṇṭhā. 737. 3.

**अग्निप्रवेशाभिमुख** (agnipraveśābhimukha) *adj.* [*f.* -ī] who is about to enter into fire अग्निप्रवेशाभिमुखी … इदं जगौ (शबरी शबरम्) SkandP. iii(3). 17. 42.

**अग्निप्रवेशार्थम्** (agnipraveśārtham) *adv.* for entering into fire (for self-immolation) स्रक्चन्दनवस्त्रालङ्कारभोगानिवाग्निप्रवेशार्थम्…तन्निमित्ताम् निर्वृतिमलभमानः PañcPā. 63. 6 (*on* i. 1. 1)

**अग्निप्रवेशिन्** (agnipraveś-in) *adj.* (one) who enters into fire (as a vow) अग्निप्रवेशी नियतं ब्रह्मलोके महीयते PadmP. vi. 33. 66.

**अग्निप्रशान्तक** (agni-praśāntaka) *adj.* causing the loss of digestive power बलादनी । एते श्लेष्मकराः शाका वातलाग्निप्रशान्तकाः HārīS. i. 16. 14.

**अग्निप्रश्न** (agni-praśna) *m.* enquiry regarding the (sacred) fire स त्वमग्निं स्वर्ग्यमध्येषि मृत्योः(? त्यो) प्रब्रूहि तं श्रद्दधानाय मह्यमित्यग्निप्रश्नः BrahmSūBh.(Bhā.) 74. 9 (*on* i. 4. 6); अग्निप्रश्नवाक्य एव, स्वर्गलोका अमृतत्वं भजन्त इति देहातिरिक्तात्मज्ञानवत्त्वमवगम्यते S'rutaPra. ii. 112. 11 (*on* i. 4. 6)

**अग्निप्रसाद** (agni-prasāda) *m.* grace or favour of Agni गौतम उवाच— तपसाग्निप्रसादेन…मत्सङ्कल्पोऽनुसिध्यताम् BrahmP. 74. 79.

**अग्निप्रसादतस्** (agniprasāda-tas) *adv.* due to the favour of god Agni अयन्नो(? अयं नो) अग्निरध्यक्षो भवेदग्निप्रसादतः ViṣṇuDhaP. ii. 127. 33; शिवं चास्तु वासवाग्निप्रसादतः MahNirvāT. 9. 68.

**अग्निप्रस्कन्दन** (agni-praskandana) *n.* abandonment of the sacred fires ययातिरुवाच ।…प्रजाश्च यौवनप्राप्ता विनशिष्यन्त्यनो तव । अग्निप्रस्कन्दनपरस्त्वं चाप्येवं भविष्यसि MahāBhā. i. 79. 23 (Nīlakaṇṭha अग्निप्रस्कन्दनं श्रौतस्मार्ताद्यग्निसाध्यकर्मत्यागः; Devabodha अग्निप्रस्कन्दनपरः अग्नित्यागी); MatsyaP. 33. 25 = VāyuP. ii. 31. 53 = BrahmāṇḍP. ii. 68. 55.

**अग्निप्रस्कन्दिन्** (agnipraskand-in) *adj.* who has abandoned the

sacred fires स यद्दक्षिणेन पाणिना स्त्रियं न स्पृशति तेनाहरहर्याजिनां लोकमवरुन्द्धे यत्सव्येन तेन प्रव्राजिनां यन्मुखेन तेनाग्निप्रस्कन्दिनाम् GopBr. i. 2. 4.

**अग्निप्रस्तर** ( agni-prastara ) *m.* a stone for striking fire, flint [S'abdaKaDru.]

**अग्निप्रस्वेद** ( agni-prasveda ) *m.* moisture caused by fire सप्तैते लयवारिदाः। अग्निप्रस्वेदसंभूताः ( v. l. °तां ) प्लावयिष्यन्ति मेदिनीम् MatsyaP. 2. 9.

**अग्निप्रहरण** ( agni-praharaṇa ) *n.* carrying forward of the fire यत्र तिष्ठन् प्रथमामन्ववोचत् तत् स्थित्वात्र चाग्निप्रहरणे चाथ यथावसथमभ्युपेयात् KauṣiBr. 9. 4 (43. 3)

**अग्निप्रहीण** ( agni-prahīṇa ) *adj.* having a reduced digestive faculty तेषामग्निप्रहीणानामसात्म्यस्य च भोजनात्। जायन्ते…विकारा दोषसंभवाः Hastyāyur. 29. 22 (1. 3)

**अग्निप्राकार** ( agni-prākāra ) *m.* **1** fortification of fire (a fiery circle imagined or drawn) अग्निना मेदितो मन्त्रस्त्वन्यात्मा व्यवतिष्ठते। प्राकारं कल्पयेत्तेन परितः पावकाकृतिम्। अग्निप्राकारमध्यस्थो दुर्निरीक्षोऽभिजायते AhirbuS. 19. 38; विलिखेच्चक्रगायत्रीमग्निप्राकारमन्ततः ( v. l. °अग्निप्राकारकं ततः ) AhirbuS. 23. 102; अग्निप्राकारपर्यन्तं कुर्यात्स्वास्त्रेण मन्त्रवित् BrahmāṇḍP. iii. 44. 4; ज्ञात्वैवं यन्त्रमाहात्म्यं योऽर्चयेद्विधिपूर्वकम्। दिग्बन्धवह्निप्राकारगायत्र्यावाहनादिकैः।… क्रमात्सर्वफलावाप्तिर्मन्त्रसिद्धिश्च जायते। आयान्तं विन्यसेच्चक्रम् अग्निप्राकारसंज्ञितम् PāraS. 24. 131; **2** rampart of fire आसेदुरग्निप्राकारसमीपं भण्डसूनवः BrahmāṇḍP. iii. 26. 67; PadmP.(Ra.) 75. 45.

**अग्निप्राकारक** ( agniprākāra-ka ) *m.* **1** fortification of fire (a fiery circle imagined or drawn) विलिखेच्चक्रगायत्रीमग्निप्राकारकं ततः (v. l. अग्निप्राकारमन्ततः) AhirbuS. 23. 102; **2** rampart of fire शक्तिमहाचमूः। अग्निप्राकारकद्वारान्निर्जगाम महारवा BrahmāṇḍP. iii. 26. 41.

**अग्निप्राकारमन्त्र** ( agniprākāra-mantra ) *m.* name of a *mantra* अग्निप्राकारमन्त्रोऽयं रक्षार्थं पुनरात्मनः S'āraTi. 16. 72 ( comm. त्रैलोक्यं रक्ष रक्षेति हुं फट् स्वाहेति चोदितः। तारादिकोऽयं मन्त्रः स्यादग्निप्राकारसंज्ञकः )

**अग्निप्राकारवलय** ( agniprākāra-valaya ) *n.* circle of a rampart of fire ( शक्तयः ) अग्निप्राकारवलयान्निर्जग्मुर्बद्धपङ्क्तयः BrahmāṇḍP. iii. 28. 12; iii. 26. 66; iii. 27. 83.

**अग्निप्रातिकूल्य** ( agni-prātikūlya ) *n.* opposition to fire प्रत्यग्नीत्यादिना अग्न्यादीन् पृष्ठभागे कृत्वा मेहनं निषिद्धम्। प्रत्यग्नि अग्निप्रातिकूल्येन ManvaVi. 481. 19 (*on* 4. 52)

**अग्निप्रादुष्करण** ( agni-prāduṣkaraṇa ) *n.* generation of the sacred fire उदितहोमिनोऽपि सूर्योदयात्पूर्वं अग्निप्रादुष्करणस्याभिधानात् VīraMi.(Āhnika.) 145. 22; VīraMi.(Saṁskāra.) 530. 8.

**अग्निप्राप्त** ( agni-prāpta ) *adj.* caught in fire, surrounded by (flames of) fire परिगायेत्। अग्निप्राप्तम् 'अग्ने मृड', 'महाँ ३ असि' इत्यन्यतरेण KātyS'S. xxii. 6. 17.

**अग्निप्राप्ति** ( agni-prāpti ) *f.* **1 A** presence (of the knowledge) of the god of fire सत्यामपि च सायंहोमे अग्निप्राप्तौ TantrVā. 295. 9 (*on* i. 4. 4); यत्तूक्तमग्निप्राप्तेरर्थतस्तासामपि प्राप्तिरिति S'āstrDī. 302. 16 (*on* iii. 6. 6); अथातोऽग्निष्टोमेनानुयजतीति विधितः प्रकृत्यग्निष्टोमेऽग्निप्राप्तिः VidhiRa. 9 (49. 5); 32 (175. 17); अग्निप्राप्तिरहिते प्रातर्वाक्यविहिते कर्मणि…अग्निविधिः MayūMāli. 64. 36 (*on* i. 4. 4); 66. 32 (*on* i. 4. 4); MīmāKau. ii. 207. 5 (*on* iii. 1. 22); **1B** contact with fire अवयविनः प्राप्तावप्यन्तर्वर्तिनामवयवानां बाह्यावयवावष्टम्भेनाग्निप्राप्तेरसम्भवात् Kiraṇā. 187. 12; **1C** availability of fire दाहयेदित्यत्रैवाग्निप्राप्तेरग्निनेति पृथगभिधानं श्रौतस्मार्ताग्निग्रहणार्थम् HārLa. 141. 5; **2** attainment of (proximity with) Agni अग्निप्राप्तिरेव फलत्वेनोच्यते TattvPrakā. 35B. 13 (*on* i. 2. 16)

**अग्निप्रायगुण** (agniprāya-guṇa) *adj.* having qualities almost like those of fire अवाप चानलात्पुत्रावग्निप्रायगुणौ पुनः MatsyaP. 5. 25; अवाप चानिलः पुत्रानग्निप्रायगुणांस्ततः PadmP. v. 6. 26.

**अग्निप्रायश्चित्त** ( agni-prāyaścitta ) *n.* expiation in connection with the fire-altar परमेष्ठ्यादिकालाहुतिं पूर्वां पूर्वां जुहुयात् पश्चादग्निप्रायश्चित्तं चकारात् Karka *on* KātyS'S. xvi. 7. 8.

**अग्निप्रायश्चित्ति** ( agni-prāyaścitti) *f.* expiation in connection with the fire-altar उभे प्रायश्चित्ती करोत्यध्वरप्रायश्चित्तिं चाग्निप्रायश्चित्तिं च S'atBr. VI. vi. 4. 11.

**अग्निप्रार्थन** ( agni-prārthana ) *n.* prayer to Agni प्रवरणमृषिसंबन्धेनाग्निप्रार्थनं प्रवरः BālamBha. i. 176. 3 (*on* 1. 53)

**अग्निप्रिया** ( agni-priyā ) *f.* **1** the utterance *svāhā* सम्प्रोक्ष्य मूलमन्त्रेण दत्त्वाम्भोऽग्निप्रियान्ति( ? न्त )कम् ĪśānS'iPa. i. 8. 108; ii. 5. 120; ii. 18. 67; ii. 45. 92; S'āraTi. 14. 92; **2** name of the wife of Agni viz. Svāhā अग्निप्रिया स्मृताग्नायी स्वाहापि कथिता स्मृतौ ParamāNā. 866.

**अग्निप्रीति** ( agni-prīti ) *f.* gratification of Agni अग्निं दूतमिति मन्त्रस्य…अग्निप्रीतये विनियोगः BhaviP. 365B. 31 ( ii(2). 10. 88 ); अग्निप्रीत्यर्थं बलिदाने विनियोगः BālamBha. i. 22. 11 (*on* 1. 11)

**अग्निप्रोक्षण** ( agni-prokṣaṇa ) *n.* sprinkling water on the fire मन्त्रस्य लिङ्गेनाग्निप्रोक्षणादौ उत्कर्षापत्तेः BhāṭṭCin. i. 75. 9 (*on* i. 1. 4)

**अग्निप्रोतेषीकतूलवत्** ( agniproteṣīkatūla-vat ) *ind.* like cotton and reed pervaded by fire समधिगतविद्यानाम् … प्राचीनं कर्म उपायप्रभावादेव अग्निप्रोतेषीकतूलवत् प्रदूयते NyāySiA. 218. 30.

**अग्निप्रोष** ( agni-proṣa ) *m.* burning by the fire अग्निप्रोषमपि स्वास्थ्यहेतुं भूभृदचिन्तयत् RājTa.(Ka.) 8. 3278.

**अग्निप्लुष्ट** ( agni-pluṣṭa ) *adj.* burnt by fire तस्माज्जीर्णज्वरेषु सर्वेष्वेव सर्पिर्हितमुदकमिवाग्निप्लुष्टेषु द्रव्येषु CaraS. ii. 1. 37; नार्द्रपादः सुप्यात् … नाग्निप्लुष्टे VisṇuSm. 70. 11; स्वपतितहस्तिनिपीडितशुष्काग्निप्लुष्टमधुनिलयाः। तरवो वर्जयितव्याः BṛSaṁ. 59. 3.

**अग्निप्लोष** ( agni-ploṣa ) *m.* scorching with fire मेने च तद्वपुःश्लेषमग्निप्लोषमिवात्मनः PāṇḍaC. 4. 370.

**अग्निफला** ( agni-phalā ) *f.* a kind of medicinal plant *Cardiospermum helicacabum* तेजोवती…तेजस्विनी सुरलताऽग्निफलाऽग्निगर्भा RājNi. 61. 15.

**अग्निबद्ध** ( agni-baddha ) *adj.* (quick silver) processed with fire cf. **अग्निबन्ध,** केवलो लोहयुक्तो वा ध्मातः स्याद्गुटिकाकृतिः। अक्षीणश्चाग्निबद्धोऽसौ RasRaSa. 11. 83.

**अग्निबन्ध** ( agni-bandha ) *m.* name of a process with fire (to prepare quick-silver so as to mix up with other substances for medicinal and alchemic purposes) जलबन्धोऽग्निबन्धश्च RasRaSa. 11. 57.

**अग्निबन्धन** ( agni-bandhana ) *n.* bond of fire ते सिंहविग्रहाः। भूतानामभयं दत्त्वा पुरा बद्धाग्निबन्धने VāyuP. ii. 39. 296.

**अग्निबल** ( agni-bala ) *n.* **1** digestive capacity or power सौहित्योपयुक्तान्यन्यत्र व्यायामाग्निबलात् CaraS. i. 5. 6 (1941 Ed.); वर्षास्वग्निबले क्षीणे कुप्यन्ति पवनादयः CaraS. i. 6. 34 (1941 Ed.); i. 13. 49; vi. 14. 243 (1941 Ed.); अतिद्रवम्…अग्निबलं च हन्ति AṣṭāSaṁ. i. 69. 7 (1. 10); i. 120. 10 (1. 23); i. 137. 19 (1. 27); ii. 66. 8 (4. 10); ( अर्शांसि ) सहजानि त्रिदोषाणि यानि चाभ्यन्तरे वलौ। स्थितानि तान्यसाध्यानि याप्यन्तेऽग्निबलादिभिः AṣṭāHṛ. iii. 7. 53; iv. 8. 163; मात्रा चतुष्पली ह्रस्वा, यावद्वाग्निबलं भवेत् KāśyaS. 181B. 22; तेषां क्रिया प्रतिदिनं क्रियते भिषग्भिरायुर्वयोऽग्निबलसत्त्वसुदेशसात्म्यम् KalyāKā. 1. 27; अग्निबलमत्र हेतुर्न केवलं सूरणो महावीर्यः SiddhYo. 5. 58; 12. 33; **2** power of heat अग्निबलेनैव ततो गर्भे द्रवन्ति सर्वसत्त्वानि RasRaSa. 9. 24.

**अग्निबल** ( agni-bala ) *adj.* having the strength of fire त्रयस्त्रिंशद्देवतानां ताः कोट्यो विमलात्मकाः। पाशेनाग्निबलेनाशु बद्धाः सिंहबलेन च VāyuP. i. 30. 159.

**अग्निबलकृत्** ( agnibala-kṛt ) *adj.* producing (i. e. enhancing) digestive power आजमग्निबलकृत् ( पयः ) BhojanKu. 132. 16.

**अग्निबलजनन** ( agnibala-janana ) *adj.* conducive to the enhancement of digestive power बृंहणान्यग्निबलजननानि चान्नपानानि AṣṭāSaṁ. ii. 82. 13 (4. 14)

**अग्निबलभ्रंश** ( agnibala-bhraṁśa ) *m.* loss of digestive power आशु चाग्निबलभ्रंशादतो बाह्यं विपर्ययात्। तत्र वातात्परीसर्पः AṣṭāSaṁ. i. 295. 12 (3. 13); AṣṭāHṛ. iii. 13. 47.

**अग्निबलरक्षा** ( agnibala-rakṣā ) *f.* preservation of digestive power अतोऽग्निबलरक्षार्थं लङ्घनादिक्रमो हितः CaraS. vi. 3. 276 (1941 Ed.)

**अग्निबलवर्धन** ( agnibala-vardhana ) *adj.* enhancing or stimulating the digestive power तथैव तित्तिरो वृष्यो मेधाग्निबलवर्धनः HāriS. i. 21. 3; क्षीणक्षीणाल्पशुक्राणां वाजीकरणमौषधम्। ग्रासे विधेयं चूर्णं च यदग्निबलवर्धनम् KāśyaS. 244A. 32.

**अग्निबलवृद्धि** ( agnibala-vṛddhi ) *f.* growth or increase of the digestive power यदग्निबलवृद्धये। अन्नपानौषधं द्रव्यं तत्सेव्यं नित्यमर्शसैः CaraS. vi. 14. 247; SiddhYo. 5. 4.

**अग्निबलसंक्षय** ( agnibala-saṅkṣaya ) *m.* reduction of the digestive power अग्निबलसङ्क्षयः। मूर्च्छा तृष्णा भ्रमस्तन्द्री विषादारुचिगौरवम् KāśyaS. 105A. 24.

**अग्निबलसम** ( agnibala-sama ) *adj.* [ *f.* -ā ] commensurate with the digestive capacity or power तस्योत्तरकालमग्निबलसमां मात्रां खादेत् CaraS. vi. 1(2). 7.

**अग्निबलानुरूपम्** ( agnibalānurūpam ) *adv.* in proportion to the digestive power तद्भक्षयेदग्निबलानुरूपम् KalyāKā. 11. 114.

**अग्निबलापेक्षिन्** ( agnibalāpekṣ–in ) *adj.* [ *f.* –ṇī ] **i** dependent on the capacity of the digestive faculty ( i. e. which is in proportion to the digestive capacity ) मात्राशी स्यादाहारमात्रा पुनरग्निबलापेक्षिणी CaraS. i. 5. 1 (1922 Ed.); i. 5. 4 (1922 Ed.); **ii** taking into consideration the strength or weakness of the digestive faculty गुल्मेष्वाहारमग्निबलापेक्षी युञ्जीत AṣṭāSaṁ. ii. 95. 16 (4. 16); **iii** one who desires the power or capacity to digest, who is desirous of digestive power खादेदग्निबलापेक्षी ऋतुदोषाद्यपेक्षया SārṅgaS. ii. 5. 12; खादेदग्निबलापेक्षी प्रातरुत्थाय मानवः SiddhYo. 5. 84.

**अग्निबलाबल** ( agni–balābala ) *n.* the strength or weakness of the digestive power अग्निबलाबलम्…विद्यात् KalyāKā. 7. 55; गुञ्जामात्रं हेमजीर्णं ज्ञात्वा चाग्निबलाबलम् । घृतेन मधुना वाद्यात् RaseCin. 3. 80 (35. 27)

**अग्निबलि** ( agni–bali ) *m.* offering to the god of fire यस्य स्त्री वानुपेतो वा गृहेष्वग्निबलिं हरेत् ĀgniveGS. ii. 6. 5 (100. 4)

**अग्निबलोपस्तम्भ** ( agnibalopastambha ) *m.* the support given by the digestive capacity अग्न्यधिष्ठानमन्नस्य ग्रहणाद्ग्रहणी मता । नाभेरुपरि सा ह्यग्निबलोपस्तम्भबृंहिता CaraS. vi. 15. 54 (1922 Ed.)

**अग्निबाधकत्व** ( agnibādhaka–tva ) *n.* **i** capacity of excluding Agni अग्निप्रजापत्योरेकहोमोद्देशेन विधानात्…प्रजापतेर्न पाक्षिकमग्निबाधकत्वम् Mīmā. NyāPra. 252. 20; **ii** the state of excluding or setting aside the (Āhavanīya) fire प्राकृतेषु प्रयाजादिष्वग्निबाधकत्वम् BhāṭṭDī. ii. 60. 14 (*on* iii. 7. 24); ii. 60. 19 (*on* iii. 7. 24); *adv.* [Inst.] as being exclusive of Agni वृधाख्यगुणः…नाग्निबाधकत्व( ? त्वे )न विधीयते BhāṭṭDī. iii. 295. 13 (*on* x. 4. 16)

**अग्निबाधवत्** ( agnibādha–vat ) *adv.* like the exclusion of fire प्राकृतसर्वहोमेष्वग्निबाधवत्स्यात् BhāṭṭDī. iii. 250. 23 (*on* x. 3. 4)

**अग्निबाधा** ( agni–bādhā ) *f.* mishap through fire, loss or injury caused by fire न क्षुद्रोगारिजलाग्निबाधा IśānŚiPa. i. 30. 127; अग्निबाधामवाप्नोति राहौ शुक्रदशान्तरे JātaPā. 18. 163.

**अग्निबाहु** ( agni–bāhu ) *m.* **1** smoke [PW., MW.]; **2** name of one of the ten sons of Manu आग्नीध्रश्चाग्निबाहुश्च HariVaṁ. 7. 9; अग्निध्रः काश्यपश्चैव पौलस्त्यो मागधश्च यः । भार्गवो ह्यग्निबाहुश्च शुचिराङ्गिरसस्तथा VāyuP. ii 38. 116; BrahmāṇḍP. iii. 1. 113; आग्नीध्रश्चाग्निबाहुश्च सहः सवन एव च ।…स्वायंभुवस्यास्य मनोर्दशैते वंशवर्धनाः MatsyaP. 9. 4; आग्नीध्रश्चाग्निबाहुश्च … मनोः स्वायंभुवस्यैते दश पुत्राः BrahmāṇḍP. i. 13. 104; BrahmP. 5. 9; आग्नीध्रश्चाग्निबाहुश्च…स्वायंभुवस्य पुत्रास्ते मनोः ŚivaP. v. 34. 11 (444B. 11); आग्नीध्रश्चाग्निबाहुश्च विभुः सवन एव च । … स्वायंभुवस्यास्य मनोर्दशैते वंशवर्धनाः PadmP. v. 7. 83; **3** name of one of the seven sages in the fourteenth (Bhauma) *manvantara* सप्तर्षीनपि मे शृणु । अग्निबाहुः शुचिः शुक्रो मागधोऽग्निध्र एव च । युक्तस्तथा जितश्चान्यः ViṣṇuP. iii. 2. 44; आग्नीध्रश्चाग्निबाहुश्च…तदा सप्तर्षयः स्मृताः MārkP. 100. 31; **4** name of one of the ten sons of Priyavrata प्रियव्रतसुताः ख्यातास्तेषां नामानि मे शृणु । आग्नीध्रश्चाग्निबाहुश्च ViṣṇuP. ii. 1. 7; KūrmaP. 361. 10 (1. 40); अग्निध्रश्चाग्निबाहुश्च…प्रियव्रतसुताः AgniP. 107. 1; प्रियव्रतस्य दश पुत्राः बभूवुः…अग्निबाहुः…सवनान्ताः VarāP. 74. 4 (330. 10); LiṅgaP. i. 46. 17.

**अग्निबाहुल्य** ( agni–bāhulya ) *n.* plenitude of fire अग्निबाहुल्यात् फलबाहुल्यम् BṛĀraUBh. 223. 8 (*on* ii. 1. 7)

**अग्निबिन्दु** ( agni–bindu ) *m.* **1** name of a sage in Kāśī प्रणनाम…स ऋषिस्तं हृषीकेशमग्निबिन्दुः SkandP. iv. 60. 22; iv. 61. 244; काशीखण्डे अग्निबिन्दुं प्रति विष्णुः TristhaSe. 146. 19; VīraMi.(Tīrtha.) 203. 16; **2** the letter '*raṁ*' (obained by taking *agni* (र) together with *bindu* (anusvāra) अग्निबिन्दुसप्तमुद्राबीजम् ( सनुचार्य ) ParaśuKS. 10. 25 (262. 3)

**अग्निबिम्ब** ( agni–bimba ) *n.* orb or halo of fire सूर्यसोमाग्निबिम्बानि कह्लीशान् दलादिकान् IśānŚiPa. i. 25. 56; i. 30. 43.

**अग्निबिम्बक** ( agnibimba–ka ) *m.* orb or halo of fire त्रिगुणैः कन्दनालाब्जसूर्यसोमाग्निबिम्बकान्…यजेत् IśānŚiPa. ii. 55. 46.

**अग्निबीज** ( agni–bīja ) *n.* **1 A** syllabic value (seed) of the word Agni ( i. e. *ra* ) ĀgniveGS. ii. 5. 6 (84. 12); ललाटे लोचनं ले( नमालि )स्य अ( ख्या )ग्निबीजं समुच्चरेत् MānaSā. 70. 36; ध्यातं ध्वजो( ? जे )ऽग्निबीजं वशयति रामां रतेः जप्तः( ? प्तम् ) RatiRa. 14. 22; तृतीयं चाग्निबीजं तु संयुक्तं बिन्दुनेन्दुना SkandP. iii(2). 20. 21; **1 B** the key-word ( seed ) of a *mantra* (viz. *ram*) formed from the syllabic value of the word Agni (i. e. *ra*) ततो दक्षिणपुटे रमित्यग्निबीजम् … ध्यायन् VīraMi.(Bhakti.) 87. 27; रमित्यग्निबीजेन आग्नादीशानान्तं परितोऽग्निं निधाय BālamBha. i. 113. 5 (*on* 1. 24); **2** gold अग्निबीजं रत्नवरम् … हेम कर्बुरम् Vaija. 42. 20; TrikāŚe. ii. 9. 31; KośaKaTa. i. 2922.

**अग्निबीजसंपर्क** ( agnibīja–samparka ) *m.* contact between fire and seed न हि समानेऽग्निबीजसंपर्के केषांचिद्बीजशक्तिः क्षीयते, केषांचिन्न क्षीयते इति शक्यमङ्गीकर्तुमिति BrahmSūBh.(Śaṅ.) 791. 7 (*on* iv. 1. 15)

**अग्निबुद्धि** ( agni–buddhi ) *f.* notion or conception of (something as) fire, perception of (something as) Agni सापि मिथ्या भवेन्नित्यं बाष्पजाताग्निबुद्धिवत् ŚlokaVār. 5(4). 156 (395. 8); 'पुरुषो वाव गौतमाग्निः' 'योषा वाव गौतमाग्निः' इत्यत्र योषित्पुरुषयोरग्निबुद्धिर्मानसी भवति BrahmSūBh.(Śaṅ.) 26. 14 (*on* i. 1. 4) (Bhām. अग्नित्वस्त्वनपेक्षा अग्निबुद्धिः); या तु प्रसिद्धेऽग्नावग्निबुद्धिः …सा…वस्तुतन्त्रैव BrahmSūBh(Śaṅ.) 26. 15 (*on* i. 1. 4); ChāndoUBh. 357. 14 (*on* vi. 4. 1)

**अग्निबोधक** ( agni–bodhaka ) *adj.* denotative of Agni द्विरात्रादिवाक्यान्यग्निबोधकपदयुक्तानि…बोधयन्ति ŚivārkaMaDī i. 146. 4 (*on* i. 1. 3)

**अग्निबोधन** ( agni–bodhana ) *n.* conveying (the idea or concept of) fire न ह्यग्निबोधनार्थस्य धूमोऽस्तीति वाक्यस्य न धूमे तात्पर्यम् Nyāyāmṛ. 441A. 9.

**अग्निबोधिन्** ( agnibodh–in ) *adj.* [ *f.* –ī ] rousing or increasing the appetite, stomachaic त्रिफला… । चूर्णिता मधुना लीढा मेदिनी चाग्निबोधिनी SārṅgaS. ii. 6. 37.

**अग्निब्रह्मचारिन्** ( agni–brahmacārin ) *m.* a celibate who worships (the sacred) fire अग्निहोत्ररता विप्रास्तथाग्निब्रह्मचारिणः । पञ्चाग्नित्रतिनो ये वै तेऽग्निलोके ऽग्नितेजसः (comm. साग्निका ब्रह्मचारिणः) SkandP. iv. 10. 30.

**अग्निब्रह्मसाधारण** ( agnibrahma–sādhāraṇa ) *adj.* common to both fire (Agni) and Brahman, conveying both the meanings namely fire (Agni) and Brahman यतोऽग्निब्रह्मसाधारणस्यापि वैश्वानरशब्दस्य ब्रह्मपरिग्रहे VedāntPāSau. 69. 21 (*on* i. 2. 25)

**अग्निब्राह्मणरूप** ( agnibrāhmaṇa–rūpa ) *n.* form of Agni and the Brahmin अग्निब्राह्मणरूपेण ब्रह्म साक्षाद्व्यवस्थितम् BṛĀraUBhVā. i. 4. 1663.

**अग्निब्राह्मणसंश्रय** ( agnibrāhmaṇa–saṁśraya ) *m.* resorting to the fire and Brahmin(s) ब्राह्मणत्वात्मलाभोऽपि यः स्यात् क्षत्रियवैश्ययोः । स्वमहिम्ना तयोर्नासावग्निब्राह्मणसंश्रयात् BṛĀraUBhVā. i. 4. 1654.

**अग्निब्राह्मणाश्रय** ( agnibrāhmaṇāśraya ) *m.* resorting to Agni and Brahmin(s) ब्रह्मैवाविकृतं यस्मात्पूर्वयोर्विकृतं पुनः । क्षत्रियादौ समापेदे तेनाग्निब्राह्मणाश्रयात् । कामितार्थस्य संसिद्धिः कर्मिणां कामिनामिह BṛĀraUBhVā. i. 4. 1642.

**[1]अग्निभ** ( agni–bha ) *n.* the constellation Kṛttikā ब्रह्माग्निभध्रुवलवाः GrahaGa. 157. 7 (17. 3); शंभुकोणेऽग्निभचक्रम् … विन्यसेत् NāraS. 29. 76; VasiS. 32. 8; अग्निमीरग्निभे TājiNī. 2(5). (8). 1 (248); अग्निभं कृत्तिका NirṇaSi. 111. 11.

**[2]अग्निभ** ( agni–bha ) *adj.* who is like the god of fire वाय्वग्निभः… कृष्णनखे गजेऽसिन् । मुधेभशान्तिं रचयेद्द्विजः DvyāśraKā. 6. 34; *n.* gold [DEBRU. p. 747] अग्निभं स्वर्णमिति राजनिघण्टुः [ŚabdaKaDru.]

**अग्निभक्त** ( agni–bhakta ) *adj.* **A** cooked on fire केन दोषेण पुंसस्तु भक्तिः क्षरति मानसी । … अग्नि( न्य )भक्तस्य भोगस्य संनिधानं प्रियागमः ParaS. 30. 109; **B** divided by three दशहृतपरिशेषांशा नगाद्यग्निभक्ताः (comm. अग्नि 3 भिर्भक्ताः) GrahaLā. 3. 14.

**अग्निभक्ति** ( agni–bhakti ) *adj.* (items) that are allotted to Agni अथैतान्यग्निभक्तीनि Nir. 7. 8 (136. 15)

**अग्निभक्तिस्तुत** ( agnibhakti–stuta ) *adj.* praised with the attributes of Agni अग्निभक्तिस्तुतान् सर्वान् अत्रैव समापयेत् BṛDe. 1. 77.

**अग्निभक्ष** ( agni–bhakṣa ) *adj.* who has fire as his food साग्निको ह्यग्निभक्षश्च चचारात्यद्भुतं तपः PadmP. iv. 72. 2.

**अग्निभक्षिन्** ( agnibhakṣ–in ) *adj.* [ *f.* –ṇī ] who eats fire पात्रं प्रतिष्ठाप्य तस्मिन्पात्रे ह्रीं ऐं महालक्ष्मीश्वरि…सोमसूर्याग्निभक्षिणि…आगच्छागच्छ विश विश… स्वाहेति पुष्पाञ्जलिं विकीर्य ParaśuKS. 6. 19 (199. 1)

**अग्निभय** ( agni–bhaya ) *n.* danger or fear from fire अश्वत्थादग्निभयं विद्यात् GobhiGS. iv. 7. 23; दृश्यतेऽन्यच्च सहसा तत्राप्यग्निभयं वदेत् AVPari. 70B (20). 5; 19(1). 8; 70B(21). 4; कच्चिदग्निभयात् … राष्ट्रं स्वं परिरक्षसि MahāBhā. ii. 5. 112; अग्निरग्निभयादेव भीतैर्निर्वास्यते द्विजैः PañcRā. 1. 7; तत्र रवियोगे रिपुशस्त्राग्निभयम् JaimiUpaSū. iii. 3. 37; राहौ । अग्निभयमनलवर्णे पीडा च हुताशवृत्तीनाम् BṛSaṁ. 5. 53; 5. 57; 53. 61; 53. 102; 95. 40; 96. 6; यस्मिन् देशे वैष्णवेष्ट्या पूजितो मधुसूदनः । दुर्भिक्षरोगाग्निभयं तस्मिन्नास्ति न संशयः VṛHāriSm. 9. 76; यस्येदं लिखितं गेहे सदा तिष्ठति धारितम् । न तस्याग्निभयम् VarāP. 96. 63; ParāS. 28. 42; आग्नेय्यां प्रणते कीले भवत्यग्निभयं महत् SamarāSū. (i).

37. 58; (i). 17. 152; (i). 48. 7; BhaviP. 298B. 4 (i. 205. 17); मूषकोऽग्निभयात्तत्र वेगेनापि पलायित: PadmP. iii. 3. 18; v. 26. 150; GaneP. ii. 57. 23; काष्ठेष्वग्निभयं विद्यात् VāstuVi. 2. 37; पूर्वादिदिक्षु प्रणते (शङ्कौ) धनं चाग्निभयं मृतिम् … निर्दिशेत् ĪśānS'iPa. ii. 26. 86; ii. 35. 35; NāraS. 2(5). 2; विवाले च कुमारस्य प्रभिन्नेऽग्निभयं भवेत् Hastyāyur. 627. 11 (4. 10); सारमेय: … । मांसास्थिभक्ष्याणि च भस्ममध्ये स्याद्गोपयन्नग्निभयं प्रभूतम् S'ārngaPa. 2438; 2490; 3024; S'ilpaRa. i. 4. 34.

**अग्निभयकर** (agnibhaya-kara) *adj.* indicating or foreboding fear or danger from fire उदय एव गर्गेणापि वर्णस्याग्निभयकरत्वप्रतिपादनात् AdbhuSāg. 17. 2.

**अग्निभयकृत्** (agnibhaya-kṛt) *adj.* indicating or foreboding fear or danger from fire विनोत्पातेन शशिज: कदाचिन्नोदयं व्रजेत् । अनावृष्ट्यग्निभयकृदनर्थं नृपविग्रहम् NāraS. 2(4). 1.

**अग्निभयद** (agnibhaya-da) *adj.* indicating or foreboding fear or danger from fire यमसूर्यौ च विज्ञेयं पश्चिमोत्तरशालकम् । राजाग्निभयदं नृ(? नॄ)णां कुलक्षयकरं च यत् MatsyaP. 254. 10.

**अग्निभयप्रद** (agnibhaya-prada) *adj.* indicating fear or danger from fire इषोर्जमासयो: शस्त्रदुर्भिक्षाग्निभयप्रद: । उदितश्चन्द्रज: श्रेष्ठो रजतस्फटिकोपम: NāraS. 2(4). 15; सर्वग्रस्ताविनेन्दू भौ क्षुद्राग्न्यग्निभयप्रदौ NāraS. 2(8). 10.

**अग्निभयादिजात** (agnibhayādi-jāta) *adj.* (*gṛhapraveśa*) caused by fear of fire etc. (such a *gṛhapraveśa* is named *dvandva*) अपूर्वसंज्ञ: प्रथमप्रवेशो यात्रावसाने च सुपूर्वसंज्ञ: । द्वन्द्वाह्वयस्त्वग्निभयादिजातस्त्वेवं प्रवेशो(? शा:) त्रिविध: प्रदिष्ट: VasiS. 38. 3.

**अग्निभर्जित** (agni-bharjita) *adj.* burnt by fire शृणु राजन् पुरावृत्तं सतीदेहेऽग्निभर्जिते । भ्रान्त: शिवस्तु बभ्राम क्वचिद्देशे स्थिरोऽभवत् DevīBhā. vii. 31. 4.

**अग्निभव** (agni-bhava) *m.* born of Agni (an epithet of Kārttikeya) नारद: प्राह कार्त्तिकेयो हरोद्भव: । गाङ्गेयोऽग्निभवश्चेति विख्यातस्तारकान्तक: BrahmP. 82. 10.

**अग्निभवन** (agni-bhavana) *n.* (rite performed in) the fire-chamber जपे तथाग्निभवने स्नाने दाने यथोदिते । … व्याख्याने भव्यबुद्धीनां नारायणरतात्मनाम् । शिरसा दधतामाज्ञां कृत्वा पादाभिवन्दनम् । प्राणयात्रां तत: कुर्यात् PauṣkS. 31. 167.

**अग्निभवभीतिहृत्** (agnibhavabhīti-hṛt) *adj.* removing the fear arising from fire पिण्डम् … भूतग्रहादिचोरारितोयाग्निभवभीतिहृत् । सिंहव्याघ्रगजादिभ्यो रक्षत्येनं सदा धृतम् ĪśānS'iPa. i. 31. 83.

**अग्निभसंयुक्त** (agnibha-saṁyukta) *adj.* [*f.* -ā] being in conjunction with the constellation Kṛttikā सहस्ये तिष्यकोपेता (v. l. अग्निभसंयुक्ता) … … द्वादशी पावना स्मृता BṛParāSm. 10. 271.

**अग्निभा** (agnibhā) *f.* blaze of fire चिता । पथिकवृन्दमदीदहदग्निभाभरच्चिता रचिता स्मरबन्धुना VasaViKā. 6. 57.

[1]**अग्निभाग** (agni-bhāga) *m.* section or part (in the direction) presided over by Agni, the South-East region श्रीगृहस्याग्निभागे तु विचित्रं विष्णुमन्दिरम् BrahmāṇḍP. iii. 39. 63; कृत्वा पुन: स्थण्डिलमग्निभागे … जुहोतु ĪśānS'iPa. i. 11. 60; क्षितिपरिधिषडंशे प्राचि धारानगर्यास्त्रिनयनदिशि यद्वा पत्तने चाग्निभागे । कथय गणक तत्र क्षिप्रमक्षांशकान् मे Golā. 258. 26 (13. 28); जुहुयात् खदिराज्यान्नं तन्मन्त्रेण च भक्तित: । अग्निभागे यदि भवेत् पश्चाहात्सुहृदागम: VasiS. 45. 156.

[2]**अग्निभाग** (agni-bhāga) *m.* a fiery portion, a portion comprising fire विनाग्निभागं जलगोल इन्दुर्भृङ्गागमिश्रोऽर्ककरप्रतप्त: । मुक्त्वा स्वशैत्यं न कथं भवेत् SiddhāTaVi. 406. 10.

**अग्निभागतस्** (agnibhāga-tas) *adv.* with three parts सप्तांशे वाथ पञ्चांशे कुड्ये श्रुत्यग्निभागत: । क्रमाच्छराश्विभागे वा स्थाप्यो योगोऽधिकोऽन्तरे ĪśānS'iPa. ii. 31. 140.

**अग्निभागाग्र** (agnibhāgāgra) *n.* end-point in the South-East, the South-East point भेदकरेखाया ईशाग्निभागाग्रसंश्लिष्टे वामदक्षिणरेखे आकृष्य … पश्चिमस्यां दिशि … द्वितीयशक्तिं रचयेत् SetuBa. 28. 4.

**अग्निभाजन** (agni-bhājana) *n.* the receptacle of fire, the seat of fire(?) तेजोवती सभा वह्नेस्तर्कु: पुंस्यग्निभाजनम् KośaKaTa. 1. 469; तर्कुस्तु कर्तके पुंसि कुन्दयन्त्रेऽग्निभाजने KośaKaTa. 2. 3367.

**अग्निभाण्ड** (agni-bhāṇḍa) *n.* vessel containing fire अग्नीन् अग्निभाण्डमग्निहोत्रोच्छेषणमित्येतान्यनुहरति HirPiMe. xix. 1. 2.

**अग्निभार्या** (agni-bhāryā) *f.* *Svāhā* the wife of god Agni स्वाहाग्निभार्या Liṅgānu.(He.) 52. 5.

[1]**अग्निभाव** (agnibhāva) *m.* name of a god during the epoch of Svārociṣa Manu उग्र: प्रज्ञोऽग्निभावश्च … एते देवा: स्वारोचिषेऽन्तरे BrahmāṇḍP. i. 36. 53.

[2]**अग्निभाव** (agni-bhāva) *m.* **1A** nature of fire यज्ञे जगद्विज्ञानाख्ये वितते हरिमेधस: । स्रुक्त्वयाज्यतया चोपवक्तृत्वेनाग्निभावत: AhirbuS. 58. 19; (श्री:) अहमग्निभावमुपागता LakṣmīT. 50. 125; तद्धर्मव्यपदेशस्यात्मनि माणवकेऽग्निभावस्येवोपचरितत्वसिद्धे: S'rutaPra. ii. 356. 23 (*on* ii. 3. 17); शस्त्रस्य सर्वात्मनाग्निभावो विवक्षित: Prasā. i. 950. 14; **1B** nature of the god Agni अधिदेवतात्वस्याग्निभावस्य प्राप्ति: BṛĀraUBh. 359. 8 (*on* iii. 1. 3); **2** existence of fire धूमभावेऽग्निभावेन व्याप्तेऽनग्निस्ततश्च्युत: S'lokaVār. 5(4). 122 (385. 2); अग्निभावो धूमस्य व्यापकतयोक्त: NyāyRa. 385. 19 (*on* 5(4). 122); अग्निभावो धूमभावं प्रति व्यापकत्वेन दर्शित: TātpaṬ.(U.) 335. 19 (*on* 5(5). 124); अन्यस्य भावेऽप्यन्यस्योपलब्धिर्नियता दृश्यते यथाग्निभावे धूमस्य BrahmSūBh.(S'aṅ.) 317. 9 (*on* ii. 1. 15); यदा हि धूमभावोऽग्निभावेन व्याप्तो भवति – तदानग्निरस्य भाव: … अधूमे धूमाभाव एव भवति Kāśi. iii. 75. 16 (*on* 5(4). 1. 22); बहलोर्ध्वत्वादिविशिष्टस्याग्निभावनियतभावत्वमभिधीयते PrakaVi. 432. 12.

**अग्निभावता** (agnibhāva-tā) *f.* existence of fire अन्यत्र यदि नाम स्याद्धूमभावेऽग्निभावता BṛĀraUBhVā. iv. 3. 726.

**अग्निभावापत्ति** (agnibhāvāpatti) *f.* attainment of the state of fire न समिदादिसामान्यात् लोकस्याग्निभावापत्ति: BrahmSūBh.(S'aṅ.) 697. 12 (*on* iii. 3. 51)

**अग्निभावेष्टि** (agnibhāveṣṭi) *f.* acceptance of the existence of fire धूमानुमानाभावेऽप्यग्निभावेष्टे: IṣṭaSi. 304. 21.

**अग्निभास** (agnibhāsa) *m.* name of one of the Amṛtābha gods during the epoch of Cariṣṇu Manu स्वत्रविप्रोऽग्निभासश्च … अमृताभा: ह्येते देवाश्चारिष्णवेऽन्तरे VāyuP. ii. 1. 46.

**अग्निभासा** (agni-bhāsā) *f.* the plant *Cardiospermum halicacabum* तेजस्विन्यपरा स्यात्कटभी लवणाग्निभासा च AbhidhāMañ. 94. 3; DhanvNi. 61. 20.

**अग्निभास्करवर्ण** (agnibhāskara-varṇa) *m.* the sounds or letters *r* and *ṣ* denoted by the words *agni* and *bhāskara* अग्निभास्करवर्णेन स्वयं देव उदीर्यते AhirbuS. 55. 50.

**अग्निभास्वर** (agni-bhāsvara) *adj.* radiant like fire चिन्त्यमव्यक्तपद्मं च हिमहेमाग्निभास्वरम् PāraS. 5. 72.

**अग्निभिन्नगात्र** (agnibhinna-gātra) *adj.* whose body is scorched by fire शिलाग्निभिन्नगात्रस्य तत्र साध्यादि शल्यकम् HārīS. i. 2. 10.

**अग्निभीति** (agni-bhīti) *f.* fear of fire प्राग्दक्षिणो यदा कर्णश्चीयमानो बहिर्व्रजेत् । तत्राग्निभीतिरतुला SamarāSū. 48. 48.

**अग्निभु** (agni-bhu) *n.* [AltGr. III. p. 195] water (produced from fire) [MW., APTE]; gold [APTE].

**अग्निभुज्** (agni-bhuj) *adj.* consuming the fire चकोरस्येवाग्निभुजो मिष्टान्नं नैव रोचते GaneP. ii. 105. 24.

**अग्निभू** (agni-bhū) *m.* **1** name of a teacher of Sāmaveda शवा अग्निभुव: काश्यपात् VaṁśBr. 2. 22; **2** name of Skanda or Kārttikeya सेनानीरग्निभूर्गुह: AgniP. 359. 6; प्रकटिततनुरग्निभूरभूच्छरवणत: पुनरुद्भवन्निव S'rīKaC. 23. 21; 23. 28; उग्र: स्वयं गेहवती च चण्डी पुत्रोऽग्निभू: Surath. 1. 13; यद्वीक्षसे शिखिनमग्निभुव: … तद्वन्दामहे हरभुजङ्ग तवैव जन्म SaduktiKa. 243. 10; भाति स सोऽस्मिन् प्रसृते बलौघे … देवानीके यथाग्निभू: VīraBhā. 3. 7; AmaK. 78; AbhidhāRaMā. 1. 19; AbhidhāCin. 209; Vaija. 7. 55; NāmMā. 67; ParaNā. 185; S'abdaRaSaK. 219. 13; *f.* funeral pyre अग्निभूश्चिता ParyāRaMā. 1150; *adj.* produced from fire महाबलेन तेनायं धूतो धूम इवाग्निभू: Surath. 3. 58.

**अग्निभूत** (agni-bhūta) *adj.* assuming the form of fire मां होत्रायामग्निभूतमिन्धाना: … तिष्ठेयु: GopBr. i. 2. 19; य: … अग्निभूतोऽग्निवर्चसाम् BrahmāṇḍP. ii. 72. 40 = BrahmP. 179. 45 = BhaviP. 235A. 28 (i. 157. 33); PadmP. v. 16. 35; धारयेत्तत्र (हृदि) चैतन्यमग्निभूतं समन्तत: ParaS. 4. 11; *m.* name of Skanda or Kārttikeya नमस्ते कृत्तिकासूनो अग्निभूत नमोऽस्तु ते SkandP. i(1). 31. 83; *n.* the element of fire दग्ध्वाकाशमथो वायुमग्निभूतं तथा दहेत् PadmP. iv. 110. 88.

**अग्निभूति** (agni-bhūti) *m.* **1 A** name of a man पूजिते च वाक्यस्य टे: प्लो भवति । शोभन: खल्वासि अग्निभूता३इ JaineVyā. 400. 20 (*on* v. 3. 99); 401. 14 (*on* v.3. 1041); परिगणनं किम्? "आगच्छ भो अग्निभूते३" JaineVyā. 401. 16 (*on* v. 3. 104); JaineVyā. 401. 9 (*on* v. 3. 103); 401. 14 (*on* v. 3. 104); प्रश्नान्ते – अगम: ३ पूर्वा३न् ग्रामा३न् अग्निभूता३इ … प्रत्यभिवादे – आयुष्मान् एधि अग्निभूता ३इ KāśiVṛ. *on* P. viii. 2. 107; Pradī. 7. 150B (*on*

P. viii. 2. 107); अग्निभूतिरूपाध्यायं वृद्धं जनकसंनिभम् । जघान BṛKathāK. 15. 5; प्रत्यभिवादे आयुष्मानेधि अग्निभूत३इ SiddhāKau. 612B. 6; **1B** another name of Vahnibhūti अग्निभूतिस्ततः क्रुद्धः सह भ्रात्रा विनिर्गतः PadmP.(Ra.) 109. 46; **1C** name of the first son of Agniśarman and Tilakā अग्निशर्मा-भवद्विप्रस्तद्भार्या तिलका परा । तयोः सप्त सुता जाताः ... अग्निभूतिर्भवेदाद्यः BṛKathāK. 57. 474; **1D** name of a son of Somaśarman and Kāśyapī सोमशर्मप्रिया चासीत्काश्यपी नाम विश्रुता । तन्नन्दनोऽग्निभूतिश्च वायुभूतिरपि क्रमात् BṛKathāK. 126. 183; **1E** name of a Brahmin अत्रान्तरे पुरोद्याने क्षमाकान्तः समागमत् । दुष्कर्मैकक्षदावाग्निरग्निभूतिर्गणेशिता SamarāSaṁ. 2. 229; समागादग्नि-भूत्याख्यो विप्रः श्रीवृषभप्रभुम् SamarāSaṁ. 9. 526; **1F** one of the eleven chief pupils of Mahāvīra गणा नवास्यर्षिसंघा एकादशगणाधिपाः । इन्द्रभूति-रग्निभूतिश्च ... गौतमाः AbhidhāCin. 31; **2** one to whom fire is granted अग्निरस्य भूयादिति । अग्निभूतिः KātanVṛ. iv. 5. 112; BhāṣāVṛ. iii. 3. 174.

**अग्निभूसित** ( agnibhūsita ) *m.* name of a tree, *Alstonia scholaris* मदगन्धः सप्तवर्णः शुक्तिपर्णोऽग्निभूसितः PañcTaPra. 13. 24.

**अग्निभृष्ट** ( agni-bhṛṣṭa ) *adj.* roasted on fire अग्निभृष्टजयाचूर्णं मधुना निशि दीयते SārṅgaS. ii. 12. 78.

**अग्निभेद** ( agni-bheda ) *m.* **A** disease of digestion, slowness of digestion रेवती जज्ञे ... कर्माणि शृणु तस्याः प्रधानतः । ... स्वरवर्णाग्निभेदश्च KāśyaS. 100B. 13; **B** a particular instance of fire धूममेदादेवाग्निभेदानामनु-मानमङ्गीकर्तव्यम् NyāyRa. 389. 9 (*on* 5(4). 133); न च भूतपूर्वेण योगेन प्रवृत्तिः ...प्रतिक्षणमग्निभेदात् SāstrDī. 77. 11 (*on* i. 4. 10); अग्निभेदेन अरणिभेद आवश्यकः BhāṭṭCan. 85. 23 (*on* xv. 2. 32); धिष्ण्यं स्थाने गृहे भे ना दैत्याचार्याग्निभेदयोः AnekāK. 613.

**अग्निभेदतस्** ( agnibheda-tas ) *adv.* on account of the division of the (sacrificial) fires नारायणस्त्वं जगतां समुद्भवस्तथा भवानेव चतुर्मुखो महान् । सत्त्वाग्नि(?दि)भेदेन तथाग्निभेदतो युगादिभेदेन च संस्थितस्त्रिधा VarāP. 25. 27.

**अग्निभेषजा** ( agni-bheṣajā ) *f.* name of a medicinal plant, *Odina pinnata* or *Gymnema sylvestre* मेषशृङ्गयजशृङ्गी स्याद् बस्तशृङ्ग्यग्निभेषजा AbhidhāMañ. 71. 1.

**अग्निभैरव** ( agni-bhairava ) *m.* **i** one of the ten Bhairavas associated with Kiricakraratha (महान्तो भैरवश्रेष्ठाः ख्याता विपुलविक्रमाः) तृतीयश्चाग्नि-भैरवः (एते दशैव विख्याताः) BrahmāṇḍP. iii. 20. 81; **ii** name of a Kṣetra-pāla deity अग्निभैरवक्षेत्रपालाय नमः NityoNi. 142. 10.

**अग्निभ्रम** ( agni-bhrama ) *m.* going round the fire (in marriage) न यावदग्निभ्रममेत्युदूढतां नलस्य भैमी NaiṣC. 15. 64.

**अग्निभ्राजस्** ( agní-bhrājas ) *adj.* possessing fiery splendour, glittering like fire अग्निभ्राजसो विद्युतो गभस्त्योः ṚV. v. 54. 11.

**अग्निभ्रान्ति** ( agni-bhrānti ) *f.* **A** going round the (marriage-)fire इयमिव स एवाग्निभ्रान्तिं करोति पुरा यतः करमपि न कस्तस्यैवोत्कः सकौतुकवीक्षितम् NaiṣC. 19. 20 (comm. अग्निभ्रान्तिं वह्निप्रदक्षिणपरिभ्रमणम्); **B** mistaking (another object) as fire, NaiṣC. 19. 20 (comm. अग्निभ्रान्तिं वह्निविपर्ययज्ञानम्)

**अग्निमग्न** ( agni-magna ) *adj.* plunged into the fire (i. e. much afflicted) अवनीपतिः । अग्निमग्न इवानैषीच्चतुर्विंशतिवत्सरीम् PāṇḍaC. 1. 74.

**अग्निमच्छ्राद्ध** ( agnimac-chrāddha ) *n.* the Srāddha rite (observed) by one maintaining the sacrificial fires तस्य च कर्मद्वयापर्यात्तत्वात्कथमग्नि-मच्छ्राद्धस्यापि पिण्डपितृयज्ञानन्तर्यम् SmṛtiCan. v. 84. 6.

**अग्निमज्ज्ञान** ( agnimaj-jñāna ) *n.* the cognition that one has fire न ह्यग्निमज्ज्ञानानपेक्षमेव धूमवत्ताज्ञानं जन्यते NyāyRa. 455. 17 (*on* 5(7). 20)

**अग्निमणि** ( agni-maṇi ) *m.* the sun-stone सूर्यकान्तमणिः इति जटाधरः [SabdaKaDru.]

**अग्निमण्डल** ( agni-maṇḍala ) *n.* **A** a mass of fire, a meteor ज्वलच्च निपतत्येतदादित्यादग्निमण्डलम् Rāmā. vi. 31. 6; **B** the orb or circle of fire (mentioned as *ādhāra* (stand or support) for the *arghyapātra*) संचिन्त्य... सोमेऽग्निमण्डलम् (पूजां कर्तुमर्हति साधकः) ParaS. 4. 22; अग्निमण्डलाय ... अर्घ्य-पात्राधाराय नमः ParaśuKS. 2. 5 (77. 20); दक्षिणे शंखसंस्थानं तत्राधारं प्रकल्प-येत् । अग्निमण्डलमाधारं दशतत्त्वसमन्वितम् BṛBrahmaS. iv. 2. 64; अग्निमण्डलाय दशकलात्मने अर्घ्यपात्राधाराय नमः NityoNi. 19. 23; 37. 9; **C** a diagram (circular or triangular) sacred to the deity of fire तन्मध्ये रविसोमाग्निमण्डलानि यथाक्रमं कल्पयित्वा NaraP. 7. 52; SkandP. ii(8). 1. 75; कर्णिकाकेशराण्येव सोम-सूर्याग्निमण्डलम् AgniP. 148. 3; मायातत्त्वं च संपूज्य सोमसूर्याग्निमण्डलैः IśānŚiPa i. 34. 64; i. 38. 11; ध्यात्वा दक्षिणपाणिस्थं त्रिकोणं चाग्निमण्डलम् LakṣmīT. 48. 25; LalitāSaBh. 127. 26 (*on* 171); BālamBha. i. 114. 3 (*on* i. 25); VīraMi.(Pūjā.) 118. 12; 135. 11; **D** place for the god of fire ज्ञात्वाग्निमण्डलं तत्र दिक्षु कुण्डचतुष्टयम्...प्रकल्पयेत् VasiS. 35. 13; SetuBa. 212. 12.

**अग्निमण्डलत्व** ( agnimaṇḍala-tva ) *n.* the state of being a diagram representing the god of fire अग्निमण्डलत्वेन विभावितस्य तस्य पश्चिमादिप्रादक्षिण्य-क्रमेण...दशवह्निकलाः संपूज्य NityoNi. 37. 10.

**अग्निमण्डलनिर्णय** ( agnimaṇḍala-nirṇaya ) *m.* ascertainment of the diagram sacred to the god of fire तदैतदुक्तलक्षणद्वारेणाग्निमण्डलनिर्णयं कृत्वा प्रतिविधानमाचरणीयम् AdbhuSāg. 393. 20.

**अग्निमत्** ( agni-má(n)t ) *adj.* [*f.* -ī] [Debrü. p. 881] **A** put on fire (a cooking pot) इन्द्रासोमा समघशंसमभ्य१घं तपुर्ययस्तु चुरुरग्निमाँ इव AV. viii. 4. 2; (Sāyaṇa अग्निसंयुक्तः अग्नौ क्षिप्तः चरुः इव); **B** (a *mantra*) with the word *agni* in it अग्निमन्त्युपसदां प्रतीकानि भवन्ति GopBr. ii. 2. 8; **C** possessed of Agni अग्नयेऽग्निमत इष्टिं निर्वपेत् JaimiBr. 1. 65; अग्नयेऽग्निमतेऽ-ग्नावभ्युद्धृते SāṅkhāSS. iii. 4. 1; इष्टिः ... कार्या चाग्निमतेऽग्नये MahāBhā. iii. 211. 31; **D** who keeps the sacred fire इयमग्निमतां श्रेष्ठ धर्षितुं वै कृता मतिः MahāBhā. i. *1719. 3; पुरीमावासयामास राजा दशरथस्तदा । तामग्निमद्भिरा-वृताम् Rāmā. i. 5. 23; (नलः) पुण्यकृत्सोमपोऽग्निचित् (v. l. अग्निमान्) MahāBhā. iii. 61. 47; नानिष्ट्वा नवसस्येष्ट्या पशुना चाग्निमान् द्विजः ManuSm. 4. 27; अधीतवेदो जपकृत्पुत्रवानन्नदोऽग्निमान् YājñaSm. 3. 57; पितृयज्ञं विनिर्वर्त्य तर्पणाख्यं तु योऽग्निमान् । ... कुर्याच्छ्राद्धम् MatsyaP. 16. 21; 16. 23; 16. 58; अग्निमाद्ध्या-दग्निमानग्रजो यदि GobhilSm. 1. 69; 2. 168; 3. 35; 3. 66; नैव गच्छेत्...योऽग्निमान LaghvāśvaSm. 1. 69; 2. 1; प्रेतपितृकोऽग्निमान्छ्राद्धाधिकृतः BālaKrī. i. 150. 12 (*on* 1. 225); ii. 173. 16 (*on* 3. 300 (307)); अग्निमान् वैवाहिकेनाग्निना तद्वान् ManuBh. i. 260. 20 (*on* 3. 112); i. 329. 10 (*on* 4. 5); i. 340. 29 (*on* 4. 27); त्वं हि पौलस्त्य विदितो वेदवानग्निमानिति RāmC. 21. 119; येनाग्निमन्तो ब्राह्मणा अग्नि-जीविनश्च पीड्यन्ते ViṣṇuDhaP. ii. 166 (1. 8); KūrmaP. 628. 6 (2. 24); 659. 5 (2. 30); BrahmP. 220. 57; PadmP. v. 9. 88; द्रव्यवान् विद्यावानग्निमानिति NyāyaRaMā. 116. 3 अग्निमान् विद्वांश्चाधिक्रियेत SāstrDī. 467. 20 (*on* vi. 2. 7); तत्रामिषादि पितृसेवितमप्यौपवसथ्येऽहन्यग्निमता न भक्ष्यम् Aparā. 513. 26 (*on* 1. 248); 946. 18 (*on* 3. 55); अग्निमान् कृत्वैव पितृयज्ञं श्राद्धं कुर्यात् SmṛtiCan. v. 34. 9; v. 84. 3; v. 331. 14; अयं च पाकारम्भोऽग्निमता मन्त्रवन्निर्वापपूर्वकः कर्तव्यः CaturCin. iii(1). 1162. 15; निजाग्नियजन्मनः ... कलेवरमग्निमतोऽग्निसादकृत Ragh. 19. 64; अग्निमान् बहुमात्रावानेकः कौटुम्ब आश्रमः AhirbuS. 15. 18; **E** possessing fire, having fire अग्निमान् वायुमान् MahāBh. i. 99. 14 (*on* i. 1. 39); मनोक्षय इति किम् । अग्निमान् JaineVyā. 391. 2 (*on* v. 3. 31); देशोऽग्निमिति धूमस्य कर्तृत्वं भवनं प्रति नानुमीयते NyāyVār. 52. 17 (*on* i. 1. 5); देशो धूमे-नानुमीयते NyāyVār. 52. 17 (*on* i. 1. 5); देशोऽग्निमिति धूमस्य कर्तृत्वं भवनं प्रति SlokaVār. 5(5). 70 (424. 8); 5(4). 26 (354. 3); पर्वतोऽग्निमानिति प्रतिज्ञाय PrakaPañ. 222. 3; अग्निमानयं प्रदेशो धूमवत्त्वात् NyāySā. 8. 12; ĀtmaTaVi. 344. 15; NyāyaRaMā. 70. 3; PramāMī. 24. 20 (*on* i. 1. 29); 46. 19 (*on* i. 2. 16); 52. 27 (*on* ii. 1. 11); पर्वतोऽग्निमानित्येव प्रतिज्ञानात् KhaṇḍanKhā. 605. 2; TarkBhā.(Ke.) 39. 6; 82. 13; तृणादिमणीभावहेतुत्वादग्निमद्भिमम् NyāySiA. 230. 21; NyāyPari. 108. 8; 120. 11; NyāySu.(Ja.) 7B. 3 (*on* i. 1. 1); 20B. 3 (*on* i. 1. 1); Nyāyāmṛ. 627B. 1; 628A. 7; SarvaDaKau. 44. 21; YuktiSneha. 62. 32 (*on* i. 1. 5); GuruCandr. i. 367. 11; TarkSaṁ.(A.) 38. 20; यो यो धूमवान् स सोऽग्निमान् YatīndraDī. 18. 9; SarvaMaSaṁ. 5. 4; 5. 6; SiddhāKau. 150B. 16; AlaṅkāMañ. 170. 13;

**अग्निमतानुवर्तिन्** ( agnimatānuvartin ) *adj.* who follows the view that Agni is the highest of all the gods अन्ये सुहोत्रवीतिहोत्रकव्यहोत्रादयः अग्निमतानुवर्तिनः प्रत्यवतिष्ठन्ते SaṅkaVi.(Ā.) 90. 2.

**अग्निमत्कर्तृक** ( agnimatkartṛ-ka ) *adj.* (a rite) performed by one who maintains the sacred fires मत्स्यपुराणे अग्निमत्कर्तृकामावास्याश्राद्धप्रयोगे पत्नीनां पृथक्पिण्डा विहिताः CaturCin. iii(1). 92. 20.

**अग्निमत्कर्मन्** ( agnimat-karman ) *n.* a rite performed with the sacred fires अग्निमत्कर्माङ्गत्ववशादेव दातुरिष्टिः प्रतीयते GuruCandr. i. 327. 8; i. 324. 11; अग्निमत्कर्मार्थतयैव जयादिविधानात्तेतरकर्मार्थत्वम् BhāṭṭDī. i. 337. 7 (*on* iii. 4. 13); इयमिष्टिः किं वाश्वदानसम्बन्धिनी किंवाग्निमत्कर्माङ्गभूताश्वदानसम्बन्धिनीति BhāṭṭDī. i. 338. 14 (*on* iii. 4. 14); i. 340. 7 (*on* iii. 4. 14); i. 340. 11 (*on* iii. 4. 14)

**अग्निमत्क्रतु** ( agnimat-kratu ) *m.* a sacrifice performed with the sacred fires cf. **अग्निमत्कर्मन्**, इष्टेरग्निमत्क्रतुविशेषाङ्गत्वमविरुद्धम् BhāṭṭDī. i. 342. 18 (*on* iii. 4. 16)

**अग्निमत्ता** ( agnimat-tā ) *f.* the state of containing fire, possession of fire देशविशेषेऽग्निमत्तयानुमीयते NyāyVār. 52. 20 (*on* i. 1. 5); सर्वेषां धूमवता-मग्निमत्ता विहिता PrakaPañ. 224. 9; TātpaṬ.(Vā.) 180. 18 (*on* i. 1. 5); यदा

दूराद् धूमस्याधारविशेषो न लक्ष्यते तदा धूमोऽग्निमत्तया साध्यते Kāśi. iii. 124. 26 (*on* 5(5). 63); NyāyRa.356. 10 (*on* 5(4). 32); ततश्चानुमितसत्ता न सर्वेषां धूमवतामग्निमत्तावगन्तव्या S'āstrDī. 62. 5 (*on* i. 1. 5); धूमवत्तामात्रमग्निमत्तामात्रव्यतिरेकि KhandanKhā. 670. 26; 651. 7.

**अग्निमत्ताज्ञान** (agnimattā-jñāna) *n.* cognition of the state of containing fire or of possession of fire अनग्नौ च क्वचिदपि···अग्निमत्ताज्ञानमुत्पद्यते S'āstrDī. 62. 2 (*on* i. 1. 5)

**अग्निमत्तानपेक्ष** (agnimattānapekṣa) *adj.* [*f.* -ā] independent of the possession of fire अग्निमत्तानपेक्षा तु धूमवत्ता प्रतीयते S'lokaVār.5(7). 20 (455. 3)

**अग्निमत्तावगति** (agnimattāvagati) *f.* cognition of the state of containing fire अनुमानात् तु सर्वधूमवतामग्निमत्तावगतिः S'āstrDī. 79. 10 (*on* i. 1. 5)

**अग्निमत्त्व** (agnimat-tva) *n.* **A** the state of possessing the sacred fires निषादस्थपतिं याजयेदिति। निषादस्थपतिं प्रति संदेहः। किमधिकृतानामन्यतम उतान्य एवेति। अन्यतम इति ब्रूमः। स हि समर्थः। विद्वत्त्वादग्निमत्त्वाच्च S'ābaBh. 1386. 9 (*on* vi. 1. 51); क्षेत्रजौरसपुत्रिकापुत्राणामग्निमत्त्वं पार्वणवत्त्वे व्यवस्थापकम् Aparā. 543. 22 (*on* 1. 255); तदनुरोधात् सहत्वापत्तिरिति चेत्, न। अग्निमत्त्वात्, तत्त्यागासंभवाच्च BālaKrī. i. 91. 19 (*on* 1. 96); **B** the state of containing fire, possession of fire cf. **अग्निमत्ता,** एकदेशदर्शनादनुमानमुत्पद्यत इत्येकदेशं दर्शयितुं हेतुवचनं प्रयोक्तव्यम्। यथाग्निमत्त्वे साध्ये धूमवांश्चायमिति PrakaPañ. 222. 23; TātpaṬ.(Vā.) 266. 17 (*on* i. 1. 32); ĀgaPrā. 74. 4; अग्निमत्त्वे साध्ये प्रमेयत्वमनैकान्तिकत्वादहेतुः ĀtmaTaVi. 538. 10; तद्व्यापकमौष्ण्यमिव व्यावर्तमानमग्निमत्त्वम् Kiraṇā. 100. 11; AnuVyā. 27A. 4 (*on* 2. 2); PrakaVi. 566. 9; NyāyKu. 99. 3; यत्र धूमवत्त्वं तत्राग्निमत्त्वम् TarkBhā.(Ke.) 40. 7; NyāySu. (Ja.) 260B. 8 (*on* ii. 1. 2); (अग्निवद्वै दारुपात्रमित्यग्निमता दारुपात्रेण दुह्यमानस्य पयसः)···अग्निमत्त्वस्य वान्यत्रौपचारिकत्वात् यातयामाभावः SaṅkarKāBh. 15. 27 (*on* i. 2. 9)

**अग्निमत्त्वज्ञान** (agnimattva-jñāna) *n.* cognition of the state of containing fire or of the possession of fire पर्वते धूमवत्त्वदर्शनादग्निमत्त्वज्ञानम् MānaMe. 25. 7.

**अग्निमत्त्वनिश्चय** (agnimattva-niścaya) *m.* ascertainment or determination of the possession of fire अग्निमत्त्वनिश्चयदशायामपि तत्तद्धेतुविषयबहुतरापरधर्मानवधारणात् धूमं प्रति पर्वतस्य पक्षत्वप्रसङ्गात् KhandanKhā. 730. 14.

**अग्निमत्त्वप्रसङ्ग** (agnimattva-prasaṅga) *m.* contingency of the possession of fire न ह्यग्निमत्त्वप्रसङ्गोऽस्यभावात् परिह्रियते S'rutaPra. iB. 68. 10 (*on* i. 1. 1)

**अग्निमत्त्ववत्** (agnimattva-vat) *adv.* like (i. e. signifying) the possession of fire पदार्थैरनुरक्तोऽसौ वाक्यार्थः संप्रतीयते। नात्मना गमयन्त्येनं विना, धूमोऽग्निमत्त्ववत् S'lokaVār. 7. 233 (910. 4)

**अग्निमत्त्वविपक्ष** (agnimattva-vipakṣa) *m.* the opposite of the possession of fire अग्निमत्तया हि पर्वतो नियम्यमानो योऽग्निमत्त्वविपक्षस्तदभावः, तदभावनियतं च धर्मान्तरं तस्मादेव नियम्यते तस्यैव व्युदासो भवति NyāyRa. 362. 12 (*on* 5(4). 55)

**अग्निमत्त्वाभाव** (agnimattvābhāva) *m.* **A** non-maintenance of the sacred fire (अनुपनीतस्य) पार्वणश्राद्धादौ त्वग्निमत्त्वाभावादनधिकारः ManuBh. i. 165. 9 (*on* 2. 172); आधानस्य संस्कारापवर्गादग्निमत्त्वाभावान्न कर्मान्तरेष्वधिकारः MayūMāli. 519. 25 (*on* vi. 8. 3); **B** absence of the state of containing fire न चासौ पर्वतवत् साध्यसाधनरूपमाकारद्वयं बिभर्ति येन सम्बन्धं पक्षीकृत्याग्निमत्तया शक्यते साधयितुं, सम्बन्धमात्रस्याग्निमत्त्वाभावात् NyāyRa. 356. 11 (*on* 5(4). 32); स्फुलिङ्गस्याग्निमत्त्वाभावेऽप्यग्नेः स्फुलिङ्गाद् भेदमादायैव जन्यजनकभावः VīraMi. 843. 7 (*on* 3. 67)

**अग्निमत्त्वोपलम्भ** (agnimattvopalambha) *m.* cognition of the state of containing fire पर्वतोऽग्निमानित्युक्ते किं पर्वत एवाग्निः उत पर्वतोऽग्निमानेवेति। न प्रथमः महानसादीनामप्यग्निमत्त्वोपलम्भात् TārkiRa. 290. 16.

**अग्निमत्प्रतीति** (agnimat-pratīti) *f.* cognition of what contains fire यदन्वयव्यतिरेकि तदनुमानम्, यथा धूमविशेषदर्शनमग्निमत्प्रतीतौ NyāyVār. 261. 19 (*on* ii. 1. 46)

**अग्निमत्प्रेतश्राद्ध** (agnimatpreta-śrāddha) *n.* obsequial rite for a dead person who used to maintain the sacred fires अग्निमत्प्रेतश्राद्धे विशेषमाह कात्यायनः CaturCin. iii(1). 295. 15.

**अग्निमथ्** (agni-math) *adj.* who is churning out fire, PrakriKau. i. 262. 5; अग्निं मन्थतीत्यग्निमत् SiddhāKau. 96B. 2; *m.* the *mantra* used in this (i. e. churning) operation on the Araṇi itself [APTE]

**अग्निमथन** (agni-mathana) *n.* **A** churning of fire अग्निमथनादीनां तु दक्षिणविहारे प्राप्त्यभावात् BhāṭṭDī. ii. 344. 24 (*on* vii. 1. 3); **B** *m.* name of a tree, *Premna spinosa* अग्निमन्थोऽग्निमथनस्तर्कारी विजयन्तिका DhanvNi. 27. 17; RājNī. 27.

**अग्निमदन** (agni-madana) *m.* fire of passion जज्वाल चाग्निमदनः MahāBhā. iv. App. 1. 12(25)

**अग्निमदुक्थ्य** (agnimad-ukthya) *m.* the Ukthya sacrifice characterised by the piling up of the fire-altar श्रीष्टोमाः···अग्निमदुक्थ्या वा MānS'S. 201. 10.

**अग्निमद्दर्शश्राद्ध** (agnimad-darśaśrāddha) *n.* the *śrāddha* rite to be performed by an Āhitāgni on the new-moon day तदग्निमद्दर्शश्राद्धविषयम् SmṛtiCan. v. 408. 16; CaturCin. iii(1). 1056. 16.

**अग्निमद्देश** (agnimad-deśa) *m.* area consisting of fire अग्निमद्देशे भवने कर्ता भवन् धूमोऽग्निमतो देशस्य संयोगी भवति Kāśi. iii. 127. 13 (*on* 5(5). 70)

**अग्निमद्भाव** (agnimad-bhāva) *m.* the state of possessing fire पर्वतस्याग्निमद्भावं वदन्त्यत्रापि S'ivaP. vi. 16. 21 (491B. 8)

**अग्निमद्विशेष** (agnimad-viśeṣa) *adj.* a specific one among those possessing fire न ह्यग्निमद्विशेषेण पर्वतादिनान्वितो धूमो दृष्टः Kāśi. iii. 25. 25 (*on* 5(4). 27)

**अग्निमध्य** (agni-madhya) *m.* midst of fire अग्निमध्यं प्रविष्टं तं लुब्धो दृष्ट्वाथ पक्षिणम्। चिन्तयामास MahāBhā. xii. 142. 42; आदावेवाग्निमध्यात्तु मैत्रेयी ब्रह्मनिर्मिता MahāBhā. xiv. App. 1. 4(1784); विमानमतुलप्रभम्।···अग्निमध्यात समुत्थितम् JayāS. 1. 124; VāmaP. 17. 69; देवाः ··· अग्निमध्ये ··· तुष्टुवुस्ताम् VṛGautaSm. 576. 22(10); विनिवेद्य निधायान्ये बलिभूमेर्बहिर्द्विज। योक्तव्यमग्निमध्ये तु PauṣkS. 26. 13; PāraS. 7. 143; अग्निमध्ये···देवमावाह्य (जुहुयात्) ParaS. 8. 30; अग्निमध्ये रवौ चन्द्रे···तत्तत्त्वं किल मुक्तये YaśasCam. ii. 393. 4; मरीचिकाग्निमध्ये तु सविता द्विपदस्थितः AgniP. 105. 10; अग्निमध्ये त्र्यहं चैव तपश्चर्यमिकारयत् KathāSaSāg. viii. 3. 120; शत्रुजलाग्निमध्ये···सुप्तं प्रमत्तम्···रक्षन्ति पुण्यानि पुराकृतानि SimhāDvā. 32. 18; प्रधानदेवतां अङ्गदेवताश्च गन्धपुष्पादिभिः अग्निमध्ये पूजयेत् NityoNi. 132. 10.

**अग्निमध्यगत** (agnimadhya-gata) *adj.* residing in fire संतर्पयेद्विप्र अग्निमध्यगतं प्रभुम् JayāS. 15. 2; त्वमग्निमध्यगतार्चनम्। यथाविधि समाचक्ष्व PāraS. 26. 1.

**अग्निमध्यतस्** (agnimadhya-tas) *adv.* **A** from the middle of the fire दद्यादद्याहुतित्रयम्। मध्येऽग्नि मन्त्रनाथस्य मध्याद्वाह्येऽग्निमध्यतः JayāS. 23. 47; ततः सांसारिकानर्थान् सर्वान् भक्तजनस्य च। मन्त्रात्मा सुप्रसन्नस्तु निर्दहत्यग्निमध्यतः PauṣkS. 4. 207; **B** out of the fire पतितं चार्धदग्धं तमाकृष्यैवाग्निमध्यतः KathāSaSāg. vii. 3. 67.

**अग्निमध्यस्थ** (agnimadhya-stha) *adj.* residing in the midst of fire शवाः श्यामा विकसद्दन्तपङ्क्तयः। हसन्तीवाग्निमध्यस्थाः MārkP. 8. 113; अहमेवाग्निमध्यस्थो हविर्गृह्णामि नित्यशः SkandP. i(2). 30. 24.

**अग्निमध्यस्थकाय** (agnimadhyastha-kāya) *m.* a body in the midst of fire अग्निमध्यस्थकायस्यैवं व्यवस्थितिः DevīBhāP. vii. 24. 20.

**अग्निमध्योद्भव** (agnimadhyodbhava) *adj.* [*f.* -ā] born in the midst of fire अग्निमध्योद्भवाम् ··· भुञ्जते कपिलां ये तु शूद्रा लोभेन मोहिताः MahāBhā. xiv. App. 4 (1732); VṛGautaSm. 567. 14(9).

**अग्निमन्** (agniman) *m.* [DEBRU. p. 357] KāvyālaṅSū. v. 2. 56; Cappeller's Ed. अग्निमादिष्विमनिज्मृग्यः w. r. for मुग्धिमादिष्विमनिज्मृग्यः.

**अग्निमन्त्र** (agni-mantra) *m.* prayer addressed to Agni समस्तान् (अग्नीन्) ···। जुहुयादग्निमन्त्रेण राजवृक्षकदारुभिः ArthS'ā. iii. 220. 3 (14. 1); सप्तत्यग्निमन्त्रेण चूतसमिद्भिरिदं सार्ध्यैं ··· होमयेत् HārīS. ii. 7. 4; पुरोधाः ··· होमं कुर्यादग्निमन्त्रैः MatsyaP. 231. 10; BhaviP. 202B. 25 (i. 136. 54); सौम्योऽपि स्यादग्निमन्त्रः फडन्तः ĪśānS'iPa. i. 4. 3; ParaśuKS. 9. 17 (250. 5)

**अग्निमन्त्रतस्** (agnimantra-tas) *adv.* with a prayer addressed to Agni जुहुयादग्निमन्त्रतः VasiS. 45. 157.

**अग्निमन्त्रपूतात्मन्** (agnimantrapūtātman) *adj.* who is purified by fire and prayers तेनाग्निमन्त्रपूतात्मा क्षत्रियो ब्राह्मणो भवेत् S'ivaP. 430A. 10 (v. 21. 15)

**अग्निमन्थ** (agni-mantha) *m.* fire produced by friction शलपरिचार्य्यं परिचित्याग्निमन्थेन पचेत् MānS'S. 107. 5.

**अग्निमन्थ** (agnimantha) *m.* **1** *Clerodendrum phlomoides* पाटलिं चाग्निमन्थं च बिल्वं श्योनाकमेव च CaraS. i. 2. 9 (1922 Ed.); i. 4. 38 (1922 Ed.); अग्निमन्थबिल्वस्योनाक° ··· °माषाणाम् ··· यथालाभमौषधानां कषायं कारयेत् CaraS. vi. 3. 267 (1941 Ed.); BhelaS. 36. 9 (1. 22); HārīS. iii. 2. 61; अग्निमन्थः कुरवकः···एतेन परिषिक्तस्य तैलमभ्यञ्जनं शृणु KāśyaS. 104B. 29; °तिलपर्णिकाग्नि-

391.7 (*on* i. 2.29)

**अग्निरूपत्व** ( agnirūpa-tva ) *n.* the state of being of the form of fire न च वैश्वानरस्याग्निरूपत्वाभावे तं प्रति गार्हपत्याद्यायतनकल्पनं न संगच्छेतेति वाच्यम् S'ivārkaMaDī. i. 394.25 (*on* i. 2.33); यजमानस्य अग्निरूपत्वेन स्तुतिः क्रियते BālamBha. iii. 5.2 (*on* 3.1-2); सोमसूर्याग्निरूपत्वं जलस्योपरि कीर्तितम् TantrRā. 2.79.

**अग्निरूपदेवता** ( agnirūpa-devatā ) *f.* deity in the form of fire, the god of fire अग्नये होत्रमसिन्विति चतुर्थीसमासमाश्रित्याग्निरूपदेवतानेन समर्थ्यते Mīmā-NyāPra. 250.33; बहुव्रीहिसमासेनाग्निरूपदेवताविधिः BhāṭṭCin. ii. 53.17 (*on* i. 4.3); MayūMāli. 595.36 (*on* ix. 1.14); अपरे तु 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहे'ति मन्त्रवर्ण एवाग्निरूपदेवताप्रापकः ArthSaṁ. 102.2.

**अग्निरूपापन्न** ( agnirūpāpanna ) *adj.* which has acquired the form of fire ब्रह्म वा इदमग्र आसीत्-यदग्निं सृष्ट्वा अग्निरूपापन्नं ब्रह्म BṛĀraUBh. 144.5 (*on* i. 4.11)

**अग्निरूपिन्** ( agnirūp-in ) *adj.* [*f.* -ī] having the form of Agni (fire) उमाभर्त्रे नमस्तुभ्यम्...वरुणेन्द्राग्निरूपिणे MatsyaP. 250.34; तुलसी...कलुषशुष्के-न्धदहनायाग्निरूपिणी BrahmVaiP. ii. 1.69; S'ivS. 2.17; बीजत्रयेण भिन्नः स्यात्सोमसूर्याग्निरूपिणा BhāvPra.(S'ā.) 182.11(7)

**अग्निरेचक** ( agni-recaka ) *m.* bile पित्ते...स्यादग्निरेचकः S'eṣaNā. 1648.

**अग्निरेतस्** ( agní-retas ) *n.* **i** the seed of fire (i. e. from which Agni is born) ऋत्वियवती स्थो अग्निरेतसौ TaiBr. I. ii. 1.14; MānS'S. 30.4; **ii** the semen of fire षट्कृत्वस्तत्तु निक्षिप्तं अग्निरेतः कुरूद्वह SkandP. i(2). 29.108. *adj.* having Agni as the seed, whose seed is Agni नमः कपर्दिने नीललोहिता-याग्निरेतसे S'ṛṅgāPra. 350.24;

**अग्निरेतस** ( agni-retasá ) *adj.* [AltGr. II. 1. p. 110. sprung from Agni's semen(?)] with fire as the seed (i. e. sprung from fire) समानजन्म वै पयश्च हिरण्यं चोभयं ह्यग्निरेतसम् S'atBr. III. ii.4.8.

**अग्निरोचिष्णु** ( agni-rocisṇu ) *adj.* flaming like fire भरतायाग्निरोचिष्णु-र्गन्तुं संविदधे मतिम् PadmP.(Ra.) 37.54.

**अग्निरोदन** ( agni-rodana ) *n.* weeping of god Agni अत्र रोदनश्रुतावश्रु-प्रभवत्वरूपासदर्थावलम्बनेन [ v. l. अग्निरोदनसन्दर्भावलम्बनेन ] निषेध्यनिन्दापरम् S'ivārkaMaDī. i. 156.30 (*on* i. 1.3)

**अग्निरोधतस्** ( agnirodha-tas ) *adv.* by obstructing the (gastric) fire वायुः परिचितो यत्नादग्निना सह कुण्डलीम् । बोधयित्वा सुषुम्णायां प्रविशेदग्निरोधतः S'ārṅgaPa. 4499 (? 4399)

**अग्निरोमन्** ( agni-roman ) *n.* fiery hair (on the body) अग्निरोमप्रभा-न्विताम्...भुञ्जते कपिलां ये तु शूद्रा लोमेन मोहिताः MahāBhā. xiv. App. 1. 4(1734); अग्निरोमप्रभाविताम् ।... भुञ्जते कपिलां ये तु ...। पतितांस्तान् विजानीयात् VṛGautaSm. 567.16(9)

**अग्निरोहिणी** ( agni-rohiṇī ) *f.* name of a disease in which there is a malignant tumour or boil in the arm-pit and other places समासेन चतुश्च-त्वारिंशत् क्षुद्ररोगा भवन्ति । तद्यथा ... अग्निरोहिणी SuśruS. ii. 13.3; कक्षाभागेषु ये स्फोटा जायन्ते मांसदारु(र)णाः । अन्तर्दाहज्वरकरा दीप्तपावकसन्निभाः । सप्ताहाद्वा दशाहाद्वा पक्षाद्वा घ्नन्ति मानवम् । तामग्निरोहिणीं विद्यादसाध्याम् SuśruS. ii. 13.20 = RugVi. 55.17; SuśruS. iv. 20.47; कक्षाभागेषु जायन्ते येऽस्याभाः साग्निरोहिणी AṣṭāHṛ. vi. 31.15; KalyāKā. 14.60; BhāvPra.(Bhā.) 8(60 ? 61). 67.

**अग्निलक्षण** ( agni-lakṣaṇa ) *adj.* [*f.* -ā] **A** indicated by Agni (as the presiding deity, said of some syllables or letters) शब्दव्यक्तिस्तदूर्ध्वे तु स्थिताकेंद्वग्निलक्षणा PāraS. 5.83; **B i** in the form of fire (as an element) अग्निप्रत्यक्षेण हि धूमे न किंचित् उद्व्यूढम् अग्निलक्षणे धूमाद् भिन्नेऽशे तस्यावगम-हेतुत्वात् PratyabhiVi. i. 359.8 (i. 7.4); **B ii** relating to or in the form of god Agni न च यदग्नये चेत्यत्राग्निवाक्यविहितकर्मण्यग्नेः सद्भावान्न तत्राग्नि-लक्षणगुणविधिः संभवति MayūMāli. 64.28 (*on* i. 4.4); अग्निलक्षणदेवताकार्यमन्य-स्मात् सूर्यादेर्न भवति MayūMāli. 473.28 (*on* vi 3.5); 711.27 (*on* x. 4.18); **B iii** relating to or in the form of the sacrificial fire वसन्तादिवाक्यविहिता-धानानामग्निलक्षणसाध्यैक्येऽपि भेदो द्वितीये भवद्भिरेवोक्तः MayūMāli. 254.21 (*on* iii. 3.11)

**अग्निलक्षण** ( agni-lakṣaṇa ) *n.* **i** the features of Agni दीप्तः संहतमूर्ति-रायततनुर्निर्वेपनो दीप्तिमान् । ... शेषं लक्षणमग्निलक्षणसमम् BṛSaṁ. 84.2; एत-देवाग्निलक्षणम् S'āraTi. 5.155; **ii** (auspicious) omen indicated by (the direction of the flame of) fire; cf. **अग्निलिङ्ग** *n.* तथाग्निलक्षणोत्पत्तौ शुभे यायान्महीपतिः ViṣṇuDhaP. ii. 176.36.

**अग्निलक्ष्मन्** ( agni-lakṣman ) *n.* characteristic feature of the sacred fire (for receiving oblations) किं हव्येष्वग्निलक्ष्म स्यात् किं च निर्युक्तलक्षणम् SamarāSū. (i). 3.57.

**अग्निलङ्घित** ( agni-laṅghita ) *adj.* overcome with fire अग्निलङ्घितस्थाणु-गणनोरुकम्...अष्टवङ्कनामपदं लेसिकापसदम् YaśasCam. ii. 43.6; सः ... माम् ... अग्निलङ्घितं रत्नमिव नष्टतेजसम्...अवलोक्य...मां व्यजिज्ञपत् YaśasCam. ii. 146.1.

**अग्निला** ( agnilā ) *f.* **i** name of the wife of Agnimitra (a priest of king Atibala) अतिबलो राजा...। अग्निमित्रो द्विजोऽस्यासीदग्निला तन्नितम्बिनी BṛKathāK. 126.182; **ii** wife of Somaśarman, a priest of king Narapāla, YaśasCam. ii. 283.19; **iii** wife of Somadeva (a Brahmin of S'āligrāma) ब्राह्मणः सोम-देवोऽत्र (शालिग्रामे) भार्या तस्याग्निलेत्यभूत् PadmP.(Ra.) 109.38.

**अग्निलाघव** ( agni-lāghava ) *n.* mildness of the fire of the stomach, indigestion अ(? आ)हारस्य रसः सारो यो न पक्वोऽग्निलाघवात् । आमसंज्ञाञ्च लभते BhāvPra.(Bhā.) 8(1).45.

**अग्निलादयित** ( agnilā-dayita ) *m.* husband of Agnilā (Somaśarman) तत्र(? त्र)पतिपुरोहितस्याग्निलादयितस्य ... सोमशर्मणः सुतः ... विश्वानुलोमो नाम YaśasCam. ii. 283.19.

**अग्निलाभ** ( agni-lābha ) *m.* availability of fire निरग्नेरप्यग्निलाभे भोक्तु-विप्रलाभे ग्रहणे च पाकेनैव श्राद्धमित्याहुः BālamBha. i. 548.22 (*on* 1.249)

**अग्निलिङ्ग** ( agni-liṅga ) *adj.* [*f.* -ā] indicative of (referring to or addressed to) Agni मन्त्राः प्राग्दक्षिणेऽग्निलिङ्गाश्च । जप्तव्या द्विजमुख्यैः BṛSaṁ. 60.11; येनानेनैवं लिङ्गेनाग्निलिङ्गेनेन्द्रलिङ्गेन वा किंचित् करोतीति आख्यातप्रत्यय-विहितत्वेनोपलक्षितेनाग्नीध्रोपस्थानमिति TantrVā. 790.23 (*on* iii. 2.21); अग्नि-लिङ्गा मनोता प्रकृतौ नाग्नीषोमावभिधातुं शक्नोतीत्याशङ्का भवति ṬupṬ. 262.7 (*on* x. 4.42); मन्त्रान्तराण्यग्निलिङ्गानि ... प्रकरणे विद्यन्ते S'āstrDī. 709.15 (*on* x. 4.16); SaṅkarKāBh. 73.3 (*on* ii. 1.64)

**अग्निलिङ्ग** ( agni-liṅga ) *n.* **i** (auspicious) omen indicated by the (direction of flame and smoke of) fire cf. **अग्निलक्षण** *n.* यात्रायाञ्च तिथि-दिवसकरणनक्षत्र ° ... ° अग्निलिङ्गहस्त्यश्वेङ्गित ° ... ° शकुनसैन्यनिवेशभूमयोऽग्निवर्णा मन्त्रिचरदूताटविकानां यथाकालं प्रयोगाः परदुर्गलम्भोपायाश्चेत्युक्तं चाचार्यैः BṛSaṁ. 2.4(11); **ii** indication or sign of (various) sacred fires वैश्वानरमृत आजात-मग्निमित्यादिशब्दः । वैश्वानरे तद्बुतं भवति । हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीय इत्याद्यग्निलिङ्गमादिशब्देोक्तम् BrahmaSūBh.(Ma.) 13A.8 (*on* i. 2.26); **iii** sign or indication of (the existence of) fire मिथ्यालिङ्गैश्च सिध्येत्किमपि यदि भवेद्वाष्पधूमोऽग्निलिङ्गम् TattvMu. 3.50.

**अग्निलिङ्गता** ( agniliṅga-tā ) *f.* the state of being the sign or indication of (the existence of) fire स्वभावादविनाभावे स्यादौष्ण्यस्याग्निलिङ्गता BṛĀraUBhVā. iv. 3.743.

**अग्निलिङ्गमध्यस्थ** ( agniliṅgamadhya-stha ) *adj.* dwelling in the Liṅga (phallus) (in the form) of fire यत्राग्निलिङ्गमध्यस्थः प्राह देवो महेश्वरः । धर्मार्थ-काममोक्षार्थमाग्नेयमधिकृत्य च MatsyaP. 53.37; AgniP. 271.14.

**अग्निलेश** ( agni-leśa ) *adj.* containing fire-sparks नक्षत्रमार्गे भ्रमितं समीरैरन्योन्यसंपातविभिद्यमानम् । तदद्रिकूटं भवदग्निलेशं चूर्णीकृतं भूतलमाससाद Rāvaṇā. 19.40.

**अग्निलोक** ( agni-loka ) *m.* the world of Agni तद् (परिप्लवं) देवाः समारुह्य सर्वाँल्लोकाननुपरिप्लवन्ते...इममपोदकमग्निलोकम् KauṣīBr. 20.1 (89.12); स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति S'āṅkhāĀ. 3.3 (11.23) = KauṣīU. 1.3; अग्नितीर्थे ततो गच्छेत्तत्र स्नात्वा नरर्षभ । अग्निलोकमवाप्नोति MahāBhā. iii. 81.119 = PadmP. i. 27.27; तेन दानेन पूतात्मा सोऽग्निलोके महीयते VṛGautSm. 572.13(9); नीलतीर्थे नरः स्नात्वा ... । अग्निलोकमवाप्नोति SkandP. iii(1). 42.46; iv. 84.73; v(3). 29.29; ii(9). 3.16; BrahmSūBh.(S'aṅ.) 824.1 (*on* iv. 3.2); अग्निलोकं समुत्सृज्य मम लोकं स गच्छति VarāP. 151.54; प्रासादपुरतो वीर पताकां पातयेद्यदि । इन्द्रलोकं तदा कर्ता विशेद्वै यदु-नंदन । आग्नेय्यामग्निलोकं तु याम्यां यमसदो भजेत् BhaviP. 206B.33 (i. 138.80); यस्तु दद्यात्तत्र दधि ब्राह्मणाय मनोरमम् । सोऽप्यग्निलोकमासाद्य भुङ्क्ते भोगान्सुशोभनान् PadmP. v. 18.204; GaṇeP. ii. 52.13; S'ivaP. iii. 13.2 (310A.16); आदित्यात्पूर्वमग्निलोकमागच्छति VedāntPāSau. 412.23 (*on* iv. 3.2); BrahmSūBh.(S'rī.) ii. 473.2 (*on* iv. 3.3); किं चैवमग्निलोकानन्तरं वायुलोक इत्यपि वक्तुं शक्यम् AṇuBh. 334.21 (*on* iv. 3.2); (क्रममुक्त्यधिकारी) अतोऽर्चिराख्य-मग्निलोकमादौ गच्छति AṇuBh. 333.27 (*on* iv. 3.2); S'ivārkaMaDī. i. 361.17 (*on* i. 2.16); i. 362.33 (*on* i. 2.16); i. 469.27 (*on* i. 3.32); ii. 380.15 (*on* iii. 3.58); सूर्यकिरणद्वाराग्निलोकं गत्वा YatīndraDī. 77.22.

**अग्निलोकज्ञान** ( agniloka-jñāna ) *n.* knowledge of the world of Agni (fire) नासाग्रे चित्तसंयमादिन्द्रलोकज्ञानम् । तदधश्चित्तसंयमादग्निलोकज्ञानम् S'āṇḍU. 417.13 (1.68+)

**अग्निलोकादिक** (agnilokādi-ka) *adj.* [*f.* -ā] beginning with the world of fire छान्दोग्ये अर्चिरादिका गतिः श्रूयते, कौषीतकिवाक्ये अग्निलोकादिका S'rutaPra. ii. 613. 25 (*on* iv. 3. 1)

**अग्निलोचन** (agni-locana) *adj.* [*f.* -ā] fiery-eyed नरसिंह महासिंह⋯। ग्रहानशेषान्सर्वेश खाद खादाग्निलोचन AgniP. 31. 34; ज्वलमानात्तु कपिला तावत्कुण्डात्समुत्थिता।⋯अग्निलोचना SkandP. v(3). 39. 7.

**अग्निलोचन** (agni-locana) *m.* **i** name of one of the nine divine attendants of Guha (Kārttikeya) सदेवसेनापतिरग्निलोचनः सदण्डहस्तोऽप्यसिधारिसंज्ञकः ⋯ विप्रप्रियश्चेति नव ध्वजेशा गुहे TantrSa. 9. 33; **ii** name of S'iva गङ्गाधरः⋯शवरो मन्दरमणिर्विशालाक्षोऽग्निलोचनः KalpaK. 390. 92.

**अग्निलोमन्** (agni-loman) *adj.* [*f.* °mā] having fiery (or tawny) hair सूर्यमण्डलमध्यात्तु ब्रह्मणा निर्मिता पुरा। कपिला या पिङ्गलाक्षी ⋯ अग्निपुच्छा अग्निमुखी अग्निलोमानलप्रभा VarāP. 112. 14; कपिलाः ⋯ अग्निपुष्पा अग्निलोमा तथान्या चानलप्रभा। तामाग्नेय्यां सदा दद्याद्ब्राह्मणाय BhaviP. 843A. 8 (iv. 161. 35)

**अग्निवंश** (agni-vaṁśa) *m.* race or dynasty sprung from Agni आङ्गिरसा ह्यग्निवंशसमुद्भवाः।⋯ प्रष्टुमुद्यताः BrahmP. 158. 11; अग्निवंशस्य विस्तारो बभूव बलवत्तरः BhaviP. 467A. 28 (iii(3). 4. 6); अग्निवंशनृपाणां च चरित्रं शृणु विस्तरात् BhaviP. 542A. 34 (iii(4). 1. 13); MatsyaP. 51 (colophon); VāyuP. i. 29 (colophon)

**अग्निवंशज** (agnivaṁśa-ja) *m.* born in the liniage of Agni हत्वाग्निवंशजान्भूपान्स्थापयिष्यामि वै कलिम् BhaviP. 465B. 6 (iii(3). 1. 34); कपिलो ह्यग्निवंशजो जीवविशेष एव मायया विमोहितः GoviBh. 86. 9 (*on* ii. 1. 1)

**अग्निवंश्य** (agnivaṁś-ya) *adj.* born in Agni's lineage चतुर्गेहं च मे⋯ अग्निवंश्यैश्च क्षत्रियैश्च विनाशितम् BhaviP. 467B. 33 (iii(3). 4. 17)

**अग्निवक्त्र** (agni-vaktra) *adj.* [*f.* -ā] **i** with fire in the mouth शृगालिन्यग्निवक्त्रा प्रत्यादित्यं विराविणी MahāBhā. iii. 1058*(4); **ii** having Agni for the face (जगन्मातरमम्बिकाम्) अग्निवक्त्रां रुद्रशिखां विष्णुचित्तां तु भावयेत् DeviBhāP. xi. 16. 96.

**अग्निवक्त्र** (agni-vaktra) *m.* **i** name of god S'iva (नाम्नामष्टसहस्रेण स्तुतवान् वृषभध्वजम्) ब्रह्मकालोऽग्निवक्त्रः VāyuP. i. 30. 250; **ii** name of an attendant of Viṣṇu अग्निवक्त्रो महावक्त्रो महासेनो महोदरः।⋯ कुमुदाक्षगणा ह्येते PāraS. 17. 160; *n.* **1** the marking-nut plant (*Semecarpus anacardium*) अजमोदहिङ्ग्वग्निवक्त्रं लवणस्य वर्गः AṣṭāSaṁ. ii. 336. 18 (6. 40); अग्निवक्त्रं भल्लातके ApūNā. 43A. 2; **2** gold तपनीयाग्निवक्त्राग्निबीजहेमसुलोहकम्⋯सुवर्णम् KośaKaTa. 1. 2922.

**अग्निवक्त्रक** (agnivaktra-ka) *m.* **1** name of an attendant of Viṣṇu करालः काकजिह्वश्च काकवक्त्रोऽग्निवक्त्रकः।⋯ कुमुदाक्षगणा ह्येते PāraS. 17. 160; **2** the marking-nut plant (*Semecarpus anacardium*) भल्लातको नभो भल्लो वीरवृक्षोऽग्निवक्र(? क्त्र)कः MadaPāNi. 17. 271.

**अग्निवक्त्रा** (agni-vaktrā) *f.* a species of spider or insect दंशे दाहोऽग्निवक्त्रायाः स्रावोऽत्यर्थं ज्वरस्तथा।⋯दाहविस्फोटसंयुताः SuśruS. v. 8. 118.

**अग्निवचन** (agni-vacana) *n* **A** words of Agni अग्निवचनात्सीतां ज्ञात्वा विगतकल्मषाम् (अग्रहीदमलां रामः) Rāmā. i. 107*(6); SkandP. iii(1). 22. 22; **B** words of the sacred fires न स्वतन्त्रा विद्या कल्पयितुं शक्यते अग्निवचनविरोधात् PrakaVi. 187. 19; *adj.* **A** expressive of the deity Agni अग्निवचन इन्द्रशब्दः S'ābaBh. 844. 5 (*on* iii. 3. 14); **B** expressive of the (S'yena-shaped) fire-altar न च चिनोतेः केवलस्याग्निवचनत्वम् TantrVā. 272. 3 (*on* i. 3. 26); **C** expressive of the (domestic) fire न ⋯ गृह्येऽग्नौ विधानम्। गृह(? ह्य)शब्दस्य विशिष्टोपादानादग्निवचनत्वादेष एव न्यायः ManuBh. ii. 273. 18 (*on* 9. 111)

**अग्निवचनत्व** (agnivacana-tva) *n.* **A** the state of being expressive of Agni (सवित्रादिवाक्यानाम्) अग्निवचनत्वे वा सति S'ābaBh. 1681. 19 (*on* ix. 1. 36); **B** the state of being expressive of the (S'yena-shaped) fire-altar क्विबन्तचिनोतिश्रुतेः श्येनचिच्छब्दस्य सकलस्याग्निवचनत्वं निश्चीयते TantrVā. 272. 4 (*on* i. 3. 26); **C** state of being expressive of the (domestic) fire गृह(ह्य ?) शब्दस्य ⋯ विशिष्टोपादानादग्निवचनत्वादेष एव न्यायः ManuBh. ii. 273. 18 (*on* 9. 111)

**अग्निवचस्** (agni-vacas) *n.* Agni's words श्रुत्वा त्वग्निवचो गङ्गा तं गर्भमतिभास्वरम्। उत्ससर्ज Rāmā. i. 36. 17.

**अग्निवज्र** (agni-vajra) *n.* a kind of iron धूम्रवर्णा भवेद्भूमिरङ्गं वह्निशिखोपमम्। अग्निवज्रमिदं ज्ञेयम् YuktiKa. 146. 2.

**अग्निवत्** (agni-vá(n)t) *adj.* [*f.* -tī] [DEBRU. p. 881; cf. P. viii. 2. 15] **1** placed on or heated by fire इन्द्रासोमा समघशंसमभ्यघं तपुर्ययस्तु चरुरग्निवाँइव R̥V. vii. 104. 2 = AV.(P.) xvi. 9. 2 = Nir. 6. 11 (116. 5); **2A** possessed of or characterised by fire-element हिरण्यमुपास्य जुहोत्यग्निवत्येव जुहोति TaiS. V. i. 3. 2 = VI. i. 8. 3 = VI. ii. 9. 3; VI. vi. 3. 2; अग्निवान् वै दर्भस्तम्बः। अग्निवत्येव व्याचष्टे TaiBr. II. ii. 1. 5; अग्निवद् वै दारुपात्रम् TaiBr. III. ii. 3. 8 = SaṅkarKāBh. 15. 9 (*on* i. 2. 8) = BhāṭṭaCan. 9. 24 (*on* xiii. 2. 5); TaiBr. I. vi. 10. 3; III. vii. 3. 3; **2B** associated with sacrificial fire or deity Agni अग्नयेऽग्निवते पुरोडाशमष्टाकपालं निर्वपेत् TaiS. II. ii. 4. 6 = BaudhS'S. ii. 123. 21 = BhārS'S. ix. 14. 3 = ĀpaS'S. ix. 10. 11 = HirS'S. xv. 3. 21 = VaikhāS'S. 20. 18; अग्नयेऽग्निवते स्वाहा AitBr. 32. 5(816) = BhārGS. I. 18 (18. 15); साग्नावग्निप्रणयनेऽग्निवते ĀśvaS'S. I. iii. 13. 3; **2C** possessing sacrificial fire (i. e. where it has been carried forth) (प्रदेशे) अग्निवत्युत्तरं परिग्राहं परिगृह्य⋯संप्रैषमाह BaudhS'S. i. 112. 5 = i. 183. 15 = ii. 311. 18 = iii. 94. 6 = ĀpaS'S. xi. 5. 11 = HirS'S. vii. 4. 15; VaikhāS'S. 8. 10; **3** one who maintains the sacred fire जीवदग्निहोत्रे उपवीतेन दोहोऽग्निवतोऽग्नेरुत्तरेऽधिश्रयणमुद्वासनं च HārLa. 139. 7.

**अग्निवत्** (agni-vát) *adv.* **1** like the sacred fire अग्निवत् ते कृणोमि AV.(P.) ii. 78. 4; अग्निं पशव्यमग्निवदाभर S'atBr. VI. iii. 1. 38 = VI. iii. 2. 9; VI. iii. 3. 3; VI. iii. 3. 4; (राजानम्) उपचरेदेनमग्निवत् MahāBhā. iv. 4. 16; अग्निवच्चोपचर्या वै ब्राह्मणाः MahāBhā. xiii. 8. 22; PrakaPañ. 7. 9; यस्यारातिगणः⋯[अ]रण्या[वा]समागमग्निवत् EI. iv. 234. 47; MīmāKau. ii. 292. 4 (*on* iii. 2. 34); **2** as in the case of Agnicayana (building of fire-altar) अग्निवद्वा दीक्षाः KātyS'S. xxii. 1. 45 (comm. अग्निवद्वा चयनवदेव संवत्सरं दीक्षा); अग्निवत्सर्वौषधीर्वपति ĀgniveGS. iii. 8. 2 (162. 14) = BaudhPiMe. i. 18. 21; **3** as in the case of the sacred fire संस्कारश्चाप्रकरणेऽग्निवत्स्यात्प्रयुक्तत्वात् MīmāSū. ix. 2. 9; ix. 2. 55; x. 5. 78; xi. 4. 25; xi. 3. 26; **4** like (ordinary) fire (कृपः) अग्निवत्समरे ⋯ चरिष्यति MahāBhā. v. 163. 22 = v. 166. 16; शक्तिं वै प्राहिणोन्मयि ⋯ ज्वलन्तीमग्निवत् MahāBhā. v. 185. 5; स दहत्यग्निवद्दोषान् ViṣṇuP. iii. 9. 23; VrGautaSm. 570. 1(9); अकृतकारि खल्वपि शास्त्रमग्निवत् ⋯ अग्निर्यददग्धं तद्दहति MahāBh. i. 196. 13 (*on* i. 2. 9); अग्निवच्छीघ्रकारि च। ⋯ शीघ्रं रक्तपित्तमुपाचरेत् CaraS. vi. 4. 5 (1941 Ed.); AṣṭāSaṁ. ii. 15. 18 (4. 3) = AṣṭāHr. iv. 2. 7; स्वर्णादिकं च यो दद्याद्ब्राह्मणे ⋯ अग्निवच्चैव दीप्यते SkandP. ii(8). 5. 21; iii(2). 21. 17; vi. 197. 47; BrāhmSphuSi. 14. 34; तप्तमिव लोहपिण्डम् अविशेषेण संव्याप्य अग्निवत् शरीरं संव्याप्य वर्तते BrĀraUBh. 244. 18 (*on* ii. 1. 19); EI. xviii. 248. 44; अप्रयत्नधृतो मन्त्रः प्रचलन्नग्निवद्दहेत् NītiS'ā. 12. 44; RājNiRa. 29. 20; BrĀraUBhVā. i. 4. 1111; iv. 4. 1287; YaśasCam. ii. 251. 18; सप्ताहाद्व्याधिभिर्हीनः षण्मासादग्निवद्ध(v. l. °साद्ध°)वेत् MālinīT. 13. 25; अग्निवचोऽप्यदीपि DvyāśraKā. 8. 1; TātpaVr. 235. 12 (*on* 2. 80); यस्य धर्मोऽयम्⋯। कक्षवत्प्रतिक्षिप्तं तस्य संहरतेऽग्निवत् PāṇḍaC. 11. 213; **5** like the god Agni दक्षिणपूर्वास्थोऽदहत्कोऽस्यग्निवत्परान् DvyāśraKā. 5. 32; **6** like the term *agni* अग्निवच्छसि Kātan. ii. 1. 65 (comm. ऋदन्तस्य लिङ्गस्याग्निवद्भवति शसि परे); पत्यापत्ये ⋯ पत्योस्तथाग्निवत् AgniP. 350. 43; CāndrVr. *on* ii. 4. 12.

**अग्निवदन** (agni-vadana) *n.* mouth (i. e. flames) of fire कांचित्प्रियं परित्यज्य अशक्ता गन्तुमन्यतः। पुरः प्रियस्य पञ्चत्वं गताग्निवदने क्षयम् MatsyaP. 140. 60.

**अग्निवद्भाव** (agnivad-bhāva) *m.* the state of being like the fire-altar मनश्चितादीनामिष्टकचिताग्निवद्भावातिदेशमात्रेणेष्टकचिताग्निदेशरूपक्रियामयक्रत्वनुप्रवेशेनापि न भवितव्यम् BrahmSūBh.(Rā.) 666. 5 (*on* iii. 3. 49) (S'rutaPra. अग्निवद्भावः अग्नितुल्यत्वम्)

**अग्निवध** (agni-vadha) *m.* loss of digestive faculty विड्भेदोऽग्निवधादपि (v. l. विड्भेदोऽग्निवधस्तथा) CaraS. vi. 11. 10 (1941 Ed.); विड्भेदाग्निवधावपि। ⋯शुक्रौजसोः क्षयात् RugVi. 10. 27; अधोवातस्य रोधेन ⋯। वातमूत्रशकृत्सङ्गदृष्ट्यग्निवधहृद्गदाः AṣṭāSaṁ. i. 18. 11 (1. 5) = AṣṭāHr. i. 4. 2.

**अग्निवधू** (agni-vadhū) *f.* Agni's wife (i. e. Svāhā) ङेऽन्तमग्निवधूः प्रोक्तो मन्त्रोऽयम् S'āraTi. 13. 77 = TantrSā.(K.) 111. 11; S'āraTi. 11. 65.

**अग्निवन्दन** (agni-vandana) *n.* obeisance to the god of fire प्रकुर्यादग्निवन्दनम् MahNirvāT. 6. 142.

**अग्निवपुस्** (agni-vapus) *adj.* having a body (bright) like fire स कदाचिद्गतोऽहं तु यज्ञे तेषां महात्मनाम्। ऋषीणामग्निवपुषाम् Rāmā. iv. 1326*(2)

**अग्निवरण** (agni-varaṇa) *n.* rampart of fire अथाग्निवरणद्वारा ताभ्यामनुगता सती। ⋯ निर्जगाम कुमारिका BrahmāṇḍP. iii. 26. 95.

**अग्निवरुणदेवत्य** (agnivaruṇadevat-ya) *adj.* meant for Agni and Varuṇa अग्निवरुणदेवत्ये पशौ ऊहाप्रसक्तावपि BhāṭṭDī. iii. 303. 23 (*on* x. 4. 22)

**अग्निवरुणविधि** (agnivaruṇa-vidhi) *m.* injunction about Agni and

Varuṇa (as deities) देवतात्वेनाग्निवरुणविधिः MayūMāli. 711. 26 (*on* x. 4. 18)

**अग्निवर्चस्** (agni-varcas) *adj.* fiery, lustrous, emitting fire-like brilliance स मे तस्मिन् रणे पूर्वं प्राहरत्कङ्कपत्रिभिः । षष्ट्या शतैश्च नवभिः शराणामग्निवर्चसाम् MahāBhā. v. 180. 20; नागम् … दद्दृशातेऽग्निवर्चसम् (अर्जुनाच्युतौ) MahāBhā. vii. 57. 69; xii. 175. 24; पञ्चगङ्गे पुनर्वसुम् । प्रणम्योवाच…अग्निवेशोऽग्निवर्चसम् CaraS. vi. 4. 3; vi. 29. 3 (1941 Ed.); यः …देवः …सोमभूतस्तु भूतानामग्निभूतोऽग्निवर्चसाम् VāyuP. ii. 35. 41; अथ ग्रसनमालोक्य यमः क्रोधविमूर्च्छितः । ववर्ष शरवर्षेण विशेषेणाग्निवर्चसा MatsyaP. 150. 1; 151. 12; SkandP. i(2). 17. 17; BrahmāṇḍP. ii. 72. 40; पश्चाद्ध्यानं समाचरेत् ।… कोटिसूर्याग्निवर्चसम् । …पुरुषोत्तमम् VṛHāriSm. 6. 20; BrahmP. 179. 45; BhaviP. 235A. 28 (i. 157. 33); PadmP. v. 16. 35; पञ्चाग्निवर्तिनोऽप्येवमग्निलोकेऽग्निवर्चसः S'ivaP. iii. 15. 61 (314B. 10); असिन्नवसरे शक्रः स्यन्दनेनाग्निवर्चसा । शरभङ्गं समभ्येत्य बभाषे RāmāMañ. 110. 14.

**अग्निवर्चस्** (agnivarcas) *m.* name of one of the pupils of Romaharṣaṇa सूतो वै रोमहर्षणः । … सुमतिश्चाग्निवर्चाश्च मित्रायुश्शांसपायनः । अकृतव्रणसावर्णी षट् शिष्यास्तस्य ViṣṇuP. iii. 6. 17; काश्यपो ह्यकृतव्रणः । भारद्वाजोऽग्निवर्चाश्च…एते…पुराणेषु दृढव्रताः VāyuP. i. 61. 56; BrahmāṇḍP. i. 35. 64; सुमतिश्चाग्निवर्चाश्च मित्रयुः शिंशपायनः । … षट् शिष्यास्तस्य चाभवन् AgniP. 270. 11.

**अग्निवर्चस्** (agni-varcas) *n.* the lustre of fire [APTE]

**अग्निवर्चस** (agni-varcasa) *adj.* **i** shining like fire ततः शरैः सुतीक्ष्णाग्रैराशुगैरग्निवर्चसैः । निर्बिभेद…हनूमन्तमकम्पनः Rāmā vi. 901*(1); **ii** having the heat of fire घृतकुम्भसमा नारी पुरुषश्चाग्निवर्चसः VetāPañ.(S'i.) 15. 39.

**अग्निवर्जन** (agni-varjana) *n.* dropping or abandoning the use of fire (i. e. application of heat or warmth) उपानत्पादुकाग्निवर्जनात्…(वमनविरेच-) नौषधानां दुर्योगातियोगाद्युत्पद्यते KāśyaS. 156A. 40.

**अग्निवर्जम्** (agni-varjam) *adv.* excepting the asterism (Pleiades) presided over by the god of fire उपेन्द्रमूलाहिशिवाग्निव(? व)र्जं शस्तेन्दुताराशिथियोगलग्ने…दोलादिकारोहणमाद्यमिष्टम् YuktiKa. 216. 12.

**अग्निवर्ण** (agní-varṇa) *adj.* [*f.* -ā] **1 i** having the colour of fire i. e. red as fire, red-hot पाय्यन्ते क्वथितं केचिदग्निवर्णमयोरसम् BuddhaC. 14. 12; जम्ब्वोष्ठेनाग्निवर्णेन पश्चाच्छेषं दहेद्भिषक् SuśruS. iv. 19. 50; सर्वलोहचूर्णमग्निवर्णं वा…अग्नियोगः ArthS'ā. iii. 203. 3 (13. 4); आयसं द्वादशपलं घटितं फालमुच्यते । …अग्निवर्णं तु तच्चोरो जिह्वया लेलिहेत्सकृत् BṛhaspaSm. 92. 80; 379. 46; अग्निवर्णं न्यसेत् पिण्डं हस्तयोरुभयोरपि YājñaSm. 2. 105; तेषामयोमयान् कीलानग्निवर्णान् पुनः पुनः । कर्णेषु प्रेरयन्त्येते MārkP. 14. 64; अग्निवर्णैस्तु सदृशैर्यमो हिंसनमाचरेत् VṛGautaSm. 518. 20(4); कपालपाषाणलोष्टलोहपिण्डानग्निवर्णान्संदंशेन गृहीत्वाम्भसि … निमज्जयेत् AṣṭāSaṁ. i. 133. 2 (1. 26); i. 167. 5 (1. 33); i. 191. 4 (1. 39); ii. 91. 24 (4. 16); यथैवाग्निवर्णात् तप्ताल्लोहपिण्डाद् विष्फुलिङ्गाः स्वभावादेव निमित्तान्तरानपेक्षा निश्चरन्ति BālaKrī. ii. 31. 22 (*on* 3. 67); ii. 85. 4 (*on* 3. 218 ? 224); अग्निवर्णं विधायात्र तच्छिलातलमादरात् । बुद्धदासो गृहं प्राप्य स्वकं न विदितः परैः BṛKathāK. 135. 55; सूच्यग्रेणाग्निवर्णेन रोमकूपं विनिर्दहेत् SiddhYo. 61. 256; ततोऽग्निवर्णा इषवः उत्पेतुः सूर्यमण्डलात् BhāgP. vii. 10. 58; AgniP. 254. 40; नराः…अग्निवर्णैश्च संदंशैरुत्पाटितविलोचनाः SkandP. v(2). 27. 9; vi. 25. 14; गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा ViṣṇuDhaP. ii. 73. 101; ये शृण्वन्ति गुरोर्निंदां तेषां कर्णः प्रपूर्यते । अग्निवर्णैरयःकीलैः BhaviP. 626A. 21 (iv. 6. 138); ततोऽङ्कुशैरग्निवर्णैः … । हन्यन्ते किङ्करैः … पापकर्मिणः S'ivaP. v. 9. 7 (416A. 4); v. 10. 8 (417A. 9); अग्निवर्णेन ये नैव(? यो नैव) छिन्द्याच्छस्त्रेण दुर्बुधः ।…नाडीम् AśvaVai. 50. 30; ततोऽग्निवर्णैरयोगुडैरुष्णीकृत्य तदुदकं हस्तिनं तैलेनाभ्यज्य…स्वेदयेत् Hastyāyur. 60. 16 (1. 9); 131. 14 (1. 18); 227. 1 (2. 28); 247. 27 (2. 40); तप्तेऽयःशयने, यथा मरणक्षमं भवति तथा तप्ते अग्निवर्णे कृते कार्ष्णायसे शयने Mitā. 441. 5 (*on* 3. 259); सोऽभियुक्तस्तमयःपिण्डकमग्निवर्णं कराभ्यामादाय…व्रजेत् Aparā. 707. 7 (*on* 2. 106); 973. 8 (*on* 3. 66); 1083. 1 (*on* 3. 260); भर्जयेत्सप्रवाराणिचुल्लीसंस्थितखर्परे । अग्निवर्णं भवेच्चावत् RasRaSa. 2. 41; अग्निवर्णं लोहपिण्डं तृणचये क्षिप्त्वा DipKa. 51. 27 (*on* 2. 107); **ii** like fire in effect सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत् ManuSm. 11. 90 (अग्निवर्णां वर्णश्रुतिग्रहणं सामान्यलक्षणार्थम् । अत एवाह काये निर्दग्धे मुच्यत इति ManuBh. ii. 397. 19); गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा ManuSm. 11. 91 (अग्निवर्णमित्यग्निस्पर्शमिति ज्ञातव्यम् ManuBh. ii. 397. 27); ViṣṇuDhaP. ii. 73. 100; **2** having the lustre of fire ताम॒ग्निव॑र्णां तप॑सा ज्वल॒न्तीम् … दु॒र्गां दे॒वीं शर॑णम॒हं प्रप॑द्ये TaiĀ. x. 1. 16; यच्चाग्निवर्णं फलमूलपुष्पम् AVPari. 1(6). 3; चन्द्रोऽभूदग्निवर्णश्च MahāBhā. vi. 2. 23; तस्यास्तान्यग्निवर्णानि भूषणानि महीतले । सर्वाण्याप्यवकीर्यन्त Rāmā. iii. 50. 30; vi. 82. 1; पश्यन्ति… । अग्निवर्णमजं देवम् MatsyaP. 132. 19; दृष्ट्वा स्वप्नान्दारुणान्वेतरान् वा पूतः स्नातः सर्षपानग्निवर्णान् । हुत्वा KāśyaS. 92B. 5; सैन्धवेनाग्निवर्णेन तप्तं चानिलजिद्धृतम् AṣṭāSaṁ. ii. 156. 22 (5. 5); (विद्याधराः)…विमानैः…अग्निवर्णैः …समन्तात्परिवारितम् । प्रस्तुवन्ति प्रगायन्ति SkandP. iii(3). 2. 105; अग्निवर्णा तु दिङ्मृष्टा(? दिग्दृष्टा) दिग्दाह इति विश्रुतः ViṣṇuDhaP. iii. 9. 15; यस्तु … तत्राथ मुच्यते प्राणान्… । अग्निवर्णस्ततो भूत्वा मम लोकाय गच्छति VarāP. 140. 50; विद्युत्कोटिनिभे स्थाने चिन्तयेत्परमेश्वरम् । अग्निवर्णेऽथवा LiṅgaP. i. 8. 99; i. 72. 126; स रथेनाग्निवर्णेन यातीह त्रिदशालयम् BrahmP. 216. 51; पावकास्ते हि चत्वारः समुद्भूता महीतले । अग्निवर्णाः BhaviP. 488B. 24 (iii(2). 16. 5); तामग्निवर्णां तपसाज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् DevīBhāP. vii. 31. 45; अष्टचक्रं हि तद्यानम्… । अग्निवर्णम् PadmP. i. 5. 16; ध्यात्वा…अग्निवर्णं चाग्निदेवम् MānaSā. 7. 97; अग्निवर्णः …वामनान्वयजो द्विपः Mānaso. ii. 3. 277; अग्निजा विश्वरूपाख्या अग्निवर्णाः शुभप्रदाः (केतवः) NāraS. 2(9). 15; 49. 1; अग्निवर्णस्त्रिविक्रमश्रुतुःखड्गधरः YatīndraDī. 86. 3; **3** fire-like, resembling fire घोरामशान्ताम्…वाचं प्रभाषसे । निःश्वसन्नग्निवर्णेन संतप्तः स्वेन मन्युना MahāBhā. v. 73. 6 (Arjunamiśra अग्नितुल्य; Sarvajñanārāyaṇa अग्निसदृश)

**अग्निवर्ण** (agni-varṇa) *m.* colour of fire लक्षणं ह्यग्निवर्णानां प्रवक्ष्यामि यथाक्रमम् AVPari. xxiv(1). 1; होराशास्त्रेऽपि…यात्रायां च तिथिदिवस°…°सैन्यनिवेशभूमयोऽग्निवर्णाः … परदुर्गोपलम्भोपायाश्चेत्युक्तम् BṛSaṁ. 2. 4(12); अग्निवर्णाः होमकाले अग्नेः शुभाशुभसूचकं लक्षणम् VīraMi.(Lakṣaṇa.) 309. 15.

**अग्निवर्ण** (agni-varṇa) *m.* **1 A** name of a king of the Ikṣvāku line of the solar race, son of Sudarśana [S'ivaP. alone gives his father's name as Dhruva] अग्निवर्णः सुदर्शनात् Rāmā. i. 69. 28 = HariVaṁ. 230*(5); पुत्रोऽभूत् … सुदर्शनस्याग्निवर्णः Rāmā. ii. 102. 25; सुदर्शनस्तस्मादग्निवर्णः … पुत्रोऽभवत् ViṣṇuP. iv. 4. 108; अग्निवर्णः सुदर्शनात् VāyuP. ii. 26. 207 = BrahmāṇḍP. ii. 63. 209; अग्निवर्णमभिषिच्य राघवः RaghuVa. 19. 1; ध्रुवसंज्ञः …अग्निवर्णस्सुतस्तस्य S'ivaP. v. 39. 27 (452A. 8); विहरन्वधूभिरन्तःपुरेऽग्निवर्णः UpadeS'. 51; **1 B** name of an attendant of Viṣṇu in the group of Kumudākṣa अग्निरूपोऽग्निवर्णश्च…कुमुदाक्षगणा ह्येते PāraS. 17. 159; **1 C** name of one of the seventy hosts of Haranārāyaṇa in the South-East अग्निवर्णोऽग्निरश्म्यास्यो महासेनो महोदरः । …आग्नेय्यां दिशि सप्ततिः ĪśānS'iPa. ii. 54. 94; **1 D** name of a demon चत्वारः …अग्निवर्णं तथा…निजघ्नुः AdhyāRā. vi. 11. 13; **2** the letter of Agni (i. e. *r*) ताराकाशावन्त्य(? वन्य)वाय्वग्निवर्णा ह्याग्नेयाः स्युः ĪśānS'iPa. i. 4. 3; **3** *Saccharum sara* or *muñja* grass(?) वल्लीपलाशकोऽन्यः सितवल्ली हेमकारकश्चेति । विज्ञेयः पर्यायैर्हुताशनस्तेजनोऽग्निवर्णश्च AbhidhāMañ. 73. 4.

**अग्निवर्णक** (agnivarṇa-ka) *m.* name of a king of the Ikṣvāku line of the solar dynasty and son of Syandana and grandson of Dhruva ततः पुष्पाद् ध्रुवस्तस्मात् स्यन्दनोऽथाग्निवर्णकः KalkiP. iii. 4. 3; cf. **अग्निवर्ण.**

**अग्निवर्णत्व** (agnivarṇa-tva) *n.* the state of being red (-hot) like fire अग्निवर्णवत्त्वस्य (v. l. अग्निवर्णत्वस्य) प्रकारान्तरेणापि संभवादाह । अग्निसदृशमिति । दाहकतया तत्तुल्यमित्यर्थः BālamBha. ii. 116. 5 (*on* 2. 105)

**अग्निवर्णदण्ड** (agnivarṇa-daṇḍa) *m.* fiery-coloured stick आशुनयनानयने हि कार्यमाणेऽलातेऽग्निवर्णदण्डाभासा भ्रान्तिर्भवति NyāyBiṬ. 55. 10 (*on* 1. 6)

**अग्निवर्णनिभ** (agnivarṇa-nibha) *adj.* resembling the colour of fire ज्वलनाभमिदं ख्यातमग्निवर्णनिभं परम् । पीतस्य द्विगुणं रक्तं मिश्रितं त्वतिरक्तकम् S'ilpaRa. i. 46. 137.

**अग्निवर्णप्रभ** (agnivarṇa-prabha) *adj.* having the lustre similar to the colour of fire लोहचूर्णं घृताक्तं हि क्षिप्त्वा लोहस्य खर्परे । अग्निवर्णप्रभं यावत्तावद्दर्व्या प्रचालयेत् RasPraSu. 4. 68.

**अग्निवर्णरत्न** (agnivarṇa-ratna) *n.* name of a jewel [DBHS]

**अग्निवर्णवत्त्व** (agnivarṇavat-tva) *n.* possession of fiery colour अग्निवर्णवत्त्वस्य प्रकारान्तरेणापि संभवादाह । अग्निसदृशमिति BālamBha. ii. 116. 5 (*on* 2. 105)

**अग्निवर्णविभूषित** (agnivarṇa-vibhūṣita) *adj.* adorned with fiery colour पश्यन्ति…देवम्…अग्निवर्णविभूषितम् MatsyaP. 132. 19.

**अग्निवर्णशलाका** (agnivarṇa-śalākā) *f.* **A** red-hot lance ततः सर्वेऽपि संप्राप्य ते पिशाचं ससंभ्रमाः । अग्निवर्णशलाकाभिर्भित्त्वा लौहैभिरादरात् BṛKathāK. 78. 240; **B** red-hot needle कथम् अग्निवर्णशलाका स्थिरहस्तेन अस्या लोचनतारकमध्ये न दीयते Hāsyārṇa. 1. 39(8)

**अग्निवर्णसम** (agnivarṇa-sama) *adj.* similar to the colour of fire (टङ्कणम्) अग्निवर्णसमं यावत्तावत् पिष्ट्वा तु भर्जयेत् RasPraSu. 5. 26.

**अग्निवर्णा** (agni-varṇā) *f.* **1** [*pl.*] a class of mother deities, followers of Kārttikeya (fire-coloured) एताश्चान्याश्च बहवो मातरो भरतर्षभ । कार्त्तिकेयानुयायिन्यो नानारूपाः सहस्रशः ।…ताम्राक्ष्यस्ताम्रवर्णाश्च हर्यक्ष्यश्च तथापराः (v. l. अग्निवर्णा महाप्रभाः) MahāBhā. ix. 45. 34; **2** name of one of eight

varieties of irremediable poisonous insects called *lūtā* कृच्छ्रसाध्यास्तथासाध्या लूतास्तु द्विविधाः स्मृताः। तासामष्टौ कृच्छ्रसाध्या वर्ज्यास्तावत्य एव तु।…सौवर्णिका लाजवर्णा जालिन्येणीपदी तथा। कृष्णाग्निवर्णा काकाण्डा मालागुणाष्टमी तथा SuśruS. v. 8. 97.

**अग्निवर्णाभ** (agnivarṇābha) *adj.* possessed of a fiery appearance or complexion आसनं चाग्निवर्णाभं विसृज्योपजहार वै HariVaṁ. 46. 5; प्रमथाश्चाग्निवर्णाभाः MatsyaP. 133. 66.

**अग्निवर्णेश्वर** (agnivarṇeśvara) *n.* name of a *liṅga* of god S'iva अग्निवर्णेश्वरं चैव नैध्रुवेश्वरमेव च। वत्सेश्वरं महालिङ्गं पर्णादेश्वरमेव च।…एवमादीनि लिङ्गानि SkandP. iv. 65. 14.

**अग्निवर्तिन्** (agnivart-in) *adj.* dwelling or abiding in *agni* (fire) समर्पयेत्। वह्नौ हुत्वाग्निवर्तिभ्यो विष्णवादिभ्यः पवित्रकम् AgniP. 36. 12.

**अग्निवर्धक** (agni-vardhaka) *m.* **1** a tonic; **2** regimen, diet (पथ्याहार) [Apte]; *adj.* promoting digestion, stomachic [PW, MW]

**अग्निवर्धन** (agni-vardhana) *adj.* promoting digestive faculty त्वच्यं मेधाग्निवर्धनम्। तैलम् CaraS. i. 27. 287 (1941 Ed.); HārīS. i. 21. 3; नागरं वा पिबेदुष्णं कषायं चाग्निवर्धनम् SiddhYo. 31. 4; लेहः पौनर्नवः … बलवर्णाग्निवर्धनः SiddhYo. 39. 39; बलवर्णाग्निवर्धनम्।… त्र्यूषणाद्यमिदं लोहम् RaseCin. 9. 243 (222.4); करञ्जश्चाग्निमन्थश्च कवलो ह्यग्निवर्धनः Hastyāyur. 302. 1 (2. 60); क्षुण्णाः सक्षौद्रकवला देयाः स्थैर्याग्निवर्धनाः Hastyāyur. 276. 2 (2. 53); जीवनीयं रसायनम्। कफाग्निवर्धनं चैव Hastyāyur. 668. 9 (4. 21); शिशिरः शीतलोऽतीव रूक्षो वाताग्निवर्धनः BhāvPra. (Bhā.) 5. 330; पयः…अग्निवर्धनम् BhojanKu. 129. 7.

**अग्निवर्मन्** (agni-varman) *m.* name of a king (father of Dyutivarman and grandfather of Viṣṇuvarman) स्वस्ति…व्र(ब्र)ह्मपुरात्…श्र्यग्निवर्म्मा तस्य पुत्रः … परमभट्टारकमहाराजाधिराजश्रीद्युतिवर्म्मा … कुशलं पृष्ट्वा समाज्ञापयति EI. xiii. 115. 3; स्वस्ति…व्र(ब्र)ह्मपुरात्…परमभट्टारकमहाराजाधिराजश्र्यग्नि(ग्नि)-वर्म्मा तदात्मजः…महाराजाधिराजश्रीद्युतिवर्म्मा तत्तनयः…परमभट्टारकमहाराजाधिराजश्रीविष्णुवर्म्मा … समाज्ञापयति EI. xiii. 118. 4.

**अग्निवर्ष** (agni-varṣa) *n.* shower of fire अग्निवर्षं शिलावर्षं तप्तं तत्र जलोदकम् VarāP. 188. 40.

**अग्निवर्षण** (agni-varṣaṇa) *n.* shower of fire विषमाशनिवर्षणं च ते (=सुरासुराः) सममन्योन्यमथाग्निवर्षणम्। अनयन्नयमार्गकोविदाः YogVā. iv. 28. 19.

**अग्निवर्षधारा** (agnivarṣa-dhārā) *f.* constant or continuous shower of fire (पताकः) एषोऽग्निवर्षधारानिरूपणे पुष्पवृष्टिपतने च। संयुतकरणः कार्यः प्रविरलचलिताङ्गुलिर्हस्तः NāṭyaS'ā. 9. 20.

**अग्निवर्षिन्** (agnivarṣ-in) *adj.* emitting fire तदूष्मकलितोष्माणोऽभूवन्नन्येऽपि यादवाः। किं न तिग्मांशुवर्गीणा ग्रावाणोऽप्यग्निवर्षिणः PāṇḍaC. 12. 281.

**अग्निवल** (agni-vala) *n.* cf. **अग्निबल**, digestive faculty or power ततश्चाग्निवलं दृष्ट्वा तुरङ्गं भोजयेद् बुधः AśvaVai. 13. 65; श्लेष्मशोषातुरं वाहं वीक्ष्य चाग्निवलं बुधः।…कुर्याद् भेषजसङ्करम् AśvaVai. 58. 17.

**अग्निवल्लभ** (agni-vallabha) *m.* the tree *Shorea robusta* or its resin रालः सर्जरसः शालः क्षणः कलकलोद्भवः। ललनः शालनिर्यासो यक्षधूपोऽग्निवल्लभः DhanvNi. 119. 3; RājNi. 119. 9; 194. 28; रालसर्जरसो यक्षधूपसर्जोऽग्निवल्लभः। क्षणकः सालनिर्यासो लाक्षा स्याल्ललनो रवः MadaPāNi. 27. 52; AbhidhāCin. 647; यक्षधूपोऽग्निवल्लभः। रालः सर्जरसः सर्जमणिः सर्वरसोऽपि च ParaNā. 2235; AbhidhāMañ. 27. 10; अग्निवल्लभे। रालोऽक्ष्यरालः S'abdaRa(Su.) 3. 207; KośaKaTa. 1. 3436; KalpaK. 66. 415; 269. 191.

**अग्निवल्लभा** (agni-vallabhā) *f.* **1** the word *svāhā* (wife of Agni) प्रणवो गन्धर्वराज विश्वावसो मम अभिलषितामुकां कन्यां प्रयच्छ ततोऽग्निवल्लभेत्युत्तमकन्याविवाहदायिनी विद्या ParaśuKS. 10. 19 (259. 19); स्वाहा … अग्निवल्लभा PañcTaPra. 8. 25; **2** the tree *Shorea robusta* अग्निवल्लभा 'राल' भा° ApūNā. 33B. 3.

**अग्निवसन** (agnivasana) *m.* name of a sage in Tāmasa Manvantara ज्योतिर्धाम पृथक्स्पश्चैत्रोऽग्निवसनः KūrmaP. 430. 2 (1. 51)

**अग्निवस्तुस्वभाव** (agni-vastusvabhāva) *m.* the factual nature of fire अग्निं न ढौकते शैत्यमग्निवस्तुस्वभावतः BṛĀraUBhVā. i. 5. 361.

**अग्निवस्त्वनपेक्ष** (agnivastv-anapekṣa) *adj.* [*f.* -ā] having no regard for the real fire यथा वा योषिति अग्निवस्त्वनपेक्षाग्निबुद्धिः Bhām. 97. 19 (*on* i. 1. 4)

**अग्निवाक्य** (agni-vākya) *n.* **1** sentence containing the word *agni* पृथग्वाक्यानि वाग्निवाक्येन वैकल्पिकानि S'ābaBh. 1681. 13 (*on* ix. 1. 36); S'ivārkaMaDī. ii. 282. 11 (*on* iii. 3. 1); MayūMāli. 64. 21 (*on* i. 4. 4); **2** words uttered by Agni देवापिः…सुरान्प्राप्य…ऋत्विग्वाक्यं चाग्निवाक्यं शापं चापि न्यवेदयत् BrahmP. 127. 32; VedāntKa. 213. 9 (*on* i. 4. 16); S'ivārkaMaDī. ii. 415. 26 (*on* iii. 4. 49)

**अग्निवाचक** (agni-vācaka) *adj.* denotative of Agni वाजसनेयके अग्निवाचकमभ्युपगम्य…परमात्मोपासनं तावन्न विरुध्यते PrakaVi. 213. 17; अग्निवाचको हि रकारः Bhāsk. ii. 300. 6 (*on* iv. 1. 11)

**अग्निवाचकत्व** (agnivācaka-tva) *n.* the state of being denotative of Agni रुद्रशब्दस्याग्निवाचकत्वम् YatīndraDī. 81. 25; MayūMāli. 711. 19 (*on* x. 4. 18)

**अग्निवाचकपद** (agnivācaka-pada) *n.* word denoting Agni द्वयोरग्निवाचकपदयोः प्रयोगो न स्यात् S'ivārkaMaDī. i. 455. 13 (*on* i. 3. 25)

**अग्निवाचिन्** (agnivāc-in) *adj.* denotative of Agni अग्निर्ज्योतिरित्यत्र ज्योतिःशब्दः सूर्यवाची सूर्यो ज्योतिरिति पुनरग्निवाची TantrVā. 30. 1 (*on* i. 2. 12)

**अग्निवादिमत** (agnivādi-mata) *n.* view of asserting Agni as the highest deity इति … अग्निवादिमतनिबर्हणं नाम द्वादशं प्रकरणम् S'aṅkaVi.(Ā.) 93. 9.

**अग्निवामलोचना** (agni-vāmalocanā) *f.* the word *svāhā* (wife of Agni) अग्निवामलोचनेति महागणपतिविद्या ParaśuKS. 10. 17 (260. 11)

**अग्निवायुसमीरित** (agnivāyu-samīrita) *adj.* [*f.* -ā] stimulated by Agni and Vāyu सोऽसृजद्दानवो मायामग्निवायुसमीरिताम् MatsyaP. 163. 25.

**अग्निवाय्वात्मकत्व** (agnivāyvātmaka-tva) *n.* the state of being constituted by fire and wind अग्निवाय्वात्मकत्वादूर्ध्वभागप्रभावादौषधस्योर्ध्वमुत्क्षिप्यते (दोषसंघातः) CaraS. vii. 1. 5 (1941 Ed.); AṣṭāSaṁ. i. 136. 22 (1. 27)

**अग्निवार्त्त** (agni-vārtta) *adj.* one whose means of livelihood is fire तद्वक्रमुष्णमुदये पीडाकरमग्निवार्त्तानाम् BṛSaṁ. 6. 1; 17. 13.

**अग्निवासस्** (agní-vāsas) *adj.* fire-clad, wearing fiery mantle अ॒ग्निवा॑साः पृथि॒व्य॑सितज्ञूस्त्विषी॑मन्तं संशि॑तं मा कृणोतु AV. xii. 1. 21; GopBr. i. 2. 9.

**अग्निवाह** (agni-vāha) *m.* **1** ox (yoked to the cart) carrying the sacred fire तदेतस्य कर्मणः पूर्वावग्निवाहौ दक्षिणा ĀpaS'S. xviii. 19. 3; **2** goat (Agni's vehicle), the zodiacal sign Aries अग्निवाहस्थिते भानौ…आकाशगंगासरिति स्नातो मोक्षमाप्नुयात् SkandP. ii(1). 1. 71; **3** smoke धूमः …अग्निवाहस्तरीः TrikāS'e. i. 1. 70; AbhidhāCin. 1103; ParaNā. 875; KośaKaTa. i. 474.

**अग्निवाहन** (agni-vāhana) *n.* goat (draught-animal of Agni) [Apte]

**अग्निविकर्षण** (agni-vikarṣaṇa) *n.* carrying over of the sacrificial fire मण्डूकसूक्तस्याग्नौ प्रयोगः, तत्र मण्डूकेनाग्निविकर्षणाम्नानात् TantrVā. 407. 13 (*on* ii. 1. 23)

**अग्निविकर्षणसाधनत्व** (agnivikarṣaṇasādhana-tva) *n.* the state of being a means of carrying over the sacrificial fire अवकानामग्निविकर्षणसाधनत्वेन विहितानां स्तुत्यर्थं भवतु…अद्भिः सम्बन्धकथनम् NyāySu.(So.) 79. 29 (*on* i. 2. 23); अग्निविकर्षणसाधनत्वेन विहितयोर्वेतसावकयोः … संबन्धो भाष्यकृता कथितः NyāySu.(So.) 80. 8 (*on* i. 2. 23)

**अग्निविकल्प** (agni-vikalpa) *m.* alternative procedure for the *agnicayana* पूर्वस्यैव क्रियामयस्येष्टकाभिरग्निं चिन्वत इति विहितस्यायमग्निविकल्पः स्यात्तत्प्रकार इत्यर्थः BrahmSūBh.(Bhā.) 193. 21 (*on* iii. 3. 55)

**अग्निविकार** (agni-vikāra) *m.* **1** modification of or substitute for the sacrificial fire अवभृथे प्रधानेऽग्निविकारः स्यान्न हि तद्धेतुरग्निसंयोगः MīmāSū. xi. 2. 30; S'ābaBh. 2147. 6 (*on* xi. 2. 30); 'प्राचीनप्रवणे वैश्वदेवेन यजेत' इति किमयमग्निविकारः उत विहारविकारदेशोपदेश इति संशये किं प्राप्तम्? अग्निविकार इति SaṅkarKāBh. 108. 6 (*on* ii. 4. 24); अग्निविकारा वा जुहोतिसंयोगेन चोद्यमानेऽर्धशब्देन विधीयन्ते यथा उत्तरार्धेऽग्नये जुहोति दक्षिणार्धे सोमायेति देशशब्देन विधीयन्ते SaṅkarKāBh. 108. 23 (*on* ii. 4. 27); **2** disease due to particular conditions or disturbances of the digestive fire, loss of appetite अथाप्यग्निविकारोऽथारुचिः स्त्री स्यादरोचकम् KalpaK. 55. 319.

**अग्निविकारत्व** (agnivikāra-tva) *n.* the state of being the modification of or substitute for the sacrificial fire अवभृथे प्रधान एवापामग्निविकारत्वं स्यात् MayūMāli. 810. 6 (*on* xi. 2. 7)

**अग्निविकारभूत** (agnivikāra-bhūta) *adj.* which is the product of fire तथाग्निविकारभूतास्तत्कणाः प्रत्यक्षप्रमाणगम्याः सर्वैरुपलभ्यन्ते VedāntKau. 163. 1 (*on* ii. 1. 17)

**अग्निविकारलोचन** (agnivikāra-locana) *adj.* **1** whose (third) eye is a form of fire हरमिवाग्निविकारलोचनम् … कमपि…पाचकमपश्यम् Mukundā. 218(3); **2** whose eyes are affected by fire, Mukundā. 218(3)

**अग्निविकृतप्रकरण** (agnivikṛta-prakaraṇa) *n.* a *prakaraṇa* called

*agnivikrta* (a section dealing with omens indicated by fire, smoke etc.) वराहेण त्वग्निविकृतप्रकरणमध्ये । 'धूमोऽग्निसमुत्थो रजस्तमश्चाग्निजं महाभयदम्' इति वाक्यं लिखित्वा मन्त्रैराग्नेयाद्यैः इत्यादिभिराग्नेयी शान्तिर्विहिता AdbhuSāg. 321. 1.

**अग्निविक्रय** (agni-vikraya) *m.* selling of Agni (fire) पण्यकामोऽथर्वा प्रथमया प्रागिन्द्रमस्तौत् परया पथः परयाग्निं परया प्रपणमग्निविक्रयं च BṛSarvaAnu. (3. 15)

**अग्निविगम** (agni-vigama) *m.* extinction of fire न ह्यग्निविगमेऽङ्गारेभ्यः पुनः काष्ठसन्ततिप्रवृत्तिः BrahmSi. 37. 8.

**अग्निविघातजन्यक्रतु** (agnivighātajanya-kratu) *m.* an expiatory rite arising from the extinction of the sacrificial fire नाप्यग्निविघातजन्यक्रतुषु तदभाववतः शूद्रस्येवासामर्थ्यम्, अतोऽव्यवस्था BhāṭṭCin. ii. 38. 5 (*on* i. 3. 7)

**अग्निविच्छेद** (agni-viccheda) *m.* discontinuation (of the sanctity) of the sacrificial fire येषां बह्वृचादीनां द्वादशरात्रमहोमेऽपि नाग्निविच्छेदस्तैर्न कार्यम् । तैत्तिरीयाद्यैः कार्यम् NirṇaSi. 386. 9.

**अग्निविच्छेददशा** (agniviccheda-daśā) *f.* state of the extinction of the sacred fire अत्र हि विच्छिन्नाग्निरेवाग्न्यभाववानुक्तस्तस्य चाग्निविच्छेददशायामप्यस्त्येव ··· आहिताग्नित्वम् VīraMi. (S'rāddha.) 325. 19.

**अग्निविज्ञान** (agni-vijñāna) *n.* **i** knowledge pertaining to (Nāciketa) fire-altar तत् एतत् अग्निविज्ञानं द्वितीयेन वरेण वृणे KāṭhUBh. 109. 16 (*on* 1. 13); तदग्निविज्ञानं द्वितीयेन वरेण वृणे VedāntKau. 120. 23 (*on* i. 4. 6); 121. 3 (*on* i. 4. 6); **ii** knowledge of fire धूमदर्शनाद्यदग्निविज्ञानं तद्वेधापि संभवति S'āstrDī. 97. 13 (*on* i. 1. 5)

**अग्निविडम्बन** (agni-viḍambana) *n.* defilement of fire शक्रो वराक एवं मे चक्राराग्निविडम्बनात् RāmāMañ. 459. 26.

**अग्निविद्** (agni-víd) *adj.* who knows the sacred fire तस्मादग्निचितोऽश्लीलं न कीर्तयितव्यं नो अग्निविदः MaiS. iii. 1. 9; iii. 4. 8; तस्मादग्निचितः पापं न कीर्तयेन्नो अग्निं विभ्रतो नो अग्निविदः ĀpaS'S. xvi. 10. 6; VaikhāS'S. 18. 7; अग्निहोत्र्यग्निचिद्वा (v. l. °विद्वा) हिताग्नौ AbhidhāCin. 835; *f.* knowledge of fire स्त्रियाम्···शरद्विद्युत्सरिद्योषित् अग्निवित् सरप(? म्प)दा दृशत् AgniP. 350. 27(? 17)

**अग्निविदारण** (agni-vidāraṇa) *adj.* bursting like fire क्षणेन शार्ङ्गनिर्मुक्तैः शरैरग्निविदारणैः । गदाचक्रातिपातैश्च सूदयामास तद्बलम् BrahmP. 207. 20.

**अग्निविदाहित** (agni-vidāhita) *adj.* burnt by fire तस्य ··· गृहं चाग्निविदाहितम् BhaviP. 740B. 21 (iv. 94. 41)

**अग्निविद्ब्राह्मण** (agnivid-brāhmaṇa) *m.* a Brahmin who knows the sacred fire धर्ममेवं प्रवक्ष्यामि··· । अग्निविद्ब्राह्मणस्यापि श्रूयतां नृपनन्दिनि PadmP. ii. 50. 15.

**अग्निविद्या** (agni-vidyā) *f.* **1** knowledge pertaining to the (Nāciketa) fire-altar नाचिकेताः ··· वरेण ··· वव्रे द्वितीयेनाग्निविद्याम् BrahmSūBh. (S'aṅ.) 236. 18 (*on* i. 4. 6); अग्निविद्यापि उपनिषदित्युच्यते KāṭhUBh. 102. 8 (*on* 1. 1); 179. 8 (*on* 6. 16); तुभ्यं प्रि(? प्र)त्येकमुपदिष्टाग्निविद्या PrakaVi. 186. 25; नचिकेताः ··· वरेण ··· द्वितीयेनाग्निविद्यां च प्रतिलभ्य अथ 'येयं प्रेत' इति पप्रच्छ S'ivārkaMaDī. i. 516. 13 (*on* i. 4. 6) i. 355. 15 (*on* i. 2. 13); i. 362. 27 (*on* i. 2. 16); **2** knowledge of the sacrificial fire एषा ··· असद्विद्या अग्निविद्येत्यर्थः ChāndoUBh. 242. 7 (*on* iv. 14. 1); 233. 3 (*on* iv. 10. 0); तदङ्गत्वम् ··· अग्निविद्यानां ब्रह्मविद्यायाश्च सम्बन्धावगमाच्च सिध्यति S'ivārkaMaDī. i. 362. 30 (*on* i. 2. 16); i. 355. 14 (*on* i. 2. 13); आन्तरालिक्यग्निविद्या तु ब्रह्मविद्याङ्गं भवेत् GoviBh. 34. 9 (*on* i. 2. 15); **3** assuming heaven etc. as fire अग्निविद्यायां योषित्पुरुषयोरुपासनार्थमग्नित्वमारोपितम् VedāntRaMañ. 2. 6 (82. 24); TattvPrakā. 35B. 13 (*on* i. 2. 16)

**अग्निविद्या** (agni-vidyā) *f.* [Dv. Cpd.] (maintenance of) the sacred fire and knowledge (of the Vedas) अग्निविद्यासाध्येषु कर्मस्वनग्निविद्यत्वाच्छूद्रस्यानधिकारः S'rīBh. 322. 7 (*on* i. 3. 33); अग्निविद्यावत्त्वेन समर्थत्वादनिषादेऽपि निषादानां स्थपतिः स्वामीति शब्दप्रवृत्तिसंभवादन्यतम इति प्राप्तेऽभिधीयते VedāntKa. 158. 22 (*on* i. 3. 14); नैतावता ब्रह्मविद्यानधिकारः । अग्निविद्यासाध्यकर्मविषयत्वान्न्यायस्य S'rutaPra. ii. 75. 30 (*on* i. 3. 33); न चाग्निविद्याराहित्यं दोषः S'rutaPra. ii. 40. 18 (*on* i. 3. 14); अग्निविद्याराहित्येनासमर्थस्य शूद्रादेः कर्तृत्वासंभवात् MīmāKau. i. 101. 6 (*on* i. 3. 16); ii. 33. 5 (*on* ii. 3. 4); अग्निहोत्रादीनामग्निविद्यापेक्षिणामाधानोपनयनसिद्धयोरग्निविद्ययोर्लाभसंभवे GuruCandr. ii. 214. 21.

**अग्निविद्याधिकारित्व** (agnividyādhikāri-tva) *n.* the state of being entitled to knowledge pertaining to the sacred fire अत एनमिति निर्देशः श्रुतब्रह्मविद्यस्यैवाग्निविद्याधिकारित्वज्ञापकः S'rutaPra. iB. 310. 18 (*on* i. 2. 15)

**अग्निविद्यारूप** (agnividyā-rūpa) *adj.* of the form of knowledge pertaining to the sacred fire ततश्चाग्निविद्यारूपाङ्गविशेषानुग्रहप्रयुक्त एवार्थः S'ivārkaMaDī. i. 363. 10 (*on* i. 2. 16)

**अग्निविद्यावरण** (agnividyā-varaṇa) *n.* choosing the knowledge pertaining to the sacred fire-altar (as a boon) पितृप्रसादवरणस्याग्निविद्यावरणस्य च प्रत्येकनिरपेक्षहेतुत्वसूचनार्थं 'एतच्च सर्वं', 'तदपि' इति S'rutaPra. iB. 305. 20 (*on* i. 2. 12); देहातिरिक्तात्मसद्भावनिश्चयरहितस्य पितृसौमनस्याग्निविद्यावरणयोरनुपपत्तेः S'rutaPra. ii. 112. 11 (*on* i. 4. 6)

**अग्निविद्याव्यवधान** (agnividyā-vyavadhāna) *n.* intervention by the knowledge of Agni वक्तृभेदादग्निविद्याव्यवधानाच्च ··· अक्षिपुरुषो जीवः प्रतिबिम्बो वा स्यादित्याशङ्कानिराकरणायाह अत इति S'ivārkaMaDī. i. 360. 32 (*on* i. 2. 16)

**अग्निविद्योपदेश** (agnividyopadeśa) *m.* teaching of the knowledge of Agni न वक्तृभेदादग्निविद्योपदेशाभ्यां तत्प्रकरणविच्छेदो भवेदिति वाच्यम् S'ivārkaMaDī. i. 355. 15 (*on* i. 2. 13)

**अग्निविध** (agní-vidha) *adj.* Agni-like, resembling fire स एषोऽग्निविधोऽर्कविध उक्थविधो यत्पुरुषः S'atBr. X. vi. 2. 10.

**अग्निविधा** (agni-vidhā) *f.* procedure of (building) the fire-altar **अग्निविधया** [Instr.] *adv.* according to the procedure (of building) the fire-altar अग्निविधयाग्निचितः श्मशानं करोति ··· तद् यदग्निविधयाग्निचितः श्मशानं करोत्यग्निचित्यामेव तत् संस्थापयति S'atBr. XIII. viii. 1. 17.

**अग्निविधान** (agni-vidhāna) *n.* **i** enjoining of the deity Agni प्रजापतिनिवृत्त्यर्थमग्निविधानं भविष्यतीति चेन्नैतदेवम् S'ābaBh. 334. 3 (*on* i. 4. 4); एवमग्निष्टुत्याग्नेया ग्रहा भवन्ति इति विधौ चातिव्याप्तिः तस्याग्निष्टुतीन्द्रवाय्वाद्यनेकदेवताप्राप्तौ चाग्निविधानार्थत्वात् VidhiRa. 21 (120. 14); अग्निविधानासंभव एवेति तत्पक्षोऽनुपपन्नः MayūMāli. 64. 20 (*on* i. 4. 4); 64. 21 (*on* i. 4. 4); **ii** injunction regarding the sacrificial fires उपदिष्टेषु तु वैकृतेषु होमेषु समानमेवाग्निविधानम् S'āstrDī. 329. 8 (*on* iii. 7. 20); क्रत्वन्तरपरिसंख्येति पक्षोऽपि नोपपद्यते द्विरात्रादिष्वग्निविधानसमये तत्समयविधानस्य प्राकृतस्याग्नेर्विकृत्यन्तरे चोदकतः प्राप्त्यभावात् VidhiRa. 2 (10. 5); ज्योतिष्टोमादिविधेः···वेदार्थविज्ञसाग्निकविषयत्वम्··· आहवनीये जुहोतीत्यादिनाग्निविधानात् GuruCandr. ii. 214. 15; **iii** method of cauterizing प्रोक्तं चाग्निविधानमेतदखिलम् Kalyākā. 21. 32; cf. **अग्निविधि.**

**अग्निविधि** (agni-vidhi) *m.* **1** method or procedure of offering oblation in the sacrificial fire तेनैव चाग्निविधिना बहुविधान् यज्ञानिष्ट्वा ··· उर्वश्या सहावियोगमवाप ViṣṇuP. iv. 6. 93; **2** ritual related to fire कुर्यादग्निविधिं सम्यगुपादानमथाचरेत् LakṣmīT. 28. 24; **3 i** injunction regarding the piling of bricks for the fire-altar cf. **अग्निचयन,** अग्निं चित्वा सौत्रामण्या यजेतेत्यादीनामङ्गप्रयोजनसंबन्धपरत्वेऽग्निविधिप्रयुक्तिः सौत्रामण्यादीनाम् NyāyRaMā. 146. 20; वैकृताग्निश्रवणस्याग्निविधिरूपस्वार्थपरत्वं त्यक्तव्यम् VidhiRa. 2 (9. 14); एवमेतेऽग्निष्टोमादिष्वग्निविधयः प्रशस्ताः VidhiRa. 33 (182. 21); 2 (5. 9); 2 (10. 2); 35 (187. 25); MīmāKau. ii. 71. 12 (*on* ii. 3. 22); त्रिरात्रादिष्वग्निविधिरपूर्वविधिः S'ivārkaMaDī. i. 58. 29 (*on* i. 1. 1); **3 ii** injunction regarding the sacred fires महाभारतेऽपि पुराकल्परूपार्थवादसहितोऽग्न्यौकरणे अग्निविधिर्दृश्यते CaturCin. iii(1). 131. 15; न चाग्निविध्यनुरोधेन क्रतुविध्यधिकारसंकोचवत् तदुपपत्तिः MīmāKau. ii. 298. 19 (*on* iii. 2. 38); MayūMāli. 712. 5 (*on* x. 4. 19); **4** process of cauterization cf. **अग्निविधान, अग्निकर्मन्,** साधयेत्···छेदनाग्निविधिना गुदकीलम् KalyāKā. 12. 133; **5** procedure (of ordeal) by fire cf. **अग्निपरीक्षा,** इत्यग्निविधिः Mitā. 208. 15 (*on* 2. 107); BālamBha. ii. 117. 12 (*on* 2. 107); SmṛtiCan. iii. 271. 10; DīpKa. 51. 17 (*on* 2. 103); इदानीं क्रमप्राप्तमग्निविधिमाह VīraMi. 548. 16 (*on* 2. 107); VyavaNi. 157. 4.

**अग्निविध्मापन** (agni-vidhmāpana) *n.* act of extinguishing fire भवद्देवस्य माहात्म्यं विद्यते यदि किंचन । अग्निविध्मापनं कान्त स देवो विद्धात्वरम् BṛKathāK. 54. 45.

**अग्निविध्वंसकर** (agnividhvaṁsa-kara) *adj.* which destroys the fire of the stomach, which causes chronic indigestion or dyspepsia अतीसारेषु यो नातियत्नवान् ग्रहणीगदः । तस्य स्यादग्निविध्वंसकरैरन्यस्य सेवितैः AṣṭāSaṁ. i. 280. 6 (3. 8) (comm. अन्नपानैः); AṣṭāHṛ. iii. 8. 16.

**अग्निविनाश** (agni-vināśa) *m.* extinction of the sacred fire अरणिविनाशेनाग्निविनाशः BaudhS'S. iii. 386. 11; यदेष्टयुत्तरमग्निविनाशादिनिमित्ताधानाव्यवहितोत्तरसोमकरणं तदा सोमे कालानादरविधानोपपत्तेर्न विध्यन्तरकल्पनया विकल्पाङ्गीकरणं युक्तम् BhāṭṭDī. ii. 207. 17 (*on* v. 4. 3); तूष्णींहोमस्याकृतप्रायत्वान्नायथापूर्वत्वं नाग्निविनाश इत्यर्थः MayūMāli. 776. 14 (*on* x. 8. 5)

**अग्निविनियोग** (agni-viniyoga) *m.* disposing of the sacrificial (*śrauta*) fires अथातः संन्यासविधिं व्याख्यास्यामः ।···गुणवति पुत्रे कुटुम्बमावेश्या-

in the (funeral) fire (i. e. cremated) यावदस्याश्शरीरमग्निसंयोगं नोपनीयते तावत्सप्राणामेनां करोमि BhagAjju. 85; **9** presence of fire रविसोमाग्निसंयोगाचदोद्योतं न पश्यति । कृष्णं सर्वं समस्तं च षण्मासं जीवितं तथा S'ivaP. v. 25. 12 (434B. 12); **10** connection with fire (i. e. lightning or heat) दिव्यं वार्यग्निसंयोगात्संहताः खात्पतन्ति याः । पाषाणखण्डवच्चापः ताः कारक्योऽमृतोपमाः BhojanKu. 178. 22.

**अग्निसंयोगकृतत्व** (agnisaṁyogakṛta–tva) *n.* the state of being produced through contact with fire तदुत्पादस्य अग्निसंयोगकृतत्वानभ्युपगमात् TarkSaṁ.(Ā.) 62. 17.

**अग्निसंयोगज** (agnisaṁyoga–ja) *adj.* produced through contact with fire (द्रवत्वम्) नैमित्तिकं च पृथिवीतेजसोरग्निसंयोगजम् PadārthaSaṁ. 265. 4; न हि पार्थिवपरमाणौ रूपादयोऽग्निसंयोगजाः NyāySu.(Ja.) 377B. 11 (*on* ii. 2. 6); पार्थिवपरमाणुः अग्निसंयोगजविशेषगुणवान् TarkSaṁ.(Ā.) 62. 21; अनुष्णामिरित्यत्राग्निसंयोगजमौष्ण्यं प्रतिषिध्यते ViraMi.(Āhnika.) 66. 8; पृथिव्यां घृतादावग्निसंयोगजन्यं (v. l. °जं) द्रवत्वम् TarkSaṁ. 20. 11.

**अग्निसंयोगजत्व** (agnisaṁyogaja–tva) *n.* the state of being produced by contact with fire पार्थिवपरमाणुगतस्वरूपादीनामग्निसंयोगजत्वदर्शनात् S'āstrDī. 36. 7 (*on* i. 1. 4); क्वचित्सत्वाश्रयेऽपि रूपा(दीनां वि)दिविनाशेऽग्निसंयोगजत्वे च विरोधाभावात् NyāySu.(Ja.) 371B. 10 (*on* ii. 2. 6)

**अग्निसंयोगजन्य** (agnisaṁyoga–janya) *adj.* produced through contact with fire अग्निसंयोगजन्यं नैमित्तिकं द्रवत्वम् SiddhāMu. 79. 23 (*on* 156); अग्निसंयोगजन्या रूपादयः S'ivārkaMaDī. ii. 76. 12 (*on* ii. 2. 14); पृथिवीविशेषगुणाः पाकजाः, ते द्विविधाः— पाकप्रयोज्याः पाकजन्याश्च कारणगुणप्रक्रमजन्याः पाकप्रयोज्याः, अग्निसंयोगजन्याः द्वितीयाः Tarkāmṛ. 10. 1; 13. 17; पृथिव्यां घृतादावग्निसंयोगजन्यं (v. l. °जं) द्रवत्वम् TarkSaṁ.(A.) 20. 11.

**अग्निसंयोगतस्** (agnisaṁyoga–tas) *adv.* due to contact with fire तदास्य कोपतान्नास्यात् सुस्राव स्वेदशम्बरम् । अग्निसंयोगतः स्विन्नदह्यमानेन्धनाद् यथा BallāC. 19. 4.

**अग्निसंयोगतुल्यन्याय** (agnisaṁyogatulya–nyāya) *adj.* having a rule parallel to that of the connection with fire (in the ritual named Agnisaṁyoga) एवं च सौमिकमपि वरणं यदवृता वषट्कुर्युर्भ्रातृव्यमेव यज्ञस्याशीर्गच्छेदिति यज्ञसंयोगादग्निसंयोगतुल्यन्यायं केवलप्रधानार्थं भवति S'āstrDī. 823. 6 (*on* xi. 3. 9)

**अग्निसंयोगदशा** (agnisaṁyoga–daśā) *f.* the state of contact with fire यद्वा घृतपरमाणावग्निसंयोगदशायां द्रवत्वनाशे सति द्रवत्वान्तरं नोत्पद्यते TattvCin. i. 760. 1.

**अग्निसंयोगप्रागभाव** (agnisaṁyoga–prāgabhāva) *m.* prior nonexistence of contact with fire न च तत्राप्यग्निसंयोगप्रागभावसहकृतस्य कार्यकरत्वमिति वाच्यम् NyāyKu. 39. 1.

**अग्निसंयोगबलात्** (agnisaṁyoga–balāt) *adv.* by reason of connection with the sacred fire अघाहानि अशौचाहानि तेषां यदा वेदाग्निसंयोगबलात् सङ्कोचो विहितः HārLa. 25. 15.

**अग्निसंयोगभेद** (agnisaṁyoga–bheda) *m.* variety of contact with fire पाकजरूपादिभेदोऽप्यग्निसंयोगभेदात् पूर्वरूपादिध्वंसभेदाद्वा AdvaiSi. 554. 20.

**अग्निसंयोगमात्र** (agnisaṁyoga–mātra) *n.* mere contact with fire अग्निसंयोगमात्रं चेद्धेत्वसिद्धसाधनम् AnuVyā. 27A. 5 (*on* 2. 2); उत्तरत्रापि किमग्निसंयोगमात्रम् । उत पर्वतस्याग्निसंयोग इति NyāySu.(Ja.) 376A. 5 (*on* ii. 2. 6); (घृतस्य) अग्निसंयोगमात्ररूपश्रपणं शक्त्या लक्षणया वा प्रतिप्रसवविधया विधीयते BhāṭṭDī. iii. 15. 11 (*on* viii. 1. 9)

**अग्निसंयोगरहित** (agnisaṁyoga–rahita) *adj.* **i** without contact with fire धूमस्य तु कदाचिदप्यग्निसंयोगरहितस्यावगमो नास्ति PrakaPañ. 204. 6; यथा अग्निसंयोगरहितस्य नावस्थानम् (धूमस्य) NyāyRaMā. 61. 12; **ii** void of connection with sacred fires नित्यनैमित्तिकस्वकर्मानुष्ठानार्थं वेदाग्निसंयोगरहितयोः । …क्षत्रियवैश्ययोः पञ्चदशाहविंशत्यहौ HārLa. 9. 18.

**अग्निसंयोगरूप** (agnisaṁyoga–rūpa) *adj.* of the nature of contact with fire न चाग्निसंयोगरूपव्यापारस्य धात्वर्थस्य कर्मनिष्ठत्वान्नानुपपत्तिरिति वाच्यम् VaiyāBhū. 28. 8 (*on* 5)

**अग्निसंयोगवत्** (agnisaṁyoga–vat) *adv.* like contact with fire अग्निसंयोगवद्धेतुः शस्त्रसंयोग उच्यते Rāmā. 3. 132*. 2; अग्निसंयोगवत्स्वाभाविकमेतत्कालसम्बन्धित्वमित्यापद्येत NyāyRaMā. 61. 11.

**अग्निसंयोगविच्छेद** (agnisaṁyoga–viccheda) *m.* cessation of contact with fire जलगतस्यौष्ण्यस्य…अग्निसंयोगविच्छेदेनैव निवृत्तिः PrakaPañ. 127. 11.

**अग्निसंयोगविरहिन्** (agnisaṁyogavirah–in) *adj.* devoid of contact with fire तादृशस्य नास्त्येवाग्निसंयोगविरहिणो (धूमस्य) दर्शनम् PrakaPañ. 204. 18.

**अग्निसंयोगविरोधिन्** (agnisaṁyoga–virodhin) *adj.* having the contact with fire as its destroyer तत्र रूपं चक्षुर्ग्राह्यम् । … पार्थिवपरमाणुष्वग्निसंयोगविरोधि PadārthaSaṁ. 104. 3; पार्थिवपरमाणुष्वग्निसंयोगविरोधि । अग्निसंयोगो विनाशकः पार्थिवपरमाणुरूपस्येति च वक्ष्यामः NyāyKa. 104. 15; तत्र रूपं शुक्लाद्यनेकविधमग्निसंयोगविरोधि TārkiRa. 149. 2.

**अग्निसंयोगविशेष** (agnisaṁyoga–viśeṣa) *m.* a particular (type of) conjunction with fire यद्वा रूपरसस्पर्शतुल्यत्वेऽप्यग्निसंयोगविशेषात् क्वचित्सौरभमसौरभञ्चोत्पद्यते TattvCin. i. 635. 3.

**अग्निसंयोगसद्भाव** (agnisaṁyoga–sadbhāva) *m.* presence of conjunction with fire (i. e. heating) आज्येऽप्यग्निसंयोगसद्भावात् BhāṭṭDī. iii. 15. 17 (*on* viii. 1. 9)

**अग्निसंयोगहेतुक** (agnisaṁyogahetu–ka) *adj.* caused by contact with fire अग्निसंयोगहेतुकः काष्ठादिविनाशः Sphuṭā. iv. 2. 13 (*on* 4. 2)

**अग्निसंयोगाजन्य** (agnisaṁyogājanya) *adj.* not to be produced through contact with fire अग्निसंयोगाजन्यरूपादिमात्रस्य कारणगुणापेक्षत्वात् S'ivārkaMaDī. ii. 77. 15 (*on* ii. 2. 14)

**अग्निसंयोगातिरिक्त** (agnisaṁyogātirikta) *adj.* distinct from contact with fire अग्निसंयोगातिरिक्तं यत्किञ्चित् कारणान्तरम् । अस्ति दृश्यमदृश्यं वा MānaMe. 262. 4.

**अग्निसंयोगादिकाल** (agnisaṁyogādi–kāla) *m.* the time of contact with fire etc. तथा हि अग्निसंयोगादिकाले त्रितयं लक्षयामः HetuBi. 77. 22.

**अग्निसंयोगानपेक्ष** (agnisaṁyogānapekṣa) *adj.* not depending on contact with fire अग्निसंयोगानपेक्ष्यं(? क्षं) द्रवत्वं सांसिद्धिकम् TarkKau. 19. 6.

**अग्निसंयोगान्तर** (agnisaṁyogāntara) *n.* another contact with fire अग्निसंयोगान्तरं पूर्वरूपाद्युच्छिनत्ति NyāyVār. 417. 9 (*on* iii. 2. 14); अग्निसंयोगात् रूपादिनाशे सति अग्निसंयोगान्तरात्तथाविधात् अपूर्वरूपाद्युत्पत्तौ TarkSaṁ.(Ā.) 62. 6.

**अग्निसंयोगान्वयव्यतिरेक** (agnisaṁyogānvayavyatireka) *m.* presence and absence of contact with fire अग्निसंयोगान्वयव्यतिरेकानुविधायितया नेदमिह क्षीरादिवत्…प्रत्यक्षमेव Kiraṇā. 46. 9.

**अग्निसंयोगापेक्ष** (agnisaṁyogāpekṣa) *adj.* [*f.* –ā] depending on contact with fire विज्ञानादिविशेषगुणोत्पत्तिः स्वाश्रये द्रव्यान्तरसंयोगलक्षणासमवायिकारणापेक्षा नित्यद्रव्यविशेषगुणोत्पत्तित्वात् अग्निसंयोगापेक्षपरमाणुगतलौहित्योत्पत्तिवत् VivaPraSaṁ. 116. 22; अग्निसंयोगापेक्ष्यं(? क्षं) द्रवत्वं नैमित्तिकम् TarkKau. 19. 7.

**अग्निसंयोगाभाव** (agnisaṁyogābhāva) *m.* absence of association with the god of fire प्रातराहुतेरग्निसंयोगाभावादनग्निहोत्रत्वेनाङ्गत्वं प्राप्नोति TantrVā. 501. 8 (*on* ii. 2. 16)

**अग्निसंयोगावच्छिन्न** (agnisaṁyogāvacchinna) *adj.* delimited by contact with fire अग्निसंयोगावच्छिन्नक्रियानुकूलव्यापारस्य जुहोत्यर्थतया धात्वर्थतावच्छेदकसंयोगाश्रयस्याप्यग्नेः तत्कर्मता VyutpaVā. 120. 9.

**अग्निसंयोगिद्रव्यकत्व** (agnisaṁyogidravyaka–tva) *n.* the state of having a substance which is in contact with fire चरुशब्दः … अग्निसंयोगिद्रव्यकत्वसादृश्यात् गौणः LaCandr. 722. 29.

**अग्निसंयोजन** (agni–saṁyojana) *adj.* [*f.* –ī] merging the sacred fires (in the sattra-sacrifice) अत्रो ह स्माह शालीकिरग्निसंयोजनी खल्वेषेष्टिर्भवति BaudhS'S. iii. 162. 13; *n.* bringing about or causing contact with fire न विक्लित्तिः पाकशब्दार्थः किं तु तद्धेतुभूतमग्निसंयोजनमेव MayūMāli. 659. 7 (*on* x. 2. 1)

**अग्निसंरक्षण** (agni–saṁrakṣaṇa) *n.* **1** maintenance of sacred fire अग्निसंरक्षणपरा गृहशुद्धिं च कारये MahāBhā. xiii. 617*. (2); अग्निसंरक्षणे शक्तिर्यस्य चैव न वर्तते । तदारण्यामजस्राग्निं स्थापयेद् विधिपूर्वकम् LaghvāśvaSm. 1. 61; **2** maintenance of digestive fire अग्निसंरक्षणवता यवगोधूमशालयः । पुराणाः…भोज्या यूषैः CaraS. i. 6. 38 (1941 Ed.)

**अग्निसंवलित** (agni–saṁvalita) *adj.* associated with fire, united with fire यानि … अग्नौ हूयन्ते तान्यादित्यरश्मिभिरग्निसंवलितैरुत्पन्नपाकानि … आदित्यमण्डलम् … नीयन्ते Bhām. 251. 12 (*on* i. 3. 31)

**अग्निसंवृद्धि** (agni–saṁvṛddhi) *f.* improvement of digestive fire वर्णस्वरमेधोजःशुक्रायुर्धृतिबलाग्निसंवृद्धिः ।…संभोजनस्नेहात् KāśyaS. 23A. 27.

**अग्निसंवेदन** (agni–saṁvedana) *n.* causing the cognition of fire अग्निसंवेदन एव तत्र इन्द्रियव्यापार उपक्षीणः Kāśi. i. 289. 24 (*on* 4. 250)

**अग्निसंव्याप्त** (agni–saṁvyāpta) *adj.* completely burnt by fire, scorched by fire न बीजादग्निसंव्याप्तादङ्कुरोद्भूतिरीक्ष्यते BṛĀraUBhVā. i. 2. 43.

**अग्निसंशुद्ध** (agni–saṁśuddha) *adj.* completely purified by fire पिण्डे वाय्वग्निसंशुद्धे हृत्पद्मस्थां परां विभो । अण्वीं जीवकलां ध्यायन् PadmP. iv. 90. 18.

**अग्निसंश्रित** ( agni-saṁśrita ) *adj.* who resorts to or maintains the sacred fires अग्निसंश्रिता:⋯ब्राह्मणा: श्राद्धसंपदि PrajāSm. 1. 70.

**अग्निसंश्लेष** ( agni-saṁśleṣa ) *m.* close contact with fire अग्निसंश्लेषादयो दहति VedāntKa. 165. 12 (*on* i. 3. 22)

**अग्निसंसर्ग** ( agni-saṁsarga ) *m.* **1** contact with fire जलस्य नाग्निसंसर्ग: स्थालीसंगात्तथापि हि ViṣṇuP. vi. 7. 23; **2** contact with i. e. ownership of the sacred fire यजमानस्य तु मृतस्य पृथक्कृतस्याग्निभिर्दाहेऽप्यनाहिताग्निसाधारण्येन आनीतस्याग्निसंसर्गे प्रमाणाभावात् ऋत्विग्वदेव कर्तृत्वोपपत्ति: BhāṭṭDī. ii. 260. 22 (*on* vi. 3. 8); **3** contact with flame of sacred fire अग्निसंसर्गस्तुत्यर्थमुल्मुकसंसर्गनिन्दा MayūMāli. 515. 10 (*on* vi. 7. 12)

**अग्निसंसर्गविधि** ( agnisaṁsarga-vidhi ) *m.* injunction with regard to the relation with sacred fire अग्निसंसर्गविधिना वा द्वितीयाया अप्यग्निसंबन्धसिद्धि: BālamBha. i. 243. 27 (*on* 1. 89)

**अग्निसंसृष्ट** ( agni-saṁsṛṣṭa ) *adj.* coming in contact with fire न ह्यग्निसंसृष्टस्य कलमबीजस्याङ्कुरान्तरे सामर्थ्यमस्ति NyāyKu. 42. 14.

**अग्निसंसेवन** ( agni-saṁsevana ) *n.* resorting to fire (for warmth) अग्निसंसेवनं पथ्यं कटुक्षाराम्लसेवनम्⋯हेमन्ते HāriS. i. 4. 48.

**अग्निसंस्करण** ( agni-saṁskaraṇa ) *n.* cremation by fire, funeral rite with fire कृतचूडे च संस्थिते । अग्निसंस्करणे तेषां त्रिरात्रमशुचिर्भवेत् ParāSm. 3. 16.

**अग्निसंस्करणपूर्वम्** ( agnisaṁskaraṇa-pūrvam ) *adv.* accompanied by funeral rites with fire (i. e. cremation) सुरेन्द्रा: स्वामिन: ⋯ अग्निसंस्करणपूर्वमकुर्वन् मोक्षपर्वमहिमानम् TriṣaS'aPuC. iii. 5. 126.

**अग्निसंस्कार** ( agni-saṁskāra ) *m.* **1A** consecretion of fire अग्निसंस्कारा जपहोमव्रतानि च स्त्रीणां नैते विधातव्या: MahāBhā. i. 1613*(1); अग्निसंस्कारस्तु तत्फलम् S'ābaBh. 737. 15 (*on* iii. 1. 22); अग्निसंस्कारस्य च पूर्णाहुते: फलानपेक्षत्वात् PūrvottaVāNaMā. 247. 19; 294. 1; 300. 7; आधानस्याग्निसंस्कारइव तावन्मात्रे विश्रान्त्यभावात् S'ivārkaMaDī. i. 41. 32 (*on* i. 1. 1); अग्निसंस्कारस्य चयननिष्पन्नस्थण्डिले अग्निनिधानरूपस्य स्वरूपेण फलवत्त्वाभावेन MayūMāli. 394. 2 (*on* iv. 3. 18); **1B** consecration with fire सपिण्डायाश्च कृतेऽप्यग्निसंस्कारे न विवाहस्वरूपत्वम् ManuBh. ii. 178. 10 (*on* 8. 227); **2** cremation with fire न चाग्निसंस्कारमियं प्रापिता कुलधर्मत: MahāBhā. iv. 175*(5); नास्य कार्योऽग्निसंस्कार: ManuSm. 5. 69; नास्याग्निसंस्कारो नोदकक्रिया ViṣṇuSm. 22. 28; तयो:⋯ पितरीवाग्निसंस्कारात्परा ववृतिरे क्रिया: RaghuVa. 12. 56; ये च गर्भाद्विनि:सृता: । न तेषामग्निसंस्कारो नाशौचम् ParāSm. 3. 14 = BṛParāSm. 8. 45; देवी तु पूर्वेद्युरेव यथार्हमग्निसंस्कारं मालवाय दापयित्वा DaśKuC. 143. 5; नास्य कार्योऽग्निसंस्कार: ManuBh. i. 310. 5 (*on* 3. 235); अजातदन्ते तनये⋯कार्यो नैवाग्निसंस्कार: AgniP. 157. 41; द्व्यब्दे नैवाग्निसंस्कारो मृते तं निखनेद्भुवि AgniP. 158. 9; ViṣṇuDhaP. ii. 76. 10; iii. 267. 30; अनाथस्याग्निसंस्कारं य: कुर्यात्⋯सोऽग्निलोके महीयते S'ivaP. iii. 15. 63 (314B. 11); तस्य द्वे अपि ते भार्ये ⋯ विरचय्याग्निसंस्कारं चक्राते और्ध्वदेहिकम् TriṣaS'aPuC. iii. 3. 146; उदकक्रियाग्निसंस्कारं गमयत्यव्यभिचारात Aparā. 871. 6 (*on* 3. 1); जातदन्तस्य त्वग्निसंस्कारे चूडाकरणाभावेऽपि त्रिरात्राशौचम् Aparā. 911. 4 (*on* 3. 23); 911. 12 (*on* 3. 23); मौञ्जि(ञ्जी)बन्धनात्प्राक्तेनैव त्रिरात्रेणाग्निसंस्कारोदकदानसहितेन शुद्धि: SmṛtiCan. vi. 18. 7; ननु संपूर्णद्विवर्षस्य याज्ञवल्क्येन विहितोऽग्निसंस्कारो न नित्य: SmṛtiCan. vi. 22. 8; vi. 23. 7; vi. 23. 11; तत्कायस्याग्निसंस्कारं पुण्यक्षेत्रे व्यधु: सुरा: PāṇḍaC. 6. 621; PurāPraSaṁ. 109. 29; KathāK. 32. 26; तदास्या अग्निसंस्कार: कारितो भूभुजा तत: CampaS'reKa. 188.

**अग्निसंस्कारक** ( agni-saṁskāraka ) *adj.* which consecrates the fire आधानं चाग्निसंस्कारकमवगम्यमानम् S'āstrDī. 301. 1 (*on* iii. 6. 4)

**अग्निसंस्कारकत्व** ( agnisaṁskāraka-tva ) *n.* the state of being that which consecrates the fire मूले तु अग्निसंस्कारकत्वान्न तदित्युक्तम् MīmāKau. iii. 12. 6 (*on* i. 2. 4)

**अग्निसंस्कारकमन्थन** (agnisaṁskāraka-manthana) *n.* churning which consecrates the fire इष्यते चायमर्थोऽग्निसंस्कारकमन्थनादे: ⋯ चातुर्मास्याङ्गत्वेन विनियोगे तद्धर्माणां कार्यान्तरप्रयुक्तत्वकल्पनादौ BhāṭṭDī. i. 286. 10 (*on* iii. 3. 14)

**अग्निसंस्कारक्रिया** ( agnisaṁskāra-kriyā ) *f.* performance of the rite of cremation दन्तजननादर्वागग्निसंस्कारक्रियायामेकाह: Mitā. 345. 9 (*on* 3. 23)

**अग्निसंस्कारत्व** ( agnisaṁskāra-tva ) *n.* the state of being the consecration or refinement of fire पूर्णाहुतेरग्निसंस्कारत्वात्⋯न तावत्फलविधित्वावसर: TantrVā. 8. 16 (*on* i. 2. 4); VīraMi.( Āhnika. ) 534. 4.

**अग्निसंस्कारनिषेध** ( agnisaṁskāra-niṣedha ) *m.* prohibition of cremation with fire चण्डालादिहतानामयमग्निसंस्कारनिषेधोऽनाहिताग्निविषय: SmṛtiCan. vi. 121. 20; वैष्णवेऽग्निसंस्कारनिषेधसाहचर्यात्सद्य:शौचस्यादाहविषयत्वेऽन्यस्य दाहविषयत्वम् BālamBha. iii. 72. 27 (*on* 3. 23)

**अग्निसंस्कारनिष्पत्ति** ( agnisaṁskāra-niṣpatti ) *f.* completion of the consecration of fire अत्रापि चयनेनाग्निसंस्कारनिष्पत्त्यनन्तरं विधानात् MayūMāli. 394. 2 (*on* iv. 3. 18)

**अग्निसंस्कारपक्ष** ( agnisaṁskāra-pakṣa ) *m.* alternative course of cremation with fire प्रथमेऽब्देऽकृतचूडस्यापि विपत्तावग्निसंस्कारपक्षे ज्ञातीनामपि त्रिरात्रम् Aparā. 911. 18 (*on* 3. 24)

**अग्निसंस्कारप्रतिषेध** ( agnisaṁskāra-pratiṣedha ) *m.* prohibition of cremation with fire संपूर्णद्विवर्षस्याग्निसंस्कारप्रतिषेधे क्रियमाणे SmṛtiCan. vi. 22. 16.

**अग्निसंस्कारमात्र** ( agnisaṁskāra-mātra ) *n.* mere consecration of fire उताग्निसंस्कारमात्रं स्वतन्त्रं विधीयते S'āstrDī. 171. 14 (*on* ii. 3. 10); यथाधानविधिरग्निसंस्कारमात्रपर्यवसायी S'ivārkaMaDī. i. 51. 20 (*on* i. 1. 1); न च आधानस्य अग्निसंस्कारमात्रार्थत्वाद् अपूर्वजनकत्वं नास्तीति शङ्कनीयम् PūrvottaVāNaMā. 300. 14.

**अग्निसंस्काररहित** ( agnisaṁskāra-rahita ) *adj.* for whom the cremation rite is not to be performed वैष्णवे अग्निसंस्काररहितस्य सद्य:शौचविधानात् Mitā. 344. 14 (*on* 3. 23)

**अग्निसंस्कारविकल्प** ( agnisaṁskāra-vikalpa ) *m.* option regarding (the performance of) the cremation rite अकृतचूडस्य चाग्निसंस्कारविकल्पो नामकरणादूर्ध्वमेव Aparā. 871. 3 (*on* 3. 1)

**अग्निसंस्कारविच्छेद** ( agnisaṁskāra-viccheda ) *m.* discontinuance of the consecration of fire देवताश्च⋯ अग्निसंस्कारविच्छेदनिमित्तोपजनने⋯तेष्वग्निषु संनिदधते PūrvottaVāNaMā. 298. 1.

**अग्निसंस्कारवैयर्थ्य** ( agnisaṁskāra-vaiyarthya ) *n.* futility of the consecration of fire पवमानेष्टयङ्गत्वाभावेऽग्निसंस्कारवैयर्थ्यादिग्निद्वारा तदङ्गत्वं युक्तम् NyāyMāVi. 181. 18 (*on* iii. 6. 4)

**अग्निसंस्कारव्यवहित** ( agnisaṁskāra-vyavahita ) *adj.* seperated by the (rite of) consecration of fire अग्नीनादधीतेत्यत्र स्वरितेतिसूत्रविहितेऽप्यात्मनेपदे अग्निसंस्कारव्यवहितस्याहिताग्नित्वापत्तिरूपफलस्य कर्त्रन्वयित्वदर्शनात् S'rutaPra. iA. 13. 10 (*on* i. 1. 1)

**अग्निसंस्कारादि** ( agnisaṁskārādi ) *adj.* ( rites ) beginning with cremation क्रियापदेनाग्निसंस्कारादि BālamBha. ii. 229. 19 (*on* 2. 135)

**अग्निसंस्कारानुविधायित्व** ( agnisaṁskārānuvidhāyi-tva ) *n.* the state of being performed after the cremation rite 'नास्य कार्योऽग्निसंस्कारो नापि कार्योदकक्रिया' इति वदन्नुदकदानक्रियाया अग्निसंस्कारानुविधायित्वं दर्शयति SmṛtiCan. vi. 23. 6.

**अग्निसंस्काराभाव** ( agnisaṁskārābhāva ) *m.* **1** absence or non-performance of the cremation rite न पुनस्तादृशस्यास्थिसंचयो न कर्तव्य इत्येव वाक्यार्थ: । अग्निसंस्काराभावादेव तदप्राप्ते: ManuBh. i. 453. 13 (*on* 5. 67); तस्यास्थिसंचयो न कार्य इति तु नार्थ: । अग्निसंस्काराभावादेव तदप्राप्ते: BālamBha. iii. 2. 17 (*on* 3. 1); iii. 74. 10 (*on* 3. 23); **2** absence of the consecration by the fire अत एव नायं सतीधर्म:, न चायं विवाह:, अग्निसंस्काराभावात् ( गान्धर्व: ) ManuBh. ii. 223. 17 (*on* 8. 366)

**अग्निसंस्कारार्थ** ( agnisaṁskārārtha ) *adj.* intended or meant for the consecratian of fire ता: पवमानेष्टयोऽग्निसंस्कारार्था इत्युक्तम् S'ābaBh. 1041. 6 (*on* iii. 6. 17); अग्निसंस्कारार्थस्याधानस्य पुरुषसंस्कारेषु परिगणनात् तदर्थत्वमपि SiddhāLeSaṁ. 389. 7; BhāṭṭDī. ii. 74. 4 (*on* iii. 8. 13); एवं च तदाधानं नाग्निसंस्कारार्थं संस्कृतानामग्नीनामुत्तरत्रोपयोगाभावात् MīmāNyāPra. 242. 13; MayūMāli. 548. 4 (*on* vi. 1. 12)

**अग्निसंस्कारार्थता** ( agnisaṁskārārtha-tā ) *f.* the state of being meant for the purification or consecration of fire तेनैवं पुनर्नवं करोतीति चाग्निसंस्कारार्थतां दर्शयति TantrVā. 1085. 8 (*on* iii. 6. 13)

**अग्निसंस्कारार्थत्व** ( agnisaṁskārārtha-tva ) *n.* the state of being meant for the consecration of fire आधानवदिष्टीनामप्यग्निसंस्कारार्थत्वात्परस्परं नास्त्यङ्गाङ्गिभावशङ्का NyāyMāVi. 181. 17 (*on* iii. 6. 4); चिनोतिना नाग्निसंस्कारार्थत्वेन चयनविधि: BhāṭṭDī. i. 158. 16 (*on* ii. 3. 10)

**अग्निसंस्कारासिद्धि** ( agnisaṁskārāsiddhi ) *f.* non-accomplishment of the consecration of fire वैदिकेऽग्नावियमिष्टि: । इति चेत् । मैवम् । अत्रैवर्णिकत्वादविहितेनाधानेनाग्निसंस्कारासिद्धे: NyāyMāVi. 369. 22 (*on* vi. 8. 3)

**अग्निसंस्कारोपात्त** ( agnisaṁskāropātta ) *adj.* indicated by the consecration of fire इह पुनरग्निसंस्कारोपात्तं चयनकर्मैव विद्यते TantrVā. 616. 11 (*on* ii. 3. 22)

**अग्निसंस्कृत** ( agni-saṁskṛta ) *adj.* whose cremation rite is performed,

cremated जटायु: … । कृत्वा राघवकार्यं य: स्वरारूढोऽग्निसंस्कृत: Bhatti. 7. 83.

**अग्निसंस्कृति** (agni–saṁskṛti) *f.* cremation वञ्चनाह मया सार्धमस्या: स्यादग्निसंस्कृति: PārśvC. 3. 643.

**अग्निसंस्क्रिया** (agni–saṁskriyā) *f.* consecration of fire तन्त्रेण तत्र देवार्चा पितृश्राद्धाग्निसंस्क्रिया: MahNirvāT. 13. 121.

**अग्निसंस्थदल** (agnisaṁstha–dala) *n.* petal in the South–East शङ्खम् …यजेन्महानादमग्निसंस्थदले S'ilpaRa. ii. 23. 50.

**अग्निसंस्थापन** (agni–saṁsthāpana) *n.* setting up of the (sacred) fire अग्निसंस्थापनं तत्र कृत्वा पूर्वं ततो महीम् । आनयेयुर्द्विजा: BhaviP. 847B. 31 (iv. 165. 14); अग्निसंस्थापनं प्राच्यां स्वगृह्योक्तविधानत: NāraS. 41. 7; अग्निसंस्थापनं कृत्वा मुखान्ते जुहुयाच्चरुम् VasiS. 45. 64.

**अग्निसंस्थापनार्थम्** (agni–saṁsthāpanārtham) *adv.* for placing the (funeral) fire लक्षणञ्चाग्निसंस्थापनार्थं पञ्चभूसंस्कार उच्यते HārLa. 135. 2.

**अग्निसंस्पर्श** (agni–saṁsparśa) *adj.* having a fiery touch द्रोणास्त्रमग्निसंस्पर्शं प्रविष्टा: क्षत्रियर्षभा: MahāBhā. vii. 101. 57; *m.* contact with fire सोढुं शक्योऽग्निसंस्पर्श: Rāmā. ii. 1360*(1); अग्निसंस्पर्शसंशुद्धसीतासंवरणोत्सुक: SātvaT. 6. 91; यथाग्निसंस्पर्शकूपादिपाताद्गाढहस्तावष्टम्भादिना धार्यते ManuBh. i. 204. 15 (*on* 3. 2)

**अग्निसंस्पर्शन** (agni–saṁsparśana) *n.* touching the fire (i. e. for cooking etc.) अग्निसंस्पर्शनं चैव वर्जयेत्तु दिनत्रयम् ViṣṇuDhaP. ii. 52. 26.

**अग्निसंस्पर्शवदन** (agnisaṁsparśa–vadana) *adj.* having mouth or beak producing burning sensation अग्निसंस्पर्शवदनै: काककाकोलजम्बुकै: … भक्ष्यते (जीव:) SkandP. i(2). 50. 66 = ViṣṇuDhaP. ii. 116. 21.

**अग्निसंस्पर्शा** (agni–saṁsparśā) *f.* a medicinal plant *Oldenlandia corymbosa* जतुकृष्णाग्निसंस्पर्शा जतुकृच्चक्रवर्तिनी BhāvPra.(Bhā.) 6(3). 127; BhāvPraNi. 44. 27.

**अग्निसंस्पृष्ट** (agni–saṁspṛṣṭa) *n.* burning of skin caused by some defect in cauterization यच्चात्यन्तविवर्णमूष्मबहुलं तच्चाग्निसंस्पृष्टमिति KalyāKā. 21. 25; *adj.* [*f.* –ā] burnt or scorched by fire (अरणि:) छिन्ना भिन्नाग्निसंस्पृष्टा स्फुटिता विद्युता हता AVPari. xxii. 3. 2.

**अग्निसंहति** (agni–saṁhati) *f.* mass of fire शस्त्राणि पातितान्यङ्गे क्षिप्तो यच्चाग्निसंहतौ ViṣṇuP. i. 20. 22.

**अग्निसकाश** (agni–sakāśa) *m.* [adverbially used in Acc. and Loc.] in the presence of or near fire अभिप्रव्रज्याग्निसकाशे वाचं यच्छत्यसकाशे विसृजति MānS'S. 38. 5; यानि रक्षांस्यभितो व्रजन्त्यस्या वध्वा अग्निसकाशमागच्छन्त्या: । तेषामहं प्रतिविध्यामि चक्षु: MānGS. i. 11. 9.

**अग्निसख** (agni–sakha) *m.* **A** sound *y* represented by Vāyu (friend of Agni) शूरतुरीय: सानन आवृत्त: स्यात् सशुभोऽष्टमोऽग्निसख: ।… एवमुद्धरेन्मन्त्रम् PañcaRā.(Nā.) iii. 3. 7; **B** helper of digestion समान इति योऽनिलोऽग्निसख उच्यते सर्वदा KalyāKā. 8. 5; **C** friend of fire परमां सखितां प्रचेतस: प्रतिपेदेऽग्निसख: समीरण: S'ivLī. 15. 28; **D** friend of (i. e. resembling) fire इन्दोरुत्कण्ठितेष्वग्निसखैर्मयूखै: । उद्दीप्तकन्दर्पतया दशास्य: … प्रतस्थे Rāgh. 13. 1.

**अग्निसखि** (agni–sakhi) *m.* friend of Agni एते चान्ये च ये वायवस्तेऽग्निसखाय: PārāSū. 52. 8.

**अग्निसंकट** (agni–saṅkaṭa) *n.* danger caused by fire तेषां दुर्गा … चोरव्यालाग्निसंकटे…रक्षां करोति BhaviP. 692B. 6 (iv. 61. 53)

**अग्निसंकाश** (agní–saṅkāśa) *adj.* [*f.* –ā] resplendent like fire तस्मादेतदग्निसंकाशम् (हिरण्यम्) S'atBr. II. i. 1. 5; II. ii. 4. 15; सात्यकिश्चाग्निसंकाशं मुमोच शरमुत्तमम् MahāBhā. vii. 132. 9; xiii. 86. 22; दुर्योधनोऽग्निसंकाश: शूलासक्तमहाकर: KūrmaP. 255. 5 (1. 24); ऋषिभिरग्निसंकाशैर्व्यासस्तानाह PadmP. i. 51. 4; Hastyāyur. 55. 1 (1. 8); अग्निसंकाशा … दुर्गैषा मोहयेत्परान् ĪśānS'iPa. i. 24. 41.

**अग्निसंक्रान्त** (agni–saṅkrānta) *adj.* put into fire बहुशश्चाग्निसंक्रान्तं लोहं शुचितमं यथा SūktiRa. 34. 16.

**अग्निसंक्रान्ति** (agni–saṅkrānti) *f.* **A** entry of fire (into something) अप्स्वग्निसंयोगाद् गुणान्तरागमो वक्तव्य: । नाग्निसंक्रान्ति: Kāśi. ii. 136. 21 (*on* 5(3). 90); – **B** setting fire to (something) तत: परमग्निसंक्रान्तिरादिष्टा AdbhuDa. 1. 12(2)

**अग्निसज्जा** (agni–sajjā) *f.* stagnation or dullness of digestive faculty, indigetion cf. **अग्निसङ्ग**, v. l. for अग्निशूल SuśruS. [PW. MW.]

**अग्निसंख्या** (agni–saṅkhyā) *f.* the number of the (mystic) fires शाखाद्वयाम्नातायां पञ्चाग्निविद्यायामग्निसंख्यारूपगुणभेदाद् भेदशङ्कां निराचष्टे (भाष्यकार:) S'ivārkaMaDī. ii. 283. 29 (*on* iii. 3. 1)



**अग्निसङ्ग** (agni–saṅga) *m.* **1** contact with fire संग्रहो नाम संयोगसहचरितं गुणान्तरं स्नेहद्रवत्वकारितमपां संयोगादामे कुम्भे, अग्निसंयोगात् (v. l. °सङ्गात् VIDYASAGAR's Ed. Calcutta (1874), p. 48, l. 12) पक्के NyāyBh. 101. 2 (*on* ii. 1. 36); न ज्वलत्यग्निसङ्गेऽपि निर्वीर्यं वानरेन्धनम् RājTa.(Ka.) 8. 2627; TarkSaṁ.(Ā.) 59. 6; **2** stagnation or dullness of digestive faculty, indigestion एतत् षट्पलकं नाम सर्पि: प्लीहाग्निसङ्गगुल्मोदरोदावर्त° … °विषमज्वरानपहन्ति SuśruS. iv. 14. 14; AṣṭāSaṁ. i. 175. 2 (1. 35); क्षारो गरेषूर्जित: । पानीयोऽप्युदरेषु गुल्मनिचये स्यादग्निसङ्गेष्वपि KalyāKā. 21. 16.

**अग्निसंगत** (agni–saṅgata) *adj.* coming in contact with fire स्वयं भावितात्मापि यद्यसंवृतजनसंसर्गं न त्यजति तदातिपरिचयादग्निसंगतं जलमिव विकृतिभावं गच्छति TātpaVṛ. 360. 9 (*on* 3. 68)

**अग्निसंगम** (agni–saṅgama) *m.* contact with fire क्षय: संस्क्रियमाणानां तेषां (लोहानाम्) दृष्टोऽग्निसंगमात् NāraSm. 161. 10; सुवर्णमेव नाङ्गारं द्रवत्यग्निसंगम: S'ivaP. vii(1). 31. 57 (536B. 16)

**अग्निसंग्रह** (agni–saṅgraha) *m.* ceremony of establishing the three sacred fires (i. e. *agnyādhāna*) अथाग्न्याधानमाधेयमाधानं चाग्निसंग्रह: Vaija. 88. 69.

**अग्निसंघ** (agni–saṅgha) *m.* multitude of fires विद्युत्पुञ्जोऽग्निसंघोऽपि …भासयेत् किं परेशम् S'atS'lo. 90.

**अग्निसंघात** (agni–saṅghāta) *m.* multitude of fires (symbolical or real) हृदि न्यस्याग्निसंघातं पावकं च विसर्जयेत् AgniP. 79. 36; ज्वलिताश्चाग्निसंघाता: क्षिप्रभ्रान्ताश्च विद्युत: Hastyāyur. 424. 5 (3. 8)

**अग्निसंचय** (agni–sañcaya) *m.* **1** a mass of fire आर्ये हस्तदक्षिणेन सुमहानग्निसंचय: । तत् किमेतत् MahāviC. 5. 32(1); **2** preparing the sacrificial fire-place (see *agni–cayana*) [MW.]

**अग्निसंछादित** (agni–sañchādita) *adj.* [*f.* –ā] enveloped in fire (वराहावतार:) अप: संप्राविशत् पुन: । अग्निसंछादितां भूमिं समामिच्छन् प्रजापतिम् BrahmāṇḍP. i. 5. 23.

**अग्निसंज्ञ** (agni–sañjña) *adj.* named or called Agni **i** (said of stems ending in –*i* and –*u* in Kātantra Gr.) इकार उकारश्चाग्निसंज्ञो भवति KātanVṛ. ii. 1. 8; **ii** (said of a Vetāla) ततो राजाग्निसंज्ञं वेतालमारुह्य तत्र गत: PrabaK. 80. 7.

**अग्निसंज्ञक** (agnisañjña–ka) *adj.* named or called Agni **i** (said of Agnicayana ceremony) अथातोऽग्निमग्निष्टोमेनैवानुयजति इति यागमभिनिर्वर्तयतीत्युच्यते । तमग्निमिति विशिनष्टि । तस्मादग्निसंज्ञक इति गम्यते S'ābaBh. 611. 5 (*on* ii. 3. 21); **ii** (said of an enclosure of the Sudarśana–Mahāmantra) अस्य (सुदर्शनमहामन्त्रस्य) … प्रचक्षते । … प्राकारं चाग्निसंज्ञितम् (v. l. °संज्ञकम्) LakṣmīT. 31. 33; **iii A** (said of *Citraka* or *Plumbago zeylanica*) चित्रकस्त्वग्निसंज्ञक: Vaija. 129. 82; **iii B** (said of *Bhallī* or *Semecarpus anacardium*) अग्निमुखी बहुपत्रो भल्ली सूर्याग्निसंज्ञक: NighS'e. 2023.

**अग्निसंज्ञकयाग** (agnisañjñaka–yāga) *m.* rite known as Agni (i. e. Agnicayana) एवं च विशिष्टविधिगौरवपरिहारार्थमग्निसंज्ञकयागप्राप्त्यालोचने क्रियमाणे विद्वद्वाक्यमेवानन्याक्षिप्तशक्तित्वाद् यागविधायित्वेन निश्चीयते MīmāKau. ii. 65. 21 (*on* ii. 3. 21)

**अग्निसंज्ञदेवता** (agnisañjña–devatā) *f.* a deity named Agni अग्निसंज्ञदेवताया: … इन्द्रवरुणसोमादिसमस्तदेवतास्रष्टृत्वायोगश्च S'rutaPra. ii. 185. 11 (*on* i. 4. 29)

**अग्निसंज्ञित** (agni–saṁjñita) *adj.* named or called Agni (said of the enclosure of a *mantra*) अस्य (सुदर्शनमहामन्त्रस्य) त्वङ्गविधानज्ञा: षडङ्गानि प्रचक्षते । गायत्रीमपि चक्राख्यां प्राकारं चाग्निसंज्ञितम् LakṣmīT. 31. 33; (said of a Purāṇa text) (श्लोकानाम्) षोडशैव सहस्राणि पुराणं चाग्निसंज्ञितम् DevīBhāP. i. 3. 9.

**अग्निसत्कार** (agni–satkāra) *m.* worship of fire, maintaining the sacred fire संध्यासेवाग्निसत्कारो गेहदेहार्चनो विधि: । … एवमादि विमूढानां ज्ञेयं मूढमनेकधा YaśasCam. ii. 282. 7.

**अग्निसत्क्रिया** (agni–satkriyā) *f.* worship of fire, maintaining the sacred fire ब्रह्मदण्डादियुक्तानां येषां नास्त्यग्निसत्क्रिया । श्राद्धादिसत्क्रियाभाजो न भवन्तीह ते क्वचित् GobhiSm. 3. 75.

**अग्निसत्तम** (agni–sattama) *adj.* best of the (sacred) fires तथा वै गार्हपत्योऽग्निर्जज्ञे पुत्रद्वयं शुभम् । पद्मक: शङ्खनामा च तावुभावग्निसत्तमौ SkandP. v(3). 22. 5.

**अग्निसत्ता** (agni–sattā) *f.* existence of fire एतेन सत्ता देशश्च व्याख्यात: । अग्निसत्ताया: प्रतीतत्वात् देशस्य चेति NyāyVār. 52. 16 (*on* i. 1. 5); नन्वेवमग्न्यादिष्वपि प्रसङ्ग: । तत्रापि नाग्निसत्तामात्रे कश्चिद् विवाद: PramāVāSvopVṛ.

62.25; 18.8; इहानेनाग्निसत्ता प्रतीता BrahmSi. 112.10; 112.12; न ह्यत्राग्निसत्तामात्रमुपलक्षणम् TantrVā. 760.7 (*on* iii. 1.27); विधूमपावकाद् देशादूर्ध्वं बाष्पं विलोकयन् । अग्निसत्ताभिमानेन प्रवृत्तो न विहन्यते NyāyRaMā. 94.22; MayūMāli. 784.18 (*on* x. 8.11)

**अग्निसत्यपद** (agnisatyapada) *n.* name of a holy place in Badarī in the Himalayas अग्निसत्यपदं नाम तस्मिन् क्षेत्रे (बदरीक्षेत्रे) परं मम । शृङ्गत्रयात् पतन्त्यत्र धारा मुसलसन्निभाः VarāP. 141.7.

**अग्निसदन** (agni-sadana) *n.* **1** stagnation or inertia of the digestive faculty, dyspepsia अतिस्थौल्याग्निसदनकुष्टमेहहृतौजसः AṣṭāSaṁ. i. 19.21 (1.5); i. 77.18 (1.12); ii. 38.5 (4.7); एतच्च त्रयम् ··· स्थौल्याग्निसदनश्वासकासश्लीपदपीनसान् (जयेत्) AṣṭāHṛ. i. 6.163; i. 11.7; iv. 5.23; जनयन्ति हि ··· रोमहर्षाग्निसदनम् RugVi. 7.16; RasRaSa. 2.121; नारिकेराम्बु भुक्तेः प्राग् गुल्माग्निसदनादिहृत् BhojanKu. 188.2; **2** fire-hall स प्रविश्याग्निसदनं प्रतीकारपरोऽभवत् DarpDa. 3.113.

**अग्निसदृश्** (agni-sadṛś) *adj.* fire-like (अग्निवर्णां सुराम्) अग्निसदृशौष्ण्येन ManvaVi. 1390.30 (*on* 11.90)

**अग्निसदृश** (agni-sadṛśa) *adj.* fire-like (in lustre) क्रोधेन चाग्निसदृशाः क्षमया पृथिवीसमाः MahāBhā. i. 1810*(5); ततोऽन्यमग्निसदृशं शरम्···अनुमन्त्र्य MahāBhā. viii. 66.58; तच्चाग्निसदृशं दीप्तं रावणस्य शरावरम् ।···व्यधुनोत्पतगेश्वरः Rāmā. iii. 49.12; यो योऽग्निसदृशो विवक्ष्यते तत्र तत्राग्निशब्दो नियत इति S'ābaBh. 748.10 (*on* iii. 2.1); स्वेच्छया ह्यग्निसदृशो वैकुण्ठे वसते ध्रुवम् PadmP. ii. 40.22; (पुत्रगतद्वित्वसंख्या) तथा चाग्निसदृशपुत्रगताधिकसंख्याव्यवच्छेदेन पुत्रान्तरगताग्निसादृश्यनिषेधे पर्यवस्येत् S'ivārkaMaDī. i. 256.9 (*on* i. 1.21)

**अग्निसदृशद्युति** (agnisadṛśa-dyuti) *adj.* of fire-like lustre दुर्जयस्येन्द्रवपुषः पुत्रोऽग्निसदृशद्युतिः MahāBhā. xiii. 2.12.

**अग्निसदृशप्रभ** (agnisadṛśa-prabha) *adj.* of fire-like radiance or lustre पावकस्य सुतः श्रीमान्नीलोऽग्निसदृशप्रभः Rāmā. i. 491*(7)

**अग्निसद्भाव** (agni-sadbhāva) *m.* existence of fire एवं चेद्यावद्धूममग्निसद्भावोऽवगतः S'āstrDī. 61.6 (*on* i. 1.5); NyāyRa. 363.11 (*on* 5(4).58); TattvPradī.(Ci.) 236.11; अत्राग्निसद्भावप्रतिपादनेनाग्निकार्ये विनियोगो दर्शितः CaturCin. iii(1). 1344.9; ननु यावद्धूममग्निसद्भावावगमाभावे कथं व्याप्तिनिश्चयस्तत्राह YuktiSneha. 61.28 (*on* i. 1.5); MānaMe. 29.2.

**अग्निसंतति** (agni-santati) *f.* series of fires तामग्निसंततिं मत्तामाचचामाम्बुसंततिः YogVā. iii. 48.66.

**अग्निसंतप्त** (agni-santapta) *adj.* heated on fire अग्निसंतप्तो हि स्नेहः ···त्वगादीननुप्रविश्याशु दहति SuśruS. i. 12.15; स कालसूत्रनरके ··· अधस्तादग्निसंतप्ते ··· खले ताम्रमये पात्यते SkandP. ii(1). 12.12 = iii(1). 30.19; आयुरप्यग्निसंतप्तलोहस्थजलबिन्दुवत् AdhyāRā. ii. 4.20; पिनाकं चाग्निसंतप्तं विमुञ्चति दलोच्चयम् RasPraSu. 5.9.

**अग्निसंतप्तहृदय** (agnisantapta-hṛdaya) *adj.* whose heart is ablaze with the fire (of anguish) सिन्धुस्तल्पगतश्चिन्तामवाप महतीं तदा । अग्निसंतप्तहृदयो विचारं नान्वपद्यत GaṇeP. ii. 117.1.

**अग्निसंतर्प** (agni-santarpa) *m.* feeding the fire कीर्तयस्वाग्निसंमर्दे( v. l. °संतर्पे) कथं ते न विनाशिताः MahāBhā. i. 220.3.

**अग्निसंतर्पण** (agni-santarpaṇa) *n.* propitiation (i. e. feeding) of fire जपध्याने तपोयज्ञे अग्निसंतर्पणेन च । स्थितं यदेकदेशे तु दीपालोके( ? कं) द्विजोत्तम PauṣkS. 36.299.

**अग्निसंतान** (agni-santāna) *n.* continuity of fire अग्निसंतानव्यावृत्तौ ···घटादेर्नीरूपत्वप्रसङ्गः Kiraṇā. 184.14.

**अग्निसंताप** (agni-santāpa) *m.* **i** (application of) the heat of fire, fomentation द्विव्रणीयोक्तेन च विधानेनोपचरेत् । ··· व्यवायमग्निसंतापं वाक्श्रमं च विवर्जयेत् SuśruS. i. 16.16; मृद्वी शय्याग्निसंतापो ब्रह्मचर्यं तथैव च । समासेनैवमादीनि योज्यान्यनिलरोगिषु SuśruS. iv. 4.26; अग्निसंतापमतीसारी विवर्जयेत् SiddhYo. 3.74; **ii** affliction caused by fire, fire-burn कर्कोटकः ··· विषशस्त्राग्निसंतापं हत्वा शान्तिं करोतु ते BhaviP. 265A. 6 (i. 179.35)

**अग्निसंतापन** (agni-santāpana) *n.* heating on fire तेषाम् ··· तप्तोद्धृतनाराचानामिवाग्निसंतापनप्रयुक्तारुणिमानुवृत्तिं परिकल्प्य Kuval. 90(64)

**अग्निसंतापना** (agni-santāpanā) *f.* heating in fire अग्निसंतापनया तदेव काण्डं ऋजु भवति MaYānaSū. 63.14 (11.33)

**अग्निसंतोषणमन्त्र** (agnisantoṣaṇa-mantra) *m.* the *mantra* meant for gratifying fire स्वार्थं चैव परार्थं च साधितुं गच्छ हव्यभुक् । ··· अग्निसंतोषणमन्त्रः HevajraT. ii. 1.13.

**अग्निसंत्यागिन्** (agnisantyāg-in) *adj.* who discards the sacred fire वेदोज्झोऽथाग्निसन्त्यागी···वर्ज्याः पित्र्येषु वै द्विजाः MārkP. 31.29.

**अग्निसंत्रस्त** (agni-santrasta) *adj.* alarmed by fire पादमूलेऽग्निसंत्रस्तः प्रविष्टः शशकस्तदा BṛKathāK. 139.128.

**अग्निसंदीपन** (agni-sandīpana) *adj.* stomachic, promoting digestion अग्निसंदीपनं हृद्यं लवणार्द्रकभक्षणम् SiddhYo. 6.9; 18.15; 25.22; 25.42; BhāvPra.(Bhā.) 5.130; काञ्जिके संस्थितं बिल्वमग्निसन्दीपनं परम् BhojanKu. 98.16; 216.2.

**अग्निसंदीप्त** (agni-sandīpta) *adj.* tormented with hunger समृद्धे चाग्निसंदीप्तं प्रतिवाहोऽनुकारयेत् (गजम्) Hastyāyur. 557.14 (4.2)

**अग्निसंदेह** (agni-sandeha) *m.* doubt about (the existence of) fire अस्ति चात्राग्निसंदेहः साधकबाधकप्रमाणाभावेन संशयस्य न्यायप्राप्तत्वात् TarkBhā. (Ke.) 39.2.

**अग्निसंधुक्षण** (agni-sandhukṣaṇa) *adj.* **1** kindling the fire (सूतिकागारे) सन्निहिताः स्युः ··· तैन्दुकैङ्गुदानि च काष्ठान्यग्निसन्धुक्षणानि CaraS. iv. 8.34 (1941 Ed.); **2** kindling the digestive fire (appetite) यथाग्न्यभ्यवहारोऽग्निसन्धुक्षणानाम् (द्रव्याणाम्) (श्रेष्ठः) CaraS. i. 25.40 (1941 Ed.) = AṣṭāSaṁ. i. 82.10 (1.13); CaraS. vi. 3.218 (1941 Ed.); AṣṭāSaṁ. i. 69.21 (1.11)

**अग्निसंधुक्षण** (agni-sandhukṣaṇa) *n.* **1** kindling of digestive fire (appetite) द्रव्याणि ··· लघून्यग्निसंधुक्षणस्वभावान्यल्पदोषाणि चोच्यन्ते CaraS. i. 5.6 (1941 Ed.); पाययेद्दोषशेषपाचनार्थमौषधमग्निसंधुक्षणार्थं च CaraS. iii. 2.13 (1941 Ed.); i. 5.4 (1941 Ed.); (कासीसभस्म) अग्निसंधुक्षणं कुर्याद्वलीपलितनाशनम् RasPraSu. 6.69; **2** enkindling of fire अग्निसंधुक्षणस्य मारुतकार्यत्वेन प्रसिद्धेः VyaktiVi. 79.25.

**अग्निसंधुक्षणार्थ** (agnisandhukṣaṇārtha) *adj.* having the purpose of kindling the fire तूष्णीं होमोऽग्निसन्धुक्षणार्थः क्रियते ṬupṬ. 73.14 (*on* v. 3.21)

**अग्निसंधुक्षणार्थम्** (agnisandhukṣaṇārtham) *adv.* for (the purpose of) increasing the digestive faculty अग्निसंधुक्षणार्थं सर्पिः पाययेत् AṣṭāSaṁ. ii. 73.4 (4.12)

**अग्निसंनिकर्ष** (agni-sannikarṣa) *m.* contact with fire संस्कारस्तु तोयाग्निसन्निकर्षशौचमन्थनदेशकालभावनाभाजनादिभिरुपजन्यते AṣṭāSaṁ. i. 64.14 (1.10)

**अग्निसंनिधान** (agni-sannidhāna) *n.* **i** presence of fire (as witness) धर्मविवाहेष्वग्निसंनिधानं कार्यम् JayaMa. 228.25 (*on* 3.5); **ii** keeping the sacred fire अग्निसंनिधानं चात्र जातारणिपरिग्रहः VīraMi.(Saṁskāra.) 301.4.

**अग्निसंनिधि** (agni-sannidhi) *m.* **A** proximity or presence of the (nuptial) fire पाणिप्रदानकाले च यत्पुरा त्वग्निसंनिधौ । अनुशिष्टा जनन्यासि वाक्यं तदपि मे धृतम् Rāmā. ii. 110.8; अहं तातेन दत्तास्य विवाहे अग्निसंनिधौ SkandP. vi. 158.56; BhaviP. 455B. 34 (iii(2). 28.24); अग्नावधिकृत्येति । अग्निसन्निधावित्यर्थः Subodhi. 76.30 (*on* 2.143); विवाहकालेऽग्निसंनिधौ यत्पित्रादिदत्तं तदध्यग्नि स्त्रीधनम् ManvaMu. 400.31 (*on* 9.194); VīraMi. 620.18 (*on* 2.143); BālamBha. ii. 252.8 (*on* 2.143); **B** vicinity of the sacred fire (विप्रः) स्नानेन शुध्यति···तोयेन तापितेनाग्निसंनिधौ AṅgiSm. 153; BṛYamaSm. 3.69; क्रमादाहृत्य तत्तोयं प्रयायादग्निसंनिधिम् PauṣkS. 27.358; अर्चनेन पुटीकृत्य पावनं च पवित्रकम् । ··· देशिकस्य हृदारोप्य पूजितस्य च देववत् । ··· साशिषं हि सदारभ्य संस्थितस्याग्निसंनियौ( ? धौ) PauṣkS. 30.156; ParāSm. 11.33; LaghvāśvaSm. 9.18; सर्वमन्नमुपादायाग्निसंनिधौ पिण्डान्दद्यात् Mitā. 83.16 (*on* 1.242); CaturCin. iii(1). 862.3; MahNirvāT. 9.180; **C** vicinity of fire अग्निसंनिधौ···न···योगं युञ्जीत BrahmP. 234.8.

**अग्निसंनिभ** (agni-sannibha) *adj.* resembling fire निगृह्यतां वपुरिदमग्निसंनिभम् MahāBhā. i. 301*(3); iii. 166*(7); iii. 41.10; vii. 85.6; सर्वः क्षारोऽग्निसंनिभः CaraS. i. 27.306 (1941 Ed.); सुराम्बुघृतगोमूत्रपयसामग्निसंनिभम् । सुरापोऽन्यतमं पीत्वा मरणाच्छुद्धिमृच्छति YājñaSm. 3.253; युक्तेनाष्टाभिरश्वैश्च सध्वजैरग्निसंनिभैः । रथेन क्षिप्रवेगेण भार्गवस्तेन गच्छति MatsyaP. 127.7; SkandP. iii(1). 52.136; GaṇeP. ii. 35.2; BālaKrī. 113.10 (*on* 3.247 (253)); पानकं चाग्निसंनिभम् ।···इत्याद्या नरकाः स्मृताः VṛHārīSm. 9.169; VṛGautaSm. 553.16(7); 604.12(15); सुरादीनां मध्येऽन्यतममग्निसंनिभं क्वाथापादिताग्निस्पर्शदाहशक्तिकं कृत्वा Mitā. 430.25 (*on* 3.253); बंधूकबिंबक्षतजशुकतुंडाग्निसंनिभाः । हुताशनप्रदास्तेऽपि केतवश्चाग्निसूनवः NāraS. 2(9).9; Aparā. 1069.8 (*on* 3.253); DīpKa. 97.32 (*on* 3.255); ManvaMu. 310.4 (*on* 8.114)

**अग्निसंनिहित** (agni-sannihita) *adj.* having the proximity of the sacred fire यजमानस्याग्निसंनिहितपत्नीव्यतिरेकेण प्रवासवत् पत्न्याः अग्निसहितयजमानव्यतिरेकेण प्रवासो भवति वा न वेति चिन्त्यते BālamBha. i. 264.26 (*on* i. 89)

**अग्निसपर्या** (agni-saparyā) *f.* worship of the sacred fire विहायाग्निसपर्याम्···प्रयान्ति वैष्णवं लोकं कृत्वा वैशाखसत्क्रियाः SkandP. ii(7). 12.11.

**अग्निसप्रभ** (agni-saprabha) *adj.* having fire-like lustre प्रासाद: … रत्नै: … संविभूषित: … अग्निसप्रभै: BrahmāṇḍP. iii. 2.245; SkandP. v(2). 27.35.

**अग्निसम** (agni-sama) *adj.* [DEBRU. p. 542] **i** like fire, similar to fire तं दृष्टं पन्नगेन्द्रेण तेनाग्निसमतेजसा ··राजानम्···गच्छामि···सद्य: कर्तुमपज्वरम् MahāBhā. i. 38.37; i. 601*(1); i. 167.9; vii. 98.13; vii. 166.9; x. 15.1; HariVaṁ. 2.43; तस्मादग्निसमा ह्येते बहवो विकृताश्रय: BrahmāṇḍP. i. 27.87; i. 37.39; ii. 1.95; ii. 71.153; दक्षो नाम प्रजापति: । स इमां दग्धभूयिष्ठां युष्मत्तेजोमयेन वै । अग्निनाग्निसमो भूय: प्रजा: संवर्धयिष्यति VāyuP. ii. 2.36; क्रतुनाचितमप्येवं जातमग्निसमं जगत् PadmP.(Ra.) 30.7; ManuBh. ii. 225.5 (*on* 8.372); चक्रिणा रोषमीयुषा । सूपकारो हतोऽनेन मस्तकेऽग्निसमेन स: BṛKathāK. 109.31; तप्तमग्निसमं द्रवत् ··· । कुम्भीपाकं प्रकीर्तितम् BrahmVaiP. i. 10.55; SkandP. iii(3). 1.43; LiṅgaP. i. 32.11; BrahmP. 2.44; साधक:···अग्निसमो भूत्वा क्रीडति MāliniT. 13.23; भृगुरग्निसम: AnuVyā. 53B.2 (*on* 3.3); **ii** having the qualities of *Plumbago zeylanica* भल्लातकानि···पाकीन्यग्निसमानि च CaraS. vi. 1(2).17 (1941 Ed.); SuśruS. vi. 47.9; भल्लातकस्य त्वङ्मांसं बृंहणं स्वादु शीतलम् । तदस्थ्यग्निसमं मेध्यं कफवातहरं परम् AṣṭāSaṁ. i. 40.19 (1.7) = AṣṭāHṛ. i. 6.132.

**अग्निसमकल्प** (agnisama-kalpa) *adj.* similar to fire [DEBRU. p. 542]

**अग्निसमक्षम्** (agni-samakṣam) *adv.* in the presence of the holy fire कुलवधूनां ह्ययमन्यश्च देवद्विजाग्निसमक्षं मातापितृविक्रीतस्य कायस्यैव भवतीश्वर: न मनस: YaśasCam. ii. 141.8.

**अग्निसमद्युति** (agnisama-dyuti) *adj.* **A** possessing fire-like lustre, bright like fire तथैव धृष्टद्युम्नोऽपि साक्षादग्निसमद्युति: । वैताने कर्मणि तते पावकात्समजायत MahāBhā. i. 57.91; **B** burning like fire, causing burning sensation like fire (said of a disease) स्कन्दापस्मारसंज्ञो य: सोऽग्निनाग्निसमद्युति: । स च स्कन्दसखा नाम विशाख इति चोच्यते SuśruS. vi. 37.7.

**अग्निसमन्वित** (agni-samanvita) *adj.* accompanied by the god of fire ततो ब्रह्मा च सोमश्च शक्रश्चाग्निसमन्वित: । स्तुवन्ति नाथं भूतानां सर्वलोकमहेश्वरम् VarāP. 124.15.

**अग्निसमप्रख्य** (agnisama-prakhya) *adj.* bright like fire, possessing fire-like lustre पद्मं तत्र विभावयेत् । तदूर्ध्वेऽग्निसमप्रख्यं षड्दलं हीरकप्रभम् । कादिचान्तषड्वर्णेन युक्ताधिष्ठानसंज्ञकम् । मूलमाधाय षट्कोणं मूलाधारं ततो विदु: PañcaRā.(Nā.) v. 10.12.

**अग्निसमप्रभ** (agnisama-prabha) *adj.* resplendent like fire श्रीमानृषभो नाम पर्वत: ··· चन्दनम् । दिव्यमुत्पद्यते यत्र तच्चैवाग्निसमप्रभम् Rāmā. iv. 40.39; (हरस्य) मूर्ध्नोऽस्यासृग्नथापतत् । पूर्वधारासमुद्भूतो भैरवोऽग्निसमप्रभ: । विद्याराजेति विख्यात: VāmaP. 70.32; जलात्समुत्तस्थु: प्रभयाग्निसमप्रभा: । पुरुषा दश VarāP. 73.4; केनाब्य(? प्य)पक्वतं तत्र तापसेऽग्निसमप्रभे DevīBhāP. vii. 2.62.

**अग्निसमर्चन** (agni-samarcana) *n.* worship of Agni व्रतसंपूर्तये कुर्यात् स्थण्डिलेऽग्निसमर्चनम् SkandP. iv. 80.53; प्राच्ये चाग्निसमर्चनादिकमुदीचीने कुटुम्बादिकं व्यत्यस्य प्रकरोतु वा द्वयमिदम् SilpaRa. ii. 31.67.

**अग्निसमर्चित** (agni-samarcita) *adj.* honoured (i.e. occupied) by Agni कालाग्निरुद्रलोकस्तु कथ्यतेऽग्निसमर्चित: । ··· तस्मात्समुत्थितो वह्नि: जगत्प्राप्ते दिनक्षये । भस्मसात्कुरुते सर्वम् ViṣṇuDhaP. i. 4.10.

**अग्निसमर्पित** (agni-samarpita) *adj.* [*f.* -ā] given back by god Agni मरुद्गणानां सर्वेषां पूर्वेषां च रघूद्वह: । प्रामाण्यात् परिजग्राह प्रियामग्निसमर्पिताम् RāmC. App. I. 40.66.

**अग्निसमवर्चस्** (agnisama-varcas) *adj.* possessing lustre like that of fire, equal in radiance to fire देवराजप्रतीकाशं सूर्याग्निसमवर्चसम् । रोमपादो महाप्राज्ञ: पालकाप्यं स्म पृच्छति Hastyāyur. 266.15 (2.50)

**अग्निसमवायिन्** (agnisamavāy-in) *adj.* inherent in fire आधानजन्यं फलमग्निसमवायि PrakaPañ. 442.6.

**अग्निसमवेत** (agni-samaveta) *adj.* inherent in fire कार्यभूतेन पाकेन तत्कारणभूतेन वा देवदत्तेन सह ज्वलनस्याग्निसमवेतस्यैकार्थसमवायाभावात् NyāyRa. 863.18 (*on* 7.61)

**अग्निसमवेतत्व** (agnisamaveta-tva) *n.* the state of being inherent in fire आधानफलस्याहवनीयत्वादेरग्निसमवेतत्वेन कर्तृसमवायाभावात् SāstrDī. 9.16 (*on* i. 1.1); TristhaSe. 318.4.

**अग्निसमस्पर्श** (agnisama-sparśa) *adj.* having touch like that of fire क्षत्रं चाग्निसमस्पर्शं भारद्वाजेन रक्षितम् MahāBhā. iii. 42.19; शरैरग्निसमस्पर्शै: MahāBhā. vii. 288*.

**अग्निसमाकुल** (agni-samākula) *adj.* [*f.* -ā] greatly distressed by fire कौरव्यसीदत्पृतना मृगीवाग्निसमाकुला MahāBhā. ix. 10.9.

**अग्निसमागम** (agni-samāgama) *m.* encounter with fire तापश्च(? त्य)जनचित्तस्य सोऽयमग्निसमागम: PadmP.(Ra.) 2.238.

**अग्निसमाधान** (agni-samādhāna) *n.* setting up of the (domestic) fire दर्शे वा पौर्णमासे वाग्निसमाधानं कुर्वीत GobhiGS. i. 1.14; **2** setting the digestive faculty in order विशुद्धामाशयस्य च । यत्नेनाग्निसमाधाने प्रयतेत विचक्षण: KāśyaS. 337A.40; *adj.* who maintains the (domestic) fire अग्निहोत्रपरा: केऽपि केऽपि यज्ञपरायणा: । केऽपि चाग्निसमाधाना: (वाडवा:) SkandP. iii(2). 40.3.

**अग्निसमाधि** (agni-samādhi) *m.* keeping the digestive faculty in order गुल्मस्य रौधिरस्य क्रियाक्रम: ··· । पथ्यान्नपानसेवा हेतूनां वर्जनं यथास्वं च । नित्यं चाग्निसमाधि: CaraS. vi. 5.188 (1941 Ed.)

**अग्निसमान** (agni-samāna) *adj.* resembling fire (in lustre) चन्द्रार्काग्निसमानकुण्डलधरी···मातान्नपूर्णेश्वरी AnnaA. 9; *m.* name of one of the leaders of the classes of inferior deities अथ विंशतिसंख्यास्तु गणकोटीश्वरा: पृथक् । ··· अग्निरग्निसमानश्च ज्वालामाली च विश्वभुक् ।··· इत्याग्नेय्यां कोटिनायका: ĪśānŚiPa. ii. 49.136; ii. 54.91; TantrSa.9.161.

**अग्निसमानतेजस्** (agnisamāna-tejas) *adj.* having the lustre or splendour like that of fire पुरोहितेनाग्निसमानवर्चसा (v. l. °तेजसा) सहैव धौम्येन यथाविधि प्रभो । क्रमेण सर्वे विविशुश्च तत्सद: MahāBhā. i. 190.10.

**अग्निसमानवर्ण** (agnisamāna-varṇa) *adj.* having the colour similar to that of fire तैर्वमैभिश्चाग्निसमानवर्णै: । बभूव रूपं रुधिराशनानां सूर्योदये रक्त इवाभ्रराशि: Rāmā. iii. 408*(2)

**अग्निसमारोपण** (agni-samāropaṇa) *n.* depositing the sacred fires (in the fuel-sticks) दीक्षितस्य सत: प्रयास्यतोऽग्निसमारोपणं न वेति चिन्त्यते SaṅkarKāBh. 148.5 (*on* iii. 2.60); (in one's own person) अग्निसमारोपणविधानोपदेशश्च प्रत्यक्षश्रुत: कथमपह्नूयेत 'आत्मन्यग्नीन्समारोप्य ब्राह्मण: प्रव्रजेद् गृहादि 'ति NyāyMañ. ii. 85.10; सर्वस्वदानमग्निसमारोपणं प्रव्रज्या च तत्रैव विहिता ManuBh. i. 510.7 (*on* 6.38); i. 532.8 (*on* 6.94); कृत्वेत्यनेन ··· नेष्टिकरणाग्निसमारोपणयो: पूर्वापरभावो बोधित: VīraMi. 833.19 (*on* 3.56)

**अग्निसमाश्रय** (agni-samāśraya) *m.* resorting to the (sacred) fire न कर्मणा भवेन्मुक्तिर्नापि चाग्निसमाश्रयात् । ज्ञानादेव तु कैवल्यम् BṛĀraUBhVā. i. 4.1669.

**अग्निसमिद्धत्वरूप** (agnisamiddhatva-rūpa) *adj.* consisting of the kindled state of the (sacred) fire लिङ्गादग्निसमिद्धत्वरूपसामिधेनीफलप्रकाशकानामपि···सामिधेन्यङ्गत्वोपपत्ते: BhāṭṭDī. i. 201.4 (*on* iii. 1.11)

**अग्निसमिन्धन** (agni-samindhana) *n.* enkindling of the (sacred) fire निवित्पदानि तावत् ··· अग्निसमिन्धने विनियुज्यन्ते TantrVā. 751.16 (*on* iii. 1.21); सामिधेनीत्वमप्यासां न स्यादग्निसमिन्धनात् TantrVā. 753.9 (*on* iii. 1.21); अग्निसमिन्धनस्य मेदेनैव विवक्षितत्वात् SaṅkarKāBh. 104.5 (*on* ii. 4.4); अत्र समित्स्वेति ब्राह्मणकर्तृकानुज्ञाश्रवणादग्निसमिन्धनं करवाणीत्यादिप्रार्थनावाक्यं द्रष्टव्यम् CaturCin. iii(1). 1296.4; व्रतै:···सायंप्रातरग्निसमिन्धनादिभि: ManvaVi. 121.30 (*on* 2.28); अग्निसमिन्धनमासामृचां कार्यम् NyāyMāVi. 582.10 (*on* x. 6.19); अग्निसमिन्धनस्यापि अपूर्वसाधनत्वोपहितत्वेन भाव्यत्वात् MīmāKau. ii. 198.16 (*on* iii. 1.21); ii. 199.19 (*on* iii. 1.21); यथा प्रकृतौ···अग्निसमिन्धनमावर्तते MayūMāli. 752.20 (*on* x. 6.19); दर्विहोमेभ्य: पूर्वमग्निसमिन्धनस्यावश्यकत्वेऽपि न तत्र समित्प्रक्षेपनियम: BhāṭṭCan. 62.2 (*on* xiv. 4.8); 108.6 (*on* xvi. 2.4)

**अग्निसमिन्धनप्रकाशक** (agnisamindhana-prakāśaka) *adj.* [*f.*-ikā] indicative of the enkindling of the (sacred) fire अग्निसमिन्धनप्रकाशिकाश्चर्च: सामिधेन्य उच्यन्ते SāstrDī. 723.7 (*on* x. 5.8); अग्निसमिन्धनप्रकाश(? शि)कानामृचां प्राधान्येनातिदेशायोग: MīmāKau. ii. 202.1 (*on* iii. 1.21); ii. 203.20 (*on* iii. 1.21)

**अग्निसमिन्धनप्रकाशकत्व** (agnisamindhanaprakāśaka-tva) *n.* the quality of indicating the enkindling of the (sacred) fire तासां तु लिङ्गेन सामिधेनीवदेवाग्निसमिन्धनप्रकाशकत्वावगते: MīmāKau. ii. 200.7 (*on* iii. 1.21)

**अग्निसमिन्धनप्रकाशत्व** (agnisamindhanaprakāśa-tva) *n.* the character of indicating the enkindling of the (sacred) fire यथा सामिधेनीप्रकरणमध्यवर्तिनां निर्वि(? वि)त्पदानामग्निसमिन्धनप्रकाशत्वेन सामिधेनीभि: सहैककार्याणां न सामिधेन्यङ्गत्वम् Mitā. 424.5 (*on* 3.244)

**अग्निसमिन्धनप्रकाशन** (agnisamindhana-prakāśana) *n.* the indication of the enkindling of the (sacred) fire अथवाग्निसमिन्धनप्रकाशनद्वारेण दृष्टसंस्कारार्थत्वान्न तासां प्रकरणम् TantrVā. 749.21 (*on* iii. 1.21); 750.14 (*on* iii. 1.21); 753.14 (*on* iii. 1.21)

**अग्निसमिन्धनरूप** (agnisamindhana-rūpa) *adj.* of the nature of

the rite of Agnihotra etc. क्रियावानिति अग्निहोत्रादिक्रियावान् HārLa. 8. 17.

**अग्निहोत्रादिगृहस्थकर्मन्** ( agnihotrādi-gṛhasthakarman ) *n.* rite of Agnihotra etc. to be performed by a householder एवमुक्तप्रकारेण वर्तमानोऽग्निहोत्रादिगृहस्थकर्माणि परित्यज्य ··· परमां गतिं मोक्षलक्षणां प्राप्नोति ManvaMu. 246. 30 (*on* 6. 96)

**अग्निहोत्रादिगृहस्थधर्म** ( agnihotrādi-gṛhasthadharma ) *m.* duty of a householder such as Agnihotra etc. न ब्रह्मचर्यस्मृतेरग्निहोत्रादिगृहस्थधर्मविधायकश्रुतिविरोधो वाच्यः Aparā. 72. 20 (*on* 1. 50)

**अग्निहोत्रादिगोचरबोध** ( agnihotrādigocara-bodha ) *m.* knowledge in respect of Agnihotra etc. तर्ह्यग्निहोत्रादिगोचरबोधोऽप्यप्रतिपन्नः कथं काम्येत VivaPraSam. 177. 9.

**अग्निहोत्रादिचोदना** ( agnihotrādi-codanā ) *f.* injunction for Agnihotra etc. तत्सामान्यादग्निहोत्रादिचोदनास्वप्यनाश्वासः S'ābaBh. 41. 6 (*on* i. 1. 5) = NyāyRa. 497. 17 (*on* 5(9). 14); अग्निहोत्रादिचोदनाभिरेव ··· प्रापितत्वात् ··· निमित्तार्थं श्रूयत इति TantrVā. 596. 6 (*on* ii. 3. 4); अनाश्वासोऽग्निहोत्रादिचोदनास्वपि जायते NyāyMañ. i. 249. 11; अग्निहोत्रादिचोदनाभ्योऽसन्दिग्धज्ञानोत्पत्तेः स्वतःप्रामाण्यं प्राप्तम् S'āstrDī. 19. 2 (*on* i. 1. 2); न तावदग्निहोत्रादिचोदना पुरुषप्रवर्तनात्मिकाननुष्ठानस्य प्रत्यवायहेतुतामाक्षिपति Mitā. 405. 4 (*on* 3. 219); YuktiSneha. 88. 26 (*on* i. 1. 5); अग्निहोत्रादिचोदनादिभ्यो जायमानस्य ज्ञानस्य ··· उपपन्नं प्रामाण्यम् MayūMāli. 2. 28 (*on* i. 2. 1)

**अग्निहोत्रादिचोदनाक्षेप** (agnihotrādicodanākṣepa) *m.* objection against the injunction for Agnihotra etc. तदेवमैहिकफलासु चित्राचोदनास्वाक्षिप्तासु तत्सामान्यात् ··· पुनरप्यग्निहोत्रादिचोदनाक्षेपेऽवतिष्ठते Kās'i. iii. 214. 16 (*on* 5(9). 1)

**अग्निहोत्रादिजन्य** ( agnihotrādi-janya ) *adj.* arising from the performance of Agnihotra etc. अग्निहोत्रादिजन्योऽपि धर्मो विभक्तानां वर्धते SmṛtiCan. iv. 607. 3.

**अग्निहोत्रादिज्ञान** ( agnihotrādi-jñāna ) *n.* knowledge of the Agnihotra ritual and others अग्निहोत्रादिज्ञानान्यभ्युदयाद्युपयोगीनि S'ivārkaMaDī. i. 145. 18 (*on* i. 1. 3)

**अग्निहोत्रादिदेवता** ( agnihotrādi-devatā ) *f.* deity of Agnihotra etc. एतावन्तं हि कालमसावग्निहोत्रादिदेवताभ्यो भागमदत्त्वा ता अनुध्यायिनीः करोति TantrVā. 636. 4 (*on* ii. 4. 4)

**अग्निहोत्रादिधर्म** ( agnihotrādi-dharma ) *m.* **i** meritorious deeds like Agnihotra etc. न त्वग्निहोत्रादिधर्मव्यवस्थायै वर्णाश्रमिणां राजा प्रभवति ManuBh. ii. 4. 20 (*on* 7. 13); चोदना च तस्य लक्षणमेवेति श्रुत्या प्रमाणविधावर्थाचोदनागम्य एवाग्निहोत्रादिधर्मः S'āstrDī. 15. 17 (*on* i. 1. 2); अग्निहोत्रादिधर्माणामेव मोक्षसाधनत्वम् VivaPraSam. 214. 9; नास्य (शूद्रस्य) अग्निहोत्रादिधर्मेऽधिकारोऽस्ति ManvaMu. 449. 16 (*on* 10. 126); अग्निहोत्रादिधर्मविषयत्वेन सावकाशायाः श्रुतेः S'ivārkaMaDī. ii. 2. 21 (*on* ii. 1. 1); VīraMi.(Rājanīti.) 23. 25; **ii** subsidiary to Agnihotra rite etc. यथा विधिशेषाणामग्निहोत्रादिधर्माणाम्, तदेव एकमग्निहोत्रादिकर्म सर्वत्रेति ··· उपसंहरणम् BrahmSūBh.(S'aṅ.) 624. 1 (*on* iii. 3. 5); विधिशेषशब्दश्चाग्निहोत्रादिधर्मपरत्वेन व्याख्यातः S'rutaPra. ii. 463. 11 (*on* iii. 3. 5); AṇuBh. 215. 4 (*on* iii. 3. 5); GoviBh. 223. 14 (*on* iii. 3. 6); **iii** religious merit accrued through the performance of Agnihotra and other rites तेनाग्निहोत्रादिधर्मो विभागपक्षोत्कृष्टत्वे हेतुतया वक्तव्यः SmṛtiCan. iv. 607. 5.

**अग्निहोत्रादिन्याय** ( agnihotrādi-nyāya ) *m.* rule established by the injunctions teaching Agnihotra etc. i. e. the rule that a sacrifice taught as obligatory by a certain injunction may be taken as optional provided there is a separate Vedic passage to support it नित्यस्यापि वचनबलात्काम्यत्वं त्वग्निहोत्रादिन्यायेन न विरुद्धम् LalitāsaBh. 220. 24 (*on* 288)

**अग्निहोत्रादिपरित्याग** ( agnihotrādi-parityāga ) *m.* abandonment of Agnihotra and other rituals एतच्चैषां मोक्षोपायान्तरङ्गोपायत्वप्रदर्शनार्थं न त्वग्निहोत्रादिपरित्यागपरत्वमुक्तम् ManvaMu. 519. 5 (*on* 12. 92)

**अग्निहोत्रादिपरिलोप** ( agnihotrādi-parilopa ) *m.* non-observance of Agnihotra etc. यथा ब्रह्मचारिणो विधुरस्य वा वनं प्रस्थितस्याग्निहोत्रादिपरिलोपः Mitā. 361. 4 (*on* 3. 45)

**अग्निहोत्रादिपुण्य** ( agnihotrādi-puṇya ) *n.* merit accrued through (the performance of) Agnihotra etc. अमुत्र अग्निहोत्रादिपुण्यजितो लोकः ··· क्षीयते ChāndoUBh. 480. 7 (*on* viii. 1. 6)

**अग्निहोत्रादिप्रकरण** ( agnihotrādi-prakaraṇa ) *n.* the context or section on Agnihotra etc. वैदिककर्मत्वसाम्यादग्निहोत्रादिप्रकरणनिवेशः VedāntKa. 75. 1 (*on* i. 1. 4)

**अग्निहोत्रादिप्रसक्ति** ( agnihotrādi-prasakti ) *f.* occasion for or chance of Agnihotra etc. यत्राग्निहोत्रादिप्रसक्तिः तत्र निषेधः MayūMāli. 500. 5 (*on* vi. 5. 11)

**अग्निहोत्रादिफल** ( agnihotrādi-phala ) *n.* result of Agnihotra etc. दर्शयति अग्निहोत्रादिफलविधय इति TantrVā. 597. 6 (*on* ii. 3. 4); VedāntKa. 346. 11 (*on* iii. 1. 5); अग्निहोत्रादिफलेऽपि जन्मान्तरवासनोद्भवात् MayūMāli. 448. 6 (*on* vi. 1. 2)

**अग्निहोत्रादिराहित्य** ( agnihotrādi-rāhitya ) *n.* the state of being without Agnihotra etc. नापि गार्हस्थ्यम् । दाराग्निहोत्रादिराहित्यात् S'ivārkaMaDī. ii. 413. 15 (*on* iii. 4. 48)

**अग्निहोत्रादिलय** ( agnihotrādi-laya ) *m.* disappearance of Agnihotra etc. तत्सुकृतदुष्कृते विधुनुत इत्यविशेषश्रवणादग्निहोत्रादिलयः VedāntKa. 528. 12 (*on* iv. 1. 16)

**अग्निहोत्रादिवाक्य** ( agnihotrādi-vākya ) *n.* (Vedic) statement (enjoining) Agnihotra etc. अग्निहोत्रादिवाक्यानां वा प्रमाणत्वप्रतिषेधो वैदिकत्वेन तदन्यवाक्यवत् NyāyVār. 267. 12 (*on* ii. 1. 56); एवं सत्यग्निहोत्रादिवाक्येष्वपि मृषार्थता S'lokaVār. 5(9). 15 (497. 5) ( Umbeka अग्निहोत्रादिवाक्यं धर्मि मृषात्वं साध्यो धर्मः ); TantrVā. 3. 10 (*on* i. 2. 1); 424. 22 (*on* ii. 1. 46); TātpaṬ.(Vā.) 30. 19 (*on* i. 1. 1); Kās'i. iii. 120. 22 (*on* 5(5). 49); NyāyRa. 419. 13 (*on* 5(5). 49); निर्मूलोऽग्निहोत्रादिवाक्यार्थप्रत्ययः S'āstrDī. 19. 7 (*on* i. 1. 2); 181. 4 (*on* ii. 4. 2); न चापरोक्षत्वमग्निहोत्रादिवाक्यजन्यज्ञानवृत्ति TattvPradī.(Ci.) 345. 7; S'atDū. 67. 8; NyāyMāVi. 85. 4 (*on* ii. 2. 5); वाक्यत्वात् अग्निहोत्रादिवाक्यवदित्याद्यनुमानैश्च विरोधात् Nyāyāmṛ. 537B. 10 (*on* 2. 13); 106B. 8 (*on* 1. 11; YuktiSneha. 117. 33 (*on* i. 1. 5); AdvaiSi. 678. 13; अग्निहोत्रादिवाक्यार्थविचारं चिकीर्षताम् S'ivārkaMaDī. i. 16. 30 (*on* i. 1. 1); अग्निहोत्रादिवाक्याध्ययनेन न्यायलभ्यतत्तदर्थविशेषज्ञानमेव भावयितुं शक्यम् S'ivārkaMaDī. i. 48. 24 (*on* i. 1. 1); अग्निहोत्रादिवाक्यशेषत्वमभ्युपगम्य ··· वृत्तिराश्रयणीया PūrvottaVāNaMā. 324. 15; SiddhāLeSam. 320. 4.

**अग्निहोत्रादिविधि** ( agnihotrādi-vidhi ) *m.* injunction about Agnihotra etc. अग्निहोत्रादिविध्यर्थज्ञानोत्तरकालमग्निहोत्रादिकर्म ··· अनुष्ठेयम् GītāBh. (S'aṅ.) 36. 6 (*on* 2. 21); अग्निहोत्रादिविधिजनिताग्निहोत्रादिकर्तव्यताबुद्धीनामतथार्थत्वम् ··· न शक्यते वक्तुम् ChāndoUBh. 411. 12 (*on* 6. 16); ManuBh. i 530. 5 (*on* 6. 89); कृतदाराणामेवाग्निहोत्रादिविधयः BālaKrī. i. 57. 13 (*on* 1. 50); i. 59. 12 (*on* 1. 50); TantrVā. 180. 12 (*on* i. 3. 11); TātpaṬ.(U.) 6. 2 (*on* 1. 11); S'āstrDī. 6. 18 (*on* i. 1. 1); NyāyRa. 725. 10 (*on* 5(17). 140); अध्ययनविधिरधिकारपर्यवसायी विधित्वादग्निहोत्रादिविधिवत् NyāyRaMā. 13. 4; विद्यैक्ये सति गुणोपसंहारः कर्तव्यः ··· अग्निहोत्रादिविधिशेषवत् VedāntPāSau. 301. 16 (*on* iii. 3. 5); VedāntKau. 301. 20 (*on* iii. 3. 5); SarvaDaKau. 131. 6; VidhiRa. 23 (124. 22); BhāṭṭDī. ii. 298. 23 (*on* vi. 5. 12); iv. 110. 1 (*on* x. 8. 7); न चाग्निहोत्रादिविधीनामसंनिहितत्वेन पर्युदासासंभवात्प्रतिषेधाभ्युपगम इति वाच्यं न ह्यस्याग्निहोत्रादिविधिभिः पदैकवाक्यता MayūMāli. 778. 20 (*on* x. 8. 7)

**अग्निहोत्रादिविषय** ( agnihotrādi-viṣaya ) *adj.* [ *f.* -ā ] pertaining to Agnihotra etc. आदिशब्देनाग्निहोत्रादिविषया अपि चोदनाः पक्षीकरोति Kās'i. iii. 215. 9 (*on* 5(9). 2); विहितस्याननुष्ठानान्नरः पतनमृच्छति इति ··· अस्याः स्मृतेर्गतिः ··· अग्निहोत्रादिविषयाधिकारासिद्धिरूपप्रत्यवायाभिप्रायेणेति न दोषः Mitā. 405. 21 (*on* 3. 219)

**अग्निहोत्रादिवैषम्य** ( agnihotrādi-vaiṣamya ) *n.* the state of being different from ( rites such as ) Agnihotra etc. पूर्वाधिकरणोक्तगुणसूत्रे ··· अग्निहोत्रादिवैषम्येणाधानानन्तरकर्तव्यत्वमाहिताग्निव्रतस्योक्तम् MayūMāli. 434. 10 (*on* v. 3. 10)

**अग्निहोत्रादिव्यतिरिक्त** ( agnihotrādi-vyatirikta ) *adj.* other than Agnihotra etc. ऊर्ध्वरेतसामाश्रमिणां यथाश्रममग्निहोत्रादिव्यतिरिक्ता धर्मा बोध्याः VedāntKau. 373. 11 (*on* iii. 4. 36)

**अग्निहोत्रादिसाधन** ( agnihotrādi-sādhana ) *n.* **A** a means (i. e. implement or resource) for the offering of Agnihotra etc. (त्रय्याम्) तत्त्वज्ञानं तावदग्निहोत्रादिसाधनानां स्वागतादिपरिज्ञानमनुपहतादिपरिज्ञानं च NyāyVār. 23. 9 (*on* i. 1. 1); क्रत्वर्थमग्निहोत्रादिसाधनभूतां गां हत्वाकामतो वासिष्ठम् (प्रायश्चित्तम्) BālaKrī. ii. 150. 14 (*on* 3. 262 (? 268)); **B** Agnihotra etc. as means (to an end) स्वर्गादिकामस्याग्निहोत्रादिसाधनं विधीयते BrahmSūBh.(S'aṅ.) 17. 13 (*on* i. 1. 4); स्वर्गार्थिनोऽग्निहोत्रादिसाधनं यथाभूतमुपदिशति BrahmSūBh. (S'aṅ.) 43. 18 (*on* i. 1. 7)

**अग्निहोत्रादिसाधनत्व** ( agnihotrādisādhana-tva ) *n.* characteristic of being a means for the offering of Agnihotra etc. साग्निकगमनपक्षेऽग्निहोत्रादिसाधनत्वेनाफालकृष्टविधानम् BālaKrī. ii. 22. 17 (*on* 3. 46)

**अग्निहोत्रादिसुकृत** ( agnihotrādi-sukṛta ) *n.* good or religious act

like Agnihotra etc. अनुष्ठानेऽपि पूर्वाधिकरणे काम्यसुकृतानामश्लेषस्य समर्थितत्वेन तद्वदग्निहोत्रादिसुकृतस्याप्यश्लेषापत्तेः S'ivārkaMaDī. ii. 443. 31 (*on* iv. 1. 16)

**अग्निहोत्राद्य** (agnihotrādya) *adj.* [*f.* –ā] beginning with Agnihotra (i. e. Agnihotra etc.) अग्निषु श्रौतेषु याः क्रिया अग्निहोत्राद्या नियतास्ता न …त्यजेत् Aparā. 891. 20 (*on* 3. 17)

**अग्निहोत्राद्यकरण** (agnihotrādy-akaraṇa) *n.* non–performance of Agnihotra etc. यानि त्वग्निहोत्राद्यकरणे द्रव्यापहरणादिवचनानि तान्यन्यायवर्तिपुरुषप्रशासनार्थानि BālaKrī. i. 243. 10 (*on* 2. 121); 'अग्निहोत्रं जुहोति' इत्यादिविधेरग्निहोत्राद्यकरणनिवृत्तिरूपतदनुष्ठानफलकत्वात् VidhiRa. 23 (124. 25)

**अग्निहोत्राद्यङ्ग** (agnihotrādy-aṅga) *n.* auxiliary or part of Agnihotra etc. अग्निहोत्राद्यङ्गभूताग्न्युत्पादकाधानाङ्गत्वात् पूर्णाहुतेः प्राग्भावः NyāySu.(So.) 16. 22 (*on* i. 2. 4); अग्निहोत्राद्यङ्गभूताहवनीयाद्युत्पादकमेवाधानम् BhāṭṭDī. ii. 24. 3 (*on* iii. 6. 4); iv. 111. 4 (*on* x. 8. 7)

**अग्निहोत्राद्यधिकार** (agnihotrādy-adhikāra) *m.* right to perform Agnihotra etc. ननु च पुनराहृतानां दाराणामग्निहोत्राद्यधिकारोऽनुपपन्नो होतृहोमान्वारम्भणीयजन्यसंस्कारविरहात् Aparā. 115. 1 (*on* 1. 89)

**अग्निहोत्राद्यनधिकृत** (agnihotrādy-anadhikṛta) *adj.* not entitled to perform Agnihotra etc. अन्येऽग्निहोत्राद्यनधिकृतानामत्यार्षेयाणामन्धपङ्ग्वादीनां नैष्ठिकादिस्मृतय इति वर्णयन्ति BālaKrī. i. 58. 10 (*on* 1. 50); i. 253. 11 (*on* 2. 144)

**अग्निहोत्राद्यनपेक्ष** (agnihotrādy-anapekṣa) *adj.* [*f.* –ā] independent of or not requiring the performance of Agnihotra etc. आम्नायश्च 'ये चामी अरण्ये श्रद्धां सत्यमुपासते' इत्यग्निहोत्राद्यनपेक्षामपवर्गप्राप्तिं दर्शयति BālaKrī. i. 59. 14 (*on* 1. 50); तेषां (प्रव्राजिनाम्) विद्यावत्त्वावगमात् तेष्वग्निहोत्राद्यनपेक्षा विद्या VedāntDī. 209. 21 (*on* iii. 4. 25)

**अग्निहोत्राद्यनुष्ठान** (agnihotrādy-anuṣṭhāna) *m.* performance of Agnihotra etc. एवं हि लोकपङ्क्त्यादिरग्निहोत्राद्यनुष्ठानसाध्या भवेत् TātpaṬ. (Vā.) 621. 6 (*on* iv. 1. 45); 621. 7 (*on* iv. 1. 45); अग्निहोत्राद्यनुष्ठानं धर्ममाहुर्विपश्चितः TaiUBhāVā. 36. 19(1); दिवप्राप्तिस्त्वग्निहोत्राद्यनुष्ठानात् BālaKrī. i. 80. 12 (*on* 1. 77); 23. 2 (*on* 1. 7); अधीतवेदेष्वधिगतवेदार्थेषु चाग्निहोत्राद्यनुष्ठानसमर्थेषु विभाग एव श्रेयान् Aparā. 719. 3 (*on* 2. 114); अग्निहोत्राद्यनुष्ठानमपि यावच्छरीरपातमनुवर्तते उत मध्ये विच्छिद्यते इति विचारः BrahmSūBh.(S'rī.) ii. 443. 4 (*on* iv. 1. 16); व्यवहारस्तु योऽग्निहोत्राद्यनुष्ठानात्मकः सोऽदृष्टार्थः NyāyRa. 677. 14 (*on* 5(15). 30)

**अग्निहोत्राद्यपूर्व** (agnihotrādy-apūrva) *n.* unseen result of the performance of Agnihotra etc. अग्निहोत्राद्यपूर्वाणि … प्रयोजकानि भवन्ति NyāyRaMā. 16. 16; ज्ञानसाध्यानि त्वग्निहोत्राद्यपूर्वाणि YuktiSneha. 11. 25 (*on* i. 1. 1)

**अग्निहोत्राद्यपेक्षा** (agnihotrādy-apekṣā) *f.* reliance on or requirement of Agnihotra etc. ज्ञानस्य मोक्षदाने नाग्निहोत्राद्यपेक्षा BrahmSūBh. (Ma.) 62B. 1 (*on* iii. 4. 25)

**अग्निहोत्राद्यप्राप्ति** (agnihotrādy-aprāpti) *f.* absence (of the knowledge) of Agnihotra etc. सकलशाखागताग्निहोत्रादिविध्याद्यभावेऽग्निहोत्राद्यप्राप्त्या तेष्वपूर्वविधिलक्षणं समर्थयितुं शक्यमेव VidhiRa. 9 (41. 20)

**अग्निहोत्राद्यर्थ** (agnihotrādy-artha) *adj.* meant or intended for Agnihotra etc. ज्येष्ठायां (भार्यायाम्) ध्रियमाणायां यदि कनिष्ठा प्रमीयेत, तस्या अग्निहोत्राद्यर्थेनाग्निना दाहो न प्राप्नोति BālaKrī. i. 86. 8 (*on* 1. 87); एवमग्निहोत्राद्यर्थमिन्धनमपहृत्य (शपथे नास्ति पातकम्) ManvaVi. 943. 1 (*on* 8. 112)

**अग्निहोत्राद्यर्थत्व** (agnihotrādyartha-tva) *n.* the state of being intended (or reserved) for Agnihotra etc. (तथा च बृहस्पतिः – पूर्वाह्णे … राजा कार्याणि संपश्येत्) पूर्वाह्णेऽप्याद्यघटिकाचतुष्टयादूर्ध्वमेव तस्याग्निहोत्राद्यर्थत्वात् SmṛtiCan. iii. 60. 12.

**अग्निहोत्राद्यवगम** (agnihotrādy-avagama) *m.* knowledge or understanding of (how to perform) Agnihotra etc. पित्राद्युपदेशत एवाग्निहोत्राद्यवगमे कामनावैयर्थ्यं तदवस्थम् VivaPraSaṁ. 177. 10.

**अग्निहोत्राद्याधान** (agnihotrādy-ādhāna) *n.* setting up of the sacrificial fire for Agnihotra etc. (दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते) अग्निहोत्रशब्दोऽयमग्निहोत्राद्याधानपरः ManvaMu. 121. 12 (*on* 3. 171)

**अग्निहोत्राद्याहुति** (agnihotrādy-āhuti) *f.* oblation in Agnihotra and other rituals अग्निहोत्राद्याहुतिविपरिणामात्मकं च जगत् कृत्स्नम् BṛĀraUBh. 172. 19 (*on* i. 5. 2) (आप एवेदमग्र आसुः) आप इति कर्मसमवायिन्यः अग्निहोत्राद्याहुतयः BṛĀraUBh. 705. 12 (*on* v. 5. 1)

**अग्निहोत्राद्युत्तरक्रतु** (agnihotrādy-uttarakratu) *m.* rite or ritual to be performed after a rite like Agnihotra, a rite subsequent to Agnihotra and the like (दाराग्निहोत्रसंबन्धं कुरुते योऽग्रजे स्थिते ManuSm. 3. 171) अग्निहोत्रशब्देनाग्निहोत्राद्युत्तरक्रतुप्रयोज्यमाधानमुक्तम् SmṛtiCan. v. 172. 3; संस्कृतानामग्नीनामग्निहोत्राद्युत्तरक्रतुषु तत्तद्वाक्यैर्विनियोगावगमात् NyāyMāVi. 181. 19 (*on* iii. 6. 4)

**अग्निहोत्राद्युपकारकत्व** (agnihotrādyupakāraka–tva) *n.* the state of being subsidiary to Agnihotra etc. अग्निहोत्राद्युपकारकत्वात् तज्ज्ञानम् … प्रयुङ्क्ते NyāyRaMā. 17. 18.

**अग्निहोत्राद्युपदेश** (agnihotrādy-upadeśa) *m.* injunction regarding Agnihotra and other (rites) अग्निहोत्राद्युपदेश औषधपाने वृद्धयुपदेशवद्बालादिप्रवृत्त्यर्थः ManuBh. ii. 476. 13 (*on* 12. 86)

**अग्निहोत्राद्युपलक्षित** (agnihotrādy-upalakṣita) *adj.* indicated by Agnihotra and others एवं दुःसंपादितमसंपादितमग्निहोत्राद्युपलक्षितं कर्म किं करोतीत्युच्यते MuṇḍUBh. 315. 16 (*on* i. 2. 3)

**अग्निहोत्राधिकरण** (agnihotrādhikaraṇa) *n.* place of offering of Agnihotra यथाग्निहोत्राधिकरणमाहवनीय इह ChāndoUBh. 283. 8 (*on* v. 4. 1); Bhām. 524. 10 (*on* iii. 1. 1)

**अग्निहोत्राधिकार** (agnihotrādhikāra) *m.* eligibility for the performance of the Agnihotra rite तथापि 'एतया पुनराधेयसंमितयेष्ट्येष्ट्वाग्निहोत्रं जुहोती'ति वचनेन कृतोदवस(? सा)नीयस्याग्निहोत्राधिकारप्रतिपादनात् S'āstrDī. 501. 3 (*on* vi. 5. 13); 'एतया पुनराधेयसंमितयेष्ट्वाग्निहोत्रं जुहुयात्' इति वचनेनोदवसानीयायां कृतायां पश्चादग्निहोत्राधिकारप्रतिपादनात् NyāyMāVi. 346. 25 (*on* vi. 5. 13); MayūMāli. 501. 3 (*on* vi. 5. 13)

**अग्निहोत्राधिकारिन्** (agnihotrādhikār–in) *m.* one who is entitled to perform the Agnihotra rite तावन्मात्रोऽधिकार्यत्र नाग्निहोत्राधिकारिवत् BṛĀraUBhVā. i. 4. 1085.

**अग्निहोत्रानङ्गता** (agnihotrānaṅga–tā) *f.* the state of not being subsidiary to Agnihotra उद्गानस्याग्निहोत्रानङ्गतयाऽसंस्कार्यत्वेऽपि तद्विशेषणस्याग्नेरङ्गत्वात् संस्कार्यत्वं किं न स्यात् MayūMāli. 637. 19 (*on* ix. 4. 7)

**अग्निहोत्रानङ्गत्व** (agnihotrānaṅga–tva) *n.* the state of not being subsidiary to Agnihotra तथा अपौर्णमासं इत्यादिष्वप्यग्निहोत्रविशेषणत्वं द्रष्टव्यम्। अग्निहोत्रानङ्गत्वस्याविशिष्टत्वात् MuṇḍUBh. 315. 10 (*on* i. 2. 3)

**अग्निहोत्रानङ्गभूत** (agnihotrānaṅga–bhūta) *adj.* which has not become subsidiary to Agnihotra तेनाग्निहोत्रानङ्गभूतेऽप्युद्धरणे … कर्तव्य एव मन्त्रः S'āstrDī. 639. 9 (*on* ix. 4. 9)

**अग्निहोत्राननुष्ठान** (agnihotrānanuṣṭhāna) *n.* non–performance of Agnihotra प्रयोजनं पूर्वपक्षे … कुण्डपायिनामयने अग्निहोत्राननुष्ठानं च MayūMāli. 175. 28 (*on* ii. 3. 11)

**अग्निहोत्रानन्तरभाविन्** (agnihotrānantarabhāv–in) *adj.* coming after Agnihotra, subsequent to Agnihotra अग्निहोत्रानन्तरभाविनो वास्तोष्पतीयस्य प्रमाणाभावान्नाग्निहोत्राङ्गत्वम् SaṅkarKāBh. 148. 13 (*on* iii. 2. 61)

**अग्निहोत्रानन्तर्य** (agnihotrānantarya) *n.* subsequence to Agnihotra, immediacy to Agnihotra दीक्षिताग्नेः समारोपणं न विद्यते अग्निहोत्रानन्तर्यात् तत्पुनः प्रतिषिद्धं तस्य SaṅkarKā. (in Devasvāmin's Bhāṣya) iii. 2. 60; अग्निहोत्रानन्तर्यमपि तदीये सोमे नास्तीत्यपि द्रष्टव्यम् VaiyāBhū. 89. 13 (*on* 22)

**अग्निहोत्रानुष्ठान** (agnihotrānuṣṭhāna) *n.* offering of Agnihotra 'मातुः शुद्धिर्दशाहेन सद्यःशौचास्तु गोत्रिणः' इति तद्गुणवत्तरगोत्रविषयमग्निहोत्रानुष्ठानविषयम् …वा Aparā. 910. 10 (*on* 3. 23); 910. 12 (*on* 3. 23); अत्र च दशाहाशौचे विद्यमान एवाग्निहोत्रानुष्ठानं प्रतिपादयन् स्फुटमेव सर्वाशौचसंकोचो नास्तीति दर्शयति HārLa. 25. 10; अग्निहोत्रिणो दर्शपूर्णमासं विनापि अग्निहोत्रानुष्ठानं विहितमस्ति VīraMi.(Saṁskāra.) 140. 20; कथमग्निहोत्रानुष्ठानमिति वाच्यम् MayūMāli. 419. 4 (*on* v. 1. 17); 500. 10 (*on* vi. 5. 12); पत्न्यै अग्न्यदानं नाग्निहोत्रानुष्ठानम् …इति पञ्च पक्षा अभिहिताः BālamBha. i. 242. 23 (*on* 1. 89)

**अग्निहोत्रानुष्ठानार्थम्** (agnihotrānuṣṭhānārtham) *adv.* for the offering of Agnihotra चतुर्थदिवसात् प्रभृति अग्निहोत्रानुष्ठानार्थमधिकारी भवति HārLa. 25. 8.

**अग्निहोत्रानुसार** (agnihotrānusāra) *m.* [Inst.] *adv.* in accordance with Agnihotra किं च मासोऽनुपादेयः। अग्निहोत्रानुसारेण संपादयितुमशक्यत्वात् NyāyMāVi. 102. 23 (*on* ii. 3. 12)

**अग्निहोत्रान्तराप्रतीति** (agnihotrāntarāpratīti) *f.* non–cognition of another Agnihotra अग्निहोत्रान्तराप्रतीतिरग्निहोत्रान्तराप्रतीतेः S'rutaPra. ii. 14. 16 (*on* i. 3. 7); द्रव्यदेवतान्तराभावेनाग्निहोत्रान्तराप्रतीतेस्तु शब्दस्वारस्यभङ्गः S'ivārkaMaDī. i. 414. 19 (*on* i. 3. 17)

**अग्निहोत्रान्वय** (agnihotrānvaya) *m.* construing with Agnihotra उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोतीत्यत्र मासगुणस्योपसदन्वये तात्पर्यमग्निहोत्रान्वये

वा S'ivārkaMaDī. i. 56. 7 (*on* i. 1. 1)

**अग्निहोत्रापविद्धाग्नि** ( agnihotrāpaviddhāgni ) *adj.* who has discarded the Agnihotra fire अग्निहोत्रापविद्धाग्निर्ब्राह्मण: कामचारत: । चान्द्रायणं चरेन्मासम् ViṣṇuDhaP. ii. 73. 51.

**अग्निहोत्रापूर्व** ( agnihotrāpūrva ) *n.* unseen (result) of the Agnihotra तं कार्यारम्भमग्निहोत्रापूर्वविपरिणामलक्षणं पञ्चधा प्रविभज्य ··· आह ChāndoUBh. 282. 13 (*on* v. 4. 1); कार्यारम्भणमग्निहोत्रापूर्वपरिणामलक्षणम् ··· प्रविभज्य···आह श्रुति: Bhām. 523. 21 (*on* iii. 1. 1); अस्तु वा अग्निहोत्रापूर्वमेव ज्ञानद्वारेण प्रयोजकम् YuktiSneha. 11. 30 (*on* i. 1.1)

**अग्निहोत्राभाव** ( agnihotrābhāva ) *m.* absence of the Agnihotra offering आधानकाले चाग्निहोत्राभावात्राग्निहोत्रहवणी VedāntKa. 455. 4 (*on* iii. 3. 40); अग्निहोत्रहवण्या: पत्रमानेष्टिष्वग्निहोत्राभावेनासंभवेऽपि न निर्वापलोप: BhāṭṭDī. iii. 235. 6 (*on* x. 2. 26); दीक्षितस्य चाग्निहोत्राभावेन तदयोगात् BhāṭṭCan. 85. 19 (*on* xv. 2. 31)

**अग्निहोत्राभिसंबन्ध** ( agnihotrābhisambandha ) *m.* connection (i. e. mention in the context of) with Agnihotra अग्निहोत्राभिसंबन्धात्स्यातां वा श्रुतिचोदिते BṛĀraUBhVā. i. 5. 42.

**अग्निहोत्राभेद** ( agnihotrābheda ) *m.* sameness or unity of Agnihotra अग्निहोत्राभेदे उत्पन्नशिष्टैर्दध्यादिभि: क्रियमाणा: प्रयोगा: भिद्यन्ते VedāntKa. 458. 14 (*on* iii. 3. 43)

**अग्निहोत्राभ्यास** ( agnihotrābhyāsa ) *m.* repeated mention of Agnihotra गुणान्तरविधानायाग्निहोत्राभ्यासवत् PrakaVi. 841. 23.

**अग्निहोत्रायणिन्** ( agnihotrāyaṇ-in ) *adj.* **i** one who has Agnihotra (in place of all other rites) अग्निहोत्रायणिनो नवै: सायंप्रातरग्निहोत्रहोम: KātyS'S. iv. 6. 11 ( comm. अग्निहोत्रमेवायनं [ यस्य ] नान्यानि कर्माणि सोऽग्निहोत्रायणी ) **ii** one who desires the accomplishment of the Āgrayaṇa through Agnihotra itself (performed with new grains) KātyS'S. iv. 6. 11 ( comm. अपरे अग्निहोत्रेणैव अग्निहोत्रहोमेनैव (अयनं) आग्रयणप्राप्तिमाग्रयणसिद्धिं य इच्छति सोऽग्निहोत्रायणी )

**अग्निहोत्रार्थ** ( agnihotrārtha ) *adj.* meant for Agnihotra उद्वानव्याप्तस्याग्निहोत्रार्थस्याहवनीयस्योत्पत्त्यर्थमिति ṬupṬ. 229. 4 (*on* ix. 4. 19); MayūMāli. 639. 10 (*on* ix. 4. 9); [Loc.] *adv.* for the sake of Agnihotra कपिला ह्यग्निहोत्रार्थे ··· निर्मिता VṛGautaSm. 568. 20(9); VarāP. 112. 5.

**अग्निहोत्रार्थता** ( agnihotrārtha-tā ) *f.* the state of being meant for Agnihotra सर्वकर्मणां धार्यमाणोऽग्नि: प्रत्येकमङ्गमतोऽग्निहोत्रार्थताप्यस्ति S'āstrDī. 638. 15 (*on* iv. 4. 8)

**अग्निहोत्रार्थत्व** ( agnihotrārtha-tva ) *n.* the state of being meant for Agnihotra गतश्रीभिर्धार्यमाणस्याहवनीयस्य सर्वकर्मार्थत्वे सत्यग्निहोत्रार्थत्वमप्यस्ति NyāyMāVi. 472. 17 (*on* ix 4. 8); अभ्युत्पत्तिलक्षणसंस्कारद्वाराग्निहोत्रार्थत्वनिश्चये MayūMāli. 638. 12 (*on* ix. 4. 7)

**अग्निहोत्रार्थम्** ( agnihotrārtham ) *adv.* for the sake of Agnihotra अग्निहोत्रार्थमुत्पन्ना वेदाश्चैवाग्रयस्तथा PadmP. v. 16. 7; अग्निहोत्रार्थमिति वदन्तौ क्रियान्तरेऽशौचं दर्शयत: HārLa. 7. 11; दिवसमष्टधा कृत्वा प्रथममग्निहोत्रार्थं ब्राह्मणतृप्त्यर्थं च मुक्त्वा, अनन्तरं भागत्रयं व्यवहारकाल: VyavaNi. 4. 11; अग्निहोत्रार्थं स्नानोपस्पर्शनान्तकालं शुद्धिरिति शङ्खवचनात् VīraMi.(S'uddhi.) 19. 18; सायंकाले पुनरग्निहोत्रार्थं प्रणयनासंभवात् MayūMāli. 419. 2 (*on* v. 1. 17)

**अग्निहोत्रार्थोद्धृति** ( agnihotrārthoddhṛti ) *f.* taking (the fire from the Gārhapatya altar to be placed on the Āhavanīya altar) for the purpose of Agnihotra ज्योतिष्मती भवेन्नो वा दर्शार्थोद्धृतलोपने । निमित्तसत्त्वात्स्यान्नाग्निहोत्रार्थोद्धृतिवर्जनात् NyāyMāVi. 471. 22 (*on* ix. 4. 7)

**अग्निहोत्रावसान** ( agnihotrāvasāna ) *n.* end or completion of the Agnihotra rite अग्निहोत्रावसानदत्तभस्मन्यायुपरेखम् ··· तपोराशिं ददर्श AvantiKa. 144. 1.

**अग्निहोत्रावस्था** ( agnihotrāvasthā ) *f.* state of being engaged in the Agnihotra rite अग्निहोत्रावस्थायामपि संभवतीन्द्रियेषु पुरुषस्य कामना S'āstrDī. 152. 6 (*on* ii. 2. 11)

**अग्निहोत्रावृत्** ( agnihotrāvṛt ) *f.* method or procedure of performing the Agnihotra rite अग्निहोत्रावृता त्वा वाजिनवद्भक्षयन्ति KātyS'S. xxvi. 6. 20.

**अग्निहोत्रावृत्ति** ( agnihotrāvṛtti ) *f.* repeated performance of the Agnihotra rite समिद्यागाश्रितस्य फलार्थस्य गुणस्य सायं प्रातरग्निहोत्रावृत्तौ दध्यावृत्तिवत्पञ्चवारमावृत्ति: MīmāKau. iii. 152. 11 (*on* ii. 2. 2)

**अग्निहोत्राहुति** ( agnihotrāhuti ) *f.* **i** oblation called Agnihotra तं दर्शपूर्णमासौ तमेते अग्निहोत्राहुती अभिसमभरन् JaimiBr. 1. 4; S'atBr. X. i. 5. 1; श्रद्धाशब्दवाच्या आप: द्युलोकमनुप्रविश्य चान्द्रं कार्यमारभन्ते फलरूपमग्निहोत्राहुत्यो: ChāndoUBh. 284. 12 (*on* v. 4. 1); यस्मात् उच्छ्वासनि:श्वासौ अग्निहोत्राहुती इव PraśnaUBh. 272. 8 (*on* 4. 4); दशसंख्यानामग्निहोत्राहुतीनां मध्ये द्वे एवाहवनीये S'ivārkaMaDī. i. 144. 2 (*on* i. 1. 3); द्वयोरग्निहोत्राहुत्योर्यदाहवनीये जुहोतीति सामान्यशास्त्रप्रमिताहवनीयरूपाधारसंकीर्तनेऽप्यव्याप्ति: VidhiRa. 5 (27. 19); 5 (28. 2); **ii** the material (to be offered) in the Agnihotra rite इष्टकास्त्वेता आहुतयो हूयन्ते या एता अग्निहोत्राहुतय: S'atBr. II. iii. 3. 17; अग्निहोत्राहुत्यो: कार्यारम्भो य: स उक्त: ChāndoUBh. 282. 3 (*on* v. 4. 1); ते वा एते इति तथा परिणामोऽखिलं जगत् । अग्निहोत्राहुते: साक्षाच्छ्रुतावेव समीरितम् BṛĀraUBhVā. i. 5. 59; अग्निहोत्राहुती हुते पयआदिसाधने Bhām. 524. 4 (*on* iii. 1. 1); अत्र सायंप्रातरग्निहोत्राहुती प्रकृत्य ते वा एते आहुती हुते उत्क्रामत: ··· इति S'rutaPra. ii. 61. 5 (*on* i. 3. 26) cf. **अग्निहोत्रहोम.**

**अग्निहोत्राहुतिदर्शन** ( agnihotrāhuti-darśana ) *n.* the knowledge of or meditation on the Agnihotra offering अग्निहोत्राहुतिदर्शनविषयमेव एतद्दर्शनम् BṛĀraUBh. 777. 4 (*on* vi. 2. 15)

**अग्निहोत्राहुतिभोक्तृ** ( agnihotrāhuti-bhoktṛ ) *m.* enjoyer of the Agnihotra oblation ते तु नाग्निहोत्राहुतिभोक्तार: S'rutaPra. ii. 61. 20 (*on* i. 3. 26)

**अग्निहोत्राहुतियुगल** ( agnihotrāhuti-yugala ) *n.* a pair of Agnihotra offerings स्यात्किं चैषा पराश्याहुतिषु फलसमायोजनार्थप्रवृत्तेर्निष्प्रत्यूहाग्निहोत्राहुतियुगलमिताधारसंकीर्तने VidhiRa. 5 (20. 2)

**अग्निहोत्राहुतिरूपत्व** ( agnihotrāhutirūpa-tva ) *n.* the state of being of the form of the Agnihotra oblation परे तु जीवस्याद्भिस्सह गमनं वदन्त एव तासामपामग्निहोत्राहुतिरूपत्वं वदन्ति S'rutaPra. ii. 410. 24 (*on* iii. 1. 7)

**अग्निहोत्राहुतिसमवायिन्** ( agnihotrāhuti-samavāyin ) *adj.* [ *f.* -ī ] identical with the Agnihotra oblation तथैमा अग्निहोत्राहुतिसमवायिन्य: ··· आप: द्युलोकमनुप्रविश्य चान्द्रं कार्यमारभन्ते ChāndoUBh. 284. 11 (*on* v. 4. 1)

**अग्निहोत्राहुतिसंबन्ध** ( agnihotrāhuti-sambandha ) *m.* relation to the Agnihotra oblation अग्निहोत्राहुतिसंबन्धाच्च गृहस्था एव गृह्यन्ते ChāndoUBh. 293. 2 (*on* v. 10. 1)

**अग्निहोत्राहुतिस्तुति** ( agnihotrāhuti-stuti ) *f.* praise of the Agnihotra offering अग्निहोत्राहुतिस्तुतिद्वारेण उत्क्रान्त्यादय: प्रस्तुता: BṛĀraUBh. 771. 4 (*on* vi. 2. 9)

**अग्निहोत्राहुत्यन्तर** ( agnihotrāhuty-antara ) *n.* another offering of Agnihotra तस्मादेव शब्दादग्निहोत्राहुत्यन्तराभ्यासेष्वाहवनीयबाध: VidhiRa. 42 (? 43) (216. 5)

**अग्निहोत्राहुत्यपूर्व** ( agnihotrāhuty-apūrva ) *n.* unseen result of the Agnihotra offering अग्निहोत्राहुत्यपूर्वपरिणामात्मकं जगत् BṛĀraUBh. 769. 13 (*on* vi. 2. 9)

**अग्निहोत्राहोम** ( agnihotrāhoma ) *m.* non-offering of Agnihotra अग्निहोत्राहोमे च ĀśvaS'S. I. ii. 5. 15 ( comm. अग्निहोत्रहोमविच्छेदे )

**अग्निहोत्रिक** ( agnihotr-ika ) *adj.* belonging to the Agnihotra rite अग्निं रजस्वला चेत्स्त्री संस्पृशेदग्निहोत्रिकम् MahāBhā. iii. 211. 27; xii. 69. 46; *m.* one who offers Agnihotra सौम्योऽस्तोदययो: पुरो भृगुसुतस्यावस्थित: ··· हन्यात् प्रव्रजिताग्निहोत्रिकभिषग्रङ्गोपजीव्यान् BṛSam. 9. 43; 16. 15.

**अग्निहोत्रिकुल** ( agnihotri-kula ) *n.* family of the Agnihotrins अग्निहोत्रिकुलनीरधिचन्द्रात् । पुण्यपूर्णपुरुषोत्तमभट्टादुद्बभूव सुकृती हरिभट्ट: PadyāTa. 297.

**अग्निहोत्रिणी** ( agnihotriṇ-ī ) *adj.* (*f.*) yielding milk for Agnihotra अभिनन्दति तां नन्दीं वसिष्ठस्य पयस्विनीम् ( v. l. अग्निहोत्रिणीम् ) MahāBhā. i. 165. 15; *f.* **i** name of the wife of Agnihotrin who was the sixth of the ten sons of Aryāvatī and sage Kaṇva मिश्राणी च तथा श्रेया षष्ठी सा चाग्निहोत्रिणी BhaviP. 589A. 26 (iii(4). 21. 10); **ii** wife of one who maintains Agnihotra जनेति । आत्रेयीसत्रनस्याग्निहोत्रिणीभिन्नाया इत्यर्थ: BālamBha. iii. 143. 12 (*on* 3. 251)

**अग्निहोत्रितिलक** ( agnihotri-tilaka ) *m.* foremost amongst the Agnihotrins श्रीचण्डीश्वरमग्निहोत्रितिलकं लब्ध्वा गरीयो गुरुम् VīraMi. (Saṁskāra.) 123. 22.

**अग्निहोत्रित्व** ( agnihotri-tva ) *n.* the state of one offering Agnihotra जटित्वमग्निहोत्रित्वं भूशय्या जिनधारणम् । ··· धर्मोऽयं वनवासिन: NitiSā. 2. 27; AgniP. 160. 1; न सत्यवदनेनाग्निहोत्रित्वम् । केन तर्हि । अग्निहोत्रेणैव BrahmSūBh. (S'aṅ.) 156. 5 (*on* i. 3. 8)

**अग्निहोत्रिन्** ( agnihotr-in ) *m.* **1** one who offers Agnihotra एवं वा अग्निहोत्रिणे ··· स्वर्गो लोकोऽनुभाति MaiS. i. 8. 7; KāṭhS. 6. 6; KapiKaS. 4. 5; यंयत्काममयेत तंतदग्निहोत्र्यग्निं याचेत् MaiS. i. 5. 12; ĀpaS'S. vi. 19. 3; सायंमहुतेऽग्निहोत्रेऽग्निहोत्रिणा नाशितव्यम् MaiS. i. 5. 7; उभयीर्वा अग्नि-

होत्रिणि देवता आशंसन्ते याभ्यश्च जुहोति याभ्यश्च न MaiS. i. 5. 11; एतस्यां वा आहितायामग्निहोत्रिणे वीरुधः स्वदन्ति KāṭhS. 6. 5 = KapiKaS. 4. 4; अ( ? आ )-स्याग्निहोत्री प्रजायां जायते KāṭhS. 6. 8; KapiKaS. 4. 7; सायंयावानश्च वै देवाः प्रातर्यावाणश्चाग्निहोत्रिणो गृहमा गच्छन्ति TaiBr. II. i. 5. 10; किं स्विद्विद्वान् प्रवसत्यग्निहोत्री गृहेभ्यः S'atBr. XI. iii. 1. 5; JaimiBr. 1. 20; BaudhDS. iv. 5. 27; न दिवाग्निर्ज्वलेद् गेहे वर्जयित्वाग्निहोत्रिक( v. l. °ण )म् MahāBhā. xii. 69. 46; MahāBhā. xiii. 24. 27; SūktiRa. 145. 9; अग्निहोत्र्यपविध्याग्नीन्ब्राह्मणः···। चान्द्रायणं चरेन्मासम् ManuSm. 11. 41; अग्निहोत्री च ऋणवान् म्रियते यदि। ··· अग्निहोत्रं च सर्वं तद्धनिनां धनम् NāraSm. 49. 9; प्रवसिताग्निहोत्री यदाग्निहोत्रं कृतं मन्येत तदाश्नीयात् VisnuSm. 68. 6; ParāSm. 8. 11; BṛParā-Sm. 4. 207 (?203); पितृयानोऽजवीथ्याश्च यदगस्त्यस्य चान्तरम्। तेनाग्निहोत्रिणो यान्ति स्वर्गकामा दिवं प्रति YājñaSm. 3. 184; VṛGautaSm. 538. 14(6); VedavyāSm. 4. 45; उत्तरं यदगस्त्यस्य···। पितृयानः···वैश्वानरपथाद्बहिः। तत्रासते ···येऽग्निहोत्रिणः VisnuP. ii. 8. 86; MatsyaP. 124. 98; BrahmāṇḍP. i. 21. 160; स ददर्श ··· होमधेनुम् ··· ब्राह्मणस्याग्निहोत्रिणः MārkP. 112. 3; BṛSaṁ. 68. 48; KūrmaP. 265. 1 (1. 25); AgniP. 117. 48; ब्राह्मणे ··· सावित्रीं विनिवेदयेत् ··· अग्निहोत्रिणि SkandP. vii(1). 166. 95; BhaviP. 752B. 34 (iv. 102. 81); SadācāAnu. 12; अग्निहोत्रिभिरवश्यकर्तव्यत्वादृशस्य अग्निहोत्रिसंबन्ध्यग्निहोत्रविशेषणमिव भवति MuṇḍUBh. 315. 8 (*on* i. 2. 3); 316. 18 (*on* i. 2. 5); एषोऽग्निहोत्री यः सत्यं वदति इत्युक्ते ··· सत्यवदनं त्वग्निहोत्रिणो विशेषः BrahmSūBh.(S'aṅ.) 156. 4 (*on* i. 3. 8); EI. xv. 3. 13; तदग्निहोत्रविषयं द्रष्टव्यम्···स्नातकस्य त्रयोऽपाने पश्चापानेऽग्निहोत्रिणः BālaKrī. i. 37. 1 (*on* 1. 17); ManuBh. i. 128. 23 (*on* 2. 101); PārāSū. 92. 14; ( धर्मः ) अग्निहोत्रिस्वरूपेण ह्यात्रेयं हि समागतः PadmP. ii. 12. 60; जुहोति च त्रिकाले यो न त्यजेदग्निमन्दिरम्। स चाग्निहोत्री भवति PadmP. ii. 50. 16; अग्निलोकम्···तौ दर्शयेताम्···। यत्राग्निहोत्रिणः···भान्त्यनेकशः GaṇeP. ii. 52. 13; EI. xix. 270. 53; अग्नित्रयमभूदग्निहोत्रिणो विश्वकर्मणः Rāmā-Mañ. 209. 13; एष तु वाग्निहोत्री यः सत्यं वदतीत्यादिष्वग्निहोत्र्यन्तराप्रतीतेः प्रतीतस्यैवाग्निहोत्रिणः सत्यवदनाङ्गविधानम् BrahmSūBh.(Rā.) 284. 14 (*on* i. 3. 7); ( S'rutaPra. एवमग्निहोत्र्यन्तरसमर्पकशब्दाभावात्तत्र तुशब्दस्वारस्यं भग्नम् ··· इहापि तच्छंतिवाद्यन्तराप्रतीतेरग्निहोत्रिन्यायो भवति ); KathāSaSāg. xii. 30. 8; देवैर्दत्तकुण्डत्रयाग्नयः। ··· अभूवंस्ते ब्राह्मणा अग्निहोत्रिणः TriṣaS'aPuC. i. 6. 556; PariPar. 3. 195; आहिताग्नेरग्निहोत्रिणो दाहे या आवृदितिकर्तव्यता तथा दहेत् HārLa. 124. 9; Aparā. 1082. 8 (*on* 3. 258); अग्निहोत्रिवत् प्राणातिवादिनः प्रत्यभिज्ञानात् S'rutaPra. ii. 12. 19 (*on* i. 3. 7); अग्निहोत्रिवाक्यदृष्टान्ते तुशब्दस्य व्यभिचारं हृदि निधाय···अग्निहोत्रिवैषम्यं वक्ष्यन् S'rutaPra. ii. 14. 11 (*on* i. 3. 7); comm. on TaiS. IV. iii. 11. 5; VīraMi.(Tīrtha.) 21. 5; PadyāTa. 44(2); 109(2); 301(1); **2** name of one of the ten sons of Āryāvatī and sage Kaṇva ( कण्वो नाम मुनिश्रेष्ठः···कश्यपात्मजः। आर्यावती···दश पुत्रास्तयोजाताः ) अग्निहोत्री द्विवेदी च त्रिवेदी ··· कथिता यथा नाम तथा गुणाः BhaviP. 589A. 20 (iii(4). 21. 8); 423A. 22 (iii(1). 6. 4)

**अग्निहोत्री** (agnihotŕ-ī) *f.* [DEBRU. p. 380] **1** cow yielding milk for Agnihotra यस्याग्निहोत्र्युपावसृष्टा दुह्यमानोपविशेत् AitBr. 25. 2 (650) = 32. 3(809) = ĀśvaS'S. I. iii. 11. 1; यस्याग्निहोत्र्युपावसृष्टा दुह्यमाना स्पन्देत AitBr. 25. 2(652) = 32. 3(810) = ĀśvaS'S. I. iii. 11. 7; अग्निहोत्रीमेव नवानादयित्वा तस्यै दुग्धेन ··· जुहुयात् KausīBr. 4. 14 (18. 1); ĀśvaS'S. I. ii. 9. 4; S'āṅkhāS'S. iii. 12. 16; BaudhS'S. iii. 353. 1; BhārS'S. vi. 18. 12; इयं वा अग्निहोत्री। इयं वा एतस्य निषीदति। यस्याग्निहोत्री निषीदति TaiBr. I. iv. 3. 1; BaudhS'S. ii. 192. 5; यस्याग्निहोत्र्युपसृष्टा निषीदति। तां दुग्ध्वा ब्राह्मणाय दद्यात् TaiBr. I. iv. 3. 2; BaudhS'S. ii. 192. 11; वाग्घ वा एतस्याग्निहोत्रस्याग्निहोत्री S'atBr. XI. iii. 1. 1; XII. iv. 1. 11; नो वा एवंविदोऽग्निहोत्री दुह्यमानोपविशति JaimiBr. 1. 60; दक्षिणतोऽग्निहोत्रीमुपसृजन्ति S'āṅkhāS'S. ii. 8. 1; BhārS'S. vi. 8. 15; अग्निहोत्रीं दक्षिणत उदीचीं स्थापयित्वा ब्राह्मणो दोग्धि Baudh-S'S. i. 65. 6 = i. 72. 18; अग्निहोत्रियै वत्समभिमृशति BaudhS'S. i. 78. 1; यद्यग्निहोत्र्युपसृष्टा निषीदेत् BhārS'S. ix. 7. 1; अग्निहोत्र्यै च वत्सो बध्नाति ĀpaS'S. viii. 11. 17; HirS'S. v. 3. 9; VārāS'S. I. vii. 3. 20; अग्नीहोत्री चेद्दुह्यानोपविशेत् KātyS'S. xxv. 1. 14; iv. 14. 1; यदग्निहोत्र्यां व्रतं तदात्मन्कुरुते HirS'S. vi. 6. 18; अग्निहोत्र्या वत्समभिमृशत्यग्निहोत्रीं वा VaikhāS'S. 2. 7; 20. 9; अथ यस्याग्निहोत्री घर्मदुघा दुह्यमाना वाश्येत् का तत्र प्रायश्चित्तिः ··· अथ यस्याग्निहोत्री घर्मदुघा दुह्यमानोपविशेत् का तत्र प्रायश्चित्तिः Atharvaprāyaścitta 2. 4; रत्नद्वयं ब्राह्मणस्य···। अग्निहोत्री च गौः पत्नी प्रजारणिः MahāBhā. i. 1760*(2); सः ··· अग्निहोत्र्यां साभिलाषः BhāgP. viii. 8. 2; ix. 15. 25; NāmaMālī. 378 = Vaija. 90. 95; **2** a wooden ladle for Agnihotra offering अग्निहोत्री ··· स्रुचि तु योषिति S'abdaRaSaK. 284. 15.

**अग्निहोत्रीय** (agnihotr-īya) *adj.* pertaining to Agnihotra अग्निहोत्रीयप्रथमप्रयोगीयाद्यपदार्थस्यापि ताद्दशोद्देश्यताकप्रवृत्तिविषयत्वात् BhāṭṭDī. iii. 196. 11 (*on* x. 3. 1); ii. 351. 14 (*on* vii. 3. 1)

**अग्निहोत्रीवत्स** (agnihotrī-vatsá) *m.* calf of the cow which yields milk for Agnihotra नैवं विदुषोऽग्निहोत्रीवत्सो नश्यति S'atBr. XII. iv. 1. 11; यत्···अग्निहोत्रीवत्सो नश्येत् किं तत्र कर्म···चौर्वा अग्निहोत्री ··· न ह वा एवंविदोऽग्निहोत्रीवत्सो नश्यति JaimiBr. 1. 60.

**अग्निहोत्रेतर** (agnihotretara) *adj.* different from Agnihotra नाप्यग्निहोत्रेतरदर्विहोमार्थस्य पौर्णमास्यमावास्याकालप्राप्तिः TantrVā. 1086. 23 (*on* iii. 6. 15)

**अग्निहोत्रेतिकर्तव्यता** (agnihotretikartavyatā) *f.* procedure of Agnihotra कथमिति। अनयाग्निहोत्रेतिकर्तव्यतयेति S'ābaBh. 550. 2 (*on* ii. 2. 26); ( TantrVā. कथंभावापेक्षायां सत्यामग्निहोत्रेतिकर्तव्यतैव पूरणी भवति ··· अग्निप्रणयनादिकैवाग्निहोत्रेतिकर्तव्यता )

**अग्निहोत्रोच्छिष्ट** (agnihotrocchiṣṭá) *n.* remnant of the Agnihotra oblation किं मे ततो भविष्यतीत्यग्निहोत्रोच्छिष्टमेवेति S'atBr. II. iii. 1. 39; अग्निहोत्रोच्छिष्टमातच्य निदध्यात् VādhūlaS'S. iv. 38. 5; iii. 18. 4.

**अग्निहोत्रोच्छिष्टव्रत** (agnihotrocchiṣṭa-vrata) *adj.* whose *vrata*-food consists of the remnant of the Agnihotra oblation स एतं द्वितीयं संवत्सरमग्निहोत्रोच्छिष्टव्रतो भवति VādhulaS'S. iii. 18. 4.

**अग्निहोत्रोच्छेष** (agnihotroccheṣa) *m.* remnant of the Agnihotra oblation शीतीभूतमग्निहोत्रोच्छेषेण दध्ना···आतनक्ति MānS'S. 11. 17.

**अग्निहोत्रोच्छेषण** (agnihotroccheṣaṇá) *n.* remnant of the Agnihotra oblation अग्निहोत्रोच्छेषणमभ्यातनक्ति TaiS. II. v. 3. 6; BaudhS'S. i. 1. 4 = i. 5. 10; पयस एवाग्निहोत्रोच्छेषणं कुर्यात् BaudhS'S. iii. 11. 6; यद्यु ह्याग्निहोत्रोच्छेषणात्प्रमाद्येत्तत्पुनरेवाग्निहोत्रं जुहुयात् BaudhS'S. iii. 208. 4; i. 67. 4 = ii. 116. 11; iii. 318. 6; अग्निहोत्रोच्छेषणमानयति BhārS'S. i. 14. 6; ĀpaS'S. i. 13. 15; HirS'S. i. 3. 11; अग्निहोत्रोच्छेषणं हविरातञ्चनं निदधाति BhārS'S. i. 11. 9; i. 14. 7; i. 14. 8; अग्निहोत्रोच्छेषणमातञ्चनार्थं निदधाति ĀpaS'S. i. 11. 1; Vaikhā-S'S. 3. 2; 3. 8; तस्यैतदग्निहोत्रोच्छेषणं निदधाति।···यदि जीवेत् पिबेदेतदग्निहोत्रोच्छेषणम् BhārPiMe. i. 1. 11–13 = HirPiMe. xxviii. 1. 1; BhārPiMe. i. 3. 13 = HirPiMe. xxviii. 1. 3.

**अग्निहोत्रोच्छेषणव्रत** (agnihotroccheṣaṇa-vrata) *adj.* [ *f.* -ā ] **A** whose *vrata*-food consists of the remnant of the Agnihotra oblation अग्निहोत्रोच्छेषणव्रतो वा यजमानो भवति BaudhS'S. i. 67. 4 = ii. 116. 11; **B** in which the *vrata*-food consists of the remnants of the Agnihotra offering ( सद्यस्क्री ) प्रथमाग्निहोत्रोच्छेषणव्रता BaudhS'S. iii. 318. 6.

**अग्निहोत्रोत्थित** (agnihotrotthita) *adj.* obtained from the Agnihotra offering अग्निहोत्रोत्थितं भस्म संग्राह्यम् S'ivaP. i. 24. 7 (30B. 3)

**अग्निहोत्रोद्भव** (agnihotrodbhava) *adj.* arising from the Agnihotra offering अग्निहोत्रोद्भवो धूमः सर्वतो नभसोऽङ्गणम्। चकार रम्यम् PadmP. iv. 67. 62.

**अग्निहोत्रोपकरण** (agnihotropakaraṇa) *n.* implement for Agnihotra अददद्ब्राह्मणेभ्यः शतं समाः। अग्निहोत्रोपकरणं यज्ञोपकरणं च यत् MahāBhā. vii. App. I. 8 (709)

**अग्निहोत्रोपकरणता** (agnihotropakaraṇa-tā) *f.* the state of being an implement for Agnihotra उरःप्रभृतीनामग्निहोत्रोपकरणतामजानन् यः···प्राणाहुतिम्···अनुतिष्ठति S'rutaPra. iB. 349. 12 (*on* i. 2. 32)

**अग्निहोत्रोपकारक** (agnihotropakāra-ka) *adj.* serviceable or useful for Agnihotra उद्धरणम्···अग्निहोत्रोपकारकतया समन्त्रकमेवाक्षिप्यते BhāṭṭDī. iii. 176. 18 (*on* ix. 4. 6); तत्संस्कृताग्नेर्वा अग्निहोत्रोपकारकत्वस्य तावत्सत्त्वात् BhāṭṭDī. iii. 178. 2 (*on* ix. 4. 7); MayūMāli. 638. 14 (*on* ix. 4. 7)

**अग्निहोत्रोपचरण** (agnihotropacaraṇa) *n.* performance of Agnihotra अग्निहोत्रोपचरणं जीवनं च स्वकर्मभिः।···धर्मोऽयं गृहमेधिनः NītiSā. 2. 25 (comm. अग्निहोत्रोपचरणमिति आहिताग्नित्वम् )

**अग्निहोत्रोपचारम्** (agnihotropacāram) *adv.* in the same way as at the Agnihotra तूष्णीमग्निहोत्रोपचारं गार्हपत्ये व्रतं श्रपयति MānS'S. 60. 22.

**अग्निहोत्रोपभोग्य** (agnihotropabhogya) *adj.* fit to be employed at Agnihotra अग्निहोत्रोपयो( v. l. भो )ग्यानि यानि द्रव्याणि···। तानि चात्र समृद्धानि MahāBhā. xiii. App. 3A(284)

**अग्निहोत्रोपयोगित्व** (agnihotropayogi-tva) *n.* usefulness for Agnihotra दर्शार्थं प्रणीतस्याप्यग्नेरग्निहोत्रोपयोगित्वात् ··· कर्तव्यैवेष्टिः BhāṭṭDī. iii. 175. 4 (*on* ix. 4. 5)

**अग्निहोत्रोपयोग्य** (agnihotropayogya) *n.* fit to be used at Agni

-hotra अग्निहोत्रोपयोग्यानि यानि द्रव्याणि MahāBhā. xiii. App. 3A (284)

**अग्निहोत्रोपस्थान** (agnihotropasthāna) *n.* worship at the Agnihotra अग्निहोत्रोपस्थानं विष्णुक्रमाः समिष्टयजूंषीति न क्रियेरन्…इति शाण्डिल्यः LāṭyāS'S. x. 12.1; [*mantra*] दशहोतारं नामाग्निहोत्रोपस्थानमधीयते LāṭyāS'S. x. 12.10.

**अग्निहोम** (agni-homa) *m.* **A** offering in the fire दीक्षितस्याग्निहोमप्रतिषेधश्रुतेः KātyS'S. vii. 1.34; अपूर्वमग्निहोत्रं(v. l. मं) तु कुर्यात् प्राग् ब्रह्मणे (v. l. दक्षिणे) ViṣṇuP. iii. 11.42; अग्नौ होमः अग्निहोमः VīraMi.(Āhnika.) 406.9; MārkP. 96.37; MatsyaP. 178.71; HārīS. ii. 1.34; KāśyaS. 57B.3; LaghvāśvaSm. 1.54; अग्निहोमाश्च हृदयस्याग्र इति ManuBh. ii. 406.24 (*on* 11.118); शुक्लपक्षे तु माघस्य रथमारोपयेद्रविम् । कृत्वाग्निहोमम् BhaviP. 101A.15 (i. 55.37); पलाशकाष्ठान्यादाय त्वग्निहोमार्थम् DevīBhāP. vii. 25.4; लभेत्…एकभक्तेऽग्निहोमजम् (पुण्यम्) CaturCin. iii(1). 1521.9; VedāntRaMañ. 2.6 (82.25); NirṇaSi. 17.26; BālamBha. i. 356.1 (*on* 1.107); ii. 328.1 (*on* 2.275); **B** offering to Agni अग्निहोमच्चितिहोमान् जुहोति । अग्ने कह्येति पञ्चाग्निहोमाः VārāS'S. II. i. 8.11.

**अग्निहोमहविस्** (agnihoma-havis) [Viśva w. r. for अग्निहोत्रहविस्]

**अग्निह्वर** (agni-hvará) *adj.* [making a mistake in the fire-ceremonial MW.?] उपयामगृहीतोऽसि प्रजापतये त्वा … गृह्णामि … देवेभ्यः … अग्निह्वरेभ्यस्त्वा MaiS. i. 3.35 [TaiS. has अग्निजिह्वेभ्यः]

**अग्नीकृ** (agnī-kṛ-) viii.U. reduce to fire, burn अग्नीकरोति JaineVyā. 274.33 (*on* iv. 2.57); CāndraVṛ. *on* iv. 4.37.

**अग्नीकृत्य** (agnī-kṛtya) *ger.* taking it to be Agni (fire), presume to be Agni अथैनमेनयाग्नीकृत्य स्तौति Nir. 7.29 (147.18); 7.28 (147.9)

**अग्नीक्षणप्रेक्षण** (agnīkṣaṇa-prekṣaṇa) *n.* a look with fiery or blazing eye सू(? सु)त्रामान्धकयोर्विवादमनिशं दृष्ट्वा जिगीष्वोरहं राजेत्येव मिथः पुरा निगदतोरग्नीक्षणप्रेक्षणात् । योऽसौ निर्णयति स्म संप्रति शिवः पायात् RājNīRa. 1.5.

**अग्नीज्य** (agnījya) *m.* name of a people अग्नीज्याः सार्दना जनाः । … कूर्मस्य वामकुक्षिमुपाश्रिताः MārkP. 58.43.

**अग्नीत्कर्तृक** (agnītkartṛ-ka) *adj.* which is to be performed by Agnīdh प्रोक्षणादीनामध्वर्युरेव कर्ता अलंकरणमेवाग्नीत्कर्तृकम् TantrRa. 281.4.

**अग्नीत्कर्तृकत्व** (agnītkartṛka-tva) *n.* the state of being performed by Agnīdh अलङ्करणं त्वग्नीत्कर्तृकत्वान्न लक्षयति (निर्वापः) TantrRa. 274.8.

**अग्नीत्प्रथम** (agnīt-prathama) *adj.* having Agnīdh as the first आग्नेयं पुरोडाशम्…चतुर्धा करोति । तं यजमानो न्यादिशतीदं ब्रह्मण इदं होतुरिदमध्वर्योरिदमग्नीध इति । अग्नीत्प्रथमान् होतृप्रथमान् वा ĀpaS'S. iii. 3.4.

**अग्नीत्प्रभृति** (agnīt-prabhṛti) *adj.* beginning with Agnīdh (i. e. Agnīdh etc.) अग्नीत्प्रभृतीनामेवर्त्विक्त्वम् MayūMāli. 328.7 (*on* iii. 7.17)

**अग्नीत्प्रयोज्य** (agnīt-prayojya) *adj.* which is to be used (i. e. recited) by Agnīdh यथैवाध्वर्यवमन्त्रे अग्नेः पत्नीवच्छब्दसामानाधिकरण्यं तथाग्नीत्प्रयोज्ये याज्यामन्त्रे त्रयस्त्रिंशद्देवानामपि MīmāKau. ii. 293.18 (*on* iii. 2.36)

**अग्नीत्प्रेषण** (agnīt-preṣaṇa) *n.* call to (the priest) Agnīdh अग्नीत्प्रेषणे परस्य च P. viii. 2.92; अग्नीधः प्रेषणं अग्नीत्प्रेषणम् । तत्रादेः प्लुतो भवति परस्य च KāśiVṛ. *on* P. viii. 2.92.

**अग्नीत्य** (agnītya) *m.* name of a people उत्तरतः …। कैकयवसातियामुनभोगप्रस्थार्जुनायनाग्नीध्राः (v. l. °अग्नीत्याः) BṛSaṁ. 14.25.

**अग्नीत्संप्रदानक** (agnītsampradāna-ka) *adj.* related to the giving away to Agnīdh अप्राप्तमेव वनिष्ठु(? ष्ठु) संस्कारार्थमग्नीत्संप्रदानकं प्राकृतं हरणम् BhāṭṭDī. iv. 75.23 (*on* x. 7.5); S'āstrDī. 759.11 (*on* x. 7.11); MayūMāli. 759.31 (*on* x. 7.5)

**अग्नीद्वचन** (agnīd-vacana) *n.* mentioning of Agnīdh यदि प्रासनवाक्ये भक्षयितुं प्रास्येतेति भक्षसंयोगः श्रूयेत तदा यस्य कस्यापि भक्षणमनियमेन प्राप्नोतीत्यग्नीद्वचनं नियमार्थं स्यात् MayūMāli. 759.10 (*on* x. 7.5).

**अग्नीध्** (agnī́dh) *m.* name of one of the priests in a S'rauta Sacrifice, the priest who kindles the fire दुदाति…अनुड्वाहमग्नीधे TaiS. I. viii. 18.1 = TaiBr. I. viii. 2.5; अगा३नग्नीदित्याह TaiS. II. vi. 5.6; अग्नीधं ब्रूयात् । एतां संकष्य जुहुधि MaiS. i. 4.13; ते वै पञ्चहोतारो न्युसीदन्वरुणगृहपतयोऽग्निर्होतासीदश्विनाध्वर्यू रुद्रो अग्नीद् बृहस्पतिरुपवक्ता MaiS. i. 9.4; TaiĀ. iii. 2.1 (284.1); यज्ञस्य वा एताः पत्नेजनीः पुंसामग्नीत् स्त्रीणां नेष्टा यदग्नीन्नेष्टुरुपस्थमासीदति मिथुनं वा एतत्संभवतः MaiS. iv. 5.4; अग्नीद्रजनरौहिणौ पुरोडाशावधिश्रय MaiS. iv. 9.2; TaiĀ. iv. 4.1 (410.2); पृथिवी होता । द्यौरध्वर्युः । त्वष्टाग्नीत् । मित्र उपवक्ता KapiKaS. 8.11; 44.4; अयाडग्नीत् VājaS. 7.15; होता यक्षदग्निमाग्नीध्राद्‌तुना सोमं पिबत्वग्नीद्यज ṚV. Khila. v. 7(5).4; तेषां च्चित्तिः स्रुगासी३त् । … विज्ञातमग्नीदासी३त् । … सामाध्वर्युरासी३त् AitBr. 24.6 (643); अग्निरेवाग्नीत् PañcBr. xxv. 18.4; xviii. 9.18; पुनः परीहीत्यग्नीधं ब्रूयात् KauṣīBr. 10.3 (47.3); I. i. 6.9; स योऽसावग्नीदुत्तरतः पर्येति S'atBr. 1. ii. 4.13; पात्नीवतस्याग्नीध्रो यजति रेतो वै पात्नीवतः … अग्नीत् पत्नीषु रेतो धत्ते GopBr. ii. 4.5; (होता) उपोत्थायाध्वर्योर्दक्षिणेन प्रदेशेन दक्षिणमंसमन्वारभ्य जपति सव्येनाग्नीधो दक्षिणम् S'āṅkhāS'S. i. 6.3; x. 14.4; अग्नीदग्नीन् विहर (TaiS.) BaudhS'S. i. 213.8; इदं यजमानस्येत्यध्वर्युर्यजमानभागं निर्दिश्य स्थविष्ठमग्नीधे षडवत्तं संपादयति ĀpaS'S. iii. 3.5; अग्नीत्परिधींश्चाग्निं च त्रिस्त्रिः समृड्ढि MānS'S. 19.16; दक्षिणाकालेऽजमग्नीधे ददाति MānS'S. 33.17; वेदिं परिसमुह्य वितृतीयेऽग्नीदुत्तरत उत्करं करोति KātyS'S. ii. 6.12; अग्नीधः शरणे रञ् वक्तव्यो भसंज्ञा च वक्तव्या । अग्नीधः शरणमाग्नीध्रम् MahāBh. ii. 318.23 (*on* iv. 3.120); अग्नीधे ब्रह्मणे होत्रे…ददातीति तृतीयत्वम् BhārS'i. 47; अग्नीधश्च वनिष्ठुरध्यूध्नीवत् MīmāSū. x. 7.17 किं वनिष्ठुरग्नीधे विकारो भक्षस्य उत तस्य भागनियमः S'ābaBh. 2031.9 (*on* x. 7.17); अवश्यं तावदग्नीधात्मीयाः पदार्थाः प्रागेव कर्मप्रक्रमादवगन्तव्याः TantrVā. 54.9 (*on* i. 2.33); अग्नेरग्नीदध्येषणं करोति TantrVā. 808.5 (*on* iii. 2.37); स्फ्यस्य धारणं तावदग्नीध एकान्तेन स चाध्वर्युं क्षिण्वीत TantrVā. 1175.18 (*on* iii. 8.23); निर्वापादीनां किं प्रतिप्रस्थाता कर्तोतालंकरणात्प्राग् ये पदार्था ऊर्ध्वं निर्वापात्तानलङ्करणेन लक्षयित्वा अग्नीत् कर्ता विधीयते ṬupṬ. 58.16 (*on* v. 1.25); NyāyMañ. i. 261.25; BṛĀraUBhVā. (Sambandha.) 504; केवञ्जनामा ग्रामः …दत्तः…मित्रावरुणाध्वर्युहोतृब्राह्मणाच्छंसिग्रावस्तुदग्नीत्प्रभृतीनां ऋत्विजां वस्त्रालंकारसत्कारदानदक्षिणादिनिमित्तम् EI. vii. 41.57; NyāyRaMā. 165.14; गृहेऽग्नीधो रण् धश्च SiddhaHe. vi. 3.174; SaraKaṇṭhā.(Gr.) v. 4.45; NyāyMāVi. 166.21 (*on* iii. 4.21); ब्रह्मा वेदत्रयोक्तस्य प्रत्यवेक्षणं करोति । तस्य पुरुषास्त्रयः–ब्राह्मणाच्छंसी अग्नीत् पोता चेति NyāyMāVi. 200.7 (*on* iii. 7.17); BhāṭṭDī. ii. 54.8 (*on* iii. 7.17); MīmāKau. ii. 44.3 (*on* ii. 3.10); केषुचित्प्रैषेषु अग्नीदित्यादिसंबोधनविभक्तिसामानाधिकरण्याच्च MayūMāli. 338.21 (*on* iii. 8.11); अग्निमिन्धे अग्नीत् तस्य स्थानमाग्नीध्रम् SiddhāKau. 265B.3; 610B.8; Prasā. i. 73.18; i. 783.19.

**अग्नीध्र** (agnīdhra) *m.* [Debru. p. 858] **A** the priest who kindles the fire चातुष्प्राश्यञ्च प्राश्नत्सु … दद्यात् … पष्ठौहीमग्नीध्राय LāṭyāS'S. iv. 12.8; तृतीयिनोऽच्छावाङ्नेष्ट्रग्नीध्रप्रतिहर्तारः ManvaMu. 328.3 (*on* 8.210); VyavaNi. 284.3; **B i** name of one of the ten sons of Manu आ(v. l. अ [PW.])-ग्नीध्रश्चाग्निबाहुश्च … मनोः स्वायंभुवस्यैते दश पुत्राः HariVaṁ. 7.9; VāyuP. i. 31.17; ViṣṇuDhaP. i. 176.5; **B ii** name of one of the ten sons of Priyavrata (and grandsons of Manu) जम्बूद्वीपम् … साग्नीध्राय ददौ पिता ViṣṇuP. ii. 1.12; प्रियव्रतस्य दश पुत्रा बभूवुः … अग्नीध्रोऽग्निबाहुः VarāP. 74.4(14); **B iii** name of one of the ten sons of Kardama Prajāpati (and grandsons of Priyavrata) कर्दमस्य प्रजापतेः । कन्ये द्वे दश पुत्राश्च…अग्नीध्रो मेधातिथिश्च MārkP. 53.15; अग्नीध्रश्च वपुष्मांश्च VāyuP. i. 33.9; **B iv** name of one of the seven sages belonging to the age of Bhautya Manu अग्नीध्रश्चाग्निबाहुश्च … सप्तर्षयः स्मृताः MārkP. 100.3; BrahmāṇḍP. iii. 1.112; ViṣṇuDhaP, i. 189.3; **C** name of a particular fire क्रतुः प्रवाहणोऽग्नीध्रः … विधीयन्ते यथास्थानं सौत्येह्नि सवनक्रमात् VāyuP. i. 29.18; MatsyaP. 51.17; **D** name of one of the hells अग्नीध्रश्चाप्रतिष्ठश्च … चत्वारिंशच्छतं प्रोक्तं महानरकमण्डलम् S'ivaP. v. 8.35 (415B.8)

**अग्नीध्रादि** (agnidhrādi) *adj.* Agnīdhra (a son of Priyavrata) and others योऽसौ मनुपुत्रः प्रियव्रतो नाम …। तस्य अग्नीध्रादयो दश पुत्रा बभूवुः NāraP. 30.3.

**अग्नीध्री** (agnīdhrī) *f.* (? ध्रा) [PW]

**अग्नीध्रीय** (agnīdhrīya) *n.* name of a country (वर्षम्) अग्नीध्रीयं हिमाह्वयम् । यस्याधिपतिर्नाभेः ऋषभः पुत्रो बभूव NaraP. 30.5.

**अग्नीन्द्र** (agnīndra) *m.* chief of fires निर्वाणादिश्च पूजार्हः स्वाहान्तोऽग्नीन्द्र इत्यपि MahāP. 40.23; 40.25.

**अग्नीन्द्रौ** (agnīndr-áu) *m.* (du.) [Dv. Cpd. accent: VājaPrāti. 2.55; P. vi. 2.142] Agni and Indra अ॒ग्नीन्द्राभ्यां त्वा VājaS. 7.32; अग्नीन्द्राविन्द्राग्नी वा विश्वेदेवाः ĀśvaS'S. I. ii. 9.13; MānS'S. ii. 10.3; CāndrVyā. ii. 2.48; GaṇRa. 2.86 (127)

**अग्नीन्धन** (agnīndhana) *n.* [Debru. p. 186] **A** (daily) offering of fuel to fire, feeding the sacred fire अग्नीन्धनभैक्षचरणे GautDS. i. 2.12 (comm. अग्नीन्धनं समिद्धोमः); iii. 5.20; अग्नीन्धनं भैक्षचर्याम् …। आ समावर्तनात्कुर्यात् … द्विजः ManuSm. 2.108; BṛhaspaSm. 382.68; ब्रह्मचारिणोऽग्नीन्धनभिक्षाचरणे ManuBh. i. 82.11 (*on* 2.25); i. 375.9 (*on* 4.128); आश्रमधर्मोऽग्नीन्धनभैक्षचर्यादिः Mitā. 2.2 (*on* 1.1); अग्नीन्धनमग्निपूजा SmṛtiCan. i. 86.3; S'ivārkaMaDī. ii. 407.22 (*on* iii. 4.42); अग्नीन्धनमग्निकार्यम् ViraMi.(Saṁskāra.) 448.12; MayūMāli. 214.10 (*on* iii. 2.4); अग्नीन्धनं होमः BālamBha. i. 3.28 (*on* 1.1); अग्नीन्धनं त्वग्निकार्यम् NāmaMāli. 346; S'abdaRa.(Su.) 3.298; **B** setting up of the sacrificial fires अग्नीन्धनमग्न्याधानम् BrahmSūBh.(Rā.)

**अग्न्यध्यवसाय** ( agny–adhyavasāya ) *m.* determinate knowledge of (the existence of) fire एवं प्रसिद्धसमयस्यासंदिग्धधूमदर्शनात् ··· अग्न्यध्यवसायो भवति PadārthaSaṁ. 205. 12; Kiraṇā. 296. 18; अनुमानम्···धर्मिविशेषसंबन्धितया साध्याविनाभावित्वनिश्चय इत्येके अग्न्यध्यवसाय इत्यन्ये TarkBhā.(Mo.) 13. 8.

**अग्न्यनतिक्रम** ( agny–anatikrama ) *m.* absence of over–cauterization (अर्शोयन्त्रम्) द्विच्छिद्रं दर्शनार्थमेकच्छिद्रं कर्मणि । तथा हि । मु(?मु)खेन दर्शितं शस्त्रक्षाराग्न्यनतिक्रमश्च छिद्रं तु त्र्यङ्गुलायतम् AṣṭāSaṁ. i. 168. 19 (1. 34)

**अग्न्यनन्तर** ( agny–anantara ) *adj.* subsequent to the world of fire पाठक्रमप्राप्तस्याग्न्यनन्तरत्वस्य बाधितत्वात् आदित्यात् पूर्वमेव वायुः प्राप्तः S'rutaPra. ii.615. 28 (*on* iv. 3. 2)

**अग्न्यनपेक्ष** ( agny–anapekṣa ) *adj.* independent of fire अग्न्यनपेक्षत्वात् तु ब्रह्मयज्ञः कामं प्रवर्तेत । भूतपितृयज्ञयोरप्यग्न्यनपेक्षत्वात् प्रवृत्तिप्राप्तावाह BālaKrī. i. 94. 17 (*on* 1. 102)

**अग्न्यनाधान** ( agny–anādhāna ) *n.* not setting up of sacrificial fires (अनाहिताग्निता ··· उपपातकम्) सत्यधिकारेऽग्न्यनाधानम् ManvaMu. 462. 26 (*on* 11. 65); स्वेच्छामात्रेणाग्न्यनाधाने प्रायश्चित्तम् VīraMi. 181. 25 (*on* 1. 99)

**अग्न्यनिलप्रभाव** ( agnyanila–prabhāva ) *adj.* having the force or vehemence of fire and wind तैः कायमस्याग्न्यनिलप्रभावैर्विदार्य बाणैः MahāBhā. vii. 115. 16.

**अग्न्यनुकार** ( agny–anukāra ) *m.* similarity with fire न हि बाष्पधूमत्वेन ज्ञाना(?बाष्पात् धूमत्वेन ज्ञाता)दग्न्यनुकारानुमानम् ··· युक्तं धूमानुकारत्वेन हि ज्ञायमानान्नीहारान्नाग्न्यनुकारजपापुञ्जप्रतीतिर्दृष्टा Kāvyānu.(He.) 71. 27 (comm.)

**अग्न्यनुकृति** ( agny–anukṛti ) *adj.* imitating fire, acting like fire सुतप्तोऽयःपिण्डोऽग्न्यनुकृतिरग्निं दहन्तमनुदहति BrahmSūBh.(S'aṅ.) 182. 5 (*on* i. 3. 22)

**अग्न्यनुगति** ( agny–anugati ) *f.* extinction of sacred fire तेन मलमासेऽपि प्रायश्चित्तभूतमग्न्याधेयमग्न्यनुगत्यनन्तरं कर्तव्यं न प्रतिषिध्यते SmṛtiCan. v. 110. 12 = CaturCin. iii(2). 40. 21.

**अग्न्यनुगम** ( agny–anugama ) *m.* extinction of (sacred) fire हविरार्त्यधिकरणन्यायेन अग्न्युभयत्वस्याविवक्षायामग्न्यनुगममात्रस्य शाब्दबोधवेलायां निमित्तत्वावगतावपि निमित्ते विधीयमानमाधानं सहितयोरेवाग्न्योरुत्पादनक्षमम् PūrvottaVāNaMā. 313. 8; S'ivārkaMaDī. i. 254. 18 (*on* i. 1. 21); ii. 422. 22 (*on* iv. 1. 1); VidhiRa. 29 (151. 2)

**अग्न्यनुगमन** ( agny–anugamana ) *n.* extinction of (sacred) fire अन्यतराग्न्यनुगमनेऽपि पुनराधानप्रसक्तौ शब्दान्वयबोधवेलायामुभयत्वप्रहाणेनाग्न्यनुगममात्रस्य निमित्तत्वावगतावपि निमित्ते विधीयमानमाधानं सहितयोरेवाग्न्योरुत्पादनक्षमम् VidhiRa. 29 (151. 1)

**अग्न्यनुग्रह** ( agny–anugraha ) *m.* (syllable) sacred to Agni आप्यमण्डलगं पिण्डमग्न्यनुग्रहवर्जितम् ।···विषं सद्यो विनाशयेत् ĪśānS'iPa. i. 31. 75.

**अग्न्यनुपलम्भ** ( agny–anupalambha ) *m.* non-perception of fire व्यतिरेके अग्न्यनुपलम्भः धूमानुपलम्भ इति द्वयम् Bhāsk. i. 359. 19 (*on* i. 7. 4)

**अग्न्यनुबन्धित्व** ( agnyanubandhi–tva ) *n.* the state of being invariably followed by fire कार्यस्य स्वसाधनप्रयोजकत्वं लोकत एव सिद्धं धूमस्येवाग्न्यनुबन्धित्वम् NyāyRaMā. 195. 10.

**अग्न्यनुबन्धिन्** ( agnyanubandh–in ) *adj.* **i** which is invariably concomitant with fire कार्यस्य स्वसाधनप्रयोजकत्वं लोकत एव सिद्धं धूमस्येवाग्न्यनुबन्धित्वम् NyāyRaMā. 195. 10; **ii** which is connected with fire अग्न्यनुबन्धिषु भूलोकादितत्तद्वस्तुविशेषदृष्ट्यो विधीयन्ते S'ivārkaMaDī. ii. 369. 22 (*on* iii. 3. 50)

**अग्न्यनुमान** ( agny–anumāna ) *n.* inferential knowledge of fire धूमादग्न्यनुमानस्य वस्त्वालम्बनता भवेत् S'lokaVār. 5 (4). 147 (394. 1); धूमेनाग्न्यनुमानं तु त्वयाप्यङ्गीकृतं ननु SarvaSiSaṁ. 3. 5; 6. 12; NyāyMañ. i. 102. 24; अनग्निके देशेऽग्न्यनुमानम् NyāyKa. 179. 19; 206. 12; यदि संयोगी व्याप्यः रसाद्रूपानुमानं न स्यात् अथ समवायी धूमादग्न्यनुमानम् Kāśi. iii. 11. 10 (*on* 5 (4). 10); कार्यं वा धूमादि अग्न्याद्यनुमाने (v. l. अग्न्यनुमाने) ··· हेतुर्भवति PratyabhiVi. ii. 176. 1 (*on* ii. 4. 11); धूमादग्न्यनुमानं न स्यादिति NyāyKu. 169. 12.

**अग्न्यनुमानसिद्धि** ( agnyanumāna–siddhi ) *f.* achievement of the inferential knowledge of fire नारिकेलद्वीपदेशवासिनां न धूमेनाग्न्यनुमानसिद्धिः Bhāsk. ii. 84. 15 (*on* ii. 3. 2)

**अग्न्यनुमापक** (agny–anumāpaka) *adj.* bringing about the inferential knowledge of fire प्रत्येकमग्न्यनुमापकाभ्यां गन्धविशेषधूमाभ्यां सहिताभ्यामपि तदनुमानं दृश्यते NyāyRa. 377. 18 (*on* 5(4). 95); प्रथमं यन्महानसे धूमज्ञानं तत्कथं नाग्न्यनुमापकम् TarkBhā.(Ke.) 38. 13.

**अग्न्यनुमिति** ( agny–anumiti ) *f.* inferential cognition of fire तस्य ··· अग्न्यनुमितिर्भवत्येव NyāySu.(Ja.) 470B. 12 (*on* iii. 2. 1)

**अग्न्यनुमितिप्रसक्ति** ( agnyanumiti–prasakti ) *f.* contingency of the inference of fire नारिकेलद्वीपवासिनो धूमदर्शनादग्न्यनुमितिप्रसक्तिः NyāySu.(Ja.) 261A. 1 (*on* ii. 1. 2)

**अग्न्यनुयजन** ( agny–anuyajana ) *n.* sacrifice performed after the sacrifice called Agni अग्निष्टोमादियज्ञानामग्न्यनुयजनत्वरूपगुणाम्नानात् BhāṭṭDī. i. 158. 19 (*on* ii. 3. 10)

**अग्न्यनुवाकतस्** (agnyanuvāka–tas) *adv.* with (the recitation of) the Vedic section beginning with the word *agni* सायमग्न्यनुवाकतः । अपः पीत्वा तथा मध्ये पुनः प्रोक्षणमाचरेत् S'ivaP. i. 13. 25 (12A. 3)

**अग्न्यनुवाद** ( agny–anuvāda ) *m.* restatement of the deity Agni न ह्यत्राग्न्यनुवादेन बुधन्वत्ता विधीयते MayūMāli. 709. 16 (*on* x. 4. 16)

**अग्न्यनुष्णतानुमान** ( agnyanuṣṇatānumāna ) *n.* inference about the absence of heat in fire अग्न्यनुष्णतानुमाने हि न व्याप्तिग्रहणप्रतिघातादप्रामाण्यम् NyāyMañ. i. 181. 27.

**अग्न्यनुष्णत्वसाधन** ( agnyanuṣṇatva–sādhana ) *n.* establishment (through inference) of the absence of heat in fire अग्न्यनुष्णत्वसाधने कृतकत्वं त्रिलक्षणमपि बाधकविधुरितविषयमित्युदाहृतम् NyāyMañ. i. 101. 24.

**अग्न्यन्त** ( agny–anta ) *m.* **1** periphery of the fire–altar तदग्न्यन्तेषु न विद्यन्ते BaudhS'uS. 2. 24; **2** proximity to fire (शिष्यं) कृतोक्तकृत्यमग्न्यन्तं नीत्वा दक्षिणतो गुरुः । निदध्यात्प्रणवे पीठे MṛgendraT. ii. 7. 65; *adj.* **1** ending with cremation अक्लेद्यमसिनाग्न्यन्तं कबन्धवधमभ्ययुः Bhaṭṭi. 7. 80; **2** (the word) ending with the vowel *i* or *u* अग्न्यन्तैः ऋ(?इ)कारान्तैरुकारान्तैः ··· अद्भुताद्भुतं काव्यं भवति KāvyKaVṛ. 76. 27 (3. 4); 79. 12 (3. 4)

**अग्न्यन्तर** ( agny–antara ) *n.* **1** another fire अग्नित्वलक्षणस्य धूमदर्शनानन्तरं विनाशात् पुनरग्न्यन्तरे धूमान्तरदर्शनम् TātpaṬ.(U.) 308. 21 (*on* 5(4). 12); श्रौतमग्न्यन्तरे क्रियमाणमकर्मैव स्यात् BālaKrī. i. 91. 12 (*on* 1. 96); अग्न्यन्तरमुपादेयं वैदिकं लौकिकं तथा BrahmP. 148. 9; देवतादीनामपि विसरणादिनापचारे किं देवतान्तरं अग्न्यन्तरम् ··· प्रतिनिधेयमुत न S'āstrDī. 473. 8 (*on* vi. 3. 5); 540. 9 (*on* vii. 3. 9); HārLa. 137. 19; पितृयज्ञ एवोपस्थानार्थमग्न्यन्तरमुपादेयं नेति चिन्त्यते SaṅkarKāBh. 22. 7 (*on* i. 2. 27); आहवनीयस्थानापन्नमग्न्यन्तरमुख्याग्निः MayūMāli. 881. 16 (*on* xii. 4. 10); वचनात्तु कतिपयकर्माण्यग्न्यन्तरेऽपि BhāṭṭCan. 17. 14 (*on* xiii. 2. 14); 18. 11 (*on* xiii. 2. 16); धूर्तमतं तु पश्चान्मृताया (यजमानभार्यायाः) एवाग्न्यन्तरेण दाहः BālamBha. i. 242. 8 (*on* 1. 89); **2** another god of fire अग्न्यन्तरकल्पने च तस्याग्न्यन्तरं प्रति रूपत्वानुपपत्तेश्च S'rutaPra. ii. 185. 21 (*on* i. 4. 29)

**अग्न्यन्तरविधान** ( agnyantara–vidhāna ) *n.* injunction relating to another fire तत्सद्भावे तु (गृह्याग्निसद्भावे तु) तेनैव स्वकार्यसिद्धौ किमग्न्यन्तरविधानेन Aparā. 490. 24 (*on* 1. 236)

**अग्न्यन्तरविशिष्टाधान** ( agnyantaraviśiṣṭādhāna ) *n.* placing or keeping the (*ukhya*) fire along with fire of another kind (e. g. fire on the tree due to the lightning-stroke) न त्वग्न्यन्तरविशिष्टाधानं विशिष्टविधिगौरवप्रसङ्गात् MayūMāli. 880. 6 (*on* xii. 4. 7)

**अग्न्यन्तरवैयर्थ्य** ( agnyantara–vaiyarthya ) *n.* futility of another fire अग्न्यन्तरवैयर्थ्यं च नाश्रितं भवति BhāṭṭDī. iv. 163. 2 (*on* xi. 2. 8)

**अग्न्यन्तरसंसर्ग** ( agnyantara–saṁsarga ) *m.* contact with another fire (e. g. the fire on the tree due to the lightning–stroke) उख्यस्याहवनीयाग्नेरग्न्यन्तरसंसर्गेऽपि च वाचनिकत्वान्न दुष्यति BhāṭṭDī. iv. 277. 15 (*on* xii. 4. 7)

**अग्न्यन्तरसाधारण्य** ( agnyantara–sādhāraṇya ) *n.* the state of being common with other fires अत एव नाग्न्यन्तरसाधारण्येनाप्येतेषां ग्रहणम् BhāṭṭDī. iv. 243. 16 (*on* xii. 2. 1)

**अग्न्यन्तरस्वीकार** ( agnyantara–svīkāra ) *m.* resorting to another fire अग्न्यर्थमिलनेन गृह्याग्निभावे तु नाग्न्यन्तरस्वीकारः SmṛtiCan. v. 331. 7.

**अग्न्यन्तराक्षेप** ( agnyantarākṣepa ) *m.* assumption of another fire अग्न्यन्तराक्षेपे गौरवात् BhāṭṭDī. iv. 243. 14 (*on* xii. 2. 1)

**अग्न्यन्तरापेक्षा** ( agnyantarāpekṣā ) *f.* expectancy or need for another fire यथा ह्यग्न्यादीनाम्···परत्रोपकुर्वतां तदुपकारजननायात्मन्यग्न्यन्तरापेक्षा न विद्यते NyāyKu. 75. 10.

**अग्न्यन्तराभाव** ( agnyantarābhāva ) *m.* absence of another fire पत्न्याःखेतायामेव पितृमेधः यजमानस्य त्वौपासनेन, तस्याग्न्यन्तराभावात् SmṛtiCan. ii. 444. 7.

**अग्न्यन्तरावधान** ( agnyantarāvadhāna ) *n.* placing another or diffe-

rent fire अग्न्यन्तरावधानमात्रकरणेऽप्याहवनीयरूपस्य नित्यस्योल्यस्य बाधाभावाद-त्रैव होमादीनि BhāṭṭDī. iv. 277. 16 (*on* xii. 4. 7)

**अग्न्यन्नत्व** (agnyanna-tva) *n.* characteristic of having fire as (its) food (i. e. consuming fire) अपामग्न्यन्नत्वम् S'rīBh. 735. 7 (*on* iv. 2. 12)

**अग्न्यन्वय** (agny-anvaya) *m.* concomitance with fire (प्रार्थयामहे) नापि सर्वधूमवतामग्न्यन्वयम् NyāyRa. 460. 18 (*on* 5(7). 40); तत्र हि धूमस्याग्न्यन्वयो महानसादौ दृश्यते MānaMe. 54. 8; तदन्वयः अग्न्यन्वयः MayūMāli. 212. 16 (*on* iii. 2. 2)

**अग्न्यन्वाधान** (agny-anvādhāna) *n.* adding fuel to the sacred fires व्युदितमग्न्यन्वाधानम् BaudhS'S. ii. 119. 7; ĀpaS'S. i. 14. 17; iv. 2. 8; x. 4. 12; x. 4. 13; अग्न्यन्वाधानमध्वर्युर्यजमानो वा KātyS'S. ii. 1. 2; पूर्वेद्युरग्न्यन्वाधानमग्निपरिस्तरणं च HirS'S. i. 4. 16; धारणार्थत्वात्सोमेऽग्न्यन्वाधानं न विद्यते MīmāSū. xii. 1. 19; xii. 2. 18; तदेतदग्न्यन्वाधानम् ··· कृतं भवति S'ābaBh. 1131. 1 (*on* iii. 8. 26); 2107. 1 (*on* xi. 1. 10); नैतेन सकलेन मन्त्रेणाग्न्यन्वाधानं साधितं स्यात् TantrVā. 1176. 24 (*on* iii. 8. 26); अग्न्यन्वाधानादीनां करिष्यमाणं प्रधानं निमित्तम् ṬupṬ. 51. 11 (*on* v. 1. 8); 62. 22 (*on* v. 1. 29); 168. 10 (*on* viii. 1. 2); 320. 19 (*on* xii. 1. 24); अग्न्यन्वाधानब्रह्मवरणादेरपकर्षस्याभावात् TantrRa. 290. 14 (*on* v. 1. 29); यस्तृतीयोंऽश इत्थंभावोऽग्न्यन्वाधानादिर्विध्यन्तत्वेन परिकल्पितः S'āstrDī. 81. 5 (*on* i. 1. 5); 102. 12 (*on* ii. 1. 1); 239. 3 (*on* iii. 3. 4); अग्न्यन्वाधानप्रयाजावघातादिभिरुपकारं संपाद्य भावयेत् NyāyMāVi. 64. 9 (*on* ii. 1. 1); क्रमस्त्वग्न्यन्वाधानेन सह तस्य न क्लृप्तः Aparā. 220. 13 (*on* 1. 154); 460. 7 (*on* 1. 225); प्रतिपद्योगे तु सन्धेः पूर्वमग्न्यन्वाधानादित्यविरोधः SmṛtiCan. v. 38. 3; v. 43. 13; v. 409. 1; 'पक्षान्तं कर्म' अग्न्यन्वाधानम् CaturCin. iii(1). 1064. 19; iii(2). 318. 1; iii(2). 609. 10; अग्न्यन्वाधानादिब्राह्मणतर्पणान्तमाग्नेयप्रयोगं समाप्य BhāṭṭDī. iv. 144. 6 (*on* xi. 1. 8); स च व्यापारः ··· क्वचिच्चाग्न्यन्वाधानादिब्राह्मणतर्पणान्तः MīmāNyāPra. 272. 13; अत्र कोऽसौ व्यापार इत्यपेक्षितो व्यापारविशेषोऽग्न्यन्वाधानादिः MayūMāli. 102. 19 (*on* ii. 1. 1); 806. 14 (*on* xi. 2. 1)

**अग्न्यन्वाधानक्रिया** (agnyanvādhāna-kriyā) *f.* the act of adding fuel to the sacred fires अग्न्यन्वाधानक्रिया तावदाध्वर्यवी BhāṭṭDī. ii. 73. 16; (*on* iii. 8. 13)

**अग्न्यन्वाधानदिन** (agnyanvādhāna-dina) *n.* the day on which there is the addition of fuel to the sacred fires व्रतमग्न्यन्वाधानदिनम् Aparā. 225. 17 (*on* 1. 154)

**अग्न्यन्वाधानप्रतिपत्क** (agnyanvādhānapratipat-ka) *adj.* [*f.* -ā] which begins with the addition of fuel to the sacred fires अग्न्यन्वाधानप्रतिपत्का इडान्ताः संतिष्ठेरन्निति बौधायनः BaudhS'S. iii. 173. 3.

**अग्न्यन्वाधानरहित** (agnyanvādhāna-rahita) *adj.* [*f.* -ā] devoid of the act of adding fuel to the sacred fires येन ··· अग्न्यन्वाधानरहितायां विकृतौ ···ऊह्येत BhāṭṭDī. iii. 67. 20 (*on* ix. 1. 11)

**अग्न्यन्वाधानादिक** (agnyanvādhānādi-ka) *adj.* [*f.* -ā] consisting of the addition of fuel to the sacred fires as the first rite यजेत अनयाग्न्यन्वाधानादिकयेतिकर्तव्यतयेति S'ābaBh. 1528. 17 (*on* vii. 1. 3); अर्थद्वारेणाग्न्यन्वाधाने( v. l. °नादिके )तिकर्तव्यतानुषज्यते ṬupṬ. 169. 6 (*on* viii. 1. 2); अग्न्यन्वाधानादिकमङ्गजातं विधीयते BrahmSūBh.(S'aṅ.) 754. 9 (*on* iii. 4. 47); स्वर्गं भावयेदनयाग्न्यन्वाधानादिकयेतिकर्तव्यतयेति NyāyMañ. i. 311. 22; ता एतास्तिस्र इष्टयो द्व्यहकालीनाः। यथा प्रकृतौ पर्वण्यग्न्यन्वाधानादिकं प्रतिपदीष्टिरिति द्व्यहकालीनत्वम्, तद्वत् NyāyMāVi. 272. 6 (*on* v. 1. 11)

**अग्न्यन्वाधानादिजनित** (agnyanvādhānādi-janita) *adj.* produced by the addition of fuel to the sacred fire etc. पदार्थप्रयोजनानामेककालत्वाद्यावत् क्रतूपकारो निर्वर्त्यते तावदग्न्यन्वाधानादिजनित उपकार आस्ते ṬupṬ. 61. 14 (*on* v. 1. 28)

**अग्न्यन्वाधानादिजन्य** (agnyanvādhānādi-janya) *adj.* liable to be produced by the addition of fuel to the sacred fires etc. व्यापारप्रकारस्तु अग्न्यन्वाधानादिजन्यदृष्टादृष्टोपकारसंपादनरूपः MayūMāli. 102. 20 (*on* ii. 1. 1)

**अग्न्यन्वाधानादिरूप** (agnyanvādhānādi-rūpa) *adj.* of the nature of adding fuel to the sacred fires etc. अग्न्यन्वाधानादिरूपे प्रथमपदार्थे याज्ञिकानां दर्शपूर्णमासारम्भत्वप्रसिद्धेरग्न्यन्वाधानमेव तत्त्वेनारम्भपदार्थः BhāṭṭDī. iii. 67. 16 (*on* ix. 1. 11)

**अग्न्यन्वाधानादिविधानकाण्ड** (agnyanvādhānādi-vidhānakāṇḍa) *n.* the injunctive portion prescribing the addition of fuel to the sacred fires etc. अपूर्णं यद्वाक्यं तत्पूरणसमर्थेनावयवेन बुद्धौ संनिहितेनैकवाक्यतां याति। यथा दर्शपूर्णमासाभ्यां यजेतेति विध्यादिः कथमिति विध्यन्तापेक्षः अग्न्यन्वाधानादिविधानकाण्डेन पाठाद् बुद्धौ संनिहितेनैकवाक्यतां याति S'ābaBh. 1585. 1 (*on* viii. 1. 2)

**अग्न्यन्वाधानादिव्यापार** (agnyanvādhānādi-vyāpāra) *m.* operation of adding fuel to the sacred fires etc. सा त्वपेक्षा कृत्स्ने वाग्न्यन्वाधानादिव्यापारे तदेकदेशे वा S'ābaBh. 2111. 4 (*on* xi. 1. 16)

**अग्न्यन्वाधानाद्यंश** (agnyanvādhānādy-aṁśa) *m.* rite of adding fuel to the sacred fires etc. आवश्यकश्चायमग्निप्रणयनव्रतोपायनाग्न्यन्वाधानाद्यंशो भवतोऽपि BhāṭṭDī. iv. 248. 6 (*on* xii. 2. 5)

**अग्न्यन्वाधानाद्यङ्गोपदेश** (agnyanvādhānādy-aṅgopadeśa) *m.* prescription of the subordinate rites of adding fuel to the sacred fires etc. तत्कथंभावापेक्षायामग्न्यन्वाधानाद्यङ्गोपदेशः S'āstrDī. 105. 11 (*on* ii. 1. 2)

**अग्न्यन्वाधानानन्तरम्** (agnyanvādhānānantaram) *adv.* after having added fuel to the sacred fires अग्न्यन्वाधानानन्तरं कर्ममध्येऽपशब्दप्रयोगे एव प्रायश्चित्तम् MayūMāli. 46. 7 (*on* i. 3. 9)

**अग्न्यन्वाधानाभाव** (agnyanvādhānābhāva) *m.* absence of adding fuel to the sacred fires सत्रेऽग्न्यन्वाधानाभावादूहानूहरूपप्रयोजनासंभवेऽप्यर्थानुसन्धानविशेषरूपं द्रष्टव्यम् BhāṭṭDī. ii. 74. 13 (iii. 8. 13)

**अग्न्यन्वाधानेतिकर्तव्यता** (agnyanvādhānetikartavyatā) *f.* procedure of adding fuel to the sacred fires अर्थद्वारेणाग्न्यन्वाधानेतिकर्तव्यतानुषज्यते ṬupṬ. 169. 6 (viii. 1. 2)

**अग्न्यन्वितस्वभाव** (agnyanvita-svabhāva) *adj.* having a nature coinciding with that of Agni अतोऽग्न्यन्वितस्वभावोऽयमिति निश्चीयते Kāśi. iii. 174. 9 (*on* 5(7). 42)

**अग्न्यपत्य** (agny-apatya) *n.* son or progeny of Agni अग्निजोऽहम् अग्न्यपत्यम् BṛĀraUBh. 778. 10 (*on* vi. 2. 14)

**अग्न्यपनयन** (agny-apanayana) *n.* taking away of fire एते हि परं विरेचनेन नाशमुपयान्त्यग्न्यपनयनेनाग्निगृहतापवत् AṣṭāSaṁ. i. 138. 11 (1. 27)

**अग्न्यपादानक** (agnyapādāna-ka) *adj.* being separated from fire तथाप्यग्न्यपादानकस्य तृणापचयस्य फलाभावात् TantrVā. 742. 15 (iii. 1. 14)

**अग्न्यपूर्व** (agny-apūrva) *n.* unseen result relating to Agni यदेतदग्न्यपूर्वं तत्संबन्धित्वेनैव चित्रिण्यादयोऽप्यप्रकरणपठितेनापि वाक्येन विनियुज्यन्ते NyāyMāVi. 186. 26 (*on* iii. 6. 12)

**अग्न्यपेक्षत्व** (agnyapekṣa-tva) *n.* dependence on sacred fires अग्निसाध्यकर्मणां चाग्न्यपेक्षत्वेन तद्विधीनामाधानसिद्धाग्निमन्तं प्रत्येव प्रवृत्तेः MīmāNyāPra. 241. 26.

**अग्न्यपेक्षा** (agny-apekṣā) *f.* [Inst.] **A** in consideration of fire, with reference to fire न त्वग्न्यपेक्षयौष्ण्यादेरभिव्यक्तस्वभावतः BṛĀraUBhVā. iv. 4. 312; **B** in comparison with Agni तन्निर्वचनमग्न्यपेक्षयापि परमेश्वरे समञ्जसतरम् S'ivārkaMaDī. i. 391. 29 (*on* i. 2. 29)

**अग्न्यप्रयोजकत्व** (agnyaprayojaka-tva) *n.* nature of not being a promoter of the sacred fires क्रतुविधीनामग्न्यप्रयोजकत्वस्यैव ··· तदनाक्षेपकत्वात् BhāṭṭCin. ii. 6. 1 (*on* i. 2. 1)

**अग्न्यबाधित** (agny-abādhita) *adj.* not afflicted by fire स नाग्न्यबाधितो जानन् लाभालाभविचित्रताम् TriṣaS'aPuC. ii. 1. 281.

**अग्न्यबोधकता** (agnyabodhaka-tā) *f.* absence of conveying the meaning of fire घटादेस्सत्यस्याप्यव्याप्तस्य अग्न्यबोधकता दृष्टा IṣṭaSi. 62. 23.

**अग्न्यभाव** (agny-abhāva) *m.* **A** absence of the sacred fires अग्न्यभावे तूदकमादित्यं वोपसमाधाय SāmaViBr. i. 3. 2; MahāBhā. xiii. 85. 55; अग्न्यभावेऽप्सु वा पुनः। पितॄन् प्रीणाति यो भक्त्या पितरः प्रीणयन्ति तम् HariVaṁ. 13. 67; अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत् ManuSm. 3. 212; LikhiSm. 29; अग्न्यभावेऽपि विप्रस्य प्रा(? पा)णावपि जलेऽथ वा MatsyaP. 15. 32; PadmP. v. 9. 60; शूद्रस्याग्न्यभावादनधिकारोऽग्निहोत्रादिष्विति S'ābaBh. 1378. 6 (*on* vi. 1. 29); अग्न्यभावेऽपि हि सामर्थ्यात् तस्यैवाग्नौकरणकल्पः BālaKrī. i. 149. 19 (*on* 1. 225); प्रणयनाभावेऽग्न्यभावेन तयोर्यागानुपपत्तेश्च GuruCandr. i. 452. 1; **B** absence of fire विधिस्तु यत्र धूमस्तत्राग्निरग्न्यभावे धूमोऽपि न भवतीति PadārthaSaṁ. 205. 10; नात्र धूमोऽग्न्यभावात् PramāMī. 45. 14 (*on* i. 2. 12); **C** loss of appetite [MW]

**अग्न्यभावलिङ्ग** (agnyabhāva-liṅga) *n.* sign or indication of the absence of fire येन तल्लिङ्गान्मानाभावधीस्स्यात् अग्न्यभावलिङ्गेनेव धूमाभावधीः IṣṭaSi. 304. 18.

**अग्न्यभावस्मृति** (agnyabhāva-smṛti) *f.* the Smṛti passage referring to the absence of the sacred fires अनग्नेर्लक्षणमुक्तम्। 'अग्न्यभावस्मृतिस्तावद्यावद्भार्या न विन्दति' इति BālamBha. i. 518. 7 (*on* 1. 236)

**अग्न्यभावापत्ति** (agnyabhāvāpatti) *f.* contingency of the absence of the sacred fires पितृयज्ञस्याग्न्यभावापत्तेः BhāṭṭCan. 14. 6 (*on* xiii. 2. 10)

**अग्न्यभिघात** (agny-abhighāta) *m.* contact with fire घटादेरामद्रव्यस्याग्निना सम्बद्धस्याग्न्यभिघातान्नोदनाद्वा तदारम्भकेष्वणुषु कर्माण्युत्पद्यन्ते Padārtha-

Saṁ. 106. 20; घटादेः: … अग्न्यभिघातान्नोदनाद्वा … कर्माण्युत्पद्यन्ते NyāySu.(Ja.) 371B. 2 (*on* ii. 2. 6)

**अग्न्यभिज्वालन** (agny-abhijvālana) *n.* enkindling of fire नानाविधा नैकार्था क्रिया पचतीति…तण्डुलावपनमेधोपसर्पणमग्न्यभिज्वालनम् NyāyBh. 110. 9 (*on* ii. 1. 43); NyāyVār. 257. 16 (*on* ii. 1. 40)

**अग्न्यभिदग्ध** (agny-abhidagdha) *adj.* burnt in fire अग्न्यभिदग्धं बीजं यथा प्ररोहासमर्थतामेति ParamāSā. 62.

**अग्न्यभिधान** (agny-abhidhāna) *adj.* expressive of Agni यः कश्चिद-ग्न्यभिधानो मन्त्रः प्राप्नोति S'ābaBh. 1933. 4 (*on* x. 4. 31); *n.* denotation of fire इत्यृक्सामशब्देन पृथिव्यग्न्यभिधानं च ऋक्सामाध्यासनिबन्धनम् S'rutaPra. ii. 578. 19 (*on* iv. 1. 6)

**अग्न्यभिधानत्व** (agnyabhidhāna-tva) *n.* the state of being expressive of Agni समुदायस्य…अग्न्यभिधानत्वं नाध्यवसीयते S'ābaBh. 1935. 23 (*on* x. 4. 35)

**अग्न्यभिधानपर** (agnyabhidhāna-para) *adj.* A denoting the name of Agni अग्निशब्दः…नाग्न्यभिधानपरः S'ābaBh. 1930. 1 (*on* x. 4. 25); B addressed to Agni यथा 'प्र ते यक्षि' इत्यग्न्यभिधानपरे मन्त्रे … दृष्टान्तपदम् … विध्यन्तरम्…कल्पयति BālaKrī. i. 17. 22 (*on* 1. 7)

**अग्न्यभिधानशिरस्कत्व** (agnyabhidhānaśiraska-tva) *n.* being headed by the name of Agni पृष्ठैरुपतिष्ठत इत्यत्रोपतिष्ठतिधातुवाच्ये समीपावस्थाने मन्त्र-करणकत्ववाचिनः … आत्मनेपदस्य निर्वाहार्थं स्वरूपेण मन्त्राकार्यस्याप्यग्निसमीपावस्थानस्य अग्न्यभिधानशिरस्कत्वविशिष्टत्वेन विशिष्टरूपेण मन्त्रकार्यत्वमुपपद्यते VidhiRa. 42 (219. 5)

**अग्न्यभिधायकत्व** (agnyabhidhāyaka-tva) *n.* the state of denoting Agni ननु सवित्रादिशब्दानामग्न्यभिधायकत्वं लक्षणया वाच्यम् MayūMāli. 592. 1 (*on* ix. 1. 11)

**अग्न्यभिधायित्व** (agnyabhidhāyi-tva) *n.* the state of denoting Agni यद्यपि प्रवरपदानाम्…अग्न्यभिधायित्वं प्रतीयते VīraMi.(Saṁskāra.) 601. 4.

**अग्न्यभिमन्त्रण** (agny-abhimantraṇa) *n.* reciting a *mantra* over Agni यत्तु नारदोक्तमग्न्यभिमन्त्रणं तत् विष्णुपितामहोक्तेनाग्न्यभिमन्त्रणेन विकल्प्यते SmṛtiCan. iii. 267. 16; Mitā. 205. 22 (*on* 2. 104); VyavaNi. 163. 11.

**अग्न्यभिमन्त्रणमन्त्र** (agnyabhimantraṇa-mantra) *m.* *mantra* to be recited over Agni त्वमग्ने सर्वभूतानामिति शोध्यस्याग्न्यभिमन्त्रणमन्त्रः Mitā. 214. 26 (*on* 2. 113)

**अग्न्यभिमानिदेवता** (agnyabhimāni-devatā) *f.* deity presiding over fire वैश्वानरो जाठराग्निरुत भूताग्निरुताग्न्यभिमानिदेवता VedāntKau. 70. 9 (*on* i. 2. 25)

**अग्न्यभिमानिन्** (agnyabhimān-in) *adj.* [*f.* -ī] presiding over fire योऽसावग्न्यभिमानी स्यात् ब्रह्मणस्तनयोऽग्रजः ViṣṇuP. i. 10. 14; अग्न्यभिमानिनी देवता वैश्वानरशब्देन न गृह्यते VedāntKau. 73. 12 (*on* i. 2. 28); अत्रापि अग्न्यभिमानिनी काचिद्देवता…अस्तु VivaPraSaṁ. 325. 9.

**अग्न्यभिमुख** (agny-abhimukha) *adj.* facing the fire कृत्वाग्न्यभिमुखौ पाणी स्वस्थानस्थौ सुसंयुतौ GobhiSm. 2. 77; अग्न्यभिमुखं पतनमिति बोधः La-S'abdeS'e. i. 539. 27.

**अग्न्यभिमुखत्व** (agnyabhimukha-tva) *n.* the state of facing the fire अग्न्यभिमुखत्वं शलभपतनस्य लोकप्रसिद्धया मनसा गृह्यते LaS'abdeS'e. i. 539. 24.

**अग्न्यभियजन** (agny-abhiyajana) *m.* name of a sacrifice अग्न्यभियजन उत्तरः NidāSū. 126. 11 (7. 9); 126. 19 (7. 9)

**अग्न्यभिरूढ** (agny-abhirūḍha) *adj.* offered in the sacred fire अग्नि-(? ग्न्य)भिरूढानां देवतामिरुपभुक्तानां क्षीरादीनामुत्क्रान्तजीवपरिष्वङ्गकत्वमयुक्तम् S'rutaPra. ii. 410. 33 (*on* iii. 1. 7)

**अग्न्यभिलाष** (agny-abhilāṣa) *m.* desire for fire °निकुञ्जनाग्न्यभिलाष°… °परिदेवितादिभिनुभावैरभिनयेत् NāṭyaS'ā. 7. 128(4)

**अग्न्यभिषेक** (agny-abhiṣeka) *m.* consecratory bath (of the sacrificer) in connection with the piling up of the fire-altar नात्राग्न्यभिषेकः BaudhS'S. ii. 223. 7.

**अग्न्यभिहार** (agny-abhihāra) *adj.* wherein offering is made to Agni अग्न्यभिहारौ दर्शपूर्णमासौ BaudhS'S. iii. 192. 13.

**अग्न्यभीज्या** (agny-abhījyā) *f.* name of a sacrifice, NidāSū. 126. 13 (7. 9); 126. 17 (7. 9)

**अग्न्यभ्याश** (agny-abhyāśa) *m.* [Loc.] in the vicinity of fire नाग्न्यभ्याशे…योगमाचरेत् S'ivaP. vii. 38. 48 (596B. 16)

**अग्न्यर्ककल्प** (agnyarka-kalpa) *adj.* resembling fire and the sun नाराचास्त्रं तनु विद्युत्प्रकाशं देहल्यां च स्थितमग्न्यर्ककल्पम् ĪśānS'iPa. ii. 12. 22.

**अग्न्यर्करूपिन्** (agnyarkarūp-in) *adj.* in the form of fire and the sun ह्रस्वाः स्वरा बिन्दुयुताः पुमांसोऽग्न्यर्करूपिणः ĪśānS'iPa. i. 1. 46.

**अग्न्यर्कसंकाश** (agnyarka-saṅkāśa) *adj.* resembling fire and the sun स तैरग्न्यर्कसंकाशैः शरैः…अभ्यर्दितो रामः MahāBhā. v. 180. 35; दह्यमानास्तु ते सर्वे शक्तैरग्निं त्ववेष्टयन् । दिव्यैरग्न्यर्कसंकाशैः शतशोऽथ सहस्रशः SkandP. v(3). 22. 26.

**अग्न्यर्कसंनिभ** (agnyarka-sannibha) *adj.* resembling fire and the sun तच्छ्रुत्वा ऋषिवाक्यं तु सशिष्योऽग्न्यर्कसन्निभः…व्यासः ParāSm. 1. 3.

**अग्न्यर्कसमप्रभाव** (agnyarkasama-prabhāva) *adj.* having the prowess like that of fire and the sun अग्न्यर्कसमप्रभावम् । … पप्रच्छ शिष्योऽत्रिजमग्निवेशः CaraS. vi. 20. 3 (1941 Ed.)

**अग्न्यर्कसोमदृश्** (agnyarkasoma-dṛś) *m.* name of Gaṇeśa (having the sun, the moon and fire for his eyes) जगज्जन्मलयोन्मेषनिमेषोऽग्न्यर्क-सोमदृक् (इति वैनायकं नाम्नां सहस्रमिदमीरितम्) GaṇeP. i. 46. 26.

**अग्न्यर्कोपमवर्चस्** (agnyarkopama-varcas) *adj.* lustrous or bright like fire and the sun रौक्मिणेयस्ततो बाणमग्न्यर्कोपमवर्चसम् । अभिमन्त्र्य महास्त्रेण संदधे शत्रुनाशनम् MahāBhā. iii. 17. 25.

**अग्न्यर्चन** (agny-arcana) *n.* worship of Agni विश्वानिनो दुर्गहेत्य-ग्न्यर्चनम् BālamBha. i. 350. 6 (*on* 1. 103)

**अग्न्यर्चिरादिक्रम** (agnyarcirādi-krama) *m.* sequential order of the deities of fire, light etc. तस्य च फलम् अग्न्यर्चिरादिक्रमेण…निर्दिष्टम् GītāBh. (S'aṅ.) 253. 2 (*on* 9. 1)

**अग्न्यर्चिस्** (agny-arcis) *n.* flame of fire तस्य हैतस्य पुरुषस्य रूपम् ।… यथाग्न्यर्चिः S'atBr. XIV. v. 3. 10; ता हि सर्वाः समं दुःखान्मुमुचुर्बाष्पजं जलम् । तुल्यमग्न्यर्चिषां तत्र शोकाग्निभयसंभवम् Rāmā. vii. 24. 4; प्रादेशिकः स्वेदरहितोऽग्न्यर्चिषेव दाहः प्लोषः AṣṭāSaṁ. i. 108. 5 (1. 20)

**अग्न्यर्जन** (agny-arjana) *n.* acquisition of the sacred fires (i. e. maintenance of the sacred fires) फलसत्त्वे एवाग्न्यर्जनम् BālamBha. iii. 128. 30 (*on* 3. 234)

**अग्न्यर्थ** (agny-artha) *adj.* [*f.* -ā] meant for fire गोऽग्न्यर्थे तृणमेधान्… स्ववदाददीत GautDS. ii. 3. 25; वानस्पत्यं मूलफलं दार्वग्न्यर्थं तथैव च । … अस्तेयं मनुरब्रवीत् ManuSm. 8. 339; MatsyaP. 227. 112; पवमानेष्टयो ह्यग्न्यर्थाः S'ābaBh. 1038. 2 (*on* iii. 6. 12); अग्न्यर्थं हि तद्धविः S'ābaBh. 1429. 7 (*on* vi. 4. 1); निर्मन्थनं यथारण्योरग्न्यर्थमुपपादितम् VākyaP. 2. 302; तास्तु निष्फलत्वादग्न्यर्था इत्युक्तम् TantrVā. 1085. 4 (*on* iii. 6. 12); तस्मादग्न्यर्थो यागः ṬupṬ. 185. 12 (*on* ix. 1. 6); 228. 24 (*on* ix. 4. 19); अग्न्यर्थं त्वाधानम् ManuBh. i. 238. 8 (*on* 3. 60); i. 349. 17 (*on* 4. 46); i. 511. 20 (*on* 6. 43); सामिधेन्यः … ता अप्यत्र ज्वलनद्वारेणाग्न्यर्था एव NyāyMāVi. 118. 6 (*on* iii. 1. 11); अग्न्यर्थं इष्टकानां रचनाविशेषः Prasā. ii. 546. 11; अग्निना सेवितं यदग्न्यर्थं तन्निर्वपामि MayūMāli. 593. 3 (*on* ix. 1. 12); *m.* **i** meaning 'fire-altar' कर्मण्यग्न्यर्थे S'ākaṭāVyā. iv. 3. 194; SiddhaHe. v. 1. 165; **ii** the meaning of the word *agni* अग्न्यर्थस्य देवतात्वं वदन् शब्द एव उद्देशाय शब्दमपेक्ष्यमाणः संनिहितत्वादग्निशब्दोच्चारणमपि विधत्ते MayūMāli. 706. 24 (*on* x. 4. 13)

**अग्न्यर्थकार्य** (agnyartha-kārya) *n.* rite meant for the sacred fires विधायाग्न्यर्थकार्यं तु योगं युञ्जीत वै ततः LakṣmīT. 28. 38.

**अग्न्यर्थकाष्ठ** (agnyartha-kāṣṭha) *n.* fire-wood इन्धनं तु स्याद् दीपना-ग्न्यर्थकाष्ठयोः NānārthāSaṁ. ii. 34. 12.

**अग्न्यर्थकृत** (agnyartha-kṛta) *adj.* made for the purpose of the sacred fires अग्न्यर्थकृतेष्टकाचये … विण्मूत्रोत्सर्गं न कदाचन कुर्यात् ManvaMu. 153. 8 (*on* 4. 46)

**अग्न्यर्थचित्रिणी** (agnyartha-citriṇī) *f.* brick called *citriṇī* (variegated) meant for fire (altar) अखण्डत्वादयोऽग्न्यर्थचित्रिण्यादिषु सन्ति ते NyāyMāVi. 186. 18 (*on* iii. 6. 12)

**अग्न्यर्थता** (agnyartha-tā) *f.* the state of being ancillary to the (sacred) fire कथं पुनरग्न्यर्थता पवमानेष्टीनाम् S'ābaBh. 1038. 4 (*on* iii. 6. 12); तस्मादग्न्यर्थता पवमानहविषाम् S'ābaBh. 738. 1 (*on* iii. 1. 22); तत्र यथा-ग्न्यर्थतयाधान विधिरवगम्यमानः … कृतार्थत्वमुपगतः NyāyMañ. ii. 93. 6; इह तूत्पत्तिवाक्य एवाग्निमेव तद्युनक्तीत्यग्न्यर्थतावगम्यते MayūMāli. 824. 5 (*on* xi. 3. 9)

**अग्न्यर्थत्व** (agnyartha-tva) *n.* **i** the state of being meant for the fire-altar अमूषां चेष्टकानामग्न्यर्थत्वात् S'ābaBh. 1056. 13 (*on* iii. 6. 35); सौत्रामणियागस्य अग्न्यर्थत्वम् SaṅkarKāBh. 6. 17 (*on* i. 1. 13); **ii** the state of being meant for fire तस्य ह्यग्नीनिति द्वितीयाश्रुतिगम्यमग्न्यर्थत्वम् TantrRa. 9. 14; 90. 15; अग्न्यर्थत्वात्तस्मेष्टिरग्न्यस्त्वग्निहोत्रगाः NyāyMāVi. 181. 10 (*on* iii. 6. 4); द्वितीयाश्रुत्यवगतमग्न्यर्थत्वमपि अस्ति PūrvottaVāNaMā. 296. 8; न त्वग्न्यर्थत्वं हविषां

स्यात् MayūMāli. 204. 24 (*on* iii. 1. 12); 205. 21 (*on* iii. 1. 12); 302. 1 (*on* iii. 6. 5); 432. 9 (*on* v. 3. 6)

**अग्न्यर्थनिर्देश** (agnyartha-nirdeśa) *m.* reference to the meaning of the word *agni* कुत: । अग्न्यर्थनिर्देशात् S'ābaBh. 1926. 1 (*on* x. 4. 23)

**अग्न्यर्थम्** (agny-artham) *adv.* **i** for the sake of the (sacred) fires दार्वग्न्यर्थम् ManuSm. 8. 399; इन्धनस्याचरणमग्न्यर्थे वनादिन्धनस्याहरणम् NyāyKa. 277. 2; कुर्यादुटजमग्न्यर्थम् SkandP. ii(9). 23. 4; यथा आधानमग्न्यर्थं न क्रत्वर्थं नापि पुरुषार्थम् TantrRa. 25. 9; अग्न्यर्थं वैतानिकाग्न्यर्थम् ManvaVi. 1073. 25 [*on* 8. 339) = DaṇḍaVi. 41. 17; **ii** for the sake of the (funeral) fire तमेनं मृतमित: असाद्ग्रामात् अग्नये अग्न्यर्थम् ऋत्विजो हरन्ति ChāndoUBh. 291. 14 (*on* v. 9. 2); **iii** for the sake of the (digestive) fire आहारशुद्धिरग्न्यर्थम् AgniP. 280. 24.

**अग्न्यर्थाधान** (agnyarthādhāna) *n.* ceremony of Ādhāna meant for (obtaining) the sacred fire एवम्…अग्न्यर्थाधानस्य च कामश्रुतिभिरनाक्षेपसंभवेनापशूद्राधिकरणविरोधाभावात् MayūMāli. 185. 18 (*on* iii. 1. 2)

**अग्न्यर्थिन्** (agny-arthin) *adj.* **A** desirous of (churning out) fire अग्न्यर्थी वाधरारण्यां सातत्ये प्रतिपद्यते MaYānaSū. 89. 15 (13. 27); **B** desirous of fire संनिधापिताग्निव्यतिरिक्तपाक्योपकरणमग्न्यर्थिनं प्रति यदोच्यते BrahmSi. 112. 9; अग्न्यर्थिप्रवृत्तेस्तत्र प्रसङ्गात् KhandanKhā. 651. 6; अग्न्यर्थिनो नियमेन प्रदेशविशेषे प्रवृत्त्यनुपपत्ते: NyāySu.(Ja.) 469B. 13 (*on* iii. 2. 1); **C** desirous of setting up the sacred fires तदर्थिनस्तत्राग्न्यर्थिन इवाधानेऽनुष्ठानसिद्धि: NyāyRaMā. 8. 21; S'āstrDī. 62. 14 (*on* i. 1. 5)

**अग्न्यर्पित** (agny-arpita) *adj.* placed in fire आदत्ते प्रातरेत्यार्क: सुखमग्न्यर्पितं मह: Kapphiṇā. 16. 21.

**अग्न्यवचारण** (agny-avacāraṇa) *n.* cauterization अभ्युपाय: … शस्त्रक्षाराग्न्यवचारणे शेषाङ्गरक्षणे च AṣṭāSaṁ. i. 167. 16 (1. 34)

**अग्न्यवतार** (agny-avatāra) *m.* incarnation as Agni इत्थमग्न्यवतारस्ते वर्णित: S'ivaP. iii. 15. 58 (314B. 7)

**अग्न्यवदग्ध** (agny-avadagdha) *adj.* burnt with fire, scorched with fire अनड्वान् हि वहसाग्नेयोऽग्न्यवदग्धमिव ह्यनडुहो वहो भवति S'atBr.(Kā.) I. ii. 3. 23.

**अग्न्यवबोध** (agny-avabodha) *m.* cognition of fire धूमाभावेऽग्न्यवबोधाभाव: TupṬ. 168. 11 (*on* viii. 1. 2); म्लेच्छदेशस्थधूमादेरपि अग्न्यवबोधशक्तत्वेन MīmāKau. i. 59. 17 (*on* i. 3. 9)

**अग्न्यवभृथ** (agny-avabhṛtha) *m.* the Avabhṛta-rite performed with the sacred fires(?) यदि म्रियेत प्रागवभृथादग्न्यवभृथं कुर्वीरन् ĀpaS'S. xiv. 21. 8; HirS'S. xv. 5. 29; सौमिकैश्च पात्रै: पूर्वेण सदोऽग्न्यवभृथं कुर्यु: VaikhāS'S. 21. 7.

**अग्न्यवयव** (agny-avayava) *m.* part of fire यदुद्वासितायास्तदग्न्यवयवा:… नाशयन्ति S'ābaBh. 1218. 14 (*on* iv. 1. 39); विस्फुलिङ्गा: त्रुटय: अग्न्यवयवा: BṛĀraUBh. 249. 3 (*on* ii. 1. 20); BrahmSūBh.(Bhā.) 195. 22 (*on* iii. 3. 52); अभिज्वलनाभावो ह्यग्न्यवयवाश्रय: S'rutaPra. ii. 595. 7 (*on* iv. 2. 3); आद्येऽग्न्यवयवानां सर्वत्र प्रवेशेनावयविनाशस्यावर्जनीयत्वम् NyāySu.(Ja.) 371B. 12 (*on* ii. 2. 6); अग्न्यवयवनाशस्य सर्वदा विद्यमानत्वात् MayūMāli. 638. 5 (*on* ix. 4. 7)

**अग्न्यवयविन्** (agny-avayavin) *m.* fire as a composite unit पाकामसंयोगेऽप्यस्त्यग्न्यवयवी S'āstrDī. 587. 13 (*on* ix. 1. 7); असाधु चाग्न्यवयविनोऽनुष्णत्वसाधने NyāySu.(Ja.) 79A. 13 (*on* i. 1. 1)

**अग्न्यवस्कन्द** (agny-avaskanda) *m.* trouble from fire याम्ये धर्मविनाश: परेऽग्न्यवस्कन्दचोक्षवधा: BṛSaṁ. 87. 43.

**अग्न्यवस्थ** (agny-avastha) *adj.* having the state of fire अग्न्यवस्थे तु सलिले तेजसा सर्वतो वृते ViṣṇuP. vi. 4. 18 = BrahmP. 232. 18; ब्रह्मशब्दस्याग्न्यवस्थब्रह्मपरत्वं च व्युदस्तम् S'rutaPra. ii. 185. 18 (*on* i. 4. 8)

**अग्न्यविनाभाव** (agny-avinābhāva) *m.* invariable relation or concomitance with fire धूमादौ महानसादिदेशेऽग्न्यविनाभावनिरूपणोत्तरकालं तत्कृतैवासौ गमकतेति Kāśi. iii. 229. 19 (*on* 5(10). 19)

**अग्न्यविनाभाविन्** (agny-avinābhāvin) *adj.* invariably related or concomitant with fire तदयमग्न्यविनाभावी सिद्धोऽर्थादेवाग्नेस्तत्प्रदेशायोगं व्यवच्छिनत्तीति स तथा साध्य उच्यते PramāVāSvopVṛ. 63. 7.

**अग्न्यवियोग** (agny-aviyoga) *m.* non-separation from the sacred fires अग्न्यवियोगस्तु सदा सति संभवे न सर्वासां तदभावे ज्येष्ठाया एव मुख्याधिकारित्वात् BālamBha. i. 267. 32 (*on* 1. 89)

**अग्न्यश्ववह्नीन्दु** (agnyaśvavahnīndu) *nu.* one thousand three hundred and seventy-three अग्न्यश्ववह्नीन्दुमिताब्जजात: Gurvā. 289.

**अग्न्यष्टि** (agnyaṣṭi) *nu.* one hundred and sixty-three अग्न्यष्टिभिरिषुमनुभि: … शीघ्रान्त्यकेन्द्रभागैर्भौमादीनां भवति वक्रम् BrāhmaSphuSi. 2. 48.

**अग्न्यस्** (agny-as-) II P. [P. v. 4. 50] to become fire (अभिविधौ संपदा च सातिर्वा) … अग्नीकरोति अग्नीभवति अग्नीस्यात् । पुनर्वाचवचनं वृत्ति (v. 1. च्वि) विकल्पार्थम् CāndrVṛ. *on* iv. 4. 37.

**अग्न्यसंस्कृति** (agny-asaṁskṛti) *f.* non-consecration of sacred fires आधानमिष्टिरन्त्य: स्यादवैधेनाग्न्यसंस्कृते: NyāyMāVi. 369. 18 (*on* vi. 8. 3)

**अग्न्यसंबन्धव्यावृत्ति** (agnyasambandha-vyāvṛtti) *f.* exclusion of the absence of connection with fire अयोगव्यवच्छेदे-अग्न्यसंबन्धव्यावृत्तौ Bhāsk. ii. 116. 21 (*on* ii. 3. 9)

**अग्न्यस्त्र** (agny-astra) *n.* a fire-missile, a fiery weapon अग्न्यस्त्रेण कुश: सर्वान्ददाह PadmP. iv. 63. 64; अग्न्यस्त्रे मोचिते तेन पर्जन्यास्त्रं च सोऽसृजत् GaṇeP. ii. 122. 46; EI. xii. 60. 17; सिन्धुरभ्यासतोऽग्न्यस्त्रं वारुणास्त्रेण शामयन् । रथं त्यक्त्वावनिं प्राप्य खड्गस्फोटकवानभूत् YogVā. iii. 50. 24.

**अग्न्यस्त्रपरिमोचित** (agnyastra-parimocita) *adv.* discharged from the fire-missile वह्निश्च शान्तिमगमदग्न्यस्त्रपरिमोचित: PadmP. iv. 24. 44.

**अग्न्याकार** (agny-ākāra) *adj.* having the form of fire (मुक्तजीव:) तथा सोऽग्न्याकारो भवति S'aṅkaVi.(Ā.) 257. 12.

**अग्न्याकृति** (agny-ākṛti) *f.* generic nature or class of fire धूमाकृतिरग्न्याकृत्या नियता Kāśi. iii. 19. 19 (*on* 5(4). 12)

**अग्न्याकृतिज्ञान** (agnyākṛti-jñāna) *n.* cognition or knowledge of the generic nature of fire धूमाकृतिदर्शनादग्न्याकृतिज्ञानम् YuktiSneha. 71. 21 (*on* i. 1. 5)

**अग्न्याकृतिविज्ञान** (agnyākṛti-vijñāna) *n.* cognition or knowledge of the generic nature or class of fire प्रत्यक्षतो दृष्टसंबन्धं यथा धूमाकृतिदर्शनादग्न्याकृतिविज्ञानम् S'ābaBh. 36. 3 (*on* i. 1. 5); Kāśi. iii. 82. 1 (*on* 5(4). 138); NyāyRa. 390. 12 (*on* 5(4). 138); अत: कथं धूमाकृतिदर्शनादग्न्याकृतिविज्ञाने प्रत्यक्षदृष्टसम्बन्धता TāptaṬ.(U.) 340. 22 (*on* 5(4). 146)

**अग्न्याक्षेपक** (agny-ākṣepaka) *adj.* pointer of fire, pointing to fire एकदेशान्तरे वाग्न्याक्षेपकस्यैकदेशस्य धूमाख्यस्य दर्शनं स्यात्, एकदेशिनि वा पर्वताख्ये TātpaṬ.(U.) 310. 21 (*on* 5(4). 23)

**अग्न्याख्य** (agny-ākhya) *adj.* [*f.*-ā] **1 A** called or named Agni (fire-altar) यदि चिनोतिरग्न्याख्या भवति TantrVā. 272. 2 (*on* i. 3. 26); तदेतत् अग्न्याख्यं साम एतस्यां पृथिव्याम् ऋचि अध्यूढम् अधिगतम् ChāndoUBh. 45. 9 (*on* i. 6. 1); ĪśopBh. 20. 7 (*on* 17); **B** called Agni शक्ति: …हविरित्ति तथाग्न्याख्या Lakṣmī.T. 29. 39; ततोऽयं नाग्न्याख्या देवता, न तृतीयमह्राभूतं च VedāntSā.(Rā.) 79. 2 (*on* i. 2. 28); VedāntDī. 40. 19 (*on* i. 2. 28); क्षित्यग्न्याख्यौ त्रिपुरजयिनो यज्ञसूर्यौ जलाख्यं वायुं सोमं समभिदधते व्योम चाप्यष्टमूर्ती: TantrSa. 1. 15; तव मतेऽपि अग्न्याख्ये द्रव्ये यूपैकादशिन्या अविहितत्वान्न पक्षसंमाननिन्दा MīmāKau. ii. 127. 14 (*on* ii. 4. 26); i. 196. 20 (*on* i. 4. 4); इदं पापजातं मां तत्कर्तारं चाहङ्कारम् अमृतयोनौ मोक्षकारणे अग्न्याख्ये ज्योतिषि परब्रह्मणि जुहोमि प्रक्षिपामि BālamBha. i. 91. 9 (*on* 1. 24); **2** (the plant) called Agni (=*citraka* i. e. *Plumbago zeylanica*) चित्रके…अग्न्याख्य: NighS'e. 2135.

**अग्न्याख्यशक्त्यावेश** (agnyākhyaśaktyāveśa) *m.* possession of the power called Agni तत्र चाग्निशब्दोऽग्न्याख्यशक्त्यावेशादेव प्रयुक्त: SāṁkhyaPraBh. 164. 15 (*on* 6. 70)

**अग्न्याख्यस्थण्डिलसंज्ञा** (agnyākhyasthaṇḍila-saṁjñā) *f.* name of an altar called Agni श्येनचिच्छब्दस्य कर्मवाचके श्येव(? न)पदरूपे उपपदे सति अग्न्याख्यस्थण्डिलसंज्ञायां कर्तव्यायां चिनोतेर्धातोश्चितमिति MīmāKau. i. 145. 17 (*on* i. 3. 33)

**अग्न्याख्या** (agny-ākhyā) *f.* name of (a particular kind of) fire-altar कर्मण्यग्न्याख्यायाम् P. iii. 2. 92 = JaineVyā. ii. 2. 79 = SaraKaṇṭhā.(Gr.) i. 4. 120; कर्मण्युपपदे चिनोते: कर्मण्येवार्थे क्विप् स्यात् धातूपपदप्रत्ययसमुदायेन चेदग्न्याख्या गम्यते । श्येन इव चीयते श्येनचित् । कङ्कचित् । अग्न्यर्थं इष्टकानां रचनाविशेष: Prasā. ii. 546. 10.

**अग्न्यागार** (agny-āgāra) *m. n.* **i** house for the sacred fires, fire-hall, sanctuary of the sacred fires आहिताग्नेर्द्विदशरात्रव्रतानि … स्वयं पादशोऽध्यक्षारलवणाग्न्यशमीधान्यं मुञ्जानोऽन्यत्र तिलेभ्य: स्वयमिध्महारोऽग्न्यागारे संविशति VaikhāS'S. 1. 16; अथ बलिं हरत्यग्नये नम: सोमाय धन्वन्तरये विश्वेभ्यो देवेभ्य: प्रजापतये अग्नये स्विष्टकृत इत्यग्न्यागार उत्तरामुत्तराम् MānGS. ii. 12. 3; GobhiGS. iii. 9. 4; अग्न्यागारस्य या भूमिस्तां प्रवक्ष्याम्यशेषत: AVPari. xxx (1). 3; xl (1). 6; अग्न्यागारैश्च बहुभि: … विभ्राजितम् (नृप: आश्रमप्रवरं ददर्श) MahāBhā. i. 64. 17; iii. 138. 7; अग्न्यागारात्स निर्याय शक्रजित्स महाबल: Rāmā. vi. 1341*(18); BṛParāSm. 11. 169; तं तूष्णीमग्न्यागारेऽवस्थितम् आचार्यजायोवाच ChāndoUBh. 234. 14 (*on* iv. 10. 3); अग्न्यागारे गवां गोष्ठे होमे जप्ये तथैव च (उपवीती भवेत्) KūrmaP. 520. 4 (2. 12); AgniP. 75. 1; (कुर्यात्) आग्नेय्यां

महानसम् । अग्न्यागारं च तत्रैव VisnuDhaP. ii. 29. 40; ii. 104. 87; ii. 151. 7; अग्न्यागारं विशन्रुद्धः शूद्रेणाशौचदूषितः DarpDa. 3. 120; तीर्थं च लभते प्राज्ञः स्नानार्थं धर्मतत्परः । अग्न्यागारे गवां स्थाने देवतायतनेषु च PadmP. ii. 14. 23; i. 51. 16; KalkiP. iii. 13. 11; **ii** store-house of fire अग्न्यागारं कलयसि पुरश्चक्रवाकीव चन्द्रम् SṛṅgāTi.(Ru.) 2. 18 = SaduktiKa. 133. 28.

**अग्न्यागाराग्रतस्** (agnyāgārāgra-tas) *adv.* in front of the fire-hall or house of the sacred fires रैभ्यं ततः समायातमग्न्यागाराग्रतः स्थितम् । स्नुषा प्रोवाच DarpDa. 3. 106.

**अग्न्यागारादिभेदक** (agnyāgārādi-bhedaka) *m.* one who breaks a fire-hall etc. द्वितीयचकारेणाग्न्यागारादिभेदकसमुच्चयः VīraMi. 726. 11 (*on* 2. 273)

**अग्न्यागारान्तर** (agnyāgārāntara) *n.* interior of a fire-hall अग्न्यागारान्तरे तावन्मुहूर्तं क्रियतां स्थितिः DarpDa. 4. 53.

**अग्न्यागारिक** (agnyāgār-ika) *adj.* which is (similar to the pillar) of the fire-hall स्फ्यो यूप इति स्फ्याकृतियूप अग्न्यागारिको वा ĀpaS'S. xix. 16. 12.

**अग्न्यातपप्रताप** (agnyātapa-pratāpa) *m.* excessive heat of the fire and the sun अग्न्यातपप्रतापैश्च पित्तं प्रकुपितम् ··· शोफं जनयति CaraS. i. 18. 8 (1922 Ed.)

**अग्न्यातपप्रिय** (agnyātapa-priya) *adj.* to whom fire and the heat of the sun are dear or agreeable यः···क्रोधनोऽग्न्यातपप्रियः । तस्योपजायते पित्ताद्विशेषेण···मदात्ययः CaraS. vi. 24. 92 (1941 Ed.)

**अग्न्यात्मक** (agny-ātmaka) *adj.* which is of the nature or form of Agni सोमात्मिका स्त्री अग्न्यात्मकः पुमान् S'aṅkarānanda's comm. on KausīBrU. 2. 8 (p. 50) (Ed. Cowell, 1861); अष्टदलं त्वग्न्यात्मकम् SetuBa. 260. 13.

**अग्न्यात्मन्** (agny-ātman) *adj.* which is of the nature of fire अग्निना भेदितो मन्त्रस्त्वग्न्यात्मा व्यवतिष्ठते AhirbuS. 19. 38; *m.* form of Agni (fire, sense-organ) अग्नौ प्रतितिष्ठति अग्न्यात्मना इमं लोकं व्याप्नोतीत्यर्थः TaiUBh. 204. 19 (*on* 1. 6); स एष परमात्मैव ··· पश्यत्यग्न्यात्मना तथा BṛĀraUBhVā. i. 3. 264.

**अग्न्यादि** (agny-ādi) *adj.* **1** beginning with (the establishment of) the sacred fires, fire-rite etc. अन्ते त्वग्न्यादिरुक्तः कल्पः SāmaViBr. i. 3. 9; **2** (piling up of) fire-altar and other rituals यथाग्न्यादावाधूननार्था वपनार्थाश्च मन्त्राः BhāṭṭDī. iv. 7. 7 (*on* x. 5. 5); **3** fire etc. महाजलाग्न्यादिसकुञ्जरोरगैः ···विमोहिताः समुद्रमध्येष्विव गाधकाङ्क्षिणः MatsyaP. 135. 68; मृतोऽसौ संजीवकोऽस्माभिश्चाग्न्यादिना सत्कृत इति PañcT. 1. 3 (11. 4); Tantrākhyā. 3. 24; Pañcā. 4. 11; दहने चानपेक्षित्वमग्न्यादेः Bṛha. 141. 7 (*on* i. 1. 5); स सम्यक्संपन्नमन्नम्···अग्न्यादिषु प्रागुपनीतम् ··· राजानम् ··· भोजयेत् AṣṭāSaṁ. i. 45. 5 (1. 8); अग्न्यादयो घटादीनां प्रसिद्धा ये प्रकाशकाः । न ते प्रकाश्यरूपा हि S'lokaVār. 5 (3). 65 (288. 1); 5 (11). 7 (512. 3); ननु कादाचित्कत्वमग्न्यादौ हेतुमत्त्वेन व्याप्तम् TātpaṬ.(U.) 253. 10 (*on* 5(4). 50); 307. 16 (*on* 5(5). 7); आपादयितव्यं यथा अग्न्यादि धूमादिलिङ्गेन ChāndoUBh. 170. 6 (*on* iii. 13. 7); यस्य च यो गुणो न स तम् ··· विषयीकुर्यात्, यथाग्न्यादिगुणः प्रकाशादिर्नाग्न्यादीन् IṣṭaSi. 61. 16; अस्पृश्यमग्न्यादिभिः ··· तद्वंश्यमविष्यमाहुः RāghPāṇ.(Dha.) 3. 6; यथाग्न्यादयः ··· स्थूलरूपेण दृश्यन्ते BrahmSūBh.(Ma.) 50B. 7 (*on* iii. 2. 25); अग्न्यादीनां च शपथेऽस्त्युपयोग इति व्यवहाराङ्गता Aparā. 598. 13 (*on* 2. 1); अग्न्यादीनामन्धकारस्य निरसनेन ··· परत्रोपकुर्वतां तदुपकारजननायात्मन्यग्न्यन्तरापेक्षा न विद्यते NyāyKu. 75. 9; ManvaVi. 996. 4 (*on* 8. 190); अग्न्यादयः श्राद्धस्य संपादकाः DīpKa. 26. 30 (*on* 1. 221); 76. 4 (*on* 3. 13); योगोपदेशसंस्कृतस्य वपुरग्न्यादिभिर्नोपहन्यते AṇuBh. 244. 15 (*on* iii. 3. 36); न हि दृष्टिसृष्टिपक्षे···ऊर्णनाभ्यग्न्यादितः तन्तुविष्फुलिङ्गजन्म वा ··· अस्ति Nyāyāmṛ. 294A. 1; अग्न्यादीनामौष्ण्यादिनियमः ··· एतत्सर्वं परमात्माधीनम् ManvaMu. 525. 5 (*on* 12. 122); 154. 11 (*on* 4. 52); 248. 20 (*on* 7. 7); धूमादिः सहचारिणोऽग्न्यादेर्गमको भवति YuktiSneha.62. 25 (*on* i. 1. 5); अग्न्यादौ दाहादिशक्तेर्यावद्द्रव्यभावित्वात् YogSā. 33. 6(2); दाहादिशक्तिशून्यस्याग्न्यादेः क्वाप्यदर्शनात् SāṁkhyaPraBh. 6. 27 (1. 1); आधानादीनामप्यग्न्यादीन्प्रत्यङ्गत्वेन S'ivārkaMaDī. i. 40. 25 (*on* i. 1. 1); नीवारादिनाग्न्यादीन् तर्पयेत् VīraMi. 826. 3 (*on* 3. 46); 764. 17 (*on* 3. 6); लिङ्गादिभ्यस्तु परसंबन्धिरूपेणैवाग्न्यादीनां भानादसाक्षात्त्वम् MānaMe. 23. 8; अग्न्यादेः संसर्गिद्रव्यस्य ··· भेदाभ्युपगमात् MīmāKau. i. 242. 8 (*on* i. 4. 12); iii(1). 35. 1 (*on* i. 1. 12); अस्याः स्थानान्यपि जलाग्न्यादीनि BālamBha. i. 467. 11 (*on* 1. 209); i. 461. 15 (*on* 1. 196); iii. 16. 25 (*on* 3. 6); **4** god of fire etc. पूर्वोक्तानां देवतानामग्न्यादीनां संसारित्वं दर्शयिष्यति AitUBh. 240. 5 (*on* 1. 0); अग्न्यादीन्प्रपद्ये इति तदवोचम् ChāndUBh. 182. 9 (*on* iii. 15. 6); सर्वे देवाः अग्न्यादयः BṛĀraUBh. 335. 10 (*on* ii. 5. 15); एतेनाग्न्यादयो व्याख्याताः BrahmSūBh.(S'aṅ.) 203. 13 (*on* i. 3. 32); अधिदैवतमग्न्यादीनां वायुः BrahmSūBh.(S'aṅ.) 687. 16 (*on* iii. 3. 43); अग्न्यादीन् ···देवान् प्रत्येकमुद्दिश्य त्यागार्थं विद्यात् य इह कश्चन SanatBh. 230. 11 (1. 37); अग्रजं ब्रह्म विज्ञानं देवा अग्न्यादयः सदा TaiUBhāVā. 105. 23(2); अग्न्यादयश्च देवता विधीयन्ते S'āstrDī. 129. 11 (*on* ii. 2. 3); TantrRa. 128. 18; (अग्निष्वात्ताः) देवानामिन्द्राग्न्यादीनां पितरस्तेषां पूज्याः CaturCin. iii(1). 56. 7; द्रव्यस्य प्रतिनिधिरस्ति देवादीनामग्न्यादीनाम्···स नास्ति NyāyMāVi. 6. 28 (*on* i. 1. 1); भवेदग्न्यादीनां केनचिद्रूपेण व्यक्तत्वम् TattvaPrakā. 157B. 12 (*on* iii. 2. 25); 41A. 2 (*on* i. 2. 28); 41A. 9 (*on* i. 2. 29); मान्त्रवर्णिकेष्वेवाग्न्यादिषु गुणविधानात् SaṅkarKāBh. 4. 4 (*on* i. 1. 5); ते वेदितात्मानः क्रमादग्न्याद्यभिमानिदेवतास्थानेषु मुक्तिमार्गेषु विश्रम्य DīpKa. 92. 4 (*on* 3. 193); ते चाग्न्यादयश्चेतना भगवदंशास्तिरोहितानन्दाः AṇuBh. 162. 14 (*on* ii. 4. 14); अग्न्यादीनां भोज्येन पुरोडाशादिना संबन्धः S'ivārkaMaDī. i. 455. 4 (*on* i. 3. 25); i. 234. 15 (*on* i. 1. 17); ज्योतिषामग्न्यादीनां स्तोमलक्षणेत्यर्थः MayūMāli. 56. 11 (*on* i. 4. 2); [as the lord of the south-east] अग्न्यादिदैवतं प्रोक्तं स्थानं द्विविधमुच्यते । शरीराश्रयसंभूतं दिगाश्रयमथापि वा NāṭyaS'ā. 14. 105; प्रपूजयेत् । पत्राग्रे लोकपालानामग्न्यादीनायुधांस्तथा BhaviP. 381A. 26 (ii (2). 20. 46); SmṛtiCan. iii. 261. 16; इन्द्राग्न्यादिदिगीशवाहनतया देवासुरायोधने याता नागवराश्च दुद्रुवुः MātaLī. 1. 24; [as a deity in a sacrifice] तत्राग्न्यादीनां विश्वैर्देवैर्विकल्पः S'ābaBh. 346. 5 (*on* i. 4. 13); [as a presiding deity of metres] गायत्र्यादीनां जगतीपर्यन्तानां यथाक्रममग्न्यादयो देवता वेदितव्याः MṛtaSaṁ. 37. 13 (*on* 3. 63); [as a Vasu] अग्न्यादयो नक्षत्रान्ता वसवः BālaKrī. i. 171. 7 (*on* 1. 265); [as presiding deity of speech] वागाद्यभिमानित्वेनाग्न्यादीनामनुगतेश्च VedāntKau. 153. 22 (*on* ii. 1. 5); 248. 19 (*on* ii. 4. 14); वागादीनां ज्योतिराद्यग्न्याद्यधिष्ठानमवश्यमङ्गीकर्तव्यम् AṇuBh. 162. 5 (*on* ii. 4. 14); एवमग्न्यादयोऽप्यस्मदादिवागाद्यभिमानिन्यो देवताः SiddhāTa. 16. 20; ऐतरेयके वागाद्यभिमानितया अग्न्यादीनामनुप्रवेशश्रवणात् GoviBh. 90. 9 (*on* ii. 1. 5); [as author of Veda] ऋग्वेद एवाग्नेरजायत ··· इत्यादेर्वाक्यादग्न्यादेरपि वेदकर्तृत्वप्रसङ्गः SarvaDaKau. 22. 13; अग्न्यादीनां च वेदकर्तृत्वं श्रूयते S'ivārkaMaDī. i. 152. 9 (*on* i. 1. 3); ऋगादयः प्रजापतिजातेभ्योऽग्न्यादिभ्यो जाताः UpaParā. 2. 1.

**अग्न्यादिक** (agnyādi-ka) *adj.* [*f.* -ā] **A** (digestive) fire etc. रोगं सात्म्यं च देशं च कालं देहं च बुद्धिमान् । अवेक्ष्याग्न्यादिकान् भावान् रोगवृत्तेः प्रयोजयेत् SuśruS. i. 20. 9; **B** fire etc. अर्वागपि दिवोऽवगम्यतेऽग्न्यादिकं ज्योतिरिति BrahmSūBh.(S'aṅ.) 74. 20 (*on* i. 1. 24); अग्न्यादिकं च दृष्ट्वा शुध्यतीत्यर्थः VīraMi.(Āhnika.) 198. 20; **C** (sacred) fire etc. अथ चतुष्पथे क्षिपतु सर्वमग्न्यादिकम् ĪśānS'iPa. i. 24. 48; **D** fire (of ordeal) etc. पणसहस्राभियोगे एवाग्न्यादिका क्रिया DīpKa. 50. 24 (*on* 2. 99)

**अग्न्यादिकर्मन्** (agnyādi-karman) *n.* **1** rites like Agni (i. e. Āgneya) न चानित्यस्य कामस्य नित्यैरग्न्यादिकर्मभिः । कथंचिदपि संबन्धः TantrVā. 624. 2 (*on* ii. 3. 25); **2** action of fire etc. तथाप्यग्न्यादिकर्मण्युक्तो दोषस्तदवस्थ एव NyāyKu. 93. 20.

**अग्न्यादिकार्य** (agnyādi-kārya) *n.* calamity due to fire etc. दैविकमग्न्यादिकार्यम् Aparā. 662. 27 (*on* 2. 66)

**अग्न्यादिकार्यत्व** (agnyādikārya-tva) *f.* nature of being a product of Agni etc. त्रयीविद्याया अग्न्यादिकार्यत्वश्रुतेः ChāndoUBh. 115. 8.

**अग्न्यादिकृत** (agnyādi-kṛta) *adj.* caused by fire etc. अग्न्यादिकृतो विद्रवः चोरादिकृत उपघात इति त्वसत् AbhinBhā. i. 318. 10 (*on* 6. 62)

**अग्न्यादिकेशर** (agnyādi-keśara) *n.* lotus-filament turned towards the South-East etc. अग्न्यादिकेशरेषु चछे गायत्र्यै हृदयाय नमः TantrSā.(K.) 94. 8.

**अग्न्यादिकोण** (agnyādi-koṇa) *m.* South-East corner etc. न्यसेदग्न्यादिकोणेषु मध्ये पीठचतुष्टयम् BrahmāṇḍP. iii. 44. 143; पूरयेत्···अग्न्यादिकोणकुम्भांस्तु पाद्याचामार्घ्यगव्यकैः ĪśānS'iPa. ii. 50. 250; अग्न्यादिकोणे धर्मम्···पूजयित्वा ···यजेत् MahNirvāT. 6. 126; अग्न्यादिकोणेषु ओँ लक्ष्म्यै नमः TantrSā.(K.) 92. 4.

**अग्न्यादिकोणग** (agnyādikoṇa-ga) *adj.* [*f.* -ā] situated in the South-East and other corners कृत्तिकां भरणीमार्द्रां कलां चाग्न्यादिकोणगाः (यजेत्) ĪśānS'iPa. i. 48. 100.

**अग्न्यादिकोणचतुष्टय** (agnyādi-koṇacatuṣṭaya) *n.* group of four corners beginning with the South-East ततः केशरेष्वग्न्यादिकोणचतुष्टयेषु मध्ये दिक्षु च श्रीं हृदयाय नमः इत्यादिना षडङ्गानि पूजयेत् TantrSā.(K.) 92. 6.

**अग्न्यादिकोणदल** (agnyādikoṇa-dala) *n.* petal (situated) in the South-East and other corners सूर्यपद्मासनं विचिन्त्य तस्याग्न्यादिकोणदलेषु हृदयाद्यङ्गानि···पूजयेत् ĪśānS'iPa. ii. 12. 4(3)

**अग्न्यादिकोणालय** (agnyādikoṇālaya) *m.* house in the South-East and other corners वितनुयात्···सिंहोक्षद्विपकेतुयोनिविहितं चाग्न्यादिकोणालयम् S'ilpaRa. ii. 31. 62.

**अग्न्यादिक्रमता** (agnyādikrama-tā) *f.* the state of being in an order

**अग्रफल** (agra-phala) *n.* **1** sharp edge of an arrow, point of an arrow स बाण: ··· । छिन्नोऽप्यग्रफलेनाशु हृदये समपद्यत (शत्रुघ्नस्य) PadmP. iv. 52. 67; **2** future result (of an act) अधर्मप्रभवाण्येव निमित्तानि गृहेषु नः । सीताहेतोः प्रदृश्यन्ते येषामग्रफलं क्षयः RāmāMañ. 319. 8.

**अग्रफलसूचक** (agraphala-sūcaka) *adj.* indicating the future fruit or result (of action) कार्पटिको वहिः । गत्वा राजविलासिन्यै तददाद् बीजपूरकम् । सा तस्मै राजसंमानतरुवल्लीव जङ्गमा । जातरूपं ददौ पुष्पमिवाग्रफलसूचकम् KathāSaSāg. ix. 3. 59.

**अग्रबन्धन** (agra-bandhana) *n.* front band कम्पाधस्तात् प्रयोज्या हि स्तम्भास्तत्रैव युक्तितः । ऊर्ध्वाधःकम्पवत् पद्मपट्टिकं चाग्रबन्धनम् MayaMa. 16. 53.

**अग्रबन्धनविष्टक** (agrabandhana-viṣṭaka) *n.* moulding of the front band ललाटवंशसंविद्धमध्यशूलदृढीकृता । स्तम्भविस्तारविस्तीर्णा विधातव्या कुठारिका । तत्कर्णे पत्रमकरं मण्डितं चावलम्बितम् । अर्धकर्णेन चार्धं वा यथायुक्ति यथारुचि । अन्तर्गततलपातिर्थग्रबन्धनविष्टकम् MayaMa. 18. 82.

**अग्रबन्धु** (agra-bandhu) *m.* best relative शुभमयसततप्रवर्धितात्मा भवति सदा जगतोऽग्रबन्धुभूतः MaYānaSū. 30. 10 (8. 11)

**अग्रबहल** (agra-bahala) *n.* thickness of the forepart नीप्रलोष्टस्य ··· विस्तारं द्व्यङ्गुलं कुर्याद् बहलं तारपादतः । तदर्धमग्रबाहल्यं सर्वेषां पर्वबच्छिरः । स्वस्वा(ग्र ब)हलैस्तुल्यं पर्वोचं बहलं तथा S'ilpaRa. i. 14. 124.

**अग्रबाहल्य** (agra-bāhalya) *n.* thickness at the forepart नीप्रपट्टयास्तु विस्तारचतुरङ्गुलसंयुतम् । आयामं नीप्रलोष्टस्य कीर्तितं लोष्टवेदिभिः । विस्तारं द्व्यङ्गुलं कुर्याद् बहलं तारपादतः । तदर्धमग्रबाहल्यम् S'ilpaRa. i. 14. 124.

**अग्रबाहु** (agra-bāhu) *m.* forearm आसिकान्तिजालजटिलाग्रबाहुना रणसीम्नि नाथ निहतेषु भर्तृषु । भवता NavaSāC. 10. 15.

**अग्रबाहुस्थान** (agrabāhu-sthāna) *n.* place of the upper part of the arm (the wrist) चूलिकेति प्रसिद्धो निकुञ्चकोऽग्रबाहुस्थाने । एतन्मणिबन्धविभूषणम् AbhinBhā. iii. 112. 10 (*on* 21. 18)

**अग्रबिन्दुनिपात** (agrabindu-nipāta) *m.* dropping of the first drop अग्रबिन्दुनिपातमात्रेण शास्त्रार्थस्य कृतत्वान्नाशेषहोमः (सोमे) S'āstrDī. 285. 18 (*on* iii. 5. 6); LalitāSaBh. 17. 24 (*on* 44)

**अग्रबिन्दुपात** (agrabindu-pāta) *m.* dropping of the first drop न चात्र ··· अग्रबिन्दुपातमात्रस्य शास्त्रार्थत्वं शङ्कनीयम् MayūMāli. 285. 19 (*on* iii. 5. 6)

**अग्रबीज** (agra-bīja) *n.* seed grown at the top of a plant पञ्च बीजजातानि मूलबीजादीनि । मूलबीजं फलबीजं बीजबीजमग्रबीजं स्कन्धबीजम् Sphuṭā. iii. 105. 22 (*on* 3. 100); *adj.* **i** (plant) having seeds at the top **ii** having the top for the seed (i. e. propogated by cutting) अग्रं बीजं येषां तेऽग्रबीजाः कोरिण्टकादयः । अग्रे वा बीजं येषां तेऽग्रबीजाः व्रीह्यादयः SthānṬ. 186B. 14; 187A. 1; कुरण्टाद्या अग्रबीजाः AbhidhāCin. 1200; ParaNā. 1083; KośaKaTa. 1. 4418.

**अग्रबुद्धि** (agra-buddhi) *adj.* possessing sharp intelligence यः कथ्यते मन्त्रविदग्र्यबुद्धि(v. l. अग्रबुद्धि)रौद्दालकिः श्वेतकेतुः MahāBhā. iii. 132. 1; विज्ञाय संसारगतं समग्रं दुःखात्मकं चैव निरात्मकं च । नोद्वेगमायाति न चापि दोषैः प्रबाध्यते कारुणिकोऽग्रबुद्धिः (बोधिसत्त्वः) MaYānaSū. 124. 25 (17. 32)

**अग्रबुद्धित्व** (agrabuddhi-tva) *n.* the state of having sharp intelligence बोधिसत्त्वः न दोषैर्बाध्यतेऽग्रबुद्धित्वात् MaYānaSū. 125. 1 (17. 32)

**अग्रभ** (agra-bha) *n.* next zodiacal sign सूर्यस्य राशिर्ज्ञेयो भससंज्ञं तु पृष्ठभम् । अग्रभं धूमसंज्ञं तु VasiS. 42. 102; शीघ्रो यदा भान्यलवस्थितः सन् मन्देऽग्रभस्थे निदधाति तेजः । स्यादित्थशालोऽयम् TājiNī. 1(2). 19(101)

**अग्रभक्त** (agra-bhakta) *n.* food offered first अग्रभक्तं नरो दत्त्वा नित्यमेव तथा गवाम् । मासषट्केन लभते नाकलोकं समायुतम् ViṣṇuDhaP. ii. 42. 14.

**अग्रभण** (a-grabhaṇá) *adj.* having no hold अनारम्भणे तदवीरयेथामनास्थाने अग्रभणे समुद्रे । यदश्विना ऊहथुर्भुज्युमस्तं शतारित्रां नावमातस्थिवांसम् RV. i. 116. 5.

**अग्रभव** (agra-bhava) *adj.* **A** being at the forepart अच्छिनत् । ···पादौ पुच्छमग्रभवाहू भौ । गुणेश्वरः GaṇeP. ii. 108. 13; **B** best, excellent अभूदग्रभवः कवीनां व्यासो मुनिः UdaySuKa. 153. 30; **C** topmost इक्षोरग्रभवं काण्डं प्रतप्तं दृढवह्निना BhojanKu. 158. 5; *m.* **1** Brahmin अधिगत्य कलामखिलामग्रभवाद्विङ्कटाद्रियज्वगुरोः MayūMāli. 1. 3 (*on* i. 2. 1); **2** elder brother यस्येशोऽग्रभवः (स कविः घनश्यामः) Damaru. 3.

**अग्रभा** (agra-bhā) *f.* shadow of the top शङ्कुं निधाय वृत्ते तदग्रभा विशति चापैति ĀryaSi. 4. 1(68)

**अग्रभाग** (agra-bhāga) *m.* **A** top-portion, tip तस्याग्रभागाद्दहनीलकण्ठैरनेकविश्रामविलङ्घ्यशृङ्गात् । सखा प्रकाशेतरमूर्तिना ते केनापि सत्त्वेन निगृह्य नीतः S'āk. 6. 30; JayāS. 15. 96; JānaHa. 1. 4; कोटिः संख्या प्रान्तभूमिश्च अग्रभागश्च Liṅgānu.(Ha.) 7. 7 (comm.); LaghvāśvaSm. 1. 127; TilaMañ. 300. 14; स भगवान् ··· सुरसुरभिलपनलग्नाग्रभागमिव समशिखरदेशाभोगम् ··· उद्यानमपश्यत् YaśasCam. i. 93. 45; i. 575. 1; ii. 22. 6; (इन्द्रध्वजः) मूलमध्याग्रभागे वा प्रोच्छ्रितो यदि भज्यते । पौरसेनापतिनृपान् क्रमशो हन्त्यसौ तदा SamarāSū. 17. 164; अग्रभागेऽपि वेदाश्रो भवेत् ĪśānS'iPa. ii. 31. 47; TriṣaS'aPuC. i. 5. 673; अर्गलायाः ··· अग्रभागे ··· बिडाल्यस्ति PrabaK. 4. 1; YogSā. 3. 1(1); SetuBa. 129. 30; BhāṭṭCan. 29. 12 (*on* xiii. 4. 4); **B** front part सप्तभाक्तेऽग्रभागे तु प्राग्वद्भित्तिद्वयान्तरे PāraS. 15. 661; TilaMañ. 381. 12; समुत्कर्षितसृक्कचिबुकजङ्घाग्रभागरोमलोमशम् ··· द्रामिलं बलम् YaśasCam. i. 463. 8; JayaMa. 168. 19 (*on* 2. 9); 275. 4 (*on* 5. 3); जघनो नितम्बस्याग्रभागः AbhinBhā. ii. 36. 15 (*on* 9. 45); PadmP. iv. 81. 39; खुरस्य ··· अग्रभागे नखो भवेत् AśvaVai. 2. 24; Aparā. 925. 15 (*on* 3. 29); आत्मनो अग्रभागे गोमयेन विलिप्य वर्तुलम् ···विलिख्य ParaśuKS. 7. 11 (210. 22); PurāPraSaṁ. 36. 8; पुरोभागेऽग्रभागे··· ज्ञानमण्डपस्य वक्ष्यमाणत्वात् TristhaSe. 190. 2; YātrāPra. 5. 74; शरपतने प्रथममग्रभागस्यैव पतनात् ViraMi.(Āhnika.) 240. 18; काष्ठस्याग्रभागं किंचिद्भक्षयित्वा BālamBha. iii. 207. 2 (*on* 3. 327); ब्रह्मचैतन्यं विषयसंसृष्टाया वृत्तेरग्रभागे विषयप्रकाशकं प्रतिबिम्बमर्पयति SiddhāLeSaṁ. 133. 2; **C** best part विष्णुवाक्यादिभिरग्रभागेन वैश्वदेवकर्तव्यताभिधानात् ViraMi.(Āhnika.) 396. 17; 396. 21–22; (S'rāddha.) 147. 25; ViraMi. 718. 4 (*on* 2. 265); (अग्रभागं ततस्तेभ्यो दद्यात्) श्राद्धार्हाणामग्रभागं श्राद्धम् NirṇaSi. 267. 26; **D** front point भूस्तामपीन्दुः । आधाद् रथ्यङ्गभूतो नृप पृथुपरिवेरग्रभागे AlaṅkāMañ. 150. 11; (Astrol.) degree of amplitude [APTE]

**अग्रभागिन्** (agrabhāg-in) *adj.* who has priority, who shares the first part भोगे पुरस्कृताः केचित्तद्भृत्याः पूर्वनिर्गताः । अमर्त्यनारीभोगेऽपि तस्यासन्नग्रभागिनः RājTa.(Ka.) 7. 1479.

**अग्रभाज्** (agra-bhāj) *adj.* (situated) in the front विस्रस्तः सन्कौतुकेनाग्रभाञ्जि व्यालोलाग्रः कामिनीकेशहस्तः । विस्तारत्वं वीचिजालेन नीतः पद्मानीवाजीगणन्निर्झरिण्याः HarVi. 18. 58; Yādavā. 15. 110; TantrSa. 4. 61.

**अग्रभार** (agra-bhāra) *m.* a measure of weight विंशतितौलिको भारः । अस्यैवाग्रभारस्य उदतौलिक इति द्वितीया संज्ञा BālamBha. i. 623. 25 (*on* 1. 365)

**अग्रभाविन्** (agrabhāv-in) *adj.* happening subsequently, future अग्रभाविनो विधुतभया विशिखातिपनाकिनः । ··· श्रियः पुरामचरममेव ममज्जुरम्भसि S'rīKaC. 23. 4.

**अग्रभिक्षा** (agra-bhikṣā) *f.* alms of the first or excellent part (of food) अग्रभिक्षां च यो दद्याद्दरिद्राय द्विजातये । ··· तस्य पुण्यफलं शृणु MahāBhā. xiv. App. I. 4(911); VṛGautaSm. 565. 2(8); NīlaVi. 127. 15.

**अग्रभुज्** (ágra-bhuj) *adj.* **i** enjoying before all, who has priority in eating सोऽग्रंभुविभजन् ··· कृविः TaiĀ. x. 11. 2 (827. 1); भूतानामग्रभुग्विप्रः MahāBhā. i. 24. 4; येषां नाग्रभुजो देवाः···। राक्षसानेव तान्विद्धि SūktiRa. 25. 5; स पङ्क्तिपावनश्चैव द्विजानामग्रभुग्भवेत् VāyuP. ii. 21. 74; अग्रभुजे च विशेषामग्रपूजनमेतदुचितमाचरितम् NīlaVi. 113. 6; शन्तनुर्ब्राह्मणैरुक्तः परिवेत्तायमग्रभुक् BhāgP. ix. 22. 15; **ii** foremost, enjoying priority ज्योतिषामग्रभुग्भव LiṅgaP. i. 62. 35; *m.* **A** one belonging to the Brāhmaṇa class स तानग्रभुजः ··· । सोमान्ते तर्पयामास MahāBhā. i. 169. 12; इत्थं देव्यग्रभुजा निवेदिता YudhiVi. 1. 58; **B** name of a poet वरेण्यः सोऽग्रभुङ्नामा रामानन्दमते स्थितः BhaviP. 592A. 30 (iii(4). 22. 31)

**अग्रभुज** (agra-bhuja) *m.* forearm प्राक् पूर्वं च तुलाग्रस्थं दद्यादग्रभुजं पुनः PauṣkS. 4. 89.

**अग्रभू** (agra-bhū) *adj.* first-born, senior or elder भूतानामग्रभुग्वि- (v. l. °भूर्वि)प्रः MahāBhā. i. 24. 4; *m.* **A** one belonging to the Brāhmaṇa class अग्रभूस्सर्वकर्माङ्गो मन्त्राङ्गो भद्रकृद् द्विजः AgaNi. 72; खेचरत्वं पुरा देवि ह्यासीदग्रभुवाम् SkandP. vii(1). 29. 33; **B** elder brother अग्रभुवा बहु विप्रकृत्य विधुतः स्वपुरात् । ··· अयमेति RāmC. 26. 29; *f.* region at the top यस्याग्रभूः श्यामलमेघमालासन्नद्धजाम्बूनदसानुरेति Kapphiṇā. 6. 5.

**अग्रभूत** (agra-bhūta) *adj.* [*f.* -ā] foremost सा जम्बुकी सकलपत्तलिवा(?का)ग्रभूता EI. ix. 325. 25.

**अग्रभूतल** (agra-bhūtala) *n.* foreground सुपर्णश्चक्रसंज्ञश्च···। योजनीयाः क्रमेणैव द्वाराणामग्रभूतले PāraS. 11. 296.

**अग्रभूमि** (agra-bhūmi) *f.* **A** ground in front अथाग्रभूमिमासिच्य MānS'S. 253. 24; भक्तायामग्रभूमाविषुभिः TantrSa. 2. 75; (अयम्) अग्रभूमौ सविनयमतिदूरं वारितामात्यभूपः KaṁVa. 7. 13; **B** park, garden विभूषणं भोजनमग्रभूमिः क्रीडारतिर्नित्यकृपात्मकानाम् MaYānaSū. 4. 25; **C** goal, final resort ततोऽग्रभूमिं व्यवसायसिद्धेः ··· सः । ··· उत्तमासिम् ··· आललम्बे Kirātā.

17. 55; उपेयुषो मोक्षपथं मनस्विनस्त्वमग्रभूमिः S'iśuVa. 1. 32; **D** place at the top or summit or extremity एषैव या नियतमस्य शिरोऽग्रभूमिः Kapphiṇā. 6. 16; (एताः) आरोपयन्ति प्रेक्षकजनस्य प्रमोदमग्रभूमिम् TilaMañ. 268. 22; **E** upper region अर्बुदो गिरिः। ... यस्याग्रभूमिर्गौरीव गुहापीतपयोधरा NavaSāC. 11. 54; यस्मिन्करमै न भवति मुदे साग्रभूमिर्धनानाम् NemiDū. 86; **F** porch अग्रभूमावुन्नयतो बद्धाभ्यामतिबन्धुरम्। सिन्धुराभ्याम्...विराजितम्...प्रासादमासदत् TriṣaS'aPuC. i. 4. 651.

**अग्रभूमिज** (agrabhūmi-ja) *n.* born or produced at a later stage अग्रभूमिजानीह यानि तु। स्नायुशुक्रशिराश्चैव ViṣṇuDhaP. ii. 115. 14.

**अग्रभूमिता** (agrabhūmi-tā) *f.* the state of the highest place or priority श्रीवीरः प्रददौ मर्त्यभवस्यैवाग्रभूमिताम् S'āliC. 4. 3.

**अग्रभृत** (agra-bhṛta) *adj.* [*f* -ā] collected in front (in a large vessel) संहृत्याग्रभृताप्सु दर्पणकृतच्छायाधिवास्याथवा TantrSa. 11. 113 (comm. पुरोभागगतकटाहस्थे जले)

**अग्रभैक्ष** (agra-bhaikṣa) *n.* excellent (or first part of) food (as alms) अर्धसंवत्सरं दद्यादग्रभैक्षमयाचते VṛGautaSm. 533. 11(6)

**अग्रभोगिन्** (agrabhog-in) *adj.* enjoying the best (part) अग्रदाताग्रभोगी स्याद्बलवर्णसमन्वितः MahāBhā. xiii. 101. 62.

**अग्रभोजन** (agra-bhojana) *adj.* eating before others मन्दाग्निश्चाग्रभोजनः...स्यात् SkandP. i(3. 2). 5. 19; *n.* priority in eating or eating first of all न हि ब्राह्मणस्याग्रभोजनादिनिमित्तं ब्राह्मण्यम् PadMañ. *on* KāśiVṛ. *on* P. i. 1. 56; अग्रभोजनं नियतं दीयतेऽस्मै आग्रभोजनिकः SiddhāKau. 274A. 17 (*on* iv. 4. 66)

**अग्रभोजिन्** (agrabhoj-in) *adj.* having priority in eating अग्रभोजी नृपस्यास्य...। अग्निशर्माभवद् विप्रः BṛKathāK. 57. 473; 83. 93.

**अग्रभोज्य** (agra-bhojya) *adj.* worthy of being fed first अग्रभोज्याः प्रसूतीनां श्रिया ब्राह्म्यानुकल्पिताः (ब्राह्मणाः) MahāBhā. xiii. 35. 9.

**अग्रभ्रम** (agra-bhrama) *m.* rotation of the end or top अरमध्यस्थितोऽराग्रं किंचित् त्यक्त्वाब्जपत्रवत्। अरसन्धेर्भ्रमाच्चाग्रभ्रमादब्जदलारका: Īśān-S'iPa. i. 6. 117.

**अग्रम्** (ágram) *adv.* **i** in front of, ahead, at the head of, forward अग्रं गच्छथो विवरे गोअर्णसः ṚV. i. 112. 18; यदासामग्रं प्रवतामिनक्षसि ṚV. x. 75. 4; देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् ṚV. x. 103. 8 = VājS. 17. 40; दाक्षिणावान्...ग्रामणीरग्रमेति ṚV. x. 107. 5; अग्रं गच्छत यच्छत स्वपृतनां व्यूहक्षितिं रक्षत KaviKanṭhā. 3. 2(60); तांस्तावद्वीक्ष्याग्रमागतान्। अह्लादठक्कुरव्यूहो निरीहः समपद्यत RājTa.(S'ri.) 4. 471; पुरस्तात् MediK. 132. 3; VisvaLoK. 277. 4; VisvaPra. 129. 53; **ii** at first, before, earlier to, preceding उषर्उषो हि वसो अग्रमेषि त्वम् ṚV. x. 8. 4; अह्नां केतुरुषसामेत्यग्रम् ṚV. x. 85. 19; AV. vii. 81. 2; तेन देवा देवतामग्रमायन् VājaS. 13. 51; ब्राह्मणानां निवेद्याग्रमभुञ्जन् पुरुषर्षभाः MahāBhā. iii. 47. 4; ग्रथयित्वा ततः स्रजः। अग्रं निवेद्य देवाय गन्धर्वेभ्यस्तदा ददौ MatsyaP. 120. 2; **iii** above, over (उपरि) MediK. 132. 3.

**अग्रमणि** (agra-maṇi) *m.* gem at the top अग्रमणिनिपतितप्रतिमानिमेन च भग्नगतिना दिनकरेणापि सदैन्यमात्मरथप्रस्थानपथमिव प्रार्थ्यमानम् ... आयतनं ददर्श TilaMañ. 216. 2.

**अग्रमणित** (agra-maṇita) *adj.* accompanied by an inarticulate erotic sound परिरम्भमग्रमणितं न वधूरशकद्विधातुमपरा सुरते NemiNir. 10. 18.

**अग्रमण्डन** (agra-maṇḍana) *n.* architectural decoration at the top (of a pillar) भूतेभमकरैर्व्यालसंयुक्तं चाग्रमण्डनम् MayaMa. 15. 47; स्वव्यासार्धात् त्रिपादाद् वा कुर्यात् तास्वग्रमण्डनम् ĪśānS'iPa. ii. 31. 73; S'ilpaRa. i. 21. 105.

**अग्रमण्डप** (agra-maṇḍapa) *n.* (*m.*) front hall or pavilion पुरा गर्भगृहद्वारि तथा चैवाग्रमण्डपे।... समभ्यर्च्याध्यवारिणा PāraS. 7. 388; 11. 28; मण्डपं द्वितीयं चैतत् अ(द)ग्रमण्डप(पं) तन्मुखे MānaSā. 34. 27; सरस्वतीवाहनाय हंसायेत्यग्रमण्डपे।...प्रक्षिपेद् बलिम् ĪśānS'iPa. ii. 57. 59.

**अग्रमण्डपभूमिष्ठ** (agramaṇḍapabhūmi-ṣṭha) *adj.* placed on the ground of the front hall or pavilion देवम् ... यानादेरवरोप्याथ ... अग्रमण्डपभूमिष्ठे भद्रपीठे निवेश्य च। ... अभ्यर्च्य...स्वस्थाने सन्निवेशयेत् PāraS. 7. 400.

**अग्रमद** (agra-mada) *m.* great ecstasy शक्तिर्नारायणाख्या या स्वमूर्तिः परमेश्वरी। भूत्वा चाग्रमदे(?) भावैस्सर्वमाप्याययेज्जगत् PauṣkS. 10. 21.

**अग्रमध्यपृथक्त्व** (agramadhyapṛthak-tva) *n.* distinctness (in meaning) between *agra* (tip, top) and *madhya* (middle portion) अग्रमध्यशब्दौ सन्नन्येताम्, अग्रमध्यपृथक्त्वात् SaṅkarKā.(Devaśvāmin.) i. 4. 16.

**अग्रमध्यम** (agra-madhyama) *m.* middle part of the tip स्थापिताभ्यां च सूत्राभ्यां गदाभ्यामग्रमध्यमात्। मत्स्यवल्लाञ्छनं कुर्याद् यावन्मूलभ्रमावधि PāraS. 26. 21.

**अग्रमन्दिर** (agra-mandira) *adj.* [*f.* -ā] having a room in the fore-part (राज्ञां नौका) सगृहा त्रिविधा प्रोक्ता सर्वमध्याग्रमन्दिरा YuktiKa. 228. 4; अग्रतो मन्दिरं यत्र सा (= राज्ञां नौका) ज्ञेया त्वग्रमन्दिरा YuktiKa. 228. 9.

**अग्रमन्दिरपर्वत** (agramandira-parvata) *m.* mountain or hill called Agramandira आरूढः कूपकारोऽयमग्रमन्दिरपर्वतम् BṛKathāK. 95. 10.

**अग्रमरण** (agra-maraṇa) *n.* dying prematurely, committing suicide एतेऽपि वयमिह निरुपयोगमात्मानमग्रमरणेनोपयोक्ष्यामह इत्युपरचितप्रणामाञ्जलिः प्रचलच्चूडेन मस्तकेन महीं जगाम AvantiKa. 49. 2.

**अग्रमसूरक** (agra-masūraka) *n.* top entablature or lintel द्वितालं सार्धतालं तु एकतालं तु वा द्विज। त्यक्त्वा स्तम्भाग्रतो विप्र न्यसेदग्रमसूरकम् PāraS. 16. 406.

**अग्रमहादेवी** (agra-mahādevī) *f.* chief queen अस्य (नृपतेः) ... सुमञ्जरी नामाग्रमहादेवी YaśasCam. ii. 360. 22.

**अग्रमहामहिषी** (agra-mahāmahiṣī) *f.* chief (noble) queen, cf. **अग्रमहिषी,** नृपस्य तस्याग्रमहामहिष्या बभूव गर्भोऽनुपमाह्वदेव्याः VarāṅgaC. 28. 2.

**अग्रमहिषी** (agra-mahiṣī) *f.* chief queen पुत्रश्चायं वृतो राज्ये मया तस्माद् विचारितम् (v. l. त्वमग्रमहिषी मम) MahāBhā. i. 69. 41; i. App. I. 46. 19; iv. App. I. 6. 12; बह्वीनामुत्तमस्त्रीणां ममाग्रमहिषी भव Rāmā. v. 18. 16; iii. 45. 24; विक्रान्तस्याग्रमहिषी हैमिनी नाम नामतः MārkP. 76. 24 = SkandP. v(2). 33. 24; कदाचिदग्रमहिषीं वसुमतीम् ... अन्तर्वत्नीमशृणोत् Avanti-Ka. 37. 10; 137. 20; KaumuMa. 2. 9(18); त्वं वीरजननी भूत्वा ममाग्रमहिषी सती। या (? यद्) वक्षि क्लीबमेवं तत् PadmP.(Ra.) 73. 97; 53. 104; 122. 47; यशोमतिकुमारस्याग्रमहिष्याम्...मुनिकुमारकयुगलम् ... तदर्थमादिक्षत् YaśasCam. i. 135. 2; ii. 290. 1; ii. 313. 16; ii. 345. 4; ii. 353. 5; SkandP. iii(3). 14. 31; BhaviP. 796A. 29 (iv. 130. 43); 893A. 14 (iv. 204. 21); PadmP. v. 21. 4; तस्य (नरवर्मणः) भार्यासहस्राणाम्...। दशानामग्रमहिषी सुदेवी SaurP. 48. 31; S'ivaP. iii. 27. 37 (327B. 4); BṛKathāMañ. x. 1. 168; x. 15. 16; तेन राज्ञा ... (प्रमदवनम्)...रमणीयं अवलोक्य...अग्रमहिष्या सह तत्र प्रविशति स्म (? प्रविष्टः) Pañcā. 122. 15; MalliC. 3. 19; SamarāSam. 8. 218; 8. 279; PrabaCin. 113. 21; तस्याग्रमहिषी निजं सर्वस्वम्...कोटिम्बके प्रक्षिप्य स्थिता TīrthaKa. 82. 16; 83. 7; PrabaK. 76. 31; 77. 29; विराटभूपतेरग्रमहिषी पुत्रकाम्यया। ऋषिं गागलिनामानमाराधान्यदाश्रमे Dhūrtā. 36; अग्रमहिष्या च लीलादेव्यां दूतीप्रेषणमुखेनाह्वानम्... दृष्ट्वा...राजाप्यचिन्तयत् BhojPra. 69. 27; Bharat. 7A. 5; अभिषेच्या भवेत् (? द्) राज्ये ... राज्ञाग्रमहिषी कार्या सर्वलक्षणलक्षिता इति विष्णुधर्मोत्तरादिवचनै राज्ञा सहाग्रमहिषी अभिषेक्तव्या VīraMi.(Lakṣaṇa.) 200. 11; KathāK. 32. 14.

**अग्रमहिषीपद** (agramahiṣī-pada) *n.* status or position of the chief queen आप्तपुरुषोऽप्यग्रमहिषीपदपणबन्धेन साध्यसिद्धिं विधाय स्वामिनं तत्समागमिनमकरोत् YaśasCam. ii. 314. 8; (नृपः) तामग्रमहिषीपदे। अभिषिच्य मनोजन्मसंभोगसुभगोऽभवत् BṛKathāMañ. 15. 70; राजापि स्थापयामास तामग्रमहिषीपदे। मृगावतीम् TriṣaS'aPuC. iv. 1. 215.

**अग्रमही** (agra-mahī) *f.* highest place, extremity, climax स विसयस्याग्रमहीमनीयत NavaSāC. 13. 26.

**अग्रमहीभृत्** (agra-mahībhṛt) *m.* great king or monarch कटुकरोटककूटात्। उन्मिमेष मुखमग्रमहीभृत्तर्पितान्तकयुरुद्धरणाभम् Kapphiṇā. 17. 54.

**अग्रमहोच्छ्रय** (agra-mahocchraya) *adj.* having lofty peaks लोकालोकः परतरः पर्वतोऽग्रमहोच्छ्रयः BhaviP. 611B. 19 (iv. 2. 42)

**अग्रमांस** (agra-māṃsa) *n.* **1** heart (*lit.* best flesh) पद्मरागं पयोनिधिः। अग्रमांसमिवोद्धृत्य ददाति पिशिताशिने JānaHa. 2. 61; बुक्काग्रमांसं हृदयं हृत् AmaK. 1202 = AgniP. 363. 13; ParyāRaMā. 907; Vaija. 182. 114; S'abdaRa.(Su.) 3. 189; **2** morbid protuberance of the liver (*also* a disease of the heart) रोहितकसमायुक्तं त्रिकत्रययुतं त्वयः। प्लीहानमग्रमांसं च यकृत् हन्ति च दारुणम् RaseCin. 9. 223 (215. 16); 9. 304 (240. 26); 9. 306 (247. 29); 9. 320 (256. 4); उदरमांसवर्धनरूपरोगविशेषः S'abdaKaDru.

**अग्रमांसक** (agramāṃsa-ka) *n.* **1** morbid protuberance of the liver उदरामयकुम्भकेसरी रस एषः...हन्ति...यकृतं क्रिमिमग्रमांसकं कमठं प्लीहजलोदराह्वयम् RaseCin. 9. 321 (256. 24); अर्पिषं (v. l. अविषम्, अपिषम्) बालवत्साया दुग्धे स्यादग्रमांसके NānārthāSam. ii. 55. 102.

**अग्रमाण्डलिक** (agra-māṇḍalika) *m.* chief feudatory of a territory or province गुरुदृष्टो मीनस्थो ललितं चन्द्रोऽग्रमाण्डलिकम्। अत्याढ्यं सुकुमारम्... जनयेत् Sārā. 23. 83.

**अग्रमात्र** (agra-mātra) *n.* mere tip or top शाखाशब्दः समूलस्य नाग्र-

-मात्रस्य वाचकः S'āstrDī. 368.2 (*on* iv. 2.3); अग्रहस्त इत्यत्राग्रमात्रेऽवयवे हस्तः KāvyPra. 53.2 = Ekāva. 2.9(22) (71.3); Kāvyānu.(He.) 29.13 = KāvyKaVr. 45.24 (2.4); ऊर्ध्वस्थस्य गृहादिभिर्व्यवहितस्याग्रमात्रं सखे वंशस्य प्रगुणस्य यस्य सुसमे देशे समालोक्यते Golā. 246.17 (29.47) = 275.1 (31.51); 247.6 (29.49); वंशाग्रं वंशाङ्कुरः न त्वग्रमात्रम् CaturCin. iii(1). 559.10; अग्रमात्रेऽवयवभागे हस्तोऽयम् SāhiDa. 46.10; BhāṭṭDī. ii. 111.5 (*on* iv. 2.3); शिखाग्रमात्रे चूडायाम् AnekāSam. 2.27; कोटिस्तु वक्ष्यते। चापाग्रे चाग्रमात्रेऽश्रौ Nānārthā-Saṁ. i. 12.27; NānārthaMa. 218; शिखा चूडाग्रमात्रयोः AnekāTi. 2.319.

**अग्रमात्रक** (agramātra-ka) *n.* mere tip or end or point शिखा स्यादग्रमात्रकम् AnekāSa. 5 = DharK. 275; शिखा शिफायां चूडायां ज्वालायामग्रमात्रके ViśvaPra. 22.5; NānārthāSaṁ. i. 159.1365; MediK. 20.6; S'abdaRaSaK. 55.11.

**अग्रमात्रवचनत्व** (agramātravacana-tva) *n.* the state of denoting the tip or top-portion only शाखामाच्छिनत्तीति छेदनादिवाक्येषु शाखाशब्दस्य समूलवाचकत्वेऽपि…मूलस्य मूलापादानकपरिवासनासंभवादग्रमात्रवचनत्वात् परिवासनस्य तादर्थ्ये सति छेदनादीनामपि तादर्थ्यमेव MayūMāli. 368.6 (*on* iv. 2.3)

**अग्रमात्रवाचित्व** (agramātravāci-tva) *n.* the state of denoting the tip or top-portion only परिवासनवाक्ये शाखाशब्दस्याग्रमात्रवाचित्वेऽपि न तन्मात्रार्थत्वं परिवासनस्य MayūMāli. 368.7 (*on* iv. 2.3)

**अग्रमात्रवाचिन्** (agramātravāc-in) *adj.* denoting the tip or top-portion only अस्तु वा शाखाशब्दोऽग्रमात्रवाची BhāṭṭDī. ii. 111.15 (*on* iv. 2.3)

**अग्रमान्य** (agra-mānya) *adj.* foremost (*lit.* honoured or respected before all) गणेषु देवेषु हि मानवेषु तदग्रमान्यो भव दण्डपाणे SkandP. iv. 32.60.

**अग्रमार्ग** (agra-mārga) *m.* main path or road महेन्द्रः प्रत्यासन्नो विभिन्नद्विपमदसलिलैः सिच्यमानाग्रमार्गः Manmatho. 1.14 (422.27)

**अग्रमाल्य** (agra-mālya) *n.* excellent garland or flowers शरः सर्पमुखो विभाति सदाग्र्य(v. l. ग्र)माल्यैर्महितः MahāBhā. v. 61.10; अग्रमाल्याग्रगन्धैश्च भोजनाद्यैस्तथैव च। गृहागतेषु वाहेषु अर्घं दद्यान्नराधिपः AśvaVai. 13.43.

**अग्रमाल्यसनाथ** (agramālya-sanātha) *adj.* adorned with excellent flowers विशांपतिः…अग्रमाल्यसनाथमस्तकम्…हेमकूटमारुरोह AvantiKa. 78.17.

**अग्रमुक्त** (agra-mukta) *adj.* released at first घाताय कर्तुं द्विषतां प्रवीरैः शरोऽग्रमुक्तान् मनसो रथाच्च। प्रागभ्यमित्रोऽजनि RāghPāṇ.(Dha.) 16.22.

**अग्रमूर्ति** (agra-mūrti) *f.* idol placed at the tip (of the lotus-petal) भागेऽग्रमूर्तीनां निधानं स(?त)न्मयोदितम् PauṣkS. 7.157.

**अग्रमूल** (agra-mūla) *n.* top-portion मध्ययोनेरग्रमूले पार्श्वयोर्बहिरर्चयेत् TantrRā. 5.46.

**अग्रमूलघृताक्त** (agramūla-ghṛtākta) *adj.* anointed or besmeared with ghee at the top and bottom इध्ममग्रमूलघृताक्तम्… षष्ठेन जुहुयात् LiṅgaP. ii. 25.75.

**अग्रमूलतस्** (agramūla-tas) *adv.* from top and bottom दलाग्रसूत्रोभयपार्श्वसूत्रयोरग्रे स्थितं सूत्रमथाग्रमूलतः। दलाग्रसूत्रान्तमुपानयेत् ĪśānS'iPa. ii. 8.39.

**अग्रमूलप्रदेश** (agramūla-pradeśa) *m.* top and bottom parts (of any object) अन्तर्बहिश्चाग्रमूलप्रदेशे पुनरानयेत् S'ilpaRa. ii. 1.27.

**अग्रमूलविभागार्थम्** (agramūla-vibhāgārtham) *adv.* for differentiating between the top and bottom परिवासनमग्रमूलविभागार्थम् BhāṭṭDī. ii. 111.6 (*on* iv. 2.3)

**अग्रमूलव्यपदेश** (agramūla-vyapadeśa) *m.* appellation as the top and bottom अग्रमध्यमूलानि त्रयो भागाः तत्रैकमेव मुख्यमग्रं मूलं च, अन्येषां तु भागानामपेक्षाकृतोऽग्रमूलव्यपदेशः Pradī. viii. 35.8 (*on* viii. 1.12)

**अग्रमूलाग्रक्षय** (agramūlāgra-kṣaya) *adj.* tapering towards the tip of the bottom and towards the top(?) अग्रमूलाग्रक्षयं तारं ग्रीवस्य(?वं स्याद्) द्विवक्त्रयुक् MānaSā. 60.7.

**अग्रमूलाद्यवच्छेद** (agramūlādy-avaccheda) *m.* delimitation by the top, bottom etc. तथा चैकवृक्षादिनिष्ठसंयोगतदभावयोः अग्रमूलाद्यवच्छेदेनैवैकस्यां सर्वदृश्यतादात्म्यापन्नविद्यक्तौ … विलक्षणावच्छेदकत्वस्य वक्तुमशक्यत्वात् LaCaudr. 41.10.

**अग्रमृत्तिका** (agra-mṛttikā) *f.* excellent earth, clay गोमार्गादाहरेदग्रमृत्तिकाम् AVPari. i. 43.5.

**अग्रमेलन** (agra-melana) *n.* joining together of the tips (of the fingers) मध्यमानामिकाङ्गुष्ठत्रयाणामग्रमेलनात् (कृत्वा मुद्रां मृगीम्) JayāS. 31.6.

**अग्रमोदक** (agra-modaka) *m.* best sweetmeat ताम्रपात्र्यां कुंडकं वा कृतं दत्त्वाग्रमोदकम्। प्रदद्याद्द्विजदांपत्यं पूज्य माल्यविभूषणैः BhaviP. 782B.23 (iv. 121.165)

**अग्रमौर्विका** (agra-maurvikā) *f.* sine of the amplitude विषुवच्छायया-भ्यस्तः कर्णो मध्याग्रगोद्धृतः। स्वक्रान्तिज्या त्रिजीवाघ्नी लम्बज्याप्ताग्रमौर्विका SūrySi. 3.27.

**अग्रयण** (agrayaṇa) [also *āgrayaṇa*, in the *prajñādigaṇa*, cf. SaraKaṇṭhā.(Gr.) v. 4.45, चन्द्रस्तु। अग्रेऽयनस्य। अग्रयणम्। राजदन्तादित्वात्प्राङ्गनिपाते शकन्ध्वादित्वादकारलोपे च। अग्रयणमेव आग्रयणमित्याह GaṇRa. 3.176 (214)] *m.* (name of) a form or kind of Agni अग्निराग्रयणो (v. l. अग्रयणो) नाम भानोरेवान्वयस्तु सः MahāBhā. iii. 211.13; *n.* oblation consisting of the first fruits इन्द्रेण सहितं यस्य हविराग्रयणं (v. l. अग्रयणं) स्मृतम् MahāBhā. iii. 211.13.

**अग्रयाजक** (agra-yājaka) *m.* name of one of the ten sons of king Madrakeśa मद्रकेशः समायातः … राजा दशपुत्रसमन्वितः। वातवेत्रः सुवर्चाश्च नागदंतोऽग्रयाजकः BhaviP. 533A.32 (iii(3). 32.39)

**अग्रयाण** (agra-yāṇa) *n.* excellent or first path or vehicle (Mahāyāna or Pūrvamīmāṁsā) हेयज्ञेयाप्यपाक्यानि विज्ञेयान्यग्रयाणतः GauḍKā. 4.90 (S'aṅkara अग्रयाणतः प्रथमतः)

**अग्रयात** (agra-yāta) *adj.* [*f.* -ā] which has gone ahead अगमदन्तिकागतां गजोऽग्रयाताग्रकरः करेणुकाम् S'iśuVa. 12.16; अनुसरति सरागः प्रेयसीमग्रयाताम्…मरालः SaduktiKa. 282.23.

**अग्रयातृ** (agra-yātṛ) *adj.* taking the lead (i. e. foremost) शूराणामग्रयातॄणां सहस्राणि शतानि च Rāmā. vii. 21.28.

**अग्रयान** (agra-yāna) *n.* 1 the best vehicle (i. e. the Mahāyāna school of Buddhism) पिटकत्रयं सूत्रविनयाभिधर्माः। तदेव त्रयं हीनयानाग्रयानभेदेन द्वयं भवति MaYānaSū. 53.16 (11.1); बुद्धैश्च समवधानं तेभ्यः श्रवणं तथाग्रयानस्य। अधिमुक्ति सह बुद्ध्या द्वयमुखतामाशु बोधिं च MaYānaSū. 83.16 (12.23); **2A** leading vehicle यावदग्रयानं गिरिमुखसङ्कटपथेन चलितुं प्रवृत्तम् PrabaK. 95.4; **2B** advancing, going or stepping forward नासीरोऽस्त्यग्रयानं स्यात् Vaija. 120.203; नासीरमग्रयानम् Liṅgānu.(He.) 145.10; नासीरं त्वग्रयानं स्यात् AbhidhāCin. 800; KalpaK. 128.355; अग्रयाने तु नासीरम् ParaNā. 2432; *m.* name of a Bodhisattva [DBHS]; *adj.* advancing in front, taking the lead (ब्रह्मोवाच) मनोऽग्रयानं वचसानिरुक्तं नमामहे देववरं वरेण्यम् BhāgP. viii. 5.26.

**अग्रयानसंभाषा** (agrayāna-saṁbhāṣā) *f.* talk about the foremost vehicle (i. e. the Mahāyāna school) सत्त्वानामावरणं तत्प्रतिपक्षोऽग्रयानसंभाषा। सर्वान्तरायदोषप्रहाणमेषां ततो भवति MaYānaSū. 83.10 (12.20)

**अग्रयाम** (agra-yāma) *m.* first quarter (of day or night) व्रजति रतिसुखार्थं चित्रिणीमग्रयामे…दिनरजन्योः (पुरुषः) RatiRaha. 1.22 = S'ārṅgaPa. 3143.

**अग्रयायिन्** (agrayāy-in) *adj.* [*f.* -ī] 1 going ahead, moving in front, leading the way सोपानत्वं व्रज पदसुखस्पर्शमारोहणेषु (v. l. सोपानत्वं कुरु मणितटारोहणायाग्रयायी MeghDū. 60 = NemiDū. 64; प्रवेश्य चैनं पुरमग्रयायी … उपाचरत् RaghuVa. 5.62 (comm. अग्रयायी सेवाधर्मेण पुरो गच्छन्); अनीकिनीनां समरेऽग्रयायी तस्यापि … सुतोऽभूत् RaghuVa. 18.10; S'āk. 7.26; अग्रयायिना विनयपेशलालापेन दौवारिकजनेनागम्यमानम् … क्षितिपति(?तिः) समरकेतुमद्राक्षीत् TilaMañ. 100.14; भृत्यः स्वपादरजसामयमग्रयायी NavaSāC. 13.67; ततश्च कर्मणा स्वेन शुभेनेवाग्रयायिना। नीताभूत्निकटं देव्याः प्रतीहारेण तेन सा KathāSaSāg. iv. 1.46; viii. 3.86; ix. 1.162; ix. 4.4; Rāvaṇā. 3.32; सा चमूररुवदग्रयायिनी S'rīKaC. 22.43; तदा चानङ्गदेवस्य श्रमणैरग्रयायिभिः। दृष्टस्त्वम् SamarāSaṁ. 3.112; गूर्जरान् पारशीकांश्च प्रागेव भृतकीकृतान्। अपश्चात्पदविन्यासानकरोदग्रयायिनः Yādavā. 22.89; 11.16; फताहशाहजं खानं नाजुकं चाग्रयायिनम्। कृत्वा निविष्टाः RājTa.(Prā.) 269; **2** [with Gen. or Loc.] chief, most prominent, best त्वमग्रयायी नयपारदृश्वनाम् RāghPāṇ.(Ka.) 7.40; स्वादीयस्तु प्रियतमवपुः संगमश्चाग्रयायी MayūSaṁ. 2.61; भूदानपात्रभूताय भूमिदेवाग्रया[यि]ने श्रीमते रामचन्द्राख्यदीक्षिताय (ग्राममुत्तमम्) EI. xiv. 317.106; भक्तानामग्रयायी स च खलु मतिमानुद्धवः Nāray. x. 88.11; भवनमिदम्…विषमनरकमार्गेष्वग्रयायि SiṁhāDvā. 196.9.

**अग्रयायिबल** (agrayāyi-bala) *n.* advancing army or force ध्वान्ते धावति दस्यूनामग्रयायिबलोपमे। कीर्तिसेना तदालोक्य पुंवेषा सा व्यचिन्तयत् KathāSaSāg. vi. 3.108.

**अग्रयावन्** (agra-yāvan) *adj.* leading, going in front आ देवानामग्रयावेह यातु नराशंसः ṚV. x. 70.2.

**अग्रयु** (agra-yu) *adj.* going at the head, leading अरूरुचदुषसः पृश्निरग्रियः इति प्रजाकामस्य JaimiBr. 1.81.

**अग्रयुक्त** (agra-yukta) *adj.* having the tip दूर्वा भूस्तृणमाषाणां गृह्णीयादङ्कुराणि च।…अग्रयुक्तानि ParaS. 5.49.

**अग्रयुत** (agra-yuta) *adj.* along with the point (?) तिर्यङ्मूलाग्रयोगेन पार्श्वस्याग्रयुतं लिखेत् S'ilpaRa. i. 14. 136.

**अग्रयुति** (agra-yuti) *f.* sum of the *agras* इष्टद्युतेरतु कृत्वा दृग्ज्यां शङ्कुं तथा च शङ्कग्रम् । विश्लेषो वाग्रयुतिः MaBhāsk. 3. 47 (comm. अर्काग्राशङ्कग्रयोः योगभेदवशात्)

**अग्रयोग** (agra-yoga) *m.* **1** contact with the fore part (of the foot) कुञ्चितं पादमुत्क्षिप्य जानूर्ध्वं संप्रसारयेत् । पातयेच्चाग्रयोगेन सा सूची परिकीर्तिता NāṭyaS'ā. 10. 34; ऊरुपर्यन्तां जङ्घां सकलां प्रसार्याग्रयोगेनापातयेदिति । सूच्याकारत्वात् सूची AbhinBhā. ii. 103. 10 (*on* 10. 34); **2** sum of remainders यदाग्रयोगोद्भवः प्रश्नः ĀryaSi. 14. 39(138); (अहर्गणानयनम्) निरग्रचक्रादपि कुट्टकेन वक्ष्येऽग्रतोऽग्राच्च तथाग्रयोगात् GrabaGa. 20. 21.

**अग्रयोगतस्** (agrayoga-tas) *adv.* in contact with the top (i. e. resting on the end) पीठिका निर्गता बाहुयुग्मात् तत्राग्रयोगतः । स्तम्भिन्यौ रोपयेद् ब्राह्मं पृथक्पदयुगं श्रिते SamarāSū. i. 17. 53.

**अग्रयोजिका** (agra-yojikā) *f. adj.* (prob.) joining the ends बन्धार्थंतिप्रचंपट्टयुगलात् प्रणवाक्षरम् । प्रागूर्ध्वं रेखयोः प्रान्ते प्रणवस्याग्रयोजिका । रेखैका तु भवेदेव मकारस्तस्य पार्श्वतः । शिरोभागमुपक्रम्य सकोणाधः प्रलम्बिनी PadmP. iv. 100. 45.

**अग्रयोधिन्** (agrayodh-in) *m.* leading warrior, good fighter एष तारात्मजः ··· । रक्षसां तु वधे तेषामग्रतस्ते (v. l. अग्रयोधी) भविष्यति Rāmā. iv. 22. 11; *adj.* **A** good at fighting अयुतं रक्षसां तत्र पूर्वद्वारमुपाश्रितम् । शूलहस्ता दुराधर्षाः सर्वे एवाग्रयोधिनः Rāmā. vi. 47*(2); **B** fighting first ततोऽर्कवारे संप्राप्ते योधयेदग्रयोधिनम् ।···कुक्कुटम् Mānaso. iv. 7. 1140; सलिलस्याढकं यावन्नाडीरन्ध्रेण संश्रयेत् । मुख्यं तु योधयेत्तावत्तदर्धेनाग्रयोधिनम् Mānaso. iv. 7. 1141; iv. 7. 1143; युद्धकर्मविशारदम् । ज्यैष्ठिकं तं प्रकुर्वीत लावकं वरलक्षणम् । अन्तर्ज्येष्टि(? ष्ठि) प्रकुर्वीत ततो न्यूनं च लावकम् । ततोऽपि गुणतो हीनं विदधीती(? ता)ग्रयोधिनम् Mānaso. iv. 8. 1213; iv. 8. 1220.

**अग्रयौवन** (agra-yauvana) *n.* early youth प्राप्तोऽग्रयौवनघनस्तनमर्दकालः Avimā. 5. 7.

**अग्ररचित** (agra-racita) *adj.* [*f.* -ā] put on the peak यस्यैषा···गदा कैलासस्य गिरेरिवाग्ररचिता सोल्का महेन्द्राशनिः ŪruBha. 17.

**अग्ररत्न** (agra-ratna) *n.* excellent gem धन्या भवन्तो दृश्यन्ते बह्वाश्चर्याश्च भूधराः । काञ्चनस्याग्ररत्नस्य धातूनां च विशेषतः HariVaṁ. 100. 55.

**अग्रराशि** (agra-rāśi) *f.* known quantity, given quantity पूर्वाग्रमग्रराशौ क्षिपेत् GaṇiSāSaṁ. 3. 47.

**अग्ररुचिर** (agra-rucira) *adj.* [*f.* -ā] beautiful at the tip नासा ··· अग्ररुचिरा तिलपुष्पकल्पा S'ilpaRa. ii. 9. 3.

**अग्ररूप** (agra-rūpa) *n.* first symptom अममैगोऽल्पहेत्वग्ररूपरूपोऽनुपद्रवः ।···सुखः (गदः) AṣṭāHṛ. i. 1. 30 (comm. अग्ररूपं पूर्वरूपम् । रूपं लक्षणम्); AṣṭāSaṁ. i. 6. 13 (1. 2)

**अग्रलक्षण** (agra-lakṣaṇa) *adj.* having the best characteristics ऋद्धिपादाश्च चत्वारो धीराणामग्रलक्षणाः । सार्थसिद्धौ जायन्ते आत्मनश्च परस्य च MaYānaSū. 142. 13 (18. 20); कम्बुग्रीवो भवेद्राजा लम्बकण्ठोऽग्रलक्षणः BhaviP. 57B. 12 (i. 26. 20)

**अग्रलम्बक** (agra-lambaka) *m.* perpendicular from the tip (of a stick) लब्धोनो दृग्लम्बो दृग्लम्बाद्ग्रलम्बके हीने BrāhmSphuSi. 22. 35.

**अग्रलम्बन** (agra-lambana) *n.* projection of the front उत्सेधे च त्रिभागैकं तस्याधो चाग्रलम्बनम् MānaSā. 19. 85.

**अग्रलोहिता** (agra-lohitā) *f.* a kind of vegetable, a kind of pot-herb (red at the tip) चिल्लीशाक [S'abdaKaDru.]

**अग्रवक्त्र** (agra-vaktra) *n.* [w. r. for *agravakra* ?] name of a surgical instrument (with the tip shaped like a serpent's hood) तच्चूर्णमल्पमप्यवस्थितं पुनः परिवृद्धिमेति । तस्मात्समग्रामग्रवक्त्रेणाददीत (अश्मरीम्) AṣṭāSaṁ. ii. 81. 5 (4. 13) (F. N. सर्पफणवदग्रवक्रेण यन्त्रेण)

**अग्रवक्तृ** (agra-vaktṛ) *adj.* foremost or best among speakers, very good orator (ब्राह्मणा ऊचुः मागधाय) ब्रह्मक्षत्रवर्णयोस्त्वं वन्दी भव महामते । स्तुतिपाठी चाग्रवक्ता सर्वसद्गुणवर्णकः BṛDharmaP. ii. 14. 58.

**अग्रवक्र** (agra-vakra) *n.* name of a surgical instrument which is bent at the tip (used for the removal of *aśmarī*) समस्तामग्रवक्रेणाददीत (अश्मरीम्) S'uśruS. iv. 7. 33; AṣṭāSaṁ. ii. 81. 5 (4. 13)

**अग्रवक्रनास** (agravakra-nāsa) *adj.* having a nose with a curved tip (भवन्ति) धनिनोऽग्रवक्रनासाः BṛSaṁ. 68. 62 = VīraMi. (Lakṣaṇa.) 92. 4.

**अग्रवचन** (agra-vacana) *n.* statement (about filling the Soma-cup for a particular deity) as the first ऐन्द्रवायवस्याग्रवचनादादितः प्रतिकर्षः स्यात् MīmāSū. x. 5. 62; ऐन्द्रवायवस्य (ग्रहस्य) सर्वादितः प्रतिकर्ष इति । कुतः । अग्रवचनात् S'ābaBh. 1970. 26 (*on* x. 5. 62)

**अग्रवत्** (ágra-va(n)t) *adj.* [*f.* -tī] **i** pointed ततस्तस्य नगस्थस्य क्षुरेण निशितेन ह (v. l. क्षुरेणाग्रवता प्रभुः) । शिर उत्कृत्य तरसा पातयामास पाण्डवः MahāBhā. i. 123. 66; **ii** having the tips intact or unbroken अस्ति चात्र प्राप्तिरग्रवन्ति प्रागग्राणि उदगग्राणि वा ··· इति स्मृतेः TantrVā. 919. 11 (*on* iii. 4. 9(+5)); यानि अग्रवन्ति दर्भसमिदादीनि तान्युदगग्राणि कार्याणीति स्मृतेरित्यर्थः MayūMāli. 262. 16 (*on* iii. 4. 4); **iii** (verse) containing the word *agra* बुध्नव॑ती अग्र॑वती याज्यानुवा॒क्ये॑ अकरोद् बुध्ना॒द्वै॑नमग्रं॒ पर्यैणयत् TaiS. II. iii. 4. 3; BaudhS'S. ii. 137. 14; उपवत्यग्रवन्त्या स्तो गोसवे यदि वा न हि NyāyMāVi. 561. 17 (*on* x. 5. 16); अग्रवती बृहत्पृष्ठस्येति वाक्येनाग्रवती बृहत्साम्न्येव तस्मिन् प्राप्यते न तु रथन्तरसाम्न्यपि VidhiRa. 33 (181. 11); BhāṭṭDi. iv. 25. 23 (*on* x. 5. 16)

**अग्रवत्** (agra-vat) *adv.* like the top दिक्संयोगानामपि परमाणौ व्याप्यवृत्तित्वेन दिशां मूलाग्रवदव्याप्यवृत्तिसंयोगावच्छेदकत्वायोगात् S'ivārkaMaDī. ii. 67. 32 (*on* ii. 2. 10)

**अग्रवयस्** (agra-vayas) *adj.* young in age अग्रवयसम् दृढम् । संतोषजननं स्त्रीणां प्रज्ञावानाश्रयेद्वरम् BṛParāSm. 6. 21.

**अग्रवर्ण** (agra-varṇa) *adj.* **A** of excellent colour एते ··· अग्रवर्णाश्च पुष्पचित्राश्च ··· वाजिनः AvantiKa. 93. 14; **B** belonging to the higher castes सपर्यन्ति मुदिता भृत्याः स्वामिपदाम्बुजम् । हीनवर्णैरग्रवर्णो वर्ण्यते गुणगौरवैः SkandP. iv. 43. 59.

**अग्रवर्णचतुष्टय** (agravarṇa-catuṣṭaya) *n.* group of four Brahmins (*lit.* men of the foremost caste) श्रीहर्षस्य सुता एते भरद्वाजकुलोद्भवाः । सर्वदेशेषु विदितमग्रवर्णचतुष्टयम् Ballā 3. 7. 17.

**अग्रवर्ति** (agra-varti) *f.* a kind of wick (used for medicinal purposes) आरग्वधनिशाकालाचूर्णं मधुघृताप्लुतम् । अग्रवर्तिप्रणिहितं व्रणानां शोधनं हितम् SuśruS. iv. 8. 30.

**अग्रवर्तिन्** (agravart-in) *adj.* **1** what follows (in due order in a text) सत्यादीनां तदर्धं तु तेभ्यश्चार्धं परेऽक्षरे । अर्धमर्धांशसंयुक्तमधिकं चाग्रवर्तिनाम् (मन्त्राणाम्) । जपकाले यथा होमे कर्तव्यं सिद्धिमिच्छता JayāS. 15. 165; PāraS. 7. 166; **2** foremost, prominent विधिवद्यागपूरकम् । प्रावृट्काले प्रवृत्ते तु ··· । मनुष्यामरसिद्धानां कर्तव्यं चाग्रवर्तिनाम् PāraS. 12. 24; **3** being in front तेन व्यलोकि दिवमुत्पततताग्रवर्ति विस्पष्टलक्ष्म परिणाहि मृगाङ्कबिम्बम् HarVi. 30. 5; 13. 4; रुरुचे चषकार्पिताननाया युवतेरुत्पलषट्पदोऽग्रवर्ती Kapphiṇā. 13. 24; UdaySuKa. 131. 13; दयितेऽग्रवर्तिनि (सति) मुधैव दधौ मुकुरं करे सुरपुरंध्रिजनः S'rīKaC. 13. 17; तत्राग्रवर्तिनोऽस्त्रिव्यपदेश एव । पश्चाद्वर्तिनस्त्वरित्वेऽपि पार्ष्णिग्राहव्यपदेशः ManvaMu. 276. 6 (*on* 7. 158); **4** being at the top पक्कान्यस्य वृक्षस्याग्रवर्तीनि फलानि TātpaṬ. (Vā.) 167. 11 (*on* i. 1. 5)

**अग्रवर्तुल** (agra-vartula) *adj.* [*f.* -ā] circular at the end or tip चतुरस्राग्रवर्तुला । सालादिशुभकाष्ठानां हलीषा विदुषां मता BṛParāSm. 5. 70.

**अग्रवर्त्मन्** (agra-vartman) *n.* **A** excellent road सरसासुरसौरसंसत् । धत्तेऽब्जिनीषु च विराजितमग्रवर्त्म···सत् HarVi. 5. 72 (comm. अयं चाब्जिनीषु विभिः पक्षिभिर्विशेषेण वा राजितत्वादग्रवर्त्म सचारु वहति); **B** road in front (of something) ततः कर्तुं प्रवृत्तेषु वेश्यावेश्माग्रवर्त्मसु । विटेषु मधुलुब्धेषु निर्व्यापारं गतागतम् SamaMā. 3. 10.

**अग्रवल्लभा** (agra-vallabhā) *f.* most beloved wife, first wife अहं देवी महीभर्तुः शूद्रकस्याग्रवल्लभा BṛKathāMañ. ix. 2. 299.

**अग्रवल्लरी** (agra-vallarī) *f.* creeper at the top (of a tree) विटपवतीविकस्वरस्फुटश्रियं नमयितुमग्रवल्लरीम् । समुल्लसत्सुललितबाहुकन्दलीतरङ्गितांशुकसुखलक्षविग्रहा । ···विदग्धनायिका Kapphiṇā. 9. 19.

**अग्रवल्लिका** (agravalli-kā) *f.* small creeper on the upper part (of a sculptured *kalpavṛkṣa*) पत्रपुच्छा(? ष्पा)ग्रचूलं स्यात्समग्रं चाग्रवल्लिका MānaSā. 48. 24.

**अग्रवस्त्र** (agra-vastra) *n.* front portion of the lower garment नीवीलता ··· । स्त्रीकट्यग्रवस्त्रबन्धनवल्ली YaśasCam. (comm.) i 71. 21.

**अग्रवाच्** (agra-vāc) *adj.* with excellent or eloquent speech तमुदितं मुदितं ह्यनुजोऽग्रवागिति विभुं निजगौ निजगौरवात् RāghPāṇ. (Dha.) 8. 20 (Nemicandra अग्रवाक् प्रधानवचनोऽव्यभिचारिवचन इति)

**अग्रवातायन** (agra-vātāyana) *n.* window at the front पश्याग्रवातायनमेतदेत्य लताग्रपुष्पाण्यवचिन्वतीनाम् । नृपातिभारेण नितम्बिनीनां विमानरत्नानि पुरो नमन्ति NavaSāC. 14. 36.

**अग्रवाद** (agra-vāda) *m.* view maintaining the hierarchy अग्रवादः कतमः । यथापीहैकत्यः श्रमणो वा ब्राह्मणो वैवंदृष्टिर्भवत्येवंवादी । ब्राह्मणोऽग्रो

वर्णो हीनोऽन्यो वर्णः Yogācā. 155. 7.

**अग्रवादिन्** (agravād-in) *m.* plaintiff (*lit.* one who speaks or complains first in a law-suit) cf. **पूर्ववादिन्**, अभियोक्ताग्रवादी Aparā. 611. 11 (*on* 2. 6); तद्वादी पूर्ववादिना भावितो दैवमानुषप्रमाणबलेन प्रतिज्ञातमर्थमङ्गीकारितस्तदग्रवादिने तत्समं च राज्ञे दण्डं दद्यात् Aparā. 618. 12 (*on* 2. 11)

**अग्रवाद्य** (agra-vādya) *n.* musical instrument (e. g. drum) played at the commencement (of a festival) अथ (पार्वतीं) तामनुजग्मुरुन्मिषद्भिर्मणिमञ्जीररवैरुदीरयन्त्यः। मदनाभ्युदयोत्सवाग्रवाद्यं विजयाद्याः प्रमथाग्रणीरमण्यः S'rīKaC. 8. 16.

**अग्रवामहस्त** (agra-vāmahasta) *m.* front or upper left hand वामनस्य… । गदाग्रवामहस्ते तु PauṣkS. 36. 159.

**अग्रवारणी** (agra-vāraṇī) *f.* female elephant in front यथा शरत्सु महतोः क्रुद्धयोरभिषक्तयोः । न धत्ते दुर्बला वेगं हस्तिनोरग्रवारणी KāśyaS. 236B. 15.

**अग्रविक्रम** (agra-vikrama) *adj.* possessing highest valour अथाभवत्स दशरथोऽग्रविक्रमः … अधिपतिः RāghPāṇ.(Dha.) 2. 1.

**अग्रविद्रुत** (agra-vidruta) *adj.* running in front अरिबाणविली(? लू)नैराननैः क्षितिभृतामुदयद्भिः । अग्रविद्रुतसितद्युतिपृष्ठोत्पातिराहुतुलना समवापि VasaViKā. 5.89.

**अग्रविन्यस्त** (agra-vinyasta) *adj.* placed in front अग्रविन्यस्तसव्याङ्घ्रियुद्धोपक्रमभीषणम्…अघोरास्त्रम् (ध्यायेत्) IśānS'iPa. ii. 12. 101.

**अग्रविपाक** (agra-vipāka) *adj.* having further (grave) consequences इत्युग्र(v. l. इत्यग्र)विपाकमेकपाकः सुक्षेत्रप्रभवः सुपार्श्वनामा । … वर्तयतीह पर्वते माम् RāmC. 14. 72.

**अग्रविपुल** (agra-vipula) *n.* breadth of the forepart (of the palm) सार्धभूताङ्गुलं तत्र तलेऽग्रविपुलं भवेत् S'ilpaRa. ii. 5. 39.

**अग्रविलेपन** (agra-vilepana) *n.* excellent ointment or paste विशांपतिश्च…अग्रविलेपनप्रलिप्तगात्रम्…हेमकूटमारुरोह AvantiKa. 98. 17.

**अग्रविवर्तन** (agra-vivartana) *n.* whirling of the tip (of the hand) संदंशः पार्श्वजः पुनः … वामहस्तेन किंचिदग्रविवर्तनात् SaṃgīRa. iv. 50. 13 (7. 180)

**अग्रविश** (agra-viśa) *n.* [w. r. for **अग्रबिस**] tip of the tender root (of a lotus plant) अग्रविशपल्लवग्रासविशदकण्ठानाम्…राजहंसानाम्…कोलाहलैरभ्यर्थित इव TilaMañ. 206. 11.

**अग्रविशाल** (agra-viśāla) *n.* **A i** width of the forepart (of the arm i. e. the palm) बाहोरग्रविशालं स्याद्युगमात्रं प्रशस्यते MānaSā. 57. 18; **A ii** width of the tip (of a finger) अनामिका तर्जनीवत् कनिष्ठा षड्यवोन्मिता। तत्तन्मूलविशालस्य षोडशांशविवर्जितम् । तत्तदग्रविशालं तु S'ilpaRa. ii. 5. 34; **A iii** width of the front side (of the armpit) कक्षस्याग्रविशालं तु सप्तमात्रमुदाहृतम् S'ilpaRa. ii. 5. 96; **B** diameter of the top (of a pillar or column) स्तम्भमूलविशालं स्यादेवं सकलभूमिषु । तस्मादग्रविशालं तु कारयेत्पूर्वमुक्तवत् S'ilpaRa. i. 21. 45.

**अग्रविशालक** (agraviśāla-ka) *n.* **A** width of or at the top तत्तदेकाङ्गुलार्धहीनं वृक्षस्याग्रविशालकम् MānaSā. 48. 4; **B** width of the forepart or front portion जटामुकुटतुङ्गं तु…तत्सप्ताष्टनवांशैकहीनमग्रविशालकम् S'ilpaRa. ii. 16. 9.

**अग्रविस्तार** (agra-vistāra) *n.* **A** width or breadth of or at the tip तद् द्वयोरग्रविस्तारं द्वित्रिय(त्र्य)ङ्गुल[क]मेव च । एतद्यु(तद्धि यु)गमानं स्यान्मध्यमाग्रान्तक्षयं(य) क्रमात् MānaSā. 5. 37; **B** width of or at the top नालमूलविशाले तु भूतभागं(? ग)विभाजिते। त्र्यांशं चाग्रविस्तारं लम्बनं पञ्चभागिकम् MānaSā. 19. 86.

**अग्रविस्तीर्ण** (agra-vistīrṇa) *adj.* [*f.* –ā] broad at the top, of a given breadth or width at the top लुमामूलस्य स्तम्भार्धं विस्तारः परिकीर्तितः। तत्त्र्यंशादग्रविस्तीर्णा मूले साष्टांशयुग्भवेत् SamarāSū. 30. 130.

**अग्रवीर** (agra-vīra) *m.* foremost warrior or hero, champion अश्याहितश्चैव महातपाश्च । वेदान्तगः कर्मसु चाग्रवीरः Rāmā. (Gorresio Edn.) vi. 93. 30.

**अग्रवृक्ष** (agra-vṛkṣa) *m.* top (portion of a) tree अग्रवृक्षे मूलवृक्षभेदानिश्चयेनाभेदभ्रमदशायाम् BhedaDhi. 109. 3.

**अग्रवृत्त** (agra-vṛtta) *adj.* having a circle (circular band) at the forepart एवं तु श्रीमुखं (सिंहासनं) प्रोक्तम्…तदेव मूलभागेन चाग्रवृत्तं विनाम्बुजम MānaSā. 45. 87.

**अग्रवृत्ति** (agra-vṛtti) *adj.* living as a Brahmin, or having a Brahmin's livelihood अज्ञानाच्च वदेद्धर्ममग्रवृत्तिः प्रधावति BhaviP. 323B. 4 (ii(1). 5. 62)

**अग्रवृषभगजविलसित** (agravṛṣabhagaja-vilasita) *n.* name of a metre (*lit.* sportive movement of an excellent bull and an elephant) भ्रौ यदि नाश्च नित्यमिह विरचितचरणाः गश्च तथा च वै भवति निधनमुपगतः । स्यादपि चाष्टिमेव यदि सततमनुगतं तत्खलुवृत्तमग्रवृषभगजविलसितम् NāṭyaS'ā. 15. 96.

**अग्रवेदना** (agra-vedanā) *f.* first symptoms of a disease दाहो ज्वरोऽरतिः । स्वादुशीतोपशायित्वं विसर्पस्याग्रवेदना: KāśyaS. 34B. 37.

**अग्रवेदि** (agra-vedi) *f.* veranda or balcony on the front side (of a building) भात्यग्रवेदिस्फटिकांशुजालैर्दोधूयमानोज्ज्वलचामरेव (उज्जयिनी) NavaSāC. 1. 35.

**अग्रवेदिन्** (agraved-in) *adj.* belonging to the Ṛgveda महानन्दो द्विजः … । अग्रवेदी समाचारस्त्यक्ततीर्थप्रतिग्रहः SkandP. iv. 98. 40 (comm. अग्रवेदी ऋग्वेदी)

**अग्रवेदी** (agra-vedī) *f.* front altar, verandah ततस्तदग्रवेद्यां च लिप्तायां रक्तचन्दनैः KathāSaSāg. xii. 4. 215.

**अग्रवेध** (agra-vedha) *m.* **1** hole at the top शङ्कुस्तलाग्रविद्धोऽग्रवेधलम्बाद्युर्ज्ञेयः BrāhmSphuSi. 22. 39; **2** observation of the top पञ्चशराङ्गुला यष्टिरष्टषष्टिर्द्युगुच्छ्रयः। षट्कराग्रस्तलवेधे दोः … अग्रवेधे रसेशा दोः कोटिस्तुरगकुञ्जराः। वंशस्य यस्य तन्मानम्…वद Golā. 245. 19 (29. 45)

**अग्रवैरल्य** (agra-vairalya) *n.* state of being sparse at the top प्रतिहतालोकस्याप्यग्रवैरल्योपपत्तेः S'atDū. 125. 30.

**अग्रव्यपदेश** (agra-vyapadeśa) *m.* designation as 'top' अधःसंनिवेशापेक्षोऽग्रव्यपदेशः Pradī. vii. 35. 9 (*on* viii. 1. 12)

**अग्रव्यास** (agra-vyāsa) *n.* **i** diameter of the front part सर्वेषामपि पीठानां जन्मान्तं मूलविस्तृतम् । अग्रव्यासं महापट्टिकान्तं सम्यक् प्रकीर्तितम् MayaMa. 34. 9; **ii** diameter of the top part शृङ्गमूलविशालं तु चतुरङ्गुलमेव च । तदग्रव्यासमर्धांशं मूलादग्रं क्रमात्कृशम् S'ilpaRa. ii. 21. 5.

**अग्रशरणार्थ** (agraśaraṇārtha) *m.* the aim or purpose of the best or the chief refuge सिद्धो यस्मात्सत्व(? त्व)हिताधानमहार्थस्तस्मादग्रे यान इहाग्रशरणार्थः MaYānaSū. 9. 7 (2. 2)

**अग्रशस्** (agra-śas) *adv.* in the beginning व॒शा मा॒ता रा॑ज॒न्य॑स्य त॒था संभू॑तमग्र॒शः AV. xii. 4. 33; xix. 6. 11.

**अग्रशाखा** (agra-śākhā) *f.* **i** topmost branch अग्रशाखाग्रसंलीनान्पातयामास भूतले MahāBhā. i. 1306*(2); **ii** top of the branch साला इमे सामिनताग्रशाखाः Yādavā. 8. 39 (comm. अर्धावनमितशाखाग्राः)

**अग्रशाखाशिखा** (agraśākhā-śikhā) *f.* tip of the topmost branch सरसकरजरेखाः कामिनीनां कपोले । प्रविदधति पलाशस्याग्रशाखाशिखायामवनतमुकुलानां मञ्जरीणामभिख्याम् YaśasCam. i. 359. 9.

**अग्रशाल** (agra-śāla) *m.* *śāla* tree on the top अग्रशालमधिरुह्य नगस्य …घोषयत्युषसि पाण्डुकपोतः S'ṛṅgāPra. 183. 18.

**अग्रशिख** (agra-śikha) *adj.* having a pointed flame कालपक्वमशेषेण धक्ष्येदुग्रशिखः (v. l. अग्रशिखः) शिखी MahāBhā. iv. App. i. 45(35)

**अग्रशिखर** (agra-śikhara) *n.* **i** highest peak (of a mountain) निर्झरिणीभिस्तेषु नाग्रशिखरेष्वपि तस्थे RāmC. 16. 11; अत्र सिद्धानामग्रशिखरधावनेन संभ्रमः सूचितः RasāSu. 113. 5 (2. 37); **ii** highest top (of a tree) प्रस्थानवन्दनमालाकिशलयानीव गृ(? ग्र)हीतुमवनीतलादग्रशिखरेषु शाखिनामारुरुहुरातपच्छेदाः TilaMañ. 197. 17; सुकुमारप्रवालैः शोभितानि वराङ्कुराणि अग्रशिखराणि येषां ते AupaSūṬ. 13. 8 = JñātāDhaṬ. 5A. 6.

**अग्रशिखरसङ्गिन्** (agraśikharasaṅg-in) *adj.* which is in contact with the topmost peak (समरकेतुः) अग्रशिखरसङ्गिनो मृगाङ्कमणिकलस ज्योत्स्नापाटलपाण्डुना द्युतिमण्डलेन महत्त्वचरितार्थतापादनार्थं धृतेन धवलातपत्रेणेव विस्तारितच्छायम्…आयतनं ददर्श TilaMañ. 215. 6.

**अग्रशिरस्** (agra-śiras) *n.* front head, head at the front end ततस्तद्(पौच्छं शिरः) बलवन्मेने स सर्पोऽग्रशिरोजयि KathāSaSāg. x. 7. 178.

**अग्रशिष्य** (agra-śiṣya) *m.* chief disciple तस्याग्रशिष्यो वरदत्तनामा VarāṅgaC. 3. 2.

**अग्रशुद्धिसमारोपता** (agraśuddhisamāropa-tā) *f.* attribution of the highest purity (to the opinion) चतस्रः समारोपदृष्टयः। ज्ञेये स्वभावविशेषसमारोपतामुपादाय दृष्टौ चाग्रशुद्धिसमारोपतामुपादाय AbhidhSa. 7. 23.

**अग्रशृङ्ग** (agra-śṛṅga) *n.* tip of a horn अग्रशृङ्गयोस्तस्या (कपिलायाः) विष्णू रुद्रश्च तिष्ठतः VṛGautaSm. 578. 7(10); *adj.* having horns (elevations) in front बहुधा गृह्य(? चाग्र)शृङ्गं स्यान्नपुंसकं तमु(दु)दाहृतम् MānaSā. 52. 92.

**अग्रशृङ्गभाज्** (agraśṛṅga-bhāj) *adj.* found on the topmost peak यस्य सितमिदमुज्ज्वलमानने चकास्ति । उदयशिखरिणस्तमालषण्डे शशिकिरणोत्थमिवाग्रशृङ्गभाजि RāmC. 6. 72.

**अङ्काधिक** ( aṅkādhika ) *adj.* more than nine (zodiacal signs) दोस्त्रिभोनं त्रिभोर्ध्वे विशेष्यं रसैश्चक्रतोऽङ्काधिकं स्यात् GrahaLā. 2. 1.

**अङ्काधिरूढ** ( aṅkādhirūḍha ) *adj.* [*f.* -ā] seated on the lap, ascended the lap शोणदासी … अङ्काधिरूढां वल्लकीम् … कररुहैरवघट्टयन्ती … तिष्ठति PadmPrā. 20. 21; ताभ्यामङ्काधिरूढाभ्यां प्रस्नवद्भ्याम् … । गन्धोदकस्नाननिभं मूत्रस्नानममन्यत PariPar. 2. 683; अङ्काधिरूढपुरुषोत्तमकेलिहस्ताम्…विचिन्त्य…वैकुण्ठनाथरमणीम् BrBrahmaS. i. 9. 80.

**अङ्काधिरोपण** ( aṅkādhīropaṇa ) *n.* placing on the lap, taking on the lap इमे भद्रमृगाः … अङ्काधिरोपणैः … सान्वि( ? न्वि )ताः । अस्माभिः MahāP. 3. 96.

**अङ्काधिरोपित** ( aṅkādhīropita ) *adj.* placed on the lap अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छनः S'is'uVa. 2. 53 = Kuval. 66(38) = AlaṅkāKau.(Vi.) 411. 13; रत्नसिंहासनोपरि । अङ्काधिरोपितपतिर्दिवस्पतिरुपाविशत् TrisaS'aPuC. iii. 8. 33.

**अङ्कानर्ह** ( aṅkānarha ) *adj.* not suited for an act अङ्कानर्हस्य वृत्तस्य … उक्तिः … विष्कम्भकः NāṭyaDa. 37. 17(23)

**अङ्कानुग** ( aṅkānuga ) *adj.* seeking shelter क्षताय मा यत्र रघोरितायुरङ्कानुगानन्यवयोऽयनानि RāmKṛViKā. 34 ( comm. अङ्कं अनुगच्छन्ति ते अङ्कानुगाः शरणं गताः )

[1]**अङ्कान्त** ( aṅkānta ) *m.* end of an act (of a drama) अङ्कावतारस्त्वङ्कान्ते DaśRū. 1. 62 = BhāvPra.(S'ā.) 218. 13(7); अङ्कान्त एव पात्रमङ्कान्तपात्रम् Avalo. 32. 31 (*on* 1. 62); अङ्कान्तपात्रैरङ्कान्ते प्रविष्टैः पात्रैः SāhiDa. 294. 15; 294. 4.

[2]**अङ्कान्त** ( aṅkānta ) *m.* lap-region, middle ऊढा…कान्तैः स्वैरङ्कान्तैर्विलासिनीनां पङ्क्तिः YudhiVi. 2. 102.

**अङ्कान्तनिष्क्रम** ( aṅkānta-niṣkrama ) *m.* exit (of characters) at the end of an act प्रस्तुतार्थस्य निर्योगे सर्वस्याङ्कान्तनिष्क्रमे । या निष्क्रामगुणोपेता सैव नैष्क्रामिकी ध्रुवा BhāvPra.(S'ā.) 302. 16(10)

**अङ्कान्तपात्र** ( aṅkānta-pātra ) *n.* character at the end of an act अङ्कान्तपात्रैरङ्कास्यं छिन्नाङ्कस्यार्थसूचनात् DaśRū. 1. 62; BhāvPra.(S'ā.) 218. 1(7); PratāYaBhū. 116. 2; SāhiDa. 294. 14.

**अङ्कान्तर** ( aṅkāntara ) *n.* A another act (in a drama) कुशीलवाः स्वीयभूमिकापरिग्रहेण रङ्गमलङ्कुर्वाणाः नर्तकान्तरप्रयुज्यमाने … गर्भवर्तिनि अङ्कान्तरे … सामाजिकीभवन्तः … किमपि चमत्कारवैचित्र्यमासूत्रयन्ति VakroJi. 235. 12; 235. 6; B following act सोऽङ्कावतारो यत् पात्रैरङ्कान्तरसंसूचनम् NāṭyaDa. 40. 16(27)

**अङ्कान्तरसंधान** ( aṅkāntara-sandhāna ) *n.* linking with the next or following act अङ्कान्तरसन्धानहेतुषु च प्रवेशकेषु यत्प्रयोज्यमुक्तं 'दिवसावसानकार्यं यद्यङ्केनोपपद्यत' इत्यादि तत्सर्वं प्रकरणेऽपि योज्यम् AbhinBhā. ii. 430. 19. (*on* 18. 47)

**अङ्कान्तरसन्धि** ( aṅkāntara-sandhi ) *m.* juncture between acts (in a drama) अङ्कान्तरसन्धिषु च प्रवेशकास्तेषु तावन्तः NāṭyaS'ā. 18. 29; प्रवेशकेन कथासंग्रहणं कार्यम् । …स चाङ्कान्तरसंधिषु कर्तव्यः । तत्राङ्कस्यादौ न तु मध्यान्तयोरित्यर्थः NāṭaLaRaK. 332.

**अङ्कान्तरसंनिधान** ( aṅkāntara-sannidhāna ) *n.* linking with the following act अङ्कान्तरसंनिधान( ? संधान )हेतुषु च प्रवेशकेषु यत्प्रयोज्यमुक्तम् … तत्सर्वं प्रकरणेऽपि योज्यम् Kāvyānu.(He.) 382. 14.

**अङ्कान्तरानुसारिन्** ( aṅkāntarānusārin ) *adj.* following or being in agreement with the next act अङ्कान्तरानुसारी संक्षेपार्थमधिकृत्य बिन्दूनाम् । प्रकरणनाटकविषये प्रवेशको नाम विज्ञेयः NāṭyaS'ā. 19. 114.

**अङ्कान्तराल** ( aṅkāntarāla ) *n.* interval between two acts (of a play) द्विविधो विष्कम्भकोऽपि कर्तव्यः । मध्यमपात्रः शुद्धः संकीर्णो नीचमध्यकृतः । अङ्कान्तरालविहितः NāṭyaS'ā. 18. 56.

**अङ्कान्तसंस्थित** ( aṅkānta-saṁsthita ) *adj.* remaining at the end of an act (of a drama) अङ्कान्तसंस्थितैः पात्रैरुत्तराङ्कार्थसूचनम् । विचित्रभणितिप्रायमङ्कास्यं कथ्यते बुधैः SāhiSā. 4. 84.

**अङ्कान्त्योपान्त्ययोग** ( aṅkāntyopāntya-yoga ) *m.* the sum of the last and penultimate numbers (of a series) अङ्कान्त्योपान्त्ययोगः परे परे मात्राणां ( संख्या ) Chandonu. 8. 16.

**अङ्कापय्** ( aṅkāpay- ) [ caus. of *aṅk-* ] to produce or cause a mark अङ्कापयति PrakriKau. ii. 298. 3; आञ्चिकपत् इत्यादि ज्ञेयम् Prasā. ii. 298. 12.

**अङ्काब्धिकृत** ( aṅkābdhikṛta ) *m.* four hundred and forty nine ज्यार्धपिण्डाः क्रमादमी । तत्त्वाश्विनोऽङ्काब्धिकृताः SūrySi. 2. 17.

**अङ्काभाव** ( aṅkābhāva ) *adj.* void of a mark अङ्काभावः पुरुषः निरावलम्ब एव भवति S'aṅkaVi.(Ā.) 108. 6.

**अङ्काभेदारोप** ( aṅkābhedāropa ) *m.* superimposition of identity with the spot (on the moon) व्यङ्ग्यालंकारोपस्कारिका ( उपमा ) यथा- अङ्कायमानमलिके मृगनाभिपङ्कम् … अत्र…भालस्थमृगमदपङ्कविषयकस्याङ्काभेदारोपस्याङ्कसादृश्यरूपदोषमूलकत्वादुपमालंकारः RasGaṅ. 227. 7.

**अङ्काभ्यधिक** ( aṅkābhyadhika ) *adj.* greater than nine (signs of the zodiac) केन्द्रे त्रिभाल्पे द्युगतं खगस्य षड्भाल्पके खेचरराशिशेषम् । षड्भाधिके राशिगतं तथैष्यं दिनस्य चाङ्काभ्यधिके तु नूनम् SiddhāTaVi. 265. 14.

**अङ्कायमान** ( aṅkāyamāna ) *adj.* appearing like or resembling the spot (on the moon) अङ्कायमानमलिके मृगनाभिपङ्कं पङ्केरुहाक्षि वदनं तव वीक्ष्य बिभ्रत् । …चञ्चूपुटं चपलयन्ति चकोरपोताः RasGaṅ. 227. 2; BhāmiVi. App. 9. 9.

**अंकार** ( aṅkāra ) *m.* 1 nasal sound, *anusvāra* त्रैलोक्यैश्वर्यदो व्यापी व्योमेशोऽङ्कार एव च JayāS. 6. 39 = LaksmīT. 25. 16; अंकारः सृष्टिकृत् प्रोक्तो विसर्गः परमेश्वरः AhirbuS. 17. 11; बिन्दुरंकारः अकाराद्यास्तिथयस्तदन्तो विसर्गः इत्यपि व्याचक्षते ParāTrī. 207. 5; अंकारं पादयोर्न्यस्य व्यापकान्तसमप्रभम् ( विन्यसेत् ) PāraS. 15. 532; 28. 136; 2 the syllable *aṁ* षट्कोणमण्डलाम्भोजे ह्रींकारेणाम्बुजं स्मरेत् । अंकारेणाक्षसोमं च ĪśānS'iPa. i. 32. 101; 3 diminution in music [MW]

**अङ्कारक** ( aṅkāraka ) *n.* a kind of seed तत्तैलसंसिक्तैर्बीजैरङ्कारकैरपि ( v. l. अङ्कोलजैरपि ) । …होमात्तु मासतः । वाञ्छितां वनिताम् … आनयेत् TantrRā. 9. 35.

**अङ्कारता** ( aṅkāratā ) *adj.* [*f.* -ā] sporting on the lap अगाहि भर्तुः संग्रामसदोऽङ्कारतयानया HarVi. 43. 57.

**अंकारयोजित** ( aṅkāra-yojita ) *adj.* accompanied by *aṅkāra* (i. e. the letter *am*) गदाधरं समुद्धृत्य प्रज्ञाधारेण मेदयेत् । अङ्कारयोजितं मूर्ध्नि गणाधिपतये पदम् JayāS. 7. 40.

**अंकारादि** ( aṅkārādi ) *adj.* beginning with the sound or letter *am* अङ्कारादीनि चत्वारि ( नामानि ललितायाः ) LalitāSaBh. 19. 19 (*on* 52); वसुकोणे अङ्कारादिटकारान्तसहितान्…विलिख्य ParaśuKS. 11. 3 (309. 15)

**अंकाराभिन्न** ( aṅkārābhinna ) *adj.* not separated from i. e. united with the sound *am* क्रोकारधकाराकाराः…तेऽङ्कुशेनोज्ज्वलाः अनुस्वारेण शोभमानाः । कौ शेत इति कुशः अङ्काराभिन्नः कुशोऽङ्कुशः LalitāSaBh. 31. 13 (54)

**अङ्कारूढ** ( aṅkārūḍha ) *adj.* ascended the lap रामपुत्रौ … । अङ्कारूढौ ततः कृत्वा सस्वजे तौ पुनः पुनः BrahmP. 154. 19; अङ्कारूढघुणायमानहरिणप्रोत्कीर्यमाणोदरश्रीखण्डद्रुमखण्डपाण्डुशशभृच्चूर्णौघकीर्णा इव । ज्योत्स्ना सा विदधे दिशो दश S'rīKaC. 10. 44; पतीन् विस्मरन्ती व्यतीतान् । अप्यङ्कारूढमत्रत्वयमिति दयितं गर्हयन्ती जनेभ्यो वारस्त्रीवैष्यदेष्यन्नवनवरमणामोदिनी मेदिनीयम् BhartṛNi. 4. 7.

**अङ्कारोपण** ( aṅkāropaṇa ) *n.* the act of making one sit on the lap बाष्पायिता प्रणामेऽङ्कारोपणेऽत्यन्तनिर्वृता । अपत्योद्वाहकल्याणसुखमित्याप धारिणी PariPar. 2. 156.

**अङ्कारोपित** ( aṅkāropita ) *adj.* [*f.* -ā] made to sit on the lap या विस्मयं स्मरभिदा चक्रेऽङ्कारोपिता नवं नारीणाम् DeviS'. 41; लब्धसंज्ञः क्षणेनाथ तामङ्कारोपितां प्रियाम् । आलिङ्गन् KathāSaSāg. xii. 28. 77; अङ्कारोपितया तया दयितया गाढं परिष्वक्तया लोलैरश्रुभिः…मन्युः समावेदितः Subhāṣi. 1587.

**अङ्कारोपितप्रभु** ( aṅkāropita-prabhu ) *adj.* holding the lord on the lap प्राप मेरावतिपाण्डुकम्बलां स क्षणाच्छिलाम् । तत्सिंहासनमध्यास्त शक्रोऽङ्कारोपितप्रभुः TrisaPuC. iii. 2. 70; iii. 7. 35.

**अङ्कारोपितबाल** ( aṅkāropita-bāla ) *adj.* [*f.* -ā] holding the young one on the lap अङ्कारोपितबालासु वानरीषु PariPar. 2. 32.

**अङ्कारोहण** ( aṅkārohaṇa ) *n.* getting on to the lap सपत्नीतनयं दृष्ट्वा तमङ्कारोहणोत्सुकम् । … सुरुचिर्वाक्यमब्रवीत् ViṣṇuP. i. 11. 6; तन्मतं यत् सुखं चित्रं यथाङ्कारोहणं पितुः PadmP. iv. 106. 17.

**अङ्कार्णव** ( aṅkārṇava ) *m.* ocean of numbers अङ्कार्णवे हि बहवो वर्गाङ्काः SiddhāTaVi. 51. 17; तमङ्कमङ्कज्ञ वद … अङ्कार्णवेऽस्मिन् निपुणोऽसि चेत्त्वम् SiddhāTaVi. 406. 1.

**अङ्कार्थवाद्यघोष** ( aṅkārtha-vādyaghoṣa ) *m.* sounding of musical instruments to indicate (the beginning of) an act उत्साहना( न )नाङ्कार्थवाद्यघोषे NānārthāSaṁ. iii. 35. 108.

**अङ्कार्थसंधान** ( aṅkārtha-sandhāna ) *n.* linking the subject-matter of the acts प्रवेशकोऽङ्कार्थसंधानाय भवति AbhinBhā. ii. 421. 21; अङ्कार्थसंधानप्रयोजनस्य प्रवेशकस्य स्थानं वाच्यम् AbhinBhā. ii. 423. 22.

**अङ्कार्थसंनिवेश** ( aṅkārtha-sanniveśa ) *m.* presentation of the subject-matter of the acts, composition or arrangement of the subject

matter of the acts अङ्कार्थसंनिवेशनिमित्तं ये प्रवेशकाः पश्चाप्युक्ताः चूलिकादयः तैर्वा अङ्काश्रयं बहुवक्तव्यम् AbhinBhā. ii. 425. 18.

**अङ्कालोड्य** (aṅkāloḍya) *n.* a kind of root शृङ्गारमङ्कालोड्यं च गुरु विष्टम्भि शीतलम् CaraS. i. 27. 113 (1922 Ed.)

**अङ्कावङ्क** (aṅkāvaṅká) *n.* name of a metre तन्द्रँ छन्दोऽङ्कावङ्कँ छन्दः MaiS. ii. 8. 7; cf. **अङ्काङ्क.**

**अङ्कावतर** (aṅkāvatara) *m.* transitional scene or sitaution (in which the characters of the preceding act are continued) अङ्कान्तर एवाङ्को निपतति यस्मिन्प्रयोगमासाद्य ।··· विज्ञेयोऽङ्कावतरोऽसौ AbhinBhā. ii. 421. 20 (*on* 18. 28); पूर्वाङ्कस्यावसानोक्तकथाविच्छेदपूर्वकम् । प्रवेशो भाविनोऽङ्कस्य सोऽङ्कावतर इष्यते । समाप्यमान एकस्मिन्नितराङ्कस्य सूचनम् BhāvPra.(S'ā.) 218. 15 (7); 219. 13 (7)

**अङ्कावतरण** (aṅkāvataraṇa) *n.* transitional scene or situation (in which the characters of the preceding act are continued) अत्र नृत्तदर्शननिश्चयान्ते प्रथमाङ्कार्थे समाप्तेऽपि तमसमाप्यैव उत्तराङ्कादौ विष्कम्भादिप्रतिपाद्यमानायाः संगीतरचनाया अत्रैव निपातनाद् अङ्कावतरणं नाम अर्थोपक्षेपकमुक्तं भवति comm. *on* Mālavikā. 1. 22; यत्र स्यादुत्तराङ्कार्थः पूर्वाङ्कार्थानुसंगतः । असूचिताङ्कपात्रं तदङ्कावतरणं मतम् PratāYaBhū. 116. 10; 200. 5; पूर्वाङ्कान्त एव प्रविष्टेन सुमन्त्रपात्रेण ··· उत्तराङ्कमुखसूचनादङ्कास्यम् ··· धनिकमतानुसारेण ··· । अन्ये तु 'अङ्कावतरणेनैवेदं गतार्थम्' इत्याहुः SāhiDa. 295. 1.

**अङ्कावतार** (aṅkāvatāra) *m.* **1** transitional scene or situation (in which the characters of the preceding act are continued) अङ्कान्त एव चाङ्को निपतति यस्मिन् प्रयोगमासाद्य । ··· ज्ञेयो ह्यङ्कावतारोऽसौ NāṭyaS'ā. 19. 115; 19. 110; अङ्कावतारस्त्वङ्कान्ते पातोऽङ्कस्याविभागतः DaśRū. 1. 62 = BhāvPra.(S'ā.) 218. 13(7); comm. *on* MālaMā. 1. 394; अङ्कावतारस्तु अङ्कान्ते पात्राणाम् comm. on Mālavikā. 1. 22; NāṭyaDa. 40. 16 (27ab); NāṭaLaRaK. 396; अङ्कावतारः पात्राणां पूर्वकार्यानुवर्तिनाम् । अविभागेन सर्वेषां भाविन्यङ्के प्रवेशनम् RasāSu. 283. 7 (3. 191); 283. 11 (3. 193); 279. 19 (3. 177); अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः । यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः SāhiDa. 294. 5 = KośaKaTa. 1. 1878; अङ्कस्यान्ते समुत्पत्तिरङ्कस्यार्थविशेषतः । अङ्कावतारः कथितः SāhiSā. 4. 1; 1. 27; **2** anticipatory scene in an act (indicative of the topic of the other acts) cf. **अङ्कमुख,** यत्र त्वङ्के सर्वेषामङ्कानां योऽर्थो बीजलक्षणस्तस्य ··· संमिलितत्वेन प्राप्तिर्भवति सोऽवतराङ्कः (? ङ्कावतारः) AbhinBhā. ii. 417. 16 (*on* 18. 16); स्त्रीपुरुषादेः ··· प्रवेशविष्कम्भोपयोगिनः कथयैव परस्पराश्लिष्टयानुबद्धोऽङ्कावतारः AbhinBhā. ii. 421. 18 (*on* 18. 28); अन्ये तु यत्राङ्के अन्याङ्कानां बीजलक्षणोऽर्थोऽवतार्यते तमङ्कावतारमामनन्ति ··· अयं च गर्भाङ्कोऽप्युच्यते NāṭyaDa. 41. 3 (27ab)

**अङ्कावसान** (aṅkāvasāna) *n.* conclusion of the act (of a drama) द्वितीयाङ्कावतारोऽयम् । यदाह 'अङ्कावसाने यत्रैव भाविनोऽङ्कस्य सूचनम् । वस्तुबीजमुपोद्घातः सोऽङ्कावतार इष्यते comm. on MālaMā. 1. 394.

**अङ्कावयव** (aṅkāvayava) *m.* part of a number द्विराशेरधिकाङ्केषु त्रिराशेर्न्यूनाङ्केषु यः कश्चिदङ्कावयवः सदस्ति SiddhāTaVi. 53. 4.

**अङ्कावहित** (aṅkāvahita) *adj.* bent over the lap सः ··· । मोक्षाय बद्धा व्यवसायकक्षां पर्यङ्कमङ्कावहितं बबन्ध Saund. 17. 3.

**अङ्काश्रय** (aṅkāśraya) *m.* recourse to the lap अङ्काश्रयप्रणयिनस्तनयान्वहन्तो धन्याः S'āk. 7. 17 = SaraKaṇṭhā. 603. 4 = SūktiRa. 74. 19; *adj.* [*f.* –ā] **1** resorting to the lap देवस्याङ्काश्रयायाः कुलगिरिदुहितुर्नेत्रकोणप्रचारप्रस्तारान् पिपठिषुरिव ··· कुरङ्गः S'ivPāKeSt. 5; HarVi. 2. 14; **2** dependent on the act (of a drama) अङ्काश्रयस्य कर्तव्यो रसस्य स्थायिनोऽङ्गिनः । पोषः BhāvPra.(S'ā.) 235. 14 (8)

**अङ्काश्रयण** (aṅkāśrayaṇa) *adj.* [*f.* –ī] resorting to the lap अङ्काश्रयणी भवामि ते KumāSaṁ. 4. 20; *n.* recourse to the lap मधुराश्वासनमितवल्लभाशङ्केमङ्काश्रव(? य)णाय···चोरिकासुरतर[स]तृप्तिमन्वगच्छत् AvantiKa. 36. 12.

**अङ्काश्रयिन्** (aṅkāśray–in) *adj.* [*f.* –ṇī] resorting to the lap अङ्काश्रयिणी भवामि ते KumāSaṁ. 4. 20 (Sahitya Akademi Ed.) = SaraKaṇṭhā. 649. 8.

**अङ्काश्विन्** (aṅkāśvin) *nu.* twenty–nine विधौ खेन्दवोऽङ्काश्विनः पञ्च खाक्षाः (क्षेपकः) KaraṇaKu. 1. 4 (4)

**अङ्कास्य** (aṅkāsya) *n.* transitional scene or situation (in which the characters of the preceding act suggest the topic of the next act) cf. **अङ्कावतर,** अङ्कान्तपात्रैरङ्कास्यं छिन्नाङ्कस्यार्थसूचनात् DaśRū. 1. 62; BhāvPra.(S'ā.) 218. 1(7); SāhiDa. 294. 14; अङ्कास्यमन्तपात्रेण छिन्नाङ्कमुखयोजनम् NāṭyaDa. 39. 11 (26); पूर्वाङ्कान्तप्रविष्टैर्यदुत्तराङ्कार्थसूचनम् । पूर्वाङ्कार्थानुवृत्त्यर्थं तदङ्कास्यम् BhāvPra.(S'ā.) 217. 22 (7); PratāYaBhū. 116. 2; 175. 3; RasāSu. 283. 1 (3. 189); 279. 19 (3. 177); 283. 11 (3. 193); SāhiSā. 4. 84.

**अङ्काहित** (aṅkāhita) *adj.* placed on the lap अमराधीशः ··· सिंहासन उपाविक्षदङ्काहितप्रभुः TrisaS'aPuC. iv. 2. 38.

**अङ्कि** (aṅk–i) (Gr.) root *aṅk*– मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच् Uṇā. 1. 39; SaraKaṇṭhā.(Gr.) ii. 1. 223.

**अङ्कित** (aṅki–ta) *adj.* [*f.* –ā] **1** calculated, counted, enumerated **2A** bearing marks, marked, characterised, smeared **2 Bi** bearing scar–marks, pricked, pierced, lacerated **2 Bii** bearing marks (of nails in love play) **2 Ci** (an animal) which is branded **2 Cii** marked or engraved (with seal or name) **2 Ciii** marked by or containing (a letter, a syllable or a name) **2 Civ** (fig.) marked by a name, designated, called **2D** marked or stamped (with foot or foot–print) **2 Ei** (figure, diagram, plot) marked or drawn (with lines, geometric figures, etc.) **2 Eii** (architectural or artistic object) marked or ornamented (with designs or motifs) **2F** marked, branded or painted (with sectarian symbols) **2G** stained *m.* one of the four ways of playing on the *puṣkara* drum **1** calculated, counted, enumerated (क॒दा नः॑ शुश्रव॒द् गिर॒ इन्द्रो॑ अ॒ङ्ग) अङ्केति क्षिप्रनाम । अङ्कितमेवाङ्कितं भवति Nir. 5. 17 (103. 8); योऽन्यत् कारणमीश्वरात् प्रवदते देव्या च यन्नाङ्कितम् । त्रैलोक्ये सचराचरे स तु पुमान् बाह्यो भवेद् दुर्मतिः MahāBhā. xiii. 113*(5); **2A** bearing marks, marked, characterised, smeared स जीवः ··· । अङ्कितः स्वैः शुभैः पुण्यैः पापैर्वाप्युपपद्यते MahāBhā. xiv. 17. 28; प्रकोष्ठे हरिचन्दनाङ्किते RaghuVa. 3. 59; नयनोदबिन्दुभिः ··· अङ्कितम् । ···इदं स्तनांशुकम् Vikramo. 4. 17 = SaraKaṇṭhā. 367. 13; शक्त्या पाणितलेऽङ्कितोऽतिचपलः Bṛhajjā. 17. 1; AṣṭāHṛ. i. 3. 21; अङ्कितः शशमयेन लक्ष्मणा···निशाकरः JānaHa. 8. 90; AhirbuS. 9. 16; वलिभिर्मुखमाक्रान्तं पलितैरङ्कितं शिरः S'atTrayī. 156 = S'ārṅgaPa. 419 = PadyāTa. 291; राजा तु त्रैशङ्कवेन ज्योतिषाङ्कितां ककुभमलंकृतवान् HarṣaC. 165. 2; BrāhmSphuSi. 22. 17; कवेरभिप्रायकृतैः कथनैः कैश्चिदङ्किता (आख्यायिका) Kāvyālaṅ.(Bh.) 1. 27; मृगेक्षणाङ्कं ते वक्त्रं मृगेणैवाङ्कितः शशी Kāvyāda. 2. 35; PāraS. 6. 201; 10, 180; पार्वत्याश्चारुचामीकरवलयपदैरङ्कितं कान्तिशालि ।···दोर्मूलम् S'ivaKePāSt. 16; (सिद्धाः) शङ्खचक्रगदापद्मैरङ्किताः स्वेषु पाणिषु ParaS. 1. 23; RāmC. 16. 9; KāvyālaṅSū. iii. 2. 14; AmaS'. 17; हेमात्मतुल्यमनिसं(शं) ददता द्विजेभ्यो येनांकिता वसुमती शतस(श)स्तुलाभिः EI. ix. 304. 6 = xviii. 220. 5 = iv. 100. 5 = xix. 292. 4 = xi. 23. 5 = ii. 362. 5 = iv. 100. 5 = x. 96. 4; अन्तरान्तरा हरिचन्दनस्थासकाङ्कितपर्यन्तम् ··· यन्त्रसुन्दरमन्वदि(? वि)शम् YaśasCam. ii. 30. 3; (काचिदबला) आननेन ··· कुर्वतीव फणिलोकमङ्कितं यामिनीतिलकबिन्दुनेन्दुना NavaSāC. 8. 71; उडुभिः ··· खम् ··· । ··· स्वेदलवैरिवाङ्कितम् NavaSāC. 12. 47; LakṣmīT. 10. 14; छदानां रेखाभिरङ्कितम् ··· आमोदते कुसुमम् SaraKaṇṭhā. 76. 13; SubhāRaK. 11. 15; DevīBhāP. iii. 27. 2; शय्याचक्रोऽधिकस्तेभ्यो यो वालेनाङ्कितस्तनौ BṛKathāMañ. ix. 2. 362; अलिभिरञ्जनबिन्दुमनोहरैः ··· अङ्कितः । न खलु शोभयति स्म वनस्थलीं न तिलकस्तिलकः प्रमदामिव VyaktiVi. 91. 8 = 105. 14; अदीर्घसूत्रः प्रसरद्भिरङ्कितो गुणैः SrīKaC. 3. 51; उपभोगैः सपत्नस्य ··· सा (राजधानी) । अङ्किता मानिनस्तस्य वेश्येवोद्वेगदाभवत् RājTa. (Ka.) 8. 958; प्रासादतोरणद्वीपैः पाणी पादाविवाङ्कितौ TrisaS'aPuC. i. 2. 709; i. 6. 643; ii. 2. 31; पदं किमस्याङ्कितमूर्ध्वरेखया NaiṣC. 1. 18; इत्युक्तवान् प्रहृष्टात्मा देवपालः मुदाङ्कितः MalliC. 8. 148; SūktiMu. 1. 36; ताम्रपर्णी प्रपश्येः ···मौक्तिकैः स्थूलवृत्तैः ।···अङ्कितां सैकतेषु HaṁsSaṁ. 23; 85; यज्ञार्हाङ्घ्रिपैरङ्किता । ···वसुमती प्रीतिप्रदा TantrSa. 1. 40; = S'ilpaRa. i. 3. 7; मुनिपुरजलधींद्वंकिते ··· शकाब्दे EI. vii. 21. 36; StavMā. 82. 28; अङ्कितान्यक्षसंघातैः ··· । शरीरिणां शरीराणि कमलानि न संशयः RasGaṅ. 194. 5 = 325. 7; 232. 2; Gaṅgāva. 2. 37; मुकुरमुद्रिकया । सुप्तौ निमग्नया मम हन्त कपोलोऽङ्कितो भवति S'ṛṅgāMañ.(A.) 10. 13; JānaPa. 3. 38; तल्पेंदीवरमुद्राभिरंकितानि मृगीदृशः । सुरभिस्वेदबिंदूनि मदयंत्यंगकानि मां(? मे) EI. viii. 114. 67; **2 B i** bearing scar–marks, lacerated or pricked or pierced (with sharp objects, thorns, etc.) सर्वे बाणैरङ्किता भूमिपालाः DūtGha. 20; तदीयमङ्गं कुलिशव्रणाङ्कितम् RaghuVa. 3. 68; वनगजदन्त्य श्वाङ्कितः प्रतोदैः PādaTā. 20. 5; कुर्वाणः कौङ्कणान् बाणैरङ्कितांस्तुरगानिव । पश्चिमाम्भोनिधे रोधः क्रमेण प्राप पार्थिवः TrisaS'aPuC. ii. 4. 112; वक्षोऽङ्कितं द्विषद्दन्तिदन्ताघातकिणार्बुदैः PāṇḍaC. 4. 256; स तेऽङ्कितोऽसः किमु कण्टकाग्रैः Surath. 2. 34; **2 B ii** bearing marks (of nails in love sports) घातैर्नखैश्चाङ्कितम्···वेश्यानां धृतिधाम पुष्पधनुषः प्राप्नोति धन्यो रतम् S'ṛṅgāTi.(Ru.) 1. 127; **2 C i** (an animal) which is branded अङ्किता गाव इत्युच्यन्तेऽन्याभ्यो गोभ्यः प्रकाश्यन्ते MahāBh. iii. 408. 18 (*on* P. viii. 2. 48); **2 C ii** marked, engraved, stamped or inscribed (with seal, name, etc.) रामनामाङ्कितं चेदं प्रगृहाणाङ्गुरीयकम् Rāmā. (Gorresio) v. 32. 44; टङ्कोत्कीर्णयशोनिधानमिव यन्नामाक्षरैरङ्कितं तेनाकारि···विष्णोरिदं मन्दिरम् EI. i. 157. 7; रत्नकम्बलकं तदा । उग्रसेनस्य नाम्ने-

ममाङ्कितं ज्ञातवानसौ BṛKathāK. 106.173; समुद्रमुद्राङ्कितशासन: ··· श्रीयशोधरमहाराज: ···अचलमहीपतिमादिशति YaśasCam. i. 566.2; TilaMañ. 170.9; तया मुद्रयाङ्कितम् ··· पत्रम् ··· भागुरायणस्य हस्ते प्रविष्टं यथा स्यात् तथा कर्तव्यम् PuruṣPa. 113.24; सुवर्णे···°ग्रीवामण्डनेऽन्त्यमणिद्वये । प्रभोर्यस्याङ्कितं नाम स्तुमहे परमेश्वरम् PurāPraSaṁ. 76.13; बिरुदपदैरंकितांस्तत्र तत्र स्तंभान् जातप्रतिष्ठान् व्यतनुत EI. vii. 21.27 = xiii. 128.53 = xiv. 172.51 = iii. 153.52; तदंकितै: शासनपत्रपूगैरनारतं पुस्तकवानिवासीत् EI. xxi. 284.21; **2 C iii** marked by or containing (a letter, a syllable or a name) अकारेणाङ्कितं तं (कौस्तुभमन्त्रम्) वै तं तमूर्जेन कारयेत् JayāS. 6.155; अकारेणाङ्कितं दद्यादेफम् JayāS. 21.123; कुरुध्वमङ्कितं स्तोत्रं मम नामसहस्रकै: LalitāSa. 31; 42; मन्त्र: कालाग्निकूर्मस्य विज्ञेयोऽयं दशाक्षर: । गोपनेनाङ्कितं प्राणं (=हा) मूर्ध्नि च व्यापिना युतम् LakṣmīT. 33.33; **2 C iv** (*fig.*) marked by a name, designated, called सर्वज्ञात्मगिराङ्कितेन मुनिना व्याख्यानमेतत् कृतम् PañcPra. 27.2; SaṁkṣeŚā. 4.62 (ii. 392.13); ततो द्विखण्ड आभोगस्तृतीय: तस्य खण्डकम् । उच्चं गमकयुक्तं वा स्वनाम्ना चाङ्कितं तु तत् ŚārṅgaPa. 1968; EI. vii. 188.59; **2 D** marked or stamped (with foot-print or foot) आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलं वन्द्यै: पुंसां रघुपतिपदैरङ्कितं मेखलासु MeghDū. 12; KumāSaṁ. 8.23; तैरिदं भारतं वर्षं सप्तद्वीपमिहाङ्कितम् BrahmāṇḍP. i. 14.72; दिष्ट्याङ्कितां त्वत्पदकै: सुशोभनैर्द्रक्ष्याम गां च द्यां च BhāgP. x. 2.38; मेने सीता प्रियतमपदैरङ्कितान् भूमिभागान् PrasaRā. 5.27; **2 E i** (figure, diagram, plot, etc.) marked or drawn (with lines, points, etc.) चक्राधारावनिं कुर्यात् कोणेषूभयतोऽङ्किताम् PauṣkS. 29.89; गुणचक्राण्यरै: सर्वाण्यङ्कितानि त्रिभिस्त्रिभि: AhiṇbuS. 9.8; ParaS. 7.33; चतुरश्रीकृते क्षेत्रे विंशत्या सैकयाङ्किते । कोणाश्चतुष्पदा: सार्धद्व्यंशा: प्रत्यङ्गका: स्मृता: SamarāSū. 64.71; तेऽथ सूत्रमपातयन् । ··· तत्राङ्किते भूप्रदेशे नृप: पुरमकारयत् PariPar. 6.180; अङ्कितं च षष्ट्यात्र नाडीवलयं विदध्यात् Golā. 207.5 (24.5); तत्रान्यश्चाङ्कितो भुज: SiddhāTaVi. 60.22; 74.4; **2 E ii** (architectural or artistic object) marked, engraved or ornamented (with designs or motifs) तत् (पीठम्) पद्मैरङ्कितं कार्यं सिंहैरपि च मन्दिरे SamarāSū. ii. 90.15 (57); कुम्भाभ्यां पुण्डरीकाभ्यां स्थलजाभ्यामिवाङ्कितम् । ··· तच्चैत्यम् TriṣaŚaPuC. i. 6.623; विकुरुध्वं विमानानि ··· । किन्नरैर्वनलताभिस्तथा पद्मलतोच्चयै: । अङ्कितानि TriṣaŚaPuC. ii. 2.160; पार्श्वनाथस्य प्रतिमा: ··· । ··· पातालाधिपनागस्य फणै: सप्तभिरङ्किता: RauhiC. 421; सिंहासनम्···तत् । तार्क्ष्येण चित्रार्पितविग्रहेण पुरोऽङ्कितम् Vidvanmo. 8.75; **2 F** marked or branded or painted (with sectarian symbols over the body or limb) बद्धत्रिपताकोग्रभ्रुकुटिकराले ललाटफलके प्रबलभक्त्याराधितया ··· कात्यायन्या त्रिशूलेनेवाङ्कितम् ··· शबरसेनापतिमपश्यम् Kād. 30.19; यदङ्कितो भवति तत् पाप्मानं निरसति PārāSū. 45.22; 45.7; प्रात: सोऽपि शिर:शूलव्यपदेशेन वेष्टनम् । कृत्वा प्रच्छादयामास ललाटतटमङ्कितम् KathāSaSāg. ii. 5.155; ii. 5.152; भस्मत्रिपुण्ड्राङ्कितै: ··· समावृतमिदं भूतैरभूद् भूतलम् Jivān. 437.6; **2 G** stained तत् को नाम गुणो भवेत् स गुणिनां यो दुर्जनैर्नाङ्कित: ŚatTrayī. 24; SūktiMu. 8.34; Subhaṣi. 464; विधिना विधु: । बहुविधेन वियोगिवधैनसा शशमिषादथ कालिकयाङ्कित: NaiṣC. 4.73; अस्त्यात्मतत्वं विमलं द्वितीया दृष्टिरङ्किता YogVā. iii. 96.25; *m.* one of the four ways of playing on the *puṣkara*-drum चतुर्मार्गं नाम । आलिप्ताङ्कितगोमुखवितस्ताश्चत्वारो मार्गा: NāṭyaŚā. 34.40.

**अङ्कितकच** (aṅkita-kaca) *adj.* which has marked (i.e. decorated) the hair अङ्कितकु(क)चेन केनचिदन्धंकरणौषधेन कमलानाम् । अन्त:पुरेण शंभोरलंक्रिया कापि कल्प्यते काञ्च्या: MūkaPañ. 4.34.

**अङ्किततनु** (aṅkita-tanu) *adj.* whose body is marked (with lacerations or scars) अङ्किततनु: पार्थाङ्कितैर्मार्गणै: ··· । शून्येनैव रथेन याति शिबिरं शल्य: VeṇīSaṁ. 5.133.

**अङ्कितत्व** (aṅkita-tva) *n.* the state of being marked or characterised (कन्दर्पद्विपकर्णकम्बु मलिनैर्दानाम्बुभिर्लाञ्छितम् ··· पश्यैतच्छशिन: सुधासहचरं बिम्बं कलङ्काङ्कितम्) अत्र कलङ्कस्य दानाम्ब्वादिभि: प्रतिबिम्बनम्, लाञ्छितत्वाङ्कितत्वयो: शुद्धसामान्यरूपत्वमित्युक्तम् RasGaṅ. 301.13.

**अङ्कितनामन्** (aṅkita-nāman) *adj.* whose name is marked or characterised (by a particular syllable) धुन्धुकाभिधाने नगरे ··· चाच्चिगनामा व्यवहारी ··· पाहिणीनाम्नी चामुण्डागोत्रजाया आद्याक्षरेणाङ्कितनामा तयो: पुत्रश्चाङ्गदेवोऽभूत् PrabaCin. 83.6.

**अङ्कितपत्त्रधर** (aṅkitapattra-dhara) *adj.* having wings marked or tinged (by moon-light) खचरागमने खचरो हृष्ट: खचरेणाङ्कितपत्त्रधर: । खचरचरं खचरश्चरति खचरमुखि खचरं पश्य PrabhāC. 133.31.

**अङ्कितपादत्व** (aṅkitapāda-tva) *n.* the state of having feet marked or characterised (by lotus-sign) (इत्येवं पालकाप्यो मुनिरिभचरितं व्याकरोद् रोमपादाय) रोमेति नाम पद्मस्य विख्यातं पूर्वसूरिभि: । तेनैवाङ्कितपादत्वाद् रोमपाद इति स्मृत: MātaLī. 12.29.

**अङ्कितपीवरप्रकोष्ठ** (aṅkita-pīvaraprakoṣṭha) *adj.* whose strong forearm is marked (with scars of bow-string) राज्यवर्धनहर्षौ ···चापगुणकिणलेखयाङ्कितपीवरप्रकोष्ठम् ···कुमारगुप्तम्···ददृशतु: HarṣaC. 197.6.

**अङ्कितमस्तक** (aṅkita-mastaka) *adj.* (an elephant) whose head is marked or characterised (by temples) कुम्भैरङ्कितमस्तकान् ···मातङ्गकान् मारयन् । श्वेव श्वापदराट् न यस्य नृपते: शौर्ये जगामोपमाम् EI. xi. 190.5.

**अङ्कितमेषवक्त्र** (aṅkita-meṣavaktra) *adj.* beginning (lit. having the beginning marked) with Meṣa or the sign of Aries सृष्टयाद्यकालेऽङ्कितमेषवक्त्रं पूर्वं तु नाडीवलयस्थितं हि । ···भमण्डलम् SiddhāTaVi. 140.9.

**अङ्कितमौलि** (aṅkita-mauli) *adj.* (*f.*) whose crest is marked (with the digit of the moon) कलयाम्यन्त: शशधरकलयाङ्कितमौलिममलचिद्वलयाम् । ··· अम्बाम् MūkaPañ. 4.42.

**अङ्कितवत्** (aṅkita-va(n)t) *adj.* (*f.* -tī) who has marked or smeared तत: पद्मावती कोपान्विता सती कर्पूरेण तस्या वदनं निजदशभिरङ्गुलीभिरङ्कितवती VetāPañ (Jam.) 18.9.

**अङ्कितव्य** (aṅk-itavya) *adj.* fit to be marked एवं तदीया विप्राश्च क्षत्रिया वैश्यजातय: । ···लौहैरनलसंतप्तै: ··· । अङ्कितव्या: क्षणेन तु PāraS. 15.963.

**अङ्कितसैकत** (aṅkita-saikata) *adj.* having sand marked with something अलक्तकैरङ्कितसैकतानि । स्वैरोपभोगं सुरसुन्दरीणां विवृण्वते तीरलतागृहाणि Yādavā. 18.51.

**अङ्किताङ्कभृत्** (aṅkitāṅka-bhṛt) *adj.* with the lap occupied (by) प्रकृत्या परमेश्वर्या जगद्योन्याङ्किताङ्कभृत् ।···पुष्ट: कोसलजात्मज: RāmPūTāU. 3.8.

**अङ्किताङ्ग** (aṅkitāṅga) *adj.* bearing marks on the body निखिलसुरतचिह्नैरङ्किताङ्ग: सपत्न्या:···जीवितेश: AnaṅgaRa. 10.51.

**अङ्किताङ्गुल** (aṅkitāṅgula) *adj.* graduated with Aṅgulas अङ्किताङ्गुलतद्भागसमस्निग्धोरुमूर्तिना ।···कर्कटेनालिखेत् क्षितौ MaBhāsk. 5.48.

**अङ्किताङ्गुलीरत्न** (aṅkitāṅgulīratna) *n.* excellent inscribed ring इत्यङ्किताङ्गुलीरत्नरत्नकम्बलसंवृता । निर्विण्णया महादेव्या निक्षिप्ता यमुदा(?ना)ह्रदे BṛKathāK. 56.136.

**अङ्कितानन** (aṅkitānana) *adj.* with face lacerated or marked (with bruises) भिन्नोत्तमाङ्गा गणपा भिन्नपादाङ्कितानना: । विरेजुर्मुजगा मन्त्रैर्वार्यमाणा यथा तथा MatsyaP. 135.61.

**अङ्किताभिध** (aṅkitābhidha) *adj.* characterised (i.e. known) by nicknames ते कुम्भवादनैर्मुण्डमण्डनैश्चाङ्किताभिधा: । नियोगिनो भग्नमाना: सर्वत: ख्यातिमाययु: RājTa.(Ka.) 8.98.

**अङ्कितोरस्** (aṅkitoras) *adj.* (*f.*) whose bosom is characterised (by) अङ्कराभ्यां मनसिजतरोरङ्कितोरा: कुचाभ्यामन्त:काञ्चि स्फुरति जगतामादिमा कापि माता MūkaPañ. 5.79.

**अङ्कितोरस्क** (aṅkitoras-ka) *adj.* whose chest is marked (with) कौस्तुभेनाङ्कितोरस्कम्···वासुदेवं परात्परम् । चतुर्भुजमनुध्यायेत् PāraS. 6.211.

**अङ्कित्वा** (aṅk-itvā) *ger.* having put the mark वक्ष्यते स्वरवीणात्र तस्यामपि विचक्षणा: । अङ्कित्वा स्वरदेशानां भागानुद्भिन्दते श्रुती: SaṁgīRa. iii. 229.4 (6.8)

**अङ्किन्** (aṅk-ín) *adj.* **i** holding a hook वृक्षं पक्वं फलमङ्कीव धूनुहि ṚV. iii. 45.4; अयोजाला असुरा मायिनोऽयस्मयै: पाशैरङ्किनो ये चरन्ति AV. xix. 66.1; **ii** having a hook पाटा बिभर्त्यङ्कुशं हिरण्यवन्तमङ्किनम् AV.(P.) vii. 12.9; xvi. 150.5; *m.* a sort of drum मृदङ्गो मुरज: सोऽङ्क्याङ्लिङ्ग्यूर्ध्वक इति त्रिधा AbhidhāCin. 293 (comm. अङ्कोऽस्यास्तीति अङ्की उत्सङ्गस्थत्वात्)

**अङ्किनी** (aṅk-inī) *f.* [KāśiVṛ. *on* P. iv. 2.51 DEBRU. 335] a group of marks or signs [pw]; *adj.* [*f.* of अङ्किन्] a woman having marks (of branding etc.) [APTE]

**अङ्किल** (aṅkila) *m.* dancer नर्तका ये नृत्यन्ति अङ्किला इत्येके JñātāDhaṬ. 40A.14, cf. **अङ्किल्ल.**

**अङ्किलि** (aṅkili) *f.* garland स्रजि । मालाङ्किलि: Vaija 171.154.

**अङ्किल्ल** (aṅkilla) *m.* dancer नर्तका ये नृत्यन्ति अङ्किल्ला इत्येके AupaSūṬ. 3.13, cf. **अङ्किल.**

**अङ्की** (aṅk-ī) *f.* a small drum, [ŚabdaKaDru] cf. **अङ्किन्.**

**अङ्कीकृत** (aṅkī-kṛta) *adj.* [*f.* -ā] made to sit on the lap (स ··· । गिरिशं ददृशे) आलिङ्ग्याङ्कीकृतां देवीम् (स्थितम्) BhāgP. vi. 17.5; अङ्कीकृत इवान्तकेनाप्रतिपत्तिरासीत् (कुमार:) HarṣaC. 227.9.

**अङ्कीकृत्य** (aṅkīkṛ-tya) *ger.* placing on the lap (एष:) अङ्कीकृत्य स्त्रियं चास्ते गतह्री: प्राकृतो यथा BhāgP. vi. 17.7.

**अङ्कील** ( aṅkīlla ) *m.* ( अङ्कोल ? ) सुरसाङ्कीलजातीनां पत्राणि ( पिष्ट्वा ) Hastyāyur. 208. 27 ( 2. 16 )

¹**अङ्कु** ( aṅkú ) *adj.* going crookedly or hurriedly, cf. **वङ्कु**, त्वेषं वयं रुद्रं यज्ञसाधमङ्कुं कविमवसे निह्वयामहे KāṭhS. 40. 11; *m.* hook (of a chariot) अङ्कन्यङ्कावभितो रथं ये ध्वान्ता वाता अग्निमभि ये संचरन्ति MānGS. i. 13. 4.

²**अङ्कु** ( aṅku ) (Gr.) a grammatical suffix to explain शलङ्कुः, शलेरङ्कुः SaraKaṇṭhā. (Gr.) ii. 1. 43 (TSS. Ed.)

**अङ्कुट** ( aṅkuṭa ) *m.* key अङ्कुटः ।···कुञ्चिका Vaija. 162. 48; AbhidhāCin. 1005; ParaNā. 661.

**अङ्कुठ** ( aṅkuṭha ) *n.* *Alangium hexapetalum* अङ्कुठम् । अपामार्गं तालकं च ( चूर्णयित्वा ) RaseCin. 9. 317 (254. 1), cf. **अङ्कोट**.

**अङ्कुडक** ( aṅkuḍa-ka ) *m.* key कूचिका···कुड्ले । कपाटाङ्कुडके क्षीरविकृतौ MediK. 7. 73.

**अङ्कुप** ( aṅku-pá ) *n.* water अङ्कुपं छन्दः TaiS. IV. iii. 12. 2 = MaiS. ii. 8. 7 = KāṭhS. 17. 6 = KapiKaS. 26. 5 = VājaS. 15. 4 ( Mahīdhara अङ्कुपम् । 'अङ्क कुटिलगतौ' अङ्केन कुटिलगत्या आप्नोतीत्युदकम् ) = VājaS.(K.) xvi. 1. 5 = S'atBr. VIII. v. 2. 4; VājaPrāti. 4. 86.

**अङ्कुर** (aṅkura–) I. P. [*denom.*] to sprout, to germinate एष विशेषः स्पष्टो वह्नेश्च त्वत्प्रतापवह्नेश्च । अङ्कुरति तेन दग्धं दग्धस्थानेन नोद्भवो भूयः KuṭṭaMa. 765 = Subhāṣi. 2529; नेक्ष्यते दिनपतिर्नलिनीनां नर्म किंचिदपि नाङ्कुरतीति Acyutarā. 8. 12; S'atDū. 211. 1.

**अङ्कुर** ( aṅk-ura ) *m.* [Mayr 1. 544; Burrow BSOAS. 12. 366; Debru. p. 487 / *tārakādigaṇa*, GaṇPā. 101. 72; Liṅgānu.(Pā.) 107. 22; DvirūK. (Pā.) 7. 2; GaṇRa. 7. 390] **1Ai** sprout, shoot, blade **ii** sprouting, germination **B** foremost part, tip **C** hair on the body **D** sprout-like growth **E** ray **2** domestic rite called aṅkurārpaṇa **3** haemorrhoid, tumour **4** a particular type of banner-cloth **5** a specific dramatic gesture **6** *Lapis lazuli* **7** blood **8** water **9** name of a Vidyādhara **10** a particular kind of woman's disease **1Ai** sprout, shoot, blade अथ ता एतस्यैवं यथैवेह बीजस्याङ्कुराः MaiU. 6. 31; 6. 35; वृक्षम्···समजीवयत् । अङ्कुरं तं स कृतवान् MahāBhā. i. 39. 10; अङ्कुरात्पर्णसंभवः MahāBhā. xiii. 36* (2); xiii. 91. 40; छिद्रकुम्भैश्च साङ्कुरैः । अङ्कुराढ्यैः शरावैश्च Rāmā. i. 1324* (8); बीजादिवाङ्कुराः Saund. 15. 6; CaraS. i. 11. 32; ऋतुक्षेत्राम्बुबीजानां सामग्र्यादङ्कुरो यथा SuśruS. iii. 2. 33; एष्येष्वेषण्यलाभे तु वालाङ्कुल्यङ्कुरा हिताः SuśruS. i. 8. 19; नापौरुषेयत्वान्नित्यत्वमराङ्कुरादिवत् SāṁkhyaPraSū. 5. 48; 6. 61; Tantrākhyā. 9. 10; PañcT. 1. 34 (29. 3); महासेनः ··· दूर्वाङ्कुरस्तिमितनीलमणिप्ररोहैः ··· परिणीवितांसः PratiYau. 2. 2; यवाङ्कुरापाण्डुकपोलशोभी मयावतंसः परिकल्पितस्ते RaghuVa. 13. 49; चूताङ्कुरास्वादकषायकण्ठः पुंस्कोकिलः···चुकूज KumāSaṁ. 3. 32; अनेन कस्यापि कुलाङ्कुरेण S'āk. 7. 19; 2. 13; उपवनसहकारैर्दर्शितेष्वङ्कुरेषु Vikramo. 2. 6; PauṣkS. 38. 160; MatsyaP. 229. 25; KundaMā. 2. 2; परिमलभृतो वाताः शाखा नवाङ्कुरकोटयः S'atTrayī. 99; मायामयाद्बीजाज्जायते तन्मयोऽङ्कुरः GauḍKā. 4. 59; SāṁkhyaKāBh. 16. 10 (*on* 23); KāśyaS. 104B. 40; AṣṭāSaṁ. ii. 16. 19 (4. 3); अङ्कुरान् श्यामलान्···वर्जयेत् PāraS. 16. 197; बीजं हुतमुक्प्रतप्तं न कल्पते तत्पुनरङ्कुराय VarāṅgaC. 10. 25; बाह्यस्य प्रतीत्यसमुत्पादस्य हेतूपनिबन्धः कतमः । यदिदं बीजाङ्कुरः ĀryaS'āS. 4. 11; बीजं यस्य विदेहराजतनयायाच्चाङ्कुरोऽपि स्वसुर्यात्रा MahāvīC. 6. 1 (153. 4); यथा वटबीजे तत्समुचितेनैव वपुषा अङ्कुरविटपपत्रफलानि तिष्ठन्ति ParāTri. 259. 2; क्रमोत्पन्नयोरपि बीजाङ्कुरयोः तद्भावभावित्वेन कार्यकारणभावः TātpaṬ.(U.) 276. 19 (*on* 5(4). 153); अङ्कुरस्तोयादिभिर्विना न भवति TantrVā. 663. 11 (*on* iii. 1. 1); बीजोपमर्देऽङ्कुरो जायमानो दृष्टः ChāndoUBh. 344. 13 (*on* vi. 2. 2); पयः । सच्छायमभवत् कीर्णं विद्रुमाणामिवाङ्कुरैः MahāP. 13. 133; दग्धे बीजे यथात्यन्तं प्रादुर्भवति नाङ्कुरः YaśasCam. ii. 399. 9; न हि ··· अङ्कुरो जायमानो दृश्यते Kāśi. iii. 162. 24 (*on* 5(7). 3); अङ्कुरो जायते तादृग्यादृग्बीजं हि उप्यते GaṇeP. ii. 117. 16; बीजाङ्कुरन्यायेन कर्मोपाधिसंबन्धस्यानादित्वाददोषः BrahmSūBh.(Rā.) 163. 11 (*on* i. 1. 4); निर्दग्धस्यान्वयतरोरङ्कुरं सुषुवे सुतम् RājTa.(Ka.) 1. 74; क्रियाजन्यत्वाविशेषेऽपि यत्नजन्यत्वाजन्यत्वाभ्यां घटाङ्कुरयोः कृताकृतव्यवहारात् TattvCin. iv(2). 820. 11; न हि प्रलयोदकावसिक्तेष्वपि प्रस्तरेषु अङ्कुराः प्ररोहन्ति S'atDū. 208. 23; शुचिर्दर्भाङ्कुराहारः ··· लुब्धकोद्गीतलोभेन मृगो मृगयते वधम् S'ukraNī. 1. 102; AmaK. 657; TrikāS'e. iii. 3. 326; AbhidhāCin. 1118; RājNi. 325. 21; AnekāSaṁ. 3. 511; **1A ii** sprouting, germination न खलु दहनान्तर्गतं बीजम् ··· अङ्कुराय कल्पते TattvVai. 3. 18 (*on* 1. 1); NyāyKu. 161. 12; **1B** foremost part, tip प्रसह्य मणिमुद्धरेन्मकरवक्त्रदंष्ट्राङ्कुरात् S'atTrayī. 9; नृसिंहस्य नखाङ्कुराः Kād. 4. 12; हसितं किंचिद्दृष्टरदाङ्कुरे AbhidhāCin. 297; नातिप्रौढमृणालकंदलसद्दंष्ट्राङ्कुरः पातु वः EI. viii. 13. 2; दंष्ट्रा चिरं स्यूतोन्नीतमहीतलोपरितटीनिर्यातशृङ्गाङ्कुरा EI. xxi. 273. 2; xvi. 224. 3; **1C** sprout-like growth रेतः श्वे( ? श्यो )तति मस्तमस्तकपदाविर्भूतनानाङ्कुरम् S'atTrayī. 2. 436; प्ररोहोऽधोमुखोऽङ्कुरः ParyāRaMā. 954; कन्दाकारमांसाङ्कुरसंभवः comm. *on* SuśruS. i. 5. 15; तृतीये त्वङ्कुराः पञ्च कराङ्घ्रिशिरसो मताः SaṁgīRa. i. 32. 5 (1(2). 24); **1D** ray उद्भ्रान्तपतत्पतङ्गपवनव्यालोलदीपाङ्कुरच्छायाचञ्चलम् S'atTrayī. 315; कुरण्टकविपाण्डुरं दधति धाम दीपाङ्कुराः ViddhaS'ā. 4. 1; उद्योतमद्दर्नि्शं विदधते रत्नः(?त्न)-प्रदीपाङ्कुराः EI. xiv. 302. 42; नम्रानेकनृपालमौलिनिकरप्रत्युप्तहीराङ्कुरश्रेणीरश्मिमिलन्नखद्युतिभरः EI. xxi. 288. 47; कामाक्षि संचिन्तये त्वन्मन्दस्मितरोचिषां त्रिभुवनक्षेमंकरानङ्कुरान् MūkaPañ. 2. 32; **1E** hair on the body ( रोम्णि ), TrikāS'e. iii. 3. 326; AnekāSaṁ. 3. 511; **2** domestic rite called *aṅkurārpaṇa* अङ्कुरमङ्कुरार्पणं विद्यात् कुर्यादित्यर्थः VīraMi.(Saṁskāra.) 266. 7; **3** haemorrhoid, tumour ( वर्तिम् ) पायौ दद्याद्विपक्वज्ज्ञो निपतन्त्यर्शसोऽङ्कुराः ĪśānS'iPa. i. 46. 46; गुदान्त्रवलिसंभूताः···। अङ्कुरा कथिताः प्राज्ञैरर्शांसीत्यभिधानतः Mānaso. i. 19. 226; DharK. 2106; **4** a particular type of banner-cloth ( ध्वजस्य ) अङ्कुरो द्व्यङ्गुलः प्रोक्तः BhaviP. 205A. 20 (i. 138. 24); **5** a type of dramatic gesture षडात्मकस्तु शारीरो वाक्यं सूचाङ्कुरस्तथा । शाखा नाट्यायितं चैव निवृत्त्यङ्कुर एव च NāṭyaS'ā. 22. 43; 8. 16; NāṭaLaRaK. 1435; भूतवाक्यार्थमुपजीव्य प्रवर्तितः । चित्तवृत्त्यर्पकोऽङ्गानां व्यापारोऽङ्कुर ईरितः [Bharatakośa 5; 786]; **6** *Lapis lazuli* अभ्रलोहश्चाङ्कुरे KalpaK. 199. 603; **7** blood अङ्कुरो रोम्णि रुधिरे वारिण्यभिनवोद्भिदि TrikāS'e. iii. 3. 326; AnekāSaṁ. 3. 511; **8** water TrikāS'e. iii. 3. 326; AnekāSaṁ. 3. 511; **9** name of a Vidyādhara मदनाङ्कुरसंतापप्रक्षिताक्रोशनन्दनाः ( एतेषामभवत्परमं रणम् ) PadmP.(Ra.) 60. 6; **10** a particular kind of woman's disease [pw.]; अङ्कुर is stated in Kośas as synonym of कलम Vaija. 240. 18; NānārthāSaṁ. ii. 16. 62; धाना Liṅgānu(He.) 47. 5; निकुरुम्ब NānārthāSaṁ. iii. 20. 25; पाद AnekāTi. 2. 177; बार्बटीर AnekāSaṁ. 4. 274; बीज TrikāS'e. iii. 3. 87; ViśvaLoK. 68. 14; यव AnekāTi. 2. 240; वैजिक AnekāSaṁ. 3. 91; स्तिहिनी ( v. l. सिहिनी ) NānārthāSaṁ. ii. 10. 107.

**अङ्कुर** ( aṅkura ) *n.* **1 A** a sprout सिञ्चेदङ्कुराण्यभिवृद्धये PārāS. 16. 197; दूर्वाभूस्तृणमाषाणां गृह्णीयादङ्कुराणि ParaS. 5. 49; 5. 50; PāñcRāRa. 133. 12; यद्भूमौ निहितं बीजं तस्मात्तज्जायतेऽङ्कुरम् VarāP. 125. 28; SkandP. iv. 26. 35; ParaNā. 2629; प्रवालं शृङ्गमङ्कुरम् ṢaḍrasaNi. 44. 2; **1 B** tree, AnekāTi. 3. 10; ParaNā. 2629; **1 C** hair, AnekāTi. 3. 10; ParaNā. 2629; **1 D** beginning शुद्धविद्या त्र्यक्षरो सैवाङ्कुरमारम्भः यस्याः सा LalitāSaBh. 33. 26 (*on* 61); **2** blood, NānārthāSaṁ. ii. 58. 129; ParaNā. 2629; AnekāTi. 3. 10; **3** water, S'eṣaNā. 1706; NānārthāSaṁ. ii. 58. 129; ParaNā. 2629; AnekāTi. 3. 10.

**अङ्कुरक** ( aṅkura-ka ) *m.* (bird's) nest [PW, MW, Apte], abode of birds or animals [Apte]

**अङ्कुरकरण** ( aṅkura-karaṇa ) *n.* the act of producing sprouts, the act of bringing out sprouts तेषामङ्कुरकरणकौशलमविकलम् NyāyMañ. i. 150. 21; भृष्टानामिव बीजानामङ्कुरकरणकौशलहानिः NyāyMañ. ii. 88. 28.

**अङ्कुरकर्त्रभिन्न** ( aṅkurakartr-abhinna ) *adj.* not different from (i. e. identical with) the creator of sprouts अन्ये तु क्षितिकर्ता अङ्कुरकर्त्रभिन्नः अशरीरकर्तृत्वात् TattvCin. ii(2). 79. 13.

**अङ्कुरकर्मन्** ( aṅkura-karman ) *n.* the rite (consisting of the sowing of seeds) for the sprouts (connected with marriage etc.) शालिश्यामाढकीमुद्गतिलनिष्पावसर्षपाः । कुलत्थकङ्गुमाषाश्च बीजान्यङ्कुरकर्मणि S'āraTi. 3. 40.

**अङ्कुरकला** ( aṅkura-kalā ) *f.* the sprout-like digit of the moon अन्येषां प्रथमारम्भे शुद्धभूषु विजृम्भते । सर्गः संसिक्तबीजानां कोशेऽङ्कुरकला यथा YogVā. iii. 30. 20 ( comm. अङ्कुर एव शुभ्रत्वात् कला )

**अङ्कुरकारक** ( aṅkura-kāraka ) *adj.* causing or producing the sprout बीजत्वमात्रप्रयुक्तमङ्कुरकारकम् ( °कारकत्वम् ) NyāyKu. 28. 2.

**अङ्कुरकारण** ( aṅkura-kāraṇa ) *n.* **A** cause of the sprout यदि बीजविनाशोऽङ्कुरकारणं नाभविष्यदविनष्टेऽपि बीजेऽङ्कुरोऽभविष्यत् न चैवमस्ति तस्माद्बीजविनाशोऽङ्कुरकारणम् NyāyVār. 457. 16 (*on* iv. 1. 14–15); **B** seed (*lit.* cause of the sprout) बीजमङ्कुरकारणम् AnekāSa. 441; बीजं तु रेतसि । स्यादाधाने च तत्त्वे च···हेतावङ्कुरकारणे AnekāSaṁ. 2. 72; ViśvaPra. 32. 5 ( जद्विकम् ); DharK. 421; NānārthāSaṁ. i. 37. 44; MediK. 32. 16; NānārthaMa. 398; KośaKaTa. 2. 4309.

**अङ्कुरकारणत्व** ( aṅkurakāraṇa-tva ) *n.* the state of being the cause of the sprout नहि भर्जितं बीजमङ्कुरं नोत्पादयतीत्येतावता बीजस्याङ्कुरकारणत्वं नास्ति TattvPrakā. 149A. 9 (*on* iii. 2. 1)

**अङ्कुरकारिन्** ( aṅkurakār-in ) *adj.* producing a sprout कथं किञ्चिदेव बीजं स्वकार्यं कुर्यात् नापराणि। न च वस्तुमात्रं तत्कार्यम् अबीजात् तदनुत्पत्तिप्रसङ्गात्। नापि बीजमात्रमङ्कुरकारिणोऽपि तदुत्पत्तिप्रसङ्गात् ĀtmaTaVi. 100. 5.

**अङ्कुरकार्य** ( aṅkura-kārya ) *n.* seed (*lit.* having a sprout for its effect) बीजं तु रेतसि। हेतावङ्कुरकार्ये च AnekāK. 145.

**अङ्कुरकोश** ( aṅkura-kośa ) *m.* cell or sack of sprouts वसति त्रसरेण्वन्तर्ध्रियते गगनोदरे। लीयतेऽङ्कुरकोशेषु रसी भवति पल्लवे YogVā. iii. 40. 21.

**अङ्कुरक्षत** ( aṅkura-kṣata ) *n.* removal (through surgical operation) of the tumour (of piles) सप्तसप्तदिवसात्तत एकैकांकुरक्षतमिहाचरणीयम् Kalyā-Kā. 12. 111.

**अङ्कुरग** ( aṅkura-ga ) *adj.* [ *f.* –ā ] lying or resting on the tip (of the tusk) यद्दंष्ट्र[ां]कुरगा हि भूरिह सतां कर्माणि वेदार्थिनाम्…नमः पोत्ति(? त्रि)-णे EI. iii. 120. 9.

**अङ्कुरगत** ( aṅkura-gata ) *adj.* relating to the (mode of acting called) Aṅkura सूचासु चाङ्कुरगते च तथोपचारेष्वल्पाक्षराणि हि पदानि भवन्ति काव्ये NāṭyaS'ā. 17. 132.

**अङ्कुरगर्भ** ( aṅkura-garbha ) *adj.* having the sprout within or inside बीजमङ्कुरगर्भम् BṛBrahmaS. iv. 10. 4.

**अङ्कुरगोचर** ( aṅkura-gocara ) *adj.* reaching the stage of the sprout न्यग्रोधे फलशालिनि स्फुटरसं किंचित्फलं पच्यते बीजान्यङ्कुरगोचराणि कतिचित् सिध्यन्ति तस्मिन्नपि SubhāRaK. 33. 44; Sadukti Ka. 267. 1.

**अङ्कुरगौर** ( aṅkura-gaura ) *adj.* whitened by the sprouts सीमनि लघुपङ्कायामङ्कुरगौराणि चञ्चितोरस्काः। लघुतरमुत्प्लवमानाश्चरन्ति बीजानि कलविङ्काः SubhāRaK. 35. 34.

**अङ्कुरग्रन्थि** ( aṅkura-granthi ) *m.* knot of a sprout वामदेवः– भगवन् अद्य खलु दिलीपकुलकुशलकर्मैकल्पलतानामङ्कुरग्रन्थिभिरुदीर्यन्ते किसलयानि Anargha-Rā. 1. 24(4)

**अङ्कुरग्रह** ( aṅkura-graha ) *m.* knowledge of the sprout अथवा कृतमङ्कुरग्रहेण, बीजस्वभावत्वं क्वचित् कार्ये प्रयोजकं न वा ĀtmaTaVi. 99. 15.

**अङ्कुरग्रामणी** ( aṅkura-grāmaṇī ) *m.* chief sprout or shoot कल्पमहीरुहः स पतितो भग्नाः शतं वल्लयः। एकेभ्योऽपि पुनः प्ररोहति भृशं तस्याङ्कुरग्रामणीः SaduktiKa. 261. 9.

**अङ्कुरजनक** ( aṅkura-janaka ) *adj.* causing or producing the sprout अङ्कुरजनकं बीजं बीजकृतं न भवति NyāyKa. 77. 10; TattvPradī.(Ci.) 212. 2; यदिदमन्त्यक्षणप्राप्तं क्षितिसलिलसंयुक्तमङ्कुरजनकं तद्यदि कृषीवलप्रयत्नविरहात् कुसूलस्थमेव स्यात्तदापि किमङ्कुरं जनयति S'āstrDī. 145. 1 (*on* i. 1. 6)

**अङ्कुरजनकता** ( aṅkurajanaka-tā ) *f.* the nature of causing or producing a sprout तथापि न तुषविकलानामंशानामङ्कुरजनकतास्ति NyāySu.(Ja.) 201B. 9 (*on* i. 4. 6)

**अङ्कुरजनकत्व** ( aṅkurajanaka-tva ) *n.* the nature of causing or producing a sprout बीजत्वावच्छेदेनाङ्कुरजनकत्वे गृहीते मूषिकाघ्रातेषु तददर्शनेन कारणत्वसन्देहे मूषिकाघ्राणनाश्या व्रीहिनिष्ठा कारणशक्तिः कल्प्यते BhāṭṭCin. i. 46. 19 (*on* i. 1. 4)

**अङ्कुरजनन** ( aṅkura-janana ) *n.* production or causation of a sprout भूमिबीजोदकसामग्र्या इव अंकुरजनने ManuBh. ii. 320. 15 (*on* 9. 296) यदि कुसूलनिहितं बीजं तदानीमङ्कुरजनने समर्थम् तर्हि तदेवाङ्कुरं जनयेत् TattvPradī.(Ci.) 209. 2; कुसूले ह्यङ्कुरजननोपयोगिबीजसन्ताननिर्वर्तको बीजक्षणः VedāntKa. 276. 21; *adj.* [ *f.* –ī ] producing the sprout अङ्कुरजननी शक्तिः सति खलु बीजे समीक्ष्यते सकलैः SvātmNi. 77.

**अङ्कुरजननयोग्य** ( aṅkurajanana-yogya ) *adj.* capable of producing a sprout किमर्थं तर्हि कृषीवलः परिकर्मितायां भूमौ बीजमावपति उदकं चासिञ्चति परस्पराधिपत्येन तेभ्यः प्रत्येकमङ्कुरजननयोग्यक्षणजननायेति चेत् NyāyKa. 77. 22; बीजानि अङ्कुरजननयोग्यानि VīraMi. (Āhnika.) 516. 13.

**अङ्कुरजननशक्ति** ( aṅkurajanana-śakti ) *f.* power of producing a sprout एतेन बीजादिष्वङ्कुरजननशक्तिकल्पना व्याख्याता S'āstrDī. 80. 2 (*on* i. 1. 5)

**अङ्कुरजननसमर्थ** ( aṅkurajanana-samartha ) *adj.* capable of producing a sprout बीजक्रियाविधिः अङ्कुरजननसमर्थबीजकरणप्रकारः CaturCin. i. 1045. 7.

**अङ्कुरजननसामर्थ्य** ( aṅkurajanana-sāmarthya ) *n.* power or capacity of producing a sprout तर्हि तत्सन्तानवर्तिनां सर्वेषां बीजत्वाविशेषादङ्कुरजननसामर्थ्यम् TātpaṬ(Vā.) 555. 2 (*on* iii. 2. 14)

**अङ्कुरजननस्वभाव** ( aṅkurajanana-svabhāva ) *adj.* possessed of the nature (i. e. capacity) of producing a sprout किं कुसूलस्थो व्रीहिरङ्कुरजननस्वभावोऽथातत्स्वभाव इति BrahmSūBh.(Bhā.) 118. 26 (*on* ii. 2. 20); 120. 3 (*on* ii. 2. 20); न हि शालिबीजं स्वहेतोरङ्कुरजननस्वभावमुत्पन्नं सङ्केतान्तरमपेक्ष्य गर्दभं जनयितुं समर्थं स्यात् TarkBhā.(Mo.) 5. 18.

**अङ्कुरजन्मन्** ( aṅkura-janman ) *n.* germination or sprouting (of a seed) स्वभावपरिणामेन हेतुरङ्कुरजन्मनि। भूम्यादिस्तस्य संस्कारे तद्विशेषस्य दर्शनात् PramāVār. 2. 25; ये तावद्बीजावयवाः…तेऽङ्कुरेऽप्यनुवर्तन्त एव न तेषामुपमर्दोऽङ्कुरजन्मनि ChāndoUBh. 344. 16 (*on* vi. 2. 2)

**अङ्कुरजन्मयोग्य** ( aṅkurajanma-yogya ) *adj.* capable of germination or sprouting बीजानि अङ्कुरजन्मयोग्यानि BālamBha. i. 439. 1 (*on* 1. 175)

**अङ्कुरजातीय** ( aṅkura-jātīya ) *adj.* of the type or class of a sprout किमिति बीजजातीयेभ्योऽङ्कुरजातीयान्येव जायन्ते कार्याणि Bhām. 436. 18 (*on* ii. 2. 26)

**अङ्कुरजातीयत्व** ( aṅkurajātīya-tva ) *n.* the state of being of the type or class of a sprout यथाङ्कुरमात्रकारणानुगमे यवाङ्कुरस्याप्यङ्कुरजातीयत्वं न तु सर्वस्य यवाङ्कुरत्वं तत्कारणानुगमाभावादित्याशयवानाशङ्कते NyāyVārPari. 515. 10.

**अङ्कुरज्ञान** ( aṅkura-jñāna ) *n.* knowledge of the sprout असत्यपि हि मृत्सलिलच्छन्नबीजज्ञाने अङ्कुरज्ञानं दृश्यते NyāyRa. 342. 20 (*on* 5(3). 257)

**अङ्कुरण** ( aṅkuraṇa ) *n.* sprouting, manifestation in a subtle form विभावनं रत्यादेर्विशेषेणास्वादाङ्कुरणयोग्यतानयनम् (comm. अङ्कुरणम् अङ्कुरसदृशीभवनं सूक्ष्मरूपेणाविर्भावः) SāhiDa. 86. 8.

**अङ्कुरत्** ( aṅkurat ) *adj.* sprouting, growing, manifesting विष्णुप्रभृतयः सर्वे बभूवुश्चातिगर्विताः। बलानि चांकुरन्तोऽन्तरशिवमायाविमोहिताः S'ivaP. iii. 16. 17 (315A. 13); तेनैवाङ्कुरता मुखेन जगदे शेषं च लङ्कापतेः RāmāCam. 6. 85; आसीदधिष्ठानविशेषसीमा वक्षोजयोरङ्कुरतोरमुष्याः। मुकुन्दवक्षःस्थलमुद्रणार्हां भव्यामवस्थामिव भावयन्ती Yādavā. 12. 44; अङ्कुरत्यधिमनो विरहाग्नौ Raghunā. 11. 101.

**अङ्कुरतस्** ( aṅkura-tas ) *adv.* from a sprout यथेहाङ्कुरतो बीजं बीजतो वा यथाङ्कुरः SaurP. 24. 46.

**अङ्कुरता** ( aṅkura-tā ) *f.* the state of a sprout भावयन्ति चितिश्चैत्यं व्यतिरिक्तमिवात्मनः। संकल्पतामिवायाति बीजमङ्कुरतामिव MahāU. 5(180)

**अङ्कुरत्पुलक** ( aṅkurat-pulaka ) *adj.* [ *f.* –ā ] on whom is appearing (*lit.* sprouting) the bristling of hair, thrilled गाढमङ्कुरत्पुलकाम्। … त्वामालिङ्ग्य कृती भवाम्यहं गिरिजे PārvPa. 4. 17.

**अङ्कुरदङ्ग** ( aṅkurad-aṅga ) *adj.* with sprouting branches पिकततिरिह वादयति मृदङ्गम्। पश्यति तरुकुलमङ्कुरदङ्गम् StavMā. 283. 8.

**अङ्कुरदन्तुर** ( aṅkura-dantura ) *adj.* [ *f.* –ā ] uneven on account of the sprout, with (budding) teeth in the form of sprouts अङ्कुरदन्तुरा कमलिनी नायामिनी यामिनी…आयान्ति…वासराः (वसन्तस्य) SaduktiKa. 167. 34.

**अङ्कुरद्वयवत्** ( aṅkuradvaya-va(n)t ) *adj.* having two sprouts (i. e. projected parts) (जायते वृषसूनवान्) वृषस्य शृङ्गद्वयसूचकौ तद्वत्सूनावस्य वत्सस्य हन्तुः तत्स्थाने अङ्कुरद्वयवान् भवेदित्यर्थः CaturCin. iv. 90. 17.

**अङ्कुरनिभ** ( aṅkura-nibha ) *adj.* [ *f.* –ā ] resembling a sprout अर्चयेत्…। आधारशक्तिमङ्कुरनिभां कूर्मशिलास्थिताम् AgniP. 74. 44.

**अङ्कुरनिर्गत** ( aṅkura-nirgata ) *adj.* growing out of a shoot बीजशब्दोऽत्राङ्कुरनिर्गतव्रीह्यादिवचनो न मूलवचनः ManuBh. ii. 251. 19 (*on* 9. 37)

**अङ्कुरनिर्गम** ( aṅkura-nirgama ) *m.* manifestation of a shoot or sprout महौषधेरङ्कुरनिर्गमादिव क्षतप्रभस्तक्षकनागपुङ्गवः CaitaCa. 8. 6(1)

**अङ्कुरपल्लव** ( aṅkura-pallava ) *m.* tender sprout प्रियावगूढा दयितोपगूढा काचित्प्ररूढाङ्गरुहापि नारी। सुचारुबाष्पाङ्कुरपल्लवानां नवाम्बुसिक्ता इव भूमिरासीत् MatsyaP. 139. 35.

**अङ्कुरपात्र** ( aṅkura-pātra ) *n.* earthen pot in which sprouts have appeared (for employment in the *aṅkurārpaṇa* rite) शोभितेषु रजसाथ पदेषु स्थापयेत्तु पृथगङ्कुरपात्रम् ĪśānS'iPa. i. 12. 16 = ii. 10. 21 (cf. पालिकाङ्कुरपात्रे स्यात् NānārthaMa. 143; cf. **अङ्कुरपालिका**)

**अङ्कुरपात्रक** ( aṅkurapātra-ka ) *n.* earthen pot containing sprouts हेतीशम्…वाहयेत्…सार्धमङ्कुरपात्रकैः PāraS. 16. 110.

**अङ्कुरपालिका** ( aṅkura-pālikā ) *f.* earthen pot in which sprouts have grown (used in Tantric rites) (मण्डपस्य) द्वारेषु कलशांस्तस्य न्यसेच्चाङ्कुरपालिकाः ĪśānS'iPa. ii. 19. 48; ii. 46. 49.

**अङ्कुरप्रकार** ( aṅkura-prakāra ) *m.* a type of dramatic posture of hands called Aṅkura बहुप्रकारैः सूचाभिनयैः अङ्कुरप्रकारैश्च युक्तमित्थं काव्यं भवति AbhinBhā. ii. 399. 21 (*on* 17. 132)

**अङ्कुरप्रक्रिया** ( aṅkura-prakriyā ) *f.* process of germination महातरुर्वा भवति समूलो वा विनश्यति। नाङ्कुरप्रक्रियामेति न्यग्रोधकणिकाङ्कुरः Subhāṣi. 788.

**अङ्कुरप्रयोक्तृ** ( aṅkura-prayoktṛ ) *adj.* [ *f.* -trī ] causing germination तर्हि बीजस्याङ्कुरप्रयोक्त्री सत्ता … अङ्कुरान्तर्भावमात्मन्यानयति PratyabhiVi. ii. 188. 9 (*on* ii. 4. 14)

**अङ्कुरप्ररोह** ( aṅkura-praroha ) *m.* growing of a sprout यथा संस्पृष्टाग्नेर्बीजादङ्कुरप्ररोहो निवर्तते PārāSū. 31. 12.

**अङ्कुरप्रसव** (aṅkura-prasava) *m.* growth of a sprout, act of sprouting क्षित्यादिसहभुव एव बीजक्षणस्यातिशयोत्पादपरम्पराया अङ्कुरप्रसवसामर्थ्यात् TātpaṬ.( Vā. ) 556. 23 (*on* iii. 2. 14); SāṁkhyaTaKau. 493. 5 (*on* 67); परम्परयाङ्कुरप्रसवसमर्थबीजक्षणजननादस्त्येव ( बीजस्य शिलाशकलाद्विशेषः ) Ātma-TaVi. 69. 1.

**अङ्कुरप्रागभाव** ( aṅkura-prāgabhāva ) *m.* antecedent non-existence of a sprout उत्पादस्य पुरस्तादखिलसामर्थ्यरहितस्याङ्कुरप्रागभावस्योपकारं किंचित्कुर्वन्तोऽपि बीजादयोऽङ्कुरमारभन्ते तदुत्पादस्यैव तत्प्रागभावनिवृत्तिरूपत्वात् TātpaṬ. (Vā. ) 549. 12 (*on* iii. 2. 14)

**अङ्कुरप्रादुर्भाव** ( aṅkura-prādurbhāva ) *m.* origination or manifestation of a sprout ननु च बीजमनुपमृज्या( ? द्या )ङ्कुरप्रादुर्भावो न दृश्यते Brahm-SūBh.( Bhā. ) 122. 26 (*on* ii. 2. 26)

**अङ्कुरभाव** ( aṅkura-bhāva ) *m.* the state of a sprout, sprouting or developing stage अप्ररूढः बीजभावेन स्थितत्वादङ्कुरभावमगतः Bhāsk. i. 69. 11 (*on* i. 1. 3); i. 200. 17 (*on* i. 5. 2); अयमङ्कुरभाव एव तावत्कुचयोः कर्षति लोकलोचनानि S'ārṅgaPa. 3272.

**अङ्कुरभ्रमप्रसङ्ग** ( aṅkurabhrama-prasaṅga ) *m.* contingency of erroneous knowledge of a sprout गिरिशिखरगतमृत्सलिलबीजसंबन्धेन अपवरकगतस्याङ्कुरभ्रमप्रसङ्गात् S'rutaPra. iB. 81. 17 (*on* i. 1. 1)

**अङ्कुरमात्र** ( aṅkura-mātra ) *n.* sprout in general यथाङ्कुरमात्रकारणानुगमे यवाङ्कुरस्याप्यङ्कुरजातीयत्वं न तु सर्वस्य यवाङ्कुरत्वम् NyāyVārPari. 515. 10.

**अङ्कुरय** ( aṅkuraya- ) P. [*denom.*] **Ai** to cause to sprout, to cause to germinate बाणानङ्कुरयन्ति पुष्पधनुषो वीरस्य चूतद्रुमाः SūktiMu. 59. 7; तृणान्यङ्कुरयामास विपक्षनृपसद्मसु Candrā. 5. 70; क्षेत्राण्यङ्कुरयस्यमून्मुकुलयस्यह्वाय नीपद्रुमान् ।…त्वमम्बुद BhāvVi. 87; **Aii** (*fig.*) to cause to germinate, to produce, to cause to emerge श्रीमत्शङ्कर [आ ?]वि[रं]कुर[यि]तुं सत्पुण्यबीजा[न्य]भूत् EI. ii. 335. 17; अथ तत्स्पर्शसौख्येन धर्मराजो महातपाः । पुनरङ्कुरयामास तपोऽग्निज्वलितां तनुम् SkandP. iv. 79. 2; दग्धं यदा मदनमेकमनेकधा ते मुग्धः कटाक्षविधिरङ्कुरयांचकार DevīPañ. 4. 7; तत्तद्विषयविज्ञप्तिबीजान्येव वासनामङ्कुरयन्ति S'at-Dū. 85. 3; मन्त्रीश्वरो माधवः । शासत्कोंकणनीवृतं हरिहरक्षोणीपतेराज्ञया धर्मानंकुरयत्यसज्जनशिखिज्वालौघदग्धान्पुनः EI. xxi. 20. 36; **Aiii** (*fig.*) to cause to arise, to cause to develop मृगदृशां परिष्वङ्गोऽनङ्गं पुनरपि शनैरङ्कुरयति SubhāRaK. 9. 2 = SaduktiKa. 172. 3 = S'ārṅgaP. 3834 = Subhāṣi. 1714; कथमसद्व्यपदेशः स्वरूपासत्त्वशङ्कामङ्कुरयेत् S'rutaPra. ii. 227. 27 (*on* ii. 1. 12); SūktiMu. 92. 14; MahāN. 6. 39; रागमङ्कुरयत्येवं शून्यापि हि विलासभूः S'āliC. 6. 130; शङ्कामङ्कुरयन्ति शंकरकवेः सद्युक्तयः सूक्तयः S'aṅkaDigVi.( Mā. ) 4. 82; आनन्दमङ्कुरयति स्मरणेन कापि रम्या दशा मनसि मे मदिरेक्षणायाः BhāmiVi. 2. 3; कामाक्षि कोपरभसाद्वलमानमीनसंदेहमङ्कुरयति क्षणमक्षिपातः MūkaPañ. 1. 95; शङ्कामङ्कुरयन्ति कुङ्कुमनवक्षोदस्य वक्षोजयोः ( लीलावत्याः ) … बालातपाः S'ṛṅgāTi.( Rā. ) 63; **B** to reveal, to cause to break प्राचीमङ्कुरयन्ति किंचन रुचो राजीवजीवातवः AnargharRā. 2. 2 = SubhāRaK. 30. 3 = Subhāṣi. 2169; **C** to put forth, to utter (words) इति शंकरस्याहंकारवादेन सातङ्कः कुरुकुलशशाङ्कः पुनरपि कामपि गिरमेवमङ्कुरयामास BhārCam. 4. 80(2); **D** to make manifest, to exhibit क्रों इति सर्वमहाङ्कुशमुद्रां अङ्कुरयेत् NityoNi. 53. 23.

**अङ्कुरयाग** ( aṅkura-yāga ) *m.* the rite called *aṅkurārpaṇa* अकृत्वाङ्कुरयागं तु तथा कौतुकबन्धनम् । स्नापितो यदि देवेशः स्नानं तन्निष्फलं भवेत् PāraS. 19. 96.

**अङ्कुरयोग्य** (aṅkura-yogya) *adj.* capable of sprouting or germinating, productive of अङ्कुरिणोऽङ्कुरयोग्यस्थावरबीजादेर्भक्षणे परं दोषः VīraMi.( Āhnika. ) 390. 19.

**अङ्कुरयोनि** ( aṅkura-yoni ) *f.* source of the sprout, the seed मानस्यो वृत्तयो या या भोगसंकल्पविभ्रमैः । संसारविषवृक्षस्य ता एवाङ्कुरयोनयः YogVā. iii. 110. 66.

**अङ्कुररस** ( aṅkura-rasa ) *m.* juice of the sprout गायन्तो गलरागमङ्कुररसैश्चूतस्य…पुष्णन्ति पुंस्कोकिलाः SubhaDha. 2. 9.

**अङ्कुररूप** ( aṅkura-rūpa ) *n.* form of a sprout क्वचिदङ्कुररूपेण क्वचिद्बीजात्मना वटः । कार्यकारणरूपेण यथा तिष्ठत्यदस्तथा ( जगत् ) SarvaVeSāSaṁ. 587; *adj.* having the form of a young sprout वृक्षेष्वङ्कुररूपोऽहमाकारः सर्ववस्तुषु BrahmVaiP. iv. 73. 93; पांसुना पिहितस्येव बीजस्याङ्कुररूपमुद्घाटनम् AbhinBhā. iii. 24. 11 (*on* 19. 40)

**अङ्कुररूपत्व** ( aṅkurarūpa-tva ) *n.* the nature of having the form of a sprout अथवा मदनाङ्कुरः कामबीजम् । बीजस्याङ्कुररूपत्वात् SetuBa. 146. 25.

**अङ्कुररूपिन्** ( aṅkurarūp-in ) *adj.* [ *f.* -iṇī ] having the form of a sprout वृक्षाणां वृक्षरूपा त्वं सृष्टा चाङ्कुररूपिणी BrahmVaiP. iv. 88. 27.

**अङ्कुररोप** ( aṅkura-ropa ) *m.* rite called *aṅkurārpaṇa* वक्ष्ये ध्वजप्रतिष्ठामङ्कुररोपं तदर्थमत्रादौ । कृत्वा तदर्हकाले वाहनमावासयेज्जले लोहम् TantrSa. 6. 116.

**अङ्कुररोपण** ( aṅkura-ropaṇa ) *n.* rite called *aṅkurārpaṇa* पुण्यक्षणादिकं यस्मिन् दिने भवति तद्दिनात् । प्राक् सप्तमे दिने कृत्वा प्राग्वदङ्कुररोपणम् PāraS. 12. 475; 17. 86.

**अङ्कुररोह** ( aṅkura-roha ) *m.* growing sprout, fresh sprout ( आरूढं च सुवेलं रामबलम् ) अङ्कुररोहसमच्छविरुरुगणसंलीढतरलहरिमणिकिरणम् Bhaṭṭi. 13. 42.

**अङ्कुररोहणनिमित्तक** ( aṅkurarohaṇanimitta-ka ) *adj.* occasioned by the sprouting (of the sacrificial post) छिन्नयूपेऽङ्कुररोहणनिमित्तकं कर्म विकृतावेव प्रवर्तते BhāṭṭCan. 23. 5 (*on* xiii. 3. 10)

**अङ्कुरलेपन** ( aṅkura-lepana ) *n.* ointment applied to (a malignant) growth (in any part of the body) प्रबलकर्णवतीष्वपि शोधनैः । कृतसुवर्तिमिहाधिकभेषजैः ।…प्रशमयेदथवाङ्कुरलेपनैः KalyāKā. 17 81.

**अङ्कुरवत्** ( aṅkura-vat ) *adv.* like a shoot or sprout गरुडं भवेत् । पञ्चवर्णसमन्त्रि(? न्वि)तपक्षयुक् अङ्कुरवत्कर्णशिरावृतम् MānaSā. 61. 36; अज्ञानम्…। तदेतत्सन्न भवति नासद्वा शुक्तिरौप्यवत् । … न सावयवमन्यद्वा बीजस्याङ्कुरवत् क्वचित् SarvaVeSāSaṁ. 306; KaviKaṇṭhā. 1. 18; BṛBrahmaS. iii. 1. 26.

**अङ्कुरवत्** ( aṅkura-va(n)t ) *adj.* [ *f.* -vatī ] bearing sprouts or new shoots स पपात महावीर्यो दिव्यास्त्राभिहतो रणे । महाशनिविनिर्दग्धः पादपोऽङ्कुरवानिव MahāBhā. iii. 271. 17; viii. 64. 42; xii. 39. 36; यथाङ्कुरवती भूमिर्बीजगर्भा NyāySu.( Ja. ) 471B. 7 (*on* iii. 2. 1); कुरवाख्यनगोऽपि तदाङ्कुरवान् Nalo. 2. 4.

**अङ्कुरवर** ( aṅkura-vara ) *m.* excellent sprout एकस्तेष्वपि कश्चिदङ्कुरवरो बध्नाति तामुन्नतिं यामध्वन्यजनः स्वमातरमिव … धावति SubhāRaK. 33. 44 = SaduktiKa. 267. 2.

**अङ्कुरवासर** ( aṅkura-vāsara ) *m.* day on which the *aṅkurāropaṇa* rite is performed अङ्कुरारोपणदिनाद्यावत्तु ध्वजवासरम् । दिनषट्केन विप्रेन्द्र प्रत्यहं व्रतमाचरेत् । द्वादशाक्षरमन्त्रेण कुर्यादङ्कुरवासरे ( जपम् ) PāraS. 16. 543.

**अङ्कुरविरूपक** ( aṅkura-virūpaka ) *m.* deformed sprout मधुवल्मीकजच्छत्रपत्रांकुरविरूपकाः । गृहेषु यदि जायन्ते कर्तृनाशो गृहस्य च VasiS. 45. 112.

**अङ्कुरविश्रान्त** ( aṅkura-viśrānta ) *adj.* [ *f.* -ā ] resulting in sprouting तर्हि बीजस्याङ्कुरप्रयोक्त्री सत्ता अङ्कुरविश्रान्ता अकुरान्तर्भावमात्मन्यानयति PratyabhiVi. ii. 188. 9 (*on* ii. 4. 14)

**अङ्कुरशक्ति** ( aṅkura-śakti ) *f.* capacity or ability to sprout अवश्यं कस्यचिच्छक्तिर्भवति बीजस्याङ्कुरशक्तिः … इति BrahmSūBh.( Bhā. ) 197. 14 (*on* iii. 3. 54); यथा च बीजस्य स्वाभाविक्यप्यङ्कुरशक्तिरग्निनापनीयते SāṁkhyaPraBh. 10. 28 (*on* 1. 10)

**अङ्कुरशिखा** ( aṅkura-śikhā ) *f.* tip of a sprout देवो हरिर्जयति यज्ञवराहरूपः… । यस्योदरस्थितजगत्त्रयबीजकोशनिर्गच्छदङ्कुरशिखेव विभाति दंष्ट्रा SubhāRaK. 6. 42.

**अङ्कुरश्री** ( aṅkura-śrī ) *f.* beauty of a sprout तस्य शुष्कतरोः सर्वे प्ररूढामङ्कुरश्रियम् । वि( v. l. व्य )लोकयन् BṛKathāMañ. ix. 1. 191.

**अङ्कुरश्रेणि** ( aṅkura-śreṇi ) *f.* row or series of sprouts तन्मण्डलं चण्डरुचेः शुचं वश्छिनत्तु दैत्यारिपुरप्रतोली । यत्राङ्कुरश्रेणिनिभा विभाति भासां ततिस्तोरणमालिकेव Surath. 1. 25.

**अङ्कुरसंचय** ( aṅkura-sañcaya ) *m.* multitude of sprouts गिरिशाश्रमे । लतास्सर्वास्सुमनसो दधुरङ्कुरसंचयान् S'ivaP. ii(2). 9. 25 (77B. 9)

**अङ्कुरसंतान** ( aṅkura-santāna ) *m.* series or chain of sprouts न च बीजाङ्कुरसंतानयोरिव जीवाविद्ययोरनादित्वेन तत्परिहारः TattvPradī.( Ci. ) 370. 10.

**अङ्कुरसंधि** ( aṅkura-sandhi ) *m.* sprout-like joint (i. e. joint in minute form) त्रिभिर्मासैः प्रजायन्ते सर्वे ह्यङ्कुरसंधयः । मासैश्चतुर्भिरङ्गुल्यः S'ivaP. v. 22. 19 (431A. 10)

**अङ्कुरसंभव** ( aṅkura-sambhava ) *m.* **A** manifestation of sprout-like limbs (i. e. limbs in minute form) त्रिभिर्मासैः प्रजायन्ते शतशोऽङ्कुरसंभवाः । मासैश्चतुर्भिर्जायते अङ्गुल्यादि यथाक्रमम् PadmP. ii. 66. 33; **B** coming of sprouts into existence वी( ? बी )जेऽङ्कुराभावव्याप्यता न वी( ? बी )जत्वेनावच्छिद्यते इतरसमवधाने सति वी( ? बी )जादङ्कुरसंभवात् TattvCin. ii(2). 152. 2.

**अङ्कुरसंभूत** ( aṅkura-sambhūta ) *adj.* grown as a sprout बीजादङ्कुरसंभूतो न्यग्रोधस्तु समुत्थितः ViṣṇuP. i. 12. 66.

**अङ्कुरसूचितनृत्तन्याय** ( aṅkurasūcitanṛtta-nyāya ) *m.* principle of *nṛtta* indicated by the dramatic posture of hands नृत्तमप्यत्र वैचित्र्यकारित्वेन प्रविशत् 'नाट्यरूपगतं नृत्तम्' इत्यङ्कुरसूचितनृत्तन्यायेनानुकारधुरारोहि AbhinBhā. i. 209. 22 (*on* 5. 7)

**अङ्कुरस्थ** ( aṅkura-stha ) *adj.* [*f.* -ā] found in the sprout चरणनखमयूखैरङ्कुरस्थामवस्थाम्…प्रसवसमययोग्यामङ्गनानामपाङ्गैः रजनिकरतरुश्रीर्नीयते प्राप्तभूमिः YaśasCam. i. 611. 7; सत्यं पृथ्व्यादि चित्तस्थं न बहिष्ठं कदाचन । अङ्कुरस्थः पल्लवस्तु तस्माद्यस्मात् फलश्रियः YogVā. v. 48. 51.

**अङ्कुरस्थानीय** ( aṅkura-sthānīya ) *adj.* [*f.* -ā] similar to a sprout फलस्य हि सूक्ष्मसामर्थ्यरूपावस्थाङ्कुरस्थानीया पूर्वानुत्पन्नोत्पत्तेरपूर्वमित्युक्तं प्राक् TantrVā. 679. 8 (*on* iii. 1. 8); पश्वादेः फलस्य सूक्ष्मावस्था शक्तिरङ्कुरस्थानीयापूर्वम् NyāyRa. 107. 9 (*on* 2. 199); 683. 11 (*on* 5(16). 8)

**अङ्कुरस्थिति** ( aṅkura-sthiti ) *f.* the state or condition of sprouting यया पूर्वं वियुक्तासि तन्वा जलदरूपया ।… योगमेष्यसि भूयश्च तन्वान्तर्बीजरूपिणी । तयैव रससेकेन लतयेवाङ्कुरस्थितिः YogVā. iii. 75. 13.

**अङ्कुरस्फुरणदशा** ( aṅkurasphuraṇa-daśā ) *f.* the state or condition of sprouting न हि दोषस्यायं महिमा यत् पक्षं नाक्रामति तस्मादङ्कुरस्फुरणदशायां निश्चितव्याप्तिकेन हेतुना तत्र साध्यसिद्धेरप्रत्यूहत्वात् Upask. 95. 11 (*on* ii. 1. 19)

**अङ्कुरस्वरूपायोग्य** ( aṅkurasvarūpāyogya ) *adj.* not fit for (developing into) the form of a sprout न चैतादृशं पदजातं शिलाशकलमिवाङ्कुरस्वरूपायोग्यम् VaiyāBhū. 246. 13 (*on* 65)

**अङ्कुरस्वाभाव्यापत्ति** ( aṅkurasvābhāvyāpatti ) *f.* contingency of having the nature of a sprout किं येनैव रूपेणाङ्कुरं जनयति तेनैव तदितराण्यपि किं वा रूपान्तरेण । न तावत् तेनैव क्षित्यादीनामङ्कुरस्वाभाव्यापत्तेः TātpaṬ.(Vā.) 557. 10 (*on* iii. 2. 14)

**अङ्कुरहेतु** ( aṅkura-hetu ) *m.* cause of sprouting अन्त्या सामग्री याव्यवहिता कार्योत्पत्तेः सा फलवत्येव । सैव च तत्राङ्कुरहेतुः । अन्यस्तु पूर्वः परिणामस्तदर्थ एव PramāVāSvopVṛ. 65. 18; कृषीवलो बीजक्षणसंततिजः कोऽपि क्षणभेदोऽङ्कुरहेतुरिति ज्ञात्वा बीजं कुसूले निधत्ते NayaVi. 250. 6 (*on* i. 1. 8)

**अङ्कुराकरणदर्शन** ( aṅkurākaraṇa-darśana ) *n.* observing non-development of the sprout तादृग्व्यवहारगोचरस्यापि बीजस्याङ्कुराकरणदर्शनात् नासौ मुख्यस्तद्व्यवहारः ĀtmaTaVi. 58. 18.

**अङ्कुराकारसंस्थित** ( aṅkurākāra-saṁsthita ) *adj.* [*f.* -ā] existing in the form of a sprout चन्द्राग्निरविसंयुक्ता आद्या कुण्डलिनी मता । हृत्प्रदेशे तु सा ज्ञेया अङ्कुराकारसंस्थिता AgniP. 214. 27.

**अङ्कुराकृति** ( aṅkurākṛti ) *adj.* resembling a sprout कुरुवंशे परिक्षीणे संजातस्याङ्कुराकृतेः । परीक्षिदिति बालस्य नाम चक्रे त्रिविक्रमः DaśāvaC. 8. 835.

**अङ्कुराख्य** (aṅkurākhya) *adj.* called or known as a sprout अन्वयव्यतिरेकसिद्धभूम्युदकादिसहकारिणो बीजाख्ये कारणे विशेषमुच्छूनताख्यं जनयन्ति; ततस्तद्बीजमङ्कुराख्ये कार्ये शक्तम् VivaPraSaṁ. 100. 8.

**अङ्कुराग्र** ( aṅkurāgra ) *n.* tip of a sprout शाखानां विविधं कृत्वा मुक्तादामाद्यलम्बनम् । दिव्यैर्मारकतैश्चैव चाङ्कुराग्रं प्रविन्यसेत् LiṅgaP. ii. 33. 2.

**अङ्कुराढ्य** (aṅkurāḍhya) *adj.* furnished with sprouts वसिष्ठो भगवानृषिः । …अलंचकार तां वेदिम्…अङ्कुराढ्यैः शरावैः Rāmā. i. 1324*(9)

**अङ्कुरात्मक** ( aṅkurātma-ka ) *adj.* having the form of a sprout अंकुरात्मकजडरूपबीजाद्यर्थक्रिया बाह्या Bhāsk. ii. 312. 11 (*on* iv. 1. 17)

**अङ्कुरात्मन्** ( aṅkurātman ) *m.* form of a sprout वसुधा विभावयति बीजमुच्चकैरनघं यथाविभवमङ्कुरात्मना HarVi. 6. 85; NyāyRa. 683. 15 (*on* 5(16). 9); *adj.* having the nature of a sprout न चाङ्कुरो बीजापेक्षोऽङ्कुरात्मा PratyabhiVi. i. 200. 3 (i. 5. 2)

**अङ्कुरादि** ( aṅkurādi ) *n.* sprout etc., sprout and the like अलंकृत्य गन्धपुष्पाङ्कुरादिभिः ।… कुर्वीत…ध्यानम् ParaS. 22. 52; अङ्कुरादि मतं कार्यं नोभयत्रापि युज्यते BṛĀraUBhVā. i. 2. 38; NyāyKa. 54. 16; NyāyKuA. i(1). 40. 3; AbhinBhā. i. 176. 24 (*on* 4. 263); उत्पत्तिमत्त्वम्…चेतनकर्तृकत्वमेवाङ्कुरादीनां न साधयति ŚāstrDī. 68. 3 (*on* i. 1. 5); 185. 4 (*on* iii. 1. 2); MayaMa. 29. 3; लतागुल्माङ्कुरादीनाम्…आलोकः क इवोत्तमः YogVā. iii. 79. 7; KhaṇḍanKhā. 463. 19; 1288. 11; PrakaVi. 33. 2; अन्य एव मृद्बीजादिजन्या घटाङ्कुरादयो योगीच्छाजन्यास्त्वन्य एव SarvaDaSaṁ. 8. 106; 2. 315; NyāySu.(Ja.) 316B. 12 (*on* ii. 1. 1); न चाङ्कुरादौ सन्दिग्धानैकान्तिकत्वम् Upask. 95. 7 (*on* ii. 1. 19); TantrSa. 3. 69; Nyāyāmṛ. 612B. 7; YuktiSneha. 68. 15 (*on* i. 1. 5); अङ्कुरादौ कार्यत्वमस्ति ŚivārkaMaDī. i. 15. 7 (*on* i. 1. 1); i. 138. 27 (*on* i. 1. 3); i. 147. 16 (*on* i. 1. 3); अङ्कुरादावक्तृत्वव्यवहारात् GuruCandr. ii. 124. 17; देहाङ्कुरादावेवाशरीरमात्रकर्तृकत्वसन्देहेन घटादौ तदभावस्यासन्दिग्धतया साध्यव्यापकत्वाभावात् BhāṭṭCin. i. 33. 7 (*on* i. 1. 4); i. 35. 15 (*on* i. 1. 4); उप्त्वा बीजमथाङ्कुरादि सहसा…दर्शयते जनस्य जनयन्नानन्दमुच्चैस्तराम् RasSa. 204.

**अङ्कुरादिक** ( aṅkurādi-ka ) *n.* sprout and the like यथा लोके अङ्कुरादिकं कन्दादिनिष्ठोत्पादकशक्तिमनभिभूयैव स्वयं स्कन्धशाखापत्रपुष्पफलाद्यात्मना यथा विवर्तमानं तत्सामर्थ्यप्रकटनकारणं भवति LalitāTriBh. 322. 6 (*on* 40); Lakṣaṇā. 7. 17; NyāySiA. 255. 7.

**अङ्कुरादिकारक** ( aṅkurādi-kāraka ) *n.* instrumental cause of the sprout and the like अङ्कुरादिकारकाधिष्ठात्रापि तत्सिद्धेः ĀtmaTaVi. 850. 17.

**अङ्कुरादिकारण** ( aṅkurādi-kāraṇa ) *n.* cause of sprout and the like घटाङ्कुरादिकारणं मृद्बीजादि TaiUBh. 256. 13 (*on* 2. 6); ŚivārkaMaDī. ii. 84. 22 (*on* ii. 2. 20)

**अङ्कुरादिकारणत्व** ( aṅkurādikāraṇa-tva ) *n.* the state of being the cause of sprout etc. बीजादीनामङ्कुरादिकारणत्वमवगम्यते ŚāstrDī. 80. 5 (*on* i. 1. 5)

**अङ्कुरादिकारणभाव** ( aṅkurādikāraṇa-bhāva ) *m.* the state of being the cause of the sprout and the like बीजाद्यवयवानामङ्कुरादिकारणभावाभ्युपगमात् BrahmSūBh. (Śaṅ.) 393. 7 (*on* ii. 2. 26)

**अङ्कुरादिकार्य** ( aṅkurādi-kārya ) *n.* effect such as the sprout etc., effect in the form of the sprout etc. तां ( जगतः बीजावस्थाम् ) निर्दिदिक्षति अङ्कुरादिकार्यानुमितामिव वृक्षस्य BṛĀraUBh. 94. 10 (*on* i. 4. 7); NyāyMañ. ii. 65. 31; यदि नाम कैश्चिदसौ न गृहीतः तथापि बीजादिवदङ्कुरादिकार्यं संबन्धोऽप्यर्थप्रतीतिं जनयेत् Śarka. 118. 8; Kāśi. iii. 223. 10 (*on* 5(10). 6–7); VyaktiVi. 46. 20; Kāvyānu.(He.) 212. 4; व्रीह्यादिबीजम्…अङ्कुरादिकार्यं जनयति TātpaVṛ. 28. 10; PadMañ. *on* KāśiVṛ. *on* P. ii. 3. 23; SarvaDaKau. 21. 12.

**अङ्कुरादिक्रम** ( aṅkurādi-krama ) *m.* [Inst.] sequence beginning with sprout etc. बीजमङ्कुरादिक्रमेण महान्तं वृक्षमारभते ŚāstrDī. 113. 8 (*on* i. 1. 5); BhāṭṭCin. i. 39. 15 (*on* i. 1. 4)

**अङ्कुरादिगोचरप्रयत्न** ( aṅkurādigocara-prayatna ) *m.* effort perceptible in or present in a sprout etc. अङ्कुरादिगोचरप्रयत्नो न केनापि ह्युपलभ्यते NyāySiA. 230. 13.

**अङ्कुरादिजनन** ( aṅkurādi-janana ) *n.* producing sprout etc. अङ्कुरादिजननस्वभावानामपि बीजादीनां तदात्मतायामपेक्षणात् HetuBiṬ. 83. 18; 83. 25; NyāyKa. 80. 24; SarvaDaSaṁ. 2. 104; तेषां क्षित्यङ्कुरादिजननपूर्वक्षणे सद्भावमात्रं कल्पनीयम् ŚivārkaMaDī. i. 148. 6 (*on* i. 1. 3)

**अङ्कुरादिद्वारकत्व** ( aṅkurādidvāraka-tva ) *n.* the state of having the sprout etc. as the means कृष्यादेरङ्कुरादिद्वारकत्वमिवाचेतनद्वारकत्वं कर्मणः स्यात् ŚrutaPra. ii. 56. 20 (*on* i. 3. 25); ii. 211. 23 (*on* ii. 1. 1); SāṁkhyaPraBh. 154. 24 (*on* 6. 35)

**अङ्कुरादिधर्म** ( aṅkurādi-dharma ) *m.* attribute such as the sprout and the like प्रवहन्तः-संचरन्तः ये धर्मभेदाः-अङ्कुरादिधर्मविशेषाः Bhāsk. ii. 198. 13 (*on* ii. 4. 19)

**अङ्कुरादिपरिणाम** ( aṅkurādi-pariṇāma ) *m.* transformation into a sprout etc. अनवभातमपि बीजमङ्कुरादिपरिणामं भजते ŚrutaPra. ii. 350. 27 (*on* ii. 3. 17)

**अङ्कुरादिपारम्पर्य** ( aṅkurādi-pāramparya ) *n.* succession beginning with the sprout etc. लाक्षारसावसिक्तानां कार्पासबीजादीनामङ्कुरादिपारम्पर्येण कार्पासादौ रक्तिमनियमः SarvaDaSaṁ. 3. 16.

**अङ्कुरादिप्रभेद** ( aṅkurādi-prabheda ) *m.* diverse forms beginning with a sprout उप्तं बीजम्…अङ्कुरादिप्रभेदतः । फलाय कल्पते RasāSu. 210. 2 (3. 9)

**अङ्कुरादिप्रादुर्भाव** ( aṅkurādi-prādurbhāva ) *m.* manifestation of a sprout etc. ( पुष्टिषु ) अङ्कुरादिप्रादुर्भावेषु ManvaVi. 1134. 21 (*on* 9. 37); ManuBhāvaCan. 1135. 1 (*on* 9. 37)

**अङ्कुरादिफलपर्यन्त** ( aṅkurādi-phalaparyanta ) *adj.* beginning with the sprout and ending with the fruit अङ्कुरादिफलपर्यन्तो वृक्षविकारः PañcPā. 21. 19 (*on* i. 1. 1)

**अङ्कुरादिफलान्त** ( aṅkurādi-phalānta ) *adj.* beginning with the sprout and ending with the fruit अङ्कुरादिफलान्तावयवकं यद्रूपम् SetuBa. 139. 1.

**अङ्कुरादिभाव** ( aṅkurādi-bhāva ) *m.* the nature of a sprout etc. स रसः … अङ्कुरादिभावमापद्यते NyāyVār. 354. 17 (*on* iii. 1. 4); वटधानादीनाम्… अङ्कुरादिभावेन दर्शनगोचरतापत्तौ जन्मसंज्ञा BrahmSūBh.(Śaṅ.) 324. 2 (*on* ii. 1. 18); 433. 17 (*on* ii. 3. 7)

**अङ्कुरादिवत्** ( aṅkurādi-vat ) *adv.* like a sprout etc. नापौरुषेयत्वान्नित्यत्वमङ्कुरादिवत् SāṁkhyaPraSū. 5. 48; ŚlokaVār. 6. 24 (736. 2); TattvSaṁ. 364; वस्तुत्वं तु प्राप्नोत्युत्पत्तिमत्त्वादङ्कुरादिवत् BrahmSūBh.(Bhā.) 95. 32 (*on* ii. 1. 14)

**अङ्कुरादिविचित्र** (aṅkurādi-vicitra) *adj.* having diverse (forms) like a sprout etc. बीजमङ्कुरादिविचित्रमवभातम्···प्रत्यवमृश्यते PratyabhiVi. ii. 194. 10 (*on* ii. 4. 18)

**अङ्कुरादिसहकारिन्** (aṅkurādisahakār-in) *adj* subsidiary (causes) beginning with a sprout etc. निस्तुषबीजादिष्वङ्कुरादिसहकारिसंनिपातादर्शनात् S'atDū. 151. 25.

**अङ्कुरादिसामग्री** (aṅkurādi-sāmagrī) *f.* totality (of causes) producing a sprout etc. न चाङ्कुरादिसामग्र्येव भ्रमसामग्री S'rutaPra. iB. 81. 17 (*on* i. 1. 1)

**अङ्कुरादिस्थानीय** (aṅkurādi-sthānīya) *adj.* [*f.* -ā] corresponding to a sprout etc. स्वर्गादयोऽप्यङ्कुरादिस्थानीयां तावदपूर्वावस्थां प्रतिपद्यन्ते TantrVā. 368. 6 (*on* ii. 1. 5)

**अङ्कुरादिहिंसा** (aṅkurādi-hiṃsā) *f.* destruction of a sprout etc. दन्तसूना दन्तैश्चर्वणादिभिर्बीजाङ्कुरादिहिंसा VīraMi.(Āhnika.) 390. 17.

**अङ्कुराद्य** (aṅkurādya) *adj.* sprout etc. कृष्णाजाजी विडः ··· । अङ्कुराद्यास्तथा वर्ज्याः MahāBhā. xiii. 91. 40.

**अङ्कुराद्यजनन** (aṅkurādy-ajanana) *n.* non-production of the sprout etc. बीजादेरङ्कुराद्यजननेऽपि नाशाद्युपलम्भात् TattvPradī.(Ci.) 187. 9.

**अङ्कुराद्यनुदय** (aṅkurādy-anudaya) *m.* non-manifestation of sprout etc. तैललिप्तस्य तु शालिबीजस्य ··· अङ्कुराद्यनुदयः VedāntKa. 546. 2 (*on* iv. 3. 14); S'rutaPra. ii. 180. 8 (*on* i. 4. 28)

**अङ्कुराद्यन्यतम** (aṅkurādy-anyatama) *adj.* one of the things like sprout etc. नाप्यङ्कुराद्यन्यतममात्रं प्रागपि तदुत्पत्तिप्रसङ्गात् ĀtmaTaVi. 100. 6.

**अङ्कुराद्यभाववत्त्व** (aṅkurādyabhāvavat-tva) *n.* the state of not having a sprout etc. शिलादावङ्कुराद्यभाववत्त्वस्य जलाद्यभावप्रयुक्तत्वेनाज्ञानात् LaCandr. 455. 41.

**अङ्कुराद्यभिनिष्पत्ति** (aṅkurādy-abhiniṣpatti) *f.* appearance of a sprout etc. अङ्कुराद्यभिनिष्पत्तौ मुख्यता···तेजसः BrĀraUBhVā. ii. 3. 43.

**अङ्कुराद्यवयव** (aṅkurādy-avayava) *m.* parts like sprout etc. स्ववृत्तिसत्ताश्रयत्वादिना वा संबन्धेनाङ्कुराद्यवयवनिष्ठेनेति LaCandr. 854. 34.

**अङ्कुराद्यवस्था** (aṅkurādy-avasthā) *f.* the stage or state of sprout etc. वनस्पत्यादीनामङ्कुराद्यवस्थासु दृष्टानाम् Pradī. iv. 298A. 15 (*on* v. 1. 119); यथा हि वृक्षादिः प्ररूढाद्यवस्थाभिः सन्नप्यङ्कुराद्यवस्थाभिरसन् भवति Sāṃkhya-PraBh. 128. 36 (*on* 5. 56); GuruCandr. ii. 156. 13.

**अङ्कुराद्यसंबन्ध** (aṅkurādy-asambandha) *m.* absence of relation with sprout etc. अदृष्टस्य साक्षादङ्कुराद्यसंबन्धेनात्मद्वारा संबन्धस्य वाच्यत्वात् Nyāyāmṛ. 612B. 7.

**अङ्कुराद्यात्मन्** (aṅkurādy-ātman) *m.* form or nature of sprout etc. अङ्कुराद्यात्मना तद्बीजमेव तु कारणम् BrĀraUBhVā. ii. 4. 323.

**अङ्कुराद्युत्पत्ति** (aṅkurādy-utpatti) *f.* origination of a sprout etc. अङ्कुराद्युत्पत्तौ चेतनव्यापारानुपलम्भात् VedāntKa. 274. 13 (*on* ii. 2. 19); (अक्लिन्नः पार्थिवो धातुस्तेजसा) पच्यमानोऽङ्कुराद्युत्पत्तौ पर्याप्तः comm. *on* BrĀraUBhVā. ii. 3. 43; अनष्टाद् बीजादितोऽङ्कुराद्युत्पत्त्यदर्शनात् GoviBh. 132. 12 (*on* ii. 2. 32)

**अङ्कुराद्युपपत्ति** (aṅkurādy-upapatti) *f.* explicability of a sprout etc. बीजादिषु सत्स्वङ्कुराद्युपपत्तिदर्शनात् S'āstrDī. 80. 4 (on i. 1. 5)

**अङ्कुराद्युपादान** (aṅkurādy-upādāna) *n.* material (cause) of sprout etc. दैवाद्यागदानादिप्रभवादृष्टजन्यक्षित्यङ्कुराद्युपादानानुप्रवेशसंभवेन S'ivārkaMaDī. i. 139. 8 (*on* i. 1. 3)

**अङ्कुराधार** (aṅkurādhāra) *m.* substratum of the sprout अष्टिरेकाङ्कुराधारश्चाष्ट्याधारो वसुन्धरा BrahmVaiP. iv. 6. 210.

**अङ्कुरानारम्भ** (aṅkurānārambha) *m.* non-production of a sprout तदलाभे स्थायिनोऽपि बीजस्य प्रागङ्कुरानारम्भः S'āstrDī. 144. 24 (*on* i. 1. 6)

**अङ्कुरानुकूल** (aṅkurānukūla) *adj.* favourable to sprouting कुशूलस्थबीजस्याङ्कुरानुकूलः शिलाशकलात् कश्चिदस्ति विशेषः ĀtmaTaVi. 68. 16.

**अङ्कुरानुत्पत्ति** (aṅkurānutpatti) *f.* non-production of a sprout नन्वनपेक्षिणामपि केषांचित् कचिन्नावश्यं तद्भावः, भूमिबीजोदकसामग्र्यामपि कदाचिदङ्कुरानुत्पत्तेः PramāVāSvopVṛ. 65. 17; तस्माद्विनष्टेभ्योऽङ्कुरानुत्पत्तेरसति व्यूहे न बीजनाशः कारणमिति सूत्रार्थः TātpaṬ.(Vā.) 592. 9 (*on* iv. 1. 17); कदाचित्सहकारिसाकल्यवतोऽपि बीजादङ्कुरानुत्पत्तिप्रसङ्गात् ĀtmaTaVi. 73. 15; सत्स्वपि बीजेषु मूषिकाघ्रातेष्वङ्कुरानुत्पत्तेरकारणत्वं प्रतिभासते S'āstrDī. 80. 5 (*on* i. 1. 5); NyāyRa. 463. 12 (*on* 5(7). 48)

**अङ्कुरानुत्पाद** (aṅkurānutpāda) *m.* non-generation of a sprout कुशूलस्थात्तु सहस्रेणापि वर्षैरङ्कुरानुत्पादे तत्रावपतीति चेत् TātpaṬ.(Vā.) 556. 24 (*on* iii. 2. 14)

**अङ्कुरानुदय** (aṅkurānudaya) *m.* non-appearance or non-germination of a sprout निश्शेषसहकारिसमवधानेऽपि बीजदोषादङ्कुरानुदयस्तत्परीक्षकपरिषत्प्रसिद्धः NyāyKu. 39. 3; कार्यानुदयः संभवति तैलकलुषितशालिबीजादङ्कुरानुदयनियमवत् VedāntKa. 545. 17 (*on* iv. 3. 5)

**अङ्कुरान्तर** (aṅkurāntara) *n.* another sprout तथा बीजादयः प्रत्येकं समर्था अपि नाङ्कुरान्तराणि जनयन्ति BrahmSi. 53. 21; तद्बीजमपि त्वङ्कुरान्तरात् PañcPā. 12. 13 (*on* i. 1. 1); न ह्यग्निसंसृष्टस्य कलमबीजस्याङ्कुरान्तरे सामर्थ्यमस्ति NyāyKu. 42. 15; बीजान्तरादङ्कुरान्तरोत्पत्त्यादिप्रसङ्गः SiddhāLeSaṁ. 208. 8.

**अङ्कुरान्तर्भाव** (aṅkurāntarbhāva) *m.* inherent nature of a sprout तर्हि बीजस्याङ्कुरप्रयोक्त्री सत्ता···अङ्कुरान्तर्भावमात्मन्यानयति PratyabhiVi. ii. 188. 9 (*on* ii. 4. 14)

**अङ्कुराभाव** (aṅkurābhāva) *m.* absence of a sprout बीजाभावादङ्कुराभावः Upask. 47. 7 (*on* i. 2. 1); न हि शिलायामङ्कुराभावो जलाद्यभावप्रयुक्तः GuruCandr. ii. 47. 11.

**अङ्कुराभावव्याप्यता** (aṅkurābhāvavyāpya-tā) *f.* the state of being pervaded by the absence of a sprout बीजेऽङ्कुराभावव्याप्यता न बीजत्वेनावच्छिद्यते TattvCin. ii(2). 152. 1.

**अङ्कुराभास** (aṅkurābhāsa) *m.* semblance or appearance of a sprout आदिग्रहणादङ्कुराभासादिर्गृह्यते PratyabhiVi. ii. 184. 6 (*on* ii. 4. 12)

**अङ्कुराभिनय** (aṅkurābhinaya) *m.* gesture based on the indirect meaning of the previous passage हृदयस्थो निर्वचनैरङ्गाभिनयः कृतो निपुणसाध्यः। सूचैवोत्पत्तिकृतो विज्ञेयस्त्वङ्कुराभिनयः NāṭyaS'ā. 22. 46; अङ्कुराभिनयो यथा। वाक्यैरन्यो(? न्या)पदिष्टैर्यत्कथ्यते हृदयस्थितम्। यथावद्दर्शनायोग्यं सोऽङ्कुराभिनयः स्मृतः NāṭaLaRaK. 1447.

**अङ्कुराय** (aṅkurāya-) x. Ā [*denom.*] to sprout तुषेणापि परिभ्रष्टस्तण्डुलो नाङ्कुरायते Indische Sprüche 3095.

**अङ्कुरायित** (aṅkurāy-ita) *adj.* which looks or acts like a sprout ललाटिकालिङ्गनलीढपार्वतीकुरङ्गनाभीतिलकाङ्कुरायितम्। ··· अनेकदग्धागुरुधूमराजयो यदर्चनस्यावसरे पिनाकिनः S'rīKaC. 3. 42.

**अङ्कुरारोप** (aṅkurāropa) *m.* rite called *aṅkurārpaṇa* पूर्वं कृत्वाङ्कुरारो(वा)पं ततः कर्म समारभेत् PāraS. 12. 110; 16. 105.

**अङ्कुरारोपण** (aṅkurāropaṇa) *n.* religious rite called *aṅkurārpaṇa* अङ्कुरारोपणं चैव ध्वजारोहावरोहणे ··· समाचरेत् PāraS. 9. 127; 16. 34; 16. 542; 12. 568; तत्र समन्त्रकाः ग्रहपूजाङ्कुरारोपणप्रतिसरबन्धाद्याः Sudarśana on ĀpaGS. 2. 15; कुर्यात्···मण्डपे···अङ्कुरारोपणम् TantrSa. 3. 1; cf. **अङ्कुरार्पण.**

**अङ्कुरारोपपूर्व** (aṅkurāropa-pūrva) *adj.* preceded by the *aṅkurārpaṇa* rite अङ्कुरारोपपूर्वस्तु ह्येष उत्सव उच्यते PāraS. 16. 35.

**अङ्कुरारोहण** (aṅkurārohaṇa) *n.* raising of a sprout शरावघटिकापालीस्वङ्कुरारोहणे हिताः AgniP. 68. 4.

**अङ्कुरार्थिन्** (aṅkurārth-in) *adj.* desirous of a sprout अतस्तेषूपचारतः कारणव्यपदेशोऽङ्कुरार्थिभिश्चोपादानम् HetuBiṬ. 88. 8; कस्मादङ्कुरार्थिनः कृषीवला बीजमुपाददते TātpaṬ.(Vā.) 592. 1 (*on* iv. 1. 16)

**अङ्कुरार्पण** (aṅkurārpaṇa) *n.* a prognostic preliminary ceremony or rite in which grains of various kinds are sown and their growth is observed for forecasting favourable or unfavourable results cf. Ajitāgama 35, Prayogapārijāta 11B. 11; NirṇaSi. 230. 10; कर्तव्यं मंगलेष्वादौ मंगलेष्वंकुरार्पणम् NāraS. 23. 1; PāraS. 16. 33; सर्वमङ्गलसम्पत्त्यै विदध्यादङ्कुरार्पणम् S'āraTi. 3. 28; अङ्कुरार्पणमादौ च कारयेदधिवासनम् MānaSā. 18. 170; 37. 7; नवसप्तत्रिकपञ्चरात्रिके विधिना चाङ्कुरार्पणं कुरु MayaMa. 18. 166; तत्पूर्वमेव सप्ताहात् पञ्चाहाद्वाङ्कुरार्पणम् ĪśānS'iPa. ii. 22. 21; अङ्कुरार्पणमन्त्रस्य प्राशनं सम्यगीरितम् VīraMi.(Saṃskāra.) 125. 23; 263. 16; कृत्वाङ्कुरार्पणम्··· सिद्धः··· दीक्षाषट्कमकल्पयत् ParamāKā. 138. 58; BālamBha. i. 40. 10 (*on* 1. 11-12)

**अङ्कुरार्पणक** (aṅkurārpaṇa-ka) *n.* *aṅkurārpaṇa* rite कुण्डं दशकमीरितम्। भूमिं संशोध्य विधिवत्तुषकेशादिवर्जिताम्। भ्रामयेच्चोर्ध्वतस्तस्या भस्मांगाराणि यत्नतः। अंकुरार्पणकं कुर्यात्सप्ताहादेव बुद्धिमान् BhaviP. 337A. 33 (ii(1). 13. 4); 363A. 16 (ii(2). 10. 1); महोत्सवानां प्रत्येकमङ्कुरार्पणकत्रयम्। ध्वजाङ्कुरः स्यात् प्रथमो द्वितीयश्चोत्सवाङ्कुरः। तृतीयोऽवभृथार्थः स्यात् सर्वे स्युः पूर्वमर्पिताः ĪśānS'iPa. ii. 49. 8.

**अङ्कुरार्पणकर्मन्** (aṅkurārpaṇa-karman) *n.* procedure of the *aṅkurārpaṇa* rite पात्राणि त्रिविधान्याहुरङ्कुरार्पणकर्मसु। पालिकाः पञ्चमुख्यश्च शरावाश्च चतुःक्रमात् S'āraTi. 3. 34; अङ्कुरार्पणकर्मादौ(? दि) स्थापनान्तं यथाक्रमम्। जलाधिवासनं स्नानं कुर्यात् MānaSā. 15. 184.

**अङ्कुरार्पणपूर्व** ( aṅkurārpaṇa-pūrva ) *adj.* preceded by the rite of *aṅkurārpaṇa* एष तु त्रिविधः स्मृतः ( उत्सवः ) । ध्वजारोहणपूर्वस्तु देवताह्वानपूर्वकः । अङ्कुरार्पणपूर्वस्तु PāraS. 16. 29; 16. 425.

**अङ्कुरार्पणपूर्वम्** ( aṅkurārpaṇa-pūrvam ) *adv.* beginning with the rite of *aṅkurārpaṇa* अङ्कुरार्पणपूर्वं तु कुर्वैशान्यां तु मण्डपम् ĪśānS'iPa. ii. 34. 27.

**अङ्कुरार्पणमात्र** ( aṅkurārpaṇa-mātra ) *n.* material or utensils of *aṅkurārpaṇa* अङ्कुरार्पणमात्रं(? अमत्रं ) तु छिन्नं भिन्नं परित्यजेत् AgniP. 174. 5.

**अङ्कुरार्पणमेदिनी** ( aṅkurārpaṇa-medinī ) *f.* place for performing the rite of *aṅkurārpaṇa* इयं हि ( राजधानी ) अनङ्गब्रह्मतन्त्राणामङ्कुरार्पणमेदिनी । कमलाकान्तशुद्धान्तकेलिचङ्क्रमणस्थली VasaTi. 6. 19.

**अङ्कुरार्पणयाग** ( aṅkurārpaṇa-yāga ) *m.* offering to be made in connection with the *aṅkurārpaṇa* rite चतुरस्रं भवेत् कुण्डं द्विजसंस्कारकर्मणि ··· अंकुरार्पणयागे च वैष्णवे यागकर्मणि । ··· चार्धचंद्रकम् BhaviP. 338A. 13 (ii(1). 13. 16)

**अङ्कुरावस्था** ( aṅkurāvasthā ) *f.* the sprouting or germinating state, initial state फलस्य वाङ्कुरावस्थाद्यपूर्वशब्देनाभिधीयते TātpaṬ.( U. ) 94. 22 (*on* 2. 197–200 ); संरूढान्यङ्कुरावस्थाप्रभृत्याकणिशाग्रितः । शनैश्शनैर्विवृद्धानि क्षेत्रेष्वविरलं तदा । सस्यान्यकृष्टपच्यानि MahāP. 3. 181; यद्यपि स्वर्गादिकं स्वरूपेणान्नादिवत् तदानीं नेति तस्य त्वङ्कुरावस्था कर्तारमेतीति तद्द्वारेण फलमेवैतुमारभत इति सर्वत्र सिध्यति । फलस्यैव ह्यङ्कुरावस्थापूर्वशब्दवाच्या PadMañ. *on* KāśiVṛ. *on* P. i. 3. 72; वृक्षादीनाम् ··· अङ्कुरावस्थायामणुमात्रस्य ··· विकारित्वम् ··· प्रसज्येत NyāySu.( Ja. ) 416A. 6 (*on* ii. 2. 10); ( अपूर्वम् ) यागस्य फलोत्पादिका शक्तिः, आत्मनो वा फलभोगयोग्यता, फलस्य वाङ्कुरावस्थान्तरव्यापाररूप एव वा कश्चित्पदार्थः YuktiSneha. 25. 32 (*on* i. 1. 2 )

**अङ्कुरावापन** ( aṅkurāvāpana ) *n.* sowing the seeds for sprouting, cf. **अङ्कुरार्पण** अङ्कुरावापनस्थानमण्टपं परिकल्प( ? ल्प )येत् । प्रथमावरणे PāraS. 16. 81.

**अङ्कुरावृतसर्वाङ्ग** ( aṅkurāvṛta-sarvāṅga ) *adj.* having the entire body covered with shoots or sprouts, sprouting all over नाङ्कुरावृतसर्वाङ्गाः ··· ग्राह्याः ··· भूरुहाः MayaMa. 15. 75.

**अङ्कुरास्त्र** ( aṅkurāstra ) *adj.* ( the god ) having the weapon of horripilation सा पातु वस्त्र्यम्बकचुम्बितायाः कपोलपाली चिरमम्बिकायाः । प्रगल्भरोमाञ्चभरेण यस्याः पुष्पायुधोऽभूत्क्षणमङ्कुरास्त्रः KirātāVyā. 1.

**अङ्कुरास्फोता** ( aṅkurāsphotā ) *f.* name of a plant रम्भा चैवाङ्कुरास्फोता ···स गणस्तित्तसंज्ञकः । एवमादीनि चान्यानि राजा संचिनुयात् पुरे MatsyaP. 217. 73.

**अङ्कुराह्वय** ( aṅkurāhvaya ) *adj.* called Aṅkura भस्माङ्कुराह्वयौ त्याज्यौ निन्दितौ सर्वकर्मसु ĪśānS'iPa. ii. 11. 10 (22)

**अङ्कुरिका** ( aṅkur-ikā ) *f.* first shoot ( ह्रींकारकन्दाङ्कुरिका ) ह्रींकार एव कन्दं दृढतरबीजभावः । तस्य अङ्कुरिका आदिप्रसवः नूतनाभिव्यक्तिः LalitāTriBh. 322. 6 (*on* 40)

**अङ्कुरित** ( aṅkur-ita ) *adj.* [*f.* -ā] [Debru. p. 326; P. iii. 4. 70; v. 2. 36; GaṇRa. 7. 390(415)]; **A** sprouted माषानङ्कुरिताञ्छुद्धान् वितुषान् साजडाफलान् CaraS. vi. 2(4). 15; BṛSaṁ. 24. 11; शुष्कवृक्षे चाङ्कुरिते वृक्षहानिः VasiS. 45. 59; अङ्कुरितः कोरकितः पल्लवितः कुसुमितश्च सहकारः VyaktiVi. 130. 15; अङ्कुरिते ··· सहकारे SubhāRaK. 8. 37; बीजैरङ्कुरितम् ··· धाराधरे वर्षति SaduktiKa. 271. 24 = S'ārṅgaPa. 856; अपरं च रुदती धनत्यागामृताभिषेकेणाङ्कुरिता मे क्षेत्रावनिः MohaRāPa. 5. 0(9); सस्यम् ···अङ्कुरितं यथा । कोमलं तद्वदेवैष पेलवो जगदङ्कुरः PañcDa. 6. 203; GopāKeCan. 64. 4; Jivān. 159. 4; **B** (*fig.*) sprouted, issued forth, burst out, arisen यदयं रथसंक्षोभादंसेनांसो रथोपमश्रोण्याः । स्पृष्टः सरोमविक्रियमङ्कुरितं मनसिजेनेव Vikramo. 1. 11; रोमोद्भेदापदेशेन हर्षमङ्कुरितं हृदि JānaHa. 6. 50; यस्मिंश्च राजनि ··· यूपनिकरैरङ्कुरितमिव कृतयुगेन HarṣaC. 175. 16; DaśKuC. 105. 3; तस्या गात्रलतायामङ्कुरितं सात्त्विकैर्भावैः KuṭṭaMa. 268; सततबाष्पसलिलसङ्गादामूलमङ्कुरितमिव ··· दुःखभारमुद्वहन् TilaMañ. 190. 14; 266. 3; NavaSāC. 11. 119(? 109) तदयं योगो यमनियमादिभिः प्राप्तबीजभाव आसनप्राणायामैरङ्कुरितः ···फलिष्यति RājMār. 42. 13; समागमप्रत्याशया करुणे निवृत्ते विप्रलम्भे अङ्कुरिते Loc. 151. 25 (*on* 3. 14); सहसाङ्कुरितो लेभे मदनः कामपि श्रियम् BṛKathāMañ. xviii. 1. 7; AuciViCa. 16; KathāSaSāg. xiii. 1. 30; चेतस्यङ्कुरितम् ···मानिन्याः मानतरुणा SubhāRaK. 21. 45 = SaduktiKa. 102. 6; अङ्कुरित इव मनोभूः ĀryāSaS'a. *1 = PrabaCin. 40. 13 = PurāPraSaṁ. 120. 13; TriṣaS'aPuC. ii. 1. 89; भीमात्मजापि ··· । तस्याङ्कमङ्कुरिततत्परिस्समध्यमध्यास्त NaiṣC. 21. 121; PrabhāC. 57. 33; SūktiMu. 57. 2; BhāvPra.( S'ā. ) 78. 16(4); Ekāva. 3. 1(12) (86. 8); RājTa.( Jo. ) 1159; RājTa.( S'rī. ) 4. 233; नयेनाङ्कुरितं शौर्यं जयाय न तु केवलम् DṛṣṭāKaS'. 53; YātrāPra. 2. 26(1); GopāKeCan. 48. 6; VasaTi. 5. 5; **C** horripilated समाधिरर्थमहिमा ··· । स्यादन्तर्विशता येन गात्रमङ्कुरितं सताम् Candrā. 4. 5; JānaPa. 3. 88; **D** become, turned into पलिताङ्कुरिताम्बरचरकामिनीकुन्तलकलापाः YaśasCam. i. 339. 2; Kośas give *aṅkurita* as one of the meanings of *saṁrūḍha* and *virūḍha*, cf. ParyāRaMā. 705; AnekāSaṁ. 3. 180; 3. 181; ViśvaPra. 47. 6; 47. 8; AnekāK. 203; MediK. 46. 9; 46. 10; ViśvaLoK. 99. 11; KośaKaTa. 2. 4794; 2. 4795; S'abdaRaSaK. 103. 2; 103. 3.

**अङ्कुरितकोप** ( aṅkurita-kopa ) *adj.* with anger ( just ) beginning तेनाङ्कुरितकोपोऽपि ··· स धीमांस्तानि पर्यधात् ( वासांसि ) PāṇḍaC. 6. 122.

**अङ्कुरितता** ( aṅkurita-tā ) *f.* the state of having sprouted, birth, manifestation निःशङ्कमङ्कुरितता रतिवल्लभस्य ··· अवलोक्य NaiṣC. 11. 91.

**अङ्कुरितत्व** ( aṅkurita-tva ) *n.* the state of having sprouted अथ शृङ्गारस्याङ्कुरितत्वकुसुमितत्वफलितत्वहेतवो द्वादशावस्था निरूप्यन्ते PratāYaBhū. 271. 1.

**अङ्कुरितप्रणय** (aṅkurita-praṇaya) *m.* love which has sprouted अङ्कुरितप्रणयच्छुरितः ··· जय ··· त्वम् StavMā. 238. 24.

**अङ्कुरितप्रणाम** ( aṅkurita-praṇāma ) *adj.* commencing salutation शब्दैरङ्कुरितप्रणाम इव स प्रौढिप्रबन्धोऽधिनोत् S'rīKaC. 25. 151.

**अङ्कुरितप्रभ** ( aṅkurita-prabha ) *adj.* with incipient radiance ( महामेघाः ) केचित्कमलपत्राभाः केचिद्धिङ्गुलकप्रभाः ( v. l. अङ्कुरितप्रभाः ) MahāBhā. iii. 186. 67.

**अङ्कुरितप्रीति** ( aṅkurita-prīti ) *adj.* whose affection has begun or sprouted दूरमङ्कुरितप्रीतिरभ्यधत्त युधिष्ठिरः PāṇḍaC. 12. 376.

**अङ्कुरितप्रेमन्** ( aṅkurita-preman ) *adj.* possessed of sprouting love (सः) सर्वाङ्गमप्यङ्कुरितप्रेमेव पुलकेन च TriṣaS'aPuC. iv. 4. 81.

**अङ्कुरितमत्सर** ( aṅkurita-matsara ) *adj.* in whom anger has just arisen यावदङ्कुरितमत्सरोऽभवत् तस्य सम्मुखमधिज्यकार्मुकः NavaSāC. 8. 55.

**अङ्कुरितमन्दहास** ( aṅkurita-mandahāsa ) *adj.* [*f.* -ā] exhibiting a gentle smile अङ्कुरितमन्दहासाम् ··· अन्तः कलयामि सुन्दरीमनिशम् LalitāStaRa. 162.

**अङ्कुरितयौवन** ( aṅkurita-yauvana ) *adj.* [*f.* -ā] with ( just ) developed ( *lit.* sprouted ) youth, very young तत्राङ्कुरितयौवना मुग्धा RasMañ. 3 (2)

**अङ्कुरितलावण्य** ( aṅkurita-lāvaṇya ) *adj.* [*f.* -ā] with sprouted charm ( अपश्यम् ) मुनिकन्यकाम् । ··· तामङ्कुरितलावण्याम् SkandP. i(2). 9. 41.

**अङ्कुरितविविदिषाकत्व** ( aṅkuritavividiṣāka-tva ) *n.* the state in which desire for knowledge has just arisen पापक्षये सत्यङ्कुरितविविदिषाकत्वादस्ति श्रद्धा LalitāSaBh. 7. 9 (*on* 11)

**अङ्कुरितवैरिभाव** ( aṅkurita-vairibhāva ) *adj.* in which enmity has sprouted अङ्कुरितवैरिभावान्तःकरणतया ··· पुरोहितसूनोः किंचिद्वक्रिमभावो विभाव्यते ParamāKā. 7. 49(2)

**अङ्कुरितस्तनकोरक** ( aṅkurita-stanakoraka ) *adj.* with sprouting breast-buds अङ्कुरितस्तनकोरकमङ्कालंकारमेकचूतपतेः । आलोकेमहि MūkaPañ. 4. 36.

**अङ्कुरितस्मर** ( aṅkurita-smara ) *adj.* in whom love has sprouted तस्मिन्काले नरो राजा ··· तस्थौ प्रागेवाङ्कुरितस्मरः RajTa.( Ka. ) 1. 250.

**अङ्कुरितस्मित** ( aṅkurita-smita ) *adj.* with a sprout-like smile तस्य स्खलितमालोक्य ··· भीमसेनश्च बभूवाङ्कुरितस्मितः DaśāvaC. 8. 448.

**अङ्कुरितांशु** ( aṅkuritāṁśu ) *adj.* with sprouting rays दिनकरमङ्कुरितांशुं विकचजपापुञ्जमञ्जुलं वन्दे KaṁVa. 4. 21; PadyaVe. 51.

**अङ्कुरितांशुमाल** ( aṅkuritāṁśumāla ) *adj.* with a garland of sprouting rays प्रभातवेला सरराजपुत्री नीराजनाभाजनमर्कबिम्बम् । आयाति नीराजितुमब्धिपुत्रीं पाणी( ? णौ ) गृहा( ? ही )त्वाङ्कुरितांशुमालम् PadyaVe. 506.

**अङ्कुरिताञ्जन** ( aṅkuritāñjana ) *adj.* [*f.* -ā] in which collyrium has been applied दिशि दिशि दृशो विन्यस्यन्त्यः श्रियाङ्कुरिताञ्जनाः ··· अभिसारिकाः Kapphiṇā. 14. 3 = SubhāRaK. 24. 30.

**अङ्कुरितानय** (aṅkuritānaya) *adj.* in whom bad conduct has sprouted, who has begun to show bad conduct भवन्तं मृगयासक्तं विज्ञायाङ्कुरितानयम् । मन्येऽहं प्रतिसामन्तैः किञ्चिदुच्चैः कृतं शिरः BṛKathāMañ. ii. 2. 22.

**अङ्कुरितानुराग** ( aṅkuritānurāga ) *adj.* in whom love or passion has sprouted शिवदासशर्मणः ··· पुत्रः ··· अस्यां मदनमञ्जर्यामङ्कुरितानुरागः RasSa. 121 (5)

**अङ्कुरितान्तर** ( aṅkuritāntara ) *adj.* whose heart is animated (*lit.* sprouted) किं तेन काव्यमधुना प्लाविता रसनिर्झरैः । जडात्मानोऽपि नो यस्य भवन्त्यङ्कुरितान्तराः Subhāṣi. 136.

**अङ्कुरितान्धकार** ( aṅkuritāndhakāra ) *m.* sprouting (i. e. spreading)

darkness सम्प्रत्यङ्कुरितान्धकारपटलैर्लम्बालका चौरपि SaduktiKa. 107.22; SūktiMu. 39.12; S'ārṅgaPa. 3420.

**अङ्कुरितामृतबिन्दु** (aṅkuritāmṛtabindu) *adj.* with sprouting drops of ambrosia मुग्धे मुखकमलं ते मौक्तिकनासाविभूषणोदारम् । अङ्कुरितामृतबिन्दोरिन्दोरिव बिम्बमातनोति मुदम् S'ṛṅgāBhū. 65.

**अङ्कुरितार्गल** (aṅkuritārgala) *adj.* [*f.* –ā] in which bolts have been fastened (*lit.* sprouted) विभान्ति यत्रानघदैर्घ्यसौहृदादहंयुभिर्यूपपरिग्रहैर्दिशः । कलेः प्रवेशानवकाशसिद्धये स्वयं मुखेष्वङ्कुरितार्गला इव S'rīKaC. 3.2.

**अङ्कुरितोत्सव** (aṅkuritotsava) *adj.* in whom gladness has sprouted, who is delighted °प्रभामण्डलान्यालोक्याङ्कुरितोत्सवैः ··· नीतो वाजिभिरुत्पथं बत रथः TripuMāPūSt.(S'aṅ.) 9; PadyaVe. 869.

**अङ्कुरितोल्लास** (aṅkuritollāsa) *adj.* 1 on which (new) sprouts are coming out तस्थुरङ्कुरितोल्लासाः पर्वता इव डामराः RājTa.(Ka.) 8.2517; 2 in whom (new) enthusiasm has sprouted or burst forth, RājTa.(Ka.) 8.2517.

**अङ्कुरिन्** (aṅkur–in) *adj.* having a sprout, capable of sprouting अङ्कुरिणोऽङ्कुरयोग्यस्थावरव्री(? बी)जादेर्भक्षणे परं दोषः VīraMi.(Āhnika.) 390.19; NānārthāSaṁ. ii. 61.164; *m.* 1 spring season; 2 a tree अङ्कुरी तु वसन्ते ना वृक्षे चाथ त्रि साङ्कुरे NānārthāSaṁ. ii. 61.164; 3 name of a king अङ्कुरी सुविशालश्च ··· । एते सहरिदत्ताद्याः सर्वे पूर्णरथा मताः KathāSaSāg. viii. 4.13; viii. 4.75.

**अङ्कुरीकृत** (aṅkurī–kṛta) *adj.* made to sprout or grow रमण त्वयाङ्कुरीकृतोऽनयानुरागः । स च वियोगाग्निना यथा शुष्को न भवेत्तथा विधेयमिति GopāKeCan. 131.17.

**अङ्कुरीकृत्य** (aṅkurīkṛ–tya) *ger.* having commenced or begun प्रयोगी प्रतिपादमङ्कुरीकृत्य पठन् मध्ये विश्राम्यति AbhinBhā. ii. 245.12 (*on* 14.104)

**अङ्कुरीभाव** (aṅkurī–bhāva) *m.* sprouting, germination अनुष्ठीयमानात् कर्मणश्चित्तसत्त्वे वासनारूपः संस्कारः समुत्पद्यते । स च स्वर्गनरकादीनां फलानां चाङ्कुरीभावः कर्मणां वा यागादीनां शक्तिरूपतया अवस्थानम् RājMār. 69.1.

**अङ्कुरीभू** (aṅkurī–bhū–) I. P. to sprout, germinate विषयाः शब्दादयः प्रवाला इव देहादिकर्मफलेभ्यः शाखाभ्यः अङ्कुरीभवन्तीव GītāBh.(S'aṅ.) 433.16 (*on* 15.2); यदा तु प्रकृतिरेव विकारात्मतामापद्यमाना विकार(? रा)मेदेन भवनक्रियायां कर्त्री विवक्ष्यते तदा च्विप्रत्ययः — अङ्कुरीभवन्ति यवाः Pradī. iv. 414B. 29 (*on* v. 4.50)

**अङ्कुरीभूत** (aṅkurī–bhūta) *adj.* [*f.* –ā] assuming the form of a sprout, developed into a sprout तत् सदासीत् ··· ततो लब्धपरिस्पन्दं तत् समभवत् अल्पतरनामरूपव्याकरणेन अङ्कुरीभूतमिव बीजम् ChāndoUBh. 197.12 (*on* iii. 19.1); बीजभूतं तदन्तस्थामव्यक्तव्याप्तिमनुसरेत् । बीजतश्चाङ्कुरीभूता परस्ताद्व्यक्तिमेति सा PāraS. 10.9; गतं बीजम् ··· न कुत्रचिद् गतमङ्कुरात्मना वर्तते, अङ्कुरीभूतमयमङ्कुरस्तत् PratyabhiVi. ii. 195.1 (ii. 4.18)

**अङ्कुरीभूय** (aṅkurībhū–ya) *ger.* having developed, having branched off सर्वत्र संवेदने सर्वा एवैताः ··· शक्तय आदिक्षान्ताः प्रोल्लाससमयेऽपि रिक्तरूपतया उद्योगावभाससंक्रामविलापनरूपेण द्वादशात्मिकां कृशरूपतामाश्रयन्त्यः तद्गृहीतप्रमदादिगतोद्योगादिकलाचतुष्टयपरिपूर्णतयापि अङ्कुरीभूय सालसं षोडशात्मकभरितपूर्णरूपतया प्रविशन्त्यः···अकारमेवादितया मध्ये च कादियोनिजातमवसाने च बिन्दुं ददती 'अहम्' इत्येवैव भगवती सृष्टिः ParāTri. (comm.) 206.3; YogKuU. 3.18.

**अङ्कुरेषु** (aṅkureṣu) *m.* an arrow in the form of a sprout अङ्कुरेषवः । स्फुरन्त्यमी स्मरणमुवः HarVi. 5.106.

**अङ्कुरोत्कर** (aṅkurotkara) *m.* multitude of sprouts उत्सेधमेति भूकोशकोटरस्थोऽङ्कुरोत्करः YogVā. iv. 36.20.

**अङ्कुरोत्पत्ति** (aṅkurotpatti) *f.* rise or origination of sprout, germination, development बीजतो ह्यङ्कुरोत्पत्तिरङ्कुरात्पर्णसंभवः MahāBhā. xiii. 36*(2); नाङ्कुरोत्पत्तिरबीजात् CaraS. i. 11.32; पृथिव्यामुप्तबीजानि ··· उच्छूनत्वमासाद्य ततो मूलभावः । तन्मूलादङ्कुरोत्पत्तिः BṛNāraP. 30.1(3); यथा तप्तानि बीजानि ··· मूलभावं प्रयाति(? न्ति) च । तन्मूलादङ्कुरोत्पत्तिरङ्कुरात्पर्णसंभवः PadmP. ii. 66.10; रेतः···।सप्तरात्रेण तदपि मांसपेशित्वमाप्नुयात् । ··· तस्या एवाङ्कुरोत्पत्तिः पञ्चविंशतिरात्रिषु AdhyāRā. iv. 8.24; नाभावादङ्कुरोत्पत्तिः बीजावयवेभ्यो हि अङ्कुरोत्पत्तिः ChāndoUBh. 345.4 (*on* vi. 2.2); असावन्त्यो व्रीहिक्षणो यस्मादङ्कुरोत्पत्तिरिष्यते BrahmSūBh.(Bhā.) 120.2 (*on* ii. 2.20); क्षित्युदकबीजानामेवाङ्कुरोत्पत्तौ सहकारिता NyāyKa. 77.18; न बीजावयवाः पच्यमाना अङ्कुरोत्पत्तौ परमाण्ववस्था भवन्ति TātpaṬ.(Vā.) 506.13 (*on* iii. 1.4); नूनमस्त्यतीन्द्रियमपि रूपं यद्वशात् कदाचिदङ्कुरोत्पत्तिः यस्य च मूषिकाघ्राणेन नाशात्कदाचिदनुत्पत्तिः S'āstrDī. 80.7 (*on* i. 1.5); तत्किम् ···बीजधरणीधामसलिलानीत्यकारणान्येवाङ्कुरोत्पत्तौ TattvPradī. (Ci.) 322.6; मिलितेभ्यः पृथिवीधात्वादिभ्यश्चेतनमन्तरेणैवाङ्कुरोत्पत्तिरुक्ता VedāntKa. 275.22 (*on* ii. 2.19); अङ्कुरोत्पत्तिरुच्छूनत्वजन्मपूर्विका VivaPraSaṁ. 100.14; अङ्कुरोत्पत्तौ पर्जन्यस्यास्ति पृथिव्यनु(ग्रहकारक)ग्राहकत्वम् NyāySu.(Ja.) 329B. 5 (*on* ii. 2.2); बीजसंबद्धानां जलादीनामङ्कुरोत्पत्तौ कर्षकादिद्वारवत् SāṁkhyaPraBh. 160.34 (*on* 6.61)

**अङ्कुरोत्पत्तिकारण** (aṅkurotpatti–kāraṇa) *n.* cause of germination अभावश्चेदङ्कुरोत्पत्तिकारणं स्यात् सर्वं सर्वस्मादुत्पद्येत NyāyVār. 459.10 (*on* iv. 1.18)

**अङ्कुरोत्पत्तिदर्शन** (aṅkurotpatti–darśana) *n.* observation of sprouting बीजे सत्यङ्कुरोत्पत्तिदर्शनाद् बीजकारणत्वमवगम्यते NyāyRa. 463.11 (*on* 5(7).48)

**अङ्कुरोत्पत्तिसमर्थ** (aṅkurotpatti–samartha) *adj.* capable of sprouting अङ्कुरोत्पत्तिसमर्थो बीजक्षणो जनयितव्यः Bhām. 422.4 (*on* ii. 2.19)

**अङ्कुरोत्पत्तिहेतु** (aṅkurotpatti–hetu) *m.* cause of sprouting दृश्यन्ते खल्ववयवास्तत्संयोगाश्चाङ्कुरोत्पत्तिहेतवः NyāyBh. 249.2 (*on* iv. 1.18)

**अङ्कुरोत्पत्त्यदर्शन** (aṅkurotpatty–adarśana) *n.* non–observation of sprouting or growth असतः शशविषाणादेरङ्कुरोत्पत्त्यदर्शनात् BrahmSūBh.(Bhā.) 122.24 (*on* ii. 2.26)

**अङ्कुरोत्पत्त्यादिलक्षण** (aṅkurotpattyādi–lakṣaṇa) *adj.* of the nature of sprouting etc. न हि कृशानुनाङ्कुरोत्पत्त्यादिलक्षणः संबन्धो दृश्यते BrahmSūBh.(Bhā.) 17.15 (*on* i. 1.4)

**अङ्कुरोत्पाद** (aṅkurotpāda) *m.* appearance of sprouts बीजविनाशानन्तर्याच्चाङ्कुरोत्पादस्य बीजविनाशकार्यत्वमित्यत आह TātpaṬ.(Vā.) 591.21 (*on* iv. 1.16); अन्तरैवाङ्कुरोत्पादात्प्रागेव ManvaVi. 1315.10 (*on* 10.71)

**अङ्कुरोत्पादन** (aṅkurotpādana) *n.* production of sprouts न चैतावता तस्याङ्कुरोत्पादने कादाचित्केऽपि तदुत्पादनशक्तिरपि कादाचित्की SyādvāMañ. 17(92); (बीजम्) ततो नाङ्कुरोत्पादनेऽपि शक्ष्यति VivaPraSaṁ. 100.11.

**अङ्कुरोत्पादनसामर्थ्य** (aṅkurotpādana–sāmarthya) *m.* ability to produce sprouts न ह्यङ्कुरमनुत्पाद्य विनष्टस्य बीजवर्गस्य अङ्कुरोत्पादनसामर्थ्यं नास्तीति शक्यते वक्तुम् NyāySiA. 208.25.

**अङ्कुरोत्पादानुगुण** (aṅkurotpādānuguṇa) *adj.* favourable to sprouting अङ्कुरोत्पादानुगुणसमयसम्भविना बीजेन जनितेऽङ्कुरे वर्तमानमङ्कुरत्वम् NyāyVārPari. 765.2.

**अङ्कुरोदय** (aṅkurodaya) *m.* appearance or rise of sprouts, sprouting स्वयं कालस्वरूपेण विदध्यादङ्कुरोदयम् SkandP. iv. 87.105; भावे सति हि दृश्यन्ते बीजादेवाङ्कुरोदयाः TattvSaṁ. 523; ओषधीनां व्रीहिप्रभृतीनां भावः प्रादुर्भावोऽङ्कुरोदयः इति यावत् Aparā. 185.25 (*on* 1.142); VīraMi. 226.10 (*on* 1.142)

**अङ्कुरोद्गम** (aṅkurodgama) *m.* appearance or rise of sprouts, sprouting अत्र पादाघातेनाशोकस्य पुष्पोद्गमः कविषु प्रसिद्धो न पुनरङ्कुरोद्गमः KāvyPra. 388.5; Kāvyānu.(He.) 227.5.

**अङ्कुरोद्गार** (aṅkurodgāra) *m.* appearance of sprouts, sprouting प्राप प्रावृड्यथाशान्तात्नीलयन्ती बलाहकैः । नूतनैरङ्कुरोद्गारैर्मेदिनीमण्डलं पुनः PāṇḍaC. 18.53.

**अङ्कुरोद्भव** (aṅkurodbhava) *m.* appearance of sprouts, sprouting घनः शाखाभूतां जज्ञे पत्रपुष्पाङ्कुरोद्भवः PadmP.(Ra.) 15.57.

**अङ्कुरोद्भूति** (aṅkurodbhūti) *f.* appearance of sprouts, sprouting न बीजादग्निसंव्याप्तादङ्कुरोद्भूतिरीक्ष्यते BṛĀraUBhVā. i. 2.43.

**अङ्कुरोद्भेद** (aṅkurodbheda) *m.* appearance of sprouts (i. e. mango blossoms) यदा खल्वयं द्रष्टा प्रतिपरुरङ्कुरोद्भेदपुलकिताभिः···शाखाभिः···(युक्तम्) सहकारतरुमालोक्य TātpaṬ.(Vā.) 246.22 (*on* i. 1.23)

**अङ्कुरोपजनन** (aṅkuropajanana) *n.* germination of a sprout कुसूलगतविमतबीजक्षणोऽङ्कुरोपजननोपयोगि (बीजसंतानानिर्वर्तकः) बीजक्षणमनपेक्षो न जनयेत् VedāntKa. 276.23 (*on* ii. 2.4); बीजं सत्यामप्यङ्कुरोपजननशक्तौ पृथिव्युदकादिसहकारिकारणकलापसमवहितमेवाङ्कुरं जनयति SyādvāMañ. 17(91)

**अङ्कुरोपन्यास** (aṅkuropanyāsa) *m.* use or mention of (the expression) *aṅkura* समुत्थितो वक्षसि कैटभारेः कृपाङ्कुरः कौस्तुभकैतवेन । (अत्र) अङ्कुरोपन्यासादपूर्णता RasTa. 25.5.

**अङ्कुरोपम** (aṅkuropama) *adj.* resembling a sprout समायान्ति यमदूताः ···दशनैरङ्कुरोपमैः (युक्ताः) BrahmP. 214.60.

**अङ्कुरोपयोगिन्** (aṅkuropayogin) *adj.* favourable to sprouting अङ्कुरोपयोगिबीजसन्तानानन्तःपातित्वमुपाधिः VedāntKa. 276.25 (*on* ii. 2.4)

**अङ्कुरोपादान** (aṅkuropādāna) *n.* material cause of the sprout मुद्गमाषादयः ··· तुषान्तरावस्थितेनैवांशेनाङ्कुरोपादानम् NyāySu.(Ja.) 201B. 8 (*on* i. 4.6)

Hastyāyur. 1.14 (1.1); अङ्गाः संप्राप्तभङ्गाः EI. ii. 416.31; **B** a country in Eastern India त इम एषु कुरुपञ्चालेष्वङ्गमगधेषु काशिकौशलेषु ··· अन्नमदन्ति GopBr. i. 2.10; लोमपाद इति ख्यातो अङ्गानामीश्वरोऽभवत् MahāBhā. iii. 110.19; अङ्गा वङ्गाः कलिङ्गाश्च···। (उद्देशमात्रेण मया देशाः संकीर्तिताः प्रभो) MahāBhā. vi. 10.44; MahāBhā. xii. 122.1; अङ्गस्याङ्गोऽभवद्देशः MahāBhā. i. 1042*(3); रोमपादः प्रतापवान्। अङ्गेषु प्रथितो राजा भविष्यति महाबलः Rāmā. i. 8.11; HariVaṁ. i. 23.32; अबहुत्वे च लुग्वक्तव्यः। अतिक्रान्तोऽङ्गानत्यङ्ग इति MahāBh. i. 490.9 (*on* ii. 4.62); अङ्गानां विषयो अङ्गाः MahāBh. ii. 282.7 (*on* iv. 2.52); मगधाङ्गांस्तथैव च।···एतान् जनपदानार्यान् गङ्गा भावयते शुभान् VāyuP. i. 47.48; MatsyaP. 121.50; BrahmāṇḍP. i. 18.51; ViṣṇuDhaP. i. 22.23; विदेहेषु तथाङ्गेषु ··· लोहं प्रधानम् ViṣṇuDhaP. ii. 17.22; iii. 27.23; अङ्गेषु सूर्यो यवनेषु चन्द्रः YogYā. 3.19; मम प्राणाधिके तस्मिन्नङ्गानामीश्वरे गते VeṇīSaṁ. 5.165; स···च तमवभूतदुहितृप्रार्थनस्याङ्गराजस्योद्धरणायाङ्गानभियास्यन् DaśKuC. 36.3; 41.2; अङ्गानां राष्ट्रं अङ्गाः JaineVyā. iii. 2.45 (180.21); देशाः···कुरुकाशीकलिङ्गाङ्गवङ्गसुह्माः MahāP. 16.152; 25.287; लोमराहित्यात् (?) पूर्वेणाङ्गः JayaMa. 302.20 (*on* 5.6); KāvyMī. 8.3; 93.20; देशोऽङ्गोऽयं पुरी चम्पा BṛKathāK. 93.303; RāmāMañ. 205.10; PadmP. iv. 49.4; अयमङ्गेषु मार्गोऽयम् KathāSaSāg. ix. 6.313; अङ्गाः जनपदः स्फीतः BṛKathāS'loSaṁ. 16.36; Kāvyānu.(He.) 153.5; देशनामानि अङ्गवङ्गकलिङ्गादीनि SmṛtiCan. vi. 53.9; अङ्गानां जनपदस्य भूषायाः चम्पापुर्याः कल्पं जल्पामः ViviTīKa. 65.2; अङ्गश्चम्पाप्रदेशः VīraMi.(Paribhāṣā.) 58.19; Vaija. 230.3; TrikāS'e. iii. 3.54; VīśvaPra. 25.14; NānārthSaṁ. 5.42; MediK. 22.2; ViśvaLoK. 47.3; **Ci** a king of the Aṅgas एतेन ह वा ऐन्द्रेण महाभिषेकेणोदमय आत्रेयोऽङ्गमभिषिषेच AitBr. 39.8 (950); (a king called Aṅga) तथाङ्गवङ्गौ सह पुण्ड्रकेण पाण्ड्योड्रराजौ सह चान्ध्रकेण MahāBhā. ii. 4.21; xii. 29.81; xii. 49.72; पुत्रस्त्वङ्गस्य राज्ञस्तु रोमपाद इति श्रुतः Rāmā. i. 10.4; अङ्गवङ्गकलिङ्गैश्च सार्धम् ··· निर्ययौ चेदिराजः सः HariVaṁ. 87.50; 23.33; दायादस्तस्य चाङ्गो वै तस्मात्कर्णोऽभवन्नृपः MatsyaP. 48.102; VāyuP. ii. 8.226; असिकेशं भौजङ्गे पित्र्येऽङ्गं पाण्ड्यनाथमपि भाग्ये BṛSaṁ. 11.56; अङ्गान् मणिभिरङ्गैः ··· सोऽभ्यनन्दत् MahāP. 29.38; अङ्गाः कङ्ककलिङ्गवङ्गमगधाः सर्वेऽप्यमी पार्थिवाः NalaCam. 7.6; अङ्गद्वयं मे परिपालनीयमङ्ग त्वया शूरजनाग्रगेण BhārCam. 8.78; नाभागाङ्गाम्बरीषाद्यैश्चीर्णे त्रेतायुगादिषु। ··· एतन्महाव्रतम् BhaviP. 706B.18 (iv. 72.9); DvyāśraKā. 15.33; अङ्गाः संगरभीरवः समभवन् PratāYaBhū. 188.2; द्वारस्थाङ्गकलिङ्गगाङ्गमगधैरभ्यर्चिताङ्घ्रिश्रियम् ··· श्रीकृष्णराजो-[ऽ]भ[वत्] EI. iv. 283.23; अङ्गवङ्गकलिङ्गाद्यै राजभिस्सेव्यते च यः EI. xiv. 238.59; **Cii** name of Sudeṣṇā's son तत्राङ्गो नाम राजर्षिः सुदेष्णायामजायत MahāBhā. i. 98.32; पुत्रानुत्पादयामास पञ्च वंशकरान् भुवि। अङ्गः प्रथमतो जज्ञे HariVaṁ. 23.29; यस्य क्षेत्रे दीर्घतमसाङ्गवङ्गकलिङ्गसुह्मपौण्ड्राख्यं बालेयं क्षत्रमजन्यत ViṣṇuP. iv. 18.13; BrahmāṇḍP. ii. 74.27; MatsyaP. 48.77; VāyuP. ii. 37.85; BrahmP. 13.30; **Ciii** name of a Prajāpati अत्रिवंशसमुत्पन्नस्त्वङ्गो नाम प्रजापतिः HariVaṁ. 5.1; BrahmāṇḍP. i. 36.126; पितृकन्या सुनीथा तु वेनमङ्गादजीजनत् MatsyaP. 4.44; SkandP. v(2). 49.20; सुनीथाङ्गस्य या पत्नी सुषुवे वेनमुल्बणम् BhāgP. iv. 13.18; BrahmP. 4.28; अङ्गो नाम अयं भद्रे नन्दनं वनमागतः PadmP. ii. 34.2; ii. 29.72; जातस्य ध्रुवकुल एव तुङ्गकीर्तेरङ्गस्य व्यजनि सुतः स वेननामा Nārāy. iv. 18.1; **Civ** son of Ūru and Āgneyī ऊरोरजनयत्पुत्रान् षडाग्नेयी महाप्रभान्। अङ्गं सुमनसम् HariVaṁ. 2.18; (of Kuru) ViṣṇuP. i. 13.6; VāyuP. ii. 1.91; BrahmāṇḍP. i. 36.108; Kūrma-P. 150.15 (1.14); AgniP. 18.10; ViṣṇuDhaP. i. 108.4; BrahmP. 2.20; (of Puru) S'ivaP. 440B.5 (v. 30.16); BallāC. 58.13; **Cv** descendant of Cākṣuṣa-Manu तद्वंशजा असंख्याता अङ्गक्रतुशिवादयः SaurP. 27.6; **Cvi** elder son of Sugrīva ज्यायानङ्गोऽग्रजस्तस्य प्रथितोऽङ्गदसंज्ञया PadmP.(Ra.) 10.12; 47.67; 49.77; **Cvii** name of a sage भृगुरङ्गोऽङ्गिरा वह्निः कपिलोऽत्रिः (वल्कलतापसाः) PadmP.(Ra.) 4.126; **Cviii** name of one of the Suśarmans वर्णस्तथाप्यङ्गविश्वौ (सुशर्माणः प्रकीर्तिताः) VāyuP. ii. 38.64; **ix** name of the patron of Pālakāpya अङ्गो हि राजा चम्पायां पालकाप्यं स पृच्छति Hastyāyur. 18.18 (1.2); 27.8 (1.3); 48.9 (1.7); 97.15 (1.14)

**¹अङ्ग** (aṅga) *adj.* subordinate, dependent ग्रामादौ उत्सवं कुर्यात्स्वतन्त्रे वाङ्ग एव वा PāraS. 17.549.

**²अङ्ग** (aṅga) *adj.* possessing limbs अङ्गमस्यास्तीति अङ्गः। अर्शआदित्वादच्प्रत्ययान्तोऽङ्गशब्द उपात्त इति दर्शयति Nyās. i. 411.15 (*on* ii. 3.20); अङ्गवानङ्ग इष्यते AnekāSa. 459; अङ्गो देशेऽङ्गशालिनि Vaija. 230.3; AnekāK. 112; अङ्गशालिनि तु त्रि स्यात् NānārthāSaṁ. i. 46.37; त्रिष्वङ्गवति MediK. 22.3; त्रिष्वङ्गवति चोच्यते S'abdaRaSaK. 59.3.

**¹अङ्गक** (aṅga-ka) *n.* **Ai** body (in an endearing sense) पुलकिनि केवलमङ्गके विधेयाः।···प्रणिदधिरे दयितैरनङ्गलेखाः S'iśuVa. 7.39; (वधूः) हरति सुचिरं गाढाश्लेषे यदङ्गकमाकुला Kāvyālaṅ.(Ru.) 7.33; अहह सुतनोर्लीलासूत्रैः कृतं पदमङ्गके BālBhā. 1.30; 1.27; लावण्यसंवलितमङ्गकमुद्वहन्ती NavSāC. 18.36; आत्मनोऽङ्गेषु पूर्वं तां रक्षां कृत्वा तु मेऽङ्गके ĀdiP. 17.65; इति स्फुरितमङ्गके मृगदृशः स्वतो लीलया KāvyPra. 728.3; एतत्तदेव सितदेवतरुप्रसूनसौभाग्यमङ्गकमनङ्गविलासवेश्म KarṇaSu. 1.52; 3.5; त्वत्प्रत्यर्थी गिरिचरगजस्याङ्गके दत्तदृष्टिः Ekāva. vi. 2.50; अपि सोऽत्र न दुर्लभश्चिदात्माङ्गकयोः कारणकार्यभावभावात् S'aṅkaDigVi.(Mā.) 15.124; दर्शयन्नङ्गकेन। नवनखपदभागां नैशसंभोगमुद्राम् S'ṛṅgāBhū. 9; पाटीरं घनसारसान्द्रविशदं बाला विलिप्याङ्गके S'ṛṅgāMañ. 38.15; **Aii** body (in a deprecatory sense), wretched body धिक् तम् ··· अङ्गकम् YogVā. v. 34.73; मरणव्यसने ऋातुरपूर्वोऽयं ममाङ्गकम्। दग्धुं शोकानलः शक्तः PadmP.(Ra.) 116.17; अङ्गकस्यास्य कृते कः पापमाचरेत् YogS'ā. 3.24; महादारिद्र्यदग्धेन किमनेनाङ्गकेन मे PārśvC. 3.157; S'āliC. 5.122; **B** limb, bodily part (implying delicateness, fragility, beauty etc.) गन्तुमल्पमपि मे नालमङ्गकानि Kād. 36.5; अङ्गकैस्तुहिनसङ्गशीतलैः पुत्रि मां प्रियसखीं च जीवय MālMā. 10.127; 1.113; अकृतमधुरैरम्बानां मे कुतूहलमङ्गकैः UttaRāC. 1.20; 1.24; अस्याः कृतावरणमङ्गलकान्यङ्गकानि यौवनस्य पन्थानमीक्षन्ते AnarghaRā. 3.4 (12); अङ्गकैः। हरवामविभागभागिनी मम लास्यैकगुरुर्गिरेः सुता RāmC. 13.21; 19.51; एताः पुण्यपुरंध्र्यो त्रिभुवनक्रीडाजडैरङ्गकैर्निर्गत्य प्रियसद्मनः स्ववसतेर्वीथीरलंकुर्वते TilaMañ. 238.15; आलिङ्ग्य निर्वापयेमान्यङ्गकानि YaśasCam. ii. 47.1; विक्षेप साक्षेपमितीव तासां पद्माकरः कुङ्कुममङ्गकेभ्यः VikraDeC. 10.77; 18.27; KarṇaSu. 1.22; सार्धमावर्त्य हेम्ना रजतमिव मृगाक्ष्याः कल्पितान्यङ्गकानि SubhāRaK. 22.20; निपीते मधुनि मधुरता याङ्गकेष्वाविरासीत् S'rīKaC. 14.67; 13.45; 15.20; अमूनि सूनैर्विदधेऽङ्गकानि चकार वाचं पिकपञ्चमेन NaiṣC. 10.130; 8.57; पश्य पश्य विरहे दहत्यसावङ्गभूरपि यदङ्गकानि मे Surath. 6.78; 14.25; KīrtiKau. 7.75; विरचय निर्वृतमेनमङ्गकैस्त्वम् UnmaRā.(Vi.) 54; यदि कोमलता तवाङ्गकानाम् RasGaṅ. 71.6; अङ्गकैरधरितानि तावकैः केलिपत्रकुसुमानि कल्पय Raghunā. 12.39; 7.1; अङ्गकान्यपिदधासि नताङ्ग्या भूषणैर्जनदुरीक्षणमीत्या Mukundā. 119; अशिशिरैरङ्गकैः पित्तला स्यात् RatiRa. 4.5; **C** part, portion देहे यथाङ्गिनोऽङ्गानि दृश्यते चित्स्वभावतः। ब्रह्मणा पद्मजत्वेन नियत्याद्यङ्गकं तथा YogVā. iii. 62.17 (comm. तथा नियत्यादिसर्गजातमङ्गकं स्वावयवभूतं दृष्टमिति शेषः); **D** ancillary (subsidiary) science विद्या ब्राह्मी तथाङ्गकम् BallāC. 76.15; **E** subsidiary *mantra* नमःस्वाहादिभिश्चायं विष्वक्सेनस्य अङ्गकः। साङ्गेनानेन मन्त्रेण प्रतिष्ठाप्यो विधानतः PāraS. 8.98; धौतदन्ता द्विजाः स्नातशुक्लाम्बरा वज्रपूतैर्जलैर्मौनिनस्तण्डुलान्। क्षालयेयुस्तथा सप्तकृत्वोऽङ्गकैः ĪśānS'iPa. i. 8.101; **F** manner, mode, procedure आरब्धा भगवदभिनतिरमुना येनाङ्गकेन मम। शम्भो Stotrā. 20.21 (comm. येनाङ्गकेन सर्वजनासंलक्ष्यप्रकारेण)

**²अङ्गक** (aṅga-ka) *m.* inhabitant of the Aṅga country कलिङ्गकाश्चाङ्गका मागधाश्च शिष्टान्धर्मानुपजीवन्ति वृद्धाः MahāBhā. viii. 30.75.

**अङ्गकण्डूयन** (aṅga-kaṇḍūyana) *n.* scratching of the limbs or body परिभ्रमन्तं गिरिमङ्ग पृष्ठतः। बिभ्रत्तदावर्तनमादिकच्छपो मेनेऽङ्गकण्डूयनमप्रमेयः BhāgP. viii. 7.10.

**अङ्गकथन** (aṅga-kathana) *n.* mention or enumeration of the accessories विभज्याङ्गकथनप्रत्यभिज्ञादिभिरैक्यसिद्धेः SetuBa. 200.30.

**अङ्गकथंभावाकाङ्क्षा** (aṅga-kathambhāvākāṅkṣā) *f.* expectancy of the subsidiary for the *modus operandi* ततश्च तत्र विनिगमनाविरहेण अङ्गकथंभावाकाङ्क्षाया विनियोजकत्वशक्तिः कुण्ठीभवति MayūMāli. 199.8 (*on* iii. 1.10)

**अङ्गकभाव** (aṅgaka-bhāva) *n.* posture of the body ऋज्वा (? ऋज्व)-ङ्गकभावं सामान्यमिति विद्यते MānaSā. 67.48.

**अङ्गकम्प** (aṅga-kampa) *m.* trembling or tremor of the body (यस्य) अङ्गकम्पो गतेर्भङ्गो मुखं वा कुङ्कुमप्रभम्।···स च याति यमालयम् HāriS. ii. 4.28; दिगालोकास्यशोषाङ्गकम्पगद्गदसम्भ्रमाः। त्रासवैवर्ण्यमोहाश्च वर्ण्यन्ते विबुधैरिह Vāgbhaṭā. 5.28; AlaṅkāS'e. 20.23; एतेन स्वेच्छामन्तरेणोत्पद्यमानैः सुखदुःखविशेषैस्तत्कार्यैश्च पुलकाङ्गकम्पादिभिः कार्यत्वहेतोर्व्यभिचारश्च परिहृतो भवति S'rutaPra. i(B). 125.16 (*on* i. 1.3)

**अङ्गकम्पन** (aṅga-kampana) *n.* tremor of the body रोमाञ्चदाहौ स्वेदश्च लालास्रावोऽङ्गकम्पनम्···कालदष्टस्य ĪśānS'iPa. i. 39.44.

**अङ्गकम्बल** (aṅga-kambala) *m.* a (fine or thin) blanket for covering the body रथवाहिन्यः ··· परिस्तोमाङ्गकम्बलैः।··· अदृश्यन्त ··· मेघानामिव वागुराः MahāBhā. vii. 73.26 (Nīlakaṇṭha सूक्ष्मकम्बल)

**अङ्गकरणोपपत्ति** (aṅgakaraṇopapatti) *f.* propriety of the performance of the accessory rites अस्मन्मते त्वङ्गापूर्वाणां प्रधानापूर्वोत्पत्त्यनन्तरं नाशाद्विकृत्यपूर्वसिद्ध्यर्थं पुनरङ्गकरणोपपत्तिः MīmāKau. iii. 50.20 (*on* ii. 1.6)

**अङ्गकर्तन** ( aṅga-kartana ) *n.* cutting off of a limb इहापि दृश्यते लोके तिरश्चामकृतागसाम् । नितान्तं बन्धनच्छेदतर्जनायतिदुःसहम् । कुष्ठादिव्याधिजा बाधा गुप्तिवासोऽङ्गकर्तनम् ।···नृणामपि TrisaS'aPuC. iii. 3. 113.

**अङ्गकर्तव्य** ( aṅga-kartavya ) *n.* accesories which are to be necessarily performed दृष्टान्तेन द्रढयति अङ्गकर्तव्यसम्पादनम् AbhinBhā. iii. 32. 20 (*on* 19. 53)

**अङ्गकर्तृ** ( aṅga-kartṛ ) *m.* the subordinate performer (i. e. the priest who is subordinate to the Yajamāna the principal sacrificer) अङ्गकर्तुरुपदेशः आभ्यां पुरोडाशाभ्यामृत्विग् याजयेदिति S'ābaBh. 2082. 9 (*on* x. 8. 35); 2084. 20 (*on* x. 8. 40); केवलप्रधानार्थत्वेऽप्यङ्गकर्तृभ्य ऋत्विग्भ्य एव देया न तु प्रधानकर्त्रे यजमानाय VidhiRa. 10 (71. 15); प्रधानकर्तुर्यजमानस्यैवाभ्यर्हितत्वात्संस्कारा युक्ता नाङ्गकर्तुरध्वर्य्वादेः MayūMāli. 333. 11 (*on* iii. 8. 2)

**अङ्गकर्तृभूत** ( aṅga-kartṛbhūta ) *adj.* in which the body or limb has become the agent नृत्तकर्मभूतमङ्गकर्तृभूतं यद् वाद्यं ग्राहयति नृत्तं तन्नृत्यता AbhinBhā. i. 187. 8 (*on* 4. 277)

**अङ्गकर्मक** ( aṅgakarma-ka ) *adj.* having the limbs (or the body) as the object तमःकर्तृकमङ्गकर्मकं लेपनमुत्प्रेक्ष्यते RasGaṅ. 391. 3.

**अङ्गकर्मदेवता** ( aṅgakarma-devatā ) *f.* deity of the accessory rite प्रसङ्गादङ्गकर्मदेवता अपि गृह्यन्ते S'āstrDī. 853. 6 (*on* xii. 1. 12)

**अङ्गकर्मन्** ( aṅga-karman ) *n.* **i** movement of the limbs, physical activity दारुमयी योषा ··· । ईरयत्यङ्गमङ्गानि ( v. l. °कर्माणि ) MahāBhā. iii. 31. 22; यजुर्वेदेऽङ्गकर्मणां प्रदक्षिणगमनादिक्रम एव प्रथमम् AbhinBhā. i. 15. 16 (*on* 1. 17); **ii** dramatic gesture अङ्गकर्माणि शेषाणि ··· निबोधत NāṭyaS'ā. 8. 178; इत्यङ्गकर्माभिहितं ब्रवीमि···उपाङ्गकर्म ViṣṇuDhaP. iii. 24. 65; **iii** supplementary sacrificial act, ancillary rite जुहोतिचोदना ये दर्शपूर्णमासयोरङ्गकर्मविशेषास्ते दर्विहोमेषु प्रवर्तेरन् S'ābaBh. 1631. 19 (*on* viii. 4. 18); केषुचिदङ्गकर्मसु प्रतिपदमन्या दक्षिणाम्नाता ManuBh. ii. 170. 16 (*on* 8. 208); प्रधानकर्मणामङ्गकर्मणां वा प्राक्करणात्स्वर्गादिप्राप्त्ययोग्याः पुरुषाः TantrVā. 365. 23 (*on* ii. 1. 5); अनेनापि वैश्वदेविकमङ्गकर्मैवेति ज्ञायते CaturCin. iii(1). 136. 5; **iv** operation of the constituent parts (of the Pratītyasamutpāda) (in the form of causes and effects) कथमङ्गकर्मव्यवस्थानतः AbhidhSa. 26. 25; *adj.* having the limbs (or the body) as the object लिम्पतिर्ध्वान्तकर्तृकः । अङ्गकर्मा च पुंसैवमुत्प्रेक्ष्यत इतीष्यताम् Kāvyāda. 2. 233.

**अङ्गकर्मवाचिन्** ( aṅgakarmavāc-in ) *adj.* expressing (i. e. denoting) a subsidiary act दीक्षणीयादिशब्दा अङ्गकर्मवाचिनः NyāyMāVi. 420. 12 (*on* ix. 1. 2)

**अङ्गकर्मोल्लेख** ( aṅgakarmollekha ) *m.* mention of an ancillary rite पूर्णाहुतौ हुतायां वरं दद्यादित्यङ्गकर्मोल्लेखेन या दक्षिणा विहिता: ताः प्रत्याह Smṛti-Can. iv. 437. 6.

**अङ्गकर्षण** ( aṅga-karṣaṇa ) *n.* rolling of the body यात्रानेहसि यस्य ··· क्षितिरजःपूरे वियच्चुम्बति । भानोर्वाजिभिरङ्गकर्षणरसानन्दः समासादितः Sadukti-Ka. 211. 25.

**अङ्गकलङ्क** ( aṅga-kalaṅka ) *m.* spot or stain on the body कृष्णतिलकृष्णजीरकसिद्धार्थजीरकैः समं पयसा । लेपः ··· अङ्गकलङ्कं च नाशयति RatiRaha. 15. 96.

**अङ्गकला** ( aṅga-kalā ) *f.* six parts or six minutes तुङ्गस्याङ्कलाः कुवेदविकलाः पातस्य रामा भवाः ( गतिः ) KaraṇaKu. 1. 13 (7)

**अङ्गकलाप** (aṅga-kalāpa) *m.* **i** aggregate or group of accessory rites or acts तदुद्देशेनाङ्गकलापविधानात् ··· स एव विधेयत्वेनोक्तः TantrVā. 611. 24 (*on* ii. 3. 19); भवेत्स्वाध्यायविध्यर्थं तावतैवाङ्गकलापानुष्ठानम् ManuBh. i. 203. 7 (*on* 3. 1); सति मेदने मेदनहोमसहितोऽङ्गकलापः करणोपकारं जनयति PrakaPañ. 484. 7; प्रयुक्तेऽङ्गकलापेऽयं प्रयोगविधिः AbhinBhā. i. 184. 20 (*on* 4. 271); उपायस्त्वङ्गकलापो दृष्टादृष्टार्थः BālaKrī. i. 12. 10 (*on* 1. 6); NyāyMāVi. 391. 22 (*on* vii. 4. 2); पशोः पर्यग्निकरणान्तमङ्गकलापं कृत्वा S'ivārkaMaDī. i. 31. 9 (*on* i. 1. 1); ii. 112. 4 (*on* ii. 2. 38); ii. 219. 4 (*on* iii. 1. 25); इदमङ्गकलापस्य तच्छेषित्वव्यावर्तनार्थम् VidhiRa. 10 (71. 5); 24 (130. 2); अत्र मात्रत्वोपसंभवादङ्गकलापाव्यापकत्वेनाप्युपपत्तौ कर्तुर्यागत्यागकलापव्यावृत्तस्यैकत्वानुपपत्तेः NirṇaSi. 446. 27; इत्युपस्थितं वैदिकमङ्गकलापं विहाय MayūMāli. 546. 28 (*on* vii. 4. 1); येषां तु गृह्ये प्रधानमात्रमुक्तं नाङ्गकलापः BālamBha. i. 100. 25 (*on* 1. 25); **ii** aggregate of (i. e. all) the constituent parts or divisions (of the *kathāśarira* or theme) तत्र अङ्गकलज( ? लाप )स्योभ[य]त्रापीष्टत्वात् Kāvyānu. (He.) 405. 16.

**अङ्गकलापरूप** ( aṅgakalāpa-rūpa ) *adj.* constiting of the aggregate of accessory rites न हि ··· अङ्गकलापरूपस्य वा तस्य यागकरणत्वम् LaCandr. 376. 11.

**अङ्गकलापशेषलोप** ( aṅgakalāpaśeṣa-lopa ) *m.* the giving up (i. e. non-performance) of the remaining ones of the group of the ancillary rites दक्षिणापेक्षया इतराङ्गानामपि प्राधान्याद्दक्षिणानुसारेणाङ्गकलापशेषलोपो न युक्तः MayūMāli. 513. 6 (*on* vi. 7. 7)

**अङ्गकलापसहित** ( aṅgakalāpa-sahita ) *adj.* together with the aggregate of ancillary rites स्नानं प्रतिहोमाद्यङ्गकलापसहितमनुतिष्ठेत् BālamBha. iii. 195. 12 (*on* 3. 326)

**अङ्गकल्प** ( aṅga-kalpa ) *m.* rule or procedure of constituent divisions or parts (of *mukhasandhi* etc.) पुनरेषां तु सन्धीनामङ्गकल्पं निबोधत NāṭyaS'ā. 19. 49.

**अङ्गकल्पन** ( aṅga-kalpana ) *n.* **i** assumption as an accessory rite विद्वत्संबन्धियज्ञानुवादेन तस्य विद्वदङ्गैरङ्गकल्पनादेकवाक्यता न प्रतीयते VedāntKa. 420. 22 (*on* iii. 3. 24); **ii** procedure of (division into) the constituent parts (of the *mukhasandhi* etc.) प्रकरीनियताप्त्यानुगुण्यादत्राङ्गकल्पनम् RasāSu. 229. 7 (3. 58)

**अङ्गकल्पना** ( aṅga-kalpanā ) *f.* **i** process of placing of (the prescribed fingers) on the various parts of the body ब्रह्मरन्ध्रे भ्रुवोर्मध्ये नवरन्ध्रेषु च क्रमात् । मन्त्रवर्णान् न्यसेन् मन्त्री वाग्भवेनाङ्गकल्पना SāraTi. 7. 88; 13. 69; गणेशबीजं विज्ञेयं स्वदीर्घैर्वाङ्गकल्पना ĪśānS'iPa. ii. 6. 74; i. 28. 12; यद्वीजाद्या भवेद्विद्या यद्वीजेनाङ्गकल्पना MahNirvāT. 5. 125; **ii** assuming arrangement of the (various) limbs or parts (of the Vāstupuruṣa) सन्धयस्तत्र मर्माणि पूर्वोक्तैर्वाङ्गकल्पना ĪśānS'iPa. ii. 27. 62.

**अङ्गकल्पलतिका** ( aṅga-kalpalatikā ) *f.* wish-granting creeper in the form of the body नैवोपमुक्ता पुनः श्रोत्रैः सुन्दरि तेऽङ्गकल्पलतिकाकीर्तिजैनैर्बोधिता GopāKeCan. 135. 18.

**अङ्गकषाय** ( aṅga-kaṣāya ) *m.* essence of the body (i. e. semen virile) स त्वमङ्गकषायोऽसि S'atBr. XIV. ix. 4. 8; स त्वमङ्गकषायोऽसि दिग्धविद्धां मृगीमिव ।···पत्नीं मे वशमानय BṛĀraUBhVā. vi. 4. 40.

**अङ्गकाख्यजनान्त** ( aṅgakākhya-janānta ) *m.* country called Aṅgaka अङ्गकाख्यजनान्तेऽभूच्चम्पायां पुरि भूपतिः BṛKathāK. 56. 276; 68. 3; 93. 1; 126. 38.

**अङ्गकाख्यमहादेश** ( aṅgakākhya-mahādeśa ) *m.* vast country called Aṅgaka अङ्गकाख्यमहादेशे चम्पायां पुरि भूपतिः BṛKathāK. 56. 138; 105. 83; 105. 295; 120. 1; 127. 107.

**अङ्गकाण्ड** ( aṅga-kāṇḍa ) *m. n.* group or aggregate of subsidiary rites कर्माणि सर्वाणि···यदङ्गकाण्डैः । न सङ्गतानीह परस्परं च S'lokaVār. 5(8). 56 (491. 8); सर्वमेवाङ्गकाण्डं विकृतेः NyāyRaMā. 174. 21; निर्वापान्त्यस्याप्यन्वाधानादेरङ्गकाण्डस्यापकर्षः S'āstrDī. 808. 13 (*on* xi. 2. 3); अङ्गकाण्डस्य अङ्गकलापस्य MayūMāli. 808. 6 (xi. 2. 3); तत्र यद्येकस्मिन् ब्राह्मणादौ समग्रमप्यङ्गकाण्डमनुष्ठाय CaturCin. iii(1). 762. 10.

**अङ्गकान्ति** ( aṅga-kānti ) *f.* complexion or lustre of the body स्यादुद्वर्तनमङ्गकान्तिकरणं मेदःकफालस्यजित् YaśasCam. i. 508. 2; मुदिरमदमुदारं मर्दयन्नङ्गकान्त्या···व्रजनवयुवराजः काङ्क्षितं मे कृषीष्ट StavMā. 39. 9; विद्युत्पिङ्गैरङ्गकान्तिप्रवाहैरुल्पलोचैर्दिव्यदीव्यत् स दिव्यः Rāgh. 10. 19.

**अङ्गकाम** ( aṅga-kāma ) *m.* fruit of the accessory rites योऽङ्गकामं क्रतुकामं मन्येतापि नूनं सोऽङ्गे दुष्टे सर्वमेवापि क्रतुं दुष्टं मन्येत NidāSū. 27. 13 (2. 4); सार्वकाम्यमङ्गकामैः प्रकरणात् MīmāSū. iv. 3. 25; किमङ्गकामैरङ्गाङ्गकामैश्च सहास्यानुवादः S'ābaBh. 1259. 26 (*on* iv. 3. 25); न च 'वसन्ते ब्राह्मणोऽग्निमादधीत' इत्याधानिकस्य उपग्रहविशेषस्य अङ्गकामस्य प्रधानकामगामित्वप्रतिपादनशक्तिरस्ति SaṅkarKāBh. 203. 11 (*on* iv. 3. 7); *adj.* whose desires are fulfilled by the result of the subsidiary rites (alone) ( देवाः ) कथं खल्वङ्गकामा इति NidāSū. 27. 9 (2. 4)

**अङ्गकाम्य** ( aṅga-kāmya ) *n.* fruit of the subsidiary or accessory rite प्रयोगवचनगतस्यात्मनेपदस्य अङ्गकाम्यानां कर्तृगामित्वप्रतिपादनमेव विषयः SaṅkarKāBh. 204. 8 (*on* iv. 3. 7)

**अङ्गकारण** ( aṅga-kāraṇa ) *n.* cause of (being) the subsidiary rite (i. e. cause of (implying something as) subsidiary) न चानन्तर्यमङ्गकारणमसति प्रमाणे SaṅkarKāBh. 148. 12 (*on* iii. 2. 61)

**अङ्गकार्य** ( aṅga-kārya ) *n.* **1A** grammatical operation on the *aṅga* (i. e. the stem or base before a suffix which is added to it) केनेदानीमङ्गकार्यं भविष्यति MahāBh. i. 317. 12 (*on* i. 4. 13); समानजातीयतयाङ्गकार्यमेव व्यावर्त्यते PariVṛ.(Sī.) 7. 21; लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात् PrakriKau. i. 160. 3; i. 219. 3; अङ्गकार्यस्यैव

तत्र निषिद्धत्वादित्यभिप्रायः Prasā. ii. 360. 12; तेन लोपात्पूर्वमपि नाङ्गकार्यम् GuruCandr. ii. 212. 15 = LaCandr. 508. 31; लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात् SiddhāKau. 60B. 6; 464A. 5; **1 B** grammatical operation or rule in the section (of the Aṣṭādhyāyī) governed by the sūtra *aṅgasya* वर्णकार्यादङ्गकार्यं बलीयस्त्वाद्भवति PariVṛ.(Si.) 122. 3; 152. 2; अङ्गकार्ये वृत्ते पुनर्नाङ्गकार्यम् PrakriKau. i. 249. 3; SiddhāKau. 91B. 2; अङ्गकार्ये जाते सति पुनरुत्तरकालमन्यदङ्गकार्यं न भवति Prasā. i. 249. 10; 'प्रियस्थिर' इत्यादिना अङ्गकार्ये प्रादेशे प्रवृत्तेऽपि PāṇiTaVāNaMā. 55. 20; **2** effect in the form of subsidiary (i. e. the study of the Vedas which is subsidiary to the teaching of the Vedas which is the principal) उपायात् कार्यस्याभ्यर्हितत्वादङ्गकार्यत एव द्राक् प्रयुक्तिः NayaVi. 25. 4 (*on* i. 1. 1); **3** result of a subsidiary rite तत्पक्षे हि अङ्गकार्यनिष्पत्तिः पृथगङ्गानुष्ठानाभावप्रयोजिका MayūMāli. 847. 15 (*on* xii. 1. 2)

**अङ्गकार्यत्व** (aṅgakārya-tva) *n.* the state of being a grammatical operation or rule in the *aṅgādhikāra* section (in the Aṣṭādhyāyī) स्मैप्रभृतीनामङ्गकार्यत्वात् Nyās. i. 76. 24 (*on* i. 1. 29)

**अङ्गकार्यत्वाभाव** (aṅgakāryatvābhāva) *m.* absence of the grammatical operation on the *aṅga* (i. e. the stem before a suffix) अङ्गकार्यत्वाभावेन 'न लुमताङ्गस्य' इत्यप्रतिषेधात् PāṇiTaVāNaMā. 5. 16.

**अङ्गकार्यनिषेध** (aṅgakārya-niṣedha) *m.* prohibition or negation of the grammatical operation on the base or stem (before the suffix is added to it) लुमता लुप्तेऽङ्गकार्यनिषेधात् AdvaiSi. 508. 6.

**अङ्गकार्यनिष्पत्ति** (aṅgakārya-niṣpatti) *f.* occurence or production of the result of the subsidiary rite तत्पक्षे हि अङ्गकार्यनिष्पत्तिः पृथगङ्गानुष्ठानाभावप्रयोजिका MayūMāli. 847. 15 (*on* xii. 1. 2); 848. 1 (*on* xii. 1. 2)

**अङ्गकार्यप्रतिपत्ति** (aṅgakārya-pratipatti) *f.* knowledge of the grammatical operation in the *aṅgādhikāra* section अङ्गग्रहणमावर्त्तयितव्यं हल्विशेषणार्थं अङ्गकार्यप्रतिपत्त्यर्थं च KāśiVṛ. *on* vi. 4. 2; अङ्गग्रहणञ्च द्विरावर्तयिष्यामः शत्रवयवविशेषणार्थमङ्गकार्यप्रतिपत्त्यर्थं च Nyās. iii. 675. 27 (*on* vii. 1. 80)

**अङ्गकार्यप्रवृत्ति** (aṅgakārya-pravṛtti) *f.* application of the grammatical operation in the *aṅgādhikāra* section पुनरङ्गकार्यप्रवृत्तावविधिरविधानं भवति PariVṛ.(Si.) 152. 3.

**अङ्गकार्यवृत्ति** (aṅgakārya-vṛtti) *f.* application of the grammatical operation in the *aṅgādhikāra* section अङ्गकार्यवृत्तेरविधिरविधानमनिष्पत्तिः PariVṛ.(Si.) 152. 4.

**अङ्गकार्यातिदेश** (aṅgakāryātideśa) *m.* application by transference of the grammatical operation in the *aṅgādhikāra* section इहाङ्गकार्यातिदेशः Prasā. ii. 429. 9.

**अङ्गकार्श्य** (aṅga-kārśya) *n.* emaciation of the body अङ्गकार्श्याङ्गसौन्दर्यविप्लवाद्यैः स वर्ण्यते BhāvPra.(Sā.) 15. 2 (1); अङ्गकार्श्येऽग्निमान्द्ये च ... रसो ह्ययम् RasRaSa. 14. 39; 17. 27.

**अङ्गकाल** (aṅga-kāla) *m.* time for (the performance of) a subsidiary rite अन्यथाङ्गकालानुरोधेन प्रधानकालबाधप्रसङ्गात् CaturCin. iii(2). 332. 5; iii(2). 363. 14; अङ्गकालानुसारेण पूर्वपक्षानुस्थितिः MayūMāli. 419. 22 (*on* v. 1. 18); 865. 6 (*on* xii. 2. 9)

**अङ्गकीर्तन** (aṅga-kīrtana) *n.* account or description of the constituent factors आवश्यिकः किलेष्टोऽयं प्राधान्यात् त्वङ्गकीर्तनम् AbhidhK. 3. 25.

**अङ्गकुञ्चन** (aṅga-kuñcana) *n.* contraction of the body or limbs ईशः...अवञ्चयत्किंचिदिवाङ्गकुञ्चनैः S'ivLī. 16. 68.

**अङ्गकुट्टन** (aṅga-kuṭṭana) *n.* striking or pecking at a limb वाहनशाखोपानच्छत्रच्छायाङ्गकुट्टने मरणम् BṛSaṁ. 95. 14.

**अङ्गकुमार** (aṅga-kumāra) *m.* prince Aṅga (brother of Aṅgada) ताभ्यामङ्गकुमारेण चन्द्रोदरसुतेन च। समं लक्ष्मीधरः सेनां समाश्वासयितुं स्थितः PadmP.(Ra.) 60. 121.

**अङ्गकृत** (aṅga-kṛta) *adj.* [*f.*-ā] **Ai** produced by the body अङ्गकृता यथा छाया शक्रस्य परिवेष्टितुम्। आयाति तावत्सहसा इन्द्रोऽप्यप्सु न्यमज्जत SkandP. i(1). 15. 16; **Aii** performed with the body मदनेऽङ्गकृते अङ्गमोटने AbhinBhā. ii. 57. 11 (*on* 9. 134); **Bi** relating to (*lit.* made or caused by) secondary features (of the main subject matter) यानि वस्तूनि मुनयः सन्ति चाङ्गकृतानि तु। गीतानि तेषां वक्ष्यामि प्रयोगं नृत्तवाद्ययोः NāṭyaS'ā. 4. 299; **Bii** caused by an auxiliary act or material नायमङ्गकृतादेषामुपकाराद् विलक्षणः TantrVā. 666. 18 (*on* iii. 1. 1); अङ्गिनोऽङ्गकृत उपकारे साक्षादपेक्षा NyāyMāVi. 480. 7 (*on* x. 1. 1); करणं च ... एकमेवोपकारमङ्गकृतमपेक्षते NyāyMāVi. 620. 13 (*on* xi. 1. 2)

**अङ्गकृताग्रकांश** (aṅgakṛtāgrakāṁśa) *m.* 46 degrees of the amplitude खाङ्कात्पकास्तेऽङ्गकृताग्रकांशैर्याम्योत्तरैर्युक्तविहीनिताश्च SiddhāTaVi. 378. 19.

**अङ्गकृशता** (aṅga-kṛśatā) *f.* emaciation or leanness of the body or limbs बलिः स्यात् कृशरायूपश(?स)त्कुकुल्माषपायसैः। दशमेऽब्दे कलहंसी दाहोऽङ्गकृशता ज्वरः AgniP. 298. 42.

**अङ्गक्लृप्ति** (aṅga-klpti) *f.* **i** setting up of the (six) Aṅga-mantras (i. e. *mantras* for the heart, head, tuft, *kavaca*, eye and *astra*) and their symbolical placing on the various parts of the Sādhaka's body by touching them विचित्रानेकशब्दार्थतत्तत्संकल्पकोरका। युग्मान्तैरादिभिः षड्भिराद्यन्तस्वरषट्कयोः। अङ्गक्लृप्तिः समुद्दिष्टा शक्त्या मेलितया स्वया AhirbuS. 18. 8; अङ्गानि कल्पयेदस्य ... हृदयाद्यस्त्रपर्यन्तैस्तुर्यान्तैर्जातिभिः सह। अङ्गक्लृप्तिरियं प्रोक्ता मन्त्रस्यास्य सुलोचन PāraS. 24. 46; मुखनासाकपोलाक्षिकर्णभ्रूमध्यमूर्धसु। मन्त्राक्षराणि विन्यस्येद् देवताभावसिद्धये।...मन्त्रार्णैरङ्गक्लृप्तिः स्यात् जातियुक्तैर्यथाक्रमम् S'āraTi. 11. 69; युग्मैः स्वरैः सबिन्द्वन्तैराद्यन्तस्वरषट्कयोः। ज्ञानादिगुणषट्कान्तैरङ्गक्लृप्तिरमुष्य तु LakṣmiT. 24. 23; 33. 64; एकैनादौ त्रिभिर्द्वाभ्यां त्रिभिर्द्वाभ्यामनन्तरम्। समस्तेनास्त्रमाख्यातमङ्गक्लृप्तिरुदाहृता। एतान्यङ्गुष्ठादिषु न्यसेत् TantrSā.(K.) 112. 14; **ii** formation of the body of syllables (i. e. full form) of a *mantra* कवचं भगवांश्चण्डो मेरुः सर्गसमन्वितः। त्रिकण्टकी समाख्याता विद्या वर्णत्रयात्मिका। द्विरुक्तैर्मन्त्रवर्णैः स्यादङ्गक्लृप्तिरितीरिता S'āraTi. 10. 44.

**अङ्गक्रम** (aṅga-krama) *m.* **1** order of the limbs गात्राणि गोमयेनाथ लेपयेत्। मानस्तोक इति ह्युक्त्वा प्राग्वदङ्गक्रमेण तु BṛParāSm. 2. 132; **2** order of the subsidiary rites प्रधानक्रमोऽप्यङ्गक्रमे हेतुः ArthSaṁ. 83. 5 = MīmāNyāPra. 238. 17.

**अङ्गक्रमनियम** (aṅgakrama-niyama) *m.* regulation of the order of the subsidiary rites मुख्यक्रमादङ्गक्रमनियमः VedāntKa. 34. 12 (*on* i. 1. 1); मुख्यक्रमोऽप्यङ्गक्रमनियमे प्रमाणम् BhāṭṭDī. ii. 163. 10 (*on* v. 1. 7)

**अङ्गक्रिया** (aṅga-kriyā) *f.* **A i** (perfection of) the physical movements व्यायामं कारयेद् धीमान् नरमङ्गक्रियार्थिनम् NāṭyaS'ā. 10. 103; अङ्गक्रिया, अङ्गसिद्धिः AbhinBhā. ii. 117. 11 (*on* 10. 103); **A ii** (graceful) movement of the limbs (i. e. eyes, brows, face, etc. in *amour*) तत्कालिको विशेषस्तु विलासोऽङ्गक्रियादिषु DaśRū. 2. 38; प्रियसंगमकाले तु नेत्रभ्रूवक्त्रकर्मणाम्। विशेषो यस्स विज्ञेयो विलासोऽङ्गक्रियादिषु BhāvPra.(Sā.) 9. 7(1); **B** beautification of the body एष हि गणिकामातुरधिकारो यद् दुहितुर्जन्मनः प्रभृत्येवाङ्गक्रिया तेजोबलवर्णमेधासंवर्धनेन DaśKuC. 41. 20; **C** ceremony of touching certain parts of the body with the muttering of sacred formulas or syllables cf. **अङ्गक्लृप्ति, अङ्गन्यास,** (दशाक्षरस्य मन्त्रस्य) आद्यो बीजं द्विठः शक्तिः कामेनाङ्गक्रिया मता RāmRaU. 2. 42; सुब्रह्मण्यात्मको मनुः। वह्निबीजेन षड्दीर्घयुक्तेनाङ्गक्रिया मता S'āraTi. 13. 120; 9. 80; मुन्यब्धिकरणाङ्गाब्धिवर्णैरङ्गक्रिया मता PañcaRā.(Nā.) v. 1. 28; षड्दीर्घभाजा बीजेन कुर्यादङ्गक्रियां मनोः TantrSā.(K.) 85. 15; **D** supplementary sacrificial act (= **अङ्गकर्मन्**) [MW., APTE]

**अङ्गक्रियात्मक** (aṅgakriyātma-ka) *adj.* consisting of physical movements व्यायामं कारयेद् धीमान् नरमङ्गक्रियार्थिनम् (v. l. °क्रियात्मकम्) NāṭyaS'ā. 10. 103.

**अङ्गक्रियार्थिन्** (aṅgakriyārth-in) *adj.* desirous of (the perfection of) the bodily movements व्यायामं कारयेद् धीमान् नरमङ्गक्रियार्थिनम् NāṭyaS'ā. 10. 103.

**अङ्गक्रीडा** (aṅga-krīḍā) *f.* (graceful) movement of the limbs अङ्गक्रीडादिभिश्चेतोविकारो हासः AlaṅkāS'e. 20. 32(2)

**अङ्गक्लम** (aṅga-klama) *m.* physical exhaustion, fatigue निर्वृत्ते सुरतोत्सवे बहुविधे जातेऽधिकेऽङ्गक्लमे...दम्पत्योः ... भूयोऽपि जाता स्पृहा S'ārṅgaPa. 3709 = Subhāṣi. 2116.

**अङ्गक्लान्ति** (aṅga-klānti) *f.* physical exhaustion, lassitude कुर्वन्नङ्गक्लान्तिमर्कप्रकाशो गच्छन्तीभिर्मन्युनेवाङ्गनाभिः। ... °नेत्रच्छायापातैः खण्डशोऽथ व्यधायि HarVi. 18. 1.

**अङ्गक्षति** (aṅga-kṣati) *f.* deformity of the limb अङ्गक्षतिम् ... कुष्ठं दुष्टव्रणवमपि कष्टतरं करोति KalyāKā. 11. 74.

**अङ्गक्षयंकर** (aṅga-kṣayaṅkara) *adj.* causing physical harm दण्डः शक्रसमो बली। विहस्य त्वरजां प्राह स्वार्थमङ्गक्षयंकरम् VāmaP. 63. 63.

**अङ्गक्षालक** (aṅga-kṣālaka) *m.* one who washes or cleanses the body, masseur यथाङ्गक्षालकः पूर्वं मलापनयनोद्यतः। तैलचूर्णादिकं देहे नियोजयति PārśvC. 1. 203.

**अङ्गक्षेप** (aṅga-kṣepa) *m.* (violent) movement of the limbs अत्र कस्याश्चित् प्रेयसि सपत्नीं प्रसादयितुं गते तन्मानममृष्यमाणायाः समुत्पन्नेर्ष्या ...

भ्रूभङ्गताडनाङ्गक्षेपवेपथुस्वेदगद्गदादिभिः संसृज्यमाना प्रकृष्यते SaraKaṇṭhā. 589. 14; अङ्गक्षेपादिरनुभावः RasGaṅ. 105. 16.

**अङ्गक्षेपविधायिन्** ( aṅgakṣepa-vidhāyin ) *adj.* causing ( violent ) movement of the limbs अङ्गक्षेपविधायिभिर्निबिडितोत्तुङ्गप्रलापैरलम् UjjvaNīMa. 358. 14.

**अङ्गक्षोभसह** ( aṅgakṣobha-saha ) *adj.* tolerating discomfort of the body न न्यूनानां भीतिरनूनादिति तस्मात् तत् किं नान्येषामपि मान्यादियमस्ति । भृङ्गस्याङ्गक्षोभसहोऽन्यं मदमुज्झन् सर्वाङ्गीणं मुञ्चति हस्ती किमहत्वा RāghPāṇ. ( Dha. )13. 25.

**अङ्गग** ( aṅga-ga ) *adj.* [ *f.* –ā ] **A i** sticking ( i. e. applied ) to the body अपास्य प्रोच्चरन् वर्मे मृल्लेपं वारिणाङ्गगम् PāraS. 2. 82; **A ii** forming a part of the body ( of the Ardhanārīśvara form ), clinging to the body यस्याङ्गगा भगवती जगदम्बिका च । ··· सोऽस्माकमेव गतिः SkandP. iii( 3 ). 8. 96; **B** pertaining to the ancillaries ( of a rite ) ( e. g. *juhū, sruva* etc. ) अधिगतिरङ्गगाप्यफलवती कथम् NayaMañ. III. iv. 1. 2.

**अङ्गगज** ( aṅga-gaja ) *m.* elephant from the country of Aṅga कलिङ्गाङ्गगजाः श्रेष्ठाः ArthS'ā. i. 118. 5 ( 2. 2 )

**अङ्गगण** ( aṅga-gaṇa ) *m.* **1** group of the *mantras* or formulas for touching the limbs of the body like heart etc. पूर्वबीजं च यच्चास्य ऊकारस्वरवर्जितम् । गणेशवच्च षड्दीर्घैर्भिन्नमङ्गगणं भवेत्( ? नयेत् ) JayāS. 7. 90; PāraS. 8. 97; पूर्वोपकरणेनैव युक्तमङ्गगणं तनौ । न्यस्य ··· जुहुयात् ततः JayāS. 30. 17; **2** group of subsidiary deities विन्यस्य कोटरोर्ध्वे च आदिमूर्तिं च मध्यतः । तदीयमथलाखीनं( ? ) स्वस्थानेऽङ्गगणान् न्यसेत् । ततः पत्राष्टके पूज्यं क्रमात् संकर्षणादिकम् PauṣkS. 19. 95; PāraS. 6. 239; cf. **अङ्गगणार्चन.**

**अङ्गगणना** ( aṅga-gaṇanā ) *f.* enumeration of the constituent parts ( of the Nāṭya, viz. *pāṭhya, gīta, abhinaya* and *rasa* ) इहाङ्गगणनायां ‘ जग्राह पाठ्यम् ’ इत्यादौ पाठ्यगीतयोस्तावत् सुप्रसिद्धं रूपम् AbhinBhā. i. 260. 16 ( *on* 6. 1 )

**अङ्गगणार्चन** ( aṅgagaṇārcana ) *n.* worship of a group of subsidiary deities व्यूहानां विभवानां प्राङ्मूलादङ्गगणार्चनम् PāraS. 6 .239.

**अङ्गगत्** ( aṅga-gat ) *adj.* [ DEBRU. p. 42 ] going or making a journey to the country of Aṅga गमः क्वौ परतोऽनुनासिकलोपो भवति । अङ्गगत् । कलिङ्गगत् KāśiVṛ. *on* vi 4. 40; PrakriKau. ii. 540. 7; SiddhāKau. 498B. 1.

**अङ्गगत** ( aṅga-gata ) *adj.* [ *f.* –ā ] **i** pertaining to or found in the body, physical निद्रा तन्द्रा तथालस्यं दाहश्चाङ्गगतो भवेत् BhelaS. 166. 10 ( 6. 15 ); ( तेजोवृषो द्युतिधरः ) द्युतिमङ्गगतां कान्तिं धारयन् द्युतिधरः ViṣṇuSaBh. 104. 12 ( *on* 94 ); नियतमसावेव रेखा चक्रवर्तिलक्षणमङ्गगतं मदनराजस्य UdaySuKa. 53. 11; आत्मसंस्कार एव कण्डूयनं नाङ्गसंस्कारः । अङ्गगतकण्डूनिवृत्तिश्च द्वारमात्रम् MayūMāli. 840. 15 ( *on* xi. 4. 16 ); **ii** existing on ( i. e. worn on ) the body or limbs ( रावणः ) संतुष्टोऽङ्गगतं ताभ्यां वस्त्ररत्नादिकं ददौ PadmP.( Ra. ) 53. 28; **iii** relating to a subsidiary rite, cf. **अङ्गगतोक्त.**

**अङ्गगतत्व** ( aṅgagata-tva ) *n.* the state of pertaining to the body or being physical कण्डूयनसाध्यकण्डूनिवृत्तेरङ्गगतत्वेनाङ्गसंस्कार एव कण्डूयनं नात्मसंस्कार इति भावः MayūMāli. 840. 11 ( *on* xi. 4. 16 )

**अङ्गगति** ( aṅga-gati ) *f.* posture of the limbs ( in a painting ) यस्यावलोक्यते पार्श्वं दक्षिणं सव्यमेव वा । कृत्स्नमन्यर्क्षयातं तदङ्गम् ( ? अङ्गम् ) अङ्गगतिस्तथा ।···पार्श्वागतमिति प्रोक्तम् ( प्रतिमास्थानम् ) ViṣṇuDhaP. iii. 39. 18.

**अङ्गगतोक्त** ( aṅgagatokta ) *adj.* stated with respect to a subsidiary rite ( *Uktha* ) स्तवनमङ्गगतोक्तमवस्त्वध्यासतया रविरूप( ? यूप )वत् NayaMañ. III. iv. 3. 5.

**अङ्गगन्ध** ( aṅga-gandha ) *m.* smell of the body, bodily odour पित्तविकारांश्चत्वारिंशतम्···अङ्गगन्धश्च अङ्गावदरणं च CaraS. i. 20. 14 ( 1941 Ed. ); vi. 6. 13 ( 1941 Ed. ); पित्तविकाराः पुनः । ओषः प्लोषः ··· अङ्गगन्धोऽवयवसदनम् AṣṭāSaṁ. i. 107. 20 ( 1. 20 ); दंशा अप्यङ्गगन्धेन ज्ञेयाः AṣṭāSaṁ. ii. 343. 8 ( 6. 41 ); स्वादितश्चाङ्गगन्धोऽन्तः पीतशक्त्यामृतं यथा YogVā. iii. 73. 16.

**अङ्गगमन** ( aṅga-gamana ) *n.* falling on the body ( नोच्छिष्टं कुर्वते मुख्या विप्रुषोऽङ्गे पतन्ति याः ) अङ्गगमने त्वङ्गस्य क्षालनादिनैव शुद्धिः ManvaVi. 682. 1 ( *on* 5. 141 )

**अङ्गगायत्री** ( aṅga-gāyatrī ) *f.* Gāyatrī *mantra* connected with ( the touching of ) the limbs ( *aṅganyāsa* ) ( त्वरिताङ्गान् समाख्यास्ये ) अङ्गगायत्री प्रणीता हूंकाराद्या दलाग्रके AgniP. 308. 8.

[1]**अङ्गगुण** ( aṅga-guṇa ) *m.* feature or quality of the subsidiary or auxiliary rite अङ्गगुणेन प्रधानगुणस्य विरोध एतस्मिन्, अङ्गगुणो बाध्येत S'ābaBh. 2248. 22 ( *on* xii. 2. 25 ); अङ्गगुणेन प्रधानगुणबाधस्यान्याय्यत्वात् ṬupṬ. 17. 25 ( *on* iv. 1. 48 ); अङ्गगुणोऽप्यसौ ··· बलीयान् TantrRa. 295. 18; S'ivārkaMaDī. i. 304. 19 ( *on* i. 2. 1 ); अङ्गगुणस्यापि प्रधानोपकारकत्वाविशेषेण प्रधानगुणतुल्यत्वादनियमः MayūMāli. 865. 2 ( *on* xii.2. 9 )

[2]**अङ्गगुण** ( aṅga-guṇa ) *m.* **i** innate quality or characteristic ( of S'iva ) तस्मै शिवविषयान् षडङ्गगुणानापादयेत् ĪśānS'iPa. ii. 18. 120( 13 ); **ii** excellent features of limbs अङ्गगुणानभिधातुमुपक्रमते GoviBh. 261. 9 ( *on* iii. 3. 63 )

[3]**अङ्गगुण** ( aṅga-guṇa ) *m.* multiplication by six अमुष्य विद्या···त्रयीव नीताङ्गगुणेन विस्तरम् । अगाहताष्टादशताम् NaiṣC. 1. 5.

[4]**अङ्गगुण** ( aṅga-guṇa ) *m.* characteristics belonging to the ( eighteen ) limbs अमुष्य विद्या रसनाग्रनर्तकी त्रयीव नीताङ्गगुणेन विस्तरम् NaiṣC. 1. 5 ( comm. शिरोहस्तादिभिः षड्भिरङ्गैः, ग्रीवाबाह्वादिभिः षड्भिः प्रत्यङ्गैः, भ्रूनेत्रादिभिः षड्भिरुपाङ्गैः )

**अङ्गगुण** ( aṅga-guṇa ) *nu.* number thirty six बुधस्य भाग्नीषु कुसप्तषट्स्वराः ततस्त्रिपञ्चाङ्गगुणा नवेन्दवः Bhāsv. 4. 7.

**अङ्गगुणध्यान** ( aṅgaguṇa-dhyāna ) *n.* meditation on the excellent features of various limbs or parts ( of the body ) ‘ अथ हैवं स्तुतिभिराराधयामि तथा यूयं पञ्चपदं जपन्तः कृष्णं ध्यायन्तः संसृतिं तरिष्यथ ’ इति शिष्यान् प्रति विधिनाङ्गगुणध्यानोपदेशाच्च GoviBh. 262. 6 ( *on* iii. 3. 64 )

**अङ्गगुणन्याय** ( aṅgaguṇa-nyāya ) *m.* rule or maxim establishing superiority of a quality, attribute or detail of a primary rite which is in conflict with that of the subsidiary ( = **अङ्गगुणविरोधन्याय** ) अयं च न्यायोऽङ्गगुणन्यायाद्भिन्न एव MīmāKau. ii. 321. 3 ( *on* iii. 3. 3 )

**अङ्गगुणविरोध** ( aṅgaguṇa-virodha ) *m.* contradiction or conflict of the details ( quality or attribute ) of the subsidiary ( with those of the primary ) अङ्गगुणविरोधे च तादर्थ्यात् MīmāSū. xii. 2. 25; एवं पौर्वापर्या( ? °र्यं )विरोधाङ्गगुणविरोधादिष्वपि श्रुतिद्वयमुदाहर्तव्यम् TantrVā. 861. 9 ( *on* iii. 3. 14 ); S'arka. 90. 14.

**अङ्गगुणविरोधन्याय** ( aṅgaguṇavirodha-nyāya ) *m.* rule or maxim establishing the superiority of the details ( attributes or qualities ) relating to the primary rite in case of a conflict with the details relating to the subsidiary rite or ritual ( established in MīmāSū. xii. 2. 25 ) अतोऽङ्गगुणविरोधन्यायात्तदपि ( उखाधिश्रयणादि ) आध्वर्यवमेव TantrVā. 1169. 14 ( *on* iii. 8. 20 ); प्रधानभूतस्तुतिबाधोऽङ्गि( ? ङ्ग )गुणविरोधन्यायादयुक्त इति सूचितम् NyāySu.( So. ) 60. 14 ( *on* i. 2. 10 ); न च व्रीहीणां प्रधानाङ्गत्वं येन द्रव्याङ्गभूतेभ्यः शेषकार्येभ्यः अङ्गगुणविरोधन्यायेन बलीयस्त्वं स्यात् S'āstrDī. 480. 16 ( *on* vi. 3. 21 ); लक्षणया वेदैकदेशमन्त्रमात्रपरत्वमङ्गगुणविरोधन्यायात् GuruCandr. i. 263. 13; i. 263. 17; उभयविधमप्यङ्गजातं क्रत्वर्थमेवेति नाङ्गगुणविरोधन्यायावतारः MīmāNyāPra. 232. 4; अङ्गगुणविरोधन्यायेन लक्षणातात्पर्यग्राहकत्वाद् वेदपद एव तदेकदेशऋगादिलक्षणा BhāṭṭDī. i. 245. 10 ( *on* iii. 3. 1 ); i. 336. 21 ( *on* iii. 4. 13 ); गुणीभूतस्योपक्रमस्थत्वे अङ्गगुणविरोधन्यायस्य नावतारः LaCandr. 356 11; युक्तं चैतत् प्रधानभूतविध्यनुरोधेन तदनुग्राहकार्थवादश्रुतिवृत्तित्वरूपधर्मत्यागस्याङ्गगुणविरोधन्यायसिद्धत्वात् MīmāKau. i. 296. 27 ( *on* i. 4. 29 ); ii. 316. 3 ( *on* iii. 3. 2 ); नात्राङ्गगुणविरोधन्यायावतार इति भावः MayūMāli. 273. 6 ( *on* iii. 4. 13 ); 870. 3 ( *on* xii 3. 2 ); अङ्गगुणविरोधन्यायेनान्वाधान एव तद्बाधस्य युक्तत्वात् BhāṭṭCan. 16. 3 ( *on* xiii. 2. 11 )

**अङ्गगुणविरोधाधिकरणन्याय** ( aṅgaguṇavirodhādhikaraṇa-nyāya ) *m.* ( = **अङ्गगुणविरोधन्याय** ) व्रीहीणां प्रधानाङ्गतयाङ्गगुणविरोधाधिकरणन्यायेन ··· च प्राबल्यात्तद्बाधनमनुचितम् VidhiRa. 9( 65. 19 ); MayūMāli. 365. 3 ( *on* iv. 1. 17 ); 524. 20 ( *on* vii. 1. 1 )

**अङ्गगुणाविरोध** ( aṅgaguṇāvirodha ) *m.* absence of incongruity of the subordinate element of the subsidiary rite ( with that of the primary ) कांस्यभोजिवदमुख्येऽप्यविरोधः स्यात् किमङ्ग पुनर्यत्राङ्गगुणाविरोध एव स्पष्टः TantrVā. 1077. 11 ( *on* iii. 6. 9 )

**अङ्गगुण्ठन** ( aṅga-guṇṭhana ) *n.* smearing ( *lit.* covering ) the body ( with holy ashes ) तत्र स्थाने ( भूतीश्वरे ) तु यो भक्त्या कुरुते ह्यङ्गगुण्ठनम् । तस्य यत् फलमुद्दिष्टं तच्छृणुष्व नराधिप । यावन्तो भूतिकणिका गात्रे लग्नाः शिवालये । तावद्वर्षसहस्राणि शिवलोके महीयते SkandP. v( 3 ). 177. 4.

[1]**अङ्गगुप्त्यर्थम्** ( aṅgagupty-artham ) *adv.* for the protection of the body अङ्गदेशे यशःकेतुरिति राजाभवत्पुरा । क्ष्मामाश्रितोऽङ्गगुप्त्यर्थमदग्धोऽन्य इव स्मरः KathāSaSāg. xii. 19. 4.

[2]**अङ्गगुप्त्यर्थम्** ( aṅgagupty-arthaṁ ) *adv.* for the protection of ( the country ) Aṅga, KathāSaSāg. xii. 19. 4.

**अङ्गगुरुता** ( aṅga-gurutā ) *f.* heaviness of the body ऊष्माणमङ्गगुरुताम्··· । लिङ्गं परस्य तु मदस्य वदन्ति तज्ज्ञाः SuśruS. vi. 47. 19; AṣṭāHṛ i. 8. 9; RugVi. 18. 19.

**अङ्गगुहाप्रवेश** (aṅgaguhā-praveśa) *m.* entrance into the cave (in the form) of the body बुद्धौ गुहायां सदसद्विलक्षणं ब्रह्मास्ति··· । तदात्मना योऽत्र वसेद्गुहायां पुनर्न तस्याङ्गगुहाप्रवेशः ViveCū. 268.

**अङ्गगूहन** (aṅga-gūhana) *n.* withdrawing or hiding of the body वामतां प्रातिकूल्यमङ्गगूहनेन न दर्शयेत् JayaMa. 250. 19 (*on* 4. 2)

**अङ्गगौरव** (aṅga-gaurava) *n.* heaviness of the body दोषैस्तत्र ··· मदो मूर्च्छाङ्गगौरवम् SuśruS. iv. 36. 43; तमोगुणोदये तन्द्री मोहो निद्राङ्गगौरवम् SarvaSiSaṁ. 9. 19; कफादरोचकश्छर्दिः कासो मूर्धाङ्गगौरवम् AṣṭāHṛ. iii. 5. 18; AṣṭāSaṁ. i. 176. 5 (1. 36); तत्पूर्वरूपं दवथुः सिरायामोऽङ्गगौरवम् RugVi. 36. 3; अन्नेन चैव संसृष्टे (बस्तौ) छर्दिर्मूर्च्छाङ्गगौरवम् Hastyāyur. 611. 10 (4. 5); स्वस्थानस्थस्य दोषस्य वृद्धिः स्यात् स्तब्धकोष्ठता । ···अङ्गगौरवम् BhāvPra. (Bhā.) 5. 341.

**अङ्गग्रह** (aṅga-graha) *m.* spasm of limbs (of the body) दुःशायितस्य च । बस्तिरङ्गग्रहं कुर्याद्रूक्षो मृद्वल्पभेषजः SuśruS. iv. 36. 44; CaraS. vi. 29. 138 (1941 Ed.); i. 15. 13 (1941 Ed.); कुर्यात् । रूक्षस्य वायुरङ्गग्रहम् AṣṭāSaṁ. i. 137. 17 (1. 2); अङ्गग्रहणे(? हेण) नाडीनां जायन्ते मन्थरा(:) ध्रुवाः NāḍīVi. 72; वातेऽधिके···धमन्यङ्गुलिसन्धीनां संकोचोऽङ्गग्रहोऽतिरुक् BhāvPra.- (Bhā.) 8. (28? 29). 10.

**अङ्गग्रहण** (aṅga-grahaṇa) *n.* use or mention of the word *aṅga* **A i** meaning a stem designated as *aṅga* अङ्गग्रहणाच्च दोषः MahāBh. iii. 445. 1; KāśiVṛ. *on* vi. 4. 2; Pradī. iv. 227B. 20 (*on* iv. 3. 155); अङ्गग्रहणं बह्वजिति तद्विशेषणं यथा स्यान्मत्वन्तविशेषणं मा भूत् SiddhāKau. 247B. 2; LaŚabdeŚe. ii. 537. 20; Prasā. i. 759. 10 **A ii** in the sense of a body or body-part अङ्गग्रहणं किम् ? इच्छावान् CāndraVṛ. *on* iv. 2. 99; असति शरीरवाचिन्यङ्गग्रहणे काणशब्दात् तृतीया स्यात् Prasā. i. 409. 18; **A iii** in the sense of a component part अङ्गग्रहणं किम् ? यथा मृत्पिण्डीभूतः स्वरं लभेत । उभयोराद्युदात्तत्वं मा भूत् KāśiVṛ. *on* ii. 1. 2; **A iv** meaning a subordinate clause अङ्गग्रहणादत्रावान्तरवाक्यान्येव तावदुपात्तानि AbhinBhā. i. 26. 7 (*on* 1. 51); **A v** meaning a constituent rite (of a main ceremony) प्रत्यब्दान्तं तिलं दद्यादिति संग्रहवचनेऽङ्गग्रहणात् BālamBha. i 342. 8 (*on* 1. 101); **B** spasm of limbs (of the body) कृताल्पवीर्यौषधबस्तिरुद्धतः करोति चाङ्गग्रहणं सुदुर्ग्रहम् KalyāKā. 22. 119.

**अङ्गग्रहणप्रयोजन** (aṅgagrahaṇa-prayojana) *n.* function or purpose of the use of the word *aṅga* अङ्गविकारः किमिति । अङ्गग्रहणप्रयोजनप्रश्नः LaŚabdeŚe. i. 483. 7.

**अङ्गग्रहणाननुवृत्ति** (aṅgagrahaṇānanuvṛtti) *f.* non-continuation or discontinuation of the word *aṅga* अङ्गग्रहणाननुवृत्तौ युट एवेण उत्तर इडिति हत्वविकल्पः सिध्यति Pradī. vii. 200. 17 (*on* viii. 3. 78)

**अङ्गग्राम** (aṅga-grāma) *m.* a host of subsidiary rites अथैवांस्त्वभ्यासोऽङ्गग्रामस्य ŚābaBh. 2117. 9 (*on* xi. 1. 33); विकृतिकर्मैव गृहमेधीयः आज्यभागातिरिक्तमङ्गग्रामं स्वोपकाराय नापेक्षते VedāntKa. 401. 7 (*on* iii. 3. 5)

**अङ्गग्राहकता** (aṅgagrāhaka-tā) *f.* inclusion of the subsidiary rites यत्त्वत्र यज्ञकर्मप्राधान्यमङ्गग्राहकतयोच्यते फलसाधनतया च SiddhāSi. i. 45. 25.

**अङ्गग्राहकत्व** (aṅgagrāhaka-tva) *n.* the state of including or taking up the subsidiary rites आनुष्ठानिकोपस्थितेरङ्गग्राहकत्वेऽपि प्रकरणान्तरप्रतिबन्धकत्वस्य क्वाप्यदर्शनात् BhāṭṭDī. ii. 28. 15 (*on* iii. 6. 7); ii. 55. 19 (*on* iii. 7. 20); iv. 256. 23 (*on* xii. 2. 13); iv. 257. 4 (*on* xii. 2. 13)

**अङ्गग्राहित्व** (aṅgagrāhi-tva) *n.* the nature of including the subsidiary rite भेदेनाङ्गग्राहित्वायोगात् व्यवस्थानुपपत्तेः MīmāKau. i. 99. 7 (*on* i. 3. 15); ii. 298. 11 (*on* iii. 2. 38); प्रयोगविधेरङ्गग्राहित्वादङ्गपौर्वापर्यमेव तदपेक्षितम् MayūMāli. 422. 6 (*on* v. 2. 2)

**अङ्गग्राहिन्** (aṅga-grāhin) *adj.* including the subsidiary rite यज्ञकर्म प्रधानमङ्गग्राहि न देवता VedāntKa. 181. 25 (*on* i. 3. 33)

**अङ्गग्लपन** (aṅga-glapana) *n.* exhaustion or fatigue of the limbs अरोचकोऽङ्गग्लपनं गोमूत्रसमगन्धता AṣṭāSaṁ. ii. 188. 25 (6. 3) = AṣṭāHṛ. vi. 3. 27.

**अङ्गग्लानि** (aṅga-glāni) *f.* physical fatigue, exhaustion of the body (असृक्) अङ्गग्लानौ न तु स्राव्यम् CaraS. vi. 29. 39 (1941 Ed.); यत्र स्त्रीणाम्···अङ्गग्लानिं सुरतजनिताम् ··· व्यालुम्पन्ति ··· चन्द्रकान्ताः MeghDū. 67; तथा च छाययापि पत्रपादपच्छायानामपसरति देहिनामङ्गग्लानिः TilaMañ. 148. 11; PavaDū. (Dh.) 21; अङ्गग्लानिर्मनोरुक्तिर्मनोरथविचिन्तनम् (उत्कण्ठानुभवा भावाः कथ्यन्ते) BhāvPra. (Śā.) 88. 11 (4)

**अङ्गघटन** (aṅga-ghaṭana) *n.* close contact or touch of the body उद्दिश्य यद्विरुधदुधममात्मयोनिर्दग्धो मयाङ्गघटनं दयितेन गौर्याः । सिद्धं तदत्र RājTa. (Ka.) 8. 3367.

**अङ्गघटना** (aṅga-ghaṭanā) *f.* movement of the body [*nt.*]

**अङ्गघटित** (aṅga-ghaṭita) *adj.* consisting of the subsidiary rite वस्तुतस्तु अङ्गापेक्षायामङ्गघटितसादृश्यस्यैव पुरस्स्फूर्तिकत्वेन ··· चोदनालिङ्गातिदेशस्य बलवत्त्वात् BhāṭṭDī. iii. 18. 17. (*on* viii. 2. 1); iii. 123. 9 (*on* ix. 2. 11)

**अङ्गच्** (aṅgac) (Gr.) suffix *aṅga*, Uṇā. 1. 118; पतितमितृलृभ्योऽङ्गच् SaraKaṇṭhā. (Gr.) ii. 2. 59; पत्लृ गतौ । पतेरङ्गच्प्रत्ययः । पतङ्गः DhātuPra. 1. 848 (61. 13)

**अङ्गचक्र** (aṅga-cakra) *n.* **A** aggregate of constituents (of a juncture in a drama) रसस्यैवायं विभावादिपरिकरो यदङ्गचक्रमिति AbhinBhā. iii. 62. 6 (*on* 19. 105); **B** aggregate of accessories सर्वाणि शस्त्राणि तवाङ्गचक्रैराविर्भवन्तु त्वयि शत्रुजैत्रे NaiṣC. 14. 80 (comm. अङ्गानां मोक्षोपसंहारादीनां मन्त्रदेवतादीनां चक्रैः समूहैः)

**अङ्गचतुष्क** (aṅga-catuṣka) *n.* group of four (out of six) *aṅga-mantras* (used in *ṣaḍaṅganyāsa*) क्वचिदङ्गचतुष्कस्य अन्तश्चाज(? ञ्ज)नवत्प्रभा । वर्तते मूर्धपूर्वस्य रत्नेष्विव उपाश्रयम् PauṣkS. 33. 44; शेषमङ्गचतुष्कम्··· । चक्रनेमौ तु विन्यस्य JayāS. 29. 100.

**अङ्गचतुष्टय** (aṅga-catuṣṭaya) *n.* **A** tetrad of the means (of royal policy) साम भेदस्तथा दानं दण्डश्चाङ्गचतुष्टयम् । नीतौ क्रमादेशकालरिपुयोग्यक्रमादिदम् MatsyaP. 148. 66; **B** tetrad of divisions (of a song) मुख्यान्यङ्गचतुष्टयविभागेन नर्तकीक्रमप्रवेशादिप्रयोगः AbhinBhā. i. 197. 7 (*on* 4. 302)

**अङ्गचतुष्टयी** (aṅga-catuṣṭayī) *f.* tetrad of constituents नर्मस्फञ्जनर्मगर्भनर्मस्फोटाः सनर्मकाः । कैशिक्याः शास्त्रसम्भूता सेयमङ्गचतुष्टयी SāhiSā. 2. 13; 2. 35.

**अङ्गचन्द्र** (aṅga-candra) *nu.* sixteen पातः शरघ्नः सांशोऽब्दवृन्दात्पुनरङ्गचन्द्रैः Bhāsv. 1. 9 (comm. अब्दपिण्डः शरघ्नः पुनरब्दपिण्डादङ्गचन्द्रैर्भक्ते यल्लब्धं तेन युतः पातध्रुवः स्यात्)

**अङ्गचपल** (aṅga-capala) *adj.* fickle in the (use of the) limbs न पाणिपादचपलो न नेत्रचपलो भवेत् । न च वागङ्गचपल इति शिष्टस्य गोचरः VāsiDS. 6. 42.

**अङ्गचपला** (aṅga-capalā) *f.* name of a celestial woman कलावती गुणवती पुष्पवती अङ्गचपला सुरतकलाकोविदा···एताश्चान्याः सस्यः तस्मिन् मण्डले स्वान् स्वान् गुणान् प्रकटीकृत्य SāmaraU. 238. 10.

**अङ्गचय** (aṅga-caya) *m.* **1** group of limbs विन्ध्यशैलान्तिके तस्य (कामस्य) पतितेऽङ्गचये पृथक् । स्फीतोऽभूदङ्गविषयो विषयः सर्वसंपदाम् RāmāMañ. 11. 1; **2** Perinaeum. [PW.]

**अङ्गचल** (aṅga-cala) *m.* throbbing of the body अग्निस्पन्देऽङ्गचले च यद्भयं यद्वाशिते यदु चेदुरुक्ते । अग्निर्यविष्ठयः प्रणुदतु तद्भयम् BaudhGS. iii. 5. 13.

**अङ्गचलन** (aṅga-calana) *n.* movements of the limbs अलसमेवाङ्गचलनम् । ··· अस्या मृगदृशः SaduktiKa. 144. 20; तत्र च तस्य (तत्र वातस्य) अङ्गचलनादिकार्यकरत्वाद्वाय्वात्मकत्वम् PrakaVi. 709. 18.

**अङ्गचाञ्चल्य** (aṅga-cāñcalya) *n.* unsteadiness or fickleness of the limbs. परिहायाङ्गचाञ्चल्यं यथासुखतया स्थितिः । तदासनं स्वस्तिकादि प्रोक्तम् SkandP. ii(9). 30. 13.

**अङ्गचातुरश्र्य** (aṅga-cāturaśrya) *n.* correct proportion of limbs or ancillaries (गच्छेत्सललितैः पादैः ··· । तथा सौष्ठवसंयुक्तैः) सौष्ठवेनाङ्गचातुरश्र्येण युक्तैः AbhinBhā. ii. 142. 10 (*on* 12. 43)

**अङ्गचालन** (aṅga-cālana) *n.* movement of the limbs अर्धासनेनावस्थानं पार्श्वत्पार्श्वेऽङ्गचालनम् । ··· एतानि गन्तुकामानां चिह्नानील्युपलक्षयेत् BhāvPra. (Śā.) 117. 2(5); 296. 18(10)

**अङ्गचिकीर्षा** (aṅga-cikīrṣā) *f.* desire to perform the accessories अपूर्वार्थतयाङ्गानुष्ठानेऽप्यङ्गचिकीर्षायाः फलरागाधीनत्वं न हीयते PūrvottaVāNaMā. 38. 4.

**अङ्गचिन्तन** (aṅga-cintana) *n.* deliberation on the accessories उपासनचिन्तानन्तरमङ्गचिन्तनं क्रियते इति पादसङ्गतिरर्थसिद्धा ŚrutaPra. ii. 536. 16 (*on* iii. 4. 1)

**अङ्गचिन्ता** (aṅga-cintā) *f.* **i** deliberation on the accessories अङ्गचिन्ता कृता, अङ्गिनिष्ठसिद्धिसमयो निरूप्यत इति सङ्गतिः । ŚrutaPra. ii. 567. 28 (*on* iii. 4. 50); **ii** care of the body (i. e. answering nature's call) इतः ससाध्वसायाता धनश्रीश्रेष्ठिकागृहम् । प्रविशन्त्यङ्गचिन्तार्थोत्थितयोचे भुजिष्यया SamarāSaṁ. 4. 633.

**अङ्गचिमिचिमा** (aṅga-cimicimā) *f.* pricking sensation in the body वैवर्ण्यभ्रमवेपथुमूर्च्छाजृम्भाङ्गचिमिचिमातमकाः (v. l. °तङ्काः) दुष्टपिशिताचृतीये (वेगे) CaraS. vi. 23. 19 (1941 Ed.)

**अङ्गचुम्बिन्** (aṅga-cumbin) *adj.* touching the body अङ्गचुम्बि-

चिबुकं स्थित्वा तथा मां प्रति।…प्रहिताः …द्विताः…कटाक्षच्छटाः SubhāRaK. 17.1.

**अङ्गचूड** ( aṅga–cūḍa ) *m.* name of a Yakṣa अङ्गचूडः शिखावर्तो हेमनेत्रो विभीषणः। …एते चान्ये च बहवो यक्षाः MahāBhā. ii. 10.16.

**अङ्गचेष्टा** ( aṅga–ceṣṭā ) *f.* **A** movement of the limbs यदा शिशुर्विचरति जातमात्रः …। तदङ्गचेष्टां विविधां शरीरे प्रवर्तते वायुबलेन कर्तुम् Hastyāyur. 416.12 (3.8); Vaija. 144.98; सदा प्रवृत्तिरीशस्य स्वभावादेव केवलम्। अङ्गचेष्टा यथा पुंसः काश्चिदुद्देशवर्जिताः AnuVyā. 21B.9 (*on* 2.1); जीवोऽङ्गचेष्टया मान्यः शाखाकम्पेन वायुवत् SamarāSam. 3.256; PrabhāC. 136.12; **B** physical gesture क्रमेणागता तत्र केतराङ्गचेष्टया प्रियसमागमं चिन्तयन्ती KathāK. 55.6.

**अङ्गचेष्टाभङ्ग** ( aṅgaceṣṭā–bhaṅga ) *m.* cessation or stoppage of movements of the limbs दाहो ध्माने तु सर्वगः (पित्तेन आवृते सति)। क्लमोऽङ्गचेष्टाभङ्गश्च ससंतापः सवेदनः AṣṭāSam. i. 305.9 (3.16)

**अङ्गचेष्टार्पण** ( aṅgaceṣṭārpaṇa ) *n.* giving up of the movements of the limbs मौनमुद्रा। …चित्ते तदेकतानता परिकरः। अङ्गचेष्टार्पणं बलिः DakṣiMūU. 15.

**अङ्गचेष्टित** (aṅga–ceṣṭita) *n.* movement of the limbs प्रभुं प्राणधनेश्वरम्। यत्नेनोपचरेन्नित्यं नाहमस्मीति मानवः। दुर्व्याहृताच्छङ्कमानः … इङ्गितादङ्गचेष्टितात् MahāBhā. xii. 83.30; S'ivaP. vii(2). 10.68 (556A.7); रतिः। सौम्यत्वादभिनेया सा वाङ्माधुर्याङ्गचेष्टितैः NāṭyaS'ā. 7.14; PadmP. iv. 12.81; BhāvPra.(S'ā.) 288.19(10); सैव (रतिः) लावण्यपीयूषभूषितैरङ्गचेष्टितैः। प्रकृष्यमाणा शृङ्गारः सरसैरिह कथ्यते SāhiSā. 5.77.

**अङ्गचोदित** ( aṅga–codita ) *adj.* asked by the ruler of Aṅga country अथाङ्गाधिपतिः … स पृच्छति। … ततोऽङ्गचोदितः प्राह पालकाप्यो महातपाः Hastyāyur. 275.12 (2.53)

**अङ्गच्छद** ( aṅga–cchada ) *m.* six petals सिन्दूरपूररुचिरारुणपद्ममन्यत् …ध्वजमूलदेशे। अङ्गच्छदैः परिवृतम् ṢaṭcakraNi. 14.

**अङ्गच्छवि** ( aṅga–cchavi ) *f.* lustre or complexion of the body आलम्बालकमालिका धवलतामालम्बतेऽङ्गच्छविः S'ṛṅgāTi.(Ru.) 2.89; किमात्मनो न पश्यसि … प्रभातप्रदीपिकामिवास्तासन्नजीवितरविमङ्गच्छविं येनाद्यापि वयोधसि वर्तमान इव चेष्टसे YaśasCam. ii. 348.20.

**अङ्गच्छादक** ( aṅga–cchādaka ) *adj.* covering the body अङ्गच्छादकादि द्वितीयं वासो भोजनकाले स्यात् ManuBh. i. 349.11 (*on* 4.45)

**¹अङ्गच्छाया** ( aṅga–cchāyā ) *f.* shadow of the body पतिव्रता गृहे यस्य सफलं तस्य जीवनम्। यस्याङ्गच्छायया तुल्या यत्कथा पुण्यकारिणी SkandP. iii(2). 7.13; पतिव्रतेयम्…लोपामुद्रा…। तवाङ्गच्छायया तुल्या यत्कथा पुण्यकारिणी SkandP. iv. 4.6.

**²अङ्गच्छाया** ( aṅgacchāyā ) *f.* a variety of iron (marked with wavy lines) अङ्गक्षया (v. l. अङ्गच्छाया) च वङ्कं च पोगरस्याभिधात्रयम्। चिकुरं भङ्गुरं लोहात्पोगरं तत्परं मतम् RasRaSa. 5.77.

**अङ्गच्छेत्तृ** ( aṅga–cchettṛ ) *adj.* who mutilates the body (of another) अङ्गच्छेदी परस्याङ्गच्छेत्ता DaṇḍaVi. 66.12.

**अङ्गच्छेद** ( aṅga–ccheda ) *m.* mutilation of a limb (as a punishment) सुवर्णशतमेकं तु वधार्हो दण्डमर्हति। अङ्गच्छेदे तदर्धं तु BṛhaspaSm. 226.3; तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसे NāraSm. 205.8; ManuBh. ii. 228.15 (*on* 8.381); Mitā. 288.1 (*on* 2.215); अङ्गच्छेदं दरिद्रिताम्। अदत्तात्तफलं ज्ञात्वा स्थूलस्तेयं विवर्जयेत् YogS'ā. 2.65 = TriṣaS'aPuC. i. 3.629 = KumāCaSam. 72.3; चतुर्थवारापराधे वधदण्डमङ्गच्छेदं (कुर्यात्) ManvaVi. 951.27 (*on* 8.129); 997.21 (*on* 8.193); वधस्त्रिविधः पीडनमङ्गच्छेदः प्रमापणं च DaṇḍaVi. 20.12; 63.18; अङ्गच्छेदः कर्णाद्यन्यतमच्छेदः DaṇḍaVi. 90.7; 159.19; 314.6; ManvaMu. 347.14 (*on* 8.324); अङ्गच्छेदो वधस्तथा। युद्धमेते ह्युपायाश्च दण्डस्यैव प्रभेदकाः S'ukraNi. 4(1).45; (as a calamity) छिन्नाग्रेऽङ्गच्छेदः कलहः शुष्कद्रुमस्थिते ध्वाङ्क्षे BṛSam. 95.38; (स्वप्ने) अङ्गच्छेदे पुनर्दृष्टे पितृमातृसुतव्ययः PārśvC. 2.64; (as a criminal or abominable act) अङ्गच्छेदोपतापने। दण्डपारुष्यमित्यादि हिंसानन्दः MahāP. 21.45; अत्र श्लेषोपमया … परस्परविरुद्धयोरर्थयोर्बीभत्सशृंगाराङ्गाङ्गिभावयोजनायां जम्बुकी…दत्तदन्तव्रणमधरमास्वाद्याङ्गच्छेदक्रियायामनङ्गभोगक्रियायां वा लग्ना गात्राणामूर्ध्वगतं कर्षणं रतकौशलोत्कर्षं वा प्रकाशयति AuciViCa. 18(22); क्षुद्रपशूनाम् … अङ्गच्छेदे षोडशपणः (दण्डः) Aparā. 817.27 (*on* 2.225); SmṛtiCan. iii. 293.20; अङ्गच्छेदे (कृते) विधातव्यं भूभृताङ्गनिकृन्तनम् MahNirvāT. 11.75; कन्यापक्षान्विनाश्य तेषामङ्गच्छेदं कृत्वा … कन्यां गृहादपहरति ManvaMu. 92.27 (*on* 3.33)

**अङ्गच्छेदन** ( aṅga–cchedana ) *n.* mutilation of a limb (as a crime) दुःखे च शोणितोत्पादे शाखाङ्गच्छेदने तथा। दण्डः क्षुद्रपशूनां तु द्विपणप्रभृतिः क्रमात् YājñaSm. 2.225; BālaKri. i. 280.3 (*on* 2.231); (ताडनलोहितस्रावणादिषु) 'आदिना' शाखाङ्गच्छेदनादिसंग्रहः BālamBha. ii. 309.23 (*on* 2.226); (as a punishment) हान्युद्देशेनाङ्गच्छेदनसर्वस्वहरणमरणान्युपदिष्टानि भवन्ति ManuBh. ii. 226.13 (*on* 8.374); वैश्यस्यापि क्षत्रियानन्तरभावित्वेन न्यूनत्वेनान्त्यजत्वात्…शूद्रतुल्यन्यायत्वेनायमेवाङ्गच्छेदनरूपो दण्डः Subodhi. 92.20 (*on* 2.215); DaṇḍaVi. 262.1; स चौरदण्डं प्राप्नुयात्। स च…मारणाङ्गच्छेदनधनाद्यपहाररूपो बोद्धव्यः ManvaMu. 350.14 (*on* 8.342); 352.2 (*on* 8.351); 354.23 (*on* 8.366); शारीरस्ताडनाङ्गच्छेदनरूपः (दण्डः) BālamBha. ii. 326.6 (*on* 2.270); ii. 306.21 (*on* 2.215); ii. 338.2 (*on* 2.288)

**अङ्गच्छेदप्राप्ति** ( aṅgaccheda–prāpti ) *f.* contingency of (punishment in the form of) mutilation of a limb दुष्कृतिनामङ्गच्छेदप्राप्तिः ManuBh. ii. 472.27 (*on* 12.75)

**अङ्गच्छेदाभाव** ( aṅgacchedābhāva ) *m.* absence of excision of limbs तदन्यत्र गमनेऽल्पदोषत्वेनाङ्गच्छेदाभावस्य युक्तिसिद्धत्वेनानुलोम्यगमने … उचितधनदण्डः BālamBha. ii. 336.12 (*on* 2.286)

**अङ्गच्छेदार्हक** ( aṅgacchedārha–ka ) *adj.* who deserves (the punishment of) excision of limb वधार्हकः स्वर्णशतं दमं दाप्यस्तु पूरुषः। अङ्गच्छेदार्हकस्वर्धम् BṛhaspaSm. 96.19; 382.66.

**अङ्गच्छेदिन्** ( aṅgacched–in ) *adj.* who mutilates the body (of another) अङ्गच्छेदी परस्याङ्गच्छेत्ता DaṇḍaVi. 66.12.

**अङ्गच्छल** ( aṅgacchala ) *m.* name of a Yakṣa अङ्गचूडः (v. l. अङ्गच्छलः) शिखावर्तः …एते चान्ये च बहवो यक्षाः MahāBhā. ii. 10.16.

**अङ्गज** ( aṅga–ja ) *adj.* [*f.* –ā] **i** produced along with the body तमिन्द्रो ब्राह्मणो भूत्वा पुत्रार्थे भूतभावनः। ययाचे कुण्डलं वीरं कवचं च सहाङ्गजम् (v. l. तदङ्गजम्) MahāBhā. i. 1. App. 43.34; **ii** sticking or clinging to the body ते तत्र पीत्वा पानीयं विमलं शीतमव्ययम् (v. l. रजः प्रक्षाल्य चाङ्गजम्) Rāmā. iii. 69.29; पद्मिनी पदयोर्लग्नां पुंनागः प्रसभं क्षिपेत्। विमुक्तलग्नङ्गजं पद्मं कथं गम्भीरवेद्यपि S'āliC. 3.27 (F. N. बिन्दुजालं पुनः पद्मम्); **iii** pertaining to the body, produced or grown on the body, bodily वैरूप्यमङ्गजं किंचिन्मा भून्मे देवसत्तम HariVam. 112.127; यौवने…स्त्रीणां विकाराः वक्त्रगात्रजाः। आदौ त्रयोऽङ्गजास्तेषां दश स्वाभाविकाः परे NāṭyaS'ā. 22.5; तत्र भावहावहेलास्त्रयोऽङ्गजाः (अलंकाराः) Avalo. 51.15 (*on* 2.31); Kāvyānu.(He.) 371.1; SāhiDa. 127.3; UjjvaNīMa. 299.7; S'iśuVa. 19.51; नाभसं भौममङ्गजम्। सहेतुसमधीः सर्वमन्तरायं द्युयातिगः YaśasCam. ii. 391.14; (श्रीदर्शनः…ददर्शानङ्गराजमञ्जरीम्) अङ्गजां कान्तितटिनीम् BṛKathāMañ. ix. 1.759; (नरकावनौ) संसार्य मांसलोलत्वमाश्यन्ते मांसमङ्गजम् TriṣaS'aPuC. iii. 4.96; आदौ भावफलं मध्ये राशिस्थानफलं विदुः। पाकावसानसमये चाङ्गजं दृष्टिजं फलम् JātaPā. 18.83; EI. iii. 290.47; लोमानि मूर्धजानि अङ्गजानि च सामान्येन गृह्यन्ते Prasā. ii. 568.15; **iv** produced from the body शान्त्यर्थं ब्राह्मणेभ्यस्तु तिलान् दद्याद् विचक्षणः। … कस्य(?इय)पस्याङ्गजा ह्येते BhaviP. 105B.22 (i. 57.26); **v** born of (one's own) body सुयोधन। असौ मे नाङ्गजः सूनुः यथा प्राप्तस्तथा शृणु PāṇḍaC. 3.465; वत्स! त्वं मया पालितः पुत्रः। सिन्धुलस्त्वङ्गजः PurāPraSam. 13.15; **vi** lovely, ornamental [PW, nt, MW, Apte]; **vii** produced by a supplementary rite [MW, Apte]

**¹अङ्गज** ( aṅga–ja ) *m.* **i** hair (growing on the body) स ददर्श महाकायं भुजङ्गम् …। चित्राङ्गमजिनैः (v. l. अङ्गजैः) चित्रैर्हरिद्रासदृशच्छविम् MahāBhā. iii. 175.13; कललघनाङ्कुरास्थिचर्माङ्गजचेतनताः … क्रमशो गदिताः Bṛhajjā. 4.16 = JātaPā. 4.17; तवोत्तरीयं करिचर्म साङ्गजम् Kirātā. 18.32; (सिन्धुरमेकम्…परीक्ष्य) सूक्ष्ममुखरस्निग्धाङ्गजराजिभिरुणतरबिन्दुमालाभिश्च निचितोचितप्रतीकम् YaśasCam. i. 297.6; शीतो हृष्टाङ्गजो गुरुः BhāvPra.(Bhā.) 8(23).7; **ii** son प्रजापतिस्त्वं भविता दशानामङ्गजोऽप्यलम् MatsyaP. 13.21; श्रीडेरभटस्याङ्गजः … श्रीध्रुवसेनः EI. i. 88.36 = iv. 78.35; xxii. 118.30; श्रीयज्ञवर्मनामा तदङ्गजोऽभून्महीपतिः EI. ii. 13.6; पराभिभवमात्रेण क्षत्रियाणां कृतार्थता। यतः सहस्रकिरणं ततो मुञ्च ममाङ्गजम् PadmP.(Ra.) 10.147; नाथे तथा स्थिते तस्मिन् विदेशे च गतेऽङ्गजे। … शोकं मेजेऽपराजिता PadmP.(Ra.) 32.102; MukuMā. 25; नूनं भवान्भगवतो योऽङ्गजः परमेष्ठिनः BhāgP. iv. 8.38; v. 9.1; SkandP. iv. 83.54; EI. xiv. 185.17; iv. 283.24; इमं मम धनाङ्गजस्वजनवल्लभादेहजा(:?)सुहृज्जनकमातुलप्रभृतयो भृशं वल्लभाः SubhāRaSam. 257; प्रतिपन्नसर्वाङ्गिस्तवाङ्गजो भविष्यति TilaMañ. 60.18; पुनराह शिवो शिवः। प्रसादं कुरु देवेशि तपस्विन्यङ्गजेऽत्र वै S'ivaP. ii(1). 19.28 (64B.10); EI. ii. 279.24; श्रेष्ठी श्रीधनदेव इत्यभिधया ख्यातश्च तस्याङ्गजः VairāS'.(Pa.) 102; पाणिना मृदु पस्पर्श कुन्ती प्रत्यङ्गमङ्गजान् PāṇḍaC. 8.508; 1.121; स्वीकृतेऽवनितलेऽत्र विधाता त्वत्प्रसुर्यदधिकारिणमन्यम्। नाम नामकरणं तदजातस्याङ्गजस्य पुरतः कुरुतां सः VasaViKā. 5.40; अङ्गजस्यापि ते श्रीरप्यश्रीरिव कृते श्रियः SamarāSam. 3.145; सुप्रतीके सति प्रीते प्रतीते दिग्गजेऽङ्गजे। नैशानीं यस्त्यजत्याशां सत्यं पशुपतिः स तु S'āliC. 3.7; 6.193; यथा किल कश्चिद-

विपश्चित्पुरुषः परुषाशयतया निजमङ्गजं व्यापाद्य राज्यश्रियं प्राप्तुमीहते Syādvā-Mañ. 11 (279); PrabaCin. 20. 23; EI. ix. 156. 10; PrabaK. 96. 25; सखे मह्यं वितीर्णोऽसौ महार्घोऽपि तवाङ्गजः KumāDeC.(So.) 19. 10; Dhūrta. 194; KumāPraPra. 100. 16; तदंगजावुभौ ख्यातौ । वीराख्यविजपालकौ EI. ii. 65. 17; **iii** god of love सुखार्थी कामरूपेण स्मरेदङ्गजमीश्वरम् MatsyaP. 7. 29; रागमादर्शयन्नेष वारुणीयोगवर्धितम् । तिरोभवति घर्मांशुरङ्गजस्तु विजृम्भते Kāvyāda. 2. 318; AvantiKa. 26. 9; अङ्गजं रूपतो जयेत् ··· नरः KalyāKā. 8. 65; देहे येनाङ्गजो दध्रे जाया च स जयत्यजः SaraKaṇṭhā. 223. 15; न काकुवाक्यैरतिवाममङ्गजं द्विषत्सु याचे पवनं तु दक्षिणम् NaiṣC. 9. 93; क्षपितो येनाङ्गजोऽपि चापधराद्यः YudhiVi. 1. 2; अलंकृतं साङ्ग इवाङ्गजः शनैरसावयासीदभिषेकमण्टपम् Acyutarā. 3. 34; Nāräy. iv. 16. 6; आसीदन्यादृगूष्मायितमङ्गजस्य S'ivLī. 20. 34; तदेन्द्रजालसंरम्भं समजृम्भयदङ्गजः । प्रविष्टामपि गेहं तां यन्मे प्रावेशयन्मनः Mukundā. 218; ĀnandRa. 2. 1 (6); TārāS'a. 50; EI. ix. 69. 16; मनसि नो कस्याङ्गजः क्रीडति VairāS'.(Pa.) 29; अङ्गजो मन्मथे सुते । मदे केशे AnekāSaṁ. 3. 131; **iv** feather (of a peacock) शोभिता । ··· अङ्गजेन मयूराणामङ्गदेन च भास्वता HariVaṁ. 47. 44; **v** passion सत्त्वं तिरोभवति मीतमिवाङ्गजाग्रे: YaśasCam. i. 282. 3; यत्त्वं दुहितरं गच्छेरनिगृह्याङ्गजं प्रभुः BhāgP. iii. 12. 30; [Kośas give meanings like vital airs, S'abdaRa.(Vā.) 4084; nail : NānārthaMa. 419; something produced from oneself (*svaja*), ViśvaLoK. 68. 16; inhabitant of the country of Aṅga अङ्गजं रुधिरेऽनङ्गे केशे पुत्रे मदे पुमान् । नागरे नखरेऽपि NānārthaMa. 419; elephant : KośaKaT. 2. 4371; *m., n.* disease (*roga*), Vaija. 257. 10; NānārthaSaṁ. ii. 53. 76; MediK. 32. 19; NānārthSaṁ. 4. 39; ViśvaLoK. 68. 16; *n.* **i** blood, (*rudhira*), AnekāSaṁ. 414; Vaija. 257. 10; TrikāS'e. iii. 3. 82; AnekāSaṁ. 3. 131; (*only* NānārthSaṁ. 4. 39 gives *m.*); **ii** flesh (*piśita*), DhanvNi. 264. 5.

²**अङ्गज** (aṅga–ja) *adj.* [*f.* –ā] born in the country of Aṅga (नार्यः) मनोरमाः ··· स्युरङ्गजाः AnaṅgaRa. 5. 15.

³**अङ्गज** (aṅgaja) *m.* coin equal to four *paṇas* or 320 cowries बिन्दुकोऽस्त्री तद्द्वये तु पणपाणिकपादिकाः । क्रमात्ततोऽङ्गजो रुच्यः कार्षिकश्च चतुर्गुणाः Vaija. 189. 38.

⁴**अङ्गज** (aṅgaja) *m.* name of an Asura अजक (v. l. अङ्गज) स्त्वनुजो राजन् य आसीद् वृषपर्वणः MahāBhā. i. 61. 17.

**अङ्गजकृत** (aṅgaja–kṛta) *adj.* caused by the god of love किमस्य सुखमादितो भवति देहिनो गर्भके ··· किमङ्गजकृतासुखव्यसनपीडिते यौवने SubhāRaSaṁ. 245.

**अङ्गजकेलि** (aṅgaja–keli) *f.* amorous sport एतान्यङ्गजकेलिभग्नवलयान्येषा परिष्कारभूः Mukundā. 56.

**अङ्गजगण** (aṅgaja–gaṇa) *m.* multitude of hair गृहीता जागर्या ··· अङ्गजगणैः UjjvaNīMa. 393. 4.

**अङ्गजडिमन्** (aṅga–jaḍiman) *m.* heaviness or dull state of the body तस्याः ··· ताः संतापरुजः स चाङ्गजडिमा SaduktiKa. 89. 17; दुःखत्रासापराधाचैरनौर्जित्यं तु दीनता । चाटुकृन्मान्द्यमालिन्यचिन्ताङ्गजडिमादिकृत् BhaktiRaSi. ii. 4. 12.

**अङ्गजत्व** (aṅgaja–tva) *n.* **i** the state of being born of the body पितृस्वत्वोपरमेऽङ्गजत्वस्य हेतुभूतेनोत्पत्तिमात्रसंबन्धेनान्यसम्बन्धाधिकेन जनकधने पुत्राणां स्वामित्वात्तद्धनं पुत्रो लभते VīraMi.(Vyavahāra.) 414. 11; **ii** the state of being produced with the body तीव्रतमसत्त्वस्याङ्गस्यैव करणत्वादङ्गजा इत्युक्ताः । एवं च परस्परसमुत्थितत्वेऽप्यमीषाम् (भावहावहेलानाम्) अङ्गजत्वमेव Kāvyānu.(He.) 371. 18.

**अङ्गजन** (aṅga–jana) *m.* people of the Aṅga (country) (नदीः) एताः पिबन्ति स्वेच्छया शुभाः । यस्याः···कलिङ्गवङ्गाङ्गजनास्तथैते VāmaP. 13. 36.

**अङ्गजनन** (aṅga–janana) *n.* creation of the body बिन्दुरूपा ह्यहं पुत्र ततः सगुणविग्रहा । अनन्तशक्तिराद्याहं सर्वदेवाधिदेवता (v. l. तेनाङ्गजननं मम) KālīViT. 24. 18.

**अङ्गजनपद** (aṅga–janapada) *m.* the Aṅga country चन्द्रच्छायो नाम अङ्गजनपदराजश्रम्पानिवासी SthānṬ. 401A. 6.

**अङ्गजनित** (aṅga–janita) *adj.* produced by a subsidiary (rite) अर्थः अङ्गजनित उपकारः S'ābaBh. 2220. 1 (*on* xii. 1. 4)

**अङ्गजनुस्** (aṅga–janus) *m.* **1** god of love (*lit.* born of the body) तरुणि ··· तव । अतिवल्गुसद्गुणजुषो वपुषः कुशलं किमङ्गजनुषो धनुषः Rāgh. 8. 11; [cf. KalpaK. 455. 40] **2** son [PW]

**अङ्गजनोद** (aṅgaja–noda) *m.* injury caused by the god of love दुःसहोऽयमङ्गजनोदः (comm. अङ्गजस्य कामस्य नोदो व्यथनम्) YudhiVi. 5. 81.

**अङ्गजन्मन्** (aṅgaja–janman) *n.* birth of a son कस्य वा न भवेद्धर्षस्तादृशाङ्गजजन्मनि NemiC. 7. 2.

**अङ्गजन्मन्** (aṅga–janman) *m.* **1** god of love फुल्लाम्भोजभ्रमाद्वा भ्रमदलिकुलयोः पादयोरङ्गजन्मन् अङ्गे त्वं पक्ष्मलाक्ष्याः पुलकिनि मनसः कापि मार्गस्व मार्गम् SubhaDha. 3. 1; मनस्तदीयम्···अङ्गजन्मा । हर्षात् ··· इषुभिर्बिभेद UdaySuKa. 99. 17; 101. 19; 123. 2; 133. 21; जातस्त्रिजगद्विजेता वधूमुखस्यन्दनमङ्गजन्मा NemiNir. 1. 52; इमाम् ··· वपुष्मतीं कीर्तिमिवाङ्गजन्मनः । ··· अमंस्त शृङ्गाररसाधिदेवताम् Nalābhyu. 4. 29; तत्रावनीन्दुस्तरलेक्षणाभिः ··· अपाङ्गैरालक्षितः साङ्ग इवाङ्गजन्मा Raghunā. 7. 61; 12. 72; **2** passion ग्राम्याग्निनेव संकारकूटिका साप्यदह्यत । सर्वंकषप्रभावेन प्रबलेनाङ्गजन्मना BṛKathāS'loSaṁ. 4. 92; **3** son आसीदुमेशवंशावतीर्णस्य महात्मनश्चण्डपतेरङ्गजन्मा सोल्लपेयो नाम UdaySuKa. 12. 6; चणी चाणक्य इत्याख्यां ददौ तस्याङ्गजन्मनः PariPar. 8. 200; विरहः सुसहः केन तादृशस्याङ्गजन्मनः PāṇḍaC. 1. 73; 1. 429; 4. 246; श्रीमन्नेमेश्वरितविशदं साङ्गणस्याङ्गजन्मा चक्रे काव्यम्···विक्रमाख्यः NemiDū. 126; S'āliC. 5. 74; श्रीमत्प्राग्वाटवंशेऽणहिलपुरसुवश्चण्डपस्याङ्गजन्मा । जज्ञे चण्डप्रसादः PurāPraSaṁ. 53. 10.

**अङ्गजन्मपतंग** (aṅgajanma–pataṅga) *m.* god of love in the form of the sun विषयमरुषु भ्राम्यतः कामुकजनपथिकसार्थस्य सन्तापमुत्पादयत्यङ्गजन्मपतंगः KaumuMa. 3. 1 (3)

**अङ्गजन्मरिपु** (aṅgajanma–ripu) *m.* S'iva (*lit.* enemy of the god of love) अनुमितकुचकाठिन्यामधिवक्षःपीठमङ्गजन्मरिपोः । आनन्ददां भजे ताम् (कामाक्षीम्) MūkaPañ. 4. 54.

**अङ्गजन्मसेनापति** (aṅgajanma–senāpati) *m.* chief of the army of the god of love आविर्भवत्यमृतभाजनमङ्गजन्मसेनापतिः शिशिरदीधितिरेष देवः ĀścaCū. 5. 5.

**अङ्गजन्य** (aṅga–janya) *adj.* arising or produced from a subsidiary (rite) तत्र साध्यसाधनांशावनपेक्षितत्वादनादृत्य तृतीयोंऽशो गृह्यते, स चाङ्गजन्योपकारसंपादनात्मा S'āstrDī. 647. 4 (*on* x. 1. 1); गृहमेधीयप्रयोगविधिरङ्गजन्योपकारमपेक्षमाणः S'ivārkaMaDī. ii. 291. 19 (*on* iii. 3. 5); तत्र प्रधानजन्यापूर्वमेव लक्ष्यते उताङ्गजन्यमपि BhāṭṭDī. iii. 45. 16 (*on* ix. 1. 2); स्वाध्यायविधिनैव षडङ्गो वेदोऽध्येतव्य इति विधिनाङ्गजन्यावगमस्याभ्युदयहेतुत्वावगमात् BhāṭṭCin. ii. 33. 2 (*on* i. 3. 6); MayūMāli. 647. 19 (*on* x. 1. 1)

**अङ्गजन्यत्व** (aṅgajanya–tva) *n.* the state of being produced by a subsidiary (rite) आग्नेयोत्पत्त्यपूर्वस्य प्रधानजन्यत्वेन प्रयोजकत्वशक्तियुक्तत्वेऽपि दीक्षणीयोत्पत्त्यपूर्वस्याङ्गजन्यत्वेन तदभावशङ्कोपपत्तेः MīmāKau. ii. 145. 10 (*on* iii. 1. 8)

**अङ्गजन्यस्त** (aṅgaja–nyasta) *adj.* found or placed in blood अध्यशेत सुभटव्रजोऽङ्गजन्यस्तनिस्सहतनुस्तमश्रितम् । ··· तन्महारणपरेतकाननम् RāmC. 29. 97.

**अङ्गजपीडित** (aṅgaja–pīḍita) *adj.* tormented by the god of love पद्मसम्मीलनादत्र सूचितो निशि सङ्गमः । आश्वासयितुमिच्छन्त्या प्रियमङ्गजपीडितम् Kāvyāda. 2. 262 = SaraKaṇṭhā. 379. 21.

**अङ्गजप्रिय** (aṅgaja–priya) *m.* friend of the god of love गुरुनितम्बिनीमुपससार चन्द्रो यदा । शनैः···किमिदमाचरस्यङ्गजप्रियेति बहुशो वदन्त्यपससार सा कामिनी TārāS'a. 65.

**अङ्गजबाण** (aṅgaja–bāṇa) *m.* arrow of the god of love अङ्गजबाणविभिन्नो नेह सुखी न परत्र सुखी सः SubhāRaSaṁ. 590.

**अङ्गजब्रह्मविद्या** (aṅgaja–brahmavidyā) *f.* knowledge of the ultimate reality in the form of the god of love तत्र द्रक्ष्यस्यलसगमनामङ्गजब्रह्मविद्याम् MayūSaṁ. 1. 24.

**अङ्गजमहाराज** (aṅgaja–mahārāja) *m.* great king Cupid असौ ··· अङ्गजमहाराजनियतसेवाप्रसितविदग्धविटविदूषकपीठमर्दकषायाद्यनेकयुवजनालङ्कृतवेशवाटसहस्रम्···अभिनवनगरमाससाद ĀnandRa. 3. 25 (36)

**अङ्गजराग** (aṅgaja–rāga) *m.* physical passion अङ्गजरागदीपनादङ्गनोपभोगशक्तिसंधुक्षणम् DaśKuC. 136. 9.

**अङ्गजराजशासन** (aṅgajarāja–śāsana) *n.* command of the god of love श्यामलया ··· संकीर्यमाणा मणिकङ्कणावली । ··· शङ्के ब्रवीत्यङ्गजराजशासनम् UjjvaNīMa. 167. 11.

**अङ्गजराज्य** (aṅgaja–rājya) *n.* kingdom of the god of love सः ··· अङ्गजराज्यसौभाग्यदेवतयेव···मेनकया···अध्यासितचरमभागः···निर्जगाम तारापथे NīlaVi. 10. 16.

**अङ्गजरोमक** (aṅgajaroma–ka) *n.* hair on the body यावन्ति लाङ्गलकमार्गमुखानि भूमेर्भासां पतेर्दुहितुरङ्गजरोमकाणि । तावन्ति शंकरपुरे स समा हि तिष्ठेद्भूमिप्रदानमिह यः कुरुते मनुष्यः MatsyaP. 283. 17.

**अङ्गजवर्ण** (aṅgaja–varṇa) *m.* colour of the body शक्त्या कृतो ह्यङ्गज-

वर्णधर्मैर्भेदः स्फुटं लक्षणतोऽत्र यद्वत् BhaviP. 79A. 29 (i. 40. 30)

**अङ्गजवृत्ति** ( aṅgaja–vṛtti ) *f.* curl of hair तोरणतरवारिनिभास्तुरगेऽङ्गजवृत्तयः श्रेष्ठाः YaśasCam. i. 314. 4.

**अङ्गजवेल्लित** ( aṅgaja–vellita ) *adj.* possessed of dangling hair वदनपङ्कजमङ्गजवेल्लितम् । विजयतां व्रजबालवधूजनस्तनतटीविलुठन्नयनं विभोः KṛṣṇaKa. 3. 54.

**अङ्गजवैरिन्** ( aṅgaja–vairin ) *m.* enemy of the god of love (i. e. S'iva) अङ्गजवैरिमेघे हृदम्बरालम्बिनि हर्षवृष्ट्यै । ... अभूषयद्गात्रमसौ विभूत्या YātrāPra. 2. 69.

**अङ्गजशत्रु** ( aṅgaja–śatru ) *m.* enemy of the god of love (i. e. S'iva) नेत्रमग्निमयमङ्गजशत्रोः संप्रतार्य सुचिराश्रयणेन । दाहशक्तिमपहृत्य तदीयां चन्द्रमा दहति नूनमयुक्तान् Mukundā. 252.

**अङ्गजसंकुल** ( aṅgaja–saṅkula ) *adj.* perplexed by love धर्माधिकानभिसृजन्नथ कर्दमं च वाणीं विधाय विधिरङ्गजसंकुलोऽभूत् Nārāy. iii. 10. 8.

**अङ्गजसुख** ( aṅgaja–sukha ) *n.* amorous enjoyment, love–sport तस्मिंश्च सम्राजि ... अङ्गजसुखमश्नुवाने AvantiKa. 24. 14.

**अङ्गजा** ( aṅgajā ) *f.* 1 daughter मदंशेनाङ्गना(? नाः) षष्टिर्भविष्यन्त्यङ्गजास्तव MatsyaP. 13. 22; 4. 1; PadmP.(Ra.) 101. 5; BṛKathāK. 105. 138; रुधिरं स्रवत् । दृष्ट्वा राज्ञोऽङ्गजा खेदं प्राप्तवती PadmP. iv. 14. 53; S'ivaP. iii. 27. 5 (326B. 12); साकं रत्नेन्दुना राजा पर्यणाययदङ्गजाम् MalliC. 1. 155; 2. 254; 2. 527; शालिभद्रस्वसा मन्ये सुभद्रा न ममाङ्गजा S'āliC. 7. 85; HammīMaKā. 13. 122; 2 name of a daughter of Brahmā कन्या च दशमी पुनः । अङ्गजा इति विख्याता दशमी ब्रह्मणः सुता MatsyaP. 3. 12; 3 *Cannabis sativa* भङ्गाङ्गजा मातुलानी मोहिनी विजया जया MadaPāNi. 20. 326.

**अङ्गजागम** ( aṅgajāgama ) *m.* science of the god of love अङ्गजागमलिपेरुडुनाम्नो व्यञ्जनाय विमलाञ्जनलेपः Acyutarā. 8. 19.

**अङ्गजागमन** ( aṅgajā–gamana ) *n.* sexual intercourse with a daughter अहो कष्टतरं चैतदङ्गजागमनं विभो MatsyaP. 4. 1.

**अङ्गजाग्नि** ( aṅgajāgni ) *m.* fire of passion याता नु सा तानवमङ्गजाग्नितप्ते चिरं तद्धृदये निवासात् JānaHa. 7. 27; YaśasCam. i. 282. 3.

**अङ्गजाङ्कुश** ( aṅgajāṅkuśa ) *m.* hook of the god of love (i. e. nail-mark) क्षतमत्र नागदमनो यदर्पय(? ये)त्परमङ्गजाङ्कुशवरेण तत्क्षमम् UjjvaNīMa. 604. 8.

**अङ्गजाङ्ग** ( aṅgajāṅga ) *n.* body of the god of love येनापादितमङ्गजाङ्गभसितं दिव्याङ्गरागैः समम् ... तस्मिन्मे हृदयं सुखेन रमतां साम्बे परब्रह्मणि DaśaS'lo. 4.

**अङ्गजाड्य** ( aṅga–jāḍya ) *n.* stiffness of the body, indolence of the body पुष्कलशुष्कचन्दनकाष्ठसंदीपितानलेषु मुहुर्मुहुर्जठरपृष्ठपरिवर्तनेन व्यपनयत्सु परुषरजनीपवनसंपर्कजनितमङ्गजाद्य(? ड्य)म् ... दुःस्थितपदातिषु TilaMañ. 141. 6; 196. 5; स्तम्भः स्थूणाङ्गजाड्ययोः AnekāSaṁ. 2. 307; BhaktiRaSi. ii. 4. 13.

**अङ्गजात** ( aṅga–jāta ) *n.* A group of limbs गर्भावक्रान्तौ ... यच्चास्य यदा संतिष्ठतेऽङ्गजातम् CaraS. iv. 6. 21; CaṇḍiS'. 92; BhaviP. 59A. 30 (i. 27. 1); B entire group of accessories विहित(? तं)कृत्स्नमङ्गजातमुपसंहर्तुमशक्तिः S'ābaBh. 640. 13 (*on* ii. 4. 21); सति चैकत्वे यदङ्गजातं क्वचिन्नोक्तं तदविरुद्धमन्यत आनेतव्यम् ManuBh. i. 87. 22 (*on* 2. 29); i. 88. 19 (*on* 2. 29); i. 146. 2 (*on* 2. 136); साधननिवेशि चाङ्गजातम् S'āstrDī. 315. 6 (*on* iii. 6. 16); यावद्धि ... अङ्गजातं निःशेषं नावगतं भवति TantrRa. 232. 11; NyāyRaMā. 120. 10; 170. 5; 171. 7; 174. 14; 211. 24; सर्वमङ्गजातम् ... विधीयेत VedāntKa. 400. 11 (*on* iii. 3. 5); यत्राङ्गजातं पूर्णमुपदिष्टम्, सा प्रकृतिः दर्शपूर्णमासादिः PadMañ. 13. 31; ManvaVi. 1379. 15 (*on* 11. 72); NyāyMāVi. 11. 5; VivaPraSaṁ 198. 22; अङ्गजातमनुष्ठातव्यम् S'ivārkaMaDī. i. 279. 9 (*on* i. 1. 26); i. 510. 9 (*on* i. 4. 1); i. 513. 9 (*on* i. 4. 1); ii. 367. 25 (*on* iii. 3. 46); अङ्गजातं श्येनयागेन समं बुध्यते GuruCandr. ii. 305. 16; VīraMi.(Āhnika.) 91. 1; सर्वं प्राकृतमङ्गजातं कार्यम् BhāṭṭDī. iv. 87. 16 (*on* x. 7. 12); MīmāKau. i. 66. 12 (*on* i. 3. 9); MīmāNyāPra. 232. 4; 232. 18; एकप्रयोगवचनप्रयोज्यमङ्गजातं नावधार्यते MayūMāli. 405. 17 (*on* v. 1. 1); 844. 18 (*on* xii. 1. 1); C group of auxiliary sciences (of the Vedas) तत्राङ्गजाते ... गुरुसुतः शिष्यस्तथापि ... वेदमध्यापयन् तत्काले गुरुवन्मान्यः ManvaVi. 248. 8 (*on* 2. 208)

**अङ्गजात** ( aṅga–jāta ) *adj.* growing on the body लोमशब्दस्याङ्गजातेष्वेव रूढत्वात् Nyās. ii. 716. 10 (*on* vii. 2. 29); NānārthāSaṁ. ii. 53. 77; *m.* god of love निटिलदृग्दग्धाङ्गजातैधसे ... सेयं नतिस्तेजसे YātrāPra. 1. 71.

**अङ्ग(? ग)जानुराग** ( aṅga(? ga)jānurāga ) *m.* love (caused by) Cupid (or of goddess Pārvatī) असौ पुनरत्र ... अङ्ग(? ग)जानुरागसागरहरिणाङ्कपरिणताननम् ... पश्यति स विश्वपतिम् YātrāPra. 9. 51(3)

**अङ्गजापक** ( aṅga–jāpaka ) *adj.* mutterer of auxiliary texts (of the Vedas) द्वारेषु जापकानष्टौ षट्सङ्ख्यानङ्गजापकान् । ... नियोजयेत् VasiS. 35. 19; 43. 15.

**अङ्गजारि** ( aṅgajāri ) *m.* enemy of the god of love (i. e. S'iva) अङ्गजारये ... ते नमः शिवाय S'ivPañNaMā. 17; Nārāy. vi. 23. 9; YātrāPra. 3. 68; 5. 130; S'ivLī. 2. 43.

**अङ्गजालक** ( aṅgajāla–ka ) *n.* multitude of bodies चित्तादिदमुदेत्युच्चैः सदसच्चाङ्गजालकम् । तथा चैतत्स्वयं स्वप्नसंभ्रमेष्वनुभूयते YogVā. v. 91. 11.

**अङ्गजास्त्र** ( aṅgajāstra ) *n.* weapon of Cupid प्रहरतु हरिणा कदम्बपुष्पम् ... यदङ्गजास्त्रम् UjjvaNīMa. 282. 2.

**अङ्गजिघृक्षा** ( aṅga–jighṛkṣā ) *f.* desire to adopt the ancillary rite अङ्गजिघृक्षा यावन्तं कालं मनसि विपरिवर्तते TantrRa. 23. 14.

**अङ्गजिद्ब्राह्मण** ( aṅgajid–brāhmaṇa ) *m.* [aṅgavid ?] Brahmin who knows the ancillary texts of the Vedas तां हाङ्गजिद्ब्राह्मणेष्वन्वियेष S'atBr. XI. iv. 3. 20 ( Sāy. तां वेदाङ्गाभिज्ञेषु ब्राह्मणेषु अन्विष्टवान् )

**अङ्गजोन्मथित** ( aṅgajonmathita ) *adj.* agitated by Cupid ( ध्यायेत् पुरुषोत्तमम् ) अङ्गजोन्मथितम् PañcaRā.(Nā.) v. 2. 30; v. 3. 19.

**अङ्गजोन्माद** ( aṅgajonmāda ) *m.* agitation of passion आविर्भवति नारीणां वयः पर्यस्तशैशवम् । सहैव विविधैः पुंसामङ्गजोन्मादविभ्रमैः Kāvyāda. 2. 256.

**अङ्गजोपवन** ( aṅgajopavana ) *n.* garden of Cupid मृगीदृशः । ... दधुरङ्गजोपवनराजिविभ्रमम् NavaSāC. 15. 36.

**अङ्गज्ञान** ( aṅga–jñana ) *n.* knowledge of the subsidiary things द्वादशनाड्यन्तःप्रवृत्ताः प्राणा एवाङ्गानि अङ्गज्ञानं तदेव ज्ञातेति TriUBr.l.

**अङ्गज्योत्स्ना** ( aṅga–jyotsnā ) *f.* splendour (*lit.* moon-light) of the body दर्शयन्निव । अङ्गज्योत्स्नाभिरश्वत्थां चाविरासीदधीश्वरः DvyāśraKā. 15. 47.

**अङ्गज्वर** ( aṅga–jvará ) *adj.* [AltGr. II. 1. 299] limb-wasting निर्वोचमहं यक्ष्ममङ्गेभ्यो अङ्गज्वरं तव AV. v. 30. 8; v. 30. 9; ix. 8. 5; *m.* fever in the body अपां पत्युः पुष्टीकरणरसपाकः कुमुदिनीकदम्बानामङ्गज्वरहरणशीतौषधिघटः । मृगाङ्कोऽयम् VidaMā. 3. 52.

**अङ्गडिगोपिनाथहरि** ( aṅgaḍigopināthahari ) *m.* name of an image of a deity कृत्वा ग्रामवरं तटाककलितं चाप्पापुराख्यान्वितम् । प्रादादंगडिगोपिनाथहरये नार्दिङ्गुयप्पप्रभुः EI. vi. 122. 148; vi. 124. 184.

**अङ्गण** ( aṅg–aṇa ) *n.* [ DhātuPra. 1. 141 ( 18. 12 ), MAYR. 1. 545 ] cf. **अङ्गन** 1 A vast open area रणाङ्गणं तदभवन्मृत्योराघातसंनिभम् MahāBhā. vi. 59. 15; vii. App. 1. 16(56); करोति कर्म ... दुःखात्मकं प्रेरितः ... तनुमत्संसाररङ्गाङ्गणे ... अनङ्गप्रियः VijñāS'. 77; EI. vii. 104. 6; असृङ्नदीसंनिभसंध्यम् ... समाप्तसंग्राममिवाम्बराङ्गणम् RāmC. 18. 13; RāghPāṇ.(Dha.) 11. 32; YaśasCam. i. 247. 5; संग्रामाङ्गणमागतेन भवता चापे समारोपिते देव SaraKaṇṭhā. 82. 11 = 530. 10 = KāvyPra. 350. 1 = 642. 2; SaduktiKa. 213. 9; यस्य ... संग्रामरङ्गाङ्गणे राज्यश्रीः EI. xii. 262. 10; xxv. 57. 17; रणाङ्गणेष्वगणितभीर्भीमः ... रणाङ्गणार्जितोर्जितजयश्रीवल्लभः EI. iii 308. 18; KathāSaSāg. viii. 4. 91; प्रागुत्तरदिशि सलिलं तत्क्रीडाङ्गणम् MayaMa. 29. 105; यत्र विस्तीर्णमङ्गणम् ( पानतीर्थं प्रकुर्वीत मृगाणां सलिलार्थिनाम् ) Mānaso. iv. 15. 1454; EI. ii. 444. 29; i. 341. 5; iii. 63. 50; श्रीकृष्णक्षितिपस्य भाति विजयस्तम्भः कलिंगांगणे EI. iv. 118. 29; vi. 234. 22; ix. 308. 2; ii. 56. 60; ii. 68. 5; 1 B open area (in front of house), court-yard महाराजाङ्गनं शूराः ( v. l. °णं सर्वे ) प्रविशन्तु Rāmā. ii. App. 6(31); कोष्ठकाङ्गणवर्जानाम् ... सामान्यो भोग इष्यते ArthSā. ii. 49. 9 (3. 8); ( आश्रमम् ... विभूतिभेदैरविचिन्त्यरूपम् ) वलभ्यलिन्दाङ्गणचारुतोरणैः BrahmāṇḍP. ii. 26. 60; ii. 21. 43; प्रमुर्धनपरायणः सततदुर्गतः सज्जनो नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे S'atTrayī. 10 = KāvyPra. 688. 4 = Kāvyānu.(He.) 343. 16 = AlaṅkāSa. 162. 14 = SaduktiKa. 302. 15 = S'ubhāṣi. 3458; आविशद्भिरुटजाङ्गणं मृगैः ... । आश्रमाः ... बिभ्रति श्रियम् KumāSaṁ. 8. 38; नाङ्गणे न च गोपथे ( वेगोत्सर्गं समाचरेत् ) ViṣṇuDhaP. ii. 88. 3; KundaMā. 2. 2; अङ्गणकदलीपलाशस्योपरि शरावद्वयं दत्तम् DaśKuC. 112. 3; EI. viii. 239. 18; शिखिनेव ... नर्तनं कृतमङ्गणे PadmP.(Ra.) 5. 349; पर्णशाला च तस्येयं यस्याः सिंहमतङ्गजौ । अङ्गणे क्रीडतः BṛKathāS'loSaṁ. 14. 49; 21. 75; RāmC. 22. 35; करकुसुमम् ... न चोज्झितमङ्गणे Kapphiṇā. 14. 16; 8. 22; TilaMañ. 11. 9; YaśasCam. ii. 353. 10; अङ्गणं तदिदमुन्मदद्विपश्रेणिशोणितविहारिणो हरेः CaurPañ.(Pariśiṣṭa 1) 31 = S'ārṅgaPa. 567; नारी वा भूमिदेवेभ्यः प्रयच्छेत्प्रयताङ्गणे । ... प्रदीपकम् BhaviP. 795A. 18 (iv. 130. 7); यानम् ... । अङ्गणे काशिराजस्य समुत्तीर्णम् GaṇeP. ii. 51. 16; AdhyāRā. i. 3. 46; ततः प्रवेशयामास जनकः शुकमङ्गणम् YogVā. ii. 1. 22; MahāU. 2. 23; 3. 29; S'ivU. 2. 13; दृश्यन्ते भवनाङ्गणे ... प्रणामार्थिन[:] EI. xix. 269. 41; NavaSāC. 12. 80; तिष्ठ द्वारि भवाङ्गणे SaraKaṇṭhā.

176.4 = 632.2; मण्डपं परितः … अङ्गणम् MayaMa. 25.120; अङ्गणं दिक्षु कर्तव्यम् MayaMa. 27.111; तत्प्राच्यामङ्गणं भवेत् । जयन्तावन्तरिक्षान्तमङ्गणं कारयेत् MayaMa. 29.123; पादुकानां बहिर्भागमङ्गणं तद्विदुः VāstuVi. 6.2; स च प्राकार इत्युक्तः कण्ठः स्यादङ्गणस्य यः SamarāSū. 18.42; 25.103; देवीभवनान्तर्गतपादङ्गणे बभूव UdaySuKa. 19.1; 18.27; स्वगृहस्याङ्गणे तेन … । कुम्भाः … निगूढाः स्थापिता भुवि KathāSaSāg. iii. 5.33; vii. 3.62; SubhāRaK. 22.19; (पारिजातः) आरोप्यतामङ्गणे PārijāHa. 39(2); अङ्गणाद्दक्षिणा शाला हस्तिनी … । अङ्गणात्पश्चिमा शाला महिषी Mānaso. iii. 1.52; NaiṣC. 17.167; यमेवागतं भिक्षुकमङ्गणे पश्यसि । तम् … हनिष्यसि Hitopa. 3.102(6); घटाः करटिनां बद्धाश्च सौधाङ्गणे EI. viii. 210.16; PārśvC. 6.20; SūktiMu. 74.15; Surath. 13.33; 14.58; S'āliC. 7.138; PrabaCin. 31.6; अङ्गणे जानुपदाग्रहस्तैश्चक्रायुधे चङ्क्रमणप्रवृत्ते Yādavā. 4.14; भवच्चरणरजोरञ्जितं ममाङ्गणम् S'iṁhāDvā. 90.7(15); UnmaRā.(Vi.) 28(2); EI. viii. 19.39; (अम्भोजबन्धुः) निशामशेषामुपभुज्य वारुणीं प्राचीमुपेत्याथ तयावधीरितः । … विनिर्याति तदङ्गणाद्बहिः KaṁVa. 4.23; CaitaCa. 253.11(10); कोटिशः करटिनस्तवाङ्गणे HariVi. 5.45; 1.5; 5.64; SvābāSu. 4(9); नवाङ्गनेवाङ्गणेऽपि गन्तुमेष प्रकम्पते RasGaṅ. 261.10; अङ्गणेऽमी महारथाः । विभान्ति ParamāKā. 114.96; PadyaVe. 387; Jīvān. 42.3; सूर्यस्यातपोऽङ्गणे आतपस्य प्रकाशो गृहान्तः स्फुरति SetuBa. 196.27; S'ṛṅgāSar. 84; BālamBha. i. 352.18 (*on* 1.103); i. 551.25 (*on* 1.249); RasSa. 42; अङ्गणं चत्वराजिरे AmaK. 618 = S'abdaRa.(Vā.) 1712 = VīraMi. (Āhnika.) 35.25; अजिरं प्राङ्गणं चत्वराङ्गने (v. l. णे) AbhidhāCin. 1004; NāmS'il. 1837; KoṣaKaTa. 1.2747; **2** spot, blemish, depravity, evil (अङ्कण ?) [DBHS.]; **3** conveyance [APTE]; **4** movement, NānārthaSaṁ. ii. 34.15.

**अङ्गणक** (aṅgaṇa-ka) *n.* court-yard (स्वरं बहिरुपश्रुत्य…सज्जा…तिष्ठेत्) अङ्गणके JayaMa. 235.11 (*on* 4.1); अङ्गणकवापीविशेषैर्भूषिताभिरमरमन्दिरश्रेणिभिः UdaySuKa. 20.18; समागतो वीरः स एष इति चाङ्गणकवर्त्येव दर्शितः UdaySuKa. 87.9; अवाप्य च तस्याङ्गणकवेदिकामायतनस्य UdaySuKa. 104.25; 28.15; मण्डपं परितः … अङ्गणकं भवेत् MayaMa. 25.117; तत्प्राग्दक्षिणकोणे मध्याङ्गणकान्विता सभा…तत्परदक्षिणकोणे मध्याङ्गणकादिसंयुता च सभा MayaMa. 29.106; अङ्गणकदक्षिणके सर्वद्रव्यालयान्तम् MayaMa. 29.148; प्राच्यां तु महाङ्गणकम् MayaMa. 29.155; अङ्गणकोत्तरपार्श्वे कर्तव्या सभा MayaMa. 29.159; 25.101.

**अङ्गणकवर्तिन्** (aṅgaṇakavart-in) *adj.* present in the court-yard अङ्गणकवर्ती यः प्रातः … मया स्फटिकसृष्टिपरिपाण्डुरो दृष्टस्तम् … अतिहरितवर्णमद्राक्षम् UdaySuKa. 28.15; 87.9.

**अङ्गणक्रिया** (aṅgaṇa-kriyā) *f.* construction of a court-yard ऊर्ध्वोर्ध्वमङ्गणं कुर्यात् पक्षशालासमोपरि । सभा वा मण्डपं वापि मालिका चाङ्गणक्रिया MayaMa. 26.163.

**अङ्गणगत** (aṅgaṇa-gata) *adj.* being in the court-yard अङ्गणगतो दृष्टस्ताभ्यां विनायकः GaṇeP. ii. 24.37.

**अङ्गणगुणान्वित** (aṅgaṇaguṇānvita) *adj.* associated with the advantage of a court-yard (मन्दिरम्) राज्ञामुदीरितमशीतिकरैर्विशाले … । त्रिद्वारि चाङ्गणगुणान्वितमष्टसन्धि MayaMa. 26.190.

**अङ्गणतल** (aṅgaṇa-tala) *n.* ground of the court-yard पतितोऽसि तद्भवा(? व)नालिङ्ग(? न्द)तोऽङ्गणतलं तदनु केनापि मृत्युमुखान्मोचितम्…आत्मानं मन्यमानः …पुनरुत्थितवानसि CaitaCa. 23.9(1)

**अङ्गणत्व** (aṅgaṇa-tva) *n.* the state of being a court-yard पार्श्वतः प्रथितवप्रविभ्रमास्तोयदाः शिरसि मण्डपश्रियः । अग्रतः सुरविमानसद्मनामङ्गणत्वमभजन्त संहताः NemiNir. 4.46.

**अङ्गणदीर्घिका** (aṅgaṇa-dīrghikā) *f.* pond or lake (constructed) in a court-yard अथ स्वरेणाङ्गणदीर्घिकाणां संवाहयन्ती कलहंसनादम् । तमित्यवन्तीश्वरमाबभाषे सा मेकलक्ष्माधरराजकन्या NavaSāC. 9.1.

**अङ्गणदेव** (aṅgaṇadeva) *m.* name of a man [JBBRAS. iv. 112.6]

**अङ्गणदेश** (aṅgaṇa-deśa) *m.* region of a court-yard एकाग्रमानसाः सर्वे वेदपाठरता द्विजाः । तेषामङ्गणदेशेषु कण्डूयन्ते कचान् मृगाः SkandP. iii(2). 39.10.

**अङ्गणद्रुम** (aṅgaṇa-druma) *m.* tree in a court-yard तत्र क्रीडामयूरीभिराकृष्याकृष्य लम्बितैः । हारैः कल्पद्रुमायन्ते गृहाणामङ्गणद्रुमाः TriṣaS'aPuC. iii. 2.23.

**अङ्गणद्वय** (aṅgaṇa-dvaya) *n.* pair of court-yards द्विपञ्चविस्तृतायामं पार्श्वयोरङ्गणद्वयम् । …सर्वालङ्कारसंयुक्तमेतदीश्वरकान्तकम् MayaMa. 25.157.

**अङ्गणपादप** (aṅgaṇa-pādapa) *m.* tree in a court-yard (कृष्णस्य) तलेषु तस्याङ्गणपादपानां तालानुकूलेषु गतागतेषु । व्रजस्थिताः स्वर्गसदामशृण्वन् दूरोदितान् दुन्दुभितूर्यनादान् Yādavā. 4.26.

**अङ्गणप्रदेश** (aṅgaṇa-pradeśa) *m.* region of a court-yard द्वारि द्वारसमीपे गृहस्याङ्गणप्रदेश इति यावत् SmṛtiCan. v. 270.19; CaturCin. iii(1). 1183.16.

**अङ्गणप्रान्त** (aṅgaṇa-prānta) *m. n.* border of a court-yard छिनत्ति नाङ्गणप्रान्तप्ररूढं यो विषद्रुमम् । स एव भाविनं हन्त कुलक्षयमपेक्षते PāṇḍaC. 11.168 (Bhavanagar Ed.)

**अङ्गणप्रोक्षण** (aṅgaṇa-prokṣaṇa) *n.* sprinkling of water on the court-yard देववेश्मनि संमार्जनोपलेनाङ्गणप्रोक्षणानि … कुर्यात् VīraMi.(Bhakti.) 83.5.

**अङ्गणबालनीप** (aṅgaṇa-bālanīpa) *m.* young *nīpa* tree in the court-yard अयि शंस शिखावल त्वमेव स्थितवानङ्गणबालनीपमूर्ध्नि । …क्व याता …विलासिनी मे UnmaRā.(Vi.) 36.

**अङ्गणभित्ति** (aṅgaṇa-bhitti) *f.* wall of a court-yard धवलगृहोपरिस्थितो गृहाङ्गणमपश्यन्नपि चतुर्षु पार्श्वेष्वङ्गणभित्तिपर्यन्तं पश्यति NyāyBiṬ. 126.5 (*on* 2.32)

**अङ्गणभू** (aṅgaṇa-bhū) *f.* region of a court-yard प्रणालाख्यं धाराभवनमिदमत्यद्भुततरं स्थितिं धत्ते यस्य क्षितिपतिलकस्याङ्गणभुवि SamarāSū. 31.156; कवीन्द्राणामासन् प्रथमतरमेवाङ्गणभुवश्चलभ्(? द्भ्)न्नासङ्गाकुलकरिमदामोदमधुराः Ekāva. 8.37 (285.9); Kuval. 43(4); मध्येवेश्म समुद्गता तदनु च द्वारान्तरालं गता निर्याताथ कथंचिदङ्गणभुवं प्रेयांस्तु नालोकितः SaduktiKa. 104.6; EI. ii. 414.19.

**अङ्गणभूमि** (aṅgaṇa-bhūmi) *f.* region of a court-yard यमलार्जुनौ तरू उन्मूल्योलूखलगतश्चिरं खिन्नौ । रिङ्गन्नङ्गणभूमौ स्वमालयं प्रापयन्नुहरिः PraboSu. 229; ये दक्षाः समरेषु वानरभटाः … । तेषामङ्गणभूमिमार्जनकृतामन्तर्गतोऽहं कियान् AlaṅkāMañ. 103.8.

**अङ्गणमार्जन** (aṅgaṇa-mārjana) *n.* sweeping of a court-yard स्त्रियः …निर्यान्ति नो लज्जया । गेहादङ्गणमार्जनेऽपि VijñāS'. 95.

**अङ्गणमेदिनी** (aṅgaṇa-medinī) *f.* region of a court-yard (बुधाः) आरुह्याङ्गणमेदिनीषु कलभान् क्रीडोत्सुकानर्भकान् । मोदन्ते यदवेक्ष्य PratāYaBhū. 467.3.

**अङ्गणलग्न** (aṅgaṇa-lagna) *adj.* [*f.* -ā] found in a court-yard शिवस्याङ्गणलग्ना या तस्मात्तां धारयेत् सदा (विभूतिम्) SkandP. i(1). 5.91.

**अङ्गणलाभ** (aṅgaṇa-lābha) *m.* acquisition of a court-yard करवालकरालिते करे युधि कस्यान्तककाङ्क्षिणः क्षणात् । दधतेऽङ्गणलाभशालितां त्रिजगद्रासमहामनोरथाः Kapphiṇā. 5.13.

**अङ्गणवत्** (aṅgaṇa-vat) *adv.* like a court-yard ह्रींकाराङ्गणदीपिका । अङ्गणवत् सर्वसाधारणविश्रान्तिस्थानतया ह्रींकारस्य तदुपमा तस्य दीपिका LalitāTriBh. 324.20 (*on* 41)

**अङ्गणवाटिका** (aṅgaṇa-vāṭikā) *f.* garden in the court-yard आलम्ब्याङ्गणवाटिकापरिसरे चूतद्रुमे मञ्जरीम् … । मन्ये (बाला) रोदिति AmaS'. 78; अङ्गणवाटिकापरिसरे स्वेच्छानतां शाखिकाम् … बाला … पन्थानं विवृताश्रुणा वदनकेनालोक्य किं वक्ष्यति SaduktiKa. 127.1.

**अङ्गणवापिका** (aṅgaṇa-vāpikā) *f.* well in the court-yard वेदिकाज-(? जा)लरूपाद् या निर्यूहे संप्रशस्यते । विधातव्या च सच्छत्रा निबद्धाङ्गणवापिका SamarāSū. 28.45.

**अङ्गणवीथी** (aṅgaṇa-vīthī) *f.* track or path in the court-yard अङ्गणवीथी वसुधा कुल्या जलधिः … । वल्मीकश्च सुमेरुः कृतप्रयत्नस्य धीरस्य Subhāṣi. 2270.

**अङ्गणवेदि** (aṅgaṇa-vedi) *f.* elevated piece of ground in the court-yard अङ्गणवीथी (v. l. अङ्गणवेदिर्) वसुधा…कृतप्रयत्नस्य धीरस्य Subhāṣi. 2270.

**अङ्गणवेदिका** (aṅgaṇa-vedikā) *f.* elevated piece of ground in the court-yard सोऽतिमात्रं तथाणिमानं प्लवगः प्रपेदे । प्रपुप्लुवे मोचितकण्ठपाशः यथा क्षणादङ्गणवेदिकायाम् RāmC. 22.34; सुरप्रसूनैः सुरभीकृतानामारोहणान्यङ्गणवेदिकानाम् Yādavā. 4.25.

**अङ्गणवेदी** (aṅgaṇa-vedī) *f.* elevated piece of ground in the court-yard अङ्गन(v. l. °ण)वेदी वसुधा…कृतप्रतिज्ञस्य HarṣaC. 273.2; अतीत्याङ्गणवेदीं तामिमितां ममतामपि । अन्यभिक्षाचरौन्त्विता तस्थतुः सुस्थितौ पुरः S'āliC. 6.132; S'ārṅgaPa. 230; Subhāṣi. 2270.

**अङ्गणस्थित** (aṅgaṇa-sthita) *adj.* [*f.* -ā] being in the court-yard अङ्गणस्थितायाः मल्लिकायाः सौरभ्यं नास्ति RasSa. 145(2)

**अङ्गणाग्र** (aṅgaṇāgra) *n.* end of the court-yard पित्र्यं प्रासादमासदत् । तस्याङ्गणाग्रवलभीवेद्यां पादं निवेशयन् । उत्ततार द्विपाद् वेत्रिदत्तहस्तस्ततो नृपः TriṣaS'aPuC. i. 4.658.

**अङ्गणान्तर्** (aṅgaṇāntar) *adv.* in the court-yard स योगशक्त्या व्योमाध्वनावातरदङ्गणान्तः S'aṅkaDigVi.(Mā.) 8.9.

**अङ्गणान्तिक** (aṅgaṇāntika) *n.* nearness to the court-yard सशिष्यमभ्यागतमङ्गणान्तिके NavaSāC. 13. 11.

**अङ्गणायात** (aṅgaṇāyāta) *adj.* which has come to the court-yard कल्पद्रुरङ्गणायातोऽप्यदत्त्वा निर्गतः फलम् SamarāSaṁ. 1. 127.

**अङ्गणारोपित** (aṅgaṇāropita) *adj.* placed in the court-yard यथाङ्गणारोपितदीपः … वस्तुजातं प्रकाशयन् LalitāTriBh. 325. 1 (*on* 41)

**अङ्गणाश्रय** (aṅgaṇaśraya) *adj.* [*f.* -ā] which is in a court-yard तामङ्गणाश्रयां धनश्रियमपश्यताम् YaśasCam. ii. 339. 10.

**अङ्गणोत्सङ्गभू** (aṅgaṇotsaṅgabhū) *f.* central region of a court-yard तस्यैव चाङ्गणोत्सङ्गभुवि…उपाविशत् (राजा) UdaySuKa. 48. 6; 66. 1.

**अङ्गणोत्सङ्गरङ्ग** (aṅgaṇotsanga-raṅga) *m.* theatre at the centre of a court-yard अङ्गणोत्सङ्गरङ्गक्रीडाकुरङ्गविहङ्गम् … राजभवनमविशम् NalaCam. 7. 18(15)

**अङ्गणोद्भूत** (aṅgaṇodbhūta) *adj.* grown in a court-yard अङ्गणोद्भूतः कङ्केल्लिमित्र…पश्च धात्र्यस्तं पर्यलालयन् TrisaS'aPuC. iv. 2. 209.

**अङ्गणोपविष्ट** (aṅgaṇopaviṣṭa) *adj.* seated in a court-yard अङ्गणोपविष्टानुपश्रित्य सर्वानप्यात्मसेवकान् प्रत्येकमवदत् TilaMañ. 323. 22.

**अङ्गणोपान्त** (aṅgaṇopānta) *m.* border of a court-yard अङ्गणोपान्तपुञ्जीभूतभूरिभुञ्जानकलोकम्…आहारमण्डपमयासीत् (भूमिपतिः) TilaMañ. 69. 10; 370. 7.

**अङ्गणोप्त** (aṅgaṇopta) *adj.* sown in a court-yard अङ्गणोप्तयवव्रीहिमुद्गमाषाङ्कुरादिभिः PadmP.(Ra.) 4. 109.

**अङ्गतक** (aṅgataka) *m.* [pl.] name of a people तारक्षुरा ह्यङ्गतकाः … तथा पुच्छे जनाः कूर्मस्य संस्थिताः MārkP. 58. 35.

**अङ्गतक्षक** (aṅga-takṣaka) *adj.* who cuts the limbs (वीरभद्रः) उपेन्द्रेन्द्रयमादीनां देवानामङ्गतक्षकः S'ivaP. vii. 31. 84 (584B. 2)

**अङ्गतत्त्व** (aṅga-tattva) *n.* principle of bodily movements तदेवमङ्गतत्त्वविदः … व्यवहरन्ति AbhinBhā. ii. 79. 23. (*on* 9. 212)

**अङ्गतनिमन्** (aṅga-taniman) *m.* thinness or slenderness of the body लावण्येन पिधीयतेऽङ्गतनिमा … कुरङ्गकदृशः SubhāRaK. 18. 1 = SaduktiKa. 87. 24.

**अङ्गतन्त्र** (aṅga-tantra) *n.* **1** one of the sections of a Tantra text संहिता तु निरोधाख्या तत्र द्वादशधा स्मृता । अङ्गतन्त्रमथाद्यम् AhirbuS. 12. 34; **2** single performance of the subsidiaries (serving the purpose of many principals) नात्राङ्गतन्त्रं युक्तम् NyāyMāVi. 631. 3 (*on* xi. 2. 3)

**अङ्गतन्त्रता** (aṅgatantra-tā) principle of a single performance of subsidiaries (serving the purpose of many principals) तेन प्रधानभेदमात्रम्, अङ्गतन्त्रता न भवत्येव VīraMi. (S'rāddha.) 262. 20; तदेवमनेकेषां प्रधानानामगृह्यमाणविशेषत्वे अङ्गतन्त्रता गृह्यमाणविशेषत्वे त्वावृत्तिरित्युक्तम् BhāṭṭDī. iv. 216. 11 (*on* xii. 1. 1)

**अङ्गतन्त्रत्व** (aṅgatantra-tva) *n.* principle of a single performance of the subsidiaries (serving the purpose of many principals) अवेष्टावङ्गतन्त्रत्वं भेदो वा लिङ्गतोऽग्रिमः NyāyMāVi. 653. 17 (*on* xi. 4. 3)

**अङ्गतस्** (aṅga-tas) *adv.* **1** in respect of a limb यद्यङ्गहीनः स्यादङ्गतो वा विरुज्येत ĀpaS'S. vii. 12. 2; **2** as in the section governed by the *sūtra aṅgasya* (P. vi. 4. 1) सिद्धं त्वागमादेशानामङ्गतः स्त्रीप्रकरणे वचनात् Vār. 3 (*on* P. iv. 1. 36); **3 A** as regards the body क्लीं कृष्णायाङ्गतोऽवतु PañcaRā. (Nā.) iv. 5. 14; **3 B** [Abl.] from the body अयुध्यमानस्योत्पाद्य ब्राह्मणस्यासृगङ्गतः । दुःखं सुमहदाप्नोति ManuSm. 4. 167; निर्जगाम स रोमाञ्चस्वेदरूपी तदङ्गतः ViṣṇuP. i. 15. 48; ममाङ्गतो यथोत्पन्नस्तस्मादङ्गारको ह्ययम् BhaviP. 65B. 13 (i. 31. 19); सः … वारबाणादिमङ्गतः । अवतार्य BṛKathāS'loSaṁ. 23. 19; घनादङ्गाक्षिनिष्पत्तिः केशरोमाणि चाङ्गतः TaiUBhāVā. 77. 17(2); **3 C** from the limb प्रत्यङ्गमङ्गतस्तस्य शक्तिं तेनाक्रमेद् बुधः MālinīT. 21. 18.

**अङ्गता** (aṅga-tā) *f.* **A** the state of being a constituent or a subsidiary or of secondary importance अनङ्गसमाश्रितस्य स्वयमङ्गता कल्प्येत S'ābaBh. 1295. 10 (*on* v. 1. 12); कर्मण्येकत्र चाङ्गता VākyaPa. 1. 6; कथं पुनरङ्गता नास्ति Bṛha. 3. 3 (*on* i. 1. 1); अत्रापि साक्षात्करणप्रवृत्तावङ्गतेष्यताम् BrahmSi. 158. 16; वर्णेषु व्यज्यमानस्य नास्य प्रत्यायनाङ्गता TattvSaṁ. 2695; एते भवन्त्यप्रतिमास्तु पादाश्चिकित्सितस्याङ्गतया प्रतीताः KalyāKā. 7. 42; तमेतमिति वाक्यात्तु यागादेः प्रत्युताङ्गता BṛĀraUBhVā.(Sambandha.) 342; कथं पुनरङ्गता व्याकरणस्य NyāyMañ. i. 391. 5; उत्तरकलाश्च ताः प्रायशस्तन्त्रस्याङ्गतां प्रतिपद्यन्ते JayaMa. 32. 11 (*on* 1. 3); पुच्छस्याङ्गतया न प्राधान्यम् Bhām. 135. 14 (*on* i. 1. 12); तस्य तावत् स्वयमङ्गता कल्प्येत TantrRa. 254. 17 (*on* v. 1. 12); ब्रह्मचर्यादयः … प्रायश्चित्तानां कृच्छ्रादीनां चाङ्गतया कार्याः Aparā. 1228. 16 (*on* 3. 312); पर्यायोक्तस्य वाक्यार्थोऽप्यङ्गतयेति VakroJī. 191. 3; विषभक्षणवाक्यस्य सुहृद्वाक्यत्वेनाङ्गता कल्पनीयेति KāvyPra. 228. 4; विषभक्षणवाक्यस्य क्रु(? सुहृ)द्वाच्यत्वेनाङ्गता कल्पनीया Kāvyānu.(He.) (comm.) 33. 16; समासोक्त्यादेरनुप्राणकत्वं नाङ्गता AlaṅkāRa. 44(35); यत्र मनोविकृतिरङ्गतया भासते तत्र शृङ्गारादय एव रसाः RasTa 28. 6; प्रशंसन्ति अङ्गतया प्रशस्तानीति वदन्ति ManvaVi. 419. 27 (*on* 3. 235); न चाङ्ग्येवाङ्गतां गन्तुमुत्सहते Sarva-DaSaṁ. 15. 168; सर्वशास्त्रस्य चाङ्गतया चेष्यते NyāySu.(Ja.) 9B. 7 (*on* i. 1. 1); तेन वाच्यं सादृश्यम् … अङ्गतां नीतम् SāhiDa. 241. 5; मननस्य तु…निदिध्यासनेऽङ्गता सिद्धा Nyāyāmṛ. 616B. 5; अङ्गतां यत्र सुहृदो मुख्या गौणाश्च बिभ्रति BhaktiRaSi. iv. 8. 18; (श्रवणम्) प्रमेयावगमं प्रत्यङ्गतया … विधीयते AdvaiSi. 875. 6; उत्प्रेक्षासमासोक्त्योरङ्गता निर्बाधा Kuval. 171(252); व्रीह्यवयवानामङ्गता MayūMāli. 478. 5 (*on* vi. 3. 14); शृङ्गाररसाभासो नृपविषयककविरतेरङ्गतया निबद्धः AlaṅkāMañ. 230. 5; प्रतिपाद्येषु मुख्यत्वमङ्गतान्यच्च यद्भवेत् NityoNi. 1. 23; **B** the state of being a limb or body समुपयान्तु जगन्ति ममाङ्गताम् Stotrā. 8. 7; अङ्गतां हरिदिगङ्गनामुखे भूषणत्वमुपयाति चाद्भुतम् BhāvS'. 33; **C** state of being a base (before a suffix) अनेन न्यायेनाङ्गतया प्राप्तो नुम् LaS'abdeS'e. i. 75. 11.

**अङ्गताग्राहक** (aṅgatā-grāhaka) *adj.* conveying subservience न ह्यत्र शामित्रवन्मासाग्निहोत्रीयश्रपणे तस्याङ्गताग्राहकप्रमाणाभावः BhāṭṭDī. iv. 226. 18 (*on* xii. 1. 6); MīmāKau. ii. 26. 17 (*on* ii. 3. 4)

**अङ्गताग्राहकत्व** (aṅgatāgrāhaka-tva) *n.* the state of being an indicator of subservience आनन्तर्यस्यावर्जनीयत्वादङ्गताग्राहकत्वानुपपत्तेः BhāṭṭDī. i. 206. 21 (*on* iii. 1. 14); MīmāKau. iii(2). 264. 21 (*on* ii. 2. 23)

**अङ्गताडन** (aṅga-tāḍana) *n.* stroking or beating the limbs (of the body) तस्यैव (ग्रन्थेः) विदह्यमानस्य तोददाहभेदाङ्गताडनादयो वेदनाविशेषाः प्रादुर्भवन्ति Hastyāyur. 386. 3 (3. 5)

**अङ्गताति** (aṅga-tāti) *f.* group of limbs, body कामः कलावति जगन्ति विजेतुकामः…तव कामयतेऽङ्गतातिम् PadyaVe. 188.

**अङ्गतानङ्गीकार** (aṅgatānaṅgīkāra) *m.* non-acceptance of being the cause तत्सन्निधिमात्रस्याङ्गतानङ्गीकारात्परिहृतम् NyāyRaMā. 96. 10.

**अङ्गतानियामकत्व** (aṅgatāniyāmaka-tva) *n.* controlling the state of being expedient or subservient न चानन्तर्यस्य बहुषु पठितेषु कस्यचिदवर्जनीयत्वात् नाङ्गतानियामकत्वमिति वाच्यम् MīmāKau. ii. 214. 9 (*on* iii. 1. 24)

**अङ्गताप** (aṅga-tāpa) *m.* **A** sweating (warming) of the body प्रयुज्यते शयानस्य चाङ्गतापो बहुशः खादिराङ्गारैः SuśruS. iv. 32. 4; **B** heat of the body, bodily pain or affliction श्रुत्वा गुणान्भुवनसुन्दर शृण्वतां ते निर्विश्य कर्णविवरैर्हरतोऽङ्गतापम् BhāgP. x. 52. 37; नाहं दूती भवामि प्रथितपृथुगुण श्रीनृसिंहक्षितीन्द्र ब्रूमः श्रेयस्करं तेशृणु हरिणदृशो जृम्भमाणेऽङ्गतापे । उद्बुद्धं पुण्डरीकैः Ekāva. 8. 31 (12) (272. 12)

**अङ्गतापकृत्** (aṅgatāpa-kṛt) *adj.* which causes pain to the body (अथापस्मारः) आवेशो दुःखमोहाद्यैरपस्मारोऽङ्गतापकृत् PratāYaBhū. 255. 2.

**अङ्गतापन** (aṅga-tāpana) *adj.* tormenting the body तस्य भूमण्डलं सर्वं शासतः पृथिवीपतेः । एकदा तु महामोहः प्रादुरासाङ्गतापनः AhirbuS. 45. 11.

**अङ्गताप्रतिपादन** (aṅgatā-pratipādana) *n.* statement conveying subordinate status मनसैवेदमाप्तव्यमित्यादिश्रुतेश्चित्तैकाग्र्यस्याङ्गताप्रतिपादनपरत्वात् TattvPradī.(Ci.) 344. 1.

**अङ्गताप्रापकत्व** (aṅgatāprāpaka-tva) *n.* the state of leading to a subservient status तथा च परस्य पूर्वकल्पनाद्वारा साधनत्वादिबोधनेनैवाङ्गताप्रापकत्वात् LaCandr. 356. 26.

**अङ्गताप्रापण** (aṅgatā-prāpaṇa) *n.* leading to a subservient status पूर्वेणाङ्गताप्रापणात् शीघ्रगामित्वेन श्रुत्यादीनां लिङ्गाद्यपेक्षया प्राबल्यम् LaCandr. 356. 27.

**अङ्गताबोध** (aṅgatā-bodha) *m.* knowledge of the ancillary or subordinate status आकाङ्क्षां विनापि तत्राङ्गताबोधात् MīmāKau. ii. 256. 15 (*on* iii. 2. 20); ii. 258. 24 (*on* iii. 2. 20); BhāṭṭDī. ii. 125. 2 (*on* iv. 3. 3); अर्थस्याङ्गताबोधरूपस्य प्रयोजनस्य विप्रकर्षात् LaCandr. 356. 23.

**अङ्गताबोधक** (aṅgatā-bodhaka) *adj.* indicative of a subsidiary status तत्त्वं चाङ्गताबोधकलिङ्गादिकल्प्यश्रुतिकल्पनप्रतिबन्धकत्वम् MīmāKau. ii. 368. 4 (*on* iii. 3. 14); BhāṭṭDī. i. 258. 12 (*on* iii. 3. 7); यदेव विद्यया करोतीति वाक्यं तु अर्थज्ञानस्य नाङ्गताबोधकम् BhāṭṭCin. i. 3. 11 (*on* i. 1. 1); i. 3. 13 (*on* i. 1. 1); अङ्गताबोधको विधिर्विनियोगविधिः BhāṭṭCin. i. 75. 17 (*on* i. 1. 4); ii. 14. 7 (*on* i. 2. 4); ii. 34. 8 (*on* i. 3. 6); तत्र पूर्वपक्षः श्रुतिलिङ्गादेरङ्गताबोधकस्यादर्शनात् LalitāSaBh. 227. 3 (*on* 296)

**अङ्गताबोधन** ( aṅgatā–bodhana ) *n.* indication of the subordinate status कौतुकबन्धनस्यानुवादो नक्षत्रपूजनादावप्यङ्गताबोधनाय VīraMi.(Saṁskāra.) 287. 17; एवं च कालस्य वाक्येनैवाङ्गताबोधनेऽपि इतिकर्तव्यताकाङ्क्षालक्षण-प्रकरणापेक्षितार्थसमर्पणात् प्रकरणानुग्रहोऽपि MīmāKau. ii. 100. 7 (*on* ii. 4. 1); BhāṭṭDī. iv. 14. 7 (*on* x. 5. 9)

**अङ्गतामात्र** ( aṅgatā–mātra ) *n.* only the state of being subordinate किं तु धान्यपदयुक्तमन्त्रस्याङ्गतामात्रे MayūMāli. 593. 23 (*on* ix. 1. 12)

**अङ्गतावच्छेदक** ( aṅgatāvacchedaka ) *adj.* delimiting the subordinate status अङ्गतावच्छेदकस्याश्यादिप्रकाशकऋक्त्वस्य लिङ्गप्रमेयत्वात् MīmāKau. ii. 260. 16 (*on* iii. 2. 21)

**अङ्गतावच्छेदकत्व** ( aṅgatāvacchedaka–tva ) *n.* the nature of delimiting the subordinate status तत्तद्व्यक्तित्वस्याङ्गतावच्छेदकत्वेन बोधितस्य बाधेन BhāṭṭCan. 119. 3 (*on* xvi. 3. 12)

**अङ्गताविधि** ( aṅgatā–vidhi ) *m.* injunction pertaining to the subordinate status अङ्गताविधिकल्पनद्वारा … उभयोपपत्तिरिति सोमेश्वरः BhāṭṭCin. i. 9. 21 (*on* i. 1. 2)

**अङ्गतासंबन्ध** ( aṅgatā–sambandha ) *m.* connection as a subordinate अङ्गतासंबन्धेन होमविशिष्टदधिविधिः … निराकर्तव्यः MīmāKau. iii(2). 272. 11 (*on* ii. 2. 25); ii. 325. 14 (*on* iii. 3. 9); iii(2). 284. 9 (*on* ii. 2. 26)

**अङ्गतासिद्धि** ( aṅgatā–siddhi ) *f.* establishment of being a subordinate न च द्रव्यसम्बन्धमुखेन प्रकृताधिकारापूर्वसम्बन्धादङ्गतासिद्धिः PrakaPañ. 458. 14.

**अङ्गतासिद्ध्यर्थम्** ( aṅgatā–siddhyartham ) *adv.* in order to accomplish the subordinate status केचित्तावदधिकारापूर्वं प्रत्यङ्गतासिद्ध्यर्थमेषामधिकृताधिकारमिच्छन्ति PrakaPañ. 468. 8.

**अङ्गति** ( aṅgati ) *m.* [DEBRU. p. 642; MAYR.] **1** fire अङ्गतिः पुंस्यग्निहोतृब्रह्मवह्निषु MediK. 63. 86; **2** Agnihotrin, (a Brahmin who maintains the sacred fires), MediK. 63. 86; **3** Brahmin, MediK. 63. 86; **4** (three) sacred fires maintained in the Agnihotra rite अङ्गतिः पुनः । पुंस्यग्निहोत्रवह्निषु S'abdaRaSaK. 137. 8; **5** (also *f.*) conveyance, vehicle [Vācas., APTE]

**अङ्गतीर्थ** ( aṅga–tīrtha ) *n.* secondary holy place or holy water अङ्गतीर्थानि अङ्गेभ्यो जातान्यस्यास्तथा तथा BṛDharmaP. i. 5. 58.

**अङ्गतुल्य** ( aṅga–tulya ) *adj.* similar to an accessory अङ्गेनमङ्गतुल्यं वा धान्यैर्वाजैस्तिलैः फलैः…जुहुयात् PauṣkS. 29. 66; यद्यपि आधानं न सोमस्याङ्गम्, तथापि अङ्गभूताग्निसंस्कारत्वादङ्गतुल्यमेवेति तदीय एव कालो बाधनीयः NyāyMāVi. 299. 24 (*on* v. 4. 5)

**अङ्गतुष** ( aṅga–tuṣa ) *m.* small part of a subsidiary rite निःशेषसमाप्तिर्हि संस्था नाङ्गतुषेऽप्यवशिष्टे संभवति TantrRa. 193. 11.

**अङ्गतेजःप्रसर** ( aṅgatejaḥ–prasara ) *m.* expansion of the bodily lustre श्रियं स दद्याद्भवतां पुरारियदङ्गतेजःप्रसरे भवानी S'ārṅgaS. i. 1. 1.

**अङ्गतोद** ( aṅga–toda ) *m.* pricking pain in the body अङ्गतोदे घृतेनाङ्गं मर्दयित्वोष्णवारिणा । स्नापयेद्रोगिणं वैद्यः RasRaSa. 14. 49.

**अङ्गतोय** ( aṅga–toya ) *n.* sweat, perspiration वपुषि दयितसङ्गतोऽङ्गतोयैः सरयुवराज इवाभिषिच्यमाने HarVi. 27. 14.

**अङ्गत्याग** ( aṅga–tyāga ) *m.* giving up of the subsidiary rite or subordinate act अन्यत्र किञ्चिन्निमित्तवशात्किञ्चिदङ्गत्यागेऽप्याचमनं सिध्यति ViraMi. (Āhnika.) 100. 4.

**अङ्गत्र** ( aṅga–tra ) *n.* armour शय्यासु वृषभः शस्तः पीठे सिंहः शुभप्रदः। अंगत्रछत्रवस्त्राणां वृषभाये ध्वजेऽपि वा VasiS. 39. 183; यावत्तारेययादृच्छिकहतिशिथिलान्यम्बरस्रग्विभूषाशस्त्राङ्गत्राणि भूयाः कथमपि न समीकुर्वते शक्रजेतुः AdbhuDa. 4. 9.

**अङ्गत्रय** ( aṅga–traya ) *n.* triad of subsidiaries तथाङ्गद्वयेनाङ्गत्रयेण च S'ābaBh. 2108. 16 (*on* xi. 1. 11); संयमश्च धारणाध्यानसमाधिसमुदाय इति विभूतिसाधनतया पञ्च( ? ञ्च )भ्यश्च योगाङ्गेभ्यो बहिरङ्गेभ्योऽस्याङ्गत्रयस्यान्तरङ्गतया विशेषज्ञापनार्थमत्र त्रयस्योपन्यासः TattvVai. 119. 10 (*on* 3. 1)

**अङ्गत्रयवैकल्य** ( aṅgatraya–vaikalya ) *n.* deficiency of the triad of conditions तदयुक्तं प्रत्युदाहरणम् । अङ्गत्रयवैकल्यात् Nyās. i. 494. 23 (*on* iii. 1. 7)

**अङ्गत्राण** ( aṅga–trāṇa ) *n.* coat of mail, armour अश्वाश्चैव … वायुवेगाः … । अंगत्राणसमायुक्ताः शतशोऽथ सहस्रशः SkandP. vii(3). 36. 100; अङ्गत्राणैश्च संवृतम् ।…भवेद् बलम् Mānaso. ii. 6. 563; स्नानोपविष्टस्याङ्गत्राणमध्याद् गृहीतचिन्तामणिः KathāK. 93. 28.

**अङ्गत्रोटन** ( aṅga–troṭana ) *n.* marring (*lit.* breaking) of the constituent parts अनेन प्रवेशकादौ उत्कलिकाप्रायं बहुतरसमाससङ्कीर्णमभिनयशाखाङ्गत्रोटनकारित्वात् समाससंशयेनार्थानिश्चायकत्वाच्च न कर्तव्यमित्यपि दर्शयति AbhinBhā. ii. 425. 22 (*on* 18. 36)

**अङ्गत्व** ( aṅga–tva ) *n.* **i** the state of being a subsidiary rite **ii** the state of being a subsidiary (material etc. in sacrifice) **iii** the state of being a constituent part **iv** the state of being a limb (of the body) **v** the state of being accessory, helpful or auxiliary **vi** the state of being subordinate or ancillary **vii** the state of being a pervader **viii** being a means or a cause **ix** the state of being a stem or base **i** the state of being a subsidiary rite पूर्वो वाङ्गत्वात् पिण्डपितृयज्ञः KātyS'S. iv. 1. 28; न चाविहितमङ्गं भवति । तस्मादङ्गत्वाय विधातव्यम् S'ābaBh. 941. 3 (*on* iii. 4. 13); न प्रयुक्तिरङ्गत्वे हेतुः Bṛha. 3. 4 (*on* i. 1. 1); सत्यप्यङ्गत्वे कथं न व्यवधानम् NyāyRa. 940. 15 (*on* 7. 334); अथाङ्गत्वे सति तत एव क्रतूपकारसंपत्तेरङ्गमपि चमसो नाद्रियेत TantrRa. 13. 1; 23. 3; इति भविष्यत्पुराणवचनादमावास्याश्राद्धस्याङ्गत्वमवगम्यते Aparā. 421. 22 (*on* 1. 218); देवकार्यस्याङ्गत्वात्पितृकार्यस्य प्रधानत्वादित्यभिप्रायः SmṛtiCan. v. 282. 4; अङ्गत्वेन प्रयुक्तिः, प्रयुक्तौ च तदङ्गत्वमिति परस्पराश्रयता च TattvPradī.(Ci.) 50. 5; अतो गुणकर्मत्वादङ्गत्वमेतेषाम् BrahmSūBh.(S'rī.) i. 40. 7 (*on* i. 1. 1); न प्रयुक्तिमात्रादङ्गत्वम्, अनङ्गस्याप्युपकारस्य प्रयुक्तिसंभवात् VivaPraSaṁ. 165. 7; अनेन विधिनाङ्गत्वं परोद्देशप्रवृत्तकृतिसाध्यत्वरूपं पारार्थ्यापरपर्यायं ज्ञाप्यते ArthSaṁ. 38. 4; गुणकर्मत्वस्वीकारे यज्ञादीनामङ्गत्वं स्यात् S'ivārkaMaDī. i. 40. 25 (*on* i. 1. 1); i. 40. 27 (*on* i. 1. 1); यत्कर्म प्रति अङ्गत्वमिष्यते, तत्प्रयोगाद्बहिरनुष्ठानेन फलसाधनत्वम् PūrvottaVāNaMā. 19. 2; न च…प्रायश्चित्तस्याङ्गत्वमस्ति SiddhāLeSaṁ. 256. 8; न चाङ्गत्वेन विनातिदेशः प्रधानस्यानतिदेशात् NirṇaSi. 265. 11; तत्राङ्गत्वं मन्यन्ते मीमांसकाः, संस्कारस्य तदर्थत्वात् VīraMi.(Saṁskāra.) 336. 21; मत्वर्थलक्षणायां तृतीयाश्रुतिमैत्वर्थस्यैवाङ्गत्वे मानं स्यात् MīmāNyāPra. 200. 12; चौलोपनयनयोश्चाङ्गत्वेन स्वस्तिपुण्याहवाचनं करिष्ये BālamBha. i. 43. 26 (*on* 1. 11–12); **ii** the state of being a subsidiary (material etc. in sacrifice) यस्मात्त्वं सर्वयज्ञानामङ्गत्वेन व्यवस्थितः MatsyaP. 93. 72 = AgniP. 167. 27; यस्मात्त्वं छाग यज्ञानामङ्गत्वेन व्यवस्थितः VasiS. 18. 168 = BhaviP. 816B. 25 (iv. 141. 65); अभ्युपेतव्यं विशिष्टदेशकालयोरङ्गत्वं कार्यजननाय NyāyKa. 25. 21; तत्र विभक्तिश्रुत्या अङ्गत्वं यथा ‘व्रीहिभिर्यजेते’ति ArthSaṁ. 40. 6; फलार्थस्याग्नेः प्रकृतिरूपेषु विकृतिरूपेषु च क्रतुष्वङ्गत्वमेव नास्ति VidhiRa. 32 (175. 16); द्रव्यस्य केवलमङ्गत्वात् MīmāNyāPra. 197. 12; तेषु गन्धादेः करणत्वादङ्गत्वम् LalitāSaBh. 209. 13 (*on* 255); **iii** the state of being a constituent part अपि वाङ्गानि कानिचिद्येष्वङ्गत्वेन संस्तुतिः सामान्यतो ह्यभिसंस्तवः MīmāSū. iv. 4. 30; मेदास्तस्यास्तु विज्ञेयाश्चत्वारोऽङ्गत्वमागताः NāṭyaSā. 20. 27; पश्चात्तापादिकं नैमित्तिकानां प्रायश्चित्तानामङ्गत्वेनोक्तम् Aparā. 1231. 26 (*on* 3. 313); यत्र नियमानामङ्गत्वमुक्तम् ManvaMu. 68. 20 (*on* 2. 166); **iv** the state of being a limb (of the body); एवं पदारविन्दस्याङ्गत्वेऽप्यङ्गाङ्गिनोरभेदविवक्षया चिन्त्यादिविशेषणोक्तिः VedāntRaMañ. 3. 8 (120. 9); अङ्गत्वं च अङ्गसंस्तवात् । मुखं व्याकरणं तस्य … वेदस्य हस्तौ कल्पान् प्रचक्षते PadMañ. *on* KāśiVṛ. *on* P. i. 1. 0; **v** the state of being accessory, helpful or auxiliary वैदिकेषु कर्मसु वेदाभ्यासादीनामङ्गत्वेनान्तर्भावः ManuBh. ii. 475. 11 (*on* 12. 86); उपकारकत्वमङ्गत्वम् Kāvyānu. (He.) 347. 2; आशौचापगमे पौर्णमास्यादिकाले कर्तव्या (जातेष्टिः) । शुद्धकालस्याप्यङ्गत्वात् Subodhi. 32A. 5 (*on* 2. 56); यदि वेदार्थज्ञाने विचारस्योपयोगः स्यादङ्गत्वेन व्याकरणस्येव विचारः श्रवणं स्यात् AṇuBh. 2. 20 (*on* i. 1. 1); अङ्गत्वानङ्गत्वाभ्यां संशयः S'ivārkaMaDī. ii. 358. 11 (*on* iii. 3. 41); मन्त्रलिङ्गाद् व्रीहिप्रयोग एवाङ्गत्वं न तु यवप्रयोग इति सिद्धान्तहानापत्तेः VaiyāBhū. 86. 20 (*on* 22); अपरे तु श्रवणं प्रधानं मनननिदिध्यासनयोस्तु श्रवणात्पराचीनयोरपि श्रवणफलब्रह्मदर्शननिर्वर्तकतया आरादुपकारकतयाङ्गत्वमित्याहुः VedāntPari. 349. 2; संन्यासस्य प्रयाजादिवदङ्गत्वमेवाश्रयणीयम् SiddhāTa. 35. 11; पाठादीनाम् … अदृष्टार्थकत्वकल्पनाया अन्याय्यत्वेनाङ्गत्वे सिद्धे अङ्गे फलश्रुतिरर्थवाद इति कल्प्यते ViraMi. (Āhnika.) 17. 11; अङ्गत्वं कार्यजनने सहकारित्वम् BhāṭṭCin. i. 2. 9 (*on* i. 1. 1); ननु मन्त्राणामङ्गत्वे सत्यं विचारः संगच्छते MayūMāli. 15. 7 (*on* i. 2. 4); **vi** the state of being subordinate or ancillary धार्यं चक्रं महात्मनः। अङ्गत्वात्सर्वधर्माणाम् VṛHārīSm. 8. 39; सत्यपि कालस्याङ्गत्वे तदभावेऽधिकारनिवृत्तेः ManuBh. i. 95. 6 (*on* 2. 38); i. 100. 7 (*on* 2. 49); i. 128. 17 (*on* 2. 101); i. 216. 15 (*on* 3. 18); भगवत्प्रभावस्य मुख्यत्वे द्वयोरप्येतयोरङ्गत्वात् भूषणत्वम् VakroJī. 163. 21; 212. 14; तदेतदङ्गत्वं किंचिद्याति AbhinBhā. iv. 2. 11 (*on* 28. 2); अङ्गिन्यङ्गत्वमाप्तौ यौ तौ न दुष्टौ परस्परम् KāvyPra. 453. 3; 685. 5; तत्र रसोपकारप्रकारानाह तत्परत्वे काले ग्रहत्यागयोर्नातिनिर्वाहे निर्वाहेऽप्यङ्गत्वे रसोपकारिणः Kāvyānu.(He.) 20. 10; 137. 7; 347. 1; अत्रारण्ये वर्णनीये रामचरितमङ्गत्वेन वर्णितम् AlaṅkāSa. 184. 13; तत्र करुणा-(? °णा)रसस्याङ्गत्वेन भासमानत्वात्तत्र करुणात्मकव्यपदेशः RasTa. 21. 3; सहभाव-

नियम एवाङ्गत्वम् S'rutaPra. ii. 533. 24 (*on* iii. 3. 63); रसभावरसाभासभावाभासभावप्रशमानामङ्गत्वमेव Ekāva. i. 13. 47 (31. 2); viii. 2. 15 (197. 6); नाटके …शृङ्गारवीररसयोरन्यतरस्य प्राधान्यमन्येषां रसानामङ्गत्वेनानुप्रवेशः PratāYaBhū. 103. 4; पोषणं प्रकृतस्येति चेदङ्गत्वं न तावता RasāSu. 201. 2 (2. 259); लक्ष्मीसुदर्शनादीन् प्रति वासुदेवादेरङ्गत्वं क्वचित् क्वचित् प्रतिपाद्यते NyāySiA. 234. 19; पुरुषस्याङ्गित्वेन शरीरस्याङ्गत्वेन च लौकिकपरीक्षकव्यवहारो न स्यात् TattvPrakā. 96B. 8 (*on* ii. 2. 8); ग्रहाणामत्र मुख्यत्वान्नाङ्गत्वेन प्रपूजनम् MahNirvāT. 13. 151; केचिद्यात्रायां संकल्पो न कार्यः अङ्गत्वेन निष्फलत्वादित्याहुः VīraMi.(Tīrtha.) 31. 21; व्यभिचार्यन्तरस्याङ्गत्वेऽपि न क्षतिः RasGaṅ. 94. 5; 116. 11; 404. 7; रसानां पुनरन्येषामङ्गत्वं प्रतिपाद्यताम् SāhiSā. 6. 10; **vii** the state of being a pervader (i. e. a *vyāpaka* in the concomitant relation) अङ्गत्वं व्यापकत्वम् TātpaT.(Vā.) 107. 19 (*on* i. 1. 2); **viii** being a means or a cause एकादिशब्दवाच्यायाः कर्मण्यङ्गत्वमिष्यते । संख्यायाः खनति द्वाभ्यामिति रूपाद्धि साश्रिता VākyaP. 3 (1). 54; अङ्गत्वे तु ज्ञापकानुप्रवेशान्नानवधारितार्थप्रतीतिसिद्धौ हेतुः SphoṭSi. 117. 1; ब्रह्मज्ञानपरिपाकाङ्गत्वाच्च पारिव्रज्यस्य न अनधिकृतविषयत्वम् BrahmSūBh.(S'aṅ.) 733. 15 (*on* iii. 4. 20); 794. 8 (*on* iv. 1. 18); 795. 8 (*on* iv. 1. 18); यज्ञादीनामङ्गत्वेन ब्रह्मज्ञाने विनियोगात् Bhām. 37. 19 (*on* i. 1. 1); सत्ताज्ञानस्य तत्राङ्गत्वम् KhaṇḍanKhā. 41. 4; शुद्धवैरूप्यमङ्गत्वम्…। युक्तयः पूर्वपक्षस्थाः AnuVyā. 48B. 6 (*on* 3. 3); उपायभक्तौ नित्यनैमित्तिककर्मणाम्…अङ्गत्वेनानुष्ठानम् NyāySiA. 218. 20; अङ्गत्वेनोपासनस्याभ्युपगतत्वात् TattvPrakā. 182B. 4 (*on* iii. 3. 57); अतोऽङ्गत्वेन पूर्वं सर्वनिर्णया उक्ताः AṇuBh. 55. 26 (*on* i. 2. 6); 301. 21 (*on* iv. 1. 1); 343. 20 (*on* iv. 3. 16); उपासनाविधिभिरङ्गत्वेन गृहीतज्ञानं तावत् शूद्राणां न संभवति S'ivārkaMaDī. i. 476. 10 (*on* i. 3. 33); i. 510. 12 (*on* i. 4. 1); अनुमितिं प्रति तथाविधमेव यदङ्गत्वं तदभावेऽपीत्यर्थः LaCandr. 16. 28; **ix** the state of being a stem or base एतन्न्यायाश्रयणे त्वङ्गत्वमेव दुर्लभम् LaS'abdeS'e. i. 75. 13; i. 157. 8; i. 193. 8.

**अङ्गत्वकल्पना** (aṅgatva-kalpanā) *f.* assumption of being a subsidiary अङ्गत्वकल्पने तूक्तयोभयाकाङ्क्षया संबन्ध इति SiddhāTa. 36. 1; यद्यप्यङ्गत्वकल्पनानुकूलैव सा MīmāKau. ii. 352. 8 (*on* iii. 3. 14)

**अङ्गत्वकल्पनानुपपत्ति** (aṅgatvakalpanānupapatti) *f.* impossibility or impropriety of the assumption of being a subsidiary दुर्बलप्रमाणेन अङ्गत्वकल्पनानुपत्तेः BhāṭṭDī. ii. 136. 4 (*on* iv. 3. 12)

**अङ्गत्वकल्पनायोग** (aṅgatvakalpanāyoga) *m.* inapplicability of the assumption of being a subsidiary अनन्यथासिद्धलिङ्गोपष्टब्धप्रकरणवशेनैव क्रत्वङ्गत्वसम्भवे वाक्येनाङ्गत्वकल्पनायोगः BhāṭṭDī. ii. 136. 10 (*on* iv. 3. 12)

**अङ्गत्वकारण** (aṅgatva-kāraṇa) *n.* cause of being a subsidiary वेदे च नान्यदङ्गत्वकारणं दृश्यते क्वचित् TantrVā. 665. 22 (*on* iii. 1. 2)

**अङ्गत्वकृत** (aṅgatva-kṛta) *adj.* caused by the subsidiary nature न चानुमेयत्वे पूर्वाह्णादिकालस्याङ्गत्वकृतः कश्चिद्विशेषोऽस्ति BālaKrī. i. 24. 6 (*on* 1. 7)

**अङ्गत्वघटकीभूत** (aṅgatva-ghaṭakībhūta) *adj.* included or contained in the subsidiary nature श्रुत्यादीनामङ्गत्वघटकीभूतपरोद्देश्यताकृतिकारकत्वबोधकत्वादङ्गत्वप्रामाण्यव्यवहारः MīmāKau. ii. 138. 5 (*on* iii. 1. 2); ii. 138. 7 (*on* iii. 1. 2); ii. 349. 25 (*on* iii. 3. 14); ii. 350. 10 (*on* iii. 3. 14); अङ्गत्वघटकीभूतपदार्थान्तराणां प्रमाणान्तरेण प्रसिद्धावपि BhāṭṭDī. i. 183. 2 (*on* iii. 1. 2); i. 186. 9 (*on* iii. 1. 4); i. 210. 17 (*on* iii. 2. 1); i. 244. 9 (*on* iii. 3. 1)

**अङ्गत्वज्ञान** (aṅgatva-jñāna) *n.* knowledge of the state of being an accessory अङ्गत्वज्ञाने तु तत्सम्भवादग्निष्टोमसामसम्बन्धः सुलभ इत्यभिप्रायः TantrVā. 568. 11 (*on* ii. 2. 27)

**अङ्गत्वज्ञापक** (aṅgatva-jñāpaka) *adj.* conveying the nature of being an accessory अङ्गत्वज्ञापकानि प्रमाणानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानानि S'rutaPra. iA. 73. 21 (*on* i. 1. 1)

**अङ्गत्वज्ञापन** (aṅgatva-jñāpana) *n.* conveying the accessorial or subordinate character विनियोगावसेयम् । विनियोगः अङ्गत्वज्ञापनम् S'rutaPra. iA. 73. 17 (*on* i. 1. 1)

**अङ्गत्वदर्शन** (aṅgatva-darśana) *n.* observation of being a stem or base (of a word) निरर्थकस्याप्यङ्गत्वदर्शनेनाङ्गसञ्ज्ञायामर्थवत्परिभाषाया अप्रवृत्तेः LaS'abdeS'e. ii. 595. 20.

**अङ्गत्वनिबन्धनता** (aṅgatvanibandhana-tā) *f.* the state of being based on the subsidiary nature तस्याङ्गत्वनिबन्धनतया तदभावेऽप्राप्तेः BhāṭṭDī. ii. 216. 3 (*on* v. 4. 8)

**अङ्गत्वनियम** (aṅgatva-niyama) *m.* necessity of being a subsidiary rite गुणकर्मणामङ्गत्वनियमात् S'ivārkaMaDī. i. 40. 25 (*on* i. 1. 1)

**अङ्गत्वनिराकरण** (aṅgatva-nirākaraṇa) *n.* rejection of the accessory nature अङ्गत्वस्य फलमुपकारकत्वं तन्निराकरणद्वारेणाङ्गत्वनिराकरणमेवेदम् TantrRa. 23. 18; किमर्थं तस्याङ्गत्वनिराकरणम् S'āstrDī. 668. 3 (*on* x. 2. 14); संस्थासंयोगादेरङ्गत्वनिराकरणहेतोः सुपरिहरत्वाच्च MayūMāli. 747. 15 (*on* x. 6. 10)

**अङ्गत्वनिरास** (aṅgatva-nirāsa) *m.* refutation of being a subsidiary विद्याया अङ्गावबद्धाया अङ्गत्वनिरासेऽपि न विधेयत्वहानिः AdvaiSi. 873. 7.

**अङ्गत्वनिर्णय** (aṅgatva-nirṇaya) *m.* determination of being a subsidiary भाव्यान्वयात्पाश्चात्यः अङ्गत्वनिर्णयः LalitāSaBh. 227. 23 (*on* 296)

**अङ्गत्वनिर्वाह** (aṅgatva-nirvāha) *m.* accomplishment of the state of being a subsidiary सापदश्यवाक्ये हि अपौरुषेये तत्र मित्रविन्दाप्रकरणगतेन वाक्येनाङ्गत्वनिर्वाहे…एकवाक्यत्वमिष्यते BālamBha. i. 417. 6 (*on* 1. 156)

**अङ्गत्वनिर्वाहक** (aṅgatvanirvāha-ka) *adj.* accomplishing the state of being a subsidiary विघ्ननिवारणपर्यन्तः किंचित्कारो ब्रह्मविद्यां प्रत्यग्निविद्याया अङ्गत्वनिर्वाहकः S'rutaPra. iB. 310. 26 (*on* i. 2. 15)

**अङ्गत्वनिर्वाहकता** (aṅgatvanirvāhaka-tā) *f.* the state of accomplishing the accessory or subordinate character अङ्गत्वनिर्वाहकतया दृष्टादृष्टान्यतरप्रयोजनकल्पनेऽपि धर्मप्रमितिजनकत्वासिद्धेर्न प्रामाण्यमिति शङ्कते MayūMāli. 8. 5 (*on* i. 2. 1)

**अङ्गत्वनिवृत्ति** (aṅgatva-nivṛtti) *f.* cessation of the accessory or subservient nature लिङ्गादीनामप्यङ्गभावे प्रमाणत्वात्सहभावाश्रवणमात्रेण नाङ्गत्वनिवृत्तिः S'rutaPra. ii. 535. 14 (*on* iii. 3. 64)

**अङ्गत्वपक्ष** (aṅgatva-pakṣa) *m.* **i** view of being a means तत्त्वज्ञानं प्रत्यङ्गत्वपक्षे कर्मणां ह्यपूर्वद्वारा जनकत्वम् TattvCin. ii(2). 187. 14; **ii** view of being a subsidiary ननु संहत्यकारित्वाभावेऽपि अङ्गानुष्ठानं तन्त्रं भवति यथा धानानुष्ठानमङ्गत्वपक्षे सर्वक्रतूनाम् MayūMāli. 794. 3 (*on* xi. 1. 1)

**अङ्गत्वपरिहार** (aṅgatva-parihāra) *m.* rejection of being a subordinate पारार्थ्ये चोद्यवादिनोऽप्यनुमते प्रयुक्तितोऽङ्गत्वपरिहारसिद्धिः NayaVi. 26. 7 (*on* i. 1. 1)

**अङ्गत्वप्रख्यापक** (aṅgatva-prakhyāpaka) *adj.* which conveys the accessory character अङ्गत्वप्रख्यापकस्य कारणस्याभावात् S'ābaBh. 2001. 11 (*on* x. 6. 30)

**अङ्गत्वप्रतिपत्ति** (aṅgatva-pratipatti) *f.* knowledge of (something) as an accessory यत्पुनरिदमुक्तम् 'न चाविहितमङ्गं भवति' 'फलवत्सन्निधावफलं तदङ्गम्' इति च कार्ये अङ्गत्वप्रतिपत्त्यर्थोऽयं ग्रन्थः Bṛha. 5. 2 (*on* i. 1. 1); तद्बोधनार्थमेव (क्रमबोधनार्थम्) दन्तान् प्रक्षाल्येति दन्तधावनपूर्विकामिति च न तु स्नाने संध्यायां च दन्तधावनस्याङ्गत्वप्रतिपत्तये VīraMi. 178. 7 (*on* 1. 98)

**अङ्गत्वप्रतिपादन** (aṅgatva-pratipādana) *n.* mention of the subordinate character ध्यानस्याङ्गत्वप्रतिपादनाद्गायत्रीजप एव प्रधानम् VīraMi. (Āhnika.) 254. 21; ध्यानस्याङ्गत्वप्रतिपादनात् BālamBha. i. 94. 6 (*on* 1. 24)

**अङ्गत्वप्रतीति** (aṅgatva-pratīti) *f.* knowledge of being an accessory कृष्णलेष्ववघातस्य चरुषु पेषणस्य चानुष्ठानमात्रं बाध्यते । न त्वङ्गत्वप्रतीतिः TantrRaha. 3. 4; श्रुतिवाक्याभ्यामङ्गत्वप्रतीतेः BhāṭṭDī. i. 184. 11 (*on* iii. 1. 3)

**अङ्गत्वप्रमाणत्व** (aṅgatvapramāṇa-tva) *n.* the state of being a proof in the matter of (something) being subordinate एवं चातिदेशस्यापि अङ्गत्वप्रमाणत्वे इहानिरूपणेऽपि न क्षतिः MīmāKau. ii. 134. 10 (*on* iii. 1. 1)

**अङ्गत्वप्रसङ्ग** (aṅgatva-prasaṅga) *m.* contingency of being subordinate मध्ये नान्येन संलपनीयमित्यादिनियमानामप्यङ्गत्वप्रसङ्गः NyāyPari. 173. 1; प्रयाजप्रोक्षणादेः …तद्गतातिशयहेत्वभिषवग्रहणादिकं प्रत्यङ्गत्वप्रसङ्गात् Nyāyāmṛ. 615B. 8; सोमयागसहकारिभूतदीक्षणीयाद्यङ्गस्य तद्गतातिशयहेत्वभिषवग्रहणादिकं प्रत्यङ्गत्वप्रसङ्गः AdvaiSi. 861. 5; न चैतावता अङ्गत्वप्रसङ्गः तादर्थ्येन विधानाभावात् NyāySu.(So.) 77. 10 (*on* i. 2. 22)

**अङ्गत्वप्रामाण्य** (aṅgatva-prāmāṇya) *n.* the state of being a proof in the matter of (something) being a subsidiary तद्घटककारकत्वस्य श्रुत्यादिगम्यत्वात्तेषामङ्गत्वप्रामाण्यव्यवहारः BhāṭṭDī. i. 183. 4 (*on* iii. 1. 2); MīmāKau. ii.138. 6 (*on* iii. 1. 2)

**अङ्गत्वबोध** (aṅgatva-bodha) *m.* knowledge of the state of being a subsidiary श्रुत्यादीनि षट् अङ्गत्वबोधे प्रमाणानि MīmāKau. ii. 134. 8 (*on* iii. 1. 1); ii. 335. 15 (*on* iii. 3. 11); यथासंभवं लिङ्गव्यतिरिक्तैः पञ्चभिरङ्गत्वबोधस्य पूर्वपक्षेऽपि वक्तुं शक्यत्वादिति ध्येयम् MayūMāli. 15. 12 (*on* i. 2. 4)

**अङ्गत्वबोधक** (aṅgatvabodha-ka) *adj.* conveying the state of being a subsidiary अनुष्ठानाभावेऽप्यङ्गत्वबोधकातिदेशस्वीकारे कृष्णलेष्ववघातातिदेशापत्त्या प्राभाकरमतप्रवेशापत्तेः BhāṭṭDī. iv. 218. 15 (*on* xii. 1. 1); MayūMāli. 204. 15 (*on* iii. 1. 12)

**अङ्गत्वबोधकता** (aṅgatvabodhaka-tā) *f.* indication of being a subsidiary तत्र श्रुत्यादित्रिकस्य अङ्गत्वबोधकतायाः स्पष्टत्वात् MīmāKau. ii. 141. 8 (*on* iii. 1. 7)

**अङ्गत्वबोधकत्व** (aṅgatvabodhaka-tva) *n.* indication of subservience न नु विसर्गशब्दस्य समाप्तिवचनत्वात् कथमङ्गत्वबोधकत्वम् VedāntKa. 460.5 (*on* iii. 3.29)

**अङ्गत्वभङ्ग** (aṅgatva-bhaṅga) *m.* loss of the nature of being subservient यतः प्रधानाधिकारिण एवाङ्गेऽधिकारो न स्वतन्त्रः अङ्गत्वभङ्गप्रसङ्गात् (comm. अङ्गत्वभङ्गप्रसङ्गादिति वैदिकाङ्गत्वभङ्गप्रसङ्गादित्यर्थः) TattvCin. i. 38.4.

**अङ्गत्वमात्र** (aṅgatva-mātra) *n.* the nature of being only ancillary अङ्गत्वमात्रं चोदकेनावगम्यते न च तावन्मात्रेणानुष्ठानम् NyāyRaMā. 180.9; शक्यते ह्यत्र प्रसिद्धसौत्रामण्याद्यनुवादेनाग्निचयनादिकं प्रत्यङ्गत्वमात्रविधानम् S'ivārkaMaDī. i. 41.16 (*on* i. 1.1); अत्र तु तृतीयाविभक्त्यभावेन करणस्थानपेक्षितत्वादङ्गत्वमात्रेण विधानं नानुपपन्नम् MayūMāli. 61.17 (*on* i. 4.3)

**अङ्गत्वयोग्य** (aṅgatva-yogya) *adj.* fit to be a base or stem अनुवर्तमानमङ्गस्येत्यङ्गत्वयोग्यस्येत्यर्थकं बोद्धव्यम् LaS'abdeS'e. ii. 483.4.

**अङ्गत्वरूप** (aṅgatva-rūpa) *adj.* of the form of subservience, having the nature of a subsidiary बहुष्वपि हि लक्षणार्थेषु विवक्षितेषु क्रमवशादेकस्तावदङ्गत्वरूपः शेषः । एतल्लक्षणगोचरः परार्थत्वहेतुकः प्रतिपाद्यते TantrVā. 654.14 (*on* iii. 1.1); नैयमिकाग्निहोत्रस्य पुनर्विधानमङ्गत्वरूपप्रयोजनान्तरार्थं भवेत् Pūrvotta-VāNaMā. 16.10; लिङ्गादौ तु … अङ्गत्वरूपप्रमेयकल्पनामूलत्वाभावात् कल्पनामूलोच्छेदलक्षणाबाधप्रकारविषयत्वम् MīmāKau. i. 14.26 (*on* i. 3.3); ii. 352.10 (*on* iii. 3.14); मम तु … अङ्गत्वरूपसंबन्धविशेषसिद्ध्यर्थं तत्कल्पनमावश्यकम् BhāṭṭCin. ii. 47.16 (*on* i. 4.1)

**अङ्गत्वलक्षण** (aṅgatva-lakṣaṇa) *n.* definition or exclusive characteristic of subservience अङ्गत्वलक्षणं शेषपदशक्यतावच्छेदकम्…इत्यादि BhāṭṭDī. i. 181.16 (*on* iii. 1.1); अत्र च अङ्गत्वलक्षणे सकलप्रयाजादिवृत्तिलक्ष्यतावच्छेदकाननुगमेऽपि न दोषः MīmāKau. ii. 137.15 (*on* iii. 1.2)

**अङ्गत्वलाभार्थम्** (aṅgatvalābhārtham) *adv.* for securing subservience, for securing the nature of a subsidiary अङ्गत्वलाभार्थममीत्युक्तम् VīraMi. 441.24 (*on* 2.27)

**अङ्गत्ववचन** (aṅgatva-vacana) *n.* statement of being a subsidiary साग्निकस्य जीवपितृकस्य … पिण्डपितृयज्ञानधिकारात् श्राद्धानधिकारः 'पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम्' इत्यङ्गत्ववचनात् BālaKrī. i. 149.16 (*on* 1.225)

**अङ्गत्ववत्** (aṅgatva-vat) *adv.* like the state of being subservient ग्रहणादेरविहितत्वेन चापूर्वं प्रत्यङ्गत्ववत् साधनत्वस्याप्ययोगात् MīmāKau. ii. 269.10 (*on* iii. 2.24)

**अङ्गत्ववाचिन्** (aṅgatvavāc-in) *adj.* expressing the state of being subservient अत एवाङ्गत्ववाचिपदकल्पनानुकूला योग्यता श्रुतपदार्थनिष्ठा लिङ्गमिष्टमित्युक्तम् MīmāKau. ii. 352.6 (*on* iii. 3.14); ii. 351.5 (*on* iii. 3.14)

**अङ्गत्ववादिन्** (aṅgatvavād-in) *m.* one who holds the view of something being subservient किञ्च टीकाग्रन्थविरोधश्चाङ्गत्ववादिनाम् PrakaPañ. 20.11.

**अङ्गत्वविघात** (aṅgatva-vighāta) *m.* contradiction with the state of being subservient यागादिनिष्ठयोग्यतासम्पादकत्वाच्च न प्राधान्यापत्तिः अङ्गत्वविघातो वा BhāṭṭDī. iii. 42.5 (*on* ix. 1.1); वाजपेयेनेष्ट्वा संस्थाप्य पौर्णमासीम् इत्यादौ तु प्रयोगसमाप्तिमात्रस्यैवोक्तेर्नाङ्गत्वविघातः BhāṭṭDī. iii. 220.9 (*on* x. 2.11)

**अङ्गत्वविधान** (aṅgatva-vidhāna) *n.* injunction of subservience स्वर्गस्य तु द्रव्यरूपस्य कर्मसाधनत्वेन दृष्टार्थत्वात्तन्मात्रस्य चाङ्गत्वविधाने लाघवात् NyāyRaMā. 161.6.

**अङ्गत्वविधि** (aṅgatva-vidhi) *m.* injunction (prescribing) subservience एवं तस्य नियामकत्वे मुहूर्तपञ्चकं वेति त्रयोदशस्य मुहूर्तस्य सायाह्नान्तःपातिनोऽङ्गत्वविधिरनुपपन्नः Aparā. 467.7 (*on* 1.227); आद्योऽङ्गत्वविधेर्भानात् प्रतिपत्तिमपेक्षते । शाखोपयुक्ता तेनान्यः प्रस्तरे प्रतिपादनात् NyāyMāVi. 337.12 (*on* vi. 4.14); शाखा वत्सापकरणादावुपयुक्ता तस्याः पुनरङ्गत्वविधिर्न संभवति NyāyMāVi. 337.17 (*on* vi. 4.14)

**अङ्गत्वविरोध** (aṅgatva-virodha) *m.* contradiction with the state of being subservient स्वर्गफलत्वेऽङ्गत्वविरोधात् TattvCin. ii(2). 194.5.

**अङ्गत्वविरोधिन्** (aṅgatva-virodhin) *adj.* contradictory to subservience गोदोहनस्य स्ववाक्ये श्रूयमाणं पृथक्फलसाधनत्वमङ्गत्वविरोधि S'rutaPra. ii. 532.24 (*on* iii. 3.59); ii. 533.24 (*on* iii. 3.63); ii. 533.29 (*on* iii. 3.63)

**अङ्गत्ववेष** (aṅgatva-veṣa) *m.* form of being a subservient कपालान्युपदधातीति कपालानामुपधानसंस्कार्यत्वमङ्गत्ववेषेण न कपालत्ववेषेण MayūMāli. 422.21 (*on* v. 2.2)

**अङ्गत्वव्यवहार** (aṅgatva-vyavahāra) *m.* usage or statement of subservience यत्रेदं न लक्षणं यथा यागादेर्भावनादिकं प्रति तत्र भाक्तोऽङ्गत्वव्यवहारश्शास्त्रे BhāṭṭDī. i. 182.21 (*on* iii. 1.2)

**अङ्गत्वश्रवण** (aṅgatva-śravaṇa) *n.* mention (in the Vedic texts) of being subservient ज्ञानस्य च 'यदेव विद्यया करोती'त्यङ्गत्वश्रवणात् Nyāyāmṛ. 625A.2; AdvaiSi. 873.5.

**अङ्गत्वसमर्थन** (aṅgatva-samarthana) *n.* establishment of subservience यत्त्विह समिदादीनामङ्गत्वसमर्थनं तत्प्रजापतिव्रतवैषम्यप्रदर्शनमात्रार्थं न तु प्रतिपाद्यतयेति मन्तव्यम् TantrRa. 37.1.

**अङ्गत्वसंभव** (aṅgatva-sambhava) *m.* possibility of being subservient नात्र सर्वेषामङ्गत्वसंभवः MayūMāli. 720.27 (*on* x. 5.5)

**अङ्गत्वसाधन** (aṅgatva-sādhana) *n.* establishment of subservience रूपकादिरलंकारवर्गस्याङ्गत्वसाधनम् Dhvanyā. 2.19; श्लोकपादेषु चतुर्षु श्लोकार्धे चाङ्गत्वसाधनमिदम् Loc. 88.18 (*on* 2.20)

**अङ्गत्वसामानाधिकरण्य** (aṅgatva-sāmānādhikaraṇya) *n.* coexistence with (and not pervasion of) subservience, existence on the locus of subservience अङ्गत्वसामानाधिकरण्येन हेतुतामादाय BhāṭṭDī. i. 181.10 (*on* iii. 1.1)

**अङ्गत्वसिद्धि** (aṅgatva-siddhi) *f.* establishment of the state of being ancillary or subservient सत्यां च तस्यां प्रकरणेन दर्शपूर्णमासयोर्विनियोगादङ्गत्वं प्रयाजादीनां सिद्ध्यति तस्मादङ्गत्वसिद्ध्यर्थमेव समिदादिषु विधिना भवितव्यम् NyāyRaMā. 142.10; प्रयाजादीनां विनियोजकप्रकरणादिप्रमाणबलादङ्गत्वसिद्धेः VivaPraSaṁ. 165.17; प्रयाजादीनां च दर्शपूर्णमासशब्देनाग्रहणात्फलसंबन्धाभावादङ्गत्वसिद्धिः समुदायद्वयकल्पने प्रयोजनम् TristhaSe. 35.18; MīmāKau. ii. 104.23 (*on* ii. 4.2); BhāṭṭCin. i. 72.23 (*on* i. 1.4); अदृष्टोपायापेक्षक्रतुसामर्थ्येन…अङ्गत्वसिद्धेः BālamBha. ii. 125.27 (*on* 2.114)

**अङ्गत्वस्थैर्य** (aṅgatva-sthairya) *n.* confirmation of subservience शुल्किं च ततो बद्ध्वा ततः कर्म समाचरेत् इति ब्रह्मपुराणवचनेन चाङ्गत्वस्थैर्यात् VīraMi. 88.18 (*on* 1.29)

**अङ्गत्वस्वरूप** (aṅgatva-svarūpa) *n.* nature of subservience वैकल्पिकान्तरस्य…विहितस्य तस्मिन्नपि प्रयोगे अङ्गत्वस्वरूपयोग्यतया मुख्यत्वेन जातिव्यक्तिसर्वावयवानामेव साधनत्वसंभवे BhāṭṭDī. ii. 264.1 (*on* vi. 3.12)

**अङ्गत्वांश** (aṅgatvāṁśa) *m.* aspect (i.e. property) such as the state of being ancillary मा भूदङ्गत्वांशेन विकृतौ फलपुरुषयोरप्यतिदेशात् सिद्धान्तविरोधः TantrVā. 676.6 (*on* iii. 1.6)

**अङ्गत्वाख्य** (aṅgatvākhya) *adj.* called (i.e. of the form of) the state of being ancillary सत्यं पौर्णमास्यादिशब्दाभ्यां प्रधानसम्बन्धिहविर्लक्षणा तथापि संबन्धो नाङ्गत्वाख्यः तथात्वे वाक्यसङ्कोचापत्तेः BhāṭṭDī. ii. 43.20 (*on* iii. 7.4)

**अङ्गत्वाघटकत्व** (aṅgatvāghaṭaka-tva) *n.* the state of not constituting the ancillary nature एवमप्युक्तविधेतिकर्तव्यतात्वस्याङ्गत्वाघटकत्वात् कथमङ्गत्वे प्रामाण्यं तद्घटितप्रकरणस्य MīmāKau. ii. 335.5 (*on* iii. 3.11)

**अङ्गत्वाङ्गीकार** (aṅgatvāṅgīkāra) *m.* acceptance of being ancillary प्रयुक्तत्वनिवृत्तौ अङ्गत्वाङ्गीकारे फलाभावात् BhāṭṭDī. ii. 44.20 (*on* iii. 7.5)

**अङ्गत्वादिनिरूपण** (aṅgatvādi-nirūpaṇa) *n.* explaining the state of being ancillary and the rest अङ्गत्वादिनिरूपणस्यापि प्रमाणाधीनत्वे सत्यपि भेदापेक्षत्वस्याप्यधिकत्वादयमेव भेदनिरूपणावसरः MīmāKau. iii(2). 2.6 (*on* ii. 1.1)

**अङ्गत्वादिमुख** (aṅgatvādi-mukha) *n.* channel or means of the state of being ancillary and the rest तत्र व्यवच्छेद्याङ्गत्वादिमुखेन संशयादयोऽपि चतुर्दश यथायथं निरुह्यन्ते NyāyPari. 30.4.

**अङ्गत्वानभिधान** (aṅgatvānabhidhāna) *n.* non-mention of being ancillary 'वारवन्तीयमग्निष्टोमसाम कार्यम्' इति प्राकरणिकेन वाक्येनैव गौरवभिया अङ्गत्वानभिधानात् आश्रयसमर्पणम् BhāṭṭDī. i. 135.12 (*on* ii. 2.12)

**अङ्गत्वानवगति** (aṅgatvānavagati) *f.* absence of the knowledge of being ancillary एवं च प्रकृतेऽप्याज्यभागान्वयात् पूर्वमन्याङ्गानन्वयात् तत्साहित्यस्याङ्गत्वानवगतेराज्यभागजन्यादृष्टत्वेन प्रकृतावाकांक्षाशामकत्वस्य क्लृप्तत्वात् BhāṭṭDī. iv. 82.22 (*on* x. 7.9)

**अङ्गत्वानवगम** (aṅgatvānavagama) *m.* absence of the knowledge of being ancillary कौत्सादीनां त्वनारभ्याधीतत्वेन सत्यपि वचने क्रत्वङ्गत्वावगमे तदाधारभूताया योनेः प्रकरणपाठाभावेनाङ्गत्वानवगमात् प्राकृतऋगाधारत्वस्य दशमे वक्ष्यमाणत्वात् MīmāKau. iii(1). 82.15 (*on* i. 2.44)

**अङ्गत्वानवलोप** (aṅgatvānavalopa) *m.* non-destruction of being ancillary किं च प्राप्त्यबाधे कुशानामलुप्तार्थानां किमित्यनुष्ठानं प्रत्याम्नानादिति चेत् न । तेनाप्यङ्गत्वानवलोपात् NyāyRaMā. 183.22.

**अङ्गत्वानापत्ति** (aṅgatvānāpatti) *f.* absence of (the unwanted) contingency of being ancillary अत एव 'समिधो यजति' इत्यादौ विधिश्रवणं

प्रयोगांशेऽनुवाद एव । न चैवमुत्पत्तेराख्यातान्तपदश्रवणमात्रेणापि सिद्धे लेट्श्रवण-वैयर्थ्यं, तदभावे प्रवर्तनाबोधाभावेन यागस्यैव समानपदश्रुत्या भाव्यत्वप्रसक्तौ तस्य प्रयोजनानाकाङ्क्षत्वेनाङ्गत्वानापत्तेः BhāṭṭDi. iv. 134. 20 (*on* xi. 1. 2)

**अङ्गत्वानुपपत्ति** (aṅgatvānupapatti) *f.* **A** impossibility of being ancillary or subsidiary नैतावतानवगतोऽर्थः शक्यते कल्पयितुं न ह्यत्र किंचिदुपकारजनकत्वे प्रमाणमस्ति । नन्वङ्गत्वानुपपत्तिरेव प्रमाणम् NyāyRaMā. 183. 17; तेषां हि स्ववाक्यैरेव विधानमसति विधानेऽङ्गत्वानुपपत्तेः S'āstrDi. 796. 11 (*on* xi. 1. 2); यदेव विद्यया करोतीति विद्याया अङ्गत्वश्रवणात् अविहितस्य चाङ्गत्वानुपपत्त्या विद्याया विधेयत्वम् AdvaiSi. 873. 5; **B** impossibility of being subordinate अङ्गाङ्गिनोः अङ्गिन्यन्यस्मिन्नङ्गयोर्वा न विरोधः, अङ्गत्वानुपपत्तिप्रसङ्गात् RasGaṅ. 59. 12.

**अङ्गत्वान्यथानुपपत्ति** (aṅgatvānyathānupapatti) *f.* impossibility of being ancillary in any other way व्याकरणादीनां वेदाङ्गत्वात्…पदाद्यवबोधरूपदृष्टकिंचित्कार एव स्वीकार्य इति अङ्गत्वान्यथानुपपत्त्यैव व्याकरणाद्यर्थावगमसिद्धेः S'rutaPra. iA. 35. 18 (*on* i. 1. 1); प्रकृतिप्रत्ययविभागादिज्ञानफलकस्य व्याकरणादेरङ्गत्वान्यथानुपपत्त्यैव तदध्ययनस्यार्थज्ञानपर्यन्तत्वसिद्धेः S'ivārkaMaDi. i. 29. 14 (*on* i. 1. 1)

**अङ्गत्वापत्ति** (aṅgatvāpatti) *f.* contingency of becoming ancillary or subsidiary ते ध्यानयोशा( ? गा )नुगता अपश्यन्नित्यादिश्रुत्यन्तरे ध्यानस्य दर्शनसाधनत्वेनावगता( ? त )स्याङ्गाकाङ्क्षायां प्रयाजन्यायेन श्रवन( ? ण )मननयोरेवाङ्गत्वापत्तेः VedāntPari. 351. 10; असति त्वेतस्मिन् वसन्तादिवाक्ये क्लृप्तप्रवृत्तिनिमित्तत्वेनामिक्षायागस्यैव तत्रत्यवैश्वदेन( ? व )पदेन कालसंबन्धापत्त्या तस्यैव फलसंबन्धापत्तेरितरेषां अङ्गत्वापत्तिः MīmāKau. i. 253. 6 (*on* i. 4. 15); अष्टानामपि यागानां वसन्ते 'वैश्वदेवेन यजेत' इति वसन्तादिसम्बन्धद्वारा चातुर्मास्यसंज्ञकत्वलाभेन फलसंबन्धसिद्धिः । इतरथा…इतरेषामङ्गत्वापत्तिः BhāṭṭDi. i. 73. 18 (*on* i. 4. 11)

**अङ्गत्वापरपर्याय** (aṅgatvāparaparyāya) *adj.* synonymous with subsidiariness कालस्योद्देश्यत्वेऽप्यङ्गत्वापरपर्यायस्य … विधेयत्वस्य सत्त्वेन 'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन' इतिवद् वाक्यभेदानापादकत्वात् MīmāKau. iii(2). 164. 15 (*on* ii. 2. 3); अङ्गत्वापरपर्यायपदार्थत्वस्य शास्त्रैकसमधिगम्यतया तद्भेदस्य लोकानवगम्यत्वात् MayūMāli. 421. 22 (*on* v. 2. 2)

**अङ्गत्वाप्रतिपत्ति** (agṅatvāpratipatti) *f.* absence of fitting as a constituent part (अननुभाषणे) नञः पर्युदासवृत्तित्वाभ्युपगमात् तदित्यादिसर्वनाम्नानुवादो दूष्यैकदेशानुवादः … सर्वं चैतन्निग्रहस्थानमेव तूष्णीम्भावे दूषणाश्रयोपादानस्याङ्गत्वाप्रतिपत्तेः TārkiRa. 348. 15.

**अङ्गत्वाबाध** (aṅgatvābādha) *m.* absence of contradiction of being ancillary कथं तर्ह्युक्तं प्रयोगवचनेनानुपसंग्रहादननुष्ठानमिति । तदेव तु न युक्तमङ्गत्वाबाधादिति ब्रूमः NyāyRaMā. 184. 5; 184. 21; प्राकृतव्रीह्यादीनामनुष्ठानबाधेऽप्यङ्गत्वाबाधान्नाप्रामाण्यापत्तिर्न वा विकल्पः MayūMāli. 768. 2 (*on* x. 7. 17)

**अङ्गत्वाभाव** (aṅgatvābhāva) *m.* **1** absence of the designation *aṅga* 'नन्द् यु स्' इति स्थिते सम्बुद्धिगुणे कृतेऽकृते वा नित्यत्वादेङ्ह्रस्वात्संबुद्धेरिति लोपे कृतेऽङ्गत्वाभावादनाकाप्रसङ्गः Pradi. vi. 2. 19 (*on* vii. 1. 1); अभ्यासान्तसमुदायस्याङ्गत्वाभावात् LaS'abdeS'e. ii. 632. 2; **2 A** absence of being a part अत्र ह्यागन्तुरिकार उच्चारणार्थ इत्यङ्गत्वाभावेऽपि नुमनुषक्तपाठस्येदमेव प्रयोजनम्–धातूपदेशावस्थायामेव नुम् यथा स्यात् Pradi. vi. 58. 15 (*on* vii. 1. 59); **2 B** absence of being subsidiary यद्यपि पवमानेष्टिर्विकृतिः तथापि चोदको न तस्यां पवमानेष्टौ पवमानेष्टिमतिदेष्टुं प्रभवति । प्रकृतौ प्रयाजादिवत् पवमानेष्टेरङ्गत्वाभावात् NyāyMāVi. 183. 2 (*on* iii. 6. 6); **3** absence of being a cause न तदिति । तस्यालस्यादिनिमित्तत्वेनानुपपन्नस्य श्रुत्यनुमानेऽङ्गत्वाभावादित्यर्थः MayūMāli. 42. 4 (*on* i. 3. 8)

**अङ्गत्वाभिधान** (aṅgatvābhidhāna) *n.* mention (of something) as a subsidiary एवं च बहिःस्नाने द्विजातिरेवाधिकारी । तत्र गायत्रीजपस्याङ्गत्वाभिधानात् VīraMi.(Āhnika-) 142. 22.

**अङ्गत्वाभिप्राय** (aṅgatvābhiprāya) *m.* idea of being a subordinate (to the main sentiment) बाध्यानामिति । बाध्यत्वाभिप्रायेणाङ्गत्वाभिप्रायेणेति चेत्यर्थः Loc. 164. 22 (*on* 3. 20); *adj.* of the idea of being a subsidiary भाष्यकृता वाक्यशेषत्वे विध्येकवाक्यत्वं हेतुमनुवदता शेषशब्दः स्तुतिद्वाराङ्गत्वाभिप्रायो व्याख्यातः NyāySu.(So.) 75. 30 (*on* i. 2. 22)

**अङ्गत्वाभ्युपगम** (aṅgatvābhyupagama) *m.* acceptance of being ancillary अङ्गत्वाभ्युपगमेनापि शक्यत एव परिक्रयार्थता वक्तुम् S'āstrDi. 668. 4 (*on* x. 2. 14)

**अङ्गत्वायोग** (aṅgatvāyoga) *m.* impropriety of being a subsidiary व्याकरणादीनां वेदाङ्गत्वादकिंचित्करस्याङ्गत्वायोगात् S'rutaPra. iA. 35. 17 (*on* i. 1. 1); अनियतस्य चाङ्गत्वायोगात् NyāyPari. 171. 1; S'ivārkaMaDi. i. 29. 9 (*on* i. 1. 1) = i. 51. 2 (*on* i. 1. 1)

**अङ्गत्वार्थ** (aṅgatvārtha) *adj.* intended for being a subsidiary न चास्यापि प्रजापालनमदृष्टार्थमुपकुर्वतः परम्परयास्त्येवापूर्वपर्यवसानमित्यस्त्वङ्गत्वार्थ एव विधिरिति वाच्यम् VīraMi. (Vyavahāra.) 12. 11.

**अङ्गत्वावगति** (aṅgatvāvagati) *f.* knowledge of being a subsidiary 'बृहत्पृष्ठं भवति' 'रथन्तरं पृष्ठं भवति' इति वाक्ययोः … नापि सामविधिः । सामाधारभूतानामृचां अवान्तराधिकाराख्यप्रकरणात् अङ्गत्वावगतौ तदाधेयानां साम्नां सुतरां स्वरूपेण पृष्ठस्तोत्राङ्गत्वेन प्राप्तेः MīmāKau. i. 191. 9 (*on* i. 4. 3)

**अङ्गत्वावगतिसिद्धि** (aṅgatvāvagati–siddhi) *f.* establishment of the knowledge of being a subsidiary आज्यादीनां दृष्टविधया स्तोत्रोपकारकत्वाभावात् अदृष्टस्य च व्यापारविशेषं विना अनुपपत्तेः अवच्छेदकाभावेन नाङ्गत्वावगतिसिद्धिः MīmāKau. i. 186. 13 (*on* i. 4. 3); सत्यपि चोपांशुयाजादौ याज्यानुवाक्यादेरनुमन्त्रणादेश्च परिशेषसिद्धाकारेणैवाङ्गत्वावगतिसिद्धावुदाहरणान्तरत्वोपपत्तेः MīmāKau. ii. 339. 25 (*on* iii. 3. 12)

**अङ्गत्वावगम** (aṅgatvāvagama) *m.* **i** knowledge of being a cause य एव (क्रमः) वृद्धव्यवहारे दृष्टः स एव नियम्यते, तस्यैवार्थप्रतीतावङ्गत्वावगमात् NyāyRa. 528. 13 (*on* 5(11). 71); **ii** knowledge of being an auxiliary तच्चतुर्गृहीतं जुहोतीति विधिना चतुर्ग्रहणसंस्कृतस्याङ्गत्वावगमादिति निर्णीतं चतुर्थे VidhiRa. 9 (53. 7); एवमुपनयनोपाकरणादीनां वेदाध्ययनाङ्गत्वात् तत्तच्छाखाध्ययनस्य भेदेनेतिकर्तव्यतापेक्षायां भेदेनैव तत्तद्गृह्याम्नातोपनयनादीनां अङ्गत्वावगमेन सिद्धान्तेऽपि व्यवस्थाप्रतीतेः MīmāKau. i. 98. 14 (*on* i. 3. 15)

**अङ्गत्वावधारण** (aṅgatvāvadhāraṇa) *n.* determination or definite knowledge of being a subsidiary तत्र ऋचां क्रमप्रकरणाभ्यामङ्गत्वावधारणेनार्थिकत्वाभावात् MayūMāli. 714. 6 (*on* x. 4. 23)

**अङ्गत्वावर्णन** (aṅgatvāvarṇana) *m.* absence of a statement indicative of subservience नादत्रयस्य तु प्रातिशाख्यादौ पार्थक्येनाङ्गत्वावर्णनेऽपि बिन्दुसंनियोगशिष्टत्वाद् बिन्दुवदङ्गत्वमेव SetuBa. 241. 3.

**अङ्गत्वावश्यम्भाव** (aṅgatvāvaśyambhāva) *m.* necessity of being a subsidiary तस्य (विदेवनाकर्मणः) चायागत्वादेव राजसूयफलसम्बन्धे बाधितेऽङ्गत्वावश्यम्भावेन संनिधिलक्षणक्रमादभिषेचनीयमात्राङ्गत्वप्रसक्तौ प्रकरणाद्राजसूययागाङ्गत्वम् MīmāKau. ii. 363. 14 (*on* iii. 3. 14)

**अङ्गत्वावसाय** (aṅgatvāvasāya) *m.* determination or definite knowledge of being ancillary न हि तत्रैकहायनी उद्देश्या । … द्वारमात्रं तु सा । तृतीयया क्रयं प्रत्येवारुण्यस्य अङ्गत्वावसायात् MīmāKau. ii. 167. 19 (*on* iii. 1. 12)

**अङ्गत्वाविशेष** (aṅgatvāviśeṣa) *m.* non–difference (i. e. sameness) in being an ancillary न कश्चिदङ्गगुणविरोधन्यायः उभयोरङ्गत्वाविशेषात् TantrVā. 1170. 9 (*on* iii. 8. 21); कर्मधर्माश्चैते विज्ञायन्ते, तच्च कर्म शाखान्तरेष्वपि तदेवेत्यङ्गत्वाविशेषः TantrVā. 648. 14 (*on* ii. 4. 20); 683. 19 (*on* iii. 1. 11)

**अङ्गत्वावेदक** (aṅgatvāvedaka) *adj.* indicative of the nature of a subsidiary अङ्गत्वावेदकं तु प्रकरणमन्यदेवोभयाकाङ्क्षारूपम् SiddhāTa. 35. 16.

**अङ्गत्वावेदकश्रुति** (aṅgatvāvedaka–śruti) *f.* Vedic expression indicative of the nature of a subsidiary वाक्येनेति । अङ्गत्वावेदकश्रुत्यभावेऽपि न काचिद्धानिरिति भावः MayūMāli. 389. 2 (*on* iv. 3. 13); यथा विघ्नहेतुदुरितशून्येनानुष्ठितं मङ्गलं दुरितध्वंसं न जनयति स्वरूपसतो दुरितस्याङ्गस्याभावादिति । तन्न । अङ्गत्वावेदकश्रुत्याद्यभावात् TristhaSe. 319. 4.

**अङ्गत्वासंभव** (aṅgatvāsambhava) *m.* impossibility of being an ancillary न चापहते पापकृत्यामित्यादिना फलान्तरप्रतिपादनादङ्गत्वासंभवः S'ivārkaMaDi. i. 362. 31 (*on* i. 2. 16); न चानारभ्याधीतस्य वाक्यस्य प्रकृत्यर्थत्वादिहातिदेशेनाग्निप्राप्तावसिद्धत्वेनाङ्गत्वासम्भवेऽपि प्राधान्यकल्पनोपपत्तिः MīmāKau. ii. 207. 5 (*on* iii. 1. 22); अकिंचित्कुर्वतोऽङ्गत्वासंभवात् MayūMāli. 22. 10 (*on* i. 3. 2)

**अङ्गत्वासंभवमात्र** (aṅgatvāsambhava–mātra) *n.* mere impossibility of being an ancillary किं पुनरिदानीमाकृत्यधिकरणोक्तसामान्यापह्नवं भाष्यकारः करोति । नेति ब्रूमः । तस्याङ्गत्वासंभवमात्रमाहेति केचित्तदयुक्तम् TantrVā. 792. 6 (*on* iii. 2. 21)

**अङ्गत्विष्** (aṅga–tviṣ) *f.* complexion of the body अङ्गत्विषामञ्जनमेचकानां व्याजेन विस्तारयति स्फुटं यः । कठोरवक्षःस्थलकेलिभाजो लक्ष्म्या नवेन्दीवरपत्रशय्याम् YātrāPra. 3. 200.

**अङ्गत्वोन्मज्जन** (aṅgatvonmajjana) *n.* revival (i. e. occurrence) of the nature of being an ancillary विद्यानां पुनरङ्गत्वोन्मज्जने तन्निवृत्त्यर्थं आरम्भः VedāntKa. 528. 20 (*on* iv. 1. 18)

**अङ्गत्वोपपत्ति** (aṅgatvopapatti) *f.* propriety of being accessory or helpful संनिधानस्याङ्गतायामतन्त्रत्वेन स्मर्यमाणायास्तस्या (रतेः) अङ्गत्वोपपत्तेः RasGaṅ. 60. 14.

[1]**अङ्गद** (aṅga–da) *n.* [rarely *m.*] **i** bracelet worn on the upper arm (by both males and females), armlet कण्ठसूत्रैरङ्गदैश्च निष्कैरपि च सुप्रभैः । अन्यैश्चाभरणैश्चित्रैर्भाति भारत मेदिनी MahāBhā. vii. 123. 36; अङ्गदैर्हस्तकेयूरैः

-स्रग्भिश्च समलंकृतम् । ··· संपश्यायोधनं विभो MahāBhā. xi. 16.22; i. 110.36; सुयज्ञम् ··। जातरूपमयैर्मुख्यैरङ्गदैः कुण्डलैः शुभैः ।··· काकुत्स्थः प्रत्यपूजयत् Rāmā. ii. 29.5; अङ्गदानङ्गुलीवेष्टान् वराण्याभरणानि च । हारं च···आवबन्ध Rāmā. vi. 53.20; v. 8.31; vi. 64.5; लीलाकृताङ्गदं वीरं मदेन रुधिरेण च ।···औग्रसेनिः···। कृष्णम् ··समुदैक्षत HariVaṁ. 75.2; 112.56; (महासेनः) पीताङ्गदैः परिगतैः परिणीवितांसः PratiYau. 2.2; देवानां पार्थिवानां च पुनर्वक्ष्यामि योषिताम् ।··· अङ्गदं वलयं चैव बाहुमूलविभूषणम् NāṭyaS'ā. 21.33; 21.14; 21.19; न बाहुयुग्मेषु विलासिनीनां प्रयान्ति सङ्गं वलयाङ्गदानि ṚtuSaṁ. 4.3; 6.6; Vikramo. 1.13; यः संघट्टयन्नङ्गदमङ्गदेन ।···अर्धासनं गोत्रभिदोऽधितष्ठौ RaghuVa. 6.73; यात्यङ्गदोऽप्येष विवृद्धदीप्तिरनङ्गदत्वं न्यसनेन यत्र JānaHa. 7.12; 10.85; BṛSaṁ. 44.25; (ललिता) कनकाङ्गदकेयूरकमनीयभुजान्विता LalitāSa. 64 (but comm. अङ्गं ददातीत्यङ्गदं शरीरघटकमित्यर्थः); AvantiKa. 26.6; किरीटहाराङ्गदकुण्डलानि ··। स्त्रीपुंसयोग्यानि विभूषणानि VarāṅgaC. 7.17; PāraS. 11.192; तमङ्गदे चकासयामासतुः S'is'uVa. 3.6; Liṅgānu.(Ha.) 40.1; Liṅgānu.(S'ā.) 119.10; ViṣṇuPādāSt. 32; कटकाङ्गदकेयूरमुद्रिकादिविभूषणैः । बाहू व्यरू(? रु)चताम् MahāP. 7.235; 9.41; Kapphiṇā. 3.7; 3.11; कोटीराङ्गदहारकुण्डलकटीसूत्रादिभिर्भूषिताम् ।··· ध्यायेत् प्रियां शार्ङ्गिणः S'āraTi. 8.148; 10.7; गौरमुखि ··· दोषालयमङ्गदम्···भवद्विधानामेव राजते NalaCam. 3.17(15); YaśasCam. i. 398.3; तम्···चतुर्भुजम्···।···उद्दामकाञ्च्यङ्गदकङ्कणादिभिर्विरोचमानं वसुदेव ऐक्षत BhāgP. x. 3.10; SkandP. i(1). 23.79; v(1). 41.22; ViṣṇuDhaP. i. 217.9; iii. 38.8; VarāP. 197.20; 201.26; TantrRā. 14.7; 24.32; केयूरायितमङ्गदैः परिणतं पाण्डिम्नि गण्डत्विषा । अस्याः VakroJī. 112.17; S'āstrDī. 70.14 (on i. 1.5); (नृपतेः) तस्याङ्गदोऽस्रजा लिप्तः BhaviP. 443B.6 (iii(2). 15.31); स वै बालः ···। हारनूपुरसूत्राद्यैर्ग्रैवेयाङ्गदकङ्कणैः । विभूषितः PadmP. iv. 72.99; iv. 74.181; ते सिंहासनेऽङ्गदकिरीटभृतो रमन्ते SaurP. 50.51; बाला ··· । ताटङ्के बिभ्रती श्रुत्योः ··· अङ्गदे चारुणी बाह्वोः GaṇeP. i. 48.21; ii. 35.2; ii. 53.6; ii. 104.42; अङ्गदान् वलयानूर्मान् विश्लेष्य च पुनः पुनः । तत्स्थानात् पुनरेवासौ तत्स्थाने प्रत्ययोजयत् S'ivaP. ii(2). 21.22 (94A.16); YuktiKa. 84.7; शोभते राजा केयूराङ्गदकुण्डलैः SamarāSū. 55.116; Vaij. 170.143; नूपुरे कटिसूत्रं च क्रोडबन्धं तथाङ्गदैः । ··· उपवीतं च बिभ्राणम् ··· । अघोरास्त्रम् ĪśānS'iPa. ii. 12.100; i. 21.90; ii. 12.6 (1); DaśāvaC. 9.33; सुवर्णमणिविन्यस्तमुक्ताजालकमङ्गदम् ।···बाहुसंधिविभूषणम् Mānaso. iii. 8.1077; iii. 11.1170; TriṣaS'aPuC. i. 2.592; AbhidhāCin. 662; एतानि ··· त्रयोदश मञ्जीराणि, एते चैकविंशतिरङ्गदाः KaumuMi. 5.5 (8); RāghPāṇ.(Ka.) 7.37; NemiNir. 15.25; अनुलोमप्रतिलोमशब्दा यथा – अङ्गद वलय KāvyKaVṛ. 100.10 (3.5); VasaViKā. 10.76; SātvaT. 9.21; अङ्गदे भुजयोर्नद्धे SamarāSaṁ. 2.124; AdhyāRā. iv. 6.82; स (चिदात्मा) एवान्यतयोदेति यत्पदार्थशतभ्रमैः । कटकाङ्गदकेयूरनूपुरैरिव काञ्चनम् YogVā. iii. 9.70; iii. 63.7; KumāDeC. 1.10; EI. xxi. 282.5; तुष्टो राजा दोर्दण्डादादायाङ्गदं वलयं च तस्मै दत्तवान् BhojPra. 57.5; BallāC. 37.6; वयं भवितुमिच्छामः ··· वलयाङ्गदभृङ्गारमञ्जीररसना हरेः BṛBrahmS. i. 8.16; काञ्चीगुणत्वं हि गतोऽङ्गदोऽपि AlaṅkāMañ. 141.10; **ii** ring (around a mace) तां गदां परमाङ्गदाम् । खरश्चिक्षेप रामाय Rāmā. iii. 28.25; भीमो हेमाङ्गदया चूर्णीचक्रे चमूमिहेमां गदया YudhiVi. 5.33 (comm. हेममया अङ्गदा बन्धनविशेषा यस्याः सा तादृश्या गदया); **iii** ring (on the big toe) तदा कृष्णः···। चचार तद्वनवरम्···। श्रीवत्सेनोरसा युक्तः···। साङ्गदेनाग्रपादेन HariVaṁ. 55.3; *adj.* bestowing strong limb, forming the body ममाङ्गतो यथोत्पन्नस्तस्मादङ्गारको ह्ययम् । अङ्गदोऽङ्गोपकारश्च अङ्गानां तु प्रदो नृणाम् BhaviP. 65B.14 (i. 31.19); (कनकाङ्गदकेयूरकमनीयभुजान्विता) अङ्गं ददातीत्यङ्गदं शरीरघटकमित्यर्थः । कनकमेवाङ्गदं येषां तैः सुवर्णशरीरकैः LalitāSaBh. 34.33 (on 64)

²**अङ्गद** (aṅgada) *m.* **1** name of a monkey-chief (son of Vālin and Tārā) वालिपुत्रोऽङ्गदश्चैव ये चान्ये प्लवगर्षभाः । विचेतुं दक्षिणामाशां राजन् प्रस्थापितास्त्वया MahāBhā. iii. 266.27; प्रेषयामास दौत्येन रावणस्य ततोऽङ्गदम् MahāBhā. iii. 267.54; श्रुत्वं कथयतो वचः । अङ्गदस्य कुमारस्य Rāmā. iv. 15.14; वाली दृष्ट्वात्मजं स्थितम् ।···स्नेहादङ्गदमब्रवीत् Rāmā. iv. 22.19; ताराङ्गदादिसहितः प्लवगः पवनात्मजः । अगस्त्यचरिताम् आशाम्···।···प्रतस्थे Rāmā. iv. 44.5; युवराजो महाप्राज्ञ अङ्गदो वाक्यमब्रवीत् Rāmā. iv. 52.19; ततः प्रविशत्यङ्गदो हनूमांश्च Abhiṣe. 1.22 (8); ViṣṇuP. iv. 4.99; सुषुवे सापि (तारा) तनयमङ्गदं कनकाङ्गदम् BrahmāṇḍP. ii. 7.219; वाली । न्यक्षिपच्चाङ्गदं यत्नात् काकुत्स्थे तनयं प्रियम् Bhaṭṭi. 6.140; PadmP.(Ra.) 49.77; 54.35; MahāVīC. 5.55; 5.62; कुमारमङ्गदमभिषेक्ष्यामि AnargharRā. 5.53 (12); अङ्गदेन्द्रजयिनोरनन्तरं संगरः प्रववृते भयङ्करः RāmC. 29.76; 4.23; बीभत्सं रणरुचिरङ्गदोर्जितश्रीरांशुः RāghPāṇ. (Dha.) 14.22; नरान्तकस्यान्तकोऽभूदङ्गदः BālaRā. 9.10; 7.85; 8.6; अङ्गदेन कृतं तीर्थमस्ति सेतौ विमुक्तिदे SkandP. iii(1). 42.47; iii(1). 44.39; vi. 101.3; वालिपुत्रोऽङ्गदो नाम ViṣṇuDhaP. i. 252.12; NaraP. 50.26; प्राप रत्नवतीं पुरीम् । ··· प्रेषितः प्रभुणाविशत् । परिखार्णवमुल्लङ्घ्य स तां लङ्कामिवाङ्गदः NavaSāC. 16.67; प्रययावङ्गदो दौत्ये माघशुक्लाचवासरे PadmP. iv. 36.46; iv 11.16; KalkiP. iii. 3.43; तत्रैव (कृत्यारामायणे) अङ्गदादभिद्रूयमाणाया मन्दोदर्या भयम्, अङ्गदस्योत्साहः AbhinBhā. iii. 104.16 (on 20.70); वाली निजनन्दनं रघुनन्दने समर्प्याङ्गदम्···प्रशान्तासुरभवत् RāmāCam. 4.19 (3); 6.4 (3); मैन्दद्विविदाङ्गदाः । ··· चेरुर्नभस्तले RāmāMañ. 327.4; 195.21; 354.17; DaśāvaC. 7.167; TrikaS'e. iii. 3.202; AnekāSaṁ. 3.318; तदादिश्यतामङ्गदाय दौत्यम् Dūtāṅg. 6 (1); 2; रामायणे ··· अङ्गदेन मन्दोदरीकेशाकर्षणम् NāṭaLaRaK. 1354; (त्वम्) किं वा वालिपुत्रोऽङ्गदो रामदूत इति ख्यातः PrabaK. 83.28; AdhyāRā. iv. 2.25; शत्रुघ्नः किमु लक्ष्मणोदयभरः सुग्रीव इद्धाङ्गदः EI. ii. 415.23; न केवलं सः ··· वालिपुत्रो युवराजोऽङ्गदोऽन्यैः सैनिकाश्च JānaPa. 7.15 (47); 6.69 (4); तारायाः शुचमङ्गदस्य युवराजत्वप्रतिज्ञामुतैः ··· । नीतवा शान्तिम् ··· विभुः Rāgh. 10.86 (?87); 11.75; MahāN. 4.77 (2); 6.75; (deified) नीलं नलं चाङ्गदं च ऋषभं दिक्षु पूजयेत् VṛHārīSm. 6.275; हनूमन्तं ससुग्रीवं भरतं सविभीषणम् । लक्ष्मणाङ्गदशत्रुघ्नान् जाम्बुवन्तं दलेष्विमान् । ··· यजेत् S'āraTi. 15.88; सीतापतिं सपरिवारकमंगदेन रामं च गोपसचिवो(ऽ)कृत सुप्रतिष्ठम् EI. vi. 122.128; vi. 122.132; ओं अङ्गदाय नमः VīraMi.(Pūjā.) 137.18; (identified with Viṣṇu) दूतप्रियो दूतकारी ह्यङ्गदो गदतां वरः SkandP. v(1). 63.109; **2** name of a warrior on the side of the Kauravas in the battle of Kurukṣetra अङ्गदोऽभिमुखः शूरमुत्तमौजसमाहवे ।··· वत्सदन्तैरवारयत् MahāBhā. vii. 24.36; **3** name of the elder son of Lakṣmaṇa and Ūrmilā (his capital being at Aṅgadīya or Aṅgadā in Kārāpatha) इमौ कुमारौ सौमित्रे तव धर्मविशारदौ । अङ्गदश्चन्द्रकेतुश्च Rāmā. vii. 102.2 (Cr. Ed. vii. 92.2); अङ्गदीया पुरी रम्याप्यङ्गदस्य निवेशिता Rāmā. vii. 102.1 (Cr. Ed. vii. 92.8); अङ्गदं चन्द्रकेतुं च लक्ष्मणोऽप्यात्मसंभवौ । ··· चक्रे कारापथेश्वरौ RaghuVa. 15.90; ViṣṇuP. iv. 4.104; VāyuP. ii. 26.186–7; अङ्गदस्याङ्गदा ख्याता देशे कारवते(? कारापथे) पुरी BrahmāṇḍP. ii. 63.189; ii. 63.188; RāmāMañ. 502.2; AdhyāRā. vii. 8.6; KalpaK. 453.21; **4** name of a sage (who broke his vow of celibacy) तथाङ्गदोऽन्तं तपसोऽपि गत्वा कामाभिभूतो यमुनामगच्छत् । धीमत्तरं यत्र रथीतरं स सारङ्गजुष्टं जनयांबभूव Saund. 7.33; **5** name of a son of Gada and Bṛhatī बृहत्यां तु गदस्याहुः शैब्यायामङ्गदं सुतम् HariVaṁ. 98.15; तस्याः (बृहत्याः) पुत्रास्तु विख्यातास्त्रयः ··· । अङ्गदः कुमुदः श्वेतः VāyuP. ii. 34.237; **6** name of a son of Vikarṇa विकर्णस्य सुतस्त्वासीदङ्गदः कुलवर्धनः HariVaṁ. 357*.1; **7** name of an attendant of Viṣṇu (Vāmana) in the south-west वीरसेनोऽङ्गदश्चैव ··· । गणा एते च पञ्चाशत्नैर्ऋतिं दिशमाश्रिताः । ··· वामनस्यानुगा इमे PāraS. 17.176; **8** name of a Nāga residing in Kashmīra (नागाः कश्मीरायां कृतालयाः) सुनेत्रो बहुनेत्रश्च हनूमानङ्गदो हरः NīlaP. 906; **9** name of a Vetāla अङ्गदो नीलकर्णोऽसौ वसन्तो यावकस्तथा । घोररूपा महाकाया वेतालाश्च प्रकीर्तिताः BhaviP. 381B.9 (ii(2). 20(?19). 57); **10** name of a king अङ्गदस्तत्र संप्राप्तः ··· । ··· कलिङ्गश्च नृपः प्राप्तः BhaviP. 534A.25 (iii(3). 32.68); **11** name of a son of Ajamiśra and father of Kaliparvā °अजमिश्राङ्गभवाङ्गदस्य पुत्रीं पत्नीं स लेभे कलिपर्व्वानाम्नीम् EI. xiii. 291.15; **12** name of a person (?) कृतसाहायकोऽमात्यै राज्ञः सप्रज्जिमङ्गदम् । राज्यं प्राभ्रंशयद् भ्रातृद्रुहं पञ्चवटो(? टं) नृपम् RājTa.(Ka.) 8.3400.

³**अङ्गद** (aṅgada) *m.* [to be used in pl.(?)] name of a country (अथापरे जनपदाः) समङ्गाः कोपनाश्चैव कुकुराङ्गदमारिषाः MahāBhā. vi. 10.59.

**अङ्गदकुमार** (aṅgada-kumāra) *m.* prince Aṅgada ततोऽङ्गदकुमारेण तदभिज्ञेन कृच्छ्रतः । प्रबोधिताः प्रतीयं(? पं) ते पदानि निद्रुश्चिरात् PadmP. (Ra.) 71.22; वीरोऽङ्गदकुमारोऽयम् PadmP.(Ra.) 79.20; तत्राङ्गदकुमारेण···तेने हनुमतेऽर्हणा RāmC. 9.2.

**अङ्गदकोटि** (aṅgada-koṭi) *f.* edge of an armlet कश्चिद्विलासी गलितं लग्नमङ्गदकोटिभिः । प्रालम्बमकरोदंसे MahāBhā. i. App. I. 98.40; क्रोधः सभां न्यविशताङ्गदकोटिलग्नविस्रस्तकोमलदुकूलदशं स्मरारेः HarVi. 7.2.

**अङ्गदक्षिणभाग** (aṅga-dakṣiṇabhāga) *m.* right part of the body अङ्गदक्षिणभागे तु शस्तं प्रस्फुरणं भवेत् MatsyaP. 241.2.

**अङ्गदक्षिणा** (aṅga-dakṣiṇā) *f.* gift which is to be given in consideration of a subsidiary rite चयनाङ्गं वाविप्रतिषेधादङ्गदक्षिणा च रथन्तरे वरं ददाति इति SaṅkarKā.(Devasvāmin) i. 1.18; चयनस्य च अङ्गदक्षिणासंबन्धाविप्रतिषेधात् SaṅkarKāBh. 7.18 (on i. 1.18); एवं तावत् पुरुषविशेषसंयोगिनीनामङ्गदक्षिणानां विधिरुक्तः ManuBh. ii. 171.4 (on 8.210)

**अङ्गदगत** (aṅgada-gata) *adj.* sitting on (the shoulders of) Aṅgada तमङ्गदगतो रामं लक्ष्मणः शुभया गिरा । उवाचे Rāmā. vi. 4.38.

**अङ्गदत्त** (aṅga-datta) *adj.* applied to the body ते क्षितिभृतः ··· तान्

and minor limbs चतुर्थेऽङ्गप्रत्यङ्गविभागः प्रव्यक्तो भवति AṣṭāSaṁ. i. 203. 7(2. 2)

**अङ्गप्रत्यङ्गसंयोग** (aṅgapratyaṅga-saṁyoga) *m.* **i** contact with each and every part (of the body) अङ्गप्रत्यङ्गसंयोगत्रिविधाश्लेषणं मुदा। ... चकार रसिकेश्वरः BrahmVaiP. iv. 14. 34; **ii** contact with major and minor divisions (of time) अङ्गप्रत्यङ्गसंयोगात् कालात्मा प्रपितामहः। ...प्रोक्तः संवत्सरश्चेति VāyuP. i. 31. 33; BrahmāṇḍP. i. 13. 121.

**अङ्गप्रत्यङ्गसंश्लेष** (aṅgapratyaṅga-saṁśleṣa) *m.* embracing each and every limb (of the body) अङ्गप्रत्यङ्गसंश्लेषपूर्वकं स्त्रीमनोहरम्। तत्सर्वं सुखशृङ्गारं चकार रसिकेश्वरः BrahmVaiP. ii. 16. 119.

**अङ्गप्रत्यङ्गसंधि** (aṅgapratyaṅga-sandhi) *m.* **A** joints between each and every limb (of the body) तथाङ्गप्रत्यङ्गसंधिबन्धनाः स्नायवो नव शतानि Mitā. 378. 8 (*on* 3. 100); **B** limbs, minor limbs and joints (i. e. the whole body) (कुमारिका) उद्भिन्नपुलकाप्यासीदङ्गप्रत्यङ्गसंधिषु SkandP. iv(2). 67. 101; **C** joints of the major limbs with the minor limbs (26 in the whole body) प्रतिपत्सु च या नारी ...। इन्धनं ब्राह्मणे दद्यात् प्रीयतां मे हुताशनः। तस्या जन्मा-(? न्म)नि षड्वि(? ड्विं)शदङ्गप्रत्यङ्गसंधिषु। न रजो नैव संतापो जायते राजवल्लभे SkandP. v(3). 26. 103.

**अङ्गप्रत्यङ्गसंभव** (aṅgapratyaṅga-sambhava) *m.* the origination of each and every limb (i. e. the whole body) ईश्वरः सर्वभूतानां प्रणवो योऽथ पठ्यते। आत्मवेशेन भूतानां अङ्गप्रत्यङ्गसंभवः। ...रुद्रो वत्सर उच्यते। ... कालात्मा BrahmāṇḍP. i. 13. 137; ईश्वरः सर्वभूतानां प्रणवायोपपद्यते। आत्मवेशेन भूतानां अङ्गप्रत्यङ्गसंभवः ... कालात्मा VāyuP. i. 31. 54.

**अङ्गप्रत्यङ्गसंभूत** (aṅgapratyaṅga-sambhūta) *adj.* born or sprung up from each and every limb (i. e. offspring) अङ्गप्रत्यङ्गसंभूतावेतौ मे हृदयोद्भवौ। दृष्ट्वा विवर्धते दुःखम् Rāmā. ii. 1761* (1); अङ्गप्रत्यङ्गसंभूतो मनोहृदयनन्दनः। मया कुपित्रा हा वत्स विक्रीतः (त्वम्) MārkP. 8. 191; अङ्गप्रत्यङ्गसंभूताः ...मया तु मात्रा हा वत्सा मारिताः SkandP. v(2). 71. 33.

**अङ्गप्रत्यङ्गसौष्ठव** (aṅgapratyaṅga-sauṣṭhava) *n.* well-formedness or excellence of each and every limb अस्या देव्याः (सीतायाः) यथारूपमङ्गप्रत्यङ्गसौष्ठवम् Rāmā. v. 13. 49; अन्यूनानतिरिक्तं यदङ्गप्रत्यङ्गसौष्ठवम्। ... तत्सौन्दर्यमिति स्मृतम् BhavPra.(Śā.) 73. 19(3)

**अङ्गप्रत्यङ्गिक** (aṅgapratyaṅg-ika) *adj.* belonging to each and every limb गृहीत्वाभरणं तस्यास्त्वङ्गप्रत्यङ्गिकं तथा SkandP. v(3). 170. 14.

**अङ्गप्रदक्षिण** (aṅga-pradakṣiṇa) *n.* turning one's own body to the right (clockwise) (a substitute for circumambulation) अङ्गप्रदक्षिणं कुर्वन्नष्टैश्वर्यसमन्वितः। अशेषपातकैः सद्यो विमुक्तः (भवतु) SkandP. i(3) 2. 48; अङ्गप्रदक्षिणं कुर्वन् क्षणात्स्वर्यंतनुर्भवेत् SkandP. i(3)- 9. 52.

**अङ्गप्रदूषण** (aṅga-pradūṣaṇa) *n.* harming the body (by excessive scratching) वेगधारणोदीरणविषमस्खलनपतनाङ्गप्रणिधानाङ्गप्रदूषणप्रहारमर्दनप्राणोपरोधसंक्लेशनादिः शारीरो मिथ्यायोगः CaraS. i. 11. 39 (1922 Ed.) (comm. अङ्गदूषणमतिकण्डूयनादिभिः)

[1]**अङ्गप्रदेश** (aṅga-pradeśa) *m.* place where the technical term *aṅga* has been used अङ्गप्रदेशा अङ्गस्येत्येवमादयः KāśiVṛ. *on* P. i. 4. 13.

[2]**अङ्गप्रदेश** (aṅga-pradeśa) *m.* region of a limb तस्य (कुष्ठस्य) पूर्वरूपाणि...स्वेदबाहुल्यमस्वेदनं वा अङ्गप्रदेशानां स्वापः SuśruS. ii. 5. 4; (मारुतः) सर्वाङ्गगतः सर्वानेवाङ्गप्रदेशानन्तर्बहिश्च प्रस्तभ्य तिष्ठति Hastyāyur. 58. 22 (1. 9)

**अङ्गप्रदेशनिर्देश** (aṅgapradeśa-nirdeśa) *m.* mention of the regions of the body अथाङ्गप्रदेशनिर्देशः VīraMi.(Lakṣaṇa.) 435. 1.

**अङ्गप्रधान** (aṅga-pradhāna) *adj.* a variety of metaphor (*rūpaka*) in which the superimposition of the parts is prominent (than that of the whole) भेदानङ्गप्रधानस्य (रूपकस्य) चतुरोऽवयवाश्रयान्।...प्रचक्षते SaraKaṇṭhā. 421. 24.

**अङ्गप्रधानकर्तृ** (aṅgapradhāna-kartṛ) *adj.* (the priests) performing the subsidiary and main sacrificial rites न च दक्षिणाङ्गप्रधानार्थत्वेऽङ्गप्रधानकर्तृभ्यो देया VidhiRa. 10(71. 13)

**अङ्गप्रधानग** (aṅgapradhāna-ga) *adj.* connected with or related to the subsidiary and the principal rites बर्हिषां धर्मा वाक्यादङ्गप्रधानगाः Śāstr-Dī. 342. 7 (*on* iii. 8. 19)

**अङ्गप्रधानचिन्ता** (aṅgapradhāna-cintā) *f.* discussion as regards subsidiary and principal rites अङ्गप्रधानचिन्ता सापि क्रत्वर्थपुरुषार्थजिज्ञासैव ŚābaBh. 1193. 5 (*on* iv. 1. 1); अङ्गप्रधानचिन्तेयं चतुर्थाध्यायगोचरः TantrVā. 458. 10 (*on* ii. 2. 3)

**अङ्गप्रधानजिज्ञासा** (aṅgapradhāna-jijñāsā) *f.* desire to know the ancillary and the primary rites नाङ्गप्रधानजिज्ञासा तावद्विदेवनादिविषया TantrRa. 5. 18.

**अङ्गप्रधानता** (aṅgapradhāna-tā) *f.* relation of subordinate and principal एकधातुगृहीतानां न चास्त्यङ्गप्रधानता SlokaVār. 23. 73 (866. 4)

**अङ्गप्रधानत्व** (aṅgapradhāna-tva) *n.* the state of being subordinate and principal (rites) पक्षे वाङ्गप्रधानत्वं विरोधान्न विकल्पते TantrVā. 464. 17 (*on* ii. 2. 3); एकप्रयोगान्तर्गतिश्चाङ्गप्रधानत्वेन ...अनुष्ठेयानां भवति ŚivārkaMaDī. i. 43. 23 (*on* i. 1. 1)

**अङ्गप्रधानद्वय** (aṅgapradhāna-dvaya) *n.* two things viz. the subsidiary and the principal (rite) एवं चाङ्गप्रधानद्वयस्याविधेयत्वादविषयो विधिरापद्यते Kāśi. i. 171. 19 (*on* 2. 206)

**अङ्गप्रधानधर्म** (aṅgapradhāna-dharma) *m.* the property of the subsidiary and principal (rites) गुणमुख्यव्यतिक्रमोऽङ्गप्रधानधर्मैर्विरोधो व्याख्यायते TantrVā. 828. 18 (*on* iii. 3. 9)

**अङ्गप्रधानपर** (aṅgapradhāna-para) *adj.* refering to both the subsidiary and principal (rites) यज्ञशब्दस्यात्राङ्गप्रधानपरत्वकल्पनात् MayūMāli. 823. 8 (*on* zi. 3. 9)

**अङ्गप्रधानपर्याप्त** (aṅgapradhāna-paryāpta) *adj.* (time) sufficient for the subsidiary and principal (rites) तदनन्तरमेवातिदेशिके प्रतिपदाद्यभागत्रयेऽङ्गप्रधानपर्याप्ते (काले) विकृत्यनुष्ठानमित्यवगन्तव्यम् CaturCin. iii(2). 375. 18; SmṛtiCan. v. 44. 21.

**अङ्गप्रधानप्रत्यासत्ति** (aṅgapradhāna-pratyāsatti) *f.* close connection between the subordinate and the principal (rites) यस्मिन् कस्मिंश्चित्काले चाङ्गप्रधानप्रत्यासत्त्यतिशयानुग्रहाय प्रयोगकाल एव वा निमन्त्रणे प्रसक्ते कालविशेषः प्रतिपाद्यते CaturCin. iii(1). 1130. 20; तत्राङ्गप्रधानप्रत्यासत्तिः MīmāKau. i. 32. 5 (*on* i. 3. 6)

**अङ्गप्रधानप्रयोग** (aṅgapradhāna-prayoga) *m.* performance of the subsidiary and the main rites कर्तुश्चाङ्गप्रधानप्रयोगाङ्गत्वेन MīmāKau. ii. 191. 20 (*on* iii. 1. 19)

**अङ्गप्रधानभाव** (aṅgapradhāna-bhāva) *m.* relation of being subsidiary and main (rites) न च दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेत्यत्राङ्गप्रधानभावप्रसङ्गः Bhām. 612. 8 (*on* iii. 3. 25); अङ्गप्रधानभावेन साक्षात्संबन्धिनोऽध्यापनस्य फलम् PūrvottaVāNaMā. 286. 14; MīmāKau. ii. 315. 12 (*on* iii. 3. 2)

**अङ्गप्रधानभेद** (aṅgapradhāna-bheda) *m.* distinction between principal and subsidiary (rites) अङ्गप्रधानभेदेन तत्तद्विषयकक्रत्वोर्भेदात् Bhāṭṭ-Dī. iii. 68. 6 (*on* ix. 1. 11)

**अङ्गप्रधानमेलन** (aṅgapradhāna-melana) *n.* act of bringing together subsidiary and main (rites) अपूर्वद्वारकत्वस्याङ्गप्रधानमेलनान्यथानुपपत्त्या वाक्यार्थबोधे संसर्गलभ्यत्वात् BhāṭṭCin. i. 130. 31 (*on* i. 1. 5)

**अङ्गप्रधानयुक्त** (aṅgapradhāna-yukta) *adj.* [*f.* -ā] consisting of the auxiliaries and primaries अङ्गप्रधानयुक्तैव च क्रियानुष्ठेया NyāyRaMā. 166. 6.

**अङ्गप्रधानरूपक** (aṅgapradhāna-rūpaka) *n.* metaphor in which the superimposition of the parts is prominent सहजावयवो नामायमङ्गप्रधानरूपकेष्वर्थभूयिष्ठरूपकभेदः SaraKaṇṭhā. 422. 8.

**अङ्गप्रधानवत्** (aṅgapradhāna-vat) *ind.* as in the case of subsidiary and main (rites) किं विद्याकर्मणोः समुच्चय आधानोत्तरक्रतुवत्। किं वाग्नेयाग्नीषोमीयादिवत्। यद्वाङ्गप्रधानवदिति विमर्शे निर्णयार्थमुक्तम् Aparā. 959. 14 (*on* 3. 57); अङ्गप्रधानवत्वेन कल्पेतात्रैकवाक्यता BṛĀraUBhVā. (Sambandha.) 832.

**अङ्गप्रधानवत्** (aṅgapradhāna-va(n)t) *adj.* [*f.* -ī] endowed with the subsidiary and principal (rites) स विधिरङ्गप्रधानवत्यां भावनायां पुरुषं नियोजयति TātpaṬ.(U.) 190. 19 (*on* 5(1). 15)

**अङ्गप्रधानवाक्य** (āṅgapradhāna-vākya) *n.* Vedic sentence enjoining subsidiary and main (rites) ततश्च यत्राङ्गप्रधानवाक्ययोरेकवेदस्थत्वम् MīmāKau. ii. 321. 11 (*on* iii. 3. 9)

**अङ्गप्रधानविधानार्थत्व** (aṅgapradhānavidhānārtha-tva) *n.* the state of being meant as an injunction of a principal and a subsidiary तथाग्निं चित्वा सौत्रामण्या यजेतेत्यादेरङ्गप्रधाना(? न)विधानार्थत्वे सौत्रामण्यादीनां क्रत्वर्थता, कालार्थे तु संयोगे पुरुषार्थता TantrRa. 5. 20.

**अङ्गप्रधानविधि** (aṅgapradhāna-vidhi) *m.* injunction (introducing or) teaching subsidiary and main (rites) विलम्बे ह्यङ्गप्रधानविध्येकवाक्यतावगततत्साहित्यानुपपत्तिः प्रसज्यते MīmāNyāPra. 233. 23; अङ्गप्रधानविध्येकवाक्यताबोध एव प्रयोगविधिरित्यन्ये BhāṭṭCin. i. 75. 93 (*on* i. 1 4); ArthSaṁ. 70. 6.

**अङ्गप्रधानविभाग** (aṅgapradhāna-vibhāga) *m.* distinction between subsidiary and principal (rites) असति ह्यङ्गप्रधानविभाग एतदेवं स्यात् Śāba-

Bh. 1428.20 (*on* vi. 3.41)

**अङ्गप्रधानविषय** (aṅgapradhāna-viṣaya) *adj.* relating to subsidiary and principal (rites) तच्च सामर्थ्यं काम्ये कर्मण्यङ्गप्रधानविषयम् MīmāNyāPra. 243.18.

**अङ्गप्रधानवैदेश्य** (aṅgapradhāna-vaideśya) *n.* the state of subsidiary and principal (rites) being in different places तत्र विना वचनेनाङ्गप्रधानवैदेश्यमापद्यमानं वैगुण्यं जनयेत् TantrVā. 994.14 (*on* iii. 4.32)

**अङ्गप्रधानव्यवस्था** (aṅgapradhāna-vyavasthā) *f.* determination of subsidiary and principal (rites) अतोऽवश्यमङ्गप्रधानव्यवस्थासिद्ध्यर्थमप्यपूर्वं कल्पनीयम् MīmāKau. iii(2). 51.1 (*on* ii. 1.6)

**अङ्गप्रधानव्याप्ति** (aṅgapradhāna-vyāpti) *f.* concomitance with subsidiary and principal (rites) प्रकृते तु तव्यप्रत्ययस्य कर्मार्थत्वादिष्टिकर्मकभावनाप्रतीतेस्तस्याश्चाङ्गप्रधानव्याप्त्यभावान्नाङ्गसाधारण्यम् MayūMāli. 342.12 (*on* iii. 8.19)

**अङ्गप्रधानव्यासक्त** (aṅgapradhāna-vyāsakta) *adj.* spread over or connected with subsidiary and principal (rites) स च व्यापारोऽङ्गप्रधानव्यासक्तः SāstrDī. 393.11 (*on* iv. 3.18)

**अङ्गप्रधानशेष** (aṅgapradhāna-śeṣa) *m.* residue of subsidiary and main rites कर्ता चाङ्गप्रधानार्थः, संस्कारा अपि तद्गता अङ्गप्रधानशेषाः स्युः SāstrDī. 317.11 (*on* iii. 7.2); आज्ये त्वङ्गप्रधानशेषप्रतिपत्त्यर्थत्वम् MayūMāli. 282.12 (*on* iii. 5.1)

**अङ्गप्रधानसंयुक्त** (aṅgapradhāna-saṁyukta) *adj.* [*f.* -ā] connected with subsidiary and principal (rites) प्रधानविधिवाक्यं खल्वङ्गवाक्यसमन्वितम्। अङ्गप्रधानसंयुक्तां विधत्तेऽपूर्वभावनाम् SāstrDī. 525.8 (*on* vii. 1.1)

**अङ्गप्रधानसंबन्ध** (aṅgapradhāna-sambandha) *m.* relation between subservient and the main (rites) विधावपि अङ्गप्रधानसंबन्धभेदात् अङ्गफलसंबन्धभेदाच्च वचनव्यक्तिभेदः SaṅkarKāBh. 23.11 (*on* i. 2.30); अङ्गप्रधानसंबन्धबोधको विधिर्विनियोगविधिः। यथा "दध्ना जुहोती"ति। स हि तृतीयया प्रतिपन्नाङ्गभावस्य दध्नो होमसंबन्धं विधत्ते दध्ना होमं भावयेदिति ArthSaṁ. 35.2; MīmāNyāPra. 206.5.

**अङ्गप्रधानसाधारण** (aṅgapradhāna-sādhāraṇa) *adj.* common to subsidiary and principal (rites) तत्संस्कारैश्चाङ्गप्रधानसाधारणैः … (सौमिकधर्मातिदेशः) निर्वर्तेत इति SāstrDī. 239.2 (*on* iii. 3.4); कर्तुश्चाङ्गप्रधानसाधारणस्य द्वारत्वेन प्रधानसंबन्धित्वस्यापि होमे … विवक्षितत्वात् MīmāKau. ii. 193.2 (*on* iii. 1.19); ii. 297.16 (*on* iii. 2.38); iii(2). 83.1 (*on* ii. 1.12); दर्शपूर्णमासयोर्वेदिबर्हिषी तद्धर्माश्च खननलवनादयः किं अङ्गप्रधानसाधारणहविरासादनार्थाः BhāṭṭDī. ii. 39.21 (*on* iii. 7.1); i. 207.2 (*on* iii. 1.14); न च … अङ्गप्रधानसाधारणश्रपणानुवादेन विहितशामित्रेण शालामुखीयबाधोपपत्तिः (? बाधापत्तिः) BhāṭṭDī. iv. 226.4 (*on* xii. 1.5); iv. 160.9 (*on* xi. 2.7); iv. 234.10 (*on* xii. 1.12); तच्चाङ्गप्रधानसाधारणम् (मरुतां पञ्चशारदीयदेवतात्वम्) MayūMāli. 814.2 (*on* xi. 2.12); 536.16 (*on* vii. 3.7)

**अङ्गप्रधानसाधारणता** (aṅgapradhānasādhāraṇa-tā) *f.* the characteristic of being common to subsidiary and principal (rites) सोमार्थस्य व्रतस्य…अङ्गप्रधानसाधारणतया इष्ट्याद्यर्थत्वस्यापि सत्त्वात् BhāṭṭDī. iv. 233.4 (*on* xii. 1.11)

**अङ्गप्रधानसाधारणत्व** (aṅgapradhānasādhāraṇa-tva) *n.* the characteristic of being common to subsidiary and principal (rites) बर्हिरादिशब्दानां जातिवाचित्वे प्रकृतावङ्गप्रधानसाधारणत्वात् बर्हिर्धर्माणां विकृतावङ्गतामापन्ने … बर्हिष्यप्यतिदेशेन धर्मापत्तिमाशङ्क्य … न तत्र धर्मा इति वक्ष्यते MīmāKau. i. 236.24 (*on* i. 4.10); प्रयोगस्य चाङ्गप्रधानसाधारणत्वात् … प्रधान इवाङ्गेष्वप्यग्निबाधात् BhāṭṭDī. ii. 61.12 (*on* iii. 7.24); ii. 121.20 (*on* iv. 2.11)

**अङ्गप्रधानसाधारण्य** (aṅgapradhāna-sādhāraṇya) *n.* commonness with reference to subsidiary and principal (rites) यच्च बर्हिस्तद्धर्माणामङ्गप्रधानसाधारण्ये लिङ्गमुक्तं तत् तत्समानन्यायस्य प्रयाजशेषाभिघारणस्य TantrRa. 95.13; स्रुवस्य तु वचनसामर्थ्याभ्यामङ्गप्रधानसाधारण्येन द्रवद्रव्यावदाने होमपात्रमनदेश इति वचने च VīraMi.(Saṁskāra.) 899.22; विशसनस्याङ्गप्रधानसाधारण्येन व्यङ्गार्थमपि प्राप्त्युपपत्तेश्च BhāṭṭDī. iii. 184.2 (*on* ix. 4.13); ii. 75.4 (*on* iii. 8.16); ii. 153.3 (*on* v. 1.1); दक्षिणया ह्यानतानां कर्तृणामङ्गप्रधानसाधारण्यात् MīmāKau. iii(2). 84.7 (*on* ii. 1.12); MayūMāli. 238.23 (*on* iii. 3.4)

**अङ्गप्रधानसाहित्य** (aṅgapradhāna-sāhitya) *n.* mutual association of subsidiary and principal (rites) अङ्गप्रधानसाहित्यस्यापि … प्रधानप्रयोगे वैशिष्ट्याङ्गीकारेण BhāṭṭDī. iv. 152.12 (*on* xi. 2.1)

**अङ्गप्रधानहविस्** (aṅgapradhāna-havis) *n.* offering of subsidiary and principal (rites) अङ्गप्रधानहविरासादनमर्थप्राप्तम् ṬupṬ. 5.21 (*on* iv. 1.7)

**अङ्गप्रधानात्मक** (aṅgapradhānātma-ka) *adj.* of the nature of subsidiary and principal (rites) उत्पन्नस्य अङ्गप्रधानात्मकस्य यागसमुदायस्य … प्रकरणे बर्हिरादयः शेषाः पश्चात् यथास्वमुपकाराय चोद्यन्ते SaṅkarKāBh. 79.17 (*on* ii. 2.7); जुहोत्येकवाक्यतयाङ्गप्रधानात्मकजुहोत्यन्वयमात्रम् MayūMāli. 199.20 (*on* iii. 1.10)

**अङ्गप्रधानाधिकार** (aṅgapradhānādhikāra) *m.* context of (dealing with both) subsidiary and principal (rites) अवान्तराधिकार एव तत्त्वेनाश्रीयते। न तु प्रधानाधिकारः अङ्गप्रधानाधिकारो वा BhāṭṭDī. i. 199.21 (*on* iii. 1.10)

**अङ्गप्रधानान्वयित्व** (aṅgapradhānānvayi-tva) *n.* the characteristic of being connected with both subsidiary and principal rites यथैव … अपां देशत्वादङ्गप्रधानान्वयित्वं तथा निमित्तस्यापि BhāṭṭDī. ii. 249.16 (*on* vi. 3.1)

**अङ्गप्रधानापूर्व** (aṅgapradhānāpūrva) *n.* unseen result (merit) of both the subsidiary and principal rites एकार्थसमवायाद् अङ्गप्रधानापूर्वाणां संबन्धः TantrVā. 373.3 (*on* ii. 1.5); MayūMāli. 811.14 (*on* xi. 2.8)

**अङ्गप्रधानार्थ** (aṅgapradhānārtha) *adj.* subservient to both subsidiary and principal rites ज्योतिष्टोमे केशश्मश्रुणोर्वपनं पयोव्रतानि तपश्चान्नतानि। तेषु संदेहः। किमङ्गप्रधानार्थानि उत प्रधानार्थानि SābaBh. 1077.7 (*on* iii. 7.6); 1133.2 (*on* iii. 8.30); 2175.21 (*on* xi. 3.17); स्रुच्याद्यनुवादेन शमीमय्यादिचोदितम्। ज्ञायतेऽङ्गप्रधानार्थं पूर्वसिद्धान्तपक्षयोः TantrVā. 391.12 (*on* ii. 1.12); 123.13 (*on* i. 3.7); 1129.22 (*on* iii. 7.5); अग्निश्चाङ्गप्रधानार्थः ṬupṬ. 73.21 (*on* v. 3.27); 28.20 (*on* v. 2.29); ननु यज्ञशब्दस्य यागमात्रवाचित्वात्तदनुवादेन विधीयमानानि द्रव्याणि…अङ्गप्रधानार्थानीति युक्तम् TantrRa. 41.2; SāstrDī. 823.14 (*on* xi. 3.9); दर्शपूर्णमासयोर्वेदिधर्माः … अङ्गप्रधानार्था इति पूर्वत्र निर्णीतम् NyāyMāVi. 213.26 (*on* iii. 8.17); PūrvottaVāNaMā. 36.2; होममात्रे एव विनियुक्तस्योपदिश्यमानः संस्कारो यावदङ्गप्रधानार्थद्रवद्रव्यग्रहणहोमार्थ इति भवति VīraMi.(Saṁskāra.) 899.24.

**अङ्गप्रधानार्थता** (aṅgapradhānārtha-tā) *f.* the state of being subservient to both subsidiary and principal (rites) वैकृतविशेषाणां केवलप्रधानार्थत्वान्नेहाङ्गप्रधानार्थता भविष्यति TantrVā. 391.23 (*on* ii. 1.12); ṬupṬ. 5.22 (*on* iv. 1.7); प्रवर्ग्यकरणकभावनायां विधीयमानस्यैवाङ्गप्रधानार्थतया (उच्चैष्ट्वस्य) UpaParā. 12.14; VidhiRa. 9 (74.1); सा वेदिर्यद्यपि देशत्वादङ्गप्रधानार्थतया प्रसज्यते तथापि दीक्षादक्षिणन्यायेनोक्तवचनात्प्रधानमात्रार्था BhāṭṭDī. ii. 42.7 (*on* iii. 7.3)

**अङ्गप्रधानार्थत्व** (aṅgapradhānārtha-tva) *n.* the state of being subservient to subsidiary and principal (rites) परिधयो वेदिश्चाङ्गप्रधानार्थत्वान्नारिष्ठहोमाङ्गम् SābaBh. 1632.5 (*on* viii. 4.20); अविशेषितेन वाक्येनाङ्गप्रधानार्थत्वबुद्धिर्भवति TantrVā. 1126.7 (*on* iii. 7.1); 123.20 (*on* i. 3.7); 1068.13 (*on* iii. 5.53); अग्नीषोमीयादौ दीक्षितविनियोगादङ्गप्रधानार्थत्वशङ्का SāstrDī. 319.9 (*on* iii. 7.5); VidhiRa. 9 (71.7); 9 (71.13); प्रकरणादेवाङ्गप्रधानार्थत्वसिद्धेरर्थवाद एवायम् BhāṭṭDī. ii. 43.12 (*on* iii. 7.4); MayūMāli. 198.13 (*on* iii. 1.10); 807.16 (*on* xi. 2.2)

**अङ्गप्रधानासत्ति** (aṅgapradhānāsatti) *f.* closeness between subsidiary and principal (rites) तथा कालस्याप्यङ्गप्रधानासत्तिरूपस्य … स्पष्ट एव पदार्थैर्विरोधः MīmāKau. i. 35.20 (*on* i. 3.7)

**अङ्गप्रपूजन** (aṅga-prapūjana) *n.* worship of ancillary (deities) भैरवीं भैरवात्मानं भावयेत्तदशेषतः। श्राद्धे विवाहे दाने च स्नाने चाङ्गप्रपूजने KulaCūṬ. 2.10.

**अङ्गप्रबाधक** (aṅga-prabādhaka) *adj.* causing pain in the body (or limbs) क्षुद्रश्वासो न सोऽत्यर्थं दुःखेनाङ्गप्रबाधकः RugVi. 12.37.

**अङ्गप्रभव** (aṅga-prabhava) *m.* son (*lit.* born of the body) आसांगप्रभवस्ततस्ततमतिः…श्रीचन्द्रराजाह्वयः EI. i. 342.9.

**अङ्गप्रभा** (aṅga-prabhā) *f.* lustre or complexion of the body अस्ति … वीरो वीरसेनो नाम। यस्य च बहुशोभयाङ्गप्रभया सह स्फुरत्युदारा मनोवृत्तिः NalaCam. 4.9 (22); 5.52; अङ्गप्रभाभिर्नीहारधवलाभिः समन्ततः। ककुभां चान्दनमिव वितन्वानो विलेपनम् (ऐरावणः) TrisaSaPuC. i. 3.403; CaitaCa. 54.16 (3); यत्रासीदियमङ्गना सतिमिरे गेहे निलीना सती तत्रापि स्मितचन्द्रिकापिशुनयत्यङ्गप्रभाप्याह ताम् SṛṅgāSar. 65; VasaTi. 13.12.

**अङ्गप्रभाप्रवाह** (aṅgaprabhā-pravāha) *m.* stream (or exuberance) of the bodily splendour मुहूर्तादिव … अङ्गनानामङ्गप्रभाप्रवाहेण लावण्यमयमिव नगरम्…बभूव Kād. 84.5.

**अङ्गप्रभाभ्यङ्ग** (aṅgaprabhābhyaṅga) *m.* suffusion with bodily lustre भर्तुरङ्गप्रभाभ्यङ्गात् सङ्क्तस्वर्णवर्मणः। पिङ्गा पुराङ्गनान्याभूद् भृष्टेव विरहाग्निना Kapphiṇā. 16.114.

**अङ्गप्रभासुवर्ण** (aṅgaprabhā-suvarṇa) *n.* gold in the form of bodily lustre (i. e. beautiful complexion) सा बभौ … । अङ्गप्रभासुवर्णेन सितमौक्तिकशोभिता SkandP. ii(8). 7. 92.

**अङ्गप्रभास्रोतस्** (aṅgaprabhā-srotas) *n.* profuseness or exuberance (*lit.* stream) of bodily splendour अङ्गानामपिधानमाकलयसे मुग्धे मुधा भूषणैर्मज्जन्त्यत्र तु भूषणानि सुतनोरङ्गप्रभास्रोतसि Mukundā. 120.

**अङ्गप्रमार्जन** (aṅga-pramārjana) *n.* wiping off (or drying) of the body स्नपयन्ति स्म तास्ते स्वकुलयोरिव देवते । विदधुर्गन्धकाषाय्या तयोरङ्गप्रमार्जनम् TrisaS'aPuC. i. 2. 804.

**अङ्गप्रयुक्त** (aṅga-prayukta) *adj.* employed for the sake of a subsidiary rite यदि वाक्यमपूर्वस्य कारणतां वदति ततोऽपूर्वप्रयुक्तम् । अथाङ्गस्य ततोऽङ्गप्रयुक्तम् S'ābaBh. 1643. 6 (*on* ix. 1. 2)

**अङ्गप्रयुक्तता** (aṅgaprayukta-tā) *f.* quality of being employed for the sake of a subsidiary rite तच्च (अङ्गप्रयुक्तं वाक्यम्) उक्तप्रकरणादपूर्वप्रयुक्तं स्यात् । वाक्यात्त्वङ्गप्रयुक्ततेति S'ābaBh. 1643. 7 (*on* ix. 1. 2)

**अङ्गप्रयोग** (aṅga-prayoga) *m.* **A** performance of subsidiary rites एकसमुदायसमीपे वाङ्गप्रयोगः TantrVā. 474. 11 (*on* ii. 2. 3); MīmāKau. ii. 338. 19 (*on* iii. 3. 12); अङ्गविधीनां प्रत्येकमङ्गप्रयोगविधिकल्पने गौरवात् BhāṭṭDī. iv. 152. 6 (*on* xi. 2. 1); iv. 151. 13 (*on* xi. 2. 1); **B** use or movement of limbs (in dance or acting), gesticulation तन्मध्ये च तदीयायुधवाहनकर्मभावाभ्य(? च)नुकारी अङ्गप्रयोगो विधेयः AbhinBhā. i. 168. 19 (*on* 4. 258); शस्त्रादियुद्धे बाहुयुद्धे चाङ्गप्रयोगसौष्ठवार्थमपि प्रयुज्यते AbhinBhā. i. 94. 15 (*on* 4. 55)

**अङ्गप्रयोजकत्व** (aṅgaprayojaka-tva) *n.* conduciveness to (the performance of) subsidiary rites अङ्गिभूतस्य प्रधानस्यैवाङ्गप्रयोजकत्वसम्भवे … गौरवाच्च BhāṭṭDī. iii. 192. 20 (*on* x. 1. 1)

**अङ्गप्रयोजनसंबन्ध** (aṅgaprayojana-sambandha) *m.* relationship between a subsidiary and its purpose किं शाखा प्रस्तरस्याङ्गभूता, अङ्गप्रयोजनसंबन्धस्तयोः S'ābaBh. 1455. 4 (*on* vi. 4. 43); 1985. 14 (*on* x. 6. 3); किं पौर्णमास्याः वैमृधस्याङ्गप्रयोजनसंबन्धः S'āstrDī. 389. 10 (*on* iv. 3. 14); 388. 9 (*on* iv. 3. 13); NyāyRaMā. 146. 19; कर्मान्तरत्वादङ्गप्रयोजनसंबन्धपरत्वम् MayūMāli. 391. 7 (*on* iv. 3. 16)

**अङ्गप्रलेप** (aṅga-pralepa) *m.* application of paste to the body तत्कालेऽङ्गप्रलेपेन सर्वशस्त्राणि वारयेत् ĪśānS'iPa. i. 52. 103.

**अङ्गप्रवर्तन** (aṅga-pravartana) *n.* movements of limbs शूलं मानाविनन्दित्वं वायोरङ्गप्रवर्तनम् Hastyāyur. 611. 12 (4. 5)

**अङ्गप्रवीचार** (aṅga-pravīcāra) *adj.* having sexual intercourse with the help of the body आ ऐशानात् … त्रिदिवौकसः । भवन्त्यङ्गप्रवीचारास्ते … । तीव्रानुरागाः सुरते TrisaS'aPuC. ii. 3. 793 (°प्रवीचारो नाम मैथुनविषयोपसेवनम् TattvārthaBh. 4. 8)

**अङ्गप्रवृत्ति** (aṅga-pravṛtti) *f.* **A** position of parts स्थितस्य पादस्याङ्गप्रवृत्तिवशतो विदुः MayaMa. 17. 7; **B** maintenance of the body आर्वा कुलपतिः प्रैषीत् … । वर्णाश्रमगुरोस्तेऽङ्गप्रवृत्तिज्ञानहेतवे SamarāSam. 1. 87.

**अङ्गप्रसङ्ग** (aṅga-prasaṅga) *m.* **A** context of an auxiliary act न चाङ्गप्रसङ्गतः लक्षणमस्य पश्यामो वयम् AbhinBhā. i. 226. 13 (*on* 5. 56); **B** description of constituents अङ्गप्रसङ्गो दानानां परिभाषाभिभाषणम् CaturCin. i. 4. 12; **C** connection with the bodily limbs अङ्गप्रसङ्गाद्वहिरङ्गभूतगृहाभिघातादौ दण्डोऽभिधीयते Subodhi. 93. 19 (2. 223); **D** intimate contact with the body प्रस्यन्दः पृषतामथेन्दुदृषदामङ्गप्रसङ्गस्तव BhartṛNi. 1. 8.

**अङ्गप्रसाधन** (aṅga-prasādhana) *n.* decoration of the body दृष्टेनापि त्वया देव दत्तमङ्गप्रसाधनम् PāṇḍaC. 8. 350; अङ्गप्रसाधनविधौ तव का प्रवीणा S'ṛṅgāMañ.(A.) 15. 25.

**अङ्गप्रसारण** (aṅga-prasāraṇa) *n.* stretching of the limbs तद्रूपा सा मुहुः कुर्यात् जृम्भामङ्गप्रसारणम् AṣṭāSaṁ. i. 270. 14 (3. 4)

**अङ्गप्रस्फुरण** (aṅga-prasphuraṇa) *n.* throbbing of a limb अङ्गप्रस्फुरणादीनि दुर्निमित्तानि सर्वशः (प्रभवन्ति) DevīBhāP. vi. 3. 16.

**अङ्गप्राणसंरोध** (aṅgaprāṇa-saṁrodha) *m.* control over the limbs and the vital breaths तत्राङ्गप्राणसंरोधो योगेनैव (अपेक्षितः) BṛBrahmaS. iv. 7. 52.

**अङ्गप्राधान्य** (aṅga-prādhānya) *n.* predominence of the bodily movements चारीमार्गौ ह्यसावङ्गप्राधान्यात् AbhinBhā. i. 167. 8 (*on* 4. 252)

**अङ्गप्राप्ति** (aṅga-prāpti) *f.* obtainment of accessories अङ्गप्राप्तेर्जघन्यः कालविधिर्बाध्यतामिति चेत् S'ābaBh. 1308. 18 (*on* v. 1. 33); गृहमेधीयप्रयोगविधेश्चोदकेनाङ्गप्राप्त्यनपेक्षितया S'ivārkaMaDī. i. 41. 24 (*on* i. 1. 1); तत्र हि न चोदकादङ्गप्राप्तिः MīmāNyāPra. 214. 21.

**अङ्गप्रायश्चित्त** (aṅga-prāyaścitta) *n.* expiation of bodily impurity, especially that arising from death in a family [MW, APTE]

**अङ्गप्रावरण** (aṅga-prāvaraṇa) *n.* upper garment कटिभूषणमेकं ते द्वितीयं चाङ्गप्रावरणम् SkandP. i(2). 43. 64.

**अङ्गप्रिय** (aṅga-priya) *n.* water coming from sky (*lit.* pleasant to the body) तोयं यद् घनमार्गतः परिपतत्तद् गाङ्गमङ्गप्रियम् AbhidhāMañ. 212. 13.

**अङ्गफल** (aṅga-phala) *n.* fruit of the accessory rites संस्थासु तु यद्यप्यङ्गफलं नातिदिश्यते TantrVā. 1125. 12 (*on* iii. 6. 47); तत् (फलभेदश्रवणम्)…अङ्गफलानि प्रधान एव अभ्युचिनोति BrahmSūBh. (S'aṅ.) 706. 8 (*on* iii. 3. 57)) प्रधानफलं हि यजमानो भुङ्क्ते नाङ्गफलम् S'āstrDī. 317. 17 (*on* iii. 7. 2); अङ्गफलमपि यजमानगामि VedāntKa. 501. 11 (*on* iii 4. 44); गुणफलम् अङ्गफलम् S'rutaPra. ii. 506. 31 (*on* iii. 3. 37); प्रधानस्य … अङ्गार्थत्वाभावाच्च तद्द्वाराङ्गफलार्थत्वमित्यर्थः MayūMāli. 385. 9 (*on* iv. 3. 10)

**अङ्गफलसम्बन्ध** (aṅgaphala-sambandha) *m.* relation between accessory rite and the fruit अङ्गफलसम्बन्धभेदाच्च वचनव्यक्तिभेदः SaṅkarKā-Bh. 23. 12 (*on* i. 2. 30)

**अङ्गबद्ध** (aṅga-baddha) *adj.* [*f.* -ā) related to the subsidiaries अङ्गबद्धा उपासनाः पर्णवन्नित्यार्थवादाः NayaMañ. III. iii. 27. 53.

**अङ्गबन्ध** (aṅga-bandha) *m.* **1** bodily pose, physical posture अङ्गबन्धम् … सरन्कृत्यबलातिमूढः । … कविर्वियोगीव जनोऽभ्यसर्पत् RāghPāṇ.(Dha.) 8. 45; **2** poetical composition forming a figure like lotus, RāghPāṇ. (Dha.) 8. 45; **3** body-build, bodily structure संहतघनाङ्गबन्धाः कृतविनयाः कामदास्तुरगाः YaśasCam. i. 315. 6.

**अङ्गबन्धन** (aṅga-bandhana) *n.* tying the body, capture वेत्रकाष्ठादिनिगडैरङ्कुशेनाङ्गबन्धनम् PadmP. ii. 66. 190; नार्यो नरविहङ्गानामङ्गबन्धनवागुराः YogVā. i. 21. 18.

**अङ्गबन्धुर** (aṅga-bandhura) *adj.* beautiful or charming in its parts एतदेव (लास्यम्) …तत्तत्पात्रगुणोत्थाङ्गचतुष्पदव्यङ्गबन्धुरम् BhāvPra.(S'ā.) 46. 5(2)

**अङ्गबर्हिस्** (aṅga-barhis) *n.* sacrificial grass intended for subsidiary sacrifice न चाङ्गबर्हिषां लौकिकवदानर्थक्यम् TantrVā. 1127. 17 (*on* iii. 7. 2)

**अङ्गबल** (aṅga-bala) *n.* physical strength दक्षिणो मारुतः श्रेष्ठो नेत्र्योऽङ्गबलवर्धनः AṣṭāSaṁ. i. 80. 1 (1. 12); ii. 166. 10 (5. 7); *m.* **i** a *vyūha* (i. e. manifestation of S'iva or Viṣṇu) अङ्गान्येव बलं येषां तेऽङ्गबला व्यूहाः LalitāSaBh. 144. 25 (*on* 186); **ii** having strength in the form of army (i. e. military array) LalitāSaBh. 144. 25 (*on* 186)

**अङ्गबलिन्** (aṅgabal-in) *m.* buffalo [pw]

**अङ्गबलेश्वर** (aṅgabaleśvara) *m.* a *vyūha* (i. e. the 4th manifestation of a divinity) अङ्गबलेश्वरशब्द एव वा व्यूहवाची LalitāSaBh. 144. 26. (*on* 186)

**अङ्गबहुत्व** (aṅga-bahutva) *n.* multiplicity of accessories अङ्गबहुत्वं तु द्वारकार्यभेदेनोपपद्यते NyāyMāVi. 620. 13 (*on* xi. 1. 2)

**अङ्गबाहुल्य** (aṅga-bāhulya) *n.* abundance of accessory rites अङ्गबाहुल्यश्रवणाच्च तत्रैव विधिः NyāyMāVi. 139. 27 (*on* iii. 3. 3); अङ्गबाहुल्येन प्रधानोत्पत्तिविधिनिर्णयः MīmāKau. ii. 327. 18 (*on* iii. 3. 10)

**अङ्गबाह्य** (aṅga-bāhya) *adj.* not belonging to the *Aṅgas* (works of the Jain Canon) यत्पुनः स्थविरकृतं मातृकापदत्रयव्यतिरिक्तव्याकरणनिबद्धमध्रुवश्रुतं चोत्तराध्ययनादि तदङ्गबाह्यमिति SthānT. 51B. 10.

**अङ्गबिम्ब** (aṅga-bimba) *n.* idol of a subordinate deity सर्वेषां कर्मबिम्बानां लक्ष्म्यादीनां तथैव च । अन्येषामङ्गबिम्बानाम् (क्रमेण भूषणं दत्त्वा) PāraS. 12. 421; 15. 924; 18. 31.

**अङ्गबीज** (aṅga-bīja) *n.* mystic syllable of a formula (related to the *nyāsa*) प्राणानलोपरिस्थं तु कृत्वैतत्पिण्डपञ्चकम् । हृदादिनेत्रपर्यन्तमङ्गबीजमिदं स्मरेत् LakṣmīT. 33. 3.

**अङ्गभ** (aṅgabha) *m.* a species of rice [pw]

**अङ्गभक्त** (aṅga-bhakta) *adj.* part of the grammatical base designated as *aṅga* न च शक्यते वक्तुमङ्गभक्तोऽयं मुक् । अतो नास्ति व्यवधानमिति । अङ्गभक्तो ह्ययमङ्गमेव न व्यवदध्यात् Nyās. ii. 749. 12 (*on* vii. 2. 82); मधुनि विशन्तीति अङ्गभक्तो नुम् ङेरनवयव इति निशब्दस्यानर्थक्यम् PadMañ. *on* KāśiVṛ. *on* P. i. 3. 17; Prasā. ii. 58. 9.

**अङ्गभक्तत्व** (aṅgabhakta-tva) *n.* the state of being part of the base designated as *aṅga* अकारमात्रभक्तो ह्ययमित्यादि । मात्रशब्दोऽयमङ्गभक्तत्वव्यवच्छेदाय Nyās. ii. 749. 16 (*on* vii. 2. 82)

**अङ्गभङ्ग** (aṅga-bhaṅga) *m.* **1** breaking or mutilation of a limb

(बिम्बानाम्) प्राप्ते त्वाकस्मिके दोषे ह्यङ्गभङ्गादिकेऽब्जज। भक्तानामनुकम्पार्थं दिव्यै-र्मन्त्रैर्बलादिकैः।… कुरुते निष्कृतिम् PauṣkS. 38. 24; PāraS. 15. 941; 19. 346; अत्यर्थं हयविनोदोऽङ्गभङ्गमनापाद्य न तिष्ठति NītiVā. 32. 49; तस्मिन् (रूपप्रदे यौवने) मदोन्मादगदाङ्गभङ्गव्यङ्गया(? ङ्गा)दिदोषोपहते क्व रूपम् DarpDa. 4. 8; अत्र (नरके)… बन्धनयन्त्रसंवेष्टयमानविग्रहाणामङ्गभङ्गविरावबृंहितेन हाहारवेण AvantiKa. 229. 13; बहवः…एकस्याङ्गभङ्गादिकं कुर्वन्ति Mitā. 289. 12 (*on* 2. 221); Mānaso. ii. 18. 1003; SmṛtiCan. iii. 291. 20; ManvaVi. 1046. 26 (*on* 8. 287); Subodhi. 109. 8 (*on* 2. 298); DaṇḍaVi. 254. 19; VīraMi.(Vyavahāra.) 373. 20; यथा निरपराधेन मत्पुत्रं सा शशाप ह। तत्पुत्रस्याङ्गभङ्गश्च भविष्यति BrahmVaiP. iii. 12. 49; नरेन्द्रपुत्रस्य दृढप्रहारस्तस्याङ्गभङ्गं बहुशश्चकार VarāṅgaC. 14. 39; अङ्गभङ्गं गवां दृष्ट्वा गोविन्दः करुणाकुलः। त्राणाय गिरिमुद्धृत्य गोवर्धनम-धारयत् DaśāvaC. 8. 62; PrabaCin. 75. 15; PurāPraSam. 133. 15; Subhāṣi. 604; नवकुम्भिकुम्भयुगलं व्यालम्ब्य गुञ्जसि… । नो जानासि दुरन्त°…°शुण्डाभर-व्याघातोत्पतदङ्गभङ्गविकलः प्रौढव्यथाम् AnyoŚ. 5; **2** stretching or twisting of the body जृम्भितैः साङ्गभङ्गैः।… मोक्तुमिच्छोः शयनम्… निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिः MudrāRā. 3. 21; HarṣaC. 218. 11; MahāviC. 1. 39; अद्यापि ताम्…। सुप्तोत्थितां विदधतीं मुहुरङ्गभङ्गं पश्यामि CaurPañ. 110 (KM. part 13); 113 (KM. part 13); राजा साङ्गभङ्गमुत्थाय पठति ViddhaŚā. 1. 13 (7); (गुरोः अग्रे) अङ्गभङ्गाङ्गवाद्यादिकास्फालनधूननम् (नाचरेत्) KulārT. 12. 87; TilaMañ. 354. 17; DaśRū. 4. 23; Kāvyānu.(He.) 112. 3; 117. 13; इह (आलस्ये) क्रिया। अङ्गभङ्गः क्रियाद्वेषो जृम्भणाक्षिविमर्दने RasāSu. 120. 6 (2. 61); विबोधः … जृम्भाङ्गभङ्गनयनमीलनाङ्गावलोककृत् SāhiDa. 151. 4; (आलस्ये) अत्राङ्गभङ्गो जृम्भा च BhaktiRaSi. ii. 4. 45; ii. 4. 68; **3** movements of the limbs बहुविकारे विविधाङ्गभङ्गवलनायासितमध्यभागा वृथा खिद्यसे Kād. 85. 9; HarṣaC. 118. 8; (मुग्धा) चेष्टां च कुरुते रम्यामङ्गभङ्गैः शुभैः ŚṛṅgāTi.(Ru.) 106; (कन्या) चेष्टां करोति विविधाम्… अङ्गभङ्गैः Kāvyālaṅ. (Ru.) 12. 35; HarVi. 49. 36; अद्यापि ताम्…। ध्यायामि वल्गितसुजां विहिताङ्ग-भङ्गं(? ङ्ग)व्याजेन नाभिकुहरं मम दर्शयन्तीम् CaurPañ. 119 (KM. part 13); क्रमपरिणतरेखामांसलैरङ्गभङ्गैः लघुरपि लिखितेयं दृश्यते पूर्णमूर्तिः ViddhaŚā. 1. 36; अङ्गभङ्गोल्लसल्लीला तरुणी सतोरणम् Candrā. 6. 27; MahāViSt.(J.) 7; Gopā-KeCan. 118. 29; SaduktiKa. 144. 8; (गर्वः … अनुभावा भवन्त्यत्र) अवेक्षणं निजाङ्गानामङ्गभङ्गादयोऽपि च RasāSu. 107. 4 (2. 25); BhāmiVi. 2. 88; RasGaṅ. 469. 3; TārāŚa. 101; ParyāŚaRa. 1. 163; **4** pain in the limbs (*lit.* breaking sensation of limbs) मूर्च्छाङ्गभङ्गनिद्रार्तिसदनाद्याः प्रादुर्भवन्त्युपद्रवाः… इति ग्रन्थिविसर्पः CaraS. vi. 21. 39 (1941 Ed.); vi. 23. 33 (1941 Ed.); मेदःक्षये… विसंज्ञता चाङ्गभङ्गो गमनं परुषता HārīS. iii. 9. 21; iii. 52. 5; अङ्गभङ्गाश्मरीबस्ति-मेण्ढ्वङ्क्षणवेदनाः। स्युर्मूत्ररोधात्पूर्वे च प्रायो रोगाः AṣṭāSam. i. 18. 15 (1. 5) = AṣṭāHṛ. i. 4. 5; (लक्ष्मीः) मन्दरोद्धतमहासमुद्रवीचिवलयवेगास्फालनविजृम्भिताङ्ग-भङ्गज्वरे(? रा) AvantiKa. 45. 5; SiddhYo. 1. 28; RasRaSa. 30. 93; **5** destruction of the body शालग्रामशिलादानं ये कुर्वन्ति नगोत्तमे। अङ्गभङ्गम-वाप्नोति SkandP.ii(1). 40. 15; **6** perinaeum [Nighaṇṭuprakāsha in pw]

**अङ्गभङ्गकर** (aṅgabhaṅga-kara) *adj.* causing mutilation of a limb अङ्गभङ्गकरस्याङ्गं तदेवापहरेन्नृपः MatsyaP. 227. 87 = ViṣṇuDhaP. ii. 72. 71.

**अङ्गभङ्गतस्** (aṅgabhaṅga-tas) *adv.* due to physical exertion पिच्छिले पतितानां च उद्वर्तेनाङ्गभङ्गतः। प्रतिष्ठिते धर्मसेतौ धर्मो मे स्यात् BhaviP. 404B. 34 (ii(3). 16. 16)

**अङ्गभङ्गता** (aṅgabhaṅga-tā) *f.* the state of having fracture in the limbs मांसक्षयेऽतिकृशताचेष्टनं चाङ्गभङ्गता HārīS. iii. 9. 20.

**अङ्गभङ्गि** (aṅga-bhaṅgi) *f.* breaking (sensation) of limbs अङ्गभङ्गि-भ्रमिः स्फोटिः शोफः श्वासः शिरोव्यथा। दाहश्च ज्वरवक्त्राणि सप्त PārśvC. 7. 381.

**अङ्गभञ्जन** (aṅga-bhañjana) *n.* breaking (sensation) of limbs छादयन्नाननं वेगैरर्दयन्नङ्गभञ्जनैः। निरुच्यते छर्दिरिति दोषः SuśruS. vi. 49. 6 = RugVi. 15. 4 = BhāvPra.(Bhā.) 8. 16 (? 17). 5; शूलाङ्गभञ्जनम्… कालदष्टस्य चेष्टितम् VetāPañ.(Śi.) 12. 39.

**अङ्गभद्र** (aṅga-bhadra) *m.* secondary portico तमङ्गभद्रविन्यासरचना-भिरनेकधा। अपरस्परसंबाधात् संवृतैर्विवृतैरपि (गृहभेदाः) SamarāSū. 19. 39.

**अङ्गभर्तृ** (aṅga-bhartṛ) *m.* **1** king of the Aṅga country स्वशीर्ष-कामेन रथः सुचक्रे बन्धोऽद्य ते प्रैष्ययमङ्गभर्त्रा DvyāśraKā. 6. 16; RāghPāṇ.(Ka.) 12. 33; **2** chief of the (four) divisions (of army) अङ्गभर्तुः शिरश्छिन्नम् RāghPāṇ.(Ka.) 12. 33 (comm. अङ्गानां सेनाङ्गानां भर्तुः)

**अङ्गभव** (aṅga-bhava) *adj.* produced from the body सुषमामृतं यदि तवाङ्गभवं स्वदृशा रतिः स्वयमपास्यदिदम् Rāgh. 8. 18; *m.* son सुग्रीवोऽपि निजं राज्यमङ्गदाङ्गभवे ददौ PadmP.(Ra.) 119. 5; कविप्रव(? ब)र्हश्रियकुटुंव(? ब)-पल्लीकुल्याजमिश्र(? श्रा)ङ्गभवाङ्गदस्य पुत्रीम्… पत्नीं स लेभे EI. xiii. 291. 15; DaivaVa. 2. 9; यशःप्रसरवान् देवि भविताङ्गभवस्तव SamarāSam. 2. 12.

**अङ्गभवा** (aṅga-bhavā) *f.* daughter नत्वाथ जिनाधिनाथमित्युग्रसेनाङ्गभवा जगाद NemiC. 12. 49.

**अङ्गभा** (aṅga-bhā) *f.* lustre of the body अङ्गभाभिः सुरेन्द्राणां तेजोऽ-र्कस्य पराहतम् MahāP. 13. 55; DvyāśraKā. 6. 11.

**अङ्गभाग** (aṅga-bhāga) *m.* **1** part of the body हृन्मर्ममेदिपतदुत्कट-कङ्कपत्र° … °स्फुरदङ्गभङ्गा(v. l. °भागा) MahāviC. 1. 39; सान्द्रोल्लसत्पुलक-कञ्चुकिताङ्गभागाः।… ये संस्तवं तव विभो रचयन्ति KalyāMaSt. 43; RāghPāṇ. (Dha.) 16. 48; SubhāRaK. 4. 22; **2** part, aspect or item करणमिह लिङ्गा-देर्ज्ञानमेवाङ्गभागः SaṁkṣeŚā. 1. 389 (i. 288. 21)

**अङ्गभाज्** (aṅga-bhāj) *adj.* worn on the body, being connected with the body आतेनुश्चिरशवधूजनाङ्गभाजां संधानं सुरधनुषः प्रभा मणीनाम् Kirātā. 7. 16; *m.* human being, a man, a person एकस्यैवाङ्गभाजः स्युर्दुःखानि च सुखानि च PāṇḍaC. 15. 100; NemiDū. 72; सन्तो वदन्ति मधुरं विषयोपसेवाम्। आदौ विपाकसमये कटुकं नितान्तं किंपाकपाकफलभुक्तिमिवाङ्गभाजाम् SubhāRa-Saṁ. 90; 212; VasaViKā. 9. 3; SindūPra. 52; ताभ्यामसौ धर्ममणूदरीभ्यां समाचरन्संशयगोचरेषु।… श्रुतिनिर्विशेषं प्रमाणमासीत्परमङ्गभाजाम् YātrāPra. 6. 1; 7. 38; स्निग्धाश्वापः प्रसन्ना भृशगरिमभृतो याः पिबन्त्यङ्गभाजः Jivān. 230. 4.

**अङ्गभाढ्य** (aṅgabhāḍhya) *adj.* increased by six signs of the zodiac (i. e. by 180°) प्राग्दृक्खचराङ्गभाढ्यभान्वोरल्पोऽर्कः GrahaLā. 10. 5.

**अङ्गभार** (aṅga-bhāra) *m.* **A** weight of the body उल्लसितार्करोचिषम् …अङ्गभारभङ्गुरितकमठराजपृष्ठम्…मठमैक्षिष्ट (सिंहलराजपुत्रः) TilaMañ. 222. 8; 277. 12; काचित्। नायेऽङ्गभारमतनिष्ट नतभ्रुवोऽस्या वाहाधिरोहणमजायत वैभवाय Acyutarā. 10. 31; **B** burden to the body भूषा त्रपा मृगदृशः शुचि संप्रदायि पुंसः श्रुतं यदवरं परमङ्गभारः BhikṣāKā. 3. 18.

**अङ्गभाव** (aṅga-bhāva) *m.* the state of being auxiliary, subordinate or accessory ततोऽङ्गभावं भक्तानां नतार्थं तत्प्रयान्ति(? ति) च PauṣkS. 31. 260; 31. 297; JayāS. 13. 176; प्रमाणैः साधनोपालम्भयोश्छलजातिनिग्रहस्थानानामङ्ग-भावः स्वपक्षरक्षणार्थत्वात् NyāyBh. 59. 13 (*on* i. 2. 2); ŚābaBh. 730. 5 (*on* iii. 1. 19); 857. 5 (*on* iii. 3. 14); 1379. 6 (*on* vi. 1. 32); NyāyVār. 163. 16 (*on* i. 2. 43); 328. 4 (*on* ii. 2. 67); विवक्षापरतन्त्रत्वात् विशेषणविशेष्ययोः। यदङ्ग-भावेनोपात्तं तत्तेनैव हि गृह्यते PramāVār. 3. 227; PāraS. 6. 128; 7. 292; 10. 367; 15. 851; बोधादेव तदुत्पत्तावङ्गभावोऽस्य संमतः VibhraVi. 103; TantrVā. 778. 18 (*on* iii. 2. 13); 1059. 22 (*on* iii. 5. 45); 1099. 20 (*on* iii. 6. 22); 1176. 22 (*on* iii. 8. 26); Nyās. ii. 92. 3 (*on* v. 2. 93); न हीन्द्रादीनां स्वरूपसंनिधानेन यागाङ्गभावो दृश्यते BrahmSūBh.(Śaṅ.) 187. 18 (*on* i. 3. 27); 188. 17 (*on* i. 3. 27); Dhvanyā. 193. 7 (*on* 2. 5); कर्मणां कीदृशो मोक्षं प्रत्यङ्गभावः NyāyMañ. ii. 91. 14; BṛĀraUBhVā.(Sambandha.) 453; SaṁkṣeŚā. 1. 45 (i. 51. 10); भवतु शान्ते प्रत्यये जनयितव्ये रजस्तमसोरङ्गभावः TattvVai. 82. 20 (*on* 2. 18); Bhām. 37. 22 (*on* i. 1. 1); 39. 11 (*on* i. 1. 1); 236. 2 (*on* i. 3. 27); 236. 4 (*on* i. 3. 27); SaraKaṇṭhā. 339. 10; 553. 14; 733. 4; Loc. 169. 19 (*on* 3. 20); 179. 25 (*on* 3. 30); न चोपनयनस्याङ्गभावोऽस्त्यध्यापनं प्रति ŚāstrDī. 8. 8 (*on* i. 1. 1); KāvPra. 685. 2; VedāntSā.(Rā.) 334. 6 (*on* iii. 3. 60); 335. 6 (*on* iii. 3. 63); AuciViCa. 18 (11); Kāvyānu.(He.) (comm.) 140. 6; साधनं क्रियां प्रति अङ्गभावं गच्छदपि…विशेषणेन युज्यते Pradī. vii. 64. 17 (*on* viii. 1. 69); VyaktiVi. 34. 5; Aparā. 1032. 5 (*on* 3. 205); VedāntKa. 32. 12 (*on* i. 1. 1); ŚrutaPra. iA. 43. 31 (*on* i. 1. 1); ii. 535. 14 (*on* iii. 3. 64); CaturCin. iii(1). 302. 14; SarvaDaSaṁ. 1. 72; विद्यानामुद्गीथादि-वदङ्गभावः VedāntPāSau. 351. 19 (*on* iii. 3. 59); ŚaṅkaVi.(Ā.) 253. 4; 253. 7; SāhiDa. 240. 1; अङ्गभावो हि सद्भावः BrahmSūBh.(Śrī.) ii. 382. 15 (*on* iii. 3. 63); ŚivārkaMaDī. i. 183. 21 (*on* i. 1. 4); i. 509. 34 (*on* i. 4. 1); i. 510. 3 (*on* i. 4. 1); Bhāsk. i. 17. 18 (*on* i. 1. 1)

**अङ्गभावना** (aṅga-bhāvanā) *f.* injunction related to the accessory (of a sacrifice), injunction connected with the subsidiary एकाङ्गभावना प्रयोजनापेक्षा प्रकरणेन फलभावनाङ्गं भवति NyāyRaMā. 134. 4; ŚāstrDī. 199. 4 (*on* iii. 1. 10); अङ्गभावनासम्बन्धिप्रकरणमवान्तरप्रकरणम् ArthSaṁ. 57. 2; 58. 8; BhāṭṭDī. i. 199. 10 (*on* iii. 1. 10)

**अङ्गभावनिरपेक्ष** (aṅgabhāva-nirapekṣa) *adj.* [*f.* -ā] independent of subordination अङ्गभावनिरपेक्षयैव नः प्रत्ययो यदिह शब्दविद्यया। वैदिकार्थ-विषयो विधीयते तत्परास्तमितरेतराश्रयम् NyāyMañ. i. 392. 22.

**अङ्गभावपर** (aṅgabhāva-para) *adj.* indicative of subordination अङ्ग-भावपरसूत्रमुपादत्ते सर्वापेक्षेति ŚrutaPra. iA. 44. 10 (*on* i. 1. 1)

**अङ्गभावप्रतिपत्ति** (aṅgabhāva-pratipatti) *f.* attainment of the state of being subsidiary अनेकत्र कर्मणि युगपदङ्गभावप्रतिपत्तिरङ्गभावगमनम्

Bhām. 236. 2 (*on* i. 3. 27)

**अङ्गभावप्रतिपादक** ( aṅgabhāva–pratipādaka ) *adj.* stating or conveying subordination अङ्गभावप्रतिपादकवाक्यविषयसूत्रोपादानेन भास्करमतं चावलम्बितं भवति S'rutaPra. iA. 44. 12 (*on* i. 1. 1)

**अङ्गभावप्राप्ति** ( aṅgabhāva–prāpti ) *f.* attainment of the state of being a subsidiary समारोपितायामिति। अङ्गभावप्राप्ताविति शेषः Loc. 166. 18. (*on* 3. 20); Kāvyānu.(He.) 137. 3.

**अङ्गभावरहितत्व** ( aṅgabhāvarahita–tva ) *n.* the state of being without subordination स्वातन्त्र्येऽङ्गभावरहितत्वे तद्विधिः प्रायश्चित्तविधिनिष्फलोऽनुष्ठानलक्षणफलशून्यः स्यात् Aparā. 1231. 26 (*on* 3. 312)

**अङ्गभावविरह** ( aṅgabhāva–viraha ) *m.* absence of subordination अस्याङ्गभावविरहादमुना सहातो ब्रह्मात्मनोरनतिरेकमुशन्ति धीराः SaṁkṣeS'ā. 1. 311 (i. 233. 1)

**अङ्गभावविरोध** ( aṅgabhāva–virodha ) *m.* inconsistancy with subordination निर्देशाभावेऽङ्गभावविरोधः S'ābaBh. 1424. 20 (*on* vi. 3. 30)

**अङ्गभावविषयता** ( aṅgabhāvaviṣaya–tā ) *f.* the state of being related to a subsidiary सहभावश्रवणस्याङ्गभावविषयतया अन्यथासिद्धत्वात् S'rutaPra. ii. 556. 23 (*on* iii. 4. 35)

**अङ्गभावसिद्धि** ( aṅgabhāva–siddhi ) *f.* establishment of subordination एतावता न साक्षादङ्गभावसिद्धिः VedāntKa. 32. 14 (*on* i. 1. 1)

**अङ्गभावाभाव** ( aṅgabhāvābhāva ) *m.* absence of being a subsidiary उपासनानामङ्गभावाभावात् BrahmSūBh.(S'rī.) ii. 382. 16 (*on* iii. 3. 63)

**अङ्गभावावगम** ( aṅgabhāvāvagama ) *m.* knowledge of subordination अवान्तरकार्यनिरपेक्षाणामेवाङ्गभावावगमात् NyāyRaMā. 182. 12.

**अङ्गभावाश्रुति** ( aṅgabhāvāśruti ) *f.* absence of a scriptural text about subordination नैतत्, अङ्गभावाश्रुतेः VedāntSā.(Rā.) 335. 6 (*on* iii. 3. 63)

**अङ्गभावासंभव** ( aṅgabhāvāsambhava ) *m.* impossibility of subordination इति फलान्तरसाधनतयावगतस्योपासनस्याङ्गभावासंभवात् VedāntSā (Rā.) 335. 7 (*on* iii. 3. 63)

**अङ्गभावोपगम** ( aṅgabhāvopagama ) *m.* acceptance of the state of being an accessory यत् साक्षान्नायिकावर्णनं तदवाच्यमेव। तत्संबंधिनामेव स्पर्शादीनामिव रम्याणामर्थानां विरहव्यतिरेकेणाङ्गभावोपगमात् VyaktiVi. 100. 27.

**अङ्गभावोपपत्ति** ( aṅgabhāvopapatti ) *f.* justification of subordination ज्ञानोत्पत्तावङ्गभावोपपत्तौ न संयोगपृथक्त्वेन साक्षादङ्गभावो युक्तः Bhām. 46. 10 (*on* i. 1. 1)

**अङ्गभास्** ( aṅga–bhās ) *n.f.* lustre of the body आनीलानामङ्गभासां विलासादचक्षाणं तत्त्वमम्बो(? म्भो)धराणाम्। ... कान्तोऽपश्यत्कौस्तुभाकोंदयाद्रिम् Acyutarā. 7. 32.

**अङ्गभित्ति** ( aṅga–bhitti ) *f.* wall-like surface of the body कदा पर्यन्ततीक्ष्णा तूलिकेव तद्दृष्टिरङ्गभित्तौ भ्रमिष्यति UdaySuKa. 119. 27.

**अङ्गभिद्** ( aṅga–bhid ) *f.* side, flank पार्श्वं कुक्ष्यङ्गभित्तथा AnekāK. 860.

**अङ्गभू** ( aṅga–bhū ) *m.* [P. iii. 2. 179] **A** offspring, son (*lit.* born of the body) सुग्रीवोऽपि निजं राज्यमङ्गदाङ्गभुवे ददौ PadmP.(Ra.) 119. 5; त्वमङ्गभूर्भुवनगुरोर्नभस्वतः RāmC. 15. 57; भूयोऽप्यङ्गभुवं राजा ब्रह्मणः ··· पर्यपृच्छत SkandP. ii(7). 1. 1; श्रीधैर्यस्याङ्गभुवा ··· व्यक्तिविवेको विदधे VyaktiVi. 137. 21; EI. i. 144. 22; TriṣaS'aPuC. ii. 1. 61; MalliC. 3. 83; तस्यांगभूर्जयति ···। सारङ्गदेवः EI. i. 281. 12; **B** love or passion पश्य पश्य विरहे दहत्यसावङ्गभूरपि यदङ्गकानि मे Surath. 6. 78; पाञ्चाली रङ्गभुवं प्राप नयन्ती नृपावलीरङ्गभुवम् YudhiVi. 1. 81.

**अङ्गभू** ( aṅga–bhū ) *adj.* coming from the body, belonging to the body कर्णनेत्रादिभूरङ्गभूश्च तेषामभून्मलः। कस्तूरिकापरिमलः TriṣaS'aPuC. i. 1. 845; रक्तबीजवियुक्तायाः पताकिन्याः सुरद्विषाम्। यदभूदङ्गभूः कम्पस्तदेतन्महदद्भुतम् Surath. 10. 101.

**अङ्गभूत** ( aṅga–bhūta ) *adj.* [*f.* –ā] **1 A** accessory, ancillary षड्ढोता पश्चिष्टिश्चाङ्गभूतेषु न विद्यते ĀpaS'S. xi. 16. 3; इष्टिरारम्भसंयोगादङ्गभूतान्निवर्तेत MīmāSū. x. 1. 4; यज्ञस्य अङ्गभूतानि सामहोममन्त्रोत्थानान्युपदिदिक्षन्नाह Chāndo-UBh. 131. 4 (*on* ii. 24. 1); Kāśi. i. 50. 8 (*on* 1. 100); Bhām. 550. 11 (*on* iii. 2. 7); श्येनादावप्यङ्गभूता हिंसा नाधर्मः NyāyRa. 125. 9 (*on* 2. 264); यद्यप्यपूर्वफलप्रदातृत्वं न देवतायास्तथापि सर्वाङ्गोपेतकर्मानुष्ठानात्फलदापूर्वोदय इति युक्ताङ्गभूतपित्रादिदेवतायाः फलहेतुत्वोक्तिः Aparā. 561. 12 (*on* 1. 269); यत्किञ्च यज्ञीयं कर्म अङ्गभूतं कर्मेत्यर्थः S'rutaPra. ii. 519. 28 (*on* iii. 3. 46); अङ्गभूतव्रीहियवानुरोधेन···अभ्यासो न युक्तः VedantKa. 367. 14 (*on* iii. 2. 7); NyāySu.(So.) 36. 7 (*on* i. 2. 7); सौत्रामणिबृहस्पतिसवादेरङ्गभूतम्···कौण्डपायिनामयनाग्निहोत्रम् ··· भिन्नम् S'ivārkaMaDī. i. 41. 6 (*on* i. 1. 1); GuruCandr. i. 333. 17; BhāṭṭDī. ii. 306. 11 (*on* vi. 5. 20); MayūMāli. 864. 17 (*on* xii. 2. 9); न··· °बृहस्पतिसवोऽङ्गभूतात्तस्माद्भिन्न एवेति वाच्यम् SetuBa. 166. 20; TantrRā. 23. 1; **1 B** subordinate, of secondary nature प्रतीयते हि संख्याख्यातवचनस्याङ्गभूता S'ābaBh. 1204. 10 (*on* iv. 1. 13); क्रिया त्वङ्गभूता NyāyVār. 315. 14 (*on* ii. 2. 60); अथाङ्गभूतान्सकलान् गणेशादीन्प्रपूजयेत् SkandP. iii(3). 7. 57; वाच्यवाचकचारुत्वहेतवो हि तस्याङ्गभूताः Dhvanyā. 107. 5 (*on* 1. 13); अन्यत्र तु प्रधाने वाक्यार्थे यत्राङ्गभूतो रसादिस्तत्र गुणीभूतव्यङ्ग्ये रसवत्प्रेयऊर्जस्विसमाहितादयोऽलङ्काराः KāvyPra. 85. 2; VyaktiVi. 34. 5; BhāvPra.(S'ā.) 173. 16(6); SāhiDa. 621. 12; अङ्गभूतासु देवतासु प्रयोजयेत् ParaS. 14. 34; ननु किमङ्गभूतायां मीमांसायां वार्त्तिकं प्रणीयते Kāśi. i. 4. 9 (*on* 0. 9); अत्र पयोधरादिशब्दश्लेषमूलातिशयोक्त्याङ्गभूतयोत्थाप्यमाना···°तादात्म्योत्प्रेक्षा Kuval. 171(231); धर्मभूता अङ्गभूता LaCandr. 359. 18; **2 A** sprung from the body गायत्री ब्रह्मणस्तद्वदङ्गभूता निगद्यते MatsyaP. 4. 7; HarṣaC. 198. 13; यस्य सर्वमजस्येदमङ्गभूतं जगत्प्रभोः MārkP. 109. 72; वेदा अङ्गभूता यस्य सः वेदाङ्गः ViṣṇuSaBh. 55. 14 (*on* 27) TaiUBh. 202. 18 (*on* 1. 5); **2 B** being a part of the body ममाङ्गभूतेन पलेन मेदसा तृप्तिं परां यास्यति भूमिनाथः PadmP. ii. 42. 24; KathāSaSāg. xii. 26. 224; **2 C** forming a part, being an element स्थित्वैवमङ्गभूतेषु प्रतितिष्ठत्यथाङ्गिनि TaiUBhāVā. 28. 5 (*on* 1. 5); प्रमेयं चेदं ममैवाङ्गभूतम् PratyabhiVi. ii. 306. 2 (*on* iv. 1. 13); अष्टौ यान्यङ्गभूतानि पदानि वाक्यं प्रति महावाक्यं प्रति वा। तानि सुप्तिङन्तान्यवान्तरवाक्यानि वेत्युभयथा AbhinBhā. i. 25. 17 (*on* 1. 57); तत्राङ्गभूतनिःसरणं प्रति प्रासाद उपात्तविषयमपादानं भवति PadMañ. *on* KāśiVr. *on* P. ii. 3. 28; यतस्तस्य सवर्णसंज्ञा अङ्गम्। तस्या अङ्गभूताया असिद्धावङ्गिनोऽपि ग्रहणकशास्त्रस्यासिद्धिः Prasā. i. 68. 22; तथा सत्यङ्गभूतेन ऋष्यादिस्मरणेन सह सर्वेषां मन्त्राणां न्यायागतानन्तर्यबाधप्रसङ्गात् ViraMi. (Āhnika.) 268. 9; तेषां या अङ्गभूता अमात्यकोशराष्ट्रदण्डदुर्गाख्याः प्रकृतयस्तासामपि प्रवृत्तिरनुसन्धेया ManvaVi. 831. 25 (*on* 7. 157); **3** being a means or condition अङ्गभूतं श्रवणादिकं च मुमुक्षुणा कार्यम् Nyāyāmr. 613A. 8.

**अङ्गभूत** ( aṅga–bhūta ) *n.* name of a *tīrtha* अङ्गभूतं च विख्यातमामर्दकमलंसुपम् MatsyaP. 22. 51.

**अङ्गभूतकर्मन्** ( aṅgabhūta–karman ) *n.* ancillary rite अङ्गभूतकर्मसमृद्धिद्वाराङ्गिनः ··· शीघ्रनिष्पादनम् S'atDū. 75. 4.

**अङ्गभूतकाल** ( aṅgabhūta–kāla ) *m.* subordinate time अङ्गभूतकालविशेषणत्वेनैवाङ्गत्वोपपत्तेः BhāṭṭDī. ii. 135. 24 (*on* iv. 3. 12); MīmāKau. ii. 110. 17 (*on* ii. 4. 7)

**अङ्गभूतक्रम** ( aṅgabhūta–krama ) *m.* subordinate order प्रयोगभेदादङ्गभूतक्रमासम्भवेऽपि MayūMāli. 418. 17 (*on* v. 1. 17)

**अङ्गभूतग्रहण** ( aṅgabhūta–grahaṇa ) *n.* taking up (of Soma-cups) which is subordinate ननु प्रदानस्य प्रधानत्वादङ्गभूतग्रहणापकर्षेऽप्यपकर्षासम्भवात्कथं पूर्वपक्षः MayūMāli. 734. 8 (*on* x. 5. 22)

**अङ्गभूतत्व** ( aṅgabhūta–tva ) *n.* **1** the state of being subordinate न वाङ्गभूतत्वात् MīmāSū. x. 1. 7; **2** the state of forming a part अपरमखिलमस्यैवाङ्गभूतत्वहेतोरिह समभिनिविष्टं तद्विरो वाच्यमासीत् SaṁkseS'ā. 3. 298 (ii. 319. 23); गङ्गाप्रतापसम्प्रतिपादोदकयोर्विशेषेण सारभूतयोरुपादानाद्धिमवतः पूतत्वे चाङ्गभूतत्वादयं विशेषतो धर्मधर्मिरूपः सारः SaraKaṇṭhā. 339. 19.

**अङ्गभूतदक्षिणा** ( aṅgabhūta–dakṣiṇā ) *f.* fee which is subsidiary दक्षिणापेक्षायां स्वप्रवृत्ताङ्गभूतदक्षिणायां चासत्याम्···सोमाङ्गदक्षिणाया एव ग्राह्यत्वात् VidhiRa. 10(72. 2)

**अङ्गभूतदेवता** ( aṅgabhūta–devatā ) *f.* subordinate deity अङ्गभूतदेवतास्मारकत्वेन च मन्त्राणां बहिरङ्गत्वान्मन्त्रपाठाद्ब्राह्मणपाठस्यैव बलीयस्त्वं स्यात MīmāNyāPra. 236. 6.

**अङ्गभूतदेश** ( aṅgabhūta–deśa ) *m.* subordinate region अपिनाङ्गभूतदेशादिपरिग्रहः BālamBha. i. 11. 18 (*on* 1. 6)

**अङ्गभूतद्रव्य** ( aṅgabhūta–dravya ) *n.* (offering-) material which is subsidiary अङ्गभूतद्रव्याजैनारम्भेऽपि प्रधानभूतयज्यनारम्भोपपत्तेः TantrRa. 19. 18.

**अङ्गभूतध्यान** ( aṅgabhūta–dhyāna ) *n.* meditation as the subordinate part (of worship) अङ्गभूतध्यानस्यैवोपासनत्वेनाभिधानम् ViraMi. (Āhnika.) 254. 23; BālamBha. i. 94. 16 (*on* 1. 24)

**अङ्गभूतनायक** ( aṅgabhūta–nāyaka ) *m.* secondary hero अङ्गभूतनायकानां नायकान्तरापेक्षया महासत्त्वादेरव्यवस्थितत्वात् Avalo. 38. 31 (*on* 2. 6)

**अङ्गभूतप्रयाजादि** ( aṅgabhūta–prayājādi ) *m. prayājas* etc. which are subordinate यदङ्गभूतप्रयाजाद्यनुष्ठानं साधारणं तदनुष्ठानतन्त्रम् SivārkaMaDī. i. 77. 26 (*on* i. 1. 1)

**अङ्गभूतमन्त्र** ( aṅgabhūta–mantra ) *m. mantra* which is subordinate

**अङ्गस्फुरण** (aṅga-sphuraṇa) *n.* throbbing of the limbs प्रभञ्जनप्रकोप-प्रभवानामङ्गस्फुरणानां शुभाशुभोदर्केषु को नाम विश्रम्भः KaumuMi. 5.3(1); अथाङ्गस्फुरणम् S'ārṅgaPa. 2541(1)

**अङ्गस्फोटन** (aṅga-sphoṭana) *n.* crackling (the joints of) the limbs (such as fingers etc.) वर्जयेत् संनिधौ (गुरोः) नित्यमङ्गस्फोटनम् PadmP. i. 53.12.

**अङ्गस्रुच्** (aṅga-sruc) *f.* subsidiary (sacrificial) ladle तत्र यावता कालेन प्रधानस्रुगादीनि प्राप्नुवन्ति तावतैवाङ्गस्रुगादीन्यपीत्यविशेषः TantrVā. 392.12 (*on* ii. 1.12)

**अङ्गस्वभावाख्यातत्व** (aṅgasvabhāvākhyāta-tva) *n.* being spoken of as having the nature of an ancillary व्याकरणस्य तु स्वतस्तदुपदेशसामर्थ्या-संभवादङ्गस्वभावाख्यातत्वाच्च न तत्प्रयोजनता (धर्मप्रयोजनता) युक्ता NyāyMañ. i. 379.8.

**अङ्गस्वरूप** (aṅga-svarūpa) *n.* the nature or form as ancillary न चाङ्ग-स्वरूपं प्रत्यक्षादिगम्यं किन्तु वाचनिकम् TantrRa. 304.4; अङ्गस्वरूपसंबन्धप्रमाणं सप्रकारकम् । ...कथ्यते NyāyRaMā. 120.1; अङ्गविधयो नाङ्गस्वरूपकर्तव्यतामात्र-पर्यवसिताः MayūMāli. 315.11 (*on* iii. 6.16)

**अङ्गस्वरूपसंस्पर्श** (aṅgasvarūpa-saṁsparśa) *m.* connection with the nature as an ancillary साङ्गस्यैवोपांशुत्वमित्यवधारणादस्त्येवाङ्गस्वरूपसंस्पर्शः TantrVā. 823.17 (*on* iii. 3.9)

**अङ्गस्वरूपानुष्ठान** (aṅgasvarūpānuṣṭhāna) *n.* performance of the subsidiary rites अङ्गविधयो नाङ्गस्वरूपकर्तव्यतामात्रपर्यवसिताः स्वातन्त्र्येणाङ्ग-स्वरूपानुष्ठाने प्रयोजनाभावेनानर्थक्यापत्तेः MayūMāli. 315.12 (*on* iii. 6.16)

**अङ्गस्वेद** (aṅga-sveda) *m.* sweating of the body पित्तविकाराः ... अङ्ग-स्वेदश्च अङ्गगन्धश्च CaraS. i. 20.16 (1922 Ed.); पूज्यक्रोधे तु चेष्टाः स्युः ... । अनुत्तरप्रदानाङ्गस्वेदगद्गदिकादयः RasāSu. 159.22 (2.135); अङ्गस्वेदः श्लथत्वं च ... । जाते च्युतिसुखे नार्या विरामेच्छा च जायते AnaṅgaRa. 10. (Additional) 38.

**अङ्गहरण** (aṅga-haraṇa) *n.* [अङ्गहार? cf. Bharatakośa pp. 6–7] posture of body (in a dance) करणस्तु वैश्यवृषलीपुत्रे च काये कृतौ । क्षेत्रे साधन इन्द्रियेऽङ्गहरणे क्षेत्रे च गीते तथा KośaKaTa. 2.4893.

**अङ्गहर्ष** (aṅga-harṣa) *m.* shivering of the body रोमहर्षोऽङ्गहर्षश्च मूत्रकाले च वेदना । मूत्रकृच्छ्रे KāśyaS. 34B.6; किंचिदुत्सेधेनोर्ध्वाधोदन्तमांस-संघट्टनादङ्गहर्षो जायते AṣṭāSaṁ. ii. 179.21 (6.2)

**अङ्गहर्षिन्** (aṅgaharṣ-in) *adj.* causing shivering of the body सोऽङ्ग-हर्षी (वातः) कफं शुष्कं कृच्छ्रान्मुक्त्वाल्पतां व्रजेत् AṣṭāSaṁ. i. 268.5 (3.3)

**अङ्गहविरासादन** (aṅgahavir-āsādana) *n.* placing of the oblation of the subsidiary rites एवमङ्गहविरासादनमपि तत्रान्तर्गतं साङ्गस्य प्रधानस्यैक-प्रयोगत्वात् TantrVā. 1128.22 (*on* iii. 7.4); 1129.3 (*on* iii. 7.4)

**अङ्गहविष्ट्व** (aṅga-haviṣṭva) *n.* the nature of (individual) limbs being considered as oblations किं कृत्स्नः पशुरेकं हविरुत प्रत्यङ्गं हविर्भेद इति । ... अङ्गहविष्ट्वे पशुशब्दे लक्षणा स्यात् S'ābaBh. 2021.9 (*on* x. 7.1)

**अङ्गहविस्** (aṅga-havis) *n.* oblation in the subsidiary rite पौर्ण-मासीशब्दस्यामावास्याशब्दस्य च ... अङ्गहविषामप्यभिमर्शनं स्यात् S'ābaBh. 1080.4 (*on* iii. 7.10); अङ्गहविरपि प्रधानस्योपकारकमेव S'āstrDī. 316.15 (*on* iii. 7.1); विभक्तिव्यत्यये मन्त्रो मुख्याङ्गहविषोर्द्वयोः शब्दस्य कर्मवाचित्वात्तत्र मर्शनवर्जनात् । NyāyMāVi. 192.23 (*on* iii. 7.4); अतः अङ्गहविषामपि संग्रहः MīmāKau. ii. 195.1 (*on* iii. 1.20); अङ्गहविषां तदानीमप्राप्तेः BhāṭṭDī. iv. 192.2 (*on* xi. 3.14)

**अङ्गहविःसंबन्ध** (aṅgahavis-sambandha) *m.* relation with the oblation of the subsidiary rite तथाङ्गहविःसंबन्धं बर्हिर्न प्रतिपद्यते TantrVā. 1129.1 (*on* iii. 7.4)

**अङ्गहान** (aṅga-hāna) *n.* **i** deformity of limbs कालकर्मात्मबीजानां दोषैर्मातुस्तथैव च । गर्भस्य वैकृतं दृष्टमङ्गहीनादि जन्मनः (v. l. in Trivandrum 1924 Ed. नाङ्गहानं हि जन्मतः) YājñaSm. 3.163; एवमादिभिर्दोषैर्गर्भविक्रिया वैरूप्यं न तु जन्मतः स्वभावतोऽङ्गहानमित्यभिप्रायः BālaKrī. ii. 59.12 (*on* 3.153 (? 163)); **ii** loss of the subsidiary ननु तत्र निमित्तश्रवणबलादङ्गहानं स्यात् NyāyRaMā. 113.11; अतस्सिद्धं निमित्तश्रुत्यनुरोधेन यथाशक्त्यङ्गही(? हा)नेनापि प्रयोग इति BhāṭṭDī. ii. 251.19 (*on* vi. 3.1)

**अङ्गहानि** (aṅga-hāni) *f.* **1 A** weakness or slackness of the limbs (of the body) स्वराङ्गहानिर्वैह्वल्यमतिस्विन्नस्य लक्षणम् KāśyaS. 25B.2; **1 B** loss of limbs (of the body) नास्त्यङ्गहानिरस्माकं वृते चास्मिन्न वञ्चना RājTa.(Ka.) 2.109; **2 A** deficiency of factors कः पुनर्विशेषोऽङ्गाधिक्यमङ्गहानिश्चेति NyāyVār. 20.13 (*on* i. 1.1); **2 B** deficiency (due to non-performance) of accessories कदाचिदङ्गहानिस्तु न च व्यक्तिः कदाचन । (वरं पूजा न कर्तव्या न च व्यक्तिः कदाचन) KulaCūT. 7.61; द्रव्याण्येतानि पूजायाश्चाङ्गरूपाणि सुन्दरि । देवि किंचिद्विहीनेन चाङ्गहानिः प्रजायते । अङ्गहीनं च यत्कर्म चाङ्गहीनो यथा नरः BrahmVaiP. iii. 4.26; अङ्गहानिस्त्वन्तरङ्गं विरुणद्धीति विशेषाशङ्का S'āstrDī. 455.17 (*on* vi. 1.9); मन्त्रः पठनीयः तदसंभवेऽपि किञ्चिदङ्गहान्या नित्यं कार्य-मेवेति वदन्ति VīraMi. (Āhnika.) 123.7; न हि द्रव्यहानेरङ्गहानेश्च प्रतिसमा-धानमनपेक्ष्यास्माभिः प्राभाकरवदनुष्ठानमिष्यत इति परिहारः MayūMāli. 455.19 (*on* vi. 1.9); दैवाद् भ्रमात् प्रमादाच्चेदङ्गहानिः प्रजायते । स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः [APTE]

**अङ्गहार** (aṅga-hāra) *m.* **A** composition of the movements of limbs or poses (in dance) तौ संधिषु व्यञ्जितवृत्तिभेदं रसान्तरेषु प्रतिबद्धरागम् । अपश्य-तामप्सरसां मुहूर्तं प्रयोगमाद्यं ललिताङ्गहारम् KumāSaṁ. 7.91; अङ्गहारोऽङ्गविक्षेपः AmaK. 393; PadmP.(Ra.) 3.181; MahāP. 13.179; तस्याङ्गहारकरणक्रम-कम्पिमूर्ध्नः HarVi. 2.27 (comm. अङ्गहाराः स्थिरहस्तादयो द्वात्रिंशद्विशिष्टकरण-निष्पाद्याः); 2.41; RāmC. 22.37; 36.26; AbhidhāRaMā. 1.94; करणैरङ्ग-हारैश्च संयुक्ताः ... । आनन्दनाटकं खेटाः प्रनटन्ति जिनाग्रतः BṛKathāK. 12.140; TilaMañ. 270.13; मयापीदं स्मृतं नृत्यम् ... । नानाकरणसंयुक्तैरङ्गहारैर्विभूषितम् NāṭyaS'ā. 4.13; 4.17; 4.19; 4.27; 4.29; 4.31; 4.257; 4.266; 5.159; 6.51; 10.75; 12.201; 13.87; 20.13; Avalo. 1.25 (*on* 1.4); रूपयौवनलावण्यगर्विता गणिकास्ततः । लयतानाङ्गहारैश्च सुशुद्धैर्ननृतुः पुरः SkandP. ii(2). 11.108; iv. 33.14; iv. 54.11; स्थिरहस्तोऽङ्गहारस्तु तथैवाक्षिप्तकः स्मृतः ViṣṇuDhaP. iii. 20.29; iii. 20.39; iii. 34.16; अङ्गानां देशान्तरे प्रापणप्रकारोऽङ्गहारः । हरस्य चायं हारः प्रयोगः । अङ्गनिर्वर्त्यो हारोऽङ्गहारः AbhinBhā.i. 89.18–19 (*on* 4.19); i. 21.21 (*on* 1.44); i. 87.21 (*on* 4.14); i. 163.21 (*on* 4.248); i. 219.11 (*on* 5.27); iv. 120.13 (*on* 29.112); Vaija. 144.97; ननर्त स ततः क्षिप्र-मङ्गहारैर्यथोचितैः KathāSaSāg. xii. 30.33; AbhidhāCin. 282; NānārthāSaṁ. iii. 9.31; TriṣaS'aPuC. i. 6.712; अङ्गुल्यादिविन्यासे त्वङ्गहार इतीष्यते ParyāS'aRa. 1.162; करणैरङ्गहारैश्च साधितं नृत्तमुच्यते SaṁgīRa. iv. 15.5 (7.37); iv. 258.6 (7.805); iv. 360.2 (7.1206); चेतोहरं चारुभिरङ्गहारैः...विलासलास्यम् Surath. 13.62; हरणादन्तरङ्गाणामङ्गहारस्तदा मतः NṛttaRa. 6.151; 4.247; 4.249; 4.252; Bharat. 10B.6; उद्धतैः करणैरङ्गहारैर्निर्वर्तितम्...तत्ताण्डवं विदुः BhāvPra.(S'ā.) 45.18 (2); 46.1 (2); 46.12 (2); 198.19 (7); 198.21 (7); 296.20 (10); 299.6 (10); S'abdaRa.(Vā.) 1894; Nṛtyā. 1402; 1654; ViśvaLoK. 106.43; KośaKaTa. 1.1910; 2.5589; S'abdaRaSaK. 285.1; श्रीमद्भिर्नियमितकं धरापरान्तैः संसक्तैरगुरुवनेषु साङ्गहारम् । संप्राप्ते ... गजेन्द्रः प्रस्यन्दिप्रचलितगण्ड-शैलशोभा Kirātā. 7.37; KuṭṭaMa. 577; 962; AnargharRā. 7.71; वाहाश्च ते बर्हिरुचः प्रकामं तमूहुरावल्गिभिरङ्गहारैः RāmC.(App. 1) 39.36; ViṣṇuDhaP. iii. 34.9; तवाङ्गहारे रुचिमेति नायकः NaiṣC. 9.118; LaṭaMe. 2.21; RasāSu. 70.19 (1.254); 71.3 (1.256); सुराङ्गनाः ... । शुच्यङ्गहाराः NemiC. 12.31; AdbhuDa. 1.8 (11); अस्माकं तु...रङ्ग एवाङ्गहारः MadaKeC. 3; तन्व्याः केवल-मङ्गहारमधुना मन्ये परं भूषणम् VasaTi. 13.13; **B** dancer अद्राक्षीत्काले ... । स पौरानङ्गहारांश्च RāghPāṇ.(Dha.) 18.142 (comm. अङ्गहारान् नर्तकान्); **C** particular part of notes स्वराणामङ्गहारैर्यत एवासरितक्रमैः BṛDeśī. 65.13; **D** necklace on the body नेतुर्न ते नेतुमलं सुराङ्गना मनोविकारम् ... । शुच्यङ्ग-हाराः NemiC. 12.31; MadaKeC. 3.

**अङ्गहारक्रिया** (aṅgahāra-kriyā) *f.* **1** act of moving the body or limbs (in dance) नानाविचित्रकरणावङ्गहारक्रियासु तौ । ... नाट्यप्रवृत्ताविव रेजतुः KathāSaSāg. xv. 1.132; **2** act of the removal of the limbs, KathāSaSāg. xv. 1.132.

**अङ्गहारता** (aṅgahāra-tā) *f.* being in or assuming the pose (in dance) called *aṅgahāra* अङ्गहारतया हारलता तस्याः स्तनाग्रतः । रराज बिस-वल्लीव चक्रचञ्चवग्रसंस्थिता HammīMaKā. 13.24.

**अङ्गहारप्रकार** (aṅgahāra-prakāra) *m.* mode of the composite movements of the limbs (in dance) अङ्गहारप्रकारैश्च ... । तत्र नर्नर्ति लास्येन ताण्ड-वेन च नर्तकी PrabhāC. 152.24.

**अङ्गहारप्रयोग** (aṅgahāra-prayoga) *m.* performance of the movements of limbs (in dance) अङ्गहारप्रयोगेषु कर्तव्येषु यानि करणानि AbhinBhā. i. 90.11 (*on* 4.28); i. 164.22 (*on* 4.253); i. 169.11 (*on* 4.259); i. 183.24 (*on* 4.270); नानाभिनय-अङ्गहारप्रयोगे तु भाण्डवाद्यं प्रयोजयेत् BhāvPra.(S'ā.) 199.6 (7); नानाभिनय-कोविदैः । अङ्गहारप्रयोगज्ञैः ... । नाट्यस्य कुतपः पात्रैः SaṁgīRa. ii. 200.1 (3.222)

**अङ्गहारमनोहर** (aṅgahāra-manohara) *adj.* beautiful with the necklace on the body नित्यमङ्गहारमनोहरम्...तं (विष्णुम्) दृष्ट्वा तौ द्विजबाहुजौ । बभूवतुः क्षणात्सर्वविद्यानां पारगौ SkandP. ii(2). 5.19.

**अङ्गहारलक्षण** (aṅgahāra-lakṣaṇa) *n.* definition of the movements of

limbs (in dance) अङ्गहारलक्षणम् (प्रतिपाद्यते) AbhinBhā. i. 138. 17 (*on* 4. 174); [cf. Bharatakośa]

**अङ्गहारललित** (aṅgahāra-lalita) *m.* graceful gesture (in dance) लास्यं चारुभिरङ्गहारललितैराविष्करिष्यामि PratāYaBhū. 137. 5 (comm. ललितादिसुकुमाराङ्गहारैः)

**अङ्गहारविकल्पन** (aṅgahāra-vikalpana) *n.* different kinds of gestures (in dance) अष्टोत्तरशतं ह्येतत् करणानां मयोदितम्। अतः परं प्रवक्ष्यामि ह्यङ्गहारविकल्पनम् NāṭyaS'ā. 4. 174.

**अङ्गहारविधि** (aṅgahāra-vidhi) *m.* performing (graceful) gestures (in dance) अङ्गहारविधौ सुरवध्वा प्रस्तुते ··· कोऽस्य नैव तटो मणिरङ्गः NemiNir. 7. 13; अङ्गहारविधयः स्फुटतत्प्रपञ्चयोगाञ्चितस्थितिभृतः स्थिरहस्तमुख्याः HarVi. 2. 59 (comm. अङ्गहारविधयो विधीयमाना अङ्गहाराः); 'पराङ्मुखविधिर्भूय एवमेव भवेत्' इत्यङ्गहारविधावित्यर्थयोगात् AbhinBhā. i. 140. 14 (*on* 4. 177)

**अङ्गहारविनिष्पन्न** (aṅgahāra-viniṣpanna) *adj.* produced with gestures अङ्गहारविनिष्पन्नं नृत्तं तु करणाश्रयम् NāṭyaS'ā. 8. 16.

**अङ्गहारविषय** (aṅgahāra-viṣaya) *m.* subject or topic of gestures (in dance) अङ्गहारविषये वक्तव्ये पूर्वं किं निरूपणार्हमित्याह AbhinBhā. i. 90. 14 (*on* 4. 28)

**अङ्गहारव्यामिश्र** (aṅgahāra-vyāmiśra) *m.* mixing of gestures (in dance) ततः शुद्धादुत्कृष्टं चित्रं कृत्वाङ्गहारव्यामिश्रेण प्रयोक्तव्यम् AbhinBhā. i. 245. 16 (*on* 5. 155)

**अङ्गहारषोडशक** (aṅgahāra-ṣoḍaśaka) *n.* (a collection of) sixteen kinds of gestures (in dance) अङ्गहारषोडशकमेव त्र्यश्रेऽपीति AbhinBhā. i. 246. 14 (*on* 5. 158)

**अङ्गहारसमासङ्ग** (aṅgahāra-samāsaṅga) *adj.* attached to gestures (i. e. exhibiting gestures) रणरङ्गान्तरे स्फुरन्। सोऽङ्गहारसमासङ्गो नाटयभङ्गिमदर्शयत् RājTa.(S'rī.) 4. 282.

**अङ्गहारसम्पन्न** (aṅgahāra-sampanna) *adj.* [*f.* -ā] rich in or full of gestures (in dance) नृत्ताङ्गहारसम्पन्ना···कैशिकी NāṭyaS'ā. 1. 44.

**अङ्गहारसामान्यलक्षण** (aṅgahāra-sāmānyalakṣaṇa) *n.* common feature of gestures नृत्तमातृकालक्षणेनाङ्गहारसामान्यलक्षणेन च करणद्वयम् ··· प्रयोज्यानुजानीते AbhinBhā. i. 91. 15 (*on* 4. 31)

**अङ्गहारात्मकत्व** (aṅgahārātmaka-tva) *n.* the state of consisting of gestures (in dance) नृत्तं वाङ्गहारात्मकत्वं च तच्चारीभिः प्रसृतम् AbhinBhā. ii. 94. 21 (*on* 10. 5)

**अङ्गहाराभिध** (aṅgahārābhidha) *adj.* called *aṅgahāra* कदाचिन्मत्तबर्हिणम्। अङ्गहाराभिधं बाला करतालैरनर्तयम् BṛKathāMañ. 13. 45.

**अङ्गहाराश्रय** (aṅgahārāśraya) *adj.* based on gestures अङ्गहाराश्रयं नृत्तं तथाभिनयसंश्रयम्। व्यायामिकं च PadmP.(Ra.) 24. 6.

**अङ्गहारि** (aṅga-hāri) *m. f.* **1** gesture (in dance) [comm. on AmaK. 393 in S'abdaKaDru.] cf. नाटयं नटनमङ्गविक्षेपेऽङ्गाद् हारिहारकौ S'abdaRa(Su.) 2. 112; अङ्गहारोऽङ्गविक्षेपोऽङ्गा(? ङ्ग)हारिस्तु स्त्रियां भवेत् KośaKaTa. 1. 1910; *n.* (?) अङ्गहार्यङ्गविक्षेपश्चाङ्गभङ्ग इति त्रयम् ParyāS'aRa. 1. 163; **2** stage, dancing hall [Apte]

**अङ्गहारिणी** (aṅgahāriṇī) *f.* **1** name of Rādhā (देवी राधा परा प्रोक्ता) अङ्गहारिणी। कारणी सर्वभूतानाम् PañcaRā.(Nā.) v. 5. 100; **2** (female) dancer भाण इहैकाकिन्या नार्या हार्योऽङ्गहारिण्या NāṭaLaRaK. 2845.

**अङ्गहारिन्** (aṅgahār-in) *m.* name of S'iva (*lit.* one who dances (शिवाय···नमः) अरूपाय सुरूपाय अनङ्गायाङ्गहारिणे LiṅgaP. i. 18. 12.

**अङ्गहारोद्देश** (aṅgahāroddeśa) *m.* enumeration of gestures (in dance) तत्राङ्गहारोद्देशमाह स्थिरहस्त इत्यादिना AbhinBhā. i. 89. 15 (*on* 4. 19)

**अङ्गहारोपयोगित्व** (aṅgahāropayogi-tva) *n.* the state of being useful for gestures (in dance) अष्टाधिकं शतमुक्तं यदङ्गहारोपयोगित्वे नियतसमप्रत्यस्तमयमिति AbhinBhā. i. 94. 13 (*on* 4. 55); i. 95. 8 (*on* 4. 59)

**अङ्गहास्य** (aṅga-hāsya) *n.* laughter due to (defective) limbs दन्तुरः खलतिः कुब्जः ··· यदीदृशः प्रवेशः स्यादङ्गहास्यं तु तद्भवेत् NāṭyaS'ā. 12. 139; *m.* laughter due to gestures यदा तु बकवद्गच्छेदुल्लोकितविलोकितैः। अत्यायतपदत्वाच्च अङ्गहास्यो भवेत्तु सः NāṭyaS'ā. 12. 140.

**अङ्गहिंसा** (aṅga-hiṁsā) *f.* killing as an accessory अङ्गहिंसात्वफलसाधनत्वाद् असत्यां फलप्रयुक्तौ विधिनैव अनुष्ठाप्यते Kāśi. i. 169. 26 (*on* 2. 206); i. 190. 10 (*on* 2. 260); श्येनादिग्रहणं नाङ्गहिंसालक्षणार्थमित्याह NyāyRa. 125. 11 (*on* 2. 264); किं चाङ्गहिंसायां पुरुषार्थत्वे सिद्धे YuktiSneha. 31. 18 (*on* i. 1. 2)

**अङ्गहीन** (aṅga-hīna) *adj.* [*f.* -ā] **A** lacking in a limb, defective in a limb, crippled पशुं स्नपयन्ति कूटकर्णकाणखण्डबण्डश्लोणसप्तशफवर्जम्। यद्यङ्गहीनः स्यादङ्गतो वा विरुज्येत ĀpaS'S. vii. 12. 2; अङ्गहीनाश्रोत्रियषण्ढशूद्रवर्जम् KātyS'S. i. 1. 5; तदेतेन वेदितव्यमङ्गहीनो हि साङ्गं जनयतीति BaudhDS. ii. 1. 49; कच्चिद् ···। अङ्गहीनान् कृपणान् वामनांश्च आनृशंस्याद्धृतराष्ट्रो बिभर्ति MahāBhā. v. 30. 38; न दद्याद्यशसे दानम् ··· नाङ्गहीने न वामने MahāBhā. xii. 37. 30; कुलेषु पापरक्षांसि जायन्ते वर्णसंकरात्। अपुमांसोऽङ्गहीनाश्च MahāBhā. xii. 91. 31; ये पुरा मनुजा देवि लोभमोहसमावृताः। प्राणिनां प्राणहिंसार्थमङ्गहीनं प्रकुर्वते MahāBhā. xiii. App. I. 15. 1851; धान्यचौरोऽङ्गहीनः ViṣṇuSm. 45. 9; कालकर्मात्मबीजानां दोषैर्मातुस्तथैव च। गर्भस्य वैकृतं दृष्टमङ्गहीनादि जन्मनः (v. l °तः) YājñaSm. 3. 163; तत्र केतुना अङ्गहीनश्च JaimiUpaSū. iii. 3. 95; iii. 4. 53; शीतगौ। ··· क्षुद्रोऽङ्गहीने व्यये Bṛhajjā. 20. 5; बुद्धगङ्गहीनमलसं वानस्पत्यं वदेदृजुम् KāśyaS. 54A. 2; अङ्गहीनश्च तद्धर्मा Mīmā-Sū. vi. 1. 41; अग्निहोत्रादिष्वेवाङ्गहीनं प्रति सन्देहः S'ābaBh. 1382. 10 (*on* vi. 1. 41); अङ्गहीनं ददर्शासौ नरम् BrahmāṇḍP. ii. 38. 32; क्षुद्रा अङ्गहीना CāndraVṛ. *on* ii. 4. 63; भूकम्पे ग्रहणे यो हि करोति खननं भुवः। जन्मान्तरे महापापी सोऽङ्गहीनो भवेद् ध्रुवम् BrahmVaiP. ii. 9. 28; पङ्गुलायाङ्गहीनाय···। ब्रह्महत्यां लभेत्सोऽपि यः स्वकन्यां ददाति च BrahmVaiP. ii. 16. 95; ii. 30. 30; दुर्बलं पीड्यमानं यो बलवान् समुपेक्षते। अङ्गहीनः स च भवेत् SkandP. i(2). 51. 16; यज्ञाय···। अङ्गहीनः कृष्णवर्णो मूर्खो योग्यो भवेन्न हि PadmP. iii. 12. 10; GaṇeP. i. 72. 39; (गुरवः) संन्यासिनोऽङ्गहीनाश्च विरूपा मठभोजनाः। ··· निन्दिताः ĪśānS'iPa. ii. 11. 27; NyāyRaMā. 103. 21; S'āstrDī. 455. 17 (*on* vi. 1. 9); NyāyMāVi. 308. 19 (*on* vi. 1. 9); (क्षुद्रशब्दः) अस्त्यङ्गहीने शीलहीने च PadMañ. *on* KāśiVṛ. *on* P. ii. 4. 8; अपाङ्गः ··· अङ्गहीने AnekāSaṁ. 3. 107; ViśvaPra. 27. 44; MediK. 24. 28; NanārthMañ. 1585; (sight of a crippled person as inauspicious) (प्रतिबन्ध(बिम्ब)म्) यः पश्येत् ··· अङ्गहीनम् (द्वादशाहेन तस्यापि मृत्य(? त्यु)कालः) ParaS. 11. 58; °मत्तोन्मत्तपग्व(? ङ्गु)ङ्गहीनैः। ··· अखिलफलविनाशः VasiS. 37. 51; क्षयरोगं चा(गिनम)ङ्गहीनम्···मार्गे (तु) संमुखं दृष्ट्वा त्वमङ्गलमिति स्मृतम् MānaSā. 15. 132; **B i** defective in some part, which has lost some part स्थाने मनुजनिर्मिते। अजीर्णे नाङ्गहीने वा धाम्नि बिम्बेऽथवा द्विज। प्राक्स्थितस्योपमर्देन कुर्याद्धामान्तरं न च PāraS. 15. 933; वास्तुवस्तु···तस्याङ्गानां (नि)न पीडयेत्। अज्ञानादङ्गहीनं च (चेत्) कर्ता चैव विनश्यति MānaSā. 7. 134; जीर्णोद्धारविधिं वक्ष्ये लिङ्गप्रासादयोः ···। दग्धे जीर्णेऽङ्गहीने च सगर्भे वा क्षते च्युते। अज्ञानादधिके वोनमाने लिङ्गे तु मानुषे। ···त्यजन्ति मन्त्रास्तल्लिङ्गम् ĪśānS'iPa. ii. 64. 2; **B ii** defective in its aspect or nature यस्मात् सत्तया पदार्थो विशिष्यते अङ्गहीने प्रत्ययनिवृत्तेः यत्र तदङ्गं सत्तादिकं नास्ति न तत्र सदिति प्रत्ययः NyāyVār. 328. 7 (*on* ii. 2. 67); **C** (sacrifice or ritual) deficient in (because of non-performance of) some subsidiary राष्ट्रं हन्यादङ्गहीनो मन्त्रहीव(? न)स्तु ऋत्विजः। अदक्षिणो यजमानं नास्ति यज्ञसमो रिपुः BhaviP. 818A. 11 (141. 112); पुंसः प्रधानसिद्ध्यर्थमङ्गस्याश्रयणं ध्रुवम्। कर्तव्यमङ्गहीनं चेत् प्रधानं नैव सिद्ध्यति SarvaVeSāSaṁ. 207; कामार्थेषु तु यागेषु विस्तारः सर्व इष्यते। सर्वेष्वप्यङ्गहीनोऽयं विधिरिष्टं न साधयेत् ParaS. 29. 69; **D** (literary work) deficient in some constituent part अङ्गहीनो नरो यद्वन्नैवारंभक्षमो भवेत्। अङ्गहीनं तथा काव्यं न प्रयोगक्षमं भवेत् NāṭyaS'ā. 19. 53 = BhāvPra.(S'ā.) 213. 17(7) = SāhiDa. 322. 8; AgniP. 337. 25; **E** (*mantra* that is) defective in form (in not having the required number of syllables) षड्विंशत्यक्षरो मन्त्रः षट्त्रिंशद्वर्णकस्तथा। त्रिंशदेकोनवर्णो वाप्यङ्गहीनोऽभिधीयते S'āraTi. 2. 100; 2. 69; अङ्गहीनस्य मन्त्रस्य स्वेनैवाङ्गानि कल्पयेत् S'āraTi. 4. 37 (comm. अङ्गहीनत्वं नारायणाष्टाक्षरादिवत् मन्त्रोद्धाराभावः); खण्डीभूतास्त्वंशजापादङ्गहीनास्त्वसंवृताः। ··· हीनवीर्यास्तु ते मताः (मन्त्राः) TantrRā. 1. 79; **F** (good faith) without the (seven) constituent elements सम्यक्त्वं नाङ्गहीनं स्याद्राज्यवत्प्राज्यभूतये YaśasCam. ii. 324. 7; **G** (royalty) without its (seven) constituent elements, YaśasCam. ii. 324. 7; *m.* name of Kāmadeva [S'abdaKaDru.]

**अङ्गहीनक** (aṅgahīna-ka) *adj.* **i** defective in (some) limb, crippled कर्मणा गुणवन्तश्च कर्मणा चाङ्गहीनकाः BrahmVaiP. ii. 43. 30; शालग्रामशिलातोयं भूमौ त्यक्त्वा व्रजेदधः।··· अङ्गहीनकः (भवेत्) BrahmVaiP. iv. 75. 80; अपाङ्गः ··· अङ्गहीनके NānārthSaṁ. 6. 44; **ii** (*mantra*) lacking in (some) element ऋणक्लिष्टोऽप्यङ्गहीनकः ··· षष्टयेतान् मन्त्रदोषांश्च योऽज्ञात्वा प्रजपेन्मनुम् KulārT. 15. 69.

**अङ्गहीनक्षेप** (aṅgahīna-kṣepa) *m.* abuse of one who is physically defective तत्र सत्येनाङ्गहीनक्षेपो यथा - पादहीनं प्रति कुण्ठस्त्वमित्यादिः Aparā. 806. 29 (*on* 2. 204)

**अङ्गहीनता** (aṅgahīna-tā) *f.* lack of constituent rites प्रतिषेधातिक्रमे हि ज्योतिष्टोमादेरङ्गहीनता भवति ManuBh. i. 409. 26 (*on* 4. 246)

**अङ्गहीनत्व** (aṅgahīna-tva) *n.* deficiency in some limbs, deformity प्राप्नुवन्ति दुरात्मानो नरा रूपविपर्ययम्। ··· धान्यचौरोऽङ्गहीनत्वम् ManuSm.

11. 50; (लमेत्तरः) कर्मणा चाङ्गहीनत्वम् BrahmVaiP. ii. 24. 29; एतेन दृष्टादृष्ट- स्वरूपेण कारणकलापेन गर्भस्याङ्गहीनत्वादिविकारः … दृष्टः Mitā. 391. 18 (*on* 3. 163); मातू रजस्वलासमये नेत्राञ्जनादिकमङ्गहीनत्वादिहेतुमन्तरा अयोनिजशरीरे तदसंभवात् VīraMi. 887. 13 (*on* 3. 163)

**अङ्गहीनमन्त्र** (aṅgahīna-mantra) *m. mantra* without its subsidiary parts अङ्गहीनमन्त्रस्य त्वे (? त्वने) नैवाङ्गा न (? नि) कल्पयेत् TantrSā.(K.) 80. 7.

**अङ्गहीनादि** (aṅgahīnādi) *adj.* deficient in limbs etc. गर्भस्य वैकृतं दृष्टमङ्गहीनादि जन्मतः YājñaSm. 3. 163; अङ्गहीनादीनां पूर्वपापसंबन्धित्वं ज्ञाप्यते ManuBh. i. 463. 2 (*on* 5. 88); DīpKa. 89. 21 (*on* 3. 163); अङ्गहीनादि हीनाङ्ग- त्वादि VīraMi. 887. 17 (*on* 3. 163)

**अङ्गहृत** (aṅga-hṛta) *adj.* [*f.* -ā] divided by six द्विगुणैकोनपदोत्तर- कृतिहतिरेकोनपदहताङ्गहृता । व्येकपदार्धचयाहतिमुखकृतियुक्ता पदाहता सारम् GaṇiSāSaṁ. 5. 299; साङ्कांशका दशहताङ्गहृताः कुभक्ता वक्राद्यमाप्तदिवसैः क्रमशो गतैष्यम् GrahaLā. 3. 18.

**अङ्गहोम** (aṅga-homá) *m.* 1 offerings to be made to the limbs (with the formulas given in TaiS. VII. iii. 16 i. e. the formulas pertaining to the various limbs of the horse) दुद्भ्यः स्वाहा हनूभ्याँ स्वाहे- त्यङ्गहोमाञ्जुहोति TaiBr. III. viii. 17. 4; ĀpaS'S. xx. 11. 12; VādhūlaS'S. 3. 78 (Acta Orientalia iv. p. 1851. 22); दद्भ्यः स्वाहा हनूभ्यां स्वाहेत्यङ्गहोममतो देवादींश्च हुत्वा पुरुषसूक्तं जपन्सुवर्णेनाक्ष्युन्मेषणं करोति VaikhāGS. 4. 10; 6. 2; 6. 3; अङ्गहोमसमित्तन्त्रसोष्पा(ष्य)न्त्याख्येषु कर्मसु GobhiSm. 1. 120; 2 sub- ordinate offering न चाङ्गहोमा स्युः PauṣkS. 42. 46.

**अङ्गहोमक** (aṅgahoma-ka) *m.* subordinate offering आज्येन तर्पयेन्मूर्ते- र्दशांशेनाङ्गहोमकम् AgniP. 24. 41.

**अङ्गांश** (aṅgāṁśa) *m.* 1 limb or part of the body दिगाद्यङ्गा(? ङ्गां)- शाद्यः S'ākaṭāVyā. iii. 1. 113 (comm. दिगादिभ्यो अंगांशाच्छरीरावयववचनाच्च डेर्भ- वेऽर्थे यो भवति । दिशि भवो दिश्यः); 2 aspect of the subsidiary rite अङ्गांशे यथाशक्ति कतिपयानुष्ठानेऽपि कृतः SmṛtiCan. v. 422. 1; 3 base-part (*aṅga*) यजादिप्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षतया तेनानो विशेषणायोगाच्च LaS'abdeS'e. i. 341. 13.

**अङ्गांशु** (aṅgāṁśu) *m.* (lustrous) ray of the body अङ्गांशुनिर्जितैः सर्वज्योतिष्काणामिवांशुभिः । लग्नैश्चरणपद्मेषु शोभिता रत्ननूपुरैः TriṣaS'aPuC. ii. 2. 138.

**अङ्गाकाङ्क्ष** (aṅgākāṅkṣa) *adj.* requiring the subsidiary प्रधानस्याङ्गा- काङ्क्षस्य वचनं प्रकरणम् VedāntKa. 188. 9 (*on* i. 3. 39)

**अङ्गाकाङ्क्षा** (aṅgākāṅkṣā) *f.* 1 expectancy for the requisites तत्रांगा- कांक्षायां तदर्थमुत्तरारंभः Subodhi. 1. 18 (*on* 2. 0); 2 expectancy of the subsidiary rite ते ध्यानयोशा(? गा)नुगता अपश्यन्नित्यादि श्रुत्यन्तरे ध्यानस्य दर्श- नसाधनत्वेनावगतस्याङ्गाकाङ्क्षायां प्रयाजन्यायेन श्रवणमननयोरेवाङ्गत्वापत्तेः Vedānt- Pari. 351. 9; MīmāKau. ii. 193. 19 (*on* iii. 1. 9); प्रयाजादीनामाकाङ्क्षासद्भावादे- वाङ्गाकाङ्क्षालक्षणमवान्तरप्रकरणमस्माभिरिष्यते MayūMāli. 238. 19 (*on* iii. 3. 4); उद्दि(°पदि)ष्टेषु त्वङ्गेषु प्रधानस्य प्राकृताङ्गैरेव निराकाङ्क्षतयाङ्गाकाङ्क्षावशादेवान्वयः TantrRaha. 53. 2.

**अङ्गाकृष्टदुकूल** (aṅgākṛṣṭa-dukūla) *adj.* [*f.* -ā] one whose garment is taken off from the body अङ्गाकृष्टदुकूलया सरभसं गूढौ भुजाभ्यां स्तनावाकृष्टे जघनांशुके कृतमधःसंसक्तमूरुद्वयम् SubhāRaK. 19. 12 = SūktiMu. 77. 9.

**अङ्गाकृष्टि** (aṅgākṛṣṭi) *f.* 1 amorous gesture of the body यार्थेन प्रण- यिनी करोति चाङ्गाकृष्टिं सा किं भार्या NītiVā. 27. 7; 2 stretching out of one's limbs अंगाकृष्टिरक्षिमर्दनं च पुरुषैरिच्छया विधीयते परित्यज्यते च RasTa. 69. 4; 69. 1; 69. 3; 96. 6; अरतिसन्तापजृम्भाङ्गाकृष्टिकपटरुदितस्वावस्थाकथनादयः RasMañ. (58). 5.

**अङ्गाक्षर** (aṅgākṣara) *adj.* consisting of six syllables अस्त्रे शक्ति- भरार्ययोः स्वलिपिक्लृप्ताङ्गे तथाङ्गाक्षरे TantrSa. 3. 56.

**अङ्गाक्षिप्त** (aṅgākṣipta) *adj.* implied by the stem (designated as *aṅga*) अङ्गाक्षिप्तश्च प्रत्यय औकारेण विशेष्यते Pradī. vi. 23. 11 (*on* vii. 1. 13); योगविभागात्सिद्धम्- 'मृजेर्वृद्धिरचः' मृजेरचो वृद्धिर्भवति अङ्गाक्षिप्तेन प्रत्ययेनाचो विशेषणात् 'न्यमार्ट्' अटो न भविष्यति PadMañ. *on* KāśiVṛ. *on* P. i. 1. 3; vi. 4. 15; vi. 4. 34; अङ्गाक्षिप्तप्रत्ययनिमित्तं लुकि भवत्येवेति तु भ्रुवे हितं भ्रूहितमित्यादा- बुवङापत्त्या चिन्त्यम् LaS'abdeS'e. i. 252. 9.

**अङ्गाक्षेप** (aṅgākṣepa) *m.* 1 A convulsion of the body श्वासाङ्गाक्षेप- कूजनम् । … हिध्मा च मज्जगे (ज्वरे) AṣṭāSaṁ. i. 265. 24 (3. 2); 1 B (act of) shrugging the body तदेवाजिह्माक्षं मुखमविषदास्ता गिर इमाः स एवाङ्गाक्षेपो मयि सरसमाश्लिष्यति तनुम् SubhāRaK. 21. 3; Subhāṣi. 1577; 2 implication of the stem (designated as *aṅga*) परिभाषोपस्थित्या समाहितं भाष्ये न त्वङ्गाक्षेपेण LaS'abdeS'e. i. 186. 12; i. 284. 3; i. 363. 11.

**अङ्गाख्य** (aṅgākhya) *adj.* named or called Aṅga किमङ्गाख्येन देशेन किं चम्पाख्यपुरापि वा BṛKathāK. 56. 288.

**अङ्गाख्यमण्डल** (aṅgākhya-maṇḍala) *n.* country called Aṅga जिनो- त्तमः । कथयंस्तावदायातो यावदङ्गाख्यमण्डलम् BṛKathāK. 57. 11.

**अङ्गाख्यमहादेश** (aṅgākhya-mahādeśa) *m.* great country called Aṅga अथाङ्गाख्यमहादेशे काम्पिल्यनगरं परम् BṛKathāK. 33. 1; 56. 206; 60. 1.

**अङ्गाख्यविषय** (aṅgākhya-viṣaya) *m.* country called Aṅga अङ्गाख्य- विषयेऽस्तीह चम्पाख्या नगरी श्रुता BṛKathāK. 51. 7.

**अङ्गाग** (aṅgāga) *nu.* seventy-six अष्टार्णवाः शून्यकृताः पञ्चषष्टिर्नगेषवः। अष्टार्था अब्धयोऽष्टागा अङ्गागा मनवस्तथा (भोगकलाः) SūrySi. 8. 2.

**अङ्गाग्निसंख्य** (aṅgāgni-saṅkhya) *adj.* numbering thirty-six तिग्मां- शोरुदयः … क्षुण्णः पञ्चगुणैः शरैश्च विशिखैरङ्गाग्निसंख्यैः क्रमात् भक्तः स्वेन च भोदयेन KaraṇaKu. 6. 4(26)

**अङ्गाङ्ग** (aṅgāṅga) *n.* 1 subsidiary of a subsidiary अङ्गाङ्गमपि च तस्येति शक्यते वक्तुम् S'ābaBh. 1589 (? 1591). 3 (*on* viii. 1. 10); 2232. 3 (*on* xii. 1. 25); किमतो यद्येवमित्यङ्गाङ्गमप्यन्यथानुपपत्त्या शक्यमाक्षेप्तुमिति मन्यते TantrVā. 597. 17 (*on* ii. 3. 4); 666. 8 (*on* iii. 1. 1); स एषोऽङ्गाङ्गेन प्रधान- बाधः ṬupṬ. 20. 17 (*on* iv. 2. 3); 36. 3 (*on* iv. 3. 26); NyāyRaMā. 126. 8; अङ्गाङ्गानामप्यङ्गिप्रयुक्तत्वमस्ति S'ivārkaMaDī. i. 43. 32 (*on* i. 1. 1); BhāṭṭDī. iv. 223. 18 (*on* xii. 1. 3); संनिपत्योपकारकं त्वङ्गाङ्गम्, कर्माङ्गव्रीह्याद्युद्देशेन विधानात् MīmāNyāPra. 231. 12; न च दर्शपूर्णमासविधेः स्वाङ्गेष्वेवापेक्षा नाङ्गा- ङ्गेषु MayūMāli. 302. 12 (*on* iii. 6. 6); 365. 3 (*on* iv. 1. 17); 2 each and every limb, limb to limb अङ्गाङ्गेषु सुवृद्धेषु प्रतिमूलेषु धातुषु । शुक्रम् … प्रतिपद्यते BhelaS. 77. 11 (4. 2); अङ्गाङ्गेष्वपि नखादिषु यस्या वैकल्यं नास्ति ManvaVi. 283. 22 (*on* 3. 10); अम्बडस्तमङ्गाङ्गेन युद्ध्वा शिरः पातयत् PurāPraSaṁ. 39. 31.

**अङ्गाङ्गकाम** (aṅgāṅga-kāma) *m.* fruit or result of the subsidiary of a subsidiary (rite) किमङ्गकामैरङ्गाङ्गकामैश्च सहास्यानुवादः, अथवा विधिः S'āba- Bh. 1259. 26 (*on* iv. 3. 25); तस्मादङ्गाङ्गकामानपेक्ष्य सर्वेभ्यो ज्योतिष्टोम इत्यनुवादः ṬupṬ. 36. 1 (*on* iv. 3. 25)

**अङ्गाङ्गता** (aṅgāṅga-tā) *f.* the state of being the subsidiary of a sub- sidiary (rite) यथैव हि प्रधानहविरासादनमङ्गतया संबध्यते तथाङ्गहविरासादनमपि अङ्गाङ्गतया संभन्त्स्यते TantrVā. 1129. 4 (*on* iii. 7. 4)

**अङ्गाङ्गत्व** (aṅgāṅga-tva) *n.* the state of being the subsidiary of a subsidiary (rite) अवान्तरप्रकरणेन बलवताङ्गाङ्गत्वमेव BhāṭṭDī. i. 199. 18 (*on* iii. 1. 10); ii. 177. 4 (*on* v. 1. 18); चक्रसाधने तस्याङ्गाङ्गत्वं वचनबलात् SetuBa. 103. 14.

**अङ्गाङ्गपरिक्रम** (aṅgāṅga-parikrama) *m-* turn which is subsidiary to a subsidiary तस्मादङ्गाङ्गपरिक्रमे यदेव तालानुसरणं चतुर्षु च मुखेषु गतिपरि- समापनम् … रसांशेतराङ्गत्वादतिशयेन रसोपयोगीति तत् स्वीकृतम् AbhinBhā. iii. 73. 12 (*on* 19. 133)

**अङ्गाङ्गमिलन** (aṅgāṅga-milana) *n.* contact of limbs with limbs किं ब्रूथ 'तर्हि सहैव गच्छामः' इति । (सहर्षम्) हे सुन्दर्यः प्रियं मे । … न पश्येयं गत्यामभिमतमतो वः सह खलु प्रयाणं यत्र स्यादपि सुलभमङ्गाङ्गमिलनम् RasSa. 192.

**अङ्गाङ्गराग** (aṅgāṅgarāga) *m.* unction or unguent for the body तमसि वयस्यानुगच्छति श्यामाम् । अङ्गाङ्गरागमृगमदपरिमलपूरप्रदर्शितेन पथा S'ṛṅgāMañ. (A.) 38. 22.

**अङ्गाङ्गसंविद्** (aṅgāṅga-saṁvid) *f.* consciousness pervading all the limbs चिन्तयेच्छिवम् । निष्कलं सकलं चैव देहस्थं व्योमचारिणम् । अरञ्जितं रञ्जितं च नित्यमङ्गाङ्गसंविदम् YogVā. vi(1). 39. 13.

**अङ्गाङ्गसङ्ग** (aṅgāṅga-saṅga) *m.* close contact with each and every part (of the body) अङ्गाङ्गसङ्गपरिचुम्बनजातमोहां तां जीवनौषधिमिव प्रमदां स्मरामि CaurPañ. 47.

**अङ्गाङ्गानुरोध** (aṅgāṅgānurodha) *m.* [Inst.] in accordance with a subordinate which is itself a subordinate to another स धर्मोऽभ्युप- गन्तव्यो यः प्रधानं न बाधते । न ह्यङ्गाङ्गानुरोधेन प्रधानफलबाधनम् S'lokaVār. 6. 240 (791. 2); यत्र पुनरङ्गाङ्गानुरोधेन प्रधानबाध आपद्यते तदत्यन्तमयुक्तियुक्त- मित्याह S'arka. 90. 14; पुरोडाशाङ्गं ह्यधिश्रयणादयः संस्काराः तदङ्गं क्रमः पदार्था- नुसमयरूपः । तदाश्रयेण च पुरोडाशबाधप्रसङ्गः । न चाङ्गाङ्गानुरोधेन प्रधानबाधो युक्तः TantrRa. 302. 15.

**अङ्गाङ्गापेक्षा** (aṅgāṅgāpekṣā) *f.* [Inst.] in comparison with a sub- sidiary to another subsidiary अङ्गाङ्गापेक्षया च साक्षादङ्गं बलीयः MīmāNyāPra. 231. 13.

**अङ्गाङ्गार** ( aṅgāṅgāra ) *m.* limb in the form of a live coal यदङ्गाङ्गाराणां प्रथ( ? श )मपिशुना नाभिकुहरे । शिखा धूमस्येयं परिणमति रोमावलिवपुः KāvyPra. 608. 9 = AlaṅkāSa. 52. 16.

**अङ्गाङ्गावयव** ( aṅgāṅgāvayava ) *m.* parts of the limbs of the body अङ्गाङ्गावयवैश्छिन्नैर्व्यायुधास्तेऽपतन्क्षितौ MahāBhā. viii. 40. 102.

**अङ्गाङ्गासंभव** ( aṅgāṅgāsambhava ) *m.* impossibility of being a subordinate to a subordinate अङ्गाङ्गासम्भवाच्चापि या प्रधाननिराक्रिया । सायुक्तैवानुमानेन प्रत्यक्षज्ञानबाधनात् S'lokaVār. 5(14). 41 (623. 7)

**अङ्गाङ्गि** ( aṅgāṅgi ) *adv.* in a manner in which limbs are interlocked with limbs अङ्गाङ्गि समभूद् युद्धम् PārśvC. 6. 1150; [jointly or reciprocally related as one limb to another or to the body, MW]

**अङ्गाङ्गिकभाव** ( aṅgāṅgika–bhāva ) *m.* relation of part and whole, relation of subordinate and principal तदाङ्गाङ्गिकभावस्य च तन्त्रता न किं स्यात् S'aṅkaDigVi.( Mā.) 15. 123.

**अङ्गाङ्गिकल्पन** ( aṅgāṅgi–kalpana ) *n.* concept of subsidiary and principal तस्मात्कालार्थ एवायं संयोगोऽङ्गाङ्गिकल्पनात् TantrVā. 756. 19 (*on* iii. 1. 23)

**अङ्गाङ्गिकल्पना** ( aṅgāṅgi–kalpanā ) *f.* idea of subordinate and principal शिष्टे विकरणादौ तु यथेष्टाङ्गाङ्गिकल्पना S'lokaVār. 7. 200 (901. 6)

**अङ्गाङ्गिता** ( aṅgāṅgi–tā ) *f.* relationship of subordinate and principal भेदसामान्ययोर्धर्ममेदादङ्गाङ्गिता ततः । यथानित्यः प्रयत्नोत्थः प्रयत्नोत्थतया ध्वनिः PramāVār. 4. 186; अन्यथा फलवदफलवतोः संनिहितयोरङ्गाङ्गितया जामितैव स्यात् ĪśopBh. 15. 16 (*on* 10); तदभावे ( उपकार्योपकारकभावाभावे ) च कथमङ्गाङ्गितेत्यपि येषां मतं तैरपि कस्यचिद्रसस्य प्रकृष्टत्वं भूयःप्रबन्धस्य व्यापकत्वमन्येषां चाल्पप्रबन्धगामित्वमभ्युपगन्तव्यम् Loc. 174. 16 (*on* 3. 24); 175. 18 (*on* 3. 24); तेषामङ्गाङ्गितापत्तेरव्यवस्था प्रसज्यते S'āstrDī. 198. 7 (*on* iii. 1. 10); उक्तं हि प्राक् कर्मज्ञानयोरङ्गाङ्गितया मोक्षोपयोगित्वम् S'ivārkaMaDī. i. 44. 26 (*on* i. 1. 1); LaCandr. 859. 18.

**अङ्गाङ्गित्व** ( aṅgāṅgi–tva ) *n.* relationship between the subordinate and the principal न तु प्रयोजनसदसद्भावेनाङ्गाङ्गित्वमिति विवेकः TantrVā. 391. 9 (*on* ii. 1. 12); ṬupṬ. 37. 19 (*on* iv. 3. 30); नीलोत्पलादिवन्नानयोर्नाङ्गाङ्गित्वम् NyāyRa. 925. 7 (*on* 7. 286); प्रज्ञातफलयोर्नैव मिथोऽङ्गाङ्गित्वसंभवः S'āstrDī. 388. 11 (*on* iv. 3. 13); अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु संकरः KāvyPra. 754. 1; वाजपेयपशुयागयोरङ्गाङ्गित्वेन ··· भेदात् VedāntKa. 314. 8 (*on* ii. 3. 10); BhāvPra.(S'ā.) 173. 20(6); आग्नेयादीनां षण्णां यागानां अङ्गाङ्गित्वादिपूर्वोक्तत्रैविध्याभावेऽपि फलैक्यात् कर्त्रैक्यं क्रमश्च VivaPraSaṁ. 211. 6; SāhiDa. 623. 1; AṇuBh. 131. 14 (*on* ii. 2. 8); एवं सति कथमनयोः अङ्गाङ्गित्वं परस्परं घटते SvātmNi. 68; एकपीठे पृथक् पूजां विना यन्त्रं करोति यः । अङ्गाङ्गित्वं परित्यज्य देवताशापमाप्नुयात् KulārT. 6. 89; तयोरङ्गाङ्गित्वाद्यन्यतमरूपवत्त्वे श्रुत्यादिसद्भावप्रतिज्ञा न संगच्छते S'ivārkaMaDī. i. 46. 7 (i. 1. 1); i. 43. 26 (i. 1. 1); परस्परं आग्नेयामिश्रायागानामङ्गाङ्गित्वसम्बन्धासिद्धिरेवास्य प्रयोजनम् MīmāKau. i. 252. 23 (*on* i. 4. 15)

**अङ्गाङ्गित्वापेक्षा** ( aṅgāṅgitvāpekṣā ) *f.* need for the relation of subordinate and principal सामिधेनीनां पुनः···क्लृप्तं प्रयोजनमिति नास्त्यङ्गाङ्गित्वापेक्षा TantrVā. 1137. 7 (*on* iii. 7. 16); तेषां तु निर्ज्ञातप्रयोजनानामङ्गाङ्गित्वापेक्षाभावात् कालार्थः संयोगः S'āstrDī. 390. 10 (*on* iv. 3. 15); MayūMāli. 216. 1 (*on* iii. 2. 5)

**अङ्गाङ्गित्वाभाव** ( aṅgāṅgitvābhāva ) *m.* absence of the relation of subsidiary and principal or part and whole अङ्गाङ्गित्वाभावाच्च ··· होता वषट्कृत्य भक्षयेत् TantrVā. 1059. 10 (*on* iii. 5. 44); अङ्गाङ्गित्वाभावः प्रतिसंधानव्यवहारलोपश्च देवदत्तदृष्ट इव यज्ञदत्तादेः ĀtmaSi. 11. 17; अङ्गाङ्गित्वाभावे तु समानकर्तृकत्वम् ···उपपादनीयं स्यात् MayūMāli. 389. 4 (*on* iv. 3. 13)

**अङ्गाङ्गिन्** ( aṅgāṅgin ) *adj.* [Dv. Cpd.] subsidiary and principal क्रमाम्नातानामङ्गाङ्गिनाम्···विनियोगव्यवस्था TantrVā. 33. 9 (*on* i. 2. 17); सोऽतो वेद इति अङ्गाङ्गिनोरभेदविवक्षया TātpaṬ.(Vā.) 61. 23 (*on* i. 1. 1)

**अङ्गाङ्गिभाव** ( aṅgāṅgi–bhāva ) *m.* relationship of subordinate and principal (based on part and whole, contributing and contributed to, qualifying and qualified etc.) भेदेनाङ्गाङ्गिभावोऽस्य···विकल्प्यते VākyaP. 2. 87; सत्त्वं रजस्तमसी आश्रित्य स्वेन रूपेणाङ्गाङ्गिभावं गच्छति MāṭhVṛ. 24. 3 (*on* 13); अन्ये तु सन्ध्ययोरित्यङ्गाङ्गिभावं मन्यन्ते BālaKrī. i. 43. 20 (*on* 1. 25); अङ्गाङ्गिभावस्तु कैश्चिदिष्टो विकल्पतः S'lokaVār. 5(4). 34 (356. 6); विभक्तिभिरेवाङ्गाङ्गिभावेऽभिधीयमाने TantrVā. 391. 7 (*on* ii. 1. 12); 419. 10 (*on* ii. 1. 34); 1135. 13 (*on* iii. 7. 14); सत्त्वरजस्तमसामङ्गाङ्गिभावरूपापत्तिः BrahmSūBh.(S'aṅ.) 352. 11 (*on* ii. 2. 2); कर्मणोऽङ्गाङ्गिभावेन स्वप्रधानतयाथवा । संबन्धस्येह संसिद्धेः NaiṣkaSi. 15. 2; उदकक्रियानिषेधेन श्राद्धनिषेधः सिद्धः अङ्गाङ्गिभावात् ManuBh. i. 453. 17 (*on* 5. 68); अङ्गाङ्गिभावेन च विना एकप्रयोगत्वानुपपत्तेः PrakaPañ. 15. 2; न च द्वयोरपि व्यङ्ग्यत्वम् , अङ्गाङ्गिभावस्यानुपपत्तेः VakroJī. 165. 19; अत एव चेतिवृत्तमात्रवर्णनप्राधान्येऽङ्गाङ्गिभावरहितरसभावनिबन्धेन च कवीनामेवंविधानि स्खलितानि भवन्ति Dhvanyā. 363. 11 (*on* 3. 19) ( Loc. अङ्गाङ्गिभावरहितानाम-विचारितगुणप्रधानभावानाम् ); तथा किं नियतेनैवाङ्गाङ्गिभावेन प्रयोग उतानियतेनेति···प्रश्नः पञ्चमः AbhinBhā. i. 7. 24 (*on* 1. 5); i. 16. 17 (*on* 1. 18); श्लेषरूपकोपमार्थश्लेषाणाम्···समाधलंकारे व्यक्ताव्यक्तरूपोऽङ्गाङ्गिभावः SaraKaṇṭhā. 554. 8; कृतार्था गुणाः सत्त्वरजस्तमांसि तेषां परिणाम आपुरुषार्थसमाप्तेरानुलोम्येन प्रातिलोम्येनाङ्गाङ्गिभावः क्षितिलक्षणस्तस्य योऽसौ क्रमः RājMār. 82. 2; 2. 21; 71. 11; प्राक्प्रतिपादितस्य रसस्य रसान्तरेण न विरोधः नाप्यङ्गाङ्गिभावो भवति इति रसशब्देनात्र स्थायिभाव उपलक्ष्यते KāvyPra. 460. 4; गुणानामुत्कर्षनिकर्षनिबन्धनाङ्गाङ्गिभावाद्धि जगत्प्रवृत्तिः ··· अभ्युपगम्यते BrahmSūBh.( Rā.) 475. 4 (*on* ii. 2. 6); अङ्गाङ्गिभावस्त्वेकप्रयोगतावशात् कल्पनीयः S'āstrDī. 8. 24 (*on* i. 1. 1); 125. 15 (*on* ii. 2. 3); नाप्यङ्गाङ्गिभावेन विधिनिषेधयोस्साक्षात्तदसंभवात् VyaktiVi. 113. 15; तदाश्रयेण चातिशयोक्तिश्चमत्कारहेतुरित्यवयवयोरङ्गाङ्गिभावः Kāvyānu.(He.) 348. 15; मिश्रत्वमङ्गाङ्गिभावेन संशयेन एकवाचकानुप्रवेशेन च त्रिधा भवत् संकरं त्रिभेदमुत्थापयति AlaṅkāSa. 198. 1; Aparā. 890. 15 (*on* 3. 17); एतेषामङ्गाङ्गिभावापन्नानां रससंकरः RasTa. 169. 10; एषां ध्वनिभेदानामङ्गाङ्गिभावेन ··· संकरस्त्रिविधो भवति Ekāva. 3. 1. (519) (129. 7); समप्राधान्यशङ्कायां तृतीये श्रुतिलिङ्गादिप्रमाणैरङ्गाङ्गिभाव उक्तः VivaPraSaṁ. 138. 11; निसर्गवैरिणोरङ्गाङ्गिभावात् स्वादाभावो यथा RasāSu. 201. 8 (2. 262); नाप्यङ्गाङ्गिभावः द्वयोरपि पूर्णतया स्वातन्त्र्येण विश्रान्तेः SāhiDa. 446. 1; कर्मणामङ्गाङ्गिभावे निश्चिते साङ्गं प्रधानं युगपत् कुर्यात् SarvaDaKau. 102. 13; त्रयाणामपि शब्दं प्रति फलोपकार्यङ्गत्वे कथं परस्परमङ्गाङ्गिभावः Nyāyāmṛ. 615B. 12; विनियोगो नाम अङ्गाङ्गिभावावगमः TantrRaha. 51. 30; अङ्गाङ्गिभावमज्ञात्वा कथं सामर्थ्यनिर्णयः Hitopa. 2. 137; न चानयोरङ्गाङ्गिभावः एकस्यान्यानुपजीवकत्वात् AlaṅkāKau.(Vi.). 415. 23; गुणानामुत्कर्षापकर्षभावोऽङ्गाङ्गिभावः BrahmSūBh.(S'ri.) ii. 60. 1 (*on* ii. 2. 6); वेदान्तसूत्रे चाङ्गाङ्गिभावेन ज्ञानकर्मणोः सहकारित्वावधारणात् SāṁkhyaPraBh. 26. 23 (*on* 1. 56); 94. 27 (*on* 3. 25); यत्र तु प्रयोजनं साकाङ्क्षं सन्निराकाङ्क्षस्य संनिधौ पठ्यते तत्रैव क्त्वादेरङ्गाङ्गिभावे पर्यवसानम् VīraMi. 178. 20 (*on* 1. 98); द्रव्यकर्मणोर्मिथोऽङ्गाङ्गिभावे BhāṭṭDī. i. 181. 10 (*on* iii. 1. 1); ii. 94. 7 (*on* iv. 1. 8); अत एव जपपाठयोर्न परस्परमङ्गाङ्गिभावोऽपि LalitāSaBh. 202. 28 (*on* 240)

**अङ्गाङ्गिभावपरम्परा** ( aṅgāṅgibhāva–paramparā ) *f.* name of a variety of *padayukti* a *śabdālaṅkāra* based on a series of subordinate and principal relationship योगकारणपर्यायाङ्गाङ्गिभावपरम्पराः । पदयुक्तेर्निमित्तं स्युः SaraKaṇṭhā. 172. 25; नभःकटाहकुहरक्रोडमित्यङ्गाङ्गिभावपरम्परा च परिस्फुरन्ती दृश्यते SaraKaṇṭhā. 174. 8.

**अङ्गाङ्गिभाववैचित्र्य** ( aṅgāṅgibhāva–vaicitrya ) *n.* variety in the relationship of subordinate and principal सत्त्वादीनां चाङ्गाङ्गिभाववैचित्र्यस्यानन्त्याद् रत्यादित्वेनास्वादगणना न युक्ता Loc. 70. 18 (*on* 2. 4)

**अङ्गाङ्गिभावसंकर** ( aṅgāṅgibhāva–saṅkara ) *m.* amalgamation of poetic figures ( variety of the poetic figure called *saṅkara* in which one figure is subordinated to the other ) शब्दालङ्कारविषयेऽङ्गाङ्गिभावसंकरो नाङ्गीक्रियते SāhiDa. 496. 11; अङ्गाङ्गिभावसंकरो यथा - तलेष्ववेपन्त महीरुहाणां छायास्तदा मारुतकम्पितानाम् । शशाङ्कसिंहेन तमोगजानां लूनाङ्कलीनामिव गात्रखण्डाः Kuval. 171 (206); AlaṅkāMañ. 235. 3.

**अङ्गाङ्गिभावसंबन्ध** ( aṅgāṅgibhāva–sambandha ) *m.* relation between the subordinate and the principal अङ्गाङ्गिभावसंबन्धो ह्येकजातिशरीरवान् ।··· सुसंमतः ĪśānS'iPa. ii. 1. 51; सोमयागस्यापि यद्यप्यनेनैव न्यायेनाङ्गाङ्गिभावसंबन्धः स्तोत्रैरसिद्ध एव S'āstrDī. 404. 13 (*on* iv. 4. 12); न च प्रातिपदिकमात्रमङ्गाङ्गिभावसंबन्धं बोधयितुमलम् VivaPraSaṁ. 187. 10 षष्ठ्या अङ्गाङ्गिभावसंबन्धपरत्वावसायात् BhāṭṭDī. i. 294. 8 (*on* iii. 4. 1)

**अङ्गाङ्गिभावानिष्पत्ति** ( aṅgāṅgibhāvāniṣpatti ) *f.* non-realisation of the relationship between the subordinate and the principal स्तोत्राणां च निष्फलत्वाविशेषेणाङ्गाङ्गिभावानिष्पत्तेः S'āstrDī. 404. 11 (*on* iv. 4. 12)

**अङ्गाङ्गिभावानुपपत्ति** ( aṅgāṅgibhāvānupapatti ) *f.* impropriety or impossibility of the relationship between the subordinate and principal परस्परं प्रत्यङ्गाङ्गिभावानुपपत्तेः ··· महदाद्युत्पादो न स्यात् BrahmSūBh.(S'aṅ.) 359. 6 (*on* ii. 2. 8); तदा स्वार्थप्रवृत्तानां तेषामन्योन्यमङ्गाङ्गिभावानुपपत्तौ संघातापत्त्यभावप्रसङ्गात् VivaPraSaṁ. 235. 1; सर्वथा अन्योन्यासंस्पर्शे अङ्गाङ्गिभावानुपपत्तेः NyāySu.(Ja.) 91A. 5 (*on* i. 1. 1)

**अङ्गाङ्गिभावापेक्षा** ( aṅgāṅgibhāvāpekṣā ) *f.* reference to the relation between the subordinate and the principal अङ्गाङ्गिभावापेक्षया गुणगुणि-

-व्यवहार: TantrVā. 702. 13 (*on* iii. 1. 8); 775. 3 (*on* iii. 2. 11)

**अङ्गाङ्गिभावाभाव** (aṅgāṅgibhāvābhāva) *m.* absence of the relation between the subordinate and the principal अत्राप्यधिकारांशो न भिद्यत इति चेन्न अङ्गाङ्गिभावाभावात् Bṛha. 3. 1 (*on* i. 1. 1); धर्माणां बृहद्रथन्तरशब्दवाच्यऋगक्षराभिव्यञ्जकगीत्यर्थत्वेन तेषामुक्तरूपगीत्यङ्गस्तोमानां च ··· अङ्गाङ्गिभावाभावात् VidhiRa. 29 (165. 22); विनियोजकानामभावेन परस्परमङ्गाङ्गिभावाभावात् ViraMi.(Pūjā.) 33. 2; परस्परमङ्गाङ्गिभावाभावाद्वैपरीत्यप्रसङ्गात् MayūMāli. 712. 14 (*on* x. 4. 20)

**अङ्गाङ्गिभावावस्थान** (aṅgāṅgibhāvāvasthāna) *n.* presence of the relation between the subordinate and the principal अङ्गाङ्गिभावावस्थानं सर्वेषां समकक्षता । इत्यलंकारसंसृष्टेर्लक्षणीया द्वयी गति: Kāvyāda. 2. 360; SaraKaṇṭhā. 732. 16.

**अङ्गाङ्गिभूत** (aṅgāṅgi-bhūta) *adj.* which have become the subordinate and principal ब्रह्मज्ञानकर्मणी नाङ्गाङ्गिभूते PrakaVi. 938. 19; चेतोविकारैरङ्गाङ्गिभूताष्टरसयोगत: BhāvPra.(S'ā.) 222. 3 (8)

**अङ्गाङ्गिविपर्यास** (aṅgāṅgi-viparyāsa) *m.* reversal of the subordinate and the principal तर्कमभिधाय प्रयोगेऽङ्गाङ्गिविपर्यास: NyāyPari. 195. 9.

**अङ्गाङ्गिव्यतिकर** (aṅgāṅgi-vyatikara) *m.* confusion between the subordinate and the principal अङ्गाङ्गिव्यतिकरदु:स्थितं मतं ते S'ivLī. 6. 49.

**अङ्गाङ्गिसंकर** (aṅgāṅgi-saṅkara) *m.* amalgamation of the subordinate and the principal (figures of speech) अत्र यमकानुलोमयो: शब्दालंकारयो: परस्परापेक्षत्वेनाङ्गाङ्गिसंकर इति AlaṅkāSa. 199. 10.

**अङ्गाङ्गिसंबन्ध** (aṅgāṅgi-sambandha) *m.* relation between the subordinate and the principal अन्यैरङ्गाङ्गिसंबन्ध: MīmāSū. iv. 4. 36; अङ्गाङ्गिसंबन्धस्तु क्रतुकथंभावग्रहणात्स्यात् TantrVā. 568. 14 (*on* ii. 2. 27); किं स्वर्दृक्शब्दस्य वीक्षणस्य च कालार्थ: संयोग: उताङ्गाङ्गिसंबन्ध इति S'āstrDī. 741. 8 (*on* x. 6. 2); अङ्गाङ्गिसंबन्धबोधकत्वादुत्पत्तिविधिरेव विनियोगविधि: संपद्यते VivaPraSaṁ. 148. 21; 137. 17; कुर्यादङ्गाङ्गिसंबन्धं कन्यकामदनोदयम् SāhiSā. 4. 18.

**अङ्गाङ्गुलान्ततस्** (aṅgāṅgulānta-tas) *adv.* in such a manner as to end in (i. e. upto) six aṅgulas (in measurement) तथा वेदाङ्गुलादित: । मध्यानि नव लिङ्गानि तथैवाङ्गाङ्गुलान्तत: S'ilpaRa. ii. 2. 28.

**अङ्गाङ्गोपदेश** (aṅgāṅgopadeśa) *m.* prescription of a subsidiary of a subsidiary तथा चाङ्गाङ्गोपदेशदशायामपि स्वाङ्गोपदेशमात्रेण तद्विधेर्लब्धात्मकत्वसंभवान्न प्रयाजाद्यतिदेशानुपपत्ति: MayūMāli. 651. 17 (*on* x. 1. 4)

**अङ्गाङ्ग्यपेक्षा** (aṅgāṅgy-apekṣā) *f.* expectancy of the relationship between the subsidiary and the principal (मन्त्रप्रधानकर्मणो:) तयोश्चाङ्गाङ्ग्यपेक्षावेलायां यथासंख्यन्यायेन समानदेशत्वाद् बुद्धौ संनिधानं भवति TantrVā. 832. 23 (*on* iii. 3. 12)

**अङ्गाचार** (aṅgācāra) *m.* performance of subservient rites विधायान्यत: पुष्पगन्धाक्षताद्यम् ···स्वतोऽङ्गाचारसाधनं चादधीत PañcaRā.(Nā.) iii. 7. 10.

**अङ्गाणु** (aṅgāṇu) *m.* *mantras* relatiag to *aṅganyāsa* दशांशमङ्गाणुभिरेकश: परैर्निजावृतिव्याहृतितारकै: क्रमात् TantrSa. 7. 114; cf. **अङ्गमन्त्र**.

**अङ्गातिदेशक** (aṅgātideśa-ka) *adj.* which extends the subsidiary analogically, which causes extended application of the subsidiary (फलातिदेश:) अङ्गातिदेशकेन प्रकृतिवच्छब्देन भवेत् भिन्नेन वा BhāṭṭDī. iii. 7. 8 (*on* viii. 1. 4)

**अङ्गातिभार** (aṅgātibhāra) *m.* excessive weight of the body तदाहं (कृष्ण:) मातुरङ्कस्थ: ···। अङ्गातिभारं कृतवान् ĀdiP. 20. 31.

**अङ्गातिरिक्त** (aṅgātirikta) *adj.* **1** having a limb in excess विपरीतं हीनाङ्गाङ्गातिरिक्तम् (एतेषां किंचिद्दृष्ट्वा न गच्छेत्) AVPari. 1(32). 5; **2** other than the joint or seam अङ्गातिरिक्तं खड्गादि( ? ङ्गे हि ) यच्छुद्धत्वा( ? त्वो )पसूचकम् । तदरिष्टमिति प्राहु: YuktiKa. 141. 7; 141. 5.

**अङ्गातिविस्तर** (aṅgātivistara) *m.* excessive elaboration of a subservient sentiment अकाण्डप्रथाच्छेदाङ्गातिविस्तराङ्ग्यननुसंधान°···°प्रकृतिव्यत्ययाश्च। एते चाष्टौ रसस्य दोषा: Kāvyānu.(He.) 142. 2; अङ्गस्याप्रधानस्यातिविस्तरेण वर्णनमङ्गातिविस्तर: Kāvyānu.(Vā.) 68. 3.

**अङ्गातिशय** (aṅgātiśaya) *m.* excellence produced by constituents (of Yoga) द्रव्यक्रियाहेत्वयनेशकर्तृभिर्मायागुणैर्वस्तुनिरीक्षितात्मने । अन्वीक्षयाङ्गातिशयात्मबुद्धिभिर्निरस्तमायाकृतये नमो नम: BhāgP. v. 18. 37; (S'rīdhara अन्वीक्षया विचारेणाङ्गैर्यमनियमादिभिरतिशयात्मा निश्चयवती बुद्धिर्येषां तै:)

**अङ्गात्मन्** (aṅgātman) *m.* nature or form of a *mantra* for *aṅganyāsa* हृदि मूर्ध्नि शिखायां च···षड्वर्णास्त्वाङ्गिका मता: ···प्रबुद्धं भास्वरं नित्यं ज्ञानम्···। स्वस्य शक्तिसमूहस्य··· । उदयस्थितिसंहारकारणेऽङ्गात्मना पुन: । विशेषतां समायाति स्वरूपमपि चात्यजन् PauṣkS. 33. 35; cf. **अङ्गमन्त्र.**

**अङ्गादर** (aṅgādara) *m.* regard or care for the subordinate rites नन्वेवं समर्थस्यापि नाङ्गादर: स्यात् MayūMāli. 471. 9 (*on* vi. 4. 1)

[1]**अङ्गादि** (aṅgādi) *adj.* (countries) beginning with Aṅga अङ्गादयो जनपदा: AVPari. 1(8). 5.

[2]**अङ्गादि** (aṅgādi) *adj.* **1** (words) beginning with *aṅga* नोऽङ्गादे: S'ākaṭāVyā. iii. 3. 126 = SiddhaHe. vii. 2. 29; **2 A** subordinate deities etc. न्यासक्रमेण··· । अभ्यर्च्य देवीं गन्धाद्यैरङ्गादीन् पूजयेत् तत: S'āraTi. 4. 99; SaubhāLaU. 654. 6; **2 B** auxiliaries (of the Vedas) etc. अत एव शङ्ख: न वेदमनधीत्यान्यां विद्यामधीयीतान्यत्र वेदाङ्गस्मृतिभ्य: इति । अङ्गादेरपि तदर्थपरिज्ञानार्थत्वादित्यभिप्राय: SmṛtiCan. i. 130. 3; **2 C** subsidiary rites etc. इतिकर्तव्यतेति । ···स्वरूपप्रकारेतिकर्तव्यताकलाप इत्यर्थ: । अङ्गादिकलाप इत्यर्थो वा BālamBha. ii. 1. 11 (*on* 2. 1); **3** gestures with limbs etc. नटैरङ्गादिभी रामयुधिष्ठिरादीनामवस्थानुकरणमभिनय: SāhiDa. 272. 12.

**अङ्गादिक** (aṅgādi-ka) *adj.* **1** subordinate deities etc. सपद्मं मण्डलं कृत्वा तन्मध्ये ह्यवतार्य च । शेषमङ्गादिकं प्राग्वन्न्यस्य JayāS. 29. 70; सकलीकृत्य देवेशं तं ध्यायेद् व्यक्ततां गतम् । प्राग्वदङ्गादिकांस्तत्र तत्तन्मन्त्रैस्तु निक्षिपेत् PāraS. 6. 235; **2** (rites) such as *ṣaḍaṅganyāsa* ऋष्यादि चाङ्गादिकमप्यशेषमेकाक्षरप्रोक्तविधानत: स्यात् ĪśānS'iPa. i. 16. 86; **3** the body (limbs) etc. यथेति पूर्वा अनुमांश्च जीवस्वरूपमङ्गादिकमावयन्ति । न ब्रह्मरूपत्वममुष्य देहिनो मुक्तावपि स्यात्प्रमया कथंचित् AnuVyā. 71A. 8 (*on* 4. 2)

**अङ्गादिकल्पना** (aṅgādi-kalpanā) *f.* idea of the *aṅgamantra* etc. पूर्वं बीजं परा शक्तिर्बीजेन मूर्तिकल्पना । षड्दीर्घभाजा बीजेन कुर्यादङ्गादिकल्पना(? °नाम्) KulaCūT. 5. 58.

**अङ्गादिग्रन्थ** (aṅgādi-grantha) *m.* texts such as the auxiliaries (of the Vedas) तेनैवं कथंचिदङ्गादिग्रन्थार्थान् य: प्रवक्ति तस्मिन्नयमहार्विधि: ManuBh. i. 458. 1 (*on* 5. 81)

**अङ्गादिच्छेद** (aṅgādi-ccheda) *m.* mutilation of limbs etc. वधोऽङ्गादिच्छेदरूप: मारणरूपश्च VīraMi. 383. 12 (*on* 1. 367)

**अङ्गादिजनपद** (aṅgādi-janapada) *m.* Aṅga and other countries समरकेतोश्च सर्वदायसहितानङ्गजीवानङ्गादिजनपदान् प्रायच्छत् (सुदृष्टिनामाक्षपटलिक:) TilaMañ. 103. 16.

**अङ्गादिधर्म** (aṅgādi-dharma) *m.* duty regarding the (seven) elements (of polity) सर्वेष्वङ्गादिधर्मेषु भवत: किमनामयम् AhirbuS. 33. 59.

**अङ्गादिधारण** (aṅgādi-dhāraṇa) *n.* supporting the blade etc. (of the sword) भूमिरङ्गादिधारणम् YuktiKa. 141. 8.

**अङ्गादिनवान्तिम** (aṅgādi-navāntima) *adj.* beginning from six and ending in nine, from six to nine मासूरके सोच्छ्रयं भङ्क्त्वाङ्गादिनवान्तिमैर्विरहयेद् वांशं यथोक्तोच्छ्रयात् TantrSa. 2. 9.

**अङ्गादिपरिपूर्ति** (aṅgādi-paripūrti) *f.* fulfilment of the ancillary rites etc. कलिप्रयुक्तो दोष: स्वस्वधर्मसमनुष्ठानवैकल्यं तस्य निवृत्तयेऽङ्गादिपरिपूर्तये LalitāSaBh. 236. 5 (*on* 305)

**अङ्गादिविलेखन** (aṅgādi-vilekhana) *n.* pecking or scratching on the body or limbs and the like (वायस: मोषकृत् स्वविलेखने) विलेखनमङ्गादिविलेखनम् AdbhuSāg. 689. 7.

**अङ्गादिवैकृत्य** (aṅgādi-vaikṛtya) *n.* unnatural postures of the limbs and the like अङ्गादिवैकृत्यैर्हास्यकारी विदूषक: RasMañ. 231. 1.

**अङ्गादिव्यपदेश** (aṅgādi-vyapadeśa) *m.* designation as accessory etc. अतो नाट्यं संस्कारकं नृत्तस्येत्यङ्गादिव्यपदेश इत्युपचारादुच्यते AbhinBhā. i. 176. 11 (*on* 4. 263)

**अङ्गादिसंयुत** (aṅgādi-saṁyuta) *adj.* accompanied by subsidiaries etc. अर्घ्यालभनमाल्यैश्च धूपैरङ्गादिसंयुतम् । तत्सर्वं योग्यमाहर्तुं पूजान्तरनिवेदितम् PāraS. 12. 244.

**अङ्गादिसंग्रह** (aṅgādi-saṅgraha) *m.* inclusion of the auxiliary texts (of the Veda) etc. (v. l. वेदाथर्वपुराणेतिहासादीनि) अङ्गादिसंग्रहायाह । आदीनि( ? नी )ति BālamBha. i. 332. 9 (1. 101)

**अङ्गादिसंबन्धिन्** (aṅgādisambandh-in) *adj.* associated with the Aṅga country etc. अङ्गादिसंबन्धिनो निवासरूपत्वं विषयरूपत्वं चास्ति Pradī. iv. 173B. 24 (*on* iv. 2. 52)

**अङ्गादेश** (aṅgādeśa) *m.* substitute for a base (*aṅga*) अङ्गादेशोऽङ्गवद् भवति KāśiVṛ. *on* P. i. 1. 56.

**अङ्गाद्य** (aṅgādya) *adj.* **A** beginning with the Aṅga country अङ्गाद्यान् विषयान् जित्वा प्रतापी मथुरां श्रित: PadmP.(Ra.) 91. 34; **B** (numbers) six etc. अङ्गाद्यैरुदयोत्तरान्तरगतोन्मानं विभज्य क्रमात् TantrSa. 2. 9.

**अङ्गाद्यनुष्ठान** (aṅgādy-anuṣṭhāna) *n.* performance of subsidiaries

etc. तन्त्रं नाम साधारणमङ्गाद्यनुष्ठानम् NyāyRaMā. 193. 2.

**अङ्गाद्यभिनय** ( aṅgādy-abhinaya ) *m.* dramatic representation through gestures etc. (i. e. *āṅgika, vācika, āhārya* and *sāttvika*) योऽयं स्वभावो लोकस्य सुखदुःखसमन्वितः । सोऽङ्गाद्यभिनयोपेतो नाट्यमित्यभिधीयते NāṭyaS'ā. 1. 122 ( AbhinBhā. अङ्गादीति । अङ्गादिषु येऽभिनयाः आङ्गिकादयः ); 19. 144; अरंस्त तां च गायन्तीं नृत्यन्तीं च विलोकयन् । पठन्तीमिव कामाज्ञामङ्गाद्यभिनयैर्वृताम् KathāSaSāg. vi. 8. 164.

**अङ्गाद्यावरणान्त** ( aṅgādy-āvaraṇānta ) *adj.* from Aṅga (deities) to Āvaraṇa (deities) अङ्गाद्यावरणान्तानां अर्चनप्रकारस्तु देव्यर्चनोक्त एव NityoNi. 140. 2.

**अङ्गाधःकोटर** ( aṅgādhaḥkoṭara ) *n.* armpit अङ्गाधःकोटरे कक्षा ParyāRaMā. 65. 1571.

**अङ्गाधार** (aṅgādhāra) *m.* sustenance of the body, subsistance ततोऽङ्गाधारमात्रीयप्रान्ताहारेच्छुरप्यहम् PāṇḍaC. 18. 200.

**अङ्गाधिकार** ( aṅgādhikāra ) *m.* **1** section of Pāṇinian grammar beginning with *aṅgasya* (P. vi. 4. 1); अङ्गाधिकार इटो विधिप्रतिषेधौ Vār. 11 (*on* P. i. 1. 63); न लुमता लुप्तेऽङ्गाधिकारः प्रतिनिर्दिश्यते MahāBh. i. 54. 27 (*on* i. 1. 5); अङ्गाधिकारविहितं कार्यमिहातिदिश्यते KāśiVṛ. *on* P. vi. 4. 62; *on* P. vii. 3. 30; Nyās. i. 121. 9 (*on* i. 1. 63); Pradī. i. 223A. 11 (*on* i. 1. 6); यथा प्रागभ्यासविकारेभ्योऽङ्गाधिकारः PadMañ. *on* KāśiVṛ. *on* P. i. 3. 11; PariVṛ. (Sī.) 16. 18; Prasā. i. 142. 18; PāṇiTaVāNaMā. 14. 3; PariVṛ.(Nī.) 17. 1; LaS'abdeS'e. i. 169. 6; i. 266. 11; ii. 525. 3; **2** context dealing with the subsidiary अङ्गाधिकारस्याप्यपूर्वसाधनत्वलक्षणातात्पर्यग्राहकत्वावसायात् MīmāKau. ii. 193. 6 (*on* iii. 1. 19); तथा दुर्बलेनाप्यङ्गाधिकाराख्यतत्प्रकरणेनापि ( तात्पर्यग्रहः ) BhāṭṭDī. ii. 40. 9 (*on* iii. 7. 1)

**अङ्गाधिकारिन्** (aṅgādhikār-in) *m.* officer in charge of the constituents of a kingdom or royal power अङ्गाधिकारिणः केचित् Mānaso. iii. 11. 1214.

**अङ्गाधिक्य** ( aṅgādhikya ) *n.* **A** excess of a factor or factors तद्विशेषौ जल्पवितण्डे इति । कः पुनर्विशेषोऽङ्गाधिक्यमङ्गहानिश्चेति NyāyVār. 20. 13 (*on* i. 1. 1); **B** excess of accessories अङ्गाधिक्यात् फलाधिक्यं युक्तम् VedāntKa. 458. 1 (*on* iii. 3. 42); **C** excess of a limb अतिरिक्तमङ्गाधिक्यम् ManvaVi. 1368. 4 (*on* 11. 50) ( Rāmacandra अङ्गाधिक्यं षडङ्गुल्यादि )

**अङ्गाधिप** ( aṅgādhipa ) *m.* king of the Aṅgas त्रपावनतवदनोऽङ्गाधिपः शनैरवदत् TilaMañ. 421. 19; CitraPaC. 207; (R(L)omapāda) एवमङ्गाधिपेनैव गणिकाभिर्ऋषेः सुतः । आनीतः Rāmā. i. 8. 21; i. 322*(6); MātaLī. 1. 20; (Vinayandhara) अङ्गाधिपस्य प्रियकारिणीति बभूव पुत्री विनयंधरस्य VarāṅgaC. 2. 62; ['lord of a *lagna*', the planet presiding over it ( अङ्गाधिपे बलिनि सर्वविभूतिसम्पत् ) Apte]

**अङ्गाधिपति** ( aṅgādhipati ) *m.* king of the Aṅgas विजयस्याग्रतो गत्वा त्वमङ्गाधिपतिं रिपुम् KathāSaSāg. xii. 4. 106; (Romapāda) ( मुनिमृश्यशृङ्गम् ) प्रवेश्य योगेन विमुच्य नावम् ।…आजग्मुरङ्गाधिपतेः समीपम् MahāBhā. iii. 113. 8; Hastyāyur. 30. 26 (i. 4); 75. 11 (1. 10); (Dṛḍhavarman) अङ्गाधिपतेर्दृढवर्मणः कञ्चुकिनो भूमिकां कृत्वा PriyaDa. i. 3(2); (Karṇa) अवाप्य भङ्गं नितान्तमङ्गाधिपतेरमङ्गलम् RasGaṅ. 109. 20.

**अङ्गाधिराज** ( aṅgādhirāja ) *m.* king of the Aṅgas (Karṇa) परिवदति समक्षं मित्रमङ्गाधिराजम् VeṇīSaṁ. 5. 344; (Romapāda) आसीदङ्गाधिराजः …रोमपादः MātaLī. 1. 4.

**अङ्गाधिरूढ** ( aṅgādhirūḍha ) *adj.* mounted on the body तयोरङ्गाधिरूढोऽभूत्पुंनारीवाहनः स्मरः PariPar. 2. 247.

**अङ्गाधिष्ठितदेवता** ( aṅgādhiṣṭhita-devatā ) *f.* divinity presiding over each of the parts or limbs or constituents वाय्वग्निनाकभूमीनामङ्गाधिष्ठितदेवता । निरूप्यते ब्रह्मणोऽपि तथा गोविन्दविग्रहः PadmP. iv. 77. 41.

**अङ्गाधीश** ( aṅgādhīśa ) *m.* king of the Aṅgas, Karṇa, [Apte]; lord of the *lagna*, the planet presiding over the *lagna* अङ्गाधीशः स्वगेहे बुधगुरुकविभिः संयुतो वीक्षितो वा Jyotiṣa. [Apte]

**अङ्गाधीश्वर** ( aṅgādhīśvara ) *m.* Karṇa [Apte]

**अङ्गाध्ययन** ( aṅgādhyayana ) *n.* study of the auxiliary texts (of the Veda) काममिति वदन्नङ्गाध्ययनमनध्यायेऽप्यविरुद्धमित्याह SmṛtiCan. i. 148. 12; वेदाङ्गानि च सर्वाणि कृष्णपक्षेषु संपठेत् इत्यादिवचनैरङ्गाध्ययनस्य कालो दर्शितः S'rutaPra iA. 30. 8 (*on* i. 1. 1); न हि स्वशाखैकदेशाध्यायिनोऽर्थज्ञानसंभवः । अङ्गाध्ययनस्य पृथगुपादानेन तद्विरहेऽर्थज्ञानप्रसङ्गाभावात् S'rutaPra. iA. 34. 3 (*on* i. 1. 1); एवं चाङ्गाध्ययनं स्वाध्यायादापाततो ज्ञानस्य तन्निर्णय एव पुरुषार्थावगतेश्चोत्पादनेन तन्निर्णिनीषामुत्पादयति S'ivārkaMaDī. i. 51. 3 (*on* i. 1. 1); वेदार्थज्ञानार्थस्याङ्गाध्ययनस्य…अर्थज्ञानफलकत्वमभ्युपगन्तव्यम् PūrvottaVāNaMā. 277. 6; अङ्गाध्ययनस्यार्थज्ञानपर्यन्ततायाः क्लृप्तत्वन्यायेन वेदाध्ययनमपि अर्थज्ञानपर्यन्तं स्यात् PūrvottaVāNaMā. 277. 19.

**अङ्गाध्ययनकर्तव्यता** ( aṅgādhyayanakartavya-tā ) *f.* duty of studying the auxiliary texts (of the Veda) वेदाध्ययनकाल एवाङ्गाध्ययनकर्तव्यताविधेः दारपरिग्रहप्रभृति निरन्तरसंतन्यमानकर्मानुष्ठानोपयोग्यर्थज्ञानेच्छासंपादकापातज्ञानजननार्थत्वेनान्यथासिद्धेः PūrvottaVāNaMā. 277. 12.

**अङ्गाध्ययनप्राप्ति** ( aṅgādhyayana-prāpti ) *f.* inclusion of the study of the auxiliary texts (of the Veda) कृत्स्नशब्दोऽङ्गाध्ययनप्राप्त्यर्थः । तथा च स्मृत्यन्तरम् । ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येय इति ManuBh. i. 161. 24 (*on* 2. 165)

**अङ्गाध्ययनवत्** ( aṅgādhyayana-vat ) *adv.* like the study of the auxiliary texts (of the Veda) वेदाध्ययनमिष्टजनकदृष्टार्थकमर्थवद्विषयकविहिताध्ययनत्वात् अङ्गाध्ययनवत् BhāṭṭCin. i. 2. 12 (*on* i. 1. 1); अर्थवद्वेदभागाध्ययनम् अर्थज्ञानफलकमर्थवद्विषयविहिताध्ययनत्वात् अङ्गाध्ययनवत् PūrvottaVāNaMā. 259. 13.

**अङ्गाध्ययनविधि** ( aṅgādhyayana-vidhi ) *m.* injunction of the study of the auxiliary texts (of the Veda) येषां मन्त्रब्राह्मणयोरेव वेदत्वं तेषामङ्गाध्ययनविधिः पृथगपेक्षितः VīraMi.(Saṁskāra.) 507. 19.

**अङ्गाध्ययनसंस्कृत** ( aṅgādhyayana-saṁskṛta ) *adj.* **A** well-versed in the study of the auxiliary sciences (of the Veda) अध्ययने क्रियमाणेऽङ्गाध्ययनसंस्कृतस्य वेदवाक्यादर्थावगमो जायते PrakaPañ. 24. 8; **B** accomplished by the study of the auxiliary texts ( of the Veda ) अङ्गाध्ययनसंस्कृतात् स्वाध्यायादापाततः पदार्थवाक्यार्थप्रतीतावपि न्यायानवधारणात् संशये तन्निर्णयार्थं मीमांसाविषया ( जिज्ञासा ) TantrRaha. 68. 20; 72. 21.

**अङ्गाध्यायिन्** ( aṅgādhyāy-in ) *m.* one who studies the auxiliary sciences (of the Veda) अङ्गाध्यायी अनूचानः S'rutaPra. iA. 33. 24 (*on* i. 1. 1)

**अङ्गानङ्ग** ( aṅgānaṅga ) *n.* type of dance where the features of Lāsya and Tāṇḍava are utilised simultaneously अङ्गं लास्याङ्गमादिष्टं अनङ्गं ताण्डवं स्मृतम् । यत्र नृत्येऽनयोर्योगस्तदङ्गानङ्गमीरितम् Nṛtyā. 1561.

**अङ्गानङ्गकारित** ( aṅgānaṅga-kārita ) *adj.* caused by being a part or not a part रूपाभेदेऽपि हिंसादेर्भेदोऽङ्गानङ्गकारितः S'lokaVār. 2. 258 (123. 7)

**अङ्गानङ्गत्वकृत** ( aṅgānaṅgatva-kṛta ) *adj.* caused by the nature of what is a part and what is not a part अथ तत्र भोजनस्यैकत्वेऽपि उपाधिकृतभेदादेव शक्तिव्यवस्था तथा हिंसाया अपि अङ्गानङ्गत्वकृतभेदाश्रयणात् तुल्या NyāyRa. 123. 17 (*on* 2. 258)

**अङ्गानङ्गसमभिव्याहार** ( aṅgānaṅga-samabhivyāhāra ) *m.* simultaneous expression as a subsidiary and as not a subsidiary अङ्गानङ्गसमभिव्याहारवतीनां विद्यानामङ्गेष्वनङ्गदृष्टिरूपत्वे प्रधानकर्मप्रयुक्ताङ्गाश्रयत्वात् स्वतन्त्रफलानामपि तासां पृथक्प्रयुक्तिर्न कल्प्या S'ivārkaMaDī. ii. 434. 16 (*on* iv. 1. 6)

**अङ्गाननुष्ठान** ( aṅgānanuṣṭhāna ) *n.* non-performance of the subsidiary rite निषेधात् किंचित्प्रधानाननुष्ठानेऽपि फलनिष्पत्तौ ततोऽङ्गाननुष्ठाने फलनिष्पत्तिरिति किमु वक्तव्यम् S'ivārkaMaDī. i. 492. 16 (*on* i. 3. 39); असंभवादिनाङ्गाननुष्ठानस्य विध्यनुमतत्वात् SmṛtiCan. v. 132. 11.

**अङ्गानपाय** ( aṅgānapāya ) *m.* non-deprival of (the nature of) a subsidiary प्रदानकाले हविर्विभागात् सति च विभागेऽङ्गानपायात् प्रयोक्तव्यो मन्त्रः SaṅkarKāBh. 40. 7 (*on* i. 3. 59)

**अङ्गानपेक्षत्व** ( aṅgānapekṣa-tva ) *n.* the state of not being in the requirement of a stem अङ्गानपेक्षत्वादसति बहिरङ्गत्वे परत्वान्नित्यत्वाच्च कृतेष्वायन्नादिषु प्रत्ययाद्युदात्तत्वं भवति Pradī. vi. 11. 20 (*on* P. vii. 1. 2); अङ्गानपेक्षत्वेनान्तरङ्गत्वादादेशात् पूर्वमकच् LaS'abdeS'e. i. 305. 3.

**अङ्गानर्थक्य** ( aṅgānarthakya ) *n.* futility of being a subsidiary rite निवृत्तस्य कर्मणोऽङ्गानर्थक्यादङ्गविधिरनुपपन्नः MayūMāli. 488. 31 (*on* vi. 4. 10)

**अङ्गानाश्रित** ( aṅgānāśrita ) *adj.* not based on the limbs of the body अङ्गानाश्रितोपासनेष्वासननियम उक्ते तद्वद्दिगादिनियमशङ्कोत्थानात् संगतिः VedāntKa. 521. 17 (*on* iv. 1. 11)

**अङ्गानिवृत्ति** ( aṅgānivṛtti ) *f.* non-cessation (i. e. continuation) of the subsidiary प्रत्याम्नायप्रतिषेधार्थलोपैरङ्गानिवृत्तिः सामान्यादर्थात्स्वाश्रुत्यादिति VārāS'S. I. i. 1. 67.

**अङ्गानिष्पत्ति** ( aṅgāniṣpatti ) *f.* non-completion of a subsidiary rite प्रधाननिष्पत्तावङ्गानिष्पत्तावपि न प्रधानावृत्तिः BālamBha. iii. 121. 23 (*on* 3. 220)

**अङ्गानुकूल** ( aṅgānukūla ) *adj.* agreeable or pleasant to the body यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः सिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः MeghDū. 31; अङ्गानुकूलो हृद्यस्पर्शः हृदयान्तर्भूतश्च Loc. 229. 13 (*on* 3. 44); स्वामिन्नङ्गानुकूलानि दुकूलानि पवित्रय TriṣaS'aPuC. i. 3. 256; अङ्गानुकूलमनु

रागवशं कलत्रम् S'ārṅgaPa. 3940.

**अङ्गानुपसंहार** ( aṅgānupasaṁhāra ) *m.* non-inclusion of the subsidiary rite निमित्तवतश्च केवलभावार्थविषय एवाधिकार इत्यङ्गानुपसंहारेऽपि विषयाप्रमोषान्नाधिकारावगमः PrakaPañ. 483. 16; अलसतया क्रियमाणेषु कर्मसु शक्त्याङ्गानुपसंहारात् ManvaVi. 586. 29 (*on* 5. 4)

**अङ्गानुपादान** ( aṅgānupādāna ) *n.* non-mention of the subsidiary rites व्रीह्यादिवाक्ये यागानां करणत्वानुपादानात् कर्मत्वेनैवोद्देश्यत्वात् युक्ता तत्साहित्याविवक्षा अङ्गानुपादानाच्च नाङ्गेषु व्रीह्यादिप्राप्तिः BhāṭṭDī. iv. 149. 24 (*on* xi. 2. 1)

**अङ्गानुरक्त** ( aṅgānurakta ) *adj.* to which subsidiary rites are attached सत्यमङ्गैरक्रियमाणैरङ्गानुरक्तं प्रधानमेव कर्तुमशक्यम् BrahmSūBh.( Bhā. ) 215. 6 (*on* iii. 4. 44)

**अङ्गानुरोध** (aṅgānurodha) *m.* **अङ्गानुरोधात्** ( aṅgānurodhāt ) [ Abl. ] in accordance with subsidiary rites न हि प्रधानवाक्येन सर्वेषामधिकारो निश्चितः सामान्येन त्वसाववगम्यते तत्रासति विशेषप्रमाणे सर्वेषां स्यात् । अङ्गानुरोधात्तु विशेषावगमान्न सर्वेषामसौ भवति NyāyRaMā. 168. 7; **अङ्गानुरोधेन** ( aṅgānurodhena ) [ Inst. ] in accordance with or in confirmity with subsidiary rites नाङ्गानुरोधेन प्रधानस्य गुणो बाधितव्यः S'ābaBh. 1428. 16 (*on* vi. 3. 41); नाङ्गानुरोधेन प्रधानमावर्तनीयम् ManuBh. i. 75. 7 (*on* 2. 14); Bhām. 550. 9 (*on* iii. 2. 7); तत्र निमित्तं वाङ्गानुरोधेन किञ्चिद्बाध्यते अङ्गानि वा निमित्तानुरोधेन NyāyRaMā. 116. 21; साहित्याश्रवणेऽप्यङ्गानुरोधेन प्रधानाभ्यासो दृश्यते यथा सोमेन यजेतेति श्रुतस्य सोमयागस्यैन्द्रवायवं गृह्णाति ··· इत्यादिग्रहणरूपाङ्गानुरोधेनावृत्तिरिति VedāntKa. 367. 21 (*on* iii. 2. 2); अङ्गानुरोधेनाधिकारसंकोचदर्शनात् S'ivārkaMaDī. ii. 281. 30 (*on* iii. 3. 1); अङ्गानुरोधेन प्रधानबाधायोगात् SiddhāTa. 43. 5; MīmāKau. ii. 298. 20 (*on* iii. 2. 38); NirṇaSi. 312. 10; S'arka. 90. 13.

**अङ्गानुलेप** ( aṅgānulepa ) *m.* unguent, fragrant substance to anoint the body ( राजार्थौपयिकम् ) राजशेषभूतस्याङ्गानुलेपस्यौपयिकमित्यर्थः NyāySu. (So.) 606. 3 (*on* ii. 1. 5)

**अङ्गानुलेपन** ( aṅgānulepana ) *n.* **A** anointing of the body भगवन्, यद्यस्या गाढोऽनुरागबन्धस्तार्हि स्वहस्तेनैव युवयोरङ्गानुलेपनं करोतु KaṁVa. 5. 35 (10); **B** unguent पुष्पादीति । आदिनाङ्गानुलेपनादिपरिग्रहः BālamBha. i. 230. 21 (*on* 1. 82)

**अङ्गानुवाद** ( aṅgānuvāda ) *m.* restatement of the parts of the body अङ्गैः स्विष्टकृतं यजतीत्यत्र पशौ चोदकप्राप्तः स्विष्टकृत्प्रधानहविर्भ्यो हृदयादिभ्य एकादशभ्योऽपि कर्तव्यत्वेन प्राप्त इति त्र्यङ्गैरिति वचनमङ्गानुवादेन त्रित्वविधानार्थम् VaiyāBhū. 166. 11 (*on* 31); 167. 15 (*on* 31)

**अङ्गानुवृत्ति** ( aṅgānuvṛtti ) *f.* continuation of the word *aṅga* (in the following Sūtras) अङ्गानुवृत्तिः किमर्थम् Prasā. i. 163. 18.

**अङ्गानुषङ्ग** ( aṅgānuṣaṅga ) *m.* **i** association of the ancillaries अङ्गानुषङ्गव्यतिक्रमे समस्ताङ्गजन्याङ्गोपकारस्यासंपत्तेः NyāyRaMā. 105. 21; **ii** contact with the body अङ्गानुषङ्गपावितनरास्थिलेश···विजयी भव NīlaVi. 103. 17.

**अङ्गानुष्ठान** ( aṅgānuṣṭhāna ) *n.* **i** performance of a subsidiary rite अननुष्ठाने त्वतिपातने संभवत्यङ्गानुष्ठानेऽपि प्रधानाननुष्ठानमिति TantrRa. 20. 6; अङ्गानुष्ठानं तर्हि किमर्थमत आह VedāntKa. 390. 3 (*on* iii. 2. 41); 517. 8 (*on* iv. 1. 5); हविषां मारुत्याश्चाङ्गानुष्ठानं भिद्यते S'ivārkaMaDī. i. 77. 31 (*on* i. 1. 1); ii. 408. 18 (*on* iii. 4. 44); iii. 388. 32 (*on* iii. 4. 15); अपूर्वार्थितया अङ्गानुष्ठानेऽपि अङ्गचिकीर्षायाः फलरागाधीनत्वं न हीयते PūrvottaVāNaMā. 38. 3; प्रधानस्याङ्गानुष्ठाने निमित्ततया ··· तदुपपत्तेः MayūMāli. 160. 11 (*on* ii. 3. 1); 393. 6 (*on* iv. 3. 18); **ii** performance of what is helpful यत्तु श्रवणमापातिकमङ्गानुष्ठानात्प्राक् परोक्षज्ञानमप्रतिष्ठितापरोक्षज्ञानं वा जनयति VivaPraSaṁ. 129. 7.

**अङ्गानुष्ठानतन्त्र** ( aṅgānuṣṭhāna–tantra ) *n.* performing once a single subsidiary rite with reference to two or more principal rites वस्तुतस्त्वङ्गानुष्ठानतन्त्रमात्रस्याध्यायार्थत्वे द्वितीयपादे···°तन्त्रविचारस्यासाङ्गत्यं स्यात् MayūMāli. 794. 19 (*on* xi. 1. 1)

**अङ्गानुष्ठानतन्त्रता** ( aṅgānuṣṭhānatantra–tā ) *f.* the state of performing once a single subsidiary rite with reference to two or more principal rites द्वादशानामपि कर्मणां संहत्यकारित्वादङ्गानुष्ठानतन्त्रतायां द्वादशसंख्यायाः प्रत्येकमङ्गत्वेऽपि सर्वार्थं दीक्षोपसदां सकृदेवानुष्ठानम् MayūMāli. 834. 18 (*on* xi. 4. 5); 808. 37 (*on* xi. 2. 3)

**अङ्गानुष्ठानप्रकार** ( aṅgānuṣṭhāna–prakāra ) *m.* method or way of performing the subsidiaries कथमपूर्वं क्रियत इत्यपेक्षायामङ्गानुष्ठानप्रकारेणेति S'āstrDī. 105. 8 (*on* ii. 1. 2); स एव धर्म इतिकर्तव्यता । स चाङ्गानुष्ठानप्रकारः BālamBha. ii. 2. 1 (*on* 2. 1); इतिकर्तव्यता नामाङ्गानुष्ठानप्रकारः Subodhi. 1. 26 (*on* 2. 1)

**अङ्गानुष्ठानरहित** ( aṅgānuṣṭhāna–rahita ) *adj.* (deities) in regard to which subsidiaries have not been performed अङ्गानुष्ठानरहितानां देवतानां प्रधाने नाधिकारः S'ivārkaMaDī. i. 469. 29 (*on* i. 3. 32)

**अङ्गानुष्ठानसमय** ( aṅgānuṣṭhāna–samaya ) *m.* time (prescribed) for the performance of the subsidiary rite तदा अङ्गानुष्ठानसमये प्रसज्येतारम्भणीया MayūMāli. 650. 11 (*on* x. 1. 2)

**अङ्गानुष्ठानसिद्धि** ( aṅgānuṣṭhāna–siddhi ) *f.* accomplishment of the performance of the subsidiaries प्रधानार्थैरेव पात्रैः प्रसङ्गादङ्गानुष्ठानसिद्ध्या MayūMāli. 823. 9 (*on* xi. 3. 9)

**अङ्गानुष्ठानावृत्ति** (aṅgānuṣṭhānāvṛtti) *f.* repetition of the performance of the subsidiary rites प्रतिप्रधानमङ्गानुष्ठानावृत्तिलक्षण आवापः S'ivārkaMaDī. i. 77. 27 (*on* i. 1. 1); i. 78. 2 (*on* i. 1. 1); अङ्गानुष्ठानावृत्तेरेकादशे व्यवस्थापितत्वात् MayūMāli. 852. 2 (*on* xii. 1. 9)

**अङ्गानुष्ठापक** (aṅgānuṣṭhāpaka) *adj.* which leads to the performance of the subsidiaries विष्ण्वावाहनस्य प्रयोजको वैष्णवयागविधिः स च निमित्तनिश्चयदशायामेव प्रधानं प्रयोजयन्नङ्गानुष्ठापकः MayūMāli. 649. 13 (*on* x. 1. 1)

**अङ्गानुसार** ( aṅgānusāra ) *m.* **1** accord or conformity with the subsidiary अङ्गानुसारेण कथं प्रधानस्य सोमस्येन्द्रविषयतया संकोचः MayūMāli. 224. 18 (*on* iii. 2. 11); 448. 2 (*on* vi. 1. 2); **2** accord or conformity with (the movement or gesture of) the limbs अङ्गानुसारायातचारीपरम्परात्मनां मण्डलात्मनामसङ्ख्येयत्वं सूत्रयन् AbhinBhā. ii. 117. 12 (*on* 10. 104); ii. 129. 20 (*on* 12. 2)

**अङ्गानुसारतस्** ( aṅgānusāra–tas ) *adv.* according to the subsidiary rites नामान्तं व्रतबन्धान्तम्···कुर्यादङ्गानुसारतः AgniP. 24. 31.

**अङ्गानुसारित्व** ( aṅgānusāri–tva ) *n.* the state of being in accord with (gestures of) the limbs नाट्य एवाङ्गानुसारित्वेन लयादि । न तु नृत्त एव AbhinBhā. i. 165. 17 (*on* 4. 252)

**अङ्गानुसारिन्** ( aṅgānusār–in ) *adj.* attendant on, attached or conforming to the limbs (of the body) [DBHS]

**अङ्गान्त** ( aṅgānta ) *m.* last of the *aṅga*(*nyāsas*) अ( ? श )स्त्रादौ( ? स्त्रे ) फट् छोटिका स्यादङ्गान्तः सुरवाचकः Tantrābhi. ii. 23. 18.

**अङ्गान्तद्वन्द्व** ( aṅgānta–dvandva ) *m.* copulative or coordinate compound ending with *aṅga* अङ्गान्तद्वन्द्वेन तत्पुरुषः BālamBha. i. 9. 2 (*on* 1. 3)

**अङ्गान्तर** ( aṅgāntara ) *n.* **i** another ancillary (rite, etc.) अङ्गान्तरेणानुग्रहं ब्रुवन् वनस्पतीज्याया अभावं दर्शयति S'ābaBh. 1797. 11 (*on* ix. 4. 59); प्रधानं नीयमानं हि तत्राङ्गान्यपि कर्षति । अङ्गमाकृष्यमाणं तु नाङ्गान्तरमसंगतेः TantrVā. 477. 19 (*on* ii. 2. 6); एवं हि सन्याज्यभागरहितैरप्यङ्गान्तरैराज्यभागसाध्यः क्रतूपकारो विज्ञायते Bhām. 540. 23 (*on* iii. 1. 24); नन्वेवमङ्गान्तरेऽपि किमिति जीवनं नोपसंह्रियते NyāyRaMā. 116. 18; किमर्थं तर्हि अङ्गान्तरम् TantrRa. 202. 7; अङ्गस्याङ्गान्तरे ··· अभ्युपगम्यमाने तस्यापि तथेत्यनवस्था ग्राह्या NyāyPari. 345. 11; द्विरात्रादिषु चोदकेन प्राप्तानामङ्गान्तराणां निवृत्त्यर्थम् ··· परिसंख्याविधिरस्तु VidhiRa. 2(8. 19); चोदकतोऽङ्गान्तरैस्सह व्रीहीणां प्रकृतिद्रव्यतयोपादानमपि प्राप्नुयात् S'ivārkaMaDī. i. 65. 15 (*on* i. 1. 1); ii. 291. 21 (*on* iii. 3. 5); न च सन्निपातिनोऽङ्गस्याङ्गान्तरं विप्रतिषिद्धं रथन्तराङ्गस्य वरदानस्य दर्शनात् BhāṭṭCan. 5. 2 (*on* xiii. 1. 6); इह परिसंख्ययाङ्गान्तराणां बाधः MayūMāli. 734. 14 (*on* x. 5. 23); **ii** another part (of meaning) तत्त्वंपदयोः एकांशपरित्यागेनांशान्तरे ( v. l. अङ्गान्तरे ) वृत्तिसंभवात् PañcPra. 11. 1; **iii** another ancillary science (of the Veda) अतो नाङ्गान्तराणि स्पर्धितुमर्हति व्याकरणम् NyāyMañ. i. 378. 16; **iv** another limb मुखं न कामयन्ते, अङ्गान्तरं तु जरत्याः कामयन्ते Pradī. iv. 91A. 10 (*on* iv. 1. 78); अङ्गान्तरेऽनन्तरमीक्षिते तु निवृत्य सस्मार न पूर्वदृष्टम् NaiṣC. 8. 10; उपाङ्गानि द्वादशैव शिरस्यङ्गान्तरेषु च AbhinDa. 46; हस्तग्रहणमङ्गान्तरस्यापि प्रदर्शनार्थम् SmṛtiCan. ii. 266. 16; पाणिपादादीनां पुरुषांशतया भेदे सत्यपि अभिन्नत्वप्रतिपत्त्या हि पन्नगदष्टपादस्य पुरुषस्य अङ्गान्तरेषु प्रदाहो भवति S'rutaPra. ii. 177. 11 (*on* i. 4. 28); तत्रस्थास्तु तेनैवाङ्गेन स्पृश्यमाना न दोषाय अङ्गान्तरेणाकर्षे देहाच्च्युतेरप्यावश्यकत्वात् ManvaVi. 676. 9 (*on* 5. 132); 682. 24 (*on* 5. 145); हस्तेनेत्यङ्गान्तरस्याप्युपलक्षणम् VīraMi. ( Āhnika. ) 111. 7; 113. 26; एकस्मिन्नङ्गे कण्डूत्यपनयेऽपि अङ्गान्तरे तत्सत्त्वे चित्तविक्षेपतादवस्थ्यात् MayūMāli. 840. 13 (*on* xi. 4. 16); **v** other elements एतानि चाङ्गानि उक्तेनैव पौर्वापर्येण भवन्ति । अङ्गान्तराणि त्वन्यथापि SāhiDa. 303. 4.

**अङ्गान्तरगणना** ( aṅgāntara–gaṇanā ) *f.* counting of other constituent parts (i. e. subdivisions) अत एवा( ङ्गा )न्तरगणनया षोडशैवाङ्गहाराः AbhinBhā. i. 246. 11 (*on* 5. 158)

**अङ्गान्तरग्रहण** ( aṅgāntara–grahaṇa ) *n.* acceptance of another sub-

sidiary (rite) न चोदकेनाङ्गान्तरग्रहणम् S'āstrDī. 813. 3 (*on* xi. 2. 11)

**अङ्गान्तरग्राहिन्** (aṅgāntaragrāh-in) *adj.* assuming a different form मदनोऽङ्गान्तरग्राही…अलक्षि कर्णभूः DvyāśraKā. 11. 27.

**अङ्गान्तरङ्गस्थ** (aṅgāntaraṅga-stha) *adj.* being the basic or essential part of the body (i. e. the figure) लेप्यबिम्बे प्रकर्तव्ये कारयेच्छूलमादितः। तत्तदङ्गान्तरङ्गस्थमस्थिवच्छूलमेव च S'ilpaRa. ii. 17. 1.

**अङ्गान्तरच्छेदन** (aṅgāntara-cchedana) *n.* cutting or severing of other limbs (of a person) समापराधानामङ्गान्तरछे( ? च्छे )दनभेदनकर्तृणाम् DaṇḍaVi. 256. 21.

**अङ्गान्तरजन्यत्व** (aṅgāntarajanya-tva) *n.* the nature of arising out of another subsidiary (rite) क्रतुसाद्गुण्यस्याङ्गान्तरजन्यत्वेऽपि BhāṭṭDī. ii. 83. 2 (*on* iv. 1. 2)

**अङ्गान्तरजात** (aṅgāntara-jāta) *adj.* grown on other limbs (i. e. places other than the head) मूर्धजाः केशाः, अङ्गान्तरजातानि लोमानीति भेदं मत्वा आह Pradī. vi. 123. 24 (*on* vii. 2. 22)

**अङ्गान्तरदर्शन** (aṅgāntara-darśana) *n.* seeing or observing other parts of the body न त्वङ्गान्तरदर्शनाय विदधे साह्यम्…विधिः JānaPa. 2. 31.

**अङ्गान्तरनिरपेक्ष** (aṅgāntara-nirapekṣa) *adj.* not in need of other subsidiaries (गृहमेधीयः) एवमङ्गान्तरनिरपेक्षोऽपि सन्निध्याम्नातान्यप्राकृतानि वैशेषिकाङ्गानि तद्वैयर्थ्यपरिहारार्थं गृह्णाति S'ivārkaMaDī. ii. 291. 22 (*on* iii. 3. 5)

**अङ्गान्तरनिवृत्ति** (aṅgāntara-nivṛtti) *f.* exclusion of the other subsidiary अतो वैकृताग्निश्रवणस्य … अङ्गान्तरनिवृत्तिरूपपरार्थलक्षकत्वं चाङ्गीकरणीयम् VidhiRa. 2 (9. 14)

**अङ्गान्तरपरित्याग** (aṅgāntara-parityāga) *m.* exclusion of other accessories त्र्यार्षेयस्य सतोऽङ्गान्तरपरित्यागेनाधिकारः MayūMāli. 467. 15 (*on* vi. 2. 7)

**अङ्गान्तरपरिसंख्या** (aṅgāntara-parisaṅkhyā) *f.* exclusion of other subsidiaries किमयमतिदेशप्राप्तयोराज्यभागयोरनुवाद उताङ्गान्तरपरिसंख्या VedāntaKa. 400. 19 (*on* iii. 3. 5); न तावदङ्गान्तरपरिसंख्योपपद्यते VidhiRa. 2 (9. 3); न चायम्…नियमोऽङ्गान्तरपरिसंख्या वा BhāṭṭCin. i. 72. 3 (*on* i. 1. 4)

**अङ्गान्तरपरिसंख्यार्थम्** (aṅgāntaraparisaṅkhyārtham) *adv.* in order to exclude other subsidiaries पुनरस्यैतदङ्गवत्ता श्रूयते, अङ्गान्तरपरिसंख्यार्थम् S'abaBh. 1794. 18 (*on* ix. 4. 52); तस्मादङ्गपरिसंख्यार्थम् S'āstrDī. 735. 2 (*on* x. 5. 23); अङ्गान्तरपरिसंख्यार्थं स इति चेत् VīraMi. (S'rāddha.) 124. 17; अङ्गान्तरपरिसंख्यार्थमित्याद्यः पक्षः BhāṭṭDī. iv. 33. 15 (*on* x. 5. 23)

**अङ्गान्तरपातिता** (aṅgāntarapāti-tā) *f.* the nature of falling within the accessories इत्येषां च न युक्ता स्याद् भक्त्यङ्गान्तरपातिता BhaktiRaSi. i. 2. 58.

**अङ्गान्तरप्रतिषेध** (aṅgāntara-pratiṣedha) *m.* prohibition or negation of other subsidiaries अङ्गान्तरप्रतिषेधस्य च वाक्यादप्रतीतेः VedāntKa. 400. 24 (*on* iii. 3. 5); आर्थिकोऽङ्गान्तरप्रतिषेध इत्यर्थः MayūMāli. 813. 4 (*on* xi. 2. 11); 643. 4 (*on* ix. 4. 14)

**अङ्गान्तरभुक्तिसीमा** (aṅgāntarabhukti-sīmā) *f.* the limit of enjoying (by observing the beauty) of other parts or limbs (of the body) हित्वैकमस्यापघनं विशन्ती तद्दृष्टिरङ्गान्तरभुक्तिसीमाम्। चिरं चकारोभयलाभलोभात्स्वभावलोला गतमागतं च NaiṣC. 8. 11.

**अङ्गान्तरयुक्त** (aṅgāntara-yukta) *adj.* [*f.* -ā] possessing or connected with other subsidiaries प्रयोगवचनः … अङ्गान्तरयुक्तां विदधाति (भावनाम्) S'āstrDī. 847. 7 (*on* xii. 1. 2)

**अङ्गान्तरलोप** (aṅgāntara-lopa) *m.* loss of other subsidiaries सर्वकरणे काललोपात्तत्कालकरणे चाङ्गान्तरलोपात् TantrVā. 610. 24 (*on* ii. 3. 19)

**अङ्गान्तरवत्** (aṅgāntara-vat) *adv.* **i** as in the case of other subsidiaries अनारभ्याधीतान्यपि हि एतानि … क्रतुप्रयोगवचनेनैव अङ्गान्तरवत् संस्पृश्यन्ते BrahmSūBh.(S'aṅ.) 685. 7 (*on* iii. 3. 42); तेन सहाङ्गान्तरवत् प्रयोगो युक्तः TantrRa. 202. 1; अङ्गान्तरवत्तु अर्थकल्पितश्रुत्या विनियोगः BhāṭṭDī. ii. 158. 6 (*on* v. 1. 5); कालस्य यद्यप्यङ्गत्वं तथापि नाङ्गान्तरवद्विधिबलादुपादेयत्वम् MayūMāli. 639. 14 (*on* ix. 4. 9); 830. 14 (*on* xi. 4. 2); उद्गीथाद्युपासनानामपि …क्रतुप्रयोगमध्येऽङ्गान्तरवदनिबन्धनेन … न क्रत्वर्थत्वम् SetuBa. 200. 8; **ii** as in the case of the other limbs (of the body) अशक्यमङ्गान्तरवद्विभक्तुमणुप्रमाणं करणं यदन्तः S'ivLī. 1. 2.

**अङ्गान्तरविधान** (aṅgāntara-vidhāna) *n.* injunction of another accessory गत्यनुवादस्य प्रयोजनं त्वपुनरावृत्तिविधानमित्युक्तम्, न त्वङ्गान्तरविधानम् S'rutaPra. iB. 316. 31 (*on* i. 2. 18)

**अङ्गान्तरविधायकत्व** (aṅgāntaravidhāyaka-tva) *n.* the nature of enjoining another part of the body (of the sacrificial animal) अङ्गान्तरविधायकत्वोपपत्त्या हृदयादिषु त्रित्वविधेः पर्यवसाययितुमशक्यत्वात् MayūMāli. 757. 17 (*on* x. 7. 3)

**अङ्गान्तरविधि** (aṅgāntara-vidhi) *m.* performance of another ancillary rite यथोक्ताङ्गसहितप्रयोगसमाप्तिमात्रेणापि तदुपपत्तेरङ्गान्तरविधिर्नानुपपन्नः MayūMāli. 666. 20 (*on* x. 2. 12)

**अङ्गान्तरविषय** (aṅgāntara-viṣaya) *m.* the subject of another subsidiary वरणेषु तद्व्यतिरिक्ताङ्गेषु च चोदकेन प्रसक्तिसाधारण्ये सति वरणपर्युदासेनाङ्गान्तरविषये चोदको व्यवस्थाप्यते NyāyMāVi. 601. 16 (*on* x. 8. 2)

**अङ्गान्तरवैकल्य** (aṅgāntara-vaikalya) *n.* the state of being bereft of other subsidiary rites प्रयाजादिभिरङ्गैस्तदनुष्ठानानंतरमेव प्रसादे सति प्रधानानुष्ठानेऽपि अंगान्तरकैव( ? °वैक )ल्येऽपि फलनिष्पत्तिप्रसंगाच्च S'ivārkaMaDī. ii. 273. 25 (*on* iii. 2. 37)

**अङ्गान्तरहरण** (aṅgāntara-haraṇa) *n.* omission of other parts (of a rite) आपन्नः आपद्ग्रस्तः। तं प्रति अग्निस्मृतौ अङ्गान्तरहरणेऽपि अर्घ्यस्यावश्यकतोक्ता BālamBha. i. 90. 27 (*on* 1. 24)

**अङ्गान्तरागम** (aṅgāntarāgama) *m.* incorporation of a different accessory सर्वशक्त्यधिकरणेऽशक्याङ्गत्याग उक्तः न पुनरङ्गान्तरागमः S'āstrDī. 472. 20 (*on* vi. 3. 4)

**अङ्गान्तरानपेक्ष** (aṅgāntarānapekṣa) *adj.* not expecting the other subsidiaries उपकारः स आज्यभागाभ्यामेवाङ्गान्तरानपेक्षाभ्यां भवति VedāntKa. 400. 21 (*on* iii. 3. 5)

**अङ्गान्तरानभिधान** (aṅgāntarānabhidhāna) *n.* non-mention of other subsidiary parts बृहस्पतिना चाङ्गान्तरानभिधानादेतावतैव स्नानाङ्गं सिध्यति VīraMi.(Āhnika.) 137. 20.

**अङ्गान्तरानुष्ठान** (aṅgāntarānuṣṭhāna) *n.* performance of another accessory rite अङ्गान्तरानुष्ठानाय तेनैव प्रधानेन चोद्यमाने कर्तरि Kāśi. ii. 30. 3 (*on* 5(2). 3)

**अङ्गान्तरापेक्ष** (aṅgāntarāpekṣa) *adj.* requiring other accomplishing factors or materials एताः श्राद्धे संपत्तय इत्यभिधानादङ्गान्तरापेक्षं प्रकृष्टत्वमेषां बोधितम् ManvaMu. 136. 29 (*on* 3. 255)

**अङ्गान्तराभाव** (aṅgāntarābhāva) *m.* absence of any other subsidiary न हि दर्शादेः श्रुत्यादिचोदिताङ्गातिरेकेणाङ्गान्तराभावे…अन्यत्…प्रमाणमस्ति NyāyRa. 491. 20 (*on* 5(8). 56)

**अङ्गान्तराभिगम** (aṅgāntarābhigama) *m.* sexual act in a limb other than (the female organ), sodomy तयोरङ्गान्तराभिगमे दण्डमाह DaṇḍaVi. 192. 3.

**अङ्गान्तरारम्भ** (aṅgāntarārambha) *m.* beginning of another subsidiary rite कर्तुरशा( ? श )क्तिर्यदि संभवेत्। अङ्गादङ्गान्तरारम्भे … शेषमन्येन कर्तव्यम् PāraS. 17. 492.

**अङ्गान्तरार्चनविधि** (aṅgāntarārcanavidhi) *m.* performance of worship of another limb अङ्गान्न( ? न्त )रार्चनविधेरपि ते गरीयः पादारविन्दपरिपूजनमेव शम्भो YātrāPra. 6. 118.

**अङ्गान्तरार्थम्** (aṅgāntarārtham) *adv.* for the sake of another accessory विकृतिषु अङ्गान्तरार्थमवश्यकल्पनीयेनातिदेशेन खादिरत्वाद्यपि प्राप्नोति TantrVā. 1072. 4 (*on* iii. 6. 2)

**अङ्गान्तरेफ** (aṅgānta-repha) *m.* *r* which is at the end of a stem or base (before the addition of a suffix) अङ्गान्तरेफलकारसमीपस्याकारस्य वृद्धिः Pradī. vi. 94. 20 (*on* vii. 2. 2)

**अङ्गान्तरोपचय** (aṅgāntaropacaya) *m.* increase of any other constituent part (such as cavalry, infantry etc.) अङ्गान्तरोपचयप्रत्ययक्रमेण महती महत्तरा सेनेत्यादिव्यवहारानुपपत्तेश्च Kiraṇā. 204. 4.

**अङ्गान्तरोपदेश** (aṅgāntaropadeśa) *m.* teaching of other constituent parts तस्योपनिषदहः … अहम् इति च अङ्गान्तरोपदेशस्य स्तावकमिदं फलान्तरश्रवणम् BrahmSūBh.(S'aṅ.) 679. 6 (*on* iii. 3. 38); तस्योपनिषदहरहमिति च सर्वनाम्नाङ्गान्तरोपदेशः BrahmSūBh.(Bhā.) 190. 11 (*on* iii. 3. 38)

**अङ्गान्तरोपस्पर्शन** (aṅgāntaropasparśana) *n.* touching of other limbs यत्र पुनः कतिपयाङ्गोपस्पर्शनमुक्तं तत्राविरोधाद्वचनानुसाराद्वाङ्गान्तरोपस्पर्शनमस्तीत्यवगन्तव्यम् SmṛtiCan. ii. 259. 13.

**अङ्गान्त्य** (aṅgāntya) *adj.* occurring at the end of a stem or base (before the addition of a suffix) आकारस्याङ्गान्त्यस्य वृद्धिविधावभावात् Pradī. i. 175A. 4 (*on* i. 1. 3); अङ्गान्त्यस्येको गुणो भवति PāṇiTaVāNaMā. 113. 8; अत्राङ्गान्त्येऽकारासंभवाद्धलादेरिति सामर्थ्याच्चाङ्गस्याकार इति वैयधिकरण्येनान्वयः LaS'abdeS'e. ii. 490. 7.

**अङ्गान्त्यकार्य** (aṅgāntya-kārya) *n.* grammatical operation on the final of a base or stem (before the addition of a suffix) क्वचित्तु अङ्गान्त्य- लोपे पुनर्नाङ्गान्त्यकार्यमिति पाठः Prasā. i. 249. 13.

**अङ्गान्त्यरेफ** (aṅgāntya-repha) *m.* *r* at the end of a base or stem (before the addition of a suffix) अङ्गान्त्यरेफस्यातः समीपत्वाभावान्न वृद्धिः SiddhāKau. 369B. 6.

**अङ्गान्त्यलोप** (aṅgāntya-lopa) *m.* elision of the final of a base or stem (before the addition of a suffix) क्वचित्तु अङ्गान्त्यलोपे पुनर्नाङ्गान्त्यकार्य- मिति पाठः Prasā. i. 249. 12.

**अङ्गान्यतमवैकल्य** (aṅgānyatama-vaikalya) *n.* deficiency or absence of one of the members (of Tarka) अङ्गान्यतमवैकल्ये तर्कस्याभासता भवेत् TārkiRa. 188. 4.

**अङ्गान्यत्व** (aṅgānya-tva) *n.* nature of another base सूर्यादीनाम- णन्तेऽप्रसिद्धिरङ्गान्यत्वात् Vār. 1 *on* P. vi. 4. 149; हेश्वङि प्रतिषेधानर्थक्यमङ्गान्य- त्वात् Vār. 1 *on* P. vii. 3. 56; अङ्गान्यत्वाद्वा सिद्धम् Vār. 4 *on* P. vii. 4. 93.

**अङ्गान्वय** (aṅgānvaya) *m.* relation of the subsidiary अङ्गान्वय- प्रकारस्तूक्त एव BālaKrī. i. 23. 23 (*on* 1. 7); NayaVi. 17. 8 (*on* i. 1. 1); 18. 1 (*on* i. 1. 1); तदुपपत्तये चाङ्गान्वयः प्रतीयते NyāyRaMā. 107. 11.

**अङ्गान्वयाङ्गीकार** (aṅgānvayāṅgīkāra) *m.* acceptance of association or connection with the subsidiary विशेषावगमोत्तरम्…अङ्गान्वयाङ्गीकारेण तत्रैव शक्त्यवच्छेदोपपत्तेः BhāṭṭDī. ii. 251. 10 (*on* vi. 3. 1)

**अङ्गान्वयाभाव** (aṅgānvayābhāva) *m.* absence of connection of the subsidiaries तस्यां चाङ्गान्वयाभावेन प्रधान एव प्राकृतस्वरादिबाधकत्वम् BhāṭṭDī. ii. 61. 16 (*on* iii. 7. 24)

**अङ्गापकर्ष** (aṅgāpakarṣa) *m.* shifting of the subsidiary अङ्गापकर्षस्य न्याय्यत्वात् SaṅkarKāBh. 39. 2 (*on* i. 3. 53)

**अङ्गापकर्षण** (aṅgāpakarṣaṇa) *n.* shifting of the subsidiary उपस्यशेष- निर्वापात्तद्वदङ्गापकर्षणात् । प्रातर्निर्वापवैशेष्यान्मुख्यकालाय भिन्नता NyāyMāVi. 632. 1 (*on* xi. 2. 4)

**अङ्गापकर्षित** (aṅgāpakarṣita) *adj.* [*f.* -ā] removed from the body तुलसीकल्पितां मालां विष्णोरंगापकर्षिताम् । धारयेन्मूर्ध्नि SkandP. ii(2). 38. 122.

**अङ्गापचार** (aṅgāpacāra) *m.* deficiency in a subsidiary अतो निमन्त्र- णात्प्रभृति तेषां शौचादिगुणलोपेऽङ्गापचाराच्छ्राद्धवैगुण्यं ज्ञेयम् CaturCin. iii(1). 1131. 14; यस्यैवाङ्गिनोऽङ्गापचारस्तस्यैवावृत्तिर्युक्तरूपा BālamBha. i. 259. 12 (*on* 1. 89)

**अङ्गापरपर्याय** (aṅgāparaparyāya) *m.* synonym of the word *aṅga* (secondary, subsidiary) (गुणविधयः इत्यत्र) गुणशब्दः अङ्गापरपर्यायः MīmāKau. i. 158. 21 (*on* i. 4. 2)

**अङ्गापरुस्** (áṅgā-párus) *n.* [pl. AltGr. II. 1. 156] limbs and joints ए॒ताति॒ वा अ॒ङ्गा॒प॒रूꣳषि संवत्स॒रस्य॒ यद् द॑र्शपूर्ण॒मा॑सौ य ए॒वं वि॒द्वान् द॑र्शपूर्ण॒मा॒सौ यज॒तेऽङ्गा॒प॒रूꣳष्ये॒व सं॑वत्स॒रस्य॒ प्रति॑दधाति TaiS. II. v. 6. 1.

**अङ्गापवर्तन** (aṅgāpavartana) *n.* falling off of the parts of the body छिन्नं विच्छिन्नमुत्स्(? त्कृ)ष्टमवकृष्टं सदारितम् । तत्र च्छिन्नमिति ज्ञेयं सर्वशोऽङ्गाप- वर्तनम् Hastyāyur. 351. 21 (3. 1)

**अङ्गापूर्व** (aṅgāpūrva) *n.* unforeseen merit or consequence of an ancillary rite प्रागग्नीषोमीयात्, यान्यङ्गापूर्वाण्यारादुपकारकाणि, यच्च प्रधानद्रव्य- संस्कारकं, तत्प्रयुक्तोऽयं धर्मः S'ābaBh. 1663. 2 (*on* ix. 1. 20); 2033. 5 (*on* x. 7. 23); 2054. 17 (*on* x. 7. 72); एवमङ्गापूर्वाण्यपि निराकर्तव्यानि TantrVā. 364. 17 (*on* ii. 1. 5); तत्र यान्यङ्गापूर्वाणि, तानि सम्भूय प्रधानोत्पत्त्यपूर्वेषूपकुर्वन्ति PrakaPañ. 444. 7; परमापूर्वे कर्तव्ये उत्पत्त्यपूर्वाणामङ्गापूर्वाणां चोपयोगः Bhām. 578. 14 (*on* iii. 2. 41); NyāyRaMā. 138. 13; 203. 24; TantrRa. 286. 14; अकृतप्रधानेन कृत- प्रधानेन चाङ्गापूर्वेण व्यभिचाराच्च तस्य प्रधानयागादिनाश्यत्वात् TattvCin ii(2). 194. 1; NyāyMāVi. 65. 27 (*on* ii. 1. 2); ननु सर्वत्राङ्गापूर्वैः प्रधानापूर्वं जनयि- तव्यम् VīraMi. (Vyavahāra.) 203. 2; MīmāKau. iii(2). 50. 19 (*on* ii. 1. 6); BhāṭṭDī. iii. 46. 3 (*on* ix. 1. 2); एवं दर्शजन्यमङ्गापूर्वसहितमुत्पत्त्यपूर्वत्रयम् BhāṭṭCin. ii. 82. 5 (*on* ii. 1. 3); MayūMāli. 355. 7 (*on* iv. 1. 7); BālamBha. iii. 136. 21 (*on* 3. 243)

**अङ्गापूर्वत्व** (aṅgāpūrva-tva) *n.* the state of being the unforeseen merit or consequence of an ancillary rite दीक्षणीयापूर्वस्य तु अङ्गापूर्वत्वात् न प्रयोजकत्वम् MayūMāli. 189. 6 (*on* iii. 1. 4)

**अङ्गापेक्ष** (aṅgāpekṣa) *adj.* **i** (Gr.) with reference to the base (called *aṅga*) तत्र सिचोऽङ्गापेक्षं परत्वम् । परस्मैपदानां तु सिजपेक्षम् Nyās. iii. 688. 3 (*on* vii. 2. 1); Prasā. ii. 79. 14; **ii** (Philo.) requiring or expectant of the subsidiary ननु वैदिकस्याङ्गापेक्षस्यान्यत्र निबद्धमपि वैदिकमेवाङ्गजातं ग्राह्यं न त्वनि- बद्धमप्यवैदिकम् S'ivārkaMaDī. i. 510. 9 (*on* i. 4. 1)

**अङ्गापेक्षत्व** (aṅgāpekṣa-tva) *n.* (Gr.) expectancy of the base वला- द्यार्धधातुकापेक्षणादङ्गापेक्षत्वाच्च बहिरङ्ग इडागमः Pradī. iii. 279A. 25 (*on* P. iii. 4. 79); प्रत्ययस्योत्पत्तावङ्गापेक्षत्वेऽपि ज्ञाने तदपेक्षत्वाभावेन शास्त्रे तदाक्षेपे माना- भावः LaS'abdeS'e. i. 186. 8.

**अङ्गापेक्षा** (aṅgāpekṣā) *f.* expectancy of the subsidiary अङ्गापेक्षा च क्रतोरुपकाराय VedāntKa. 36. 8 (*on* i. 1. 1); दुष्टादुष्टपरिज्ञानस्य तु तदभावान्नाङ्गा- पेक्षेति वैषम्यम् VīraMi. (Vyavahāra.) 12. 10.

**अङ्गापेक्षित्व** (aṅgāpekṣi-tva) *n.* **i** (Gr.) expectancy of the base वृद्धिरङ्गापेक्षित्वात् प्रत्ययविशेषापेक्षत्वाच्च बहिरङ्गा Pradī. vi. 93. 12 (*on* P. vii. 2. 1); **ii** (Philo.) expectancy of the subsidiary फलवाक्ये सहितानां फला- न्वयेऽपि यथा प्रत्येकमेवाङ्गापेक्षित्वं तथा एकादशे उपपादयिष्यामः MayūMāli. 216. 21 (*on* iii. 2. 6)

**अङ्गापेक्षिन्** (aṅgāpekṣ-in) *adj.* expectant of the subsidiary rites अङ्गापेक्षिणां बहूनां (प्रधानानाम्) प्रस्तुतत्वं संनिध्यपेक्षया प्रबलम् MayūMāli. 802. 10 (*on* xi. 1. 8)

**अङ्गाप्त** (aṅgāpta) *adj.* worn (*lit.* got) on the body अङ्गाप्तरत्नप्रभा- भातपादाजितानन्तशक्ते । … त्राहि विष्णो KalkiP. iii. 19. 10.

**अङ्गाप्राप्ति** (aṅgāprāpti) *f.* absence of a subsidiary or ancillary rite चोदकाद् यत्राङ्गाप्राप्तिस्तत् कर्म प्रकृतिशब्देन विवक्षितम् MīmāNyāPra. 214. 19.

**अङ्गाबाध** (aṅgābādha) *m.* non-annulment of a subsidiary or an- cillary rite बहुविषयेषु यागरूपेषु अङ्गाबाधो न्यायसिद्धः LaCandr. 359. 31.

**अङ्गाभाव** (aṅgābhāva) *m.* absence of an ancillary or subsidiary अङ्गा- भावे विषयविलयः प्रसज्येत NyāyRaMā. 107. 15; न हि … अग्निहोत्रस्यासमर्थं प्रति अङ्गाभावबोधकं वचनान्तरमपेक्षितम् SiddhāTa. 42. 26; 43. 10.

**अङ्गाभिनय** (aṅgābhinaya) *m.* histrionic representation with gestures of the limbs, acting with bodily gestures (one of the four modes of dramatic acting) cf. **आङ्गिकाभिनय,** रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनया- त्मकम् NāṭyaS'ā. 5. 27 = SāhiDa. 279. 10; अङ्गाभिनयमेवादौ गदतो मे निबोधत NāṭyaS'ā. 8. 11; योऽयं स्वभावो लोकस्य सुखदुःखक्रियात्मकः । सोऽङ्गाभिनयसंयुक्तो नाट्यधर्मी प्रकीर्तिता NāṭyaS'ā. 13. 81 (*but* AbhinBhā. अङ्गैरातोद्यादिभिर- भिनयैश्च); न ह्यङ्गाभिनयात् किंचिदृते रागः प्रवर्तते NāṭyaS'ā. 13. 84 (*but* AbhinBhā. अङ्गानि गीतातोद्यान्यभिनयाश्चेति द्वन्द्वसमाहारः); नाट्यवेदसमुत्पन्ना वागङ्गाभिनयात्मिका । मया काव्यक्रियाहेतोः प्रक्षिप्ता (वृत्तिः) द्रुहिणाज्ञया NāṭyaS'ā. 20. 24; प्राधान्यादङ्गाभिनयप्रश्नान्तर्भूतमप्येतत् पुनः प्रश्नितम् AbhinBhā. i. 261. 15 (*on* 6. 2)

**अङ्गाभिनिर्वृत्ति** (aṅgābhinirvṛtti) *f.* emergence of limbs पेश्यास्त्वङ्गा- भिनिर्वृत्तिर्नखरोमाणि चाङ्गतः MahāBhā. xii. 308. 117.

**अङ्गाभिनिष्पत्ति** (aṅgābhiniṣpatti) *f.* emergence of limbs घनादङ्गाभि- निष्पत्तिः केशरोमाणि चाङ्गतः TaiUBhāVā. 77. 17(2)

**अङ्गाभिमर्श** (aṅgābhimarśa) *m.* touching of the body प्रस्विन्नेन ततः करेण कथमप्यङ्गाभिमर्शः कृतः S'ṛṅgāTi.(Rā.) 26.

**अङ्गाभिमार्जन** (aṅgābhimārjana) *n.* caressing the body or limbs (वात्सल्यरसस्य) अनुभावाः शिरोघ्राणं करेणाङ्गाभिमार्जनम् BhaktiRaSi. iii. 4. 20.

**अङ्गाभिरदन** (aṅgābhiradana) *n.* wounding (*lit.* scratching with nails) of a limb तेषाम् (मातापित्रादीनाम्) आक्रोशे जिह्वाच्छेदः । अङ्गाभिरदने तदङ्गान्मोच्यः ArthS'ā. ii. 169. 9 (4. 11); (comm. नखादिना मात्राद्यङ्गविलेखने)

**अङ्गाभोग** (aṅgābhoga) *m.* expansion of limbs (breast and hips due to pregnancy) तत्र मुनिगुप्तभगवान् किल केवलखलिस्नानपरुषमुद्वमनीयसंगताङ्गा- भोगत्विषम् … धनश्रियं निध्याय…अभाषत YaśasCam. ii. 339. 11.

**अङ्गाभ्यङ्ग** (aṅgābhyaṅga) *m.* massaging or smearing the body with oil (वृद्धिका) तत्राकरोदखेदं मामङ्गाभ्यङ्गाशनादिभिः BṛKathāS'loSaṁ. 18. 218; न भवद्भिरङ्गाभ्यङ्गार्थं भवनमुपप्रोतव्यम् YaśasCam. ii. 368. 22.

**अङ्गाभ्यस्त** (aṅgābhyasta) *n.* recitation of or muttering the *aṅga- mantras* अङ्गाभ्यस्तार्कदीप्तेन शिष्टभागेन (मृदः) विग्रहम् । सर्वमालिप्य तत् तीर्थं (शिवतीर्थम्) स्वनाम्नावाह्य पूजयेत् ĪśānS'iPa. i. 9. 29.

**अङ्गाभ्यास** (aṅgābhyāsa) *m.* repetition of a subsidiary rite अङ्गाभ्या- सस्य शास्त्रीयत्वं विना पुनःप्रयोगो न निर्वहति MayūMāli. 800. 4 (*on* xi. 1. 5)

**अङ्गामोद** (aṅgāmoda) *m.* fragrance of the body अङ्गामोदसमोच्छलद्- घ्रुणिपतद्भृङ्गावलीमालितस्फूर्जल्लाञ्छनसूत्रगुम्फितमिलन्नीलोत्पलश्रीरिव । … स्मर्यतां मञ्जुश्रीः SubhāRaK. 3. 1.

**अङ्गार** (aṅgāra) *m.* (*n.*) [MAYR. 1. 21; 3. 624; DEBRU. p. 287 / अङ्गिमदिमन्दिभ्य आरन् Uṇā. 3. 134; DhātuPra. 1. 141 (18. 13); Prasā. ii. 636. 5; SiddhāKau. 545B. 13; अङ्गति गच्छति निर्धूमकालाग्नितामिति । अङ्गारो

वह्निदग्धकाष्ठम् GaṇRa. 2. 68 (107); in *bhikṣādigaṇa* (P. iv. 2. 38); GaṇPā. 170. 5; CāndrVyā. iii. 1. 44; JaineVyā. 179. 6 (*on* iii. 2. 33); KāśiVṛ. *on* iv. 2. 38; GaṇRa. 4. 257 (304); in *pāśādigaṇa* (P. iv. 2. 49); GaṇPā. 141. 5; CāndraVyā. iii. 1. 56; JaineVyā. 180. 9 (*on* iii. 2. 41); KāśiVṛ. *on* iv. 2. 49; GaṇRa. 4. 259 (307); Prasā. i. 752. 9; in *tārakādigaṇa* CāndraVyā. iv. 2. 37; GaṇRa. 7. 391 (415); Prasā. i. 871. 12; in *kacchādigaṇa* GaṇRa. 5. 328 (366)] **1A** burning or hot charcoal **B** spark of fire **2A** charcoal (not burning, not hot) **B** small piece of charcoal **3** heat, temperature **4** kind of love **5** portable fire-place, pot to hold fire **6** planet Mars **7A** name of a people or country **B** name of a king **C** name of a year **D** name of a quarter **E** name of one of the eight deities belonging to the first cover of the Vaśitvavyūha **F** name of a Gaṇeśvara of S'iva **G** name of a plant **H** kind of remedy **I** red colour **1 A** burning or hot charcoal अङ्गारा एव प्रतिवेष्टमाना अमित्राणामस्य सेनां प्रतिवेष्टयन्ति TaiS. III. iv. 8. 4; VI. iii. 9. 5; येऽङ्गारा आसन् तेऽङ्गिरसोऽभवन् यदङ्गाराः पुनरवशान्ता उददीप्यन्त तद् बृहस्पतिरभवत् AitBr. 13. 10 (378); उपवेषेण दक्षिणतोऽङ्गारानुपस्पृशति KausiBr. 2. 1 (4. 7); 2. 2 (4. 21); उदीचोऽङ्गारान्निरूह्याधिश्रयति TaiBr. II. i. 3. 1; असौ वै लोकोऽग्निर्गौतम । तस्यादित्य एव समित्…अङ्गारा नक्षत्राणि S'atBr. XIV. ix. 1. 12; I. ii. 1. 4; प्रज्वलन्त्यश्वानां च वालधीष्वङ्गाराः ṢadviBr. V (vi). 10. 2; विष्फुलिङ्गाभ्य एवाजाश्चैणेयाश्चासृज्यन्त अङ्गारेभ्योऽङ्गिरसः JaimiBr. 3. 263; 1. 1; शवादङ्गारमाहृत्य चतुष्पथे बाधकमिध्ममुपसमाधाय…जुहुयात् SāmaViBr. ii. 6. 16; iii. 4. 10; अश्वस्य … रोमसमरेभ्योऽङ्गारा आशीर्यन्त GopBr. i. 2. 18; i. 3. 13; तस्य प्राण एवाहवनीयः…अङ्गाराः श्रद्धा S'āṅkhāĀ. 10. 8 (39. 11); TaiĀ. i. 27. 6 (173. 2); यथाङ्गारानपोह्य भस्मनि जुहुयात् ChāndoU. ii. 12. 1; v. 4. 1; v. 24. 1; असौ वै लोकोऽग्निर्गौतम । तस्यादित्य एव समित्…रश्मयो धूमः । अहरर्चिः । दिशोऽङ्गाराः BṛĀraU. vi. 2. 9; पश्चाद्गार्हपत्यस्योपविश्योदङ्ङङ्गारानपोहेत् ĀśvaS'S. I. ii. 2. 15; उपवेषेणोदीचोऽङ्गारान्गार्हपत्यान्निरूह्य S'āṅkhāS'S. ii. 8. 8; उपवेषेणोदीचोऽङ्गारान्निरूहति BaudhS'S. i. 4. 7; BhārS'S. vi. 10. 5; गार्हपत्यादुदीचोऽङ्गारान् निरूह्य ĀpaS'S. i. 12. 1; i. 12. 3; MānS'S. 14. 12; KātyS'S. ii. 4. 26; आग्नीध्रीयादङ्गारान्मार्जालीयं हृत्वा पृथक् स्थालीपाकान् श्रपयित्वा पितृयज्ञान् कुर्वीरन् LāṭyāS'S. x. 11. 10; दक्षिणतो भस्ममिश्रानङ्गारान्निरूह्य तेषु जुहुयात् BaudhGS. iii. 12. 7; चरमेऽङ्गारे वपां निगृह्यान्तरा शाखाभ्री हृत्वाभिघार्य श्रपयति KāṭhGS. iv. 11. 11; HirGS. i. 1. 27; VaikhāGS. 1. 12; KauśiSū. 15. 13; 44. 38; अङ्गारेष्वङ्गिराः Nir. 3. 17 (69. 8); गृहद्वार्यङ्गारमुदकमिति संस्पृश्याक्षारलवणाशिनो दशाहं कटमासीरन् BaudhDS. i. 5. 110; तस्य कण्ठमनुप्राप्तो ब्राह्मणः…दहन् दीप्त इवाङ्गारः MahāBhā. i. 25. 1; भृगित्येव भृगुः पूर्वमङ्गारेभ्योऽङ्गिराभवत् MahāBhā. xiii. 85. 15; अङ्गारमुपगूह्य स पिता मे नावबुद्धवान् Rāmā. ii. 67. 4; आतुरः सर्वशरीरमङ्गारैरिवाकीर्यमाणं मन्यते CaraS. vi. 21. 36 (1941 Ed.); i. 14. 50 (1922 Ed.); BhelaS. 151. 8 (6. 8); HāriS. i. 23. 25; घृतकुम्भसमा नारी तप्ताङ्गारसमः पुमान् Hitopa. 1. 90; महतामप्यहो दैवाद्वरा नीचसंगतिः । कर्पूरस्य कथं न(? नु) स्यादङ्गारेण समं रतिः KathāK. 121. 10; अङ्गारेभ्यः समुत्पन्ना ज्योतिषो दिव्यमानुषाः VāyuP. ii. 4. 61 = BrahmāṇḍP. ii. 1. 62; द्वितीयं च ततः शुक्रमङ्गारेष्वजुहोत्प्रभुः BrahmāṇḍP. ii. 1. 39; MaṭhVṛ. 39. 18 (*on* 23); अथ भण्डिः … शोकदहनदह्यमानस्य हृदयस्याङ्गारेणेव … अधरेण शुष्यता … राजद्वारमाजगाम HarṣaC. 302. 6; प्रशान्ताङ्गारनिष्प्रभः प्रभाकरः … रिपुणा स्वर्भानुनाभ्यसूयत AvantiKa. 54. 11; (वर्तिम्) स्नेहाक्तामङ्गारेषु प्रदीप्य … मानायोपनयेत् AṣṭāSaṁ. 1. 30 (150. 17); 4. 2 (12. 5); 4. 17 (96. 4); अङ्गारे वाङ्क्षिणाक्रान्ते जायते विकलं मनः MahāvīC. 6. 12 (298. 4); अर्चिषो हि प्रशमेऽङ्गारा अभिव्यज्यन्ते ChāndoUBh. 283. 14 (*on* v. 4. 1); यथाग्नेः विस्फुलिङ्गधूमाङ्गारार्चिषां प्राग्विभागादग्निरेवेति भवत्यग्न्येकत्वम् BṛĀraUBh. 308. 9 (*on* ii. 4. 10); 469. 5 (*on* iii. 9. 18); NītiSā. 19. 69; (हे सिन्धुर) ज्वलदनङ्गाङ्गारचुम्बनच्युतचित्तप्रसत्तीनामप्सरसाम् … प्रावृषेण्यपर्जन्य YaśasCam. i. 490. 5; i. 119. 8; ii. 226. 6; न मृतेषु रोदितव्यमश्रुपातसमा हि किल पतन्ति तेषां हृदयेष्वङ्गाराः NītiVā. 26. 26; दाहशक्तिर्यथाङ्गारे स्वाश्रयं व्याप्य तिष्ठति BṛNāraP. 3. 12; VarāP. 200. 43; 202. 69; ततो महाघना व्योम्नि…अङ्गारान्मुमुचुः BhāgP. viii. 10. 49; अङ्गारागुरुधूमादीनां वास्यवासकभावदर्शनादिति NyāyRa. 261. 15 (*on* 5(2). 182); करैरसुखयद्यो मां सोऽयमिन्दुस्त्वया विना ।…तुदति…। प्रज्वलद्भिरिवाङ्गारैर्विषदिग्धैरिवाशुगैः KathāSaSāg. xii. 20. 16; शिशिरे यस्य नाङ्गारं प्रददुः प्रातिवेश्मिनः NarmaMā. 1. 105; करम्भवालुका नाम नरकं योजनायुतम् । कूपाकारं वृतं दीप्तैर्वालुकाङ्गारकण्टकैः BrahmP. 215. 108; 144. 5; भस्ममिश्रांस्तथाङ्गारान् ग्राहयेच्छकलेन वै LiṅgaP. ii. 25. 19; BhaviP. 733A. 2 (iv. 89. 16); श्रपयित्वोत्तरेऽङ्गारे त्रिरभिद्योत्य तं कुशैः ĪśānS'iPa. i. 14. 193; S'ārṅgaS. iii. 2. 15; दूरमुत्क्षिप्य यः पादांस्तप्ताङ्गारान् स्पृशन्निव । पुलं याति सुसंहृष्टो वाजी AśvaVai. 3. 93; अपनीय ततोऽङ्गारानग्निवर्णान् Hastyāyur. 227. 1 (2. 28); SubhāRaK. 21. 25; सूर्ये ज्वाला ततो धूमः पश्चादङ्गारसम्भवः Mānaso. ii. 13. 834; शूलप्रोतानि कृत्वा तान्यङ्गारेषु प्रतापयेत् Mānaso. iii. 13. 1464; चुम्ब्यमान इवाङ्गारैः प्रत्यहं दाहविह्वलः । … भूपतिः TriṣaS'aPuC. i. 1. 417; भक्षयाम्यहमङ्गारान् खादिरानपि सक्तुवत् TriṣaS'aPuC. ii. 6. 254; यत् तु त्वयैष शष्पभोजी स्वामिना सह संयोजितः । तत् स्वहस्तेनाङ्गाराः कर्षिताः Pañcā. 22. 25; RasPraSu. 5. 41; समाकृष्टा ह्येते विरहदहनोद्गामरशिखाः । स्वहस्तेनाङ्गाराः SaduktiKa. 96. 26; SūktiMu. 56. 9; रथाङ्गानङ्गारैरिव हिमकरो नक्तमसिचन्मयूखैः HammīMaMa. 3. 10; वर्ण्यं यशस्तस्योपमानं कर्पूरः कर्पूराधारः समुद्गकः परिवारोऽङ्गारः KāvyaKaVṛ. 118. 29 (4. 2); कर्पूरस्य कथं न (? नु) स्यादङ्गारेण समं रतिः PārśvC. 1. 326; 1. 588; सर्वाः संविदोऽङ्गारादर्चिषा इव ·· पुरुषाद्विभज्यन्ते तेन संयुज्यन्ते च S'rutaPra. ii. 367. 6 (*on* ii. 3. 32); पूर्णतरघटखर्परमध्येऽङ्गारैः खदिरकोलभवः…रसो जरति RasRaSa. 9. 23; 9. 89; तेषु कपालेषु पुरोडाशमवस्थाप्योपर्यङ्गारैरधिवासने कृते NyāyMāVi. 332. 4 (*on* vi. 4. 5); अङ्गाररक्तोल्मुककर्पराणि दृष्ट्वा वदेत्…भयाय S'ārṅgaPa. 2483; SamyaKau. 61. 19; HaṁsDū. (Vā.) 99; कुटिलिका … काकमुखे वक्रगा लोहयष्टिः । … कौटिलिकः कर्मकरः । स हि तयाङ्गारान्हरति Prasā. i. 825. 8; नेन्धनं विद्यते यस्य (अग्नेः) नाङ्गारो यस्य दृश्यते RājTa.(Prā.) 849; जलमध्ये क्षिप्तस्याङ्गारस्य प्रकाशादिवृत्तिलयः BrahmSūBh.(S'ri.) ii. 451. 6 (*on* iv. 2. 1–2); VīraMi.(Saṁskāra.) 939. 22; दहनश्च धूमादन्यत्रापि वर्ततेऽङ्गारावस्थायामिति तस्य व्यापकत्वमेव MānaMe. 26. 2; BhojanKu. 12. 15; 35. 2; MayūMāli. 658. 12 (*on* x. 1. 12); NityoNi. 43. 24; **1 B** sparks of fire अङ्गारा लघुतराग्निकणास्तत्सहस्राणि प्रविकिरन्ति SthānṬ. 420A. 2; अङ्गारो विज्वालोऽग्निकणः JñātāDhaṬ. 204B. 12; **2 A** charcoal (not burning, not hot) दिव्या अङ्गारा इरिणे न्युप्ताः शीताः सन्तो हृदयं निर्दहन्ति ṚV. x. 34. 9; पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत् । मालाकार इवारामे न यथाङ्गारकारकः MahāBhā. v. 34. 18; अङ्गारकुशमुञ्जानाम् … कारयेत च संचयान् MahāBhā. xii. 69. 55; xii. 87. 13; खदिराश्मन्तकाङ्गारैर्गोशकृद्भिरथापि वा SuśruS. vi. 18. 87; अश्मनोऽस्थीनि…। करीषमिष्टकाङ्गारांश्छर्करा वालुकास्तथा । यानि चैवंप्रकाराणि कालाद् भूमिर्न भक्षयेत् ManuSm. 8. 250; अङ्गारतुषभस्मानि … आजीवपुररक्षार्थाः कार्याः कुप्योपजीविना ArthS'ā. i. 249. 2 (2. 17); i. 239. 4 (2. 15); i. 261. 1 (2. 19); ii. 137. 4 (4. 4); ब्राह्मे मुहूर्ते उत्थाय मूत्रपुरीषोत्सर्गं कुर्यात् … नाङ्गारे ViṣṇuSm. 60. 17; 6. 16; 63. 24; 63. 37; आचाममण्डतुषकणकुट्यङ्गाराणामुपयोजनम्…विद्यात् KāmSū. 238. 20 (4. 1); भस्मना कलहो ध्रुवः । अङ्गारैर्वह्निना बाथो (? बाधो) भग्ने भङ्गस्तु विग्रहे PāraS. 18. 154; चर्माङ्गारतुषाग्निभिः (दृष्टैः) । … प्रयाणसमये लग्ने दृष्टे सिद्धिर्न जायते NāraS. 33. 85, VasiS. 37. 10; KāśyaS. 36A. 42; चिरकालस्थायितुषाङ्गारादि(दी)ना(म्)चिह्नैश्चातुर्दिशो नियम्य दास्यथ EI. xxi. 82. 19; xxiii. 55. 14; भचारासनचर्माङ्गारकिण्वक्रेणिखानक[:] EI. xv. 42. 17; xxiii. 87. 32; सीम्नो विवादे क्षेत्रस्य सामन्ताः …नयेयुरेते सीमानं स्थलाङ्गारतुषद्रुमैः…उपलक्षिताम् YājñaSm. 2. 151 (comm. अङ्गारोऽग्नेरुच्छिष्टम्); AgniP. 256. 2; विलिखेन्न नखैर्भूमिं नाङ्गारेण न भस्मना MatsyaP. 7. 40; 256. 14; भस्माङ्गारांश्च केशांश्च नदीं शुष्कां भुजङ्गमान् । पश्येद्यो दशरात्रं तु न स जीवेत तादृशः VāyuP. i. 19. 16; MārkP. 34. 25; 43. 19; BhaviP. 895A. 36 (iv. 205. 47); YogYā. 13. 14; BṛSaṁ. 45. 12; BālaKrī. i. 109. 13; (*on* 1. 138); तदेव काष्ठादिकं विनाश्यम् अङ्गारादिकमवस्थान्तरम् HetuBiṬ. 77. 23; न ह्यग्निविगमेऽङ्गारेभ्यः पुनः काष्ठसन्ततिप्रवृत्तिः BrahmSi. 37. 8; घृष्यमाणो हि नाङ्गारः शुक्लतामेति जातुचित् PramāVāBh. 150. 14; नास्य ज्ञाततां कुर्यादङ्गारस्येव शौक्ल्यम् IṣṭaSi. 212. 8; मधुकरकुलैः …खादिरैरिवाङ्गारैः सर्वतः कर्बुरीकृतोपहारपुष्पप्रकरस्य TilaMañ. 304. 21; घृष्यमाणो यथाङ्गारः शुक्लतां नैति जातुचित् YaśasCam. ii. 250. 25; ii. 180 2; केशाङ्गारैस्तथा भस्मभुजंगैर्निर्जलां नदीम् । एषामन्यतमैः पूर्णां दृष्ट्वा स्वप्ने न जीवति SkandP. i(2). 55. 77; iii(2). 5. 49; iii(2). 6. 75; iv. 35. 66; तुषाङ्गारकपालेषु जलमध्ये तथैव च … मलमूत्रं न कारयेत् BṛNāraP. 25. 7; मेदिनी । भस्माङ्गारतुषास्थिकेशवल्मीकादिभिः संयुता वर्ज्या MānaSā. 446A. 14; अनुमीयते खल्वङ्गारेभ्यो भूतोऽग्नीन्धनसंयोगः Kāśi. i. 64. 20 (*on* 2. 18); कणाचामतुषाङ्गारान्यत्नेन परिरक्षसि DarpDa. 2. 36; काष्ठिकेभ्यस्ततोऽङ्गारान्दृष्ट्वापि क्रीणतो जनान् । स कालागुरु दग्ध्वा तदङ्गारानकरोज्जडः KathāSaSāg. x. 5. 5; काष्ठस्य तु प्रकृतेर्विकृतिरङ्गार इति कुतो निश्चितं भवता ĀtmaTaVi. 762. 1; SamarāSū. 8. 53; Mitā. 65. 5; (*on* 1. 188); अग्नौ चैव श्मशाने च विण्मूत्रं न समाचरेत् ।… तुषाङ्गारकपालेषु राजमार्गे तथैव च PadmP. i. 52. 40; घृष्यमाण इवाङ्गारो निर्मलत्वं न गच्छति PadmP. ii. 66. 72; SūktiRa. 32. 7 = VetāPañ.(S'i.) 47. 12; PadmP. i. 55. 76; iii. 9. 13; v. 7. 43; (स्वप्ने) भस्माङ्गारांश्च केशांश्च … । पश्येद्यो दशरात्रं तु न स जीवति तादृशः LiṅgaP. i. 91. 19; SaurP. 17. 26; BhaviP. 337A. 32 (ii(1). 13. 4); सह पर्यग्निकृत्वाग्नौ दर्भाङ्गारान् विनिक्षिपेत् ĪśānS'iPa. i. 14. 39; अङ्गारेणाश्विवृक्षस्य तस्यैव फलकोपरि । यमराजाह्वयं चक्रं लिखित्वा ĪśānS'iPa. i. 47. 123; भस्मतुषाङ्गारादीनि पक्षिणां प्रवेशान्निर्दिशेत् ĪśānS'iPā. ii. 26. 91 (12); i. 5. 43; i. 14. 18; ii. 33. 37; तथा हि कश्चिदङ्गारकारकोऽगान्महाटवीम् । अङ्गारान्कर्तुमुष्णर्तौ PariPar. 2. 432; TriṣaS'aPuC. i. 4. 836; क्षीरक्षालनमङ्गार इवाज्ञानप्रकाशनम् SamarāSaṁ. 4. 473; लिखेदष्टविषाङ्गारनिम्बनिर्या-

सकज्जलैः S'āraTi. 24.263; लोहाङ्गारस्नायुविषाणवेणिवन्धनैर्युक्तम् । ... दुर्गमिष्टं स्यात् MayaMa. 10.47; Rasā. 4.5; उष्णो दहति चाङ्गारः शीतः कृष्णायते करम् Hitopa.(NSEd.) 1.80 (p. 21); अङ्गारा दग्धकाष्ठावयवाः शान्ताग्नयः Smṛti-Can. iv. 535.6; तस्याः पादद्वयाङ्गुष्ठसंपदः पुरतस्तव । इदमन्तःपुरं सर्वमङ्गारादपि हीयते MalliC. 5.139; PārśvC. 2.908; पावकोच्छिष्टा अङ्गाराः कोकिला मताः । कोकिलाश्चेतिताङ्गारा निर्वाणाः पयसा विना RasRaSa. 7.16; 6.52; 10.13; अङ्गाररज्ज्वन्धनकर्पराणि । वक्त्रे समासाद्य च याति यातुर्दृग्गोचरे भूरिभयावहः श्वा S'ārṅgaPa. 2623, 2629; अङ्गारैः शाकवृक्षस्य चूर्णितैः सघृतैस्त्र्यहम् । दत्तैर्नश्यत्य-तीसारस्त्र्यहं पानीयवारणात् S'ārṅgaPa. 2850; RaseCin. 9.80 (149.18); PurāPra-Saṁ. 26.15; नाङ्गारः शुभ्रतामेति RājTa.(Jo.) 20; TantrSa. 1.31; VāstuVi. 2.36; °पक्वेष्टकाङ्गारपाषाणकर्परसिकताः ... यानि चिरकालेनापि भूमिरात्मसान्न करोति ManvaMu. 334.27 (*on* 8.250); SiṁhāDvā. 176.0 (21); अङ्गारको यथा समूलं वृक्षमुत्पाट्य तत्राग्निं दत्त्वा अङ्गारान् करोति VīraMi.(Rājanīti.) 478.1; **2 B** small piece of charcoal दत्त्वा बहुशः सलिलं प्रक्षाल्याङ्गारमुद्धृत्य । तदयः केवलमग्नौ शुष्कीकृत्यातपेऽथवा पश्चात् । लोहशिलायां पिंष्यात् RaseCin. 8.32 (90.23); **3** heat, temperature संज्ञानाशस्खलनपतनविलपनतृष्णाहिक्काश्वासप्रस्वेदाङ्गारपरि-कर्तिकाभिरभीक्ष्णं बाध्यते KāśyaS. 106B.32; **4** kind of love (inflamed by being insulted by a woman) अङ्गारः स्त्रीजनावज्ञाज्वलितो लोहितानन: SamaMā. 5.29; **5** *n.* portable fire-place, pot to hold fire अङ्गारमङ्गारपूर्णपात्रं हसन्त्यादि BhojanKu. 55.14; **6** planet Mars षट्त्रिस्थानगताः शस्ता मन्दा-ङ्गारार्ककेतवः AgniP. 95.8; स्वात्यां गृहीत्वा चाङ्गारं सप्तनक्त्यार्तिवर्जितः AgniP. 195.4; त्रिविप्रान् भोजयेद् दद्याद्दक्षिणां लोहितं तथा । स्वर्णमङ्गारमुद्दिश्य ततः शान्तिः प्रजायते BhaviP. 408B.7 (ii(3) 20.37); **7 A** name of a people and country in the south अथापरे जनपदा दक्षिणाः -- समङ्गाः कोपनाश्चैव कुकुराङ्गदमारिषाः (v. l. कुकुराङ्गारमारिषाः) MahāBhā. vi. 10.59; कोंकणाः कुन्तलाश्चान्ध्राः कुलिन्दाङ्गारमारिषाः । दाक्षिणाश्चैव ये देशाः BrahmāṇḍP. i.16.59; अथापरे जनपदा दक्षिणा मुनिपुङ्गवाः । द्रविडाः केरलाः ... तथा चोलाः कोकणा मणिवालवाः । समङ्गाः कनकाश्चैव कुकुराङ्गारमारिषाः PadmP. i. 6.55; **7 B** name of a king, son of Setu, called the lord of the Maruts य आङ्गारं (v. l. यश्चाङ्गारम्) हि नृपतिं मरुत्तमसितं गयम् । अङ्गं बृहद्रथं चैव मान्धाता समरेऽजयत् । यौवनाश्वो यदाङ्गारं समरे समयोधयत् । विस्फारैर्धनुषो देवा द्यौरभेदीति मेनिरे MahāBhā. xii. 29.81; द्रुह्योस्तु तनयो राजन् बभ्रुसेनश्च पार्थिवः । अङ्गारसेतु-स्तत्पुत्रो (v. l. अङ्गारः सेतुपुत्रश्च) मरुतां पतिरुच्यते HariVaṁ. 23.130; अङ्गा-रस्य तु दायादो गान्धारो नाम पार्थिवः । ख्यायते यस्य नाम्ना वै गान्धारविषयो महान् HariVaṁ. 23.132; **7 C** name of a year in the Jupiter's cycle भाग्ये युगे ... उद्गारिसंज्ञं (v. l. अङ्गारसंज्ञम्) तदनु क्षयाय नरेश्वराणां विषमा च वृष्टिः (अब्दम्) BṛSaṁ. 8.50; **7 D** name of a quarter मुक्तप्राप्तैष्यदर्कासु फलं दिक्षु तथाविधम् । अङ्गारि(v. l. अङ्गार) दीप्तधूमिन्यस्ताश्च शान्तास्ततोऽपरा(? राः) BṛSaṁ. 86.12; **7 E** name of one of the eight deities belonging to the first cover (*prathamāvaraṇa*) of the *Vaśitvavyūha* वशित्वं पुनरुच्यते । ...महा-जयस्तथाङ्गारो व्यङ्गारश्च महायशाः । प्रथमावरणे प्रोक्ताः LiṅgaP. ii. 27.123; गगनः भवनः ... अङ्गारः व्यंगारः महायशाः वशित्वप्रथमावरणम् VīraMi. (Rājanīti.) 386.5; **7 F** name of a Gaṇeśvara of S'iva अघोरो लाङ्गली मन्युरङ्गारः शिखि-भूषणः ...ऊर्ध्वायां दिशि कोटीशा विंशतिः प्रमथेश्वराः ĪśānS'iPa. ii. 49.154; अरुणो लाङ्गलो मन्युरङ्गारः शिवभूषणः ।...गणाधिपाः शिवस्यैते ऊर्ध्वरूपा नमो नमः TantrSa. 9.180; **7 G** name of a plant चूर्णस्य तैलकबलमङ्गारस्य निशारसः ĪśānS'iPa. i. 40.156; **7 H** kind of remedy [pw]; **7 I** *n.* red colour [APTE]; *adj.* red, of a red colour [APTE]; [Kośas give the following meanings for aṅgāra (*m. n.*) 1 *alāta* 2 *ulmuka* 3 *bhūmiputra* (only *m.*) 4 *uṣṇaguṇa* 5 *uṣṇaguṇavat* (*adj.*) अङ्गारोऽलातमुल्मुकम् AmaK. 1766; ParyāRaMā. 35.738; भूमिपुत्रे चाङ्गारः ParyāRaMā. 1476; अलातमुल्मुकम् । अङ्गारोऽस्त्री Vaija. 11.32; 19.31; अलातेऽस्त्री कुजेऽङ्गारः TrikāS'e. iii. 3.329; i. 1.69; अङ्गारोऽ-लातभौमयोः AnekāSaṁ. 3.512; 3.137; ParyāMu. 22.38; ViśvaPra. 140.182; 34.21; DharK. 2004; ParyāS'aRa. 2.444; MediK. 33.27; 141.108; S'abdaRa. (Vā.) 220; ParaNā. 316; ViśvaLoK. 294.103; 66.4; KośaKaTa. 1.465; 2.4366; तत्सामिज्वलिते काष्ठे सधूमेऽथ विधूमके । अङ्गारेऽङ्गालौ निर्वाणे KalpaK. 143.100; 379.21; 402.200; S'abdaRaSa. 263.11; 263.12; अङ्गारस्तु पुमान्भौमे स्यादुष्णगुण एव च । त्रिस्तु तद्वति निर्वाणज्वाले त्वग्नौ नृशण्डयोः । निर्वाणाग्नाविन्धने च स्यात् NānārthāSaṁ. ii. 54.83; *m.* or *n.* given in Trikāśe. iii. 5.13; Liṅgānu.(Va.) 71; Liṅgānu.(S'ā.) 123.7; Liṅgānu.(He.) 128.4; KalpaK. 481.178; KośaKaTa. 2.2796; *aṅgāra* is given as the meaning of श्लेष (श्लेषः स्यादुभयार्थे च अलाताङ्गारयोः पुमान्) NānārthaMa. 1843; of त्र (त्रो नरो नरकोऽङ्गारः) EkārthaNā. 2.81; (त्रं गृहं नरकोऽङ्गारम्) EkārthaNā. 2.81; of ष्ट (ष्टः षष्ठोऽनुखरोऽङ्गारः) EkārthaNā. 2.110]

**अङ्गारक** (aṅgāra-ka) *m.* **1 A** planet Mars **B** house of Mars **C** deity Mars **D** world of Mars **E** role of Mars (in a play) **F** idol of Mars **2** Tuesday **3 A** burning charcoal **B** extinguished charcoal **4 A** name of a son of Sarva **B** name of one of the eleven Rudras (son of Vinatā) **C** name of one of the eleven Rudras (son of Surabhi) **D** name of one of the attendants of Skanda **E** name of a son of Vivasvat **F** one of the names of the sun **G** name of a king of Vidyādharas **H** one of the lords of the Nāgas **I** name of a host of Piśācas **J** name of an Asura **K** name of a ṛṣi **L** name of a Sauvīraka prince **M** name of a king **N** name of an ascetic **O** name of a person **5** a particular male bird **6 A** name of a white or yellow plant *Amaranth* **B** *Eclypta prostrata* or *Virbasina prostrata* **C** *Terminalia catappa* **7** name of one of the Saṁvatsaras **1 A** planet Mars अवष्टब्धं च मे राम नक्षत्रं दारुणैर्ग्रहैः । आवेदयन्ति दैवज्ञाः सूर्याङ्गारकराहुभिः Rāmā. ii. 4.18; 2.960*(1); ततः सुतुमुलं युद्धं वालिसुग्रीवयोरभूत् । गगने ग्रहयोर्घोरं बुधाङ्गारकयोरिव Rāmā. iv. 12.17; ददर्श (सः सीताम्)... ग्रहेणाङ्गार-केणैव पीडितामिव रोहिणीम् Rāmā. v. 13.21; Rāmā. vi. 90.30; 6.614*(3); कृत्वा चाङ्गारको वक्रं ज्येष्ठायां मधुसूदन । अनुराधां प्रार्थयते MahāBhā. v. 141.8; मघास्वङ्गारको वक्रः MahāBhā. vi. 3.13; vi. 43.38; vi. 43.54; प्रत्यागत्य पुन-र्जिष्णुरहन्संशप्तकान् बहून् । वक्रानुवक्रगमनादङ्गारक इव ग्रहः MahāBhā. viii. 14.1; सुरसेनापतिः स्कन्दः पठ्यतेऽङ्गारको ग्रहः VāyuP. i. 53.31 = BrahmāṇḍP. i. 24.48; अङ्गारकोऽपि शुक्रस्य तत्प्रमाणे व्यवस्थितः ViṣṇuP. ii. 7.8; MatsyaP. 72.16; BrahmP. 23.8; जातः...। अङ्गारकस्तूज्जयिन्याम् Sārā. 7.15; पक्षाद्भानोः सोमस्य मासिकोऽङ्गारकस्य वक्रोक्तः । आ दर्शनाच्च पाको बुधस्य जीवस्य वर्षेण BṛSaṁ. 97.1; नक्षत्राणामिव ग्रहं अंगारकम् (नगराधिपतिं कुर्याद्राजा) ManuBh. ii. 37.27 (*on* 7.121); अत ऊर्ध्वमङ्गारकोऽपि ... त्रिभिस्त्रिभिः पक्षैरेकैकशो राशीन् द्वादशानुभुङ्क्ते BhāgP. v. 22.14; LiṅgaP. ii. 50.31; अङ्गारनिकटस्थत्वान्नाम्ना चाङ्गारकः कृतः ViṣṇuDhaP. i. 106.42; अङ्गारको दीप्तआरः...इत्येकविंशतिं नाम्नां मङ्गलस्य तु यः पठेत् BṛDharmaP. ii. 11.42; ममाङ्गतो यथोत्पन्नस्तस्मादङ्गारको ह्ययम् । अङ्गदोऽ-ङ्गोपकारश्च अङ्गानां तु प्रदो नृणाम् । सौभाग्यादिकरो यस्मात्तस्मादङ्गारको मतः BhaviP. 65B.13 (i. 31.19); बृहस्पतेः पादहीनः शुक्रोऽङ्गारक एव हि BhaviP. 187A.22 (i. 125.51); शिवाङ्गाद्भसा जातस्तेनाङ्गारक उच्यते BhaviP. 658A.22 (iv. 31.6); सौभाग्यारोग्यकृद्यस्मात्तस्मादङ्गारकः स्मृतः BhaviP. 658A.24 (iv. 31.7); अङ्गारकेन ज्येष्ठाख्ये राघवर्क्षे निपीडिते RāmāMañ. 387.17; सिंहस्थेऽङ्गारके विष्टयां क्षेत्रे तदुदये खनेत् ĪśānS'iPa. i. 37.83; अङ्गारकादयोऽष्टाशीतिर्ग्रहाः सूत्रसिद्धाः SthānṬ. 78B.11; (अनुलोमप्रतिलोमशब्दा यथा) अङ्गारक उशनाः KāvyKaVṛ. 99.28 (3.5); अङ्गारकोऽसौ धिषणेन युक्तः साक्षादिवोद्वेजितजीवलोकः HariC.(Pa.) 130; ब्रह्मा ... मन एव चन्द्रं सत्त्वमङ्गारकम्...चकार S'aṅkaVi.(Ā.) 28.11; आरोवक्रक्षितिजरुधिराङ्गारकक्रूरनेत्राः ... वदन्ति तज्ज्ञाः JātaPā. 2.3; चलत्यङ्गारके वृष्टिर्ध्रुवा KṛṣiPa. 71; लोहितोऽङ्गारकः VīraMi.(Saṁskāra.) 365.4; भाति ... कौस्तुभो मणिः । अङ्गारक इव RasGaṅ. 256.16; AmaK. 195; AṣṭāNi. 36.17; ṢaḍrasaNi. 47.16; AnekāSaṁ. 4.1; AbhidhāCin. 116; DharK. 243; MediK. 15.74; ViśvaPra. 17.190; ViśvaLoK. 30.176; **1 B** house of Mars (Astrol.) रवी रविगुणश्चाङ्गारकोऽङ्गाहतः Golā. 251.31 (31.7); **1C** deity Mars अङ्गारकं तर्पयामि BaudhDS. ii. 5.23; अग्निर्मूर्धेति ... देवताङ्गारकोऽस्य च VasiS. 18.50; Aparā. 574.2 (*on* 1.299); अङ्गारकमगस्तिं च पावकं सूर्यमश्विनौ । पञ्चै-तान्संस्मरेन्नित्यम् BhāvPra.(Bhā.) 5.175; BhojanKu. 219.1; अग्निर्मूर्धा° विरूपोऽ-ङ्गारको गायत्री°...अङ्गारकप्री(त्यर्थे विनियोगः) BālamBha. i. 23.25 (*on* 1.11–12); **1D** world of Mars नरोत्तमाः । तेऽस्मिन्नङ्गारके लोके वसन्ति परमर्द्धयः SkandP. iv. 17.21; **1E** role of Mars (in a play) रक्तमङ्गारकं विद्यात् पीतौ बुधहुताशनौ NāṭyaS'ā. 21.98; **1F** idol of Mars पितृन् स्वर्गं नयेन्नत्वा संगमेऽङ्गारकेश्वरौ VāyuP. ii. 50.52; सोमोऽङ्गारकोऽथ बुधो जीवः शुक्रः शनिः क्रमात्...संक्षेपादथ पूजनम् AgniP. 21.18; अङ्गारकं तु सौवर्णं स्थापयेत्ताम्रभाजने । दापयेद् ब्राह्मणायाय PadmP. v. 31.88; सोममङ्गारकं चैव ... समन्ततो यजेदेतां-स्तृतीयावरणे क्रमात् S'ivaP. vii(2). 30.32 (580B.15); आदित्यं च तथा सोम-मङ्गारकबुधावपि...इति नवग्रहान्...तर्पयेत् ĪśānS'iPa. ii. 3.86; रक्तचन्दनादङ्गार-कस्य(प्रतिमा कार्या) Aparā. 569.4 (*on* 1.296); रामेश्वरस्याङ्गारकस्य च नमस्कारः प्रत्येकं पितृस्वर्गफलकः VīraMi.(Tīrtha.) 428.4; आग्नेयदलादिषु अङ्गारकबुधराहु-गुरुमन्देन्दुकेतून् क्रमेण स्थापयेत् BālamBha. iii. 215.17 (*on* 3.327); **2** *n.* Tuesday अङ्गारकेन संयुक्ता चतुर्थी लभ्यते यदि । उपरागसमं पर्व तत् SkandP. iv. 17.16; प्रौष्ठपद्यसिते पक्षे षष्ठ्यामङ्गारको यदि । व्यतीपातश्च रोहिण्यां सा षष्ठी कपिला स्मृता SkandP. vii(1). 343.9; आयुरङ्गारके हन्ति TantrSā.(K.) 14.8; **3A** burning charcoal स्वेदोऽथ वाङ्गारकैः SiddhYo. 72.1; गारा दग्धा

तुषा दग्धा दग्धा वाचीकमृत्तिका । चीरमङ्गारकः किट्टं वज्रेणापि न भिद्यते Rasā. 4. 35; आर्य, अनुपपन्नमिदं यत्किल तरुशिखरमङ्गारकमुद्गिरतीति PrasaRā. 6. 38; गवलश्यामलो विभ्रदङ्गारसदृशौ दृशौ । जहास प्रलयाकाशमुदिताङ्गारकद्वयम् PāṇḍaC. 7. 18; हस्ते गृहीत्वाङ्गारकं च तत् । क्रव्यादेभ्यो नम इति ··· विन्यसेत् TantrRā. 29. 88; AnekāSaṁ. 4. 1; MediK. 15. 74; DharK. 243; ViśvaPra. 17. 190; अस्त्री त्वङ्गारकोङ्गारे पुंसि भौमे कुरण्टके ViśvaLoK. 30. 176; **3 B** extinguished charcoal जनाश्च तद्दृशिरे रक्षः कौतूहलान्विताः । यदृच्छया निपतितं भूमावङ्गारकं यथा MahāBhā. vii. 84. 27; को भवेद् जिनरूपस्य निपुणो वर्णनं प्रति । देवदेहा अपि बभुर्यत्पुरोऽङ्गारका इव MalliC. 4. 206; **4A** name of a son of S'arva (from his wife Vikeśi) शर्वस्य या तृतीया तु नाम भूमिस्तनुः स्मृता । पत्नी तस्य विकेशीति पुत्रश्चाङ्गारकः स्मृतः VāyuP. i. 27. 51; **4 B** name of one of the eleven Rudras विनता जनयामास रुद्रान् ···। अङ्गारकं तथा सूर्यम् ··· एकादशैते कथिताः ··· रुद्राः ViṣṇuDhaP. i. 128. 41; NīlaP. 609; **4 C** name of one of the eleven Rudras (sons of Kaśyapa and Surabhī) कश्यपाद्रुद्रानेकादश ··· अङ्गारकं तथा सर्पम् ··· सुरभी तानजीजनत् VāyuP. ii. 5. 69; BrahmāṇḍP. ii. 3. 70; **4 D** name of one of the attendants of Skanda कालकश्च प्रहासश्च तथाङ्गारकवह्निकौ (कुमारमुपतस्थिरे) MahāBhā. ix. 264*(2); **4 E** name of a son of Vivasvat सविता च ऋचीकोऽर्को भानुराशावहो (v. l. °रंगारको) रविः । पुत्रा विवस्वतः सर्वे MahāBhā. i. 1. 40; **4 F** one of the 108 names of the sun सोमो बृहस्पतिः शुक्रो बुधोऽङ्गारक एव च । ··· एतद्वै कीर्तनीयस्य सूर्यस्यैव महात्मनः । नाम्नामष्टशतम् MahāBhā. iii. 3. 19; BrahmP. 33. 35; **4 G** name of a king of the Vidyādharas दुष्टस्त्वंगारको नाम तापं धत्ते विशेषतः PadmP.(Ra.) 51. 28; अथाभ्यधावतां तद्वदङ्गारकविजृम्भकौ KathāSaSāg. viii. 3. 69; **4 H** one of the lords of the Nāgas अङ्गारकः शनैश्चारी नागः ··· एते प्राधान्यतो राजन् नागेशाः कीर्तिता मया NīlaP. 940; **4 I** name of a host of the Piśācas पिशाचास्ते ···। युग्मानि षोडशायानि ···। नामतस्तान्प्रवक्ष्यामि ··· ज्वाला चाङ्गारकस्तथा BrahmāṇḍP. ii. 7. 377; ViṣṇuDhaP. ii. 22. 82; **4 J** name of an Asura अङ्गारकोऽपतद्भूमौ निर्यज्जीवो जगाद च KathāSaSāg. ii. 3. 71; अस्तीहाङ्गारको नाम पातालनिलयोऽसुरः KathāSaSāg. xvi. 2. 34; **4 K** name of a Ṛṣi-family अङ्गारकाः ··· इत्यादयः शारद्वन्ता गौतमाः ViraMi.(Saṁskāra.) 627. 10; **4 L** name of a Sauvīraka prince सौवीरका द्वादश राजपुत्राः । ··· अङ्गारकः कुञ्जरगुप्तकश्च MahāBhā. iii. 249. 10; **4 M** son of S'iva ममाङ्गाद्रजसा जातस्तेनाङ्गारक उच्यसे SkandP. v(2). 43. 13; **4 N** name of an ascetic अङ्गारकोऽवोचत् TirthaKa. 74. 2; **4 O** name of a person मम त्वङ्गारको नाम व्यालकश्चाभवत्सुहृत् BṛKathāS'loSaṁ. 9. 92; व्यालकाङ्गारकौ चास्य भ्रातरौ परिचारकौ BṛKathāS'loSaṁ. 20. 125; **5** a particular male bird सर्वस्य स्त्रीशब्दस्य पुंशब्दातिदेशः प्राप्नोति । अस्यापि प्राप्नोति । अङ्गारका नाम शकुनयः । तेषां कालिकाः स्त्रियः कालिकावृन्दारिकाः । अङ्गारकवृन्दारिकाः प्राप्नुवन्ति MahāBh. iii. 152. 10 (*on* vi. 3. 34); KāśiVṛ. *on* vi. 3. 34; PadMañ. *on* KāśiVṛ. *on* P. vi. 3. 34; JaineVyā. 305. 1 (*on* iv. 3. 146); NānārthāSaṁ. iii. 29. 45; **6 A** name of a plant, Amaranth (Kuruṇṭaka, Kuruṇṭa, Kuranṭaka, Karuṭaka) अङ्गारकः ··· कुरुण्टके MediK. 15. 74; AnekāSaṁ. 4. 1; ViśvaPra. 17. 190; S'abdaRaSaK. 31. 9; AnekāTi. 4. 6; ParaNā. 2669; ViśvaLoK. 30. 176; ApūNā. 11A. 4; **6 B** name of a the plant *Eclypta prostrata* or *Virbasina prostrata* (bhṛṅgarāja) अङ्गारकः केशराजो भृङ्गारः केशरञ्जनः BhāvPra.(Bhā.) 6(4). 238; ṢaḍrasaNi. 19. 13; MadaPāNi. 14. 229; KośaKaTa. 1. 4127; KalpaK. 306. 507; **6 C** name of the plant *Terminalia catappa* (*iṅgudī*) S'abdaRa.(Vā.) 968; 1214; **7** name of one of the Saṁvatsaras दुन्दुभ्यङ्गारकौ रक्तः क्रोधश्चापि क्षयस्तथा । भाग्ये पञ्च शुभाः सर्वे विशेषेण तु पञ्चमः ViṣṇuDhaP. i. 82. 20; ApūNā. 11A. 4; [mentioned as a meaning of *āra, karṣaka, dhiṣṇya, raktāṅga, rudhira, vakra,* NānārthāSaṁ. i. 48. 66; i. 98. 646; ii. 80. 389; ii. 179. 1517; i. 144. 1191; AnekāK. 119; S'abdaRaSaK. 279. 3]

**अङ्गारक** (aṅgāraka) *n.* **1** medicated oil मूर्वा लाक्षा हरिद्रे द्वे मञ्जिष्ठा सेन्द्रवारुणी । बृहती सैन्धवं कुष्ठं रास्ना मांसी शतावरी । आरनालाढकेनैवं तैलं प्रस्थं विपाचयेत् । तैलमङ्गारकं नाम सर्वज्वरविमोक्षणम् SiddhYo. 1. 271 = S'ārṅgaS. ii. 9. 100; **2** name of a holy place (पुण्यतीर्थं च शाश्वतम्) अङ्गारकं च विख्यातम् PadmP. v. 11. 44; तत्रैवाङ्गारकं तीर्थं कुण्डं चाङ्गारनिर्मलम् SkandP. iv. 97. 67.

**अङ्गारककर** (aṅgāraka-kara) *m.* Mars's hand (a dramatic or gesticulatory representation of the planet) वामे करे तु सूची स्यान्मुष्टिहस्तस्तु दक्षिणे । धृतश्चेन्नाट्यशास्त्रज्ञैरङ्गारककरः स्मृतः AbhinDa. 252.

**अङ्गारककुण्ड** (aṅgāraka-kuṇḍa) *n.* name of a Tīrtha or place of pilgrimage अङ्गारकचतुर्थ्यामेवाङ्गारककुण्डे स्नात्वाङ्गारकेशपूजा कार्या TristhaSe. 231. 1.

**अङ्गारकचतुर्थी** (aṅgāraka-caturthī) *f.* **1** fourth day of the dark half of a lunar month falling on Tuesday अङ्गारकचतुर्थ्यां तु स्नानं तत्र (अङ्गारेशतीर्थे) समाचरेत् MatsyaP. 191. 60 = PadmP. i. 18. 57; SkandP. iv. 17. 15; अङ्गारकचतुर्थ्यास्तु महिमानं महीपते । शृणुष्व GaṇeP. i. 60. 1; i. 59. 41; i. 68. 28; तत्र भाद्रपदशुक्लचतुर्थ्यङ्गारकचतुर्थ्यादीनामपि सुतरां तोषकत्वाद् भवत्पक्षे ··· बाधे गौरवम् CaturCin. iii(2). 79. 12; अङ्गारकचतुर्थ्यामेवाङ्गारककुण्डे स्नात्वाङ्गारकेशपूजा कार्या पीडानिवृत्तये TristhaSe. 231. 1; **ii** religious observance (*vrata*) to be performed on an Aṅgāraka-caturthī day अङ्गारकचतुर्थीं ये करिष्यन्ति नरा भुवि । तेषामब्दसमं पुण्यं संकष्टीव्रतसंभवम् GaṇeP. i. 60. 33.

**अङ्गारकचतुर्थ्यष्टक** (aṅgārakacaturthy-aṣṭaka) *n.* religious observances on eight Aṅgāraka-caturthī days कुर्यादेवमङ्गारकाष्टकम् । अङ्गारकाष्टकमिति अङ्गारकचतुर्थ्यष्टकम् CaturCin. ii(1). 509. 19.

**अङ्गारकण** (aṅgāra-kaṇa) *m.* piece of live coal, ember महतः पावकात् ··· शक्तिर्दहनलक्षणा । अङ्गारकणमाश्रित्य बाह्यमायाति पौष्कर PauṣkS. 27. 278; कृत्वाङ्गारकणं चैव शतं जप्तं तु नारद । क्षिपेत्सलिलमध्ये तु ज्वलन्तं (? प्रज्वलत्) तत्प्रदृश्यते JayāS. 27. 197; कृत्वाङ्गारकणं चैव शतं जप्तं समाहितः । क्षिपेत् सलिलमध्ये तु ज्वलत्तद् दृश्यते जलम् LakṣmīT. 49. 35.

**अङ्गारकतीर्थ** (aṅgāraka-tīrtha) *n.* name of a Tīrtha स्नात्वाङ्गारकतीर्थे तु भवेद् भूयो न गर्भभाक् SkandP. iv. 97. 68.

**अङ्गारकदिन** (aṅgāraka-dina) *n.* day sacred to Mars, Tuesday अङ्गारकदिने प्राप्ते कृष्णपक्षे चतुर्दशी । ··· यमाय धर्मराजाय ··· एकैकस्य तिला(? लो)न्मिश्रान् दद्यात् त्रीनष्ट वाञ्जलीन् DakṣaSm. 2. 52; ये मां संपूजयिष्यन्ति ह्यङ्गारकदिने नराः । कलौ युगे कृतार्थास्ते SkandP. v(2). 43. 35; चतुर्थ्यङ्गारकदिने यदा भवति दानव । मृदा स्नानं तदा कुर्यात् MatsyaP. 72. 27; अङ्गारकदिने प्राप्ते चतुर्थ्यां तु विशेषतः । पूजयेत्तु शिवं भक्त्या MatsyaP. 193. 8; KūrmaP. 759. 16 (2. 40); PadmP. i. 20. 8; अङ्गारकदिने प्राप्ते चतुर्थ्यां नवमीषु च । स्नानं करोति पुरुषो भक्त्योपोष्य वराङ्गना SkandP. v(3). 175. 15; तिथिं चतुर्थीं नवमीं वर्जयेच्च चतुर्दशीम् । अङ्गारकदिनं राम करणं विष्टिसंज्ञितम् ViṣṇuDhaP. ii. 29. 65; कृष्यारम्भे ··· अङ्गारकदिनं वर्ज्यं दिवसं सूर्यजस्य च ViṣṇuDhaP. ii. 82. 15; ii. 85. 7.

**अङ्गारकनवमी** (aṅgāraka-navamī) *f.* ninth day of a fortnight falling on Tuesday अङ्गारकनवम्यां तु अमायां च विशेषतः । (शिवम्) स्नापयेत्तत्र यत्नेन रूपवान्सुभगो भवेत् MatsyaP. 193. 9; KūrmaP. 760. 3 (2. 40); PadmP. i. 20. 9.

**अङ्गारकनिभाकृति** (aṅgārakanibhākṛti) *adj.* having the appearance (i. e. colour) of a live coal दत्तकण्टकनामा तु लोह-कण्टकदेहवान् । अग्रे पृथुस्सूक्ष्मपुच्छश्चाङ्गारकनिभाकृतिः NītiPra. 4. 49 (comm. अनेन ज्ञायते ताम्रफलक इति)

**अङ्गारकपाल** (aṅgāra-kapāla) *n.* potsherd containing live coal चतुष्पथे च शिरसि दर्भेण्ड्वेऽङ्गारकपालेऽन्वक्तानि KauśiSū. 26. 30; अङ्गारकपाले शिग्रुशर्करा जुहोति KauśiSū. 38. 5.

**अङ्गारकपुर** (aṅgāraka-pura) *n.* abode of the planet Mars अकामो वा सकामो वा तत्र तीर्थे मृतो नरः । अङ्गारकपुरं याति देवगन्धर्वपूजितः SkandP. v(3). 148. 24.

**अङ्गारकपूर्व** (aṅgāraka-pūrva) *adj.* (planet) preceded by Mars चन्द्रेऽङ्गारकपूर्वैः कूटज्ञं प्रसूतं कुलाभ्यधिकम् (करोति) LaJāta. 10(3). 2.

**अङ्गारकप्रसिद्धि** (aṅgāraka-prasiddhi) *f.* fame or celebrity of the planet Mars आगमेषु चाङ्गारकप्रसिद्धिर्वर्तते S'aṅkaVi.(Ā.) 210. 5.

**अङ्गारकप्रीत्यर्थम्** (aṅgārakaprīty-artham) *adv.* in order to please the planet Mars अग्निर्मूर्धा °विरूपोऽङ्गारको गायत्री° अङ्गारकप्री(त्यर्थं बलिदाने विनियोगः) BālamBha. i. 23. 26 (*on* i. 11–12)

**अङ्गारकफल** (aṅgāraka-phala) *n.* influence of Mars अङ्गारकफलं केतो राहोरप्यर्कजस्य वै HorāSā. 31. 10.

**अङ्गारकमणि** (aṅgāraka-maṇi) *m.* coral प्रवालोऽङ्गारकमणिर्विद्रुमोऽम्भोधिपल्लवः RājNi. 219. 8.

**अङ्गारकमुख्य** (aṅgāraka-mukhya) *adj.* headed by the planet Mars व्याधिपीडा न तत्रास्ति नास्ति चोरभयं तथा । शन्यंगारकमुख्यानां ग्रहाणां नास्ति पीडनम् SkandP. iii(1). 52. 213.

**अङ्गारकर** (aṅgāra-kara) *adj.* holding or having charcoal in hand कपालोपलभस्मास्थितुषाङ्गारकराश्च ये । ··· वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः SiddhYo. 80. 9.

**अङ्गारकराशि** (aṅgāraka-rāśi) *m.* heap of burning coals गवाक्षस्थेन श्रेष्ठिना तन्निशम्य क्षुल्लकमाहूय अङ्गारकराशौ करो दापितः । तत्सर्वं स्वर्णं जातम् KumāCaSaṁ. 87. 30.

**अङ्गारकर्कटी** (aṅgāra-karkaṭī) *f.* dish prepared with the lump of

dough baked on smokeless fire मण्डकः सूचितः सूक्ष्मः कर्पू(? र्प)रादिषु पाचितः। स एव किञ्चिच्छूलस्तु बुधैः पूपलिका मता। अंगारकर्कटी सैव विज्ञेयाङ्गारपाचिता: MadaPāNi. 69.47; अङ्गारकर्कटी बल्या बृंहणी शुक्रला लघुः। ...पोली MadaPāNi. 69.49; अथाङ्गारेषु संपक्वः सूक्ष्मः सोऽङ्गारमण्डकः। अङ्गारकर्कटी स्थूलाथाप्यपक्वे तु पोलिका KalpaK. 161.260; शुष्कगोधूमचूर्णं तु साम्बु गाढं विमर्दयेत्। विधाय वटकाकारं निर्धूमेऽग्नौ शनैः पचेत्। अङ्गारकर्कटी ह्येषा बृंहणी शुक्रला लघुः Bhāv-Pra.(Bhā.) 6(12).34; BhojanKu. 35.9; 49.1; 49.6.

**अङ्गारकर्करी** (aṅgāra-karkarī) *f.* pot containing live charcoal(?) अङ्गारकर्करी अंगाकडि ApūNā. 42.3.

**अङ्गारकर्मन्** (aṅgāra-karman) *m.* blacksmith (who works with the burning charcoal) स गत्वाङ्गारकर्मान्तं गृहीत्वाग्निमथागमत् MahāBhā. xii. 142.30 (but Nīlakaṇṭha कर्मारगृहान्तम्); Pañcā. 203.3; *n.* act of burning by means of live charcoal (or fire) कर्मतोऽङ्गारकर्म च। ... धर्मार्थी वर्जयेन्नित्यम् MalliC. 7.648; अङ्गारकर्मवनकर्मशकटभाटकस्फोटकदन्तवाणिज्यलाक्षारस-केशविषयन्त्रपीडानिर्लाञ्छनअसतीपोषदवदानसरःशोषः इति कर्मादानानि वर्जयेत् KumāCaSaṁ. 75.1.

**अङ्गारकर्मान्त** (aṅgāra-karmānta) *m. n.* charcoal-kiln, blacksmith's shop पक्षी पर्णान्यास्तीर्य भूतले। ...स गत्वाङ्गारकर्मान्तं गृहीत्वाग्निमथागमत् MahāBhā. xii. 142.30; Pāncā. 203.3.

**अङ्गारकर्षू** (aṅgāra-karṣū) *f.* trench of live charcoals अङ्गारकर्षूपमं सूत्रं तर्हि परिहार्यम् AbhidhKoBh. 376.20 (*on* 6.58)

**अङ्गारकलग्न** (aṅgāraka-lagna) *n.* rising zodiacal sign relating to the planet Mars रविरङ्गारकलग्ने भवति यदा पापवीक्ष्यमाणश्च। अथशरीराभावं प्रश्ने ब्रूयात्तदा नियतम् HāsyCū. 129.17.

**अङ्गारकलङ्कित** (aṅgāra-kalaṅkita) *adj.* having a dark spot made with charcoal चन्द्रच्छद्म समाश्रितः पुनरयं चण्डांशुरेवोद्गतः। ... मध्येऽङ्गारकलङ्कितो विरहिणां दग्धुं मनांस्युद्गतः Subhāṣi. 2000.

**अङ्गारकलाप** (aṅgāra-kalāpa) *m.* mass of charcoal यथामुना रत्नवरेण हीनः। न शोभतेऽङ्गारकलाप एषः। त्वया विनेदं भुवनं तथैव PadmP.(Ra.) 21.154.

**अङ्गारकलिका** (aṅgāra-kalikā) *f.* name of a *surāṅganā* (statue in the *Siṁhāsanadvātriṁśikā*) [*nt*]

**अङ्गारकल्प** (aṅgāra-kalpa) *adj.* like charcoal चन्दनद्रुमसंकाशकायोऽयमधुना मम। जराज्वलननिर्दग्धोऽङ्गारकल्पो भविष्यति PadmP.(Ra.) 22.108.

**अङ्गारकवत्** (aṅgāraka-va(n)t) *adj.* possessing Mars दुष्टग्रहेण गेहिनि तेन कुपुत्रेण किं प्रजातेन। भौमेनेव निजं कुलमङ्गारकवत्कृतं येन ĀryāSaS'a. 293.

**अङ्गारकवत्** (aṅgāraka-vat) *adv.* like live or burning charcoal ĀryāSaS'a. 293.

**अङ्गारकवर्जित** (aṅgāraka-varjita) *adj.* excluding Tuesday त्रयोदश्यां सौम्यदिने सूर्याङ्गारकवर्जितः (? ते)। मम नाम्ना द्विजान् ... समाह्वयेत् BhaviP. 733A.23 (iv. 89.25)

**अङ्गारकवर्ष** (aṅgāraka-varṣa) *m. n.* shower of embers or live charcoal ततोऽस्माकं वधं कर्तुमेता दश दिशः क्षणात्। धूमाङ्गारकवर्षेण वह्निना पिञ्जरीकृताः PadmP.(Ra.) 51.39.

**अङ्गारकवासर** (aṅgāraka-vāsara) *m.* Tuesday [APTE]

**अङ्गारकविधि** (aṅgāraka-vidhi) *m.* rite (for the appeasement) of the planet Mars एतन्मे वद देवेश अङ्गारकविधिं शुभम् BhaviP. 658A.29 (iv. 31.9)

**अङ्गारकविरुद्ध** (aṅgāraka-viruddha) *adj.* opposed to the planet Mars अङ्गारकविरुद्धस्य प्रक्षीणस्य बृहस्पतेः। ग्रहोऽयमपरः पार्श्वे धूमकेतुरिवोत्थितः Mṛcch. 9.33.

**अङ्गारकवृन्दारिका** (aṅgāraka-vṛndārikā) *f.* excellent female Aṅgāraka bird अङ्गारका नाम शकुनयः। तेषां कालिकाः स्त्रियः। कालिकावृन्दारिकाः। अङ्गारकवृन्दारिका; प्राप्नुवन्ति MahāBh. iii. 152.11 (*on* vi. 3.34); iii. 152.26 (*on* vi. 3.34); ततश्चैतदङ्गारकवृन्दारिका इति हि स्यात् Nyās. ii. 438.19 (*on* vi. 3.34)

**अङ्गारकशुद्धि** (aṅgāraka-śuddhi) *f.* avoidance of the bad influence of Mars अङ्गारकशुद्धेरपि चापेक्षितत्वात्तद्राशिभोगेऽपि चान्द्रमासग्रहणमेव CaturCin. iii(2). 25.2.

**अङ्गारकसंयुक्त** (aṅgāraka-saṁyukta) *adj.* [*f.* -ā] falling on a Tuesday शुक्लाङ्गारकसंयुक्ता चतुर्थी जायते यदा। श्रद्धया श्राद्धकृन्मर्त्यो न प्रेतो जायते नरः PadmP. v. 27.44.

**अङ्गारकसंयुत** (aṅgāraka-saṁyuta) *adj.* [*f.* -ā] falling on Tuesday चतुर्थी सा चतुर्थी तु यदाङ्गारकसंयुता। उपोष्या तत्र तत्रैव प्रदेयो विधिवद्गुडः BhaviP. 66B.19 (i. 13.51)

**अङ्गारकसमद्युति** (aṅgārakasama-dyuti) *adj.* having (red) lustre like burning charcoal धरापुत्रस्य वक्ष्यामि लक्षणं चित्रकर्मणि। चतुर्भुजो मेषगमश्चाङ्गारकसमद्युतिः S'ilpaRa. ii. 25.144.

**अङ्गारकसमन्वित** (aṅgāraka-samanvita) *adj.* along with the planet Mars संक्षरेद्रक्तमाद्यिमङ्गारकसमन्वितम् MatsyaP. 93.17.

**अङ्गारकसमप्रभ** (aṅgārakasama-prabha) *adj.* shining (red) like hot charcoal एहि मे भगवन्भौम अङ्गारकसमप्रभ ViṣṇuDhaP. iii. 104.29.

**अङ्गारकसमान** (aṅgāraka-samāna) *adj.* [*f.* -ā] resembling burning or live charcoal (i. e. reddish) अङ्गारकसमानानां भीमानां भीमकर्मणाम्। विन्ध्याद्रावनरकोटीनां सहस्राण्यपतन् द्रुतम् Rāmā. iv. 36.24.

**अङ्गारका** (aṅgāra-kā) *f.* name of a demoness (living in the southern ocean and procuring her victims by drawing them through their shadows) दक्षिणस्य समुद्रस्य मध्ये तस्य तु राक्षसी। अङ्गारकेति विख्याता छायामाक्षिप्य भोजनी Rāmā. iv. 40.26; अङ्गारकेति विख्याता राक्षसी कान्दिगता SkandP. iii(1). 39.55; [AnekāTi. 4.6 gives the meanings इक्षुकाण्ड (sugar-cane) and किंशुकस्य कोरक (the bud of Palāśa tree)]

**अङ्गारकान्ति** (aṅgāra-kānti) *adj.* brilliant or glowing like burning charcoal अङ्गारकान्तिश्च···यस्मात्तस्मादङ्गारकः स्मृतः BhaviP. 658A.23 (iv. 31.6)

**अङ्गारकार** (aṅgāra-kāra) *m.* charcoal-burner अङ्गारकारकव्याध-(v. l. अङ्गारकारव्याधानाम्) काष्ठयन्त्रोपजीविनाम्। योज्या शकारभाषा तु किंचिद्वानौकसी तथा NāṭyaS'ā. 17.55; अङ्गारकारहस्ते चन्दन पतितोऽसि धिग्दैवम् S'ṛṅgāPra. 233.6; किं मुग्ध दग्धमकरोः सुरमेरुगारमङ्गारकार सहकारमकारणेन AnyoMuLa. 32; कल्याणं नः किमधिकमितो जीवनार्थे यदस्माल्लूत्वा वृक्षानहह दहसि भ्रातरङ्गारकार SubhāRaK. 33.21; SaduktiKa. 266.29; SūktiMu. 33.6; उद्यानमण्डनतरो सहकार स त्वमङ्गारकारकरगोचरतां गतोऽसि SūktiMu. 33.16 = S'ārṅgaPa. 1017; आमूलपुष्पितमवेक्ष्य पलाशमन्या ··· इमं शशाप। अङ्गारकारकरगोचर एव पूर्वं पश्चात्त्वमेवमरुणच्छविराशु भूयाः BhikṣāKā. 26.20; तथैवाङ्गारकारादौ पैशाची स्यात् पिशाचवाक् SāhiDa. 333.14; अङ्गारको(? का)राश्च तथा लुब्धका ये···अनुयान्तु कुमारं मे भरतम् ViṣṇuDhaP. i. 203.15.

**अङ्गारकारक** (aṅgāra-kāraka) *m.* charcoal-burner पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत्। मालाकार इवारामे न यथाङ्गारकारकः MahāBhā. v. 34.18; ParāSm. 1.62; SūktiRa. 157.2; अङ्गारकारकव्याधकाष्ठयन्त्रोपजीविनाम्। योज्या शकारभाषा तु किंचिद्वानौकसी तथा NāṭyaS'ā. 17.55; अङ्गारकारकः कश्चिदादाय पयसो दृतिम्। जगाम कर्तुमङ्गारानरण्ये TriṣaS'aPuC. i. 4.836; PariPar. 2.431; अङ्गारकारको यथा समूलं वृक्षमुत्पाट्य तत्राग्निं दत्वा अङ्गारान् करोति ViraMi.(Rājanīti.) 477.25.

**अङ्गारकारवत्** (aṅgārakāra-vat) *adv.* like a charcoal-burner हरेच्च कर्षकाद्भागं यथा नष्टो भवेन्न सः। मालाकार इव ग्राह्यो भागो नाङ्गारकारवत् S'ukraNī. 4(2).111.

**अङ्गारकाराय** (aṅgārakārāya-) [*denom.*] to act or behave like a charcoal-burner तापस्तत्क्षणमाहितासु बिसिनीष्वङ्गारकारायते SubhāRaK. 22.1.

**अङ्गारकारिन्** (aṅgārakār-in) *m.* charcoal-burner वृक्षानङ्गारकारीव मैनान्धाक्षीः समूलकान् MahāBhā. ii. 55.16; जलेन निखिलेनापि तस्य ह्यङ्गारकारिणः। तृषाग्नितैलवत्रैव प्रशशाम मनागपि PariPar. 2.435.

**अङ्गारकार्ष्ण्य** (aṅgāra-kārṣṇya) *n.* blackness of the charcoal किन्त्वसद्भूत एवैष (संकल्पः) सुचिकित्स्यस्तदा भवेत्। अकृत्रिमं चेत्संसारमलमङ्गारकार्ष्ण्यवत् YogVā. iv. 54.34.

**अङ्गारकाल** (aṅgāra-kāla) *adj.* [*f.* -ī] dark like charcoal (कंसारातेः) आस्वाद्यासुं (वक्त्रेन्दुं) त्वमपि विषमाभङ्गुराङ्गारकाली तुङ्गं शृङ्गि ध्वनसि यदिदं तत्तु दुःखाकरोति UjjvaNīMa. 284.11.

**अङ्गारकावाहन** (aṅgārakāvāhana) *n.* invocation of the (planet) Mars अग्निर्मूर्धा विरूपोऽङ्गारको गायत्री अङ्गारकावाहने विनियोगः BālamBha. i. 611.27 (*on* 1.308)

**अङ्गारकाशन** (aṅgārakāśana) *m.* name of a leader of the Gaṇas अङ्गारकाशनः (इत्याद्याः ··· वृन्दशस्तं समावृत्य जग्मुः सोमं गणैर्वृताः) LiṅgaP. i. 72.81.

**अङ्गारकाष्टक** (aṅgārakāṣṭaka) *n.* peformance of the Aṅgāraka-vrata for eight times भक्त्या यस्तु पुनः कुर्यादेवमङ्गारकाष्टकम्। चतुरो वाथ वा तस्य यत्पुण्यं तद्वदामि ते MatsyaP. 72.41; CaturCin. ii(1). 509.19.

**अङ्गारकाष्टमी** (aṅgārakāṣṭamī) *f.* eighth lunar day falling on Tuesday अङ्गारकाष्टम्यामङ्गारकुण्डे स्नात्वा मङ्गलेशदर्शनम् ViraMi.(Tīrtha.) 289.15.

**अङ्गारकाष्ठ** (aṅgāra-kāṣṭha) *n.* burnt wood अङ्गारकाष्ठपर्यन्तं वनान्तादुपयुज्यते PauṣkS. 38.80; (दधानाम्) अङ्गारकाष्ठेन समानां च महातनुम्। ··· ताम् (राक्षसीम्) अवेक्ष्य YogVā. iii. 78.20.

**अङ्गारकासुर** ( aṅgārakāsura ) *m.* demon Aṅgāraka किं चाङ्गारवतीं नाम कन्यां त्रैलोक्यसुन्दरीम् । अङ्गारकासुरसुतां शीघ्रं भार्यामवाप्स्यसि KathāSaSāg. ii. 3. 39.

**अङ्गारकित** ( aṅgārak-ita ) *adj.* [DEBRU. 326; GaṇPā. 101. 33] glowing like (*lit.* having) live charcoal अङ्गारकितमिव पुष्परागरश्मिभिः ... राजद्वारमगात् HarṣaC. 96. 7; मतङ्गजस्याङ्गमङ्गारकितमिव शी( नश ? )नैरसृग्भिः ... श्रवणपल्लवमस्रोप( ?पा )लक्षयम् AvantiKa. 170. 20; किंचिदङ्गारकिततनुतया प्रथमाभिलक्ष्यधूमादनन्तरमुद्यदल्पाल्पमदनदहनज्वालेष्विव किंशुकवनेषु S'ṛṅgāMañ.(Bho.) 20. 23; अङ्गारकितः पलाशः GaṇRa. 7. 390 (414)

**अङ्गारकीर्ति** ( aṅgāra-kīrti ) *f.* name of a demoness राक्षसी । अङ्गारकेति ( v. l. अङ्गारकीर्ति ) विख्याता Rāmā. iv. 40. 26.

**अङ्गारकुण्ड** ( aṅgāra-kuṇḍa ) *n.* name of a holy reservoir of water अङ्गाराष्टम्यामङ्गारकुण्डे स्नात्वा मङ्गलेशो द्रष्टव्यः TristhaSe. 235. 14; VīraMi. (Tīrtha.) 289. 15.

**अङ्गारकुण्डवत्** ( aṅgārakuṇḍa-vat ) *adv.* like the fire-place (i. e. reddish) ( महागृध्रः ) अङ्गारकुण्डवच्चक्षुं विदार्याभक्षयच्चमूम् BrahmāṇḍP. iii. 24. 41.

**अङ्गारकुष्ठक** ( aṅgārakuṣṭha-ka ) *m.* medicinal plant called Himāvalī हिमावली च हृद्धात्री कुष्ठघ्नो रङ्गकुष्ठकः ( v. l. °गा( ? ङ्गा )रकुष्ठकः ) RājNi. 346. 17.

**अङ्गारकूट** ( aṅgāra-kūṭa ) *m.* heap of burning charcoals एवमेकत्र संयोज्यमूर्ध्वमङ्गारकूटवत् । साङ्गं पाणितले न्यस्य PauṣkS. 32. 75.

**अङ्गारकृत्** ( aṅgāra-kṛt ) *m.* charcoal-burner तज्जीवोऽङ्गारकृत्तुल्यो वाप्यादिजलसन्निभाः ।···भोगाः PariPar. 2. 442.

**अङ्गारकेतु** ( aṅgāra-ketu ) *m.* name of a Vidyādhara अंगारकेतुना तेन वीक्षिताश्च दुरात्मना PadmP.(Ra.) 51. 38.

**अङ्गारकेतुक** ( aṅgāraketu-ka ) *m.* name of a Vidyādhara तदासद्दुःखचिन्तास्य: संजातोऽङ्गारकेतुकः PadmP.(Ra.) 51. 34.

**अङ्गारकेश** ( aṅgārakeśa ) *m.* name of a S'ivaliṅga installed by Mars ग्रहपीडाभावकामस्तु गङ्गायां स्नात्वाङ्गारकेशमर्चयेत् TristhaSe. 231. 12.

**अङ्गारकेशान** ( aṅgārakeśāna ) *m.* name of a S'ivaliṅga installed by Mars अंगारकचतुर्थ्यां ये स्नात्वोत्तरवहांभसि । अभ्यर्च्यांगारकेशानं नमस्यंति नरोत्तमाः । न तेषां ग्रहपीडा च कदाचित्क्वापि जायते SkandP. iv. 17. 15.

**अङ्गारकेशाभरण** ( aṅgāra-keśābharaṇa ) *adj.* having hair-ornaments (brilliant) like burning charcoal माद्रीपुत्रौ महारथौ । शृङ्गारवेषाभरणौ ( v. l. अंगारकेशाभरणौ ) MahāBhā. iv. 66. 7.

**अङ्गारकेश्वर** ( aṅgārakeśvara ) *m.* name of a S'ivaliṅga installed by Mars प्रणम्याङ्गारकेश्वरम् AgniP. 116. 29; संस्थाप्य लिङ्गं विधिना स्वनाम्नाङ्गारकेश्वरम् SkandP. iv. 17. 12; v (2). 43 colophon; रामेश्वरस्याङ्गारकेश्वरस्य च नमस्कारे प्रत्येकं पितृस्वर्गनयनं फलम् ViraMi.(Tīrtha.) 448. 23.

**अङ्गारकेश्वरतीर्थ** ( aṅgārakeśvara-tīrtha ) *n.* name of a Tīrtha [PW]

**अङ्गारकोटर** ( aṅgāra-koṭara ) *n.* cavity in a charcoal ( बभ्रूवासितयामिनी ) अङ्गारकोटरघना सौषुप्तपदसुन्दरी YogVā. iii. 77. 15.

**अङ्गारकोष्ठक** ( aṅgāra-koṣṭhaka ) *adj.* having a cavity for charcoal अङ्गारकोष्ठकस्तम्भं सपिधानं कारयेत् CaraS. i. 14. 46; AṣṭāSaṁ. i. 134. 13 (1. 26)

**अङ्गारकोष्ठिका** ( aṅgāra-koṣṭhikā ) *f.* kind of closed (furnance-like) fire-vessel useful for alchemic processes अङ्गारकोष्ठिका नाम राजहस्तप्रमाणका । द्वादशाङ्गुलविस्तारा चतुरस्रा प्रकीर्तिता RasPraSu. 10. 30.

**अङ्गारकोष्ठी** ( aṅgāra-koṣṭhī ) *f.* kind of closed (furnance-like) fire-vessel useful for alchemic processes भवेदङ्गारकोष्ठीयं खराणां सत्त्वपातनी RasRaSa. 10. 39.

**अङ्गारक्षयार्थिन्** ( aṅgārakṣayārth-in ) *adj.* desirous of extinguishing fire प्रयच्छत्युत्तमानन्दं क्षीयमाणं मनः क्रमात् । काष्ठक्षीणाङ्गकाङ्गारो यथाङ्गारक्षयार्थिनः ( पुरुषस्य ) YogVā. iii. 111. 43.

**अङ्गारक्षेत्र** ( aṅgāra-kṣetra ) *n.* region of Mars आदित्यस्योच्चः तस्यैव दशमे भागेऽत्युच्चः अङ्गारक्षेत्रम् ViṣṇuDhaP. ii. 167 (292B. 13)

**अङ्गारखण्ड** ( aṅgāra-khaṇḍa ) *m. n.* piece of live charcoal सीता । अङ्गारखण्डं हस्तेनादत्ते PrasaRā. 6. 38 (1)

**अङ्गारखण्डक** ( aṅgārakhaṇḍa-ka ) *m. n.* piece of live charcoal आर्य, अनुपपन्नमिदं यत्किल तरुशिखरमङ्गारक(v. l. खण्डक)मुद्गिरति PrasaRā. 6. 38A (1)

**अङ्गारगन्धर्व** ( aṅgāra-gandharva ) *m.* name of a Gandharva अङ्गारपर्णं गन्धर्वम् ( v. l. अद्यमंगारगंधर्वः ) MahāBhā. i. 158. 12.

**अङ्गारगर्ता** ( aṅgāra-gartā ) *f.* name of a river [PW]

**अङ्गारगर्भ** ( aṅgāra-garbha ) *adj.* containing burning charcoal अङ्गारगर्भकरमिन्दुमिमं पिधाय यादृच्छिकानुगमने···कुरु मेघ रक्षाम् BhikṣāKā. 33. 8.

**अङ्गारगर्भित** ( aṅgāra-garbhita ) *adj.* laden with burning charcoals खगो वापि मृगो वापि सरन्ध्रः संपुटात्मकः । अङ्गारगर्भिते( तः ) पिण्डेनान्वितो धूपमुद्गिरेत् Mānaso. iii. 19. 1703.

**अङ्गारग्रन्थि** ( aṅgāra-granthi ) *m.* plant called Himāvalī हिमावली···। ग्रन्थिलोऽङ्गारग्रन्थिः स्यात् KalpaK. 178. 410.

**अङ्गारग्रन्थिक** ( aṅgāragranthi-ka ) *m.* plant called Himāvalī हिमावली च···। अङ्गारग्रन्थिको ग्रन्थी ग्रन्थीलो वसुसंज्ञकः RājNi. 346. 17.

**अङ्गारग्रसन** ( aṅgāra-grasana ) *n.* swallowing of burning charcoals ( अस्याः ) दृशं दृष्ट्वा प्राणेष्वपि विगततृष्णैरविरतं चकोरैरङ्गारग्रसननियमः सोऽपि विधृतः TārāS'a. 43.

**अङ्गारचक्र** ( aṅgāra-cakra ) *n.* fire-disc, circle of fire आलोचयामि ··· । अङ्गारचक्रमुपशान्तकरालम् BhikṣāKā. 33. 9.

**अङ्गारचतुर्थी** ( aṅgāra-caturthī ) *f.* fourth lunar day (in the dark half) falling on Tuesday अङ्गारतीर्थं तत्रैव ··· तत्राङ्गारचतुर्थ्यां तु स्नात्वा निष्पापतामियात् SkandP. iv. 84. 74.

**अङ्गारचय** ( aṅgāra-caya ) *m.* mass of cinders or embers ज्वलद्भिरङ्गारचयैर्नभस्तलं ववर्ष गाढं सह शोणितास्थिभिः KumāSaṁ. 15. 21; रौरवो हि ··· तत्राङ्गारचयोपेतं कृतं च धरणीसमम् MārkP. 10. 82; PadmP.(Ra.) 21. 153; RāmC. 18. 28.

**अङ्गारचित** ( aṅgāra-cita ) *adj.* A filled with charcoals यस्योष्णमङ्गारचितं यथैव दह्येत धूप्येत शिरोऽक्षिनासम् SuśruS. vi. 25. 6; RugVi. 60. 3; अश्वत्थपत्रखल्लम् ··· । अङ्गारचितं निदध्याच्छ्रवणोपरि ( गृह्णाति वेदनाम् ) SiddhYo. 59. 7; B containing pieces of charcoal इष्टकाः···अस्थ्यङ्गारचिताश्च PañcaRā. (Ha.) i. 11. 22.

**अङ्गारचुम्बित** ( aṅgāra-cumbita ) *adj.* kissed ( touched ) by live charcoal तत्संनिधौ तदधुना हृदयं मदीयमङ्गारचुम्बितमिव व्यथमानमास्ते MālaMā. 1. 174 = AlaṅkāSa. 145. 12.

**अङ्गारचूडक** ( aṅgāra-cūḍaka ) *m.* sparrow or dove (*lit.* a bird having crest like a live charcoal) चटकोऽङ्गारचूडकः CaraS. i. 27. 52 (1941 Ed.); कपोतोऽङ्गारचूडकः । ··· प्रतुदा द्विजाः AṣṭāSaṁ. i. 33. 18 (1. 7); दार्वाघाटो भरद्वाजो व्याघाटस्ताम्रमस्तकः । प्रतुदेशस्तीक्ष्णतुण्डः कथ्यतेऽङ्गारचूडकः AbhidhāMañ. 166. 2.

**अङ्गारचूर्ण** ( aṅgāra-cūrṇa ) *n.* A (black) charcoal powder अङ्गारचूर्णोत्करसंनिकाशैः फलैः ··· जम्बुद्रुमाणां प्रविभान्ति शाखा निलीयमाना इव षट्पदौघैः Rāmā. iv. 27. 27; अङ्गारचूर्णेन लोहचूर्णेन वा राक्षसाणां निपातनम् IśānS'iPa. i. 43. 82(5); B powder of burning charcoal अङ्गारचूर्णनिकरोपमैर्दिनकरकिरणैर्दह्यमानशरीरेषूदकमभिलषत्सु ··· हस्तिनः ··· विचरन्ति Hastyāyur. 195. 27 (2. 13)

**अङ्गारज** ( aṅgāra-ja ) *adj.* born in the Aṅgāra country ददुरस्मै नृपाः प्राच्यकलिङ्गाङ्गारजान् गजान् MahāP. 29. 43.

**अङ्गारज** ( aṅgāraja ) *m.* name of one of the territories in Ketumāla Varṣa धूमजन्म अङ्गारज जीवलौकिताः ··· एते जनपदास्तत्पर्वतस्था नदीः पिबन्ति VarāP. 83 (361. 5)

**अङ्गारजन्य** ( aṅgāra-janya ) *adj.* produced from cinders or live charcoals अङ्गारजन्यमौष्ण्यं शान्तेष्वप्यङ्गारेषु जलेऽनुवर्तते NyāyMāVi. 65. 15 (*on* ii. 1. 2)

**अङ्गारजीविका** ( aṅgāra-jīvikā ) *f.* means of subsistence depending on fire or live charcoals ठठारत्वेष्टकापाकाविति ह्यङ्गारजीविका YogS'a. 3. 101.

**अङ्गारतप्त** ( aṅgāra-tapta ) *adj.* heated on live charcoals विधूमाङ्गारतप्तेषु स्वभ्यक्तः स्विद्यते सुखम् CaraS. i. 14. 28 (1941 Ed.); शूल्यमङ्गारतप्तं च मांसं श्लेष्मामये हितम् KāśyaS. 360A. 8.

**अङ्गारता** ( aṅgāra-tā ) *f.* A the state of being a charcoal प्राप्तान्यङ्गारतां दृष्ट्वा रत्नानि नरनायकः BṛKathāK. 56. 45; काष्ठस्याङ्गारता नाम्नेः S'ivaP. vii. 31. 48 (536B. 9); PārśvC. 6. 181; B the state of being a live charcoal ( हर्षः ) अन्तर्गतेन शोकशिखिनाङ्गारतामिव नीयमानम् ··· कुरङ्गमद्राक्षीत् HarṣaC. 212. 2; पतितः प्लवङ्ग सोऽङ्गारतां प्राप्य तदैव शान्तः RāmC. 23. 20; HariVi. 4. 39.

**अङ्गारताप** ( aṅgāra-tāpa ) *m.* heat of live coals अङ्गारतापसंतप्तगर्भभूवेश्मचारिणः । ··· न दोषः ···जायते AṣṭāHṛ. i. 3. 16.

**अङ्गारतापित** ( aṅgāra-tāpita ) *adj.* heated on embers यत्तैलं च्यवते तस्मात्खल्वादङ्गारतापितात् SiddhYo. 59. 8.

**अङ्गारतीर्थ** ( aṅgāra-tīrtha ) *n.* name of a Tīrtha अङ्गारतीर्थं तत्रैव अङ्गारेश्वरसंनिधौ SkandP. iv. 84. 74.

**अङ्गारत्व** ( aṅgāra-tva ) *n.* the state of being a burning charcoal प्रकृतेऽप्यङ्गारत्वाचन्द्रमसः कथमाहुतिफलम् AṇuBh. 172. 13 (*on* iii. 1. 7)

**अङ्गारदग्ध** ( aṅgāra-dagdha ) *adj.* roasted or heated on charcoal (fire) अङ्गारदग्धं सुगतं सिन्धुमुष्णाम्बुना पिबेत् AgniP. 282. 30.

**अङ्गारदाहन्याय** ( aṅgāradāha-nyāya ) *m.* the manner of burning wood for charcoal अवशिष्टं शरीरशेषं ज्वलद्दारुमध्ये निक्षिप्य वर्धक्यादिकृताङ्गार-दाहन्यायेन मृद्भिराच्छाद्यागन्तव्यम् HārLa. 144. 11.

**अङ्गारदाहिन्** ( aṅgāradāh-in ) *adj.* who burns ( something ) with burning coals आगारदाही [v. l. अङ्गारदाही] गरदः कुण्डाशी सोमविक्रयी VāyuP. ii. 21. 33.

**अङ्गारदेव** ( aṅgāra-deva ) *m.* name of a goldsmith अङ्गारदेवनामास्य कलादः कुशलः क्षितौ BṛKathāK. 105. 265.

**अङ्गारदेश** ( aṅgāra-deśa ) *m.* birth-place of Mars विन्ध्य अङ्गारदेशो मध्यदेशो बुधः स्मृतः JaimiGS. ii. 9. 19.

**अङ्गारदोष** ( aṅgāra-doṣa ) *m.* ( Jain ) fault of eating food with avidity (as it acts like ember to good conduct) [JainLa.]

**अङ्गारधानिका** ( aṅgāra-dhānikā ) *f.* brazier, portable fire-pan अङ्गारधानिकाङ्गारशकट्यपि हसन्त्यपि AmaK. 1765; DharK. 711; 1417; ParyāS'aRa. 2. 444.

**अङ्गारधानी** ( aṅgāra-dhānī ) *f.* brazier, portable fire-pan तस्मिन् ... निर्विशङ्कसमालिङ्ग्यमानाङ्गारधानीतनूनपादि परिणमति पयोधरसमये GadyCin. 106. 4; ParyāRaMā. 1383; VisvaPra. 70. 175; MediK. 70. 175.

**अङ्गारधारण** ( aṅgāra-dhāraṇa ) *n.* (a vow involving) carrying live coals (on the head) 'तेषामेवैताम्' इति वाक्यं शिरसि अङ्गारधारणरूपमुण्डका-ध्ययनाङ्गभूतव्रतमाचष्टे PūrvottaVāNaMā. 312. 5; 316. 5; 323. 1.

**अङ्गारधारिका** ( aṅgāra-dhārikā ) *f.* brazier, portable fire-place [PW]

**अङ्गारधूप** ( aṅgāra-dhūpa ) *m.* aromatic smoke proceeding from (incense on) live coals युक्तमङ्गारधूपेन हृद्येन सुरभीकृतम् AṣṭāHṛ. iv. 8. 83.

**अङ्गारनदी** ( aṅgāra-nadī ) *f.* river of live coals अधुना परिमुच्य तां मदात् कथमङ्गारनदीं विगाहसे PraboCan. 6. 7; अङ्गारनद्याम् ... दूतैर्यमस्य क्रिय-माणबाधनं विचार्य को वा विरतिं न याति SarvaVeSāSaṁ. 34.

**अङ्गारनामन्** ( aṅgāra-nāman ) *n.* name Aṅgāra ततोऽङ्गारनाम्ना स सर्वलोकेषु गीयते SkandP. iv. 17. 14.

**अङ्गारनिकर** ( aṅgāra-nikara ) *m.* heap of burning coals निदाघे चण्डांशौ किरति परितोऽङ्गारनिकरान् BhāmiVi. 1. 41.

**अङ्गारनिचय** ( aṅgāra-nicaya ) *m.* **1** heap of embers ददर्शाङ्गारनिचयं रुरोद भृशदुःखितः PadmP. iii. 11. 70; iv. 110. 109; **2** name of one of the eleven hells of the *kumbhīpāka* type तद्वत्कुम्भीपाकाङ्गारनिचयश्वभक्षणासृक्पूय-पङ्कक्रकचपाटनतप्तलोहतप्तवालुकास्थिभङ्गसूकरस्वमांसभक्षणावाङ्मुखलम्बनानि कुम्भी-पाकप्रधानान्येकादश ( नरकाणि ) ĪśānS'iPa. ii. 17. 19(3)

**अङ्गारनिभ** ( aṅgāra-nibha ) *adj.* like burning coal प्रतिमासमागताङ्गार-निभनेत्रनिकरः YaśasCam. i. 161. 3; कृष्णोऽङ्गारनिभो धूम्रः सोमाद्याः स्युर्नवग्रहाः ĪśānS'iPa. i. 27. 39.

**अङ्गारनिरूहण** ( aṅgāra-nirūhaṇa ) *n.* taking aside the live coals आदेवयज्ञं वह इत्यङ्गारनिरूहणम् BhaṭṭDī. iii. 208. 11 (*on* x. 1. 10)

**अङ्गारनिर्मल** ( aṅgāra-nirmala ) *adj.* pure like burning coal तत्रै-वाङ्गारकं तीर्थं कुण्डं चाङ्गारनिर्मलम् SkandP. iv. 97. 67.

**अङ्गारपक्व** ( aṅgāra-pakva ) *adj.* cooked on coals अङ्गारपक्वास्तु हसन्त्यादौ पक्वाः BhojanKu. 55. 17.

**अङ्गारपतन** ( aṅgāra-patana ) *n.* shower of burning charcoals कुनी-तिस्त्वत्तश्चेन्न किमु शशिनोऽङ्गारपतनम् MohaRāPa. 3. 16.

**अङ्गारपरिपाचित** ( aṅgāra-paripācita ) *adj.* roasted on burning charcoals ( मांसम् ) तदेव शूलिकाप्रोतमङ्गारपरिपाचितम् SuśruS. i. 46. 355.

**अङ्गारपर्ण** ( aṅgāra-parṇa ) *m.* name of a Gandharva (also called Citraratha) अङ्गारपर्णं निर्जित्य गङ्गाकूलेऽर्जुनस्तदा MahāBhā. i. 2. 86; i. 158. 12; ViṣṇuDhaP. i. 83. 51; *n.* name of a forest (so called after a Gandharva of that name) अङ्गारपर्णमिति च ख्यातं वनमिदं मम MahāBhā. i. 158. 13.

**अङ्गारपर्णक** ( aṅgāraparṇa-ka ) *m.* name of a demon ययौ शुक्रं बृह-स्पतिः । अश्विनौ संयतौ तत्र दैत्यमङ्गारपर्णकम् PadmP. vi. 6. 67.

**अङ्गारपर्णता** ( aṅgāraparṇa-tā ) *f.* the state of being (called) Aṅgāra-parṇa जितोऽहं पूर्वकं नाम मुञ्चाम्यङ्गारपर्णताम् MahāBhā. i. 158. 35.

**अङ्गारपर्णी** ( aṅgāra-parṇī ) *f.* name of a plant *Cleodendron siphonanthus* फञ्जिकाङ्गारपर्ण्यपि ParyāMu. 15. 20; स्यात् ब्राह्मण्यंगारपर्ण्यपि AbhidhāMañ. 93. 10.

**अङ्गारपांशुवर्ष** ( aṅgārapāṁśu-varṣa ) *n.* shower of burning charcoals and dust अङ्गारपांशुवर्षं च शस्त्रवर्षं च भारत MahāBhā. iii. 84*; MatsyaP. 233. 3.

**अङ्गारपांसुवर्ष** ( aṅgārapāṁsu-varṣa ) *n.* shower of burning charcoals and dust अङ्गारपांसुवर्षेण नगरं तद्विनश्यति ViṣṇuDhaP. ii. 138. 3.

**अङ्गारपांसुवृष्टि** ( aṅgārapāṁsu-vṛṣṭi ) *f.* shower of burning charcoals and dust अङ्गारपांसुवृष्टेस्तु नगरं तद् विनश्यति AVPari. 70[2). 18. 3.

**अङ्गारपाचित** ( aṅgāra-pācita ) *adj.* cooked or roasted on charcoal fire तावद्गर्गोऽत्र भक्ष्याणां ख( ? स्व )दते श्लाघ्यतेऽपि च । उष्णोष्णाः सर्पिषि स्नाता यावन्नाङ्गारपाचिताः YaśasCam. i. 517. 4.

**अङ्गारपाटलाक्ष** ( aṅgārapāṭalākṣa ) *adj.* having reddish eyes like burning charcoals ( भण्डः ) अङ्गारपाटलाक्षश्च BrahmāṇḍP. iii. 29. 9.

**अङ्गारपातन** ( aṅgāra-pātana ) *m.* name of a hell ( दण्डधरः ) श्रीदेवी-समयद्रुहः ... अङ्गारपातने । ...पातयत्वाज्ञया तस्याः BrahmāṇḍP. iii. 33. 61.

**अङ्गारपात्र** ( aṅgāra-pātra ) *n.* portable fire-vessel हसन्ती शाकिनी-भेदे मल्लिकाङ्गारपात्रयोः AnekāTi. 3. 279.

**अङ्गारपात्रधारण** ( aṅgārapātra-dhāraṇa ) *n.* carrying a vessel containing live charcoal (on the head) शिरस्यङ्गारपात्रधारणं शिरोव्रतम् VedāntKa. 397. 21 (*on* iii. 3. 3); VedāntKau. 300. 18 (*on* iii. 3. 3); S'ivārkaMaDī. ii. 285. 8 (*on* iii. 3. 3)

**अङ्गारपात्रिका** ( aṅgāra-pātrikā ) *f.* portable fire-vessel हसन्त्यङ्गार-पात्रिका ParaNā. 688; KośaKaTa. 1. 6558.

**अङ्गारपुञ्ज** ( aṅgāra-puñja ) *m.* heap of burning charcoals भृज्ये( ज्जे )-दङ्गारपुञ्जेषु शुण्ठकानमृतोपमान् Mānaso. iii. 13. 1435.

**अङ्गारपुञ्जक** ( aṅgārapuñja-ka ) *m.* heap of burning charcoals ( खण्डानि ) एकद्वित्रिदिनान्तेषु भृष्टान्यङ्गारपुञ्जके Mānaso. iii. 13. 1514.

**अङ्गारपुञ्जाभ** ( aṅgārapuñjābha ) *adj.* resembling (in brilliance) a heap of burning charcoals तस्मादङ्गारपुञ्जाभो बालकः समजायत VāmaP. 70. 40.

**अङ्गारपुञ्जायित** ( aṅgārapuñjāy-ita ) *adj.* acting like a heap of live charcoals यत्रार्कायितमिन्दुना सरसिजैरङ्गारपुञ्जायितम् S'ṛṅgāTi.(Ru.) 1. 67= SūktiMu. 57. 28.

**अङ्गारपुष्प** ( aṅgāra-puṣpa ) *m.* *Terminalia catappa* [PW], the plant *Iṅgudī* [MW]

**अङ्गारपूर** ( aṅgāra-pūra ) *m.* flood of burning coals प्रत्यग्रोत्पातवाता-स्त्वचि मुमुचुरिवापारमङ्गारपूरम् S'rīKaC. 19. 59.

**अङ्गारपूरिका** ( aṅgāra-pūrikā ) *f.* small cake baked directly on fire [PW]

**अङ्गारपूर्ण** ( aṅgāra-pūrṇa ) *adj.* [*f.* -ā] filled with burning coals ( शय्याम् ) हसन्तिकाभिरङ्गारपूर्णाभिस्तां च ... । परिवार्य CaraS. i. 14. 54 (1941 Ed.); ( जीवाः ) अधोमुखा गर्तायामङ्गारपूर्णायां निखाता दावाग्निना यत्रोपज्वाल्यन्ते सोऽवीचिः BālaKrī. ii. 85. 19 (*on* 3. 220(? 226)); Rāvaṇā. 8. 11; शिरस्यङ्गार-पूर्णपात्रधारणं शिरोव्रतम् VedāntKa. 399. 26 (*on* iii. 3. 4); BhojanKu. 55. 14.

**अङ्गारपोलिका** ( aṅgāra-polikā ) *f.* cake baked on burning coals अङ्गारपोलिकाः शस्ताः किञ्चित्कृष्णत्वमागताः Mānaso. iii. 13. 1382; अङ्गारपोळी-( ? लि )काः शस्ताः( ? स्ता ) विधूमाङ्गारपाचिताः BhojanKu. 35. 12; 35. 15.

**अङ्गारप्रकर** ( aṅgāra-prakara ) *m.* mass of burning coals अङ्गारप्रकरान् किरन्निव रविर्ग्रीष्मे तपत्यम्बरे SārṅgaPa. 776.

**अङ्गारप्रखर** ( aṅgāra-prakhara ) *adj.* hot like burning coals अङ्गार-प्रखरैः करैः कवलयन्नेतन्महीमण्डलं मार्तण्डोऽयमुदेति BhāmiVi. 2. 75; RasGaṅ. 368. 1.

**अङ्गारप्रदग्ध** ( aṅgāra-pradagdha ) *adj.* scorched by burning coals एते...अङ्गारप्रदग्धाश्च यमदूतैश्च ताडिताः BrahmVaiP. ii. 31. 41.

**अङ्गारप्रभ** ( aṅgāra-prabha ) *m.* name of a king of Madra मद्रेषु ... । चन्द्रप्रभाख्यस्तत्रासीद्राजाङ्गारप्रभात्मजः KathāSaSāg. viii. 1. 17.

**अङ्गारप्रमुख** ( aṅgāra-pramukha ) *adj.* headed by (substance like) extinguished charcoal ( रेखा ) चिताभस्मेष्टकाङ्गारप्रमुखैश्चाभिचारके ( कार्या ) MṛgendraT. ii. 8. 40.

**अङ्गारप्रवर्षण** ( aṅgāra-pravarṣaṇa ) *n.* shower of burning coals ( असौ न्यग्रोधस्यान्तिकं ययौ ) न कालाग्निभयं तत्र न चाङ्गारप्रवर्षणम् BrahmP. 52. 19.

**अङ्गारप्राय** ( aṅgāra-prāya ) *adj.* mostly consisting of burning coals महति गर्ते...भगवानङ्गारप्रायः...हव्यवाहनः JānaPa. 3. 52 (27)

**अङ्गारप्रासन** ( aṅgāra-prāsana ) *n.* putting of burning coals गृहपत्या-हवनीयेऽङ्गारप्रासनम् KātyS'S. xii. 1. 16.

**अङ्गारभक्ष** ( aṅgāra-bhakṣa ) *m.* *Cakora* bird (*lit.* eater of burning coal) चकोरः...अङ्गारभक्षः KalpaK. 333. 145.

14.9; गुणान्वयानुपपत्त्या हि मत्वर्थलक्षणाङ्गीक्रियते MīmāNyāPra. 198.18; दैवमात्राधीनं फलमित्यङ्गीकुर्वन्ति VīraMi. 373.13 (*on* 1.350); यथाकथंचिदङ्गीकुरु वात्र व्यञ्जनाव्यापारम् RasGaṅ. 18.1; अजद्रव्यसंयोगः श्रुत्याङ्गीक्रियते Yatīndra-Dī. 96.2; **1 E** to own, to claim as one's, to possess, to have control over अंगीकुरुष्व कंदर्पम् BrahmāṇḍP. iii. 40.39; शिवः। अङ्गीचकार तां भार्याम् BrahmāṇḍP. iii. 30.94; तां मुक्त्वा गजगामिनीम्। काञ्चिन्नाङ्गीकरिष्यामि MārkP. 23.21; वलीपलितनिर्मुक्तं पूर्वभार्याप्सराः सती। अङ्गीकरोति भर्तारं परिज्ञाय रणे हतम् YogVā. iii. 34.20; महापापिनं मत्वा न मामङ्गीकुर्यात् (रामः) MahāViC. 5.51 (288.6); ततो नारायणः। … लक्ष्मीमङ्गीचकार ह PadmP. iii. 10.14; कश्चित् … देवकन्याम् … नांगीचकार चतुरो व्रतनाशभीतः DevīBhāP. iii. 15.15; इत्युक्ता तेन सा राज्ञा तथेत्यङ्गीचकार तम् KathāSaSāg. ii. 3.61; अङ्गीकरोति तन्वङ्गी सा विलासमयं वयः VikraDeC. 8.5; अङ्गीकरोषि यदि तत्तव नन्दनाद्यैर्लब्धान्वयं स्वमपि नन्वयमातनोतु NaiṣC. 11.45; या तुभ्यं रोचते तामङ्गीकुरु MādhavāĀ. 217 (3); एनं पुरः कातरं कल्याणीभिरलं कृशोदरि दृशोर्भङ्गीभिरङ्गीकुरु UjjvaNīMa. 200.7; नवोढा न वोढारमङ्गीकरोति PadyāTa. 125; कथमिह कनकनिभाङ्गीमेनामङ्गीकरोमि तन्वङ्गीम् VasaTi. 16.12; **2** to assume, to possess, to have, to include (with inanimate subject) आकारवर्णावयवैः संसृष्टेषु गवादिषु। शब्दः प्रवर्तमानोऽपि न तानङ्गीकरोत्यसौ VākyaPa. 2.156; न्यग्रोधपत्रसमताम् … अङ्गीचकार पुनरप्युदरं कृशाङ्ग्याः RāmāCam. 1.27; तपोभङ्गश्चिरमङ्गीचकार (विश्वामित्रम्) RāmāCam. 1.97 (8); रे रे भुजाः … अङ्गीकुरुध्वमचिराच्च विदेहपुत्रीवक्षोजचन्दनरजःपरिधूसरत्वम् PrasaRā. 1.54; अङ्गीकरोति प्रतिबिम्बिताङ्गः शालो यदीयः परिखापयोऽन्तः। … वार्द्धिभ्रमेणाहिपतेरभिक्षम् VasaViKā. 2.44; कान्तः कान्तकरः परः प्रकृतिमप्यङ्गीकरोत्येष यः (तिलकः) BhāvŚ. 39; वेणी…अङ्गीकरोति गुणमैन्दवमास्यमस्याः ŚārṅgaPa. 3378; वक्त्रारविन्दं तव … मम हृदयतडागे सङ्गमङ्गीकरोतु StavMā. 136.22; अङ्गीकुर्वन्ति भङ्गीमखिलगिरिगणास्तप्तजाम्बूनदीयाम् PadyāTa. 23; चन्दनविटपी। कालभुजङ्गमसङ्गी सौरभमङ्गीकरोति न किम् PadyaVe. 747.

**अङ्गीकृत** (aṅgī-kṛta) *adj.* [*f.* -ā] **1 Ai** accepted, received (material thing, as a gift etc.) **ii** accepted, received, assumed (a state, a quality etc.) **B** accepted (words), agreed to, consented, acceded to (a request, advice, opinion) **C** accepted, undertaken (duty, promise, responsibility, liability) **D** accepted (as valid or useful) **E** owned, possessed (with animate object) **F** taken recourse to, chosen, taken up, put on **2** possessed (with inanimate subject) **1 Ai** accepted, received (material thing, as a gift etc.) स्ववाचा पुरतस्तासामनेनाङ्गीकृतं धनम् KathāSaSāg. i. 4.75; व्याधः समर्पयतु नाम विलीढशेषं मांसं विवेकविरहेण मनोभवारे। अङ्गीकृतं कथमिदं भवता YātrāPra. 6.119; **1 Aii** accepted, received, assumed (a state, a quality etc.) मातर्मातङ्गिकेऽगीकृतस्त्वयापि मृत्युः HarṣaC. 328.6; या चा[ङ्गीकृतानङ्गभा]वयोग्याभिः…वेशविलासिनीभिः…आदर्शयति दिव्यसीमन्तिनीजनम् AvantiKa. 7.1; तत्र महानध्ययनप्रत्यूह इत्येष दीर्घप्रवासोऽङ्गीकृतः UttaRāC. 2.3 (3); मरणं मया। अङ्गीकृतम् BṛKathāŚloSaṁ. 20.410; पल्लवसुकुमारहृदयस्य हस्तचरणैरपि पल्लवसौकुमार्यमङ्गीकृतम् NalaCam. 4.14 (13); शौचाशौचपराङ्मुखं न च भिया पैशाच्यमङ्गीकृतं त्यागेनासमसाहसैश्च भुवने यः साहसाङ्कोऽभवत् EI. vii. 38.27; अङ्गीकृतः कालमियन्तमेतावानयं क्लेशः TilaMañ. 231.21; क्रौर्यं सुखेन संरम्भशरवर्षि निनादि च। अङ्गीकृतं निदाघान्ते नभसेवासिताम्बुदः YogVā. iii. 107.39; नाप्यङ्गीक्री(? कृ)तकोल एष जगतः पाते चिरं शत्रुभिः सोऽयं राजितराजराजिविजयी जीयान्महीवल्लभः EI. iii. 309.26; जल्पन्त्यैव मुहुर्न नेति निभृतं प्रध्वस्तचारित्रया निःशेषेण समापितो रतविधिर्वाचा तु नाङ्गीकृतः SubhāRaK. 19.35; तदङ्गीकृत एवायं त्वत्पणेन पणो मया DvyāśraKā. 13.66; त्वया हि सत्प्रीतिपरायणत्वादङ्गीकृता साधुजनप्रवृत्तिः RāghPāṇ.(Ka.) 7.25; त्यक्ता मानकथा कृताञ्जलिरसावङ्गीकृतं लाघवम् KarpūC. 13; अङ्गीकृतमनेनापि सत्यंकारो मयार्पितः MalliC. 7.780; अङ्गीकृता ग्लानिः न दोषाय PūrvottaVāNaMā. 58.12; मधुपैः संगीतमङ्गीकृतम् Manmatho. 4(4) (643.6); **1 B** accepted (the words), agreed to, consented, acceded to (a request, opinion, advice) सुक्षेत्रवापितं ह्येतदखिलार्थस्य मेऽखिलम्। फलिष्यत्यमृतत्वेन ज्ञात्वैवं हि पुरा मया। अङ्गीकृतं गुरुमुखात् PauṣkS. 30.144; PāraS. 12.382; तथा जानेऽङ्गीकृतमेवास्मत्समीहितमनया TāpaVa. 1.10 (5); अंगीकृतं च तद्राज्ञा कामिन्या भाषितं तु यत् DevīBhāP. i. 13.11; i. 18.7; याचितः पुत्रभावाय तथेत्यङ्गीकृतं मया AdhyāRā. i. 2.26; देवि स्वभण्डपादेव जीवो भर्तुर्मृतस्य मे। मयासीदित्यतस्तस्याः स एवाङ्गीकृतो मया YogVā. iii. 19.18; सा प्राह पूर्ववरणद्रोहकाङ्गीकृतेप्सितम् BṛKathāMañ. ix. 2.523; त्वदिच्छाङ्गीकृतास्माभिः KathāSaSāg. iii. 2.63; क्षन्तव्यं मयि सर्वमित्यपि भवेदङ्गीकृतोऽयं विधिः KarṇaSu. 3.32; व्यामोहोन्मथनाय सद्गुरुगिरां तत्त्वं न चाङ्गीकृतम् VairāŚ.(Pa.) 43; धर्माधिकारिणि प्राड्विवाके प्रतिपन्नः प्रतिवादित्वेन स्वयं ब्रादिनाङ्गीकृतः Aparā. 639.11 (*on* 2.32); तथेत्यङ्गीकृते तेन गत्वा भीष्मान्तिकं कृपः PāṇḍaC. 3.263; अर्थिना वा स्वयमेव यः प्रतिपन्नः प्रतिवादित्वेनाङ्गीकृतः SmṛtiCan. iii. 73.10; iv. 370.13; तदप्यङ्गीकृतं तेन गर्वबाधितबुद्धिना Surath. 3.67; शिक्षायामिति…जैत्रेण…अङ्गीकृतायामथ। मन्त्री…जगाद VasaViKā. 14.44; अमर्षाच्च कुमारेण तदप्यङ्गीकृतं वचः PārśvC. 1.191; 1.582; 3.660; गर्भक्रूरस्वभावत्वादनयाङ्गीकृते सति। नृपकुक्षौ शशान्त्राणि कृत्वा वस्त्रावृतान्ययम् SamarāSaṁ. 2.383; 4.394; अभिषेकेण तेषां गीर्मुत्कला च व्यधीयत। पृष्टा अङ्गीकृतं तैश्च PrabhāC. 35.22; 85.27; 198.29; तत्सन्तोषपरितुष्टेन राज्ञा तदङ्गीकृतम् PrabaCin. 7.12; तैरपि कार्यातुरैः सर्वमप्यङ्गीकृतम् PrabaK. 9.10; 36.16; 57.11; मयाप्यङ्गीकृतमेव त्वद्वचनम् SiṁhāDvā. 62.4; 167.4; तेनापि तस्या वचोऽङ्गीकृतम् Bharaṭ. 26B.9; अङ्गीकृतं तमादेशं निजभर्तुः स्त्रिया तया CampaŚreKa. 278; सखिस्नेहवशादङ्गीकृतं मनसः पारतन्त्र्यकरणम् Jīvān. 262.3; अंगीकृतमिति लिखेन्मुद्रयेच्च ततो नृपः ŚukraNī. 2.370; **1 C** accepted, undertaken (as duty, promise, responsibility, liability) पूर्वमङ्गीकृतं विप्रे दानं भूमिस्तथा भृतिः। यस्तु संध्यातिपापस्तद्यस्यार्योऽनुमते गतः Rāmā. ii. 1800*(1); अङ्गीकृतं सुकृतिनः परिपालयन्ति ŚatTrayī. 202; 232; CaurPañ. 50 = ŚārṅgaPa. 246 = SiṁhāDvā. 179.10; यावज्जीवाधिकारं तु यदेभ्योऽभिमतं हि यत्। प्रीत्यर्थं परमेशाय अङ्गीकृतमखेदम् PauṣkS. 31.205; अङ्गीकृतमाश्रुतं प्रतिज्ञातम् AmaK. 2241; किं त्वङ्गीकृतमुत्सृजन्कृपणवच्छ्लाघ्यो जनो लज्जते MudrāRā. 2.18; वत्स त्वया सीदता भक्त्या मे…अङ्गीकृता दासता VeṇīSaṁ. 6.303; अथेतरः…भङ्गीकृतकर्तृत्वाद्यशेषकर्माधिकारकारणः…कर्मसु प्रवर्तमानः NaiṣkaSi. 27.6; गुरोराज्ञामयं प्राप्य प्रतिष्ठासोः शिवालयम्। यथा प्रारब्धकार्याणामंगीकृतभरोऽभवत् EI. ii. 123.27; (वटुवामनेन) भूतले बलेर्दौवारिकत्वमङ्गीकृतम् KalkiP. ii. 3.25; अंगीकृते तदा कार्ये मुनिना कुम्भजन्मना DevīBhāP. x. 7.2; अङ्गीकृतमिदं पूर्वं मया चिन्ता तवात्र का KathāSaSāg. v. 1.166; एतदस्माभिः स्वयमपि लोहमयमंगीकृतं निर्गमनीयं च EI. xi. 40.18; अङ्गीकृतं प्रतिज्ञातम् AbhidhāCin. 1488; तथा – इदं ते दास्यामीति यत्प्रतिश्रुतमङ्गीकृतं तद्दातव्यं दत्तं च नापहार्यम् Aparā. 783.9 (*on* 2.176); प्रलयेऽपि न मुञ्चन्ति महान्तोऽङ्गीकृतं व्रतम् PārśvC. 1.130; ततो मयि निधीयतां वसु पुरा यदङ्गीकृतम् RasMañ. 48; अङ्गीकृते गृहोद्धारे भवता भवतानवम्। दृष्टवन्तो वयं दध्मो वानप्रस्थाश्रमे मनः PrabhāC. 13.12; यन्महत् पुरुषेणाङ्गीकृतं तन्न त्यजति SamyaKau. 73.8; गतप्रत्यागता तु पित्रान्यस्मा अङ्गीकृता स्वेच्छया परिणयार्थमन्यं प्रति गत्वा तेन परिणीता पुनः पित्रभिमतं वरं प्रत्यागता ManvaVi. 1205.8 (*on* 9.176); परमहंसाश्रमस्वीकारः किमर्थमङ्गीकृतो भगवद्भिः ŚaṅkaVi.(Ā.) 18.3; अत्र च व(? ब)कुलावलिकया मालविकाग्निमित्रयोर्घटने सहकारित्वमङ्गीकृतमिति दूत्यम् RasāSu. 245.20 (3.90); भटैरङ्गीकृतं युद्धम् PuruṣPa. 19.16; 123.16; भर्त्रा ऋणदाने नियुक्तया भार्यया यत्प्रतिपन्नमङ्गीकृतं तद्देयम् Subodhi. 26.3 (*on* 2.49); रक्षन्नङ्गीकृतं धर्मं पुत्रवत् पालयेत् प्रजाः MahNirvāT. 8.118; घट्टादिभ्यो देयत्वेन पित्राङ्गीकृतम् (ऋणम्) DīpKa. 44.2 (*on* 2.47); तन्नागरीनयन्न(न)नीरतरंगिणीनामंगीकृतं किमु समुत्तरणं तुरंगैः। श्रीकुम्भकर्णनृपतिः प्रवितीर्णझम्पैरालोडयद् गिरिपुरं यदमीभिरुग्रः EI. xxi. 288.49; प्रतिज्ञातोरु(? र)रीकृते। संश्रुताङ्गीकृते चाप्यूरीकृतम् ParaNā. 1578; मया स्वस्वामिसूनोर्वात्सल्याङ्गीकृतमस्ति PurāPraSaṁ. 67.3; आर्या गुरोरिह लघोरथवा निकाममङ्गीकृतस्य परिपालनमाद्रियन्ते YātrāPra. 6.195; आश्रुतं प्रतिज्ञातम्। अङ्गीकृतम् KośaKaTa. 2.601; अङ्गीकृतं प्रतिज्ञातमाश्रुतं चोररीकृतम् KalpaK. 233.178; प्रलयेऽपि न मुञ्चन्ति महान्तोऽङ्गीकृतं व्रतम् KathāK. 118.10; अन्यस्मै यत्प्रतिश्रुतं दातुमङ्गीकृतं तत्तदतिरिक्ताय न देयम् VīraMi. 652.2 (*on* 2.175); **1 D** accepted (as valid or useful) न च हेत्वन्तरेऽत्यन्तासत्तयाङ्गीकृते प्रकारोऽयं संभवति HetuBiṬ. 6.11; द्रव्येषु नियमाद्युक्तो न संयोगो न चापरः। समवायोऽस्ति नान्यश्च संबन्धोऽङ्गीकृतः परैः TattvSaṁ. 575; मूर्तानित्यत्वयुक्तेऽपि तस्मादङ्गीकृते घटे। …न दृष्टान्तत्वमिष्यते ŚlokaVār. 5(4). 130 (387.4); TantrVā. 34.5 (*on* i. 2.19); 551.6 (*on* ii. 2.26); त्वयाप्यथशब्दस्यार्थविधानमङ्गीकृतमेवादृष्टार्थत्वभयेन TātpaṬ.(U.) 20.10 (*on* 1.86); धूमेनाग्न्यनुमानं तु त्वयाप्यङ्गीकृतं ननु SarvaSiSaṁ. 3.5; ततस्तेषां रजोंऽशेभ्यो जनिरङ्गीकृता बुधैः SarvaVeSāSaṁ. 379; सांख्यमते…ईश्वर एव नास्तीत्यङ्गीकृतम् LalitāTriBh. 263.14 (*on* 5); स्थेमा प्रबोधविषयो विषयत्वमेतीत्यङ्गीकृतं ननु मितेऽपि घटादिकेऽर्थे SaṁkṣeŚā. 1.48 (i. 52.12); 2.234 (ii. 137.5); गौणी प्रत्यगात्मनि वृत्तिरङ्गीकृतैव PañcPra. 10.4; शक्तेश्च कार्यत्वे कार्यादेव कार्योत्पादोऽङ्गीकृतः स्यात् NyāyMañ. ii. 65.20; प्रमेयान्तरमेवात्र तावताङ्गीकृतं भवेत् PrakaPañ. 107.9; 211.9; 288.16; 395.6; न हि पञ्चरात्रशास्त्रेषु जीवोत्पत्तिरङ्गीकृता ĀgamPrā. 55.2; YogVā. iii. 113.2; सात्त्विकोऽप्यङ्गीकृत एव कोहलाद्यैः AbhinBhā. i. 171.18 (*on* 4.260); यदि हि तत्काव्यस्यानुप्राणकं तेनाङ्गीकृतं पूर्वपक्षवादिना Loc. 7.21 (*on* 1.1); 15.18 (*on* 1.4); 26.15 (*on* 1.4); एवं सति … तत्साधनतैव प्रवृत्तिकारणमङ्गीकृतं स्यात् NyāyRaMā. 42.25; ŚrīBh. 92.17 (*on* i. 1.1); त्यागसंन्यासशब्दयोरेकार्थत्वमङ्गीकृतम् GītāBh.(Rā.) 624.18 (*on* 18.2); रसचर्वणात्मा भोगापरपर्यायो व्यापारः प्राधान्येन विश्रान्तिस्थानतयाङ्गीकृतः AlaṅkāSa. 9.4; 48.5; इत्यष्टधा गुणीभूतव्यङ्ग्यमङ्गीकृतं बुधैः Candrā. 8.10; वृद्धगर्गेणापि भौमादिपञ्चकस्यैव युद्धमङ्गीकृतम्

AdbhuSāg. 213.25; BrahmSūBh.(Ma.) 23B.5 (*on* ii. 1.2); विज्ञानार्थत्वतः सर्वशब्दानां नास्ति दूषणम् । अङ्गीकृतेऽपि नैवास्ति दोषो वाक्यसमन्वये AnuVyā 13B.8 (*on* 1.4); VisnuTaNi. 1B.11; बौद्धपक्ष एव नामान्तरेणाङ्गीकृतः PrakaVi. 541.22; तत्रापि पाकस्य सत्त्वात् तदङ्गीकारे तज्जन्यरसादिमत्त्वस्य निरस्तत्वाविशेषात् अङ्गीकृते तेनैव पृथिवीत्वप्रयुक्तव्यवहारसंभवात् TarkSam.(Ā.) 27.12; ननु घटपटादीनां व्यावहारिकसत्यत्वमङ्गीकृतमेवेति चेन्न VedāntTaSā. 39.3; तत्रैकान्तानित्यतया परैरङ्गीकृतस्य प्रदीपस्य तावन्नित्यानित्यत्वव्यवस्थापने दिङ्मात्रमुच्यते SyādvāMañ. 5(18); 11(162); अनिराकृतोंऽशोऽप्रतिषिद्धमनुमतं भवतीत्यनेन न्यायेनाङ्गीकृतः स्यात् NyāySu.(So.) 72.8 (*on* i. 2.19); न च प्रस्तुते शब्दार्थयोरनुमानवादिना लिङ्गत्वेनाङ्गीकृतयोः प्रतीयमानाज्जायमानत्वमनुमतम् Ekāva. 1.13 (81) (35.4); अध्ययने नियमविधिस्तावदङ्गीकृत एव VivaPraSam. 4.5; 9.3; गुरूक्तं भावनाचतुष्टयं बाह्यार्थस्य शून्यत्वं चाङ्गीकृत्यान्तरस्य शून्यत्वं चाङ्गीकृतं कथमिति पर्यनुयोगस्य करणात्केषांचिद्योगाचारप्रथा SarvaDaSam. 2.180; (विशेषे) अङ्गीकृते च तन्निवृत्तिः NyāySu.(Ja.) 170B.13 (*on* i. 2.6); ध्वनि(सत्)त्वेनोत्तमकाव्यतास्याङ्गीकृता SāhiDa. 8.1; 252.7; 459.8; ईश्वरः प्रकृतिजीवनियमार्थमङ्गीकृतः AnuBh. 138.12 (*on* ii. 2.41); 235.6 (*on* iii. 3.29); HammīMaKā 1.99; द्वितीये त्वभावाख्यं प्रमेयमङ्गीकृतं स्यात् TantrRaha. 14.21; 33.21; Nyāyāmr. 29A.7; 625A.8; तर्ह्यङ्गीकृतोऽभेदवादः YuktiSneha. 39.31 (*on* i. 1.4); वैदिकानां रूढानां व्युत्पाद्यत्वमन्यैरप्यङ्गीकृतम् Prasā. ii. 600.7; परैरनिषेध्यरूपत्वेनाङ्गीकृतस्य वियदादेरुत्पत्त्याद्यनङ्गीकारात् AdvaiSi. 122.1; आज्यभागयोः ··· पुनःश्रवणम् ··· गृहमेधीयस्य प्रकृतिराहित्यरूपापूर्वतापरमित्यङ्गीकृतम् VidhiRa. 2 (10.1); 9 (75.8); PūrvottaVāNaMā. 11.13; 54.19; शब्देतरविशेषणम्··· सार्थकं नैयायिकैरङ्गीकृतम् S'ivārkaMaDī. i. 114.24 (*on* i. 1.2); अलङ्कारसर्वस्वकारेणैव रूपकमङ्गीकृतम् CitraMī. 54.7; अलङ्कारसर्वस्वकृतापि पर्यायोक्तस्य ··· इदमेव लक्षणमङ्गीकृतम् Kuval. 68 (23); वसिष्ठाद्यैः ··· । अङ्गीकृतान्यासनानि कथ्यन्ते कानिचिन्मया HaṭPra. 1.18; विवक्षितवाक्यार्थश्च विनैव मत्वर्थलक्षणयाङ्गीकृतः स्यात् MīmāNyāPra. 200.33; SiddhāTaVi. 66.15; अत्रामोदकाराः मदनविजितलज्जाकत्वं प्रगल्भात्वम् इति लक्षणमाहुः । तदेवास्माभिरङ्गीकृतम् S'ṛṅgāMañ.(A.) 5.18; 'विद्या धनमिवार्जिता' इत्यस्यापि दण्डिनादोषेणाङ्गीकृतस्य दुष्टत्वप्रसङ्गाच्च AlaṅkāKau.(Vi.) 53.7; तस्यास्तत्क्षणहासरोषपुलकस्वेदादिकं केवलं मत्वा तद्ग्रहविक्रियामपि जनैर्माहात्म्यमङ्गीकृतम् VasaTi. 30.6; अङ्गीकृतं यथार्थं यद् वाद्युक्तं प्रतिवादिना । सत्योत्तरं तु तज्ज्ञेयम् S'ukraNī. 4(5).145; **1 E** owned, possessed (with animate object) (यक्षिणी) कामं ददाति विविधम्··· । जायात्वेन द्विजश्रेष्ठ यदा चाङ्गीकृता पुरा JayāS. 26.83 अथ देवा महेन्द्राद्या विष्णुना प्रभविष्णुना । अङ्गीकृता महाधीराः प्रमोदं परमं ययुः BrahmāṇḍP. iii. 10.1; त्वदङ्गीकृताः शर्व सर्वेऽपि धन्याः S'ivBhuSt. 12; एषणारहिताः ··· संन्यासिनः तैः ··· आदृता अङ्गीकृता LalitāTriBh. 267.19 (*on* 6); 337.3 (*on* 47); इत्याशया मया भर्ता स त्वमङ्गीकृतः पुरा PadmP. ii. 81.11; विसृष्टान्तःपुरं(? रे) राज्ञा सा (ब्राह्मणी) कृपापूर्णचेतसा । न्यस्तेव संपदामङ्गीकृता वासवदत्तया BṛKathāMañ. iv. 1.13; SūktiMu. 28.9; (तस्मिन्) प्रिययाङ्गीकृते युग्मं प्रणिधाय पपात तत् । आख्यच्च लीलारतये सप्रियः खेन सोऽगमत SamarāSam. 2.184; काममङ्गीकृतमपि परिक्षीणधनं नरम् । मात्रा निःसारयेत् SāhiDa. 118.3; अलक्तकलसछा(च्छा)यमङ्गीकृतमनोभवम् । जा(अ)मृतांशुकलाचूडमव्यात्त्वां शांकरं महः EI. xviii. 144.89; स्वयमेव तु मातापितृविहीनः पुत्रत्वेनाङ्गीकृतः कृत्रिमः BālaKrī. i. 248.13 (*on* 2.135); मां परित्यज्य पितान्योऽङ्गीकृतस्त्वया RājTa.(S'rī.) 1(7).96; **1 F** taken recourse to, chosen, taken up, put on सर्वं येन परित्यज्य वनमङ्गीकृतं शुचा TāpaVa. 4.15; येनाङ्गीकृतमच्युतस्य नयनं पूजारविन्दैः समम् DaśS'lo. 4; अग्रे ते विनिवेद्य सर्वममितं नैवेद्यमङ्गीकृतं ज्ञात्वा TripuMāPūSt.(S'aṅ.) 110; कञ्चुकी परमा दिव्या ··· । अङ्गीकृता तदा देव्या रराज SkandP. i(1). 25.11; **2** possessed (with inanimate subject) रत्नाकरे परिहृता वसतिः किमन्यदङ्गीकृतः कठिनवेधनदुःखभारः । ···किं किं न तेन विहितं बत मौक्तिकेन S'atTrayī. 705; अङ्गीकृतां विपत्त्या ··· । हारलताम् ··· जहुः प्राणाः KuṭṭaMa. 471; नाङ्गीकृतः कृतघ्नतया ··· तरुणार्कमण्डलमध्यान्मुनिरवातरत् NalaCam. 4.6(39); अङ्गीकृता युगपदुत्थितैः साध्वसप्रमोदविस्मयादिभिर्भावैः स्तम्भितेव ··· अतिष्ठम् TilaMañ. 265.10; अनङ्गरङ्गप्रतिमं तदङ्गं भङ्गीभिरङ्गीकृतमानताङ्ग्याः KāvyPra. 485.1; रुन्धन्ति वनिताव्याधाः सङ्गैरङ्गीकृतं नरम् YogS'ā. 2.111; अङ्गैरङ्गीकृता यत्र षड्भिः सप्तभिरष्टभिः । त्रयी च राज्यलक्ष्मीश्च योगविद्या च दीव्यति PrasaRā. 3.7; अङ्गीकृतः प्रदीपौघैर्दर्शोऽपि हि महोत्सवः PāṇḍaC. 11.218; कार्पासेन परार्थसाधनधिया किं किं न चाङ्गीकृतम् SūktiMu. 33.56 = S'ārṅgaPa. 1055; कुन्दोद्दामसदातिमञ्जुलवलद्भङ्गीभिरङ्गीकृते । हेमन्ते ··· श्यामाहर्निशमाश्रिता PadyaVe. 658; **3** utilized सूर्यादिग्रहचारेषु ग्रहणे ग्रहसंयुतौ । त्रिप्रश्ने चन्द्रवृत्तौ च सर्वत्राङ्गीकृतं हि तत् GaṇiSāSam. 0.12; *n.* acceptance न विद्यतेऽङ्गीकृतमङ्गीकारो यस्येत्यनङ्गीकृतः NyāySu.(Ja.) उररीकृतमप्यूरीकृतमङ्गीकृतं तथा NāmMā. 196 (comm. त्रयोऽङ्गीकारे); उररी चोररी चोरी विस्तारेऽङ्गीकृतेऽव्ययम् NānārthSam. 16.23; 210A.10 (*on* i. 4.6); NānārthaMa. 10; 1584.

**अङ्गीकृतकरपत्त्र** (aṅgīkṛta-karapattra) *adj.* holding a sword अङ्गीकृतकरपत्त्रो यस्तव हस्तग्रहं कुरुते ĀryāSaS'a. 268.

**अङ्गीकृतकर्मन्** (aṅgīkṛta-karman) *n.* accepted work or responsibility विघ्नाचरणमङ्गीकृतकर्माकरणमेवात्र विवक्षितम् SmṛtiCan. iv. 476.4; अङ्गीकृतकर्माकरणस्यापि यदा सहायान्तरलाभेन प(? प्र)स्थानविघ्नानापादकत्वम् VīraMi. (Vyavahāra.) 327.29.

**अङ्गीकृतकलकल** (aṅgīkṛta-kalakala) *adj.* [*f.* -ā] making a tinkling sound यस्मिन्नङ्गीकृतकलकला मेखलाः कामिनीनां पृष्ठे लग्नं कुसुमधनुषस्त्यक्षमप्याक्षिपन्ति VikraDeC. 18.21.

**अङ्गीकृतकाल** (aṅgīkṛta-kāla) *m.* specified or accepted time अङ्गीकृतकालविधिषु विकारेषु SaṅkarKāBh. 31.11 (*on* i. 3.23); इत्येवमङ्गीकृतकालैरवधृत इति YogSā. 42.3(2)

**अङ्गीकृतकुत्स** (aṅgīkṛta-kutsa) *adj.* which possesses the sense of contempt यदा तु अङ्गीकृतकुत्सपदान्तराप्रयोगः, तदा तेभ्य एवाश्रितकुत्सेभ्यः प्रत्ययो भवति Pradī iv. 398B.22 (*on* v. 3.74); विशेषणत्वे तु अङ्गीकृतकुत्सात् प्रत्ययः PadMañ. *on* KāśiVṛ. *on* P. v. 3.74.

**अङ्गीकृतकेतन** (aṅgīkṛta-ketana) *adj.* who has accepted an invitation तदेतदङ्गीकृतकेतनस्य भोजनसमर्थस्य निवारणे सति द्रष्टव्यम् SmṛtiCan. v. 198.1; CaturCin. iii(1). 1012.9.

**अङ्गीकृतगुण** (aṅgīkṛta-guṇa) *adj.* who values virtues योऽङ्गीकृतगुणैः श्लाघ्यः सविस्मयमुदाहृतः Kirātā. 11.72 (comm. गुणपक्षपातिभिर्यः पुमान् स्तुत्यः)

**अङ्गीकृतग्लानि** (aṅgīkṛta-glāni) *adj.* who is possessed of lassitude वमनं च···इन्द्रियवीर्यापचयाविनाभूतमित्यङ्गीकृतग्लानित्वात् UpaParā. 26.24.

**अङ्गीकृतजगत्कार्य** (aṅgīkṛta-jagatkārya) *adj.* who has accepted the responsibility of (upholding) the world अङ्गीकृतजगत्कार्यस्तिर्यक्त्वमपि गच्छति (रामः) RāmC. 9.36.

**अङ्गीकृतजङ्गमविग्रह** (aṅgīkṛta-jaṅgamavigraha) *adj.* who has assumed a moving body (अयम्) विश्वंभराधरमिवाङ्गीकृतजङ्गमविग्रहमग्रत एवैनमभिगच्छति RasSa. 114.4.

**अङ्गीकृतजडरीति** (aṅgīkṛta-jaḍarīti) *adj.* **A** possessing channels of water (तिरुवेङ्कटनृपालः) महोन्नतमपि अङ्गीकृतजडरीतिम् ··· नारायणशिलोच्चयं व्यलोकयत् ĀnandRa. 2.43(32); **B** who has accepted the behaviour of a dull person, ĀnandRa. 2.43(32)

**अङ्गीकृतजल** (aṅgīkṛta-jala) *adj.* which possesses water उदितस्वेदबिन्दूनि तदङ्गानि विरेजिरे । अङ्गीकृतजलानीव रोषाग्निप्लोषशङ्कया Surath. 9.3.

**अङ्गीकृततितिक्ष** (aṅgīkṛta-titikṣa) *adj.* **A** having the meaning 'to tolerate' अङ्गीकृततितिक्षः सेड्गुणी निष्ठापरो यथा । मृषिस्तथा विजयते श्रीरामः PadyāTa. 45; **B** having patience, PadyāTa. 45.

**अङ्गीकृततुल्यभाव** (aṅgīkṛta-tulyabhāva) *m.* equal status to the accepted one अङ्गीकृततुल्यभावेन तु बाधे बाधितसम उदाह्रियते NyāyPari. 241.4.

**अङ्गीकृतत्व** (aṅgīkṛta-tva) *n.* the state of being accepted or agreed to महाकविभिरङ्गीकृतत्वाद्गुणत्वम् SaraKaṇṭhā. 97.23; एवं तर्ह्यभेदस्याङ्गीकृतत्वात NyāyRa. 181.10 (*on* 4.149); अस्मत्पक्षे विशेषस्य सर्वत्राङ्गीकृतत्वतः AnuVyā. 27A.10 (*on* 2.2); TattvSaṁkhyāṬ. 33.1; गिरापदस्थाननियमस्याङ्गीकृतत्वात PūrvottaVāNaMā. 148.7; विशिष्टोद्देशस्य स्वयमेवाङ्गीकृतत्वात् MīmāKau. ii. 190.8 (*on* iii. 1.18)

**अङ्गीकृतदण्ड** (aṅgīkṛta-daṇḍa) *m.* accepted or stipulated fine व्यवहारसमाप्तेरन्यथात्वासंभवात् पुनर्न्यायानन्तरमपि प्राङ्न्यायपराजित एवाङ्गीकृतदण्डेन दण्ड्यः SmṛtiCan. iii. 303.13.

**अङ्गीकृतदण्डन** (aṅgīkṛta-daṇḍana) *n.* accepted punishment अङ्गीकृतदण्डनं न जहाति BālamBha. ii. 103.28 (*on* 2.95)

**अङ्गीकृतदीक्ष** (aṅgīkṛta-dīkṣa) *adj.* who has undergone (the rite of) initiation अत्रोपचारानन्ङ्गीकृतशैवदीक्षश्चेद्वैदिकैः पौराणमन्त्रैर्वा कुर्यात् । अङ्गीकृतदीक्षश्चेच्छैवागमोक्तमार्गेण···कुर्यात् TristhaSe. 207.21.

**अङ्गीकृतधनादि** (aṅgīkṛta-dhanādi) *n.* accepted money etc. ब्राह्मणरक्षार्थमङ्गीकृतधनादौ वृथा शपथे पापं न भवति ManvaMu. 309.24 (*on* 8.112)

**अङ्गीकृतनराकार** (aṅgīkṛta-narākāra) *adj.* who has assumed human form शिखिपिच्छविभूषणम् । अङ्गीकृतनराकारमाश्रये KṛṣṇaKa. 1.91; UjjvaNīMa. 30.3.

**अङ्गीकृतनवसंगीतक** (aṅgīkṛta-navasaṅgītaka) *adj.* who has taken to singing new songs जय ··· मुदितकुरङ्गीदृगुदितभङ्गीमृ(? म्र)दिमभिरङ्गीकृतनवसंगीतक···रङ्के कृपय···मयि StavMā. 130.30; 157.21.

**अङ्गीकृतनिमन्त्रण** ( aṅgīkṛta-nimantraṇa ) *adj.* who has accepted an invitation ( for a śrāddha etc. ) 'केतितस्तु यथान्यायं हव्यकव्ये द्विजोत्तमः । कथंचिदप्यतिक्रामन् पापः सूकरतां व्रजेत्' अङ्गीकृतनिमन्त्रणस्यैतत् Aparā. 457. 5 (*on* 1. 225); अङ्गीकृतनिमन्त्रणस्याङ्गीकारात्पश्चादपि भोक्तुमसामर्थ्ये सत्यतिक्रमो युक्तः SmṛtiCan. v. 197. 8; अङ्गीकृतनिमन्त्रणस्याङ्गीकारादूर्ध्वमपि भोक्तुमसामर्थ्ये सत्यतिक्रमो न युक्त इत्यर्थात् ज्ञापयितुमाह स एव । विधिवत् केतनं प्रतिगृह्य शक्तः सन्नापक्रामेदिति CaturCin. iii(1). 100i. 13.

**अङ्गीकृतनिर्वाह** ( aṅgīkṛta-nirvāha ) *m.* accomplishment of what has been undertaken ममाङ्गीकृतनिर्वाहव्रतचर्याविकीर्णिनः । युष्मानेवायशः कामं नन्विदं लज्जयिष्यति PāṇḍaC. 5. 54.

**अङ्गीकृतनिर्वाहक** ( aṅgīkṛta-nirvāhaka ) *adj.* who carries out or accomplishes (the task) undertaken दृढव्रतः अङ्गीकृतनिर्वाहकः Avalo. 37. 12 (*on* 2. 5); Kāvyānu.(He.) 359. 11; SāhiDa. 97. 20.

**अङ्गीकृतनिषेधोल्लङ्घन** ( aṅgīkṛtaniṣedhollaṅghana ) *adj.* who has violated the accepted rule prohibiting (falsehood) अभ्युपगम्यते हि कर्त्रधिकरणे व्युत्पादितं पुरुषार्थे अनृतवदननिषेधे सत्यपि दर्शपूर्णमासमध्ये कुतश्चिद्वेतोरङ्गीकृतनिषेधोल्लङ्घनस्याविकलां क्रतुसिद्धिं कामयमानस्यानृतवदने प्रवृत्तिः स्याद् इति SiddhāLeSaṁ. 19. 8.

**अङ्गीकृतपक्ष** ( aṅgīkṛta-pakṣa ) *m.* accepted alternative चतुर्थकालिको वा स्यात्स्याद्वाप्यष्टमकालिकः । शक्त्यपेक्षो विकल्पः । अङ्गीकृतपक्षश्च यावदाश्रमसमाप्ति निर्वाह्यः Aparā. 943. 9 (*on* 3. 49); जीवतस्तस्य…अङ्गीकृतपक्षान्यतमसङ्ख्यसरग्रन्थिकं एकग्रन्थिकं वा NityoNi. 109. 4.

**अङ्गीकृतपरार्थ** ( aṅgīkṛta-parārtha ) *adj.* who has undertaken (to accomplish) the aim of others अङ्गीकृतपरार्थेनात्यर्थमानन्दिताहं त्वया स्वकीयसच्चरितेन TilaMañ. 400. 20.

**अङ्गीकृतपरिष्वङ्गा** ( aṅgīkṛta-pariṣvaṅgā ) *adj.* (*f.*) who has accepted an embrace अङ्गीकृतपरिष्वङ्गायाश्च वदनेन ताम्बूलदानम् KāmSū. 200. 21 (3. 2)

**अङ्गीकृतपुरुषता** ( aṅgīkṛta-puruṣatā ) *f.* acceptance of the role of a man, manly behaviour अङ्गानि क्षेममङ्गीकृतपुरुषतया मोहने मोहनाङ्ग्या प्रक्रान्तानि क्रियासुर्जलनिधिजनुषा लुप्तकल्पान्तराणि । नाभीगम्भीरकूपोदरकुहरविशन्निःसरद्ब्रह्ममौलिप्रत्युप्तानेकरत्नाङ्कुरनिकरसमाकृष्टरोमावलीनि RasSa. 6.

**अङ्गीकृतपुष्पवदाकृति** ( aṅgīkṛta-puṣpavadākṛti ) *adj.* **i** which has assumed the form of having flowers ( and fruits ) तवोद्योगविधावङ्गीकृतपुष्पवदाकृतिः । उच्चै रथदशामेति … सर्वेयमुर्वरी S'rīKaC. 19. 34 ( comm. अङ्गीकृता पुष्पवती पुष्पवत्त्वोपलक्षितफलयुक्ताकृतिः ); **ii** which has assumed the sun and the moon (as wheels of chariot), S'rīKaC. 19. 34 ( comm. अङ्गीकृता अङ्गं कृता रथाङ्गतया संपादिता पुष्पवतोरर्केन्द्वोः संबन्धिन्याकृतिर्यया सा )

**अङ्गीकृतप्रतिज्ञातार्थ** ( aṅgīkṛta-pratijñātārtha ) *m.* the statement or evidence (of the plaintiff) deposed and admitted (by the court) अन्यद्वृत्तरमङ्गीकृतप्रतिज्ञातार्थोपमर्दनक्षमं कारणम्…यदि प्रत्यर्थी ब्रूयात् SmṛtiCan. iii. 120. 2.

**अङ्गीकृतप्रवृत्तिनिमित्त** ( aṅgīkṛta-pravṛttinimitta ) *adj.* [ *f.* -ā ] which possesses the cause of usage ( अन्वर्थसंज्ञा ) अर्थमनुगता अर्थेन वा अनुगता अङ्गीकृतप्रवृत्तिनिमित्ता या संज्ञा सा अन्वर्थसंज्ञा Pradī. ii. 291B. 7 (*on* i. 4. 82)

**अङ्गीकृतप्रागल्भ्य** ( aṅgīkṛta-prāgalbhya ) *adj.* [ *f.* -ā ] possessing boldness किमङ्गीकृतप्रागल्भ्यया…तत्कालमहमपि न जानामि कीदृश्या दृशा तमद्राक्षम् TilaMañ. 277. 22.

**अङ्गीकृतभङ्ग** ( aṅgīkṛta-bhaṅga ) *adj.* who has accepted defeat राधे…सिद्ध पिञ्छमुकुटमङ्गीकृतभङ्गम् । अस्य पश्य फुल्लकुसुमरचितोज्ज्वलचूडा मीतिभिरतिनीलनिबिडकुन्तलमनुगूढा StavMā. 284. 18 ( comm. अङ्गीकृतो भङ्गः पलायनं येन तं पिञ्छमुकुटं कृष्णं सिद्ध )

**अङ्गीकृतभर** ( aṅgīkṛta-bhara ) *adj.* who has accepted the responsibility रुमण्वान्–त्वयि चाङ्गीकृतभरे परतो निर्वर्तिष्येऽहं प्रस्तुतसिद्धये TāpaVa. 2. 24 (3)

**अङ्गीकृतभेद** ( aṅgīkṛta-bheda ) *adj.* who has accepted the difference कथं पक्षावस्थायामङ्गीकृतभेदो हेत्वस्थायामनन्यत्वं ब्रूयात् S'arka. 18. 2.

**अङ्गीकृतमरण** ( aṅgīkṛta-maraṇa ) *adj.* who has accepted death मरणकाम इत्यङ्गीकृतमरण इत्यर्थः S'āstrDī. 673. 5 (*on* x. 2. 23); BhāṭṭDī. iii. 232. 18 (*on* x. 2. 22)

**अङ्गीकृतमात्र** ( aṅgīkṛta-mātra ) *adj.* just accepted उररीकृतमङ्गीकृतमात्रेऽपि च वाच्यलिङ्गं तत् S'abdaRaSaK. 166. 9.

**अङ्गीकृतमौनव्रत** ( aṅgīkṛta-maunavrata ) *adj.* who has undertaken the vow of silence आसीच्च तयोः … अङ्गीकृतमौनव्रतयोरपि वियोग एव न योगः NalaCam. 5. 21 (3)

**अङ्गीकृतयौवराज्य** (aṅgīkṛta-yauvarājya) *adj.* who has accepted the status of a crown-prince धत्से जगद्रक्षणयामिकत्वं न चेत्त्वमङ्गीकृतयौवराज्यः । मौर्वीरवापूरितदिक्त्रुखस्य क्वान्तिः कथं शाम्यतु मद्भुजस्य VikraDeC. 3. 32.

**अङ्गीकृतलतारूप** ( aṅgīkṛta-latārūpa ) *adj.* who has assumed the form of a creeper अत्राङ्गीकृतलतारूपोर्वशीपरिष्वङ्गसुखनिमीलिताक्षस्य पुरूरवसः …नयनयोरनुन्मीलनबुद्धिः सेयं तत्त्वेऽप्यतत्त्वरूपोपादानहेतुर्भ्रान्तिः SaraKaṇṭhā. 365. 22.

**अङ्गीकृतवचस्** ( aṅgīkṛta-vacas ) *adj.* whose words have been agreed to इत्युक्त्वा राजतनयामङ्गीकृतवचास्तया । तामामन्त्र्य स सन्मन्त्री द्रुतं लावाणकं ययौ KathāSaSāg. iii. 2. 24.

**अङ्गीकृतवत्** ( aṅgīkṛta-va(n)t ) *adj.* [ *f.* -vati ] who has accepted or admitted तन्निराकृतय इदम् अथातः इति पदद्वयमङ्गीकृतवान् सूत्रकारः Bṛha. 5. 9 (*on* i. 1. 1); तत्र चक्रवृद्धिमधमर्णः समारूढः प्रतिपन्नोऽङ्गीकृतवानिति यावत् ManuBh. ii. 148. 12 (*on* 8. 156); उदीरितोत्कलिकासहस्रं प्रलयकालं रागजलधेरङ्गीकृतवती नवयौवनावतारमङ्गैः TilaMañ. 264. 14; तमर्थमङ्गीकृतवान्न कोऽपि NavaSāC. 9. 45; अङ्गीकृतवन्तौ तौ मद्भर्तुर्भृत्यताम् BṛKathāS'loSaṁ. 28. 70; युद्धमङ्गीकृतवन्तं कदाचिद् गरुडारूढं मां पश्यन्तो वासुदेवं मत्वा शत्रवः प्रपलायन्ते Pañcā. 55. 3; पुनरपि शबरवागुरामवतीर्णायाः कुरङ्गवध्वा भङ्गीमङ्गीकृतवती जानकी PrasaRā. 6. 36(?35). (4); आत्मविशेषगुणोच्छेदस्वरूपां च मुक्तिमज्ञानादङ्गीकृतवतः परानुपहसन्नाह SyādvāMañ. 7 (80); अत्र शृङ्गाररसाङ्गतामङ्गीकृतवता बीभत्सेनाङ्गिनोऽपि विच्छेदाय मूले कुठारो व्यापारितः RasāSu. 201. 13 (2. 262); रत्नचूडस्तु तुर्येण तथा प्रोत्साहितस्तदा । समुद्रनीरप्रमिति यथाङ्गीकृतवानयम् RatnaCūK. 189; 503; सर्वमिदं रसपर्यन्तं चेतनाचेतनात्मकमङ्गीकृतवान् VedāntKau. 50. 10 (*on* i. 2. 2); रशनादानमन्त्रपरिसंख्यामङ्गीकृतवतापि भाष्यकारेण षोडशयुत्तर इत्यत्र वृत्तिकाराभिमता परिसंख्या … प्रतिक्षिप्ता VidhiRa. 30 (170. 13); दुहितुरुदीरितवचनमङ्गीकृतवान् राजा VetāPañ.(Jam.) 64. 10; सौत्रान्तिको हि…परमाणुसंघातमेवार्थमङ्गीकृतवान् GuruCandr. i. 502. 14; LaCandr. 435. 36; स्त्रियोऽपि द्वेताद्वयो मैथुनार्थिन्यो यद् भ्रूणहत्याभागमपि तदर्थमङ्गीकृतवत्यः ViraMi. 144. 23 (*on* i. 81); ( रथो गच्छति–इत्यादौ उपचारं केचित् प्रतिपन्नाः ) प्रतिपन्नाः अङ्गीकृतवन्तः Bhāsk. i. 60. 16 (*on* i. 1. 3)

**अङ्गीकृतवस्तुनिर्वहण** ( aṅgīkṛtavastu-nirvahaṇa ) *n.* carrying out or accomplishing a thing undertaken व्रतमेतदुन्नतधियामङ्गीकृतवस्तुनिर्वहणम् YaśasCam. ii. 158. 8 = ii. 355. 15; ii. 332. 2.

**अङ्गीकृतवस्तुनिर्वाह** ( aṅgīkṛtavastu-nirvāha ) *m.* accomplishing or carrying out an undertaking भवति विपद्यपि महतामङ्गीकृतवस्तुनिर्वाहः SubhāRaK. 40. 44 = S'ārṅgaPa. 480.

**अङ्गीकृतविजययात्र** ( aṅgīkṛta-vijayayātra ) *adj.* who has undertaken an expedition for conquest साकेतनगरादङ्गीकृतविजययात्रस्य तव कल्याणराशेरशेषदुरितोपद्रवनिवारणाय देवेन कोशलाधिपतिना समर्पितो मे…दिव्यहारः TilaMañ. 395. 8.

**अङ्गीकृतविमानाकार** ( aṅgīkṛta-vimānākāra ) *adj.* **i** which has the shape of a *vimāna* अङ्गीकृतविमानाकारमपि सर्वतोभद्रम्…आयतनं ददर्श ( समरकेतुः ) TilaMañ. 216. 1; **ii** possessing a disproportionate shape, TilaMañ. 216. 1.

**अङ्गीकृतविमुखभाव** ( aṅgīkṛta-vimukhabhāva ) *adj.* who has adopted an adverse attitude सरोषमपहाय चतुर्मुखमपि अङ्गीकृतविमुखभावम् … सरस्वती … प्रहृष्टमनाः सुतरामुपतस्थे ( इमं राजशेखरम् ) ĀnandRa. 8. 36 (14)

**अङ्गीकृतविशेष** ( aṅgīkṛta-viśeṣa ) *adj.* which admits or allows an addition (of purpose) पुनरुक्तं नाम तस्यैवार्थस्यानङ्गीकृतविशेषस्य सतः पुनर्वचनम् । अनुवादस्तु पुनः श्रुतिसामान्यादङ्गीकृतविशेषस्यानुवादः NyāyVār. 270. 12 (*on* ii. 1. 59-60)

**अङ्गीकृतवृद्धिसिद्धि** ( aṅgīkṛtavṛddhi-siddhi ) *f.* justification of the interest (on borrowed money) agreed upon or promised आधिभोगमात्रार्थं प्रयुक्तधनस्यात्मापराधादितो भोगालाभे लाभहानिरेव न पुनरङ्गीकृतवृद्धिसिद्धिः SmṛtiCan. iv. 325. 10.

**अङ्गीकृतवैरतस्** ( aṅgīkṛtavaira-tas ) *adv.* due to accepted enmity अधिष्ठाता तु दुर्गस्य यक्षोऽङ्गीकृतवैरतः । आमाधिष्ठायिकैः क्रुष्टः PrabhāC. 107. 23.

**अङ्गीकृतवैवर्ण्या** ( aṅgīkṛta-vaivarṇyā ) *adj.* (*f.*) who has incurred paleness (i. e. has turned pale) गच्छतु च्छायां कण्ठावलम्बिनी चम्पकमालेयमितीवाङ्गीकृतवैवर्ण्या…सा क्षणमभूत् NalaCam. 7. 22(30)

**अङ्गीकृतशर** ( aṅgīkṛta-śara ) *adj.* who has taken up his arrows (ready to shoot) असौ दृग्भङ्गीभिः कुसुमशरमङ्गीकृतशरं सृजन्ती VidaMā. 2. 49.

**अङ्गीकृतशिव** ( aṅgīkṛta-śiva ) *adj.* [ *f.* -ā ] who has accepted all

auspicious things अङ्गीकृतशिवा । ··· ममापर्णा पूर्णा निरवधिसुखैरस्तु सुमुखी ĀnandL. 5.

**अङ्गीकृतशून्यता** ( aṅgīkṛta-śūnyatā ) *adj.* who has chosen or resorted to solitude इतो रत्नवती गाढोद्विग्नाङ्गीकृतशून्यता । स्मरज्वरभराक्रान्ता Samarā-Saṁ. 8. 147.

**अङ्गीकृतषडानना** ( aṅgīkṛta-ṣaḍānanā ) *f.* name of Ganges (who has accepted Kārttikeya as a son) अंशुमाला ह्यंशुमती त्वङ्गीकृतषडानना ··· इति नामसहस्रं हि गंगायाः कलशोद्भव SkandP. iv. 29. 39.

**अङ्गीकृतसंसार** ( aṅgīkṛta-saṁsāra ) *adj.* who has chosen transmigration or the cycle of worldly existence पुनरपि मृत्योर्वशतां यान्ति···नित्यं भेदधियोऽङ्गीकृतसंसाराः S'aṅkaVi.(Ā.) 277. 18.

**अङ्गीकृतसंस्त्यान** ( aṅgīkṛta-saṁstyāna ) *adj.* which has taken the form (of a woman) स्त्रीत्वयुक्तेऽर्थेऽङ्गीकृतसंस्त्याने वर्तमानात् ( प्रातिपदिकात् ) स्वार्थे टाबादयः Pradī. iv. 28B. 2 (*on* iv. 1. 3)

**अङ्गीकृतसंग्रामदीक्ष** ( aṅgīkṛta-saṅgrāmadīkṣa ) *adj.* who has undergone initiation for battle (i. e. who has decided to fight) अङ्गीकृतसङ्ग्रामदीक्षो निजसौधाद् राज्ञः परिग्रह निजभटवातेन तुषनिकरमिव विकिरन् घटिकागृहे प्राप्तः PrabaCin. 97. 8.

**अङ्गीकृतसतीव्रत** (aṅgīkṛta-satīvrata) *adj.* [*f.* -ā] who has taken the vow of (living the life of) a chaste wife अस्ति ··· अङ्गीकृतसतीव्रताभिरप्यसतीव्रताभिः ·· अलंकृता वधूभिः ··· अयोध्येति यथार्थाभिधाना नगरी TilaMañ. 9. 11.

**अङ्गीकृतसत्त** ( aṅgīkṛta-satta ) *adj.* having inherently the meaning 'existence' तस्मादङ्गीकृतसत्तः प्रकृत्यर्थः प्रत्ययार्थमवच्छिनत्ति Pradī. iv. 342B. 14 (*on* v. 2. 94)

**अङ्गीकृतसन्तानोच्छेद** ( aṅgīkṛta-santānoccheda ) *m.* destruction of the stream (of consciousness) which is accepted or postulated तथा तायिनां चाङ्गीकृतसन्तानोच्छेदः PrakaPañ. 318. 3.

**अङ्गीकृतसर्वमङ्गल** ( aṅgīkṛta-sarvamaṅgala ) *adj.* having all auspicious marks (on the body) भगवन्नभवोऽपि वर्तसे कथमङ्गीकृतसर्वमङ्गलः GotaSt. 18.

**अङ्गीकृतसाक्षिभाव** ( aṅgīkṛta-sākṣibhāva ) *adj.* who has consented to be a witness ( साक्ष्यम् ) श्रावित इति वचनादङ्गीकृतसाक्षिभावोऽसाविति गम्यते Aparā. 681. 8 (*on* 2. 82)

**अङ्गीकृतसामन्** ( aṅgīkṛta-sāman ) *adj.* who has accepted or agreed to negotiations प्रवृत्तायां विभावर्यां दूतैः कृतगतागतैः । तस्याङ्गीकृतसामापि गर्गो द्रोग्धा व्यघीयत RājTa.(Ka.) 8. 391.

**अङ्गीकृतसाहस** ( aṅgīkṛta-sāhasa ) *adj.* who has undertaken a bold act अङ्गीकृतसाहसानां न किञ्चिदपि दुष्करम् PrabaK. 50. 25.

**अङ्गीकृतसिद्धान्त** ( aṅgīkṛta-siddhānta ) *adj.* who has accepted a dogma स्वयमेवाङ्गीकृतसिद्धान्तस्य शिष्यस्य शङ्कितं चोद्यमेव स्वामीष्टसाधकत्वेनाश्रयति Bhāsk. i. 51. 11 (*on* i. 1. 1)

**अङ्गीकृतस्त्रीत्व** ( aṅgīkṛta-strītva ) *adj.* having the characteristic of the feminine meaning (inherent in it) यदा तु स्त्रीत्वयुक्तं द्रव्यं स्त्रीशब्देनोच्यते तदा परं पक्षद्वयं संभवति - स्त्रीत्वमुपलक्षणं विशेषणं वेति । ···द्वितीये तु स्त्रीत्वयुक्तद्रव्यवाचिनोऽङ्गीकृतस्त्रीत्वात् प्रातिपदिकादिति प्रकृत्यर्थविशेषणं स्त्रीत्वम् PadMañ. *on* KāśiVṛ. *on* P. iv. 1. 3.

**अङ्गीकृतस्नेह** ( aṅgīkṛta-sneha ) *adj.* [*f.* -ā] who has developed affection इयं सा मत्तनुर्यस्याः कर्पूरागुरुचन्दनैः । अङ्गमङ्गीकृतस्नेहा धात्री चिरमलेपयत् YogVā. iv. 15. 5.

**अङ्गीकृतस्वैरभाव** ( aṅgīkṛta-svairabhāva ) *adj.* [*f.* -ā] who has adopted wanton behaviour परलोकभीतामप्यङ्गीकृतस्वैरभावाम् , तामेव कान्तामपश्यम् Mukundā. 186(21)

**अङ्गीकृताकार** ( aṅgīkṛtākāra ) *adj.* [*f.* -ā] which possesses an *akāra* (the negative prefix) अविद्या विद्यमानैव नष्टप्रज्ञेषु दृश्यते । नाम्नैवाङ्गीकृताकारा सम्यक्प्रज्ञस्य सा कुतः MahāU. 4. 112.

**अङ्गीकृताखिलविभूति** ( aṅgīkṛtākhilavibhūti ) *adj.* which possesses all supernatural powers अङ्गीकृताखिलविभूतिरपाङ्गलीला माङ्गल्यदास्तु मम मङ्गलदेवतायाः KanDhāSt. 1.

**अङ्गीकृतादेश** ( aṅgīkṛtādeśa ) *adj.* whose order has been accepted 'तथा' इति तेनाङ्गीकृतादेशश्चोत्थाय तैः प्रधानराजलोकैः परिवृतः ··· राजकुलमव्रजत् ( पार्थिवः ) TilaMañ. 63. 18.

**अङ्गीकृताधिकार** ( aṅgīkṛtādhikāra ) *adj.* who has promised an (administrative) office (to some one) भूभृत्पितृद्रुहः कार्यवशेन स्वोपवेशने । अङ्गीकृताधिकारस्तु धीमांष्टिकस्य लक्ष्मकः RājTa.(Ka.) 8. 1692.

**अङ्गीकृतापराध** ( aṅgīkṛtāparādha ) *m.* admitted guilt अङ्गीकृतापराधेन सेवादाननतिस्तवैः । ···दिव्यैर्विश्वासयेत् परं क्षुरधारेण मनसा रिपोश्छिद्रं सुलक्षयेत् S'ukraNi. 4(7). 364.

**अङ्गीकृतारण्यवास** ( aṅgīkṛtāraṇyavāsa ) *adj.* who has accepted living in a forest सिद्धिनिमित्तमङ्गीकृतारण्यवासैः ··· नानाविधाविद्याधरैरध्यासिताम् ···एकशृङ्गवैताढ्यपर्वतान्तरालाटवीं वीक्षमाणः TilaMañ. 235. 23.

**अङ्गीकृतार्थ** ( aṅgīkṛtārtha ) *m.* **A** thing or sum of money agreed upon or promised अङ्गीकृतार्थमददत् क इवास्ति लोके दोषेण संक्षयकरेण न युज्यते यः YogVā. iii. 78. 44; अधमर्णेऽङ्गीकृतार्थादानरूपापराधरूपस्य दृष्टहेतोः संभवेन BālamBha. ii. 58. 27 (*on* 2. 42); Subodhi. 25. 7 (*on* 2. 42); **B** staked money, wager तेषां च ( अक्षधूर्तानाम् ) ··· सभिकप्रत्ययव्यवहारान्न्यायबलप्रतापप्रायानङ्गीकृतार्थसाधनक्षमान्···अनुभवन्न तृप्तिमध्यगच्छम् DaśKuC. 47. 22.

**अङ्गीकृतावयवभेद** (aṅgīkṛtāvayavabheda) *adj.* wherein distinction of constituents is admitted पञ्चकाः शकुनय इति पञ्च परिमाणमेषामित्यङ्गीकृतावयवभेदः समुदायः प्रकृत्यर्थः तद्विशिष्टाः समुदायिनः कशब्दस्यार्थः CāndraVṛ. *on* iv. 1. 62.

**अङ्गीकृति** ( aṅgī-kṛti ) *f.* **A** acceptance (as valid), admission, agreement (with a view, opinion etc.) उपात्तादिमहाभूतहेतुत्वाङ्गीकृतेर्ध्वनेः । सिद्धा एवाश्रिताः शब्दाः TattvSaṁ. 627; अङ्गीकृतावुपगमः AnekāSa. 362 = TrikāS'e. iii. 3. 292; NānārthāSaṁ. iii. 9. 37; VisvaLoK. 252. 64; **B** gesture of acceptance or assent (i. e. nodding) अन्धानां वाक् प्रमाणं स्यात् ·· । मूकानामेडमूकानां शिरसाङ्गीकृतिर्लिपिः MahNirvāT. 11. 94; **C** acceptance (of a person), owning (as one's own) पुष्टिमार्गेऽङ्गीकृतेस्त्वनुग्रहसाध्यत्वात् तत्र च पापादेरप्रतिबन्धत्वाच्छ्रवणादिरूपा प्रेमरूपा च ··· भवत्येव ( प्रवृत्तिः ) AṇuBh. 235. 10 (*on* iii. 3. 29); **D** acceptance (of a duty, responsibility), undertaking ऊरर्यूरी चोररी च विस्तारेऽङ्गीकृतौ त्रयम् AmaK. 2843; AbhidhāRaMā. 5. 99; AgniP. 360. 15; Vaija. 285. 17; AnekāSaṁ. 7. 42; MediK. 201. 66; S'abdaRa.(Vā.) 4539; VisvaLoK. 417. 63; [Kośas give *aṅgīkṛti* as one of the meanings of नाम AnekāSa. 786; ओम् AnekāSaṁ. 7. 6; तुम् ( ? हुम् ) VisvaPra. 189. 45; संगर 137. 154; उम् DharK. 2932; MediK. 199. 50; अथ किम् S'abdaRa.(Vā.) 4610; तथा S'abdaRaSaK. 168. 16; 266. 4; आश्रव TrikāS'e. iii. 3. 413; NānārthāSaṁ. ii. 61. 172; MediK. 173. 32; S'abdaRaSaK. 319. 5; उप AnekāK. 992]

**अङ्गीकृतेच्छ** ( aṅgīkṛteccha ) *adj.* whose wish is accepted घटेनाङ्गीकृतेच्छोऽथ संज्ञयैव स कर्परः । ··· वधकैरवशो हतः KathāSaSāg. x. 8. 53.

**अङ्गीकृतेप्सा** ( aṅgīkṛtepsā ) *f.* desire for acceptance योऽयं शुद्धिविधिः प्रोक्तो गुरोरङ्गीकृतेप्सया SaurP. 52. 55.

**अङ्गीकृतेप्सित** ( aṅgīkṛtepsita ) *adj.* whose desire or longing has been accepted वह्निर्वदन्नर्थी ताभ्यामङ्गीकृतेप्सितः । धनुः पार्थाय गाण्डीवं ददौ चक्रं च चक्रिणे DaśāvaC. 8. 424.

**अङ्गीकृतैश्वर्यदान** ( aṅgīkṛtaiśvaryadāna ) *adj.* who has agreed to the grant of a big reward स हि भिक्षाचरं टिक्कमथ व्यापादयेत्यमुम् । जगादाङ्गीकृतैश्वर्यदानः RājaT.(Ka.) 8. 1248.

**अङ्गीकृत्य** ( aṅgīkṛt-ya ) *ger.* **Ai** having accepted, having received (a material thing) **ii** having accepted as one's own (an animate object) **iii** having accepted, having admitted, having taken up, having possessed (a quality, state, action etc.) **B** having chosen (a direction) **C** having agreed to, having acceded to (a request, advice) **D** having taken up, having possessed (inanimate subject) **E** having undertaken (a duty, responsibility, liability) **F** having taken (as valid), having accepted (as true), having assumed. **A i** having accepted, having received (a material thing) संश्रुत्य च ( v. l. अङ्गीकृत्य ) तपस्विभ्यः सत्रे वै यज्ञदक्षिणाम् Rāmā. ii. 69. 19; तत्राङ्गीकृत्य भूपस्य भागं संवत्सरावधि । खाते खनन् क्षितिं रत्नं नैकमप्यसि लब्धवान् KathāSaSāg. vii. 2. 77; लक्ष्मीधरमुखेनैव प्रार्थनां हन्तुमुचलम् । चक्रे संग्रामपालस्य सोऽङ्गीकृत्य धनं ततः RājTa.(Ka.) 7. 1258; अमुं ग्रन्थं ग्रहणकेऽङ्गीकृत्य लक्षत्रयं द्रम्माणां ददत PurāPraSaṁ. 17. 34; **A ii** having accepted as one's own (an animate object) अङ्गीकृत्य तदा गौरी( ? रीम् ) वैवाहिकविधानतः । आदाय वृषमारुह्य कैलासशिखरं ययौ ( शिवः ) BrahmāṇḍP. iii. 40. 45; यावदसौ मलयकेतुमङ्गीकृत्यासदुच्छेदाय विपुलतरं प्रयत्नमुपदर्शयत्येव MudrāRā. 1. 13 (7); ये ( भोगिनः ) महेश्वरेणात्मनोऽलंकार इत्यङ्गीकृत्य गौरविताः UdaySuKa. 93. 30; स्वकदनकथयाङ्गीकृत्य मूर्ध्नी विशाखां कृतचटुललितां तु प्रार्थयन् प्रौढशीलाम् ।··· प्रणयतु मम नेत्राभीष्टसिद्धिं मुकुन्दः StavMā. 38. 12; **A iii** having accepted, having admitted, having taken up, having possessed (quality, state, action, etc.) अङ्गीकृत्य पदन्यासं इह्योक्तं द्विविधं तु वै

PauskS. 19.91; वामदेवः … तेन (कुमारनिकरेण) तां कृतां परिचर्यामङ्गीकृत्य DaśKuC. 12.4; 23.2; प्रवृत्तौ निवृत्तौ वा मानसव्यापारमङ्गीकृत्य प्रवर्तते निवर्तते वा ṬupṬ. 5.2 (*on* iv. 1.3); अङ्गीकृत्य मनोभवमुरसि तथा लालितोऽपि हतहारः। तापयति सखीम् KuṭṭaMa. 297; अङ्गीकृत्य नागरकवृत्तम् … हेमन्तयामिनीं क्षिप्रमक्षपयम् TilaMañ. 357.17; अङ्गीकृत्य च तृप्तिमत्र यदमुं प्रोद्धर्तुमेवाग्रहः SūktiMu. 36.22; अतीतां भाविनीं वा चेष्टामङ्गीकृत्य SyādvāMañ. 28.135; अस्ति पञ्चमोऽपि … नयश्छलो नाम। तमङ्गीकृत्य … तद्विजयाय (परिभवाय च) प्रयतिष्ये PañcT. 3.56 (313.3); उषस्येव त्वदन्वेषणाय भ्रमणमङ्गीकृत्य UdaySuKa 136.3; कैश्चित् क्षितिभुजा वैरमङ्गीकृत्यापि तत्क्षणम्। यैर्नाशि श्वपचोच्छिष्टं तेऽभूवन् सोमपैः समाः RājTa.(Ka.) 5.393; अहं मरणमङ्गीकृत्य याचकजनवाञ्छापूरणकामो निजमांसैर्भगवतीमर्चितवानस्मि PurusPa. 9.4; 16.12; शिरच्छेदमङ्गीकृत्यार्जितं द्रव्यं निखिलमपि कथं दीयेत BhojPra. 21.12; अङ्गीकृत्य सन्मङ्गलानि KaṁVa. 4.22; **B** having chosen (a direction) एकस्मिन्नहनि दक्षिणं दिग्भागमङ्गीकृत्य निर्गतो नगरात् (कुमारकेसरी) UdaySuKa. 86.5; **C** having agreed to, having acceded to (a request, advice) अङ्गीकृत्य निमन्त्रणमभ्युपगम्य श्राद्धभोजनम् ManuBh. i. 288.6 (*on* 3.180); मारीचः…तदभ्यर्थनामङ्गीकृत्य…जातरूपमयमृगरूपं गृहीत्वा … पञ्चवटीमव(? वा)गाहत RāmāCam. 3.23 (4); 5.53 (1); अङ्गीकृत्य गुरोर्वाक्यं तौ च मामित्यवोचताम् KathāSaSāg. i. 4.94; iii. 4.123; सुग्रीववचनं श्रुत्वा भक्तिवीर्यसमन्वितम्। अङ्गीकृत्याब्रवीद्रामो हनूमन्तम् AdhyāRā. vi. 1.14; अत एव सूत्रकारोऽपि प्रतिवादिनः पक्षपरिग्रहमङ्गीकृत्य तस्य स्थापनामात्रं निराचष्टे TārkiRa. 215.6; अथाङ्गीकृत्य तत् (वचनम्) तस्थौ हिडिम्बा वनमेत्य सा PāṇḍaC. 7.408; अभ्यर्थनां प्रधानानामङ्गीकृत्य स कृत्यवित्। दवदन्त्या सहारुह्य रथं राजपथेऽचलत् MalliC. 6.135; तातस्तं बहुमानेन प्राह …। अप्रमादवता भाव्यं धर्मरत्नेऽत्र दुर्लभे इत्यङ्गीकृत्य च तस्मिन् गते SamarāSaṁ. 7.90; सूरिश्छन्नं जगौ पुरः। विज्ञवाक्पतिराजस्य यदादिष्टं गिरा तदा। इत्यङ्गीकृत्य तेन … सभा सर्वा वक्त्रशुद्धिं व्यधाप्यत PrabhāC. 97.22; उपरुद्धः…एकेन हायनेन हीनमधिकं वा वर्षशतं कारयेति। स तदङ्गीकृत्य भूयोऽभ्युपेतः PrabaCin. 3.2; नृपेण तद्वचनमङ्गीकृत्य ग्रासो निषिद्धः PurāPraSaṁ. 13.22; तस्य वचनं श्रुत्वा राजा अङ्गीकृत्य वसन्तपूजासामग्रीसंपादने तमेवादिष्टवान् SiṁhāDvā. 133.2 (5); ऊरीकृत्याज्ञां याति। अङ्गीकृत्येत्यर्थः Prasā. i. 313.18; **D** having taken up, having possessed (inanimate subject) हृष्यन्त्युच्चरोमाञ्चमुञ्चि किमङ्गीकृत्याङ्गानि HarṣaC. 329.13; **E** having undertaken (a duty, responsibility, liability) अङ्गीकृत्यात्मनिक्षेपं पञ्चाङ्गानि समर्पयेत् BrahmāṇḍP. iii. 41.77; किं वाङ्गीकृत्य कार्यमार्यस्तेन क्षुद्रेणानुप्रविश्य … क्षयमुपनीतः HarṣaC. 256.14; निवर्तते नगरसंमुखमखिलोऽपि तत्तत्कार्यमङ्गीकृत्य प्रवर्तितः प्रस्थानकाले अनुपयुक्तः सेनापरिच्छदः TilaMañ. 131.7; ब्रह्मचारिसपिण्डस्य यावत्कालमशौचं स्वजातिविहितं तावत्कालमशौचमङ्गीकृत्य HārLa. 178.14; 181.2; मयाङ्गीकृत्य सम्यक्त्वं कुसंसर्गेण दूषितम् PārśvC. 2.378; नृपेण धनुर्बाणभङ्गमङ्गीकृत्य आजीवितान्तं संन्यस्तमृगयाव्यसनेन पुरं प्रति प्रत्यागच्छता PrabaCin. 37.23; भवान् श्रीचन्द्रगुप्तस्य राज्ञो मन्त्रितामङ्गीकृत्य खड्गं गृह्णातु PurusPa. 117.20; 119.21; **F** having taken (as valid), having accepted (as true), having assumed तस्य तु तद्वचनमङ्गीकृत्य साध्वनेनाभिहितमिति मत्वाब्रुवन् Tantrākhyā. 103.2; निक्षेपधारी यदि प्रतिपद्येत बाढमस्ति गृहाणेत्यङ्गीकृत्य दद्यात् ManuBh. ii. 162.23 (*on* 8.183); केचिन्महर्षयः विशेषमात्रमङ्गीकृत्य सामान्यापह्नवं कृतवन्तः S'arka. 2.10; 18.9; अमुमेवार्थमङ्गीकृत्य 'वृद्धिरादैच्' इति नियमार्थं व्याख्यातम् TātpaṬ.(U.) 175.20 (*on* 4.228); 86.12 (*on* 2.168); श्रुतयः स्मृतिवादाश्च कर्मप्राधान्यमेव तु। अङ्गीकृत्य प्रदृश्यन्ते प्रवृत्ताः सर्व एव हि BṛĀraUBhVā. i. 4.1488; ii. 3.242; PañcPā. 4.15 (*on* i. 1.0); PañcPra. 13.6; बाह्याभ्यन्तरकृतं भेदमङ्गीकृत्योपपत्तेः BrahmSūBh.(Bhā.) 56.16 (*on* i. 3.14); ग्रामः…अदृष्टफलमङ्गीकृत्य…प्रतिपादितः EI. xix. 243B.21; नापि यत्र तत्र समर्थोत्पत्तिमङ्गीकृत्य येन विकलेभ्योऽपि कदाचित्कार्यजन्मसंभावनायां प्रत्यक्षानुपलम्भविरोधः स्यात् ĀtmaTaVi. 75.14; अस्मदभिप्रेतस्य चाभावादेरनुग्राहकत्वमङ्गीकृत्य निःसाधना मीमांसका अपि न विप्रतिपत्तुमर्हन्ति NyāyKuA. i(1). 46.6; EI. xi. 183.19; xviii. 323.16; प्रमाणत्वाग्रहणमङ्गीकृत्यैव दोषप्रसङ्गं समाधत्ते NyāyRaMā. 32.22; केचित्पुनराचार्यकरणविधिप्रयुक्तत्वमध्ययनस्याङ्गीकृत्य S'āstrDī. 7.4 (*on* i. 1.1); व्युत्पत्तिदशायां योग्यान्वितस्वार्थे पदसामर्थ्यमङ्गीकृत्य PramāMā. 17.25; ज्ञानस्यैव स्वविषयावरणनिरसनपूर्वप्रकाशकत्वमङ्गीकृत्येति चेत् न BrahmSūBh.(Rā.) 92.14 (*on* i. 1.1); न वयमभेदग्रह(? हं) व्यवहारेऽङ्गमङ्गीकृत्य सारूप्याद्विभ्रमो व्यवहारयतीत्याचक्ष्महे Kiraṇā. 268.11; EI. iii. 49.16; i. 317.7; xx. 106.10; xi. 310.16; इत्थंभावलक्षणे तृतीयान्तत्वमङ्गीकृत्य तर्कव्यापारनिर्देश इति केचित् TārkiRa. 192.7; EI. ix. 69.23; अथैकेन सत्त्वमपरेण चासत्त्वमङ्गीकृत्य KhaṇḍanKhā. 21.13; पूर्वं प्रतिज्ञावादिनोक्तं प्रपद्य अङ्गीकृत्य अन्यद्दुरुत्तरम्…कारणम्…प्रत्यर्थी ब्रूयात् SmṛtiCan. iii. 120.2; EI. ix. 109.22; अङ्गीकृत्य हि भेदग्राहिमानस्य प्रामाण्यं भेदाभेदयो रूपभेदेन विरोधः परिहृतः VedāntKa. 236.9 (*on* ii. 1.14); 155.21 (*on* i. 3.13); 19.6 (*on* i. 1.0); अङ्गीकृत्य मुनिख्यातं जिनधर्मं तदादितः। कारयामास सचैत्यजिनबिम्बान्यनेकशः PārśvC. 7.743; EI. ix. 122.27; अत्र च पूर्वक्षण उपादानकारणं उत्तरक्षण उपादेयं इति पराभिप्रायमङ्गीकृत्याह SyādvāMañ. 16 (94); केचित् अभिलाषात् पूर्वतनं इच्छोत्कण्ठालक्षणमवस्थाद्वयमङ्गीकृत्य द्वादशावस्था इति वर्णयन्ति RasāSu. 180.22 (2.201); अतोऽसमर्थयोर्विनियोगासंभवादगत्या लक्षणामप्यङ्गीकृत्य कालो विधीयते NyāyMāVi. 125.7 (*on* iii. 2.4); 177.24 (*on* iii. 5.19); गुरूक्तं भावनाचतुष्टयं बाह्यार्थस्य शून्यत्वं चाङ्गीकृत्य SarvaDaSaṁ. 2.179; अपरे तु तत् (वेदप्रामाण्यम्) अङ्गीकृत्यापि तद्वाचिनां पदानां जीवादिविषयतां व्याकुर्वन्तस्तदभावमास्थिताः NyāySu.(Ja.) 16A.12 (*on* i. 1.1); इदमिति निर्देशस्य लाक्षणिकत्वमङ्गीकृत्यापि किमन्नमयादीनां विष्णुत्वग्रहणेन TattvPrakā. 19B.7 (*on* i. 1.16); सत्यपि पुत्रे पितृद्रव्यस्यान्यगामित्वमङ्गीकृत्यापि दोषमाह Subodhi. 27.22 (*on* 2.51); इममेव श्रुत्यभिप्रायमङ्गीकृत्य सर्वत्र ब्रह्मवाक्यनिर्णयमाह सूत्रकारः AṇuBh. 40.18 (*on* i. 1.19); 98.15 (*on* i. 3.42); तत्र परमात्मनोऽन्यं चेतनमङ्गीकृत्य तस्यार्तियुक्तत्वेनास्वातन्त्र्यस्यैवोक्तेः Nyāyāmṛ. 602A.1; अन्यथाख्यातिवादिनापि भवता प्रथमं ग्रहणस्मरणे अङ्गीकृत्यैव ताभ्यां विपर्ययो जायत इत्यभ्युपगतम् TantrRaha. 3.18; नन्वङ्गीकृत्यापि सामान्यं तस्य तुल्याकारजननशक्तिरङ्गीकर्तव्या YuktiSneha. 100.22 (*on* i. 1.5); विद्यानाथेन पुनर्द्रव्यस्य हेतुफलोत्प्रेक्षणमङ्गीकृत्य … अन्यथा विभागो दर्शितः CitraMī. 84.20; Kuval. 68 (30); इयं वृत्तिः … प्रत्ययपक्षमसमस्ततां पर्युदासं वाङ्गीकृत्य प्रवृत्तेति मन्दमतीनां भ्रमो भवति Prasā. i. 582.6; अत्र सूत्रे भाष्यान्तरप्रदर्शितं वर्णकान्तरमङ्गीकृत्य तदुपपादयितुमुपक्रमते S'ivārkaMaDī. i. 151.15 (*on* i. 1.3); i. 157.21 (*on* i. 1.3); i. 372.7 (*on* i. 2.20); अन्ये तु सुषुप्तावप्यविद्याद्यनुसंधानसिद्धये कल्पितामविद्यावृत्तिमहमाकारामङ्गीकृत्याहमर्थे संस्कारमुपपादयन्ति SiddhāLeSaṁ. 183.1; 219.1; अविद्यातादात्म्यमपि घटादावङ्गीकृत्य स्वाश्रयतादात्म्यसंबन्धेन सत्तातादात्म्यं सन् घट इत्यादौ भातीति मयोच्यते GuruCandr. i. 9.10; i. 235.5; प्रेत्यभावमङ्गीकृत्यापि यस्तदनुकूलं न चेष्टते VīraMi.(Āhnika.) 502.4; VīraMi.(Samaya.) 267.23; प्रायश्चित्तप्राप्तिं च तद्विषयामङ्गीकृत्य MīmāKau. iii. 91.19 (*on* i. 2.44); ii. 139.16 (*on* iii. 1.3); वयं त्वङ्गीकृत्यापि विकृत्यर्थत्वं ब्रूमः MīmāNyāPra. 222.15; न तावत् शब्दस्यैव देवतात्वं तद्धि अर्थमनङ्गीकृत्य अङ्गीकृत्य वोच्यते BhāṭṭDī. iii. 288.19 (*on* x. 4.13); तत् (पूर्वपक्षिवचनम्) अङ्गीकृत्यैव LaS'abdeS'e. i. 408.12; i. 529.9; BālamBha. i. 71.22 (*on* 1.14); सर्वोर्ध्वशक्तिविस्तारेण शक्त्यन्तरं कुर्यादित्यर्थमङ्गीकृत्य शक्तिपदस्य वारद्वयमन्वयस्तु न दुष्यत्येव SetuBa. 29.7; विष्णोः प्रकृतराज्ञश्चाभेदमङ्गीकृत्येदं पद्यम् AlaṅkāMañ. 102.4.

**अङ्गीक्रियमाण** (aṅgī-kriyamāṇa) *adj.* [*f.* -ā] **i** being accepted (as valid or true) संस्थानरूपे सामान्येऽङ्गीक्रियमाणे दर्शनहानिश्च प्राप्नोति S'arka. 82.15; आत्मनो 'भिन्नेषु धर्मेषु' अङ्गीक्रियमाणेषु तेषु सत्स्वपि, आत्मनः 'स्वरूपे' विशेषाभावात् PratyabhiVi. i. 101.1 (i. 2.6); अङ्गीक्रियमाणे च विशेषे SaṅkarKāBh. 75.14 (*on* ii. 1.75); नियतसंबन्धिसंबन्धे चाङ्गीक्रियमाणे तत्कृत उपकारोऽस्य समवायस्याभ्युपगन्तव्यः SyādvāMañ. 5(130); 6.(123); 7(7); अङ्गतयाङ्गीक्रियमाणमपि संनिपत्योपकारकत्वे नेदमभिमतमारादुपकारकत्वेन वा Ekāva. 1.1(2) (3.2); एतस्मिन् पक्षेऽङ्गीक्रियमाणे SarvaDaKau. 142.10; 102.18; यद्यपि प्रधानकारणवादे फलपर्यन्तमङ्गीक्रियमाणे न किंचिद्दूषणम् AṇuBh. 130.6 (*on* ii. 2.2); आदिमशरीराद्युत्पत्तौ अङ्गीक्रियमाणायाम् … अकृताभ्यागमप्रसङ्गश्च स्यात् LalitāTriBh. 308.7 (*on* 32); **ii** being received अरण्ये कान्तारे वा रक्षा चौरादिभ्योऽङ्गीक्रियमाणा न दोषाय ManuBh. i. 413.2 (*on* 4.247)

**अङ्गीक्रियमाणत्व** (aṅgīkriyamāṇa-tva) *n.* the nature of being accepted (as true or valid) न च कयापि युक्त्या मानेन वा भेदनिराकरणं भवति। अङ्गीक्रियमाणत्वात् Tattvodyo. 2A.9; 3A.6; नित्यानित्यपक्षविलक्षणस्य पक्षान्तरस्याङ्गीक्रियमाणत्वात् SyādvāMañ. 5 (177); 13 (8); तत्तांशस्पर्शिज्ञानरूपतया स्मरणस्याङ्गीक्रियमाणत्वात् Ekāva. 8.9(3) (225.5)

**अङ्गीचिकीर्षितत्व** (aṅgīcikīrṣita-tva) *n.* the state of having a desire to admit, the state of being intended to be admitted परेणाङ्गीचिकीर्षितत्वेन प्राधान्यान्मिथ्यात्वविकल्पः प्रथमं प्रश्नावसरे निर्दिष्टः NyāySu.(Ja.) 28B.6 (*on* i. 1.1)

**अङ्गीभू** (aṅgī-bhū-) I. P. to become a subordinate factor, to become accessory ननु सद्योऽविनीतस्य दृश्यते कर्मणः फलम्। कालोऽप्यङ्गीभवत्यत्र सस्यानामिव पक्तये Rāmā. iii. 47.26; अर्थाभिधानेन मन्त्रोऽङ्गीभवति S'ābaBh. 2266.15 (*on* xii. 3.30)

**अङ्गीभूत** (aṅgī-bhūta) *adj.* **i** which has become an accessory or subordinate तदेवमङ्गीभूतानां छलादीनामुपादानं जल्पे, न स्वतन्त्राणां साधनभावः NyāyBh. 59.19 (*on* i. 2.2); अतः अङ्गीभूतेषु तेष्वङ्गाश्रितश्च क्रमः कल्प्यः TantrRa. 254.14; रूपकेणाङ्गीभूतेन संकीर्णा (उत्प्रेक्षा) AlaṅkāMañ. 47.9; **ii** [*w. r.* for अङ्गिभूत] which has become the principal or main ब्रह्मणः साक्षात्कारायाङ्गीभूतं (? अङ्गिभूतं) निदिध्यासनमङ्गभूतं श्रवणादिकं च मुमुक्षुणा कार्यम् Nyāyāmṛ. 613A.8; सौमिकप्रणयनाङ्गभूताया उत्तरवेदेः प्रथमोत्तमयोः

**अचलरेचक** ( acala-recaka ) *m. n.* rotation or spinning movement of a mountain (during the mythological churning of the ocean) अचलरेचकव( ? च )क्रीकृतक्षीरोदावर्तपाण्डुरेण … आतपत्रेण निवार्यमाणातपो निर्गन्तुमारेभे Kād. 112. 7.

**अचललोचन** ( acala-locana ) *adj.* having steady or unwinking eyes निःश्वासोच्छ्वासयुक्तो( ? °मुक्तो ) वा निस्पन्दोऽचललोचनः । शिवध्यायी सुलीनश्च स समाधिस्थ उच्यते S'ārṅgaPa. 4489.

**अचलवत्** ( acala-vat ) *adv.* (steady) like a mountain मनश्च मे शत्रुनिवारणे ध्रुवं स्वरक्षणे चाचलवद् व्यवस्थितम् MahāBhā. vii. 2. 18; यच्च रूप्यपरं पुण्यं तैस्तदचलवद् ध्रुवम् VrGautaSm. 500. 24(1); देवर्षिषु प्रयातेषु बाले चाचलवत् स्थिते । किमासीत् कौतुकं तत्र GaṇeP. i. 64. 1.

**अचलवनस्थली** ( acala-vanasthalī ) *f.* forest-region on a mountain ( श्रीध्रुवसेनः ) [ के ]सरीन्द्रशिशुरिव राजलक्ष्मीमचलवनस्थलीमिवालङ्कुर्वाणः EI. iv. 79. 50; xxii. 118. 43.

**अचलवर** ( acala-vara ) *m.* principal or great mountain (the Kulācalas or Meru) यः स्रष्टाणां पुरस्तादचलवरसमभ्युन्नतेर्हेतुरेकः SūryaS'. 93; ( Kailāsa ) याः … प्राक्रोशयन् प्राङ्निजमचलवरं चालयन्तं दशास्यम् । पादाङ्गुल्यो दिशन्तु द्रुतमयुगदृशः … कल्याणम् … वः S'ivaKePāSt. 25; (Govindakūṭa) विद्याधरतरुणौ… । गोविन्दकूटसंज्ञकमचलवरं भ्रातरौ ययतुः KathāSaSāg. v. 2. 293.

**अचलवारि** ( acala-vāri ) *adj.* having calm or still waters आस्ते सः … साक्षाद्विमुक्तोऽचलवारिसिन्धुवत् AdhyāRā. vii. 5. 52.

**अचलविक्रम** ( acala-vikrama ) *adj.* possessed of steady or unfleeting courage or valour भूपस्तद्वचनं श्रुत्वा … । तेन सार्धं विमानस्थश्चाचालचलविक्रमः CitraPaC. 444.

**अचलवृक्षखण्ड** ( acala-vṛkṣakhaṇḍa ) *m.* a cluster of mountain-trees पक्षिस्वनैः … अचलवृक्षखण्डश्चण्डच्युतेरुदयतः स्तुतिमातताना Surath. 7. 13.

**अचलवृत्ति** ( acala-vṛtti ) *adj.* **i** of steady nature or disposition सत्समचलवृत्तेरप्युदग्रस्यापि भूभृतोऽस्याः समुद्भवे द्विजिह्वसंवेष्टनमतिघोरा च भ्रान्तिरासीत् AvantiKa. 45. 13; **ii** motionless by nature, AvantiKa. 45. 13.

**अचलशिख** ( acala-śikha ) *adj.* having a steady flame तत्र गत्वाद्भुतं तात पश्यामः किल पावकौ । दीपाविवाचलशिखौ BhaviP. 46A. 12 (i. 19. 12)

**अचलशिखर** ( acala-śikhara ) *m. n.* mountain-peak अचलशिखरस्थितकेसरी( ? रि )कराकृष्टपतनविशीर्णमिव कालमेघपटलम् … शबरसैन्यमद्राक्षम् Kād. 29. 16; अचलशिखरप्रस्तरप्रतिहतगतिप्रसरः … स्वयमेव विहस्याचिन्तयत् Kād. 120. 3; श्रीमान् योगादचलशिखरे केवलज्ञानमस्मिन् … अधिगम्य । …भोगानिष्टानविरतसुखं भोजयामास शश्वत् NemiDū. 125; सद्यस्तस्मिन्नचलशिखरे चित्रकूटाभिधाने तस्मै रामो गमनसरणिं तत्क्रमादादिदेश BhramDū. 15.

**अचलशिखाकूट** ( acala-śikhākūṭa ) *m. n.* range of mountain-peaks अचलशिखाकूटविकटमांसला( ? ला )सपीठाः … धरणिभुजः AvantiKa. 48. 3.

**अचलशिरस्** ( acala-śiras ) *n.* mountain-peak किमचलशिरोऽतिमहदिति वज्रमणीयो न दारयति SūktiRa. 99. 22; Subhāṣi. 2865.

**अचलशिला** ( acala-śilā ) *f.* mountain-rock युद्धे वैश्रवणालयेऽचलशिलावेगप्रतिस्फालिना । भीमेनाद्य … भो राम नाहं जितः ŪruBha. 34.

**अचलशृङ्ग** ( acala-śṛṅga ) *n.* mountain-peak महाभ्रकूटाचलशृङ्गसंनिभैर्गजैरनेकैरिव वज्रपातितैः MahāBhā. vii. 48. 43; Rāmā. vi. 48. 49; Kapphiṇā. 8. 31; गोपवृद्धा निदध्युः … पुरुषमचलशृङ्गे Yādavā. 6. 109.

**अचलशृङ्गकल्प** ( acalaśṛṅga-kalpa ) *adj.* [*f.* -ā] resembling a mountain-peak पाञ्चालराजः …गदां प्रगृह्याचलशृङ्गकल्पाम् । … अनुससार नागम् MahāBhā. ix. 19. 22; स नागभोगाचलशृङ्गकल्पौ विक्षिप्य बाहू … विकृतं जजृम्भे Rāmā. vi. 48. 49.

**अचलशृङ्गजुष्** ( acalaśṛṅga-juṣ ) *adj.* clinging to a mountain-peak अचलशृङ्गजुषस्तडितो दधुस्तरलिता रसना इव ये घनाः । … तैरसितैमहिषायितम् Kapphiṇā. 8. 31.

**अचलशृङ्गसंनिभ** ( acalaśṛṅga-sannibha ) *adj.* resembling a mountain-peak महाभ्रकूटाचलशृङ्गसंनिभैर्गजैरनेकैः … निघ्नतीव गौश्रिता MahāBhā. vii. 48. 43.

**अचलशेमुषी** ( acala-śemuṣī ) *adj.* (*f.*) having a firm or unwavering resolve प्रमीतभर्तृकोत्पन्नमृतापत्येव सा तदा । अदूयत निजैः सर्वैश्चिरस्याचलशेमुषी RājTa.(Jo.) 273.

**अचलश्रवणाञ्चल** ( acala-śravaṇāñcala ) *adj.* having the ends of ears unmoving आकर्ण्य गीतमचलश्रवणाञ्चलानाम् । आरभ्यते करटभित्तिषु कुञ्जराणां निर्विघ्नमेव मधुपैर्मदपानगोष्ठी NemiNir. 3. 21.

**अचलश्री** ( acala-śrī ) *f.* name of a Kinnara maid [DBHS]

**अचलश्रेणिवृष्टि** ( acalaśreṇi-vṛṣṭi ) *f.* shower of rows of hills वेपते स दिवि देवसंहतिस्तेन तेन करणेन रावणेः । तेन वालितनयस्य चाचलश्रेणिवृष्टिरभसेन पिप्रिये RāmC. 29. 78.

**अचलश्रेष्ठ** ( acala-śreṣṭha ) *adj.* greatest of the mountains भगवन्नचलश्रेष्ठ…नमस्तेऽस्तु महीधर MahāBhā. iii. 61. 39; ix. 53. 33; स सह्यमचलश्रेष्ठमवतीर्य भृगूद्वहः BrahmāṇḍP. ii. 57. 27; ii. 22. 7; ii. 57. 2.

**अचलसंयुता** ( acala-saṁyutā ) *adj.* (*f.*) along with the mountains आययौ सोऽनलासुरः । तस्मिन्क्षणेऽचला वा ( ? चा )पि चचालाचलसंयुता GaṇeP. i. 64. 4.

**अचलसंस्तव** ( acala-saṁstava ) *adj.* **A** continuously praising श्रीवस्तुपालो जगदेकवीरः श्रीवस्तुपालो जगदे कवीरः । वैतालिकेनाचलसंस्तवेन वैतालिकेनाचलसंस्तवेन VasaViKā. 12. 13; **B** praising the mountain, VasaViKā. 12. 13.

**अचलसंस्थित** ( acala-saṁsthita ) *adj.* standing firm ऐरावते चतुर्दन्ते मातङ्गेऽचलसंस्थिते । … शतक्रतुः । तस्थौ हिमगिरेः शृङ्गे भानुमानिव दीप्तिमान् MatsyaP. 153. 22.

**अचलसकलधर्म** ( acala-sakaladharma ) *adj.* steadfast in all acts (or practices) of righteousness अचलसकलधर्मो नित्ययुक्तो महात्मा शमदमसहधर्मात्मा सदा मां जुगोप PadmP. ii. 58. 27.

**अचलसंकाश** ( acala-saṅkāśa ) *adj.* resembling a mountain सुरं चाचलसंकाशमवधीत्पुष्करेक्षणः MahāBhā. vii. 10. 5; xv. 30. 9; ते गजाचलसंकाशाः … क्षिप्रमेवाभिजज्ञिरे ( वीराः ) Rāmā. i. 16. 10; i. 742* (33); गजैश्चाचलसंकाशैः … विराजते ( गिरिः ) PadmP. ii. 31. 11.

**अचलसंचलनाहरण** ( acalasañcalanāharaṇa ) *adj.* causing a quake or tremor to the mountain (Himālaya) प्रववृतेऽथ महाहवमल्लयोरचलसंचलनाहरणो रणः Kirātā. 18. 8.

**अचलसंधि** ( acala-sandhi ) *m.* space between two mountains, a pass रथ्या राजहंसं रणाङ्गणादपोढुः । …गहनाद् गहनम्…अचलसंधिमाप(पन्त? त)न्तः … जहुरसून् AvantiKa. 115. 17.

**अचलसंनिकाश** ( acala-sannikāśa ) *adj.* resembling a mountain नात्यम्बुदा जलमुचोऽचलसन्निकाशाः BṛSaṁ. 19. 2.

**अचलसंनिभ** ( acala-sannibha ) *adj.* resembling a mountain स विद्धः सहदेवेन रराजाचलसंनिभः ( दुर्योधनः ) MahāBhā. viii. App. I. 18(26); ix. 17. 2; नित्यमत्तैः सदा पूर्णा नागैरचलसंनिभैः ( अयोध्या ) Rāmā. i. 6. 23; MatsyaP. 150. 187; 150. 200; नीत्वा विहायसा दूरं स तामचलसन्निभः ( पक्षी ) । तत्याज मोहविवशामुदयाचलकंदरे SkandP. iii(1). 5. 113 = BṛKathāMañ. ii. 1. 44; दृष्टोऽङ्गुष्ठशिरोमात्रः क्षणाच्छैलेन्द्रसन्निभः । … वराहरूपो भगवाञ्जगर्जाचलसन्निभः DevīBhāP. viii. 2. 7; SaurP. 49. 74.

**अचलसप्तमी** ( acala-saptamī ) *f.* name of a *tithi*, a vow observed on that day स्नपनव्रतसप्तम्यौ तथैवाचलसप्तमी BhaviP. 901B. 19 (iv. 208. 13)

**अचलसमुदय** ( acala-samudaya ) *m.* **1** rise (of the sun) on the mountain आशापूर्तिं प्रकुर्वन् करवितरणतः पद्मिनीप्राणबन्धुः … । जम्भारातेर्दिहोच्चैरचलसमुदयात्सुप्रभातप्रकाशी … रचयति सुदिनं विक्रमादित्य एव ViraMi.(Saṁskāra.) 122. 21; **2** steady prosperity, ViraMi. (Saṁskāra.) 122. 21.

**अचलसरोरक्षा** ( acalasaro-rakṣā ) *f.* (natural) defence provided by hills and lakes नृपः … यत्राचलसरोरक्षा वृक्षरक्षा तु यत्र च । वासं तत्र विधायैव रात्रौ रक्षेत् स्वकं बलम् BṛParāSm. 12. 27.

**अचलसानु** ( acala-sānu ) *m.* summit of a mountain इति चालयन्नचलसानुवनगहनजानुमापतिः Kirātā. 12. 52; ( हरिवाहनः ) मुहुर्निशावृत्तं गजगमनवृत्तान्तमावेदयता … मुहुश्चिह्नीकृतैरचलसानुभिः … यातव्यदेशमुपदर्शयता सहप्रस्थायिना महामात्रवर्गेण सूच्यमानमार्गोऽभिजवेनाटवीमगच्छत् TilaMañ. 184. 22.

**अचलसाम्राज्यच्छत्र** ( acalasāmrājya-cchatra ) *n.* parasol to mark sovereignty (of Kailāsa) over (other) mountains निशासु शिखरप्रान्तवर्( ? व )तिना स शिलोच्चयः । चन्द्रेणाचलसाम्राज्यच्छत्रेणेव विराजते S'ivaP. vii( 1 ). 24. 11 (529A. 3)

**अचलसार** ( acala-sāra ) *adj.* having the strength of a mountain वैधसमस्त्रमुपाददे । अचलसारमदः समधादथो धनुषि माधवते मनुवंशजः Rāgh. 19. 47.

**अचलसारणा** ( acala-sāraṇā ) *adj.* (*vīṇā*) having immovable frets स्वराणां कस्यचिदपि वैलक्षण्यं यस्य प्रतिभासनात् तत्रैका ध्रुवकस्थानीया अचलसारणा वीणायामपरस्यां पञ्चमतन्त्री श्रुतिमात्रं शिथिलीकार्या । तदा मध्यमग्रामो जायते AbhinBhā. iv. 23. 1 (*on* 28. 26)

**अचलसार्थवाह** ( acala-sārthavāha ) *m.* a trader named Acala मूलदेवः सकलकलाकलापज्ञः, अचलसार्थवाहो महाधनी, देवदत्ता च गणिक्यमाणिक्यं तत्रैव प्रागवसन् TīrthaKa. 69. 7.

**अचलसिंह** ( acala-siṁha ) *m.* **i** a great ( lofty ) mountain चिच्छेद रणमध्ये च पपाताचलसिंहवत् BrahmVaiP. iv. 120. 61; **ii** name of a poet अचलसिंहस्य SubhāRaK. 5. 30; 16. 25; 21. 13; SaduktiKa. 260. 30.

**अचलसुता** ( acala-sutā ) *f.* daughter of the mountain ( Himālaya ), Pārvatī देवः···अचलसुतापाणिपद्मावलम्बी···वीक्षते निश्चलाक्षः BālRā. 4. 18.

**अचलसुमनस्** ( acala-sumanas ) *m.* name of a Bodhisattva [ DBHS ]

**अचलसोपान** ( acala-sopāna ) *n.* a stationary staircase त्रिहस्तादिपञ्चहस्तान्तं षट्षडङ्गुलवर्धनात्। एतदचलसोपानं विस्तारं नवधा भवेत् MānaSā. 30. 67.

**अचलस्कन्ध** ( acala-skandha ) *m.* name of a Bodhisattva [ DBHS ]

**अचलस्थापन** ( acala-sthāpana ) *adj.* having a firm foundation अभ्रंलिहं जिनाधीशमन्दिरम् ··· । अचलस्थापनं तच्च ··· तादृक् प्रतिष्ठा हि शक्रेणापि न चाल्यते PrabhāC. 60. 18.

**अचलस्थिति** ( acala-sthiti ) *adj.* **A** having an immutable state सः ··· अमूर्तोऽप्यचलस्थितिः MahāP. 21. 118; अचलस्थितिरक्षोभ्यः कूटस्थः स्थाणुरक्षयः ( भवान् ) MahāP. 25. 114; **B** constantly present ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः। उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः KāvyPra. 462. 3; *f.* steady position अचलस्थितिविद्योती सदा स्थिरचितद्युतिः KāvyKaVṛ. 65. 9 ( 3. 2 )

**अचलस्थितिता** ( acalasthiti-tā ) *f.* unshaken or unperturbed state अचलस्थितितोदारा प्रकटाभोगतेजसा। तेन निष्कामतोदेति YogVā. ii. 14. 29.

**अचलस्थिर** ( acala-sthira ) *adj.* steady or firm like a mountain अपि निशिततराः शराः सुरारेर्वपुषि हरेरचलस्थिरे पतन्तः। नयवति कुनया इवाधमस्य ··· निवृत्ताः Rāgh. 14. 14.

**अचलस्वरूपा** ( acala-svarūpā ) *adj.* ( *f.* ) of immutable nature, everlasting शिवामचलस्वरूपां प्रापतुर्मोक्षसंपदम् MalliC. 8. 368.

**अचलस्वान्त** ( acala-svānta ) *adj.* having a firm mind or thought किं कारणमयं योगी पर्वतेऽत्र समुन्नते। संतिष्ठतेऽचलस्वान्तो दिवाकरकराहतः BṛKathāK. 139. 162.

**अचलहत** ( acala-hata ) *adj.* multiplied by seven अचलहतनवांशा लिप्तिका रुद्रनिघ्ने गगनरसविभक्ते लिप्तिकास्ता विपूर्वाः MaBhāsk. 1. 34.

**अचला** ( a-calā ) *f.* **1** the earth श्राम्यते व्यक्तमेवेयं पार्थिवौघप्रपीडिता। सहजां यां क्षमां त्यक्त्वा चलत्वमचला गता HariVaṁ. 41. 26; कथं ममेयमचला मत्पुत्रस्य कथं मही। मद्वंश्यस्येति चिन्तार्ता जग्मुरन्तमिमे नृपाः VisṇuP. iv. 24. 124; प्रियसुहृदचलामार्यकः शास्ति राजा Mṛcch. 10. 59; ( वसुधा ··· पितामहमाह ) भगवन्नाम ममैतत्त्वया कृतं यदचलेति BṛSaṁ. 32. 4; GaṇeP. i. 83. 24; प्रचचालाचलां सैन्यैः साचलां चलयन्निव TriṣaS'aPuC. ii. 4. 84; सप्ताश्वसप्तयः। नमयन्तो भुवं भीमाः ··· चलयद्भी रणारम्भेष्वचलामचलैस्सह EI. vi. 150. 35; अचलाचलसद( ? दृ )शांबुदनिकरैः संपूर्णवारिमयी VasiS. 6. 97; S'aṅkaDigVi. ( Mā. ) 2. 89; सशैलामचलांस्तत्र( ? लां तत्र ) चापे चिक्षेप केशवः Dhūrtā. 132; यस्यैकलिंगनिजसेवक इत्युदारा कीर्तिप्रशस्तिरचलां सुरभीकरोति EI. xxi. 286. 36; KathāKau. 10. 77; AmaK. 560; AnekāSa. 531; AbhidhāRaMā. 2. 1; Vaija. 35. 4; TrikāS'e. iii. 3. 381; RājNi. 291. 10; AṣṭāNi. 36. 3; AgaNi. 48; AbhidhāCin. 936; AnekāSaṁ. 3. 617; ViśvaPra. 158. 120; AnekāK. 835; NānārthSaṁ. 7. 60; NānārthāSaṁ. ii. 50. 37; comm. *on* NāmMā. 6; ParyāS'aRa. 2. 2; MediK. 161. 59; DharK. 2368; NānārthaMa. 1680; S'abdaRa. ( Vā. ) 726; ParaNā. 546; Anekā.( Pa. ) 2930; ViśvaLoK. 339. 58; KośaKaTa. 1. 2469; KalpaK. 2. 15; S'abdaRaSaK. 301. 13; **2 i** name of one of the 'mothers' attending on Skanda लम्बसी केतकी चैव चित्रसेना तथा बला ( v. l. तथाचला ) MahāBhā. ix. 45. 14; **2 ii** name of a river इक्षुदा त्रिदिवाचला ··· महेन्द्रतनयाः सर्वाः MatsyaP. 114. 31; **2 iii** name of one of the stages ( *bhūmis* ) of spiritual development of a Bodhisattva सा चेयमचलादिभूमित्रये चतुर्धा वशिता वेदितव्या। एकस्यामचलायां भूमौ द्विविधा MaYānaSū. 66. 14 ( 11. 46 ); द्वयसंज्ञाविचलनादचला च निरुच्यते MaYānaSū. 182. 22 ( 20. 37 ); AbhisaAlaṅĀ. 99. 18; **2 iv** one of the names of Parameśvarī नाम्नामष्टसहस्रेण तुष्टाव परमेश्वरीम्···अनादिरव्यया शुद्धा देवात्मा सर्वगाचला KūrmaP. 108. 15 ( 1. 12 ); **2 v** name of one of the cowherdesses एषा चन्द्रप्रभा चन्द्रकलेयमब( v. l. च )ला स्मृता PadmP. iv. 74. 124; **2 vi** another name of the metre Suvaktrā सुवक्त्रा। अचलेत्यन्ये ChandaśCū. ii. 195. 6; **2 vii** name of a *naya* or a subdivision of the Rājagṛhaviṣaya राजगृहविषयान्तःपाति···अचलानयप्रतिव(ब)द्धह[स्ति]ग्राम EI. xvii. 321. 27; **2 viii** name of a rākṣasī [ PW, DBHS ]; **2 ix** name of a female lay-disciple [ DBHS ]; **3** red arsenic ससारा वैष्णवीसेना अचला कादिकं कणा RasRaSa. 12. 98; **4** bolt or pin अचलः पर्वते वृक्षे कीलावसुधयोः स्त्रियाम् NānārthaMa. 1680.

**अचलाकृति** ( acalākṛti ) *adj.* **1** with unmoving form ( i. e. body ) प्रशमितकरणः समाहितात्मा क्वचिदचलाकृतिरात्मनिष्ठितोऽभूत् ViveCū. 481 = SarvaVeSāSaṁ. 924; **2** assuming the form of a mountain अचलाकृतिराशु नैष गोप्ता वृषसेनासु सदा न वासुदेवः Yādavā. 6. 30 ( comm. सर्वदाप्यस्माकमयमेव पर्वतरूपधारी भगवान् रक्षकः ··· इत्यर्थः। )



**अचलाग्र** ( acalāgra ) *n.* peak of a mountain, mountain-top गजयोधिनः। अदृश्यन्ताचलाग्रेषु द्रुमा भग्नशिखा इव MahāBhā. vi. 58. 40; vi. 81. 35; स भीमसेनस्य रथं हताश्वो माद्रीसुतः ··· आपुप्लुवे सिंह इवाचलाग्रम् MahāBhā. viii. 62. 31; vii. 26. 22; सुपर्णपक्षानिलनुन्नपक्षं भ्रमत्पताकं प्रविकीर्णशस्त्रम्। चचाल तद्राक्षसराजसैन्यं चलोपलं नीलमिवाचलाग्रम् Rāmā. vii. 6. 69; BṛKathāS'loSaṁ. 18. 438.

**अचलाङ्ग** ( acalāṅga ) *adj.* keeping the body steady द्विजः। बद्धासनोऽचलाङ्गस्तु कुर्यादसुनिरोधनम् BṛParāSm. 12. 175 ( +67 )

**अचलाङ्गण** ( acalāṅgaṇa ) *n.* region of the mountain ( Raivataka ) प्रथमबिन्दुभिरम्बुमुचोऽम्भसाम्। प्रविरलैरचलाङ्गन( v. l. °ण )मङ्गनाजनसुगं न सुगन्धि न चक्रिरे S'iśuVa. 6. 33.

**अचलाङ्गन** ( acalāṅgana ) *n.* region of the mountain ( Raivataka ), S'iśuVa. 6. 33.

**अचलाङ्गुलि** ( acalāṅguli ) *adj.* ( the Tripatākā posture of the hand ) having the ( three ) fingers steady or unmoving ( while the thumb and ring-finger are bent ) अचलाङ्गुलिरप्येष लघुपक्षिनिरूपणे ( करः ) ViṣṇuDhaP. iii. 26. 18.

**अचलाचल** ( acalācala ) *m.* an epithet of S'iva ( *lit.* steadfast like a mountain ) आश्रमः क्षपणः क्षामो ज्ञानवानचलाचलः। ( एवं नाम्नां सहस्रेण तुष्टाव वृषभध्वजम् ) LiṅgaP. i. 98. 55; *adj.* immovable as a mountain [ DBHS ]

**अचलाचला** ( acalācalā ) *adj.* ( *f.* ) stable or firm like a mountain श्रियं मानसवेगोऽपि कदलीदलचञ्चलाम्। शक्तित्रयप्रयोगज्ञः कृतवानचलाचलाम् BṛKathāS'loSaṁ. 14. 29; *f.* **A** one of the sixteen S'aktis belonging to the second *āvaraṇa* द्वितीयावरणं शृणु रुद्रवत्यचलाचला LiṅgaP. ii. 27. 170; **B** name of a goddess of the second *āvaraṇa* of Pramathāyī अचलाचला ··· प्रमथायीद्वितीयावरणम् VīraMi.( Rājanīti. ) 388. 8.

**अचलाटवी** ( acalāṭavī ) *f.* thicket or forest on a mountain अन्विष्य दिनमखिलमचलाटवीमध्यादुपागतमदृष्टस्वामिदुःखक्षाममक्षमम् ··· कुमारपरिचारकगणं प्रणम्य TilaMañ. 415. 3.

**अचलातल** ( acalā-tala ) *n.* surface of the earth स्वयमवनेर्विवरं प्रविश्य येन। प्रकटितमचलातले सयोगं जगदुपकारपरेण शब्दभाष्यम्। तम् ··· अहं त्वाम् ( पतञ्जलिम् )···प्रापम् S'aṅkaDigVi.( Mā. ) 5. 96.

**अचलात्मक** ( acalātmaka ) **1** *adj.* **A** of immutable nature अन्यस्यान्यो विनाशः किम्, किन्न स्यादचलात्मकः NyāyVi. 2. 260; **B** not involving motion अचलात्मकक्रियात्मकत्वाद् ध्रौव्यार्था अकर्मका उच्यन्ते KātanVṛ. *on* iv. 6. 53; **2** having a particular measure of time ततो हस्तप्रहेलितम्। अचलात्मकमित्येवंप्रकारः कालपर्ययः MahāP. 3. 227.

**अचलात्मकत्व** ( acalātmaka-tva ) *n.* the state of being motionless 'अहं गच्छामि'···अत्र हि अहंप्रत्ययोऽपि व्यभिचार्येवोपलभ्यते, अचलात्मकत्वादात्मनः Bṛha. 238. 5 ( *on* i. 1. 5 )

**अचलात्मजा** ( acalātmajā ) *f.* daughter of the mountain ( Himālaya ), Pārvatī तवोदरेऽवतारं तु करिष्याम्यचलात्मजे GaṇeP. ii. 80. 27; प्राग्जन्मन्यचलात्मजे कृतभवत्पादापराधा वयम् YātrāPra. 8. 20.

**अचलात्मन्** ( acalātman ) *adj.* unshakable or immovable by nature मुमोह वोध्योर्ह्यचलात्मनो मनः Saund. 10. 56; शुभाश्रयः स चित्तस्य सर्वगस्याचलात्मनः ViṣṇuP. vi. 7. 76; अन्यथानिश्चितं सत्त्वं विरुद्धमचलात्मनि PramāSaṁ. 3. 40.

**अचलाधिकलक्ष्मी** ( acalādhika-lakṣmī ) *adj.* **A** possessing plenty of permanent or steady wealth सः मित्रोदयहेतुः काञ्चन(-)शोभां बिभ्रदचलाधिकलक्ष्मीः सुमेरुरिव VāsaDa. 27. 1; **B** most beautiful of mountains, VāsaDa. 27. 1.

**अचलाधित्यका** ( acalādhityakā ) *f.* table-land of a mountain मेघपङ्क्तयः। अचलाधित्यकोत्सङ्गमिमाः समधिशेरते Kāvyāda. 1. 98.

**अचलाधिप** ( acalādhipa ) *m.* chief of mountains ( Himālaya ) महामुनिः शाण्डिल्यदर्शनाकाङ्क्षी संचचाराचलाधिपम् PāraS. 1. 24; घनवर्त्म सहस्रधेव कुर्वन् हिमगौरैरचलाधिपः शिरोभिः Kirātā. 5. 17; ववृधे अचलाधिपं दलयतेव जवाच्छरजन्मना युधि रवेण तदा HarVi. 42. 39.

**अचलाधिपति** ( acalādhipati ) *m.* lord of mountains ( Suvela ) रेजे स राक्षसपतिः ··· न्यक्कृत्य नक्तमचलाधिपतिं सुवेलम् RāmC. 19. 55.

**अचलाधिराजतनया** ( acalādhirāja-tanayā ) *f.* daughter of the lord of mountains ( Himālaya ), Pārvatī लभ्येत वायं मया प्रेयानित्यचलाधिराजतनया-

चिन्ता चिरं पातु वः AlaṅkāKau.(Vi.) 418.19.

**अचलाधीश** (acalādhīśa) *m.* lord of the earth, king संचचालाचलाधीशः प्राप चास्य जिनालयम् PrabhāC. 199.18; संचचालाचलाधीशः ससैन्यः स्वपुरं प्रति CitraPaC. 492.

**अचलानाथ** (acalā–nātha) *m.* king, lord of the earth प्राचालीदचलानाथस्तीर्थेनाथमनूत्सुकः PariPar. 1.44.

**अचलानिमेषदृश्** (acalānimeṣa–dṛś) *adj.* whose eyes are steady and unwinking बालामचलानिमेषदृशम्। दूत्यवदत् S'ṛṅgāMañ.(A.) 49.11.

**अचलानुज** (acalānuja) *m.* younger brother of Acala सर्वेऽप्युपेत्य शिरसा प्रणेमुरचलानुजम् TrisaS'aPuC. iv. 1.756; iv. 1.679.

**अचलान्त** (acalānta) *adj.* A ending with the earth ईश्वरादचलान्ताच साधिभूताधिदैवताम्। तत्त्वमालां स्मरेत् JayāS. 18.29; B ending with Acala Bhairava हेतुकादिभ्योऽचलान्तेभ्यो दशभ्यः … दश पिण्डान् … दत्त्वा NityoNi. 142.27.

**अचलान्यात्मता** (acalānyātma–tā) *f.* the state of being of the nature of another immutable (object) अप्यन्यथा भवन्नन्यो नाचलान्यात्मतामियात् IṣṭaSi. 232.17.

**अचलापति** (acalā–pati) *m.* lord of the earth, king अचलापतिरपि स मारिदत्तः … मुनिकुमारकयुगलस्य विलोकनात् … नितरां प्रससाद चेतसि Yaśas-Cam. i. 154.8; तं वन्दितुमथानन्दादचालीदचलापतिः TrisaS'aPuC. ii. 1.69; श्रुत्वेति मुदितो नन्तुं प्राचालीदचलापतिः SamarāSam. 7.19; 9.438.

**अचलापाल** (acalā–pāla) *m.* protector of the earth, king इत्याकर्ण्याचलापालः … प्राह PrabhāC. 94.1.

**अचलाभ** (acalābha) *adj.* resembling a mountain क्रौञ्चबर्हिणवीणानां भूषणानां च निस्वनैः। नादितान्यचलाभानि वेश्मान्यग्निर्ददाह सः Rāmā. vi. 62.14; तपसश्चास्य व्यथमानः पुरंदरः। आसनेनाचलाभेन चलता चलितः BṛKathā-S'loSaṁ. 18.544.

**अचलाभिध** (acalābhidha) *adj.* called Acala आगत्यर्तुं विमानात्स तस्यां जातोऽचलाभिधः PadmP.(Ra.) 91.21; निर्जनामटवीं त्यक्त्वा पुरं प्राप्तोऽचलाभिधम् BṛKathāMañ. 11.65; हिरण्यैः पूरयामास बलदेवोऽचलाभिधः TrisaS'aPuC. iv. 1.210.

**अचलायुध** (acalāyudha) *adj.* having a mountain for weapon वालिसूनुरचलायुधो बली दुर्जयः RāmC. 29.77; इत्यङ्गदवरा वीराः … । अभ्ययुः कुम्भकर्णं ते सालतालाचलायुधाः RāmāMañ. 353.12.

**अचलारि** (acalāri) *m.* Indra (*lit.* enemy of mountains) अथ तस्य मुनेरहल्यया प्रियया भूदचलारिरुत्सुकः Rāgh. 3.71.

**अचलाली** (acalālī) *f.* row of mountains तस्याचलालीरन्वेति चित्रा नागचमूर्ध्वजैः KīcaVa. 1.20.

**अचलालोकन** (acalālokana) *n.* looking at the mountain अथाचलालोकनलोललोचनं विलोक्य विश्रम्भमुवं सुवः पतिम्। जगे वचः … विचित्रबाहुना Kapphiṇā. 6.11.

**अचलावबोध** (acalāvabodha) *adj.* having firm knowledge यस्तु प्रशक्यतितरामचलावबोधः सैवासि मुक्तिरपरा प्रणमामि तुभ्यम् BṛDharmaP. i. 41.21.

**अचलावस्थ** (acalāvastha) *adj.* who is in an immobile or stationary state तमच(ना? ला)वस्थं पार्थिवं तोयद इव पादपम् … आह्लादय(न्व? च) AvantiKa. 206.7.

**अचलाशय** (acalāśaya) *adj.* inflexible in mind or intention राजापि तं समालम्ब्य प्रययावचलाशयः BṛkathāMañ. ix. 2.716; असौ वारांनिधेस्तीरमचालीदचलाशयः MalliC. 8.28.

**अचलासप्तमी** (acalā–saptamī) *f.* seventh day of the bright-half of Āśvina, also called *Bhāskarasaptamī* श्रूयतां पाण्डवश्रेष्ठ…यन्मया कस्यचिन्नोक्तमचलासप्तमीव्रतम् BhaviP. 679A.16 (iv. 53.6); 680.19 (iv. 53 colophon)

**अचलासप्तमीस्नान** (acalāsaptamī–snāna) *n.* bath on the *Acalāsaptami* day अचलासप्तमीस्नानं कथितं च विशांपते BhaviP. 679B.27 (iv. 53.28)

**अचलास्थिरत्वहेतु** (acalāsthiratva–hetu) *m.* cause of the steadiness of the earth न धरणिरुपरि प्रयाति नाथः … अपि च भवानचलास्थिरत्वहेतुः AmṛUda. 4.56.

**अचलास्पन्दा** (acalāspandā) *adj.* (*f.*) motionless like a mountain ताः सर्वाः … । बभूवुरचलास्पन्दाः पुलकाञ्चितविग्रहाः BrahmVaiP. iv. 28.105.

**अचलाहता** (acalāhatā) *adj.* (*f.*) struck (i. e. blocked) by a mountain अभिचाराः परकृताश्चैनमप्राप्य भीषिताः। प्रविशन्ति प्रयोक्तारमापगेवाचलाहता AhirbuS. 26.89.

**अचलित** (a–calita) *adj.* i not moved, unshaken ध्यायन्बोधैरवाप्तो न चलित इति (v. l. ध्यायन्यो योगपीठादचलित इति) वः पातु दृष्टो मुनीन्द्रः Nāgā. 1.2; भ्रुशुण्डौ चलिते पृथ्वी कदाप्यचलिते मुनौ। चचाल GaṇeP. ii. 17.13; श्लाघ्यस्त्वं मय सत्पथादचलितो यः सर्वविद्यास्पदम् KathāSaSāg. viii. 2.373; ii steady, constant सः (भास्करवर्मा) … अचलितनिरन्तरप्रणयरसभराकृष्टकामरूपलक्ष्मीः EI. xii. 75.44.

**अचलितचारित्रा** (acalita–cāritrā) *adj.* (*f.*) who has not swayed or swerved from good conduct दृश्यन्ते ह्यचलितचारित्राणामपि युवतीनामेवंविधाः सद्भावगर्भाः भणितयः VyaktiVi. 115.9.

**अचलितत्व** (acalita–tva) *n.* immovability, immobility जीवस्य लोकालोकसीम्नोऽचलितत्वादाकाशस्य … असंभवद्धर्ममधिगमयति TattvPradi.(A.) 189.5 (*on* 2.41)

**अचलितधैर्य** (acalita–dhairya) *adj.* of unshaken boldness or courage अचलितधैर्यं गोत्रपवित्रम्…तस्याशीर्व्वचनमिदम् EI. iii. 309.37.

**अचलितपक्ष्ममालम्** (acalita–pakṣmamālam) *adv.* with the rows of motionless eyelashes (i. e. without blinking the eyes) अचलितपक्ष्ममालम् अस्मै प्रणाममकरवम् Kād. 142.21.

**अचलितम्** (a–calitam) *adv.* without shaking स्त(? स्त)म्भानुत्थापयेत्ततः। …तथैवाचलितं पुनः NāṭyaS'ā. 2.58 (? 61)

**अचलितमति** (acalita–mati) *adj.* firm in mind अचलितमतिः … व्रतमिदमाजगरं शुचिश्चरामि MahāBhā. xii. 172.26.

**अचलितवपुस्** (acalita–vapus) *adj.* whose body is in a steady position समं स्थित्वा गात्रैरचलितवपुः … श्रुतियुगमिदं हर्षय गज YaśasCam. i. 486.7.

**अचलितवलयस्रज्** (acalita–valayasraj) *adj.* having bracelets and garlands not moving अचलितवलयस्रज्ञि…अकृत यः शात्रवान्तःपुराणि SaduktiKa. 217.13.

**अचलितवीर्य** (acalita–vīrya) *adj.* of undaunted valour अचलितवीर्यः …राजमकरध्वजः … करिकालचोळः EI. xxi. 33.27.

**अचलितवृत्ता** (acalita–vṛttā) *adj.* (*f.*) not straying from good conduct या अप्यचलितवृत्ताः … प्रमदाः KuṭṭaMa. 510.

**अचलिताक्षम्** (acalitākṣam) *adv.* with motionless eyes परिपीडितसकलाङ्गमचलिताक्षमत्याग्रुग्नगात्रम् … अनत्युचमजिह्वा इवापोषन्न(?) AvantiKa. 65.20.

**अचलितात्मता** (acalitātma–tā) *f.* firm resolve प्राणिना हि नियमेन किमप्यचलितात्मतया व्रतमुपात्तं भवति YaśasCam. ii. 284.9.

**अचलितार्गल** (acalitārgala) *adj.* the bolt of which is unmoved (i. e. not pushed) तथा च मुष्यमाणेऽपि रात्रिष्वचलितार्गले। निर्मूषके राजगञ्जे KathāSaSāg. vii. 9.30.

**अचलितावस्था** (acalitāvasthā) *f.* unchanging state किं पुनरचलितावस्थास्वभावानामकृतकानां कथंचित्स्थितानां पूर्वावस्थात्यागमन्तरेणान्यथाभावायोगात् PramāVāSvopVṛ. 90.18.

**अचलीकृ** (acalī–kṛ–) VIII. U. to make firm or steady स्थाने निवेशादचलीचकार च्छत्राचलं शौरिरखिन्नबाहुः Yādavā. 7.86.

**अचलीभाव** (acalī–bhāva) *m.* the state of not drifting away, steadiness, concentration संनिरुद्धं मनो हृदि। यदा यात्यचलीभावं तदा तत्परमं पदम् PuruṣPa. 218.27.

**अचलेन्दु** (acalendu) *m.* mount Meru (*lit.* moon among the mountains) ज्योतिर्गणैरिन्दुरिवाचलेन्दुं (v. l. °न्द्रम्) प्रदक्षिणीकृत्य वसुन्धरेन्द्रः। … ननाम पादावृषिसत्तमस्य VarāṅgaC. 3.34.

**अचलेन्द्र** (acalendra) *m.* chief of mountains, lordly mountain तैः … वज्रापविद्धैरिव चाचलेन्द्रैः … मही महावैतरणीव दुर्दृशा MahāBhā. viii. 68.16; जह्नुश्च गङ्गां नृपतिर्भुजाभ्यां रुरोध मैनाक इवाचलेन्द्रः Saund. 7.40; वज्रपातोऽचलेन्द्राणाम् MadhyaVyā. 1.7. BrahmāṇḍP. ii. 22.60; KathāSaSāg. x. 9.221; गोवर्धनमचलेन्द्रम् … अतुलयत् RukmiHa. 1.10; Yādavā. 4.106; (Citrakūṭa) विराजन्तेऽचलेन्द्रस्य देशा धातुविभूषिताः Rāmā. ii. 88.6; (Himālaya) चरणास्कन्दननामिताचलेन्द्रः। … शंभुः Kirātā. 13.18; Surath. 8.74; (Meru) अचलेन्द्रादधः सप्त ऊर्ध्वं सप्त विभाजिताः VarāṅgaC. 5.4.

**अचलेन्द्रकन्दर** (acalendra–kandara) *n.* cave of a lordly mountain स हुताशने प्रविष्टः। निरगमदचलेन्द्रकन्दरान्तात् S'aṅkaDigVi.(Mā.) 10.60.

**अचलेन्द्रकन्या** (acalendra–kanyā) *f.* daughter of the lord of mountains, Pārvatī अव्यात् स वः शशी …। श्रुतावशोकाङ्कुरकौतुकेन यं कर्तुमिच्छत्यचलेन्द्रकन्या NavaSāC. 1.2; YātrāPra. 3.139.

**अचलेन्द्रगुहा** (acalendra–guhā) *f.* cave of a lordly mountain अच-

लेन्द्रगुहासु लीयते शनकैः संकुचितं पुनस्तनः( ? मः ) NavaSāC. 12. 55.

**अचलेन्द्रनिभ** ( acalendra-nibha ) *adj.* resembling a lordly mountain अचलेन्द्रनिभः MaYānaSū. 16. 8 (4. 16) ( ध्यानपारमितासहगतः पर्वतराजोपमः चित्तोत्पादः )

**अचलेन्द्रमन्थ** ( acalendra-mantha ) *m.* churning rod in the form of a lordly mountain (i. e. Mandara) अचलेन्द्रमन्थसंक्षुब्धदुग्धमयसागरगर्भगौरैः । ... तव यशोभिरशोभि विश्वम् AnarghaRā. 1. 35 = SubhāRaK. 32. 8.

**अचलेन्द्रराज** ( acalendra-rāja ) *m.* name of a Bodhisattva [DBHS]

**अचलेन्द्रवक्षस्** ( acalendra-vakṣas ) *n.* chest (i. e. the table-land) of the lord of mountains चुम्बति काञ्चनाचलमुखं कण्ठं क्षमाबन्दिनां नो मुञ्चत्यचलेन्द्रवक्षसि चिरं लीलां समालम्बते । ... कीर्तिर्मानमपास्य ... तरुणी AlaṅkāRa. 39 (21)

**अचलेन्द्रसुता** ( acalendra-sutā ) *f.* daughter of the lord of mountains, Pārvatī शशलाञ्छनत्विषा सतमः पश्य महेन्द्रदिङ्मुखम् । अचलेन्द्रसुतास्मितच्छविच्छुरितं कण्ठमुमापतेरिव NavaSāC. 12. 48; व्रजामः क्षेत्रं यथार्थमचलेन्द्रसुतापतेस्तम् KathāSaSāg. xvii. 1. 140; आश्चर्यमेतदचलेन्द्रसुताभयेन यत्सुप्तयैव विदधे रसचौर्यमेव BhiksāKā. 38. 12.

**अचलेन्द्राङ्गजा** ( acalendrāṅgajā ) *f.* daughter of the lord of mountains (Himālaya), Pārvatī अचलेन्द्राङ्गजे यावस्तत्प्रासादविलोकने SkandP. iv. 66. 133.

**अचलेन्द्राभ** ( acalendrābha ) *adj.* looking like the chief of mountains तस्य कबन्धं रणमूर्धनि । पतितं ह्यचलेन्द्राभं प्राकम्पयत मेदिनीम् Rāmā. iii. 509*(2)

**अचलेन्द्रिय** ( acalendriya ) *adj.* whose sense-organs are undisturbed संस्थाप्य शांभवं लिङ्गं पतत्त्रीन्द्रोऽचलेन्द्रियः ( तपस्तेपे ) SkandP. iv. 50. 138.

**अचलेश** ( acaleśa ) *m.* **A** lord of mountains प्राकारवर्यस्त्रिपुरे च सोऽथ । ... सहस्रशृङ्गैर्भवनैर्यदासीत् सहस्रशृङ्गः स इवाचलेशः MatsyaP. 140. 74; **B** name of a S'ivaliṅga फाल्गुनान्तचतुर्दश्यां नैवेद्यं नूतनैर्यवैः । यो ददात्यचलेशाय स भूयो नेह जायते SkandP. vii(3). 39. 47; S'ivaP. iii. 28. 32 (329A. 10); iv. 2. 26 (351B. 8)

**अचलेश्वर** ( acaleśvara ) *m.* **A** one of the thousand names of S'iva यथा दीपो निवातस्थः ... । तथान्तर्वायुरोधेन न चचालाचलेश्वरः BrahmāṇḍP. iii. 40. 64; ज्ञानवानचलेश्वरः ... एवं नाम्नां सहस्रेण तुष्टाव हि हरं हरिः S'ivaP. iv. 35. 29 (391B. 4); **B** lord of the mountains (Meru) हरिपतिरचलेश्वरस्य मेरोः सदृशशिराः श्वशुरोऽस्ति मे सुषेणः RāmC. 6. 16; (Himālaya) अचलेश्वरमीश्वरोऽपि सान्द्रेभचर्मवसनावरणोऽधिशेते S'iśuVa. 4. 64; VāmaP. 52. 24; SkandP. iv. 66. 62; सुतां दृष्ट्वा ... रुदन्तीं शंभुविरहादाससादाचलेश्वरः S'ivaP. ii(3). 21. 8 (145B. 5); **C i** name of a S'ivaliṅga enshrined on mount Arbuda (Abu) अचलं भेदयित्वा तु यस्मान्मे लिङ्गमुद्गतम् । अचलेश्वरनाम्नैव लोके ख्यातिं गमिष्यति SkandP. vii(3). 4. 20; पूजा प्रगेतन्यचलेश्वरस्य । ... क्रियतेऽत्र ... विविधप्रसूनैः DvyāśraKā. 16. 48 (comm. अर्बुदे ... अचलेश्वराख्यशम्भोः); भगवतः श्रीमदचलेश्वरदेवस्य पवित्रकारोपणपर्वणि केनापि रूपकेणाद्य प्रमोदनीयाः सभासदः PārthPa. 3(1); अमुमेव मौलिविभूषणतया विभूषयति भगवानचलेश्वरः HammīMaMa. 5. 5 (? 6) (1); (हम्मीरः) अपूजयज्जगत्पूज्यमथासावचलेश्वरम् HammīMaKā. 9. 37; श्रीमाताचलेश्वरश्च वसिष्ठाश्रम एव च । अत्रामी लौकिकास्तीर्थाः TīrthaKa. 16. 4; अचलेश्वरनालिमण्डपं रचयामासतुरेनमर्बुदे PurāPraSaṁ. 63. 12; **C ii** name of a S'ivaliṅga installed by mount Himālaya तत्र पित्रा सुशैलेन स्थापितं त्वचलेश्वरम् (लिङ्गम्) । अलङ्कृतं मया LiṅgaP. i. 92. 165.

**अचलेश्वरमाहात्म्य** ( acaleśvara-māhātmya ) *n.* greatness of the god Acaleśvara अचलेश्वरमाहात्म्यात्तस्मिन् क्षेत्रे नरा द्रुतम् । वाञ्छितम् ... लभन्ते SkandP. vi. 13. 32.

**अचलेश्वररूप** ( acaleśvara-rūpa ) *n.* [Instr.] in the form of the S'ivaliṅga named Acaleśvara एवं स भगवांस्तत्र सर्वदैव व्यवस्थितः । अचलेश्वररूपेण SkandP. vi. 13. 28.

**अचलेश्वरलिङ्ग** ( acaleśvara-liṅga ) *n.* S'ivaliṅga named Acaleśvara (on mount Abu) पुण्ये चाप्यर्बुदारण्ये ... अचलेश्वरलिङ्गं तु वर्तते SkandP. 1(2). 29. 68.

**अचलेश्वरसांनिध्य** ( acaleśvara-sānnidhya ) *n.* [Loc.] in the presence of the god Acaleśvara अचलेश्वरसांनिध्ये ददौ सक्तून् SkandP. vii(3). 39. 59.

**अचलोत्तम** ( acalottama ) *m.* highest, loftiest or topmost among mountains सः ... श्लथहस्तगाण्डिवः । चचाल ... । क्षितेः प्रकम्पे च यथाचलोत्तमः MahāBhā. viii. App. I. 42. 16; xii. 59. 121; हिमवत्यचलोत्तमे । ... भूमिदानं प्रचक्रिरे MahāBhā. xiii. 65. 24; शंकरश्वशुरो नाम हिमवानचलोत्तमः Rāmā. i. 38. 4; अचलोत्तमः । ... विन्ध्यशैलो न वर्धते Rāmā. iii. 10. 83; v. 45. 18; पञ्चशैलोऽथ कैलासो हिमवांश्चाचलोत्तमः MārkP. 55. 8 = VāyuP. i. 36. 24 = KūrmP. 392. 10 (1. 45); MatsyaP. 154. 108; महेन्द्रादचलोत्तमात् । भवन्तमागतो द्रष्टुम् BrahmāṇḍP. ii. 58. 6; MṛgendraT. i. 13. 64; ViṣṇuDhaP. i. 36. 18; LiṅgaP. i. 49. 41; तीर्थानि सन्ति पुण्यानि ...। तथा च पर्वतश्रेष्ठे हिमवत्यचलोत्तमे NīlaP. 102.

**अचलोदग्र** ( acalodagra ) *adj.* towering like a mountain महद्भिरचलोदग्रैः ... घनाघनैः ... विष्वगारुद्धमेखलम् MahāP. 18. 152.

**अचलोद्भव** ( acalodbhava ) *adj.* mountain-born, arising from a mountain अचलोद्भवम् ... अधिकाञ्चि तत्किमपि रत्नमुद्द्योतते MūkaPañ. 5. 89.

**अचलोद्भवा** ( acalodbhavā ) *f.* Pārvatī (mountain-born) तेऽकथयन्नचलोद्भवाम् GaṇeP. ii. 90. 41.

**अचलोन्नता** ( acalonnatā ) *adj.* (*f.*) having a stiff projection (रोहिणी) स्रोतोनिरोधिन्यपि मन्दपाका ( v. l. °विरोधिन्यचलोन्नता च )। गुर्वी स्थिरा सा कफसंभवा वै SuśruS. ii. 16. 49.

**अचलोपकण्ठ** ( acalopakaṇṭha ) *n.* vicinity or proximity of a mountain सिंहः सुखं निवसतादचलोपकण्ठे YaśasCam. ii. 192. 3.

**अचलोपप्लव** (acalopaplava) *m.* revolt raised by Acala अचलोपप्लवातङ्कभयाल्लोकैः समाश्रितः । शह्वेरः RājTa.(Jo.) 279.

**अचलोपम** ( acalopama ) *adj.* mountain-like, comparable to a mountain (in size) अथ वासौ मया जातो विहगो मद्बलोपमः ( v. l. राक्षसो ह्यचलोपमः ) । वहेदनघ सर्वान्नः MahāBhā. iii. 144. 24; iv. 158*(1); v. 9. 24; स चचालाचलोपमः (भीमः) MahāBhā. xi. 56. 58; xii. 120. 12; महान्तमचलोपमम् । दिशागजं सौमनसं ददृशुस्ते Rāmā. i. 39. 19; vi. 73. 24; आहोस्विदस्त्यनन्तात्मा जीवपिण्डोऽचलोपमः YogVā. iii. 14. 15; RāmāMañ. 176. 7; तेनैव प्रभुणा यदि । जीयते तत्सुजेयोऽसावन्यथा त्वचलोपमः YogVā. v. 23. 22; *m.* one of the thousand and eight names of S'iva पण्डितो ह्यचलोपमः MahāBhā. xiii. 17. 123; LiṅgaP. i. 65. 148.

**अचलोपयुक्तशिलाजतु** ( acalopayukta-śilājatu ) *adj.* **A** (wild fire) which has used up the bitumen in the mountain क्वचिदचलोपयुक्तशिलाजतवः क्षयिणः...प्रत्यदृश्यन्त दारुणा दावाग्नयः HarsaC. 82. 5; **B** (tubercular patient) who has consumed bitumen (as medicine) without break, HarṣaC. 82. 5 (comm. अचलमविच्छिन्नम्)

**अचलोपल** ( acalopala ) *m.* mountain-rock तत्रासिताक्षयक्षेण चालयन्नचलोपलान् । ... मुमुचेऽनिलः PārśvC. 6. 1092.

**अचलोपान्त** ( acalopānta ) *m.* proximity or edge of a mountain तामतीत्याचलोपान्ते पल्लीपतिमुदारधीः । पुलिन्दकाभिधं प्राप BṛKathāMañ. ii. 2. 62.

**अचलोष्ठम्** ( acaloṣṭham ) *adv.* with motionless lips जपं कुर्यात् ... अचलोष्ठं तु मानसम् BṛParāSm. 4. 60.

**अचलौघ** ( acalaugha ) *m.* multitude of mountains इन्द्रनप्तुरचलौघमिन्द्रजित्तूलवत्तमधुनाद्धनुर्धरः RāmC. 29. 80.

**अचषाल** ( a-caṣāla ) *adj.* [*f.* -ā] having no *caṣāla* (a wooden ring at the top of a Yūpa) यूपः । अचषालः ĀśvaS'S. II. iii. 7. 17; BaudhāS'S. xx. 25. 12; पात्नीवतं मिनोत्यधोनाभिम्...अचषालम् ĀpaS'S. xiv. 7. 12; अचषालं यूपं संमिनोति MānS'S. 137. 19; अचषालो यूप स्फ्याग्रः LāṭyāS'S. viii. 5. 7; अचषालो यूपः KātyS'S. xxii. 3. 7.

**अचस्खलिवस्** ( a-caskhalivas ) *adj.* not faltering विशृङ्खलमचस्खलुषां च तेषाम् । प्रावर्तत ... रणसंप्रहारः HarVi. 44. 42.

**अचाक्रिक** ( a-cākrika ) *adj.* without companions in a plot [nt.]

**अचाक्रिकता** ( acākrika-tā ) *f.* **A** the state of not being given to intrigues ज्येष्ठोऽप्यचाक्रिकतया योऽभूद्राज्यविवर्जितः RājTa.( Ka. ) 4. 689; **B** absence of companions in a plot [nt.]

**अचाक्षुष** ( a-cākṣuṣa ) *adj.* **1** not an object of sight, not produced from sight, invisible व्यपत्रपन्ते ... मनःप्रचारैरशुभैः प्रवृत्तैः । ... अचाक्षुषैरप्रयतैर्विषक्तैः Saund. 16. 76; तथा तत्कार्यप्रतिषेधेनाप्यचाक्षुषः शब्दोऽनित्योऽनात्मा वेति PramāVāSvopVṛ. 44. 33; वाततरुसंयोगोऽचाक्षुषः NayaVi. 206. 6 (*on* i. 1. 5); न चायमचाक्षुषः प्रत्ययः Kiraṇā. 17. 9; अचाक्षुषो घटः PramāMī. 46. 4 (*on* i. 2. 14); आकाशोऽचाक्षुषः PrakaVi. 15. 9; अचाक्षुषाणां प्रतिबिंबाभावात् S'rutaPra. ii. 386. 11 (*on* ii. 3. 52); कथमचाक्षुषयोर्बिम्बाधिकरणयोश्छायापत्तिः NyāySiA. 212. 17; ग्रहणविषयत्वं तदप्यचाक्षुषम् UpasK. 285. 10 (*on* vii. 1. 6); अचाक्षुषस्य चैतन्यस्य ... प्रतिबिम्बनानर्हत्वात् Nyāyāmṛ. 343A. 8; अचाक्षुषाणामनुमानेन सिद्धिरुक्ता SāṁkhyaPraBh. 36. 18 (*on* 1. 67); **2** belonging to a blind person न भुञ्जीत ... दासान्नमुग्रान्नं चाप्यचाक्षुषम् ViṣṇuDhaP. ii. 73. 11.

**अचाक्षुषचैतन्य** ( acākṣuṣa-caitanya ) *n.* sentience which is not perceptible with the eye अचाक्षुषचैतन्यस्य...अयोगात् AdvaiSi. 484. 17.

**अचाक्षुषज्ञान** ( acākṣuṣa-jñāna ) *n.* non-visual cognition अचाक्षुषज्ञानार्थैर्धातुभिर्योगे नैते स्युः PrakriKau. i. 260. 4 (*on* viii. 1. 25); माधवमतेऽचाक्षुषज्ञाने मित्त्वाभावात् SiddhāKau. 377A. 2 (*on* vii. 4. 68)

**अचाक्षुषत्व** ( acākṣuṣa-tva ) *n.* invisibility अचाक्षुषत्वात्कोष्ठस्य ···औषधम् ···याति न सिद्धिम् BhelaS. 39. 9 (1. 25); नन्वयमसाधारण एवाचाक्षुषत्वप्रत्यक्षत्ववत् संहतयोरन्यतरपक्षासंभवात् PadārthaSaṁ. 239. 2; अचाक्षुषत्वे सत्येषामिन्द्रियग्राह्यत्वेक्षणात् MahāP. 24. 151; NyāyMañ. i. 48. 28; नापि नभोनभस्वतोः तद्गुणानामचाक्षुषत्वात् TātpaṬ.(Vā.) 345. 8 (*on* i. 2. 8); अस्ति अचाक्षुषत्वं बाधकम् Kiraṇā. 83. 3; कालाकाशदिशाम् ··· अचाक्षुषत्वस्य ·· व्यवस्थितत्वात् TārkiRa. 47. 2; न च निमीलितनयनस्य लोचनव्यापाराभावेऽपि तमस उपलम्भादचाक्षुषत्वम् TattvPradi.(Ci.) 29. 8; अचाक्षुषत्वात्तस्य न रूपवत्त्वम् TarkSaṁ (Ā.) 39. 26; वाय्वादीनाम् ···रूपानुद्भवादचाक्षुषत्वम् NyāySiA. 180. 18; NyāySu.(Ja.) 268B. 9 (*on* ii. 1. 2); तथा सति नीरूपस्य स्फटिकस्याचाक्षुषत्वप्रसङ्गात् VivaPraSaṁ. 78. 11; अचाक्षुषत्वं प्रगतांस्तनुत्वात् HammiMaKā. 11. 94; चित्प्रतिबिम्बम् ··· चितोऽचाक्षुषत्वेऽपि च नापलापार्हम् GuruCandr. ii. 140. 18; LaCandr. 793. 15.

**अचाक्षुषत्वापत्ति** ( acākṣuṣatv-āpatti ) *f.* contingency of being non-visible चाक्षुषाचाक्षुषद्रव्यारब्धस्य ···अचाक्षुषत्वापत्तेः PrakaPañ. 320. 10; अचाक्षुषत्वापत्त्या न मनुष्यत्वादेरात्मवृत्तित्वमुक्तम् LaCandr. 835. 36.

**अचाक्षुषत्वापात** ( acākṣuṣatv-āpāta ) *m.* contingency of not being a visual perception प्रत्यभिज्ञाया अचाक्षुषत्वापातात् KhaṇḍanKhā. 289. 8.

**अचाक्षुषत्वोपपत्ति** ( acākṣuṣatvopapatti ) *f.* justification for invisibility परमाण्वादेरचाक्षुषत्वोपपत्त्या महत्त्वस्य तद्हेतुत्वात् GuruCandr. i. 95. 5.

**अचाक्षुषप्रत्यक्षत्व** ( acākṣuṣapratyakṣa-tva ) *n.* the state of being a non-visual perception अनित्यत्वे सत्यचाक्षुषप्रत्यक्षत्वात् गुणभावः NyāyVār. 423. 9 (*on* iii. 2. 18); NyāyMañ. ii. 8. 15; अचाक्षुषप्रत्यक्षत्वादित्यत्रापि कार्यत्वे सतीति विशेषणमनुषञ्जनीयम् TātpaṬ.(Vā.) 588. 8 (*on* iv. 1. 2)

**अचाक्षुषप्रमितित्व** ( acākṣuṣapramiti-tva ) *n.* the state of being a valid knowledge of what is not visible शब्दरसगन्धादिबुद्धिरनुमा अचाक्षुषप्रमितित्वात् NyāyPari. 364. 5.

**अचाक्षुषारब्ध** ( a-cākṣuṣārabdha ) *adj.* produced from what is invisible अचाक्षुषारब्धोऽपि चाक्षुषो युक्तः NayaVi. 206. 7 (*on* i. 1. 5)

**अचाक्षुष्य** ( a-cākṣuṣya ) *adj.* [ *w. r.* for अचक्षुष्य ] not fit for the eyes, not fit to be looked at यच्छन्नमपि जलदो वल्लभतामेति लोकस्य । नित्यं प्रसारितकरः सवितापि भवत्यचक्षुष्यः ( v. l. अचाक्षुष्यः ) Subhāṣi. 518.

**अचाञ्चल्य** ( a-cāñcalya ) *n.* absence of fickleness, steadiness; अचाञ्चल्यं श्रद्धा चोभे ··· गुरौ S'vetāUBh. 250. 14 (*on* 6. 23)

**अचाटभटप्रवेश** ( a-cāṭabhaṭapraveśa ) *adj.* [ *f.* -ā ] not to be entered by *cāṭas* and regular soldiers नन्दपुरं नाम ग्राम ( ग्रामम् ) अचाटभटप्रवेशम् EI. xxii. 95. 11; iii. 301. 51; xii. 264. 45; गोरसत्तविषयोऽयम् ··· अचट्टभट्टाप्र[ वे ]सो ( read अचाटभटप्रवेशो ) EI. xi. 151. 55; भूमिरियम् ···अचाटभटप्रवेशा xii. 139. 25; vii. 92. 38; xii. 41. 40; xiv. 327. 44; *m.* denial of entry to *cāṭas* and regular soldiers अ( आ )चन्द्रार्कतारा( रं )यावत् अचाटभटप्रवेशेन सर्व्ववाधापरिहारेणाकरत्वेन मुञ्जद्भिर्धर्मगौरवात् न केनचिद् व्याघातनीयम् ··· दानमिदम् EI. xviii. 294. 26; xviii. 296. 21.

**अचाटभटप्रवेश्य** ( a-cāṭabhaṭapraveśya ) *adj.* [ *f.* -ā] not to be entered by *cāṭas* and regular soldiers एष ग्रामः ··· अचाटभटप्रावेश्यः EI. vi. 298. 21; xxv. 30. 18; viii. 187. 41; xxii. 185. 45; xx. 124. 5; ( ढाखुवापी ) एवमियं चतुराघाटोपलक्षिता सधान्यहिरण्यादेया अचाटभटप्रवेश्यः ( read प्रवेश्या ) EI. xxi. 144. 48; ब्राह्मणानां ग्रामो दत्तः ··· अचाटभटप्रवेश्यः EI. xviii. 250. 67; xiv. 150. 28.

**अचाटभटप्रावेश्य** ( a-cāṭabhaṭaprāveśya ) *adj.* [ *f.* -ā ] not to be entered by *cāṭas* and regular soldiers एष ग्रामः ··· अचाटभटप्रावेश्यः EI. xix. 129. 9; xxi. 126. 8; अचाटभटप्रावश्यौ ( read प्रावेश्यौ ) ··· अग्रहारौ अतिसृष्टौ EI. viii. 287. 17; भूमेर्निवर्त्त( ? र्त )नशतम् ··· अचाटभटप्रावेश्यम् ··· अतिसृष्टम् EI. ix. 298. 20; अयं ग्रामः ··· अचाटभटप्रावेश्यसर्वकरविसर्जितः ··· अस्माभिरनुमोदितः EI. ix. 283. 7; इयं पल्लिका ··· अचाटभटप्रावेश्या EI. xi. 221. 10.

**अचाटुकार** ( a-cāṭukāra ) *adj.* not given to flattery गाथाकारैः शब्दकारैरचाटुकारवृत्तिभिः । मुनिभिः ··· कीर्तिता । वृत्तिः ··· मत्पूर्वजन्मनाम् DvyāśraKā. 11. 68.

**अचाण्डाल** ( á-cāṇḍāla ) *m.* not a Cāṇḍāla अत्र ··· भवति ··· चाण्डालोऽचाण्डालः S'atBr. XIV. vii. 1. 22.

**अचातुर्मास्य** ( a-cāturmāsya ) *adj.* without the ( sacrifice called ) *Cāturmāsyas* यस्याग्निहोत्रम् ··· अचातुर्मास्यम् ··· आसप्तमांस्तस्य लोकान् हिनस्ति MuṇḍaU. i. 2. 3; अचातुर्मास्यं चातुर्मास्यकर्मविवर्जितम् MuṇḍUBh. 315. 11 (*on* i. 2. 3)

**अचातुर्य** ( a-cāturya ) *n.* lack of skill अचातुर्यविशदीकरणाभिसंध्यादिभिरस्योत्थानम् NyāyPari. 204. 10.

**अचात्वाल** ( a-cātvāla ) *adj.* (ritual) in which a *cātvāl* (pit) is not required अन्तरेण चात्वालोत्करौ यज्ञस्य तीर्थम् । अचात्वाल आहवनीयोत्करौ BaudhDS. i. 7. 16 ( comm. अचात्वाले चात्वालादन्ये दर्शपूर्णमासादौ )

**अचादि** ( a-cādi ) *adj.* ( words ) other than the group of words beginning with *ca* चादीनामपि निपातोपसर्गाणामर्थं प्रतिपादयतां तद्व्यतिरेकिणो न अचादयो नाम ग्रहीतुं शक्यन्ते यद्व्यवच्छेदेनापोहो भविष्यति S'arka. 67. 14.

**अचादियोग** ( a-cādīyoga ) *m.* absence of the usage of the group of words beginning with *ca* अचादियोगे किम् ? तुभ्यं मह्यं च दद्यात्स्वं गोविन्दः MugdhaBo. 3. 143 (33. 9)

**अचान्दन** ( a-cāndana ) *adj.* not prepared from sandalwood इदं तत्स्नेहसर्वस्वम् ··· । अचन्दन( v. l. अचान्दन )मनौशीरं हृदयस्यानुलेपनम् Mṛcch. 10. 23.

**अचापल** ( a-cāpala ) *n.* absence of fickleness, steadiness, the state of being undisturbed आकिंचन्यं सुसंतोषो निराशित्वमचापलम् । एतदेव परं ज्ञानम् MahāBhā. iii. 203. 46; xii. 316. 19; दयाभूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् MahāBhā. vi. 38. 2; अचापलम् असति प्रयोजने वाक्पाणिपादादीनाम् अव्यापारयितृत्वम् GītāBh.( S'aṅ. ) 453. 2 (*on* 16. 2); स्पृहणीयविषयसंनिधावचपलत्वम् GītāBh.( Rā. ) 608. 6 (*on* 16. 2); मार्दवं ह्रीरचापलम् । धनं धर्मप्रधानेष्टं मनुः स्वायंभुवोऽब्रवीत् MahāBhā. xii. 21. 11; ( तस्य लिङ्गानि वक्ष्यामि येषां समुदयो दमः ) मार्दवं ह्रीरचापलम् MahāBhā. xii. 154. 15; शरणागतवात्सल्यममर्षित्वमचापलम् । ··· प्रकृतिरफीतता चेति विजिगीषोर्गुणोदयः NītiSā. 8. 10; अचपलस्येदम् अचापलम् JaineVyā. 364. 18 (*on* v. 2. 34); क्षोणीमण्डलमण्डनं नृपतयस्तेषां श्रियो भूषणं ताः शोभां गमयत्यचापलमिदं प्रागल्भ्यतो राजते VakroJī. 182. 11; सौजन्यमनसूया च क्षान्तिर्धैर्यमचापलम् । इत्येष विदुषामग्रे गुणमानसमुच्चयः RāmāMañ. 69. 17; KalāVi. 10. 19; अचापलेनैष जयन्नचापलं क्षितेः ···ययौ सः DvyāśraKā. 20. 42 ( comm. आचापलेन स्थिरचित्ततया ··· पृथ्व्या अचापलं स्थिरतां जयन् ); धैर्यं कल्पय कज्जले कपिकुलेष्वारोपयाचापलम् Mugdhopa. 6; GaṇRa. 7. 405 (429); SarvaSiSaṁ. 11. 13; *adj.* [ *f.* -ā] devoid of fickleness, steady आबाल्याद्ब्रह्मचारी च श्रोत्रियः पाठकोऽलसः । एकान्त एक एवास्तेऽजिह्मवृत्तिरचापलः YogVā. vi(2). 64. 42; तनुताम् ···अचापला रोहिणी···मयि···ईहितम्···हितम् CaturJiStu. 52.

**अचापलता** ( acāpala-tā ) *f.* absence of fickleness, steadiness, calmness स्फुटमन्तरचापलतां दधतः ··· तस्यावरजाः ··· द्रुतमनुजग्मुः ··· तम् YudhiVi. 3. 94; पशुपतिचापलतायाः पाटयिता जयति पद्मचापलतायाः YātrāPra. 3. 222.

**अचापलबल** ( acāpala-bala ) *n.* [Abl.] because of the strength of steadiness तेनास्याः ( comm. तव महिष्याः ) ··· त्वद्रूपमानोज्ञक्रमेस्थैर्यमयादचापलबलाचापल्यवार्तोद्भूत् Nāray. i. 2. 4.

**अचापल्य** ( a-cāpalya ) *n.* absence of fickle-mindedness or temptation steadiness, calmness ( परीक्षेत ) संवासिभ्यः ··· अस्तम्भमचापल्यं च ArthS'ā. i. 46. 3 (1. 9); ( अमात्यानाम् ) अस्तब्धतामचापल्यं वैराणां चाप्यकर्तृताम् । प्रत्यक्षतो विजानीयात् NītiSā. 4. 37; AgniP. 238. 22; GaneP. ii. 32. 6; अचापल्यं भयं लज्जा ( एते योषितां प्रवरा गुणाः ) Mānaso. iii. 20. 1713; Hitopa. 1. 73.

**अचामर** ( a-cāmara ) *adj.* without a chowrie [ वास्तुः ] नाचामरो नामणिश्च नापताका( को ? )पि नाध्वजः YuktiKa. 45. 4; अचामरोऽप्येष सतेव वीज्यते विलासबालव्यजनेन कोऽप्ययम् AlaṅkāSa. 182. 14; SāhiDa. 617. 10.

**अचायम्** ( acāyam ) [ *w. r.* for आचायम् ] BaudhS'S. xv. 19. 4.

**अचार** ( a-cāra ) *m.* not a path [pw.] *adj.* unchanging, constant [DBHS]

**अचारासनचर्माङ्गार** ( acārāsanacarmāṅgāra ) *adj.* yielding no (royalty on) pasturage, hides and charcoal अकरदायिनौ···अवा(चा)रासनचर्म्माङ्गारौ ( भूमिखण्डौ ) EI. iii. 262. 20; एष ग्रामः ···अचारासनचर्माङ्गारकिण्वक्रेणिखानक[ः] EI. xv. 42. 17; कोशम्बखण्डं नाम ग्रामः ···अचारासनचर्माङ्गारः EI. xxii. 173. 21; EI. xxiii. 87. 32.

**अचारित** ( a-cārita ) *adj.* (army) which is not spied on प्रविष्टमात्रे ज्ञातोऽहं बले तस्मिन्नचारिते । बलाद् गृहीतो बहुभिर्बद्धुधास्मि विदारितः Rāmā. vi. 21. 7.

**अचारितार्थ्य** ( acāritārthya ) *n.* purposelessness, state of not serving its purpose व्यक्तौ पदार्थे प्रतिलक्ष्यं लक्षणभेदादुभयोरपि शास्त्रयोस्तत्तल्लक्ष्यविषययोरचारितार्थ्येन पर्यायप्रसङ्गे नियमार्थं 'विप्रतिषेधे परम्' इति सूत्रमिति पक्ष इदम्

चिद्धर्मैर्योगोऽपि···भवति BrahmSūBh.(S'rī.) ii. 39. 10 (*on* ii. 1. 28)

**अचिद्ध्वान्त** (acid-dhvānta) *m.* darkness in the form of insentient matter जयांबिके···जयाचिद्ध्वांतभंजिके S'ivaP. vii(2). 31. 15 (582B. 14)

**अचिद्धेतु** (acid-dhetu) *m.* non-intelligent cause वृक्षादीनां हि संस्थानमचिद्धेतुसमन्वयि । तथा घटादि तद्वत् स्यात् प्रधानाद्यप्रवर्तितम् PramāVāBh. 38. 8.

**अचिद्भाव** (acid-bhāva) *m.* non-intelligent nature कार्यं क्षित्यादि कर्तृशास्तत्कर्तुर्नोपयुज्यते । न स्वार्थमप्यचिद्भावात् MṛgendraT. i. 6. 2.

**अचिद्भूत** (acid-bhūta) *n.* non-intelligent element चिदचिद्भूतसंघस्थं सर्वेषां स (आत्मा) हि कारणम् BṛBrahmaS. iii. 8. 16.

**अचिद्भेद** (acid-bheda) *m.* a type of insentient thing स ह्यचिद्भेद इष्टः सूक्ष्माकारस्तु सोऽर्थं न गमयति TattvMu. 4. 89.

**अचिद्युक्त** (acid-yukta) *adj.* conjoined with non-intelligent (matter) अचिद्युक्तजीवस्य ब्रह्मशरीरतया सूक्ष्मरूपेणावस्थानमवश्याभ्युपगन्तव्यम् BrahmSūBh.(Rā.) 455. 5 (*on* ii. 1. 23); BṛBrahmaS. i. 6. 40.

**अचिद्रूप** (acid-rūpa) *n.* insentient form सदसच्चिदचिद्रूपैर्यैर्त विश्वं प्रकाशते । तस्मिन्नुपरते···अलक्ष्या कार्यतः शक्तिः AhirbuS. 4. 74; ब्रह्मस्वरूपस्यैवाचिद्रूपेण परिणामात् VedāntDī. 161. 2 (*on* iii. 2. 26); NītiMā. 27. 19.

**अचिद्रूप** (acid-rūpa) *adj.* of non-sentient form, of unconscious nature अन्ये पुनरिहात्मानमिच्छादीनां समाश्रयम् । स्वतोऽचिद्रूपमिच्छन्ति नित्यं सर्वगतं तथा TattvSaṁ. 171; IṣṭaSi. 244. 21; न हि जातुचिदचिद्रूपोऽयमात्मा लोष्टादिवददृष्टचरः ĀtmaSi. 54. 23; BrahmSūBh.(Rā.) 69. 13 (*on* i. 1. 1); NītiMā. 35. 12; 70. 2; विना जीवमचिद्रूपा अकर्तारश्च ते मताः TrisaS'aPuC. iv. 4. 264; त्वं चिद्रूपशिरोमणिः परमचिद्रूपः स कल्पद्रुमः VasaViKā. 14. 12; PañcDa. 6. 87; ब्रह्मणः एकदेशश्चिद्रूपोऽचिद्रूपश्च प्रतीकः S'ivārkaMaDī. ii. 477. 29 (*on* iv. 3. 14)

**अचिद्रूपता** (acidrūpa-tā) *f.* the state of having an insentient nature वस्तुत्वात् मृद्वत् अचिद्रूपता च प्राप्ता TaiUBh. 230. 18 (*on* 2. 1); 232. 1 (*on* 2. 1); IṣṭaSi. 245. 1; पुरुषसमारोपः ··· प्राकृतत्वेनाचिद्रूपतयानुभाव्यः TattvVai. 8. 21 (*on* 1. 4); भावेषु यदचिद्रूपतया भेदप्रकाशनलक्षणं स्वातन्त्र्यम् PratyabhiVi. ii. 229. 4 (*on* iii. 1. 6); ii. 234. 2 (*on* iii. 1. 8); स्वरूपस्य चिन्मात्राख्यस्य निजरूपस्य यः अन्यथाभावः अचिद्रूपतासादनम् Bhāsk. i. 390. 20 (*on* i. 7. 14); ii. 229. 16 (*on* iii. 1. 6); ii. 229. 20 (*on* iii. 1. 6)

**अचिद्रूपतादात्म्य** (acidrūpa-tādātmya) *n.* identity with insentient matter अचिद्रूपतादात्म्येन जडत्वमाह TattvVai. 159. 55 (*on* 3. 35)

**अचिद्रूपत्व** (acidrūpa-tva) *n.* the nature of being insentient शब्दोपलब्धृरूपतयावभासकत्वं न स्वतः श्रोत्रस्य, अचिद्रूपत्वात् KenUVāBh. 71. 8 (*on* 1. 2); JñānBiPra. 2. 8.

**अचिद्वर्ग** (acid-varga) *m.* the class of the insentient शृणु नारद तत्त्वेन विष्णोः ··· । भूतेः परिणतिं चित्रां चिदचिद्वर्गसंकुलाम् AhirbuS. 6. 20; अचिद्वर्गं स्वात्मनो भोग्यत्वेन हरतीति भोक्ता हर इत्युच्यते VedāntSā.(Rā.) 9. 3 (*on* i. 1. 1); तत्राचिद्वर्गभिन्नो ज्ञानस्वरूपः ··· चित्पदार्थः VedāntKau. 7. 11 (*on* i. 1. 1); 13. 14 (*on* i. 1. 2); 28. 18 (*on* i. 1. 13); 165. 16 (*on* ii. 1. 21); PūrvottaVāNaMā. 231. 8.

**अचिद्वस्तु** (acid-vastu) *n.* non-intelligent matter, non-sentient thing विविक्ते चिदचिद्वस्तुनी त्याज्यतया प्राप्यतया च तत्त्व इत्थं विदुस्तेऽर्चिरादिना गच्छन्ति न च पुनरावर्तन्त इत्युक्तमिति गम्यते GitāBh.(Rā.) 438. 1 (*on* 8. 22); 570. 16 (*on* 13. 2); अचिद्वस्तुनः ···अत्यन्तविलक्षणः ···चेतनः प्रत्यगात्मा VedāntDī. 1. 9 (*on* i. 1. 1); 46. 6 (*on* i. 3. 9); 84. 14 (*on* ii. 1. 9); 161. 24 (*on* iii. 2. 28); ब्रह्मात्मकजीवानुप्रवेशादेव कृत्स्नस्याचिद्वस्तुनः पदार्थत्वम् VedāSaṁ. 80. 15; अचिद्वस्तुशरीरस्य ब्रह्मणः ··· त्रिगुणावस्थायाः कार्यत्वात् BrahmSūBh.(Rā.) 387. 8 (*on* i. 4. 23); 390. 14 (*on* i. 4. 27); अचिद्वस्तु( ? स्तु) त्रिविधम् कालोऽव्यक्तं परम( ? मा)काशश्चेति NītiMā. 39. 8; 44. 23; अचिद्वस्तूनां तु भोग्यभूतानामचेतनत्वमपुरुषार्थत्वं विकारास्पदत्वमित्यादयः (स्वभावाः) SarvaDaSaṁ. 4. 198; चिदचिद्वस्तुनो ब्रह्मात्मकत्वानुसन्धानवशाद्ब्रह्मैवेदं सर्वम् ··· इति मन्यते VedāntKau. 43. 15 (*on* i. 1. 29); अचिद्वस्तुरूपा मायापि सूक्ष्मरूपेण···तिष्ठति BrahmSūBh.(S'rī.) i. 524. 1 (*on* i. 4. 10); i. 551. 3 (*on* i. 4. 22); ii. 11. 2 (*on* ii. 1. 5)

**अचिद्वाचक** (acid-vācaka) *adj.* expressing an insentient thing रक्तः पट इति पदद्वयमचिद्वाचकम् S'rutaPra. iB. 215. 11 (*on* i. 1. 13); °कालाकाशप्राणाद्यचिद्वाचकशब्दानां शरीरिणि परमात्मनि श्रीनारायणे पर्यवसानमुपपादयन्त्याचार्याः YatīndraDī. 33. 5.

**अचिद्विकारत्व** (acidvikāra-tva) *n.* the state of being a modification of insentient matter प्रसिद्धमनोवाक्प्राणानामचिद्विकारत्वान्नेश्वरव्यूहत्वममृतत्वं च संभवति S'rutaPra. iB. 265. 2 (*on* i. 1. 27)

**अचिद्विकारविशेष** (acidvikāra-viśeṣa) *m.* a particular modification of insentient matter अचिद्विकारविशेषस्यान्तःकरणस्य ··· विश्वनिलयनत्वायोगात् S'rutaPra. iB. 201. 17 (*on* i. 1. 13)

**अचिद्विध** (acid-vidha) *adj.* belonging to the class of insentient things हरिः ··· । प्रविश्यान्तर्यमयति सर्वभूतानि सर्वतः । स्वव्याप्यैस्तैरविज्ञातः शरीरैश्चिदचिद्विधैः BṛBrahmS. iii. 8. 30.

**अचिद्वियुक्त** (acid-viyukta) *adj.* devoid of insentient matter अचिद्वियुक्तमात्मवस्तु ब्रह्मात्मकतया ब्रह्मशेषतैकरसम् GitāBh.(Rā.) 438. 4 (*on* 8. 22); अचिद्वियुक्तब्रह्मात्मकात्मस्वरूपोपासनं विवक्षितम् VedāntDī. 241. 23 (*on* iv. 3. 15); अचिद्वियुक्तमात्मानं ब्रह्मात्मकमुपासीना गृह्यन्ते SiddhāSi. iv. 117. 9.

**अचिद्वियुक्तस्वरूप** (acidviyukta-svarūpa) *adj.* of the form of what is devoid of insentient matter (ब्रह्मविदाप्नोति परम् इति वाक्यस्य) अचिद्वियुक्तस्वरूपप्राप्त्यतापरत्वं कल्प्यमित्यर्थः S'rutaPra. iB. 193. 13 (*on* i. 1. 13)

**अचिद्वियोग** (acid-viyoga) *m.* separation from insentient matter कूटस्थोऽचित्संसर्गवियुक्तः ···अत्राप्येकत्वनिर्देशोऽचिद्वियोगरूपैकोपाधिनाभिहितः GitāBh.(Rā.) 605. 5 (*on* 15. 16)

**अचिद्विलक्षण** (acid-vilakṣaṇa) *adj.* distinct from insentient matter तच्च (ब्रह्म) प्रलयवेलायां शान्ताशेषसुखदुःखानुभवविशेषं स्वप्रकाशमपि सुषुप्तात्मवदचिद्विलक्षणमवस्थितं सृष्टिवेलायाम् ··· अंशत्रयावस्थमवतिष्ठते S'rīBh. 445. 8 (*on* ii. 1. 15); अक्षरं ब्रह्म तत्संबन्धिन्यश्चिदचिद्विलक्षणतत्स्वरूपप्रतिपत्त्यर्थाः अस्थूलत्वाणुत्वादिबुद्धयः VedāntKau. 328. 3 (*on* iii. 3. 33); चिदचिद्विलक्षणब्रह्मामननमाभिमुख्येन तच्चिन्तनं भवति VedāntKau. 329. 7 (*on* iii. 3. 34)

**अचिद्विशिष्ट** (acid-viśiṣṭa) *adj.* accompanied by insentient matter न हि निष्कृष्टात्मनः केवलस्य शरीरस्य वा हिंस्यत्वम् । अपि त्वचिद्विशिष्टस्यैव चेतनस्य S'rutaPra. ii. 11. 17 (*on* i. 3. 7)

**अचिद्विशिष्टजीव** (acidviśiṣṭa-jīva) *m.* the soul which is accompanied by insentient matter (as its body) तत्समानाधिकरणं त्वंपदं चाचिद्विशिष्टजीवशरीरकं ब्रह्म प्रतिपादयति S'rīBh. 110. 14 (*on* i. 1. 1); त्वंपदं चाचिद्विशिष्टजीवशरीरकं ब्रह्माचष्टे SarvaDaSaṁ. 4. 124.

**अचिद्विशिष्टब्रह्मन्** (acidviśiṣṭa-brahman) *n. brahman* (i. e. supreme being) who is accompanied by insentient matter (as its body) ऊर्णनणा-( ? ऊर्णना)भिदृष्टान्तस्याचिद्विशिष्टब्रह्मकारणत्वेऽप्युपपत्तेः S'rutaPra. iB. 326. 7 (*on* i. 2. 22)

**अचिद्विशिष्टवाचिन्** (acidviśiṣṭavāc-in) *adj.* expressing one who is accompanied by insentient matter (as his body) अचिद्विशिष्टवाचिश्लोकानन्तर्यादस्य श्लोकस्य कालपरत्वमनुचितम् S'rutaPra. iA. 236. 28 (*on* i. 1. 1)

**अचिद्विशिष्टानुसंधान** (acidviśiṣṭānusandhāna) *n.* contemplation of one as characterised by insentient matter 'आनन्दोऽजरोऽमृतः' इति स्वेन रूपेणानुसंधानम्, प्राणोऽस्मीत्यचिद्विशिष्टानुसंधानम्, 'मामुपास्व' इति चिद्विशिष्टानुसंधानम् S'rutaPra. iB. 281. 18 (*on* i. 1. 32)

**अचिद्विशेष** (acid-viśeṣa) *m.* type of insentient matter अग्निजलादयोऽप्यचिद्विशेषा अन्योन्यविलक्षणशक्तयो दृश्यन्ते विचित्रा एव BrahmSūBh.(S'rī.) ii. 39. 11 (*on* ii. 1. 28); अश्मकाष्ठलोष्टतृणादीनामत्यन्तहेयानाम् ···अचिद्विशेषाणाम् ···°ब्रह्मस्वरूपैक्यं यथा नोपपद्यते S'rīBh. 454. 13 (*on* ii. 1. 23); अग्निजलादयोऽप्यचिद्विशेषा अन्योन्यविलक्षणा नियतशक्तयो विचित्रा दृश्यन्ते VedāntSā.(Rā.) 158. 3 (*on* ii. 1. 28); अथाचिद्विशेषः कालो निरूप्यते YatīndraDī. 49. 11.

**अचिद्विशेषत्व** (acidviśeṣa-tva) *n.* the state of being a type of insentient matter अत इन्द्रियाश्रयत्वाभावस्येव ज्ञातृत्वाभावस्याप्यचेतनत्वादिकमप्रयोजकम् । अचिद्विशेषत्वमेव प्रयोजकम् S'rutaPra. iA. 158. 24 (*on* i. 1. 1)

**अचिद्विशेषवाचिन्** (acidviśeṣavāc-in) *adj.* expressing a type of insentient matter चिदचिद्विशेषवाचिशब्देष्वेकैकस्येश्वरवाचिपदसामानाधिकरण्यमयुक्तं स्यात् S'rutaPra. iB. 73. 3 (*on* i. 1. 1)

**अचिद्विशेषविशिष्टत्व** (acidviśeṣaviśiṣṭa-tva) *n.* the state of being characterised by a type of insentient matter त्रिविधानुसन्धाने कर्तव्येऽप्यत्र चिद्विशेषाचिद्विशेषविशिष्टत्वोक्तिः कथम् S'rutaPra. iB. 281. 19 (*on* i. 1. 32)

**अचिद्विषय** (acid-viṣaya) *m.* insentient object अचिद्वस्तु किञ्चिदिति भाष्ये च अचिद्विषय( ये ? )वस्तुशब्दप्रयोगात् S'rutaPra. iB. 47. 23 (*on* i. 1. 1)

**अचिद्विषयत्व** (acidviṣaya-tva) *n.* the state of being concerned with insentient matter सेयं देवतेति देवताशब्दोऽप्यनेनैव न्यायेन ··· अचिद्विषयत्वौचित्यात् न गौणत्वबाधकः S'rutaPra. iB. 179. 14 (*on* i. 1. 6)

**अचिद्वैषम्य** (acidvaiṣamya) *n.* difference from or dissimilarity to insentient matter विज्ञानमित्यादि व्याचष्टे आत्मा त्विति । तुशब्दोऽचिद्वैषम्यपरः S'rutaPra. iB. 48. 11 (*on* i. 1. 1); (अहमर्थस्य) स्वरूपान्यथाभावाभावान्नित्यत्वमित्यचिद्वैषम्यमास्थेयम् S'rutaPra. ii. 367. 23 (*on* ii. 3. 32)

**अचिद्व्यष्टि** (acid-vyaṣṭi) *f.* individual insentient object सदसच्छब्दौ चिदचिद्व्यष्टिविषयौ BrahmSūBh.(Rā.) 101. 17 (*on* i. 1. 1); उत्पत्तिश्च चिद-

चिद्वयष्टयोः श्रुतिसिद्धा S'rutaPra. iB. 39.14 (*on* i. 1.1)

**अचिद्व्यापक** (acid-vyāpaka) *adj.* pervading the insentient object चिदचिद्व्यापकं ब्रह्म परमात्मेति कथ्यते BṛBrahmaS. iii. 10.137.

**अचिद्व्यापकता** (acidvyāpaka-tā) *f.* the state of pervading the insentient object सर्वावस्थचिदचिद्व्यापकतया ⋯ अत्यन्तविलक्षणः परमात्मा (प्रत्यगात्मनः) VedāntDī. 1.12 (*on* i. 1.0)

**अचिद्व्यावर्तकता** (acidvyāvartaka-tā) *f.* the state of excluding insentient matter 'गौणश्चेन्नात्मशब्दात्' इत्यत्र आत्मशब्दस्याचिद्व्यावर्तकतोपपादनाच्च अचेतनशङ्कोत्थानासम्भवात् S'rutaPra. ii. 8.10 (*on* i. 3.6)

**अचिद्व्यावर्तन** (acid-vyāvartana) *n.* exclusion of insentient matter स्वरूपपर आत्मशब्दः सापेक्षः, जीववाचिपदसमभिव्याहारेण विना तस्याचिद्व्यावर्तनासामर्थ्यात् S'rutaPra. iB. 190.8 (*on* i. 1.12)

**अचिद्व्यावृत्त** (acid-vyāvṛtta) *adj.* distinct from insentient matter सद्ब्रह्मशब्दयोरीक्षणान्वयलिङ्गादचिद्व्यावृत्तवस्तुपरत्वेऽपि तयोः शब्दयोः साधारणतया शब्दसामर्थ्यादचिद्व्यावृत्तिनिश्चयस्तत्र नास्ति S'rutaPra. iB. 134.22 (*on* i. 1.4)

**अचिद्व्यावृत्ति** (acid-vyāvṛtti) *f.* distinction from insentient matter अदृश्य इत्यचिद्व्यावृत्तिः S'rutaPra. iA. 208.15 (*on* i. 1.1); सद्ब्रह्मशब्दयोः ⋯ साधारणतया शब्दसामर्थ्यादचिद्व्यावृत्तिनिश्चयस्तत्र नास्ति S'rutaPra. iB. 134.23 (*on* i. 1.4)

**अचिन्त** (a-cinta) *adj.* thoughtless, inconsiderate, careless स्वं दुःखमुद्वोढुमिहासमर्थो लोकः कुतः पिण्डितमन्यदुःखम् । जन्मैकमालोकयते त्वचिन्तो विपर्ययात्तस्य तु बोधिसत्वः(?त्त्वः) MaYānaSū. 95.20 (14.40); यो राज्यमासाद्य भवत्यचिन्तः समुद्‌ रतारम्भरतः सदैव । समुद्रतारं भरतः स दैवप्रमाणमारभ्य पयस्युदास्ते Kāvyālaṅ.(Ru.) 3.8.

**अचिन्तन** (a-cintana) *n.* **i** lack of mental exercise अत्यादानं गुरुस्निग्धमचिन्तनमचेष्टनम् । निद्रासुखं चाप्यधिकं कफहृद्रोगकारणम् CaraS. i. 17.34; अतिस्थौल्यम् ⋯ हर्षनित्यत्वादचिन्तनात् ⋯ उपजायते CaraS. i. 21.4; **ii** absence of anxiety अचिन्तनाच्च कार्याणां ध्रुवं संतर्पणेन च । स्वप्नप्रसङ्गाच्च नरो वराह इव पुष्यति CaraS. i. 21.34; प्राग्वातसेवा शीतौ च देशकालावचिन्तनम् । श्लैष्मिकाणां समुद्दिष्टमेतत् कारणमर्शसाम् CaraS. vi. 14.19; RugVi. 5.8; **iii** absence of thought मैथुनस्यासमाचारो ह्यचिन्तनमकल्पनम् । निवृत्तिर्ब्रह्मचर्यं तदच्छिद्रं दम उच्यते VāyuP. i. 59.46; अचिन्तनमकृत्यानां यत् तच्छौचं तु मानसम् ĪśānS'iPa. ii. 66.21; **iv** absence of recollection ज्ञात्वापि यस्य बहुकालमचिन्तनेन व्याख्यातुमक्षमतया परितापि चेतः । तस्योपतापहरणाय मयेह भाष्ये प्रारभ्यते विवरणं प्रकटार्थमेतत् PrakaVi. 1.7; *m.* one of the 1008 epithets of S'iva (अष्टोत्तरसहस्रं तु नाम्नां शर्वस्य मे शृणु) भूतालयो भूतपतिरहो(रात्र)मनिन्दितः (v. l. अचिन्तनः) MahāBhā. xiii. 17.110.

**अचिन्तनीय** (a-cintanīya) *adj.* [*f.* -ā] unimaginable, not to be considered, not to be pondered over, beyond thought अचिन्तनीयं परिवर्जनीयम् ⋯ । प्राप्तोऽसि पाप्मानमिमं नरेन्द्र भ्रातुर्वधात् Rāmā. iv. App. I. 14.43; कुलं च शीलं च⋯। एतान् गुणान् सप्त विचिन्त्य देया कन्या बुधैः शेषमचिन्तनीयम् Pañcā. 214.20; अचिन्तनीयस्तु तव प्रभावो मनीषितं चौरपि येन दुग्धा RaghuVa. 5.33; अचिन्तनीयं मनसापि लब्धुम् KaumuMa. 3.1; क रामः क च रावणः । अचिन्तनीया नियतिर्ययेदं द्वन्द्वमाहितम् RāmC. 31.128; अहो तु खल्वचिन्तनीयोऽयमर्जुनस्य प्रभावः SubhaDha. 5.7 (4); अचिन्तनीयं तुहिनद्रवाणां श्रीखण्डवापीपयसामसाध्यम् । असूत्रयत्पञ्चिषु पारसीकतैलाग्निमेतस्य परं मनोभूः VikraDeC. 9.20; कश्चिदेवेह मूर्छादावन्ते प्रत्ययमेद आविरस्ति, यः परस्तान्मूर्छोच्छेदे नीलाद्याकारप्रत्ययमुपजनयति । स तस्यायमचिन्तनीयो महिमा कार्यदर्शनप्रमाणको न मीमांस्यते Kāśi. ii. 114.6 (*on* 5(3).50); बभूव पानान्मधुनो वधूनामचिन्तनीयो हि सुरानुभावः Vāgbhaṭā. 4.92; निर्माणज्ञानरूपा कला उपादानादिकारणविरहे न हि भवति तेन तस्या एव निमित्तमचिन्तनीयम् AlaṅkāRa. 53 (22); न च रूपं न च ऋद्धिः ⋯ तथापि कस्यापि कोऽपि जनो वल्लभो भवति । अत्र रूपाद्यभावेऽपि वल्लभत्वस्य निमित्तत्वमचिन्तनीयम् AlaṅkāRa. 53 (32); तस्य पुनरचिन्तनीयम् ⋯ आत्मानमवाप्तेन चक्षुषा साक्षात्कुर्वतः ⋯ चन्द्रमौले: कियद्रशीकरणं गौरीपरिचरणम् PārvPa. 2.5 (1); अचिन्तनीयं त्वद्विलसितम् Jīvān. 336.2; अचिन्तनीयानि तव स्वन्तदुरन्तसर्गप्रलयविलसितानि AmṛUda. 1.20 (4)

**अचिन्तनीयत्व** (acintanīya-tva) *n.* the state of being not worth consideration कार्यस्य कारणस्य चाचिन्तनीयस्वभावत्वादचिन्त्यम् । अचिन्तनीयत्वं चाविचार्यम् AlaṅkāRa. 58 (3); उपायनवाचोयुक्तिस्तत्सौहार्दशात्रवाभ्यां जनितत्वादौपचारिकीति चेन्न । हानौ तूपायनशब्दशेषत्वादित्यादिसूत्रभाष्यादिविरोधादचिन्तनीयत्वप्रसङ्गाच्च NyāySiA. 219.21.

**अचिन्तनीयपराक्रम** (acintanīya-parākrama) *adj.* of unimaginable valour अभवन् दनुपुत्रास्तु ⋯ । विप्रचित्तिप्रधानास्तेऽचिन्तनीयपराक्रमाः BrahmāṇḍP. ii. 6.1.

**अचिन्तनीयप्रभाव** (acintanīya-prabhāva) *adj.* of unimaginable power अचिन्तनीयप्रभावमपि चिन्तनीयमखिललोकस्य ⋯ साक्षाचकार दाक्षायणीरमणम् NīlaVi. 96.13.

**अचिन्तनीयशक्ति** (acintanīya-śakti) *f.* unimaginable power (ऋषयः) अचिन्तनीयशक्तिविभवमिदमभिधास्यमानमूचिवांसः Mitā. 527.10 (*on* 3.328)

**अचिन्तयत्** (a-cintayat) *adj.* [*f.* -ntī] **A** not caring for, not heeding, disregarding सुखं वने निवत्स्यामि यथैव भवने पितुः । अचिन्तयन्ती त्रींल्लोकांश्चिन्तयन्ती पतिव्रतम् Rāmā. ii. 24.9; अस्ति कश्चिद्विशिष्टो वा मद्विधो वा भवेद्युधि । ⋯ इति ब्रुवन्नन्वचरत् स राजा पृथिवीमिमाम् । दर्पेण महता मत्तः कंचिदन्यमचिन्तयन् MahāBhā. v. 94.8; v. 129.20; vi. 73.13; Ānand-Ra. 7.35; **B** not giving a thought to, not caring for (physical things) तं प्रहारमचिन्तयन् । धूम्राक्षस्य शिरोमध्ये गिरिशृङ्गमपातयत् Rāmā. vi 42.34; vi. 48.48; दारुकस्य सुतस्तं तु बाणवेगमचिन्तयन् । भूय एव ⋯ प्रययौ MahāBhā. iii. 20.13; iii. 21.20; यश्च गाण्डीवमुक्तानां स्पर्शमुग्रमचिन्तयन् । ⋯ पार्थानवैक्षत MahāBhā. viii. 5.80; NāṭyaS'ā. 15.82; (abstract things) योऽसौ गच्छति तेजस्वी बहून्क्लेशानचिन्तयन् । भवान्नियोगाद् बीभत्सुस्ततो दुःखतरं नु किम् MahāBhā. iii. 49.7; vi. 15.57; वीरासनेन तिष्ठेद्वा क्लेशमात्मन्यचिन्तयन् LaViṣṇuSm. 3.9; त्वं (शक्रः) प्रविश्यैव तां साध्वीं (अहल्याम्) हृतशीलमहानिधिम् ।⋯भवदुःखमचिन्तयन् RāmāMañ. 459.12; **C** not noticing, not knowing सा (प्रमदा) ⋯सोपानकुक्षिं प्रससार हर्षाद् भ्रष्टं दुकूलान्तमचिन्तयन्ती Saund. 6.8; पुमानेषां च कार्येण युक्तायुक्तमचिन्तयन् ।⋯नानापापानि विदधाति हि TriṣaS'aPuC. ii. 3.128; VidvanMo. 7.20; **D** lacking in thought अचिन्तयतो दिवास्वप्नपरस्यालसस्य श्लेष्मा कोपमापद्यते CaraS. vi. 19.9 (1922 Ed.)

**अचिन्तयित्वा** (a-cintayitvā) *ger.* **A** without giving a thought to, not caring for (physical things) सः⋯अचिन्तयित्वा बाणांस्तान्राक्षसं समभिद्रवत् Rāmā. iii. 49.10; vi. 44.12; अचिन्तयित्वा स शरान् ⋯ वृकोदरः MahāBhā. vi. 81.31; vi. 112.85; vii. 91.34; vii. 114.33; ज्वलन्तमप्यग्निमचिन्तयित्वा ŪruBha. 1.47; MatsyaP. 150.40; (abstract things) (सीता) अचिन्तयित्वा दुःखानि प्रविष्टा निर्जनं वनम् Rāmā. v. 14.19; अचिन्तयित्वात्मगतं परिश्रमम् Saund. 18.56; **B** not heeding, disregarding मधून्यचिन्तयित्वेमान् भक्षयन्ति पिबन्ति च Rāmā. v. 61.5; वैचित्रवीर्यं तमचिन्तयित्वा । उवाच कर्णः MahāBhā. v. 61.1; क्रीडामयूरमिव शत्रुमचिन्तयित्वा Prati. 6.4; **C** without thinking, without reflecting about अचिन्तयित्वा तच्छापं प्रहर्षः समजायत MahāBhā. i. 1258*(2); कृताकृतं सर्वमचिन्तयित्वा ⋯। गतागतं वारिणि तत्र चक्रुः Rāvaṇā. 4.47; **D** not taking into account जामातृसंपत्तिमचिन्तयित्वा पित्रा तु दत्ता स्वमनोऽभिलाषात् Avimā. 1.3; अर्थकार्श्यमचिन्तयित्वा गुरुणाहमुक्तः RaghuVa. 5.21.

**अचिन्ता** (a-cintā) *f.* **A** unmindfulness, lack of care तस्येमानि पूर्वरूपाणि भवन्ति ⋯ स्वधर्मेष्वचिन्ता CaraS. ii. 1.29 (1922 Ed.); **B** absence of worry अचिन्तया हर्षणेन ध्रुवं सन्तर्पणेन च । ⋯ कृशो वराह इव पुष्यति AṣṭāHṛ. i. 14.34 = AṣṭāSaṁ. i. 127.4 (1.24); आध्यात्मिकादि यद्दुःखं प्राप्तं प्रारब्धवेगतः । अचिन्तया तत्सहनं तितिक्षेति निगद्यते SarvaVeSāSaṁ. 137; अचिन्तैव परं ध्यानम् KulārT. 9.38; गाढशोकप्रहाराणामचिन्तैव महौषधम् Hitopa. 4.86 = SūktiRa. 200.15.

**अचिन्तात्मन्** (acintātman) *adj.* [*v. r.* for अचिन्त्यात्मन् ?] whose nature is beyond thought नारायणो ह्यचिन्ता(?न्त्या)त्मा यत्र सर्वं प्रतिष्ठितम् MārkP. 58.74.

**अचिन्तिक** (a-cintika) *adj.* unthinkable, incomprehensible [DBHS]

**अचिन्तिकमध्यबुद्धिविक्रीडित** (acintikamadhyabuddhi-vikrīḍita) *m.* name of a Bodhisattva [DBHS]

**अचिन्तित** (a-cintita) *adj.* [*f.* -ā] **A** not duly thought of, not duly considered प्रथमं वै महाराज कृत्यमेतदचिन्तितम् Rāmā. vi. 51.4; vi. 610*(6); **B** inconceivable, unexpected, unimagined, unsolicited अचिन्तितमनुद्दिष्टमसंकल्पितमेव च । रसं गृद्धयाभिभूता वै प्रशंसन्ति फलार्थिनः MahāBhā. xiii. 115.14; सुखमापुर्मुहूर्तं ते ह्यतर्कितमचिन्तितम् Rāmā. vii. 21.23; अकार्यं कारितो येन बलादहमचिन्तितम् MārkP. 3.76; चिन्तयाचिन्तितं भूयो दत्तस्ते रावण क्षणः RāmC. 28.14; तेनैतदचिन्तितं भोजनं (समु)पस्थितम् PañcT. 2.28 (20) (222.7); Pañcā. 139.1; अचिन्तितानि दुःखानि यथैवायान्ति देहिनाम् Hitopa. 1.125 = S'ārṅgaPa. 313; अपि चिन्तामणिश्चिन्तापरिश्रममपेक्षते । इदं त्वचिन्तितं मन्ये कृतमाश्चर्यमार्यया MālaMā. 10.162; TilaMañ. 149.4; 320.6; NayaVi. 105.3 (*on* i. 1.5); त्वं ममेहाश्रमं प्राप्तः क्षुत्क्लान्तोऽचिन्तितोऽतिथिः KathāSaSāg. xii. 25.33; PariPar. 3.18; PāṇḍaC. 18.203; S'āliC. 1.83; इरावतीसंकेतं गच्छतो राज्ञो मालविकादर्शनसिद्धिरचिन्तिता सिद्धिः RasāSu. 252.6 (3.107); ततश्च भाष्यकारेण यदिहोक्तमचिन्तितम् TantrVā. 731.3 (*on* iii. 1.14); न कदापीशजन्यं यज्जगदेतदचिन्तितम् DevīBhāP. iii. 1.42; **C** not

discussed or deliberated लिङ्गिनो लिङ्गमित्यत्र चिन्त्यते प्रागचिन्तितम् Bhām. 157. 3 (*on* i. 1. 28)

**अचिन्तित** ( a-cintita ) *m.* name of a Brahmin अचिन्तितपुत्रेण दत(त्ता) द्रम्मं(म्म)विंशति(ती) EI. xi. 304. 9.

**अचिन्तितक्षपान्ता** ( acintita-kṣapāntā ) *adj.* ( *f.* ) who did not notice the end of night (i. e. dawn) ऊचे युवतिरचिन्तितक्षपान्ता नाकाल: प्रियजनसंगमस्य कश्चित् Rāvaṇā. 6. 81.

**अचिन्तितगमागम** ( acintita-gamāgama ) *adj.* of unexpected advent and departure अप्रियैश्च प्रियैश्चैव अचिन्तितगमागमैः । संयोजयति भूतानि वियोजयति चेश्वरः S'ivaP. vii(1). 7. 16 (510A. 12)

**अचिन्तितदर्शन** ( acintita-darśana ) *adj.* [ *f.* -ā ] seen unexpectedly, whose appearance was unexpected तथा चासंभावितागमस्याचिन्तितदर्शनस्य सहसा प्राप्तस्य भ्रातुः स्वप्नदृष्टदर्शनस्येव कण्ठे समाश्लिष्य HarṣaC. 330. 7; इति हृदि यदा स्वप्नश्रेणीमचिन्तितदर्शिनां कलयति किल क्षोणीभर्तुः प्रिया NemiNir. 2. 60.

**अचिन्तितपूर्वा** ( acintita-pūrvā ) *adj.* ( *f.* ) unpremeditated, not thought of beforehand सङ्गतिश्चिरमचिन्तितपूर्वा निर्वृतिप्रणयिनी मिथुनानाम् KaumuMa. 4. 17.

**अचिन्तितप्राप्त** ( acintita-prāpta ) *adj.* obtained unexpectedly चिन्तयन्ती च तदचिन्तितप्राप्तम् ··· तदङ्कशय्यावस्थानमात्मनो दूरारूढगर्वा TilaMañ. 312. 18.

**अचिन्तितबाधा** ( acintita-bādhā ) *f.* unexpected hindrance गतः प्रान्तदशामाम्रभटोऽचिन्तितबाधया KumāDeC.(So.) 27. 24.

**अचिन्तितम्** ( a-cintitam ) *adv.* unexpectedly, all of a sudden तीर्थं व्रजेदेव त्वचिन्तितम् BṛParāSm. 2. 103; इत्थं वृते तेन वरे वरेण्ये देवोऽप्यथाचिन्तितमव्ययात्मा । तस्थौ स्वरूपेण VāmaP. 93. 11; पश्याचिन्तितमेवाप्तं त्वया यौधिष्ठिरं धनम् BṛKathāMañ. iii. 1. 283; अचिन्तितमिवाकस्माद्बभूव सफलं वनम् PārśvC. 7. 577; अचिन्तितमवादीच्च काव्यं सारस्वतोदयात् PrabhāC. 147. 13.

**अचिन्तितमहिमन्** ( acintita-mahiman ) *adj.* whose power or greatness is inconceivable विष्णोरवतारः खल्वयं वीररुद्रोऽप्यचिन्तितमहिमा PratāYaBhū. 159. 10.

**अचिन्तितसिद्ध** ( acintita-siddha ) *adj.* established without deliberation प्रतिपत्त्यर्थं धारणमिति मुख्यसिद्धान्ते स्थिते पवमानहविःप्रभृतिधारणमचिन्तितसिद्धम् MayūMāli. 827. 6 (*on* xi. 3. 13)

**अचिन्तितागत** ( acintitāgata ) *adj.* arrived unexpectedly समानग्रामवासिनोऽचिन्तितागतस्याप्यतिथिसंज्ञकत्वं नास्तीत्युक्तम् CaturCin. iii(1). 429. 22.

**अचिन्तितागतत्व** ( acintitāgata-tva ) *n.* the state of having come unexpectedly अचिन्तितागतत्वादिलक्षणकस्यास्य श्राद्धकालोपस्थितस्य नामान्तरमप्युक्तं पैठीनसिना CaturCin. iii(1). 429. 16.

**अचिन्तितातीतयामा** ( acintitātīta-yāmā ) *adj.* ( *f.* ) in which the hours have passed unnoticed इति चिन्तयन्नचिन्तितातीतयामामायामिनीमपि हेमन्तयामिनीं क्षिप्रमक्षपयम् TilaMañ. 357. 20.

**अचिन्तितान्यदर्प** ( acintitānyadarpa ) *adj.* who has no thought of the pride of others अचिन्तितान्यदर्पस्य लज्जाब्धेरपि टिट्टिभात् BṛKathāMañ. xvi. 327.

**अचिन्तितापात** ( acintitāpāta ) *adj.* who makes an unexpected attack अचिन्तितापातकिरातभीतां मृगीमिवालम्ब्य बलेन पाणौ । स तां बभाषे DaśāvaC. 7. 24.

**अचिन्तितावाप्त** ( acintitāvāpta ) *adj.* got unexpectedly अचिन्तितावाप्तगृहिणीत्वयंग्रहाश्लेषविभ्रमैः सहर्षक्षोभमीक्षितः TilaMañ. 353. 20.

**अचिन्तितोदय** ( acintitodaya ) *adj.* whose rise was unexpected वैरिक्षोणिपतिप्रियाः ··· । दृष्ट्वाकाण्डमचिन्तितोदयरविं यस्य प्रतापं पुरः प्रातःकालधिया ···त्रस्ता निशीथे बभुः PadyaVe. 71.

**अचिन्तितोन्नति** ( acintitonnati ) *adj.* ( *f.* ) of unexpected prosperity अचिरस्थायिनी राज्ञस्तस्याज्ञाचिन्तितोन्नतिः । वन्ध्या नवेन्दुलेखेव पार्थिवानामजायत RājTa.(Ka.) 7. 130.

**अचिन्तितोपगता** ( acintitopagatā ) *adj.* ( *f.* ) accruing suddenly or unexpectedly सोऽप्यचिन्तितोपगतया नभश्चरचक्रवर्तिलक्ष्म्या समुपगूढमुद्वीक्ष्य माम् ···प्रणाममकरोत् TilaMañ. 404. 4.

**अचिन्तितोपगामिनी** ( acintitopagāminī ) *adj.* ( *f.* ) accruing unexpectedly यशोवर्मा··· । अचिन्तितोपगामिन्या तस्थौ भोगश्रिया सुखम् KathāSaSāg. ix. 4. 209.

**अचिन्तितोपनत** ( acintitopanata ) *adj.* appearing or accruing unexpectedly रूपमचिन्तितोपनतमिदं दृक्पथमुपगतम् HarṣaC. 319. 12; दृष्ट्वा च झटिति प्रनष्टचेष्टामिमामचिन्तितोपनतकष्टेष्टविरहव्याकुलीकृता ··· विलपितुमारब्धा TilaMañ. 379. 21.

**अचिन्तितोपनतत्व** ( acintitopanata-tva ) *n.* the state of appearing all of a sudden अर्थस्य फलस्य सहसैवाचिन्तितोपनतत्वेन भवति सम्पत्तिः तद् प्रथमम् ··· पताकास्थानम् AbhinBhā. iii. 19. 19 (*on* 19. 31)

**अचिन्तितोपलम्भ** ( acintitopalambha ) *adj.* got or obtained unexpectedly अचिन्तितोपलम्भेन स्पर्शेन पदयोस्तव । त्वद्गुणे रक्तधातोर्मे कल्या कल्याणताजनि S'āliC. 1. 101.

**अचिन्तितोपस्थित** ( acintitopasthita ) *adj.* appearing unexpectedly or suddenly अचिन्तितोपस्थितोऽर्थसंबन्धो दैवायत्तः NītiVā. 29. 7; अचिन्तितोपस्थितजीवनानाम् ··· । तोयाशयानां परिवाहजन्या स्वगुणिस्न्योपचयप्रदाभूत् Yādavā. 5. 45.

**अचिन्तेन्द्रवर** ( acintendravara ) *m.* name of a person ( a poet during the rule of King Rudradeva of the Kākatīya dynasty ) श्रीरामेश(? शव)रो जनयिता यस्य क्षितावग्रणीः । सो(ऽ)चितेंद्रवरो(ऽ)द्वयामृतयतेः शिष्यो यतः श्रद्धया श्रीमद्रुद्रनरेश्वरस्य सुमतेर्वंशावलिं वर्णये Inscr. of Rudradeva (JBBRAS. x. 54. 16)

**अचिन्त्य** ( a-cintya ) *adj.* [ *f.* -ā ] [ DEBRU. p. 791 ] **A** inconceivable, indiscernible, unthinkable, unimaginable, beyond thought अचिन्त्यमव्यपदेश्यम् ···अद्वैतं चतुर्थं मन्यन्ते MāṇḍūU. 7; अचित्तं चित्तमध्यस्थमचिन्त्यं गुह्यमुत्तमम् MaiU. 6. 19; नैव चिन्त्यं न चाचिन्त्यमचिन्त्यं चिन्त्यमेव च । ··· ब्रह्म BrahmBiU. 6; BrahmViU. 81; 83; अद्भुतं चाप्यचिन्त्यं च सर्वत्र समतां गतम् MahāBhā. i. 1. 29; ददर्श तं पिता···विहंगमम् । ··· अचिन्त्यमनभिज्ञेयम् MahāBhā. i. 26. 7; i. 73. 36; अचिन्त्यानद्भुतान् भावान् ददर्श सुबहून्नृपः MahāBhā. iii. 109. 2; अचिन्त्या विविधास्तत्र द्रुमाः परमशोभनाः MahāBhā. iii. 157. 37; अचिन्त्याः खलु ये भावा न तांस्तर्केण साधयेत् MahāBhā. vi. 6. 11; vii. 113. 24; कर्णस्य निधनम् ··· संशोषणमिवाचिन्त्यं समुद्रस्याक्षयाम्भसः MahāBhā. viii. 5. 5; द्वन्द्वान्यासन् ··· संयुगे । विस्मापनान्यचिन्त्यानि MahāBhā. viii. 19. 47; विश्वामित्रम् ··· अनुजग्मतुरक्षुद्रौ ··· स्थाणुं देवमिवाचिन्त्यं कुमाराविव पावकी Rāmā. i. 21. 8; विष्णोरचिन्त्यं स्वं भागमात्मानं प्रत्यनुस्मरत् Rāmā. vi. 47. 104; ददर्श हनुमान् पुरीम् । ··· अचिन्त्यां सुकृतां स्पष्टाम् Rāmā. v. 2. 20; न तु चिन्तयतोऽचिन्त्यं जनस्य प्राज्ञमानिनः BuddhaC. 4. 52; अचिन्त्या मनसा लङ्का सहितैः सुरदानवैः Abhiṣe. 3. 11; त्वमेको ह्यस्य सर्वस्य विधानस्य स्वयम्भुवः । अचिन्त्यस्याप्रमेयस्य कार्यतत्त्वार्थवित्प्रभो ManuSm. 1. 3; 1. 7; मणीनां धारणीयानां कर्म यद्विविधात्मकम् । तत् प्रभावकृतं तेषां प्रभावोऽचिन्त्य उच्यते CaraS. i. 26. 72 (1922 Ed.); अमीमांस्यान्यचिन्त्यानि प्रसिद्धानि स्वभावतः । ··· भेषजानि SuśruS. i. 40. 19; iii. 3. 4; अचिन्त्यं दैवमिति (कर्म) ArthS'ā. 231. 4 (6. 2); स हि धर्मः ··· साध्यं व्युत्पाद्यं चिन्त्यमचिन्त्यम् ··· बोधिपक्षस्वभावम् MaYānaSū. 2. 8; 19. 45; क्षेत्रज्ञं तु शाश्वतमचिन्त्यमात्मानम् KāśyaS. 67A. 35; स एवानास्रवो धातुरचिन्त्यः कुशलो ध्रुवः Triṁśi. 30; अहो विधातुरचिन्त्यः प्रभावः Tantrākhyā. 121. 26; नव प्रकृतयस्त्वेताः शक्तित्वेन व्यवस्थिताः । अचिन्त्यस्य···परमात्मनः PauṣkS. 10. 6; 19. 39; (परमात्मा) इयत्तयाप्यचिन्त्यत्वादचिन्त्यः परिकीर्तितः AhirbuS. 2. 35; शक्तयः सर्वभावानामचिन्त्या अपृथक्स्थिताः । स्वरूपे नैव दृश्यन्ते दृश्यन्ते कार्यतस्तु ताः AhirbuS. 3. 2; पुरुषभाग्यानामचिन्त्याः खलु व्यापाराः Mṛcch. 10. 4(2); ये तुष्टुवुः सुराः ···श्रीपतिमचिन्त्यम् विष्णुम् BṛSaṁ. 43. 4; (आभासाः) न निर्गतास्ते···यतोऽचिन्त्याः सदैव ते GauḍKā. 4. 52; 4. 41; शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ViṣṇuP. i. 3. 2; v. 37. 74; किं वर्णयाम तव रूपमचिन्त्यमेतत् MārkP. 84. 5; प्रकृतिभ्यः परं यच्च तदचिन्त्यं प्रचक्षते BrahmāṇḍP. i. 15. 8; एतद्धि देवसामर्थ्यमचिन्त्यम् BrahmāṇḍP. ii. 58. 31; अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः Ratnā. 2. 4(5); अथ तेन भ्रातुः ··· वमतेव पारिहार्यमणीनामचिन्त्यं प्रभावम् ··· हस्तसंस्पर्शेन ··· चक्षुः समुन्मिमील राज्यश्रीः HarṣaC. 330. 2; अजमजरमचिन्त्यं चिन्तयित्वा भवन्तम् VeṇiSaṁ. 6. 644; AṣṭāSaṁ. i. 96. 13 (1. 17); अचिन्त्यो ज्ञातविज्ञेयस्तथापि जगते हितः (त्वं जिनोत्तम) PadmP.(Ra.) 5. 145; PāraS. 10. 122; रूपादेश्चेतसश्चैवमविशुद्धधियं प्रति । ग्राह्यलक्षणचिन्तेयमचिन्त्या योगिनां गतिः PramāVār. 3. 532; अचिन्त्या भावशक्तयः NyāyVi. 2. 40; 2. 81; एकस्यैवैष कोऽप्यचिन्त्यः सामर्थ्यातिशयो निखिलभेदप्रपञ्चसंपादनायै प्रभुः BrahmSi. 54. 24; अनयोः कोऽप्यचिन्त्यः प्रभावः MahāviC. 185. 8 (6. 61); App. B(286. 14); सत्यमचिन्त:(? न्त्यः) ··· रघुकुलकुटुम्बकानामनुभावः AnarghaRā. 3. 31(2); अचिन्त्यं च··· । यद्धि करणगोचरं तत् मनसापि चिन्त्यम्, तद्विपरीतत्वादचिन्त्यम् GītāBh.(S'aṅ.) 342. 1 (*on* 12. 3); अचिन्त्यम् ··· नमामि···जिनवर्धमानम् GaṇiSāSaṁ. 7. 1; KalyāKā. 10. 24; अचिन्त्या चाप्रतर्क्या च प्राणभावेन च स्थिता ··· देवता BṛĀraUBhVā. iii. 6. 27; i. 4. 1475; स्वयमेवेश्वरः प्राह ··· । पुराणः शाश्वतोऽचिन्त्यः सर्वभूतानुकम्पया BṛĀraUBhVā. iv. 4. 1288; अनन्ता हि तस्य शक्तयोऽचिन्त्याश्च BrahmSūBh.(Bhā.) 85. 13 (*on* i. 4. 25); नृप तदलमचिन्त्यैर्नीतिचिन्तान्तरायैः Kapphiṇā. 4. 22; तयोर्दैवपुरुषकारयोर्दैवमेवाचिन्त्यम्

ManuBh. ii. 63.7 (*on* 7.202); LakṣmīT. 36 39; विधेरिव वामभ्रुवामचिन्त्यानि चरितानि भवन्ति NalaCam. 5.54 (78); पुण्यायाभिभवेद्दुःखं पापायाभिभवेत् सुखम्। स्वस्मिन्नन्यत्र वा नीतमचिन्त्यं चित्तचेष्टितम् YaśasCam. ii. 325.10; अनादिनिधनोऽचिन्त्यो लोकानामीश्वरो महान् KūrmaP. 81.12 (1.9); ऐरावतमिवाचिन्त्यं कृत्वा वै गरुडं हरिः। स्वयं शक्र इवासीनः LiṅgaP. ii. 5.26; शत्रुघ्नश्च्यवनस्याथ दृष्ट्वाचिन्त्यं तपोबलम् PadmP. iv. 17.1; iv. 71.55; अचिन्त्याः सिद्धयस्तेन साध्यन्ते साधकोत्तमैः ParaS. 16.51; ये मूढा नार्चयन्त्यार्या पार्वतीं परमेश्वरीम्। अचिन्त्याम् SaurP. 50.23; तैः ···तन्मयीभावापन्नप्रमातृभूम्यभेदमुपसम्प्राप्ता अचिन्त्याः स्थायिनः AbhinBhā. i. 290.19 (*on* 6.33); अचिन्त्यश्च सर्ववस्तुविजातीयत्वेन तत्तत्स्वभावयुक्ततया चिन्तयितुमपि नार्हः GītāBh.(Rā.) 93.1 (*on* 2.25); 562.4 (*on* 12.3); अचिन्त्यो हि तेजसो लाघवातिशयेन वेगातिशयः Kiraṇā. 74.17; अचिन्त्यं शीलगुप्तानां चरितं कुलयोषिताम् KathāSaSāg. i. 4.83; xii. 7.205; पदार्थसामर्थ्यमचिन्त्यमीदृशं यदत्र विश्राम्यति निर्भरं मनः VikraDeC. 2.33; तपोविभूतयोऽचिन्त्या द्विजानामुग्रतेजसाम् RājTa.(Ka.) 1.16; जगतः उत्पादः ···। निमित्तं चात्र···शूलिनोऽचिन्त्यम् AlaṅkāRa. 53.20; जीवः सूक्ष्मपरो धातुरचिन्त्यः प्रभुरीश्वरः Hastyāyur. 439.14 (3.9); प्रकृतिभ्यः प्रत्यक्षदृष्टपदार्थस्वभावेभ्यः परं विलक्षणं यदाचार्याद्युपदेशगम्यं तदचिन्त्यमुच्यते PrakaVi. 455.21; PañcDa. 2.30; 6.525; अत्र ··· बलाहरणे निमित्तमचिन्त्यम् SāhiDa. 590.9; VedāntKau. 5.6 (*on* i. 1.1); VedāntRaMañ. 1.1 (2.3); NyāySu.(Ja.) 19A.10 (*on* i. 1.1); चिन्त्यमचिन्त्यं चेति द्विप्रकारकमपि निमित्तं यत्र नोक्तं सानुक्तनिमित्ता (विशेषोक्तिः) RasGaṅ. 588.2; अचिन्त्यं तद्विष्णोः पदम् ··· ददाना ··· त्वम् GaṅgāL. 11; अचिन्त्यमाहुर्भवतो विचेष्टितं हिनस्ति हिंसापि न यद् द्विजव्रतम् Rāgh. 4.74; तदैव सः। निर्विषो जायतेऽचिन्त्याः मन्त्राणां शक्तयः शिवे TantrRā. 10.80; मुच्यन्ते प्राणिनोऽचिन्त्याः शक्तयो मन्त्रतन्त्रयोः TantrRā. 13.51; **B** not to be considered, not worthy of thought, not to be cared लौकिकस्य तु पितृयज्ञनिषेधात् भावाभावावचिन्त्यौ ManuBh. i. 297.21 (*on* 3.202); कोऽपि क्षोभीभूतलङ्केशवारी राजन्नासीद्व्याप्तवानित्यचिन्त्यम् RāghPāṇ.(Dha.) 11.28; ग्रीष्मं द्विपन्तु जलदागममर्थयन्ताम्···तडागाः। ···अब्धेस्तु···द्वयमप्यचिन्त्यम् AuciViCa. 23 (19); Subhāṣi. 863; साधूनां लुब्धता काचिदचिन्त्यैव KīrtiKau. 1.31; *m.* **A** a name of Śiva नमोऽस्तु···अचिन्त्यायाम्बिकाभर्त्रे MahāBhā. vii. 57.53; अष्टोत्तरसहस्रं तु नाम्नां शर्वस्य मे शृणु ··· सर्वदेवमयोऽचिन्त्यः MahāBhā. xiii. 17.144; अचिन्त्याय ··· नमः BrahmāṇḍP. i. 25.72; अचिन्त्यः ··· एवं नाम्नां सहस्रेण तुष्टाव गिरिजापतिम् SaurP. 41.101; देवदेवोऽनयोऽचिन्त्यः ··· एवं नाम्नां सहस्रेण तुष्टाव हि हरं हरिः ŚivaP. iv. 35.92 (393A.3); LiṅgaP. i. 65.162; i. 65.167; उग्राय च त्रिनेत्राय हिरण्यवसुरेतसे। अचिन्त्यायाम्बिकाभर्त्रे ··· नमः PadmP. v. 35.144; जय रुद्र विरूपाक्ष जयाचिन्त्य निरञ्जन SkandP. iii(3). 7.63; v(3). 3.39; **B** a name of Viṣṇu नमस्ते ··· अचिन्त्य ViṣṇuSm. 1.53; वासुदेवः ··· अचिन्त्यः ··· इत्येतद्वासुदेवस्य विष्णोर्नामसहस्रकम् PañcaRā.(Nā.) iv. 3.13; iv. 3.64; ViṣṇuSaBh. 110.102; धन्वन्तरिरुवाच – जय विष्णो जयाचिन्त्य BrahmP. 122.29; SkandP. v(i). 63.142; BṛKathāMañ. xv. 198; **C** one of the 108 names of Kārttikeya विश्वामित्रः ···। स्तवं दिव्यं संप्रचक्रे महासेनस्य ···। अष्टोत्तरशतं नाम्नाम् ··· अचिन्त्यः सर्वभूतात्मा SkandP. i(2). 29.141; **D** a name of Jina सर्वयोगीश्वरोऽचिन्त्यः MahāP. 25.164; *n.* **1** name of a particular figure of speech अविलक्षणाद्विलक्षणकार्योत्पत्तिश्चाचिन्त्यम् AlaṅkāRa. 58; **2** name of one of the ten Śaiva Āgama texts शैवागमस्य भेदाः स्युः प्रथमं कामिकादयः। ··· कामिकं योगजाचिन्त्यकारणान्यजितं तथा ĪśānŚiPa. ii. 1.49 (6)

**अचिन्त्य** (a-cintya) *ger.* [Epics and Purāṇas; DEBRU. p. 788] disregarding, without caring for अचिन्त्य शरवर्षं तु गन्धर्वास्तस्य तं रथम् ··· पर्यवारयन् MahāBhā. iii. 231.4; केनास्येवं कृता भद्रे मामचिन्त्यावमन्य च MahāBhā. iii. 261.47; तमचिन्त्य प्रहारं स बलवान् वालिनः सुतः। ससर्ज ·· शालस्कन्धम् MahāBhā. iii. 272.17; अचिन्त्य पाण्डवान् कामाद्यथेष्टं कृतवानसि MahāBhā. vi. 75.6; ततोऽचिन्त्य महावेगान् कर्णकार्मुकनिःसृतान् ··· इषून् MahāBhā. vii. 106.34; गदाप्रहारं तं घोरमचिन्त्य प्लवगोत्तमः। तां शिलां पातयामास तस्योरसि Rāmā. vi. 33.40; तानुत्पातानचिन्त्यैव निर्जगाम रणाजिरम् Rāmā. vi. 43.9; अचिन्त्य निर्गताः सर्वे यत्र तौ रामलक्ष्मणौ Rāmā. vi. 65.20; तत्प्रहारमचिन्त्यैव विष्णुस्तस्मिन् महाहवे। जघान पञ्चभिर्बाणैर्मार्जितैश्च शिलाशितैः MatsyaP. 152.10; स तानचिन्त्य दैत्येन्द्रो देवबाणक्षतान् हृदि SkandP. i(2). 21.171.

**अचिन्त्यक** (acintya-ka) *n.* name of one of the 28 Śaiva Āgama texts शैवानां कामिकं पूर्वं योगोद्भवमचिन्त्यकम् MṛgendraT. iv. 1.43; *adj.* inconceivable इदं दृश्यं यदा नासीत् सदसदात्मकं च यत्। तदाक्षरमयं तेजो व्याप्तरूपमचिन्त्यकम् BhaviP. 570A.12 (iii(4). 14.1)

**अचिन्त्यकर्तृत्व** (acintyakartṛ-tva) *n.* ability to perform unimaginable feats अचिन्त्यकर्तृत्वं मनुष्यगन्धर्वैः सेव्यत्वं देवैर्वेत्येके PārāSū. 85.15.

**अचिन्त्यकर्मन्** (acintya-karman) *adj.* performing inconceivable or extraordinary acts or feats स (पार्थः) तामुपादाय (कृष्णाम्) ···। रङ्गान्निरक्रामदचिन्त्यकर्मा MahāBhā. i. 179.23; भीमो महाबाहुरचिन्त्यकर्मा MahāBhā. i. 182.8 = viii. App. I. 31.4; viii. App. I. 19.8; xiv. 10.4; अचिन्त्यकर्मा तपसा···। विश्वामित्रो महातेजाः Rāmā. i. 50.14; दशग्रीवं हतं दृष्ट्वा रामेणाचिन्त्यकर्मणा। पतिं मन्दोदरी तत्र कृपणा पर्यदेवयत् Rāmā. vi. 99.2; अम्बरम्। ननु त्वया (शाक्यभिक्षुणा) नीतमचिन्त्यकर्मणा तदेव बालारुणरागताम्रताम् MattaVi. 15.

**अचिन्त्यकर्मन्** (acintya-karman) *m.* one of the thousand names of Viṣṇu अचिन्त्यकर्मा नृपतिः प्राप्तसिंहासनोदयः। ··· विष्णोर्नामसहस्रकम् SātvaT. 6.93.

**अचिन्त्यकर्मसामर्थ्य** (acintya-karmasāmarthya) *n.* inconceivable power of Karman तस्य···पश्यतो जनकादिकम्। अचिन्त्यकर्मसामर्थ्याज्जाता जातिस्मृतिः पुनः SamarāSaṁ. 6.373.

**अचिन्त्यकल्प** (acintya-kalpa) *adj.* almost inconceivable (रामः) अचिन्त्यकल्पं हि पितुस्तं शोकमुपधारयन्। बभूव संरब्धतरः Rāmā. ii. 16.7.

**अचिन्त्यकल्पना** (acintya-kalpanā) *f.* imagining of (something) inconceivable प्रधानवादिनोऽपि सर्वपरिणामसावयवत्व(? त्वा)नित्यत्वादिदोषो दुष्परिहरः। युक्तिमूलत्वाच्च तस्य। अचिन्त्यकल्पनायां प्रमाणाभावाच्च AṇuBh. 127.24 (*on* ii. 1.29)

**अचिन्त्यकारित** (acintya-kārita) *n.* thoughtless act विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुं न युज्यते। पीयूषवृक्षः किं त्वेष धिग् ममाचिन्त्यकारितम् PārśvC. 1.453.

**अचिन्त्यकृत्** (acintya-kṛt) *adj.* (weapon) achieving unthought-of results क्व भूधरचरैः स्पर्धा वसुधातलचारिणाम्। तथापि पृतनायन्त्रानन्त्यं चिन्त्यमचिन्त्यकृत् RājTa.(Ka.) 8.2558.

**अचिन्त्यकृतकारिन्** (acintyakṛtakār-in) *adj.* doing extraordinary deeds सामान्यकुलजोऽप्येषः···। अचिन्त्यकृतकार्यासीत् RājTa.(Śrī.) 3.322.

**अचिन्त्यकृत्यकारिन्** (acintyakṛtyakār-in) *adj.* doing extraordinary deeds सोऽधिकारभाक्। अचिन्त्यकृत्यकार्यासीत् RājTa.(Ka.) 8.2366.

**अचिन्त्यकृत्यानुष्ठान** (acintyakṛtyānuṣṭhāna) *n.* execution of extraordinary deeds इत्यमेयपरावृत्तावमेयविभुता मता। अचिन्त्यकृत्यानुष्ठानाद् बुद्धानाममलाश्रये MaYānaSū. 42.7 (9.48)

**अचिन्त्यगति** (acintya-gati) *adj.* whose ways are incomprehensible केशवः प्रभुः। तत्राजगाम त्वरितो ह्यचिन्त्यगतिरीश्वरः MahāBhā. iii. App. I. 25.93; वाञ्छन्त्यचिन्त्यगतयश्च सुरा अपि त्वाम् KathāSaSāg. vi. 6.191; नमस्तस्मै भगवते···। अचिन्त्यगतये KathāKau. 15.10; *m.* name of a celestial singer or a wandering bard अचिन्त्यगतिर्मनोर्ग(? ग)तिश्चेति चारणयुगलं तत्र सिद्धकूटचैत्यालये समागतम् SamyaKau. 100.19.

**अचिन्त्यगुणविस्तर** (acintyaguṇa-vistara) *adj.* possessed of many incomprehensible attributes जयति···। अचिन्त्यगुणविस्तरः···हरिः NalaCam. 6.9.

**अचिन्त्यगुणस्वरूप** (acintyaguṇa-svarūpa) *adj.* whose nature consists of incomprehensible attributes अचिन्त्यगुणस्वरूपं गोविन्दम् ··· अहं भजामि BrahmS. 5.47.

**अचिन्त्यघटना** (acintya-ghaṭanā) *f.* unimaginable event कुत्र वासाद्यते तादृशं कन्यकारत्नम्।··· निश्चितमचिन्त्यघटनापटीयानेष विधिः UdaySuKa. 71.22.

**अचिन्त्यघटित** (acintya-ghaṭita) *adj.* happening unexpectedly उदयसुन्दरी चिरादचिन्त्यघटितसङ्गमप्रमोदोल्लोलतरलिताम् ··· तारावलीम् ··· प्रगाढमालिङ्ग्य ··· अब्रवीत् UdaySuKa. 134.8.

**अचिन्त्यचरित** (acintya-carita) *adj.* [*f.* -ā] of incomprehensible act or behaviour देवी शक्तिरनुत्तमा। अचिन्त्यचरिता कापि दुर्ज्ञेया दैवतैरपि DevīBhāP. v. 30.47; भगवानचिन्त्यचरितो वत्स TripuḌi. 4.5; राजर्षीया अचिन्त्यचरितः पुरुषोत्तमस्त्वम् Subhāṣi. 2528.

**अचिन्त्यचिन्तामणि** (acintya-cintāmaṇi) *m.* inconceivable desire-fulfilling gem अचिन्त्यचिन्तामणिकुट्टिमोदराः प्रविश्य हैमीः कुतुकेन कन्दराः। सुपर्वयुग्मानि मनःसु मेनिरे विमानवासव्यसनेन वञ्चनाम् NemiNir. 5.48; मोहं हित्वा पदं ध्यात्वाचिन्त्यचिन्तामणिप्रभे। उपादेये जिनप्रोक्ते धर्ममित्रेऽत्र भिद्यते SamarāSaṁ. 9.91; अचिन्त्यचिन्तामणिप्रतिमं च तत् (स्तवनम्) PrabaK. 4.25.

**अचिन्त्यचिन्तारत्न** (acintya-cintāratna) *n.* inconceivable desire-fulfilling gem अचिन्त्यचिन्तारत्ने च त्वय्यात्मायं मयार्पितः TriṣaŚaPuC. iii. 1.348.

**अचिन्त्यचेष्टित** (acintya-ceṣṭita) *adj.* of incomprehensible activity or behaviour चिरं ददौ युद्धमचिन्त्यचेष्टितो मनस्विनस्तस्य मधुप्रभञ्जनः Yādavā. 14.11.

**अचिन्त्यज** (acintya-ja) *m.* quicksilver, mercury पारदो रसराजश्च ···। रुद्रजो हरतेजश्च रसधातुरचिन्त्यजः RājNi. 214.9.

**अचिन्त्यज्ञान** (acintya-jñāna) *n.* extraordinary or supernatural

knowledge शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः । यत्ततो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः PadmP. v. 3. 2; अचिन्त्यज्ञानगोचराः–अतर्क्यप्रमितिसिद्धाः S'rutaPra. iA. 238. 13 (*on* i. 1. 1)

**अचिन्त्यतत्त्व** (acintya-tattva) *adj.* whose real nature is incomprehensible यं नास्पृशं श्चित्त्यमचिन्त्यतत्त्वं दुरन्तधामानमतत्स्वरूपम् । मनोवचोवृत्तय आत्मभाजां स एष पूज्यः परमः शिवो नः SkandP. iii(3). 8. 93.

**अचिन्त्यतपस्** (acintya-tapas) *adj.* practising extraordinary penances विधिविहितमशक्यमन्यथा हि कर्तुं यदृषिरचिन्त्यतपाः पुराब्रवीत् सः HariVaṁ. 118. 42.

**अचिन्त्यतमा** (acintya-tamā) *adj.* (*f.*) highly inconceivable, most extraordinary तामचिन्त्यतमां लोके ... सुदेष्णा पर्यपृच्छत् MahāBhā. iv. App. I. 6. (40)

**अचिन्त्यता** (acintya-tā) *f.* incomprehensibility, the state of being outside the scope of imagination, inconceivability अचिन्त्यता नाम न वस्तुधर्मः AlaṅkāRa. 54 (30)

**अचिन्त्यतेजस्** (acintya-tejas) *adj.* possessed of inconceivable prowess नमः ... शिवायाचिन्त्यतेजसे BrahmaṇḍP. ii. 25. 14; न हि दुःसाधमचिन्त्यतेजसः Yādavā. 9. 49; *n.* inconceivable prowess (सा शक्तिरम्बिका प्रोक्ता) अचिन्त्यतेजसा युक्ता S'ivaP. ii(1). 6. 24 (43B. 9)

**अचिन्त्यत्व** (acintya-tva) *n.* inconceivability अचिन्त्यत्वाद्धि चित्तानाम् ... । चित्तवैकल्यमासाद्य सा सा बुद्धिः प्रजायते MahāBhā. x. 3. 8; Rāmā. ii. App. 18(64); VāyuP. ii. 40. 127; BrahmāṇḍP. iii. 3. 105; रूपादिभिर्विज्ञानात् तदचिन्त्यत्वमिष्यते AbhisaAlaṅ. 3. 6; AhirbuS. 2. 35; अथवा संभवत्यपि भावानां क्षणिकानामन्योन्योपकारः । अचिन्त्यत्वाद्धेतुप्रत्ययसामर्थ्यस्यासर्वविदा PramāVāSvopVṛ. 87. 15; SadācāAnu. 19; शब्दशक्तेरचिन्त्यत्वाद्विद्वांस्तं मोहहानतः BṛĀraUBhVā. i. 4. 860; iv. 4. 698; TaiUBhāVā. 164. 2(2); ManuBh. ii. 63. 13 (*on* 7. 205); (विशेषोक्तिः) अचिन्त्यनिमित्ता त्वनुक्तनिमित्तैव । अनुक्तस्य च चिन्त्याचिन्त्यत्वेन द्वैविध्यात् AlaṅkāSa. 127. 2; AlaṅkāRa. 53(7); AnuVyā. 41B. 10 (*on* 3. 2); जीवकर्तृकतया चिन्तयितुमशक्यत्वमचिन्त्यत्वम् S'rutaPra. iB. 104. 2 (*on* i. 1. 2); VedāntRaMañ. 1. 4 (59. 23); अचिन्त्यत्वे ज्ञानानुदयः AṇuBh. 189. 26 (*on* iii. 2. 11); तर्कः ...ब्रह्मणि...नापेक्ष्यते अचिन्त्यत्वेन तदनर्हत्वात् GoviBh. 94. 11 (*on* ii. 1. 11); 152. 16 (*on* ii. 3. 18); 200. 5 (*on* iii. 2. 11); TantrRā. 26. 15.

**अचिन्त्यदर्शन** (acintya-darśana) *adj.* whose appearance cannot be thought of विचिन्त्य राजानमचिन्त्यदर्शनम् Rāmā. ii. 63. 18.

**अचिन्त्यधर्म** (acintya-dharma) *m.* unthinkable element (बुद्धस्य ... वाक्) आज्ञापनीया अचिन्त्यधर्मसम्यग्दर्शिकत्वात् । विज्ञापनीयाचिन्त्यधर्मसम्यग्देशिकत्वात् MaYānaSū. 80. 15 (12. 9)

**अचिन्त्यधर्मन्** (acintya-dharman) *adj.* possessed of inconceivable characteristics अचिन्त्यकर्मा तपसा (v. l. अचिन्त्यधर्मकर्मार्थ) ब्रह्मर्षिः Rāmā. i. 50. 14.

**अचिन्त्यधामन्** (acintya-dhāman) *adj.* possessed of inconceivable prowess (तस्मै) अचिन्त्यधाम्ने...नमः SkandP. ii(8). 6. 35; समुच्छिनत्सि त्वमचिन्त्यधामा कर्माणि Kirātā. 18. 29; अचिन्त्यधाम्नां विपत्तिरप्यस्ति परोपकारः Ragh. 13. 54.

**अचिन्त्यधृति** (acintya-dhṛti) *adj.* whose courage is inconceivable सौख्यैरगात् धृतिमचिन्त्यधृतिः स धीरः MahāP. 16. 270.

**अचिन्त्यनवसंगम** (acintya-navasaṅgama) *adj.* possessed of inconceivably novel union (सूर्यप्रभः) सह च पातालकन्यया मर्त्यदुर्लभम् । भेजे सुरतसंभोगमचिन्त्यनवसंगमम् KathāSaSāg. viii. 2. 218.

**अचिन्त्यनिजमाया** (acintya-nijamāyā) *f.* one's own inconceivable supernatural power (परमेश्वरो यत्) स्वेच्छावतारचरितैरचिन्त्यनिजमायया । करिष्यत्युत्तमश्लोकस्तद्ध्यायेत् BhāgP. iv. 8. 57.

**अचिन्त्यनिमित्तत्व** (acintyanimitta-tva) *n.* state of possessing an inconceivable cause अचिन्त्यनिमित्तत्वं चानुक्तनिमित्तस्यैव भेदः SāhiDa. 590. 5; (विशेषोक्तिः) अनुक्तोक्ताचिन्त्यनिमित्तत्वात् त्रिधा AlaṅkāKau. (Ka.) 313. 3.

**अचिन्त्यनिमित्ता** (acintya-nimittā) *adj.* (*f.*) where the cause is inconceivable (विशेषोक्तिः) अचिन्त्यनिमित्तेति नास्यां व्यङ्ग्यस्य सद्भावः Loc. 38. 17 (*on* 1. 13); KāvyPra. 658. 3; AlaṅkāSa. 127. 2; RasGaṅ. 587. 11; AlaṅkāKau. (Vi.) 315. 25.

**अचिन्त्यपथ** (acintya-patha) *adj.* (drama) whose course is inconceivable (सः) अचिन्त्यपथं प्रेक्षणकमालोकयन् ... कालमतिवाहयाञ्चक्रे UdaySuKa. 25. 19.

**अचिन्त्यपद** (acintya-pada) *n.* inconceivable abode अस्ति मे परमं रूपमचिन्त्यपदसौख्यदम् ĀdiP. 9. 43.

**अचिन्त्यपराक्रम** (acintya-parākrama) *adj.* [*f.* -ā] possessed of inconceivable valour (एताः ... मातरः) अचिन्त्यपराक्रमाः MahāBhā. ix. 273*(3); (पम्पाम्) सोऽभ्यतिक्रामत्...अचिन्त्यपराक्रमः Rāmā. vi. 65*(2); vi. 23. 12; स सृष्ट्वेदं मां चाचिन्त्यपराक्रमः । आत्मन्यन्तर्दधे ManuSm. 1. 51.

**अचिन्त्यपरिणामिकी** (acintyapariṇām-ikī) *adj.* (*f.*) having a consequence which is not amenable to thought तौ च लब्धार्थमार्गस्य भवेषु परिणामनात् । अचिन्त्यपरिणामिक्या उपपत्त्या समन्वितौ MaYānaSū. 69. 14 (11. 56)

**अचिन्त्यपरिवर्त** (acintya-parivarta) *m.* square (*varga*) of *acintya* (a high number) [DBHS]

**अचिन्त्यपौरुष** (acintya-pauruṣa) *adj.* of inconceivable valour भयं महत्तद्धृदयान्न याति मे विचिन्त्य राजानमचिन्त्यदर्शन(v. l. पौरुष)म् Rāmā. ii. 63. 18.

**अचिन्त्यप्रभाव** (acintya-prabhāva) *adj.* possessed of inconceivable prowess नामानि...तस्याचिन्त्यप्रभावस्य तानि वक्ष्यामि ViṣṇuSaBh. 29. 8 (*on* 13) अचिन्त्यप्रभावो धर्म उपचीयते NyāyKa. 196. 14; तव सुतेऽचिन्त्यप्रभावे स्निग्धमानसाः । तरिष्यन्ति PadmP. iv. 71. 12; अचिन्त्यप्रभावाः प्रभवः TriṣaS'aPuC. i. 3. 294; अचिन्त्यप्रभावो हि योगजो धर्मः Upask. 358. 4 (*on* viii. 1. 2)

**अचिन्त्यप्रभावत्व** (acintyaprabhāva-tva) *n.* possession of inconceivable power तत्र नित्यसर्वज्ञकर्तृकम् किं तर्हि कर्मण एव । तस्याचिन्त्यप्रभावत्वात् KenUBh. 87. 5 (*on* 3. 1); अचिन्त्यप्रभावत्वाद्विनैवोपभोगं कर्माशयान् प्रक्षयिष्यति TātpaṬ. (Vā.) 72. 2 (*on* i. 1. 1); वैदिकमन्त्राणामचिन्त्यप्रभावत्वात् ... संभवत्येव स्वर्गप्राप्तिः SyādvāMañ. 11(99)

**अचिन्त्यप्रमाण** (acintya-pramāṇa) *n.* inconceivable measure (of time) तत्रादियुगदेवयुगेऽचिन्त्यप्र(परि)माणोद्भवे कर्मभोजनपानगतिवीर्यायुषि अनिर्देश्ये KāśyaS. 65B. 18.

**अचिन्त्यफल** (acintya-phala) *n.* inconceivable result अचिन्त्यफलसंपादनक्षमाम् । ...जपेद्विद्याम् YogS'ā. 8. 63; ChandaśCū. 2. 263(4)

**अचिन्त्यबल** (acintya-bala) *adj.* of inconceivable strength इमान् ... अचिन्त्यबलपौरुषान् । ...रणे दृष्ट्वा न व्यथेदिह कः पुमान् MahāBhā. v. 78. 10; ताञ्यवारयत् ... सात्यकिः । ... सोऽचिन्त्यबलविक्रमः MahāBhā. vii. 116. 10; (एताः ... मातरः) अचिन्त्यबलवीर्याः MahāBhā. ix. 273*(3); हन्ता परबलौघानामचिन्त्यबलपौरुषः । ... राघवः Rāmā. vi. 24. 11; तम् ... अचिन्त्यबलपौरुषम् । ... ददर्श हनुमान् Rāmā. v. 16. 17.

**अचिन्त्यबहुकीट** (acintyabahu-kīṭa) *m.* inconceivably many insects यान्यचिन्त्यबहुकीटशरीराण्येव तानि शवरूपविषाणि KalyāKā. 19. 75.

**अचिन्त्यबुद्धमाहात्म्य** (acintya-buddhamāhātmya) *n.* inconceivable greatness or magnanimity of the Buddha अचिन्त्यबुद्धमाहात्म्यं च देशयन्ति ते बुद्धा भगवन्तः LaṅkāSū. 4. 0 (86. 23)

**अचिन्त्यबुद्धि** (acintya-buddhi) *adj.* possessed of inconceivable intellect सा ... अचिन्त्यबुद्धिम् । ददर्श ... वातात्मजम् Rāmā. v. 29. 12.

**अचिन्त्यबुद्धिसार** (acintya-buddhisāra) *adj.* possessed of inconceivable essence of intellect अचिन्त्यबुद्धिसारो बिन्दुसारः कारयिता राज्यम् AvantiKa. 184. 1.

**अचिन्त्यभाग** (acintya-bhāga) *m.* inconceivable part (देवदेवेश) विष्णोरचिन्त्यभागोऽसि प्रजासंहरणे कृते ViṣṇuDhaP. i. 28. 10.

**अचिन्त्यभाग्य** (acintya-bhāgya) *n.* inconceivable luck हरिवल्लभा । केनाप्यचिन्त्यभाग्येन तव दृष्टिपथं गता PadmP. iv. 71. 74.

**अचिन्त्यभूमन्** (acintya-bhūman) *adj.* possessed of inconceivable greatness अचिन्त्यभूम्नस्तव संनिधानात् ... भजन्ते सुभ्रातृतां केसरिदन्तिपोताः Yādavā. 8. 17; 11. 52; 18. 98; 20. 33.

**अचिन्त्यमहिमत्व** (acintyamahima-tva) *n.* possession of inconceivable greatness न हि वयं शास्त्रं पर्यनुयोक्तुं प्रभवामः शास्त्रस्याचिन्त्यमहिमत्वात् VivaPraSaṁ. 325. 1.

**अचिन्त्यमहिमन्** (acintya-mahiman) *adj.* possessed of inconceivable greatness अचिन्त्यमहिम्ने परमात्मने । ... नमः ViṣṇuP. v. 18. 48 = BrahmP. 192. 48; तं मुनिः प्राह अचिन्त्यमहिमा गुरुः SkandP. ii(2). 18. 33; ii(2). 27. 26; iii(1). 49. 78; अहो दुरुच्छेदः किल स्नेहपाशः यस्तावदेवंविधानचिन्त्यमहिमानो- (? म्नो) महात्मनोऽपि विधेयीकरोति MahāvīC. 5. 46 (284. 28); KalyāMaSt. 7; RāmC. 25. 66; भगवतः ... अचिन्त्यमहिमलीलैकप्रयोजनस्य ĀgaPrā. 56. 19; न ज्वलत्यनलस्तिर्यग् यदूर्ध्वं वाति नानिलः । अचिन्त्यमहिमा तत्र धर्म एव निबन्धनम् YogS'ā. 4. 97; TriṣaS'aPuC. ii. 3. 188; अग्निष्वात्तादयो वस्त्रादयश्च देवताविशेषत्वादचिन्त्यमहिमानः CaturCin. iii(1). 19. 4; Nārāy. iii. 12. 5; अचिन्त्यमहिमानः खलु महर्षयः JānaPa. 2. 34(4); Manmatho. 3. 13. (634. 13); *m.* inconcei-

vable greatness अयमचिन्त्यमहिमप्रथिमा प्राभञ्जनिः MahāvīC. 6.50(3) (181.8) विकारानविकारस्य विष्णोः शृणु…अचिन्त्यमहिमोज्ज्वलान् LakṣmīT. 10.9; शृणु… ममाचिन्त्यमहिमानम् GītāBh.( Rā. ) 450.5 (*on* 9.4)

**अचिन्त्यमान** ( a–cintyamāna ) *adj.* not being thought of अचिन्त्यमानस्फटिकाङ्गणोर्वीपुष्पोपहारस्खलनव्यथानि । … कामाक्षि नः पान्तु गतागतानि YātrāPra. 3.145.

**अचिन्त्यमाय** ( acintya–māya ) *m.* one of the thousand names of Viṣṇu अचिन्त्यमायोऽखिलेष्टदः … इति … विष्णोर्नामसहस्रकम् PañcaRā.( Nā. ) iv. 3.76.

**अचिन्त्यमाहात्म्य** ( acintya–māhātmya ) *adj.* [ *f.* –ā ] whose greatness is inconceivable रराजाचिन्त्यमाहात्म्या चिद्रूपा परमेश्वरी SaurP. 49.141; असावचिन्त्यमाहात्म्यः प्रह्वीकृतजगत्त्रयः PāṇḍaC. 3.365; SamarāSaṁ. 9.529; RasGaṅ. 630.2; *n.* inconceivable greatness अचिन्त्यमाहात्म्यनिधिः सुविधिर्बोधयेऽस्तु वः TriṣaS'aPuC. i. 1.11; कर्मणोऽचिन्त्यमाहात्म्यात् क्षेत्रपालोऽत्र चाययौ SamarāSaṁ. 7.96.

**अचिन्त्यमाहात्म्यता** ( acintyamāhātmya–tā ) *f.* the state of being of inconceivable greatness अचिन्त्यमाहात्म्यतायाः पुराणप्रसिद्धत्वात् RasGaṅ. 168.12.

**अचिन्त्यमूर्ति** ( acintya–mūrti ) *adj.* of inconceivable form अमूर्तमचिन्त्यमूर्तिं कस्त्वाम्…वेत्ति SkandP. iv. 60.33; AdhyāRā. i. 1.2.

**अचिन्त्ययोग** ( acintya–yoga ) *adj.* of inconceivable yogic power अचिन्त्ययोगं योगीश्वरं जगदुपास्यमुपास्महे MahāP. 23.158.

**अचिन्त्यरचन** ( acintya–racana ) *adj.* [ *f.* –ā ] of unthinkable or inconceivable creation यस्मादीश्वरात् … अस्य जगतः … अचिन्त्यरचनस्य सृष्टिस्थितिप्रलयाः प्रवर्तन्ते BrahmSūBh.( Bhā. ) 8.15 (*on* i. 1.2); न चासदादेर्मनसाप्यचिन्त्यरचनस्य…°प्रपञ्चस्य प्रादेशिकशरीरकः … अलं निर्माणाय ĪśvaSi.( Yā. ) 78.15; चिदप्यचिन्त्यरचना यदि तर्ह्यस्तु PañcDa. 6.253.

**अचिन्त्यरचना** ( acintya–racanā ) *f.* unthinkable creation or arrangement मनसाप्यचिन्त्यरचनारूपस्य ( जगतः ) BrahmSūBh.( S'aṅ. ) 10.7 (*on* i. 1.2); अचिन्त्यरचनारूपं मायैव सकलं जगत् PañcDa. 6.246; 6.151; VivaPraSaṁ. 257.3.

**अचिन्त्यरचनात्व** ( acintyaracanā–tva ) *n.* the state of being an unthinkable creation or arrangement विवेके द्वैतमिथ्यात्वं युक्त्यैवेति न भण्यताम् । अचिन्त्यरचनात्वस्यानुभूतिर्हि स्वसाक्षिकी PañcDa. 6.252; इन्द्रजालमिदं द्वैतमचिन्त्यरचनात्वतः PañcDa. 7.174.

**अचिन्त्यरत्नमाहात्म्य** ( acintya–ratnamāhātmya ) *n.* inconceivable greatness or efficacy of the jewel अचिन्त्यरत्नमाहात्म्याच्छान्ते शूलशिरोव्यथे । घटिताः सन्धयः सर्वे दन्ता निश्चलतामिताः SamarāSaṁ. 7.416.

**अचिन्त्यरसा** ( acintya–rasā ) *adj.* ( *f.* ) of inconceivable pleasure प्राप्नोषि निर्वृतिमचिन्त्यरसां सुभद्राम् SubhaDha. 2.7.

**अचिन्त्यरूप** ( acintya–rūpa ) *adj.* [ *f.* –ā ] of inconceivable form or nature बृहच्च तद्दिव्यमचिन्त्यरूपम् … विभाति MuṇḍU. iii. 1.7; प्रमाथिता द्रौपदी राजपुत्री । अनिन्द्य( v. l. अचिंत्य )रूपा सुविशालनेत्रा MahāBhā. iii. 253.11; सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् BhagGī. 8.9 = MahāBhā. vi. 30.9; खेऽन्तर्दधे त्मानमचिन्त्यरूपः Rāmā. vi. 60.28; vi. 1519*(11); ViṣṇuP. iv. 2.126; MārkP. 99.62; क्वासौ प्रज्वलनो हुताशनः । तदवस्थमेतदन्तःपुरम् । कथमचिंत्यरूपमेवम् Ratnā. 4. 18(2); GaṇePañ. 5; PañcPā. 74.13 (*on* i. 1.1); S'kandP. iv. 60.36; शंभुम् … नमामि कल्याणमचिन्त्यरूपम् BrahmP. 123.197; 130.29; GaṇeP. i. 13.6; ii. 40.13; DaśāvaC. 7.74; अचिन्त्यरूपस्य विश्वस्य सृष्टिस्थितिलयाः … भगवतो भवन्ति VedāntPāSau. 12.10 (*on* i. 1.2); तस्मिन्सभा काचिदचिन्त्यरूपा ।…विद्योतते Vidvanmo. 8.68; *n.* inconceivable form or figure अचिन्त्यरूपमेवान्ते रात्रौ स्वप्ने विलोकितम् । यथा तथोक्तम् ĀdiP. 17.21.

**अचिन्त्यरूपधृक्** ( acintyarūpa–dhṛk ) *adj.* [ AltGr. 1.303 ] bearing an incomprehensible form ददातु शं विष्णुरचिन्त्यरूपधृक् VarāP. 8.49.

**अचिन्त्यरूपवती** ( acintyarūpavat–ī ) *adj.* ( *f.* ) possessing inconceivable beauty अचिन्त्यरूपवतीं योषितं ददर्श ( राजा ) UdaySuKa. 9.22.

**अचिन्त्यरूपा** ( acintya–rūpā ) *f.* one of the thousand names of Lalitā अग्रगण्याचिन्त्यरूपा कलिकल्मषनाशिनी LalitāSa. 164.

**अचिन्त्यर्द्धि** ( acintyarddhi ) *m.* one of the names of Jina ( *lit.* possessing prosperity beyond thought) अचिन्त्यर्द्धिः समग्रधीः MahāP. 25.150.

**अचिन्त्यलील** ( acintya–līla ) *adj.* indulging in inconceivable sports यः … अचिन्त्यलीलः … वैराजसंज्ञः पुरुषो बभूव BṛBrahmaS. i. 1.12.

**अचिन्त्यवस्तुस्वभाव** ( acintya–vastusvabhāva ) *m.* inconceivable nature of an object अचिन्त्यवस्तुस्वभावस्य तदेकगम्यत्वात् GoviBh. 107.8 (*on* ii. 1.28)

**अचिन्त्यविक्रम** ( acintya–vikrama ) *adj.* possessing inconceivable valour धनंजयः । प्रतिज्ञामात्मनो रक्षन्मुमोहाचिन्त्यविक्रमः MahāBhā. vii. 57.1; vii. 67.66; VāyuP. i. 24.30; रसां गतामेवमचिन्त्यविक्रमः सुरोत्तमः … समुद्धरद्धरणिम् MatsyaP. 248.79.

**अचिन्त्यविभव** ( acintya–vibhava ) *adj.* [ *f.* –ā ] of unthinkable power अनन्ताचिन्त्यविभवाः सर्वभूतसमाश्रयाः ( गणाः ) PāraS. 11.228; ज्ञानादिषाड्गुण्यनिधेरचिन्त्यविभवस्य ताः । विष्णोर्विभूतिमहिमसमुद्रद्रप्सविप्रुषः SaṁviSi. 82.19; SamarāSū. 14.13; अचिन्त्यविभवा शक्तिर्दृष्टा तव RāmāMañ. 314.8.

**अचिन्त्यविषयत्व** ( acintyaviṣaya–tva ) *n.* the state of having inconceivable objects or sphere (of cognition) योगिधर्माणां चाचिन्त्यविषयत्वात् NyāyVār. 367.15 (*on* iii. 1.18)

**अचिन्त्यवीर्य** ( acintya–vīrya ) *adj.* having unthinkable power or efficacy स्वयंभूरेष भगवान् वायुरित्यभिशब्दितः । … अचिन्त्यवीर्यो दोषाणां नेता रोगसमूहराट् SuśruS. ii. 1.8; किञ्चिदचिन्त्यवीर्यं भेषजमुपनीय भोजनान्तर्देयमिति भाषमाणः स गतः PrabaCin. 70.14; KumāPraPra. 41.17; अचिन्त्यवीर्यं गुणतः सर्वरोगप्रणाशनम् । … गुणैरेतैर्युतं मधु Hastyāyur. 675.20 (4.23); *n.* incomprehensible power अचिंत्यवीर्यप्रभावतया चास्मिन्नूहासंभवान्निरूहः AṣṭāSaṁ. i. 145.3 (1.28); व्यचीचरद् यः कृपया मदाशये । अचिन्त्यवीर्येण सुवासनासुधाम् … नमोऽस्तु तस्मै हरिभद्रसूरये PrabhāC. 125.9.

**अचिन्त्यवृत्ति** ( acintya–vṛtti ) *adj.* of inconceivable character जहौ … । अचिन्त्यवृत्तिर्मधुरामनिन्द्याम् Yādavā. 11.11 ( comm. अतर्कणीयचरितः कृष्णः)

**अचिन्त्यवैभव** ( acintya–vaibhava ) *adj.* [ *f.* –ā ] of inconceivable glory, of unimaginable power अतुलोऽचिन्त्यवैभवः MahāP. 25.140; अचिन्त्यवैभवः । ललिताङ्ग इति ख्यातः स यथार्थाभिधोऽभवत् TriṣaS'aPuC. i. 1.464; स कन्यकारत्नमचिन्त्यवैभवं वदान्यरत्नं च समं समर्पयन् । … पूर्णमनोरथोऽभवत् Yādavā. 14.55; अचिन्त्यवैभवा रक्ता दशमी परिकीर्तिता TantrRā. 11.20; 15.57.

**अचिन्त्यशक्ति** ( acintya–śakti ) *adj.* whose power is inconceivable or beyond imagination अहमचिन्त्यशक्तिः KaivaU. 21; साम्नां च यो योनिरचिन्त्यशक्तिः । … तम् … नमस्ये भास्वन्तम् MārkP. 103.6; सर्गस्थितिप्रलयहेतुमचिन्त्यशक्तिं विश्वेश्वरं विदितविश्वमनन्तमूर्तिम् । … नमामि VākyaVṛ. 1; नमामि तां वाचमचिन्त्यशक्तिम् SaṁkṣeS'ā. 1.4 (i. 10.17); श्वेताश्वतरा अपीश्वरमचिन्त्यशक्तिमामनन्ति BrahmSūBh.( Bhā. ) 97.25 (*on* ii. 1.14); ( जीवः ) मन्त्रवन्नियतोऽप्येषोऽचिन्त्यशक्तिः स्वभावतः YaśasCam. ii. 279.21; अचिन्त्यशक्तिः ( गङ्गा ) SkandP. iv. 29.20; मुह्यन्ते चात्र विद्वांसोऽचिन्त्यशक्तिहरेः कृतौ PadmP. iv. 87.4; जानामि … अचिन्त्यशक्तिम्…त्वां राम AdhyāRā. vii. 1.63; पृष्ठे ब्रह्माण्डमन्यत्पृथुतरमकरोत्कूर्मरूपः कवाटं यस्तस्याचिन्त्यशक्तेर्वदति मितमतिः कः स्तुतिं कश्च निन्दाम् DaśāvaC. 4.45; श्रियः पतिः … स्वानुरूपासंख्येयाचिन्त्यशक्तिनित्यनिरवद्यनिरतिशयकल्याणदिव्यायुधः GītāBh.( Rā. ) 7.1 (*on* 1.0); 538.7 (*on* 10.41); मणिमन्त्रमहौषध्यः सन्त्येवाचिन्त्यशक्तयः PārśvC. 1.230; आख्या भवनदेवीति कृता तस्यास्तदत्र च । अचिन्त्यशक्तिरद्यापि पूजां प्राप्नोति PrabhāC. 50.30; 51.8; अचिन्त्यशक्तेरकुमारयूनः कौमारलीलाकवचेन गुप्तम् । बलम्…अबोधि गोपैः Yādavā. 7.74; अस्यैवाचिन्त्यशक्तेः … स्यादुपादानभावः TattvMu. 3.25; नान्या गतिः कृष्णपदारविन्दात्…अचिन्त्यशक्तेः SiddhāRa. 8 (97.17); न चिन्त्या तर्कगोचरा शक्तिर्यस्य सोऽचिन्त्यशक्तिः VedāntRaMañ. 3.8 (112.12); पदारविन्दस्याङ्गत्वेऽप्यङ्गाङ्गिनोरभेदविवक्षयाचिन्त्यशक्त्यादिविशेषणोक्तिरविरुद्धा VedāntRaMañ. 3.8 (120.10); स प्रजापतिरचिन्त्यशक्तिरात्मनि शरीरत्यागरूपमन्तर्धानं कृतवान् ManvaMu. 17.29 (*on* 1.51); यत्तु गौण्यसंभवाच्छब्दाच्चेत्युक्तं तन्न अचिन्त्यशक्तेरुत्पादकसामग्र्याः श्रवणात् GoviBh. 144.11 (*on* ii. 3.6); 195.5 (*on* iii. 2.1); *f.* inconceivable or unimaginable power यदचिन्त्यशक्तिकलिताः किलौषधीः परिकीर्तयन्ति कृतिनस्तथैव तत् NemiNir. 9.14; अचिन्त्यशक्तिसंयुक्तं शिवसौख्यस्य साधकम् । … परमेष्ठिमयं मन्त्रं गृहाण SamarāSaṁ. 8.436; उत्क्रान्तिगत्यागतीनामित्याद्यागामिसूत्रेणाचिन्त्यशक्तेः सर्वगतत्वस्य च विरुद्धत्वात् NyāySu.( Ja. ) 280B.9 (*on* ii. 1.3); ( दोषाः ) तेऽचिन्त्यशक्त्यादिना गुणा एव कल्पनीयाः TattvPrakā. 91A.6 (*on* ii. 1.30); येऽमी श्रौतप्रसिद्धानहह भगवतोऽचिन्त्यशक्त्याद्यशेषान् । प्रत्याख्यान्तो विशेषान् CaitaCa. 31.1(2); एकमेव स्वरूपमचिन्त्यशक्त्या युगपत्सर्वत्रावभाति GoviBh. 200.12 (*on* iii. 2.11); 303.5 (*on* iv. 2.16)

**अचिन्त्यशक्तिक** ( acintyaśakti–ka ) *adj.* possessed of inconceivable power यदुक्तं समसमयसमुत्पाद इति तदप्ययुक्तम् । अचिन्त्यशक्तिकस्य परमेश्वरस्येच्छानुविधायिन्या अव्याहतक्रियाशक्त्या कार्यकारित्वाभ्युपगमात् SarvaDaSaṁ. 6.119.

**अचिन्त्यशक्तिता** (acintyaśakti-tā) *f.* the state of being endowed with inconceivable power सर्वभूतानि युद्धक्रीडादिषु सर्वत्राचिन्त्यशक्तितया जयतीति अनन्तजित् VisṇuSaBh. 68. 17 (*on* 46); मन्त्राणामचिन्त्यशक्तिता Paraśu-KS. 1. 8 (27. 13); दिव्यस्वर्गादिकर्तृत्वं ब्रह्मरुद्रादिमोहनम् । भक्तप्रारब्धविध्वंस इत्याद्याचिन्त्यशक्तिता BhaktiRaSi. ii. 1. 71.

**अचिन्त्यशक्तित्व** (acintyaśakti-tva) *n.* the state of being possessed of inconceivable power ईश्वरस्याचिन्त्यशक्तित्वाद्विघ्नकरणे प्रभुत्वम् BṛĀraUBh. 135. 5 (*on* i. 4. 10); यत एकमेव सदैकरसमात्मानम्…°उपाधिभेदवशेन…बहुधा…यः करोति स्वात्मसत्तामात्रेणाचिन्त्यशक्तित्वात् KāṭhUBh. 166. 13 (*on* 5. 12); कर्मणोऽचिन्त्यशक्तित्वात् BṛĀraUBhVā. i. 4. 1679; ब्रह्मणः … अचिन्त्यशक्तित्वात् … सर्वमुपपन्नम् VedāntDī. 97. 9 (*on* ii. 1. 36); ईशस्याचिन्त्यशक्तित्वान्नाशक्यं क्वापि विद्यते AnuVyā. 43B. 6 (*on* 3. 2); न चेश्वरस्याप्येतदशक्यं तस्याचिन्त्यशक्तित्वात TattvPrakā. 118A. 8 (*on* ii. 3. 27); (तौ) कर्मणोऽचिन्त्यशक्तित्वाद्धौतकुङ्कुमवर्गकौ…मिलितौ SamarāSaṁ. 5. 497; ईश्वरस्याचिन्त्यशक्तित्वात् जीवादृष्टभोगादेर्नेश्वरे आपत्तिः LaCandr. 854. 32.

**अचिन्त्यशक्तिप्रसक्ति** (acintyaśakti-prasakti) *f.* occurrence of unthinkable power तथा च कथमचिन्त्यशक्तिप्रसक्तिः (जीवस्य) NyāySu.(Ja.) 304A. 10 (*on* ii. 1. 7)

**अचिन्त्यशक्तिभृत्** (acintyaśakti-bhṛt) *adj.* who has unimaginable power उवाच च महाराजाचिन्त्यशक्तिभृतो ह्यमी । महाप्रभावा मुनयो न प्रहेयाः PrabhāC. 193. 1.

**अचिन्त्यशक्तिमत्** (acintyaśakti-ma(n)t) *adj.* who possesses inconceivable power सदैव मुक्तोऽहमचिन्त्यशक्तिमान् AdhyāRā. vii. 5. 44.

**अचिन्त्यशक्तिमत्ता** (acintyaśaktimat-tā) *f.* the state of possessing inconceivable power यदि … परमात्मनोऽचिन्त्यशक्तिमत्तारूपेशता स्यात् NyāySu. (Ja.) 510B. 5 (*on* iii. 2. 10)

**अचिन्त्यशक्तियोग** (acintyaśakti-yoga) *m.* association or connection with inconceivable power परमपुरुषस्य अचिन्त्यशक्तियोगात् … विचित्रचिदचिन्मिश्रजगत्सृष्टिः संभाव्येत BrahmaSūBh.(Rā.) 462. 19 (*on* ii. 1. 34); सर्वमिदम् …अचिन्त्यशक्तियोगात्स्वाभाविकम् S'ivārkaMaDī. i. 302. 20 (*on* i. 2. 1); विभुत्वे सत्यप्यणुत्वादिकमचिन्त्यशक्तियोगात् GoviBh. 31. 4 (*on* i. 2. 7); 40. 6 (*on* i. 2. 32)

**अचिन्त्यशक्तियोगिन्** (acintyaśaktiyog-in) *adj.* possessing unthinkable power विभोः … अणुत्वं … तस्य … अचिन्त्यशक्तियोगिनः तथा तथाभिव्यक्तेः GoviBh. 31. 3 (*on* i. 2. 7)

**अचिन्त्यशक्तिसद्भाव** (acintyaśakti-sadbhāva) *m.* existence of inconceivable power विद्यायाः …अचिन्त्यशक्तिसद्भावात् PrakaVi. 1099. 19.

**अचिन्त्यशक्त्यनङ्गीकार** (acintyaśakty-anaṅgīkāra) *m.* non-acceptance of the inconceivable power ईश्वरमभ्युपगच्छता तस्याचिन्त्यशक्त्यनङ्गीकारात् TattvPrakā. 98B. 6 (*on* ii. 2. 12)

**अचिन्त्यशान्ततादर्शिन्** (acintyaśāntatādarś-in) *adj.* revealing the unthinkability (of the *skandhas* in their true nature) and (their basic) quiescence अचिन्त्यशान्ततादार्शि(? दर्शि) लोकसंज्ञानिरोधि च । ज्ञानलक्षणमित्युक्तं सर्वाकारज्ञतानये AbhisaAlaṅ. 4. 22.

**अचिन्त्यश्री** (acintya-śrī) *m.* name of a Bodhisattva [DBHS]

**अचिन्त्यसंज्ञक** (acintyasaṁjña-ka) *adj.* called or named *acintya* (the inconceivable) ऋं ॠं ऌं सुतलश्चातिगुह्यं चाचिन्त्यसंज्ञकम् … प्रोच्य KulārT. 4. 39.

**अचिन्त्यसमृद्धि** (acintya-samṛddhi) *adj.* possessing inconceivable prosperity अचिन्त्यसमृद्धयस्तपसां विशेषाः MahāviC. 5. 39(6)

**अचिन्त्यसामर्थ्य** (acintya-sāmarthya) *n.* incomprehensible capacity अथवा कारण एव रूपमरूपं चावच्छेदभेदेनाचिन्त्यसामर्थ्याद्वा AṇuBh. 189. 22 (*on* iii. 2. 11)

**अचिन्त्यसामर्थ्यातिशय** (acintyasāmarthyātiśaya) *adj.* possessing excess of inscrutable power अचिन्त्यसामर्थ्यातिशयो हि समाधिः TātpaṬ.(Vā.) 9. 13 (*on* i. 1. 1)

**अचिन्त्यसार** (acintya-sāra) *adj.* whose essential nature is unimaginable, whose strength is incomprehensible अचिन्त्यसार विश्वात्मन् प्रसीद परमेश्वर PañcaRā.(Nā.) iv. 4. 5; तस्माद् बुधाः कुरुत धर्ममवाप्तुकामाः स्वर्गापवर्गसुखमग्र्यमचिन्त्यसारम् MahāP. 16. 273.

**अचिन्त्यसिद्धि** (acintya-siddhi) *f.* inconceivable success or achievement अचिन्त्यसिद्धेश्च साधकं कवीनामिन्द्रपदस्य रागिणम् … प्रतानं कविपुङ्गवानामपश्यत् UdaySuKa. 156. 14.

**अचिन्त्यस्वभाव** (acintya-svabhāva) *adj.* whose real nature is inconceivable किमुताचिन्त्यस्वभावस्य ब्रह्मणो रूपं विना शब्देन न निरूप्येत BrahmSūBh.(S'aṅ.) 335. 7 (*on* ii. 1. 27)

**अचिन्त्यहेतु** (acintya-hetu) *adj.* the cause of which is unthinkable तयोः … आसेदुषोः सख्यमचिन्त्यहेतु RaghuVa. 5. 60.

**अचिन्त्यहेतुक** (acintyahetu-ka) *adj.* the cause or motive of which cannot be thought of अलोकसामान्यमचिन्त्यहेतुकं द्विषन्ति मन्दाश्चरितं महात्मनाम् KumāSaṁ. 5. 75.

**अचिन्त्यहेतुत्व** (acintyahetu-tva) *n.* the state of having an unthinkable or unaccountable cause or motive अचिन्त्यहेतुत्वं मुनिचरितानामिति भावः Loc. 164. 20 (*on* 3. 19)

**अचिन्त्या** (a-cintyā) *f.* **i** name of Durgā अचिन्त्यानन्तविभवा भूलेखा कनकप्रभा KūrmaP. 119. 5 (1. 12); **ii** name of one of the S'aktis अचिन्त्यामप्रमेयां च…बहिर्द्वारेषु कोणेषु…प्रपूजयेत् TantrRā. 20. 11.

**अचिन्त्याकार** (acintyākāra) *adj.* of unthinkable form अचिन्त्याकारमीश्वरम् । … प्रणनाम महामुनिः SkandP. iii(3). 16. 27.

**अचिन्त्याचरित** (acintyācarita) *adj.* of inexplicable or incomprehensible behaviour परैरचिन्त्याचरितं समुच्चलन्नराधिपं पावनमाससाद सः Rāgh-Pāṇ.(Ka.) 5. 49.

**अचिन्त्यात्मन्** (acintyātman) *adj.* whose nature is inconceivable इच्छन्प्रभुरचिन्त्यात्मा गोविन्दः पुरुषोत्तमः । स्थितः प्रियहिते जिष्णोः MahāBhā. xii. 111. 25; iii. 42. 10; iii. 160. 20 (v. l.); स च श्रीमानचिन्त्यात्मा रामो दशरथात्मजः। सूतं संचोदयामास त्वरितं वाह्यतामिति Rāmā. ii. 940*(1); अव्यक्तादिरचिन्त्यात्मा लोकसंरक्षणोद्यतः । एकोऽनेकवपुः श्रीमान्द्विषद्बलनिषूदनः DūtVā. 43; संस्थितः … अचिन्त्यात्माथ भगवान् पर्वते गन्धमादने PauṣkS. 36. 356; तैस्तैः रूपैरचिन्त्यात्मा करोत्यव्याहतो विभुः VisṇuP. i. 7. 40; v. 7. 37; सर्वहेतुरचिन्त्यात्मा परः कोऽप्यपरक्रियः MārkP. 46. 8; सोऽचिन्त्यात्मा सर्वभूतप्रसूतिः VāyuP. i. 9. 112; सोऽचिन्त्यात्मा सर्वभूतप्रणेता BrahmāṇḍP. i. 5. 107; वायुमूर्तिरचिन्त्यात्मा सोऽनिरुद्धः स्वयं प्रभुः VisṇuDhaP. ii. 108. 15; ii. 108. 19; योऽसौ…विगतकल्मषः …अचिन्त्यात्मा नारायणः VarāP. 74. 4(2); विष्णुर्विभुरचिन्त्यात्मा नित्यः सदसदात्मकः NaraP. 64. 70; ब्रूहि मे त्वमचिन्त्यात्मन् कन्यां तां चित्तहारिणीम् SkandP. ii(1). 5. 15; i(2). 43. 18; एष विष्णुरचिन्त्यात्मा ब्रह्मा चैष पितामहः BhaviP. 189B. 14 (i. 127. 11); यज्ञवाटमचिन्त्यात्मा देवस्तत्र पितामहः PadmP. v. 18. 42; *m.* one of the thousand names of Jina अनन्तजिदचिन्त्यात्मा भव्यबन्धुरबन्धनः MahāP. 25. 104.

**अचिन्त्याद्भुतप्रभाव** (acintyādbhuta-prabhāva) *adj.* who has inconceivable and wonderful power अचिन्त्याद्भुतप्रभावं ब्रह्मर्षिसिद्धचारणानुचरितम्…हिमवन्तम्…जग्मुः CaraS. vi. 1(4). 3 (1922 Ed.)

**अचिन्त्याद्भुतविस्तार** (acintyādbhuta-vistāra) *m.* one of the thousand names of Visṇu (*lit.* having inconceivable and wonderful expansion) अचिन्त्याद्भुतविस्तारः ... इति … विष्णोर्नामसहस्रकम् PañcaRā.(Nā.) iv. 3. 81.

**अचिन्त्याद्भुतस्रष्टृ** (acintyādbhuta-sraṣṭṛ) *adj.* who is the creator of inconceivable and wonderful things ब्रह्मा अचिन्त्याद्भुतस्रष्टा AbhinBhā. i. 299. 16 (6. 45)

**अचिन्त्याध्यवसायम्** (acintyādhyavasāyam) *adv.* involving inconceivable determination किमेतत् … अचिन्त्याध्यवसायम् … अध्यवसितं देव्या UdaySuKa. 102. 19.

**अचिन्त्यानन्तशक्ति** (acintyānanta-śakti) *f.* inconceivable and infinite power माहात्म्यमस्य को वक्तुं शक्नुयात् … अचिन्त्यानन्तशक्तीनामधिपस्य SkandP. ii(9). 19. 20; अचिन्त्यानन्तशक्तिमत्या देवतायाः बुद्ध्यादिसंबन्धः … अनेकविकल्पप्रत्ययहेतुः ChāndoUBh. 354. 11 (*on* vi. 3. 12); अचिन्त्यानन्तशक्तिमति सर्वभवनसमर्थे ब्रह्मणि विरोधाभावाच्च AṇuBh. 2. 13 (*on* i. 1. 1); अचिन्त्यानन्तशक्तिमत्त्वेन भगवत्स्वरूपस्यैव परमफलत्वं प्रदर्श्यते AṇuBh. 359. 2 (*on* iv. 4. 20); *adj.* possessed of inconceivable and infinite power सत्यसंकल्पस्याचिन्त्यानन्तशक्तेरप्रच्युतस्वभावस्य … कृत्स्नप्रसक्त्यादिदोषा न सन्ति VedāntKau. 170. 15 (*on* ii. 1. 27); अचिन्त्यानन्तशक्तेर्भगवतः का वा कार्याक्षमता AṇuBh. 355. 16 (*on* iv. 4. 16); विषयः …अचिन्त्यानन्तशक्तिः … पुरुषोत्तमः GoviBh. 3. 8 (*on* i. 1. 1); 84. 3 (*on* i. 1. 1)

**अचिन्त्यानुभाव** (acintyānubhāva) *adj.* having inconceivable power दिव्यौषध्या जयति महिमा कोऽप्यचिन्त्यानुभावः MahāviC. 6. 53; भगवन् अचिन्त्यानुभावं भवन्तमनुगतानां नास्ति कृतान्तादपि भयशङ्का KaṁVa. 5. 35(5)

**अचिन्त्यापातदुर्धर** (acintyāpāta-durdhara) *adj.* hard to bear due to unexpected appearance तदेतत्…अचिन्त्यापातदुर्द्ध(? र्ध)रं किंचन पुराकृतमुपस्थितं कर्म UdaySuKa. 64. 6.

**अचिन्त्यार्हत्प्रभाव** (acintyārhatprabhāva) *m.* inconceivable power of the *Arhat* सूत्रमपि चाचिन्त्यार्हत्प्रभावादेव गणधरैर्ग्रथ्यते ChandaśCū. 1. 1(9)

**अचिन्त्याव्यक्तरूप** ( acintyāvyakta-rūpa ) *adj.* [ *f.* -ā ] having an inconceivable and unmanifest form अचिन्त्याव्यक्तरूपाय निर्गुणाय गुणात्मने। समस्तजगदाधारमूर्तये ब्रह्मणे नमः SūrySi. 1.1; जगन्मातुर्विचेष्टितम्। अचिन्त्याव्यक्तरूपाया विचित्रं मोक्षदायकम् DevīBhāP. x. 13. 35.

**अचिन्त्याश्चर्यबृंहित** ( acintyāścarya-bṛṁhita ) *adj.* full of inconceivable wonders मन्त्रनाथः ··· कामधुक्साधकेन्द्राणामचिन्त्याश्चर्यबृंहितः AhirbuS. 22. 2.

**अचिन्त्येष्टार्थ** ( acintyeṣṭārtha ) *m.* desired object which is beyond imagination हर्षः ··· अचिन्त्येष्टार्थसम्पत्तेर्जायते सर्वदा नृणाम् BhāvPra.(S'ā.) 20. 7(1)

**अचिन्त्यैश्वर्य** ( acintyaiśvarya ) *adj.* possessing inconceivable power ( परमात्मा ) अचिन्त्यैश्वर्यः सर्वतः PārāSū. 22. 12; 83. 21; 31. 21; *n.* inconceivable power or greatness अभिन्नेऽपि भेदव्यपदेशोऽचिन्त्यैश्वर्यात् TattvPrakā. 154A. 6 (*on* iii. 2. 13); अचिन्त्यैश्वर्यं सर्वतः परमात्मनः PārāSū. 29. 9.

**अचिन्त्यैश्वर्यत्व** ( acintyaiśvarya-tva ) *n.* the state of possessing inconceivable power ईश्वरस्य नित्यदेहस्था( ? स्था )व्यक्तत्वमचिन्त्यैश्वर्यत्वात् PārāSū. 39. 24; 27. 23.

**अचिन्त्यैश्वर्यबल** ( acintyaiśvaryabala ) *n.* inconceivable strength of superhuman power पूर्णानन्दस्याप्यचिन्त्यैश्वर्यबलेन सुखभोगोपपत्तिः TattvPrakā. 33A. 13 (*on* i. 2. 11)

**अचिन्त्यैश्वर्यवत्** ( acintyaiśvarya-va(n)t ) *adj.* possessed of inconceivable power or sovereignty जगतः कर्तृ···सर्वभावसमर्थत्वादचिन्त्यैश्वर्यवद् ब्रह्त् AṇuBh. 9. 20 (*on* i. 1. 2)

**अचिन्त्योदारचरिता** ( acintyodāra-caritā ) *adj.* ( *f.* ) of inconceivable noble conduct अचिन्त्योदारचरिता येन ( विधिना ) सृष्टा प्रभावती KathāSaSāg. xiv. 2. 104.

**अचिन्त्योपनति** ( acintyopanati ) *adj.* of unexpected occurrence, which has unexpectedly happened अचिन्त्योपनतिः श्लाघ्या भोगश्रीर्भोगवर्मणः KathāSaSāg. ix. 4. 205.

**अचिन्त्योपनमद्भोग** ( acintyopanamad-bhoga ) *adj.* offering inconceivable enjoyments विद्याधरेन्द्राणां चित्राः सिद्धिविभूतयः। अचिन्त्योपनमद्भोगं येषामुद्यानमीदृशम् KathāSaSāg. xvii. 4. 87.

**अचिन्त्यौषध** ( acintyauṣadha ) *n.* inconceivable medicine (i. e. medicine of inconceivable curative property) वशीकरणायाभ्यर्थितगौडदेशीयेनोक्तम्। रश्मिवद्धां गामिव तव पतिं करोमीत्युक्त्वाचिन्त्यौषधं दत्त्वाहारान्तर्देयम्। तथा कृते पतिर्गौः। PurāPraSaṁ. 132. 14.

**अचिन्त्यौषधिमाहात्म्य** ( acintyauṣadhimāhātmya ) *n.* inconceivable power or efficacy of medicament अचिन्त्यौषधिमाहात्म्यात्सज्जशीर्षः स उत्थितः SamarāSaṁ. 6. 69.

**अचिन्मयताज्ञान** ( acinmayatā-jñāna ) *n.* knowledge of non-sentiency विपर्यासे चिन्मयेष्वप्यचिन्मयताज्ञानरूपे Bhāsk. ii. 230. 24 (iii. 1. 7)

**अचिन्मात्र** ( acin-mātra ) *n.* A only insentient जगत्कारणत्ववादिवाक्यविशेषेषु···केचिदचिन्मात्रासाधारणशब्दान्विताः S'rutaPra. ii. 182. 14 (*on* i. 4. 29); अचिन्मात्रमन्तःकरणम् AdvaiSi. 603. 8; B entirety of the insentients चिद्विषयत्वमचिन्मात्रस्यावश्यकम् GuruCandr. i. 139. 7.

**अचिन्मिश्र** ( acin-miśra ) *adj.* mixed with the non-sentient (matter) मत्कृताचिदचित्संसर्गात् ··· अचिन्मिश्राणां सर्वभूतानां संभवो भवतीत्यर्थः S'rīBh. 118. 5 (*on* i. 1. 1) = GītāBh.(Rā.) 571. 25 (*on* 13. 2); S'rīBh. 107. 16 (*on* i. 1. 1) अचिन्मिश्रं केवलं वा चिद्वस्तु···तद्वस्तु य उपासते प्रतीकालम्बनाः VedāntDī. 240. 17 (*on* iv. 3. 14)

**अचिन्मिश्रता** ( acinmiśra-tā ) *f.* the state of being mixed up with the insentient तद्विभूतिभूतस्य चिद्वस्तुनः स्वरूपेणावस्थितिमचिन्मिश्रतया क्षेत्रज्ञरूपेणावस्थितिं चोक्त्वा S'rīBh. 69. 11 (*on* i. 1. 1)

**अचिन्मिश्रोपासन** ( acinmiśropāsana ) *n.* meditation on that which is mixed with the non-sentient नामादिप्राणपर्यन्तप्रतीकालम्बनानां तु ··· अचिन्मिश्रोपासने तत्क्रतुन्यायाच्च···गतिर्ब्रह्मप्राप्तिश्च न विद्यते S'rīBh. 755. 17 (*on* iv. 3. 14)

**अचिन्मुद्रिकाढ्य** ( a-cinmudrikāḍhya ) *adj.* not having (the hand in) the *cinmudrā* posture (also called *jñānamudrā*) अचिन्मुद्रिकाढ्यैः ··· अरामाभिधेयैरलं दैवतैर्नः S'rīRāmaBhuSt. 24.

**अचिपिट** ( a-cipiṭa ) *adj.* having no snub nose, happy आश्वचिपिटाश्च वन्दिनः ··· ममाजिमवलोक्य DvyāśraKā. 18. 36.

**अचिर** ( a-cira ) *adj.* not of long duration, brief, recent, immediate, new तन्त्रादचिरापहृते P. v. 2. 70 ( KāśiVṛ. स्तोककालापहृत इत्यर्थः ); प्रथमोऽचिरोपसंपत्तौ P. vi. 2. 56 ( KāśiVṛ. अचिरोपसंपत्तिः अभिनवत्वम् ); अचिरेणैव कालेन तं तं निघ्नन्ति पाण्डवाः MahāBhā. ix. 2. 52; अचिरेणैव कालेन परिवाहान् बहूदकान्। चक्रुर्बहुविधाकारान् Rāmā. ii. 74. 11; अचिरेणैव कालेन भरतेनाच सञ्चितम् ( यशस् ) Prati. 4. 26; अचिरेणैव कालेन मेदिनी मेदिनीपते। भविष्यति जले मग्ना MatsyaP. 1. 29; अचिरे मासत्रयादर्वाक् गर्भस्रावे उत्तमे ब्राह्मणजातौ त्रिरात्रमित्यर्थः Mitā. 338. 19 (*on* 3. 20); HārLa. 70. 7; SmṛtiCan. vi. 2. 7; अचिरेणैव कालेन विनाशं यान्ति ( रोगाः ) RaseCin. 9. 277; अचिरे त्रिमासमध्ये ( गर्भस्रावे ) NirṇaSi. 362. 13; तेषां गुणानामचिरस्य चायुषः प्रमोदखेदाश्रुभरः स्मृतेर्मम Gurvā. 343; **अचिरस्य** ( a-cirasya ) [Gen.] immediately बभूव दुःखाभिहतश्चिरस्य प्लवंगमो मन्द इवाचिरस्य Rāmā. v. 4. 24; **अचिरात्** ( a-cirāt ) [Abl.] soon, immediately, without delay or loss of time, at once, before long, quickly एतत्कलियुगं नाम अचिराद्यत्प्रवर्तते MahāBhā. iii. 148. 37; उत्थानस्य फलं सम्यक्तदा स लभतेऽचिरात् MahāBhā. x. 2. 23; नरो यानेन यः स्वप्ने खरयुक्तेन याति हि। अचिरात्तस्य धूमाग्रं चितायां संप्रदृश्यते Rāmā. ii. 63. 16; स्वास्तीर्णं शयनं वेश्म सुखं कालस्तथोचितः। आनयन्त्यचिरान्निद्रां प्रनष्टा या निमित्ततः CaraS. i. 21. 54; अनुभवन्त्वचिरादमृताशिनः फलमतो निजशाठ्यसमुद्भवम् Abhiṣe. 3. 4; BālC. 2. 9; DūtaVā. 24; तनयमचिरात्प्राचीवार्कं प्रसूय च पावनम् S'āk. 4. 21; MeghDū. 91; एवं मन्त्रव्रतपरो यमाचरति साधकः। अचिरात् सिद्धिमाप्नोति PauṣkS. 20. 105; PāraS. 7. 180; ParaS. 16. 3; मानं मानिनि मुञ्च सर्वमचिरादत्यायतं छिद्यते Padm-Prā. 7. 22; वयमचिरादधिगतनन्दैश्वर्याः ··· नन्दकुलानुरक्तानां प्रकृतीनामविश्वास्या एव भवामः MudrāRā. 3. 24(53); YogYā. 11. 14; VasiS. 32. 38; NāraS. 2(1). 20; साधु रमण्वन् साधु। अचिरान्महत्प्रयोजनमनुष्ठितम् Ratnā. 4. 4(14); अचिराच्च प्रशान्ते तस्मिन् मृगयाकलकले···तामेव दिशं चक्षुः प्राहिणवम् Kād. 29. 2; HarṣaC. 185. 3; तामप्यचिरादयुग्मशरः शरशयने शाययिष्यति DaśKuC. 53. 13; अचिरादस्तदोषानुषङ्गः ··· अचिःप्रचारः SūryS'. 32; त्यजति कष्टमसावचिरादसून् S'iśuVa. 6. 18; यः कश्चिद्गर्भदोहदोऽस्या भवति सोऽवश्यमचिरान्मानयितव्यः UttaRāC. 1. 10(2); MahāvīC. 6. 1(1); AnarghaRā. 5. 26(6); वाञ्छस्यचिराद्यदि विष्णुत्वम् MohaMu. 25; देवि क्षमस्व दिवसानयमेति रामः पश्याचिरात् पुरमिमां कपिभिः परीताम् RāmC. 19. 52; प्रियतमादभविष्यत चेत् पृथक् तदचिरादमरिष्यत निश्चितम् Kapphiṇā. 8. 27; TāpaVa. 3. 7(3); पुत्रोऽचिरात्तव भविष्यति YaśasCam. i. 225. 4; अचिरादेषा लब्धविद्या गमिष्यति BṛKathāS'loSaṁ. 14. 62; TilaMañ. 57. 18; वैराग्येण निवृत्तिः स्यात्संसारे योगिनोऽचिरात् SarvaSiSaṁ. 10. 67 यस्ते प्रियतयाभीष्टः सोऽचिराद्दुःखकृद्भवेत् BṛĀraUBhāVā. i. 4. 1048; सर्पिरेतत् प्रयुञ्जीत स्त्री गर्भं लभतेऽचिरात् SiddhYo. 33. 20; असत्यं सत्यसंकाशमचिराद्विप्रलम्भदम्। स्वप्नाङ्गनासङ्गसमं यौवनं मे न रोचते YogVā. i. 20. 10; तस्मात्त्वद्देहमचिराद्रुद्रो भस्मीकरिष्यति MatsyaP. 4. 12; दुरात्मन्, अचिराद् द्रक्ष्यामि ते शौण्डीर्यम् CaṇḍKau. 2. 33(6); RāmāCam. 2. 5; KathāSaSāg. i. 4. 116; MūkaPañ. 1. 19; सोऽचिरादेव श्रद्धापूतो जीवन्मुक्तोऽभवत् PārāSū. 95. 6; PrasaRā. 1. 54; अचिरादस्माद् वायसादहं विनाशं पश्यामि PañcTa. 3. 76 (346. 6); Tantrākhyā. 113. 13; अचिरात्तव नन्दनस्य भोज्या निखिला भूः PṛthviVi. 7. 34; अचिरादेव शिवत्वं निजहृदयावेशमभ्येति ParamāSā. 104; SātvaT. 5. 29; KulārT. 2. 41; तुभ्यमचिरादेव कम्बलमानीय दास्यामि PuruṣPa. 170. 12; अचिरात् सुखप्रसूतिर्मूढगर्भापि RatiRaha. 15. 71; तदाचिरादर्भकनायकत्वात्तद्भर्मराज्यं शिथिलाङ्गमासीत् Rāṣṭrau. 3. 43; अचिरात्सा पुरी दग्धा नवीकृतगृहा बभौ RājTa. (S'rī.) 3. 296; सितार्कं प्लक्षजं हुत्वा रोगान्मुक्तो नरोऽचिरात् TantrRā. 14. 31; **अचिराय** ( a-cirāya ) [Dat.] immediately श्रुतमप्यधिगम्य ये रिपून् विनयन्ते न शरीरजन्मनः। जनयन्त्यचिराय सम्पदामयशस्ते खलु चापलाश्रयम् Kirātā. 2. 41; अचिराय त्वरस्व देवस्याङ्गरागसंपादनेषु YaśasCaṁ. i. 350. 4; जलधिः ··· निर्गच्छन्नचिराय निर्झरपयःपूरैः पुपूरे पुनः RāmāCam. 6. 26; **अचिरेण** ( a-cireṇa ) [Inst.] immediately अचिरेणैव मे पुत्रा भस्मीभूता जनार्दन MahāBhā. xi. 25. 33; iii. 127. 19; आरोग्यमाप्नोति हि सोऽचिरेण Saund. 16. 40; अचिरेण सौवीरराजो विसृज्यतां स्वदेशगमनाय Avimā. 6. 20(5); यो गुग्गुलुं पिबति मेदसि संप्रवृद्धे तस्य क्षयं व्रजति चण्ड्यचिरेण मेदः PādaTā. 27. 15; JayāS. 11. 42; अचिरेण स दुर्बुद्धिः पश्चात्तापेन युज्यते YogVā. i. 20. 40; BrahmāṇḍP. ii. 30. 46; सज्जीकुरुत नागाश्वमचिरेण ससारथिम् MārkP. 125. 17; पुनरपि तव प्रियया सह संगमो भविष्यत्यचिरेण VāsDa. 280. 3; आर्य कस्य हेतोरचिरेणैव प्रत्यागतोऽसि DaśKuC. 98. 16; MālaMā. 1. 392; प्रत्यक्षदृष्टिपथमापतितोऽचिरेण SaṁkṣeS'ā. 1. 337 (i. 250. 3); आयाचितमियं तुभ्यमचिरेणैव दास्यति BṛKathāSloSaṁ. 12. 80; ParaS. 24. 38; 31. 67; वधूस्त्वाचिरेणात्र भविष्यति शशिप्रभा NavaSāC. 11. 117; YogVā. i. 20. 40; जगदेकार्णवीभूतमचिरेण भविष्यति DaśāvaC. 1. 31; अचिरेण ऋणी स्वापराधादिनान्याक्रान्तं यदि नाधिमर्पयति SmṛtiCan. iv. 350. 1; यस्मिन्वंशे समुत्पन्नस्तमेव निजचेष्टितैः। दूषयत्यचिरेणैव घुणकीट इवाधमः S'ārṅgaPa. 363; अचिरेणैव संसक्तश्चिरादपि न नश्यति। ··· माञ्जिष्ठो राग उच्यते RasāSu. 154. 10 (2. 119); उत्पत्स्यत्यचिरेणाथ गजबन्धुर्महामुनिः Hastyāyur. 8. 23 (1. 1); शोषयत्य-

चिरेणैव प्रान्तरस्थमलं पयः DrstāKaS'. 51; किंचिदुदञ्चय चञ्चलमञ्चलमचिरेण लोचनांशुकयोः SundaS'. 43; पार्थिवो विदलयत्यचिरेण विरोधिनः Raghunā. 8.39; अचिरेणायमादेशोऽभवद् राष्ट्रे प्रचारितः BallāC. 108.12.

**अचिरकान्ति** (acira-kānti) *f.* lightning इयमेव दशनपङ्क्ती रुचिराचिरकान्तिदामसमकान्तिः। ...तव KuttaMa. 47.

**अचिरकाल** (a-cirakāla) *adj.* **i** not of ancient times, of recent times, याज्ञवल्क्यादयोऽचिरकाला इत्याख्यानेषु वार्ता। तया व्यवहरति सूत्रकारः KāśiVr. *on* P. iv. 3.105; **ii** not continuing for a long time, of a short duration सुषुप्तं तु देहाद्यनादरकृतमचिरकालं च PratyabhiVi. ii. 265.7 (iii. 2.15)

**अचिरकालेन** (acira-kālena) *adv.* [Inst.] very soon, after a short period तुराषाडपि वैभवम्। प्राप्स्यत्यचिरकालेन DevīBhāP. vi. 8.45; योगसिद्धिरपि मृदुमध्यतीव्रैः संवेगैश्चिरमध्याचिरकालेन भवति Vidvanmo. 7.57(1)

**अचिरकालकृत** (acirakāla-kṛta) *adj.* prepared or fashioned recently अचिरकालकृतः कुशूलः स्वयमेव भिद्यते MahāBh. ii. 67.17 (*on* iii. 1.87)

**अचिरकालजात** (acirakāla-jāta) *adj.* **i** recently occurring (not chronic) (अर्शांसि) अचिरकालजातान्यल्पदोषलिङ्गोपद्रवाणि भेषजसाध्यानि SuśruS. iv. 6.3; **ii** younger यवीयान् कनीयानचिरकालजातः ManuBh. i. 141.5 (*on* 2.128)

**अचिरकालतस्** (acirakāla-tas) *adv.* very soon भवतोऽचिरकालतः। ज्ञानं सपरिवारस्योत्पत्स्यते केवलम् TriṣaS'aPuC. i. 6.427.

**अचिरकालता** (acirakāla-tā) *f.* the state of continuing for a short period of time व्रीह्यादिभावादूर्ध्वं दुःखतरं निःसरणमिति ब्रुवन् पूर्वत्राचिरकालतां दर्शयति BrahmSūBh.(Bhā.) 158.21 (*on* iii. 1.23)

**अचिरकालपीत** (acirakāla-pīta) *adj.* just drunk, recently drunk चरणाब्जयुगेनाचिरकालपीतं लाक्षारागरसम् ... उद्गिरन्तीम् ... बालिकामपश्यत् TilaMañ. 246.9.

**अचिरकालप्रत्यापत्ति** (acirakāla-pratyāpatti) *f.* coming back (to the original state) immediately मरणमचिरकालप्रत्यापत्तिमयमत्र मन्तव्यम्। येन शोकोऽवस्थानमेव न लभते AbhinBhā. i. 307.13 (*on* 6.45); Kāvyānu(He.) 85.18.

**अचिरकालप्रवृत्त** (acirakāla-pravṛtta) *adj.* belonging to recent times याज्ञवल्क्यादयो हि अचिरकालप्रवृत्ता इत्याख्यानेषु वार्ता PadMañ. (*on* KāśiVr. iv. 2.66)

**अचिरकालभावित** (acirakāla-bhāvita) *adj.* considered as taking place soon अचिरकालभावित एव भगवता तेन ... ज्ञानचक्षुषा प्रत्यक्षीकृतोऽस्या एव मलयसुन्दर्या विवाहसमयः TilaMañ. 274.6.

**अचिरकालभाविन्** (acirakālabhāv-in) *adj.* which will take place soon, occurring in the near future चम्पेश्वरोऽपि...धारापतीनामचिरकालभाविन्यपि संनिधावदत्तापेक्षः साक्षादिवावलेपः ... प्रतिबलं प्रतिजग्राह DaśKuC. 36.6; अचिरकालभाविनि गमने कार्यसिद्धिर्निष्पद्यते Nyās. ii. 332.16 (*on* vi. 2.6); ii. 898.18 (*on* viii. 1.7); ii. 925.23 (*on* viii. 1.42); इदं चारिष्टम्...तस्य...अचिरकालभाविनं विनाशमवश्यतया निवेदयति TilaMañ. 41.17.

**अचिरकालम्** (acirakāla-m) *adv.* soon, for a short while तद्विचारयेयं तावदचिरकालम् ... एतत्क्रीडाव्याजेन मन्त्रेरन्तःकरणम् YaśasCam. ii. 347.17; यस्त्वामति(? मि)तगुणं जिन कश्चित्सावधिबोधः स्तौति विपश्चित्। नूनमसौ ननु काञ्चनशैलं तुलयति हस्तेनाचिरकालम् YaśasCam. ii. 387.7.

**अचिरकालसंबन्ध** (acirakāla-sambandha) *m.* association for a short time (only) अचिरोपश्लेष इति अचिरकालसंबन्ध इत्यर्थः Nyās. ii. 356.24 (*on* vi. 2.56)

**अचिरकालिक** (acirakāl-ika) *adj.* related to or lasting for a short time व्रीह्यादिभावाद् दुःखतरनिःसरणवाक्यं पूर्वत्राचिरकालिकमवस्थानं द्योतयति VedāntPāSau. 269.2 (*on* iii. 1.23)

**अचिरकृत** (acira-kṛta) *adj.* [*f.* -ā] **i** recently built विभाषा दिक्समासे बहुव्रीहौ। दक्षिणपूर्वस्यां शालायाम्। अचिरकृतायां संप्रत्ययः स्यात् MahāBh. i. 102.14 (*on* i. 1.44; Vār. 4); **ii** recently performed अचिरकृताग्निकार्यम् ... कुमारो भवनं जगाम Kād. 96.16.

**अचिरकृतोपभोगा** (acirakṛtopabhogā) *adj.* (*f.*) who had sexual intercourse (only) a short while ago (स्त्रियं नेक्षेत) संसृष्टमैथुनां अचिरकृतोपभोगाम् VīraMi. 221.11 (*on* 1.135)

**अचिरक्रिय** (acira-kriya) *adj.* acting quickly, not tarrying अचिरक्रियः अदीर्घसूत्रः इत्यादिलक्षणं प्रशंसापरम् RājNīRa. 3.8; अदीर्घसूत्रोऽचिरक्रियः DīpKa. 32.27 (*on* 1.310); शूरोऽचिरक्रियः। ... वणिक्पुत्रो भवेन्मन्त्री KumāPraPra. 53.11; अदीर्घसूत्रः अचिरक्रियः अवश्यकार्याणां कर्मणां प्रारम्भे प्रारब्धानां च परिसमाप्तौ यो न विलम्बते VīraMi. (Rājanīti.) 116.20.

**अचिरक्षुण्ण** (acira-kṣuṇṇa) *adj.* which is pounded recently अचिरक्षुण्णवल्कलरसपाटलभूतलम्...आश्रमपदमपश्यम् Kād. 39.16.

**अचिरखण्डित** (acira-khaṇḍita) *adj.* cut off recently उर्वीपतिः ... अचिरखण्डितं मन्त्रसाधकमुण्डम् ... अपहरन्तम् ... वेतालमद्राक्षीत् TilaMañ. 47.8; (अयम् ... अवलोकयति स्म) अचिरखण्डितग्राहरुधिराङ्गमिव रथाङ्गमपि हस्तारविन्दयुगलेन संदधानम् ... अनिमेषपतिम् YātrāPra. 3.199.

**अचिरगत** (acira-gata) *adj.* [*f.* -ā] gone not long ago (शकुन्तला) अनया बालपादपवीथ्या सुतनुरचिरगतेति तर्कयामि S'āk. 3.6(5); अचिरगते तस्मिन् परिव्राड्ब्रह्मचारिणौ ... तस्मिन्नेव न्यसी(? पी)दताम् BṛKathāS'loSam. 21.30; 20.413.

**अचिरगमन** (acira-gamana) *n.* going (from one state to another) quickly 'अतो वै खलु दुर्निष्प्र(? ष्प्र)तरम्' इति विशिष्य चिरेण गमनवचनं ततः प्राचीनेष्वचिरगमनं द्योतयति VedāntDī. 149.11 (*on* iii. 1.23)

**अचिरगर्भस्राव** (acira-garbhasrāva) *m.* recent miscarriage अचिरगर्भस्रावे मातुरेवाशौचं न पित्रादिसपिण्डानाम् SmṛtiCan. vi. 2.19.

**अचिरगोरोचनाभङ्ग** (acira-gorocanābhaṅga) *m.* fresh (i.e. recently cut) piece of cow's bile अचिरगोचरोना(? अचिरगोरोचना)भङ्गरागपिङ्गलाम्बकपरिकल्पितभालसरःस्वर्णसरोजाकरम्...अहिर्बुध्नावतारनिधानमाकारमनुकृत्य स विद्याधरः समस्तमपि नगरं क्षोभयामास YaśasCam. ii. 300.14.

**अचिरग्रहण** (acira-grahaṇa) *n.* use of (the word) *acira* अचिरनिर्मथितेनादूरनिर्मथितेनानन्यकर्तृनिर्मथितेनेति वक्तव्ये प्रदर्शनार्थमचिरग्रहणम् TantrVā. 308.1 (*on* i. 4.12)

**अचिरज** (acira-ja) *adj.* which has taken place recently एतस्या हरिणीदृशः पुलकिता स्विन्ना च गण्डस्थली लोलं नीविदुकूलमप्यचिरजं व्याख्याति वीरायितम् S'ṛṅgāTi.(Rā.) 39.

**अचिरजात** (acira-jāta) *adj.* [*f.* -ā] **i** prematurely born ये ह्यस्य कुक्षौ वृद्धिहेतुसमाख्याता भावास्तेषां विपर्ययादुदरे विनाशमापद्यतेऽथवाप्यचिरजातः (गर्भः) CaraS. iv. 4.29; **ii** born not long ago (i.e. young in age) अनुपतति...रजनिमचिरजाता पूर्वसंध्या सुतेव S'iśuVa. 11.40.

**अचिरजातप्रसवा** (acirajāta-prasavā) *adj.* (*f.*) that has recently brought forth (a young one) अचिरजातप्रसवाभिः अश्वीनाभिश्च गोभिरशून्यपर्यन्तैः ... समाकुलैर्गोकुलैरधिष्ठितकक्षोपकण्ठां नगरसीमामलङ्घयम् TilaMañ. 118.2.

**अचिरजाति** (acira-jāti) *adj.* of recent birth or production रूढिर्योगो योगरूढिर्वा निर्मन्थ्यस्य वर्तनम्। आद्यौ पूर्ववदन्त्योऽचिरजातेर्नावनीतवत् NyāyMāVi. 51.5 (*on* i. 4.10)

**अचिरजीवित्व** (acirajīvi-tva) *n.* **i** the state of having a short life पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति इत्येवमादिभिः स्वप्नैरचिरजीवित्वमावेद्यते BrahmSūBh.(S'aṅ.) 565.16 (*on* iii. 2.4); **ii** the state of not lasting long कर्मणोऽचिरजीवित्वात्तद्विनाशकेन संयोगेन भवितव्यम् NyāyMañ. ii. 122.19.

**अचिरज्वरित** (acira-jvarita) *adj.* having fever recently (औषधम्) अचिरज्वरितस्यापि देयं स्याद्दोषपाकतः SuśruS. vi. 39.121; vi. 39.124; अचिरज्वरितस्यापि भेषजं कारयेत्तदा AṣṭāHṛ. iv. 1.45 (comm. अनतिक्रान्तषडा(? ड)हस्य); AṣṭāSaṁ. ii. 3.24 (4.1)

**अचिरंज्योतिस्** (aciraṁ-jyotis) *n.* lightning तया। स्फुरच्चण्डाचिरंज्योतिः शीतधारान्धकारितः। घनकालोऽपि निस्तीर्णः PadmP.(Ra.) 64.73.

**अचिरतस्** (acira-tas) *adv.* immediately, soon परिमोह्यमाणमाशयं व्यसनाम्भोधिमिवोत्तरंस्तमः। सुखरोचिरतः सलक्ष्मणः क्षणमुल्लाघ इवोदतिष्ठत RāghPāṇ.(Dha.) 17.42; तदनुग्रहो मे यत्कल्पतामचिरतो भृतयोर्विवासः BhāgP. iii. 16.12; BṛDharmaP. i. 20.60; तुरगखरखुराग्रोत्खात[धात्री]समुत्थं स्थगयदहिमरश्मे(रश्मे)र्मण्डलं यत्प्रयाणे। प्रचुरतररजोन्याशेषतेजस्वितेजो हृतिमचिरत एवा[शं] सतीवानिवारम् EI. ii. 238.20; तस्मै...प्रादुर्भवन्नचिरतो नुतिभिः प्रसन्नो दत्त्वात्मतत्त्वमनुगृह्य तिरोदधाथ Nārāy. vi. 23.7.

**अचिरत्न** (acira-tna) *adj.* **i** not late, immediate, quick ननु भवादृशोऽपि जनो जातजीवितामृतानिषेकाय अचिरत्नं यत्नं कर्तुमर्हति YaśasCam. ii. 362.2; **ii** new? [nt. YaśasCam. ii. 262(? 362).2]

**अचिरदर्शन** (acira-darśana) *n.* seeing soon अचिरदर्शनप्रत्याशानुवृत्तप्रमोदेन विरहधर्मस्याश्रुपातादेरसंभवः RasTa. 139.9.

**अचिरदीधिति** (acira-dīdhiti) *f.* lightning वघेलवंशस्य विकासनाय हासास्पदं यद्यपि मे प्रयासः। अखण्डभूमण्डलमण्डनार्कसन्दीपनायाचिरदीधितेर्वा[वा] VīraBhā. 1.4.

**अचिरदुःख** (acira-duḥkha) *n.* pain of a short duration चिरोपचितदुरावारग्रहस्य स तवाचिरदुःखदायिपरिग्रहोऽनुग्रहोऽनुग्रह इव YaśasCam. ii. 348.22.

**अचिरदुग्ध** (acira-dugdha) *adj.* freshly milked गोक्षीरमिति त्वचिरदुग्धोपादानार्थम् BālaKrī. ii. 175.25 (*on* 3.310(? 318))

**अचिरदृष्टा** ( acira–dṛṣṭā ) *adj.* ( *f* ) recently seen बभूवाचिरदृष्टा हि तेन सा जनकात्मजा Rāmā. vi. 37*(1)

**अचिरद्युति** ( acira–dyuti ) *f.* [*adj.* PW] **A** lightning अमियौ स हिमाचलम् ··· विरहितैरचिरद्युतितेजसा । उदितपक्षमिव ··· अम्बुदैः Kirātā. 5. 6; लक्ष्मीः ··· प्रावृडिवाचिरद्युतिकारिणी Kād. 105. 6; S'isuVa. 6. 40; NyāyMañ. i. 194. 7; BṛKathāS'loSaṁ. 18. 518; PratyabhiVi. i. 327. 2 (i. 6. 6); सौदाम्नी त्वशनिर्विद्युदणुभा वाचिरद्युतिः TrikāS'e. i. 3. 3; NānārthSaṁ. 36. 4; Yādavā. 15. 119; 22. 224; JānaPa. 5. 21; अचिरद्युतिचञ्चला हि लक्ष्मीः Rāgh. 15. 53; **B** short-lived pomp or grandeur, Kād. 105. 6; Yādavā. 15. 119.

**अचिरधवल** ( acira–dhavala ) *adj.* which has become white recently भूयोऽवयवशैथिल्यादचिरधवलरोमजालशबलायाः शयनैकरसायाः कम्बल इव (ल)म्बते चर्मसञ्चयः AvantiKa. 41. 17.

**अचिरधौत** ( acira–dhauta ) *adj.* recently cleaned, recently washed अयमचिरधौतराजपट्टरुचिरमांसलच्छविर्नवजलधरः ··· प्रियवयस्यं मे जीवयति MālaMā. 9. 133; TilaMañ. 77. 4.

**अचिरनिरुद्ध** ( acira–niruddha ) *adj.* which is destroyed in a short time तस्माद्विनाशग्रस्तत्वमचिरनिरुद्धत्वं निरुध्यमानत्वं वक्तव्यम् Bhām. 425. 7 (*on* ii. 2. 20); VedāntKa. 278. 5 (*on* ii. 2. 20)

**अचिरनिभृत** ( acira–nibhṛta ) *adj.* recently collected गण्डोपान्तेष्वचिरनिसृतं ( v. l. भृतं ) वारि मत्तद्विपानाम् PañcT. 1. 111 (108. 1)

**अचिरनिर्गत** ( acira–nirgata ) *adj.* who has recently left अचिरनिर्गतानां ये पुत्रादयः तेषु प्राच्यशब्दप्रयोगोऽस्ति MīmāKau. i. 105. 14 (*on* i. 3. 21)

**अचिरनिर्दग्ध** ( acira–nirdagdha ) *adj.* freshly boiled, freshly clarified इत्यचिरनिर्दग्धेनेति गम्यते S'ābaBh. 345. 8 (*on* i. 4. 12); TantrVā. 307. 11 (*on* i. 4. 12)

**अचिरनिर्मथित** (acira–nirmathita) *adj.* recently churned out अचिरनिर्मथितेन यथा नावनीतेन भुङ्क्ते S'ābaBh. 345. 7 (*on* i. 4. 12); निर्मन्थ्यशब्दः ··· कथमचिरनिर्मथितविषयः कल्प्यते TantrVā. 307. 15 (*on* i. 4. 12); 307. 23 (*on* i. 4. 12); NyāyMāVi. 51. 11 (*on* i. 4. 10); MīmāKau. i. 243. 25 (*on* i. 4. 12); अचिरनिर्मथितत्वलाभो न स्यात् MayūMāli. 77. 21 (*on* i. 4. 10); 77. 25 (*on* i. 4. 10); 78. 12 (*on* i. 4. 10); BālamBha. i. 192. 14 (*on* 1. 53)

**अचिरनिर्मित** ( acira–nirmita ) *adj.* recently produced किं तद्विस्मृतं भवत्या, यदचिरनिर्मितं जानकीपरिणयं नाम रूपकमध्यापितासि JānaPa. 1. 7 (3)

**अचिरनिर्वर्तित** ( acira–nirvartita ) *adj.* recently performed, recently completed अचिरनिव( ? र्व )र्तितस्नानाभिः ··· अन्तःपुरिकाभिरागत्यागत्य···अभ्यर्च्य ··· भगवन्तं प्रद्युम्नम् TilaMañ. 300. 22; अहमचिरनिर्वर्तितप्रदोषकृत्याम् ··· मलयसुन्दरीमुपगम्योपाविशम् TilaMañ. 352. 8.

**अचिरनिर्वापित** ( acira–nirvāpita ) *adj.* just extinguished, recently put out अचिरनिर्वापितारोपितेषु एकवर्तिभागवर्तिषु बहुषु दीपेषु तद्भेदादर्शिनः ··· स एवायमिति स्मृतिरुपजायते ĀtmaSi. 34. 21; S'rutaPra. iA. 174. 15 (*on* i. 1. 1); S'atDū. 132. 1.

**अचिरनिर्वृत्त** ( acira–nirvṛtta ) *adj.* performed or completed not long ago, taking place recently अस्ति ··· अचिरनिर्वृत्तविवाहभूमिरिव हरितकुशसमित्कुसुमशमीपलाशशोभिता ··· विन्ध्याटवी Kād. 20. 5; ManuBh. i. 258. 2 (*on* 3. 109); NyāyMañ. i. 363. 31; अचिरनिर्वृत्तयात्रोत्सवं हीदमुद्भाव्यते लिङ्गैः TilaMañ. 157. 15; अचिरनिवृ( ? र्वृ )त्तसमावर्तनस्य ··· पन्थास्त्यक्तव्यः ManvaMu. 63. 13 (*on* 2. 138)

**अचिरनिसृत** ( acira–nisṛta ) *adj.* freshly flowing गण्डोपान्तेष्वचिरनिसृतं वारि मत्तद्विपानाम् PañcT. 1. 111 (108. 1)

**अचिरन्तनभोग** ( acirantana–bhoga ) *m.* enjoyment of not long duration पुत्रपौत्रयोश्चाचिरन्तनभोगे तु भोगसाधननान्तरीयकतयापीत्यवगन्तव्यम् SmṛtiCan. iii. 165. 6.

**अचिरपतित** ( acira–patita ) *adj.* recently aborted आमगर्भे वाप्यचिरपतिते···क्षिप्रं वातः प्रकोपमापद्यते CaraS. ii. 3. 13 (1941 Ed.)

**अचिरपरिगृहीत** ( acira–parigṛhīta ) *adj.* recently acquired, lately obtained ( मत्तद्विपः ) अचिरपरिगृहीतविजयेन्दिरापरिरम्भसंभृतकुचकुङ्कुमक्षोदैरिव सेनारजोभिरभिरञ्जिताः NīlaVi. 30. 9.

**अचिरपरिचित** ( acira–paricita ) *adj.* acquainted with recently अचिरपरिचितो हरेः समूलं हरसि विशेषगुणव्रजं परस्य AmṛUda. 4. 17.

**अचिरपरिणता** ( acira–pariṇatā ) *adj.* ( *f.* ) recently developed एकदा च राजा ··· अचिरपरिणतामङ्गलक्ष्मीं दधानम्···विद्याधरमुनिमपश्यत् TilaMañ. 24. 7.

**अचिरपरिणीता** ( acira–pariṇītā ) *adj.* ( *f.* ) recently married ( वधूः ) धन्यानचिरपरिणीता रमयति SaduktiKa. 74. 2.

**अचिरपाक** ( acira–pāka ) *adj.* developing quickly स्फोटाः···भवन्त्यचिरपाकाः RugVi. 54. 7.

**अचिरपीत** ( acira–pīta ) *adj.* recently drunk इन्द्र( ? न्दु )मृगमिवाचिरपीतप्राकृतामृतमन्दतृष्णम् ··· वामदेव इति प्रकाशपुण्यशब्द( ? ब्दं ) तपोराशिं ददर्श AvantiKa. 142. 15.

**अचिरप्रच्युत** ( acira–pracyuta ) *adj.* recently aborted अचिरप्रच्य( ? च्यु )ते गर्भे सूतिकायास्तथाचिरात् ··· रक्तमाध्मापयेत् BhelaS. 55. 28 (2. 3)

**अचिरप्रजाता** ( acira–prajātā ) *adj.* ( *f.* ) who has recently brought forth, who has lately delivered अचिरप्रजातायाः ··· क्षिप्रं वातः प्रकोपमापद्यते CaraS. ii. 3. 19 (1922 Ed.)

**अचिरप्रताप** ( acira–pratāpa ) *m.* recent heating अचिरप्रतापात्सुमृष्टपाकैरविशल्यशङ्कम् । मांसैः ··· नन्दस्य भृत्या विपिने ननन्दुः Yādavā. 5. 30.

**अचिरप्रत्यापत्ति** ( acira–pratyāpatti ) *f.* immediate restoration युद्धमेव यन्निर्वाहयन्तं यावन्मरणमेव यदचिरप्रत्यापत्तिर्न( ? त्ति न ) भवति तत्र प्रत्यक्षेण प्रयोज्यम् AbhinBhā. ii. 427. 9 (*on* 18. 39)

**अचिरप्रभ** ( acira–prabha ) *adj.* possessed of momentary light [PW]

**अचिरप्रभा** ( acira–prabhā ) *f.* lightning (*lit.* having transient lustre) अचिरप्रभाविलसितैः पताकिना ··· । गमितेन खेलगमने विमानतां नय मां नवेन वसतिं पयोमुचा Vikramo. 4. 74; NyāyVār. 49. 19 (*on* i. 1. 5); इयं हि मम आविर्भवन्ती प्रथमं प्रियायाः सोच्छ्वासमन्तःकरणं करोति । संतापदग्धस्य शिखण्डियूनो वृष्टेः पुरस्तादचिरप्रभेव MālaMā. 3. 51; SaraKaṇṭhā. 385. 8; AlaṅkāKau. (Vi.) 102. 7; BṛKathāS'loSaṁ. 5. 298; Bhaṭṭi. 2. 47; अनित्यत्वं प्रयत्नानन्तरीयकत्वमन्तरेणाचिरप्रभादौ दृश्यमानमनियतम् DharmoPra. 244. 12; अम्बुदेन ··· ईरिता ··· अचिरप्रभा RāghPāṇ.(Ka.) 5. 59 = PadyaVe. 632; Rāgh. 8. 3; Kiraṇā. 77. 3; AbhidhāCin. 1104; ParaNā. 404.

**अचिरप्रभावत्त्व** ( aciraprabhāvat–tva ) *n.* the state of possessing lightning वृष्टिमन्त एते मेघाः गम्भीरध्वानवत्त्वे सति ··· अचिरप्रभावत्त्वे सति उन्नतिमत्त्वात् वृष्टिमन्मेघवदिति NyāyVār. 49. 19 (*on* i. 1. 5)

**अचिरप्रमीत** ( acira–pramīta ) *adj.* recently dead अचिरप्रमीतप्रेतीभूतमनुष्योद्देशेनैकोद्दिष्टविधिना ··· ब्राह्मणभोजनेऽनुष्ठीयमाने CaturCin. iii(1). 1636. 14.

**अचिरप्रमृष्ट** ( acira–pramṛṣṭa ) *adj.* recently cleansed सा ··· अचिरप्रमृष्टकुट्टिमशुचौ शयनशालायाम् ··· मम अतिथिपूजामकरोत् TilaMañ. 256. 19.

**अचिरप्ररूढा** ( acira–prarūḍhā ) *adj.* ( *f.* ) recently grown अचिरप्ररूढायाः स्थलकमलिन्याः ··· पलाशैरुपरचितातपत्रकृत्याया अध्यास्य मध्यभागम् Kād. 231. 3.

**अचिरप्ररोह** ( acira–praroha ) *m.* recent sprouting तीक्ष्णारुणाग्राण्यचिरप्ररोहाच्चकाशिरे चम्पककुड्मलानि Yādavā. 8. 7.

**अचिरप्रलापिन्** ( acira–pralāpin ) *adj.* prattling constantly उद्धस्तः कृशपरुषोऽचिरप्रलापी···भ्रमति रुदन् पिशाचजुष्टः RugVi. 20. 25.

**अचिरप्रवृत्त** ( acira–pravṛtta ) *adj.* which has recently taken place or commenced अचिरप्रवृत्तम्···ग्रीष्मसमयमधिकृत्य गीयताम् S'āk. 1. 2(5) (Böhtlingk's Ed.); अचिरप्रवृत्ततत्तद्विषयानुभवकल्पितस्य तदैव ध्वंसानाशङ्कनात् करणस्य कारणसाकल्यनिश्चयः PratyabhiVi. i. 379. 4 (*on* i. 7. 10); KaṁVa. 1. 25 (3)

**अचिरप्रव्रजित** ( acira–pravrajita ) *adj.* who has recently become a mendicant अनेनाचिरप्रव्रजितेन भवितव्यम् ··· नाभ्यस्ता च कषायवस्त्ररचना Mṛcch. 8. 4 (21); GiMs. iii(1). 285. 10.

**अचिरप्रसूत** ( acira–prasūta ) *adj.* [ *f.* –ā ] **i** recently born ( पुष्यस्नानं नृपतेः कर्तव्यम् ) अचिरप्रसूतहुंकृतवल्गितवत्सोत्सवे गोष्ठे BṛSaṁ. 48. 11; **ii** who has recently given birth ( नारीं योजयेत्पुरुषायिते ) न प्रसूतामचिरप्रसूताम् JayaMa. 165. 10 (*on* 2. 8); DaṇḍaVi. 275. 15; दशधेनूरचिरप्रसूताः सवत्सा दद्यात् Mitā. 466. 14 (*on* 3. 266); VīraMi. 1010. 28 (*on* 3. 266); तैरश्चीनेश्वकौशिकसिंहाचिरप्रसूतगवादिकाः SthānT. 281B. 6.

**अचिरप्रसृत** ( acira–prasṛta ) *adj.* spread out in a short time इत्थमिदमचिरप्रसृतं रहस्यम् DaśKuC. 77. 22.

**अचिरप्रस्तुत** ( acira–prastuta ) *adj.* which has recently happened, which has taken place shortly अचिरप्रस्तुतोद्वाहा भग्ने प्रवहणे विभो । तीरेऽसिन्सलिलैः क्षिप्ता जीवामि BṛKathāMañ. ix. 2. 1332.

**अचिरप्रहत** ( acira–prahata ) *adj.* recently killed अचिरप्रहतगजकपोलगृहीतेन मदेन कृताङ्गरागम् ··· शबरसेनापतिमपश्यम् Kād. 30. 5.

**अचिरप्राप्त** ( acira–prāpta ) *adj.* recently attained नरेन्द्रतनयः ··· अचिरप्राप्तयौवनाम्···चित्रपुत्रिकां ददर्श TilaMañ. 162. 6.

**अचिरप्राप्यता** ( aciraprāpya–tā ) *f.* quickly attainable nature अचिरप्राप्यता मोक्षस्योच्यते ManuBh. i. 512. 7 (*on* 6. 44)

**अचिरप्रोषित** ( acira–proṣita ) *adj.* who has recently gone away अचिरप्रोषितं रामं चिरविप्रोषितं यथा । द्रष्टुकामो जनः सर्वो जगाम सहसाश्रमम्

Rāmā. ii. 95. 38; अचिरप्रोषिते सवितरि Kād. 48. 5.

**अचिरफलित** (acira-phalita) *adj.* which has recently borne fruit (हरिवाहनः) प्रविश्य … अचिरफलितजलजम्बूनिकुरुम्बम् … सरय्वास्तीरपरिसरमुपासरत् TilaMañ. 105. 22.

**अचिरभा** (acira-bhā) *f.* lightning (*lit.* of transient lustre) व्यालम्बिपीतान्तपटश्चकाशे घनो यथा खेऽचिरभापिनद्धः MahāBhā. vi. 55. 88.

**अचिरभाविन्** (acirabhāv-in) *adj.* [*f.* -nī] which is to take place shortly or soon (सिंहनरेन्द्रसूनुः) सख्या सह समागमप्राप्तिमचिरभाविनीं निरचैषीत् TilaMañ. 208. 2; 144. 18; अत्र कविप्रौढोक्तिमात्रनिष्पन्नशरीरे सुरभिमाससंभवानाम् … तरूणामचिरभावियुवतिजनमदनोन्माददायित्वमनुमेयम् VyaktiVi. 134. 25.

**अचिरभास्** (acira-bhās) *adj.* possessed of instantaneous light [PW]; *f.* lightning (*lit.* of transient lustre) हरिभिरचिरभासां तेजसा चानुलिप्तैः। गतमुपरि घनानाम् …पिशुनयति रथस्ते S'āk. 7. 7; केचिदचिरभास इव पूर्वगात्रास्थिताकाशाः AvantiKa. 66. 17.

**अचिरभुक्त** (acira-bhukta) *adj.* who has just dined अचिरभुक्तः … सुदृष्टिराजगाम HarṣaC. 131. 4.

**अचिरम्** (a-ciram) *adv.* recently, not long ago, without delay, soon, not for a long time युधिष्ठिरे। अपश्याम श्रियं राजन्नचिरं शोककर्शिताः। सा तु बुद्धिबलेनेयं राज्ञस्तस्माद्युधिष्ठिरात्। त्वयाक्षिप्ता MahāBhā. iii. 226. 5; आर्य, अचिरमिदानीमभिवादयितुमिच्छामि Prati. 4. 10 (3); PañcRā.(Nā.) i. 2. 46; अचिरं रुचिरभाषणो भवान् DaśKuC. 31. 18; युधिष्ठिरः … भवन्तमचिरमालिङ्ग्य … प्रार्थयते VeṇīSaṁ. 6. 402; व्यक्तं शंसत्यचिरमनयोर्दृष्टमाकेकराक्षम् MālaMā. 4. 70; अचिरमुत्पत्स्यमानस्य वर्षस्य न कार्यम् TātpaṬ.(Vā.) 402. 15 (*on* ii. 1. 37); यावदचिरमेव हुताशनप्रवेशने तस्याः सहचरीभवामि PraboCan. 3. 2 (43. 13); 3. 22 (63. 7); कति न कथितमिदमनुपदमचिरम् GītGo. ix. 18 (3); चिरमचिरं युगपदित्यादिप्रत्ययव्यवहारयोर्निमित्तं कालः TārkiRa. 138. 1; अचिरमेव … बाणासुरः इन्दुमौलिम् … ऊचिवान् PrasaRā. 1. 23 (22); का त्वां प्रोज्झ्य चलेत्खलेयमचिरं श्वश्रूर्न चेदाह्वयेत् UjjvaNīMa. 127. 9; रागात् प्रयोगसाम्याद् भवति व्यत्यास एतयोः क्वापि। अचिरं प्रान्ते तस्य प्रकृतिर्भवतीति शास्त्रार्थः KandaCū. ii. 7. 21; Rāgh. 12. 26.

**अचिरमज्जन** (acira-majjana) *n.* recent bath अचिरमज्जनविशेषस्निग्धसुकुमारवपुषम् …नाविकयुवानमद्राक्षम् TilaMañ. 125. 1.

**अचिरमरण** (acira-maraṇa) *n.* recent death अचिरमरणे प्रेतप्रयोगं दर्शयति ManuBh. i. 312. 8 (*on* 3. 238)

**अचिरमात्रम्** (acira-mātram) *adv.* immediately बर्हिणां यः। कोलाहलो विरमतेऽचिरमात्रमुच्चैः भृङ्गाधिपे हरिकथामिव गायमाने BhāgP. iii. 15. 18.

**अचिरमुक्ता** (acira-muktā) *f.* new pearl तदीयम् … अचिरमुक्तामरीचिसंचयस्वच्छमतिशीतलं सलिलमापूर्णकण्ठम् … अस्मि पीतवती UdaySuKa. 136. 16.

**अचिरमृत** (acira-mṛta) *adj.* recently dead अचिरमृतस्य द्विजातेश्च वैश्वदेवब्राह्मणभोजनरहितं श्राद्धार्थमन्नं ब्राह्मणं भोजयेत्, एकं च पिण्डं दद्यात् ManvaMu. 135. 4 (*on* 3. 247)

**अचिरमृदित** (acira-mṛdita) *adj.* recently crushed or killed अथ प्रतीहारी … अचिरमृदितमधुकैटभरुधिरारुणेन हरिमिवोरुयुगलेन विराजमानम् … राजानमद्राक्षीत् Kād. 9. 7; 11. 3.

**अचिरयन्त्रनिर्मुक्त** (acira-yantranirmukta) *adj.* produced recently from a machine or a contrivance यन्त्रनिर्मुक्तमिति अचिरयन्त्रनिर्मुक्तमित्यर्थः VīraMi.(Āhnika.) 246. 3.

**अचिरयानसंप्रस्थित** (acira-yānasaṁprasthita) *adj.* newly entered upon the Vehicle, (a Bodhisattva) that is in the early stages of the (Mahā-)yāna [DBHS]

**अचिरयौवना** (acira-yauvanā) *adj.* (*f.*) with prosperity not lasting long, having transient existence (*lit.* having temporary youth) नद्यश्च खलमैत्री च लक्ष्मीश्च नयविद्विषाम्। सुकुमाराश्च वनिता राजन्नचिरयौवनाः MahāN. 8. 10.

**अचिररुच्** (acira-ruc) *f.* lightning (*lit.* having momentary lustre) संस्फोटविस्फुटरसस्फुटितव्रणोत्थरक्तच्छटाचिररुचो गजगण्डमेघाः। मुञ्चन्तु दानजलवृष्टिम् HarVi. 11. 37.

**अचिररुचि** (acira-ruci) *f.* lightning (*lit.* having momentary lustre) यत्र दधति सुरयुवतयः श्रियम् …। व्यूढसलिलभरजलदमण्डलप्रेङ्खदचिररुचिरुचिरविभ्रमाः HarVi. 31. 54; अचिररुचिवत्तस्माद् बुद्धिर्निसर्गविनश्वरी। भवति जनकः स्वात्मा तस्याः NyāyMañ. ii. 67. 7; CaturJiStu. 73; SubhāRaSaṁ. 123; अचिररुचिलताभां त्रोतलाख्यां स्मरति यदि सुजातां कुण्डलिन्याः ĪśānS'iPa. i. 22. 76; i. 23. 51; चक्षुःकर्माणि चूषत्यचिररुचिरुचां वञ्चकोऽस्यासिरुच्चैः KhaḍgaS'. 5; Manmatho. iii. 633. 7.

**अचिररोचिस्** (acira-rocis) *f.* lightning (*lit.* having a momentary flash of light) विराजमानं शरदभ्रखण्डं परिस्फुरन्त्याचिररोचिषेव KumāSaṁ. 12. 18; नभस्तरोरचिररोचिररोचत वारिदैः S'iśuVa. 6. 28; उर्वीपतिः … त्रिभुवनोदरचारिणीनामचिररोचिषामारब्धसंज्ञासमाह्वानेनेव क्षयानलवर्चसा। कूर्चकचकलापेन … कवलितम् … प्रलम्बपृथुलं चिबुकमुद्वहन्तम् … वेतालमद्राक्षीत् TilaMañ. 47. 19; वारिवाहनिवहे क्षणलक्ष्यश्रीररोचत किलाचिररोचिः S'aṅkaDigVi.(Mā.) 5. 120; अमृतमचिररोचिर्दक्षकन्ये जलं च त्रिदशपुरवधूनां जन्मनः कारणानि S'abdaRa.(Vā.) 172.

**अचिरलभ्यत्व** (aciralabhya-tva) *n.* the state of being immediately obtainable अतोऽतिशयितपुरुषार्थत्वात्सुलभत्वादचिरलभ्यत्वाच्च मय्येव मन आधत्स्व GītāBh.(Rā.) 563. 16 (*on* 12. 8)

**अचिरवचन** (acira-vacana) *n.* quick or fast pronunciation सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराचिरवचनाद्वृत्तयो विशिष्यन्ते Vār. 5 (*on* P. i. 1. 70)

**अचिरवासिन्** (aciravās-in) *adj.* not staying (with the teacher) for a long time सुपरीक्षितशिष्याय दातव्यं ज्ञानमुत्तमम्। अन्यथात्र गुरुद्वेषिकृतघ्नाचिरवासिनाम्। अवश्यमायुसुकृतक्षयः स्यात् SiddhāTaVi. 409. 3.

**अचिरविकच** (acira-vikaca) *adj.* recently blossomed अचिरविकचानामजिराशिरीषशाखिनाम् … प्रसूनस्तबकैः … अनुसृतपुरोभागम् … जलमण्डपमगच्छत् (हरिवाहनः) TilaMañ. 106. 11.

**अचिरविकस्वर** (acira-vikasvara) *adj.* recently blossomed मिलति वनमाली।…अचिरविकस्वरलसदिन्दीवरमण्डलसुन्दरधामा StavMā. 273. 27.

**अचिरविनश्वर** (acira-vinaśvara) *adj.* perishable in a short time जलबुद्बुदवदचिरविनश्वरे संसारे सारस्य स्थिरस्य मार्गणमन्वेषणं यः करोति Mitā. 329. 12 (*on* 3. 8)

**अचिरविनश्वरता** (aciravinaśvara-tā) *f.* the state of being perishable in a short time तद्वचनानामचिरविनश्वरतामात्रप्रतिपादनपरत्वात् TattvPradī. (Ci.) 359. 9.

**अचिरविनाशिन्** (aciravināś-in) *adj.* disappearing or coming to an end in a short time अपि नदथ निकामं दर्दुराः किं सुवर्णद्युतिभरमुपनीता नूतनैर्वारिपूरैः। अयमचिरविनाशी शोचनीयस्तु भावी स चिरमवटसीम्नि प्राच्य एव क्रमो वः SaduktiKa. 243. 26.

**अचिरविरह** (acira-viraha) *m.* recent separation अचिरविरहखिन्नेव … प्रस्थानप्रभृति भवतो नन्दवसतिः KaṁVa. 4. 35.

**अचिरविरूढ** (acira-virūḍha) *adj.* recently grown or developed क्वचिदचिरविरूढबालस्तनी कन्यकेवोद्गतैः श्यामलैः कुड्मलैः पद्मिनी शोभते Padm-Prā. 2. 20.

**अचिरव्यतिवृत्त** (acira-vyativṛtta) *adj.* recently turned up धर्मता ह्येषा अचिरव्यतिवृत्ते लोकसन्निवेशे तिर्यञ्चोऽपि वाक्प्रव्याहरणसमर्था भवन्ति GiMs. iii(2). 134. 6.

**अचिरव्यपरोपित** (acira-vyaparopita) *adj.* planted recently ताभ्यामेव च विषमसेविताभ्यां जातः सद्य उपहन्यते (गर्भः) तरुरिवाचिरव्यपरोपितः CaraS. iv. 6. 26 (1941 Ed.) (comm. अदीर्घकालारोपितः)

**अचिरव्युप्तसस्य** (aciravyupta-sasya) *adj.* in which corn is recently sown यथा क्वचिदचिरव्युप्तसस्ये…केदारे तदुपद्रवो द्रुतगामिनः … चतुष्पदाद् द्विपदाद्वाभिशङ्क्यते NyāyMañ. ii. 175. 10.

**अचिरव्यूढा** (acira-vyūḍhā) *adj.* (*f.*) bride (*lit.* recently married) अचिरव्यूढा तु वधूः पतिंवरा तु स्वयंवरा वर्या Vaija. 173. 7.

**अचिरश्राद्ध** (acira-śrāddha) *n.* the S'rāddha-rite to be performed within a short time प्रतिप्रयोगं नैताः (क्रियाः) स्युर्म(र)चिरश्राद्ध एव च Gobhi-Sm. 1. 58.

**अचिरश्रुत** (acira-śruta) *adj.* recently heard (हर्षः) अचिरश्रुतपितृमरणमहाशोकाग्निदग्धमिव श्रवणप्रदेशमुद्वहन्तम् … ज्येष्ठं भ्रातरमपश्यत् HarṣaC. 243. 10.

**अचिरसंस्थित** (acira-saṁsthita) *adj.* remaining (in the sky) for a short time अचिरसंस्थितः शुक्रः।…सुभिक्षसौख्यावहः केतुः BṛSaṁ. 11. 8.

**अचिरसमाजम्** (acirasamā-jam) *adv.* with a recent birth प्रयुक्तलोकायतमतधर्मा अचिरसमाजं नभश्चरपदावाप्तिशर्मा चण्डकर्मापि … प्रविचचार खेचरनिवेशं देशम् YaśasCam. ii. 259. 9.

**अचिरसमावृत्त** (acira-samāvṛtta) *adj.* who has recently returned (home after completing the studies of the Vedas) ऋत्विगाचार्ययोः स्नातकोपादानेनैव ग्रहणसिद्धौ पृथगुपादानात्स्नातकशब्दोऽचिरसमावृत्ते वर्तते Aparā. 193. 15 (*on* 1. 152)

**अचिरसमुन्मृष्ट** (acira-samunmṛṣṭa) *adj.* erased recently अभ्यग्रनखपदाङ्कितमचिरसमुन्मृष्टपत्रमकरीकम्। अद्यतनसुरतविह्वलमङ्गं भवदीयमङ्कके जयतु

S'ṛṅgāSar. 53.

**अचिरसंपादनीय** ( acira-sampādanīya ) *adj.* to be fulfilled without delay अचिरसंपादनीयो दोहद इति संप्रत्येव गुरुभिः संदिष्टम् UttaRāC. 133 (14)

**अचिरसंभाविन्** ( acirasambhāv-in ) *adj.* imminent, occurring or taking place soon सर्वमुचितमाचरितमेतद्वत्सया यदचिरसंभाविनं विनाशवृत्तान्तमसहमानया श्रोतुमग्रत एव कर्तुमध्यवसितः स्वदेहत्यागः TilaMañ. 417. 4.

**अचिरसौरभसंगतस्** ( acirasaurabhasaṅga-tas ) *adv.* on account of recent contact with fragrance कलरवैर्भ्रमरः सुरभेरिव स्तवकरोऽचिरसौरभसंगतः HarVi. 5. 95.

**अचिरस्थ** ( acira-stha ) *adj.* not staying long, temporary असंशयं स सायुज्यं ब्रह्मणा लभते नरः । क्व दुःखायासबहुलमनायासविनश्वरम् ॥ अचिरस्थं क्षुद्रफलं पुनरावृत्तिलक्षणम् SkandP. ii(2). 21. 18.

**अचिरस्थापित** ( acira-sthāpita ) *adj.* recently arranged ( बालिका ) अचिरस्थापितस्फीतभङ्गुरस्निग्धमूर्धजा । ··· तन्वी चूतलतेव सा BṛKathāS'loSaṁ. 7. 11.

**अचिरस्थायिता** ( acirasthāyi-tā ) *f.* the state of not lasting long अथ वासनादौर्बल्यादचिरस्थायितासाधारणोपलम्भो दौर्बल्यलक्षणोऽसत्त्वम् PramāVāBh. 72. 11; शबलग्रहणेनाचिरस्थायिता फलस्योच्यते ManuBh. i. 406. 8 (*on* 4. 226)

**अचिरस्थायित्व** ( acirasthāyi-tva ) *n.* the state of not lasting long पवनसंयोगविभागानामचिरस्थायित्वात् NyāyMañ. i. 189. 13; रमणीयानामचिरस्थायित्वस्योत्सर्गतः सिद्धेस्तस्य च स्वाभिलषितानानुगुणत्वाच्छल्यत्वप्रयोजकत्वम् RasGaṅ. 664. 1.

**अचिरस्थायिन्** ( acirasthāy-in ) *adj.* [ *f.* -inī ] short-lived, not staying for long विशेषेणाचिरस्थायिप्रकाशप्रविलायिनी । संध्याविद्युच्च लक्ष्मीश्च दृष्टा कुत्र कदा स्थिरा KathāSaSāg. xii. 23. 19; अचिरस्थायिनो राज्ञः ( हरिराजस्य ) तस्याज्ञाचिन्तितोन्नतिः । वन्ध्या नवेन्दुलेखेव पार्थिवानामजायत RājTa.(Ka.) 7. 130.

**अचिरस्थित** ( acira-sthita ) *adj.* [ *f.* -ā ] not kept or stored for long, obtained recently काममुत्पाद्य कृष्यां तु स्वयमेव कृषीवलः । विक्रीणीत तिलान् शुद्धान् धर्मार्थमचिरस्थितान् ManuSm. 10. 90; शुद्धानचिरस्थितानिति च स्वरूपविशेषः । ··· अचिरस्थिताः । अर्थादिकं लाभमनपेक्ष्य स्वल्पं मूल्यमथ कालान्तरे चागामिनि बहुमूल्यं लभेयेत्येवं न प्रतीक्षितव्यम् ManuBh. ii. 356. 28 (*on* 10. 90); अचिरस्थितान् लवनानन्तरमेव न तु लाभार्थं चिरं स्थापयित्वा ManvaVi. 1324. 6 (*on* 10. 90); ( गुग्गुलुद्रव्यम् ) अचिरस्थितम् ··· अङ्गारवर्जितमभिसंवीक्ष्य Hastyāyur. 666. 2 (4. 20); हेमन्ते स्थलजं दद्यात् प्रसन्नं चाचिरस्थिताम् Hastyāyur. 621. 9 (4. 7); BālamBha. i. 373. 14 (*on* 1. 119)

**अचिरस्थिति** ( acira-sthiti ) *adj.* existing for a short period, of transient existence मिथ्या पत्नी तवेयं च क्षणात्तेन गताधुना । न हि सत्यमदृश्यं च मिथ्या यत्राचिरस्थितिः BrahmVaiP. iv. 24. 80; *f.* existence for a short time अत्र नैवादृढत्वेन प्रवाहस्याचिरस्थितेः SiddhāTaVi. 46. 17.

**अचिरस्थितिक** ( acirasthiti-ka ) *adj.* possessed of existence for a short period, of transient existence यागाद्यसत्त्वमचिरस्थितिकं च यस्याः संबन्धतः फलमुवः फलदायि जातम् BhāṭṭCin. i. 86. 27 (*on* i. 1. 4)

**अचिरस्थितिकता** ( acirasthitika-tā ) *f.* transitoriness [ DBHS ]

**अचिरस्थिर** ( acira-sthira ) *adj.* lasting for a short time अग्निदग्धनिभैः स्फोटैः समन्तादचिरस्थिरैः । श्वयथुस्तस्य नागस्य विसर्पति समन्ततः Hastyāyur. 128. 28 (1. 17)

**अचिरस्नात** ( acira-snāta ) *adj.* who has recently bathed राजा ( स्वगतं ) यद्येवमचिरस्नात एवाहं, किममुना भूयः स्नानान्तरेण TāpaVa. 6. 5 (26); महीपतिः ··· अचिरस्नातमपि मार्गवातातपप्रुष्टगात्रत्वक्तया मलिनमिव ··· राजकुलमाकलयन्तम् ··· विजयवेगमपश्यत् TilaMañ. 80. 22.

**अचिरस्नान** ( acira-snāna ) *n.* recent bath अचिरस्नानावस्थितविरलवारिकणतया···जटाभिरुद्भासितशिरोभागाम्···कन्यकां ददर्श Kād. 130. 1.

**अचिरस्नापित** ( acira-snāpita ) *adj.* recently bathed अचिरस्नापितस्य ··· युगादिजिनबिम्बस्य पुरतः ··· समुपविष्टाम्···तापसकन्यकां व्यलोकयत् TilaMañ. 255. 5.

**अचिरहत** ( acira-hata ) *adj.* recently killed ततः प्रथमतरमचिरहतमतङ्गजरुधिरजलजडिमानमुपनेतुमिच्छुना करिवैरिकिशोरकेण मण्डलितसटाचक्रवालहारिणि···कुमुदचक्षुषि YaśasCam. ii. 13. 7.

**अचिरहितपार्श्व** ( acirahita-pārśva ) *adj.* whose sides are supported immediately कमठधरणपद्मापार्श्वयक्षैश्चिराय त्वमचिरहितपार्श्वः पार्श्वतीर्थेश नन्द्याः PārśvSta. 10.

**अचिरा** ( acirā ) *f.* name of the mother of the Jain prophet S'ānti नन्दा विष्णुर्जया श्यामा सुयशाः सुव्रताचिरा AbhidhāCin. 40.

**अचिरांशु** ( acirāṁśu ) *f.* 1 lightning अचिरांशुविलासचञ्चला ननु लक्ष्मीः फलमानुषङ्गिकम् Kirātā. 2. 19 = SūktiMu. 7. 9 = SūktiRa. 102. 14; अचिरांशुरिवालक्ष्यो लक्ष्योऽथ भगवान्हरिः । आबभाषे SkandP. i(2). 32. 126; गत्वरीभिरचिरांशुभिरेव । अंशुमालिनि विशत्यपराद्रिं केचिदस्य किरणास्सविलम्बाः Acyutarā. 8. 27; सौदामिन्यचिरांशुः AbhidhāRaMā. 1. 60; S'abdaRa.(Vā.) 431; NāmMā. (comm.) 19; 2 transitory lustre, short gleam [ APTE ]

**अचिरांशुचञ्चल** ( acirāṁśu-cañcala ) *adj.* unsteady like lightning आयुरैश्वर्यादीनां विलसितमचिरांशुचञ्चलमवगच्छद्भिः···परिपालनीयम् EI. v. 205. 70.

**अचिरांशुतपनीयमेखला** ( acirāṁśu-tapanīyamekhalā ) *adj.* ( *f.* ) having the golden girdle of lightning साचिरांशुतपनीयमेखला ··· संहतिर्जलमुचां तिरोदधे NavaSāC. 8. 13.

**अचिरांशुतेजस्** ( acirāṁśu-tejas ) *n.* lustre of lightning अचिरांशुतेजःस्तबकचन्द्रकितैरिन्द्रनीलकान्तिभिः तरुणजलदैरध्यासितोर्ध्वकदलिकाशिखरेषु ··· निद्रायमाणकुमारम् ··· खेचरनरेन्द्रवृन्दमद्राक्षम् TilaMañ. 153. 5.

**अचिरांशुलता** ( acirāṁśu-latā ) *f.* creeper-like lightning रमणेन रमण्यचिरांशुलतातरुचिरङ्कमनीयत S'iśuVa. 6. 71 ( comm. अचिरांशुलतेवाचिरांशुलता विद्युल्लता )

**अचिरांशुवर्तन** ( acirāṁśu-vartana ) *n.* presence of lightning किमुत श्रुतं किमुत वीक्षितं कुतोऽप्यपहाय मेघमचिरांशुवर्तनम् Acyutarā. 9. 34.

**अचिरांशुविलास** ( acirāṁśu-vilāsa ) *m.* display of lightning अचिरांशुविलासचञ्चला ननु लक्ष्मीः Kirātā. 2. 19 ( comm. अचिरांशवो यस्याः साचिरांशुर्विद्युत् तस्या विलासः स्फुरणम् ); SūktiMu. 7. 9; SūktiRa. 102. 14.

**अचिरांशुसमान** ( acirāṁśu-samāna ) *adj.* resembling lightning यज्जीवितं चाचिरांशुसमानक्षणभङ्गुरम् SkandP. i(2). 1. 20.

**अचिरागत** ( acirāgata ) *adj.* who has come recently अचिरागतस्तावद्वसन्तस्तव शरीरे संनिविष्टो ननु PadmPrā. 16. 12.

**अचिरागतश्रीक** ( acirāgataśrī-ka ) *adj.* who has recently or newly attained beauty or wealth अचिरागतश्रीकः ··· आज्ञापितवानसि BṛKathāS'loSaṁ. 26. 13.

**अचिराढ्य** ( acirāḍhya ) *adj.* newly rich, who has recently become rich नीचाचिराढ्यनृपवल्लभतस्करेभ्यो राष्ट्रं नृपेण परिरक्ष्यम् YogYā. 1. 18; तीक्ष्णं रविस्तपति नीच इवाचिराढ्यः KāvyMī. 102. 7 = SubhāRaK. 11. 11 = Kāvyānu-(He.) 157. 15 = SaduktiKa. 178. 14 = Subhāṣi. 1821.

**अचिरातिक्रान्तत्व** ( acirātikrānta-tva ) *n.* the state of having vanished recently तथापि वक्तव्यं कथं वर्णेभ्यो वाक्यार्थप्रमितिरिति, उच्यते चिरातिक्रान्तत्वमचिरातिक्रान्तत्वं वा न स्मृतिकारणम् NyāyMañ. i. 363. 14.

**अचिरातीत** ( acirātīta ) *adj.* recently dead अचिरातीतदै( ? दे )वत्यमेकोद्दिष्टम् Aparā. 531. 16 (*on* 1. 253); 531. 1 (*on* 1. 253)

**अचिरादेवी** ( acirā-devī ) *f.* queen Acirā विश्वसेनकुलोत्तंसाचिरादेवीतनूद्भव । श्रीशान्तिनाथ भगवन् भव नः कर्मशान्तये TriṣaS'aPuC. i. 6. 669.

**अचिराधिकार** ( acirādhikāra ) *adj.* having a short tenure of office अचिराधिकारा मघवादयोऽधिकारान्ते चिराधिकारं ब्रह्माणं गच्छन्ति GoviBh. 240. 10 (*on* iii. 3. 33)

**अचिराधिष्ठितराज्य** ( acirādhiṣṭhita-rājya ) *adj.* who is recently crowned as king, who has recently obtained sovereignty अचिराधिष्ठितराज्यः शत्रुः ··· सुकरः समुद्धर्तुम् Mālavikā. 1. 8.

**अचिराधिष्ठिताधिकार** ( acirādhiṣṭhitādhikāra ) *adj.* who has recently occupied the office अचिराधिष्ठिताधिकारः ··· कान्तको नाम नागरिकः किंचिदिव भर्त्सयित्वा समभ्यधत्त DaśKuC. 58. 15.

**अचिराध्युषित** ( acirādhyuṣita ) *adj.* who has stayed for a short time गुह्यं शिष्याय नैतदचिराध्युषिताय दद्याः YogYā. 4. 3.

**अचिरापनीत** ( acirāpanīta ) *adj.* removed recently अचिरापनीतपारिजातकुसुमकर्णपूरतया···मधुकरकुलेन सनीलोत्पलमिव···श्रवणदेशं दधानम्···तमहमद्राक्षम् Kād. 153. 13.

**अचिरापहृत** ( acirāpahṛta ) *adj.* recently taken out or carried off तन्त्रादचिरापहृते P. v. 2. 70; तन्त्रात्पञ्चम्यन्तादचिरापहृते कन् भवति । तन्त्रकः पटः CāndraVṛ. *on* iv. 2. 75; *on* iv. 4. 148; अचिरापहृतस्तोककालापहृत इत्यर्थः KāśiVṛ. *on* v. 2. 70; अचिरः कालोऽपहृतस्य PadMañ. *on* KāśiVṛ. *on* P. v. 2. 70; कन् । तन्त्रादचिरापहृतस्तन्त्रकः पटः Prasā. i. 881. 16.

**अचिरापाय** ( acirāpāya ) *adj.* of quick end कायोऽयमचिरापायो बुद्बुदोऽम्बुनिधाविव YogVā. i. 18. 59.

**अचिराभ** ( acirābha ) *adj.* having a short gleam [ PW ]

**अचिराभा** ( acirābhā ) *f.* lightning अचिराभाः सुतरां स्फुरन्ति VāmaP. 1. 21; VidaMuMa. 3. 22; अचिराभामिव विघनाम् KuṭṭaMa. 258; Hārāva. 58.

**अचिराभागुण** (acirābhā-guṇa) *m.* streak of lightning पयोधरैश्च्युताचिरा-

भागुणहेमदामभिः। इयं कदम्बानिलभर्तुरत्यये न दिग्वधूनां कृशता न राजते Kirātā. 4. 24 (comm. अचिराभागुणा विद्युल्लता एव हेमदामानि सुवर्णसूत्राभरणानि येभ्यस्तं पयोधरैरम्भोदैः, अन्यत्र, स्तनैः। ... दिश एव वध्वस्तासामियं कृशता न राजत इति न, किंतु राजत एव भर्तृवियुक्तत्वात्)

**अचिराभाचल** (acirābhā-cala) *adj.* as fickle as lightning अवभज्य हृषीकाणां प्रसरं निजगोचरे। अचिराभाचलं चित्तं कृत्वा दासमिवाश्रवम् PadmP. (Ra.) 7. 311.

**अचिराभिवृद्धि** (acirābhivṛddhi) *adj.* growing or swelling quickly पीताक्षिविण्मूत्रनखाननस्य पित्तोदरं तत्त्वचिराभिवृद्धि SuśruS. ii. 7. 10.

**अचिराभिषेक** (acirābhiṣeka) *m.* recent consecration अचिराभिषेकनिष्पङ्कपरिकर्माचरणम् ... भगवतो महावीरजिनवरस्य ... बिम्बमद्राक्षम् TilaMañ. 275. 10.

**अचिराभिसंबुद्ध** (acirābhisambuddha) *adj.* who is recently enlightened अथ भगवतोऽचिराभिसंबुद्धस्यैतदभवत्। अधिगतो मे धर्मो गम्भीरो गम्भीरावभासो दुर्दर्शो दुरवबोधोऽतर्क्योऽतर्कावचरः सूक्ष्मो निपुणः पण्डितविज्ञवेदनीयः Sphuṭā. ii. 13. 3 (on 2. 9)

**अचिराभ्यक्त** (acirābhyakta) *adj.* which has been just given an oil-bath सवितुः परिभावुकैर्मरीचीननिचिराभ्यक्तमतङ्गजाङ्गभासिः। जलदैरभितः स्फुरद्भिरुच्चैर्विदधे केतनतेव धूमकेतोः S'iśuVa. 20. 69.

**अचिरार्चिस्** (acirārcis) *f.* lightning विकटमेकलहेमलतास्पदं रुचिरतामचिरार्चिरचूचुरत् HarVi. 3. 48; रैचारुता चित्रतराचिरार्चीरीति रतारैरुरुचौरोरैः ĪśvaS'. 17.

**अचिरार्दित** (acirārdita) *adj.* afflicted recently or suffering (from a disease) for a short period साध्यं चिकित्सेदचिरार्दितम् SuśruS. vi. 27. 18.

**अचिरावतीर्ण** (acirāvatīrṇa) *adj.* just entered in (a pond or lake) अचिरावतीर्णेन ... यौवनवनगजेनेव दूरविक्षिप्तस्य लावण्यपयसो वीचिवलयैरिव ... कनककङ्कणैरधिष्ठितकोमलप्रकोष्ठकन्दलाम् ... कन्यकामद्राक्षम् TilaMañ. 160. 18.

**अचिरावसन्न** (acirāvasanna) *adj.* uncultivated or lying idle for a short period कृष्यमाणे अचिरावसन्ने क्षेत्रे स्वीकृत्योपेक्षिते त्वष्टमं भागम् ... दाप्य इत्यर्थः SmṛtiCan. iv. 559. 17 = VīraMi. (Vyavahāra.) 368. 21.

**अचिरावस्थान** (acirāvasthāna) *n.* staying or existing for a short period न च व्रीह्यादिषु चिरावस्थानप्रतिपादनादेवाकाशादिष्वचिरावस्थानमवगम्यत इति वाच्यम् S'ivārkaMaDī. ii. 215. 13 (on iii. 1. 23)

**अचिरावाप्त** (acirāvāpta) *adj.* attained or acquired recently अलकालिकुलां लीलावल्लरीं पाणिपल्लवाम्। पेशलामचिरावाप्तविप्रयोगविपल्लवाम् BṛKathāMañ. ix. 1. 401; एवं निर्वास्य विज्जादीनचिरावाप्तवैभवः। क्षिप्रं सूर्यमतीशापाज्जयानन्दः क्षयं ययौ RājTa. (Ka.) 7. 562; 7. 564.

**अचिरावासित** (acirāvāsita) *adj.* recently accommodated नवपल्लवकान्तिना किमप्यचिरावासितपुष्पकेतुना। ललितामधरेण बिभ्रतीं मुखचन्द्रांशुसटां स्मितच्छटाम् NavaSāC. 12. 11.

**अचिरावासिन्** (acirāvās-in) *adj.* staying (at the residence of his teacher) for a short time दिव्यं ज्ञानम् ... यदृषिभिः ... पारंपर्यवशाद्रहस्यमवनीं नीतं प्रकाश्यं ततः। नैतद्वेषिकृतघ्नदुर्जनदुराचाराचिरावासिनाम् Golā. 200. 1 (23. 9)

**अचिराहृत** (acirāhṛta) *adj.* recently brought (home), recently married अतृप्तं वा चित्तमचिराहृते कळ(? ल)त्रे AvantiKa. 73. 18.

**अचिरिन्** (acir-in) *m.* name of Viṣṇu (*lit.* executing all activities within a very short period of time) (विष्णुसहस्रनामानि) लोमशो निर्मलोऽलोमी दीर्घायुश्च चिरोऽचिरी SkandP. v(1). 63. 191.

**अचिरेन्दु** (acirendu) *m.* the new moon (i. e. crescent moon), प्रथमपथिकमस्मिन् कानने रामभद्रं तदनुचरणचारिण्येवमेकाकिनी सा। दुरितमगणयन्ती पर्यटन्ती दिगन्तान् कृशरुचिमचिरेन्दुं रोहिणीवान्वियाय MahāN. 3. 21.

**अचिरेश्वर** (acireśvara) *m.* newly crowned king अकरोदचिरेश्वरः क्षितौ द्विषदारम्भफलानि भस्मसात् RaghuVa. 8. 20.

**अचिरोज्झित** (acirojjhita) *adj.* recently cast-off (slough) अथ तं कलधौतकोशतः सा करलग्नसरुरुच्चखान खड्गम्। अचिरोज्झितकञ्चुकानुबन्धस्फुटकालोरगभोगसाम्यभाजम् MadhuVi. 8. 18.

**अचिरोढता** (aciroḍha-tā) *f.* the state of being recently married भीता वधूरभिमुखं न शशाक भर्तुरुद्वीक्षितुं यदचिरोढतया कथंचित् HarVi. 23. 53.

**अचिरोढा** (aciroḍhā) *adj.* (*f.*) newly or recently married भिन्नशंखवलयं परिणेत्रा पर्थरम्भि रभसादचिरोढा S'iśuVa. 10. 43; 15. 86; VyaktiVi. 81. 21; सव्रीडा नखरदनार्पणेषु कुपिता प्रगाढमचिरोढा ĀryāSaS'a. 661; उत्प्रेक्षा हरति स्वान्तमचिरोढास्मितादिव AlaṅkāS'e. 13. 0(10); अचिरोढा वधूर्नवा KalpaK. 22. 18.

**अचिरोत्थ** (acirottha) *adj.* recently risen बालः शिशौ स्यात् त्रिषु चाचिरोत्थे KośaKaTa. 2. 8572.

**अचिरोत्थित** (acirotthita) *adj.* [*f.* -ā] **i** recently developed, newly erupted तस्मादचिरोत्थितां विद्रधीं शस्त्रसर्पविद्युदग्नितुल्यां स्नेहविरेचनैराश्वेवोपक्रमेत् CaraS. i. 17. 101 (1922 Ed.); अश्मर्याममप्यचिरोत्थितायां वातबस्त्यादिषु च यथादोषमिदमेव चाचरेत् AṣṭāSaṁ. ii. 78. 15 (4. 13); मधूकसारमधुकविषक्षीरजलैर्घृतम्। पक्वं संतर्पणं श्रेष्ठं नक्तान्ध्ये त्वचिरोत्थिते RasRaSa. 29. 110; **ii** just appeared उर्वीधराभमचिरोत्थितमम्बरं खे दृष्ट्वाहिहा प्रमुदितो हिमहाह्वयानः RākṣaKā. 10.

**अचिरोत्पतित** (acirotpatita) *adj.* newly or recently erupted or started अचिरोत्पतिते शोफे कुर्याच्छोणितमोक्षणम् SuśruS. iv. 1. 28; एवमाद्यैः क्रियायोगैरचिरोत्पतितं सुखम्। वातासृक् साध्यते वैद्यैः SuśruS. iv. 5. 14.

**अचिरोत्पन्नकेवल** (acirotpanna-kevala) *adj.* who has newly acquired omniscience आत्तदीक्षश्च भगवानचिरोत्पन्नकेवलः। उद्दिधीर्षुर्भवाम्भोधेर्धर्मं प्रावर्तयज्जगत् TriṣaS'aPuC. i. 6. 687.

**अचिरोत्सन्न** (acirotsanna) *adj.* recently deserted, just fallen into disuse इदमाश्रमपदमचिरोत्सन्नमिव दृश्यते ĀścaCū. 3. 1(3)

**अचिरोदित** (acirodita) *adj.* just risen, just appeared (on the horizon) अभ्यागतोऽस्माननलंकृतोऽपि सन् (विराटः) विरोचते भानुरिवाचिरोदितः MahāBhā. iv. 180*(32); तथा समालक्ष्यत चारुदर्शनः (सहदेवः) प्रकाशवान् सूर्य इवाचिरोदितः MahāBhā. iv. App. i. 8(4); श्राद्धं न कुर्वीत ... सूर्ये चैवाचिरोदिते ManuSm. 3. 280 (ManvaVi. सङ्गवाख्यषण्मुहूर्तमध्ये) = LaHārīSm. 102; प्रजास्तमन्वरज्यन्त बालमप्यमितौजसम्। नवं च शुक्लपक्षादौ शीतांशुमचिरोदितम् BrahmāṇḍP. ii. 55. 24; कुमारवृषसेन ... पर्याप्तनेत्रमचिरोदितचन्द्रकान्तम् ... आननपङ्कजं ते VeṇīSaṁ. 4. 296; अचिरोदिततिग्मांशुदीप्तं कान्त्या समं विधोः ... शरीरं लभ्यते धर्मात् प्राणिभिः PadmP. (Ra.) 14. 134; शाक्यपक्षेऽपि स्वभावकार्ययोरेवान्वयलाभेन हेतुत्वान्न कृत्तिकोदयादचिरोदितरोहिणीप्रतिपत्तिः सिद्ध्येत् NyāyRaMā. 56. 21; CaturCin. iii. 329. 17; अचिरोदितादित्यकालश्चापेक्षायां त्रिमुहूर्तः प्रातःकालो ग्राह्यः ManvaMu. 141. 10 (on 3. 280); अतिप्रगे अचिरोदितसूर्ये ... न भुञ्जीत VīraMi. (Āhnika.) 476. 2.

**अचिरोद्गत** (acirodgata) *adj.* [*f.* -ā] newly sprouted, recently blossomed, recently appeared कान्तामुखद्युतिजुषामपि चोद्गतानाम् (v. l. अचिरोद्गतानाम्) शोभां परां कुरबकद्रुममञ्जरीणाम्। दृष्ट्वा प्रिये सहृदयस्य भवेन्न कस्य कन्दर्पबाणपतनव्यथितं हि चेतः ṚtuSaṁ. 6. 18; अयमचिरोद्गतपल्लवमुपनीतं प्रियतमाग्रहस्तेन। अभिलषतु तावदासवसुरभिरसं सल्लकीभङ्गम् Vikramo. 4. 44; एते लूनशिखास्तस्य (एणस्य) दशनैरचिरोद्गतैः। कुशाः काशा विराजन्ते बटवः सामगा इव ViṣṇuP. ii. 13. 27; का(? अका)र्यकारणभूतानामपि कृत्तिकादीनामचिरोद्गतरोहिण्यादिप्रतिपत्तिहेतुत्वदर्शनात् TantrVā. 44. 5 (on i. 2. 26); अयमचिरोद्गतमुग्धलोलबर्हः। ... कदम्बे नदति स एष वधूसखः शिखण्डी UttaRāC. 3. 19; नृपेण दूराददर्शि फणिराजसुता ... अचिरोद्गतयवाङ्कुरकर्णपूरं मुक्तोज्ज्वलम् ... वेषं विवाहसमयोचितमुद्वहन्तीम् NavaSāC. 18. 34.

**अचिरोद्धृत** (aciroddhṛta) *adj.* [*f.* -ā] just plucked, uprooted, taken out कृतार्थोऽस्म्यद्य दृष्ट्वेमाम् (भैमीम्) ... । दह्यमानामिवोष्णेन मृणालीमचिरोद्धृताम् MahāBhā. iii. 65. 15; (दशग्रीवस्तु वैदेहीम् ... ददर्श) तप्यमानामिवोष्णेन मृणालीमचिरोद्धृताम् Rāmā. v. 17. 16; तन्त्रादचिरोद्धृते SiddhaHe. vii. 1. 183 (तन्त्रात् पञ्चम्यन्तादचिरोद्धृतेऽर्थे कः स्यात्। तन्त्रकः पटः)

**अचिरोपद्रव** (aciropadrava) *m.* ailment or trouble of recent origin अल्पोपद्रवसंयुक्तमचिरोपद्रवोत्थितम्। द्रव्यवन्तं वयस्थं च प्रत्याख्येयं न वै विदुः BhelaS. 126. 22 (6. 4)

**अचिरोपनत** (aciropanata) *adj.* [*f.* -ā] which has recently occurred, attained recently अत्राचिरोपनताख्यस्य संबन्धस्य संयोगादिरूपगुणमध्यपाठाभावाद्धर्ममात्रस्य नवपाणिग्रहणामित्यनेन पृथङ्निर्दिष्टस्य बुभुज इति क्रियाकर्मत्वस्य च साधारण्यम्। द्वयोरपि अचिरोपनतत्वात्प्राकरणिकत्वम् AlaṅkāRa. 7(48); अवलोक्य ससौख्यमचिरोपनतविजयलक्ष्मीकपोलतलमिव निर्मलमादर्शमण्डलम् ... प्रसन्नधीः ... वेत्रपुरमेदनाधीशतिरुवेङ्कटनृपतिनन्दनः ĀnandaRa. 8. 0(2)

**अचिरोपनीत** (aciropanīta) *adj.* **i** recently put, recently studded or fixed अभौमसम्भाव्यविभूतियोगं हैमं सुरत्नैरचिरोपनीतैः। अनुत्तमादुत्तरमार्यधाम्नः ख्यातं त्वया गेहमिदं मदीयम् Yādavā. 18. 124 (comm. अचिरोपनीतैः प्रत्यग्रप्रयुक्तैः); **ii** just initiated, whose sacred-thread ceremony has been recently performed तद्ग्रहणाद्यष्टनामष्टवर्षादीनामचिरोपनीतानामनुष्ठानार्थमनुष्ठेयार्थज्ञानप्रवृत्तानाम् बोधो बुद्धिः BālamBha. i. 2. 18 (on 1. 1)

**अचिरोपपन्न** (aciropapanna) *adj.* recently born तत्र ये सत्त्वा आभास्वरे देवनिकायेऽचिरोपपन्नाः भवन्ति नैव संवर्तनीकुशलाः AbhidhKoBh. 116. 17 (on 3. 5); अचिरोपपन्नस्य देवपुत्रस्य त्रीणि चित्तानि समुदाचरन्ति कुतोऽहं च्युतः कुत्रोपपन्नः केन कर्मणेति Sphuṭā. iv. 85. 8 (on 4. 79); द्वितीयध्यान आगमव्यपगमसंज्ञित्वात्। अचिरोपपन्नानामागमसंज्ञित्वाचिरोपपन्नानां व्यपगमसंज्ञित्वात्

Sphuṭā. iii. 11. 26 (*on* 3. 5)

**अचिरोपरूढयौवना** (aciroparuḍha-yauvanā) *adj.* (*f.*) who has just or recently reached youth अवनिपतिस्तु ... ताम् ... अचिरोपरूढयौवनामतिशयरूपाकृतिमनिमेषलोचनो ददर्श Kād. 11. 19.

**अचिरोपलिप्ता** (aciropaliptā) *adj.* (*f.*) recently smeared (with cow-dung) कदाचिदचिरोपलिप्तासु पर्णशालाङ्गणवितर्दिकासु ... स्वस्तिकानभिलिखन्ती ... कंचित्कालमनयम् TilaMañ. 331. 5.

**अचिरोपसंपत्ति** (aciropasampatti) *f.* recent acquaintance (with any branch of knowledge), novicehood प्रथमोऽचिरोपसंपत्तौ P. vi. 2. 56; अचिरोपसंपत्तिरचिरोपश्लेषोऽभिनवत्वम् । KāśiVṛ. *on* vi. 2. 56; अचिरोपसंपत्तौ किम् । प्रथमवैयाकरण: Prasā. ii. 768. 3; LaŚabdeŚe. ii. 1051. 2.

**अचिरोपहृत** (acirópahṛta) *adj.* recently taken out (from a loom) निर्गता प्रवाणी अस्य निष्प्रवाणि: पट: । तुर्यादिभ्योऽचिरोपहृत इत्यर्थ: Prasā. i. 617. 19.

**अचिरोषित** (aciroṣita) *adj.* [*f.* -ā] **i** who has stayed for a short time only (i. e. who has just arrived) पांशुरपादमिति अचिरोषितम् । अत एवाप्रकरणज्ञम् Pradī. 1. 305B (*on* i. 1. 23); **ii** which lasted for a short time अहो रमयतितरां प्राभातिकी तरणितनयातीरशोभा अचिरोषिताभिर्वर्षाभि: कृतोपद्रवापि पुन: प्रकृतिमापन्ना KaṁVa. 5. 8(6)

**अचिलकदेव** (acilaka-deva) *m.* name of a Brāhmaṇa (son of Nimbāditya) ब्राह्मण अचिलकं (? ब्राह्मणाचिलक) [दे][व]सुवक:(? °कौ) [नि][म्बा]दित्यपुत्रैर्दत्त [? °पुत्रौ । एतैर्दत्ता] [द्र] म्मा [:] EI. xi. 304. 12.

**अचिष्ट** (ác-iṣṭa) *adj.* [w. r. for **अचिष्टु** ?] going or moving (everywhere) होता यक्षत्त्वष्टारमचिष्टमपाकम् ṚV. (Khila) v. 7(1). 10.

**अचिष्टु** (ác-iṣṭu) *adj.* [Debrü. 668] going or moving (everywhere) त्वष्टा दधदिन्द्राय शुष्ममपाकोऽचिष्टुर्यशसे(? यशसे) पुरूणि MaiS. iii. 11. 1; KāṭhS. 38. 6; VājaS. 20. 44; VājaS.(K.) xxii. 4. 9; होता यक्षत्त्वष्टारमचिष्टुमपाकम् MaiS. iv. 13. 2; KāṭhS. 15. 13; TaiBr. III. vi. 2. 6.

**अचिष्णु** (ac-iṣṇu) *adj.* [hyper-Sanskritization of **अचिष्टु**] going everywhere, all-pervading [Apte]

**अचिह्नित** (a-cihnita) *adj.* not marked or distinguished तस्य यत्सममापूर्णं शुद्धं सत्त्वमचिह्नितम् । तद्विदामप्यनिर्देश्यं तच्छान्तं परमं पदम् YogVā. iii. 64. 5; (अप्रमत्तश्चरेद् भैक्षं सायाह्नेऽनभिलक्षित:) अनभिलक्षित: ज्योतिर्विज्ञानोपदेशादिना अचिह्नित: Mitā. 367. 22 (*on* 3. 59)

**अचीकत्** (a-cīkat) *adj.* not enduring or tolerating क्रूण: ... प्रोथितवानशीकितमति भूमावचीकन्नमुम् DhātuKā. 3. 50.

**अचीकमतभाषिन्** (acīkamatabhāṣ-in) *adj.* uttering the form acīkamata (derived from *kam-*) नाकमिष्टसुखं यान्ति सुयुक्तैर्वडवारथै: । अथ पत्काषिणो यान्ति येऽचीकमतभाषिण: MahāBh. ii. 55. 5 (*on* iii. 1. 48).

**अचीरम्** (a-círam) *adv.* [accent shows that the vocable should be **चीर**] without delay आवहन्ती वितन्वाना । कुर्वाणाचीरमात्मन: (v. l. कुर्वाणा चीरम्) । वासांसि मम गावश्च । ... ततो मे श्रियमावह TaiĀ. vii. 4. 2 (727. 13) = TaiU. i. 4 (अचीरं अचिरं क्षिप्रमेव । छान्दसो दीर्घ: TaiUBh. 198. 10)

**अचीर्णप्रायश्चित्त** (acīrṇa-prāyaścitta) *adj.* who has not performed the expiatory rites अचीर्णप्रायश्चित्तानाम् ... यदि कदाचिन्मानुष्यं भवति तदैतच्चिह्नाङ्कितशरीरा जायन्ते AtriSm. 4. 1; इह प्रच्छन्नपापानां शास्ता वैवस्वतो यम: । अचीर्णप्रायश्चित्तानां यमलोके ह्यनेकधा SkandP. v(3). 159. 9.

**अचीर्णप्रायश्चित्तकर्मत्व** (acīrṇaprāyaścittakarma-tva) *n.* the state of being an (evil) act for which no expiation has been performed विवादाध्यासितानि कर्माणि भोगादेव क्षीयन्ते अचीर्णप्रायश्चित्तकर्मत्वात् आरब्धशरीरकर्मवत् NyāyVārPari. 377. 7.

**अचीर्णप्रायश्चित्तकर्मन्** (acīrṇaprāyaścitta-karman) *n.* (sinful) act for which no expiation has been performed नापि शरीरेन्द्रियबुद्धयादितन्निदानधर्माधर्मध्वंस: । अचीर्णप्रायश्चित्तकर्मणां भोगैकनाश्यत्वेन तत्त्वज्ञानानाश्यत्वात् भोगद्वारा तन्नाशस्य चापुरुषार्थत्वादिति TattvCin. ii(2). 171. 10.

**अचीर्णब्रह्मचर्य** (acīrṇa-brahmacarya) *adj.* who has not observed continence or celibacy अचीर्णब्रह्मचर्यो य: सद्भावर्तयते पुन: । तदस्त्रं सानुबन्धस्य मूर्धानं तस्य कृन्तति MahāBhā. x. 15. 8.

**अचीर्णवेदव्रत** (acīrṇa-vedavrata) *adj.* who has not performed the rites or rituals prescribed for the study of the Vedas (अव्रतानाममन्त्राणाम्) अव्रतानामचीर्णवेदव्रतानाम् ManvaVi. 1534. 23 (*on* 12. 114)

**अचीर्णव्रत** (acīrṇa-vrata) *adj.* who has not performed the (proper) rites prescribed for the study of a particular Veda तदेतत्सत्यमृषिरङ्गिरा: पुरोवाच नैतदचीर्णव्रतोऽधीते । MuṇḍaU. iii. 2. 11; MuṇḍaUBh. 361. 4 (*on* iii. 2. 11); BrahmSūBh.(Bhā.) 176. 13 (*on* iii. 3. 3); अचीर्णव्रतस्याध्ययनाभावदर्शनादुपासनाभाव: Bhām. 586. 11 (*on* iii. 3. 1); 586. 12 (*on* iii. 3. 1); PrakaVi. 811. 17; अचीर्णव्रतस्याध्ययननिषेधसामर्थ्यात् शिरोव्रताचरणमध्ययनाङ्गम् ŚivārkaMaDī. ii. 281. 6 (*on* iii. 3. 1); ii. 285. 3 (*on* iii. 3. 3); ii. 285. 4 (*on* iii. 3. 3)

**अचीर्णशिरोव्रत** (acīrṇa-śirovrata) *adj.* who has not performed the Śirovrata rite सैव विद्या नाचीर्णशिरोव्रतानां फलदा Bhām. 588. 7 (*on* iii. 3. 3); यस्मादेषा ब्रह्मविषया विद्या तस्मादचीर्णशिरोव्रताय न प्रदेया ŚivārkaMaDī. ii. 286. 22 (*on* iii. 3. 3); PūrvottaVāNaMā. 318. 13.

**अचीवर** (acīvara) *n.* name of one of the 140 hells(?) एकपादस्त्रिपादश्च तीव्रश्चाचीवरं तम: । ... चत्वारिंशच्छतं प्रोक्तं महानरकमण्डलम् ŚivaP. v. 8. 42 (415B. 13)

**अचुक** (acuka) *m.* the tree *Dalbergia oujeinensis* अक्षीकश्चाक्षुकोऽच्छुक: (v. l. अचुक:) ParyāMu. 15. 34.

**अचुंकारिकभट्टा** (acuṅkārika-bhaṭṭā) *f.* another name of the woman Cuṅkārikā न मां चुंकारिकां वक्ति ... । अतो लोकेन मन्नाम द्वितीयं विहितं बुधै: । अचुंकारिकभट्टेति प्रसिद्धं जनविश्रुतम् BṛKathāK. 102(1). 54.

**अचुण्ड** (a-cuṇḍ) *adj.* not becoming small अचुन्न(? ण्ण)नुन्मुण्डितपुण्डरीकभृत्सर:श्रियो रुण्डकलुण्डनोज्झितान् । अस्फोटदन्त्यस्फटिकादिभाजनान्पाठोत्सुकैश्चावठरैर्लसन्मठान् DhātuKā. 1. 43 (comm. चुडि अल्पीभावे । क्विप्)

**अचुम्ब** (a-cumba) *adj.* very tall or long अचुम्बस्त्वतिदीर्घे स्यात् ŚabdaRaSaK. 216. 15.

**अचुम्बित** (a-cumbita) *adj.* [*f.* -ā] **A** not kissed or enjoyed स सदायति: । लक्ष्मीमचुम्बितामन्यैर्बताचुम्बद् द्विषां बलात् RājTa.(Jo.) 740; अचुम्बितं त्वमसि रे चाम्पेय पुष्पन्धयै: PadyaVe. 669; **B i** untouched, not affected तीव्रा नारकवेदना: । स तत्रानुभवंस्तस्थौ सुखांशेनाप्यचुम्बित: PārśvC. 2. 10. 64; **B ii** not touched, not dealt with (in a literary composition) निषिद्धै: संयोगाद्यैरचुम्बिता ... रचना ... माधुर्यस्य व्यञ्जिका RasGaṅ. 80. 9; पुरा कविभिरचुम्बितम् ... किमपि निबन्धनं निरूप्यताम् Ḍamaru. 2(5); कैश्चिदपि प्रामाणिकैर्निबन्धकारैरचुम्बितेऽस्मिन् विषये मम तावदेवं प्रतिभा BālamBha. iii. 41. 1 (*on* 3. 16)

**अचुम्बितमति** (acumbita-mati) *adj.* whose mind has not been touched by (i. e. is not engrossed in) यस्य श्रीमगधेश्वरो [नयवशा]न्नीतिप्रयोगार्थ [ख]लप्राग्भा[रा]नुभवैरचुम्बि(? म्बि)तमतिर्व्यासाभिधानं व्यधात् EI. ii. 335. 14.

**अचुम्बितान्तःकरण** (acumbitāntaḥkaraṇa) *adj.* whose heart is not touched or affected परोपसर्पणानन्तचिन्तानलशिखाशतै: । अचुम्बितान्त:करणा: साधु जीवन्ति पादपा: BhāmiVi. 1. 84 = RasGaṅ. 561. 9.

**अचुम्बितार्थ** (acumbitārtha) *m.* untouched or fresh idea (in a literary composition) अचुम्बितार्थप्रति[भान]भानुर्वल्मीकजन्मा कवितावता[र:] । (स पातु व:) PṛthvīVi. 1. 2; अचुम्बितार्थसंपत्तिरर्थस्फुरणमुच्यते PratāYaBhū. 39. 12.

**अचुम्बितावगाहिन्** (acumbitāvagāhin) *adj.* referring to what is not (yet) experienced तत् किं चिन्तास्वप्न इति संभावयसि । नहि नहि । चिन्तास्वप्नोऽपि नैवमचुम्बितावगाही भवति PrasaRā. 6. 20(14)

**अचुम्बितोल्लेख** (acumbitollekha) *m.* delineation of untouched or fresh topic (in a literary composition) अचुम्बितोल्लेखपथप्रवृत्तानसंप्रदायेन कवीन् क्षिपन्ति ... मूर्खा: ŚivLī. 1. 59.

**अचुरादित्व** (acurādi-tva) *n.* the state of not belonging to the *cur*-class or 10th conjugation एतच्चात्मनेपदिनोऽस्याचुरादित्वपक्षे प्रक्रियाविशेषकथनायोक्तम् Prasā. ii. 16. 17.

**अचुल्लत्** (a-cullat) *adj.* who does not disclose one's intention (ददर्श स ईश्वरम्) अचुल्लताम् ... हृदि बद्धखेलनम् DhātuKā. 1. 68 (comm. अनाविष्कृताभिप्रायाणाम्)

**अचुल्लीपाक** (a-cullīpāka) *adj.* lacking in food cooked on a fire-place अचुल्लीपाकमस्मेरम् ... तत्कदर्यगृहं विदु: Deśopa. 2. 28.

**अचूड** (a-cūḍa) *adj.* without a tuft of hair (i. e. whose *cūḍākaraṇa* is not performed) अचूडोऽनुपनीतश्च वेदसंध्याविहीनक: BrahmVaiP. iv. 130. 27; NirṇaSi. 277. 28; *m.* name of a person पराशरमचूडं च ... दृष्ट्वैव—राजा विस्मयमागत: Hastyāyur. 3. 14 (1. 1)

**अचूडक** (acūḍa-ka) *adj.* whose tonsure ceremony is not performed मृदुकोमलकं देवि चूडकं वाप्यचूडकम् ŚaktiSa. ii. 20. 23; चूडोपनयनैर्हीनं मृतं वाचूडकं विदु: ŚaktiSa. ii. 67. 7.

**अचूडाल** ( a–cūḍāla ) *adj.* having no tuft of hair कांश्चिदस्त्रैरकम्भाचूडालादन्तूलाललाटूलकांश्च ।··· ( सः ) द्विट्पतींश्चक्रे DvyāśraKā. 18. 75.

**अचूर्ण** ( a–cūrṇa ) *adj.* devoid of fragrant powder शरैर्विधातुं द्विषतोऽपि चूर्णास्तत्सुभ्रुवामप्यलकानचूर्णान् BhārCam. 2. 106.

**अचूलिक** ( a–cūlika ) *adj.* having no tuft of hair अचूलिकः अशिखः VīraMi. ( Lakṣaṇa. ) 139. 14.

**अचेतत्** ( a–cetat ) *adj.* who is ignorant, who does not know युष्मानचेतन् क्षयवायुकल्पान् Bhaṭṭi. 10. 35; निजाजीवनपरैरपायेषु नीयमानस्याप्यरण्यवारणस्येवाचेततः ( मारिदत्तस्य ) YaśasCam. i. 43. 6.

**अचेतत्व** ( aceta–tva ) *n.* the state of being insentient अचेतत्वाद्धि विषयस्तद्धि धर्मविभुः स्मृतः VāyuP. ii. 40. 114.

**अचेतन** ( a–cetana ) *adj.* [ *f.* –ā ] **A i** without consciousness, without awareness, non–sentient सचेतनं (v. l. अचेतनं) जीवगुणं वदन्ति MahāBhā. iii. 203. 33; सेन्द्रियं चेतनं द्रव्यं निरिन्द्रियमचेतनम् CaraS. i. 1. 48; i. 25. 23; तत्र सर्व एवाचेतन एष वर्गः SuśruS. iii. 1. 8; iii. 1. 9; सूक्ष्ममलिङ्गमचेतनमनादिनिधनम् (अव्यक्तम्) TattvSa. 118. 17; 130. 10; त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि SāṁkhyaKā. 11; तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम् SāṁkhyaKā. 20; न चासावचेतना शक्या प्रतिपादयितुम् S'ābaBh. 148. 6 (*on* i. 2. 32); वनस्पतयो नामाचेतना इदं सत्रमुपासितवन्तः S'ābaBh. 104. 4 (*on* i. 1. 32); 1355. 7 (*on* vi. 1. 4); 1356. 22 (*on* vi. 1. 5); एवम्···अचेतनानाम्···देवतात्वं भविष्यति S'ābaBh. 1927. 22 (*on* x. 4. 23); अचेतनस्य करणस्य बुद्धेर्ज्ञानं वृत्तिः NyāyBh. 28. 2 (*on* i. 1. 14); अव्यक्ता ये विशेषास्ते विकारेऽस्मिन्नचेतने BrahmāṇḍP. i. 32. 59; अचेतनं चेतनमिवाभाति SāṁkhyaKāBh. 5. 19 (*on* 6); 8. 25(*on* 11); एवं महदादिलिङ्गमचेतनमपि भूत्वा चेतनावद्भवति MāṭhVr. 34. 3 (*on* 20); अचेतनाः सुखादय इति साध्य उत्पत्तिमत्त्वम् NyāyBi. 3. 60; सर्वथाचेतना वृक्षाः BṛKathāS'loSaṁ. 12. 73; मनआदीनां चाचेतनानां प्रवृत्तिर्दृश्यते KenUBh. 70. 5 (*on* 1. 1); दृष्टश्च लोके अचेतने चेतनवदुपचारः ChāndoUBh. 351. 1 (*on* vi. 2. 4); न च ··· प्रधानादचेतनात् ··· उत्पत्त्यादि संभावयितुं शक्यम् BrahmSūBh.(S'aṅ.) 10. 15 (*on* i. 1. 2); न सांख्यपरिकल्पितमचेतनम्···जगतः कारणम् BrahmSūBh.(S'aṅ.) 36. 11 (*on* i. 1. 5); विद्वानसि दशग्रीव रामे किमपराध्यसि । अचेतनोऽपि नमति पश्य स्रोतसि वेतसः RāmC. 21. 116; यथा क्षीरमचेतनं मण्डकावस्थाभिर्दधीभवति ManuBh. i. 14. 4 (*on* 1. 11); नाचेतनस्य घटतेऽधिकृतिः कदाचित् SaṁkṣeS'ā. 1. 555 (i. 394. 1); मृदाद्यवस्थायामचेतनान्यपि भूतानि ··· स्प्रक्ष्यन्ति NyāyMañ. ii. 3. 13; तदा स्तभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ RugVi. 24. 3; यत्राचेतनस्यापि पदार्थस्य चेतनत्वाध्यारोपेण VakroJī. 38. 16; चेतनो जीवः ··· ब्रह्मणा सद्वितीयः प्रतीयते न त्वचेतनया Bhām. 170. 15 (*on* i. 2. 11); भूतकार्यं च शरीरं तस्मादेतदप्यचेतनम् NyāyKa. 72. 10; आदिकारणं प्रकृतिरचेतना NyāyKuA. i. 50. 2; निर्गुणां प्रकृतिं वेद गुणयुक्तामचेतनाम् BrahmP. 244. 13; प्रकृतिद्रव्यं भोग्यम् । तस्मिन्ब्रह्मगुणाः प्रायेण तिरोहिताः । अत एवाचेतनमित्युच्यते NītiMā. 32. 4; तमाहुः पुरुषस्यैव गेहं यत्राविशत्स्वयम् । यतोऽचेतनमेवासीत् केवलं सर्वविस्तरम् SātvaT. 1. 33; पुद्गलद्रव्यप्रमुखमचेतनं भवति TātpaVṛ. 180. 13 (*on* 2. 35); अचेतना सा न च वाचमर्हेद्वक्ता तु वक्त्रश्रमकर्म भुङ्क्ते NaiṣC. 6. 103; अचेतनापि प्रकृतिः पुरुषसंबन्धात् प्रवर्तते BrahmSūBh.(Ma.) 29A. 5 (*on* ii. 2. 7); अप्राकृतं प्राकृतरूपकं च कालस्वरूपं तदचेतनं मतम् SiddhāRa. 3 (23. 18); उन्मादः । इष्टवियोगादिभिः । तमचेतनमुधाभ्रमणैः ( अभिनयेत् ) NāṭaLaRaK. 2080; न हि जातुचित्स्वयमचेतनोऽहं चेतनायोगाच्चेतनः ···इति प्रतीतिरस्ति SyādvāMañ. 8 (224); तेन चेतनाचेतनयोर्धात्वर्थानुकूलव्यापारस्य सत्त्वादाख्यातप्रयोगो मुख्य एव TattvCin. iv(2). 825. 6; कुरवकः कुसुमेषुमचेतनेष्वपि विशृङ्खलवृत्तिमसूचयत् MadhuVi. 5. 68; अचेतने प्रधाने चेतनस्य लयो न युक्तः BrahmSūBh.(S'rī.) i. 201. 1 (*on* i. 1. 10); तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् । गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः SāṁkhyaPraBh. 14. 7 (*on* 1. 19); अचेतनयोस्तु तद्भोक्त्रदृष्टवैषम्यकृतमिति विशेषः S'ivārkaMaDī. i. 112. 26 (*on* i. 1. 2); राजन्, अचेतनः खल्वयं तरुः प्रेक्षणकं चेदम् JānaPa. 6. 17 (1); **A ii** thoughtless, silly, bewildered मुह्यन्तं चानुमुह्यामि दुर्योधनमचेतनम् MahāBhā. i. 1. 98; ii. 63. 8; परित्यक्तुं न शक्नोमि दुर्योधनमचेतनम् MahāBhā. iii. 10. 3; दीर्घसूत्रस्तु मन्दात्मा हीनबुद्धिरचेतनः । मरणं प्राप्तवान् MahāBhā. xii. 135. 16; xii. 229. 3; एतच्छ्रुत्वा नरश्रेष्ठ चिरं ध्यात्वा त्वचेतनः । संजयं योजयेत्युक्त्वा विदुरं प्रत्यभाषत MahāBhā. xi. 9. 2; भरतस्यापि वा पक्षं यो गृह्णीयादचेतनः । तम् ··· प्रेषयिष्यामि यमक्षयम् Rāmā. ii. 451*(2); मत्तः प्रमत्त उन्मत्तश्चेतनो वाप्यचेतनः । ··· दण्डैर्हन्यात्··· । प्रहृता वा मृता वापि तद्धि हेतुर्निपातने ParāSm. 9. 8; सस्यान्यन्यानि वा हृत्वा मोहाज्जन्तुरचेतनः । सञ्जायते महावक्त्रो मूषिको बभ्रुसन्निभः MārkP. 15. 8; यावन्नोपैति चरणौ तवाज्ञानविघातिनः । तावद् भ्रमति संसारे पण्डितोऽचेतनोऽपि वा BrāhmāṇḍP. ii. 25. 27; मनुष्यभावसुकरं प्रमत्तेन मया पुरा । विवेकिनापि न कृतं तपो धिग्मामचेतनम् PadmP.(Ra.) 41. 34; तादृशानामेव वैदिकेषु कर्मस्वधिकारो नाचेतनानाम् TantrVā. 931. 4 (*on* iii. 4. 12); बधिरोऽन्धस्त्वचेतनः । ···षष्टयेतान् मन्त्रदोषांश्च योऽज्ञात्वा प्रजपेन्मनुम् । सिद्धिर्न जायते तस्य KulārT. 15. 66; कालाकालविदाशून्यां चेतनां धिगचेतनाम् BṛKathāS'loSaṁ. 18. 339; रतारम्भेऽप्यचेतना DaśRū. 2. 18; स एव दुष्कृतिर्मूढः कोऽन्यस्तस्मादचेतनः BṛNāraP. 3. 68; 3. 71; स्वकर्मफलयोगेन प्राप्य दुःखमचेतनः । निमित्तकारणे वैरं करोत्यल्पमतिः किल DevīBhāP. iii. 20. 44; निमज्जज्जगदालोक्य निरालम्बमचेतनम् । पृच्छामस्त्वां महाभागम् BrahmP. 26. 21; 57. 3; अचेतनेन लिखितं यावत्कालं प्रवर्तते । यावदक्षरसंस्थानं तावत्स्वर्गे महीयते BhaviP. 328A. 8 (ii(1). 7. 95); त्यक्त्वा मोक्षमचेतनाः । ···स्वर्गमसाधयन् SkandP. i(2). 40. 194; स्वकाले यदकुर्वंस्तु करोत्यन्यदचेतनः NayaVi. 135. 6 (*on* i. 1. 5); किमिति विषहामि विरहानलमचेतना GītGo. vii. 13. 3; मार्गकृत्यमुरीकृत्य पथि यानहमानयम् । तानद्यैव समस्मार्षं किमकार्षमचेतनः TriṣaS'aPuC. i. 1. 113; जीर्णकूपो मनुष्यत्वं, सर्पाः क्रोधादयो मताः । यैर्दष्टो मनुजः कृत्याकृत्येषु स्यादचेतनः SamarāSaṁ. 2. 342; सालङ्कारमचेतनस्य पुरतो या पठ्यते भारती MādhavāĀ. 81; **A iii** unconscious, without sensation विनदन्तं महानादं भिन्नभेरीसमस्वनम् । भ्रामयामास सुचिरं विस्फुरन्तमचेतसम् ( v. l. अचेतनम् ) MahāBhā. iii. 12. 62; भ्रामयित्वा शतगुणं गतसत्त्वमचेतनम् । प्रत्यपिंषन्महाबाहुर्मह्यां भुवि वृकोदरः MahāBhā. iv. 12. 23; भजस्व मामद्य शुभेन चेतसा यथा न शुष्ये न पताम्यचेतनः MahāBhā. iv. App. 13(24); न्यस्तशस्त्रमचेतनम् । हन्यान्मां युधि MahāBhā. vi. 41. 60; vi. 75. 18; उक्षाणमिव सिंहेन पात्यमानमचेतनम् MahāBhā. vii. 13. 55; ततस्तु सारथिर्ज्ञात्वा द्रोणपुत्रमचेतनम् MahāBhā. viii. 11. 40; viii. 932* (7); ओजो विस्रंसते यस्य पित्तानिलसमुच्छ्रयात् । स गात्रस्तम्भशीताभ्यां शयनेप्सुरचेतनः SuśruS. vi. 39. 43; मारुतः । ··· ( कुरुतेऽसंज्ञकं भीरुं ) मुहुर्मुहुरचेतनम् BhelaS. 18. 15 (1. 10); खड्गेन कङ्कं चिच्छेद राक्षसः । क्षरत्क्षतजबीभत्सं विस्फुरन्तमचेतनम् MārkP. 2. 9; 9. 19; सुप्ता जागरिकाः क्षितौ । कक्षारक्षास्तमद्राक्षुर्न निर्यान्तमचेतनाः BṛKathāS'loSaṁ. 20. 34; 20. 384; हन्यमानमचेतनम् । निरीक्ष्य BhāgP. x. 25. 14; सोऽपि तं मुनिमायान्तं प्लवमानमचेतनम् । दृष्ट्वा ··· प्रोवाच BrahmP. 55. 4; कुतुकः ··· तत्सैन्यं मोहयामास शिलाभूतमचेतनम् BhaviP. 506B. 5 (iii(3). 23. 101); समुद्रेऽहम् ··· गतः । ···मां प्रतुदन्ति जलेचराः ··· अचेतनम् KalkiP. ii. 4. 34; धरायामचेतनः पपात हरिकुलपतिः RāmāCam. 5. 56(4); ददृशुरचेतनमप्रभं जनास्तम् KicaVa. 3. 47; राजनन्दनः । उद्याने भोगिना दष्टः क्षणेनाभूदचेतनः SamarāSaṁ. 4. 144; भरतः ···अचेतनस्य अनिलवेगसुभटस्य शिरश्चक्रेण चिच्छेद KathāK. 142. 10; **B** inanimate, lifeless आशङ्कायामचेतनेषूपसंख्यानम् Vār. 12 (*on* iii. 1. 7); एवं तावच्चेतनावत्सु । अचेतनेष्वपि MahāBh. i. 123. 11 (*on* i. 1. 50); कूलं चाचेतनम् MahāBh. ii. 14. 15 (*on* iii. 1. 7); अयसा चाप्ययश्छिन्द्यान्निर्विचेष्टमचेतनम् MahāBhā. iii. 31. 34; xii. 68. 24; xii. 204. 4; xiv. 45. 4; पपात च महाकायः क्षितौ पञ्चत्वमागतः । तं तोलयित्वा बाहुभ्यां गतसत्त्वमचेतनम् Rāmā. iv. 11. 40; ततो वर्षशतान्यष्टौ द्वे च तिष्ठत्यचेतनः AtriSm. 8. 21; सर्वं द्रव्यं पाञ्चभौतिकमस्मिन्नेवार्थे तच्चेतनावदचेतनं च CaraS. (1922 Ed.) i. 26. 11; शरीरं हि गते तस्मिन् शून्यागारमचेतनम् CaraS. (1941 Ed.) iv. 1. 74; यदचेतनोऽपि पादैः स्पृष्टः प्रज्वलति सवितुरिनकान्तः S'atTrayī. 65; कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु MeghDū. 5; अनेन लीलाभरणेन···जनः समाश्वासित एषः··· अचेतनेनापि सता S'āk. 3. 32; अचेतनेऽर्थबन्धनात् MīmāSū. i. 2. 31; S'ābaBh. 148. 4 (*on* i. 2. 31); यज्ञाङ्गैश्चाचेतनैः संलापे न कश्चिद्यज्ञस्योपकारः S'ābaBh. 150. 4 (*on* i. 2. 32); पादोनं व्रतमुद्दिष्टं हत्वा गर्भमचेतनम् ParāSm. 9. 13; BṛParāSm. 8. 152; बीजं ह्यचेतनं यद्वत्तथा व्रीहिकणो द्विज JayāS. 3. 11; 3. 12; 4. 93; एते विहरणीयेषु चेतनाचेतनेषु वै । स्थानाभिमानिनो लोके प्रागासन् हव्यवाहनाः BrahmāṇḍP. i. 12. 46; MatsyaP. 51. 41; अव्यक्तादिविशेषान्तमविकारमचेतनम् ··· त्वया ज्ञेयम् MārkP. 44. 24; न तदस्ति जगत्यस्मिन् वस्तु किञ्चिदचेतनम् । यन्न व्याप्तं गुणैः MṛgendraT. i. 10. 22; देहो नाहमचेतनोऽयमनिशं कुड्यादिवन्निश्चितः Prauḍhā. 3; अचेतनैरलं पुण्यैः BṛKathāS'loSaṁ. 10. 81; अचेतनं प्रतिपद्यते किमिव वस्तु कर्तृताम् HarVi. 6. 87; यथा स्वप्ने ब्रह्मादिस्थावरान्तं चेतनाचेतनभेदजातं त्वन्मोहेनैव ते भाति IṣṭaSi. 333. 9 लोभोऽचेतनेष्वपि धनादिषु स्पृहा ManuBh. i. 52. 20 (*on* 2. 1); अचेतनस्य तु द्रव्यस्य प्रोक्षणम् ( शौचम् ) BālaKrī. i. 134. 3 (*on* 1. 195); अचेतनः कथं भावस्तदिच्छामनुवर्तते NyāyMañ. i. 185. 29; अवतस्थे सा ··· । अचेतनेव शून्येव सुप्तेवालिखितेव च NavaSāC. 6. 48; युक्तेभ्योऽण्डमचेतनम् । उत्थितम् BhāgP. iii. 26. 51; ज्वलन्ति पादपास्तत्र पतन्ति शिखराणि च । संवर्तव्याकुलीभूतं हाहाकारमचेतनम् PadmP. i. 15. 16; ज्योतिर्गणस्य सर्वस्य स्थावरास्थावरस्य च । चेतनाचेतनस्यापि सर्वात्मा यः प्रकीर्तितः BhaviP. 223B. 9 (i. 149. 58); कर्म तत्क्षणिकं वा स्यात् परतन्त्रमचेतनम् ĪśānS'iP. ii. 1. 32; तथा ह्यचेतनं शवशरीरं कुण्डलाद्युपेतमपि न भाति Loc. 75. 5 (*on* 2. 6); अचेतनस्य चेतनाध्यारोपेण मेघस्य दौत्ययोग्यताधानाय AuciViCa. 13(8); अत्राचेतनस्य तमसस्तात्वि( ? त्त्वि )केन रूपेण दिवाकरात् त्रास एव न संभवति Kāvyānu.(He.) 201. 11; किञ्च पिष्टोदकादिभ्यो, मदशक्तिरचेतना TriṣaS'aPuC. i. 1. 361; कथमचेतना मञ्चाः क्रोशन्ति PramāMī. 63. 2 (*on* ii. 1. 29); अचेतनोऽपि किं नात्र दत्ते चिन्तामणिः फलम्

Viṣṇu स चेहाच्युतनाभिपङ्कजनिवासिनो विधेः मनोनिर्वाणकारणं भवति SaraKanṭhā. 328. 18.

**अच्युतनामकीर्तन** (acyutanāma-kīrtana) *n.* reciting or singing the name of Viṣṇu ऋतेन तेनाच्युतनामकीर्तनात्प्रणाशमेतत्त्रिदिवं ममाशुभम् VāmaP. 86. 21.

**अच्युतनामन्** (acyuta-nāman) *adj.* (Jain.) called Acyuta (the 12th heaven) षडपि द्वादशे कल्पेऽच्युतनामनि तेऽभवन् । शक्रसामनिकाः TriṣaS'aPuC. i. 1. 789; *n.* the name Acyuta अच्युतनाम्नः क्षरणराहित्यं प्रवृत्तिनिमित्तम् S'ivārkaMaDi. i. 133. 31 (*on* i. 1. 2)

**अच्युतनायक** (acyuta-nāyaka) *m.* name of a governor of Konkan under the Yādava king Rāmacandra श्रीमद्गौतमगोत्रिमण्डनमणिः ··· मूधुमिः ··· तस्याङ्गजः सद्गुणः श्रीमन्नच्युतनायकः समजनि EI. xiii. 202. 43; xiii. 202. 44; xiii. 203. 52.

**अच्युतनिन्दा** (acyuta-nindā) *f.* reproach of Kṛṣṇa ऋषयः ··· । निर्जघ्नुर्हुंकृतैर्वेनं हतमच्युतनिन्दया BhāgP. iv. 14. 34.

**अच्युतनिर्मित** (acyuta-nirmita) *adj.* created by Kṛṣṇa दिव्यं भौमं चान्तरिक्षं वित्तमच्युतनिर्मितम् । तत्सर्वमुपमुञ्जानः एतत्कुर्यात्स्वतो बुधः BhāgP. vii. 14. 7.

**अच्युतन्त** (acyutanta) *m.* [AltGr. ii. 1. 129] name of the ancestor of a warrior tribe called Ācyutanti अच्युतोऽन्तो यस्यासौ अच्युतन्तः । पृषोदरादित्वात्पररूपे आच्युतन्तीयः GaṇRa. 3. 199 (242)

**अच्युतन्ति** (acyutanti) *m.* name of a warrior tribe, GaṇPā. 114. 6 *on* P. v. 3. 116.

**अच्युतन्तीय** (acyutantīya) *m.* descendant of Acyutanta [ v. l. for आच्युतन्तीय ] GaṇRa. 3. 199 (242)

**अच्युतपति** (acyuta-pati) *m.* lord of the heaven called Acyuta ततोऽच्युतपतिः पूजां चक्रे जिनपतेः स्वयम् TriṣaS'aPuC. i. 2. 570; ii. 2. 470.

**अच्युतपद** (acyuta-pada) *n.* abode of Kṛṣṇa यान्त्यञ्जसाच्युतपदमच्युतप्रियबान्धवाः BhāgP. iv. 12. 37; हरिभक्तोऽतिपापौघैर्मुक्तोऽच्युतपदं व्रजेत् PadmP. iv. 97. 50.

**अच्युतपर्यास** (acyuta-paryāsa) *adj.* having an unfailing concluding portion (of a Stotra or S'astra) एकपर्यासोऽच्छावाकस्तद् यदच्युतपर्यासोऽच्छावाकः KauṣīBr. 30. 9 (146. 1)

**अच्युतपाजस्** (ácyuta-pājas) *m.* name of a Ṛṣi म॒हा॒ह॑वि॒र्होता॑ । स॒त्यह॑विरध्व॒र्युः । अच्यु॑तपाजा अ॒ग्नीत् TaiĀ. iii. 5. 1 (206. 18) = VaikhāGS. 5. 4.

**अच्युतपादपद्मतस्** (acyutapādapadma-tas) *adv.* from the lotus-like foot of Viṣṇu नभःस्रवन्त्या इव शेषवारिभिः परिच्युतैरच्युतपादपद्मतः VikraDeC. 17. 23.

**अच्युतपीयूष** (acyuta-pīyūṣa) *n.* nectar in the form of Kṛṣṇa न मेऽसवः परायन्ति ब्रह्मन्ननशनादमी । पिबतोऽच्युतपीयूषम् BhāgP. ii. 8. 26; पिबतोऽच्युतपीयूषं न मेऽत्रास्ति विरामता PañcaRā.(Nā.) iv. 8. 4.

**अच्युतपूजन** (acyuta-pūjana) *n.* worship of Acyuta पुष्पैरच्युतपूजनम् ··· मन्दिरे ··· स्थीयते SaduktiKa. 315. 23.

**अच्युतप्रच** (acyuta-praca) *m.* name of a man [PW, nt.]

**अच्युतप्रणाम** (acyuta-praṇāma) *m.* prostration before Acyuta यावन्तः श्लोकास्तावन्तोऽच्युतप्रणामाः यावच्छ्लोकम् PrakriKau. i. 478. 9; MugdhaBo. 6. 61 (61. 19)

**अच्युतप्रभावाढ्य** (acyutaprabhāvāḍhya) *adj.* rich with the power of Kṛṣṇa (राजा भूनन्दनः) सोऽपि नीतोऽभूदेकया ··· मणिमयं गृहम् । ··· यदच्युतप्रभावाढ्यं वृष्णीनामिव केतनम् KathāSaSāg. xii. 6. 145.

**अच्युतप्रभु** (acyuta-prabhu) *m.* name of a king (Acyutarāya of Vijayanagara) अभिषेक्तुं तमथाच्युतप्रभुम् । ··· समनाहि मन्त्रिभिः Acyutarā. 3. 20.

**अच्युतप्रभृति** (acyuta-prabhṛti) *adj.* Acyuta and others अच्युतप्रभृतयोऽथ सुरेन्द्राः स्वामिनः ··· । अग्निसंस्करणपूर्वमकुर्वन् मोक्षपर्वमहिमानमखर्वम् TriṣaS'aPuC. iii. 5. 126; iv. 4. 33; iv. 5. 38.

**अच्युतप्रसङ्गतस्** (acyutaprasaṅga-tas) *adv.* owing to association with Viṣṇu कुर्वन्ति तच्च नेत्राम्बु यदच्युतप्रसङ्गतः । अहो लोकाः PadmP. i. 50. 30.

**अच्युतप्रिय** (acyuta-priya) *adj.* pleasing to Acyuta, favourite of Kṛṣṇa प्रियाः परमहंसानां त एव ह्यच्युतप्रियाः (धर्माः) BhāgP. i. 4. 31; सर्वत्र समदृक् शान्तो ह्ययं चैवाच्युतप्रियः (चित्रकेतुः) BhāgP. vi. 17. 34.

**अच्युतप्रियचेष्टित** (acyutapriya-ceṣṭita) *n.* acts of one who is dear to Kṛṣṇa श्रुत्वैतच्छ्रद्धयाभीक्ष्णमच्युतप्रियचेष्टितम् । भवेद्भक्तिर्भगवति BhāgP. iv. 12. 46.

**अच्युतप्रियबान्धव** (acyutapriya-bāndhava) *m.* favourite of Kṛṣṇa यान्त्यञ्जसाच्युतपदमच्युतप्रियबान्धवाः BhāgP. iv. 12. 37.

**अच्युतप्रिया** (acyuta-priyā) *f.* 1 one of the thousand names of Rādhā (dear to Acyuta) देवी राधा परा प्रोक्ता ··· श्रीराधा ··· अच्युतप्रिया PañcaRā.(Nā.) v. 5. 58; 2 name of one of the S'aktis स्कन्दमाताच्युतप्रिया S'āraTi. 7. 36.

**अच्युतप्रीति** (acyuta-prīti) *f.* love of Viṣṇu (मार्कण्डेयः) तपश्चचार परममच्युतप्रीतिकारणम् BṛNāraP. 5. 3.

**अच्युतप्रेक्ष** (acyuta-prekṣa) *m.* name of a teacher [nt.]

**अच्युतप्रेमन्** (acyuta-preman) *n.* devotion to Viṣṇu (नमस्ते ··· गङ्गे) अच्युतप्रेमधाराढ्या ··· असि BṛDharmaP. i. 5. 65.

**अच्युतबल** (acyuta-bala) *adj.* having strength in the form of (devotion to) Acyuta (i. e. Kṛṣṇa), deriving strength from Acyuta, having unfailing strength यावन्नृकायरथमात्मवशोपकल्पं धत्ते गरिष्ठचरणार्चनया निशातम् । ज्ञानासिमच्युतबलो दधदस्तशत्रुः स्वाराज्यतुष्ट उपशान्त इदं विजह्यात् BhāgP. viii. 15. 45 (Vaṁśīdhara अच्युतभक्तिबलः, S'rīdhara अच्युताश्रयः, Vijayadhvajatīrtha अक्षरितं बलं यस्य सः)

**अच्युतबीज** (acyuta-bīja) *n.* seed in the form of Viṣṇu एकस्याच्युतबीजस्य भिन्नेषु प्रतिवस्तुषु । संस्थिता स्थितिरच्छिन्ना PauṣkS. 43. 74; PāraS. 15. 31.

**अच्युतब्रह्मचर्य** (acyuta-brahmacarya) *adj.* who has not swerved from (the vow of) celibacy ब्रह्मचारिणमच्युतब्रह्मचर्यम् ManvaVi. 186. 5 (*on* 2. 115)

**अच्युतभ** (acyuta-bha) *n.* constellation of Viṣṇu, the asterism S'ravaṇa अश्विखरांशुसुधानिधिपूर्वा, मित्रधनाच्युतभे (ते) शुभलग्ने । ··· नौगमनं शुभदं शुभवारे YuktiKa. 223. 11.

**अच्युतभक्त** (acyuta-bhakta) *m.* devotee of Viṣṇu त्यक्त्वा देहं यं प्रविशन्त्यच्युतभक्तास्तम् ··· हरिमीडे HariStu. 11.

**अच्युतभक्ति** (acyuta-bhakti) *f.* i devotion to Viṣṇu सत्त्वं स्याद्भावमन्त्रेण ··· सम्यगच्युतभक्त्या वै निर्मलीकृतचेतसाम् PauṣkS. 32. 51; ii firm devotion स्तुत्वा प्रभुम् ··· शुश्रूषातत्परस्तस्थावच्युतोऽच्युतभक्तिभाक् TriṣaS'aPuC. ii. 2. 479.

**अच्युतभट्ट** (acyuta-bhaṭṭa) *m.* name of a Brahmin वृत्तिं पंडरिभट्टोऽत्र प्राप्नोत्येकामिहाच्चेकः । सूनुरच्चुतभट्टस्य [read °च्युत°] EI. xii. 183. 290.

**अच्युतभाजन** (acyuta-bhājana) *adj.* not letting the pot fall (i. e. not spilling) तैलभाजनमादाय बभ्राम निखिलां पुरीम् । भ्रान्त्वा नृपान्तिकं प्राप भयादच्युतभाजनः BṛKathāMañ. vii. 1. 30.

**अच्युतभानु** (acyuta-bhānu) *m.* sun in the form of Viṣṇu ततोऽखिलजगत्पद्मबोधायाच्युतभानुना । देवकीपूर्वसन्ध्यायामाविर्भूतं महात्मना ViṣṇuP. v. 3. 2; BrahmP. 182. 10.

**अच्युतभाव** (acyuta-bhāva) *m.* contemplation of Viṣṇu, constant devotion नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते BhāgP. i. 5. 12; (Vijayadhvajatīrtha भगवद्भक्तिरहितं हरावच्युततया निरंतरभावनया मनोयोजनेन रहितं वा); मैत्रेयम् ··· क्षत्तोपसृत्याच्युतभावशुद्धः पप्रच्छ BhāgP. iii. 5. 1.

**अच्युतभाविन्** (acyutabhāv-in) *adj.* contemplating on Viṣṇu इदमन्त्रप्रतिष्ठानमुक्तमच्युतभाविनाम् । परमुद्धरणोपायम् PauṣkS. 41. 76; 27. 693; द्विजोत्तमादिवर्णानां नित्यमच्युतभाविनाम् PāraS. 12. 152.

**अच्युतभुजान्तर** (acyuta-bhujāntara) *n.* bosom of Viṣṇu एनां जगाद ··· पद्मामिवाच्युतभुजान्तरविच्युतां सा NaiṣC. 11. 57.

**अच्युतभूपालमेलवीणा** (acyutabhūpāla-melavīṇā) *f.* *melavīṇā* designed by king Acyuta तदन्वच्युतभूपालमेलवीणा विविच्यते । शुद्धमेलाख्यवीणायां चतुर्थीतन्त्रिकोपरि । मन्द्रपञ्चमसंयुक्ता शेषास्तन्त्र्यस्तु पूर्ववत् । अधिका पार्श्वतन्त्रीषु मध्यपञ्चमतन्त्रिका SvarameKa. 3. 77.

**अच्युतभूमहेन्द्र** (acyuta-bhūmahendra) *m.* Acyuta who is Indra on the earth, the eminent king Acyuta अच्युतभूमहेन्द्रः । अग्राहयत्पाणिमथात्मजातं पाण्ड्यादिभूपालककन्यकानाम् Raghunā. 7. 34.

**अच्युतभूमिपाल** (acyuta-bhūmipāla) *m.* king Acyuta अनेकजन्मार्जितभाग्यराशिराकारवानच्युतभूमिपालः Raghunā. 6. 12.

**अच्युतभूमिपालक** (acyuta-bhūmipālaka) *m.* king Acyuta चिन्चेन्नयभूपशेखरेण ··· अच्युतभूमिपालकेन ··· ममैव वंश्याः ··· रक्षिताः Raghunā. 8. 16.

**अच्युतभूवलारि** (acyuta-bhūvalāri) *m.* Acyuta who is Indra on the earth, the eminent king Acyuta अथात्मभूरच्युतभूवलारेरधाद्वयो भूषणमङ्गकानाम् Raghunā. 7. 1.

**अच्युतभूषाढ्या** (acyuta-bhūṣāḍhyā) *adj.* (*f.*) great being an ornament to Acyuta (नमस्ते ··· गङ्गे) अच्युतेऽच्युतभूषाढ्ये अच्युताङ्घ्रिसमुद्भवे

BrDharmaP. i. 5.64.

**अच्युतमञ्च** (acyuta-mañca) *m.* bed of Viṣṇu (i. e. the serpent Śeṣa) कतिचिदच्युतमञ्चकुलोद्भवाः कतिपये हरकुण्डलवंशजाः Gaṅgāva. 8.40.

**अच्युतमनस्** (ácyuta-manas) m. name of a Ṛṣi सुत्यहविरध्वर्युः ··· अच्युतमना उपवक्ता TaiĀ. iii. 5.1 (289.1) (comm. सत्यहविः इत्याद्याः महर्षयः ···अन्नत्या होत्रादयः)

**अच्युतमय** (acyuta-maya) *adj.* full of Acyuta, one with Acyuta सर्वेऽच्युतमयास्तचित्तार्पितमानसाः PāraS. 6.132.

**अच्युतमानस** (acyuta-mānasa) *adj.* who has not lost his mind च्युतशस्त्रं कचिद्वीक्ष्य भटमच्युतमानसः । ··· बाहुभ्यां योद्धुमुद्यत: PadmP.(Ra.) 102.192.

**अच्युतमित्रसूत** (acyuta-mitrasūta) *adj.* whose friend and charioteer is Kṛṣṇa (Arjuna) प्रियाम् ···स सान्त्वयित्वाच्युतमित्रसूतः । अन्वाद्रवत् ··· गुरुपुत्रं रथेन BhāgP. i. 7.17.

**अच्युतमुद्रा** (acyuta-mudrā) *f.* posture of hands and fingers (*mudrā*) called Acyuta उच्यतेऽच्युतमुद्राणां भद्रा बिल(? ल्व)फलाकृतिः PañcaRā.(Nā.) iii. 4.19.

**अच्युतमूर्ति** (acyuta-mūrti) *adj.* having the form of Acyuta (one of the several forms of Viṣṇu) नमोऽस्त्वच्युतमूर्तये PadmP. iv. 78.26; *f.* form of Acyuta स स्यादच्युतमूर्तिसेवनवशाद्धन्यः पवित्रालयः DhūrtaSa. 76.5.

**अच्युतयोगभाज्** (acyuta-yogabhāj) *adj.* sharing union with Viṣṇu देवासुराद्या मनुजास्तिरश्चो भवन्तु तेऽप्यच्युतयोगभाजः SkandP. i(2). 42.211.

**अच्युतरङ्ग** (acyuta-raṅga) *n.* (inner) temple of Acyuta प्रणम्य भूयः पदयो रघूद्वहं प्रसादमासाद्य ततः प्रसन्नधीः । पदापदानं निगदत्सु पार्थिवेष्वथाधिभूरच्युतरङ्गमाविशत् Raghunā. 11.19.

**अच्युतरस** (acyuta-rasa) *m.* **i** devotion to Viṣṇu संसारिणापि सुलभं शश्वद्रामाश्रयेण नित्यसुखम् । अच्युतरसेन सद्यःफलवत्कालत्रयोगतः क भयम् RasiRañ. 40; **ii** continuous enjoyment, RasiRañ. 40 (comm. अच्युतोऽस्खलितो यो रसः)

**अच्युतराय** (acyuta-rāya) *m.* name of a king अचुत [read अच्युत]-रायनृपेन्द्रोराननशोभाभिभूतपुंनैन्दो [read पूर्णेन्दोः] EI. xiv. 322.206; अच्युतरायस्य शासनं तदिदम् EI. iii. 158.187; भार्याभवत्तस्य धरावलारेर्मूर्त्यम्बिका ··· अच्युतरायदेव्याः सहोदरा श्लाघ्यतरप्रभावा Raghunā. 6.11.

**अच्युतरुष्** (acyuta-ruṣ) *f.* inveterate hatred [MW]; inveterate enmity [APTE]

**अच्युतरूपता** (acyutarūpa-tā) *f.* the state of attaining the form of (i. e. being one with) Viṣṇu मद्ध्यानी स्वकुलं सर्वं नयत्यच्युतरूपताम् BrNāraP. 4.104; गंगोद्भवा च मृल्लेखा नयत्यच्युतरूपताम् BrNāraP. 6.22.

**अच्युतलक्षण** (acyuta-lakṣaṇa) *n.* characteristic or mark of Acyuta अथाच्युतलक्षणम् । ब्रह्माण्डपुराणे – चतुर्भिश्चैव चक्रैस्तु वामदक्षिणपार्श्वयोः । अधिष्ठितो मुखे रक्तः कुण्डलद्वयशोभितः । शङ्खचक्रगदाशार्ङ्गबाणकौमोदकीधरः । मुशलध्वजधृक् श्वेतच्छत्रवज्राङ्कुशैर्युतः । सोऽच्युतः कथितो नाम्ना दुर्लभस्तपसा विना VīraMi.(Lakṣaṇa.) 550.16.

**अच्युतलिङ्ग** (acyuta-liṅga) *adj.* having the characteristic mark of Viṣṇu, following the Vaiṣṇava sect तैरप्यच्युतलिङ्गैस्तु स्वशाखोक्तैश्च पावनैः । हवनं विधिवत्कार्यं भक्तियुक्तेन चेतसा PāraS. 15.366.

**अच्युतलीला** (acyuta-līlā) *f.* **i** Kṛṣṇa's playful activity इयमच्युतलीलाढ्या सद्वृत्ता जातिशालिनी । छन्दसां मञ्जरी कान्ता सभ्यकण्ठे लगिष्यति ChandoMa. 1.3; **ii** perfect beauty, unfailing grace, ChandoMa. 1.3.

**अच्युतलोक** (acyuta-loka) *m.* world of Viṣṇu अकामानां तु भक्तानां नूनमच्युतलोकदाः (होमाः) PauṣkS. 31.203; *adj.* being in possession of Viṣṇu's world [nt.]

**अच्युतलोकता** (acyutaloka-tā) *f.* the status of residing in the world of Viṣṇu येऽनुमोदन्ति कृष्णस्य क्रियमाणं नरा गृहम् । तेऽपि पापैर्विनिर्मुक्ताः प्रयान्त्यच्युतलोकताम् AgniP. 38.3; कुलानां शतमागामि समतीतं तथा शतम् । कारयन् भगवद्धाम नयत्यच्युतलोकताम् AgniP. 38.47.

**अच्युतवक्त्रवायु** (acyutavaktra-vāyu) *m.* wind blown from Kṛṣṇa's mouth स पाञ्चजन्योऽच्युतवक्त्रवायुना भृशं सुपूर्णोदरनिःसृतध्वनिः । जगत् ··· प्रकम्पयामास MahāBhā. vii. 51.42.

**अच्युतवक्त्राब्ज** (acyuta-vaktrābja) *n.* lotus-like face of Viṣṇu सुप्रभाताद्य रजनी मथुरावासियोषिताम् । पास्यन्त्यच्युतवक्त्राब्जं यासां नेत्रालिपङ्क्तयः ViṣṇuP. v. 18.24; BrahmP. 192.24.

**अच्युतवचस्** (acyuta-vacas) *n.* word(s) of Kṛṣṇa इत्यच्युतवचष्टङ्कोल्लिखितात्मा तपःसुतः । प्रतिज्ञां मद्रभूभर्तुरामध्याह्वं द्विधे व्यधात् PāṇḍaC. 13.839.

**अच्युतवन** (acyuta-vana) *n.* secure forest पलाशप्रेप्सुना भग्नं त्वयाच्युतवनं महत् Rāmā. iv. 20.10 (GORR.)

**अच्युतवाक्य** (acyuta-vākya) *n.* text expressing the character of the unfailing (sacrificial cake) अच्युतवाक्यावगतसर्वदातनत्वबाधापत्तेरर्थवाद एवायम् BhāṭṭDi. iv. 123.23 (*on* x. 8.14); MīmāKau. ii. 96.6 (*on* ii. 3.27)

**अच्युतवास** (acyutavāsa) *m.* sacred fig-tree, *Ficus religiosa* [MW]

**अच्युतवास्तव्य** (acyuta-vāstavya) *adj.* having the abode in the heavenly region called Acyuta तयोरच्युतवास्तव्य एक इन्द्रोऽच्युताभिधः TriṣaŚaPuC. ii. 3.767.

**अच्युतविच्युता** (acyuta-vicyutā) *adj.* (*f.*) fallen from Viṣṇu, flown from Viṣṇu वितरसि यत्पदमच्युतमच्युतविच्युतापि त्वम् RasiJī. 81.

**अच्युतविनिपात** (acyuta-vinipāta) *m.* death at the hand of god Viṣṇu पुनरप्यच्युतविनिपातमात्रफलम् ··· °चेदिराजकुले जन्म ··· अवाप ViṣṇuP. iv. 15.10.

**अच्युतवीर्य** (acyuta-vīrya) *adj.* having the efficacy not lost, of which the (medicinal) power is intact लघुमच्युतवीर्यं च सुजरं बलकृच्च यत् । आजं क्षीरम् (उपयुञ्जीत) AṣṭāSaṁ. ii. 36.19 (4.7)

**अच्युतवेदिन्** (acyutaved-in) *adj.* knowing Viṣṇu निर्वाणदीक्षितानां च गुरुणाच्युतवेदिनाम् । ··· प्रतिष्ठा विहिताब्जज । त्राणार्थं स्वकुलादीनाम् PauṣkS. 43.45.

**अच्युतवेष** (acyuta-veṣa) *adj.* attired like Kṛṣṇa, dressed in the style of Kṛṣṇa कोऽयम्···अच्युतवेषभूषणः BhāgP. x. 47.2.

**अच्युतव्यतिरेकवती** (acyutavyatirekavat-ī) *adj.* (*f.*) making distinction from Viṣṇu, as distinct from Viṣṇu न च सकलदेवमानुषपशुपक्षिवृक्षादिकेष्वच्युतव्यतिरेकवती दृष्टिर्ममाभूत् ViṣṇuP. iv. 4.80.

**अच्युतशक्ति** (acyuta-śakti) *f.* power (i. e. Māyā) of god Viṣṇu, strength of the god Viṣṇu धृतमच्युतशक्त्या वै ह्यपरिच्युतसत्तया । सद्विकल्पस्वरूपं च विश्वासनमिदं द्विज PauṣkS. 22.53; PāraS. 5.172; SaṁkṣeŚā. 1.318 (i. 238.13)

**अच्युतशब्द** (acyuta-śabda) *m.* word *acyuta* नित्यानि होतुरिति गौतमः सङ्घातादावनुप्रवृत्तत्वादच्युतशब्दत्वाच्च ĀśvaŚS. II. i. 1.20; ŚrutaPra. ii. 151.15 (*on* i. 4.22)

**अच्युतशर** (acyuta-śara) *adj.* **A** whose arrow is god Viṣṇu आदाय चापमचलं कृत्वाहीनं गुणं विषमदृष्टिः । यश्चित्रमच्युतशरो लक्ष्यमभाङ्क्षीन्नमस्तस्मै KāvyPra. 526.4 = SūktiMu. 1.3 = AlaṅkāKau.(Vi.) 246.1; **B** whose arrow is not discharged, KāvyPra. 526.4 = SūktiMu. 1.3 = AlaṅkāKau. (Vi.) 246.1.

**अच्युतशिशु** (acyuta-śiśu) *m.* child Kṛṣṇa अच्युतशिशुं प्रणतोऽस्मि नित्यम् KṛṣṇaKa. 2.44.

**अच्युतश्रद्धिन्** (acyutaśraddh-in) *adj.* having faith in god Viṣṇu, faithful to god Viṣṇu नियुक्ताद्च्युतश्रद्धी (साधकः) ··· । यजेद्यागेन JayāS. 17.18.

**अच्युतश्री** (acyuta-śrī) *adj.* **i** possessing glory of god Viṣṇu, whose splendour is like that of god Viṣṇu शक्तो रणे दलयितुं प्रचलाकिकेतुरह्नाय कालियमिवाहितमच्युतश्रीः HarVi. 13.22; हेलया कलयामास करं यस्याच्युतश्रियः ŚāliC. 1.10; **ii** of undiminishing glory, ŚāliC. 1.10; *f.* **A** glory of the god Viṣṇu, HarVi. 36.46; **B** splendour which is not lost, undiminishing splendour or glory, HarVi. 36.46; प्रख्यातादच्युतश्रीवरवसतितया···क्षीरनीरेश्वरत इव यदङ्घ्रयोर्युगान्निर्गता भा । ··· श्रीमदब्जश्रेणी विश्वम्भरावद्भवदनभिमतं तीर्थपोऽसौ भिनत्तु JinaŚ. 1.19; KathāSaSāg. xv. 2.4; ĀnandRa. 6.9(5); **C i** imperishable wealth नरवाहनदत्तः ··· पुरं विमलसंज्ञकम् । ··· विवेश चातिगम्भीरमच्युतश्रीविराजितम् KathāSaSāg. xv. 2.4; सरस्वतीसङ्गतमच्युतश्रीनिवासम् ··· अम्बुराशिम् । तत्रैक्षत VasaViKā. 11.39; **C ii** Lakṣmī (the consort) of Acyuta i. e. Viṣṇu, VasaViKā. 11.39.

**अच्युतसक्त** (acyuta-sakta) *adj.* devoted to the god Viṣṇu अनुदिनमच्युतसक्तमानसानाम् । ··· त्यज भट दूरतरेण मानवानाम् (प्राणान्) ViṣṇuP. iii. 7.26; BrNāraP. 10.54.

**अच्युतसंज्ञक** (acyutasañjña-ka) *adj.* called Acyuta, known as Acyuta नाम कृष्णस्य गीयते । ··· पंचमेऽच्युतसंज्ञकम् BhaviP. 715A.31 (iv. 77.3)

**अच्युतसत्कथा** (acyuta-satkathā) *f.* sacred story of Kṛṣṇa (अम्बरीषः) सः ··· श्रुतिं चकाराच्युतसत्कथोदये BhāgP. ix. 4.18.

**अच्युतसत्कर्मन्** (acyuta-sātkarman) *adj.* whose meritorious deeds are intact, whose good actions are imperishable महाबलस्य जीवः ··· प्रच्यु-

स्याच्युतसत्कर्मा वैजयन्तविमानतः । … श्रीमत्कुम्भनृपागारे देव्याः कुक्षाववातरत् MalliC. 4. 19.

**अच्युतसात्** ( acyuta-sāt ) *adv.* [P. v. 4. 54] under the control of god Viṣṇu न्यासैर्यथाविधि तमच्युतसाद्विधाय PañcaRā.(Nā.) iii. 9. 18.

**अच्युतसात्मता** ( acyutasātma-tā ) *f.* assimilation to or absorption into Kṛṣṇa तावेव … ध्यानेनाच्युतसात्मताम् । नीतौ BhāgP. vii. 1. 46.

**अच्युतसाम्यता** ( acyutasāmya-tā ) *f.* equality with god Viṣṇu यो वेत्त्येवं महत्तां च नैवेद्यस्याच्युतस्य च । विधिपूर्वं समश्नाति स यात्यच्युतसाम्यताम् PauṣkS. 31. 191.

**अच्युतसोदर** ( acyuta-sodara ) *m.* co-uterine brother of god Viṣṇu अच्युतसोदरेणेत्येकमेव प्रतिपादकम् AlaṅkāRa. 44 (68)

**अच्युतस्थल** ( acyuta-sthala ) *n.* **1** name of a place (in the Punjab) युगंधरे दधि प्राश्य उषित्वा चाच्युतस्थले MahāBhā. iii. 129. 9 (Nīlakaṇṭha अच्युतस्थलाख्ये संकरजानां ग्रामे ); VāmaP. 34. 47; viii. 30. 42; **2** unchanging place ( subtle body ) अच्युतं स्थलं लिङ्गशरीरम् Nīlakaṇṭha *on* MahāBhā. iii. 129. 9.

**अच्युतस्थिति** (acyuta-sthiti) *f.* **A** presence of Viṣṇu गरुडमूर्तिरिवाच्युतस्थितिरमणीया … उज्जयिनी नाम नगरी Kād. 52. 1; VāsaDa. 270. 2; **B** fixed position ( कन्दर्पकेतुः ) साधुमिवाच्युतस्थितिरमणीयम्…जलनिधिमपश्यत् VāsaDa. 270. 2; Kād. 52. 1; PārśvC. 2. 1056; *adj* **i** possessing the position of god Viṣṇu अच्युतस्थितिरप्यासीन्न स क्वापि जनार्दनः HammīMaKā. 9. 73; **ii** firm position, HammīMaKā. 9. 73.

**अच्युता** ( a-cyutā ) *f.* **A** one of the eight female deities of the Hariyikā group being one of the Āvaraṇa deities of S'iva हरया व्यूहमुच्यते । जम्भाच्युता च कङ्कारी देविका दुर्धरा वहा । चण्डिका चपला चेति प्रथमावरणे स्मृताः LiṅgaP. ii. 27. 152; VīraMi. (Rājanīti.) 387. 13; S'abdaRāSaK. 136. 9; **B** female deity (Jain) दिशतु काञ्चनकान्तिरिताच्युता … कम् CaturJiStu. 56; तथोत्पन्नाच्युता नाम श्यामाङ्गी नरवाहना । पद्मप्रभजिनेन्द्रस्याभवच्छासनदेवता TriṣaS'aPuC. iii. 4. 182; [ अच्युता is recorded as one of the meanings of कूपिका MediK. 7. 72 ]

**अच्युतांश** ( acyutāṁśa ) *m.* part (i. e. partial incarnation) of Viṣṇu ततो जगन्मङ्गलमच्युतांशं समाहितं शूरसुतेन देवी । दधार सर्वात्मकमात्मभूतं काष्ठा यथानन्दकरं मनस्तः BhāgP. x. 2. 18; तयोरथाश्यानविशुद्धचीरयोः … अभूद्विशिष्टा रुचिरच्युतांशयोः RāmC. 4. 1; *adj.* having no digits lost, BhāgP. x. 2. 18.

**अच्युताकृति** ( acyutākṛti ) *adj.* of the form of Viṣṇu अजाश्वमेधाध्वरकल्पशाखिनः पचेलिमं तत्फलमच्युताकृति YātrāPra. 3. 235.

**अच्युताक्षरा** ( ácyutākṣarā ) *adj.* ( *f.* ) (a metre) having an unlimited (number of) syllables एषा ते यम॒सा॑दने स्व॒धा निधी॑यते गृहे॑ऽसौ । … अ॒च्युता॑क्षरा॒च्यु॑ताक्षरा TaiĀ. vi. 8. 1 (703. 6) ( Bhaṭṭa Bhāskara अच्युताक्षरा अविपरीताक्षरा अक्षीणाक्षरा अपरिमिताक्षरेत्यर्थः )

**अच्युताक्षेपिन्** ( acutākṣep-in ) *adj.* slandering Viṣṇu यथा मे शिरसश्छेदादिदं गुरुतरं वचः । त्वयोक्तमच्युताक्षेपि राज्यभ्रष्टस्तथा पत MatsyaP. 245. 49 = VāmaP. 29. 47.

**अच्युताख्य** ( acyutākhya ) *adj.* called Acyuta ( Viṣṇu ) आत्मा श्रुतः सर्वगतोऽच्युताख्यः BṛNāraP. 36. 6; भूयाद्धामान्ते च तस्याच्युताख्यम् PañcaRā.(Nā.) iii. 11. 11.

**अच्युताख्या** ( acyutākhyā ) *adj.* ( *f.* ) called Acyutā कर्मात्मकत्वाद्यादाय पुनरेव निवर्तते । साच्युताख्या महाशक्तिः PauṣkS. 22. 65.

**अच्युताग्रज** (acyutāgraja) *m.* **i** one of the thousand epithets of Viṣṇu (i. e. Vāsudeva) अच्युताग्रजः … इत्येतद् वासुदेवस्य विष्णोर्नामसहस्रकम् PañcaRā.(Nā.) iv. 3. 129(? 139); **ii** epithet of Balarāma or Baladeva (*lit.* elder brother of Acyuta, i. e. Kṛṣṇa) बलदेवोऽच्युताग्रजः AmaK. 45; AbhidhāCin. 225; S'abdaRa.(Vā.) 59; ParaNā. 130; **iii** epithet of Indra इन्द्रो हरिर्दुश्च्यवनोऽच्युताग्रजः AbhidhāCin. 171; ParaNā. 200.

**अच्युताङ्घ्रिपद्म** ( acyutāṅghri-padma ) *n.* Kṛṣṇa's lotus-like foot पुनातु भक्तिरच्युता सदाच्युताङ्घ्रिपद्मयोः ChandoMa. 2. 40 ( comm. अच्युतस्य कृष्णस्य अङ्घ्रिपद्मयोः चरणकमलयोः अच्युता अक्षया सदा सार्वकालिकी भक्तिः )

**अच्युताङ्घ्रिसमुद्भवा** ( acyutāṅghri-samudbhavā ) *adj.* ( *f.* ) born from the foot of Viṣṇu (i. e. Gaṅgā) नमस्ते … गङ्गे … अच्युताङ्घ्रिसमुद्भवे BṛDharmaP. i. 5. 64.

**अच्युताचारमृध्** (acyutācāra-mṛdh) *f.* fight without violation of rules तेनाच्युताचारमृधाभिरामा…सेनार्दिता … परासीत् HarVi. 48. 74.

**अच्युताच्युतभाषिन्** ( acyutācyutabhāṣ-in ) *adj.* repeatedly uttering the word Acyuta (i. e. Viṣṇu) पूर्वोऽभवद्गुरुः । हरिवासरभक्तानामच्युताच्युतभाषिणाम् । नाहं शास्ता PadmP. iv. 92. 38.

**अच्युताच्युतविग्रह** ( acyutācyuta-vigraha ) *adj.* having a body which is quite imperishable ( गुरुः ) ध्यायेत्…देवमच्युताच्युतविग्रहम् JayāS. 16. 276.

**अच्युतातुरग** ( acyutā-turaga ) *m.* horse of ( the goddess ) Acyutā क्वचिदच्युतातुरगखुरनाद्यवाचाटितशिलातटम् … सरो दृष्टवान् ( समरकेतुः ) TilaMañ. 204. 16.

**अच्युतात्मक** ( acyutātma-ka ) *adj.* of the nature or form of Viṣṇu, whose self is identical with Viṣṇu ( साधकः ) देवादीनच्युतात्मकान् । ध्यात्वा संतर्पयेत् AhirbuS. 28. 9; सर्वेषां लोकपालानां दधारैकः पृथुर्गुणान् । गोपीथाय जगत्सृष्टेः काले स्वे स्वेऽच्युतात्मकः BhāgP. iv. 22. 55 ( Padaratnāvalī अच्युते आत्मा मनो यस्य सोऽच्युतात्मकः; Bālaprabodhinī अच्युते भगवत्येव आत्मा मनो यस्य स तथा )

**अच्युतात्मकपादाब्जा** ( acyutātmaka-pādābjā ) *adj.* ( *f.* ) born of the water from the feet of Acyuta (Viṣṇu) नमस्ते … गङ्गे … अच्युताङ्घ्रिसमुद्भवे । अच्युतात्मकपादाब्जे BṛDharmaP. i. 5. 65.

**अच्युतात्मत्व** ( acyutātma-tva ) *n.* identity with Acyuta (devotion towards Viṣṇu) ज्ञानं दयाच्युतात्मत्वं सत्यं च ब्रह्मलक्षणम् BhāgP. vii. 11. 21.

**अच्युतात्मन्** ( acyutātman ) *adj.* **1** whose mind is set on Viṣṇu, devoted to Viṣṇu एकदान्तःपुरे तस्य वीक्ष्य दुर्योधनः श्रियम् । अतप्यद्राजसूयस्य महित्वं चाच्युतात्मनः BhāgP. x. 75. 31; PadmP. iv. 92. 48; **2** whose mind is firm, of firm resolve देवचरितम् … । सुखायैव हि साधूनां त्वादृशामच्युतात्मनाम् PadmP. iv. 84. 26.

**अच्युतात्मानुभव** ( acyutātmānubhava ) *adj.* realizing Acyuta as his real self यदा…छित्त्वाच्युतात्मानुभवोऽवतिष्ठते तमाहुरात्यन्तिकमङ्ग संप्लवम् BhāgP. xii. 4. 34 ( Bhāvārthadīpikāprakāśa अच्युतो हरिरेवात्मा मत्स्वरूपमित्यनुभवोऽपरोक्षबोधो यस्य तथाभूतः; S'ukapakṣīya अच्युते स्वान्तरात्मनि अनुभवो यस्य )

**अच्युतादि** ( acyutādi ) *adj.* **i** Acyuta and others त्रयाणामच्युतादीनां तद्भेदानां तथैव च । … या तु सन्धानरूपा सा प्रतिष्ठेति प्रकीर्तिता PāraS. 15. 23; SkandP. iv. 39. 79; ततोऽच्युतादयो भागान्कमलाप्रभृतीन्यथा । प्रापुः KathāSaSāg. viii. 3. 221; BṛBrahmaS. i. 12. 6; **ii** Acyuta and other (Indras) इन्द्राः समं देवगणैरपरेऽप्यच्युतादयः । अर्हत्पूर्विक्रयेवैयुस्तत्रोचैर्दधतस्त्वराम् TriṣaS'aPuC. i. 3. 421; iii. 1. 301; त्रयोदशं जिनेन्द्रं तं सुरेन्द्रा अच्युतादयः । त्रिषष्टिः स्नपयामासुः TriṣaS'aPuC. iv. 3. 32.

**अच्युतादिपद** ( acyutādi-pada ) *n.* words *acyuta* etc. धीरत्वादिसूचकैरच्युतादिपदैः … गोपिकया वाचा सम्भोगेच्छा प्रकटिता RasāSu. 75. 10 (1. 273)

**अच्युतादिपदव्यङ्ग्य** ( acyutādipada-vyaṅgya ) *adj.* what is suggested by the words *acyuta* etc. अत्राच्युतादिपदव्यङ्ग्यमामन्त्रणेत्यादिवाच्यस्य KāvyPra. 208. 3.

**अच्युतादिसुराधीश** ( acyutādi-surādhīśa ) *m.* chief gods like Acyuta and others अच्युतादिसुराधीशा विधिनास्नपयन् जिनम् PārśvC. 5. 96.

**अच्युताद्य** ( acyutādya ) *adj.* **i** Acyuta ( Viṣṇu ) and others नासिकात्रितये शिष्टे अच्युताद्यास्त्रयः स्थिताः PāraS. 10. 69; 10. 168; अजेशाच्युताद्यैः सुरैः सेव्यमानं महादेवि मन्मूर्ध्नि ते भावयामि BhavāBhu. 3; VāmaP. 57. 55; LakṣmīT. 10. 16; **ii** Acyuta and others (Indras) तत्राच्युताद्या देवेन्द्राः नरेन्द्राः सगरादयः । दीक्षाभिषेकं विदधुः क्रमेण परमेशितुः TriṣaS'aPuC. ii. 3. 198; ii. 3. 267.

**अच्युतानन्ददात्री** ( acyutānanda-dātrī ) *adj.* ( *f.* ) giving everlasting joy अच्युतानन्ददात्रीं देवीमहं निर्ऋतिं वन्दमानः TripuVePāSt. 68.

**अच्युतानुग्रहोत्सव** ( acyutānugrahotsava ) *m.* festival for the favour of Viṣṇu इति शंसत्सु सर्वेषु राजा वत्सेश्वरोऽथ सः । चकार तुष्टस्तनयस्याच्युतानुग्रहोत्सवम् KathāSaSāg. ix. 4. 73.

**अच्युतानुज** ( acyutānuja ) *m.* **i** younger brother of Acyuta (Yudhiṣṭhira) (i. e. Bhīma) उपेत्य कौन्तेयमथाब्रुवंस्तदा यथा स राजावदताच्युतानुजम् MahāBhā. iv. 186*(8); **ii** younger brother of Acyuta (Kṛṣṇa) (i. e. Gada) गदोऽच्युतानुजे NānārthSaṁ. 33. 22.

**अच्युतान्त** ( acyutānta ) *adj.* ending with the (twelfth) heavenly Kalpa called Acyuta एकादशं त्वारणमामनन्ति तमारणं द्वादशमच्युतान्तम् VarāṅgaC. 9. 9.

**अच्युतापराध** ( acyutāparādha ) *m.* offence against Acyuta (i. e. Kṛṣṇa) राधेयाद्यः संघो रुक्मिमच्युतापराधेऽयाद्यः । अभजत मोहं तान्तः YudhiVi. 6. 135 ( comm. अच्युतस्य अपराधः रोधनरूपः )

**अच्युताभिध** ( acyutābhidha ) *adj.* **i** named Acyuta (i. e. Viṣṇu) साक्षाद्भगवतो व्यक्तादच्युतादच्युताभिधात् । अधीताखिलसुपर्णाद्याः साक्षात्सद्ब्रह्म-

वाचकाः । शाखाश्च निषदः सर्वाः संहिता ब्राह्मणाभिधाः PāraS. 1. 13; ĀdiP. 22. 30; ‖ named Acyuta (i. e. Indra) तयोरच्युतवास्तव्य एक इन्द्रोऽच्युताभिधः TriṣaS'aPuC. ii. 3. 767.

**अच्युताभिधान** (acyutābhidhāna) *adj.* named Acyuta स: … अक्रोदात्मजमच्युताभिधानम् Acyutarā. 2. 32.

**अच्युताम्बर** (acyutāmbara) *n.* garment of Viṣṇu अथ कदाचिदच्युताम्बरपीतातपत्विषि क्षयिणि वासरे हृष्टवर्णा शृगालिकोज्ज्वलेन वेषेणोपसृत्य दूरस्थानुचरा मामुपश्लिष्याब्रवीत् DaśKuC. 59. 1.

**अच्युतायतन** (acyutāyatana) *n.* shrine of Acyuta (Viṣṇu) जन्म … मुनिभिर्निर्मितस्थाने अच्युतायतनेऽब्जज PauṣkS. 36. 111.

**अच्युतायुध** (acyutāyudha) *m.* name of a hero on the side of the Kauravas (*lit.* whose weapon never failed) को हि द्रोणं च भीष्मं च…श्रुतायुषं महावीर्यमच्युतायुष(v. l. °ध)मेव च । प्रत्युद्गच्छ भवेत्क्षेमी MahāBhā. viii. 50. 52; *n.* Viṣṇu's weapon (i. e. Sudarśana) पापं पैतृकं मातृकं तथा । तन्मे हरस्व तरसा नमस्तेऽस्त्वच्युतायुध VāmaP. 94. 18.

**अच्युतायुस्** (acyutāyus) *m.* name of a hero on the side of the Kauravas तेषु तूत्साद्यमानेषु…श्रुतायुश्चाच्युतायुश्च धनंजयमयुध्यताम् MahāBhā. vii. 68. 7; viii. 50. 52; ix. 2. 19.

**अच्युताराधन** (acyutārādhana) *n.* worship of Acyuta (i. e. Viṣṇu) एते गणेश्वरा ह्यष्टौ…अच्युताराधनपरैरेकैकं परिवारिताः PauṣkS. 4. 182 = PāraS. 11. 91; अच्युताराधनार्थं तु निश्रेयसपदाप्तये PauṣkS. 36. 252; कथं कुत्र मया कार्यमच्युताराधनं गुरो NaraP. 7. 40; AgniP. App. 6. 39; अच्युताराधनेच्छया । …भद्रद्वादशीं समुपोषितः BhaviP. 720A. 35 (iv. 82. 36)

**अच्युतार्चक** (acyutārcaka) *m.* worshipper of Viṣṇu राक्षसाश्चैव न बाधन्तेऽच्युतार्चकम् BṛNāraP. 11. 8.

**अच्युतार्चण** (acyutārcaṇa) *n.* worship of Viṣṇu कथितमावृतिसप्तकमच्युतार्चण(? न)विधयातिसर्वसुखावहम् PañcaRā.(Nā.) iii. 8. 5.

**अच्युतार्चन** (acyutārcana) *n.* worship of Acyuta (i. e. Viṣṇu) मनसो येन कालुष्यं न भवत्यच्युतार्चने PauṣkS. 31. 260; AvantiKa. 189. 3; विहितं मयाद्य … अच्युतार्चनम् S'iśuVa. 15. 46; VāmaP. 95. 14; तावद्धोमं तिलैः कुर्यादच्युतार्चनपूर्वकम् NaraP. 35. 20; एतां हंसावलीं बाल्येऽप्यच्युतार्चनतत्पराम् । … दृष्ट्वा KathāSaSāg. xii. 4. 117; *m.* a name of Viṣṇu (*lit.* whose worship is unfailing) नमस्ते देवदेव वासुदेव…अच्युतार्चन ViṣṇuSm. 98. 71.

**अच्युतार्चा** (acyutārcā) *f.* worship of Acyuta (i. e. Viṣṇu) श्रीमन्त्रोपजपादुमागणपतीशार्काच्युतार्चापराः S'aṅkaVi.(Ā.) 20. 13.

**अच्युतार्य** (acyutārya) *m.* name of a scribe श्रीवीरणाचार्यवरेण्यपौतो(? त्रो) वराच्युतार्य्यो गणपार्य्यपुत्रः । सूक्त्य[ा]लिखद्वेंकटरायमौलेः EI. iii. 250. 254.

**अच्युतावतार** (acyutāvatāra) *m.* incarnation of Viṣṇu कृता स्वेन नृणां तत्र कामाच्चोदनयापि वा । रक्षाच्युतावतारेहा विश्वस्यानुयुगे युगे BhāgP. xii. 7. 14; बलोत्तरस्त्वं विद्धीथाः स्फुटमच्युतावतारम् MadhuVi. 8. 29.

**अच्युतावधि** (acyutāvadhi) *adv.* (Jain.) up to the Acyuta heaven रज्जवश्चासहस्रारं पञ्च षट् चाच्युतावधि TriṣaS'aPuC. ii. 3. 759.

**अच्युतावास** (acyutāvāsa) *m.* the sacred fig tree अश्वत्थश्चाच्युतावासश्चलपत्रः पवित्रकः RājNi. 185. 6.

**अच्युताशय** (acyutāśaya) *adj.* having Acyuta (i. e. Viṣṇu) in the mind यं वा आत्मविदां धुर्यो वैन्यः प्रापाच्युताशयः BhāgP. iv. 23. 29.

**अच्युताशा** (acyutāśā) *adj.* (*f.*) 1 who has longing for Acyuta (i. e. Viṣṇu) चिरं विचिन्त्याच्युतमच्युताशा जन्मास्तु मे राक्षससंक्षयाय । उक्त्वेति… तन्वी तनुमुत्ससर्ज DaśāvaC. 7. 67; 2 whose hope is not lost or destroyed, DaśāvaC. 7. 67.

**अच्युताश्रम** (acyutāśrama) *m.* name of an author [PW]

**अच्युताश्रय** (acyutāśraya) *m.* who has obtained shelter in Acyuta (i. e. Viṣṇu) यमकिंकरास्ते । नैवाच्युताश्रयजनं प्रतिशङ्कमाना द्रष्टुं च बिभ्यति BhāgP. vi. 3. 34.

**अच्युताश्रयिन्** (acyutāśrayin) *adj.* who is resorting to Acyuta (i. e. Viṣṇu) तीर्थेभ्यः …स्नानोत्थं फलमाप्नोति भावितात्माच्युताश्रयी PauṣkS. 31. 118.

**अच्युताश्रितलक्ष्मीक** (acyutāśritalakṣmī-ka) *adj.* 1 (lake) having unfailingly abiding beauty ददर्श … सरः … अच्युताश्रितलक्ष्मीकं मन्थकालाब्धिसंनिभम् KathāSaSāg. xii. 33. 15; 2 whose (i. e. the ocean's) (daughter) Lakṣmī has resorted to Acyuta (i. e. Viṣṇu), KathāSaSāg. xii. 33. 15.

**अच्युतास्त्र** (acyutāstra) *n.* missile named Acyuta आभ्यां ब्रह्माच्युतास्त्र(? स्त्र)सरणसुरभिभिर्मार्गणै राघवाभ्यां मूर्धानौ चिच्छिदाते रजनिचरपते रावणेश्चाक्रमेण MahāVīC. 6. 63.

**अच्युतास्पद** (acyutāspada) *n.* place or abode of Acyuta (i. e. Viṣṇu) (हे पितरः) तृप्ता याताच्युतास्पदम् PauṣkS. 27. 123 = PāraS. 7. 361.

**अच्युताह्वय** (acyutāhvaya) *adj.* named Acyuta गायन्ति यद्वेदविदः पुराणं नारायणं शाश्वतमच्युताह्वयम् SkandP. v(3). 155. 118.

**अच्युति** (a-cyuti) *f.* A absence of failure or downfall, firmness शक्तिर्वर्म बलं तेजः कान्तत्वं सत्यमक्षतिः (v. l. अच्युतिः) MahāBhā. iii. 218. 34; मनो मतिरिह प्रोक्ता तस्याः पूर्ववदच्युतिः AhirbuS. 58. 63; स्वर्गेन्द्रविभवैश्वर्यं संततिं याति चाच्युतिम् BhaviP. 761A. 3 (iv. 107. 64); B non-transmigration from one world to another [nt.]

**अच्युतिगुण** (acyuti-guṇa) *m.* quality or virtue of not falling or deviating from गुणदोषावििति स्त्रीणां स्पर्शनाद्गोगोत्पत्तिदोषं व्यवधाने तद्ब्रह्मचर्यादच्युतिगुणं जानता…पादस्पर्शनमात्रं न कार्यम् ManvaVi. 249. 28 (*on* 2. 212)

**अच्युतिधर्म** (acyuti-dharma) *m.* the characteristic of stability or immutability यः स्थितिधर्मा जातः सोऽच्युतिधर्मे स्थितो निवृत्तिभाङ् न भवति HetuBiṬ. 139. 26.

**अच्युतीकृत** (acyutī-kṛta) *adj.* turned into Acyuta (i. e. Viṣṇu) इत्यच्युतीकृततनुर्विधिवत्तु तत्वन्यासं नपूर्वमपराक्षरनत्युपेतम् … उद्धरतु PañcaRā. (Nā.) iii. 2. 16; अक्षतादियुतमच्युतीकृतं सस्पृहं जपतु मन्त्रमष्टशः PañcaRā. (Nā.) iii. 6. 7.

**अच्युतीयनामन्** (acyutīya-nāman) *n.* name or title belonging to Acyuta (i. e. Viṣṇu) येनाच्युतीयनाम्ना वै यद्यत्स्थानान्तरं स्मृतम् PauṣkS. 36. 392.

**अच्युतेज्या** (acyutejyā) *f.* worship of Acyuta (i. e. Kṛṣṇa) प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्या BhāgP. iv. 31. 14; vii. 14. 36.

**अच्युतेन्दु** (acyutendu) *m.* 1 moon-like king Acyutarāya अब्धिकन्या तन्यादवन्यां श्रियमच्युतेन्दोः Acyutarā. 1. 2; अथ स्वपत्न्या सममच्युतेन्दुरविन्दतानन्दममन्दमन्तः Raghunā. 6. 41; 7. 40; 7. 79; 2 moon-like Viṣṇu, Acyutarā. 1. 2 (comm. अच्युतरायस्य विष्णोश्च)

**अच्युतेन्द्र** (acyutendra) *m.* 1 (Jain.) Indra of the heavenly region called Acyuta अथासावच्युतेन्द्रेण प्रत्युक्तावधिचक्षुषा । … वीक्षितः PadmP.(Ra.) 122. 13; 123. 85; अच्युतेन्द्र नमोऽस्तु ते MahāP. 14. 49; आदिक्षदच्युतेन्द्रोऽथ त्रिदशानाभियोगिकान् TriṣaS'aPuC. i. 2. 475; iii. 1. 190; ईशानादीनामारणाच्युतेन्द्रान्तानामेकान्तरितानां लघुपराक्रम इति SthānṬ. 407A. 14; तदुक्तधर्माचरणाद्भूवं देवोऽच्युतेन्द्रो रुचिरे विमाने NemiNir. 13. 71; MalliC. 4. 143; 2 king Acyutarāya (of Vijayanagara) तदनु तदनुजन्मा पुण्यकर्माच्युतेन्द्रः EI. xiv. 316. 77 = iii. 153. 58 = iv. 13. 64 = ix. 334. 58; निरुपमभुजवीर्यौदार्यभूरच्युतेन्द्रः EI. iii. 154. 91 = xiv. 343. 52 = iv. 14. 72 = ix. 334. 65; प्राप्ते पदं वैष्णवमच्युतेन्द्रे EI. xiv. 343. 52 = iv. 14. 73 = ix. 334. 66; अव्यात्…वृषाद्रेः पतिरच्युतेन्द्रम् Acyutarā. 1. 1; कदाचिदन्तःपुरकामिनीभिरासेवितः सादरमु(? म)च्युतेन्द्रः Raghunā. 6. 22; रणे सहायं रघुनाथभूपमयाचतोर्जस्वलमच्युतेन्द्रम् (वेङ्कटदेवरायः) Raghunā. 7. 44; 7. 35.

**अच्युतेन्द्रपौलोमी** (acyutendra-paulomī) *f.* (Jain.) consort of Indra of the heavenly region called Acyuta जाताच्युतेन्द्रपौलोमी … । अच्युतेन्द्रेण सा साकं बुभुजे भोगमुत्तमम् BṛKathāK. 108. 33.

**अच्युतेन्द्रमहाराय** (acyutendra-mahārāya) *m.* great king Acyutarāya (king of Vijayanagara) अच्युतेन्द्रमहारायो माननीयः EI. xiv. 318. 124; अच्चु(? च्यु)तेन्द्रमहारायशासनाम्(? त्) EI. xiv. 322. 208; अचु(च्यु)तेन्द्रमहारायशासनेन EI. iii. 158. 187.

**अच्युतेन्द्रमहारायपुर** (acyutendramahārāya-pura) *n.* village named after the great king Acyutarāya अच्च(? च्यु)तेन्द्रमहारायपुरमित्यपराभिधम् । सर्वसस्यैः सदायुक्तम् EI. iii. 155. 103.

**अच्युतेन्द्रमहीपति** (acyutendra-mahīpati) *m.* king Acyutendra (i. e. Acyutarāya) असदोवाम्बिकादेव्याम् … अच्युतेन्द्रमहीपतिः EI. iii. 152. 26.

**अच्युतैकता** (acyutaika-tā) *f.* identity with Viṣṇu अच्युतैकतास्य मनोः PañcaRā.(Nā.) iii. 3. 18.

**अच्युतैकसेविन्** (acyutaikasev-in) *adj.* attending on Viṣṇu only नरः । उर्वशीलोकमाप्नोति…अच्युतैकसेवी SkandP. ii(3). 7. 72.

**अच्युतोक्त** (acyutokta) *n.* words of Kṛṣṇa (Viṣṇu) (युधिष्ठिरः) निशम्य भीष्मोक्तमथाच्युतोक्तम् … । शशास गाम् BhāgP. i. 10. 3; ब्रह्मापि … समादधे सर्वमथाच्युतोक्तम् SkandP. v(1). 3. 62.

**अच्युतोत्सङ्ग** (acyutotsaṅga) *m.* Kṛṣṇa's lap अच्युतोत्सङ्गे निविष्टाम् (प्रपश्येत हरिप्रियाम्) BṛBrahmaS. i. 8. 77.

**अच्युतोपभुक्ता** (acyutopabhuktā) *adj.* (*f.*) enjoyed by Viṣṇu ते … जडाः । मत्वाच्युतोपभुक्तास्ता भार्यास्तूष्णीं किलाभवन् KathāSaSāg. x. 10. 51.

**अच्युतोपात्तलक्ष्मी** ( acyutopāttalakṣmī ) *adj.* **i** who has assumed beauty undiminishingly मिथुनसमूहः ··· प्रमथितजलराशिः स्वं निवासं जगाम त्रिदशगण इवोच्चैरच्युतोपात्तलक्ष्मीः VasaViKā. 7. 70; **ii** among whom Viṣṇu has accepted Lakṣmī (as wife), VasaViKā. 7. 70.

**अच्युतोपाध्याय** ( acyutopādhyāya ) *m.* name of the author of the comm. Vyākhyāpradīpa on AmaK. (PW)

**अच्युतोरस्** ( acyutoras ) *n.* Kṛṣṇa's chest अभिवीक्ष्य विदर्भराजपुत्रीकुचकाश्मीरजचिह्नमच्युतोरः । ···चेदिराजः सहसावाप रुषा तदैव योगम् S'iśuVa. 20. 6.

**अच्युतोष्ठपुट** ( acyutoṣṭhapuṭa ) *n.* fold of Kṛṣṇa's lips तेनाच्युतोष्ठयुग( v. l. पुट )पूरितमारुतेन ··· । नादेन ··· ईश्वर जगत् स्फुटतीव सर्वम् MahāBhā. vii. 553*(1)

**अच्युतोष्ठयुग** ( acyutoṣṭhayuga ) *n.* pair of Kṛṣṇa's lips, MahāBhā. vii. 553*(1)

**अच्वि** ( a-cvi ) (Gr.) (suffix) other than *cvi* भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः P. iii. 1. 12; आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् P. iii. 2. 56; CāndraVyā. i. 2. 46; JaineVyā. ii. 2. 54; S'ākaṭāVyā. vi. 3. 156; SiddhaHe. v. 1. 128; SaraKaṇṭhā.(Gr.) i. 4. 88.

**अच्व्यन्त** ( acvy-anta ) *adj.* having a suffix other than *cvi* as the final सुभगादिभ्योऽच्व्यन्तेभ्यश्चिवसाद्दयाच्च्व्यर्थे वर्तमानेभ्यः पराद्भवतेः कर्तरि खिष्णुच्खुकञौ भवतः CāndraVṛ. *on* i. 2. 46; JaineVyā. 107. 4 (*on* ii. 2. 54); KāśiVṛ. *on* P. iii. 1. 12; iii. 2. 56; S'ākaṭāVyā. *on* iv. 3. 156; SiddhaHe. *on* v. 1. 128.

**अच्व्यर्थ** ( a-cvyartha ) *m.* absence of the meaning of the *cvi*-suffix आन्महतो जातीयैकार्थयोरच्व्यर्थे CāndraVyā. v. 2. 46; SiddhaHe. iii. 2. 70; SaraKaṇṭhā.(Gr.) vi. 2. 60; तस्माद् अच्व्यर्थविषयं प्रत्युदाहरणं प्रदर्शनीयम् PadMañ. *on* KāśiVṛ. *on* P. iii. 1. 12.

**अच्शब्द** ( ac-śabda ) *m.* the element *ac* एवं तर्ह्यच्शब्दस्य रूटं वक्ष्यामि । तदच्शब्दग्रहणं कर्तव्यम् MahāBh. iii. 242. 23 (*on* vii. 1. 3); अनुनासिकोपधोऽच्शब्दः करिष्यते ··· अथवा डिदच्शब्दः करिष्यते MahāBh. iii. 250. 4 (*on* vii. 1. 25)

**अच्सदृश** ( ac-sadṛśa ) *adj.* similar to a vowel पर्युदासे ह्यच्सदृशस्य वर्णान्तरस्य निमित्तत्वेनोपादानात् Pradī. vii(2). 229. 23 (*on* viii. 4. 47)

**अच्संधि** ( ac-sandhi ) *m.* coalescence or euphonic combination of vowels इत्यच्संधिपादः MugdhaBo. 2. 24 (6. 18); अथ संधिः ( v. l. अच्संधिः ) PrakriKau. i. 44. 1; i. 83. 9; अच्संधिप्रकरणम् SiddhāKau. 12B. 1; 27A. 4.

**अच्समुदाय** ( ac-samudāya ) *m.* group of vowels अज्ग्रहणं संयोगाच्समुदायनिवृत्त्यर्थम् Vār. 4 *on* P. i. 2. 28; सिद्धं त्वच्समुदायस्याभावात्तद्गुणे संप्रत्ययः Vār. 3 *on* P. i. 2. 31; अच्समुदायनिवृत्त्यर्थं तर्ह्येकग्रहणम् ··· एवं तर्ह्यच्समुदायग्रहणशङ्कानिरासार्थमेकग्रहणं कुर्वन् ज्ञापयति PadMañ. *on* KāśiVṛ. *on* i. 1. 14; PrakriKau. i. 791. 2; अच्समुदायेऽच्त्वाभावाद् अच् इत्येवाच्समुदायग्रहणाभावे सिद्धे LaS'abdeS'e. i. 117. 11.

**अच्संबन्ध** ( ac-sambandha ) *m.* connection with a vowel चकारोऽच्संबन्धार्थः क्रियते Pradī. v. 337A. 34 (*on* vi. 4. 100)

**अच्सहित** ( ac-sahita ) *adj.* accompanied by a vowel अच्सहितं व्यञ्जनमक्षरमेकाच्पूर्वपदानाम् LaSabdeS'e. ii. 378. 11.

**अछत्वपक्ष** ( achatva-pakṣa ) *m.* alternative in which ( *ś* after *t* ) is not changed to *ch* अछत्वपक्षे वचनमिदम् KātanVṛ. *on* i. 4. 6.

**अछदिर्दर्श** ( á-chadirdarśa ) *adj.* (place) from which the roof (of a house) cannot be seen एतान्योऽध्येत्यच्छदिर्दर्शे यावत्तरसम् । स्वरेति TaiBr. III. xii. 5. 3; ब्रह्मयज्ञेन यक्ष्यमाणः प्राच्यां दिशि ग्रामादच्छदिर्दर्श उदीच्यां प्रागुदीच्यां वा TaiĀ. ii. 11. 1 (242. 1); ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय BaudhS'S. i.296. 1; i. 297. 5; श्वो भूते खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय ĀpaS'S. xv. 20. 8; xv. 21. 3; xv. 21. 10; खिलेऽछदिर्दर्शेऽग्निमुपसमाधाय BhārS'S. xi. 21. 8; HirS'S. x. 7. 6; BhārGS. 3. 6 (73. 5); BaudhGS. iii. 4. 30; ĀgniveGS. i. 2. 3 (17. 2)

**अछन्दोम** ( a-chandomá ) *adj.* without *chandoma* cf. **अच्छन्दोम** TaiS. VII. iv. 1. 2.

**अछम्बट्कार** ( á-chambaṭkāra ) *m.* non-utterance of the exclamation छम्बट् indicative of loss, failure or harm; [Dat.] not for loss, failure or harm सर्वेषामतिघातमवचत्यछम्बट्काराय MaiS. ii. 4. 5; चरमतं उपप्रतिगृह्णात्यछम्बट्काराय MaiS. iii. 10. 1; iv. 5. 1; तस्मात् ··· स्तनयत्यवस्फूर्जत्यधीयीतैव वषट्काराणामछम्बट्काराय S'atBr. XI. v. 6. 9; XIII. iv. 1. 12.

**अछम्बट्कारम्** ( á-chambaṭkāram ) *adv.* not uttering the exclamation छम्बट् indicative of loss or failure (without fault, without loss) वज्रमेवैतच्छतघ्नीं यजमानो भ्रातृव्याय प्रहरति स्तृत्या अछम्बट्कारम् TaiS. I. v. 7. 6 = V. iv. 7. 4; सर्वेषामभिगमयन्नवद्यत्यछम्बट्कारम् TaiS. II. iii. 6. 2 = II. iv. 11. 5; II. v. 11. 4; II. vi. 2. 5; II. vi. 7. 6; अछम्बट्कारमुपतिष्ठते MaiS. i. 5. 5; सर्वेषामभिघातमवचत्यछम्बट्कारम् KāṭhS. 12. 4; यावानेव पशुस्तस्यावचत्यछम्बट्कारम् KāṭhS. 13. 10; 23. 1; अस्यामेवाछम्बट्कारमग्निमाधत्ते TaiBr. I. i. 3. 7; अछम्बट्कारमस्यां विधेम TaiBr. I. ii. 1. 3; अस्यामेवाछम्बट्कारं यज्ञस्य शिरः संभरति TaiĀ. v. 2. 8 (596. 2); तत्र हेतुः अछम्बट्कारमिति अव्यर्थत्वायेत्यर्थः VedāntKa. 459. 3 (*on* iii. 3. 43)